कात्स्न्र्येष्वथोऽथ' इति कोशात् प्रसिद्धिस्वारस्याच्चेति भावः । यद्यप्युपक्रमगताथशब्दस्य मङ्गलार्थकत्वं युक्तम्, अथापि 'ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभाविति' अथशब्दोच्चारणेनैव मङ्गलसिद्धेः तत्पदस्य मङ्गलवाचकत्वकथने न प्रयोजनवत्वम् । आनन्तर्यवाचकत्वे तु साध्यधर्मनिर्देशेन प्रयोजनवत्वम् । कर्मविचारानन्तरकालीनकर्तव्यतैव हि साध्यतयाऽभिमता । न चानन्तर्यमात्रवाचकत्वे कर्मविचारानन्तर्यस्य कथं लाभ इति वाच्यम्, प्रक्रान्तक्रियानन्तर्यस्याथशब्दार्थत्वेन तल्लाभात् । वस्तुत आनन्तर्यमात्रवाचकत्वमेव । कर्मविचारं विना ब्रह्मविचारस्यानुपपन्नत्वादर्थापत्तिबलप्राप्तकर्मविचारस्य ध्वंसाधिकरणकालवृत्तित्वरूपानन्तर्यघटकध्वंसे प्रतियोगितयाऽन्वयाभ्युपगमेन कर्मविचारानन्तर्यलाभसम्भवः । पदजन्यपदार्थोपस्थितिविषयस्येवार्थापतिविषयस्यापि शाब्दबोधे भानाङ्गीकारात् । अध्याहारेणान्वयेऽपि वा न क्षतिः । अन्यार्थपरत्वं तु प्रकरणबलादयुक्तम् । यद्यपि कोशबलात् अनन्तरवाचकत्वमेव प्रतीयते, न त्वानन्तर्यवाचकत्वम्, अथापि विशिष्टवाचकत्वे विशेषणवाचकत्वानपगमात्तथोक्तम् । एवमेतत्सूत्रघटकोऽथशब्दपूर्वकोऽतश्शब्दो वृत्तहेतुत्ववाचकः स्वस्वारस्यात् । यद्यप्यथशब्दस्य वृत्तहेतुभावबोधकात-श्शब्दशिरस्कत्वादानन्तर्यवाचकत्वनिर्णयः, एवमतश्शब्दस्याप्यानन्तर्यस्वरसाथशब्दपूर्वकत्वादर्थनिर्णय इति परस्परा-पेक्षत्वम् । अथापि मिथस्तत्तदर्थनिर्णयानपेक्षत्वान्न मिथः संश्रयः । अभ्युच्चयतया पदान्तरसमभिव्याहारमात्रं ह्यपेक्षते । अत्रपदाभिप्रेतैतत्सूत्रघटकत्वादेव ब्रह्मजिज्ञासापदसामर्थ्यदिव च पदद्वयस्योक्तार्थनिर्णयात् ॥

अथास्तामथातश्शब्दयोरुक्तार्थपरत्वम् । अथापि ब्रह्मविचारस्य कर्मविचारानन्तरकर्तव्यत्वे कर्मविचारः कथं हेतुरिति चेत्, ब्रह्मविचारेच्छाप्रतिबन्धकनिरासकत्वेनेति ब्रूमः । तथा हि - ब्रह्मविचारेच्छां प्रति कर्मविचारेच्छा स्वातन्त्र्येण प्रतिबन्धिका, सुकरोपायज्ञानाधीनतदुपायेच्छाया दुष्करोपायेच्छां प्रति प्रतिबन्धकत्वात् । ततश्च 'स्वाध्यायो-ऽध्येतव्यः', 'साङ्गो वेदोऽध्येय' इत्यादि प्रमाणबलेन साङ्गस्योपनिषत्सहितस्य स्वशाखाभूतवेदस्य क्रमेणाध्ययने कृते पूर्वभागे 'अक्षय्यं ह वै चातुर्मास्ययाजिनस्सुकृतं भवति', 'अपाम सोमममृता अभूम', 'अनन्तं ह वा अपारमक्षय्यं लोकं जयति', 'योऽग्निं नाचिकेतं चिनुते' इत्यादिभिः कर्मणामनन्ताक्षयफलकत्वमस्तीत्यापातप्रतीतिसम्भवेन तद्विचारे प्रथमतः प्रवृत्तौ तत्र भगवदाराधनत्ववेषरहितानां चातुमस्यादिकर्मणां क्षयिफलत्वोपदेशादक्षयफलश्रवणस्य 'वायुश्चा-न्तरिक्षं चैतदमृत'मित्यादिष्विवाऽऽपेक्षिकत्वज्ञानाच्च कर्मणामल्पास्थिरफलकत्वं निश्चित्य ब्रह्मविचारे प्रवर्तते । यद्यपि साङ्गस्योपनिषद्भागस्याप्यधीतत्वात् 'न पुनर्मृत्यवे तदेकं पश्यति न च पुनरावर्तत' इत्यादिभिः ब्रह्मज्ञानस्याप्यनन्ताक्षय-फलकत्वापातप्रतीतिरस्ति, अथाप्यध्ययनपौर्वापर्यादर्थविचारेऽपि पौर्वापर्यम् । वस्तुतो 'दुर्गं पथं तत्कवयो वदन्तीति ब्रह्मज्ञाने दुष्करत्वावगमेन, कर्मणि दुष्करत्वबोधकप्रमाणाभावादनादिवासनावशात् सुकरत्वस्य गृहीतत्वाच्च ''अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजे''दिति न्यायेन सुकरोपायभूतकर्मण्येवेच्छा प्रथमं जायते । अतो दुष्करोपायभूतब्रह्मज्ञानेच्छा-प्रतिबन्धककर्मविचारेच्छाया निवृत्तावेव ब्रह्मविचारेच्छया ब्रह्मविचारेऽक्षयफलाभिलाषिणः प्रवृत्तिरिति । अत एव सूत्रे प्रतिबन्धकीभूतेच्छाद्वारैव हेतुभावो वक्तव्य इति सूचनाय सन्नन्तनिर्देशः कृतः ।

अथ कर्मविचारस्य ब्रह्मविचारहेतुकत्वं न सम्भवति, कृतकर्मविचाराणां सर्वेषामपि ब्रह्मविचारे प्रवृत्त्यापत्तेः स्वर्गाद्यर्थकर्मानुष्ठानविलोपप्रसङ्गाच्च । मैवम् । साङ्गाध्ययनस्य कर्मविचारपूर्ववृत्तत्ववादिमतेऽपि अधीतसाङ्गवेदानां सर्वेषामपि कर्मविचारे प्रवृत्त्यापादनापत्तेः । न चेष्टापत्तिः, वेदेऽधीतेप्यश्रुतमीमांसानां बहूनां दर्शनात् । यदि तत्रादृष्ट-देशकालादिवैगुण्यं हेतुस्तर्ह्यत्रापि तुल्यम् । न हीतरकारणविरहमात्रेण कुलालादेः घटादिहेतुत्वं भज्यते । अतो दृष्टादृष्टादि-प्रतिबन्धकाभावे घटादिं प्रति कुलालादेरेव यावत्कारणसहितस्य कर्मविचारस्य ब्रह्मविचारं प्रति सामग्रीत्वं नापैति । यच्च स्वर्गाद्यर्थककर्मानुष्ठानविलोप इत्यापादितं, तदपि न । अश्रुतमीमांसानामप्युपाध्यायादिवचनात्तदर्थकर्मानुष्ठान-सम्भवात् । तेषां कर्मविचारस्यैवाभावेन ब्रह्मविचाराप्रसक्तेः ।

**ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा । ब्रह्मण इति कर्मणि षष्ठी; 'कर्तृकर्मणोः कृति'** (पा. अ. २.३.६५.) **इति विशेषविधानात् । यद्यपि सम्बन्धसामान्यपरिग्रहेऽपि जिज्ञासायाः कर्मापेक्षत्वेन कर्मार्थत्वसिद्धिः तथाप्याक्षेपतः प्राप्तादाभिधानिकस्यैव ग्राह्यत्वात्कर्मणि षष्ठी गृह्यते ।**

---

ननु 'स्वाध्यायोऽध्येतव्य' इत्यत्र नियमस्य विधेयत्ववादिनां, साङ्गाध्ययनस्यावश्यकर्तव्यत्वेन तत आपातप्रतीत्या कर्मविचारे प्रवृत्तिरावश्यकीति कर्मविचारकरणे तदनुस्यूततया ब्रह्मविचारेऽपि प्रवृत्तेरावश्यकतया कर्मानुष्ठानविलोपस्तदवस्थ एवेति चेन्न, साङ्गाध्ययनस्य कृतत्वेऽपि वैगुण्यात्कर्मविचारेऽप्यप्रवृत्तिसम्भवात्कर्मविचारस्य कृतत्वेऽप्युक्तवैगुण्यादमुमुक्षुत्वसम्भवेन तदर्थकर्मानुष्ठानोपपत्तेः । वस्तुतः कृतकर्मविचाराणां ब्रह्मविचारे प्रवृत्तावपि तद्विचारानन्तरमदृष्टवैगुण्येन मोक्षानभिलाषसम्भवात्स्वर्गाद्यर्थककर्मानुष्ठानं सम्भवति । अतो घटदिनिष्पत्तेः कुलालादिवद्ब्रह्मविचारस्य कर्मविचारः पूर्वभावित्वेन नियत इति न दोषः । न चैवमपि 'अकृतकर्मविचाराणामपि ब्रह्मविचारे प्रवृत्तिदर्शनेन न हेतुहेतुमद्भाव' इति शङ्क्यं, अकृतवेदाध्ययनानामपि कर्मविचारप्रवृत्तिदर्शनेन तत्रापि कार्यकारणभावस्य परित्याज्यत्वापत्तेः, यद्युपाध्यायादिभिरापाततो वेदार्थोपदेशेन तदनन्तरं कर्मविचारे प्रवृत्तिरित्युच्यते, तर्हि तथैवात्रापीति सन्तोष्टव्यम् ॥

एव**मथात**शब्दयोरर्थो वर्णितः । अथ **ब्रह्मजिज्ञासा**पदस्यार्थः प्रदर्श्यते । तत्र व्यासस्तावन्न घटते जिज्ञासापदानन्वयात् । द्वितीयादिसमासोऽपि न सम्भवति, अनुपपत्तेः, विवक्षितप्रयोजनत्वविषयत्वाद्यसिद्धेः । अतः 'कर्तृकर्मणोः कृती'ति कर्मात्वार्थषष्ठीसमास एवाश्रयणीयः, कर्मत्वस्य कर्तुरीप्सिततमत्वरूपत्वेन सविषयकधातुयोगे विषयत्वार्थकत्वेन च ब्रह्मणः प्रयोजनत्वविषयत्वसिद्धिरित्यभिप्रेत्यादौ समासं दर्शयति - **ब्रह्मणो जिज्ञासेति** । ब्रह्मण इति स्वप्रयुक्तषष्ठीविभक्तिविवरणेन भाष्यलक्षणसम्पत्त्यै, समासे लक्षणास्वीकाराल्लक्ष्यार्थविशेषनिर्णयार्थं प्रातिपदिकेन विभक्त्यर्थलक्षणायामङ्गीक्रियमाणायामेतद्विभक्त्यर्थ एव लक्ष्यो नान्यविभक्त्यर्थ इति निश्चयायानुशासनं प्रदर्शयितुं चादौ विभक्त्यर्थं व्याख्याति **ब्रह्मण इतीति** । अथाऽत्र सम्बन्धसामान्यार्थकशेषषष्ठी कुतो न स्वीक्रियते, उत्तरत्र विचार्यमाणानां ब्रह्मानुबन्धिनामुपायादीनामपि जिज्ञास्यत्वसिद्धिसम्भवात् । अन्यथाऽकाङ्क्षावशादेव तत्सिद्धेर्वक्तव्यत्वात् । न च सम्बन्धषष्ठ्याः कर्मार्थत्वसिद्धि र्न भवतीति न तदाश्रितमिति वाच्यम्, जिज्ञासायाः प्रथमं कर्माकाङ्क्षाजननस्वाभाव्यात्कर्मार्थत्वसिद्धेरित्याशयेन शङ्कते - **यद्यपीति** । अत्र 'परिग्रहेऽपि' इत्यत्र परिणा शेषषष्ठ्याः औचित्यश्च दर्शितम् । अत एव उत्तरत्र 'षष्ठी गृह्यते' इत्येतावन्मात्रमुक्तम् । कर्मत्वस्याऽऽभिधानिकत्वसम्भवे आक्षेपलभ्यत्वकथनानौचित्यात् प्रधानस्य ब्रह्मणस्तदनुबन्धिनामन्येषाञ्च कर्मत्वस्य शैषिकषष्ठीपक्षे आक्षेपसिद्धत्वकथनापेक्षया प्रधानकर्मत्वस्याभिधानिकत्वमन्येषां प्रधानसम्बन्धवशादाकाङ्क्षावशाच्चार्थसिद्धत्वमित्यस्यातिसमीचीनत्वात् । अतः शीघ्रोपस्थितिहेतुभूता कृद्योगषष्ठ्येव ग्राह्येत्याभिप्रायेण समाधत्ते - **तथापीति** । ज्ञाधातोः जिज्ञासा इति पदमुत्पन्नम् । ज्ञाधातोः सनि सन्यङोः इति द्वित्वे ज्ञा ज्ञा स इति भवति । प्रथमपदे जकारञकारघटिते ञ इत्यस्य लोपे जकारोपरि आकारस्य स्थाने इकरे च कृते जिज्ञास इति भवति । तत 'अ प्रत्ययात्' इति सूत्रेण कृत् सञ्ज्ञिकाकारे सवर्णदीर्घे च कृते 'जिज्ञासा' इति निष्पद्यते । अत इदं कृदन्तम् ॥

यद्यपि कर्तृकर्मणोः कृतीत्युभयस्मिन्नर्थे षष्ठी विहिता तथापि कर्तुर्जिज्ञासोरधिगतकर्मणः प्रतिपन्नत्वात् कर्मार्थत्वस्य शीघ्रोपस्थितिसम्भवः । वस्तुतः सम्बन्धत्वेनानेकार्थबोधिकया षष्ठ्या कर्मार्थत्वोपस्थितिः इतोऽप्यतिविलम्बितेति न तदाश्रयणसम्भवः । न चाऽऽकृत्यधिकरणन्यायेन सामान्यशक्ते र्विशेषपर्यन्तत्वसिद्ध्या शैषिकषष्ठीपक्षेऽपि नाक्षेपतः प्राप्तिरिति वाच्यम् । सामान्यशक्त्या विशेषमात्रोपादानेऽपि विशिष्य कर्मत्वबोधनासम्भवात् । न हि गोशब्दशक्तिः विशेषतः खण्डत्वादि गृह्णाति ।

**न च 'प्रतिपदविधाना षष्ठी न समस्यते'** (अ.२.२.१०.वा.) **इति कर्मणि षष्ठ्याः समासनिषेधः शङ्कनीयः, 'कृध्योगा च षष्ठी समस्यते'** (अ.२.२.९.वा) **इति प्रतिप्रसवसद्भावात्। ब्रह्मशब्देन च स्वभावतो निरस्तनिखिल-दोषोऽनवधिकातिशयासङ्ख्येयकल्याणगुणगणः पुरुषोत्तमोऽभिधीयते। सर्वत्र बृहत्त्वगुणयोगेन हि ब्रह्मशब्दः। बृहत्त्वश्च स्वरुपेण गुणैश्च यत्रानवधिकातिशयं, सोऽस्य मुख्योऽर्थः। स च सर्वेश्वर एव। अतो ब्रह्मशब्दस्तत्रैव मुख्यवृत्तः; तस्मादन्यत्र तद्गुणलेशयोगादौपचारिकः; अनेकार्थकल्पनाऽयोगात्; भगवच्छब्दवत्।**

---

ननु कृद्योगविहितषष्ठ्या कर्मत्वस्य कथमाभिधानिकत्वम्, तस्या उपपदविभक्तित्वात्। उपपदविभक्तेश्च 'दाराः कलत्र'मित्यादाविव प्रयोगसाधुत्वार्थकतयाऽर्थाभावात्। अत एव हि कारकविभक्त्यपेक्षया उपपदविभक्ते दौर्बल्यमुच्यते। मैवम्। 'कर्तृकरणयोस्तृतीये'त्यादिप्रमाणबलात् कारकविभक्तेः सार्थकत्ववत् 'कर्तृकर्मणोः कृती'तिप्रमाणबलेनोपपद-विभक्तेरप्यर्थवत्त्वाङ्गीकारस्याऽऽवश्यकत्वात्। अन्यथाऽतिप्रसङ्गात्। उपपदविभक्तिदौर्बल्यं तु नानार्थकगवादि-शब्दादिष्विव पदान्तरपरामर्शसापेक्षत्वेन विलम्बितधीहेतुत्वात्। न तु निरर्थकत्वात्। यद्वा कर्तृकर्मणोः कृतीति विशेषानुशासनसद्भावेन तेनैवात्र षष्ठीति सूचनायात्राऽऽभिधानिकत्वोक्तिरिति न दोषः। **आभिधानिकत्वं** = शाब्दत्वम्। एतेन तत्पुरुषे कर्मत्वस्य पूर्वपदलक्षणासिद्धस्याभिधानवृत्त्या बोध्यत्वमनुपपन्नमिति निरस्तम्। लक्ष्यार्थस्यापि शाब्दत्वात्॥

नन्वत्र कर्तृकर्मणोः कृतीति षष्ठी न सम्भवति, तथा सति 'प्रतिपदविधाना षष्ठी न समस्यत' इति समासनिषेधेन ब्रह्मजिज्ञासेति समासानुपपत्तेरिति शङ्कते **न चेति**। **प्रतिपदविधाना**। प्रतिपदम् - पदं पदं प्रति विधानं यस्याः षष्ठ्याः सा। इयं च शेषषष्ठीभिन्ना। तदन्तपदस्य न समास इति भावः। **कृद्योगा** = कृताऽन्विता। कर्तृकर्मणोः कृतीति विहिता। अत्र समासः शास्त्रानुमतः। **प्रतिप्रसवः** - अपवादापवादः। प्राप्तषष्ठीसमासस्य निषेधरूपं 'प्रति-पदविधाना षष्ठी न समस्यत इति वार्त्तिकम्। अतोऽयमपवादः। अस्याप्यपवादस्यापवादः '**कृद्योगा च षष्ठी समस्यत**' इति वार्त्तिकम्। अतोऽपवादापवादः। परिहरति - **कृद्योगा चेति**। अयं भावः - कृद्योगा च षष्ठी समस्यत इत्यपवादस्याप्यपवादसत्त्वेन समासानुपपत्त्यभावेन कृद्योगषष्ठ्याः बाधकाभाव इति। न चैवमपवादशास्त्रस्य निरवकाशत्वप्रसङ्गः। सर्पिषो ज्ञानमित्यादिषु 'ज्ञोऽविदर्थस्य करण' इति सूत्रविहितषष्ठीसमासनिषेधेन सावकाशत्वात्, सर्पिषा प्रवृत्तिरिति तदर्थः। न चात्रापि ज्ञानपदस्य कृदन्तत्वेन 'कृद्योगा च षष्ठी समस्यत' इति प्रतिप्रसवेन समासापत्तिरिति वाच्यम्। ज्ञानपदस्य कृदन्तत्वेऽपि 'सर्पिष' इति षष्ठ्याः कृद्योगविहितत्वाभावात्, कृद्योगप्रयुक्तषष्ठ्या एव प्रतिप्रसवेन समासबोधनात्। अन्यथा सर्पिषो जानीत इति प्रवृत्त्यर्थज्ञाधातुयोगे कृत्प्रत्ययाभावेन षष्ठ्यनापत्तेः। अतः सर्पिषो जानीत इत्यादाविव सर्पिषो ज्ञानमित्यादावपि न कृद्योगविहिता षष्ठी। परन्तु 'ज्ञोऽविदर्थसय करण' इति सूत्रविहितैवेति नानुपपन्नं किञ्चित्।

**ब्रह्मशब्देन च स्वभावतो निरस्तनिखिलदोषोऽनवधिकातिशयासङ्ख्येयकल्याणगुणगणः पुरुषोत्तमोऽभिधीयत** इति। अभिधावृत्त्येति शेषः। अत्रेदं बोध्यम् - अपुरुषः = प्रकृतिः, पुरुषः = बद्धः, उत्पुरुषः = मुक्तः, उत्तरपुरुषः = नित्यः, उत्तमपुरुषः = भगवान्। मुक्तस्य कर्मसम्बन्धार्हत्वरूपदोषवत्त्वम्। नित्यस्य तदभावेपि नित्यभगवत्सङ्कल्प-सिद्धत्वम्। दोषाभाववत्वं भगवद्गतस्य स्वाभाविकश्च। अत उक्तं स्वभावतो निरस्तनिखिलदोष इति। पुरुषार्थ-प्रदत्ववाची पुरुषशब्दः। तदनुगुणकल्याणगुणवत्त्वलाभ इत्यनवधिकातिशयेत्याद्युक्तम्। एवमुभयलिङ्गत्वं प्रतिपादितम्। अतस्तस्यैव पुरुषोत्तमशब्दवाच्यत्वम्। भगवच्छब्दस्याप्युभयलिङ्गत्वमेवार्थः। ''ज्ञानशक्तिबलैश्वर्य इत्यादि प्रमाणानु-सारात्। 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतिपर्यालोचने ब्रह्मशब्दार्थोऽप्यत्रैव पर्यवस्यति। सत्यमिति दोषाभाववत्वम्।

ज्ञानमिति ज्ञानगुणकत्वम् । षण्णामपि गुणानां ज्ञानविततिरूपत्वात् 'तवानन्तगुणस्यापि षडेव प्रथमे गुणाः' 'यैस्त्वयेव जगत्कुक्षौ अन्येऽप्यन्तर्निवेशिता' इति प्रमाणानुसारेण सर्वेषामपि गुणानामत्रान्तर्भावात् । एतादृशाभिप्रायेणैव गद्ये 'भगवन्नारायण' 'अखिलहेयप्रत्यनीककल्यणैकतान...स्वाभाविकानवधिकातिशयासङ्ख्येय' इत्यादि प्रतिपादितम् । अपहतपाप्मत्वादिगुणानां मुक्तेषु सत्त्वेन साम्येपि शेषित्वपतित्वादिगुणाभावात् न कल्याणगुणेषु साम्यम् । 'ब्राह्मेण जैमिनिः' इति सूत्ररीत्या सत्त्वेप्यनवधिकातिशयवत्वं न गुणानाम् । ब्रह्मगतानां वाङ्मनसागोचरत्वात् ।

ननु ब्रह्मगतानां सर्वेषामपि गुणानामनवधिकातिशयत्वेन ब्रह्मानन्दस्यापि तथात्वात् मुक्तानन्दस्यातथात्वात् कथमानन्दतारतम्यनिषेधः, उभयोरानन्दस्य विलक्षणत्वात् इति चेत् - इन्द्र-रुद्र-प्रजापतिप्रभृत्यपेक्षया मुक्तस्य नित्यस्य चानन्दोऽनवधिकातिशय एव । यथा परब्रह्मणः । अतः साम्यमेवाऽऽनन्दे । अत एव 'स एको ब्रह्मणआनन्दः, श्रोत्रियस्य चाकामहतस्य' इत्युक्तम् । 'उपर्युपर्यब्जभुवोपि' इति रीत्या गुणनेपि परमात्मानन्दसदृशानन्दो मुक्तस्यास्त्येव । कथं तर्हि मुक्तादिव्यावृत्तिरिति चेत् सर्वेशितृत्वादिगुणानामभावात् । एवं विभुत्वाणुत्वादिभिरपि वैषम्यम् । अतोऽयमेव पुरुषोत्तमशब्दवाच्यः । पुरुषश्चासौ उत्तमश्च, पुरुषाणामुत्तमः पुरुषेषु उत्तमः, पुरुषेभ्य उत्तम इति सर्वप्रकारेणापि अस्यैवोत्तमत्वम् । "द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च, उत्तमः पुरुषस्त्वन्यः," "यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोस्मि लोके वेदे च प्रथितः पुरुषोत्तम" इति । 'स उत्तमः पुरुषः' इति वेदे । लोके "अंशावतारं पुरुषोत्तमस्य ह्यनादिमध्यान्तमजस्य विष्णोः" "न च तेन विना निद्रां लभते पुरुषोत्तमः ।" "न सम्पदां समाहारे विपदां विनिवर्तने । समर्थो विद्यते लोके तं विना पुरुषोत्तम्" । 'राघवं शोभयन्त्येते षड्गुणाः पुरुषोत्तम'मित्यादि प्रमाणानि लोके द्रष्टव्यानि । लोकः स्मृतिः ॥

यद्यपि षष्ठ्यर्थनिरूपणात्पूर्वमेव ब्रह्मशब्दार्थो निरूपणीयः, अथापि तदर्थनिरूपणात्पूर्वमेव समासस्य प्रदर्शनीयतया प्रदर्शितसमासेऽनुपपत्तिशङ्कापरिहारार्थतया विभक्त्यर्थनिरूपणमवसरग्रस्तमिति न दोषः । स्वस्य भावः असाधारणभूतस्सङ्कल्पः, तस्मात् । स्वसमानाधिकरणसङ्कल्पप्रयोज्यत्वं तदर्थः । स्वव्यधिकरणसङ्कल्पाप्रयोज्यत्वं तु पर्यवसितम् । निरस्ता अभावप्रतियोगिनो निखिलदोषाः यस्मिन्निति विग्रहः । यस्मिन्निति सप्तम्यन्तर्वृत्तित्वस्याभावेऽन्वयः । निखिलनिर्दोषेष्वन्वये बाधापत्तेः । जितरिपुरित्यादिवदत्रापि समासः । निखिलदोषाभाववत्वं तदर्थः । कतिपयदोषशून्याः मुक्तनित्याश्चैतत्पदद्वयेन व्यावृत्ताः, तद्गतनिखिलदोषशून्यत्वस्य तद्व्यधिकरणभगवत्सङ्कल्पप्रयोज्यत्वात् ।

यद्वा स्वभावत इत्यस्यानादित्वविवक्षायां मुक्ता व्यावर्त्यन्ते । अनन्याधीनत्वविवक्षायां तु नित्या अपीति ज्ञेयम् । कल्याणाश्च ते गुणाश्च, तेषां गणः । सङ्ख्यातुं योग्यं सङ्ख्येयं, न सङ्ख्येयम् असङ्ख्येयम् । तत्त्वं च परार्धत्वव्याप्यसङ्ख्यापर्याप्त्यनधिकरणत्वम् । असङ्ख्येयश्चासौ कल्याणगुणगणश्च । न विद्यतेऽवधिर्यस्य सोऽनवाधिकः । स चासौ अतिशयश्च । तत्त्वं चोत्कृष्टावधिशून्यत्वम् । अनवधिकातिशयः असङ्ख्येयकल्याणगुणगणः यस्येति विग्रहः । स्वभावत इत्यस्यात्राप्यनुषङ्गः । तेन ब्रह्मगुणानामविद्याकल्पितत्वपक्षव्यावृत्तिः । न च स्वव्याधिकरणसङ्कल्पाप्रयोज्यत्वरूपतदर्थस्य ब्रह्मगुणानामविद्याकल्पितत्वेऽपि सम्भवेन कथं तद्व्यावृत्तिः । सामान्यतः सङ्कल्पमनिवेश्य स्वव्याधिकरणाप्रयोज्यत्वार्थकथने जीवाज्ञानपक्षे वारणसम्भवेऽपि ब्रह्माज्ञानपक्षे वारणासम्भवादिति वाच्यम् । अनुषक्तस्य स्वभावत इत्यस्य स्वाश्रयाधिकरणकालत्वव्यापकाधिकरणताकत्वार्थकत्वेन तद्वारणात् । अविद्याकल्पितत्वपक्षे ह्यविद्यानाशे गुणस्यापि नाशेन निरुक्तस्वाभाविकत्वस्य गुणेष्वसम्भवात् ।

न चानुषक्तस्यान्यार्थत्वकल्पनमयुक्तमिति वाच्यम् । 'स्याच्चैकस्य ब्रह्मशब्दव'दिति सूत्रेऽनुषेक्के सम्भूतशब्देऽन्यार्थकत्वकल्पनस्याभ्युपगतत्वात् । न चेदं पूर्वपक्षसूत्रमेवेति न तत्कल्पनं प्रामाणिकमिति वाच्यम् । सिद्धान्ते

एतदनिराकरणेनाभ्युपगमस्यावश्यकत्वात्। न च 'अविभागो वचना'दिति सूत्रे 'वाङ्मनसि सम्पद्यते' इत्यतोऽनुषक्तस्य सम्पद्यत इत्यस्यार्थान्तरकल्पनमनुपपन्नमिति स्थापनात्तथाङ्गीकार आवश्यक इति वात्यम्। यथावस्थितार्थस्वीकारे प्रबलबाधकप्रमाणाभावेनान्यार्थकल्पनमनुपपन्नमित्येव तत्रोक्तत्वात्। अत एव हि 'अनुषक्तस्याभिधावैरुप्ये प्रमाणाभावादि'त्युक्तम्। वस्तुतः प्रकृते अभिधावैरुप्यमपि नास्ति। उभयत्रापि स्वभावत इत्यस्य स्वाश्रयाधिकरणकालत्वव्यापकाधिकरणताकत्वार्थकत्वाङ्गीकारात्। न च तर्हि नित्यसिद्धगतनिखिलदोषाभावाधिकरणतायाः स्वाश्रयाधिकरणताकत्वव्यापकत्वेन स्वभावपदेन कथं नित्यादिव्यावृत्तिरिति वाच्यम्। भगवद्गुणापेक्षया सातिशयत्वात्। तेषामीश्वरतद्गुणादिसाक्षात्कारस्यात्यन्तानुकूलस्य कस्यचिदनवधिकातिशयत्वेऽपि तादृशासङ्ख्येयगुणाभावात् व्यावृत्तिः।

अत्रानवधिकातिशयशब्दः गणविशेषणभूतएव। गुणविशेषणत्वे बहुव्रीह्ययोगात्। गुणस्यानवधिकातिशयत्वसिद्धिस्तु एषा परिषदभिजनवती इत्यादाविवार्थवशात्फलति। अनवधिकातिशयासङ्ख्येयकल्याणगुणस्य गणो यस्मिन्निति व्यधिकरणबहुव्रीह्याश्रयणन्तु क्लिष्टम्। सत्यां गतौ तदाश्रयणस्यायुक्तत्वात्। ब्रह्मशब्दस्य देवतान्तरवाचकत्वव्युदासाय पुरुषोत्तमशब्दः। अत्र पञ्चमीषष्टीसप्तमीसमासाः यथासम्भवमूह्याः। इत्थमत्र दलानां प्रयोजनान्यनुसन्धेयानि। निरस्तकतिपयदोषत्वं बद्धसाधारणमिति निरस्तनिखिलदोषत्वनिवेशः। यद्यपि निखिलपदानुपादाने निरस्तदोषत्वं न बद्धसाधारणं तस्य दोषसामान्याभाववत्त्वरूपनिरस्तदोषत्वाभावात्, निरस्तदोषत्वस्य तादृशार्थे व्युप्पत्तेः। अथापि दोषसामान्याभावविवक्षासूचनायैव निखिलपदोपादनम्। मुक्तनित्यव्यावृत्त्यर्थं स्वभावत इति पदम्। स्वव्याधिकरणसङ्कल्पाप्रयोज्यत्वार्थकस्वभावत इति पदोपादानानन्तरं तु निखिलपदमप्यनपेक्षितमेव। बद्धादिगतदोषविशेषाभावस्य स्वव्याधिकरणभगवत्सङ्कल्पप्रयोज्यत्वेन बद्धादिवारणात्। ब्रह्मणि तादृशनिखिलदोषाभाववत्वासिद्धिरित्यपि न शक्यशङ्कम्। दोषाभावशब्दस्यैव दोषसामान्याभावपरत्वात्। न हि घटविशेषवति घटाभाववद्भूतलमिति प्रयोगः प्रामाणिकः। परन्तु स्पाष्ट्यार्थो निखिलशब्द इत्यवसेयम्।

एवं स्वभावो निरस्तनिखिलदोष इत्यनेन सर्ववैलक्षण्यमुक्तम्। अथ स्वभावतोऽनवाधिकातिशयासङ्ख्येयकल्याणगुणगण इत्यनेनापि तदुच्यते। कल्याणगुणगणवत्त्वं बद्धविशेषसाधारणमिति अनवाधिकातिशयपदनिवेशः। नित्यगतानामीश्वरसाक्षात्कारतद्गुणसाक्षात्कारतद्विभूतिसाक्षात्काराणामनवधिकातिशयत्वेन नित्यव्यावृत्त्यर्थोऽसङ्ख्येयत्वनिवेशः। असङ्ख्येयत्वं पूर्वोक्तम्। अतो ज्ञानशक्त्यादीनां षट्त्वादिसङ्ख्याश्रयत्वेपि षट्त्वादिसङ्ख्यापर्याप्त्यनधिकरणत्वादसङ्ख्येयत्वोपपत्तिः। असङ्ख्येयत्वं गुणेपि विशेषणं भवितुमर्हति बहुव्रीहिविरोधाभावात्। परन्तु गणविशेषणत्वे गुणानामसङ्ख्येयत्वं कैमुतिकनयसिद्धमित्युत्कर्षः। ब्रह्मगुणानामविद्याकल्पितत्वपक्षव्यावृत्तये स्वभावत इति। स्वाश्रयाधिकरणकालत्वव्यापकाधिकरणताकत्वं तदर्थः। स्वव्यधिकरणसङ्कल्पाप्रयोज्यत्वार्थकत्वे त्वनवधिकातिशयासङ्ख्येयपदयो वैयर्थ्यं स्यात्। अत्राद्वैतिभास्करयादवमतत्रयव्यावृत्तिः पदद्वयेनापि सूचिता। इदञ्च विशेषणद्वयं न ब्रह्मशब्दप्रवृत्तिनिमित्ततयोक्तम्। किन्तु ब्रह्मशब्दस्य पुरुषोत्तमपरत्वप्रतिपादनोपयुक्ततया।

ननु तर्हि ब्रह्मशब्दस्य प्रवृत्तिनिमित्तं किमिति चेत् - स्वरूपतो गुणतश्चानवधिकातिशयबृहत्वविशिष्टत्वं तदिति गृहाण। गुणतो बृहत्वं हि सद्वारकबृहत्वम्। तच्च गुणद्वारोपपादनीयम्। तथा च स्वाश्रयत्वस्वाश्रयाश्रयत्वोभयसम्बन्धेनानवधिकातिशयबृहत्वविशिष्टः पुरुषोत्तम एव ब्रह्मपदशक्यार्थ इति सिद्धम्। ब्रह्मण इव तद्गुणस्याप्यनवधिकातिशयत्वात्। यद्यपि 'बृहति बृंह्मयति तस्मादुच्यते परं ब्रह्म', 'बृहत्वाद्बृहणत्वाच्च तद्ब्रह्मेत्यभिधीयत' इति श्रुतिस्मृतिभ्यां बृंहणत्वमपि प्रवृत्तिनिमित्ततयाऽवगतम्। अथापि सकलहेयप्रत्यनीकत्वमोक्षप्रदत्वौपयिकगुणगणवत्वरूपाऽऽनन्त्यावहत्वात्मकबृंहणत्वस्य बृहत्व एवान्तर्भावान्न पृथक् तस्य प्रवृत्तिनिमित्तताऽऽश्रिता। ननु स्वरूपतो बृहत्वमेव प्रवृत्तिनिमित्तमस्तु। किं गुणैरिति चेन्न। ब्रह्मगुणादेरपि स्वरूपतो बृहत्वेन ब्रह्मशब्दवाच्यत्वापत्तेः। न च तर्हि गुणतो

**तापत्रयातुरैरमृतत्वाय स एव जिज्ञास्यः । अतः सर्वेश्वर एव जिज्ञासाकर्मभूतं ब्रह्म । ज्ञातुमिच्छा जिज्ञासा ।**

बृहत्वमेवस्त्विति वात्यम् । शब्दशक्त्यसङ्कोचस्य स्वतः प्राप्तत्वात् ।

यद्यपि वेदादावपि ब्रह्मशब्दः प्रयुज्यते । तथापि स प्रयोग औपचारिकः । न तु तत्र शक्तिः, अनन्यथासिद्ध-प्रयोगस्यैव शक्तिकल्पकत्वात् । न च वेदे शक्तिः ब्रह्मणि तु लक्षणेति वक्तुं शक्यम् । ब्रह्मशब्दयोगार्थतावच्छेदकस्य वेदादौ बाधेन तत्र शक्तिकल्पनासम्भवात् । 'वेदे भूरिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणि । तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने ॥ यस्मिन् प्रयुज्यमाने तु गुणयोगस्सुपुष्कलः । तत्रैव मुख्यवृत्तोऽयमन्यत्र ह्युपचारतः ॥' इति गारुडपुराणे पुरुषोत्तमे शक्तेरन्यत्र लक्षणायाः प्रतिपादनाच्च । न च प्रणवादौ भगवति च शक्तिः कल्प्यत इति वाच्यम् । अनेक-शक्तिकल्पनाप्रसङ्गात् । योगार्थस्य बाधाच्च । यथा हि 'ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः' इति भगवच्छब्दस्य निर्दोषत्वपर्यन्तानां ज्ञानादीनां प्रवृत्तिनिमित्तत्वं स्वीकृत्य "तत्र पूज्यपदार्थोक्ति-परिभाषासमन्वितः । शब्दोऽयं नोपचारेण ह्यन्यत्र ह्युपचारतः" इति पुरूषोत्तमे मुख्यत्वमन्यत्रौपचारिकत्वं कल्प्यते । अतो यौगिकपदानां यत्र योगार्थस्य मुख्यता स एव शक्यार्थः । यत्र तु तल्लेशयोगः, स औपचारिक एवेत्यभ्युपेयम् ।

इत्थञ्च प्रधानादिषु प्रयोगस्यावयवशक्तिनिबन्धनत्वाभावेनाऽऽपेक्षिकबृहत्वयोगिषु सर्ववस्तुषु बृहन्महच्छब्दादिवत् ब्रह्मशब्दप्रयोगादर्शनेनानेकशक्तिकल्पकानन्यथासिद्धप्रमाणाभावेन चान्यत्र ब्रह्मशब्दप्रयोगो बृहत्वगुणलेशयोगेनैवे-त्येषितव्यमेव । वस्तुतस्तापत्रयातुरैर्जिज्ञास्यो न प्रधानादि र्भवितुमर्हति । 'जुष्टं यदा पश्यत्यन्यमीशम्' इत्यादिभिः परोपासनस्यैव तापत्रयनिवर्तकत्वोक्तेः परस्य पुरूषोत्तमस्यैव जिज्ञास्यत्वौचित्यात् । यद्यपि प्रत्यगात्मनोऽपि 'सोन्वेष्टव्य' इत्यादिना जिज्ञास्यत्वमुक्तम्, अथापि तस्य तापत्रयातुरत्वेन जिज्ञासाकर्तृत्वमेवेति न तत्कर्मत्वसम्भव इत्याशयेनाह - **तापत्रयातुरैरिति** । एतेनात्रत्यब्रह्मशब्दस्य गौणार्थकत्वं किं न स्यादिति शङ्कनमपास्तम् । मुख्ये सम्भवति लाक्षणि-कार्थकल्पनाऽसम्भवात् । लक्षणाबीजस्याभावाच्च ।

अथ जिज्ञासापदं व्याचष्टे - **ज्ञातुमिच्छा जिज्ञासेति** । अत्र स्वविषयज्ञानसिद्ध्यर्थतया इच्छारूपक्रियायाः प्रोक्षणादेरिव स्वकर्मभूतज्ञानप्रधानत्वात् विषयसौन्दर्यज्ञानाधीनतया कृतिसाध्यत्वाभावाच्च न विधेयत्वमिति तद्विषयभूत-विचारात्मकज्ञानस्यैव विधेयत्वमित्याभिप्रयन्नाह - **इच्छाया इति** । यद्यप्यनिष्पन्नेच्छोः पुरुषस्येच्छोत्पादनं सम्भवति, अथापि कर्तव्येत्यध्याहृतपदस्यान्वयो दुर्घटः । न चाबद्धं कृत्वा कुचोद्यं करोतीति न्यायेन कर्तव्येति पदमध्याहृत्य तदन्वयदौर्घट्येन ज्ञानस्य विधेयत्वं कुत इष्यते । निष्पाद्येति पदाध्याहारे सर्वोपपत्तिसम्भवात् । ज्ञाने लक्षणाभावाच्च । सन्ति हि मुमुक्षुत्वसम्पादकानि शास्त्राणीति वाच्यम् । उपरि ब्रह्मज्ञानेच्छोत्पादनमार्गनिरूपणेन तथाध्याहारासम्भवात् । रागात् ब्रह्मविचारे प्रवृत्तस्य तदिच्छायाः पूर्वमेवसिद्धत्वेनोपरि निष्पाद्यत्वासम्भवात् । अतः 'स्नात्वा भुञ्जीत', 'प्राङ्मुखो भुञ्जीत' इत्यादाविव इच्छाविषयस्य ज्ञानस्यैव विधेयत्वम् । पूर्वत्र प्राप्तत्वात् परित्यागः । अत्र विधेयत्वासम्भवादिति विशेषः ।

ननु तर्हि किमर्थं सन्नन्तनिर्देशः कृत इति चेत् - 'निदिध्यासितव्यः' 'विजिज्ञासितव्यः' 'तद्विजिज्ञासस्वे'ति श्रुत्यनुसारादिति ब्रूमः । ननु श्रुतावपि वा तथानिर्देशः कथम्? उपायदशाप्रभृति भगवज्ज्ञानस्य प्रीतिरूपत्वेनेच्छा-विषयत्वद्योतनाय । यद्वा सूत्रे सन्नन्तनिर्देशः विचारस्य रागप्राप्तत्वज्ञापनार्थः । अन्यथापि च प्रयोजनं पूर्वमुपदर्शितम् । अत्र तर्करूपं ज्ञानं विधेयम् । तर्कानुगृहीतवाक्यजन्यप्रमितिरूपज्ञानं फलम् । फलभूतप्रमितिरूपज्ञानस्य विधेयत्व-वादिनापि तर्करूपविचारस्याऽऽक्षेपलभ्यत्वकथनावश्यकत्वात् । ननु रागप्राप्तस्य विचारस्य कथं विधेयत्वम् ? अत एव हि स्वयमेव प्रवर्तत इत्युपरि भाषितम् । मैवम् । रागप्राप्तस्यापि पूर्वपक्षयुक्त्याऽनारभ्यत्वभ्रमे आरम्भणीयत्वज्ञापनेन विधेयत्वसम्भवात् । अज्ञातज्ञापनस्यैव प्रकृते विधिशब्दार्थत्वात् । एवं सूत्रस्याक्षरार्थमुक्त्वा तत्पर्यवसिततात्पर्यार्थमाह

**इच्छाया इष्यमाणप्रधानत्वादिष्यमाणं ज्ञानमिह विधीयते । मीमांसापूर्वभागज्ञातस्य कर्मणोऽल्पास्थिर-फलत्वात् उपरितनभागावसेयस्यानन्ताक्षयफलत्वाच्च पूर्ववृत्तात् कर्मज्ञानादनन्तरं तत एव हेतोर्ब्रह्म ज्ञातव्य-मित्युक्तं भवति । तदाह वृत्तिकारः - 'वृत्तात् कर्माधिगमादनन्तरं ब्रह्मविविदिषा' इति । वक्ष्यति च कर्म-ब्रह्ममीमांसयोरैकशास्त्र्यम्, 'संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिः' इति । अतः प्रतिपिपादयिषितार्थभेदेन षट्कभेदवत् अध्यायभेदवच्च पूर्वोत्तरमीमांसयोर्भेदः । मीमांसाशास्त्रम्, 'अथातो धर्मजिज्ञासा'** (पू.मी. १.१.१.) **इत्यारभ्य, 'अनावृत्तिः शब्दादनावृत्तिः शब्दात्'** (उ.मी.४.४.२२.) **इत्येवमन्तं सङ्गतिविशेषेण विशिष्टक्रमम् ।**

---

- **मीमांसेति** । सूत्रे अतश्शब्दो वृत्तस्य हेतुत्वं बोधयति । 'अथे'त्यनेनाऽऽनन्तर्यमुच्यते । तस्यैव हेतुत्वं स्वरसतः सिध्यति । तदैव वाक्यस्वारस्यम् । साधनचतुष्टयानन्तर्यमित्यर्थं वदतामद्वैतिनां मते न स्वारस्यम् । यतस्तैः अत इत्यस्य कर्मणामनित्यफलकत्वबोधनादित्यर्थो वर्ण्यते । अतस्सूत्रस्वारस्यं न तेषां मत इति भावः ॥

इत्थञ्च कर्मविचारेण मीमांसापूर्वभागप्रतिपन्नकर्मण्यल्पास्थिरफलत्वस्य निश्चितत्वात् प्रतिबन्धकीभूतकर्म-विचारेच्छायाश्च विनष्टत्वात् ब्रह्मोपासनेऽनन्ताक्षयफलत्वापातप्रतीतिसत्त्वाच्च तन्निर्णयार्थं ब्रह्मविचारोऽवश्यं कर्तव्य इति सूत्रार्थः । **तदाह वृत्तिकार** इति । बोधायन इति शेषः । **वृत्तात् कर्माधिगमादनन्तरं ब्रह्मविविदिषेति** । अधिगम्यते अनेनेति अधिगमो विचारः । **विविदिषा** = जिज्ञासा = विचार इति यावत् । कर्मब्रह्ममीमांसयोरैकशास्त्र्यमपि तत्सम्मतमेवेत्याह - **वक्ष्यतीति** । वृत्तात्कर्माधिगमादित्यनन्तरं वृत्तिग्रन्थे ऐकशास्त्र्यस्योक्तत्वात् वक्ष्यतीति भविष्य-न्निर्देशः । पूर्वोत्तरमीमांसयोरेकशास्त्रत्वात् शास्त्रैकदेशे कर्मविचारे कृते तदनन्तरं तदेकदेशस्य ब्रह्मविचारस्यावश्यकर्तव्य-त्वसिद्धिरित्याभिप्रायः । जगच्छरीरः, परमात्मा शारीरः, तद्विषयं शास्त्रं **शारीरकम्** । अत्र जैमिनीयेनेत्युक्त्या,'कर्मदेवता ब्रह्मगोचरा सा त्रिधोद्भभौ सूत्रकारतः । जैमिनेर्मुनेः काशकृत्स्नतो वादरायणादित्यतः क्रमादि'ति तत्त्वरत्नाकरोक्त्या च क्वचिदुपचारो ग्राह्यः । तेन न मिथो विरोधः । ऐकशास्त्र्यम् एकविद्यास्थानत्वम् । ऐकप्रबन्ध्यमपि । यद्यपि काण्डत्रये प्रतिपिपादयिषितार्थभेदोऽस्ति, अथापि न स ऐकशास्त्र्यभञ्जकः । अन्यथा पूर्वकाण्डे पूर्वोत्तरषट्के सर्वत्रापि अध्यायपादादिभेदभिन्ने प्रतिपिपादयिषितार्थभेदेनाभ्युपगतैकशास्त्र्यस्याप्यसिद्धिप्रसङ्गात् । तस्मात् 'अथाऽतो धर्माजिज्ञासे'त्यारभ्य 'अनावृत्तिश्शब्दादनावृत्तिश्शब्दादि'त्यन्तमेकमेव शास्त्रम् । **सङ्गतिविशेषणविशिष्टक्रममिति** । पौर्वापर्यनियामकसङ्गतिविशेषेण विलक्षणक्रमयुक्तमित्यर्थः । एतेन शास्त्रैक्येऽभ्युपगम्यमाने कर्ममीमांसाब्रह्ममीमांसेति भेदेन व्यवहारः कथमिति शङ्काप्यपास्ता । प्रतिपिपादयिषितकर्मब्रह्मरूपार्थभेदेन मीमांसाभेदेनावान्तरभेदव्यवहारात् । दृश्यते हि प्रतिपाद्यभेदेन षट्कादिव्यवहार इति ।

अत्रेदं तत्त्वम् - व्याख्येयस्य वेदस्य नियतपौर्वापर्यभागद्वयात्मकत्वात् तद्व्याख्यानरूपस्यापि पौर्वापर्य-विशेषविशिष्टभागद्वयरूपतेत्यैकशास्त्र्यमभ्युपेत्यम् । अथापि भिन्नकर्तृकाणां कथमेकप्रबन्धत्वमिति चेत् व्याख्येयैक्या-दिति ब्रूमः । अत एव धूर्तस्वामिकपर्दिकर्तृकाऽऽपस्तम्बीयसूत्रव्याख्यानस्यैकप्रबन्धत्वमिष्यते । न हि कर्तृभेद एकग्रन्थ-त्वाभावसाधकः । अन्यथा कादम्बर्यादौ तदसिद्धेः । अतस्तदनुकूलकृत्युद्देश्यसमाप्त्युद्देश्यककृतिसाध्यत्वरूपैकप्रबन्धत्वं कर्मब्रह्ममीमांसयो दुष्परिहरमेव । ननु जैमिनिना सिद्धपरवाक्यानां क्रियाशेषत्वमुक्तम् । अत्र तु तच्छेषत्वं नास्तीत्युच्यते । एवं देवतानिरासः पूर्वत्र क्रियते । अत्र तु साऽभ्युपगम्यते । अतोऽत्र तद्विरुद्धार्थप्रतिपादनात् कथमेकशास्त्रत्वम् । उच्यते । सामान्यतः सिद्धपरवाक्यानां क्रियाशेषत्वमभिहितं जैमिनिना । अत्र तु सिद्धपरवाक्यविशेषस्य विधिशेषत्वमस्ति न वेति विचार्य स्वयम्पुरुषार्थविरहिणां तेषां विधिशेषत्वं, तत्पर्यवसायिनां तु न तच्छेषत्वमिति निर्णीतम् । अतस्सामान्य-

**तथा हि - प्रथमं तावत्, 'स्वाध्यायोऽध्येतव्यः'** (तै.आ.२.१५) **इत्यध्ययनेनैव स्वाध्यायशब्दवाच्य-**

विशेषन्यायेन तच्छेषत्वाभावकथनं न दोषाय । अभ्युपगतश्च सामान्यापवादन्यायः एकस्मिन्नेव शास्त्रे । अत एव 'न हिंस्यात् सर्वाभूतानी'ति सामान्यतो हिंसानिषेधे प्राप्तेऽपि हिंसाविशेषस्य कर्तव्यत्वमुच्यते ।

नापि देवतानिराकरणे जैमिनेस्तात्पर्यम्, अन्वारुह्य कृतत्वात् । देवताया अभ्युपगतत्वाच्च । 'सम्पत्तेरिति जैमिनिः', 'परं जैमिनि र्मुख्यत्वात्', 'ब्राह्मेण जैमिनिः', 'मध्वादिष्वसम्भवादनधिकारं जैमिनि'रित्यादि ब्रह्मसूत्राणि हि जैमिने र्दैवताभ्युपगमं सूचयन्ति । महाभारतेऽपि हयशिरोपाख्यानादिषु भगवता व्यासेन जैमिनेः परमात्मतत्त्वज्ञानमुपदिश्यते । तत्र तत्र बादरायणेन स्वमतविरुद्धजैमिनिमतोपन्यासस्तु जैमिनेस्स्वशिष्यत्वात् शिष्यपूर्वपक्षवैभवातिशयख्यापनायेति । ननु तर्हि जैमिनिना कथमहृदयं देवता निराक्रियत इति चेत् वेदाप्रामाण्यादिवादिप्रतिपक्षनिरासाय । प्रथमतो वेदप्रामाण्य-कर्मावश्यकर्तव्यतादिसमर्थने पश्चादभिमतेश्वरसिद्धिरप्ययत्नलभ्या भवतीत्याभिप्रायेण । "अभीष्टार्थव्ययेनापि जयति क्षेत्रहारिणम् । लब्धक्षेत्रैर्न दुष्प्रापः स्यादर्थ इति निश्चयात्" इति न्यायात् पूर्वं देवतानिरासः । सर्वाप्रामाण्यवादिनं प्रति प्रथमत एव देवतासमर्थनमशक्यमित्यभिप्रायात् । वस्तुतो देवतानिराकरणमेव नास्ति । 'द्रव्यदेवतासाम्ये द्रव्यं बलीय' इत्यादिषु स्वेन देवताया अङ्गीकृतत्वात् । यच्च द्रव्यप्राधान्यमभ्युपेतं, तदपि द्रव्यस्य प्रत्यक्षगम्यत्वेनाविलम्बो-पस्थितिसूचनाय । देवता विलम्बितशास्त्रगम्या ।

अथ यदि जैमिनेरैकशास्त्र्यमभिमतं तर्हि तदुभयसाधारणतया 'वेदार्थजिज्ञासे'ति सूत्रं कुर्यात् । सूत्रितं च 'धर्मजिज्ञासे'ति । अतो नैकशास्त्र्यमिति चेत् ? अत्रोच्यते - साधारणार्थप्रतिज्ञायामप्यसाधारणार्थप्रतिज्ञाऽवश्यकर्तव्या । अत एव धर्मजिज्ञासाप्रतिज्ञाऽनन्तरमपि 'अथातश्शेषलक्षण'मित्यसाधारणार्थप्रतिज्ञा कृता । 'अथातो धर्मजिज्ञासा', 'अथातो ब्रह्मजिज्ञासे'ति भागद्वयासाधारणप्रतिज्ञानेन साधारणप्रतिज्ञाप्यर्थसिद्धा भविष्यतीत्याशयेन तथाकृतम् । वस्तुतः "कृष्णं धर्मं सनातन"मिति सिद्धस्यापि धर्मत्वेन साधारणप्रतिज्ञैव कृतेति नानुपपत्तिगन्धोऽपि । न हि सिद्धस्य धर्मत्वं न युक्तिमत् । 'द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते' इति सिद्धद्रव्यादीनामपि धर्मत्वस्थापनात् । न च पूर्वमेव प्रतिज्ञातत्वे ब्रह्मजिज्ञासेति पुनः प्रतिज्ञानं कुत इति वाच्यम् । बहुग्रन्थव्यवधानात् । शब्दाबोध्यत्वशङ्कापरिहारार्थत्वाच्च । अथैवं जैमिनेरविवक्षितमिति चेत्, अस्त्वविवक्षा । अथापि कर्मणामुपासनाङ्गत्वेन तत्कल्पनसम्भवात् । अतदर्थतया क्लृप्तस्यापि योग्यस्यापेक्षितस्य कल्प्ये ग्रामे पूर्वकल्पिततटाकस्येव तदर्थत्वकल्पनसम्भवात् ।

प्रतिपाद्यार्थभेदस्तु षट्काध्यायादिष्विव नैकशास्त्र्यविघटक इति पूर्वमेवोक्तम् । अतः स्थितं शास्त्रैकत्वं न भञ्जनीयमिति । अथोक्तमर्थमधिकार्थञ्च विस्तरेणोपपादयितुमुपक्रमते - **तथा हीत्यादिना** । तत्राध्ययनविधिः प्रथमतो निरूप्यते । **प्रथममिति** । यद्यपि वेदप्रामाण्यसमर्थनमेवाऽऽदौ कर्तव्यम् । न त्वध्ययनविधिनिरूपणम् । अन्यथा अध्ययनविधेरप्यप्रामाण्यापत्त्या तन्निरूपणस्यैवानवसरग्रस्तत्वापत्तेः । अथापि पूर्वमीमांसायामेव वेदप्रामाण्यं समर्थित-मिति पुनरत्र तत्समर्थने ऐकशास्त्र्यवादिनामस्माकं पुनरुक्तता स्यादिति न तत्समर्थनं कृतम् । अतस्तदुपजीव्यैवादौ अध्ययनविधिनिरूपणमात्रं कियते । वेदप्रामाण्यस्येवाध्ययनविधेरपि पूर्वतन्त्र एव निरूपितत्वेन पुनस्तन्निरूपणमनुप-युक्तं, पुनरुक्तश्चेति शङ्कां तूत्तरत्र परिहरिष्यामः ।

तावच्छब्दोऽवधारणार्थः । तेन वटोरष्टवर्षाद्युपनयनान्तरं श्रौताचारशिक्षणपूर्वकमध्ययनस्य नियतत्वान्न शास्त्रा-न्तरावसर इति न तन्मूलसाधनचतुष्टयस्य पूर्ववृत्तत्वसम्भावनाशङ्केत्युक्तं भवति । स्वाध्यायोऽध्येतव्य इति स्वविध्यु-पादानमध्ययनस्य स्वविधिप्रयुक्तत्वज्ञापनार्थम् । अध्ययनेनाक्षरराशे र्ग्रहणमित्यनेनाध्ययनस्य स्वाध्यायसंस्कारत्वं सूचितम् । एवकारो नियमविधित्वद्योतकः ।

**वेदाख्याक्षरराशेर्ग्रहणं विधीयते। तच्चाध्ययनं किंरूपं कथञ्च कर्तव्यमित्यपेक्षायाम्, 'अष्टवर्षं ब्राह्मणमुपनयीत', 'तमध्यापयेत्'** (श.ब्रा.), **इत्यनेन 'श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि। युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्धपञ्चमान् ॥'** (मनु.४.९५) **इत्यादिव्रतनियमविशेषोपदेशैश्चापेक्षितानि विधीयन्ते। एवं सत्सन्तानप्रसूतसदाचारनिष्ठात्मगुणोपेतवेदविदाचार्योपनीतस्य व्रतनियमविशेषयुक्तस्याऽऽचार्योच्चारणानूच्चारणरुपमक्षरराशिग्रहणफलमध्ययनमित्यवगम्यते।**

---

अध्ययनविधेरर्थज्ञानपर्यन्तत्वे न शब्दस्वारस्यम्। अपि त्वक्षरराशिग्रहणपर्यन्तत्व एवेति सूचनाय स्वाध्यायशब्दवाच्यत्वविशेषणम्। अनेन स्वशाखैकदेशस्य शाखान्तरस्य वा स्वाध्यायशब्दवाच्यत्वमपि निरस्तम्। तथा च परम्पराप्राप्तायाः स्वशाखाया यथाक्रमं कात्स्न्येनाध्ययनं कर्तव्यमित्युक्तं भवति। **विधीयते** = फलत्वेन नियम्यत इत्यर्थः। एतेनाक्षरराशिग्रहणस्य फलत्वेन फलस्य च विधेयत्वासम्भवात् ग्रहणं विधीयत इति कथनं कथमिति शङ्का निरस्ता। ततश्चाक्षरराशिग्रहणरूपफलं प्रति पुस्तकनिरीक्षणाद्यनेकोपायसम्भवेपि उपायविशेषत एव तद्ग्रहणमावश्यकमिति, उपायविशेषनियमनं बोधयतीति भावः। नन्वक्षरराशिग्रहणमन्यतोऽपि शक्यम्। अतः किमर्थं तस्योपायस्य विशेषतो नियम इति चेत् जपाद्युपयोगोऽध्ययनगृहीतेनैवेति नियमे तात्पर्यम्। अन्यथा निष्फलत्वात्। अर्थज्ञाननियमवादिनाप्येवमेव ह्यभ्युपेयत इति ॥

ननु स्वाध्यायोऽध्येतव्य इत्यनेन स्वकृत्स्नशाखाऽध्येतव्या इत्येतावन्मात्रमेवोच्यते। नैतावता साधनचतुष्टयनिष्पत्तिहेतुभूतशास्त्रान्तरावसरविरोधः। पूर्वं पश्चाद्वा तादृशशास्त्रान्तराभ्याससम्भवेन विहितस्वशाखाऽध्ययनस्याप्युपपत्तेरित्यत्राह - **तच्चाध्ययनमिति। किंरूपमिति।** किं जपादिवत्स्वतन्त्रोच्चारणरूपमुत गुरुमुखोच्चारणानूच्चारणरूपं, किं वा पारायणवदनावृत्तमुतावघातवच्चावृत्तमित्यर्थः। **कथं च कर्तव्यमित्यनेन** इतिकर्तव्यताप्रकारप्रश्नः। **अष्टवर्षमित्यनेन** वटोरध्ययनात्पूर्वं साधनचतुष्टयनिष्पत्तिहेतुभूतशास्त्रान्तरावसरनिरोधः सूचितः। पश्चात्तन्निरोधस्तु 'अध्ययनगृहीतस्ये'त्यादिनोपरिष्टात्प्रदर्शयिष्यते। उपबृंहणे उपनयनस्याध्ययनाङ्गत्वं प्रतीतम्। उपबृंहणीये चाध्यापनाङ्गत्वमिति विशेषमभिसन्धायोपबृंहणीयस्योपबृंहणसापेक्षत्वेन तदैकार्थ्यावश्यकतां च मत्वा 'इत्यनेन ... इत्यादिव्रतनियमविशेषोपदेशैश्च' इति पृथङ्निर्देशः कृतः। तथा चोपाकृत्याधीयीत ''इत्युपनीतस्याध्ययनार्थतयोपाकर्मादिनिर्देशेनोक्तोपबृंहणानुसारात् 'उपनयीत', 'तमध्यापयेत्' इति श्रुतेः 'उपनीतोऽधीयीत इत्यर्थे तात्पर्यमिति निश्चेतव्यमिति भावः ॥

**युक्तः**:= अवहितः। व्रतादियुक्त इति वार्थः। **अर्धपञ्चमानिति।** अर्धं पञ्चमं, पञ्चत्वपूरकं येषां ते। अर्धपञ्चमाः, तान् अर्धमासाधिकांश्चतुरो मासानित्यर्थः। इत्यादीत्यत्रादिपदेन 'अत ऊर्ध्वन्तु छब्दांसि शुक्लेषु नियतः पठेत्। वेदाङ्गानि च सर्वाणि कृष्णपक्षेषु सम्पठेत्' इति साङ्गाध्ययनानुगुणवचनानां सङ्ग्रहः। **व्रतविशेषः** = उपाकृतिप्राजापत्यादिः। **नियमविशेषः** = शुक्लपक्षेऽङ्ग्यध्ययनं, कृष्णपक्षेऽङ्गाध्ययनमित्यादि कालभेदविषयनियमः। शूद्रसमीपे नाध्येतव्यमित्युक्तदेशविशेषनियमश्च। अथाध्ययनविधिवाक्यप्रदर्शितोपबृंहणीयोपबृंहणवाक्यद्वयलब्धमर्थं सङ्कलाति - **एवमिति।** अभिजनविद्यासमुदेतं समाहितमित्यादिप्रमाणमनुसृत्य **सत्सन्तनेत्याद्युक्तम्।** सत्सन्तानप्रसूतेत्यनेनाभिजनसमुदेतत्वं सदाचारनिष्ठाऽऽत्मगुणोपेतमित्यनेन समाहितत्वं वेदविदित्यनेन विद्यासमुदेतत्वं चोक्तम्।

शास्त्रेष्वाचार्यगुणावश्यकत्वकीर्तनं नाध्यापनविधिपरत्वद्योतनाय। किन्तु ऋत्विग्गुणोक्तिन्यायेनाध्ययनपरत्वद्योतनायैवेत्यभिप्रत्य तादृशाचार्योपनीतस्येत्युक्तम्। संस्कर्तारमीत्सीत्। तस्मिंश्चैव विद्याकर्मान्तमित्यादिनाऽऽचार्यगुणानां माणवकार्थत्वं ह्युच्यत इति भावः। **व्रतनियमविशेषयुक्तस्येति** प्रतिबन्दीसूचनाय। अध्यापनविधिवादिना त्वयाप्यष्टवर्षत्वादि माणवकविशेषणं किमर्थमिति पृष्टे आचार्यार्थमिति ह्युच्यते। तद्वदेवाचार्यविशेषणं माणवकार्थमिति

**अध्ययनञ्च स्वाध्यायसंस्कारः 'स्वाध्यायोऽध्येतव्य' इति स्वाध्यायस्य कर्मत्वावगमात्। संस्कारो हि नाम कार्यान्तरयोग्यताकरणम्। संस्कार्यत्वञ्च स्वाध्यायस्य युक्तम्। धर्मार्थकाममोक्षरूपपुरुषार्थचतुष्टय-तत्साधनावबोधित्वात्; जपादिना स्वरूपेणापि तत्साधनत्वाच्च।**

---

ब्रूम इत्याशयः। एवं पदद्वयेनाधिकारिस्वरूपं कर्तव्यताप्रकारश्चोक्तम्। अथ किंरूपमिति प्रश्नप्रतिवचनमाह - **आचार्योच्चारणानूच्चारणरूपमिति**। तथा च स्वर्गकामत्ववदक्षरराशिग्रहणकामत्वमधिकारिविशेषणमिति भावः।

अथाध्ययनविधेः प्राभाकराभिमतप्रधानकर्मत्वादिव्युदासेन भाट्टाभिमतगुणकर्मत्वादिस्थापनायारभते - **अध्ययनं चेति**। ननु 'संस्कारः पुसः एवेष्टो मन्त्रणप्रोक्षणादिभि'रिति प्रोक्षणादिजन्यसंस्कारस्यापि पुरुषगतत्वमभ्युपयतामध्ययन-संस्कारस्यापि पुरुषगतत्वमेवेति कथं स्वाध्यायस्याध्ययनेन संस्कार्यत्वमित्यत्राह **स्वाध्याय इत्यादि**। **कर्मत्वावगमादिति**। अत्रानादिसिद्धत्व-अन्यथाभावादर्शन-उपयोगान्तरवत्त्वादिभिः निर्वर्त्यत्वकार्यत्वप्राप्यत्वानामसम्भवात् परिशेषसहकृत-कर्मत्वावगत्या संस्कार्यत्वं स्वाध्यायस्य सिध्यतीति भावः। नन्वस्तु कर्मत्वावगमः। अथाप्यद्रव्यस्य शब्दात्मकस्य स्वाध्यायस्य कथं संस्कार्यत्वम्। न ह्यद्रव्यस्यान्यत्र विनियोगः श्रुत्यादिसिद्धः येन संस्कार्यत्वमुपपद्यते इत्यत्राह - **संस्कारो हीति**। **हिः** प्रसिद्धौ। परसम्मतिप्रदर्शनार्थो नामशब्दः। अयमाशयः कस्यचित्सतोऽतिशयाधानं संस्कार इति हि संस्कारस्वरूपम्। न चाविनियुक्तत्वान्न संस्कार्यत्वमिति युक्तम्। विनियोगाभावेऽप्युपयोगवशेन संस्कार्यत्वसिद्धेः। वस्तुतः ऋग्वेदेन होता करोतीत्यादिभिः सामान्यतो विशेषतश्च विनियोगोऽपि श्रूयते। यद्यपि विहितक्रियासाध्यस्ये-श्वरानुग्रहरूपातिशयस्य न स्वाध्यायगतत्वम्। अथाप्यध्ययनप्राप्तेनाराध्यभूतेश्वरबुद्धिसङ्गृहीतेन स्वाध्यायेनैव यथार्हो-त्तरक्रियायाः शास्त्रतो नियमनमिति नानुपपत्तिः। व्रीहिन्प्रोक्षतीत्यादावपि ईश्वरानुग्रहरूपातिशयवादिनामेवं हि रीतिरिति।

ननु स्वाध्यायोऽध्येतव्य इत्यत्रेव सक्तून्जुहोति सुवर्णं भार्यमित्यादावपि सक्त्वादीनां निर्वर्त्यत्वादिरहित कर्मत्वा-वगमस्याविशिष्टत्वात्तेषामपि संस्कार्यत्वापत्तिः। स्वाध्यायस्य वाऽसंस्कार्यत्वप्रसङ्ग इत्यत्राह **संस्कार्यत्वं चेति**। सक्त्वादीनां नष्टत्वेन पूर्वत्र परत्र वोपयोगासम्भवान्न संस्कार्यत्वसम्भवः। स्वाध्यायस्य चोपयोगदर्शनात् संस्कार्यत्वमिति वैषम्यमिति भावः। नन्वत्रापि नोपयोगसम्भवः, अदर्शनात्। परिशेषसहकृतकर्मत्वावगतिलब्धसंस्कार्यत्वेनैवोपयोग-कल्पने चान्योन्याश्रयः। सक्त्वादिष्वपि तथाकल्पनसम्भवश्चेत्यत्राह **धर्मार्थेति**। उपयोगदर्शनादर्शनाभ्यां वैषम्यं सुस्थमिति भावः। पुरुषार्थचतुष्टयस्य तत्साधनादेश्चाध्ययनगृहीतवेदाख्यस्वाध्यायवेद्यत्वावश्यम्भावात् स्वाध्याय-स्यान्यत्रोपयोगः। यद्यपि केषाञ्चिदर्थकामतदुपायानां लोकसिद्धत्वमस्ति, तथापि त्रैलोक्यविभवादिरूपयोरर्थकामयो र्वेदवेद्यत्वमेव 'लौकिकार्थकामयोरपि हि कारीर्यादिशास्त्रवेद्यत्वम्। अलौकिकनिःश्रेयससाधनभूतस्य द्रव्याद्यात्मनो धर्मस्य प्रत्यक्षवेद्यत्वेऽपि धृतिसाधनत्वेन शास्त्रवेद्यत्वमेव। निरतिशयानन्दब्रह्मानुभवरूपमोक्षतत्साधनानां च शास्त्रैकवैद्यत्वं निर्विवादमेव॥

ननु मा भूत् स्वाध्यायस्याध्ययनसंस्कार्यत्वम्। न चाध्ययनगृहीतस्वाध्यायस्यार्थावबोधनमुखेनालौकिकपुरुषार्थ-तत्साधनादिबोधकत्वरूपोपयोगसद्भावेन कथं संस्कार्यत्वानुपपत्तिरिति शङ्क्यम्। स्मृत्यादिनाप्यलौकिकपुरुषार्थादि-बोधकत्वरूपोपयोगसिद्धेः। न हि स्वाध्यायजन्योपयोगस्यान्यसाध्यत्वे स्वाध्यायसंस्कार आवश्यकः। वस्तुतो 'हुं' 'फट्' इत्यादौ बोधकत्वमपि नास्तीत्यत्राह - **जपादिनेति**। धारणाध्यापनसंग्रहाद्यभिप्रायक आदिशब्दः। **स्वरूपेणापि** = न केवलमर्थ ज्ञानद्वारेणैवेत्यर्थः। जपधारणादीनामध्ययनगृहीताक्षरविषयत्वावश्यम्भावेनानन्यसाध्यजपादिप्रयोजनस्य स्वाध्यायमात्रसाध्यत्वमिति स्वाध्यायस्याप्यध्ययनसंस्कार्यत्वं युक्तमिति भावः। एवमर्थज्ञानद्वारा स्वरूपतः स्वाध्याय-स्योपयोग उक्तः। अथ वा स्वरूपेणापि धृतस्वरूपमात्रेण चेत्यर्थः। अत्र च स्वरूपमात्रेणोपयोग उक्तः। जपाध्यापन-

**एवमध्ययनविधिर्मन्त्रवन्नियमवदक्षरराशिग्रहणमात्रे पर्यवस्यति । अध्ययनगृहीतस्य स्वभावत एव प्रयोजनवदर्थावबोधित्वदर्शनात्, गृहीतात्स्वाध्यायादवगम्यमानान्प्रयोजनवतोऽर्थान्दृष्ट्वा तत्स्वरूपप्रकार-**

धारणादिकं ह्यर्थज्ञानाभावेऽप्युपपद्यते । यद्वा अर्थावबोधित्वादित्यनेनानुष्ठानपर्यन्तोपयोग उक्तः । जपादिनेत्यनेनार्थज्ञान-विशिष्टजपाद्युपयोगः । स्वरूपेणापीत्यनेन स्वरूपमात्रेणोपयोग इति भिदा । स्वाध्यायस्यानन्यसाध्यजपादिप्रयोजनकत्वं श्रुतिरेवाह — 'वेदाभ्यासेन सततं सत्येन तपसैव च । अद्रोहेण च भूतानां जातिं स्मरति पौर्विकीम्' इति ॥

अयं भावः - अद्रव्यभूतायां क्रियायामपि ह्यस्माभिरतिशय उत्पाद्यते । उपरागकाले क्रियमाणजपदानादिष्वस्त्येवा-तिशयः । विलक्षणपुरुषेण क्रियमाणायां पूजायामपि विद्यत एव विलक्षणातिशयः 'अर्चकस्य च माहात्म्यादर्चनायां विशेषत' इति ह्युच्यते । सैव हि शीघ्रं फलं ददाति । अतोऽस्माभिः प्रदत्तातिशयभाक् स्वाध्यायः पुरुषार्थावबोधनतत्-साधनानुष्ठानमुखेनास्माकमेव विलक्षणशीघ्रफलप्रदो भवति । अतो विधिवन्नियतपूर्वकाध्ययनेन स्वाध्याये प्रोक्षणादिना व्रीह्यादिष्विवातिशयो जायत एव । एवं गृहीतातिशयभाक्स्वाध्यायस्यैवंरीत्योपयोगात्संस्कार्यत्वं युक्तमेव ।

ननु पुरुषार्थतत्साधनावबोधिस्वाध्यायाध्ययनविधेरर्थज्ञानमपि फलतयाभ्युपेत्यमेव । तस्य पुमर्थसाधनानुष्ठानं प्रत्यव्यवहितोपायत्वादिति शङ्कामपास्यति — **एवमिति** । **मन्त्रेति** — मन्त्रवन्नियमवच्च यदक्षरराशिग्रहणं तन्मात्रे इत्यर्थः । अनूच्चारणे विद्यमानं मन्त्रवत्वं नियमवत्वञ्च तत्फलभूतग्रहणे उपचरितम् । **मन्त्राः** - काण्डव्रताद्यङ्गभूता मन्त्राः । अध्ययनदशाजप्याः 'शन्नो मित्र' इत्यादयश्च । **नियमाः** देशकालादिनियमाः । यद्वा **मन्त्रवदिति** पृथक्पदं दृष्टान्तप्रदर्शकम् । यथा मन्त्राध्ययनस्याक्षरराशिग्रहणमात्रपर्यवसायित्वं तद्वदिहापीत्यर्थः । यथोपनयदशोच्चारणीयाः, यथा चोपनीतस्य समिदाधानादिमन्त्राः, यथा वा हुमादयो मन्त्राः, यथा च विषहरणादिमन्त्रविशेषा अक्षरग्रहणमात्रपर्यवसायिनः तथेति वाऽर्थः । अत्र मात्रग्रहणेनाक्षरग्रहणात्पश्चात् विधिविश्रान्तिर्निषिद्धा । पर्यवस्यतीत्यनेन पूर्वं सा निषिद्धा ॥

तथा हि - पूर्वमीमांसायामर्वाचीनव्याख्यातृभिरध्ययनविधेरन्यथा निरूपितत्वेनात्र निरूपणमावश्यकम् । तत्र ह्यर्थज्ञानपर्यन्तस्य विधेयत्वमभ्युपगतम् । अत्र त्वक्षरराशिग्रहणस्यैव । युक्तं चैतत् — अध्ययनविधेरर्थज्ञानपर्यन्तत्व-स्वीकारे 'अधीत्य स्नायात्' 'आचार्यकुलाद्वेदमधीत्याभिसमावृत्य कुटुम्बे शुचौ देशे' इत्यादिनाऽध्ययनविधिविहितार्थ-ज्ञानस्य यज्ञादिकर्मानुष्ठानशेषताया अवगमात् । उपनिषत्सिद्धब्रह्मज्ञानस्यापि कर्मशेषत्वापत्तेः । ततश्च व्रीहिगतप्रोक्षणस्य कर्मशेषत्वार्थं व्रीहेर्द्वारत्वं प्रकल्प्य द्वारभूतव्रीह्यादेः शेषत्वकल्पनवत् आत्मा वा इदं, ब्रह्म वा इदं इति ब्रह्मपर्यायात्म-विषयकज्ञानस्य कर्मशेषत्वार्थमात्मनो द्वारत्वकल्पनावश्यकत्वेन द्वारभूतात्मनोऽपि कर्मशेषत्वापत्तिः । न च स्वाध्यायोऽ-ध्येतव्य इत्यत्रार्थज्ञानपर्यन्तपूर्वभागस्यैवाध्ययनं विधीयते । न तूपनिषदोऽपीति वाच्यम् । सङ्कोचे प्रमाणाभावात् । न च पूर्वोक्तापत्तिपरिहारायैव सङ्कोच इति वाच्यम् । कल्पितार्थेऽनुपपत्तिपरिहाराय सङ्कोचानावश्यकत्वात् ॥

नन्वध्ययनविधेरक्षरग्रहणमात्रपर्यवसायित्वेनऽक्षरग्रहणार्थतयाऽधीतस्य स्वाध्यायस्य प्रतीतोऽप्यर्थः तात्पर्याविषय इति तदर्थविचार एव न स्यात् । ततश्च वेदस्य निरर्थकत्वमध्ययनविधेर्पुरुषार्थपर्यन्तत्वाभावः मीमांसाया अनारम्भश्च प्रसज्यत इति शङ्कां परिहरति — **अध्ययनगृहीतस्येति** । **स्वभावत एव** = विधिव्यापरमनपेक्ष्य । अर्थे प्रयोजनत्वविशेषणं श्रुतिप्रामाण्यज्ञापनार्थम् । अयं भावः - व्युत्पन्नपदपदार्थादिमता पुंसाऽक्षरराशिग्रहणार्थमुपात्तोऽपि स्वाध्यायः स्वतः प्रमाणत्वेनापाततः प्रयोजनवदर्थमवबोधयत्येव । अतस्तात्पर्यविषयोऽप्यर्थावबोधः न निवारयितुं शक्यः । न हि दृष्टेऽनुपपत्तिः क्वचित् । नन्वस्त्वर्थावबोधः, तर्हि किमर्थं मीमांस्यत इत्यत्राह — **गृहीतादिति** । प्रयोजनवतोऽर्थान् आपाततोऽवगम्यमानान् दृष्ट्वेत्यन्वयः । आपातधियः पूर्वं जातत्वेऽपि संशयादिनिरासस्यापेक्षितस्य पूर्वमनिष्पन्नत्वात् न तदर्थमीमांसाया अनारम्भप्रसङ्ग इति भावः । अत्र प्रयोजनवतोऽर्थानित्यनेनापातबुद्धेः स्वविषय-

**विशेषनिर्णयफलवेदवाक्यविचारूपमीमांसाश्रवणेऽधीतवेदः पुरुषः स्वयमेव प्रवर्तते । तत्र कर्मविधिस्वरूपे निरूपिते कर्मणामल्पास्थिरफलत्वं दृष्ट्वाऽध्ययनगृहीतस्वाध्यायैकदेशोपनिषद्वाक्येषु चामृतत्वरूपानन्त-स्थिरफलापातप्रतीतेस्तन्निर्णयफलवेदान्तवाक्यविचाररूपशारीरकमीमांसायामधिकरोति ॥**

---

विचारे रागजननेन प्रेरकत्वं ज्ञापितम् ।

ननु संशयादिनिरासो मीमांसाश्रवणमन्तराप्यन्येन सिध्येदित्यत्राह - **तत्स्वरूपेति** । वेदवाक्यविचाररूपत्व-विशेषणं शास्त्रान्तरव्यावृत्त्यर्थकम् । वेदापातबुद्धिजन्यसंशयादिनिरासः वेदवाक्यविचारमन्तरा शास्त्रान्तरेणासम्भवीति भावः । मीमांसाया विचाररूपत्वोक्तिः विचारकरणत्वाभिप्रायिणी । **पुरुषः** - प्रयोजनार्थी पुमान् । **स्वयमेव** = निधिनिरपेक्षं स्वेच्छयेत्यर्थः ।

नन्वध्ययनानन्तरं कृत्स्नविषयकविचारे रागतः प्रवृत्तेस्सम्भवेऽपि यथारुचि विचारे प्रवृत्तेः व्युत्क्रमेणापि विचारस्स्यादित्यत्राह **तत्रेति** । तत्र = मीमांसायाम् । यद्वा प्रवृत्तौ सत्यामित्यर्थः । **कर्मविधिः** = नित्यकाम्यकर्मणां चोदना, अनुष्ठानं वा । परित्यक्तफलकस्य कर्मणो ब्रह्मविद्याङ्गभावो न कर्ममीमांसावसेय इति ज्ञापनार्थं स्वरूपपदम् । पौर्वापर्य-व्यक्त्यै निरूपिते इत्युक्तम् । नित्यफलाभिलाषिणः कर्मविचारेणापरितोषज्ञापनाय 'कर्मणामल्पास्थिरत्वफलं दृष्ट्वा' इत्युक्तम् । उपनिषद्वाक्यस्यावश्यविचारणीयत्वद्योतनायाध्ययनगृहीतस्वाध्यायैकदेशत्वोक्तिः । कर्मभागे उक्तममृतत्व-मापेक्षिकम् । अत्र तु न तथा बाधादर्शनादित्यभिप्रायेण — **अमृतत्वरूपानन्तस्थिरफलेत्युक्तम्** । **शारीरकमीमांसाया-मिति** । शारीरः परमात्मा । तमधिकृत्य प्रवृत्तं शास्त्रं शारीरकम् । सैव मीमांसा तस्यामित्यर्थः ।

अथात्र बुद्धिसौकर्याय पुनरत्राध्ययनविधिनिरूपणस्य सप्रयोजनत्वमध्ययनविधेरक्षरराशिग्रहणमात्रफलकत्वं भाट्टाभिमतगुणकर्मत्वादि च विस्तरेणोपपादयामः । श्रौतार्थपरित्यागापेक्षया श्रौतार्थानुगुण्येनाक्षरराशिग्रहणमात्रपरतयाऽ-ध्ययनविधिनिरूपणे सामञ्जस्यात् । उपनिषदध्ययनविधायकश्रुत्यन्तरादर्शनेनोपनिषदध्ययनस्यैवाकर्तव्यत्वप्रसङ्गात् । उपनिषदध्ययनं विनैवाचार्यकुलादभिसमावर्तनापत्तेश्च ॥ अथात्मज्ञानस्य कर्मशेषत्वेऽपि नात्मनः कर्मशेषत्वापत्तिः, अदृष्टद्वारैव तस्य तत्त्वस्वीकारात् । यथा च समुद्रादिध्यानस्य कर्मशेषत्वेऽपि न समुद्रस्य कर्मशेषत्वमिति चेन्नैवम् । समुद्रस्य क्रतूपकारकत्वासम्भवात् तद्ध्यानस्यादृष्टद्वारा कर्मशेषत्वमभ्युपगतम् । अत्र तु कर्मकर्तुरात्मनः कर्मशेषतयाऽ-वक्लृप्तत्वेन द्वारत्वसम्भवेऽदृष्टद्वारा तज्ज्ञानस्य कर्मशेषत्वकल्पनानुपपत्तेः । न च कर्मकर्तुजीवात्मनः कर्मशेषतयाऽ-वक्लृप्तत्वेऽपि उपनिषत्प्रतिपाद्यब्रह्मणः कर्मशेषत्वापादनं दुर्घटम् । ब्रह्मण एवोपनिषद्प्रतिपाद्यत्वात् तज्ज्ञानस्य 'आचार्यकुलाद्वेदमधीत्ये'त्यादिनाऽदृष्टद्वारा कर्मशेषत्वं तु स्वीक्रियत एव । तदर्थं ब्रह्मणो द्वारत्वाकल्पनात् । कर्मशेषताया अनवक्लृप्तत्वादिति वाच्यम् । सम्प्रतिपन्नजीवातिरिक्तब्रह्मण एव भवद्भिरनङ्गीकारेण, एवं पूर्वपक्षानवका-शात् । अतो जीवातिरिक्तब्रह्मणि प्रमाणाभावात् कर्मसु कर्तृभूतजीवस्यैव वेदान्तप्रतिपाद्यत्वेन तस्य कर्मशेषत्वात् कर्मविचारस्य च कृतत्वादप्रामाणिकेश्वरविचाररूपं शास्त्रमर्थज्ञानपर्यन्तत्वेऽनारम्भणीयमेव । न चाक्षरराशिग्रहणमात्रपरत्वेऽपि जीवातिरिक्तब्रह्मणोऽनङ्गीकारात्पुनरप्यनारम्भणीयत्वमापद्यत इति वाच्यम् । अक्षरराशिग्रहणमात्रपरत्वे त्वर्थज्ञानस्य कर्मशेषत्वाभावेनोपनिषत्सु कर्माकर्तुः कर्माशेषस्य कस्यचित् प्रतिपादनेन जीवातिरिक्तब्रह्मसद्भावशङ्कायां तन्निर्णयाय ब्रह्मविचारस्यारम्भणीयत्वसिद्धिरित्यदोषात् ।

नन्वास्तामध्ययनविधेरर्थज्ञानपर्यन्तत्वम् । अथापि नोत्तरभागस्यानारम्भणीयत्वसिद्धिः । जीवानतिरिक्तब्रह्म-वादिनः प्रति जगत्कारणत्व-तापत्रयातुर-जिज्ञास्यत्व-निखिलहेयप्रत्यनीकत्व-फलप्रदत्वादिभिः जीवातिरिक्तब्रह्म-स्थापनाय ब्रह्मविचारारम्भस्यावश्यकत्वात् । एवं विचारितेऽतिरिक्तब्रह्मणस्सिध्याऽध्ययनविधेरर्थज्ञानपर्यन्तत्वेनोप-

निषत्प्रतिपाद्यब्रह्मज्ञानस्य कर्मशेषत्वेऽपि कर्मकर्तु र्जीवात्मन इव ब्रह्मणः कर्मशेषतायाः क्लृप्त्यभावान्न ब्रह्मणः कर्मशेषत्वापादनसम्भव इत्यर्थज्ञानपर्यन्तमेव युक्तमिति चेत् — श्रूयतामवधानेन । स्वाध्यायोऽध्येतव्य इति यथाश्रुतात् प्रमीयमानस्याक्षरराशिग्रहणमात्रविधेयत्वस्य परित्यागः किमर्थमिष्यते । न हि शब्दस्वारस्यमस्ति । अध्ययनशब्दस्यार्थज्ञानवाचकत्वाव्युत्पत्तेः । 'किञ्चिदधीत्य ब्राह्मणो भवती'त्यादावर्थपरत्वादर्शनाच्च । न च विधिविषयस्याध्ययनस्य न फलं दृश्यते । अक्षरराशिग्रहणस्य फलस्याव्यवहितत्वेन प्रत्यासन्नत्वात् । तत्परित्यागेन तदन्यस्यार्थज्ञानस्य फलत्वक्लृप्तिश्च गौरवपराहता । अन्यथाऽर्थज्ञानस्येव यागाद्यनुष्ठानस्यापि फलत्वकल्पनप्रसङ्गः । व्यवहितसाध्यत्वं त्वविशिष्टम् । न च समन्वयाधिकरणोक्तदिशाऽर्थज्ञानस्यैव स्वतः प्रयोजनत्वमिति तत्फलत्वकल्पनं किमिति न सम्भवतीति शङ्क्यम् । अनवधिकातिशयानन्दब्रह्मप्रतिपादकभागमात्र एवार्थज्ञानस्य स्वतः प्रयोजनत्वोक्तेः । अतः कृत्स्नाध्ययनस्य किं फलमिति विमर्शे न तन्न्यायवतारो युक्तः । ननु 'वृद्धवाक्यनि श्रुणु' इत्यादिवाक्यश्रवणविधेरर्थज्ञानपर्यन्तत्वदर्शनादत्राप्यध्ययनविधेरर्थज्ञानपर्यन्तत्वमेव शोभनमिति चेत्सत्यम् । अतथाभूतस्यापि केवलवाक्यस्य श्रोतव्यत्वोपदेशस्थलेऽर्थज्ञानपर्यन्तत्वादर्शनेन सन्देहात् । वस्तुतो यथाश्रुते बाधस्थलेऽगत्याऽर्थज्ञानपर्यन्तत्वम् । अत्र तु यथाश्रुते न बाधकं किञ्चित्पश्यामः ।

नन्वर्थज्ञानं विना केवलाक्षरराशिं गृहीतवतो दोषोक्त्याऽर्थज्ञानमवश्यं सम्पादनीयम् । अर्थज्ञानाभावे चाध्ययनस्य नैरर्थक्यम् । सति चार्थज्ञाने निखिलपुमर्थावाप्तिश्चोत्यते । तथाहि — 'यो ह वै अविदितार्षेयच्छब्दो दैवतेन मन्त्रेण' 'अविदित्वा ऋषिं शब्दः' । 'यदधीतमविज्ञातम्' । 'स्थाणुरयं भारवाहः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्' । 'योऽर्थज्ञः सकलं भद्रमश्नुते । स नाकमेति पापविधूतपाप्मे'त्यादिना । अतोऽर्थधियो वैधत्वमावश्यकमिति चेत् उच्यते । अत्र येन पुंसा विधिवदधीतम् । तस्मिन् अधीताध्ययनानुवादेनार्थज्ञानाभावे दोष उच्यत इति कथमनेन हेतुना अध्ययनविधेरर्थज्ञानपर्यन्तत्वकल्पनसम्भवः । विचारात्मकार्थज्ञानस्य रागतः प्राप्तेरुपपादयिष्यमाणत्वाच्च न वैधत्वम् । अतोऽत्रैभिर्वाक्यैर्रागतो जाता प्रवृत्तिरेवार्थज्ञानप्रशंसयोत्तभ्यते । यथा च रागतः प्राप्तस्य ऋतुगमनादेरकरणे दोषः विधिवत्करणे च सन्तत्यादिफलावाप्तिश्च । तद्वत्रापि रागप्राप्तार्थविचारस्याकरणे दोषः । करणे च पुरुषार्थावाप्तिरुच्यत इत्यन्यदेतत् । एतेनार्थज्ञानपर्यन्ताध्ययनविधिव्यापारानभ्युपगमे वेदाध्ययनानन्तरं तदर्थविचारे प्रवृत्तिरेव न स्यात् । अर्थज्ञानकर्तव्यताबोधकशास्त्रान्तराभावात् । प्रत्युताक्षरराशिग्रहणानन्तरं वेदमधीत्य स्नायादिति गुरुकुलान्निवर्तनमेवोत्यते । अतोऽर्थज्ञानपर्यन्तत्वमावश्यकमिति शङ्कापि निरस्ता ।

'अष्टवर्षं ब्राह्मणमुपनीयत तमध्यापयेत्' 'श्रावण्यां प्रोष्ठपद्यां वा उपाकृत्य यथाविधि । युक्तश्छब्दांस्यधीयीत मासनविप्रोऽर्धपञ्चमा'नित्यर्धमासाधिकांश्चतुरो मासानध्ययनं विधाय 'अत ऊर्ध्वन्तु छन्दांसि शुक्लेषु नियतः पठेत् । वेदाङ्गानि च सर्वाणि कृष्णपक्षेषु सम्पठे'दिति गृहीताध्ययनमङ्गाध्ययनञ्च विहितम् । अतोऽङ्गाध्ययनस्याप्यनेन क्रियमाणत्वात् केवलमूलाध्ययनेऽपि तदर्थविषयकापातप्रतीति र्जायेत । तत्सत्त्वे च तदधीनसंशयविपर्ययादिनिरासार्थं तदर्थजिज्ञासाया उत्पन्नत्वेन तच्छान्त्यर्थं तदर्थविचारे स्वयमेव प्रवर्तते । एवञ्च रागतस्स्वयमेव प्रवृत्त्या 'स्वाध्यायोऽध्येतव्य इति विधिविषयत्वकल्पनं यथाश्रुतार्थपरित्यागकल्पनञ्चातिसाहसमिति । इदं चाध्ययनमाचार्योच्चारणानूच्चारणरूपं 'तमध्यापये'दिति परतन्त्रोच्चारणरूपत्वावगमात् । एवमसकृदुच्चारणरूपमपि, 'स्वाध्यायोऽध्येतव्य' इत्यक्षरराशिग्रहणस्य फलत्वबोधनेन यावत्तुषविमोकमवहननवत् यावत्फललाभमध्ययनस्य कार्यत्वात् । एवमुपाकर्म-काण्ड-[illegible]न-देश-काल-भक्ष्याभक्ष्यव्यवस्थारूपनियमादयोऽपि बोध्याः । अतोऽर्थज्ञानस्य भोजनादिवद्रागप्राप्तत्वेन न विधेयत्वसम्भवः ।

एतेन स्वाध्यायविधेरर्थज्ञानपर्यन्तत्वेऽपि न शास्त्रस्यानारम्भणीयत्वापत्तिः । मूलाध्ययनतदर्थविचारयोरुभयोरप्यध्ययनविधिनैव पूर्वभागविचारवदुपनिषद्भागविचारस्यापि कर्तव्यत्वात् । न च जीवातिरिक्तब्रह्मणोऽनङ्गी[illegible]रेणोपनिष-

द्भागस्यापि जीवपरत्वाभ्युपगमावश्यत्वेन तस्य च पूर्वभाग एव कृतत्वेन तेनैवोत्तरभागोऽपि चरितार्थ इति नोत्तरभाग-विचारस्यारम्भणीयत्वमिति वाच्यम् । यतः पूर्वमीमांसाप्रथमपादे आत्मस्वरूपनिरूपणमात्रं कृतम् । अत्र देहोत्तीर्णात्म-स्वरूपविशेषनिरूपणं क्रियते । अतस्तेन कृतकरत्वाभावान्नानारम्भणीयत्वसिद्धिः ।

पूर्वमात्मनः सर्वगतत्वजडत्वादिनिरूपणं त्ववार्चीनव्याख्यातृप्रमाद एवेत्यपि निरस्तम् । अपि चार्थज्ञानपर्यन्तत्वे मीमांसाश्रवणमन्तरेण गुरुकुलान्निवृत्तौ विध्यतिक्रमेण प्रत्यवायापत्तिः पातित्यापत्तिश्च । उक्तञ्च 'विहितस्याननुष्ठाना-न्निन्दितस्य च सेवनात् । अनिग्रहाच्चेन्द्रियणां नरः पतनमृच्छती'ति । रागतस्तत्प्रवृत्तौ तु काम्यफलासिद्धिरेव । न तु प्रत्यवायः । यस्तु अदृष्टदेशकालादिवैगुण्यादश्रुतमीमांसः तमनधीतवेदमिव पतित इति न स्मरन्ति न गर्हन्ते च । स्वाध्यायशब्दश्च नार्थज्ञानवाचीति पूर्वमेवोक्तम् । किन्तु स्वशाखामात्रवाची । अतोऽध्ययनस्य प्रयोजनाकाङ्क्षायामाऽऽ-सन्नाक्षरराशिग्रहणफले सम्भवति न व्यवहितार्थज्ञानस्य फलत्वकल्पनसम्भवः ।

एवमदृष्टदेशकालादिसाद्गुण्यवतो मीमांसायां रागतः प्रवृत्तिसम्भवेन गृहीतस्वाध्यायस्याविवक्षितार्थत्वशङ्का प्रवर्तकाभावादनारम्भणीयत्वशङ्का च व्युदस्ता । न चाक्षरराशिग्रहणमात्रस्य दुःखरूपतया विधेर्प्रयोजनपर्यवसानं न स्यादिति वाच्यम् । साङ्गाध्यनेन गृहीतस्य स्वाध्यायस्य स्वभावत एव प्रयोजनवदर्थावबोधकत्वेन परम्परया प्रयोजन-पर्यवसानात् । न हि साक्षात् पुरुषार्थपर्यवसायित्वमेव विधेर्विवक्षितम् । अन्यथाऽर्थज्ञानपर्यन्तत्वपक्षोऽपि न घटते । अनुष्ठानापूर्वद्वारैव स्वर्गस्य प्रयोजनत्वेन परम्परयैव पुरुषार्थपर्यवसायित्वदर्शनात् । अतो व्युत्पन्नपदपदार्थपुरुषे शब्द-स्यार्थावबोधकत्वस्वाभाव्येनार्थज्ञानस्यापि विधेयत्वकल्पनमनुचितम् । ननु तर्हि स्वत एव स्वाध्यायस्यार्थावबोधकत्वेन विचाररूपमीमांसा निरर्थिकैवेति चेन्न । आपातप्रतीतेरेव सत्त्वेन तस्याश्च संशयविपर्ययसहत्वेन तन्निराकरणाय विचारस्यापेक्षितत्वात् ।

ननु न वेदस्यापातप्रतीतिजनकत्वसम्भवः प्रमितिजनकत्वस्वभावत्वादिति चेत्सत्यम् । मीमांसाख्यपरिकरवति वेदस्य प्रमितिजनकत्वस्वभावत्वेऽपि सहकारिदशायां रूपादिसाक्षात्कारजनकत्वस्वभावस्य चक्षुरादेरालोकादिविरह-दशायां रूपाद्यनुपलम्भकत्ववत् तादृशपरिकरशून्ये प्रमितिजनकत्वाभावेनापातप्रतीतिसम्भवात् । ननु विधेरक्षरराशि-ग्रहणमात्रपरत्वे रागतः प्रवृत्तिरपि न घटते । आपतप्रतीत्यभावात् । न चाङ्गाध्ययनेन तत्सम्भवः । 'षडङ्गो वेदोऽध्येयः', 'वेदमध्यापयेत् द्विजः सकल्पं सरहस्यं च' इति विहितस्याप्यक्षरग्रहणमात्रपरत्वात् । अतो व्याकरणाद्यर्थज्ञानाभावेन प्रकृतिप्रत्ययज्ञानस्यैवासत्त्वादापातप्रतीतिरपि न सम्भवतीति चेत्सत्यम् । वेदाङ्गभूतव्याकरणाद्यध्ययनस्यार्थज्ञान-पर्यन्तत्वस्य वक्तव्यत्वेन दोषाभावात् । अन्यथा वेदाकिञ्चित्करत्वेनाङ्गत्वासम्भवात् । यद्यप्यङ्गाध्ययनविधेरक्षरराशि-ग्रहणमात्रपरत्वेऽपि विधिसार्थक्यं सम्भवति अथाप्यकिञ्चित्करत्वेन वेदाङ्गत्वं न सम्भवति । न चादृष्टविधया किञ्चित्काराद्याश्रयणसम्भवः । दृष्टपदपदार्थव्युत्पत्यादिकिञ्चित्कारसम्भवे तत्परित्यागानौचित्यात् । न चाङ्गाध्ययनस्या-क्षरग्रहणमात्रपरत्वेपि वेदार्थविचार इव तदर्थज्ञानसम्पादनेन पदाद्यवबोधरूपकिञ्चित्कारसम्भवादङ्गत्वसम्भवः । व्याकरणाद्यक्षरमात्रग्रहणवतः तद्विषयकापतप्रतीतेरेवासत्त्वेन तत्र रागतोऽपि प्रवृत्त्युपपादनासम्भवात् । अतस्तत्रार्थ-ज्ञानपर्यन्तस्य विधेयत्वाऽऽवश्यकत्वादध्यनेन वेदापातप्रतीतिसत्त्वाच्च तन्निर्णयाय रागात् स्वयमेव विचारे प्रवर्तत इत्ययमेव समीचीनः पन्थाः ॥

अथैवं ब्रह्मविचारस्येव कर्मविचारस्यापि रागतः प्राप्त्यवश्यम्भावेन विधेयत्वासम्भवात् कर्मविचारकरणस्यैवा-नुपपत्तिः । न चापातप्रतीतिमतस्तत्रापि रागतः प्रवृत्तिश्शक्यशङ्का । 'आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्माति-शेषेणाभिसमावृत्य'ेति श्रुत्या 'अधीत्य स्नायादि'ति स्मृत्या चाध्ययनानन्तरमेव समावर्तनबोधनादिति चेदत्र ब्रूमः ।

विधिबलात्समावृत्तत्वेऽपि पश्चात् रागतः प्रवृत्त्युपपत्तेः । न चाध्ययनानन्तरं समावर्तनस्येव समावर्तनानन्तरमपि गृहस्थकर्मानुष्ठानबोधनेन सर्वस्यापि कालस्य तदवरुद्धत्वेनावसरालाभान्नविचारसम्भव इति शक्यम् । समावृत्तस्य श्रावयितुरध्यापकस्येव समावृत्तस्य श्रोतुरप्यवसरलाभसम्भवात् । न च तमध्यापयेदित्याचार्यस्याध्यापनविधानादाचार्यस्यावसरः । शिष्यस्य त्वर्थविचारो न विहित इति नावकाशलाभ इति वाच्यम् । अध्यापनस्य रागप्राप्तत्वेन विधेयत्वासम्भवात्, तत्रापि विध्यनङ्गीकारात् । न च रागप्राप्तत्वेऽपि 'प्रतिग्रहादिना धनमार्जयेदि'त्यादिशास्त्रानुमतं तदिति वाच्यम् । अनिषिद्धत्वेन विचारस्यापि शास्त्रानुमतत्वात् यज्ञानुष्ठानोपयुक्तत्वाच्च । अतोऽविधेयोप्यर्थः, समावृत्तस्याध्यापकस्याध्यापनमिव रागप्राप्त इति मीमांसरम्भस्सङ्गच्छत एव । वस्तुतः न स्वाङ्गं स्वव्यवधायकमिति न्यायात् 'यावज्जीवमग्निहोत्रं जुहोती'ति विधिः यथा स्वोपयोगि रागप्राप्तार्थार्जनाद्यवकाशप्रदः तथैव समावर्तनविधिरप्यनुष्ठानोपयोगिमीमांसाश्रवणस्यावसरप्रदः । प्रत्ययश्च समानकर्तृकत्वपूर्वकालीनत्वमात्रार्थकः । नत्वानन्तर्यवाचक इति न दोषगन्धोऽपि ।

तत्र 'स्वाध्यायोऽध्येतव्य' इत्यत्राध्ययनस्य सक्तुहोमवत् प्रधान कर्मत्वम् । स्वरूपेण विधेयत्वमध्यापनविधिप्रयुक्तत्वमुपनयनस्याध्यापनाङ्गत्वं च प्राभाकारा वदन्ति । भाट्टास्त्वध्ययनस्यावघातवत्गुणकर्मत्वम् । नियमस्य विधेयत्वं स्वविधिप्रयुक्तत्वमुपनयनस्याध्ययनाङ्गत्वं चेत्यवोचन् । इदमेव चास्मदभिमतम् । सोपपत्तिकत्वात् । तथा हि — 'सक्तून् जुहोति' इत्यत्र सक्तुभिर्जुहोतीत्यर्थकरणेन सक्तुहोमजन्यादृष्टस्य पुरुषनिष्ठत्वात् सक्तुहोमस्य पुरुषसंस्कारत्ववदध्ययनस्यापि पुरुषसंस्कारत्वापत्तेः । न चेष्टापत्तिः । अक्षरराशिग्रहणस्य फलत्वानुपपत्तेः । ततश्चाध्ययनस्य सकृदुच्चारणरूपत्वमेव सिद्ध्येत् । वस्तुतः तव्यप्रत्ययेन स्वाध्यायस्यैव कर्मत्वावगमेनाध्ययनस्य स्वाध्यायसंस्कारत्वकल्पनौचित्याच्च । यद्यपि 'संस्कारः पुंस एवेष्टो मन्त्रणप्रोक्षणादिभि'रित्यध्ययनसंस्कारोऽपि कर्तुरेव । अथापि 'स्वाध्यायोऽध्येतव्य' इति तव्यप्रत्ययेन स्वाध्यायनिष्ठकर्मत्वस्यैवावगमेन तस्यैव संस्कार्यत्वम् । न च कर्मत्वमेवावगतं न संस्कार्यत्वमिति वाच्यम् । कर्मत्वावगमेन संस्कार्यत्वकल्पनसम्भवात् । धर्मार्थकाममोक्षरूपपुरुषार्थचतुष्टय-तत्साधनावबोधकत्वेन जपादिना ध्रियमाणस्वरूपेण च पुरुषार्थसाधनत्वेन च संस्कार्यत्वसम्भवात् । संस्कारस्य कार्यान्तरयोग्यतापादनरूपत्वात् । अत्र निर्वर्त्यत्वरूपं संस्कार्यत्वं न सम्भवति स्वाध्यायस्यानादिसिद्धक्रमत्वात् । नापि विकार्यत्वम् । अन्यथा भावादर्शनात् । नापि प्राप्यत्वम् । उपयोगान्तरसद्भावे तदयोगात् । अतः पूर्वोक्तसाधनत्वादिरूपसंस्कार्यत्वमेव स्वाध्ययस्येत्यध्ययनस्य गुणकर्मत्वमेव । 'सक्तून् जुहोती'त्यत्र तु सक्तुद्रव्यस्य संस्कार्यत्वानुपपत्त्या पुरुषसंस्कारजनकत्वेन प्रधानकर्मत्वमाश्रितम् ।

एवमध्ययनस्य स्वरूपेण विधेयत्वं न सम्भवति । अवहननविधाविव नियमस्यैव विधेयत्वात् । अन्यथा स्वयं पुस्तकनिरीक्षणादिनाप्यध्ययनस्य कर्तव्यत्वापत्तेः । न हि रागतः प्राप्तस्य विचारस्य 'स गुरुमेवाभिगच्छेत्' 'आचायाद्धेयव विद्या विदिता साधिष्ठं प्राप'दित्यादि नियमबलान्नियमनमिवाध्ययनेऽपि नियमनबोधकं प्रमाणान्तरमस्ति । एवमध्ययनं नाध्ययनविधिप्रयुक्तम् । स्वाध्यायोऽध्येतव्य इत्यध्ययनस्य स्वविधिप्रयुक्तत्वावगमात् । न च 'तमध्यापये'दित्यध्यापनस्य विहितत्वेन तस्य चाध्ययनं विनाऽनुपपन्नतयाऽध्ययनमाक्षिप्तमिति तस्याध्यापनविधिप्रयुक्तत्वमेव युक्तमिति वाच्यम् । अर्थार्जनार्थतया रागप्राप्तस्याध्यापनस्य विधेयत्वासम्भवात् । अप्राप्ते हि शास्त्रमर्थवत् । न च स्वविधिप्रयुक्तत्वे स्वाध्यायविधिवाक्यस्य स्वाध्यायन्तर्भाविणाध्ययनाद्विध्यवगमः, विध्यवगमादध्ययनमित्यन्योन्याश्रयात् अध्ययनस्यानुष्ठात्रभावप्रसङ्ग इति वाच्यम् । स्वतन्त्राध्ययनविधेः माणवकविषयत्वं जानानैः हितैषिपित्रादिभिरध्ययने प्रवृत्त्युत्पात्दनसम्भवात् ।

एतदुक्तं भवति - स्वाध्यायविध्यभिज्ञशिष्टजनवादप्रसिद्ध्या वा तदभिज्ञस्वगुर्वादिपुरुषप्रेरणेन वा स्वाध्यायाध्ययनप्रवृत्तपुरुषान्तरदर्शनेन वाऽक्षरराशिग्रहणस्य सम्पाद्यत्वज्ञानेन माणवकप्रवृत्तिरिति । न च प्रेरणाद्यायत्तत्वे कथं स्वविधिप्रयुक्तत्वम् । प्रेरयितुः स्वविधिप्रयुक्तत्वज्ञानेन प्रेरणात् । न चानवस्था, तस्याः प्रकृते दुष्टत्वात् । परविधिप्रयुक्तत्वे

**तथा च वेदान्तवाक्यानि केवलकर्मफलस्य क्षयित्वं ब्रह्मज्ञानस्य अक्षय्यफलत्वं दर्शयन्ति - 'तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते'** (छा. ८.१.६.), **'अन्तवदेवास्य तद्भवति'**

तु नित्याध्ययनस्य काम्यविधिप्रयुक्तत्वेऽनुष्ठाननियमानुपपत्तिः । आचार्यस्याचार्यककामनाभावेऽध्ययनासिद्धेः । एवमाचार्यककामनयाऽऽचार्येण माणवकप्रवृत्युत्पादनार्थप्रयत्ने कृते, शिष्येणाप्रवृत्तौ तस्य प्रत्यवायानुपपत्तिः । अतोऽध्ययनं स्वविधिप्रयुक्तमेव । एवमुपनयनस्याध्यापनाङ्गत्वमपि न । 'ब्राह्मणमुपनयीत' इति द्वितीयाश्रुत्योपनयनस्य माणवकशेषत्वावगमात्तस्य तद्गताध्ययनाङ्गत्वसिद्धेः ।

यद्यपि 'उपनीय तु यश्शिष्यं वेदमध्यापयेत् द्विज' इति स्मृतिवचनादध्यापनाङ्गत्वमेव युक्तमिति प्रतिभाति । अथाप्यस्याः स्मृतित्वादनुवादत्वाच्च न श्रुतिबाधेन तत्स्वीकारसम्भवः । न च माणवकद्वारोपनयनरूपफलस्याचार्यान्वयित्वात् तस्य तद्गताध्यापनाङ्गत्वं वक्तुं शक्यम् । 'स्वरितञितः कर्तृभिप्राये क्रियाफले' इत्यनेनात्रात्मने पदे प्राप्तेऽकर्त्रभिप्रायार्थं 'सम्मानोत्सर्जनाचार्यकारणज्ञानभृतिविगणनव्ययेयु नियः' इत्यात्मनेपदस्य विहितत्वात् फलस्य कर्तृगामित्वेऽऽत्मनेपदानुपपत्तेः । न चाकर्तर्यपि फलस्याभिप्रेतत्वम् अकर्त्रभिप्रायत्वमिति नानुपपत्तिरिति वाच्यम् । तथा सति 'अग्नीनादधीत' इत्यत्र स्वरितञितः इत्यनेनात्मनेपदानुपपत्तेः । अकर्त्रभिप्रायत्वपरिष्कारानुगुणं कर्तर्येव फलस्याभिप्रेतत्वं कर्त्रभिप्रायत्वमिति परिष्करणीयतया, अनाधानकर्तरि च फलस्यान्वयेनोभयान्वयित्वात् ।

न हि कर्तरि फलस्याभिप्रेतत्वमेव तदिति त्वया वक्तुं शक्यम् । कर्त्रभिप्राये आत्मनेपदं विहायाकर्त्रभिप्रायार्थं 'सम्माननेत्यादिसूत्रारम्भात् । तत्र कर्त्रभिप्रायत्वस्य कर्तयेव फलस्याभिप्रेतत्वरूपत्वे ह्यकर्त्रभिप्रायत्वस्य कर्तर्यप्यभिप्रेतत्वरूपत्वं सिद्ध्येत् । ततश्च 'अग्नीनादधीत' 'ऋत्विजो वृणीते' इत्यादावात्मनेपदानुपपत्तिः । अतः कर्त्राभिप्रायत्वं कर्तरि फलस्याभिप्रेतत्वम् । अकर्त्रभिप्रायत्वञ्च तत्र तस्यानभिप्रेतत्वमित्येवमेव परिष्करणीयतयोपनयनस्य माणवकद्वाराऽध्यापकगतत्वे आत्मनेपदानुपपत्तिस्तदवस्थैव । अत एवमादिदोषसद्भावान्नोपनयनमध्यापनाङ्गं भवितुमर्हति । अतस्सिद्धमध्ययनस्य गुणकर्मत्वं नियमस्य विधेयत्वं स्वविधिप्रयुक्तत्वमुपनयनस्याध्ययनाङ्गत्वमध्ययनविधेरक्षरराशिग्रहणमात्रफलकत्वञ्चेति । यद्यपि यो 'ह वा अविदितार्षेयच्छब्दो दैवतेन मन्त्रेण' इत्यादिश्रुतिभिः 'यदधीतमविज्ञात'मित्यादिस्मृतिभिश्चार्थज्ञानाभावे दोषस्योक्तत्वादर्थज्ञानपर्यन्तमेवाध्ययनम् । अथापि रागप्राप्तार्थज्ञाने प्रशंसया स्वतः प्रवृत्तिरुत्तभ्यत इति न तस्य विधेयत्वम् । अन्यतः प्राप्ते विधेरौदासीन्यात् । अन्यथाऽध्ययनानुवादेनार्थज्ञानसम्पादनाभावे दोषकथनानुपपत्तेः । अतो रागप्राप्तस्य ऋतुगमनादेरिव विपर्यये दोष उच्यते इति न विरोधः । अतो यथा बालस्योपनयनकाले विधीयमानमुच्चारणं पूर्वोक्तनियमवदक्षरपठनमात्रं नार्थावबोधपर्यवसायि, यथा च 'हुं फट्' इत्यादिमन्त्राध्ययनं तथा । एवमध्ययनविधिरप्यक्षरग्रहणमात्रपर्यवसायीत्यकामेनापि स्वीकर्तव्यम् । अतस्सिद्धं कर्मब्रह्ममीमांसयोरैकशास्त्र्यं रागतः प्रवृत्तिश्चेति । एतत्सर्वं श्रुतप्रकाशिकायामुक्तमेव बुद्धिसौकर्यायानूदितम् ।

नन्वस्त्वैकशास्त्र्यं स्वेच्छातः प्रवृत्तिश्च । अथापि कथं पौर्वापर्यनियमः ? उच्यते । स्वाध्यायोऽध्येतव्य इति वेदाध्ययनं तावत्प्रथमं विहितम् । तत्र कर्मभागस्य वेदोपक्रमत्वादधीतक्रमेणैव तन्निरूपणस्य कर्तव्यत्वाच्च कर्मविचारस्य पूर्वत्वमिति । एवं सर्वेषामपि जनानां धर्मार्थकामरूपपुरुषार्थ एव प्रावण्यसत्त्वेन तत्साधककर्मैव प्रथमतो विचारणीयम्। एवं कर्मणामुपासनाङ्गत्वादपि । अपि चास्य शास्त्रस्य वेदव्याख्यारूपत्वेन व्याख्येयानुगुणमेव व्याख्यानस्य प्रवृत्तिः । साङ्गाध्ययनमनुतिष्ठतः 'अपाम सोममममृताऽभूम' इत्यादिभिः कर्मविशेष्यकानन्तस्थिरफलजनकत्वप्रकारकापाततप्रतीतिसत्त्वेन 'अर्के चेन्मधु विन्देते'ति न्यायात् कर्ममीमांसायामेव प्रथमतः प्रवृत्तिः । अतोऽपि पूर्वमीमांसायाः पूर्वत्वम् । तत्र कर्मणि विचारितेऽऽवृत्तिविधानादिनाऽल्पास्थिरफलत्वावगत्या सञ्जातानन्तस्थिरफलाभिलाषयाऽधीतक्रमेण ब्रह्मणि तादृशापातप्रतीत्या स्वयं ब्रह्मविचारे प्रवर्तते । ततश्चायं सूत्रार्थः - 'ब्रह्मविचारः कर्मविचारसमाप्त्यनान्तरकालीनकर्तव्यतावान् कर्म-

(बृह.५.८.९.), **'न ह्यध्रुवैः प्राप्यते'** (कठ.२.१०.), **'प्लवा ह्यते अदृढा यज्ञरूपा'**: (मुण्ड.१.२.७.), **'परीक्ष्य लोकान्कर्मचितान् ब्राह्मणो निर्वेदमायात्। नास्त्यकृतः कृतेन। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्। तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय। येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्'** (मु.१.२.१२,१३.), **'ब्रह्मविदाप्नोति परम्'** (तै.आन.१.), **'न पुनर्मृत्यवे तदेकं पश्यति', 'न पश्यो मृत्यं पश्यति'** (छा.७.२६.२.), **'स स्वराड् भवति'** (छा.७.२५.२.), **'तमेवं विद्वानमृत इह भवति'** (पु.सू२०.), **'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति'** (श्वे.१.६.) **इत्यादीनि ॥**

**ननु च साङ्गवेदाध्ययनादेव कर्मणां स्वर्गादिफलत्वं स्वर्गादीनाञ्च क्षयित्वम्, ब्रह्मोपासनस्यामृतत्वफलत्वञ्च ज्ञायत एव ; अनन्तरं मुमुक्षुर्ब्रह्मजिज्ञासायामेव प्रवर्तताम्; किमर्था धर्मविचारापेक्षा ? एवं तर्हि शारीरकमीमांसायामपि न प्रवर्तताम्, साङ्गाध्ययनादेव कृत्स्नस्य ज्ञातत्वात्। सत्यम्। आपातप्रतीतिर्विद्यत एव। तथापि न्यायानुगृहीतस्य वाक्यस्यार्थनिश्चायकत्वादापातप्रतीतोऽप्यर्थः संशयविपर्ययौ नातिवर्तते। अतस्तन्निर्णयाय वेदान्तवाक्यविचारः कर्तव्य इति चेत् - तथैव धर्मविचारोऽपि कर्तव्य इति पश्यतु भवान् ॥**

विशेष्यकाल्पास्थिरफलत्वप्रकारकज्ञानसहितब्रह्मज्ञानविशेष्यकान्तास्थिरफलत्वप्रकारकापातप्रतीतिजन्यत्वात्' इति ।

नन्वस्तु कर्मविचारानन्तर्यं ब्रह्मविचारस्य, तथाप्यल्पास्थिरत्वनिर्णयसहितब्रह्मज्ञानविशेष्यकानन्तस्थिरत्वप्रकारकापातप्रतीतिः कथं सम्भवतीतित्यत्राह — **तथा चेति** । **कर्मचितः** कर्मणा सम्पादितः । लोक्यत इति **लोकः** फलम् । **अन्तवत्** = फलद्वारा नाशवत् । एवमेव ब्रह्मज्ञानस्याक्षयफलत्वं दर्शयन्ति श्रुतय इत्याह - **परीक्ष्य लोकानित्यादि** । **परीक्ष्य** = मीमांसान्यायैः निरूप्य । **ब्राह्मणः** = अधीतसाङ्गसशिरस्कवेदः । य इत्यध्याहार्यम् । **अकृतः** = नित्यः । **कृतेन** = कर्मणा । **नास्ति** = न सिध्यति इतीत्यध्याहार्यम् । गुरुमेवेत्येवकारो नियमविधित्वसूचकः । **समित्पाणिः** समिद्द्रव्यहस्तः । सम्यगञ्जलियुक्तो वा । **श्रोत्रियं** = श्रुतवेदान्तम् । **ब्रह्मनिष्ठं** = ब्रह्मसाक्षात्कारवन्तम् । **प्रशान्तचित्ताय** = निगृहीतान्तःकरणाय । **शमान्विताय** = बाह्येन्द्रियनियमनयुक्ताय । **अक्षरं** = स्वरूपेणाविकारम् । **सत्यं** = गुणतोऽप्यविकारम् । **प्रोवाच** = प्रब्रूयात् । अत्रेन्द्रियनिग्रहः श्रवणोपयोग्यवधानरूपो विवक्षितः । **मृत्युः** = प्रमादो मोहो वा । मोहश्च भ्रान्तिज्ञानम् । **पश्यः** ब्रह्मदर्शी; उपासक इति यावत् । **स्वराट्** = अकर्मवश्यः । **अमृतः** अमृततुल्यः । **पृथङ् मत्वा** = विभिन्नं ज्ञात्वा । **ततः** पृथक्त्वज्ञानात् । **जुष्टः** प्रीतिविषयीकृतः ॥

ननु स्वाध्यायोऽध्येतव्यः षडङ्गो वेदोऽध्येय इत्यादिभिः साङ्गस्वाध्यायस्यैवाध्ययनविधानेन साङ्गाध्ययनमेवानुष्ठेयम् । अभ्युपगतश्चैवमेव । अतश्चैवमनुतिष्ठतः शब्दार्थव्युत्पत्तिसम्भवात् ब्रह्मोपसने चामृतत्वफलकत्वज्ञानस्येव कर्मणां स्वर्गादिफलकत्वज्ञानस्य स्वर्गादेः क्षयित्वज्ञानस्य च सत्त्वात् कर्मविचारोऽनपेक्षित इति प्रथममेव शारीरकमीमांसायां प्रवृत्त्यापत्तिः । न चैवं रीत्यैवात्रापि प्रवृत्तिर्न स्यात् । ब्रह्मज्ञानेऽमृतत्वफलत्वनिश्चयादिति वाच्यम् । ब्रह्मज्ञानस्यानन्ताक्षयफलजनकत्वनिश्चयेऽपि तादृशफलजनकं ब्रह्मज्ञानं किमुपासनरूपमन्यद्वा । उपासनरूपत्वेऽपि तत्तद्विद्याप्रतिपादितगुणमात्रविषयमन्यद्वा । सत्यत्वज्ञानत्वादिगुणानां सर्वोपासनविषयत्वमस्ति न वेति सन्देहसत्त्वेन विचारात्पूर्वं तदनुष्ठानासम्भवतः ब्रह्मविचारस्यापेक्षितत्वादित्याशङ्कते — **ननु चेति** । परिहरति — **एवं तर्हीति** । पुनश्शङ्कते — **सत्यमिति** । यश्चोभयोस्समोदोषः परिहारस्तयोस्समः इत्यभिप्रयन्समाधत्ते — **तत्रैवेति** । अयमाशयः — ब्रह्मविचारेऽनन्ताक्षयफलकं ब्रह्मज्ञानमितिनिश्चितत्वेन तादृशज्ञानस्योपासनादिरूपत्व एव सन्देहात् । तादृशैकदेशविचारस्यावश्यकत्वेऽपि कृत्स्नविचारस्यानुपपन्नत्वापत्तिः । यदि च कृत्स्नमप्यापातप्रतीतमेव, अतस्तन्निश्चयाय ब्रह्म-

## लघुपूर्वपक्षः

**ननु च - ब्रह्मजिज्ञासा यदेव नियमेनापेक्षते, तदेव पूर्ववृत्तं वक्तव्यम्। न धर्मविचारापेक्षा ब्रह्मजिज्ञासायाः; अधीतवेदान्तस्यानधिगतकर्मणोऽपि वेदान्तवाक्यार्थविचारोपपत्तेः। कर्माङ्गाऽऽश्रयाण्युद्गीथाद्युपासनान्यत्रैव**

विचारे प्रवर्तते, न्यायानुगृहीतवाक्यस्यैवार्थनिश्चायकत्वादिति मन्यते, तर्हि पूर्वभागेऽपि 'अपाम सोमममृता अभूम' इत्यादिभिः कर्मणामप्यनन्तस्थिरफलजनकत्वप्रतिपादनादन्यत्राऽऽवृत्तिविधानेन चापातप्रतीत्या संशयविपर्ययनिरासाय तद्विचारोप्यपेक्षित इति विभावय। अतः प्रथमत एव शारीरकमीमांसाप्रवृत्त्युद्घाटनं न सम्भवतीति।

अथ कर्मविचारस्य ब्रह्मजिज्ञासापूर्ववृत्तत्वकथनमनुपपन्नम्। कर्मविचारानपेक्षित्वात्तस्याः नियमेनापेक्षितस्यैव पूर्ववृत्तत्वेन वक्तव्यत्वात्। उपनिषद्भागमात्राध्ययनवतां कर्मण्यापातप्रतीत्याभावेन कर्मविचारं विनापि विचारदर्शनात्। अतो विद्यापेक्षितस्यैव मुमुक्षुत्वादिसाधनचतुष्टयस्य विचारापेक्षितत्वमावश्यकम्। कर्म च विद्याविरुद्धमपीति न तद्विचारस्य पूर्ववृत्तत्वसम्भव इत्यभिप्रयन्नद्वैती शङ्कते - **ननु चेति**। चकारश्चोद्यसमुच्चये। सूत्ररीतिमनुसृत्य **ब्रह्मजिज्ञासेत्युक्तम्**। ब्रह्मविचार इत्यर्थः। यद्वा ब्रह्मज्ञानमित्यर्थः। विविदिषारूपजिज्ञासाया अप्रस्तुतत्वात् तन्मते विविदिषोत्पत्तौ कर्मणां हेतुत्वाभ्युपगमेन नियतापेक्षत्वात् पूर्ववृत्तत्वनिषेधानुपपत्तेः। **येदेवेत्येवकारः** स्वाभिमत-व्यतिरिक्तनैरपेक्ष्यपरः। यद्यपि कर्मणोऽपि परम्परयोपयोगोऽस्ति। अथापि विचारजन्मनि न तन्नियम इत्याभिप्रायको नियमशब्दः। **तदेवेत्येवकारः** स्वाभिमतातिरिक्तस्य पूर्ववृत्तत्वनिषेधपरः।

नन्वस्तु नियतापेक्षितस्यैव पूर्ववृत्तत्वम्। तावता धर्मविचारस्य कुतो न पूर्ववृत्तत्वमित्यत्राह — **न धर्मेति**। पूर्ववृत्तत्वप्रयोजकीभूतनियतापेक्षाया विरहे हेतुं दर्शयति — **अधीतेति**। स्वापेक्षितांशसूचनाय **अन्तपदम्**। न च स्वाध्यायोऽध्येतव्य इति कृत्स्नस्वशाखाध्ययनस्य विहितत्वेनैकदेशाध्ययनमेवानुपपन्नम्। अधीतकृत्स्नवेदस्य त्वापात-प्रतीत्या पाठक्रमेण च कर्मविचारानन्तरमेव ब्रह्मविचारप्रवृत्तिरिति न तत्र तस्य पूर्ववृत्तकथनमनुपपन्नमिति वाच्यम्। अधीतकृत्स्नवेदस्याप्यदृष्टदेशकालादिवैगुण्यात् कर्मविचारेऽप्रवृत्त्या जन्मान्तरसुकृतवशात् वेदान्तवाक्यबुभुत्सया च वेदान्तविचारप्रवृत्तिदर्शनेन, तत्र पूर्ववृत्तत्वनियमासम्भवात्। **अधीतवेदान्तस्येति** निर्देशस्तु विचारोपयुक्तांश-मात्रसूचनार्थः। अयोगव्यवच्छेदाभिप्रायको वा। ननु कर्मजन्यफलाप्रतिबन्धायोद्गीथविषयकोपासनं विधीयते। तच्चात्रैवो-त्तरभागे विचार्यते। इत्थं चोद्गीथाद्युपासनादेः कर्माङ्गभूतोद्गीथविषयत्वेनाङ्गिस्वरूपे कर्मण्यनवगते तदङ्गभूतोद्गीथ-तद्विषयकविचार एव न घटते। अतोऽङ्गिभूतकर्मविचारः पूर्ववृत्त एव इति सिद्धान्तिच्छयया शङ्क्ते - **कर्माङ्गेति**।

नन्वस्तु उद्गीथादिदृष्टिविधीनां कर्मापेक्षत्वम्। अथापि शास्त्रप्रधानप्रतिपाद्यब्रह्मविद्यायाः परम्परयापि कर्मा-पेक्षत्वाभावेनास्य कर्मविचारपूर्ववृत्तत्वकथनं कथम्? उच्यते। दृष्टिविधीनां साक्षाद्ब्रह्मविद्याऽपेक्षितत्वेन दृष्टिविध्य-पेक्षितकर्मणामपि ब्रह्मविद्याऽपेक्षितत्वावश्यकतया कर्मविचारपूर्ववृत्तत्वोपपत्तिरित्याशयः। अत्र सिद्धान्तिसम्मता प्रधानयुक्तिरप्रधानीकृता। कर्माङ्गभूत उद्गीथः आश्रयो विषयो येष्विति विग्रहः। कर्माङ्गविषयकाणीत्यर्थः। प्रणयनाश्रय-दोहनस्येवोद्गीथाद्यङ्गाश्रयोपासनस्य फलान्तरार्थत्वेन तत एवोद्गीथादेः कर्माङ्गत्वेऽपि तदुपासनस्य न कर्माङ्गत्वमिति सूचनायाऽऽश्रयशब्दोक्तिः। आदिपदेनोद्गीथैकदेशभूतप्रणवस्य "लोकेषु पञ्चविधं सामोपासीत" इत्युक्तपञ्चविध-सामादेश्च सङ्ग्रहः। 'उद्गीथाद्युपासनान्यनधिगतकर्मणाऽशक्यचिन्तनानि कर्माङ्गाश्रयत्वा'दित्यनुमानशरीरञ्चोक्तं भवति। **अत्रैवेति**। न कर्मकाण्ड इत्यर्थः।

अस्मिन् हि शारीरके शास्त्रे ब्रह्मात्मैक्यज्ञानमेव प्रतिपिपादयिषितम्। तथा हि - रज्जौ रज्जुत्वाज्ञानस्य सर्पभूविद-लनादिज्ञानोत्पादनमुखेन भीत्यादिजनकत्ववदनादिब्रह्माविद्याया विविधभेददर्शनजननमुखेन जन्मजरामरणादि-

**चिन्त्यन्ते; तदनधिगतकर्मणो न शक्यं कर्तुमिति चेत् अनभिज्ञो भवान् शारीरकशास्त्रविज्ञानस्य। अस्मिन्शास्त्रेऽनाद्यविद्याकृतविविधभेददर्शननिमित्तजन्मजरामरणादिसांसारिकदुःखसागरनिमग्नस्य निखिलदुःखमूलमिथ्याज्ञाननिबर्हणायात्मैकत्वविज्ञानं प्रतिपिपादयिषितम्। अस्य हि भेदावलम्बि कर्मज्ञानं कोपयुज्यते? प्रत्युत विरुद्धमेव। उद्गीथादिविचारस्तु कर्मशेषभूत एव ज्ञानरूपत्वाविशेषादिहैव क्रियते। स तु न साक्षात्सङ्गतः। अतो यत्प्रधानं शास्त्रम्, तदपेक्षितमेव पूर्ववृत्तं किमपि वक्तव्यम्॥**

---

सांसारिकदुःखजनकत्वम्। यथावस्थितरज्जुत्वज्ञानस्याज्ञाननिवर्तनद्वारा भीत्यादिनिरासकत्ववद्यथावस्थितब्रह्मात्मैक्यविज्ञानस्याविद्यानिबर्हणद्वारा संसारिकदुःखनिवर्तकत्वश्चावश्यमभ्युपगन्तव्यम्। इदमेव तापत्रयातुराणां सांसारिकदुःखनिबर्हणायास्मिन्शास्त्रेऽऽत्मैकत्वविज्ञानं प्रतिपाद्यते। अस्य च ज्ञानस्य स्वरूपे वा फले वा कर्मज्ञानं नोपयुक्तं, प्रत्युत वर्णाश्रमसाध्यसाधनेतिकर्तव्यताद्यनन्तभेदास्पदस्य कर्मणः ज्ञानमैक्याबलम्बिज्ञानं प्रति विरुद्धमेवेति सुतरां नापेक्षितम्। अतश्शारीरकशास्त्रप्रतिपाद्यार्थमबुध्वैवान्यस्य कस्यचित्तत्पूर्ववृत्तत्वकथनं न मनोहरमित्यभिप्रायेण पूर्वपक्षी समाधत्ते **अनभिज्ञ** इत्यादिना। न च कर्मण्यनुपादेयत्वसिद्ध्यर्थमैक्यावलम्बिब्रह्मात्मैकत्वविज्ञानविरुद्धत्वसूचनौपयिक नानाप्रकारभेदभिन्नकर्मविचारः पूर्वं कर्तव्य इति वाच्यम्। तथा सत्येवं रीत्या सर्वस्यापि पूर्ववृत्तत्वं वक्तव्यमिति कर्मविचारस्यैव पूर्ववृत्तत्वनियमः कथं सम्भवति।

शारीरकं जीवमधिकृत्य प्रवृत्तमिदं शास्त्रं शारीरकशास्त्रम्। आत्मविज्ञानप्रधानम्। न तु तदन्यप्रधानकमिति व्यक्त्यै **शारीरके**त्युक्तम्। शुद्धस्यात्मनः अविद्यासम्बन्धः कथमिति शङ्कापरिहाराय — **अनादीति**। स्वरूपतः प्रवाहतश्चानादित्वं विवक्षितम्। भेदस्य मिथ्यात्वव्यञ्जनायाविद्याकृतत्वोक्तिः। दर्शने वाऽविद्याकृतत्वान्वयः। **अविद्याकृतं** = अविद्ययाऽध्यस्तमित्यर्थः। ज्ञानादिभेदस्य वैविध्यं प्रत्येकमवान्तरभेदात्। भेददर्शनं निमित्तं यस्य जन्मजरामरणादेः। तदेव सांसारिकदुःखम्। आदिशब्दो नरकाद्यभिप्रायकः। अत्र जन्मादिषु दुःखत्वोक्त्या मिथ्याभूतस्यापि प्रतिकूलत्वेन जिहासितव्यत्वं सूचितम्। मरणादिभिर्जातं दुःखमिति वा। सांसारिकं संसरणभवम्। अनात्मभिरात्मानमेकीकृत्य पैनःपुन्येन संसरणं हि संसारः। अनेन दुःखस्य प्रवाहाविच्छेद उक्तः। दुःखमेव वा सागरत्वेन रूपितं, निमग्नत्वोक्तेः। सागरशब्दः सूमूहवाची। **निमग्न** इति। निरित्युपसर्गो बहिर्निर्गमनानुगुणप्रयत्नस्य नैष्फल्यं द्योतयन् मुमुक्षुत्वं द्योतयति। **मिथ्याज्ञानं** = अविद्याकृतभेददर्शनं, तत्कारणीभूतानाद्यविद्या वा। तत्र निखिलदुःखमूलत्वोक्तिः तन्निबर्हणे कार्त्स्न्येन तत्कार्यदुःखस्य निबर्हणाभिप्राया। **आत्मैकत्वेति** विविधभेदप्रतिकोटिनिर्देशः। तेनानुपयुक्तभेदास्पदस्य कर्मणोऽनुपयोगश्च सूचितः। **वीत्युपसर्ग** एकत्वविज्ञानस्य विचार्यनिर्णीतत्वं द्योतयति। **प्रतिपिपादयिषितमिति**। अवैधस्याप्यात्मैक्यज्ञानस्य मोक्षसाधनतया शारीरकेऽत्र प्रतिपाद्यत्वादिति भावः। **कोपयुज्तत** इति। अज्ञानतत्कार्यतत्प्रतिभासादीनां मिथ्यात्वेन तत्त्वज्ञानमात्रेण निवर्त्यत्वान्न तत्र कर्मणामुपयोग इति भावः। हिशब्देनानुपयोगस्स्थिरीकृतः। भेदावलम्बीति हेतुगर्भम्। **कर्मज्ञानं** = कर्मविचारः। यद्वा विचारजन्यनिर्णयात्मकज्ञानम्। **क** = स्वरूपोत्पत्तौ कार्ये वेत्यर्थः। अथ कर्मज्ञानस्य भेदावलम्बित्वेन द्वैतवासनाहेतुत्वात् त्याज्यतैव युक्ता इत्यभिप्रयन्नाह - **प्रत्युतेति**।

ननु यदि कर्मणो विरुद्धता तर्हि तदङ्गभूतोद्गीथाद्यश्रयोपासनमपि विरुद्धमेवेति तच्चिन्तापि नात्र युज्यते इत्यत्राह — **उद्गीथादीति**। **उद्गीथादिविचारः** - उद्गीथाद्युपासनविचार इत्यर्थः। उपासनस्यैवात्र विचार्यत्वात्। यद्वा विचारपदमुपासनतात्पर्यकम्। तदा क्रियत इत्यस्य विचार्यत इत्यर्थः। **कर्मशेषभूत** इति। यद्यपि उद्गीथादेरेव कर्मशेषत्वम्। न तु तदुपासनस्यापि। स्थापयिष्यते च यथाश्रयभावाधिकरणे, अथापि फलसम्बन्धापह्नवेन कर्मशेषत्ववाचोयुक्तिरिति मन्तव्यम्। अथ वोद्गीथादिगतमेव कर्मशेषत्वमुद्गीथोपासन आरोप्योच्यते। उद्गीथादेरेव वा कर्मशेषत्वमस्तु तदुपासनस्य वा। उपासनस्य

**बाढम्; तदपेक्षितश्च कर्मविज्ञानमेव; कर्मसमुच्चिताज्ज्ञानादपवर्गश्रुतेः। वक्ष्यति च, 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्'** (उ.मी.३.४.३६.) **इति। अपेक्षिते च कर्मण्यज्ञाते केन समुच्चयः, केन नेति विभागो न शक्यते ज्ञातुम्। अतस्तदेव पूर्ववृत्तम्।**

---

फलान्तरार्थत्वमस्तु, मास्तु वा। क्रतुफलविलक्षणफलत्वमस्तु, मास्तु वा। अथाप्युद्गीथोपासनस्य ज्ञानरूपत्वाविशेषेणैव विचारः न तु भवदुक्तप्रक्रिययेत्यत्र तात्पर्यम्। परविद्याङ्गत्वव्यावृत्त्यर्थ एवकारः। ननूद्गीथविद्यापि ब्रह्मविद्याप्रकरणे पठिता विचारिता च। अतो गत्यादिचिन्तनवदस्यापि प्रधानोपयुक्तत्वं कल्प्यमिति शङ्कां परिहरति - **स त्विति**। साक्षात्सङ्गति र्नास्ति। परम्परया प्रधानविरुद्धत्वेन तदुपयुक्तत्वकल्पनेनापि न सङ्गतिर्युक्ता। अतो ज्ञानरूपत्वसाम्यादेव तच्चिन्तेत्य-ङ्गीकर्तव्यमिति भावः। **किमपि**। त्वदुक्तकर्मविचारविलक्षणं साधनचतुष्टयमेव। तच्चोपरिष्टात् व्यक्तीभविष्यति।

एवं फलतो जिहासितव्यस्य स्वरूपत उपादेयस्य च कर्मणो ब्रह्मविद्यापेक्षिततत्वेन तद्विचारस्य ब्रह्मविचारपूर्व-वृत्तत्ववादिनं प्रति साधनचतुष्टयस्य पूर्ववृत्तत्वं ब्रुवता उभयथापि कर्मणोऽनपेक्षिततत्वमुक्त्वा कर्मविचारस्य पूर्ववृत्तत्वं प्रतिक्षिप्तम्। अथ ज्ञानोत्पत्तेः पूर्वभाविनः कर्मणोऽङ्गत्वं पश्चाद्भाविनस्तस्य साक्षात्फलं प्रति साधनत्वं च वदतो यादवप्रकाशस्य मतमवलम्ब्य सिद्धान्त्येकदेशी साधनचतुष्टयपूर्ववृत्तत्ववादिनं प्रति शङ्कते - **बाढमिति**। यद्व्यतिरिक्त-स्य नियमेनानपेक्षिततत्वं तद्व्यतिरिक्तस्य पूर्ववृत्तित्वप्रतिक्षेपांशेऽभ्युपगमः, कर्मविचारस्य पूर्ववृत्तत्वप्रतिक्षेपांशे तु नाभ्युपगमः। कुत इत्यत्राह - **तदपेक्षितमिति**। तच्छब्दो ब्रह्मविद्यापरामर्शी। कर्मविज्ञानमेवेत्यवधारणेनेतरनैरपेक्ष्यं, कर्मज्ञानस्य प्राधेन्येनापेक्षिततत्वं विरोधाभावश्च सूचितम्। कर्मविज्ञानस्यापेक्षिततत्वे हेतुमाह - **कर्मसमुच्चितादिति**। अत्र समसमुच्चयो विवक्षितः। **अपवर्गश्रुतेरिति**। 'विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सह। अविद्यया मृत्युं तीर्त्वा विद्य-याऽमृतमश्नुते' इति श्रुतिरत्राभिप्रेता। **विद्यां** = ब्रह्मज्ञानम्। **अविद्यां** = विद्येतरत्कर्म। **अविद्यया** = कर्मणा। **मृत्युं तीर्त्वा** = उपायप्राप्तिविरोधिकर्मापोह्य। अत्रोभयं सहवेदेत्युक्त्या पूर्वार्धेन साधनद्वित्वमुक्तम्। उत्तरार्धेन च प्रतिबन्धक-निवृत्तिब्रह्मप्राप्तिरूपसाध्यद्वित्वमुक्तम्। इत्थञ्च फलं प्रति कर्मणां समप्रधानतयाऽपेक्षिततत्वमनया बोध्यत इति भावः।

अथ कर्मणामङ्गभावे च प्रमाणं दर्शयति — **वक्ष्यति चेति**। चकारोऽर्थान्तरसमुच्चायकः। **यज्ञादि श्रुतिः** 'विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने'त्यादिः। 'ब्रह्मविद्या यज्ञादिसर्वकर्मापेक्षा, यज्ञादिश्रुतेः गमनसाधनभूताश्वस्य परिकराद्यपेक्षावत्' इति सूत्रार्थः। अत्र ब्रह्मज्ञानरूपविद्याया एव प्रकरणसिद्धत्वात् तस्याः सर्वकर्मसापेक्षत्वं, सूत्रकाराभि-प्रतम्। अतोऽङ्गत्वमावश्यकमिति। एतन्मते 'सहकारित्वेन चे'ति सूत्रं समसमुच्चयबोधकं मन्तव्यम्। यद्यप्यर्थद्वयेऽपि श्रुतिवाक्यं सूत्रञ्चोदाहर्तव्यम् अथापि ग्रन्थलाघवाय समुच्चये श्रुतिः, अङ्गभावे सूत्रञ्चोदाहृतम्। एवं कर्मणः समप्रधान-तयाऽङ्गभावेन चापेक्षिततत्वमुक्तम्। अथ प्रकृतोपयोगं दर्शयति — **अपेक्षिते चेति**। उभयथाप्यपेक्षित इत्यर्थः। **केनेति**। नित्यनैमित्तिकयोरेव समुच्चयः, न तु काम्यनिषिद्धयोरपीति विभागज्ञानं न सम्भवतीति कर्मसु इदमेवानुष्ठेयमिदञ्च नेति विभागो न सिद्ध्येदिति भावः। उपसंहरति — **अत इति**। तच्छब्दः कर्मविचारार्थकः। **पूर्ववृत्तमिति**। यद्यपि यादवप्रकाशमते कर्मविचारस्य पूर्ववृत्तत्वं नाभिमतम्, अथापि कर्मणामुभयथापेक्षिततत्वस्य तदभिमतत्वेन तावन्मात्र-मुपजीव्य सिद्धान्त्येकदेशिना शङ्काकरणात् न पूर्ववृत्तत्वाऽऽक्षेपानुपपत्तिः।

अथवा कर्मणामङ्गत्वमात्राभ्युपगन्तृ भास्करमतानुयायी **बाढमि**त्यादिना शङ्कते। अत्र मते समुच्चयो न समसमुच्चय-परः। किन्तु साहित्यमात्रपरः। अपवर्गश्रुतिश्च 'विविदिषन्ति यज्ञेन दानेने'त्यादिर्विवक्षिता। **यज्ञेनेति** तृतीया 'सहयुक्तेऽप्रधाने' इति सूत्रसिद्धा। तेनाप्रधानत्वरूपगुणत्वं यज्ञादीनामुक्तमिति प्रयाजादिवदङ्गत्वं फलितम्। एतन्मते यस्तद्वेदोभयं सहेत्यत्र सहशब्दो न समसमुच्चयपर इति ध्येयम्। अथोक्तार्थे सूत्रकारसम्मतिमपि दर्शयति **वक्ष्यति चेति**।

**नैतद्युक्तम्; सकलविशेषप्रत्यनीकचिन्मात्रब्रह्मविज्ञानादेवाविद्यानिवृत्तेः । अविद्यानिवृत्तिरेव हि मोक्षः । वर्णाश्रमविशेषसाध्यसाधनेतिकर्तव्यताद्यनन्तविकल्पास्पदं कर्म सकलभेददर्शननिवृत्तिरूपाज्ञाननिवृत्तेः**

ननु कर्मणामङ्गत्वेन तदनुष्ठानस्यापेक्षितत्वेऽपि तज्ज्ञानस्य ब्रह्मविचारपूर्वभावित्वं कुतः? ब्रह्मविचारानन्तरमेव च तज्ज्ञानं किमिति न सम्पाद्यमित्यत्राह — **अपेक्षिते चेति** । अयं भावः — लोके वाक्यार्थज्ञानस्य पदार्थज्ञान-पूर्वकत्वदर्शनात् यज्ञेन दानेनेत्यादौ यज्ञादीनामङ्गभूतानां पदार्थत्वात् तज्ज्ञानस्य तद्वाक्यं प्रति प्रतिपाद्यवाक्यार्थज्ञान-पूर्वकत्वमावश्यकमिति पदार्थभूतयज्ञाद्यङ्गविचारः पूर्वमावश्यकः । यद्यपि गामानयेत्यादौ व्युत्पत्तिदशायां पदार्थज्ञानस्यैव वाक्यार्थज्ञानपूर्वकत्वम्, अथापि व्युत्पन्नशब्दादर्थप्रतिपत्तौ सर्वत्र वाक्यार्थज्ञानस्यैव पदार्थज्ञानपूर्वकत्वम् । 'यज्ञेन दानेने'त्यादि वेदार्थविचारदशा च न व्युत्पत्तिदशा । किञ्च व्युत्पत्तिदशायामपि सर्वत्र न पदार्थज्ञानस्य वाक्यार्थज्ञान-पूर्वकत्वनियमः । अम्बा तात मातुलादिपदानां प्रथमव्युत्पत्तौ वाक्यार्थज्ञानस्य पूर्वभावाभावात् । न हि पदान्तर-संसृष्टानामेव तेषां प्रथमव्युत्पत्तिः येन वाक्यार्थधियः पूर्वभावो वक्तुं शक्येत । अतः प्रयाजादिवदनुग्राहकत्वेनाङ्गतयाऽ-पेक्षितस्य यज्ञादेः पदार्थत्वेन तज्ज्ञानं ब्रह्मविचारपूर्वभाव्येव । किञ्च कर्मणां ज्ञानोत्पादकतयाऽङ्गत्वादुत्पाद्योत्पादकयोश्च पौर्वापर्यानियमेन तत्प्रतिपादकविचारयोरपि पौर्वापर्यम् ।

ननु यज्ञादिपदार्थानामङ्गतयापेक्षितत्वे साधनाध्याये सूत्रकृतैव कुतस्तन्न विचारितम् । उच्यते । मीमांसाशास्त्रस्य कृत्स्नवेदार्थनिश्चायकरूपत्वेन कर्मणां तत्र तत्र श्रुतफलजनकत्वस्यापि तत्तत्फलाभिलाषिणं प्रति वक्तव्यत्वेन पृथक् कर्म विचारितम् । अनन्तरञ्च लाघवात् कर्मणां विनियोगपृथक्त्वस्थापनमात्रं स्वयं कृतमिति । **केन समुच्चय** इति । फलान्तरार्थकर्मणां न समुच्चयः कर्मस्वरूपमात्रस्य च समुच्चय इति ज्ञानं कर्मनिरूपेणाभावे न जायत इति भावः । अनेन विरोधोऽपि परिहृतः । पूर्ववृत्तमिति कर्मविचारस्य पूर्ववृत्तत्वं भास्कररभिमतमेव । अत्र समुच्चयशब्दस्वारस्याद-ङ्गत्वपरसूत्रोपादानबलादुत्तरत्र साध्यद्वित्वसाधनद्वित्वयोः कर्मणामङ्गादिभावस्य च निराकरिष्यमाणत्वाच्च यादवप्रकाश-मतावलम्बनेन सिद्धान्तिचोद्यपरः बाढमित्यादिग्रन्थ इति पूर्वं व्याख्यातम् । 'कर्मसमुच्चिताज्ज्ञानादपवर्गश्रुतेरिति वाक्यस्य भास्करीयभाष्ये श्रूयमाणत्वात् कर्मणां तदङ्गत्वस्य भास्कराभिमतत्वेन तद्विषयसूत्रोपादान[illegible] शब्दतोऽर्थतः प्रत्यभिज्ञानमिति [illegible] चेदानीं व्याख्यातः । साम्प्रदायिकैः यथारुचि [illegible] । एतन्मते कर्मणां साक्षात्साधनत्वानभ्युपगमेऽपि सम्भावितप्रकारेण विकल्प्योत्तरत्र साधनत्वनिराकरणमिति ध्येयम् ।

अथ साधनचतुष्टयस्य पूर्ववृत्तत्ववादी समाधत्ते — **नैतद्युक्तमिति** । आपाततः श्रुतिप्रतिपन्नत्वेऽप्ययुक्तत्वात् त्याज्यमित्यर्थः । अथ समुच्चयवादिपरिकल्पितं साधनद्वित्वं निरस्यति — **सकलेति** । किं कर्मणां समसमुच्चयतया समुच्चयो विवक्षितः उताङ्गभावेनेति विकल्पं हृदिनिधाय प्रथमं दूषयति — **सकलेति** । भास्करमतदूषणपरतयाऽवतार्य द्वितीयविकल्पदूषणञ्च **यदपी**त्यादिना क्रियते । **सकलविशेषाः** सजातीयविजातीयस्वगतभेदाः तत्प्रत्यनीकत्वम् । अधिष्ठानभूतस्व(ब्रह्म)ज्ञानेनाध्यस्ततादृशभेदनिवर्तकत्वमध्यस्तात्मज्ञानाभावाश्रयत्वं च । **चिच्छ**ब्देन स्वयम्प्रकाशत्व-बोधकेन शून्यत्वं परिहृतम् । मात्रचाऽचित्त्वादिकमपि व्युदस्तम् । **ब्रह्मविज्ञान**शब्देन 'ब्रह्मवेद' इति श्रुतिस्सूचिता । अवधारणेन कर्मव्यावृत्तिः । 'विज्ञानञ्च' इति वाक्यजन्यप्रत्यक्षज्ञानम् । न ह्यविद्यानिवृत्तिः कर्मसापेक्षा । अध्यस्तसर्पाद्य-सत्यनिवृत्तेः अधिष्ठानयाथात्म्यज्ञानमात्रापेक्षादर्शनात् । अत एव हि 'तमेव विदित्वाऽतिमृत्युमेती'ति प्रतिबन्धक-निवृत्तेरपि ज्ञानैकसाध्यत्वमुक्तमिति । 'अविद्यया मृत्युं तीर्त्वा' इत्येतच्चाविद्यया मृत्युं प्राप्य वर्तमान इत्यर्थकम् । तरतेः 'वेदान्तं तरती'त्यादौ प्राप्यार्थकत्वदर्शनात् ।

अथ साधनद्वित्वनिदानतया कल्पितं साध्यद्वित्वमपि निरस्यति — **अविद्यानिवृत्तिरेवेति** । एवकारेण कण्ठ-स्थितकनकनयेन ब्रह्मप्राप्तेः प्राप्तत्वेनासाध्यत्वं सूचितम् । हिशब्देनाविद्यानिवृत्तिरूपमुक्तेः ज्ञानैकसाध्यत्वे श्रुतिस्मृति-

**कथमिव साधनं भवेत् ? श्रुतयश्च कर्मणामनित्यफलत्वेन मोक्षविरोधित्वं ज्ञानस्यैव मोक्षसाधनत्वं च दर्शयन्ति -'अन्तवदेवास्य तद्भवति'** (बृ. ५.८.९.), **'तत् यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते'** (छा.८.१.६.), **'ब्रह्मविदाप्रोति परम्'** (तै. आन.१.), **'ब्रह्म वेद ब्रह्मैव भवति'** (मु.३.२.९.), **'तमेव विदित्वाऽति मृत्युमेति'** (श्वे.३.८.) **इत्याद्याः ॥**

**यदपि चेदमुक्तम् - यज्ञादिकमपेक्षा विद्येति - तद्भवस्तुविरोधाच्छ्रुत्यक्षरपर्यालोचनया चान्तःकरण-**

---

स्वारस्यं दर्शितम् । अथ कर्मणां ज्ञानकार्येऽनुपयोगं विरोधश्च पूर्वोक्तं स्मारयति — **वर्णेति** । आदिशब्देन निषिद्ध-प्रायश्चित्तकर्मणां सङ्ग्रहः । **अनन्तपदेन** व्यक्त्यानन्त्यं विवक्षितम् । **विकल्पो** भेदः । **आस्पदं** = स्थानम् । यद्वा **विकल्पो** भ्रमः । तदाऽऽस्पदशब्दो विषयार्थकः । भेददर्शनस्याविद्याकार्यत्वात्कारणीभूताविद्यानिवृत्तेस्तत्कार्यभेददर्शन-निवृत्तिरूपत्वोक्तिः ।

**कथमिव साधनं भवेदिति** । न कथञ्चित् साधनमित्यर्थः । अयं भावः — साध्यद्वित्वसाधनद्वित्वे एव न प्रामाणिके । ब्रह्मणो नित्यप्राप्तत्वेन प्रतिबन्धकनिवृत्तेरेव साध्यत्वात् तस्याश्चाविद्यानिवृत्तिरूपत्वेन कर्मसाध्यत्वा-भावात् । 'तमेव विदित्वाऽतिमृत्युमेति' 'ज्ञात्वा देवं मुच्यते सर्वपाशैः' इत्यादिभिर्ज्ञानैकसाध्यत्वोक्तेश्च । अतः कर्मणामविद्यानिवर्तकत्वस्यात्यन्तासम्भावितत्वात्, प्रत्युत तदनुवृत्त्या संसारप्रापकत्वेन विरुद्धत्वाच्च न कर्मणां हानार्थं ज्ञातव्यत्वं स्वरूपत उपादानार्थं वा ज्ञातव्यत्वम् इति ।

ननु कर्मणामङ्गत्वस्य वा साधनत्वस्य वा श्रुत्यैव बोधितत्वात् कथं युक्तितस्तदपेक्षापरित्यागः । न हि वचनविरोधे न्यायः प्रभवतीत्यत्र स्वोक्तयुक्तेरनुग्राह्यमप्यस्तीति स्वोक्तार्थे श्रतीः प्रमाणयति — **श्रुतयश्चेति** । अत्र बहुवचनात् प्राबल्यमपि दर्शितम् । **अनित्यफलत्वेनेति** । कर्मणां स्वरूपतो विरुद्धत्ववत् फलद्वारापि विरुद्धत्वम् । नित्यफलं मोक्षं प्रत्यनित्यफलकस्य कर्मणः साधनत्वासम्भावात् । अन्यथा मोक्षस्य वाऽनित्यत्वप्रसङ्गात् । **ज्ञानस्यैवेति** । अवधारणेन कर्मणां समुच्चयविकल्पाङ्गत्वपक्षाः व्युदस्ताः । दर्शयन्तीत्यनेनोदाहरिष्यमाणवचनानां परोदाहृतवचनवद-स्फुटार्थत्वं नास्तीति सूचितम् । **अन्तवदेवेति** — 'अस्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्त-वदेवास्य तद्भवती'ति श्रुतिः । अनया बहुकालानुष्ठितानामपि सकलानां कर्मणामनित्यफलसाधनत्वमुक्तम् । अनेन ज्ञानस्य कर्मनैरपेक्ष्यमपि सिद्धम् । **कर्मचितः** = कर्मणा सम्पादितः । लोक्यत इति **लोकः** फलम् । **पुण्यचित** इत्यत्र पुण्यशब्दोऽसङ्कोचन्यायात् न सङ्कोचार्ह इति सर्वेषामेव पुण्यकर्मणामनित्यफलजनकत्वं युक्तमित्याशयः । उदाहृतवाक्यद्वयं कर्मणामनित्यफलसाधनत्वे प्रमाणम् । ज्ञानस्यैव मोक्षसाधनत्वे प्रमाणान्याह — **ब्रह्मविदिति** । अत्र कर्मसमुच्चयादीना-मश्रवणात् निरपेक्षज्ञानस्य मोक्षसाधनत्वसिद्धिः ।

ननु विकल्पास्पदस्य कर्मणः साधनत्ववत् ब्रह्मज्ञानस्यापि साधनत्वं न सम्भवति । अस्यापि प्राप्यत्व-प्राप्तृत्व-वेद्यत्व-वेदितृत्वादिभेदकबलितत्वादित्यत्राह — **ब्रह्मवेदेति** । अवधारणेन ब्रह्मभूतस्यैव भ्रान्तिसिद्धाब्रह्मत्वं निवर्त्यत इत्युक्तं भवति । तथा च भ्रान्तिसिद्धाब्रह्मत्वनिवर्तकवाक्ये 'ब्रह्मविदाप्नोति पर'मित्यादौ कर्मकर्तृव्यपदेशस्य काल्पनिक-त्वान्नानुपपत्तिरित्याशयः । **तमेवेति** — अनेन प्रतिबन्धकनिवृत्ते र्ज्ञानमात्रनिवर्त्यत्वकण्ठोक्त्या कर्मसाध्यत्वबाधादपि नाश्रुतं कर्मणो मोक्षसाधनत्वं कल्पयितुं युक्तमिति सूचितम् । तमेवेति वेद्यवाचकपदसमभिव्याहृतोऽपि एवकारो 'विदित्वे'त्यत्रान्वयात् वेदननैरपेक्ष्याभिप्रायकः । अत एव 'नान्यः पन्था' इत्युत्तरवाक्यसङ्गतिः । मृत्युमत्येतीत्यन्वयः । मृत्युशब्दोऽविद्यापरः । 'किमर्था वयं यक्ष्यामहे' 'न कर्मणा न प्रजया' इत्यादय आदिशब्दविवक्षिताः । एवमुदाहृतानन्य-

**नैर्मल्यद्वारेण विविदिषोत्पत्तावुपयुज्यते; न फलोत्पत्तौ; 'विविदिषन्ति'** (बृ.६.४.२२.) **इति श्रवणात् । विविदिषायां जातायां ज्ञानोत्पत्तौ शमादीनामेवान्तरङ्गोपायतां श्रुतिरेवाऽऽह - 'शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येत्'** (बृह. ६.४.२३) **इति ॥**

---

परस्पष्टार्थानेकश्रुतिभिः तर्कोपेताभिः कर्मनिरपेक्षज्ञानस्य साधनत्वप्रतीतेः । अतर्कोपेतास्फुटार्थैकश्रुतेः समसमुच्चयपरतया परेणोदाहृतायाः विद्याञ्चाविद्याञ्चेत्यादिकाया अन्यार्थत्वमेव युक्तमित्याशयः ।

अथ कर्मणामङ्गभावबोधकत्वेन परोक्तां यज्ञादिश्रुतिमन्यथयति — **यदपीति** । यच्छब्दः । कर्मपरामर्शी । अपिशब्देन कर्मणामङ्गभावे निन्दा व्यञ्जिता । अनेन विषमसमुच्चये परोक्तसूत्रस्वारस्यमपि निरुद्धं भवति । सर्वाभिमतत्वप्रयुक्तप्राधान्यं वा सूचितम् । चकारो यज्ञादिश्रुतेरपि विद्याञ्चेतिश्रुतिवत् श्रुत्यन्तरानुगुण्येनान्यथानिर्वाहः कर्तव्य इत्यर्थं व्यनक्ति । **तदिति** । यज्ञादिकर्मापेक्षा विद्येति फलोत्पत्तावपेक्षितत्वेन यत्कर्मोक्तं तदित्यर्थः । अन्यथा तच्छब्देनोक्तिपरामर्शेऽनन्वयापत्तेः । अथ वा यच्छब्देनाप्युक्तिपरामर्शे विविदिषोत्पत्तावुपयुज्यते न फलोत्पत्ताविति तत्परिहर्तव्यमिति योजनीयम् । कर्मणां भेदवासनासंवर्धकत्वमनित्यफलजनकत्वमित्यद्वैतज्ञानस्य न तथात्वमिति च **वस्तुविरोधः** । यद्वा तत्तज्जन्यबन्धमोक्षरूपयोः फलयो र्वस्तुनोर्विरोधः । अधीतश्रुतेरन्यथानयनं श्रुतसन्प्रत्ययस्य वैयर्थ्यकल्पनञ्च न हृदयङ्गमित्यभिप्रायेण **श्रुत्यक्षरपर्यालोचनयेति** भाषितम् । श्रुतेस्तदक्षरस्य च पर्यालोचनयेत्यर्थः । न हि मुच्यन्ते विदन्तीति वोक्तमिति भावः । **अन्तःकरणनैर्मल्यद्वारेणे**ति विविदिषोत्पत्तावुपयोगप्रकारो दर्शितः । ततोऽयमेव प्रकारो वेदनोत्पत्तावपि कर्मणामिति सिद्धान्त्यभिप्रायः । **फलोत्पत्तौः** विविदिषाजन्यवेदनरूपफलोत्पत्तौ । कुत इत्यत्राह **विविदिषन्तीति** । सेवके यजमानस्यानादिकालं दुष्टत्ववासनायामन्येन साधुत्वोपदेशेपि स प्रभुः न तद्वाक्यं शृणोति । वाक्यश्रवणेपि साधुत्वज्ञानं नोत्पद्यते । ज्ञानोत्पत्तावपि न तत्कार्यकरं भवतीत्यनुभवसिद्धम् ।

कर्मणां भेदवासनासंवर्धकतयाऽन्तवत्फलतया च विरुद्धत्वात् विविदिषन्तीति विविदिषोत्पत्तावेव तेषां विनियोगश्रवणाच्च न विद्याङ्गत्वसम्भवः । न चाश्वेन जिगमिषतीत्यादौ गमनेऽश्वकरणकत्वस्येवात्रापि वेदन एव यज्ञादिकरणकत्वस्य सिद्धिरिति वक्तुं युक्तम् । तत्र बाधेन तथा स्वीकारेऽपि प्रकृते बाधकाभावेन तथा स्वीकर्तुमयुक्तत्वात् । वस्तुतो यादृशाश्वव्यक्तेः गमनकरणत्वमप्रसिद्धम्, अथ च तत्करणकत्वं गमनस्येच्छाविषयः, तत्र गमने तदश्वकरणकत्वस्य बाधेन तदश्वेन जिगमिषतीति विशेषदर्शिनः प्रयोगानुपपत्तिरिति तत्रापि न गमनेऽश्वकरणकत्वप्रतीतिः । भगवन्तं दिदृक्षत इत्यादौ न सुतरां कर्मत्वस्य धात्वर्थान्वयः । अतो मुच्यन्ते विदन्ति इति प्रयोगं विना विविदिषन्तीति प्रयोगसत्त्वेन श्रुतेस्तदक्षरस्य च पर्यालोचने कर्मणां विविदिषायामेवोपयोगस्सिद्ध्येन्न तु मोक्षोत्पत्तौ न वा तत्करणवेदनोत्पत्ताविति । **अन्तरङ्गोपायतां श्रुतिरेवाऽऽहेति** । अत्रान्तरङ्गपदेन भूत्वा पश्येदिति श्रुत्यानुपूर्वीप्रज्ञातान्तरङ्गत्वाऽऽश्रयशमाद्यपेक्षया विविदिषापेक्षितस्य कर्मणो वैषम्यं दर्शितम् । श्रुतिरेवेत्यनेनानयो र्विकल्पोऽपि परास्तः ।

इदमत्र तात्पर्यं - कर्मणः शमादेश्च विकल्पेन वा समुच्चयेन वा नाङ्गत्वसम्भवः । 'भूत्वाऽऽत्मानं पश्ये'दित्यात्मदर्शनं प्रति शमादेः साक्षात्साधनत्वकण्ठोक्त्या न्यायसञ्चाराद्यन्तरेणैव साधनत्वमवगतमिति शीघ्रप्रतिपन्नम् । यज्ञादिकर्मणान्तु नात्मदर्शनसाधनत्वं कुत्राप्यवगतम् । विविदिषन्तीति चेच्छासाधनत्वमेव बोधयति, स्वारस्यात् । असिना जिघांसतीत्यादि दृष्टान्तपर्यालोचनयाऽऽत्मदर्शनसाधनत्वमुच्यते चेत्, तर्हि न्यायसापेक्षतयैव साधनत्वावगम इति विलम्बतः प्रतिपत्ते र्दौर्बल्यम् । अतस्समबलत्वाभावान्न विकल्पः । शमादीनां यज्ञादिकर्मणां चेन्द्रियव्यापारोपरतितदभावरूपत्वेन परस्परविरोधान्न समुच्चयोऽपि । एतेन विविदिषाऽपेक्षितत्वेन कर्मणो ज्ञानोपयोगित्वस्याप्यावश्यकतया कथं तत्परित्याग इति शङ्कनमपि व्युदस्तम् । कर्मशमादेरुक्तरीत्या वैषम्यात् । कर्मणां विविदिषायाः पूर्वमेवोपयोगः ।

**तदेवं जन्मान्तरशतानुष्ठितानभिसंहितफलविशेषकर्ममृदितकषायस्य विविदिषोत्पत्तौ सत्याम्, 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्'** (छा.६.२.१.), **'सत्यं ज्ञानमनन्तं ब्रह्म'**(तै.आन.१.), **'निष्कलं निष्क्रियं शान्तम्'** (श्वे. ६.१९.), **'अयमात्मा ब्रह्म'** (बृह.६.४.५), **'तत्वमसि'** (छा.६.८.७.) **इत्यादिवाक्यजन्यज्ञानादविद्या निवर्तते । वाक्यार्थज्ञानोपयोगीनि च श्रवणमनननिदिध्यासनानि । श्रवणं नाम - वेदान्तवाक्यानि आत्मैकत्वविद्याप्रतिपादकानीति तत्त्वदर्शिन आचार्यात् न्याययुक्तार्थग्रहणम् । एवमाचार्योपदिष्टस्यार्थस्य स्वात्मन्येवमेव युक्तमिति हेतुतः प्रतिष्ठापनं मननम् । एतद्विरोध्यनादिभेदवासनानिरसनायास्यैवार्थस्यानवरतभावना निदिध्यासनम् । श्रवणदिभिर्निरस्तसमस्तभेदवासनस्य वाक्यार्थज्ञानमविद्यां निवर्तयतीति, एवंरूपस्य श्रवणस्यावश्यापेक्षितमेव पूर्ववृतं वक्तव्यम् ।**

**तच्च नित्यानित्यवस्तुविवेकः, शमदमादिसाधनसम्पत्, इहामुत्रफलभोगविरागः, मुमुक्षुत्वं चेत्येतत्**

---

शमादेस्तु पश्चादप्युपयोग इत्यात्मदर्शने कर्मपरित्यागो युक्त एवेति । एतदभिप्रायेण हि **विविदिषायां जातायामिति** भाषितम् । इत्थश्च कर्मणां बहिरङ्गत्वादिना ज्ञानसाधनत्वासम्भवात् 'क्रियावानेष' इत्यादिकं स्तावकमेवेत्याभ्युपेयम् ।

**शान्तः** बहिरिन्द्रियनिग्रहवान् । **दान्तः** निगृहीतान्तरिन्द्रियः । **उपरतः** = ईषणात्रयमुक्तः । **तितिक्षुः** शीतोष्णादिद्वन्द्वसहिष्णुः । **समाहितः** चित्तसमाधानानुकूलव्यापारवान् । **आत्मन्येति** । 'दाने कर्णसम' इत्यादाविवाभेदार्थे सप्तमी । यद्वा **आत्मनि** = ब्रह्मणि । एवकारः सम्बन्धातिशयसूचनार्थः । **पश्येदि**त्यनेनापरोक्षस्य भ्रमात्मकभेददर्शनस्यापरोक्षज्ञानं बाधकमिति सूचितम् ।

उपसंहरति — **तदेवमिति** । मनसा तु विशुध्देनेति विशुद्धमनस एव करणत्वावगतेः । कर्मणां साक्षात्साधनत्वस्याङ्गत्वस्य वोक्तयुक्त्या कल्पयितुमशक्यत्वाच्च तृतीयाश्रुत्या विविदिषायामेव विनियोगस्य वक्तव्यत्वोपपादनप्रकारेणेत्यर्थः । **जन्म**शब्द इह पुण्यजन्मपरः । कर्मणः फलतो बन्धकत्वेन विविदिषासाधनत्वस्याप्यनपायादिति फलेऽनभिसंहितत्वविशेषणमा । कर्मजन्यविविदिषाया अपि फलत्वेन तस्या अनभिसंहितत्वव्यावृत्त्यर्थं **विशेषे**त्युक्तिः । **कषायः** = कल्मषम् । **विविदिषोत्पत्तौ सत्यामिति** । 'कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्तत' इत्यादेः कर्मभिर्मृदितकषायस्य ज्ञानोत्पत्तिबोधकस्मृतिवाक्यस्य श्रौतविनियोगबाधात् व्यवधानसहत्वमित्याशयः । **सदेवेति** सृष्टेः प्राक् परिदृश्यमानं सदेवासीदित्युक्त्या ब्रह्मणो विजातीभेदशून्यत्वमुक्तम् । **एकमेवेत्यनेन** सजातीयभेदनिरासः । **अद्वितीयपदेन** स्वगतभेदनिरासः । 'अद्वितीयपदं हि गुणतोऽपि सद्वितीयतां न सहत' इत्युत्तरत्र वक्ष्यते । शोधकवाक्यमाह - **सत्यमित्यादि** । एतदर्थस्तु अद्वैतरीत्योत्तरत्र व्यक्तीभविष्यति । **निष्कलं** = निरंशम् । **निष्क्रियं** = निर्व्यापारम् । **शान्तं** = शोकमोहौ, अशनायापिपासे, जरामृत्यू इत्येतद्रूपोर्मिषट्करहितम् । **वाक्यजन्यज्ञानादिति** साक्षात्काररूपं ज्ञानं विवक्षितम् ।

ननु वाक्यजन्यज्ञानादेवाविद्यानिवृत्तौ श्रवणादिविधीनां वैयर्थ्यमेवेत्यत्राह — **वाक्यार्थज्ञानेति** । अविद्यानिवर्तकेत्यादिः । श्रवणादिस्वरूपं तद्वैयर्थ्यपरिहाराय शिक्षयति — **श्रवणं नामेति** । **विद्याप्रतिपादकानि** = ज्ञानजनकानीत्यर्थः । **इति**शब्दोऽर्थान्वयी । अर्थस्य न्याययुक्तत्वं तात्पर्यनिर्णायकोपक्रमादिन्यायोपस्कृतत्वम् । ततश्च तत्त्वद्रष्टुः आचार्यस्य सकाशात्, न्याययुक्तस्य = सर्वाण्यपि वेदान्तवाक्यान्यात्मैकत्वरूपार्थविषयकप्रतीतिजनकानीत्येवंरूपस्यार्थस्य ग्रहणमेव श्रवणमिति फलितम् । **स्वात्मनि** = स्वचित्ते । **हेतुत** इति — 'मन्तव्यश्चोपपत्तिभि'रिति स्मृतेः । **प्रतिष्ठापनं** दृढसंस्थापनम् । निदिध्यानस्योपयोगं दर्शयति — **एतदिति** । भेदवासनाया अनादिकालसञ्चितत्वेन तन्निरासो न सकृत्सञ्जातवाक्यार्थज्ञानादिना भवतीत्यनवरतभावनाऽपेक्षिता । इत्थश्च तत्त्वमस्यादिवाक्येनात्मैकत्वविज्ञानजननेऽपि

**साधनचतुष्टयम्; अनेन बिना जिज्ञासानुपपत्तेः। अर्थस्वभावादेव इदमेव पूर्ववृत्तमिति ज्ञायते॥**

**एतदुक्तं भवति - ब्रह्मस्वरूपाच्छादिकाविद्यामूलमपारमार्थिकं भेददर्शनमेव बन्धमूलम्। बन्धश्चापारमार्थिकः। स च समूलोऽपारमार्थिकत्वादेव ज्ञानेनैव निवर्त्यते। निवर्तकश्च ज्ञानं तत्त्वमस्यादिवाक्यजन्यम्। तस्यैतस्य वाक्यजन्यस्य ज्ञानस्य स्वरूपोत्पत्तौ कार्ये वा कर्मणो नोपयोगः। विविदिषायामेव तु कर्मणामुपयोगः। स च पापमूलरजस्तमोनिबर्हणद्वारेण सत्त्वविवृद्ध्या भवतीतीममुपयोगमभिप्रेत्य, 'ब्राह्मणा विविदिषन्ति'** (बृ.६.४.२२) **इत्युक्तमिति। अतः कर्मज्ञानस्यानुपयोगादुक्तमेव साधनचतुष्टयं पूर्ववृत्तमिति वक्तव्यम्॥**

---

न तादृशज्ञानस्याविद्यानिवर्तकत्वम्। भेदवासनारूपप्रतिबन्धकसत्त्वात्। प्रतिबन्धनिरासे तु तादृशज्ञानमेवाविद्यानिवर्तकम्। अतस्तादृशप्रतिबन्धनिरासायैव श्रवणादीनामावश्यकतेति न तद्विधीनां व्यर्थतेति भावः।

अथ 'नास्त्यकृतः कृतेन' 'शान्तो दान्तः' येनाहं नामृता स्याम्। किमहं तेन कुर्यां', 'तं मा भगवान् शोकस्य पारं तारयतु' इत्यादि प्रमाणसिद्धं स्वस्य पूर्ववृत्तत्वाभिमानविषयं साधनचतुष्टयं प्रदर्शयति **तच्चेति**। साधनचतुष्टयस्य ब्रह्मविचारापेक्षाप्रकारं दर्शयति — **अनेनेति**। जिज्ञासापदं विचारपरं, ज्ञानपरं वा। तेन कर्मणामेवान्तः करणनैर्मल्यद्वारेण जिज्ञासापेक्षितत्वात्साधनचतुष्टयस्य तदपेक्षितत्त्वकथनमनुपपन्नमिति शङ्काया नावकाशः।

ननु साधनचतुष्टयवत्कर्मणोऽप्यपेक्षितत्वं पूर्ववृत्तत्वञ्चास्त्वित्यत्राह - **अर्थेति**। **अर्थस्वभावात्** = ज्ञानकर्मसाधनचतुष्टयार्थस्वभावादित्यर्थः। नित्यानित्यविवेकाद्धि अनित्यफलभोगवैराग्यं नित्यपुरुषार्थेच्छा, तत एव नित्यपुरुषार्थविचारे प्रवृत्तिः। शमदमादिभिः किल पुरुषस्यावहितमनस्कत्वसम्भवः। अतो ब्रह्मविचारेऽवधानौपयिकशमदमादिसम्पदप्यावश्यकीति साधनचतुष्टयस्यार्थस्वभावः। कर्म भेदावलम्बि भेदवासनावर्धकञ्च। ज्ञानं तु पूर्वोक्तयुक्त्या कर्मनिरपेक्षोपाय इति ज्ञानकर्मणोरर्थस्वभावपर्यालोचने तु न कोऽपि कर्मणो ब्रह्मविचारपूर्ववृत्तत्वं ब्रूयात्। एतेन शमादिवत्कर्मणोऽपि पूर्ववृत्तत्वकथनमपास्तम्। शमादीनामिन्द्रियोपरतिरूपत्वेन कर्मणश्चेन्द्रियव्यापाररूपत्वेन च विरुद्धस्वभावत्वादुभयोरपि पूर्ववृत्तत्वासम्भवाच्च।

स्यादेतत् - ब्रह्म हि सकलविशेषप्रत्यनीकम्। तत्कथमविद्या ब्रह्म तिरस्कुर्यात्। कथं वा ज्ञानेन प्रत्यक्षदृष्टो बन्धो निवर्त्यत इत्याद्याशङ्कां परिहरन्नुक्तार्थं सङ्क्षेपेण सङ्कलयन् दर्शयति — **एतदुक्तं भवतीति। ब्रह्मस्वरूपाच्छादिकाविद्यामूलम्** — भावे ण्वुलन्तमेव। ब्रह्मस्वरूपाच्छादिकाविद्यामूलमित्यत्र 'आच्छादिका च साऽविद्या चेति न कर्मधारयः। 'पाचकस्त्री' इत्यादाविव भाषितपुंस्कत्वेन पुंवद्भावापत्तेः। परन्तु चित्राजरद्गुरित्यादाविव 'आच्छादिका अविद्या मूलं यस्येति त्रिपदबहुव्रीहिः। अत्र विकल्पेन पुंवद्भावस्य विहितत्वात् 'चित्राजरद्गुः' 'चित्रजरद्गुः' इतिवदाच्छादिकाविद्यामूलमाच्छादकाविद्यामूलमिति द्विविधरूपस्यापि प्रामाणिकत्वमिति न दोषः। यद्वाऽऽच्छादिका = आच्छादनम्। 'भावे ण्वुल्'। तादर्थ्यविवक्षया सम्बन्धसामान्यषष्ठी। अथ वा आच्छादिकाहेतुः अविद्या **आच्छादिकाविद्या**। मध्यमपदलोपीसमासः। अत्रापि भावे ण्वुलन्तमेव।

अयं भावः - अविद्या द्विविधा — आच्छादिका, विक्षेपिका चेति। तत्र दीपस्येव ब्रह्मणोऽप्यनाद्यविद्ययाऽऽच्छादने तन्मूलं भेददर्शनं भवति तस्माच्च बन्धः। एतत्सर्वमप्यविद्याकल्पितत्वेनापारमार्थिकम्। अत एव च ज्ञाननिवर्त्यम्। ज्ञाननिवर्त्यत्वस्यैव हि मिथ्यात्वम्। तत्र ब्रह्मज्ञानेनाविद्यानिवृत्तौ तन्मूलकस्य सर्वस्यापि निवृत्तिः। ध्यानादिसहकृतस्य दशमस्त्वमसीति वाक्यजन्यज्ञानस्येव सर्वस्यापि निवृत्तिः। ध्यानादिसहकृतस्य दशमस्त्वमसीति वाक्यजन्यज्ञानस्येव प्रत्यक्षरूपस्य तत्त्वमसीत्यादिवाक्यजन्यब्रह्मात्मैकत्वविज्ञानस्यैव समूलबन्धनिवर्तकत्वञ्चेति। तस्य

(लघुसिद्धान्तः)

**अत्रोच्यते - यदुक्तम्, 'अविद्यानिवृत्तिरेव मोक्षः; सा च ब्रह्मविज्ञानादेव भवती'ति - तदभ्युपगम्यते। अविद्यानिवृत्तये वेदान्तवाक्यैर्विधित्सितं ज्ञानं किंरूपमिति विवेचनीयम् - किं वाक्याद्वाक्यार्थज्ञानमात्रम्, उत तन्मूलमुपासनात्मकं ज्ञानमिति। न तावत् वाक्यजन्यं ज्ञानम्; तस्य विधानमन्तरेणापि वाक्यादेव सिद्धेः; तावन्मात्रेणाविद्यानिवृत्त्यनुपलब्धेश्च।**

**न च वाच्यम् - 'भेदवासनायामनिरस्तायां वाक्यमविद्यानिवर्तकं ज्ञानं न जनयति; जातेऽपि**

---

= कर्मनिरपेक्षस्य। **एतस्य** = अभेदविषयकस्य। अत्र 'विरोधादप्रमाणत्वा'दित्यादि तदुक्तसङ्ग्रहश्लोकोऽनुसन्धेयः। "विरोधादप्रमाणत्वाच्चित्तशुध्द्युपयोजनात्। ज्ञानमात्रस्य हेतुत्वश्रुतेः सामर्थ्यतोऽपि च॥ शमाद्यङ्गकताशास्त्रान्न धीकर्मसमुच्चयः। श्रवणादिक्रमोन्निद्रवाक्यजा धीर्विमोचिका॥" विरोधः - स्वरूपतः फलतश्च। सामर्थ्यञ्च मिथ्यावस्तु-निवर्तने ज्ञानस्यैव पर्याप्तत्वम्॥

अत्यन्तानुपपन्नं बहुप्रमाणविरुद्धं प्रमाणैरनिर्वचनीयं पक्षममुं निरस्यति — **अत्रोच्यत** इति। **अविद्यानिवृत्तिरेवे-**त्यत्रैवकारेण तदन्यस्य फलत्वव्यवच्छेदः। यद्यप्यनिष्टनिवृत्तिरिष्टप्राप्तिश्चेति फलद्वयमस्ति, अथापि भावान्तराभाव-वादिनामस्माकमनिष्टनिवृत्तेरेव ब्रह्मप्राप्तिरूपभावरूपत्वमिति नासाङ्गत्यम्। यद्वाऽविद्यानिवृत्तिवत् प्रयत्नसाध्यस्यान्यस्य फलस्य व्यवच्छेदक एवकारः। अविद्यानिवृत्तिर्हि प्रयत्नसाध्या। ब्रह्मप्राप्तिस्तु स्वत एव। उच्यते च "यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणे'रित्यादि। विद्याञ्चाविद्याञ्चेत्यत्र साध्यद्वित्वमपि नास्ति साधनद्वित्वमपि नास्ति। तीर्त्वा इत्यत्र तरतिः प्राप्तिवचनः 'सेतुं तीर्त्वा' इत्यत्रेव। तथा चाविद्यया मृत्युं प्राप्य वर्तमान इत्यर्थः। "अनित्यमसुखं लोकं इमं प्राप्य' इतिवत्। अमृतमश्नुते इत्युत्तरवाक्यमप्यस्मदनुगुणम्। न हि ब्रह्माश्नुते इत्युक्तम्। अतोऽत्रैवाविद्यानिवृत्तिरूप-फलमुच्यते॥ **ब्रह्मविज्ञानादेवे**त्यत्रैवकारः कर्मणां साक्षात्साधनत्वव्यवच्छेदपरः।

**तदभ्युपगम्यत** इति। अत्र केवलं शब्दानुपूर्व्या अभ्युपगमः। तन्मतेऽविद्यापदमज्ञानपरम्। अत्र तु कर्मपरम्। एवं ब्रह्मविज्ञानपदं जीवपरयोः स्वरूपत ऐक्यज्ञानपरम्। अस्माकन्तु प्रकारप्रकारिभावेन विशिष्टैक्यपरम्। **विधित्सितम्** = उत्पादयितुं विधातुं चेष्टम्। **किं वाक्यादिति**। जन्यत्वं पञ्चम्यर्थः। वाक्यादेव सिद्धेरिति समाधानसौकर्यायात्रापि वाक्यादित्युक्तिः। यद्वा तत्त्वमस्यादिवाक्यजन्यशाब्दबोधानन्तरकालीनसंस्कारजन्यब्रह्मात्मैक्यविषयकस्मृतिरूप-वाक्यार्थज्ञानव्यावृत्त्यै वाक्यादित्युक्तिः। मात्रशब्दस्तु ज्ञानेतरव्यावर्तकतया चरितार्थः। तत्त्वमस्यादिवाक्यश्रावण-प्रत्यक्षव्यावृत्त्यै **वाक्यार्थेति**। उपासनात्मकं ज्ञानमिति स्वपक्षोपन्यासः। व्युत्पत्तिमतः पुरुषस्य वाक्यश्रवणसमनन्तर-मेवार्थबोधसम्भवान्न तादृशार्थविषयकज्ञानस्य विधेयत्वसम्भवः, तस्य स्वतस्सिद्धत्वादित्याशयेन दूषयति - **तस्येति**। **विधानमिति**। प्रज्ञां कुर्वीत इतीत्यादिः।

ननु प्रमाणजन्यज्ञानस्य पुरुषतन्त्रत्वाभावेन विधेयत्वासम्भवेऽपि तस्य श्रेयस्साधनत्वमलौकिकमेवेति तस्य विधेयत्वसम्भवो दुर्वार इति चेन्न। अलौकिकश्रेयस्साधनताया भवद्भिरनङ्गीकारात्। शुक्तिज्ञानस्य रजतादिभ्रम-निवर्तकत्ववदस्य ज्ञानस्य बन्धनिवर्तकत्वेन दृष्टार्थत्वस्यैवाङ्गीकारात्। स्यादेतत् नास्माभिः प्रज्ञां कुर्वीत इत्यादिभिर्वाक्यजन्यज्ञानस्य विधेयत्वमिष्यते। परन्त्वनादिकालसञ्चितानन्तभेदवासनानिरासायानवरतभावनारूप-निदिध्यासनस्यैव। तस्य च पुरुषतन्त्रत्वेन विधेयत्वसम्भव इत्यत्राह — **तावन्मात्रेणेति**। अयं भावः - आस्तां निदिध्यासनस्यैव विधेयत्वम्। अथापि वाक्यार्थज्ञानस्याविद्यानिवर्तकत्वं न सम्भवति। प्रत्यक्षविरोधेना-

**सर्वस्य सहसैव भेदज्ञानानिवृत्तिर्न दोषाय, चन्द्रैकत्वे ज्ञातेऽपि द्विचन्द्रज्ञानानिवृत्तिवत्; अनिवृत्तमपि छिन्नमूलत्वेन न बन्धाय भवती' ति - सत्यां सामग्र्यां ज्ञानानुत्पत्त्यनुपपत्तेः; सत्यामपि विपरीतवासनायामाप्तोपदेशलिङ्गादिभिर्बाधकज्ञानोत्पत्तिदर्शनात्। सत्यपि वाक्यार्थज्ञानेऽनादिवासनया मात्रया भेदज्ञानमनुवर्तत इति भवता न शक्यते वक्तुम्; भेदज्ञानसामग्र्या अपि वासनाया मित्त्यारूपत्वेन ज्ञानोत्पत्त्यैव निवृत्तत्वात्। ज्ञानोत्पत्तावपि मिथ्यारूपायास्तस्या अनिवृत्तौ, निवर्तकान्तराभावात्कदाचिदपि नास्या वासनाया निवृत्तिः।**

---

न्वयव्यतिरेकासिद्धेरिति। अत्राऽऽपस्तम्बोऽपि वाक्यार्थज्ञानस्य मोक्षसाधनत्वं 'बुद्धे क्षेमप्रापणं तच्छास्त्रैर्विप्रतिषिद्धम्' इत्यादिभिर्निराचक्रे। वक्ष्यति चेदमुत्तरत्र।

अत्र शङ्कते - **न च वाच्यमिति**। इदमत्राकूतम्। तत्त्वमसीति वाक्यान्नाविद्यानिवर्तकज्ञानस्योत्पत्तिर्भवितुमर्हति, भेदवासनारूपप्रतिबन्धकसत्त्वात्, प्रतिबन्धकाभावस्यापि सामग्र्यन्तर्गतत्वात्। अतो भेदवासनानिरासानन्तरमेव तत्त्वमसीति वाक्यादविद्यानिवर्तकज्ञानोत्पत्या पश्चादविद्यानिवृत्तिः। न च श्रवणादिभिः निरस्तसमस्तभेदवासनानामपि सनकशुकवसिष्ठादीनां वाक्यार्थज्ञानादविद्यानिवृत्यनुपलब्ध्या नैवं सम्भवतीति वाच्यम्। तेषामप्यविद्यानिवृत्तेरङ्गीकृतत्वात्। न चाविद्यानिवृत्तौ सद्य एव शरीरतत्प्रतिभासादिभेदज्ञाननिवृत्त्यापत्तिरिति वाच्यम्। अविद्यांशस्य निवृत्तावप्यविद्यालेशस्यानुवृत्त्या भेददर्शननिवृत्तिप्रसङ्गाभावात्। न चाविद्याया बहुत्वमप्रामाणिकम् 'इन्द्रो मायाभिः पुरुरूप ईयत' 'भूयश्चान्ते विश्वमायानिवृत्ति'रित्युक्तेः। अतो ब्रह्मज्ञानानन्तरपि 'तस्य तावदेव चिरं यावन्न विमोक्ष्य' इत्यादिभिः ब्रह्मप्राप्तिप्रतिबन्धकशरीरादिसद्भावबोधनादविद्यालेशानुवृत्तेरङ्गीकार्यत्वेन न भेददर्शनं निवर्तते।

वस्तुतः सर्वस्या अप्यविद्याया निवृत्तावपि चन्द्रद्वित्वभ्रमवन्न भेददर्शनं निवर्तेत। दृश्यते हि एकश्चन्द्र इति निश्चयेऽप्यङ्गुल्यवष्टम्भादिदोषवशात् द्विचन्द्रभ्रमानुवृत्तिः। न चाविद्याया विनष्टत्वेऽपि तन्मूलप्रपञ्चप्रतिभासादिरूपभेददर्शनानुवृत्तौ तत्कार्यभूतप्रपञ्चसत्यत्वभ्रमस्य बन्धस्याप्यनिवृत्तिस्स्यादिति वाच्यम्। सत्यत्वभ्रमहेतुभूताविद्यायाश्छिन्नत्वात्सत्यत्वभ्रमानुपपत्तेः। न च तद्धेतुभूतभेददर्शनमस्तीति शक्यं वक्तुं, दग्धपटवत् तस्याकार्यकरत्वादिति। **सर्वस्य** = तत्त्वसाक्षात्कारवतस्सर्वस्य। तदेतन्निरस्यति — **सत्यामपीत्यादिना**। **कार्यन्तु निवर्तत** इत्यन्तेन। अयमाशयः — भेदवासनाया वाक्यार्थज्ञानप्रतिबन्धकत्वं न घटते। तस्यास्तेन निवर्त्यत्वात्। न हि निवर्त्यं निवर्तकप्रतिबन्धकं भवितुमर्हति। अन्यथाऽविद्यायाअपि तत्त्वज्ञानप्रतिबन्धकत्वौचित्येन कदाचिदपि ज्ञानोत्पत्तिर्न सेत्स्यति भवतां मते। वस्तुतः प्रतिबन्धकत्वकल्पनापि निरर्थिका। भेदवासनासत्त्वेऽपि बाधकज्ञानोत्पत्त्युपलब्धेः। दृश्यते हि सर्पवासनाया अनिरासेऽपि नायं सर्प इत्याप्तवाक्येन रज्जुसर्पभ्रमनिवर्तकज्ञानस्योत्पत्तिः। एवं निश्चेष्टत्वादिलिङ्गेनेन्द्रियसन्निकर्षेण च तत्र तत्र बाधकज्ञानं यथा सम्भवं परोक्षमपरोक्षं वोत्पद्यत इति न प्रतिबन्धकत्वकल्पनं सप्रयोजनम्। अनेनैव विरुद्धवासनानिवृत्तेः प्रतिबन्धकाभावविधया ज्ञानहेतुत्वकल्पनमप्यपास्तम्।

ननु न सर्वत्र विरुद्धवासनानिवृत्तेः हेतुत्वमुच्यते। किन्तु यत्र वाक्यादपरोक्षबुद्धिजननं तत्रैवेति चेत्तर्हि वाक्यात्परोक्षबुद्ध्युत्पत्तावपि तद्धेतुत्वकल्पनाप्रसङ्गात्। ननु वाक्यात् परोक्षबुध्युत्पत्तौ न विरुद्धवासनानिवृत्तिरपेक्षिता, अदृष्टत्वात्। अत एव सर्पवासनानिवृत्तावपि रज्जुरेवेति वाक्यात् परोक्षज्ञानोत्पत्तिरिति चेत्, तर्हि वाक्यादपरोक्षज्ञानजननेऽपि विरुद्धवासनानिवृत्तिरनपेक्षितैव स्यात्। उक्तञ्च भवद्भि र्दशमाभाववासनास्थितावपि दशमस्त्वसीति वाक्यादपरोक्षबुद्धिरुत्पद्यत इति। अतो भेदवासनानिवृत्ते र्हेतुत्वकल्पनमसम्भवीति न सा सामग्र्यन्तर्भूतेति।

अथ भेदज्ञानानुवृत्तिं दूषयति **सत्यपीति**। **मात्रया** = स्वल्पमित्यर्थः। **भवता** = ब्रह्मव्यतिरिक्तस्य सर्वस्यापि

**'वासनाकार्यं भेदज्ञानं छिन्नमूलम्, अथ चानुवर्तत' इति बालिशभाषितम्। द्विचन्द्रज्ञानादौ तु बाधकसन्निधावपि मिथ्याज्ञानहेतोः परमार्थतिमिरादिदोषस्य ज्ञानबाध्यत्वाभावेनाविनष्टत्वात् मिथ्याज्ञानानुवृत्तिरविरूद्धा, प्रबलप्रमाणबाधितत्वेन भयादिकार्यन्तु निवर्तते।**

**अपि च भेदवासनानिरसनद्वारेण ज्ञानोत्पत्तिमभ्युपगच्छतां कदाचिदपि ज्ञानोत्पत्तिर्न सेत्स्यति; भेदवासनाया अनादिकालोपचितत्वेनापरिमितत्वात्तद्विरोधिभावनायाश्चाल्पत्वादनया तन्निरसनानुपपत्तेः।**

---

मिथ्यात्वं ब्रुवता। **नास्या वासनाया निवृत्तिरिति**। भेदज्ञानहेतुभूताविद्यायास्तत्त्वज्ञानेन निवृत्तत्वेन तत्कार्यभूतभेदज्ञानस्यापि निवृत्तिरवश्यमभ्युपेया। न चाविद्यानिवृत्तावप्यानादिभेदवासनाया अनिवृत्तत्वेन तत एव भेदज्ञानानुवृत्तिरिति वाच्यम्। तस्या अपि मिथ्यात्वेनाविद्यावत्तत्त्वज्ञानेन निवृत्तत्वात्। यदीदं तत्त्वज्ञानं न निवर्तकं तर्हि निवर्तकान्तरस्याप्यभावेन कदाचिदपि भेदवासना न निवर्तेत। न च ज्ञानान्तरं निवर्तकम्, अविशेषात्। नापि भोगक्षयस्तादृशः ज्ञानबाध्यत्वाभावेन सत्यत्वप्रसङ्गात्। एतेनाविद्यालेशानुवृत्त्या भेदज्ञानानुवृत्तिरपि निरस्ता।

तत्त्वज्ञानोत्पत्तावप्यविद्यालेशानुवृत्तावुक्तयुक्त्या तन्निवृत्ते दुरुपपादत्वात्। न च स्वयमेव नश्यतीति शङ्क्यम्। निर्हेतुकविनाशस्यानङ्गीकारात्। अन्यथाऽविद्याया अप्येवमापत्त्या तत्त्वज्ञानस्य निवर्तकत्वकल्पनमपि नोपपद्यते। न चाविद्यानाशकालव्यवस्थापनाय तत्त्वज्ञानस्याविद्यानिवर्तकत्वमिष्यत इति शङ्क्यम्। प्रकृतेऽपि समानत्वात्। ननु स्वस्यैव स्वनाशहेतुत्वमिष्यत इति चेन्न। विरोधात्। ज्ञानबाध्यत्वाभावेन सत्यत्वप्रसङ्गस्योक्तत्वाच्च। न च वासनानिवृत्ते ब्रह्मस्वरूपत्वेन सत्यत्वमिष्टमेवेति वाच्यम्। तथा सति नित्यं सतस्तस्य साध्यत्वकथनानुपपत्तेः। न चातिरिक्तत्वं सत्यत्वञ्चास्तु तावता का क्षतिरिति वाच्यम्। अद्वैतभङ्गप्रसङ्गात्। न चाभावसत्यत्वं नाद्वैतभङ्गापादकमिति वाच्यम्। अभावस्य सत्यत्वेप्यद्वैतभङ्गाभाववत् भावसत्यत्वेऽपि ब्रह्माद्वैतभङ्गाभावेन सर्वस्यापि सत्यत्वापत्तेः। तस्मात्तत्त्वज्ञानोत्पत्तौ सर्वस्यापि निवृत्तिरभ्युपेयैव भवन्मत इति। **वासनाकार्यमिति**। **वासना** = संस्कारः। **छिन्नमूलमिति**। अत्र मूलशब्देन भेदवासना विवक्ष्यते उताविद्या। अन्त्ये मूलभूताविद्यानाशवद्बाधकज्ञानस्य सत्त्वेन भेददर्शननाशोऽप्यावश्यक एव। आद्ये वासनानाशे वासनाकार्यस्य कथमनुवृत्तिः, हेत्वभावात्। कारणनाशेऽपि कार्यानुवृत्तिस्वीकारेऽविद्यानाशेऽपि प्रपञ्चानुवृत्तिप्रसङ्गः। अपि च हेत्वभावेऽपि कार्यस्थितिं स्वीकुर्वतस्तवाविद्यादिकल्पनमप्यनुपपन्नम्। तैर्विनापि कार्यस्वीकारसम्भवात्। न च श्रुतिसिद्धैवाऽविद्या, अतो न कल्प्यत इति वाच्यम्। श्रुतेरन्यार्थत्वस्य स्थापयिष्यमाणत्वात्। अतो भेदज्ञानानुवृत्तिर्न सम्भवतीति।

**बालिशभाषितमि**त्युपालम्भः। द्विचन्द्रभ्रमरूपदृष्टान्तवैषम्यमाह - **द्विचन्द्रेति**। तिमिरादिदोषस्य सत्यत्वेन बाधकज्ञानसहस्रैरप्यबाध्यत्वान्न दृष्टान्तस्समीचीन इति भावः। न च तिमिरादिदोषोऽपरमार्थिकः। व्यावहारिकसत्यताया भवद्भिरङ्गीकारात्। अन्यथा सर्पो मिथ्येति वचनात् सर्पनिवृत्तिवत् दोषो मिथ्येति वचनात् दोषनिवृत्तिप्रसङ्गः। अतश्च चन्द्रद्वित्वव्यवहारोच्छेदप्रसङ्गः। इत्थञ्च यावद्दोषसत्त्वं मिथ्याज्ञानानुवृत्ति र्युज्यते। प्रकृते तु मूलभूताविद्यावासनादीनामपरमार्थत्वेन ज्ञाननष्टत्वाद्भेददर्शनानुवृत्तिर्न घटते। द्विचन्द्रभ्रमानुवृत्तिमतः मरणाद्भीतस्य तिमिरादिदोषवशाच्चन्द्रद्वित्वभ्रम इत्याप्तोपदेशे भ्रमानिवृत्तावपि मरणभयादिकं तु निवर्तत इत्याह - **प्रबलप्रमाणेति**। ननु भयादेः क्षणिकत्वेन स्वयमेव विनाशात् प्रबलप्रमाणनिवर्त्यत्वभाषणं कथम्। उच्यते। बाधकज्ञानस्य भयाद्युत्पादकसामग्रीविघटकतया तत्सत्त्वे तदभावेन भयान्तरानुत्पत्तिरित्यभिप्रायादिति। 'अदर्शनं स्वशिरसः प्रतिरूपे च सत्यपि। असत्यपि द्वितीये च द्वैरूप्यं ज्योतिषां तथा॥ स्वर्णप्रतीति वृक्षेषु स्वपादानामदर्शनम्। स्वप्ने प्रेतपरिष्वेगः खरयानं विषादनम्॥ पश्यन् मरणसन्त्रस्तः निद्रां लेभे न चिन्तया।' इति द्विचन्द्रादिज्ञानसद्भावस्य मरणभयजनकत्वं (भागवत) पुराणसिद्धम्।

इदश्च भयं तिमिरादिदोषवशादेव तव सञ्जातमित्याप्तोपदेशे स्वयमेव निवर्तते । एतदभिप्रायेण भयादिकार्यं निवर्तत इति भाष्ये प्रतिपादितम् । श्रुतप्रकाशिकायां तु "रज्जुसर्पभ्रान्तिमत्पुरुषापेक्षया भयादिकार्यनिवृत्तिः फलत्वेनोक्ता" इत्युक्तम् ।

भेदवासनायाः प्रतिबन्धकत्वं तन्निवृत्तेश्च ज्ञानहेतुत्वं वदतां प्रतिबन्धकनिवृत्तेरेवासम्भवेन ज्ञानोत्पत्तिरेव न भवेदिति सिंहावलोकननयेन पुन र्दूषयति — **अपि चेति** । तत्र हेतुमाह — **भेदेति** । भेदवासनायाः प्रतिबन्धकत्ववादिना हि भेदवासनानिरसनानन्तरमेव तत्त्वमसीति वाक्यादविद्यानिवर्तकं ज्ञानं जायत इत्यभ्युपेयम् । भेदवासनानिरासस्तु निवर्तकाभावान्न सम्भवति । अतो ज्ञानोत्पत्तिरेव न सिध्यतीत्याभिप्रायः । न च निदिध्यासनं तन्निवर्तकं, ध्यानस्याविद्यानिवर्तनद्वारा भेदभूतप्रपञ्चनिवर्तकत्वेऽपि तद्वासनानिवर्तकत्वाभावात् । न च निदिध्यासनजन्याद्वैतवासनया तन्निवृत्तिः । भेदवासनाया अनादिकालसम्पादितत्वेन भूयस्त्वादल्पीयस्या अभेदवासनया निरासानुपपत्तेः । न चाल्पीयस्त्वेऽप्यदृष्टद्वारा निवर्तिका, निवर्त्यसत्यत्वप्रसङ्गात् । न च दण्डप्रतिहतघटस्येव व्यावहारिकसत्यत्वमिष्टमेवेति वाच्यम् । दण्डविनष्टघटस्यानित्यत्वेऽपि बाध्यत्वानङ्गीकारेण तद्वदेव भेदवासनाया वास्तविकसत्यत्वप्रसङ्गात् ।

न च बहुकालानुवृत्तस्यापि रज्जुसर्पज्ञानस्य साम्प्रतिकरज्जुज्ञाननिवर्त्यत्ववत् भेदवासनाया अप्यल्पीयस्याऽद्वैतवासनया दृष्टद्वारैव निवृत्तिस्सम्भवतीति वाच्यम् । तथा सति रज्जुसर्पवासनाया अपि ज्ञाननिवर्त्यत्ववत् भेदवासनाया अपि तत्त्वमस्यादिवाक्यजन्यज्ञानेनैव निवृत्त्या ध्यानादिविधिवैयर्थ्यप्रसङ्गात् । न च ज्ञानप्रतिबन्धकभेदवासनानिवृत्त्यर्थं ध्यानादिविधिसार्थक्यसम्भवः । भेदवासनायास्तत्त्वज्ञानप्रतिबन्धकत्वाभावात्स्वनिवर्त्यस्य स्वप्रतिबन्धकताया अयुक्तत्वात् । न च ध्यानादीनां प्रतिबन्धनिवर्तकत्वाभावेऽपि निवर्तकवाक्यार्थज्ञानोदयसहकारित्वेन तद्विधिसार्थक्यसम्भवः । स्मृतिरूपध्यानस्यानुभवरूपवाक्यार्थज्ञानसापेक्षत्वेऽपि वाक्यार्थज्ञानस्य ध्यानसापेक्षत्वकथनानुपपत्तेः । न च परोक्षानुभवे ध्यानस्यानुपकारकत्वेऽपि वाक्यादपरोक्षबुद्धौ ध्यानस्योपकारकत्वसम्भवः । ध्यानसहकृतत्वेऽपि वाक्यस्यापरोक्षबुद्धिजनकत्वासम्भवात् । वस्तुतो ध्यानस्योपकारकत्वकल्पनमप्ययुक्तम्, ध्यानसहकृतस्यापि दशमस्त्वमसीति वाक्यस्यापरोक्षबुद्धिजनकतायास्त्वयेष्यमाणत्वात् । वस्तुतो वाक्यं नापरोक्षबुद्धिजनकमपि । संशयोत्तरप्रत्यक्षे परामर्शसहकृतेन्द्रियस्य प्रत्यक्षजनकत्ववद्दशमस्त्वमसीत्यादावपि वाक्यसहकृतेन्द्रियस्यैव समानविषयत्वेन प्रत्यक्षजनकत्वात् । समाने विषये प्रत्यक्षसामग्री हि प्रबला । अपि चाभेदवासनया भेदवासनानिवृत्तिः, ततो वाक्यार्थज्ञानमित्युक्तौ अन्योन्याश्रयः । प्रथममभेदज्ञानं, ततस्तत्र भावना, तया भेदवासनानिवृत्तिः, पश्चादभेदज्ञानमिति । पूर्वमभेदज्ञानाभावे तत्र भावनाया दुश्शकत्वात् । न च पाश्चात्याभेदज्ञानस्यापरोक्षरूपत्वम् । अपरोक्षरूपतादृशाभेदाध्यवसायजनकसामग्र्याः पूर्वमभावात् । न च वाक्यमेव तादृशम् । तस्य तादृशत्वाभावस्योक्तत्वादिति ॥

अत्रेदं चिन्त्यम् । भेदवासनारूपसंस्कारस्याविद्याकार्यत्वेऽपि ध्वंसवन्निरुपादानत्वमिष्यते । इत्थञ्चाविद्यायाः तत्त्वज्ञानेन नाशेऽप्यविद्यानुपादानकस्थितिकाया अस्याः संस्कारस्यानुवृत्तिसम्भवाज्ज्ञानोत्पत्त्या मिथ्याभूतवासनाया निवृत्तिभाषणं कथम् । न च ज्ञानक्रिययोर्नाशे एव संस्कारोत्पत्तिः । न त्वन्यनाशेऽपि । अन्यथा संस्कारनाशेऽपि तत्संस्कारोत्पत्तिप्रसङ्गात् । इत्थञ्चाविद्यासंस्कारस्यैवाभावेन तस्य मिथ्यात्वबोधनाभिप्रायकं तद्भाष्यमिति वाच्यम् । संस्कारनाशेऽपि तत्संकारोत्पत्तावनस्था स्यादिति तत्र तथाऽनङ्गीकारेऽपि संस्कारातिरिक्तनाशस्थले तत्संस्काराभ्युपगमे बाधकाभावात् । अत एव शोधितकलञ्जपात्रे कलञ्जसंस्कारानुवृत्त्या गन्धोपलब्धिः । अतो ज्ञानक्रियानाशे एव संस्कारोत्पत्तिरिति नियमाङ्गीकरणमयुक्तम् । अपि चान्यत्र संस्कारानभ्युपगमेऽविद्यावासनामङ्गीकृत्यैव ज्ञाननिवर्त्यत्वभाषणं सुतरामनुपपन्नम् । अविद्यासंस्कारानभ्युपगमरूपसमाधानभाषणस्यैव युक्तत्वात् ।

न चाविद्यासंस्कारस्याभिमतत्वेऽपि तन्निवर्तकान्तराभावात्तत्त्वज्ञाननिवर्त्यत्वमेव वक्तव्यम् । अन्यथा तन्निवृत्त्यनुपपत्तेः । अत एव निवर्तकान्तराभावात्कदाचिदपि नास्या वासनाया निवृत्तिरित्युत्तरत्र भाषितम् । अतो नानुपपत्ति-

**अतो वाक्यार्थज्ञानादन्यदेव ध्यानोपासनादिशब्दवाच्यं ज्ञानं वेदान्तवाक्यैर्विधित्सितम्।**

**तथा च श्रुतयः - 'विज्ञाय प्रज्ञां कुर्वीत'** (बृ.६.४.२१.), **'अनुविद्य विजानाति'** (छा.८.१२.६.), **'ओमित्येवात्मानं ध्यायथ'** (मु.२.२.६.), **'निचाय्य तं मृत्युमुखात् प्रमुच्यते'** (कठ.१.३.१५), **'आत्मानमेव लोकमुपासीत'** (बृ.३.४.१५), **'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'** (बृ..६.५.६.), **'सोऽन्वेष्टव्यः स विजज्ञासितव्य'**(छा.८.७.१.), **इत्येवमाद्याः। अत्र 'निदिध्यासितव्य' इत्यादिना ऐकार्थ्यात् 'अनुविद्य**

रिति वाच्यम्। अविद्यासंस्कारस्य तत्त्वज्ञानानिवर्त्यत्वेऽपि ज्ञानभ्रमणादिसंस्कारस्येव स्वयमेव विनाशसम्भवेन ज्ञाननिवर्त्यत्वकथनानुपपत्तेस्तदवस्थत्वात्। न च स्वस्य स्वनिवर्तकत्वे ज्ञानान्यनिवर्त्यत्वेन सत्यत्वप्रसङ्गः। दण्डनिवृत्तघटस्य ज्ञानानिवर्त्यत्वेऽपि मिथ्यात्ववदुपपत्तेः। अपि च तत्त्वज्ञानेनाविद्यायां विनष्टायामपि प्रपञ्चप्रतिभासादिहेतुभूताविद्यालेशानुवृत्त्या दग्धपटन्यायेनाविद्याया एवानुवृत्त्या वा तत्कार्यभेददर्शनानुवृत्तिसम्भवेन छिन्नमूलभेददर्शनानुवृत्तिकथनस्य बालिशभाषितत्वभाषणमप्यनुपपन्नमिति चेत्। अत्र ब्रूमः — ज्ञानक्रियातिरिक्तवस्तुनाशस्थले संस्कारस्यैवानङ्गीकारात् शोधितकलञ्जभाण्डे सूक्ष्मकलञ्जावयवानुवृत्त्यैव गन्धोपलम्भोपपत्तिसम्भवात्। भावकार्यस्य सर्वस्यापि भवद्भिरविद्योपादानकत्वाङ्गीकारेण ध्वंसवदस्याविद्यानुपादनकत्वस्वीकारानुपपत्तेः। अन्यथाऽविद्यासंस्कारवदेव प्रपञ्चस्याप्यविद्योपादनकत्वासिद्धिः। न चाविद्यासंस्कारस्याभावे तमङ्गीकृत्य ज्ञाननिवर्त्यत्वं कथं भाषितमिति वाच्यम्। तस्यान्वारुह्यवादत्वात्। न चान्वारुह्यवादत्वेऽप्यविद्यावासनाया अनिवर्त्यत्वभाषणं कथं, स्वयमेव निवृत्तिसम्भवादिति वाच्यम्। तन्मते तत्वज्ञानस्यानिवर्तकत्वात् ज्ञानान्यनिवर्त्यत्वे सत्यत्वापत्तेश्च तथा भाषितत्वात्। दण्डनिवृत्तघटस्य स्वोपादानभूताविद्यायां लीनत्वेनाविद्यया सहैव तस्य ज्ञाननिवर्त्यत्वस्वीकारेण मिथ्यात्वोपपत्तिवदविद्यानाशानन्तरभाविनस्तत्संस्कारस्याविद्यया सह तत्त्वज्ञाननिवर्त्यत्वकथनानुपपत्त्या मिथ्यात्वोपपत्त्यसम्भवेन सत्यत्वापत्ते दुर्वारत्वात्। एवमविद्यालेशानुवृत्तिरपि न सङ्घाघटीति, तस्या निरवयवत्वात्। निवर्तकान्तराभावेनाविद्यालेशस्य निवर्त्यत्वानुपपत्तेश्च स्वेनैव निवर्त्यत्वमपि सत्यत्वापत्त्या परास्तम्।

एतेन 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्यादिप्रमाणबलादनेकाविद्यास्वीकारेणोपपत्तिकथनमप्यपास्तम्। तत्त्वमसीत्यादिवाक्यजन्याद्वैतज्ञानेन सर्वस्या अप्यविद्याया विनाशाऽऽवश्यकत्वेनाविद्यान्तरानुवृत्तेर्दुरुपपादत्वात्। अनुवृत्तावपि नाशकान्तराभावेन कदाचिदपि निवृत्त्यनुपपत्तेः। दग्धपटन्यायोऽपि नात्र सम्भवति। तत्रैव विवादात्। दग्धो हि पटः नष्टतया नानुवर्तत एव। न च पटत्वप्रतीतिव्याघातः, पूर्वं पटतया परिक्लृप्तसङ्घातात्मत्वेन पटत्वव्यवहारात्, मृतशरीरवत्। अन्यथा दग्धः पट इतिवत्केवलं पट इत्यपि व्यवहारापत्तेः। अपि च दग्धपटानुवृत्तिस्वीकारेऽप्यनुवृत्तस्य तस्य तादात्विकवाय्वभिघातादिनाऽननुवृत्तिवदनुवृत्ताविद्यायाः कदाऽननुवृत्तिः। न कदाचिदिति चेदनिर्मोक्षप्रसङ्गः। स्वयमेव नानुवर्तत इति चेत्सत्यत्वप्रसङ्गः। ज्ञानत्वाविशेषेण ज्ञानान्तरमपि नाननुवृत्तिसम्पादकम्। अन्यथा पूर्वज्ञानमेवाविद्यां तदनुवृत्तिश्च विघटयेत्। एतेन भेददर्शनानुवृत्तिपक्षोऽपि निरस्तः। न च भेददर्शनस्य क्षणिकत्वेन स्वयमेव नाश इति वाच्यम्। सत्यत्वप्रसङ्गात्। तत्त्वज्ञानात् क्षणद्वयानन्तरमेव भेददर्शनस्यापि निवृत्त्या मोक्षप्रसङ्गः। न चेष्टापत्तिः, प्रत्यक्षविरोधात्। वाक्यादविद्यानिवर्तकं ज्ञानं तु जायते, अविद्या तु न निवर्तत इति व्याहतं वचः। अविद्यान्तरस्याविद्यालेशस्य वानुवृत्तिस्तु पूर्वमेव निरस्ता। अतो वाक्यार्थज्ञानं न मोक्षसाधनतया वेदान्तवाक्यै विधित्सितमिति॥

एवं वाक्यार्थज्ञानोत्पत्तेरेवासम्भवादुत्पन्नत्वेऽपि निवर्तकत्वासम्भवाच्च न वाक्यार्थज्ञानं मोक्षसाधनं भवितुमर्हतीत्युक्तम्। अतो विकल्पशिरस्यन्यदेव मुक्त्युपायज्ञानं वेदान्तवाक्यैविधित्सितमित्याह - **अत इति**। ध्यानात्मकमोक्षोपायतया विधित्सितत्वे श्रुतीः प्रमाणयति - **तथा चेति**। **विज्ञायेति** ज्ञानसामान्यमुच्यते। **अनुविद्येत्ये-**

**विजानाति', 'विज्ञाय प्रज्ञां कुर्वीत' इत्येवमादिभिः वाक्यार्थज्ञानस्य ध्यानोपकारकत्वात् 'अनुविद्य' 'विज्ञाय' इत्यनूद्य, 'प्रज्ञाङ्कुर्वीत' 'विजानाति' इति ध्यानं विधीयते। 'श्रोतव्य' इति चानुवादः - स्वाध्याय-स्यार्थपरत्वेनाधीतवेदः पुरुषः प्रयोजनवदर्थावबोधित्वदर्शनात्तन्निर्णयाय स्वयमेव श्रवणे प्रवर्तत इति श्रवणस्य प्राप्तत्वात्। श्रवणप्रतिष्ठार्थत्वान्मननस्य, 'मन्तव्य' इति चानुवादः। तस्माद्ध्यानमेव विधीयते। वक्ष्यति च,**

---

तदपि तथा। **विजानातीति** विधिप्रत्ययः। **विजानीयात्** = ध्यायीत। विपूर्वकज्ञाधातोः श्रुते मते विज्ञात इत्यादौ ध्याने प्रसिद्धत्वात्। **निचाय्येति** दर्शनसमनाकारता ध्यानस्य दर्शिता। निदिध्यासितव्य इति सन्नन्तनिर्देशो ध्यानस्येष्यमाणत्वज्ञापनार्थः। अतो ज्ञानपरमेव तत्। अत्र सामान्यविशेषन्यायेन 'विज्ञाय' 'अनुविद्ये'त्युक्तस्य वाक्यार्थ-ज्ञानस्य ध्यानपर्यवसायित्वमाह - **अत्रेति**। **ऐकार्थ्यात्** = एकप्रयोजनत्वादेकोपायविषयत्वाद्वा ॥

नन्वत्र तत्वमसीति वाक्यजन्यज्ञानमेवानूद्य प्रज्ञां कुर्वीत इति भेदवासनानिरासाय ध्यानं विधीयत इति किं न स्यात्। ज्ञानाभावे ध्यानस्यासम्भवेनानुवादस्य युक्तत्वादिति चेन्न। अनवरतभावनारूपध्यानस्य भेदवासनानिरासकत्वा-सम्भवस्य पूर्वमुक्तत्वात्। अशक्यविधाने शास्त्रस्याप्रामाण्यप्रसङ्गाच्च। न ह्यशक्यं विदधाति शास्त्रम्। वाक्यार्थज्ञानस्य श्रवणरूपज्ञानपर्यवसानं निषेधति - **श्रोतव्य इतीति**। चकारो वक्ष्यमाणसमुच्चायकः। ह्यर्थको वा। भिन्नक्रमेणा-वधारणार्थो वा। **स्वयमेव श्रवणे प्रवर्तत** इति। अयं भावः - साङ्गकृत्स्नवेदमधीवतः कर्मविचारस्येवानन्तस्थिरफलत्वा-पातप्रतीतौ रागादेव ब्रह्मविचारस्यापि प्राप्तत्वान्न विधेयत्वं श्रवणस्येति। न च श्रवणविध्यभावे गुरुमुखानधीनविचारा-पत्तिः, 'गुरुमेवाभिगच्छेदि'ति गुरूपसदनविधिनैव तदापत्तिवारणात्।

नन्वापातप्रतीत्या श्रवणप्राप्तिवन्न मननप्राप्तिसम्भवः, तथाविधहेत्वभावात्। अतो मननरूपज्ञानविशेषे पर्यवस्यतामित्यत्राह - **श्रवणेति**। यौक्तिकमननमन्तरेण श्रुतार्थप्रतिष्ठापनं न सम्भवतीति तदभावे च श्रवणहेतुभूत-रागस्य नानुवृत्तिस्स्यादिति मननमपि रागप्राप्तमेवेत्याशयः। तर्हि किं विधीयते इत्यत्राह - **तस्मादिति। तस्मात्** = श्रवणमननज्ञानादीनां विधेयत्वासम्भवाद्ध्यानमेव विधीयत इति। ननु ध्यानमपि विषयानुकूल्यात् कामिनीध्यानवत् स्वतः प्राप्तमेव। अत एव निदिध्यासितव्य इति सन्नन्तनिर्देशः। मैवम्, कामिनीवदत्यन्तानुकूलविषये ध्यानस्य स्वतः प्राप्तत्वेऽपि भगवत्यत्यन्तानुकूलत्वज्ञानाभावेन भगवद्ध्यानस्य विधेयत्वसम्भवात्। न हि कामिन्या अप्यत्यन्तानुकूल-त्वाज्ञाने तद्ध्यानं सम्भवति। न चानुकूलत्वमपि शास्त्रश्रवणदशायामेव ज्ञातमिति वाच्यम्। सामान्यत अनुकूलत्वस्य ज्ञातत्वेऽप्यन्तानुकूलत्वस्य ध्यानानन्तरभावित्वेन पूर्वमभावात्। यद्यपि श्रवणेनैवात्यन्तानुकूलत्वं भगवति गृहीतम्, अथापि न तादृशात्यन्तानुकूलत्वज्ञानं ध्यानप्रवृत्युत्पादकम्। अन्यथा यागगतस्यात्यन्तानुकूलत्वस्यापि कर्मविचारशास्त्र-श्रवणेनैव गृहीतत्वेन स्वत एवानुष्ठानसम्भवाद्विधेयत्वानुपपत्तेः। अत्यन्तानुकूलस्य भगवतो ध्यानप्रवृत्तिवदनुकूलस्य यागस्यानुष्ठाने प्रवृत्तेरपि स्वत एव सम्भवात्।

ननु शास्त्रेण यागस्य स्वर्गसाधनत्वरूपानुकूलतयैव विधानमिति न विधेयत्वानुपपत्तिरिति चेत्, तद्वदेव प्रकृतेऽ-पीति विमृशतु भवान्। सन्नन्तनिर्देशस्तु प्रीतिरूपत्वस्य ज्ञापनार्थः। इदमुपलक्षणम्। द्रष्टव्यः श्रोत्रव्य इत्यादौ दर्शनादीनां चतुर्णां विधाने वाक्यभेदः, अष्टदोषदुष्टस्य विकल्पस्याभ्युपगमः, गुरुलघुविकल्पः। समाधिरूपाङ्ग्युत्पादक-श्रवणादीनामङ्गानां समाधिना सह समुच्चयो वा प्रसच्यत इति। न च ध्यानवद्दर्शनस्य विधेयत्वमभ्युपगच्छतां मतेऽपि वाक्यभेदादिकं प्रसज्यत एवेति वाच्यम्। विशिष्टविधिस्वीकारेण वाक्यभेदाभावात्। विकल्पसमुच्चयाद्य-नङ्गीकारेण निर्वाहस्य वक्ष्यमाणत्वाच्च। न च चतुर्णां विधेयत्वेऽपि विशिष्टविध्याश्रयणं युक्तम्। रागप्राप्तश्रवणमननयो र्विधेयत्वाभावस्य युक्ततमत्वात्। अगतिकस्थल एव विशिष्टविध्याश्रयणस्य शास्त्रसिद्धत्वाच्च। उक्तार्थं सूत्रकारसम्मत्या

**'आवृत्तिरसकृदुपदेशात्'** (शा ४.१.१.) **इति। तदिदमपवर्गोपायतया विधित्सितं वेदनमुपासनमित्यवगम्यते, विद्युपास्योर्व्यतिकरेणोपक्रमोपसंहारदर्शनात्** - (छा. ३.१८) **'मनो ब्रह्मेत्युपासीत' इत्यत्र, 'भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन, य एवं वेद';** (बृ. ३.४.७) **'न स वेद। अकृत्स्नो ह्येषः... आत्मेत्येवोपासीत';** (छा.४.१.४.) **'यस्तद्वेद यत्स वेद। स मयैतदुक्त' इत्यत्र,** (छा. ४.२.२.) **'अनु म एतां भगवो देवतां शाधि, यां देवतामुपास्स' इति॥**

**ध्यानञ्च तैलधारावदविच्छिन्नस्मृतिसन्तानरूपम्,** (छा ७.२६.२.) **'ध्रुवा स्मृतिः। स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष' इति ध्रुवायाः स्मृतेरपवर्गोपायत्वश्रवणात्। सा च स्मृतिर्दर्शनसमानाकारा,** (मु २.२.९)

---

दृढयति - **वक्ष्यतीति** । **चः** प्रतिपादकसमुच्चये ।

ननु सूत्रकारसम्मतिप्रदर्शनमयुक्तम् । अन्यपरस्यापि सूत्रस्य स्वोक्तार्थपरतया स्वेन व्याख्यानसम्भवात् । मैवम् । अल्पाक्षरमसन्दिग्धमिति नयेनासन्दिग्धार्थकसूत्राक्षरपर्यालोचन उक्तार्थपरताया अकामेनापि स्वीकार्यत्वात्तत्सम्मतिप्रदर्शनमत्यन्तमुपकारकमित्याभिप्रायेण तत्प्रदर्शनात् । सूत्राक्षराणि व्याख्यास्यन्ते इति ह्यादावुक्तम् । अतोऽन्येन स्वोत्प्रेक्षितार्थे सूत्रयोजनां विना सूत्रे यथावस्थितस्यैवोत्तरत्र वक्ष्यमाणतया तत्सम्मतिप्रदर्शनमतीव युक्तमिति न दोषः । सूत्रश्रवणादशायामेव वेदनस्य ध्यानरूपत्वं स्फुटं प्रतीयत इत्यभिप्रायेण सूत्रस्वरूपं दर्शयति - **आवृत्तिरिति** । सूत्रे उपासनस्येति पदाश्रवणेऽपि पूर्वापरपर्यालोचने उपासनस्येति पदलाभः सम्भवतीत्याशयेन सूत्रार्थमाह - **तदिदमिति** । **उपदेशादिति** सूत्रांशस्यार्थमाह - **विद्युपास्योरिति** । **व्यतिकरः** परस्परं स्थानाक्रान्तिः । **इत्यत्रेति**- अत्रेति शब्दप्रयोगः 'मनो ब्रह्मेत्युपासीत' 'भाति चे'त्यनयोः विप्रकृष्टत्वेऽपि प्रकरणैक्यज्ञापनार्थः । एवमग्रेऽपि । पूर्वत्रोपासिनोपक्रान्तं विदिनोपसंहृतम् । तृतीये तु विपरीतम् । द्वितीये उभयत उपास्तिः, मध्ये विदिः । अत्र 'अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहस्मीति न स वेद । अकृत्स्नो ह्येषः । आत्मेत्येवोपासीत' इति श्रुतिः 'योऽत एकैकमुपास्ते न स वेद । अकृत्स्नो ह्येषोऽत एकैकेन भवत्यात्मेत्येवोपासीत । अत्र ह्येते सर्वमेकं भवती'ति बृहदारण्यकश्रुति र्वा विवक्षिता । वितरणपराक्रमहेतुभेदेन कीर्तियशसोर्भेदः ।

एवं वेदनस्योपासनरूपत्वं व्यतिकरेणोपक्रमोपसंहारदर्शनबलेन संस्थाप्य तस्यैवोपासनस्यानवच्छिन्नस्मृतिसन्तानरूपत्वमाह - **ध्यानञ्चेति** । यद्यप्यत्र 'उपासनञ्चे'ति निर्देष्टव्यं'वेदनमुपासनमित्यवगम्यत इत्युपासनरूपत्वस्यैव स्थापितत्वात्, तथापि 'तस्माद्ध्यानमेव विधीयत' इति ध्यानस्य विधेयत्वमुपपाद्य तद्द्रढिम्ने वक्ष्यति च 'आवृत्तिरसकृदुपदेशात्' इति सूत्रकारसम्मतिश्च प्रदर्श्य 'वेदनमुपासनमित्यवगम्यत' इत्युक्त्वा वेदनस्योपासनाभिन्नध्यानरूपत्वमुक्तं भवतीत्यभिप्रायेणात्र 'ध्यानञ्चे'ति भाषितम् । तैलधारावदिति स्मृतिसन्ततेरविच्छिन्नत्वे निदर्शनम् । अत्र तैलशब्देन ऐरण्डतैलं विवक्षितम् । यद्यपि ध्यानस्य भगवद्विषयकत्वेन भोग्यातिशयविवक्षयापि मधुधारावदिति निदर्शनकरणं शोभनमथाप्युक्ततैलधाराया इव मधुधाराया न तादृशाविच्छिन्नत्वम् । मधुसम्बद्धहस्तो हि जलप्रक्षालनेनापि तदसम्बद्धो भवति । तैलन्तु न तथाविधम् । अत एव श्रुतौ अतिभोग्यभूतमात्मस्वरूपं ज्ञानरूपत्वे सैन्धनघनत्वेन निदर्श्यते । न तु शर्कराखण्डत्वेन । सैन्धनघनमध्यनिक्षिप्तकाष्ठोऽपि हि सैन्धवमयो भवति । न तु शर्कराखण्डमध्यनिक्षिप्तकाष्ठः शर्करामयः । अतोऽतिशयितदृष्टान्तसाङ्गत्यं सैन्धवघनदृष्टान्तप्रदर्शन एवेति । तद्वदत्रापि तैलधारादृष्टान्तप्रदर्शन एवेत्येवं निदर्शनं कृतम् । अविच्छिन्नत्वञ्च विजातीयप्रत्ययव्यवधानरहितत्वम् । उक्तार्थे श्रुतिं प्रमाणयति - **ध्रुवास्मृतिरिति** । 'आहारशुद्धौ सत्वशुद्धिः सत्वशुद्धौ' इति पूर्ववाक्यम् । **स्मृतिलम्भे** = स्मृतिप्राप्तौ । **सर्वग्रन्थीनां** = रागद्वेषमोहादीनाम् । **विप्रमोक्षः** = विभज्याऽऽत्यन्तिकनाशः । ध्रुवत्वञ्च विजातीयप्रत्ययान्तरासंवलितप्रवाहत्वम् ।

**'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥' इत्यादिना ऐकार्थ्यात् । एवञ्च सति,** (बृ ६.५.६.)**'आत्मा वा अरे द्रष्टव्य' इत्यनेन निदिध्यासनस्य दर्शनसमानाकारता विधीयते । भवति च स्मृतेर्भावनाप्रकर्षाद्दर्शनरूपता ॥**

---

एतेन ध्यानस्याविच्छिन्नस्मृतिसन्ततिरूपत्वे प्रमाणं दर्शितम् । **ध्रुवायाः स्मृतेरपवर्गोपायत्वश्रवणादिति** ।

ननु ध्यानस्य मोक्षुहेतुतया विधेयत्वभाषणमनुपपन्नं तस्याङ्गत्वात् । दर्शनात्मकसमाधेरेवापवर्गोपायत्वाच्च । श्रूयते च 'आत्मानं पश्येत्' 'तस्मिन्दृष्टे परावर' इतीत्यत आह - **सा चेति** । **दर्शनसमानाकारेति** । दर्शनसमानाकारत्वञ्च सक्षात्कारत्वव्यञ्जकविषयितावत्त्वं, पश्यामीति व्यवहारजनकतावच्छेदकविषयितावत्त्वपर्यवसितम् । स्मृते दर्शनत्व-व्याघातात् **समानाकारेत्युक्तिः** । इत्थञ्च स्मृतिसन्ततिरूपस्य ध्यानस्यैव दर्शनसमानाकारत्वरूपवैशद्यातिशयवत्वे समाधित्वमिति न विरोध इति । **भिद्यत** इति । **अस्येति** प्रत्येकं सम्बध्यते । ग्रन्थ्यत अनयेति **ग्रन्थिः** । मनोगता रागाद्याः । यद्वा हृदयशब्दः शरीरोपलक्षकः । तदेव ग्रन्थिः । हृदयमेव वा ग्रन्थिः । हृदयशब्दस्य हृत्स्थानमयतीति व्युत्पत्त्या मञ्चाः क्रोशन्तीतिवद्वा जीववाचकत्वमभ्युपगम्य हृदयग्रन्थिशब्दस्य जीवप्रकृतिसम्बन्धवाचकत्वम् । **अस्येति** पदस्यात्रासम्बन्धेन बोध्यम् । **सर्वसंशयाः** = सर्वविषयाः सर्वे वा संशयाः । विपर्ययस्याप्युपलक्षुणमिदम् । **कर्माणि** = पुण्यपापानि । **परावर** इति । सर्वोत्कृष्टत्वात्परत्वं, सौलभ्यादवरत्वं, परावरशरीरक इति वाऽर्थः । यद्वा परे ब्रह्मादयः अवरे यस्मादिति सर्वोत्कृष्ट इति वाऽर्थः । अत्र 'परावरे तस्मिन् दृष्टे कर्माणि क्षीयन्त' इति योजनया पाथसि पीते तृष्णा शाम्यतीत्यत्र तृष्णाशमने पाथः पानप्रयोज्यत्वस्येव कर्मक्षये परावराभिन्नभगवद्दर्शनप्रयोज्यत्वस्य लाभाद्भगव-द्दर्शनमेवापवर्गोपाय इति फलितम् ।

इत्थञ्च स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष इत्यपवर्गसाधनतया विहिता स्मृतिः दर्शनसमानाकारा सती अपवर्गं जनयति । न च दर्शनस्यैव साक्षान्मोक्षसाधनत्वमस्त्विति वाच्यम् । 'न चक्षुषा गृह्यत' इति भगवतश्चक्षुरग्राह्यत्वेन तद्विषयकदर्शनस्यैवाभावेन तस्य मोक्षहेतुत्वकथनानुपपत्तेः । न च स्मृतेरपि दर्शनत्वमनुपपन्नमिति वाच्यम् । दर्शन-रूपत्वस्य भावनाप्रकर्षकृतवैशद्यातिशयेन दर्शनसमानाकारत्वरूपतया विरोधाभावात् । एतेन 'सेयं स्मृतिः दर्शनरूपा प्रतिपादिता । दर्शनरूपता च प्रत्यक्षतापत्ति'रिति भाष्यमपि निर्व्यूढम् । अत एव ह्यत्र 'सा च स्मृतिर्दर्शनसमानाकारा' इति भाषितम् । अपि च दर्शनस्याप्युपायत्वे 'द्रष्टव्यो निदिध्यासितव्य' इति दर्शनध्यानयोरुभयोरपि विधेयत्वावश्यभावेन वाक्यभेद-अष्टदोषदुष्टविकल्पापत्तिः, तत्रापि गुरुलघुविकल्पश्च प्रसज्यते । अतो गत्यन्तरसम्भवे विकल्पाश्रयणमयुक्तम् । नापि दर्शनध्यानयोः समसमुच्चयसम्भवः । प्रक्रान्तयोगेन ब्रह्मसाक्षात्कारासम्भवात् । सम्भवेऽपि यौगपद्यं न सम्भवति । नापि क्रमिकसमुच्चयः तद्व्यवस्थापकाभावात् । नापि प्राचीनध्रुवस्मरणस्य पाश्चात्यस्य योगिप्रत्यक्षरस्य च कारणतया समुच्चयसम्भवः । धारणावदङ्गत्वेनोपपत्तौ समुच्चयकल्पनाऽसम्भवात् । 'ध्यात्वा देवं मुच्यते सर्वपाशै'रित्युक्ताया ध्रुवानुस्मृतेरप्यव्यवहितसाधनत्वस्य भङ्गप्रसङ्गाच्च । नापि विकल्पेनोपपत्तिः । तस्य दूषितत्वात् । अतो विकल्पसमुच्चया-दीनामसम्भवात् ध्रुवानुस्मृतेर्वैशद्यविवक्षया द्रष्टव्य इति दर्शनत्वोपचारः क्रियते । ननु दर्शनमेव स्मृत्या उपचर्यतामिति चेन्न । दर्शनस्य स्मृतिरूपत्वासम्भवात् । प्रत्युत राजनि भृत्यत्वोपचार इव निन्दाप्रसङ्गाच्च । स्मृतौ तु वैशद्यविवक्षया दर्शनत्वोपचारे त्वभ्युदयलाभ इत्यलं प्रसङ्गेन ।

इत्थञ्च दर्शनसमानाकारध्यानस्यैवापवर्गोपायत्वात्तादृशमेव ध्यानं द्रष्टव्य इत्यादौ विधीयत इत्याह - **एवञ्चेति** । ननु ध्यानस्य दर्शनसमानाकारत्वस्य च विधाने वाक्यभेदापत्तिर्दुर्वारा । मैवं -'आर्षेयं वृणीते' 'त्रीन्वृणीत' इत्यादौ त्रित्वविशिष्टार्षेयवरणस्येव दर्शनसमानाकारत्वविशिष्टध्यानस्यैकस्य विधेयत्वेन तदभावात् । नन्वेवं विशिष्टविध्याश्रयणे

श्रवणमननदर्शनसमानाकारत्वविशिष्टध्यानविधिरप्याश्रयितुं शक्या। मैवम्। वाक्यभेदपरिहारायैवमाश्रयणेऽपि चतुर्ष्वपि विधेयत्वतात्पर्यकल्पनाया अनावश्यकत्वेन तदपेक्षयोभयत्र विधेयत्वतात्पर्यकल्पनाया एवोचितत्वात्। वस्तुतो राग-प्राप्तयोः श्रवणमननयोः विधेयत्वासम्भवाच्च। ननु सर्वमिदं तदोपपन्नं यदि स्मृतेर्दर्शनरूपत्वम् तदेव तु न सम्भवति विरोधादित्यत्राह - **भवति चेति**। **भावना**=चिन्ता। तस्याश्च सादरं निरन्तरं क्रियमाणत्वे वैशद्यं सिध्यति। तदेव वैशद्यं दर्शनरूपत्वरूपम्। **दर्शनरूपता** = दर्शनगतरूपसदृशरूपत्वम्। कामिनीध्याने हि भावनाप्रकर्षाद्वैशद्यं दृश्यते। एवं भीतादिष्वपि। अत एव हि 'वृक्षे वृक्षे च पश्यामि चीरकृष्णाजिनाम्बरमि'ति मारीचः प्राह। न ह्यत्र स्मरामीत्युक्तवान्। अतस्स्मृतिसन्ततिरूपध्यानस्यापि प्रकृष्टभावनासत्त्वे पश्यामीति व्यवहारजनकतावच्छेदविषयितावद्विलक्षणवैशद्य-रूपदर्शनसमानाकारत्वं सम्भवति। एवं 'प्रासादे सा पथि पथि च सा पृष्ठतस्सा पुरस्से'त्यादावपि बोध्यम्।

ननु साक्षात्कारापन्नकामिनीध्यानस्येव ब्रह्मध्यानस्यापि भ्रमत्वापत्तिः भावनारूपदोषजन्यत्वात्। मैवम्। भावनाजन्यत्वस्य भ्रमत्वाप्रयोजकत्वात्। कामिनीध्याने बाधितविषयत्वादेवाप्रामाण्यम्। अत्र तु ब्रह्मणः सर्वव्याप्तत्वेन श्रुत्यादिप्रमाणसिद्धत्वान्न भ्रमत्वम्। अत एव शुक्तिरजतादिभ्रमे भावनाया अभावेऽपि बाधितविषयत्वादप्रामाण्यमिष्यते। वस्तुतोऽत्र भावनायाः दोषत्वमपि नास्ति। क्वचिदेव कस्यचिद्दोषत्वाङ्गीकारत्। अत एव शङ्खे पीतत्वभ्रमप्रयोजकस्य पित्तद्रव्यस्य स्वविषयकज्ञानेऽप्रामाण्यप्रयोजकत्वरूपदोषत्वं नाभ्युपेयते। अतो वृक्षे वृक्षे च पश्यामीत्यादेरपि भ्रमत्वेऽपि न ब्रह्मध्यानस्य भ्रमत्वापत्तिः। प्रकृष्टवासनासत्त्वे स्मृतिसन्ततिरूपध्यानस्यापि प्रत्यक्षरूपत्वं भवतीत्येतावन्मात्रे त्विदं निदर्शनम्।

अथ दर्शनसमानाकारस्य स्मृतिसन्ततिरूपध्यानस्य मोक्षकारणत्वं न सम्भवति। तथा सति परमात्मप्रकारक-स्वात्मविशेष्यकानुसन्धानस्यैव तथात्वेन वाच्यतया तस्य स्वात्मांशे लौकिकप्रत्यक्षात्मकतया ध्यानरूपत्वासम्भवात्। न च स्वात्मांशेऽपि संस्काररूपस्मृतिसामग्रीसत्त्वात्स्मृतिसम्भवः। प्रत्यभिज्ञालोपभिया स्मृतिं प्रति प्रत्यक्षसामग्र्याः प्रतिबन्धकतायाः क्लृप्तत्वेन स्वात्मविषयकस्मृतिसामग्रीसत्त्वदशायां नियमेन प्रत्यक्षसामग्र्या अपि सत्त्वेन स्मृत्य-सम्भवात्। न च स्मृतिर्मेजायतामित्युत्तेजकीभूतेच्छया स्मृतिसम्भवः। तृतीयादिक्षणे इच्छाविनाशेन दुरुपपादत्वात्। मध्ये इच्छान्तरस्वीकारस्तु स्मृतिसन्ततेरविच्छिन्नत्वानुपपत्या निरस्तः। मैवम्। स्वात्मांशे स्मृतिसन्तति जायताम् इतीच्छाया उत्तेजकत्वकल्पनेन स्वात्मांशेऽपि स्मृतिसन्ततिरूपध्याननिष्पत्तेः। प्रत्यभिज्ञाव्यतिरिक्तस्थले स्मृतिं प्रति प्रत्यक्षसामग्र्याः प्रतिबन्धकत्वाकल्पनेन स्वात्मांशे प्रत्यक्षसामग्रीसत्त्वेऽपि स्मृत्युपपत्तेरपह्नवासम्भवाच्च।

नन्वेवं सति स्वात्मांशे कदाचिदपि प्रत्यक्षं नोपपद्यते स्मृतिप्रत्यक्षसामग्र्योः सर्वदा विद्यमानत्वात्। न चात्मनः प्रथमग्रहणं प्रत्यक्षं तदनन्तरग्रहणे तु संस्कारसत्त्वेन स्मृतिरूपमिति नियन्तुं शक्यम्। स्वयंप्रकाशस्यानादि-भूतस्यात्मनो ग्रहणस्य प्राथमिकत्वस्थापकाभावात्। उच्यते। सोऽहमिति प्रत्याभिज्ञायामात्मांशे प्रत्यक्षत्वस्य वक्तुं शक्यत्वात् प्रत्याभिज्ञास्थले प्रत्यक्षसामग्र्या प्रतिबन्धकत्वापरित्यागात्। वस्तुतः प्रत्याभिज्ञाव्यतिरिक्तस्थलेऽप्यात्म-विषयकज्ञानस्य प्रत्यक्षत्वमुपपादयितुं सुशकम्। स्मृतिं प्रत्युद्बुद्धसंस्कारस्यैव हेतुत्वेन कदाचित्तादृशसंस्काराभावे प्रत्यक्षोत्पत्तिसम्भवात्। न हि संस्कारस्योद्बोधनं सार्वकालिकम्। तस्य देशकालादृष्टाद्यायत्तत्वात्। अत आत्मांशे प्रत्यक्षं दुरपह्नवमेव। अत स्वात्मांशे उद्बुद्धसंस्काररूपस्मृतिसामग्रीसत्त्वे स्मृतिसम्भवान्न परमात्मप्रकारकस्वात्म-विशेष्यकध्यानस्य मोक्षहेतुत्वानुपपत्तिः।

अथ वा - निदिध्यासितव्य इति भगवद्विषयकस्यैव ध्यानस्य मोक्षहेतुत्वोक्तेः स्वात्मांशे प्रत्यक्षरूपस्य भगवदंशे स्मृत्यात्मकस्य 'सोऽहमि' त्याकारस्य मोक्षहेतुत्वेऽपि नानुपपत्तिः। न चैकस्याः प्रतीतेः ज्ञानद्वयरूपत्वमप्रामाणिकम्। 'सुखमहमस्वाप्सं,' 'प्रातश्चत्वरे गजो नासीति'त्यादेः ज्ञानद्वयरूपतायाः अङ्गीकारात्। स्वात्मविष्यकज्ञानस्यापि मोक्ष-

**वाक्यकारेणैतत्सर्वं प्रपञ्चितम् -** (वाक्यग्रन्थः)-**'वेदनमुपासनं स्यात्तद्विषये श्रवणात्' इति सर्वासूपनिषत्सु मोक्षसाधनतया विहितं वेदनमुपासनमित्युक्तम्; 'सकृत्प्रत्ययं कुर्याच्छब्दार्थस्य कृतत्वात् प्रयाजादिवत्' इति पूर्वपक्षं कृत्वा, 'सिद्धं तूपासनशब्दात्' इति वेदनमसकृदावृत्तं मोक्षसाधनमिति निर्णीतम्; 'उपासनं स्याद् ध्रुवानुस्मृति दर्शनान्निर्वचनाच्च' इति तस्यैव वेदनस्योपासनरूपस्यासकृदावृत्तस्य ध्रुवानुस्मृतित्वमुपवर्णितम् ।**

हेतुत्वं कुतोऽभ्युपेयत इति तु नाशङ्कनीयम् । 'आत्मेति तूपगच्छन्ति ग्राहयन्ति चे'ति स्थापयिष्यमाणत्वात् । अतः 'त्वं वाऽहमस्मि भगवो देवते अहं वै त्वमसी'ति शरीरिशरीरभावेन ब्रह्मजीवयोरभेदबोधकश्रुतिपर्यालोचनेऽपि स्वात्मांशे प्रत्यक्षरूपस्य ब्रह्मांशे उपासनरूपस्य ज्ञानस्य मोक्षोपायत्वलाभान्न किञ्चिद्बाधकम् । न चैवं सति विशेष्यत्वप्रकारत्वयो र्निरूप्यनिरूपकभावालाभः । भ्रमस्थल इवात्रापि तत्स्वीकारात् । वस्तुतो भक्तियोगसाधनभूतज्ञानयोगे परमात्म-निरूपिताधेयत्वादिविशिष्टप्रकृत्यादिविलक्षणस्वात्मविशेष्यकनिरन्तरस्मृतिसन्ततिरूपे स्वात्मनो विषयत्ववदत्रापि सम्भवति । तस्माद्ध्यानस्य मोक्षहेतुत्वोपपत्या द्रष्टव्यो निदिध्यासितव्य इति वाक्येन दर्शनसमानाकारत्वरूपगुणविशिष्ट-ध्यानस्य मोक्षहेतुत्वाय विशिष्टविधिरेवाश्रयणीयः ।

नन्वविच्छिन्नस्मृतिसन्ततिरूपध्यानस्यैव मोक्षसाधनत्वमस्तु किमर्थं दर्शनसमानाकरत्वविशिष्टस्य तस्येति चेन्न । अपर्यनुयोज्यत्वाद्विधिवाक्यस्य । अतो विधिवाक्यं यावतः फलसाधनत्वं ब्रूते तावतस्तद्धेतुत्वमभ्युपेयं तावद-नुष्ठेयञ्च । अन्यथा विच्छिन्नस्मृतेरपि मोक्षहेतुत्वकल्पनापत्तेः । ननु विच्छिन्नस्मृतीनां मोक्षो न दृश्यत इति चेद्दर्शन-समानाकारानापन्नाविच्छिन्नस्मृतिसन्ततिमतामपि मोक्षो न दृष्ट इति तुल्यमेतत् । श्रूयन्ते हि साक्षात्कारमपेक्षमाणा ब्रह्मध्यायिनोऽपि ऋषयः । एतेन दर्शनसमानाकरत्वविशिष्टध्यानस्य मोक्षहेतुत्वं न सम्भवति, द्रष्टव्यो, निदिध्यासितव्य इति वाक्यस्य मैत्रेयीब्राह्मण एव सत्त्वेनान्यत्र प्रतिपाद्यस्य ब्रह्मध्यानस्य साक्षात्कारानापन्नस्यापि मोक्षहेतुत्वोक्तेरिति मतं निरस्तम् । न चोभयोरपि मोक्षहेतुत्वमिष्टम् । गुरुलघुविकल्पपरिहारायान्यत्रोक्तस्य ब्रह्मोपासनस्यापि दर्शनरूप-त्वाभ्युपगमात् । वस्तुत 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितमि'ति कारणज्ञानेन सर्वज्ञाततायास्तत्रैव प्रतिपादितत्वात् 'कारणं तु ध्येय' इति कारणस्यैव सर्वविद्योपास्यत्वाच्च जगत्कारणविषयसर्वोपासनानामपि दर्शनरूप-त्वापन्नध्यानरूपत्वं सम्भवतीति न कश्चिदपि क्लेशः ॥

विशदतरत्वरूपदर्शनसमानाकारत्वस्य स्मृतिसन्ततिविषयमनोव्यापारसाध्यस्य फलत्वान्न विधेयत्वसम्भव इति चेत् विशदतरत्वापादकतादृशमनोव्यापारस्य विधेयत्वाभ्युपगमेनानुपपत्त्यभावात् । ननु दर्शनसमानाकारत्वस्य तदापादकमनोव्यापारस्य वा न दर्शनशब्दवाच्यत्वमिति चेन्न । लक्षणया तद्वाच्यत्वसम्भवात् । न च विधिवाक्ये लक्षणाङ्गीकरणमयुक्तम् । 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादावपि दर्शपूर्णमासशब्दानां लक्षणया यागनाम-धेयत्वाङ्गीकारात् । अत एवाऽऽज्यावेक्षणविधानस्थले फलरूपस्याऽऽज्यावेक्षणस्य विधेयत्वासम्भवात्, आज्य-साक्षात्कारहेतुभूतव्यापारविषये लक्षणाभ्युपगता ।

एवं स्वोक्तार्थस्य साम्प्रदायिकत्वसिध्यै सूत्रकाराशयाभिज्ञानां सम्मतिं प्रदर्शयति - **'वाक्यकारेणेति । प्रपञ्चितमिति ।** 'वेदनमुपासनं स्यात्तद्विषये श्रवणात्', 'सकृत्प्रत्ययं कुर्यात् शब्दार्थस्य कृतत्वात्प्रयाजादिवत्' 'सिद्धं तूपासनशब्दात्' 'उपासनं स्यात् ध्रुवानुस्मृतिर्दर्शनान्निर्वचाच्च' इति वाक्यचतुष्टयेन पूर्वपक्षसिद्धान्तरूपेण प्रतिपादितमिति भावः । तद्वाक्यमुदाहरति - **वेदनमिति । तद्विषये** = उपासनशब्दस्थाने वेदनशब्दस्थाने च । **श्रवणात्** = वेदनशब्दस्योपासनशब्दस्य च प्रयोगात् । अनेन स्वोक्तव्यतिकरे प्रमाणं प्रदर्शितम् । अत्र विद्याविशेष-सङ्कोचपदाश्रवणेनासङ्कोचात्सर्वोपनिषद्विहितवेदनस्याप्युपासनरूपत्वसिद्धिरित्याभिप्रेत्याह - **सर्वास्विति । प्रत्ययं** =

**सेयं स्मृतिर्दर्शनरूपा प्रतिपादिता। दर्शनरूपता च प्रत्यक्षतापत्तिः। एवं प्रत्यक्षतापन्नामपवर्गसाधनभूतां स्मृतिं विशिनष्टि,** (मु 3.2.3.) **'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनूं स्वाम्' इति। अनेन केवलश्रवणमनननिदिध्यासनानामात्मप्राप्त्यनुपायत्वमुक्त्वा, यमेवैष (पर)आत्मा वृणुते तेनैव लभ्य इत्युक्तम्। प्रियतम एव हि वरणीयो भवति। यस्यायं निरतिशयप्रियः, स एवास्य प्रियतमो भवति।**

---

**उपासनम्।** **शब्दार्थस्य** = शास्त्रार्थस्य। सकृत्कृतश्शास्त्रार्थ इति न्यायादिति भावः। अत्र पूर्वपक्षसिद्धान्तविभागस्यास्फुटत्वात्तदभिव्यक्त्यै आह - **इति पूर्वपक्षं कृत्वेति।** **उपासनशब्दादिति।** सकृत्कृतौ उपासनशब्दस्याप्रयोगात्। असकृदावृत्तौ तस्य प्रयोगाच्च। असकृदावृत्तमेव वेदनरूपमुपासनं मोक्षसाधनमिति सिद्धम्। अनन्यथासिद्धप्रयोगस्यैवार्थनिर्णायकत्वादिति भावः। वेदनमसकृदावृत्तं मोक्षसाधनमित्येतत् कथनं 'सिद्धं तूपासनशब्दादि'त्यत्र शेषपूरणव्यञ्जकम्। सिद्धमित्येतस्यार्थवर्णनं निर्णीतमिति। **दर्शनं** = लोकदृष्टिः। प्रत्यक्षश्रुतिर्वा। **निर्वचनं**=श्रुतिः, उपबृंहणं वा।

ननु वाक्यकारेण वेदनस्योपासनरूपत्वध्रुवानुस्मृतित्वयोरभ्युपगमेऽपि दर्शनसमानाकारत्वं नाभ्युपगतम् अनुपवर्णितत्वादित्यत्र तदपि वाक्यकाराभिमतमेव स्यादित्याशयेनाह - **सेयमिति।** अयम्भावः यथा वेदनस्योपासनरूपत्वं ध्रुवानुस्मृतिरूपत्वं चोपासनशब्दे ध्रुवानुस्मृतिशब्दस्य समभिव्याहारेण सिध्यति। तद्वदेव तस्य दर्शनसमानाकारत्वमपि द्रष्टव्य इति शब्दसमभिव्याहारात् तुल्यन्यायतया सिध्येदिति न पृथग्वक्तव्यमिति नोक्तमिति। **प्रतिपादितमिति।** अर्थादित्यादिः। **प्रत्यक्षतापत्तिरिति।** न तु प्रत्यक्षत्वम्, असम्भवात्। अशक्यविधानापत्तेश्चेति भावः।

एवमन्यविशेषोपस्थापकपदान्तरसमभिव्याहारादपवर्गसाधनभूतप्रत्यक्षसमानाकारध्रुवानुस्मृतेः प्रीतिरूपापन्नत्वमपि सेत्स्यतीत्यभिप्रायेणानुभाषते **एवमिति।** **नायमिति।** अस्याः श्रुतेरयमर्थः। प्रोच्यत अनेनेति प्रवचनं मननं प्रवचनसाधनत्वाद्वा। **श्रुतं** = श्रवणम्। परिशेषान्मेधाशब्दः प्रत्यक्षतापन्नध्यानपरः। इत्थञ्चायं परमात्मा श्रवणमनननिदिध्यासनैरलभ्यः। श्रवणमननयोरलभ्यत्वकथनं परम्परयेति बोध्यम्। साक्षादलभ्यत्वस्य सर्वसिद्धत्वात्।

ननु 'द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति श्रवणादीनां परमात्मप्राप्तिसाधनत्वं बोधितमिति कथमेषामुपायत्वनिषेधः क्रियते। अन्यथा तेषां वैयर्थ्यापत्तेरुन्मत्तप्रलपितायितत्वापत्तेश्चेत्यत्राह — **यमिति।** **एषः** परमात्मा **यं** = जीवात्मानम्। **वृणुते** = प्रार्थयते। **तेन** = जीवात्मना। **लभ्यः** = प्राप्यः। तस्य **स्वां तनूं** = स्वस्वरूपं विग्रहञ्च **विवृणुते** = प्रकाशयतीत्यर्थः। अयं भावः - न तावत्परमात्मा कञ्चन जीवमकस्माद्वृणुते। निर्हेतुकमोक्षप्रसङ्गात्। मुक्त्युपायविधिवैयर्थ्यापत्तेः। भगवति वैषम्यनर्घृण्यापत्तेश्च। अतो भगवता जीववरणे कश्चन हेतुर्वक्तव्यः। प्रियत्वं चेत्तदपि हेत्वन्तरसापेक्षम्। अतो जीवस्य भगवद्विषयकप्रीतिमत्त्वमेव तदिति वक्तव्यम्। यस्य परमात्मनि प्रीतिः तस्मिन्नेव परमात्मनोऽपि प्रीतिसम्भवात्। लोके स्वविषयकप्रीतिमत्येव पुरुषे स्वस्य प्रीतिदर्शनाच्च। अतोऽत्र भगवत्प्राप्तिं प्रति निरतिशयभगवद्विषयकप्रीतेरुपायत्वबोधनात् ध्यानादिना सहाष्टदोषदुष्टविकल्पाङ्गीकरणस्यायुक्तत्वात् गुरुलघुविकल्पापत्तेश्च ध्यान एव प्रीतेरुपपन्नत्वमनया श्रुत्या विशेष्यते इत्यभ्युपेयम्। इत्थञ्च प्रवचनादीनामुपायत्वनिषेधोऽपि सङ्गत एव। प्रवचनादिशब्दानां केवलप्रवचनपरत्वात्। प्रीतिरूपानापन्नप्रवचनादीनामुपायत्वानङ्गीकाराच्च। ननु स्वविषयकप्रीतिमत्येव इतरस्य प्रीतिरिति व्यवस्था चेत् कथं परमात्मनि जीवस्य प्रथमतः प्रीतिः। भगवतः प्रीतिकरणादिति चेत् अनवस्थापत्तिश्चेति चेत्सत्यम्। जीवपरयोः शेषशेषिभावस्य नियतत्वेन सेवकेन जीवेनैव स्वामिनि स्वदुःखनिवृत्त्यै प्रथमं प्रीतिनिक्षेपावश्यकत्वात्। तथैव हि लोकानुभवः। न ह्यकस्मात् कश्चित्प्रभुः अन्यस्मिन्जने प्रीतिं निदधाति ॥

**यथाऽयं प्रियतम आत्मानं प्राप्नोति, तथा स्वयमेव भगवान् प्रयतत इति भगवतैवोक्तम्, 'तेषां सततयुक्तनां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥'** (गी 10.10.) **इति , 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ।'** (गी.7.17) **इति च । अतः साक्षात्काररूपा स्मृतिः स्मर्यमाणात्यर्थप्रियत्वेन स्वयमप्यर्थप्रिया यस्य, स एव परेणाऽऽत्मना वरणीयो भवतीति तेनैव लभ्यते पर आत्मेत्युक्तं भवति ।**

**एवंरूपा ध्रुवानुस्मृतिरेव भक्तिशब्देनाभिधीयते; उपासनपर्यायत्वाद्भक्तिशब्दस्य । अत एव श्रुतिस्मृतिभिः**

---

ननु निर्विशेषं श्रूयमाणस्य प्रवचनादिशब्दस्य केवलमननादिपरत्वं कथं युज्यत इति चेत् 'न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवि' इत्यादौ हिरण्योपहितत्वविशिष्टपृथिव्यामग्निचयनविधानबलात् पृथिवीपदस्य केवलपृथिवीपरताया अङ्गीकारवदत्रापि सम्भवात् । इत्थश्च द्रष्टव्य इत्यादिविधिरपि रक्षित इति । उक्तमर्थमुपपादयति — **अनेनेति** । केवलेति प्रीतिरूपानापन्नेत्यर्थकम् । अनुपायत्वमित्यत्रोपायत्वं साक्षात्परम्परासाधारणम् । **यस्यायं निरतिशयप्रियः स एवास्य प्रियतमो भवतीति** । यस्य भगवति निरतिशया प्रीतिरस्ति स एव भगवतः प्रियतमः तेन वरणार्हः भगवत्प्राप्ता च । एवश्च धनवान् सुखवानित्यादाविव 'भगवत्प्रीतिमान्' 'भगवत्प्राप्ता' इत्यादावपि भगवत्प्राप्तिरूपमोक्षस्य भगवद्विषयकप्रीतिप्रयोज्यत्वस्य लाभात् मुक्तिं प्रति भगवद्विषयकप्रीतेः साधनत्वलाभ इति भावः ॥ एवं भगवद्विषयक-प्रीतेरुपायत्वेऽवगतेऽपि पूर्वोक्तयुक्त्या प्रीतिरूपापन्न ध्यानस्यैवापवर्गोपायत्वमेषितव्यमित्यभिप्रेत्य भगवदुपबृंहणं सार्थं दर्शयति — **यथायमिति** । भगवतैवेति एवकारः प्रमाणान्तरस्य निरपेक्षत्वव्यञ्जकः । स्वपदप्रदाता भगवानेव हि प्रीतिपूर्वभजनस्य मोक्षोपायत्वमाह । अतोऽलं प्रमाणान्तरगवेषणा ॥

**सततयुक्तानां** = सततयोगमाशंसमानानाम् । 'अंशसायां भूतवच्चे'ति क्तः । अत्र सततयोगाशंसयैव भजने प्रीतिरूपत्वस्य लाभात् प्रीतिपूर्वकमित्येतत् ददामीत्यत्रान्वेति । सततयुक्तानामित्यनेनोपासकस्य भगवति प्रीतिदर्शिता । प्रीतिपूर्वकमित्यनेनोपासके भगवति प्रीतिर्दर्शिता । **अत्यर्थं** = अत्यन्तम् । ममापि वाचामगोचरमिति यावत् । यस्मात् ज्ञानिनोऽहमत्यर्थं प्रियः ततो ममाप्यत्यर्थं प्रिय इत्यर्थः । उक्तमर्थं हेत्वन्तरेण सङ्कलय्य दर्शयति — **अत इति । अतः** = उपबृंहणोपबृंहणीयश्रुतिस्मृतिवचनयोरैककण्ठ्यावश्यंभावादित्यर्थः । **स्मर्यमाणात्यर्थप्रियत्वेनेति** । अत्र गामश्वंपुरुषं जगदित्यादाविव चकारानुक्तिः । अत्यर्थप्रीतिरूपा । अयं भावः । यथा ध्यानस्य दर्शनरूपत्वं 'द्रष्टव्य' इति विधिवाक्य-बलादवसीयत एवं तस्य प्रीतिरूपत्वमपि 'यमेवैषे' ति श्रुतिबलादवसीयत इति । एतादृशन्यायसाम्यसूचनायैव 'प्रत्यक्षतापन्नां इति साक्षात्काररूपेति च स्मृतिविशेषणतया भाषितम् । अत्र स्मृतिसन्ततिरूपध्यानस्य भावनाप्रकर्षेण वैशद्यातिशयवत्वरूपदर्शनसमानाकारत्वसम्भवेऽपि तस्य प्रीतिरूपत्वं कथमित्याशङ्कापरिहारकहेतुः स्मर्यमाणात्यर्थ-प्रियत्वेनेत्यनेन निर्दिष्टः । स्मृतिविषयस्य भगवतो निरवधिकानुकूलत्वे तद्विषयकस्मृतिरप्यत्यन्तानुकूलैव । प्रीतिर्हि सुखरूपं ज्ञानम् । ज्ञानात्मिकाया अस्याः स्मृतेः विषयानुकूलत्वाधीनात्यन्तानुकूलत्वरूपसुखत्वाश्रयरूपत्वे प्रीतिरूपत्वम-क्षतमेवेति । विष-सर्प-शत्रु-यमदूत-ऋणदात्रादिप्रतिकूलदर्शने हि दुःखं जायते । कुतः ? विषयस्य तत्र प्रतिकूलत्वात् । कामिन्या अनुकूलत्वाद्धि तज्ज्ञानं प्रियतमं भवति । अत एव कामिनीजिज्ञासायाः स्वातन्त्र्येण प्रीतिबन्धकत्वमिष्यते । ततश्च श्रुतिस्मृत्योरैककण्ठ्यकरणस्यावश्यम्भावात् ध्यानस्य प्रीतिरूपत्वसम्भवाच्च प्रीतिरूपापन्नध्यानस्यैव मोक्ष-साधनत्वात् तादृशध्यानवानेव 'मामयं प्राप्नुया'दिति भगवत्सङ्कल्पविषयो भवतीति विशिष्टवाक्यार्थः पर्यवसितः ॥

एवमेव विरोधपरिहाराय निरुक्तध्रुवानुस्मृतेर्भक्तिशब्दवाच्यत्वमप्याह - **एवं रूपेति । उपासनपर्यायत्वात्** = उपसनार्थवाचकत्वात् 'स्नेहपूर्वमनुध्यानं भक्तिरित्यभिधीयत' इति ध्रुवानुस्मृतिरूपध्यानस्य भक्तिशब्दवात्यत्वोक्तेः 'सेवा भक्तिरुपास्तिस्स्यादि'ति उपासनभक्तिशब्दयो पर्यायत्वोक्तेश्चेति भावः । अत्र भक्त्युपासनशब्दयोः पर्यायत्वं

**एवमभिधीयते** - (श्वे 3.8.) **'तमेव विदित्वाऽति मृत्युमेति',**

चैकार्थवृत्तित्वरूपम्। न तु घटकुम्भशब्दयोरिव पर्यायत्वम्। सामान्यविशेषशब्दत्वात्। एवमुपबृंहणीयपर्यालोचनेऽपीदं स्पष्टमित्याह — **अत एवेति**। श्रुतावुपासनस्य मोक्षोपायत्वं तदन्यस्य तन्निषेधश्च कृतः। स्मृतौ तु भक्तेरुपायत्वं तदन्यस्य तन्निषेधश्च। यदि भक्त्युपासनयोरनैकार्थ्यं तर्ह्युभयत्रान्यस्योपायत्वनिषेधो न सङ्गच्छेत। अत ऐकार्थ्यमवश्यम्भावीति भावः॥

नन्वतिरिक्तायाः प्रपत्तेर्मोक्षोपायत्वे निषेध्यस्य विहितव्यतिरिक्तविषयत्वेन सङ्कोचवदुपासनव्यतिरिक्ताया भक्तेर्मोक्षोपायत्वेऽपि तद्व्यतिरिक्तविषयकत्वेन निषेधसङ्कोचसम्भवान्नानुपपत्तिरिति चेन्मैवम्। विहितव्यतिरिक्तविषयत्वेन निषेधसङ्कोचो हि भक्तेरूपायत्वेन विहितत्व एव सङ्गच्छते। उपासनव्यतिरिक्ताया भक्तेरूपायत्वं तु कुत्रापि न विहितम्। न च 'भक्त्या त्वनन्यया' इत्युदाहृतवचनाद्विहितत्वसिद्धिः। तस्य स्मृतिरूपत्वेनान्यथासिद्धत्वात्। प्रपत्तेस्तु 'ओमित्यात्मानं युञ्जीते'त्यादि श्रुतिविहितत्वादेव तद्व्यतिरिक्तविषयकत्वं निषेधस्याश्रयितुं युक्तम्। अतः 'तमेवे'त्याद्युपबृंहणवाक्यस्थभक्तिशब्दः अवश्यमुपासनमेव ब्रूयात्। एवं 'स्नेहपूर्वमनुध्यानं भक्तिरित्यभिधीयते' इत्युपासनस्य भक्तिरूपत्वावगमात् उपासनव्यतिरिक्तभक्तेरेवाप्रसिद्धिश्च। अन्यस्या भक्तेर्दुर्वचत्वात्।

ननूपासने सात्काररूपत्वभक्तिरूपत्वादिपरिकल्पनवत् प्रपदनरूपत्वमपि कुतो न परिकल्प्यते? कुतश्च तस्यातिरिक्तोपायत्वं स्वीक्रियते। वचनबलादिति चेदत्रापि द्रष्टव्य इत्यादि वचनबलाद्दर्शनादेरप्यतिरिक्तोपायत्वस्वीकारप्रसङ्गः। गुरुलघुविकल्पानुपपत्तिस्तूभयत्रापि तुल्या। अधिकारिभेदेन परिहारकथनमप्युभयत्र समानमिति चेदुच्यते। उपासने दर्शनरूपत्वभक्तिरूपत्वादिसम्भव इव क्षणकालसाध्यसकृत्कर्तव्यसाङ्गप्रपदनरूपत्वस्य कथञ्चिदप्यसम्भवेन तद्रूपत्वकल्पनासम्भवात्। द्वात्रिंशद्विद्यासु प्रपत्तिविद्याया अप्यन्यतमत्वेनोपासनस्य दर्शनरूपत्ववत्प्रपदरूपत्वस्य गुणत्वासम्भवाच्च। अन्यथा सर्वस्या अपि विद्यायाः सर्वगुणविषयकत्वपरिकल्पनेन विद्यैक्यप्रसङ्गात्। स्थापयिष्यते च 'नाना शब्दादिभेदा'दित्यत्र विद्याभेदः। अत एव प्रपत्तिविषय इव दर्शनादिविषयेऽपि गुरुलघुविकल्पपरिहारायाधिकारिभेदपरिकल्पनमपि निरस्तम्। अगतिकस्थल एवाष्टदोषदुष्टविकल्पस्य गुरुलघुविकल्पानुपपत्त्याऽधिकारिभेदपरिकल्पनस्य च प्रामाणिकत्वात्। वस्तुतो 'न चक्षुषा गृह्यत' इत्यदृश्यत्वेन श्रुते परमात्मनि दर्शनस्यैवासम्भवेन तस्य मोक्षहेतुत्वकल्पनमतिविरुद्धमिति प्रागेवोक्तम्। एवं केवलज्ञानमात्रस्य मोक्षहेतुत्वमप्यनुपलब्धिपराहतम्। उपासनस्य भक्तिरूपत्वं तूपबृंहणानुसारात्स्वीकृतम्। अत उपासनस्य दर्शनरूपत्वं भक्तिरूपत्वादिकं प्रपत्तेरतिरिक्तोपायत्वञ्च युक्तमेवेत्यलम्।

**तमेव विदित्वेति**। तच्छब्दः परमपुरुषवाची। विषयित्वरूपकर्मत्वं द्वितीयार्थः वेदनान्वयी। त्वाप्रत्ययस्योत्तरकालीनत्वमर्थः। **मृत्युमत्येतीत्यन्वयः**। तथा च परमपुरुषविषयकवेदनानन्तरकालीनमृत्युतरणवानित्यर्थः। एवकारोऽयोगव्यवच्छेदपरो भिन्नक्रमः। ततश्च शङ्खः पाण्डर एवेत्यादौ पाण्डरत्वे शङ्खत्वव्यापकत्वबोधवत् मृत्युतरणोद्देशेन तद्विषयकज्ञानहेतुकत्वविधानात् मृत्युतरणत्वव्यापकत्वरूपोद्देश्यतावच्छेदकसमानाधिकरणात्यन्ताभावाप्रतियोगित्वरूपायोगव्यवच्छेदस्य तद्विषयकज्ञानहेतुकत्वे लाभः। यद्यप्यत्र वेदनमृत्युतरणयोः पूर्वोत्तरकालीनत्वमात्रं प्रतीयते, अथापि सिद्धसाध्यसमभिव्याहारस्थलेऽसति बाधके पक्त्वा भुञ्जीत इत्यादाविव प्राक्कालीनत्वरूपसिद्धत्ववतः हेतुत्वमुत्तरकालीनत्वरूपसाध्यत्ववतस्तत्कार्यत्वं च लभ्यत इति हेतुहेतुमद्भावलाभः। उत्तरकालीनत्वार्थकल्यपस्तात्पर्यवशाल्लक्षणया जनकत्वार्थस्वीकारेण वा तल्लब्धिः। अत्रत्यैवकारस्यान्ययोगव्यवच्छेदपरत्वाश्रयणं तु न सम्यक्। तथा सति परमपुरुषान्याविषयकपरमपुरुषविषयकवेदनस्य मोक्षहेतुत्वलाभात् सिद्धान्ते सगुणब्रह्मोपासनस्य मोक्षहेतुत्वस्वीकारेण तद्विरोधापत्तेः। न च तच्छब्दस्य पूर्वोक्तगुणविशिष्टब्रह्मबोधकत्वेन तादृशब्रह्मेतराविषयतादृशब्रह्मविषयकवेदनस्य मोक्षहेतुत्वलाभेन न विरोध इति वाच्यम्। सर्वस्याप्युपासनस्य गुणब्रह्मादिविषयकत्ववत् जीवविषयकत्वस्यापि 'आत्मेति

(पु 17.) **'तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते'**, (गी 11.53,54.) **'नाहं वेदैर्न तपसा न दानेन न**

---

तूपगच्छन्ति ग्राहयन्ति चे'त्यादौ स्थाप्यमानत्वात् गुणविशिष्टब्रह्मेतरविषयकत्वेन सर्वोपासनासङ्ग्रहप्रसङ्गात् ।

न चात्मनः सर्वविद्याविषयत्वेऽपि सर्वत्र प्रकारतयैव भानात् पूर्वोक्तब्रह्मेतराविशेष्यकब्रह्मविशेष्यकवेदनस्य मोक्षहेतुत्वोक्त्या नानुपपत्तिरिति वाच्यम् । जीवविशेष्यकपञ्चाग्निविद्याया असङ्ग्रहप्रसङ्गात् । एतेन तच्छब्देन गुण-विशिष्टब्रह्मपरामर्शवत् जीवविशिष्टब्रह्मणोऽपि परामर्शसम्भवेन नानुपपत्तिरिति शङ्कापि निरस्ता । वस्तुतो गुणविशिष्ट-ब्रह्मविशेष्यकवेदनस्य मोक्षहेतुत्वे दहरविद्याया असङ्ग्रहप्रसङ्गः । तत्र गुणानामपि विशेष्यत्वात् । अतोऽन्नमेव भुक्त्वा तृप्तिविशेषमाप्नोतीत्यादाविवात्राप्ययोगव्यवच्छेदपर एवैवकारः । एवञ्च समुदायज्ञानपूर्वकद्वयोच्चारणादिप्रपत्तिविद्याया अपि मोक्षहेतुत्वं रक्षितम् । ब्रह्मज्ञानघटितसामग्र्या एव मोक्षहेतुत्वेन तादृश प्रपत्तिविद्यानिष्ठस्यापि ब्रह्मज्ञानसत्त्वेन दोषाभावात् । 'नान्यः पन्था' इत्यादिना ब्रह्मज्ञानाघटितसामग्र्या एव मोक्षप्रयोजकत्वाभावप्रतिपादनात् । जीवज्ञान-भगवत्प्रसाददेरपि मोक्षहेतुतायास्सिद्धान्तसिद्धत्वेन ब्रह्मज्ञानान्यस्य मुक्तिहेतुत्वाभावप्रतिपादकत्वासम्भवस्य पूर्वमुक्तत्वादिति वदन्ति ।

वस्तुतोऽत्रैवकारस्यान्ययोगव्यवच्छेदार्थकत्वेऽप्यात्मान्यविषयकत्वानवच्छिन्नात्मविषयकज्ञानत्वावच्छिन्नजनकताक-मृत्युतरणवानिति बोधस्वीकारे न विरोधः । अन्नमेव भुक्त्वा तृप्तिविशेषमाप्नोतीत्यादावप्यन्नेतरभोजनत्वानवच्छिन्नान्न-भोजनत्वावच्छिन्नजनकताकतृप्तिविशेषवानित्येव बोधः । त्वाप्रत्ययार्थजनकतायां तमिति द्वितीयान्तार्थात्मविषयकत्व-वानिति विदिधात्वर्थस्यात्मविषयकत्वविशिष्टवेदनत्वस्यावच्छिन्नत्वसम्बन्धेनान्वयात् । अन्ययोगव्यवच्छेदार्थकैवकारेण तादृशजनकतायामवच्छिन्नत्वसम्बन्धावच्छिन्नात्मान्यविषयकत्वाभावबोधनाच्चोक्तार्थलाभः । अत्रात्मान्यपदेन ब्रह्मज्ञान-घटितसामग्र्यनन्तर्गततदन्यस्य विवक्षणान्न पूर्वोक्तदोषावकाशः । दहरपञ्चाग्निविद्याबोधितगुणजीवादेः ब्रह्मज्ञानघटित-सामग्र्यन्तर्गतत्वेन तादृशसामग्र्यन्तर्गतब्रह्मान्यगुणजीवादिविषयकत्वावच्छिन्नत्वस्य जनकतायां सत्त्वेऽपि तादृश-सामग्र्यनन्तर्गतब्रह्मान्यविषयकत्वावच्छिन्नत्वस्याभावात् । न चैवकारस्य विवक्षितेतरबोधकत्वमप्रामाणिकम् । चक्षुषैव रूपं ग्राह्यमित्यादौ न्यायविद्भिरङ्गीकारात् । इत्थञ्चाऽत्र ब्रह्मज्ञानघटितसामग्र्यानन्तर्गतब्रह्मान्याविषयकब्रह्मविषयकवेदनस्य मुक्त्युपायत्वबोधनेन न विरोधगन्ध इति । एवञ्च पूर्वोक्तप्रपत्तेरपि ब्रह्मज्ञानघटितसामग्र्यन्तर्गतत्वेन न मोक्षजनकत्व-विरोधः । युक्तञ्चैतत् । स्वरससिद्धार्थपरित्यागे प्रमाणाभावात् । भिन्नक्रमेणान्वयस्वीकारस्यानौचित्याच्च । अत एव निक्षेपरक्षायां 'श्वेताश्वतरास्तु' इत्यारभ्य 'तस्यैवान्यत्वप्रतियोगित्वमवधारणनिर्देशेन स्पष्टमामनन्ती'त्यनेन एवकारस्या-न्ययोगव्यवच्छेदपरत्वं स्वीकृतमित्यलं प्रासङ्गिकेन ॥

अथैवं पक्षद्वयेऽपि एतावत्पर्यन्तभाष्यग्रन्थपर्यालोचनया विशिष्य 'उपासनपर्यायत्वाद्भक्तिशब्दस्य । अत एव श्रुतिस्मृतिभिरेवमभिधीयत ' इति भाषित्वा 'तमेव विदित्वातिमृत्युमेति' इत्यादिश्रुत्यादानबलाच्च श्रुतिघटकवेदनपदस्य ध्रुवानुस्मृतिलक्षणभक्तिरूपत्वावगमात् द्वयोच्चारणपूर्वककेवलविशदज्ञानात्मकस्वनिष्ठारूपप्रपत्तेः कथं मोक्षसाधनत्वम् । ब्रह्मज्ञानघटितसामग्र्यन्तर्गतत्वेऽपि ध्रुवानुस्मृतिरूपत्वाभावात् । कथन्तराञ्चान्यस्याः प्रपत्तेरिति चेन्मैवं । एतस्या ध्रुवानुस्मृतिरूपत्वाभावेऽपि 'ओमित्यात्मानं युञ्जीत' इत्यादिवचनबलान्मोक्षोपायत्वस्वीकारेण दोषाभावत् । 'नान्यः पन्था' इत्यादिकं तु विहितव्यतिरिक्तविषयकत्वेन न बाधकम् । एवं 'सकृदुच्चारस्संसारमोचनं भवतीत्यादिवचनबलात् वाचिकादिप्रपत्तेरप्युपायत्वमिष्यते । न हि ध्रुवानुस्मृतिरूपवेदनरूत्वमुपपाद्यैवाऽऽसां मोक्षसाधनत्वं वक्तव्यमिति नियमः । ब्रह्मज्ञानघटितसामग्र्यनन्तर्गततदन्य विवक्षणं तु गुणजीवादिविषयकोपासनस्य मोक्षहेतुत्वोपपादनार्थमेव । एतेन वाचिकादिप्रपत्तेः कथं मोक्षहेतुत्वं, ज्ञानान्मोक्ष इति ज्ञानस्यैव मोक्षहेतुत्वप्रवादादिति शङ्कापि परस्ता । ज्ञानादेव

**चेज्यया । शक्य एवं विधो द्रष्टुं दृष्टवानसि मां यथा ॥ भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप',** (गी. 8.22.) **'पुरुषः स परः पार्थ ! भक्त्या लभ्यस्त्वनन्यया' इति ॥**

**एवंरूपाया ध्रुवानुस्मृतेः साधनानि यज्ञादीनि कर्माणीति,** (शा.3.4.26.) **'यज्ञादिश्रुतेरश्ववत्' इत्यभिधास्यते ।**

---

मोक्ष इति नियमानङ्गीकारात् । अन्यथा ध्रुवानुस्मृतिरूपज्ञानभिन्नस्वतन्त्र प्रपत्तेरपिमोक्षहेतुत्वाभावप्रसङ्गात् । यद्येवकारस्य विहितव्यतिरिक्तपरत्वेन ज्ञानादेव मोक्ष इति नियमे बाधकाभाव इत्युच्यते, तर्हि तुल्यमिदमिहापीति दिक् । **अमृतः** = अमृततुल्यः । **नाहं वेदैरिति** । इदञ्च साक्षादुपायत्वाभावबोधकम् । एवमग्रेऽपि ।

**भक्त्या त्वनन्ययेति** । अत्र भगवद्भक्तेः भगवज्ज्ञानदर्शनप्राप्तिसाधकत्वमुक्तम् । इदञ्च भक्तिगतपर्वभेदमवलम्ब्य । अन्यथाऽऽत्माश्रयात् । तत्त्वेनेति प्रत्येकं सम्बध्यते । भक्त्या तत्त्वेन प्रवेष्टुं शक्य इत्युक्त्या भगवत्प्राप्तौ भक्तेस्साक्षादुपायत्वं बोधितम् । एतेन 'भक्त्या मामभिजानाति, ततो मां तत्वतो ज्ञात्वा विशते' इत्यादिभिः भक्तिजन्यज्ञानस्य मोक्षोपायत्वमुक्तमिति शङ्का परास्ता । तत्राप्येतदैकार्थ्याय तत इति भक्तिं परामृश्य तस्या एव प्राप्त्युपायत्वाङ्गीकारस्याऽऽवश्यकत्वात् । तत्र तत इत्यस्यानन्तरार्थकत्वासम्भवाच्च । अन्यथा तदनन्तरमित्यस्य नैरर्थक्यप्रसङ्गात् ।

ननु शास्त्रजन्ययथावस्थितभगवद्विषयकज्ञानदर्शनप्राप्तिसाधनतया 'भक्त्या त्वनन्यये'त्यनेनोक्ता भक्तिः उदाहृतश्रुतिबलात् ध्रुवानुस्मृतिरूपेति वक्तव्यम् । तच्च न सम्भवति । तस्याः पर्वभेदेन दर्शनसाधकत्वसम्भवेऽपि शास्त्रजन्ययथावस्थितज्ञानसाधनत्वाभावत् । 'शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम्' इति शास्त्रजन्यज्ञानहेतुभूता भक्तिरन्या ह्युच्यते । न ह्यत्रापि सैव प्रतिपाद्यते । तस्याः शास्त्रजन्ययथावस्थितज्ञानहेतुत्वेऽपि भगवत्प्राप्त्यादिहेतुत्वाभावात् । उच्यते - 'शुद्धभावं गतो भक्त्या' इत्युक्ता भक्तिः शास्त्रजन्यभगवद्विषयकज्ञानहेतुभूता 'ये तु त्वदङ्घ्रिसरसीरुहे'ति श्लोकोक्ता । 'भक्त्या त्वनन्या शक्य' इत्युक्ता भक्तिः न तादृशी । परन्तूपायभूता, परभक्तिशब्दवाच्या । इयन्तु परज्ञानहेतुभूता । ज्ञातुमित्यनेन परज्ञानरूपा भक्तिः । परज्ञानं = परसाक्षात्कारः । परमभक्तिः परप्राप्तिरिति पर्वक्रम इति । **परः पुरुषः** = परमपुरुषः । **भक्त्या लभ्य** इति । अत्र प्राप्यस्य ब्रह्मण ऐक्यात् उपायस्याप्यैक्यमेव हि स्वीकार्यम् । अतो वेदनध्यानोपासनभजनादिकं सर्वमपि भक्तिरूपमेवेति भावः ॥

एतावता किं रूपमिति विवेचनीयमित्युक्तविवेचनप्रकारो निर्णयश्च प्रदर्शितः । अथ विविदिषन्तीत्युक्तध्रुवानुस्मृतिरूपवेदन एव कर्मणामुपयोग इति दर्शयति - **एवंरूपाया** इति । अयं भावः । असिना जिघांसतीत्यादौ हसेर्हननसाधनत्ववत् विविदिषन्तीत्यत्रापि यज्ञादे र्वेदनसाधनत्वमेव स्वीकर्तुं युक्तम् । यत्र त्वसेर्हननसाधनत्वबाधस्तत्र भगवन्तं दिदृक्षत इत्यत्र चासम्भवादिच्छासाधनत्वस्वीकारः । हननसाधनत्वरूपयोग्यतासत्त्वात्तत्रापि तथाव्यवहारः । अन्यथाऽसिना सेत्तुमिच्छतीति व्यवहारोऽपि प्रसज्येत । अत्र यज्ञादीनां विद्यासाधनत्वे बाधकाभावात्सम्भवाच्च न तत्परित्यागश्शक्यः । वस्तुतो विविदिषासाधनत्वे बाधकसद्भावेन तत्कल्पनमपि दुर्घटमेव । तथाहि - साधनेच्छां प्रति फलेच्छा कारणम् । तां विना तस्या अनुपपत्तेः । स्वर्गेच्छाभावे तदुपायभूतयागानुष्ठाने इच्छायाऽदर्शनात् । इत्थञ्चात्र प्रथमं वेदनेच्छा । ततो विविदिषेच्छा । तया यज्ञाद्यनुष्ठानञ्च । तेन च विविदिषोत्पत्तिरिति वक्तव्यम् । ततश्च चक्रकाऽन्योन्याश्रयात्माश्रयाः प्रसज्यन्ते । फलेच्छारूपविविदिषायाः पूर्वमेव सिद्धत्वेन यज्ञाद्यनुष्ठननैरर्थक्यञ्च । भोगादृष्टोद्बोधितविषयवासनासहितविषयवैलक्षण्यज्ञानादेवेत्छोत्पत्त्या कर्मणां वेदनेच्छासाधनत्वमप्यनुपपन्नम् । 'विविदिषन्ति' इत्यस्य सन्निधौ 'मनसैवानुद्रष्टव्यम्' इति विहितस्य वेदनस्य 'एतमेव विदित्वा मुनि र्भवति' इति स्तुतिश्च क्रियते । अतो वेदनं प्रत्येव यज्ञादेस्साधनत्वमवगम्यते । नहि यागेन स्वर्गं जिगमिषतीत्युक्ते यागस्य जिगमिषासाधनत्वं प्रतीयते । तस्मान्न यज्ञादि विविदिषासाधनम् ।

**यद्यपि विविदिषन्तीति यज्ञादयो विविदिषोत्पत्तौ विनियुज्यन्ते, तथाऽपि तस्यैव वेदनस्य ध्यानरूपस्याहरहरनुष्ठीयमानस्याभ्यासाधेयातिशयस्याऽऽप्रयाणादनुवर्तमानस्य ब्रह्मप्राप्तिसाधनत्वात् तदुत्पत्तये सर्वाण्याश्रमकर्माणि यावज्जीवमनुष्ठेयानि ।**

---

ननु शास्त्रजन्यज्ञानानन्तरं सामान्यतो भगवद्भक्तिसत्त्वेन भक्तिरूपवेदनसाधनत्वमपि कर्मणां न युक्तम् । अन्यथा चक्रकादिप्रसङ्गात् । मैवम् । स्थितभक्तेरुपचयानुवृत्त्यर्थमेव यज्ञादेस्तत्साधनत्वकल्पनात् । न हि विविदिषायामेवमुपचयानुपचयभेदपरिकल्पनं युज्यते । त्वदुक्तवेदनस्य मोक्षसाधनत्वाभावे प्रमाणस्य दर्शितत्वाच्च । ननु भोजनेच्छया औषधसेवनस्थल इवात्रापि न चक्रकादीनां दोषत्वमिति चेन्न । तत्रापि भोजनेत्छासिद्ध्यर्थमौषधसेवनाभावात् । क्षुत्प्रतिबन्धकाजीर्णनिवृत्त्या क्षुत्सम्पादनायैवौषधप्रवृत्तेरिति । बुभुक्षासिद्ध्यर्थमौषधसेवनस्थलेऽन्नाभिलाषयैव वैद्यनिकटे गमनेन, पूर्वं तस्याः सत्त्वेऽप्यजीर्णत्वप्रयुक्तधातुवैषम्यवशेन यथेष्टमन्नादिकमादाय भोजनेऽप्रवृत्तोऽन्नादिदर्शने जुगुप्सावांश्च भिषङ्निकटं गत्छति । तद्दत्तौषधसेवानन्तरमजीर्णत्वादिदोषणामपनयनात् यथेष्टं भुङ्क्ते । तत्र विरोधिनिवृत्त्याऽन्नाशा कार्यकरी । विशेषरुचिरूपा । एवमत्राप्यानन्दरूपस्य ब्रह्मणः प्राप्त्यर्थं विद्यैव कारणमिति बुद्धिः विश्वासश्च वर्तत एव । यतः पूर्वजन्मनि महत्पुण्यकर्मकर्तुरेवैवं बुद्ध्युदयात् । अथाप्यनादिसंसारेऽनेकबहुविधपापकर्मकारित्वात्सा आशा प्रतिहता भवति । स्वशिरसउन्मज्जनं न प्राप्ता । तद्विरोधिविषयभोगेषून्मस्ता च सा आशा इति विद्यांशश्रवणादिषु रुचि र्न जायते । अद्य विरोधिनिरासार्थयज्ञादिषु प्रवृत्तौ विरोधिनिवृत्त्या वेदनरूपविद्यायां विशेषरूचिर्जायत इति वक्तव्यम् । तथा चानभिसंहितफलककर्मानुष्ठानेन कल्मषनिवृत्तिः रजस्तमोगुणनिबर्हणं सत्त्वविवृद्धिः । ततो विविदिषोत्पत्तिरिति बहुपर्वव्यावधानेन विविदिषासाधनत्वं वेदनस्येति भवतापि वक्तव्यम् । एवञ्चेत् विविदिषाया अपि पर्वान्तभावमभ्युपगम्य वेदनसाधनत्वमेव स्वीक्रियताम् । न हि भवतामपि साक्षात् यज्ञादीनां साधनत्वाभ्युपगमः सुशकः । कतिपयपर्वव्यवधानसहत्ववत् विविदिषारूपपर्वव्यवधानसहत्वस्याप्यभ्युपगमे का क्षति र्भवताम् ।

एवं यज्ञादेर्वेदनसाधनत्वमेवेति निर्णीतम् । अथ विविदिषासाधनत्वाभ्युपगमेऽपि यावज्जीवं वेदनानुवृत्त्यर्थं विवितिषाया अप्यनुवृत्त्यावश्यकत्वेन तादृशविविदिषासाधनभूतकर्मणां तदर्थमनुष्ठेयत्वात् कर्म आवश्यकमेवेति दर्शयति - **यद्यपीति** । **ध्यानरूपस्येति** । न हि त्वदुक्तं वेदनं मोक्षसाधनमनुपपन्नत्वात् । अतोऽस्य ध्यानरूपत्वेन यावज्जीवमनुवृत्त्यावश्यकतया तदर्थं विविदिषानुवृत्तिरावश्यकीति भावः । ध्यानरूपत्वेऽप्येकदिनसाध्यत्वं न सम्भवतीत्यत उक्तं - **अहरहरिति** । अहरहरनुष्ठानेन दृष्टोपकारं दर्शयति - **अभ्यासेति** । **अभ्यासाधेयातिशयस्य** = अभ्यासनिष्पाद्यसाक्षात्कारात्मकवैशद्यवतः । **आप्रयाणादिति** । इदञ्च संवत्सरैतद्देहाद्यवधिकप्रतिदिनानुष्ठानेनास्यासिद्धिमभिप्रेत्योक्तम् । **तदुत्पत्तये** = विविदिषोत्पत्तये । ''विविदिषोत्पत्तौ....विनियुज्यन्ते'' इति भाष्यस्वारस्यात् तदुत्पत्तय इत्यस्य विविदिषोत्पत्तय इत्यर्थः स्वीकर्तव्यः । अयमाशयः - इच्छानिवृत्तिः विषयसिद्धयेति सर्वसम्मतम् । विविदिषारूपेच्छाया वेदनरूपस्य ध्यानस्यासकृदावृत्तस्याप्रयाणादनुवर्तनीयस्य सिद्धावेव निवृत्तिः । एवञ्च प्रयाणपर्यन्तं ध्यानानुवृत्त्या तदर्थविविदिषाया अपि तावत्पर्यन्तमनुवर्तनीयत्वम् । तत्साधकयज्ञादीनामपि यावज्जीवमनुष्ठेयत्वसिद्धिरिति । अत्र प्रत्ययसहितवाक्यस्वारस्यमवलम्ब्य विविदिषासाधकत्वञ्च यज्ञादीनामभ्युपगम्योक्तम् । एवमपि यज्ञादयो यावज्जीवमनुष्ठेया एवेति साधितम् । वस्तुतः सन्रहितबहुवाक्यश्रवणात् यज्ञादीनां ध्यानरूपवेदनसाधनत्वं स्पष्टमवगम्यत इत्युत्तरत्र भाषिष्यत इत्यवधेयम् । **सर्वाणि** = तत्तदधिकार्यनुगुणानि सर्वाणि ॥

ननु कर्मणां विविदिषार्थत्वे कर्मणा विविदिषायां जातायां मध्ये कर्मानुष्ठानं कुतः? उच्यते । इच्छारूपविविदिषाया मध्ये विच्छेदे वेदनस्यापि विच्छेदः स्यादिति कर्मानुष्ठानस्यावश्यकत्वात् । न हि सकृदुत्पन्नैव विविदिषा वेदनानुवृत्तिं

**वक्ष्यति च** - (शा 4.1.12.) **'आप्रयाणात् तत्रापि हि दृष्टम्'**, (शा.4.1.1) **'अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्**, (शा 3.4.33.) **'सहकारित्वेन च' इत्यादिषु ।**

**वाक्यकारश्च ध्रुवानुस्मृतेर्विवेकादिभ्य एव निष्पत्तिमाह** (वाक्यग्रन्थः)-**'तल्लब्धिर्विवेकविमोकाभ्यासक्रिया-कल्याणानवसादानुद्धर्षेभ्यः सम्भवान्निर्वचनाच्च' इति । विवेकादीनां स्वरूपं चाऽऽह - 'जात्याश्रयनिमित्ता-दुष्टादन्नात् कायशुद्धिर्विवेक' इति । अत्र निर्वचनम्**, (छा. 7.26) **'आहारशुद्धौ सत्त्वशुद्धिः; सत्त्वशुद्धौ ध्रुवा**

---

साधयेत्, अदर्शनात् । न हि सकृत् बुभुक्षया भोजनानुवृत्ति र्दृश्यते । ननु प्राचीनसुकृतवशादुत्तरत्र वेदानानुवृत्तिसिद्धिरिति चेत् ? तर्हि पूर्वविविदिषाप्यनपेक्षिता । प्राचीनसुकृतवशादेवास्या अपि सिद्धेः । ननु कर्मापि मास्तु विविदिषापि मास्तु, वेदनस्य तु प्राचीनसुकृतवशात्सिद्धिरिष्यत इति चेत्, मैवं वेदान्तविचारवैयर्थ्यापत्तेः । 'स खल्वेवं वर्तयन् यावदायुष'मित्याप्रयाणं ध्यानरूपवेदनाङ्गतया कर्मणोऽनुष्ठानस्य बोधितत्वेन तत्परित्यागस्यानौचित्याच्च । एतद-भिप्रायेणोक्तार्थे सूत्राणि दर्शयति - **वक्ष्यति चेति** । प्रथमसूत्रेण कर्मणो यावदायुरनुष्ठेयत्वं बोधितम् । द्वितीयेन विद्याङ्गत्वं ज्ञापितम् । तृतीयेनाश्रमाङ्गस्यापि तस्य विद्यार्थत्वमप्यस्तीति विनियोगपृथक्त्वं व्यञ्जितम् । एवं सूत्र-प्रदर्शनेनोक्तार्थानङ्गीकारे सूत्रविरोधः स्पष्टीकृतः ॥

अथ साम्प्रदायिकत्वसिद्ध्यै आह - **वाक्येति** । एवकारः साधनचतुष्टयव्यवच्छेदार्थः । **तल्लब्धिरिति** । तच्छब्देन ध्रुवानुस्मृतिः परामृश्यते । उपासनं 'स्याद्ध्रुवानुस्मृति'रिति प्रकृतत्वात् । एतदभिप्रायेणैव 'ध्रुवानुस्मृते'रिति पूर्वं भाषितम् । **विवेकेत्यादि** । अत्रेतरेतरयोगार्थे द्वन्द्वः । तेन समुदितानामेव विवेकादीनां ध्रुवानुस्मृतिसाधनत्वमिति सिद्धम् । अन्यतमेन दुष्करा । सम्भवति समुच्चये विकल्पाश्रयणमप्ययुक्तम् । अष्टदोषदुष्टो हि विकल्पः । 'चार्थे द्वन्द्वः' । समुच्चयान्वाचयेतरेतरयोग समाहाराश्चार्थाः । 'ईश्वरं गुरुञ्च भजस्व' इति समुच्चयस्य 'भिक्षामट गाञ्चानय' इत्यन्वाचयस्य, 'रामकृष्णौ' इतीतरेतरयोगस्य, 'संज्ञापरिभाष'मिति समाहारस्य चोदाहरणम् ।

ननु समुच्चयस्येतरेतरयोगस्य च भिन्नत्वादत्रेतरेतरयोगाश्रयणे कथं समुच्चयलाभः । कथं वा समुच्चयाश्रयणे इतरेतर-योगलाभ इति चेत् - समुच्चयो द्विविधः । अन्वाचयसहपठितः, विकल्पप्रतिसम्बन्धी चेति । प्रथमस्योदाहरणं 'धवखदिरौ च्छिन्दी'ति । न हि धवखदिरयोश्छेदनस्य एकस्मिन्कार्ये मिथः सापेक्षत्वमिति एतादृशस्थले प्रथमः । यत्रैकस्मिन्कार्ये मिथस्सापेक्षाणामन्वयस्तत्र द्वितीयः । यथाऽत्रैवेति । प्रथमद्वितीययो र्न समासः, अन्यत्र समास इति विवेकः ।

अथैवं सति कर्मणस्तत्साधनत्वमभ्युपगम्य तावन्मात्रस्य पूर्ववृत्तत्वभाषणमनुपपन्नम् । मैवम् । अत्र साधनसप्त-केषु क्रियारूपकर्मण उपादानात्कर्मणस्साधनत्वभाषणं नानुपपन्नम् । कर्मातिरिक्तस्य विवेकादेः साधनत्वन्तु न परित्यक्तम् । अन्योक्तसाधनचतुष्टयस्यैव पूर्ववृत्तत्वनिषेधात् । अतस्तदभिमतविवेकाद्यपि साधनतयाऽभ्युपगतमेव । परन्तु कर्मव्यति-रिक्तध्यानसाधनभूतत्वदुक्तविवेकादीनां ब्रह्ममीमांसाश्रवणनिष्पाद्यत्वेन नैतेषां विचारपूर्ववृत्तत्वसम्भवः । ध्यानोपयुक्त-कर्मणस्तु कर्ममीमांसावसेयत्वेनापेक्षितकर्मविचारस्य पूर्ववृत्तत्वमावश्यकमिति तावन्मात्रस्य पूर्ववृत्तत्वमुक्तमित्यदोषात् । अत एव कर्मण इव शमादिरूपविमोकस्यापि साधनत्वमिष्यते । परन्त्वेतत् ब्रह्ममीमांसावसेयमिति न ब्रह्ममीमांसा-पूर्ववृत्तम् । भाषिष्यते चोपरिष्टात् '**अपि च नित्यानित्यवस्तुविवेकादयश्चे**'ति । न च कर्मणः शमादीनां च साधनत्वे परस्परव्याघातः । कर्मणां विहितप्रवृत्तिरूपत्वेन शमादीनामविहितनिषिद्धादिनिवृत्तिरूपत्वेन च भिन्नविषयत्वेन विरोधाभावात् । **सम्भवात्** = उपपत्तेः । **निर्वचनात्** = श्रुतिस्मृतिभ्यः ।

ननु वाक्यकारेणापि नित्यानित्यवस्तुविवेक एव विवेकशब्देन विवक्षितः । अतस्तन्निषेधः कथं क्रियत इत्यत

**स्मृतिः' इति । 'विमोकः कामानभिष्वङ्गः' इति ।** (छा. 3.14.1) **'शान्त उपासीत' इति निर्वचनम् । 'आरम्ब (म्भ)णसंशीलनं पुनःपुनरभ्यास' इति । निर्वचनञ्च स्मार्तमुदाहृतं भाष्यकारेण,** (गी.8.6.) **'सदा तद्भाव-भावित' इति । 'पञ्चमहायज्ञाद्यनुष्ठानं शक्तितः क्रिया' इति । निर्वचनम्,** (मु 3.1.4) **'क्रियावानेष ब्रह्मविदां बरिष्ठः',** (बृ.6.4.22.) **'तमेतं वेदानुबचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति च । 'सत्यार्जवदयादानाहिंसानभिध्याः कल्याणानि' इति । निर्वचनम्,** (मु 3.1.5.) **'सत्येन लभ्यः',** (प्र 1.15,16), **'तेषामेवैष.....विरजो ब्रह्मलोक' इत्यादि । 'देशकालवैगुण्यात् शोकवस्त्वाद्यनुस्मृतेश्च तज्जं दैन्यमभास्वरत्वं**

---

आह - **विवेकादीनामिति** । अत्र चकारः विवेकस्वरूपे नास्माभिर्विवदनीयं, तेनैव तत्स्वरूपस्य निर्णीतत्वादित्यभिप्राय-सूचकः । **जातीति** । जातिदुष्टं = कलञ्जादि । **आश्रयदुष्टं** = पतितान्नादि । **निमित्तदुष्टं** = कृमिकेशाद्युपहतम् । **कायशुद्धि र्विवेक** इति । अशुद्धाद्विवेचनं विवेकः । अत्र स्वदेहस्य विशुद्धाहारसेवनया सत्त्वगुणोन्मेषात् शुद्धिः विवेक इति भावः । **सत्त्वशुद्धिरिति** । सत्त्वस्यान्तः करणस्य सत्त्वगुणस्य वा शुद्धिः । **कामाभिष्वङ्गः** = कामेऽत्यादरः । अभिष्वङ्गश्च विषयानुभवं विना स्वात्मनोऽवस्थातुमशक्यत्वम् । **आरम्भणेति** । **आरम्भणं** = आलम्बनं शुभाश्रयः । तस्य संशीलनम् अभ्यसनम् । पुनः पुनरारम्भणसंशीलनमभ्यास इत्यर्थः । अत्र पुनः पुनरित्युक्त्या शुभाश्रयसंशीलन-रूपाभ्यासस्य व्यापृतमनस्केनानुष्ठीयमानत्वमुक्तम् । तेन धारणारूपत्वसिध्या नात्माश्रयः । **स्मार्तमुदाहृतं भाष्यकारेणेति** । अत्र श्रौतनिर्वनस्यास्पष्टार्थत्वादुपबृंहणरूपस्मृतिः प्रमाणतया प्रदर्श्यत इति भावः । पूर्वत्रापि भाष्यकारेणैव श्रौतनिर्वचनं दर्शितम् । अत्र स्मार्तमिति वा भावः । यद्वा पूर्वत्र वाक्यकारेण दर्शितम् । अत्र **भाष्यकारेणेति** । अत्र भाष्यकारः ब्रह्मनन्दिः । वाक्यव्याख्याकारो द्रमिडाचार्यः । **पञ्चेति** । अत्र भूतयज्ञादिपञ्चकमुच्यते । देवयज्ञः पितृयज्ञः भूतयज्ञः मनुष्ययज्ञः ब्रह्मयज्ञ इति पञ्चमहायज्ञाः । एतेषामनुष्ठानमवश्यं कार्यम् । परमैकान्तिना प्रपन्नेनापि न त्याज्यम् । तस्य 'देव-र्षिभूताऽऽत्मनृणां पितृणां न किङ्करो नापि ऋणी च राजन् सर्वात्मना यः शरणं शरण्यम्' इति स्थितावपि विहितत्वा-देतेषामनुष्ठानमावश्यकम् । वैश्वदेवोपि कार्यः । अन्यथा प्रत्यवायो भगवन्निग्राहरूपः । यद्यपि पञ्चसूनाः गृहस्थस्य चूल्ली पेषिण्युपस्करी । खण्डिनी सोदकुम्भश्च' इति प्रमाणबलात् हिंसाजनितपापनिवृत्त्यर्थं विधानमिति भायात् । तथापीदं प्रयोजनं दृष्टे आनुषेगिकम् । 'वैश्वदेवस्तु कर्तव्यः पञ्चसूनापनुत्तये' इतीदमपि एतदभिप्रायकम् । 'सायं प्रातस्तु कुर्वीत वैश्वदेवं यथाविधि । महतः पञ्चयज्ञांस्तु दिवैवेत्याह गौतमः' इति सन्ध्यावन्दनादेरिव नित्यत्वेन कर्तव्यत्वबोधनात् । एतादृशं वैश्वदेवं कृत्वा पश्चात्पञ्चमहायज्ञाद्यनुष्ठानमपि कार्यम् । उभयमपि विभिन्नं कर्म, नैकम् । प्रमाणे पृथगुक्तत्वात् । देवताभेदात् । नामभेदात् । वैश्वदेवस्य **प्रातस्सायं** कर्तव्यत्वबोधनात् । दिवैवेति रात्रौ पञ्चमहायज्ञनिषेधाच्च । सर्वदेवतो-द्देश्यककर्मरूपत्वात् वैश्वदेव इति नाम । **शक्तित** इति । काम्यत्वेऽप्यस्य न सकलाङ्गोपसंहारः कार्यः । यथाशक्त्नुष्ठानस्य वचनबलसिद्धत्वादिति भावः । **क्रियावानिति** । अनेन निर्वचनेन कर्मणां विद्यायामेवान्वयः स्पष्टीकृतः ।

ननु 'क्रियावानेष ब्रह्मविदां वरिष्ठ' इत्यनेन निष्क्रियब्रह्मविदः सद्भावस्सूच्यते । अतः कथं कर्मणां विद्याङ्गत्वम्? उच्यते । क्रियाशब्दस्य पूर्वप्रस्तुतमहायज्ञादिप्रशस्तक्रियापरत्वेन तादृशक्रियाया विद्यापौष्कल्यहेतुत्वोक्ते र्दोषाभावात् । ब्रह्मविद्यानिष्ठानां विदुराणां तत्तदुचितकर्मानुष्ठानस्य स्थाप्यमानत्वाच्च । **अनाशकेन** = फलाभिसन्धिरहितेन । इदञ्च यज्ञादिसर्वविशेषणम् । यद्वाऽनशनेनेत्यर्थः । तपोमात्रविशेषणम् । **सत्यं** = भूतहितं यथार्थञ्च वाक्यम् । **आर्जवं** = करणत्रयसारूप्यम् । **दया** = स्वार्थनिरपेक्षपरदुःखापाचिकीर्षा । **दानं** = स्वद्रव्यस्य परस्वत्वापादनम् । लोभराहित्यं वा । प्रबलफलाजनकतादात्विकवेदनाजनकव्यापारो हिंसा । तदभावोऽहिंसा । **अभिध्या** = परकीये स्वत्वबुद्धिः वृथा-चिन्ता परतापकरचिन्ता वा । तद्राहित्य**मनभिध्या** । देशेति । **वैगुण्यादित्युभयत्रान्वेति** । शोच्यत्वमनेनेति शोकशब्दः

**मनसोऽवसाद' इति । तद्विपर्ययोऽनवसादः । निर्वचनम्,** (मु 3.2.4) **'नायमात्मा बलहीनेन लभ्य' इति । 'तद्विपर्ययजा तुष्टिरुद्धर्ष' इति । तद्विपर्ययोऽनुद्धर्षः । अतिसन्तोषश्च विरोधीत्यर्थः । निर्वचनमपि,** (बृ 6.4.23) **'शान्तो दान्त' इति । एवं नियमयुक्तस्याऽऽश्रमविहितकर्मानुष्ठानेनैव विद्यानिष्पत्तिरित्युक्तं भवति ।**

**तथा च श्रुत्यन्तरम्,** (ई.11.) **'विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥' इति । अत्राविद्याशब्दाभिहितं वर्णाश्रमविहितं कर्म । अविद्यया - कर्मणा, मृत्युं - ज्ञानोत्पत्तिविरोधि प्राचीनं कर्म, तीर्त्वा - अपोह्य, विद्यया = ज्ञानेन, अमृतं - ब्रह्म, अश्नुते - प्राप्नोतीत्यर्थः ।**

---

शोकहेतुपरः शोकनिमित्तं वस्त्विति वा विग्रहः । आदिशब्दो भयनिमित्तपरः । अतीतागामिविषये शोकभये । **अभास्वरत्वं** = भास्वरत्वाभावः उपयुक्तार्थप्रकाशनाक्षमत्वमिति यावत् । ततश्च देशकालवैगुण्याच्छोकवस्त्वाद्यनुस्मृतेश्च मनसोऽभास्वरत्वम् । अवसाद इत्यर्थः । तादृशाभास्वरत्वविवरणमेव **तज्जं दैन्यमिति** । शोकवस्त्वाद्यनुस्मृतिजन्यं, मनसि जन्यं वा तदर्थः । यद्वा तादृशवस्त्वाद्यनुस्मृतिजन्यं दैन्यमिति यत् यच्च तज्जंदैन्यं = तादृशदैन्यजदैन्यं तदवासाद इत्यर्थः । तदाऽभास्वरत्वमिति दैन्यशब्दार्थविवरणम् । **तद्विपर्ययोऽनवसाद** इति भाष्यवाक्यम् । अवसादनिरूपणेन तद्विपर्ययानवसादो निरूपितो भवतीति वाक्ये तन्निरूपितमिति भावः । **बलहीनेन** = मनोबलहीनेन । **तद्विपर्ययजेति** । देशकालसाद्गुण्यात् प्रियवस्त्वाद्यनुस्मृतेश्च जन्या तुष्टिः उद्धर्ष इति भावः । उत्कृष्टो हर्षः **उद्धर्षः** । उत्कृष्टत्वं च पूर्वोक्तरूपम् ।

नन्वसन्तोषस्य कथं साधनत्वमित्यत्राह - **अतिसन्तोष** इति । असन्तोषस्य विरोधित्वसूचकश्चकारः । एवं वाक्यकाराभिप्रायं तद्ग्रन्थप्रदर्शनपूर्वकं प्रदर्श्य तद्ग्रन्थतात्पर्यार्थं निगमयति - **एवं नियमेति** । **एवं नियमयुक्तस्य** = विवेकविमोकादिरूपशमदमादिनिवृत्तिधर्मयुक्तस्य । केवलशमादेः केवलकर्मणो वा विद्यासाधनत्वब्यवच्छेदक एवकारः । शमदमादियुक्तत्वेऽपि कर्मानुष्ठानाभावे विद्यानिष्पत्त्यभावबोधको वा । कर्मणोऽपेक्षितत्वे श्रुत्यन्तरं प्रमाणतया प्रदर्शयति - **तथा** चेति । उक्तार्थबोधिका अन्या श्रुतिरप्यस्तीत्यर्थः । यद्वा सन्प्रत्ययरहितत्वेन स्फुटार्था श्रुतिरेवास्तीत्यन्तरशब्दस्याभिप्रायः । ततश्च सन्रहितप्रदर्श्यमानैतच्छ्रुत्यानुगुण्यात् सन्प्रत्ययसहितश्रुतिरपि व्याख्येयेति भावः । विद्याञ्चेति चकारावुक्तसमुच्चयार्थौ तत्तद्विरोधिद्योतकौ, तत्तदितिकर्तव्यता-विशेषद्योतकौ वा ।

परविद्यां तदङ्गभूतकर्मरूपाविद्याञ्च सह = सहिततयाऽविनाभूततया कार्यकारणभावेनेति यावत् । **यो वेद सः** कर्मानुष्ठायापगतज्ञानप्रतिबन्धको भूत्वा विद्यां सम्पाद्य ब्रह्म प्राप्नोतीत्यर्थः । अत्र च सहयोगश्रवणात् कर्मज्ञानयोः समसमुच्चय इति नाशङ्कनीयः । यज्ञेनेति तृतीयाश्रुत्या कर्मणामङ्गत्वबोधनात् । न च 'यज्ञेने'ति 'विद्याञ्चेति' श्रुत्योरर्थनिर्णये परस्परसापेक्षत्वम् । यज्ञादीनामङ्गत्वबोधने विद्याञ्चेत्यस्या अनपेक्षणात्, विविदिषायां नाङ्गत्वम् । किन्तु वेदन एवेत्यस्यैवापेक्षणात् । उदाहृतश्रुतेरर्थं वर्णयति - **अत्रेति** । अनेन 'क्षरं त्वविद्या' 'अनात्मन्यात्मबुद्धिर्या, इत्यादावर्थान्तरवाचकत्वे न क्षतिः । अत्र तु 'आत्मन्येवानुपश्यति' 'कुर्वन्नेवेह कर्माणि' इति ज्ञानकर्मणोः प्रस्तुतत्वात्कर्मवाचकत्वमेवेति भावः । **ज्ञानोत्पत्तिविरोधीति** । एतेन ज्ञानकर्मणोः समसमुच्चयपक्षो व्यावर्तितः ।

अयं भावः - कर्म द्विविधम् — ज्ञानोत्पत्तिविरोधि, प्राप्त्युत्पत्तिविरोधीति । तत्र कर्मणा ध्यानोत्पत्तिविरोधिकर्मनिरासः । 'यज्ञेन विविदिषन्ति' 'कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्तते' इत्यादिश्रुतिस्मृतिभ्यः कर्मणो **ज्ञानोत्पत्तिविरोधि**कर्मनिरासबोधनात् । ध्यानेन तु प्राप्त्युत्पत्तिविरोधिकर्मनिरासः । 'एवमेवंविदि पापं कर्म न श्लिष्यते' । 'क्षीयन्ते चास्य कर्माणि' इत्यादि श्रुतिबलादिति भावः । **प्राचीनमिति** । इदं ध्यानस्येवोत्तराघाविरोधित्वादुक्तम् ।

**मृत्युतरणोपायतया प्रतीता अविद्या - विद्येतरत् विहितं कर्मैव । यथोक्तम्,** (वि पु,6.2.) **'इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः । ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया ॥' इति ॥**

**ज्ञानविरोधि च कर्म पुण्यपापरूपम् । ब्रह्मज्ञानोत्पत्तिविरोधित्वेनानिष्टफलतया उभयोरपि**

---

**अपोह्येति** । मृत्युं प्राप्य वर्तमान इत्युक्तौ स्वरसार्थभङ्गः, अध्याहारप्रसङ्गश्च । वेदान्तं तरति सेतुं तीर्त्वा इत्यादौ त्वगत्या स्वरसार्थभङ्ग इति ।

नन्वेतावता साध्यसाधनद्वित्वमङ्गीकृतं भवति । विरुद्धश्चेदं '**अविद्यानिवृत्तिरेव मोक्षः सा च ब्रह्मविज्ञानादेव भवतीति** हि पूर्वं भाषितम् । उच्यते । ध्यानोत्पत्तिविरोधिकर्मनिवृत्तिरूपमृत्युतरणं कर्मनिष्पाद्यम् । ब्रह्मप्राप्तिस्तु ध्याननिष्पाद्या । या तु धीसङ्कोचनिवृत्तिरूपाविद्यानिवृत्तिः, सा भावान्तराभावनयेन ब्रह्मप्राप्तिरूपैव । अतो ध्याननिष्पाद्यं न फलद्वयम् । नाविद्यानिवृत्तिरूपब्रह्मप्राप्तिसाधकमपि साधनद्वयम् । कर्मणश्च परम्परया ध्याननिष्पादकत्वात् । अतो न पूर्वोक्तविरोध इति । एवं श्रुत्यर्थवर्णनेन 'कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः' इत्युपबृंहणार्थोऽपि दर्शितो भवति । **कषायपक्तिः** = पापपाकनिमित्तानि । 'धर्मेण पापमपनुदती'त्यैकार्थ्यात् । **गतिः** गत्युपायः । उभयत्रापि कार्ये कारणोपाचारः । यद्वा पच्यतेऽनेन पक्तिः पाकनिमितम् । गम्यतेऽनेनेति गतिः । प्राप्तिसाधनमित्यर्थः । अत्रापि कर्मणां पापनिबर्हणद्वारा ज्ञानसाधनत्वमेवोक्तम् । न तु विविदिषासाधनत्वं, नापि मुक्तिसाधनत्वम् । 'ततो ज्ञानं प्रवर्तत' इति श्रवणात् । अतः समुच्चयवादोऽपि निरस्तः । एवमविद्याशब्दस्य वर्णाश्रमविहितकर्मवाचकत्वे युक्तिं दर्शयति - **मृत्युतरणेति** । मृत्युतरणोपायतया प्रतीतत्वं तत्र हेतुः । अयश्च वस्तुसामर्थ्यरूपः । 'अविद्यया: मृत्युं तीर्त्वा' इति अविद्याया मृत्युतरणसाधनत्वं प्रतीतम् । तच्च न भवदुक्ताविद्यायाः, मृत्युसाधनत्वेन व्याघातात् । 'प्राप्य स्थितः' इत्यर्थवर्णनन्तु स्वारस्यादिभङ्गेनासम्भवि । अतस्तत्साधनत्वं कर्मण एवेति भावः ।

नन्वास्तां कर्मणो मृत्युतरणोपायत्वम् । अविद्याशब्दस्य कर्मवाचकत्वे स्वारस्यभङ्गस्स्यात् ? मैवमित्याह - **विद्येतरदिति** । अब्राह्मणादिशब्दवत्तदन्यवाचकत्वेन न स्वारस्यमङ्ग इति भावः । **विहितमिति** - वर्णाश्रमेत्यादि । अविहितकर्मणो वर्णाश्रमाननुगुणकर्मणश्च तत्साधनत्वाभावात् । ननु विद्येतरत्वं विद्यान्यस्य सर्वस्यापि सम्भवतीत्यत्राह - **कर्मैवेति** । एवकारेण कर्मान्यस्याविद्याशब्दवाच्यत्वव्युदासः । कर्मान्यस्यापि विद्यान्यत्वसम्भवेऽप्यत्रोक्तमृत्यु-तरणोपायत्वं नास्तीति न कर्मान्यसङ्ग्रह इति भावः ।

ननु कर्मणोऽपि मृत्युतरणोपायत्वमप्रामाणिकम् । इयश्च श्रुतिरस्फुटार्था इत्यत्र एतदुपब्रह्मणमेवात्रत्याविद्या शब्दस्य कर्मवाचकत्वे पर्याप्तमित्याभिप्रेत्याह - **यथोक्तमिति** । **ज्ञानव्यपाश्रयः** प्रतिष्ठितागमोत्थज्ञानवान् । **ब्रह्मविद्यां** = विवेकादिजन्यपरविद्याम् । **अधिष्ठाय** - साध्यत्वेन स्वीकृत्य । **अविद्यया** = कर्मणा । **मृत्युं** = **पूर्वोक्तं** कर्म । **तर्तुं** = तरितुमपोहितुम् । **सुबहून् यज्ञान् इयाज** = चकारेत्यर्थः । अत्र ब्रह्मविद्याकामनयाऽविद्यया मृत्युतरणार्थं बहुयज्ञानुष्ठान-मुच्यते । यद्यत्राविद्याशब्दस्य न कर्मार्थकत्वम्, तदा मृत्युतरणार्थतया यज्ञानुष्ठानबोधनमसङ्गतं स्यात् । कर्मान्याविद्याया एवानुष्ठेयत्वात् । नन्वविद्ययेति व्यर्थम् । 'मृत्युं तर्तुं यज्ञान् इयाज' इत्येतावतैवोक्तार्थसम्पत्तेः ? मैवम् । यागेन स्वर्गं सम्पादितुं ज्योतिष्टोमं चकार इतिवदुपपत्तेः । उक्तसमभिव्याहारबलेन श्रुत्युक्ताविद्याशब्दस्य कर्मवाचकत्वलाभेनाधिक-प्रयोजनसद्भावाच्च । श्रुत्युपबृंहणं हीदमिति भावः । एवं तीर्त्वा इत्यस्य प्राप्त्यर्थत्वशङ्कनमप्यनेन निरस्तम् । न हि ब्रह्मविद्याकामनयाऽविद्यया मृत्युं प्राप्तुं कश्चित् बहुयज्ञादिकर्मानुतिष्ठति ।

ननु 'धर्मेण पापमपनुदती'ति पापकर्मण एवापनोद्यत्वमुक्तम् । तत्कथं प्राचीन कर्मेति पुण्यस्याप्यपनोद्यत्वमुच्यत

**पापशब्दाभिधेयत्वम् । अस्य च ज्ञानविरोधित्वं ज्ञानोत्पत्तिहेतुभूतशुद्धसत्त्वविरोधिरजस्तमोविवृद्धिद्वारेण । पापस्य च ज्ञानोदयविरोधित्वम्,** (कौ 2.3.65) **'एष एवासाधु कर्म कारयति तं, यमधो निनीषति' इति श्रुत्याऽवगम्यते । रजस्तमसोर्यथार्थज्ञानावरणत्वं सत्त्वस्य च यथार्थज्ञानहेतुत्वं भगवतैव प्रतिपादितम्,** (गी 14.17) **'सत्त्वात् सञ्जायते ज्ञानम्' इत्यादिना । अतश्च ज्ञानोत्पत्तये पापं कर्म निरसनीयम् । तन्निरसनश्च अनभिसंहितफलेनानुष्ठितेन धर्मेण । तथा च श्रुतिः,** (तै.नारा.(63)144.) **'धर्मेण पापमपनुदति' इति । तदेवं ब्रह्मप्राप्तिसाधनं ज्ञानं सर्वाश्रमकर्मापेक्षम् । अतोऽपेक्षितकर्मस्वरूपज्ञानं केवलकर्मणामल्पास्थिरफलत्वज्ञानश्च कर्ममीमांसावसेयमिति, सैवापेक्षिता ब्रह्मजिज्ञासायाः पूर्ववृत्ता वक्तव्या ॥**

---

इत्यत्राह - **ज्ञानेति** । पापस्येव पुण्यस्यापि ब्रह्मध्यानोत्पत्तिविरोधित्वेन निरसनीयत्वमिति भावः । अथापि धर्मेण पापमित्यत्र पापशब्दवाच्यत्वं कथमित्यत्राह - **ब्रह्मज्ञानेति** । अयमाशयः अनिष्टफलसाधनतया शास्त्रवेद्यत्वस्यैव पापलक्षणत्वात् मुमुक्षोः स्वर्गादिफलसाधनस्य पुण्यस्यापि ब्रह्मज्ञानविरोधित्वमिति । 'सर्वे पाप्मानोऽतो निवर्तन्ते' इत्यविशेषेण पुण्यस्यापि क्रोडीकारात् पुण्यपापोभयविनिर्मुक्ते 'अपगतपाप्मे'त्यविशेषेण श्रुतिप्रयोगात् । 'स एव धर्मस्सोऽधर्मः तं तं प्रति नरं भवे'दिति मुमुक्षुविषये स्वर्गादिसाधकस्य धर्मस्याप्यधर्मत्वबोधनाच्च पुण्यमपि पापशब्दबोध्यं भवतीति । कर्मणो ज्ञानविरोधित्वमुपपादयति - **अस्येति** । एतेन पापकर्मणो न साक्षाज्ज्ञानोदयविरोधित्वमिति दर्शितम् । **शुद्धसत्त्वं** — रजस्तमोगुणानभिभवेनोपयुक्तार्थप्रकाशकं सत्त्वम् । **इति श्रुत्याऽवगम्यत** इति । **यमधो-** निनीषति तमसाधुकर्म कारयतीत्युक्त्या अधोनयनहेतुत्वमसाधुकर्मणः प्रतीयत इति भावः । नात्राधोनयनं नरकादिप्रापणरूपम् । 'यमेभ्यो लोकेभ्य उन्निनीषती'ति साधुकर्मणोऽपवर्गप्रापकत्वबोधनात् । तस्य च वचनान्तरबलेन सद्वारकत्वस्थापनात् द्वारभूतोपासनसाधकत्वस्य साधुकर्मणि लाभेन तत्प्रत्यनीकासाधुकर्मणोऽपवर्गोपायभूतज्ञानप्रतिबन्धकत्वलाभेन ज्ञानानुत्पत्तिपरत्वात् । नरकप्रापकरूपत्वेऽपि न दोषः, ज्ञानानुदयद्वारैव तस्यापि वक्तव्यत्वात् । उक्तं च 'न देवाः यष्टिमादाय रक्षन्ति पशुपालवत् । यं हि रक्षितुमिच्छन्ति बुद्ध्या सम्योजयन्ति तम्' । 'यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम् । बुद्धिं तस्यापकर्षन्ति सोऽपनीतो न पश्यति' । 'पुण्यः पुण्यं वर्धयति । पापं प्रज्ञां नाशयती'त्यादिकम् । ' यमध' इत्यत्र यच्छब्दोऽधोनीनिषाहेतुभूतपापविशिष्टपरः । अतो न भगवतो वैषम्यनैर्घृण्यापत्तिः । एवं पापस्य ज्ञानविरोधित्वं सप्रमाणमुपदर्शितम् । अथ रजस्तमसोर्ज्ञानविरोधित्वं सत्त्वस्य ज्ञानहेतुत्वञ्च सप्रमाणं दर्शयति - **रजस्तमसोरिति** । **निरसनीयमिति** । अनिरासे उपायविरोधिपापवशेन मुमुक्षूणां ज्ञानोत्पत्तिर्न सेप्स्यतीति भावः । **अनभिसंहितफलेनेति** । पापवत्पुण्यस्यापि निरसनीयत्वेन एतन्निरासकत्वं कर्मणो न सम्भवतीति शङ्काव्यावृत्त्यर्थमिदमुक्तम् । अभिसंहितस्वर्गादिफलककर्मणोऽनिरासकत्वेऽप्यतथाभूतस्य तथात्वं सम्भवतीतिभावः । **अनुष्ठितेन धर्मेणेति** । पापानामनुभवनाश्यत्वेऽपि न निश्शेषपापनाशस्सम्भवति । अनवरतं तेषां सन्तन्यमानत्वात् । 'यद्ब्रह्मकल्पनियतानुभवेऽप्यनाश्यमि'त्युक्तानामनुभवानाश्यत्वाच्च । अतश्शास्त्रोक्तनिष्कृतिरूपधर्मानुष्ठानेनैव तत्सम्भव इति भावः । उक्तार्थे श्रुतिमाह - **तथा चेति** । एतावता कर्मविचारस्य पूर्ववृत्तत्वे किमुक्तं भवतीत्यत्राह - **तदेवमिति** ।

नन्वस्तु ब्रह्मज्ञानस्य सर्वाश्रमकर्मापेक्षत्वम्, कर्मविचारापेक्षत्वं कथमित्यत्राह - **अत** इति । **केवलकर्मणामल्पास्थिरफलत्वज्ञानमिति** । केवलेति भगवदाराधनानात्मकेत्यर्थकम् । नन्वावृत्तिविधानादिभिः कर्मणामल्पास्थिरफलजनकत्वज्ञानसम्भवेन कर्मणस्तादृशफलजनकत्वज्ञानस्य पूर्वमीमांसावसेयत्वेऽपि भगवदाराधनानात्मकस्य तस्य तादृशफलजनकत्वमस्तीतीदं कथं पूर्वमीमासावसेयमिति चेत्, उच्यते । कर्मविचारे देवताविचारमप्यन्तर्भाव्यैव कर्मविचारस्य ब्रह्मविचारपूर्ववृत्तत्वकथनात् तादृशकर्मविचार ब्रह्मविचारयोश्चैकशास्त्र्यङ्गीकाराच्च कर्मदेवताविचारकर्तुः

**अपि च नित्यानित्यवस्तुविवेकादयश्च मीमांसाश्रवणमन्तरेण न सम्पत्स्यन्ते; फलकरणेतिकर्तव्यताधिकारिविशेषनिश्चयादृते कर्मस्वरूप-तत्फल-तत्स्थिरत्वास्थिरत्वात्मनित्यत्वादीनां दुरवबोधत्वात्। एषां साधनत्वं च विनियोगावसेयम्। विनियोगश्च श्रुतिलिङ्गादिभ्यः। स च तार्तीयः।**

---

पुंसः देवताराधनानात्मककर्मणि अस्थिरफलजनकत्वादिनिश्चयसम्भवेनादोषात्। यद्वा तादृशत्वविशिष्टकर्मणः तादृशफलजनकत्वज्ञानं कर्ममीमांसावसेयमित्यत्र न तात्पर्यम्। किन्तु कर्मणां तज्जनकत्वज्ञानं कर्ममीमांसावसेयमित्यत्रैव। केवलेत्युक्तिस्तु वस्तुतो भगवदनाराधनरूपस्य तस्याल्पस्थिरफलजनकत्वमस्तीत्याभिप्रायेण। अतो नानुपपत्तिः। **अवसेयं** = निष्पाद्यम्। **सैवे**त्यत्रैवकारः अपेक्षितैवेतियोजनया कर्ममीमांसाया अनपेक्षितत्वव्युदासकः।

एवं स्वमतस्थापनमुक्तम्। अथ परपक्षप्रतिक्षेपः क्रियते - **अपि चेति**। मीमंसेत्युभयमीमांसापरः। निरुपाधिकनिर्देशेनासङ्कोचात्। मीमांसा न्यायविस्तर इत्युभयत्र प्रयोगात्। **मीमांसाशास्त्रमिति** भागद्वयविषयतया पूर्वम्भाषितत्वात्, उत्तरत्र **आत्मनित्यत्वादीनामिति** भाषणाच्च। मीमांसाश्रवणं विना विवेकाद्यनिष्पत्तौ हेतुमाह - **फलेति**। विशेषशब्दः प्रत्येकं सम्बध्यते द्वन्द्वान्ते श्रूयमाणत्वात्। **फलविशेषः** = भोगो मोक्षश्च। **करणविशेषः** = याग उपासनश्च। **इतिकर्तव्यताविशेषः** = प्रयाजादिकम्, साधनसप्तकञ्च। **अधिकारिविशेषः** = बुभुक्षुः मुमुक्षुश्च। **कर्मस्वरूपं** = साङ्गयज्ञात्मकमुपासनात्मकञ्च। कर्मशब्दस्योपासनोपलक्षकत्वात्। क्रियत इति व्युत्पत्या स्मृतिसन्ततिरूपस्योपासनस्य प्रयत्ननिष्पाद्यत्वाद्वा तद्ग्रहणम्। अत एव 'प्रकाशश्च कर्मण्यभ्यासा'दिति सूत्रम्। तत्रो**पासनात्मके कर्मणि** इति भाषितम्। एवमन्यत्रापि '**यागादिकमुपासनात्मकं च कर्मेति**'। 'मानसैः कर्मदोषै'रिति स्मृतिश्च। **दुरवबोधत्वादिति**। अयमाशयः 'ज्योतिष्टेमेन स्वर्गकामो यजेते'त्यादौ हि विशिष्टबोधोऽपेक्षितः। स च प्रत्येकमङ्गकरणफलादिनिश्चयाधीनः। महावाक्यार्थबोधस्यावान्तरवाक्यार्थनिश्चयाधीनत्वात् प्रत्येकं तत्तन्निश्चयो मीमांसाश्रवणमन्तरा न सम्भवति। इत्थञ्च विशिष्टवाक्यार्थबोधाभावे विशिष्टकर्मस्वरूपबोधः कथम्। कथञ्च तस्य नित्यानित्यफलजनकत्वनिश्चयः। कुतश्च नित्यानित्यवस्तुविवेचनम्। तदभावे च कथमिहामुत्रफलभोगवैराग्यम्। कथञ्च मुमुक्षुत्वम्। शमदमाद्यप्यत्रैव विवेचयिष्यते। आत्मनित्यत्वमप्यत्रैव स्थापयिष्यते। अतो भागद्वयविचारादि एतदर्थं प्रथममावश्यकमिति मीमांसापश्चाद्भाविनः पूर्ववृत्तत्वमनुचितमिति ॥

न ह्यत्र नित्यानित्यवस्तुविवेकः साङ्गाध्ययनजन्यापातप्रतीतितो भवितुमर्हति। तादृशस्य तस्येहामुत्रफलभोगविरागमुमुक्षुत्वहेतुत्वासम्भवात्। आपातप्रतीतेरुभयभागसाधरणत्वेन बुभुत्साक्रमेण विचारक्रमस्य युक्तत्वात्। प्रथमातिक्रमणे कारणाभावाच्च। साङ्गाध्ययनस्यानुष्ठितत्वात्। शास्त्रान्तरेण नित्यानित्यवस्तुविवेकसम्भवेऽपि तस्य वेदान्तविरुद्धत्वान्न वेदान्तापेक्षितत्वम्। 'तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽत्मन्येवात्मानं पश्ये'दिति भवदुक्तशमदमादीनां वेदान्तश्रवणानन्तरभावित्वेन न श्रवणपूर्ववृत्तत्वसम्भवः। 'प्रशान्तचित्ताय शमान्विताये'त्युक्तशमादिकन्तु श्रवणौपयिकावधानमात्रपरमिति न दोषः। इतिहासपुराणादिष्वपि संशयादिबाहुल्यान्न नित्यानित्यविवेकः सुसम्पादः। अन्यथा ब्रह्मस्वरूपस्यापि सुसम्पादत्वेन तद्विचारस्यानपेक्षितत्वापत्तेः। अतो ब्रह्मविचारानन्तरभाव्येव नित्यानित्यवस्तुविवेकः ॥

शमदमादिसाधनसम्पद्विषये विशेषतो दोषमाह - **एषामिति**। **एषां** = शमादीनाम्। **विनियोगः** = अङ्गाङ्गित्वज्ञापनम्। सम्बन्ध इति केचित्। **तार्तीयः** = तृतीयाध्यायोक्तः। अयं भावः शमादीनामङ्गत्वं वक्तव्यं चेत् अङ्गत्वबोधकश्रुत्यादिप्रमाणबलाद्वक्तव्यम्। अङ्गताबोधकत्वञ्च श्रुतिलिङ्गदीनामित्येतत् कर्मविचारघटकतृतीयाध्यायनिर्णेयम्। इत्थञ्च तृतीयाध्यायोक्तन्यायसापेक्षत्वात् कथं कर्मविचारस्य पूर्ववृत्तत्वं नेष्यत इति। इदञ्च निदर्शनार्थमुक्तम्। ब्रह्मविचारो हि

**उद्गीथाद्युपासनानि कर्मसमृद्ध्यर्थान्यपि ब्रह्मदृष्टिरूपाणि ब्रह्मज्ञानापेक्षाणीति इहैव चिन्तनीयानि। तान्यपि कर्माण्यनभिसंहितफलानि ब्रह्मविद्योत्पादकानीति तत्साद्गुण्यापादनानि एतानि सुतरामिहैव सङ्गतानि। तेषाञ्च कर्मस्वरूपाधिगमापेक्षा सर्वम्मता ॥**

---

कर्मविचारोक्तसर्वन्यायसापेक्षः । 'धर्मधीमानभेदाङ्गप्रयुक्तिक्रमकर्तृभिः । सातिदेशविशेषोहबाधतन्त्रप्रसक्तिभिः ॥' इत्युक्ता हि कर्ममीमांसाप्रतिपाद्यविषयाः ।

यदुक्तं कर्माङ्गोद्गीथाद्युपासनस्य कर्मापेक्षत्वेन कर्मविचारस्य पूर्ववृत्तत्वं वक्तव्यमिति तत्समर्थ्यते - **उद्गीथादीति**। अयं भावः - उद्गीथोपासनानि अब्रह्मणि ब्रह्मत्वदृष्ट्या क्रियमाणानि। ब्रह्मस्वरूपमेवाजानता न ह्यन्यत्र ब्रह्मत्वबुद्धिः कर्तुं शक्यते। भृत्ये राजत्वबुद्धिस्तु राजस्वरूपं जानत एव। अतो ब्रह्मज्ञानसापेक्षत्वात् ब्रह्मस्वरूपनिरूपणानन्तरमेव तानि चिन्तनीयानीति अत्रैव ब्रह्मविचारे सङ्गतानि। एवं ब्रह्मविद्याङ्गभूतानभिसंहितफलविशेषकर्मणां प्रबलप्रतिबन्धके सत्यपि झटिति फलप्रदत्वरूपसाद्गुण्यापादकत्वेन ब्रह्मविद्योत्पादकत्वादप्यत्रैव सङ्गतानीति। **कर्मसमृद्ध्यर्थान्यपीति कर्मशेषभूत एवेति** पूर्वपक्षोक्तार्थविवरणम्। **अपिः** विरोधद्योतकः। कर्मसमृद्ध्यर्थत्वेनात्र निरूपणं विरुद्धमिति भावः। ब्रह्मदृष्टिरूपाणीति हेतुगर्भविशेषम्। **सुतरामिहैव सङ्गतानीति**। ब्रह्मज्ञानापेक्षत्वेन ब्रह्मविद्योत्पादकत्वेन चोभयापेक्षा-सत्त्वात्सङ्गत्यतिशय इति भावः। सङ्गतिर्हि शास्त्रप्रतिपाद्यप्रधानार्थानुपयोगित्वेऽपि सादृश्यादिना धीस्थत्वम्। साक्षात्सङ्गतिस्त्वन्यतरापेक्षयोभयापेक्षया वा। अत्र तूभयापेक्षाप्यस्ति। अत एवोक्तं **सुतरामिति**। यद्यप्युद्गीथोपासनानां कर्माङ्गाश्रयत्वात्कर्मापेक्षत्वम्, एवं कर्मणां स्ववीर्यवत्तरत्वापादकत्वेनोद्गीथोपासनापेक्षत्वमित्युभयापेक्षासत्त्वेन कर्म-विचारेऽपि सङ्गतस्तद्विचारः, अथापि तेषां ब्रह्मदृष्टिरूपत्वेनाविदितब्रह्मणः कर्तुमशक्यत्वादिहैव तद्विचारस्सङ्गत इति न दोषः। अत एवोपनिषत्स्वध्ययनम् ॥

**यत्त्वधीतवेदान्तस्यानधिगतकर्मण** इत्यादि शङ्कितम्, तत् वेदान्तेऽपि मुक्त्युपायपरभागमात्रमधीतवतोऽत्र तृतीयाद्यध्यायमात्रश्रवणप्रसङ्गरूपप्रतिबन्ध्या निरस्तम्। तृतीयचतुर्थयोः पूर्वद्विकोक्तन्यायसापेक्षत्वमस्तीति चेद्ब्रह्म-विचारस्यापि कृत्स्नकर्मविचारन्यायसापेक्षत्वमस्ति। एवं सुकृतविशेषात् ब्रह्मविचारमात्रप्रवृत्तिरपि सकृतविशेषाधीन-तृतीयचतुर्थमात्रप्रवृत्तिप्रतिवन्ध्या सुकृतातिशयाधीनब्रह्मविचारनिरपेक्षत्वलक्षणप्रतिवन्ध्या च परिहृता। वस्तुतोऽ-ध्ययनविधिः यथाक्रमं कृत्स्नाध्ययनं विधत्ते। एकदेशाध्यायिनां विध्युल्लङ्घ एव, विध्यनतिलङ्घनेनऽधीतोपनिषद्भाग-विचारस्यैव कर्मविचारः पूर्ववृत्त इति ब्रूमः। गुरूपदेशात् विद्याङ्गकर्मणां ज्ञानमस्तीति चेत्तर्हि तेनैव न्यायेन ब्रह्मज्ञानमप्य-स्तीति ब्रह्मविचारोऽनपेक्षितस्स्यात्। अतस्तदुक्तसाधनचतुष्टयादीनां पूर्ववृत्तत्वे बहूनां दोषाणां सत्त्वात् कर्मविचारस्य पूर्ववृत्तत्वे बह्वीनामुपपत्तीनाञ्च सत्त्वात् कर्मविचार एव पूर्ववृत्तः। न चात्र विरोधापादनं शक्यम्। कर्मणामनित्य-फलकत्वस्यास्वीकारात्। अनभिसंहितकर्मणामेव ह्यङ्गत्वमुक्तम्।

न च भेदवासनाजनकत्वात् ऐक्यज्ञानविरोध इति वाच्यम्। पृथगात्मानमिति भेदज्ञानस्यैव मोक्षोपायत्वप्रतीतेः, ऐक्यज्ञानस्य मोक्षोपायत्वानभ्युपगमात्। 'क्रियावनेष ब्रह्मविदां वरिष्ठ' इति विना सन्प्रत्ययं कर्मणां वेदाङ्गत्वबोधने प्रमाणसत्त्वान्न विविदिषाङ्गत्वं कर्मणाम्। विविदिषन्तीति श्रुतिरपि कर्मणां वेदनाङ्गत्ववादिनां न बधिका। वेदनस्य ध्यानरूपस्याहरह उत्पत्त्यावश्यकत्वात्सदाविविदिषायां सत्यामेव वेदनस्य सिद्धेः कर्मणामावश्यकत्वात्। प्रपञ्चस्य मिथ्यात्वदूषणेन सत्यत्वस्थापनात् मिथ्याभूतबन्धस्य ज्ञानैकनिवर्त्यत्वरूपसामर्थ्यमपि गतम्। शमादेः निवृत्तिरूपत्वेन यज्ञादेः प्रवृत्तिरूपत्वेन विरोधोपि परस्परं भिन्नविषयत्वेन परिहृतः। अतो 'विरोधादप्रमाणत्वात् ... न धीकर्मसमुच्चय' इत्यादि दूषणानि नैव सङ्गतानि। इति सिद्धान्तः ॥

## महापूर्वपक्षः

**यदप्याहुः - अशेषविशेषप्रत्यनीकचिन्मात्रं ब्रह्मैव परमार्थः । तदतिरेकि नानाविधज्ञातृज्ञेयतत्कृतज्ञान-भेदादि सर्वं तस्मिन्नेव परिकल्पितं मिथ्याभूतं** - (छा ६.२.१.)**'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्',** (मु.1.1.5.) **'अथ परा, यया तदक्षरमधिगम्यते, यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुः श्रोत्रं तदपाणिपादमं, नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः',** (तै.आन.1.) **'सत्यं ज्ञानमनन्तं ब्रह्म',**

---

पूर्वं साधनचतुष्टयस्य पूर्ववृत्तत्वे परोक्ता हेतवो निरस्ताः । अथ वस्तुस्वरूपोपदेशपरशास्त्रैः ब्रह्मपारमार्थ्यस्य तदन्यमिथ्यात्वस्य च प्रतीत्या मिथ्यावस्तुनो ज्ञाननिवर्त्यत्वस्यैव दृष्टत्वात् मिथ्याभूतजगन्निवर्तकमपि ज्ञानरूपमेव न ध्यानरूपं भवितुमर्हतीत्युपायपरवाक्येनापि केवलज्ञानरूपोपायस्यैव विधानावश्यकत्वेन कर्मणाश्च तादृशज्ञानानुपयोगिनां न तदपेक्षत्वसम्भवः, प्रत्युत विरोध इति पूर्वोक्तविरोधादीनां सत्त्वेन न कर्मविचारस्य पूर्ववृत्तत्वसम्भवः । अपि तु साधनचतुष्टयस्यैवेत्याशयेनोक्तं विस्तरेण तन्मतमनुभाषते **यदप्याहु**रित्यादिना **सर्वे वेदान्ता आरभ्यन्त इत्यन्तेन** । यच्छब्दः तन्मतसिद्धार्थप्रसिद्धिसूचकः । अपिशब्दस्तस्यैव गौरवप्राधान्यसूचकः । अदूषितार्थसूचको वा । आहुरित्युक्त्या स्वकपोल-कल्पितत्वव्युदासः । बहुवचनात् बहुग्रन्थकारसम्मतिप्रदर्शनम् । प्रमाणान्युपरि प्रदर्शयिष्यन् प्रथमं प्रमेयं प्रतिजानीते - **अशेषेति** । **अशेषविशेषाः** = स्वसजातीयविजातीयस्वगतभेदाः, **तत्प्रत्यनीकं** = तद्रहितम् । यद्वा वक्ष्यमाणज्ञातृज्ञेयादिः अशेषविशेषाः । तत्प्रत्यनीकं तन्निवर्तकं, शुक्तिरिव शुक्तिरूप्यस्य स्वज्ञानेन निवर्तकम् । शून्यत्वपरिहाराय **चिन्मात्रमिति** । चित्त्वञ्च स्वयम्प्रकाशत्वम् । मात्रचा विशेषप्रत्यनीकत्वस्य ज्ञेयत्वादे र्वा व्यावृत्तिः । ब्रह्मैवेत्यत्रैवकारो ब्रह्मान्यस्य परमार्थत्वव्यवच्छेदकः । यद्वा सगुणं ब्रह्म व्यावर्त्यते । परमार्थत्वं तत्त्वावेदकप्रमाणविषयत्वम् ।

ननु सगुणब्रह्मावेदकप्रमाणविषयस्यापि परमार्थत्वमेवेति चेत्, मैवम् । सगुणब्रह्मावेदकानां प्रमाणाभासत्वात् । वक्ष्यति च **वेदान्तवाक्येष्वपि सगुणब्रह्मोपासनपराणा**मित्यादिनाऽमुमर्थम् । अन्यस्यापि प्रतीतिविषयत्वेन परमार्थत्व-शङ्काव्युदासायाह - **तदिति** । **तत्कृतज्ञानभेदः** = ज्ञातृज्ञेयावच्छिन्नवृत्तिज्ञानभेदः । तन्मते कर्मकर्त्रवच्छिन्नं हि ज्ञानम् । स चाहङ्कारविकारः क्रियारूपः । नात्मरूपः । नात्मधर्मोऽपि । निरधिष्ठानभ्रमानुपपत्त्या तस्मिन्नित्युक्तम् । एवकारेणानेकाधिष्ठान-व्युदासः । एकस्मिन्नपि गगनगन्धर्वनगररीत्याऽनेकाध्यासो युज्यत इति भावः । **परिकल्पितमिति** - न स्थितमित्यर्थः ।

एवं प्रतिज्ञाद्वयं कृतम् । अथ श्रुतिसूत्रस्मृतीः प्रमाणयति - **सदेवेति** । सदेवेति विजातीयभेदो व्यावर्त्यते । **एक-मेवेति** सजातीयभेदव्यावृत्तिः । अद्वितीयपदेन स्वगतभेदस्य । **अथ** = प्रस्तूयते । अपरविद्योद्देशानन्तरं वा **परा** = परविद्या । **अक्षरं** = क्षराभाववत् । **अधिगम्यते** प्राप्यते । **अद्रेश्यं** = प्रत्याक्षागोचरं, ज्ञानेन्द्रियागोचरं वा । **अग्राह्यम्** = अनुमानागोचरम् । कर्मेन्द्रियाग्राह्यं वा । **अगोत्रम्** = अनामधेयम् । अनुत्पन्नत्वात्प्रसिद्धगोत्ररहितं वा । **अवर्णं** = नीलादिवर्णरहितम् । **अचक्षुःश्रोत्रं** = ज्ञानेन्द्रियशून्यम् । इदमुपलक्षणम्, एवमग्रेऽपि । **अपाणिपादं** = कर्मेन्द्रियरहितम् । **नित्यं** = कालापरिच्छिन्नम् । **विभुं** = देशापरिच्छिन्नम् । **सर्वगतं** = वस्त्वपरिच्छिन्नम् । **सुसूक्ष्मम्** = दृश्यत्वानुगुणस्थौल्यादि-रहितम् । अनेन तुच्छत्वव्यावृत्तिः, सौक्ष्म्यात्तदनुपलब्धिः । न तु वस्तुनोऽभावादिति भावः । **अव्ययं** = नाशरहितम् । जरादिराहित्येनाशिथिलं वा । **भूतयोनिं** = भूतोपादानम् । **धीराः** = प्रज्ञाशालिनः । **सत्यम्** = अनृतव्यावृत्तम् । **ज्ञानं** = जडव्यावृत्तम् । **अनन्तं** = परिच्छिन्नव्यावृत्तम् । अत्र प्रथमं कारणवाक्योपादानं, तत्रापि 'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च ।' इत्युक्तषड्विध-तात्पर्यलिङ्गोपपन्नत्वेन प्रथमं सद्विद्योपादानम् । अनन्तरं कारणत्वशङ्कितदोषव्युदासाय शोधकवाक्योपादानम् । इत्थञ्च

(श्वे.6.19.) **'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्'**, (के.2.3.) **'यस्यामतं तस्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानताम् ॥'**, (बृ.5.4.2.) **'न दृष्टेर्द्रष्टारं पश्येः ; न मतेर्मन्तारं मन्वीथाः'**, (तै.भृ.) **'आनन्दो ब्रह्म'**, (बृ.4.4.6.) **'इदं सर्वं यदयमात्मा'**, (बृ.6.4.19.) **'नेह नानाऽस्ति किञ्चन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति'**, (बृ.4.4.14.) **'यत्र हि द्वैतमिव भवति...तदितर इतरं पश्यति...यत्र त्वस्य सर्वमात्मैवाभूत्...तत् केन कं पश्येत्...तत् केन कं विजानीयात्'**, (छा.6.1.4) **'वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्'**, (तै.आन..) **'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति'**, (शा.3.2.11) **'न स्थानतोपि परस्योभयलिङ्गं सर्वत्र हि'**, (शा.3.2.3.) **'मायामात्रं तु कार्त्स्न्येनानभिव्यक्त-स्वरूपत्वात्'**, (वि.पु.6.7.53.) **'प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम् । वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसञ्ज्ञितम् ।'**

---

निर्विशेषवस्तुसिद्धिरिति भावः । **निष्कलं** = निरवयवम् । **निष्क्रियं** = क्रियाशून्यम् । **शान्तम्** = ऊर्मिषट्करहितम् । अशनायापिपासे शोकमोहौ जरामृत्यू च ऊर्मयः । **निरवद्यं** = पापरहितम् । स्वाभाविकाविद्यासम्बन्धरहितं वा । **निरञ्जनं** = निर्लेपम् । **यस्येति** - यस्य ब्रह्म मतिविषयो भवतीति मतं स न जानातीत्यर्थः । एतेन ज्ञेयत्वं निषिद्धम् । न दृष्टेरिति ज्ञानव्यतिरिक्त-ज्ञात्रभावः फलितः । **आनन्द** इति नानन्दीति भावः । **इदमिति** - चोरः स्थाणुरितिवद्बाधार्थसामानाधिकरण्यमिति भावः । **नेहेति** । **इह** = जगति परिदृश्यमानं नानाभूतं वस्तु न किञ्चिदपीत्यर्थः । यद्वा **इह** = ब्रह्मणि नानात्वेन यद्भाति तत्किञ्चिदपि न सत्यमित्यर्थः । तथादर्शने प्रत्यवायं दर्शयति - **मृत्योरिति** । तमसो वा एष तमः प्रविशतीत्यादिवत् मृत्योः मृत्युमाप्नो-तीति निर्देशः । संसारात्संसारं प्राप्नोतीत्यर्थः । अविद्याजन्यफलं सर्वदाऽनुभवतीति यावत् । **नानेव** - अत्रेतिकारेण नानाभूतस्या-सत्यत्वसिद्धवत्कारः । **यत्र** = यदा द्वैतमिव भवति द्वैतप्रतिभासोऽनुवर्तते, यदाऽत्मव्यतिरिक्तवस्तुदर्शनमित्यर्थः । **तत्** = तदा इतरेणेत्यध्याहार्यम्, उत्तरत्र **केनेति** श्रवणात् । यदा भेदप्रतिभासः तदा द्रष्टृदृश्यभेदः, यदा ब्रह्मात्मैक्यज्ञानेनात्ममात्र-परिशेषस्तदा द्रष्टृदृश्यदर्शनकरणादिकं नास्तीति भावः । घटशरावादिविकारस्सर्वोपि वाचाऽलम्बनं = वागालम्बनं, व्यावहारिकमि-त्यर्थः । **मृत्तिकेत्येव सत्यमिति** । न हि मृद्व्यतिरेकेण घटशरावादिकं वस्त्वस्तीति भावः । **यदेति** । उः अवधारणार्थः । **दरं** = अल्पम् । **अन्तरः** = भेदः । उदिति पदच्छेदो वा, कुरत इत्यनेन सम्बध्यते अरं = शीघ्रम् । भेदबुद्धिः भयहेतुर्भवतीति भावः ॥

**नेति** । सर्वत्र विद्यमानस्यापि **स्थानतः** = उपाधितोऽपि **उभयलिङ्गं** = साकारत्वं साकारनिराकारत्वञ्च न हीत्यर्थः । तच्च साकारत्वाभाववत्वे सति साकारनिराकारत्वाभावपर्यवसितम् । अत्र साकारत्वाभावमात्रोक्तौ ब्रह्मगतनिर्विकारत्वस्य कादाचित्कत्वशङ्का स्यात् । साकारनिराकारत्वाभावमात्रोक्तौ तस्य साकारत्वविशिष्टनिराकारत्वाभावरूपतया तस्य विशेषणाभावप्रयुक्तत्वे स्वेष्टसिद्धावपि विशेष्याभावप्रयुक्तत्वे ब्रह्मणस्सर्वदा सविकारत्वसिद्धिः स्यादिति साकारत्वाभाव-वत्वमुक्तम् । एतेन विशिष्टभावस्य विशेषणाभावप्रयुक्तत्वलाभः । ततश्च सर्वदा ब्रह्मणो निर्विशेषत्वसिद्धिः । **मायामात्रं** = मिथ्यैव । तत्र हेतुः **अनभिव्यक्तस्वरूपत्वम्** । परमार्थस्वरूपाभिव्यञ्जननिमित्ताभावादित्यर्थः । पारमार्थिकरूपस्येषदप्य-भिव्यक्त्यभावादिति भावः । यद्यपीदं सूत्रं स्वाप्नविषयमथापि सर्वं ज्ञानं यथार्थम् इति पूर्वपक्षः प्रस्तुतः । अस्य समाधानं - सर्वं ज्ञानं मिथ्या इति । तत्र स्वप्नोदाहरणमत्र प्रदर्श्यते । अनेन सर्वमिथ्यात्वसिद्धिरिति जगन्मिथ्यात्वे स्वप्नार्थमियात्वस्य दृष्टान्तकरणमित्याशयेनैतत्सूत्रप्रदर्शनम् ॥

**प्रत्यस्तमितभेदं** = निर्विशेषं, **सत्तामात्रम्** = अपक्षयविनाशादिरहितं, सर्वत्र निर्बाधानुवृत्तसत्तास्वरूपं, **वचसामगोचरं** = सत्तादिशब्दावाच्यम् । **आत्मसंवेद्यं** = स्वयम्प्रकाशम् । **ब्रह्मसञ्ज्ञितं** = ब्रह्मशब्देनोपचरितं, न तु बृहत्वादिगुणयोगि ।

(वि.पु.1.2.6.) **'ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः । तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् ॥'**, (वि.पु.1.4.38) **'परमार्थस्त्वमेवैको नान्योस्ति जगतः पते! ।'**, (वि.पु.1.4.39,40,41.) **'यदेतद् दृश्यते मूर्तमेतज्ज्ञानात्मनस्तव । भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः । ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः । अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसम्प्लवे ॥ ये तु ज्ञानविदः शुद्धचेतसस्तेऽखिलं जगत् । ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर! ॥'**, (वि.पु.२.१२.३१.) **'तस्यात्मपरदेहेषु सतोऽप्येकमयं हि यत् । विज्ञानं परमार्थो हि द्वैतिनोऽतथ्यदर्शिनः ॥'**, (वि.पु.२.१३.९०) **'यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम! । तदैषोऽहमयश्चान्यो वक्तुमेवमपीष्यते ॥'**, (वि.पु.२.१४.३२.) **वेणुरन्ध्रविभेदेन भेदः षड्जादिसञ्ज्ञितः । अभेदव्यापिनो वायोस्तथाऽसौ परमात्मनः ॥**, (वि.पु.२.१६.२३.) **'सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम् । इतीरितस्तेन स राजवर्यस्तत्याज भेदं परमार्थदृष्टिः ॥'**, (वि.पु.६.७.९६) **'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥'**, (गी. १०.२०.) **'अहमात्मा गुडाकेश! सर्वभूताशयस्थितः ।'**, (गी.१३.३.) **'क्षेत्रज्ञञ्चापि मां विद्धि सर्वक्षेत्रेषु भारत! ॥''**, (गी.१०.१९.)**'न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥' इत्यादिभि र्वस्तु-स्वरूपोपदेशपरैः शास्त्रैः, 'निर्विशेषचिन्मात्रं ब्रह्मैव सत्यम्, अन्यत्सर्वं मिथ्या' इत्यभिधानात् ॥**

---

**ज्ञानस्वरूपं** = जडव्यावृत्तम्, अत एव ज्ञेयज्ञातृत्वरहितम् । **अत्यन्तनिर्मलं** = स्वाभाविकाविद्यादिदोषरहितम् । **भ्रान्ति-दर्शनतः** = भ्रान्तिरूपज्ञानात् । **अर्थस्वरूपेण स्थितं** = देवादिकृत्स्नप्रपञ्चरूपेण भासमानम् । **परमार्थस्त्वमेवैको नान्योऽ-स्तीति**, 'ब्रह्मैव परमार्थः, अन्यत्सर्वं मिथ्याभूत'मिति पूर्वोक्तप्रतिज्ञानुगुणम् । तर्हि दृश्यमानस्य जगत उपपत्तिः केत्यत्राह - **यदेतदिति** । **भ्रान्तिज्ञानेन** = भ्रान्तिरूपज्ञानेन । एवं दर्शनस्यानर्थावहत्वमाह - **ज्ञानस्वरूपमिति** । जगतः स्वरूपं ज्ञानरूपम्, अतः परिदृश्यमानं ज्ञानरूपमेतज्जगत् ज्ञानव्यतिरिक्तार्थस्वरूपं पश्यन्तः संसारसागरे भ्रमन्तीति भावः ॥

ननु जगतो ज्ञानरूपत्वं न सम्भवति, तथाऽप्रसिद्धेरित्यत आह - **ये त्विति**, **ज्ञानविदः** = ज्ञानरूपब्रह्मविदः । योगिनस्त्वखिलज्ञानात्मकं जगत् ज्ञानरूपत्वत्स्वरूपं पश्यन्तीत्यर्थः । **शुद्धचेतस** इति हेतुगर्भविशेषणम् । **तस्येति** । स्व-परदेहेषु सतस्तस्य परमात्मन एकस्वरूपं यद्विज्ञानं तदेव हि परमार्थः, भेददर्शिनश्च भ्रान्ता इत्यर्थः । भेददर्शनस्य भ्रमत्वे हेतुमाह - **यदीति** । मत्तः परः कोऽप्यन्यो यद्यस्ति तदैषोऽहम्, अयश्चान्य इति वक्तुं शक्येत, मद्व्यतिरिक्तस्यान्यस्या-भावादेवं ज्ञानं भ्रमरूपमेवेति भावः । वस्तुन एकत्वेऽपि भेददर्शनं भवतीत्यत्र निदर्शनं दर्शयति **वेण्विति** । यथाऽभेदस्यैकस्य व्यापिनो वायो र्वेणुरन्ध्रभेदान्निर्गतस्य षड्जादिसञ्ज्ञितः स्वरभेदः, तथैकस्यैव ब्रह्मण उपाधिभेदाद्देवादिप्रपञ्चभेद इति भावः । **सोहमिति, भेदमोहं** = भेदविषयकमोहम् । **भेदं** = भेदमोहम् । **विभेदजनके** = प्रपञ्चादिविविधभेदजनके, अज्ञाने इतिच्छेदः । **आत्मनः** = जीवात्, इदञ्च पञ्चम्यन्तं, **च** इति वाऽध्याहार्यम्, **गुडा**शब्दो वक्रवची, यद्वा गुडाकयोरीशः । 'निद्रालस्ये गुडाके स्या'दिति निघण्डुः । भूतशब्दः शरीरवची । **क्षेत्रज्ञं = जीवम्** । **न तदस्तीति** मया विना यत्स्यात्तन्नास्ति । मद्व्यतिरिक्तं सर्वमपरमार्थ इति भावः । वस्तुस्वरूपोपदेशपरैरिति । अनेनोपासनपरवाक्योक्तगुणादीनां कल्पितत्वं सूचितम् । अतश्चानन्यपरवाक्योक्त एवार्थः प्रामाणिक इति भावः । **निर्विशेषेति** । अयमत्रानुमानप्रयोगः - पूर्वोक्तं ब्रह्मैवपरमार्थः, ब्रह्मैव सत्यमिति शब्दजन्यप्रमितिविषयत्वात्, अन्यत् मिथ्या, मिथ्यात्वबोधकशब्दजन्यप्रमिति विषयत्वात् इति । अतो न साध्यहेत्वोरविशिष्टता ।

ननु प्रतिज्ञातं प्रपञ्चमिथ्यात्वं न सम्भवति मिथ्यात्वस्य दुर्निरूपत्वात्, न तावदत्यन्तासत्त्वं तत्, अत्यन्तासतः

**मिथ्यात्वं नाम प्रतीयमानत्वपूर्वकयथावस्थितवस्तुज्ञाननिवर्त्यत्वम्; यथा रज्ज्वाद्यधिष्ठानसर्पादेः। दोषवशाद्धि तत्र तत्कल्पनम्; एवं चिन्मात्रवपुषि परे ब्रह्मणि दोषपरिकल्पितमिदं देवतिर्यङ्मनुष्यस्थावरादि-भेदं सर्वं जगत् यथावस्थितब्रह्मस्वरूपावबोधबाध्यं मिथ्यारूपम्। दोषश्च स्वरूपतिरोधानविविधविचित्र-**

---

अनिवर्त्यत्वेन निवर्तकानपेक्षणात्, शास्त्रवैयर्थ्यापत्तेः, नाप्यन्यत्र सतोऽन्यत्र ख्यातत्वं, तथा सति कुत्रचित्पारमार्थ्याभ्युपगमप्रसङ्गात्। न चोदाहृतशास्त्रबलात् जगतो मिथ्यात्वमेष्टव्यमिति वाच्यं, तत्र मिथ्यात्वबोधकशब्दाभावादित्यत्र नानात्व-निषेधादितात्पर्यतः, परमार्थस्त्वमेवैको नान्योऽस्तीव्युक्त्या च मिथ्यात्वसिद्धिं तत्स्वरूपसुनिरूपत्वं चाभिप्रेत्याह - **मिथ्यात्वमिति**। नामशब्दः मिथ्यात्वस्वरूपप्रसिद्धिद्योतकः, शुक्तिरूप्यादिदृष्टान्तेषु तत्प्रसिद्धिसूचको वा। अत्रत्य दलानां प्रयोजनान्युपरिष्टाद्वक्ष्यामः। अयं भावः, तन्मते शुक्तिज्ञानाद्रजतप्रतिभासः रजतोत्पत्तिः शुक्तिज्ञानेन च रजत-तज्ज्ञानयोश्च निवृत्तिरभ्युपेयते। तद्वत् ब्रह्माज्ञानात् प्रपञ्चतत्प्रतिभासौ, ब्रह्मज्ञानेन प्रपञ्चतत्प्रतिभासयो र्निवृत्तिश्च। अतश्शुक्तिरूप्यं यथावास्थितशुक्तिविषयकज्ञाननिवर्त्यं प्रतीयमानञ्च, एवं प्रतीयमानस्य प्रपञ्चस्य यथावास्थितब्रह्मविषय-ज्ञाननिवर्त्यत्वम्। उक्तस्य मिथ्याभूतलक्षणस्य दृष्टान्ते समन्वयं दर्शयति - **यथेति, रज्ज्वाद्यधिष्ठानसर्पादेः**, रज्ज्वादि अधिष्ठानं यस्य। अधिष्ठानं = स्वप्रकारकधीविशेष्यम्॥ ननु रज्ज्वाद्यधिष्ठानकभ्रम उपपन्न, रज्ज्वादीनां जडत्वात्, ब्रह्म तु स्वयम्प्रकाशं, अतो ब्रह्माधिष्ठानकप्रपञ्चभ्रमोऽनुपपन्न इत्यत्र जडत्वमप्यजडत्ववन्न भ्रान्तिप्रयोजकम्, अन्यथा सर्वदा भ्रमानिवृत्तिप्रसङ्गात्, अतो दोष एवाध्यासहेतुरिति स्थापनार्थं दृष्टान्ते दोषस्याध्यासहेतुत्वं दर्शयति - **दोषवशादिति। हिः** प्रसिद्धिसूचकः। **तत्र** = रज्ज्वाद्यधिष्ठानभ्रमस्थले।

ननु दोषस्य प्रयोजकत्वेऽपि भ्रान्तिनिदानस्य सारूप्यस्य तत्त्वाग्रहादे र्दोषस्य जडे सम्भवेऽपि नाजडे ब्रह्मणि तत्सम्भवः, एवमेकस्मिन्नधिष्ठानेऽनेकाध्यासो न दृष्टः, तथादर्शनेऽप्यत्यन्तवैजात्यरहितकतिपयाध्यास एव दृष्टः, यथा रज्जौ सर्पभूबिदलनाम्बुधाराध्यासः, अतः सौसादृश्यरहितानन्तप्रपञ्चाध्यासो नैकस्मिन्नधिष्ठाने सम्भवतीतीमां शङ्कां निराकुर्वन् मिथ्याभूतप्रपञ्चे लक्षणसमन्वयं प्रदर्शयति - **एवमिति। चिन्मात्रवपुषि** = चिन्मात्रस्वरूपे। अनेनाध्यासा-नुपपत्तिस्स्फोरिता। **परे ब्रह्मणीति** उक्तशङ्कापरिहारकम्। अयम्भावः अधिष्ठानभूतं ब्रह्म हि सर्वसाधारणसन्मात्ररूपम्, अवरब्रह्मणः सर्वज्ञत्वादिगुणवत्त्वेऽपि परमिदं ब्रह्म सर्वज्ञत्वादिगुणानन्वयम्। एवं सारूप्यतत्त्वाग्रहावेव न भ्रान्ति-निदानं, सारूप्यसद्भावेऽपि भ्रमादर्शनात्, तत्त्वाग्रहोऽपि दोषसमानाधिकरण एव प्रयोजकः। दोषवशादेव हि युगपद्विरुद्ध-कोटिद्वयारोपभूतसंशयो जायते। तद्वदत्रापि वक्ष्यमाणदोषस्य विचित्राध्यासहेतुत्वं युक्तमेव। अतो ब्रह्माधिष्ठानकाध्यासो नानुपपन्न इति। **इदमिति** लक्षणोक्तप्रतीयमानत्वरूपदलसमन्वयसूचकम्। **मिथ्यारूपं** - मिथ्याशब्दवाच्यम्। प्रपञ्चा-ध्यासहेतुभूतदोषं प्रदर्शयति - **दोषश्चेति**। नन्वविद्याया दोषत्वे तस्याश्च परमार्थत्वे ब्रह्मवज्ज्ञानानिवर्त्यत्वेनाविद्याया अविनाशेन मोक्षस्यैवानुपपत्तिः अपरमार्थत्वे प्रपञ्चवत्तत्कल्पकमन्यदपेक्षितं, कल्पकान्तरस्यापि पारमार्थ्यापारमार्थ्य-विकल्पेनानवस्थादिकञ्च दुर्वारमिति शङ्कापरिहारायाविद्यायाः सदसदनिर्वचनीयत्वमनादित्वञ्च विशेषणतयोक्तम्। जीवानां कर्ममूलकबन्धसद्भाववादिनां मतेऽपि हि कर्मणामनादित्वमेष्टव्यम्। तद्वदस्मन्मते। अतोऽविद्याया अपरमार्थत्वेऽपि न कल्पकान्तरापेक्षेति भावः।

नन्वेवमपि ब्रह्मण्यतिरोहिते नाध्याससम्भवः, रज्जुत्वप्रकाशदशायां सर्पाध्यासादर्शनात्। स्वयं प्रकाशश्च सर्वदा प्रकाशमानम्। अतस्तिरोधानं वक्तव्यं, तच्च यदि स्वतः, तदाऽनिवर्त्यत्वप्रसङ्गः, परतश्चेत् किं तदिति शङ्कापरिहारायोक्तं **स्वरूपतिरोधानेति**। इत्थञ्च परत एव तिरोधानाभ्युपगमान्न दोष इति भावः। अविद्या द्विविधा - आच्छादिकाविद्या विक्षेपिका

चेति। तत्राच्छादकाविद्यातिरोहिते ब्रह्मणि विक्षेपिकाविद्यया नानाध्याससम्भवः, ब्रह्मणः स्वयम्प्रकाशत्वेऽपि न तिरोधानानुपपत्तिः स्वयम्प्रकाशस्यापि जीवस्य कर्मणा तिरोधानेन नानाविधसुखदुःखाद्यनुभवस्य भवन्मतेऽपि स्वीकारादित्यभिप्रायः ॥

अत्र मिथ्यात्वलक्षणे निवर्त्यत्वमात्रोक्तौ मुद्गरादिनिवर्त्ये घटेऽतिव्याप्तिः, अतो ज्ञाननिवर्त्यत्वस्य निवेशः, यद्यपि घटादीनामपि तन्मते मिथ्यात्वेन नातिव्याप्तिदोषः, लक्ष्ये लक्षणसत्त्वरूपायास्तस्या इष्टत्वात्, अथापि व्यावहारिकस्य सत्यत्वमभ्युपगम्यातिव्याप्तिप्रदर्शनम्। अन्याधीनप्रकाशत्वं जडत्वम्, अनन्याधीनप्रकाशत्वमजडत्वम्। घटादेः प्रभाधीनप्रकाशत्वाज्जडत्वम्। प्रभायास्तु प्रभान्तरानपेक्षप्रकाशत्वादजडत्वमिति वस्तुतो जडभूताया एव दीपप्रभाया यथा अजडत्वमुपपाद्यते, तथैवात्रापीति मन्तव्यम्। यद्वा निरुक्तमिथ्यात्वस्यैव विमते जगति साधनीयतया विमतं जगन्निवर्त्यम्, इत्यनुमानप्रयोगे घटादिषु निवर्त्यत्वस्य सत्त्वेन सिद्धसाधनं स्यात्, अवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वपक्षेऽपि मुद्गरादिनिवर्त्यघटादिवदेव प्रपञ्चस्य सत्यत्वापत्त्याऽर्थान्तरम्, इत्यभिप्रायेण तत्प्रदर्शनम्। एवमग्रेऽपि ॥

ज्ञाननिवर्त्यत्वमात्रोक्तौ मन्त्रादिशक्तिविशेषसहितसङ्कल्परूपज्ञाननिवर्त्ये सर्पविषादावतिव्याप्तिः। अतो ज्ञानमात्रनिवर्त्यत्वं विवक्षणीयम्। तच्च ज्ञानेतरानिवर्त्यत्वे सति ज्ञाननिवर्त्यत्वम्, पूर्वोक्तज्ञाननिवर्त्ये विषादौ ज्ञानेतरशक्तिनिवर्त्यत्वसत्त्वेन नातिव्यप्तिः। एवमपि भ्रान्तिज्ञाननिवर्त्ये सत्यसर्पादावतिव्याप्तिरिति तत्परिहाराय **यथावस्थित**शब्दः। न च सत्यसर्पादेः कथं भ्रान्तिज्ञाननिवर्त्यत्वं, तेन तस्यानिवृत्तेरिति वाच्यम्। निवर्त्यत्वस्य नास्तीति प्रतीतिविषयत्वरूपत्वेन, सति भ्रान्तिज्ञाने सत्यसर्पादि र्नास्तीति प्रतीतिविषयत्वसम्भवात्। वस्तुतस्तत्रापि भ्रान्तिज्ञानस्य यथावस्थितत्वात्तद्वारणं न सम्भवतीति वस्तुशब्दः। यथावस्थितज्ञानयोः सामानाधिकरण्यव्यवच्छेदनार्थः स शब्दः। यद्यपि ज्ञानस्यापि वस्तुत्वेन पुनरपि सामानाधिकरण्यधी र्जायेत, अथापि वस्तुशब्दवैयर्थ्यपरिहाराय वस्तुनो ज्ञानमिति षष्ठीतत्पुरुष आश्रयणीयः। न च पूर्वमेव यथावस्थितश्च तत् ज्ञानश्चेति सामानाधिकरण्ये आश्रिते यथावास्थितपदवैयर्थ्यमिति तत्परिहाराय यथावस्थितस्य ज्ञानमिति समास आश्रयितुं शक्य इति व्यर्थमेव वस्तुपदमिति वाच्यं, विशेष्यसमर्पकत्वेन तत्सार्थक्यात्।

न च भूरन्ध्रज्ञाननिवर्त्ये रज्जुसर्पे यथावस्थितवस्तुविषयकज्ञाननिवर्त्यत्वस्यासत्त्वेनाव्याप्तिरिति वाच्यम्। निवर्त्यत्वस्य निवर्तनार्हत्वार्थकत्वेन भूदलनज्ञाननिवर्त्यरज्जुसर्पस्यापि यथावस्थितरज्जुविषयकज्ञानेन निवर्तयितुं योग्यत्वेनानुपपत्यभावात्। न चैवमपि भूरन्ध्रज्ञाननिवर्त्यसर्पे यथावस्थितवस्तुज्ञाननिवर्त्यत्वस्येव यथावस्थितवस्तुज्ञानेतरभ्रमात्मकभूरन्ध्रज्ञाननिवर्त्यत्वस्यापि सत्त्वेन यथावस्थितज्ञानेतरानिवर्त्यत्वस्यासत्त्वेनाव्याप्तिस्तदवस्थैवेति वाच्यम्। केवलज्ञानेतरानिवर्त्यत्वस्यैव मात्रपदेन विवक्षणीयत्वात्। वस्तुतस्तु मन्त्रादिशक्तिविशेषसहितसङ्कल्पनिवर्त्ये विषादावतिव्याप्तिनिरासाय शक्त्यनिवर्त्यत्वरूपमात्रपदार्थ एव विवक्षणीय इति न दोषगन्धोऽपि। अन्यथा भ्रान्तिज्ञाननिवर्त्यसत्यसर्पादीनां ज्ञानेतरनाशसामग्रीनिवर्त्यत्वेन ज्ञानेतरानिवर्त्यत्वं नास्तीत्यतिव्याप्त्यप्रसक्त्या यथावस्थितपदवैयर्थ्यापत्तेः। ज्ञाननिवर्त्ये ज्ञानप्रागभावेऽतिव्याप्तिवारणाय **प्रतीयमात्वपूर्वकपदम्**।

ननु कदाचिज्ज्ञानप्रागभावः प्रतीयमानत्वपूर्वक एव ज्ञानेन निवर्त्यत इति चेत् - सत्यम्। तेन प्रतीयमानत्वनियमपूर्वकत्वस्य विवक्षणेनादोषात्। ननूक्तस्थले ज्ञानप्रागभावप्रतीति र्नियतैवेति चेत्, प्रतीयमानत्वाव्याभिचरितयथावस्थितवस्तुविषयकज्ञानप्रयुक्तनिवर्तनार्हत्वस्य विवक्षणेन ज्ञानप्रागभावाप्रतीतिदशायामपि यथावास्थितवस्तुज्ञाननिवर्तनार्हत्वस्य सत्त्वात्तस्य प्रतीयमानत्वव्यभिचरितत्वेन दोषानवकाशात्। ननु रज्जुसर्पज्ञानजनिते रज्जुज्ञाननिवर्त्ये भयेऽतिव्याप्तिः। न च तत्र भयस्य रज्जुज्ञाननिवर्त्यत्वं नास्ति, अन्यथा 'प्रबलप्रमाणबाधितत्वेन भयादिकार्यं तु तन्निवर्तत' इति पूर्वोक्तभाष्य-

विरोधात्, इति चेत् ? उच्यते, भयादिकं हि क्षणिकम् । अतस्स्वयमेव निवृत्तियोग्यस्य तस्य रज्जुज्ञाननिवर्त्यत्वं नेष्यते, परन्तु रज्जुज्ञानमुत्तरभयोप्पत्तिं निरुणद्धि । उदाहृतभाष्यग्रन्थोऽपि प्रबलप्रमाणज्ञानस्योत्तरभयोत्पत्तिप्रतिबन्धकत्वबोधना-भिप्रायक इति पूर्वमेव व्याख्यातम् । अतो नानुपपत्तिः ।

अथात्र निरुक्तज्ञाननिवर्त्यत्वस्योत्तरज्ञाननिवर्त्यपूर्वज्ञाने सत्त्वेनातिव्याप्तिस्सिद्धसाधनमर्थान्तरं वा । न चात्र प्रतीयमानत्वपूर्वकयथावास्थितवस्तुविषयकज्ञानत्वावच्छिन्नजनकतानिरूपितजन्यतावन्नास्तीतिप्रतीतिविषयत्वस्य विवक्षणान्नानुपपत्तिः । योग्यविभुविशेषगुणानां स्वोत्तरोत्पन्नयोग्यविभुविशेषगुणनाश्यत्वनियमेनोत्तरज्ञानस्य पूर्वज्ञान-नाशकत्वात्तत्र पूर्वज्ञाने नास्तीति प्रतीतिविषयत्वसत्त्वेऽप्युत्तरज्ञाननिष्ठनाशजनकताया उत्तरविशेषगुणत्वावावच्छिन्नत्वेन ज्ञानत्वावाच्छिन्नजनकताघटितनिवर्त्यत्वस्याभावादिति वाच्यम् । तथा सति शुक्तिरूप्ये लक्षणसमन्वयानुपपत्तेः शुक्तिरूप्यनिवर्तकशुक्तिज्ञाने शुक्तिसाक्षात्कारत्वावछिन्नजनकतासत्त्वेऽपि ज्ञानत्वावच्छिन्नजनकाताया अभावेन शुक्तिरूप्ये निरुक्तजनकताघटितनिवर्त्यत्वस्यासत्त्वात् ॥

एवमध्यस्तं प्रत्यधिष्ठानसाक्षात्कारस्यैव प्रतिबन्धकत्वेन प्रपञ्चेऽधिष्ठानसाक्षात्कारत्वावच्छिन्नजनकताघटित-निवर्त्यत्वस्य सत्त्वेऽप्युक्तनिवर्त्यत्वस्यासत्त्वेन प्रपञ्चस्य मिथ्यात्वानुपपत्तेः । न च ज्ञानत्वव्याप्यधर्मावच्छिन्नजनकताघटित-निवर्त्यत्वमेव तदिति नानुपपतिरिति वाच्यम् । तथा सति स्मृतित्वनिश्चयत्वादिना ज्ञाननिवर्त्यसंस्कारसंशयादावति-व्याप्तेर्दुर्वारत्वात्, तद्वदेव प्रपञ्चस्य सत्यत्वप्रसङ्गेनार्थान्तराच्च, इति चेदत्रोच्यते - साक्षाकारत्वावच्छिन्नजनकताघटित-निवर्त्यत्वस्य लक्षणत्वाभ्युपगमेन दोषाभावात् । न च रज्जुरेषा न सर्प इत्याप्तोपदेशजनितज्ञानेन रज्जुसर्पस्यानिवर्त्यत्वप्रसङ्गः, तादृशज्ञाने साक्षात्कारत्वावच्छिन्नजनकताया असत्त्वादिति वाच्यम् । साक्षात्कारात्मकज्ञानस्यैव निवर्तकत्वस्वीकारेण तादृशज्ञानस्य निवर्तकत्वस्यैवानङ्गीकारात् । अत एव हि शब्दादप्यपरोक्षज्ञानमिष्यते । न च तत्र निरुक्तनिवर्त्यत्वाभावेन मिथ्यात्वं न सम्भवतीति वाच्यं, साक्षात्कारसम्भवे तस्यापि निवर्तनार्हत्वादिति ।

अत्रेदमवधेयम् - साक्षात्कारत्वावच्छिन्नजनकतानिरूपितजन्यतावन्नास्तीतिप्रमात्मकप्रतीतिविषयत्वमेव मिथ्यात्वम् । शक्त्यादिसहितसङ्कल्पात्मकज्ञाननिवर्त्ये सर्पादौ ज्ञाननिवर्त्ये तत्प्रागभावे च सङ्कल्पत्वाद्यवच्छिन्नजनकता-घटितनिर्वर्त्यत्वस्य सत्त्वेऽपि साक्षात्कारत्वावच्छिन्नजन्कताघटितनिरुक्तनिवर्त्यत्वस्यासम्भवेन तद्वारणात्, भ्रान्तिज्ञान-निवर्त्यसत्यसर्पादौ तादृशज्ञानेन नास्तीति भ्रमात्मकप्रतीतिविषयत्वसत्त्वेऽपि प्रमात्मकप्रतीतिविषयत्वस्यासत्त्वेन तत एव तद्वारणाच्च । न च तत्र भ्रमात्मकप्रतीतिविषयत्वनिवेशनसम्भवः, वाक्यजन्यसाक्षात्कारानन्तरं प्रपञ्चस्य नास्तीति भ्रमप्रतीतिविषयत्वस्वीकारेऽपि प्रपञ्चसत्यत्वाविरोधात् । ध्वंसप्रतियोगित्वरूपनिवर्त्यत्वनिवेशे प्रपञ्चमिथ्यात्वसाधनेऽपि न सत्यसर्पादावतिव्याप्तिप्रसङ्गः, भ्रान्तिज्ञानेन सत्यसर्पानिवृत्तेः । अतो मूलोक्तप्रतीयमानत्वपूर्वकपदं साक्षात्कारत्वेन ज्ञानस्य निवर्तकत्वाभिप्रायकम् । यथावस्थितपदश्च प्रमात्मकप्रतीतिविषयत्वरूपनिवर्त्यत्वाभिप्रायकम् । यदि सर्पविषादे-रपि कस्यचिदतिशक्तिमतः साक्षात्कारबलेन निवृत्तिरभ्युपेयते, तदा तु पूर्वोक्तार्थकमात्रपदं निवेश्यम् । अनेन 'ब्रह्मात्मैकत्व-विज्ञानेन सकारणस्य बन्धस्य निवृत्ति र्युक्ता' इत्युपरितनभाष्यग्रन्थपर्यालोचनेन ध्वंसप्रतियोगित्वरूपनिवर्त्यत्वनिवेशनं तु युक्तम् । अन्यथा निवृत्तिपदमभावपरतया योजनीयमिति दिगिति । (यदीदं स्यात्समीचीनं गृह्यतां सारवेदिभिः । यदि न स्यात्समीचीनं त्यज्यतां वा मनीषिभिः) ॥

एवं श्रुतिस्मृत्यादिभिर्बोधितं जगतो मिथ्यात्वं सुनिरूपमिति प्रतिपाद्य, मिथ्याभूतवस्तुतत्प्रतिभासादीनामविद्या-

**विक्षेपकरी सदसदनिर्वचनीयाऽनाद्यविद्या ।** (छा.८.३.२.) **'अनृतेन हि प्रत्यूढाः'**, (छा.८.३.१.) **'तेषां सत्यानां सतामनृतमपिधानम्'**, (तै.अ.२.८.९.) **'नासदासीन्नो सदासीत् तदानीं तम आसीत् । तमसा गूढमग्रे प्रकेतम्'**, (श्वे.४.१०.) **'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्'**, (बृ.४.५.१९.) **'इन्द्रो मायाभिः पुरुरूप ईयते'**, (गी.७.१४.) **'मम माया दुरत्यया'**, (गौ.का.१.१६.) **'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते' इत्यादिभिः निर्विशेषचिन्मात्रं ब्रह्मैवानाद्यविद्यया सदसदनिर्वाच्यया तिरोहितस्वरूपं स्वगतनानात्वं पश्यतीत्यवगम्यते ।**

**यथोक्तम्** - (वि.पु.२.१२.३९,४०.) **'ज्ञानस्वरूपो भगवान् यतोऽसावशेषमूर्तिर्न तु वस्तुभूतः । ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि ।। यदा तु शुद्धं निजरूपि सर्वकर्मक्षये ज्ञानमपास्तदोषम् ।**

---

कल्पितत्वमुपपादितम्, सम्प्रति स्वयं ज्योतिषोऽपि ब्रह्मण आच्छादकाविद्यया तिरोधानं, ततो विक्षेपकाविद्यया विविधभेददर्शनश्च सम्भवतीत्यत्र श्रुतीः प्रमाणयति - **अनृतेनेति** । 'एतं ब्रह्मलोकं न विन्दन्ति, अनृतेन हि प्रत्यूढा' इति दहरविद्यावाक्यम् । लोक्यत इति लोकः फलम् । ब्रह्मैव लोकः ब्रह्मलोकः । **अनृतेन** = असत्येन, अविद्ययेति यावत् । **प्रत्यूढाः** प्रतीपं नीताः वैपरीत्यं प्राप्ताः । एतेनानृतशब्दाभिधेयाविद्याया विविधभेददर्शनरूपविक्षेपकरत्वं सिद्धम् । **तेषामिति** । 'त इमे सत्याः कामाः अनृतापिधानाः, तेषां सत्यानां सतामनृतमपिधान'मित्यपि तत्रैव श्रूयते । **अनृतापिधानाः** = अनृतावारकाः, **अनृतं** = मिथ्याभूतमज्ञानम् । **अपिधानम्** = आच्छादकम् । एतेनाविद्याया आच्छादकत्वं सिद्धम् । उभयत्रापि बहुवचनं कल्पितजीवभेदविवक्षया । पाशन्यायेनाविवक्षया वा । **नासदि**त्यविद्यायाः सदसद्विलक्षणत्वमुक्तम् । तम इत्याच्छादने हेतुः, **तमसा** = अज्ञानेन, **प्रकेतं** = कित निवासे इति धातुः । प्रकृष्टं वासस्थानम् ब्रह्मेति यावत्, **गूढम्** = आवृतम् ।

नन्वत्र तमश्शब्दो मूलप्रकृतिवाचकः, न त्वविद्यावाचक इत्यत्र प्रकृतिरेव मायाशब्दवाच्येति श्रुत्या दर्शयति - **मायामिति** । प्रकृतिम् = मायाम्, विद्यादित्यन्वयः । यद्वा मायाशब्दवाच्यामविद्यां प्रकृतिम् = उपादानं विद्यादिव्यर्थः । मायिनमिति महेश्वरस्याप्यविद्याकल्पितत्वं बोधितम् । यद्वा ब्रह्मणोऽविद्यासम्बन्धो बोधितः । इन्द्र इति । इन्द्रः = परमेश्वरः । इदि परमैश्वर्ये इति धातुः । **मायाभिः** = अविद्याभिः अनेनाविद्याया बहुत्वमुक्तम् । **पुरुरूपः** = नानारूपः । **ईयते** = क्रियते । **ममेति** । अनेनैक्यज्ञानाभावे भगवन्मायाया दुस्तरत्वमुक्तम् । **अनादीति** - अनेनाविद्याया अनादित्वमुक्तम् । सुप्त इति तया तिरोधानं, प्रबुध्यत इत्यविद्यानिवृत्तिः । आदिशब्दाद्भूयश्चान्ते विश्वमायानिवृत्तिरित्यादिसङ्ग्रहः । निर्विशेषचिन्मात्रमिति पूर्वोदाहृतप्रमाणसिद्धार्थानुवादः । अनाद्यविद्ययेत्यादिकं सम्प्रत्युदाहृतप्रमाणसिद्धार्थकथनम् । यद्वा पूर्वोदाहृतवाक्यानुरोधेनोदाहृतवाक्येषु दोषविधिपरेषु बहुवचनं महेश्वरादिशब्दानामविद्याकल्पितार्थविषयकत्वाद्विविधविशेषसिद्धिः न सम्भवतीत्यभिप्रायेण निर्विशेषचिन्मात्रमित्युक्तम् । एतेन स्वरूपनिर्विशेषत्वबोधकवाक्यबलादुदाहृतवाक्यमपि निर्विशेषवस्तुबोधकमेव, इन्द्रमहेन्द्रा-दिश्रवणन्तु निर्विशेषस्यैव ब्रह्मणो दोषकल्पनाधीनत्वमवगमयति । अत एवैषु दोषवाचकानृतादिशब्दश्रवणमिति सिद्धम् ।

एवमुक्तार्थे स्मृतीरुपबृंहयति - **यथोक्तमिति** । यतोऽसौ ज्ञानस्वरूपो भगवान् अशेषत्वेन भ्रान्तिसिद्धः, न तु वस्तुभूतः न देवादिजडस्वरूपः, न शैलादिवस्तुस्वरूपो वा, तत एवान्यज्ञानविजृम्भितानीत्यर्थः । यथा शुक्तिर्न रजतरूपा, ततो रजतं शुक्त्यज्ञानविजृम्भितं, तद्वदिति भावः । ज्ञानस्वरूप इत्युक्त्या 'न वस्तुभूत' इत्युक्त्या चाशेषमूर्तिरित्यस्य पूर्वोक्तार्थ एव । विज्ञानशब्दो विविधं ज्ञायतेऽनेनेत्यविद्यावाचकः । **विजृम्भितानि** = अध्यस्तानि । **यदेति** । **शुद्धं** = अज्ञानविमुक्तं, अत एव **निजरूपि** = विविधभेददृष्टिविधुरम् । **सर्वकर्मक्षयेऽपास्तदोषम्** = कर्मसाध्यरागादिदोषरहितम् ।

**तदा हि सङ्कल्पतरोः फलानि भवन्ति नो वस्तुषु वस्तुभेदाः ॥'**, (वि.पु.२.१२.४३,४४,४५.) **'तस्मान्न विज्ञानमृतेऽस्ति किञ्चित्क्वचित्कदाचिद् द्विज वस्तुजातम् । विज्ञानमेकं निजकर्मभेदविभिन्नचित्तैर्बहुधाऽभ्युपेतम् ॥ ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम् । एकं सदैकं परमः परेशः स वासुदेवो न यतोऽन्यदस्ति । सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत् । एतत्तु यत्संव्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं ते ॥' इति ।**

**अस्याश्चाविद्याया निर्विशेषचिन्मात्रब्रह्मात्मैकत्वविज्ञानेन निवृत्तिं वदन्ति - 'न पुनर्मृत्यवे तदेकं पश्यति', 'न पश्यो मृत्युं पश्यति'** (छा ७.२६.२.), **'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते, अथ सोऽभयङ्गतो भवति'** (तै.आन ७.२.), **'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे'** (मु.२.२.९.), **'ब्रह्म वेद ब्रह्मैव भवति'** (मु.३.२.९.), **'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था'** (श्वे.३.८.) **इत्याद्याः श्रुतयः ।**

---

**सङ्कल्पः** = अविद्या । समन्तात् सम्यक् वा कल्प्यतेऽनेनेति व्युत्पत्तेः । **वस्तुषु** = जीवेषु, वसन्तीति व्युत्पत्तेः । **वस्तुभेदाः** आकारभेदाः देवत्वादयः । अत्र "वस्त्वस्ति किं कुत्रचिदादिमध्यपर्यन्तहीनं सततैकरूपम् । यच्चान्यथात्वं द्विज याति भूयो न तत्तथा तत्र कुतो हि तत्त्वम् ॥ मही घटत्वं घटतः कपालिका कपालिका चूर्णरजस्ततोऽणुः । जनैस्स्वकर्मास्तिमिताात्मनिश्चयैरालक्ष्यते ब्रूहि किमत्र वस्तु ॥" इति मध्ये श्लोकद्वयमप्युक्तार्थप्रदर्शनमात्रपरमिति अत्र नोपात्तम् । सिद्धान्ते व्याख्यास्यते । **तस्मादिति** । अनेनार्धेन विजातीयभेदाभावो दर्शितः, विज्ञानमित्यर्धेन सजातीयभेदस्यापि भ्रान्तिसिद्धत्वं दर्शितम्, निजकर्मभेदेन विभिन्नान्तःकरणैः जीवभेदोऽभ्युपेत इति भावः । **ज्ञानमिति । विशुद्धम्** = अविद्यारहितं, **विमलं** = भेददृष्टिरहितम्, **सदैकं** = जन्मवृद्ध्यादिशून्यम् । **सद्भाव** इति । सद्भावः - यथावस्थितः । **संव्यवहारभूतं** = संव्यवह्रियत इति संव्यवहारं व्यावहारिकं जगदित्यर्थः । **भुवनाश्रितं** = भुवनेनाश्रितं भुवनाधिष्ठानभूतम् । एतदेव ज्ञानं व्यावहारिकजगद्रूपापन्नमिति यत् तत्राप्यज्ञानमेव कारणमुक्तमित्यर्थः । अनेन यथास्थितार्थोपदेशोऽयमिति सिद्धम् ॥

एवं निर्विशेषवस्तुन एकस्यैव सत्यत्वम् अन्यस्य दोषकल्पितत्वमुक्तम् । सम्प्रति निरुक्तैः शास्त्रैः ब्रह्मणः परमार्थत्वं जगतोः मिथ्यात्वञ्च बोधितमिति मिथ्याभूतस्य ज्ञानमात्रनिवर्त्यत्वेन न ध्यानपर्यन्तानुधावनमपेक्षितं - ध्यानविधीनाञ्च भेदवासनारूपप्रतिबन्धनिवर्तकतया चारितार्थ्याज्जगन्निवर्तने तदनपेक्षणात् । अत एव उपायपरवाक्येनापि शब्दजन्यापरोक्षात्मकज्ञानस्यैव मोक्षसाधनत्वं साध्यते (बोध्यते) इत्याह - **अस्या** इति । **न पुनरिति** । एकं पश्यतीति यत् तत्पुनर्मृत्यवे नेत्यर्थः । यद्वा य इत्यध्याहार्यं, यस्तदेकं पश्यति स मृत्यवे न प्रभवतीत्यर्थः । अत्र मृत्युशब्दोऽविद्यावाचकः, पश्यतीत्यनेन शब्दजन्यज्ञानस्यापरोक्षत्वसिद्धिः । अनेन ब्रह्मात्मैक्यज्ञानस्याविद्यानिवर्तकत्वं सिद्धम् ।

अत्र शब्दजन्यसाक्षात्कारस्य मृत्युतरणत्वाभिप्रायेणेयं श्रुतिरुपात्ता, न त्वैक्यविषयकज्ञानस्य तथात्वाभिप्रायेण, तादृशे ज्ञाने ऐक्यविषयकत्वस्योपरिष्टात्प्रदर्शयिष्यमाणत्वात् । **पश्यः** । पश्यतीति पश्यः ब्रह्मद्रष्टा । **अनात्म्ये** = अशरीरे, आत्म्यम् = आत्मना व्याप्यं शरीरम् । **अनिरुक्ते** = नामनिर्वचनशून्ये । निलीयतेऽस्मिन्नध्यस्तैरिति निलयनमज्ञानं, तद्रहिते इति वा । **अभयं** = भयाभावार्थं, **प्रतिष्ठां** = ऐक्यबुद्ध्या निष्ठाम् । **भिद्यते इति** । **हृदयग्रन्थिरविद्या, छिद्यन्ते सर्वसंशयाः** इति तत्कार्यसंशयादीनां निवृत्तिरुच्यते । **कर्माणि** इत्युक्त्या कर्मणामप्यविद्याकल्पितत्वमविद्यानिवृत्तौ निवृत्तिश्चेत्युक्तम् । ऐक्यज्ञानमेव साधनमिति भावः । **तमेवेति** - अनेनाविद्यानिवृत्तिसाधनत्वनिषेधः ।

**अत्र मृत्युशब्देनाविद्याऽभिधीयते। यथा सनत्सुजातवचनं -** (भा.उद्यो.४१.४.) **'प्रमादं वै मृत्युमहं ब्रवीमि; सदाऽप्रमादममृतत्वं ब्रवीमि' इति।** (तै.आनं.१.१.) **'सत्यं ज्ञानमनन्तं ब्रह्म'',** (बृ.५.९.२५.) **'विज्ञानमानन्दं ब्रह्म', इत्यादिशोधकवाक्यावसेयनिर्विशेषचिन्मात्रस्वरूपब्रह्मात्मैकत्वविज्ञानञ्च,** (बृ.३.४.१०.) **'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति, न स वेद',** (बृ.३.४.७.) **'अकृत्स्नो ह्येषः',** (बृ.३.४.७.) **'आत्मेत्येवोपासीत',** (छा.६.८.७.) **'तत्त्वमसि',** (जाबाल) **'त्वं वा अहमस्मि भगवो देवते, अहं वै त्वमसि भगवो देवते',** (ऐत.४.२.) **'तद्योऽहं सोऽसौ, योऽसौ सोऽहम् (अस्मि)' इत्यादिवाक्यसिद्धम्। वक्ष्यति चैतदेव** (शा.४.१.३.) **'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इति। तथा च वाक्यकारः** (वाक्यग्रन्थ), **'आत्मेत्येव तु गृह्णीयात् सर्वस्य तन्निष्पत्तेः' इति। अनेन च ब्रह्मात्मैकत्वविज्ञानेन मिथ्यारूपस्य सकारणस्य बन्धस्य निवृत्तिर्युक्ता।**

---

श्रुतिघटकमृत्युशब्दस्याविद्यावाचकत्वमेवेति दर्शयति **अत्रेति**। तत्र महर्षिवचनं संवादयति - **यथेति**। **सनत्सुजातेति**। ब्रह्मणो मानसाश्चत्वारः पुत्राः। सनकसनन्दनसनत्कुमारसनत्सुजाता इति। सोऽयं सनत्सुजातोऽत्र ग्राह्यः। **प्रमादः** = अनवधानता, अविद्येति यावत्, **अप्रमादम्** = अविद्यानिवृत्तिम्। यद्वा **अप्रमादः** - तत्त्वज्ञानं, तच्च मोक्षसाधनतयोक्तम्, अतस्तद्विरोधिभूतः प्रमादः अज्ञानमेव। अहं ब्रवीमीत्युक्तिः तत्त्ववित्स्वोक्तार्थस्य प्रामाण्यसूचनाय। पूर्वत्र हि, 'मोहो मृत्युस्सम्मतो यः कवीना'मित्युक्तम्। एवमुदाहृतवाक्यैर्ज्ञानस्याविद्यानिवर्तकत्वं सिद्धम्। तस्य ब्रह्मात्मैक्यविषयकत्वसिद्धौ श्रुती र्दर्शयति - **सत्यमिति**। प्रथमतो भेदज्ञानस्यानुपयोगित्वमाह - **अथेति**। 'यो देवतामन्यामुपास्त' इत्यन्वयः। तादृशोपासानाकारप्रदर्शनं क्रियते - **अन्योऽसावित्यादिना**। **आत्मेत्येवोपासीतेति**। अत्रोपास्तिः भेदवासनानिरासाय। **त्वं वा** इति। अत्र वैशब्दोऽवधारणार्थः। सूत्रकारस्याप्यत्रैव निर्भर इत्याशयेन तत्सम्मतिं व्याचष्टे - **वक्ष्यतीति**। **आत्मेतीति** - स्वानन्यत्वेनोपासीत, मुमुक्षूणां तथैवोपासनदर्शनात् शास्त्रैस्तथैव शोधितत्वाच्च। वाक्यकारस्याप्यत्रैव तात्पर्यमित्याह - **तथा चेति**। **सर्वस्य** = प्रतीयमानस्य सर्वस्य। **तन्निष्पत्तेः** = तस्मिन् कल्पितत्वात्। अनेन पूर्वोदाहृतवाक्यकारवाक्यान्यप्येतदनुगुणं नेयानीति भावः। उक्तार्थे तर्कमप्याह - **अनेनेति**। न हि मिथ्याभूतस्य सर्पस्य निवृत्यर्थं रज्जुज्ञानव्यतिरिक्तवैनतेयाद्युपासनापेक्षेति भावः। मिथ्यारूपस्येति हेतुगर्भविशेषणम्। अविद्याया अनिवृत्तौ तत्कार्यबन्धनिवृत्ति र्नस्यादित्यत उक्तं - **सकारणस्येति**। **युक्ता** = युक्तिमती ॥

ननूदाहृतश्रुतिस्मृत्यादिबलान्न ब्रह्मणो निर्विशेषत्वसिद्धिः ब्रह्मस्वरूपप्रतिपादन परैः 'यस्सर्वज्ञस्सर्ववित्, परास्य शक्तिर्विविधैव श्रूयते, सत्यकामस्सत्यसङ्कल्प' इत्यादि श्रुतिवाक्यै र्ब्रह्मणस्सविशेषत्वबोधनात्। न चोभयविधवाक्ययोः श्रुतित्वाविशेषाद्वैपरीत्यं किं न स्यादिति वाच्यं, तत एव तथा वक्तुमशक्यत्वात्, अतः कस्य वाऽप्रामाण्यं कस्य प्रमाण्यमित्याशङ्कायां निर्गुणवाक्यात्सगुणवाक्यस्य बाध्यत्वस्थापनार्थं तदनुगुणबाध्यबाधकभावेऽनुगतं प्रयोजकं वक्तुं **ननु चेत्यादिना** शङ्कते। ननु ब्रह्मात्मैक्यज्ञानेन बन्धनिवृत्ति र्न युक्तिमती। तस्याः प्रत्यक्षविरुद्धत्वात्। ब्रह्मात्मैक्यज्ञानं हि तत्त्वमसीत्यादिशास्त्रजन्यं, शास्त्रञ्च व्युत्पत्त्यर्थं प्रत्यक्षमपेक्षते। अतो न प्रत्यक्षसिद्धस्यार्थस्य शास्त्रं बाधकं भवेत्। एवमेव ह्यनुमानादिषु दृष्टम्। अन्यथा वह्निरनुष्णः, आदित्यो यूप इत्यादिकमपि प्रत्यक्षबाधकं स्यादित्याशयेन शङ्कते - **ननु चेति**। अत्र चकारो वक्ष्माणशङ्काद्योतकः। अत्र - ननूक्तं सर्वमपि तदोपपद्यते यदि शास्त्रैर्निर्विशेषत्वसिद्धिस्स्यात्, तदेवानुपपन्नम्। तथाहि - विविधविकल्परूपविशेषस्य प्रत्यक्षसिद्धत्वात्। प्रत्यक्षविरुद्धार्थस्य च शास्त्रेण बोधनासम्भवात्। तथा बोधने प्रत्यक्षशास्त्रयो र्विरोधापत्तेः। न ह्युपजीव्यस्य प्रत्यक्षस्योपजीवकस्याऽऽगमस्य च परस्परविरोधः प्रामाणिकः।

**ननु च सकलभेदनिवृत्तिः प्रत्यक्षविरुद्धा कथमिव शास्त्रजन्यविज्ञानेन क्रियते? कथं वा 'रज्जुरेषा न सर्प' इति ज्ञानेन प्रत्यक्षविरुद्धा सर्पनिवृत्तिः क्रियते? तत्र द्वयोः प्रत्यक्षयोर्विरोधः ; इह तु प्रत्यक्षमूलस्य शास्त्रस्य प्रत्यक्षस्य चेति चेत् - तुल्ययोर्विरोधे वा कथं बाध्यबाधकभावः ? पूर्वोत्तरयोर्दुष्टकारणजन्यत्व-तदभावाभ्यामिति चेत् शास्त्रप्रत्यक्षयोरपि समानमेतत् ।**

---

अन्यथा 'यजमनः प्रस्तरः', 'आदित्यो यूप' इत्यादिनापि शास्त्रेण प्रत्यक्षविरुद्धार्थप्रतिपादनापत्तेरित्याशयेन शङ्कते - **ननु च सकलभेदनिवृत्तिरित्यादिना** । प्रत्यक्षविरुद्धः सकलभेदाभावः शास्त्रजन्यविज्ञानेन कथं विषयीकृतः ? प्रत्यक्षविरुद्धं सकलविशेषनिषेधं प्रत्यक्षोपजीवि शास्त्रं नैव बोधयेदिति यावत् । प्रत्यक्षविरुद्धकतिपयभेदनिवृत्तिरेव न वाक्यजन्यज्ञानाधीना दृष्टचरी । एवञ्च सति कथं सकलभेदनिवृत्तिस्स्यादित्यभिप्रायेण **सकले**त्युक्तिः । अत एव **कथमिव** इत्युक्तम् । **कथमिव** = न कथञ्चित् । **शास्त्रजन्यज्ञानेने**ति ।

यद्यपि, तन्मते प्रत्यक्षसिद्धबन्धनिवृत्त्यै तत्त्वमसीति वाक्यादपरोक्षज्ञानमेवेष्यते, अतः प्रत्यक्षदृष्टार्थस्यापरोक्षज्ञानेन निवृत्ति र्युक्तैव, अथापि तादृशज्ञानस्य शब्दजन्यत्वेन शब्दस्य च प्रत्यक्षप्रमाणमूलकत्वेन तत्सापेक्षात्वात्तादृशशब्दजन्य-ज्ञानं कथं प्रत्यक्षविरुद्धभेदनिवृत्तिजनकमित्यभिप्रायः । अत एव ज्ञाने शब्दजन्यत्वविशेषणम् । अत एवोत्तरत्रापि **प्रत्यक्ष-मूलस्य शास्त्रस्ये**ति भाषितम् । शङ्कितुराभिप्रायवेदनार्थं प्रतिबन्दीमाह - **कथं वेति** । वाकारः प्रतिबन्दीसूचकः । अत्र सर्प ज्ञानं प्रति रज्जुरेषेति ज्ञानस्य तदभावतदभावव्याप्यज्ञानरूपत्वाभावेन तदभावावच्छेदकग्रहरूपतयैव प्रतिबन्धकत्वं वक्तव्यमित्याशयेन '**न सर्प**' इत्यधिकं भाषितम् ।

एतेन रज्जुत्वावच्छेदेन सर्पत्वाभावनिश्चयविशिष्टस्य तादृशनिश्चय-जन्यसंस्कारसहितस्य वा इयं रज्जुरिति ज्ञानस्य प्रतिबन्धकत्वं फलितमिति भावः । **सर्पनिवृत्तिः** - सर्पाभावः । **क्रियते** - विषयीक्रियते । अभिप्रायमुद्घाटयति - **तत्रेति** । **प्रत्यक्षयोः** = इन्द्रियजन्यज्ञानयोः । **शास्त्रस्य** = शास्त्रजन्यज्ञानस्य । एतावता तुल्यत्वं निरपेक्षत्वं वा प्रयोजकमिति पर्यवसितम् । तर्हि प्रत्यक्षयो र्विपर्यस्तोऽपि बाध्यबाधकभावस्स्यात् । अतो न तत्प्रयोजकत्वं कल्पयितुं शक्यमित्याशयेनाह - **तुल्ययो**रिति । प्रत्यक्षयोरित्यध्याहार्यम् । **कथं बाध्यबाधकभाव** इति । उभयोरपि प्रत्यक्षत्वादिना तुल्यत्वादस्यैव बाध्यत्वमस्य तु बाधकत्वमित्यत्र विनिगमकं न स्यादिति भावः ।

ननु तुल्यत्वादिकं न प्रयोजकम् । किन्तु दुष्टकारणजन्यत्वतदभावावेव बाध्यबाधकभावप्रयोजकावित्युपेयते । अतो न प्रत्यक्षयोस्तुल्यत्वेऽपि दुष्टकारणजन्यस्य बाध्यत्वम् अन्यस्य च बाधकत्वमिति न नियामकाभाव इत्याह - **पूर्वेति** । नात्र क्रमो नियतः । तर्हि शास्त्रप्रत्यक्षयो र्विरोधेऽप्यनयैव रीत्या बाध्यबाधकभावस्याप्यङ्गीकर्तुं शक्यतया शास्त्रेण प्रत्यक्षविरुद्धार्थबोधनमुपपद्यत इत्याशयेन समाधत्ते - **शास्त्रेति** । **समानमेतदिति** । अयं भावः - शास्त्रजन्यज्ञानप्रत्यक्षात्मक-ज्ञानयोरपि दुष्टकारणजन्यत्वतदभावाभ्यामेव बाध्यबाधकभावस्य वक्तव्यतया अदुष्टकारणजन्यशास्त्रजन्यज्ञानेन दुष्टकारणजन्यसकलभेददर्शनादिनिवृत्ति र्युक्तैवेति ॥

ननु दुष्टकारणजन्यत्वादिमात्रं न तत्प्रयोजकं, किन्तु तुल्यत्वविशेषितं तत् । न चैतच्छास्त्रप्रत्यक्षयोस्समानं, तयोस्तुल्यत्वाभावात् । तुल्यत्वाविशेषितस्य तस्य प्रयोजकत्वेऽपि प्रत्यक्षस्य दुष्टकारणजन्यत्वेन तन्मूलकशब्दजन्य-ज्ञानस्यापि दुष्टकारणजन्यत्वान्न शास्त्रजन्यज्ञानेन प्रत्यक्षस्य विरोध इत्यत्र क्वचिदतुल्येनापि दुष्टकारणजन्यप्रत्यक्षमूलकेना-नुमानेन प्रत्यभिज्ञाप्रत्यक्षस्योपमर्ददर्शनेन न तादृशस्य बाध्यबाधकभावे प्रयोजकत्वकल्पनासम्भव इत्याशयेनाह -

**एतदुक्तं भवति - बाध्यबाधकभावे तुल्यत्वसापेक्षत्वनिरपेक्षत्वादि न कारणम् । ज्वालाभेदानुमानेन प्रत्यक्षोपमर्दायोगात् । तत्र हि ज्वालैक्यं प्रत्यक्षेणावगम्यते । एवञ्च सति द्वयोः प्रमाणयोर्विरोधे यत्सम्भाव्यमानान्यथासिद्धि, तद्बाध्यम्; अनन्यथासिद्धमनवकाशमितरद्बाधकमिति सर्वत्र बाध्यबाधकभावनिर्णय इति ॥**

**तस्मादनादिनिधनाविच्छिन्नसम्प्रदायासम्भाव्यमानदोषगन्धानवकाशशास्त्रजन्यनिर्विशेषनित्यशुद्धमुक्तबुद्धस्वप्रकाशचिन्मात्रब्रह्मात्मभावावबोधेन सम्भाव्यमानदोषसावकाशप्रत्यक्षादिसिद्धविविधविकल्परूपबन्धनिवृत्तिर्युक्तैव । सम्भाव्यते च विविधविकल्पभेदप्रपञ्चग्राहिप्रत्यक्षस्यानादिभेदवासनादिरूपाविद्याख्यो दोषः ।**

---

**एतदुक्तमिति** । तुल्यत्ववचनं दृष्टान्तार्थम् । आदिशब्देन तुल्यत्वसहितदुष्टकरणजन्यत्वादिसङ्ग्रहः ।

**ज्वालेति** । तथा सतीत्यध्याहार्यम् । सेयं दीपज्वालेति ज्वालैक्यावगमकप्रत्यभिज्ञा । प्रत्यक्षं हि 'इयं ज्वाला पूर्वज्वालातो भिन्ना पूर्वज्वालाकारणीभूतस्नेहादिविलक्षणकारणजन्यत्वादित्यनुमानेनातुल्येन प्रत्यक्षसापेक्षेणापि बाध्यते । अतो न तुल्यत्ववत्सापेक्षत्वादिकं तन्त्रमिति भावः । अयोगादित्यापादनम् । **प्रत्यक्षेण** = प्रत्यभिज्ञात्मकप्रत्यक्षेण । तर्हि बाध्यबाधकभावे न किञ्चिदपि तन्त्रं स्यात्, उक्तस्य च दूषितत्वादित्यत आह - **एवञ्चेति** । **द्वयोः** = सजातीययोः विजातीययो र्वा, **प्रमाणयोः** = प्रमात्वेन ज्ञातयोः । **सम्भाव्यमानान्यथासिद्धि** = स्वविषयस्य सत्यत्वाभावेऽपि सम्भाव्यमानस्वरूपलाभम् । सावकाशमिति योज्यम् । **अनन्यथासिद्धमनकाशमि**त्युत्तरत्र भाषणात् । सावकाशत्वात्सम्भाव्यमानान्यथासिद्धीत्यर्थः । विषयाभावेन दोषवशात्सम्भाव्यमानान्यथासिद्धीत्यर्थः । विषयाभावेन दोषवशात् द्विचन्द्रभ्रमवदप्रमाणकोटिनिक्षेपार्हत्वाद्दोषाधीनोत्पत्तिकमिदमिति शङ्क्यमानम्, अविरुद्धविषयलाभेन स्वोक्तार्थे प्रामाण्यं विनापि सम्भवदुक्तिकं वा सम्भाव्यमानान्यथासिद्धीति यावत् ।

एवं बाध्यबाधकभावे सर्वत्रानुगतप्रयोजकस्य प्रमाणतर्काभ्यां निर्णेतुं शक्यत्वाच्छास्त्रजन्यज्ञानस्य बाधकत्वं नापहीनमिति प्रकृतमुपसंहरति - **तस्मादिति** । 'अनादिनिधना ह्येषा वागुत्सृष्टा स्वयम्भुवा' इति वचनं स्मार्यते । **अविच्छिन्नसम्प्रदायेति** । इदञ्चानादिनिधनत्वे हेतुः पदद्वयेनाप्यपौरुषेयत्वं सूचितम् । अत एवासम्भाव्यमानदोषगन्धम् । सम्प्रदायाविच्छेदात्तत्कर्तृस्मरणाभावाच्चापौरुषेयत्वात् पौरुषेयवाक्य इव भ्रमविप्रलिप्सादिदोषाभावेन दोषसम्भावना नास्तीत्यर्थः । मन्वाद्याप्तमवाक्येषु क्वचित् क्वचिद्दोषसत्त्ववदत्र नास्तीत्याशयेन गन्धशब्दप्रयोगः । असम्भाव्यमानदोषगन्धानवकाशपदाभ्यां शास्त्रजन्यज्ञाने बाधकभावप्रयोजकाकारसद्भावस्सूचितः ।

ननु सम्भाव्यमानान्यथासिद्धिज्ञानस्य बाध्यत्वमनन्यथासिद्धज्ञानस्य च बाधकत्वमिति पूर्वमुक्तम् । अत्र त्वनादीत्यादिनोक्तानवकाशत्वानन्यथासिद्धत्वादीनां शास्त्रे सम्भवेऽपि शास्त्रजन्यज्ञानस्य कथं बाधकत्वमित्यत्राह - **शास्त्रजन्येति** । तादृशशास्त्रजन्यत्वेऽपि विरुद्धविषकत्वे न तादृशत्वसम्भव इत्यभिप्रेत्य ज्ञानस्य विरुद्धविषयत्वव्युदासायाह - **निर्विशेषेति** । **नित्यं** - परमार्थः, अबाध्यमिति यावत् । **शुद्धं** = अविद्याविधुरम् । **मुक्तं** जन्मदिवियुक्तं, **बुद्धं** = प्रकाशमानं । **स्वप्रकाशं** = स्वयमेव प्रकाशस्वभावम् । एतेन पूर्वोक्तभासमानत्वस्य पराधीनत्वव्युदासः । **सिद्धं** = गृहीतम् । ननूक्तप्रत्यक्षे दोषसम्भवकथनमयुक्तं प्रसिद्धकाचादिदोषस्याभावात् । प्रत्यक्षसजातीये दोषदृष्ट्याऽत्रापि तत्कल्पने वेदेप्येवं कल्पनाप्तेः । वेदसजातीयवाक्यान्तरे दोषदर्शनादित्यत्र दोषसम्भावनां प्रदर्शयति - **सम्भाव्यत** इति । विशेषेण कल्प्यत इति विकल्पः । वैविध्यं देवादिरूपेण । अयं भावः - अविद्यया देवादिरूपेण कल्पितभेदरूपप्रपञ्चग्राहित्वेन प्रत्यक्षस्य दोषः सम्भाव्यते । न हि मिथ्याभूतसर्पग्राहिणः प्रत्यक्षस्य दोषं विनोदयसम्भवः । अतः प्रपञ्चस्याविद्याकल्पितत्वेन मिथ्यात्वात्तद्विषयकप्रत्यक्षं

**नन्वनादिनिधनाविच्छिन्नसम्प्रदायतया निर्दोषस्यापि शास्त्रस्य, 'ज्योतिष्टोमेन स्वर्गकामो यजेत'** (पू.मी.श्रुति.) **इत्येवमादेर्भेदावलम्बिनो बाध्यत्वं प्रसज्येत । सत्यम् । पूर्वापरापच्छेदे पूर्वशास्त्रवन्मोक्षशास्त्रस्य निरवकाशत्वात्तेन बाध्यत एव ।**

---

दोषाधीनमेवेति । आदिशब्देन भेददर्शनसङ्ग्रहः । भेददर्शनं भेदवासना च तन्मते कार्याविद्या ॥

ननु शास्त्रस्यासम्भाव्यमानदोषगन्धत्वेऽपि तज्जन्यज्ञानस्य तात्पर्यभ्रमरूपपुरुषापराधदोषमूलकत्वसम्भवेन कथं तादृशज्ञानस्य बाधकत्वसम्भवः, अनन्यथासिद्धत्वादेरेव बाधकतायां प्रयोजकत्वात् । न च तात्पर्यभ्रमरूपपुरुषापराधात्मकदोषस्यापि भेदवासनादिरूपाविद्याख्यदोषाधीनत्वेन शास्त्रजन्याभेदावलम्बिज्ञानस्य तादृशदोषाद्यसम्भवान्न बाधकतानुपपत्तिरिति वाच्यम् । तथा सति 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्याद्यपौरुषेयत्वाधीनभ्रमविप्रलिप्सादिदोषशून्यतावच्छास्त्रजन्यस्य भेदवासनारूपदोषवशाद्भेदावलम्बिनो ज्ञानस्य बाध्यत्वापत्तेः । न चेष्टापत्तिः, शास्त्रस्य निर्दुष्टत्वेन तज्जन्यज्ञानस्यापि त्वया निर्दुष्टत्वाङ्गीकारेण बाध्यत्वकल्पनायोगादित्यभिप्रायेण शङ्कते - **नन्विति** । भेदावलम्बिन इति बाध्यतायां हेतुप्रदर्शनम् । अत्र शास्त्रस्य बाध्यत्वप्रसङ्गो ज्ञानद्वारा, एवमग्रेऽपि । यागतत्फलतत्कामादिभेदविषयकत्वादिति भावः । बाध्यत्वमिति मोक्षशास्त्रेणेत्यध्याहार्यम् । इष्टापत्त्या परिहरति— **सत्यमिति** । सर्वत्रानादिनिधनाविच्छिन्नसम्प्रदायतया वेदस्य निर्दुष्टत्वमेव, तत एव तज्जन्यज्ञाने भेदवासनादिरूपदोषाभावे निर्दुष्टत्वं, तादृशदोषसत्त्वे त्वप्रमात्वं बाध्यत्वं चेष्यते इति भावः । एतदभिप्रायेणैव सत्यमित्युक्तेः ।

ननु निर्दुष्टयोरेव शास्त्रयोः परस्परं बाध्यबाधकभावः कथमित्यत्र क्वचिच्छास्त्रयोरेव कारणान्तरवशात् परस्परं बाध्यबाधकभावः स्वीकृत इति तद्दृष्टान्तेनात्रापि स्वीकर्तुं शक्यत इत्याशयेनाह - **पूर्वेति** । पञ्चर्त्विजः समन्वारब्धाः प्रसर्पन्ति, अध्वर्युं प्रस्तोताऽन्वारभते प्रस्तोतारं प्रतिहर्ता प्रतिहर्तारमुद्गाता, उद्गातारं ब्रह्मा ब्रह्माणं यजमान इत्यन्वारम्भणं विहितम् । तस्य चापच्छेदे 'बहिष्पवमानं प्रसर्पतां यद्युद्गातापच्छिद्येत, अदक्षिणस्स यागः संस्थाप्यः, तेन पुनर्यजेत । तत्र तद्दद्यात् यत्पूर्वस्मिन् दास्यान्स्यात् । अथ प्रतिहर्तापच्छिद्येत सर्ववेदसं दद्यादित्यादि प्रायश्चित्तं विहितम् । अत्रोद्गातृप्रतिहर्त्रोरेकस्मिन्नेव प्रयोगे पौर्वापर्येणापच्छेदे पूर्वस्य प्रायश्चित्तशास्त्रस्य दौर्बल्यं परस्य प्राबल्यमिति कर्ममीमांसायामुक्तम् । तथा हि - '**पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्**' इति । तत्रोपक्रमनयेन पूर्वशास्त्रस्यासञ्जातविरोधितयोदयात्तस्यैव प्राबल्यमिति पूर्वपक्षः । पूर्वस्योत्पत्तिकाले विरोधिनः परशास्त्रस्यानुत्पन्नत्वेन तदबाधित्वेनैव पूर्वस्योत्पत्तिसम्भवः । परस्य तु पूर्वोत्पन्नविरोधिसत्त्वेन तदबाधेनोदयासम्भवात्तद्बाधित्वैवोदय इति पूर्वशास्त्रस्य बाधितत्वेन न पूर्वशास्त्रानुष्ठानमिति परस्यैव प्राबल्यमिति सिद्धान्तः । न चोपक्रमाधिकरणनयेन परस्यानुदय एवास्त्विति शङ्क्यम्, अपच्छेदरूपनिमित्तस्योदितत्वेन तन्निमित्तनैमित्तिकशास्त्रस्यानुदयासम्भवात् । अतो वस्तुस्वभावात् विरोध्युत्तरशास्त्रोत्पत्तेरवश्याभ्युपगम्यत्वेन पूर्वशास्त्रबाध एष्टव्य एव । तदुक्तं ''पूर्वं परमजातत्वाद्बाधित्वैनैव जायते । पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सिध्यति' इति । अत्र पूर्वापरशास्त्रयोः पौर्वापर्यक्रमः प्रमित्युत्पत्तिक्रमाधीनः, न तु पाठक्रमाधीनः । इत्थञ्च पूर्वपरशास्त्रयो दौर्बल्यप्राबल्याभ्यां बाध्यबाधकभावस्वीकारवदत्रापि भेदावम्बिनः कर्मशास्त्रस्य मोक्षशास्त्रबाध्यत्वं युक्तमेवेति भावः ।

**निरवकाशत्वादिति** - अनेन मोक्षशास्त्रस्याभेदावलम्बित्वेन तज्जन्यज्ञानस्य भेदवासनारूपदोषानधीनत्वाद्बाधकत्वप्रयुक्तानन्यथासिद्धत्वं सूचितम् । अत्राद्वैतिभिः कर्मब्रह्ममीमांसयोरेकशास्त्रत्वानङ्गीकारेऽपि कर्मविचारस्यापि वेदार्थविचाररूपत्वेन तदुक्तार्थस्याभिमतत्वे स्वीकारसम्भवात्कर्ममीमांसोक्तार्थस्य दृष्टान्तीकरणं नासङ्गतम् । अत एवोत्तरत्रा-

**वेदान्तवाक्येष्वपि सगुणब्रह्मोपासनपराणां शास्त्राणामयमेव न्यायः ; निर्गुणत्वात्परस्य ब्रह्मणः ॥**

**ननु च** - (मु.१.१०.) **'यः सर्वज्ञः सर्ववित्'**, (श्वे.६.८.) **'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च'**, (छा.८.१.५.) **'सत्यकामः सत्यसङ्कल्प' इत्यादिब्रह्मस्वरूपप्रतिपादनपराणां शास्त्राणां कथं बाध्यत्वम् ? निर्गुणवाक्यसामर्थ्यादिति ब्रूमः । एतदुक्तं भवति** (बृ.५.८.८.) **'अस्थूलमनण्वह्रस्वमदीर्घम्'**, (तै.आन.१.) **'सत्यं ज्ञानमनन्तं ब्रह्म'**, (मन्त्रि.२.२;४) **'निर्गुणम्'**, (श्वे.६.१९.) **'निरञ्जनम्' इत्यादिवाक्यानि निरस्त-समस्तविशेषकूटस्थनित्यचैतन्यं ब्रह्मेति प्रतिपादयन्ति; इतराणि च सगुणम् । उभयविधवाक्यानां विरोधे**

---

पच्छेदाधिकरणसिद्धन्यायमवलम्ब्य निर्गुणवाक्यानां प्राबल्यमुच्यते । एवं वेदान्तवाक्यैरपि क्वचित्सगुणब्रह्मबोधनात् गुणानां चाविद्याकल्पितत्वात्तज्जन्यसगुणब्रह्मबोधस्य भेदवासनादिदोषमूलकत्वेन तद्बोधकशास्त्रस्य दौर्बल्यमेवेत्याह - **वेदान्तेति** । पूर्वोक्तकर्मशास्त्रसमुच्चयार्थोऽपिशब्दः । **सगुणब्रह्मोपासनपराणामिति** । अनेनोपासनार्थं ब्रह्मणि सगुणत्वं कल्पितमिति, एतादृशवाक्यानां परे ब्रह्मणि वस्तुतः तात्पर्यं नास्ति भेदवासनादिरूपदोषवशात्तात्पर्यभ्रम इति च व्यञ्जितम् । भेदवासनादिरूपदोषसद्भावेन ज्योतिष्टोमादिशास्त्रस्य बाध्यत्ववत्तेनैवास्यापि बाध्यत्वमित्याशयेनोक्तम् - **'अयमेव न्याय'** इति । गुणानामविद्याकल्पितत्वे हेतुमाह - **निर्गुणत्वादिति** । सदेवेत्यादिपूर्वोदाहृतवस्तुस्वरूपोपदेशपरश्रुत्यादिबला-द्ब्रह्मणो निर्विशेषत्वसिद्ध्या गुणानामविद्याकल्पितत्वसिद्ध्या च तादृशवाक्यैर्गुणानां बाधावश्यकत्वादिति भावः ।

ननु सदेवेत्यादिवस्तुस्वरूपोपदेशपरशास्त्रैर्ब्रह्मणो निर्विशेषत्वसिद्धिवत् 'यस्सर्वज्ञस्सर्ववि'दित्यादिब्रह्मरूप-वस्तुस्वरूपोपदेशपरशास्त्रैः सविशेषत्वसिद्ध्या गुणानां सत्यत्वप्रतीतेः कथं सगुणब्रह्मोपासनपरशास्त्राणां बाध्यत्वम् । निर्गुणब्रह्मबोधकवाक्यानामेव बाध्यत्वं किं न स्यात् विनिगमनाविरहेणोभयविधवाक्ययोः प्रामाण्यं वाऽभ्युपगन्तव्यमि-त्याशयेन शङ्कते - **ननु चेति** । ज्योतिष्टोमादिकर्मशास्त्रस्य मोक्षशास्त्रेण बाध्यत्वापत्तिरूपचोद्यपरिहारेऽपि उक्त-चोद्यान्तरमवशिष्यत इत्याभिप्रायकश्चशब्दः । **सर्वज्ञः** = सामान्यतस्सर्वविषयकज्ञानवान्, **सर्ववित्** = विशेषतस्सर्व-विषयकज्ञानवान् । यद्वा **सर्वज्ञः** = सामान्यतो विशेषतश्च सर्वविषयकज्ञानवान्, **सर्ववित्** = अवाप्तसमस्तकामः । विद लाभे इत्यस्माद्धातोर्निष्पन्नं रूपमिदम् । **ज्ञानबलक्रिया** = ज्ञान बलाभ्यां सहिता क्रिया । ब्रह्मस्वरूपेत्याद्यबाध्यत्वे हेतुनिर्देशः ।

समाधत्ते **निर्गुणेति** । निर्गुणवाक्येनाभिप्रेतं सामर्थ्यं विवृणोति - **एतदुक्तमिति** । अयं भावः- निर्गुणवाक्यैः ब्रह्मणि गुणसामान्यनिषेधः कृतः, सगुणवाक्यैस्तु गुणवत्वं बोधितं, तत्र निषेधस्य निषेध्याभावेऽसम्भवात् प्रतिषेध्यस्य पूर्वप्रसक्तिर्वक्तव्या, तत्र सगुणवाक्यैः पूर्वं निषेध्येगुणे बोधिते पश्चात् निषेधवाक्यस्य प्रवृतिः । अतो निषेध्यप्रसञ्जकापेक्षया निषेधस्य परत्वात्, अपच्छेदाधिकरणसिद्धपरशास्त्रस्य प्राबल्यवत् अत्रापि निर्गुणबोधकस्य परशास्त्रस्य प्राबल्यमेव वक्तव्यमिति पूर्वशास्त्रस्य बाध्यत्वसम्भव इति ।

नन्वपच्छेदरूपनिमित्तस्य तत्रोत्पन्नत्वेन तन्निमित्तनैमित्तिकशास्त्रोदयस्यावश्यकत्वेन विरोधिभूतपूर्वशास्त्रं बाधि-त्वैवोत्तरशास्त्रप्रवृत्तिरिति तत्र सङ्गच्छते, अत्र तु न तथेत्युत्तरशास्त्रस्यानुदय एवास्तामिति चेन्न । मुमुक्षुत्वरूपकारणवशादुत्तर-शास्त्रोदयस्यावश्यकत्वात् । अतो निषेध्यबोधकसगुणवाक्यं बाधित्वैवोत्तरशास्त्ररूपनिर्गुणवाक्यानामुदयात्पूर्ववाक्यस्य बाध्यत्वमेष्टव्यमेव, 'यस्सर्वज्ञ' इत्यादिवस्तुस्वरूपपरवाक्यानि तूपासनविधिशेषत्वेन नेयानीति न तद्विरोधोऽपि । **सत्यमिति** = इदं वाक्यं व्यावृत्तिबोधकमित्यभिप्रायः । **कूटस्थं** = कूटवत्तिष्ठत्यविकृतमिति यावत् ।

**तेनैवापच्छेदन्यायेन निर्गुणवाक्यानां गुणापेक्षत्वेन परत्वाद्बलीयस्त्वमिति न किञ्चिदपहीनम् ॥**

**ननु च 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यत्र सत्यज्ञानादयो गुणाः प्रतीयन्ते । नेत्युच्यते । सामानाधिकर-**

---

**तेन** = अपच्छेदाधिकरणसिद्धेन । **एवकारः** प्रकृतेऽपच्छेदन्यायस्य सुलभसम्भावाभिप्रायकः । **गुणापेक्षत्वेनेति** - निषेधवाक्यस्य परत्वे हेतुनिर्देशः । परत्वमिति बलीयस्त्वे । यद्वा एतावता वस्तुस्वरूपोपदेशपरशास्त्रैः ब्रह्मणो निर्विशेषत्वं तदतिरिक्तस्य मिथ्यात्वञ्च प्रतिपाद्य मिथ्याभूतस्य विविधविकल्परूपबन्धस्य तत्त्वमसीत्यादिवाक्यजन्यब्रह्मात्मैकत्वज्ञानेन निवृत्तिरिति निरणायि ।

ननु 'निर्गुणं निरञ्जन'मित्यादि वाक्यैस्सह 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति वाक्योपादानमनुपपन्नं, सत्यत्वज्ञानत्वव्यापित्वरूपगुणविशिष्टब्रह्मणस्तत्र प्रतीत्या तस्य सविशेषब्रह्मबोधकत्वेन निर्गुणपरत्वासम्भवादिति शङ्कते—**ननु चेति** । 'द्व्येकयो र्द्विवचनैकवचने', 'गुणास्सत्यज्ञानप्रभृतय' इत्यादिवत्सत्यज्ञानेति भावप्रधाननिर्देशः । सत्यत्वं ज्ञानत्वमित्यर्थः । तेन सत्यज्ञानयोर्ब्रह्मस्वरूपत्वेन तद्गतगुणत्वाभावेऽपि न क्षतिः । आदिशब्देनानन्तत्वं गृह्यते । सत्यज्ञानादयो गुणा इत्यनया वचनभङ्ग्या ज्ञानशब्दोऽन्तोदत्तस्सन् धर्मिभूतज्ञानरूपब्रह्मस्वरूपवाचक इति सिद्धान्तस्सूचितः । केचित्तु ज्ञानपदस्य ज्ञानविशिष्टब्रह्मरूपधर्मिज्ञानवाचकतया ज्ञानत्ववैशिष्ट्यस्य ब्रह्मणि स्वाश्रयत्वस्वाश्रयाश्रयत्वोभयसम्बन्धेन निवेशात् ब्रह्मणो ज्ञानरूपत्वं ज्ञानाश्रयत्वञ्चेत्युभयमपि सिद्ध्यतीत्याहुः । उभयथापीदं वाक्यं सगुणब्रह्मबोधकमेव । **गुणाः** = धर्माः ॥

ननु 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यनेन ब्रह्मणो गुणवत्वप्रतीत्याशङ्कनमनुपयुक्तम् । गुणप्रतीत्यङ्गीकारेऽपि, 'यस्सर्वज्ञस्सर्ववित्' इत्यादीनामिवापच्छेदन्यायेन निर्गुणवाक्यसामर्थ्यादस्यापि बाध्यत्वस्वीकारसम्भवेन ब्रह्मणो निर्गुणत्वबाधासम्भवात् । उच्यते - तन्मते 'यस्सर्वज्ञस्सर्वविदि'त्यादिसगुणवाक्यानामिव 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति वाक्यस्य न बाध्यत्वमिष्टं, तस्य निर्गुणब्रह्मबोधकत्वात् । अत एव 'निर्गुणं निरञ्जनम्' इत्यादिवाक्यसमतया तदप्युपात्तम् । अन्यथा 'निर्गुणं निरञ्जनमि'त्यादिषु निर्गुणत्वेनोक्तस्य ब्रह्मणः स्वरूपस्य लक्षणासिद्धेः । जगत्कारणत्वादीनां तटस्थलक्षणत्ववत्सत्यादीनां स्वरूपलक्षणत्वस्य तैरङ्गीकारात् । इत्थञ्च सत्यादिवाक्ये गुणप्रतीत्यापादनेन सगुणवाक्यस्येवास्यापि बाध्यत्वस्याभ्युपगन्तव्यतया ब्रह्मस्वरूपस्यैवासिद्धिरिति सुतरां ब्रह्मणो निर्गुणत्वासिद्धिः । अतो निर्गुणवाक्येन सगुणवाक्यानां बाध्यत्वं न शक्यकल्पनमित्याशयेन **ननु चेत्यादि** शङ्काया अवतार इत्यदोष इति ॥

तदेतद्दूषयति - **नेत्युच्यते** इति । तत्र हेतुं प्रदर्शयति - **सामानाधिकरण्येनेति** । अयं भावः - तत्र सामानाधिकरण्यं शब्दसामानाधिकरण्यमर्थसामानाधिकरण्यमिति द्विविधम् । प्रकृते एकाधिकरणवृत्तित्वरूपमर्थसामानाधिकरण्यमसम्भवि । अत एकार्थवाचकत्वरूपशब्दसामानाधिकरण्यमेव वाच्यम् । तल्लक्षणञ्च भगवता पतञ्जलिना 'भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्य'मित्युक्तम् । अस्यायमर्थः - प्रकृष्टा वृत्तिः प्रवृत्तिः । विशेष्यभूतप्रधानार्थविषयकबोधनम् । तत्र निमित्तं = द्वारं, शक्यतावच्छेदकमिति यावत् । तच्च विशेषणीभूतजातिगुणादिकमेव । ततश्च भिन्नशक्यतावच्छेदकानां शब्दानां विशेष्यभूतैकार्थबोधनं सामानाधिकरण्यमिति सिद्धम् । इत्थञ्च विशेषणतो विशेष्यतश्चैकार्थानां 'घटः कुम्भ' इत्यादीनाम्, उभयतो भिन्नार्थानां 'गौरश्व' इत्यादीनाञ्च न सामानाधिकरण्यम् । किन्तु विशेषणतो भिन्नार्थानां विशेष्यत एकार्थानां 'नीलमुत्पलमि'त्यादीनामेव सामानाधिकरण्यम् । अत्र च भिन्नप्रवृत्तिनिमित्तानामित्येतन्न लक्षणप्रविष्टम् । वस्तुतो व्युत्पत्तिकाले भिन्नप्रवृत्तिनिमित्तकानामेव शब्दानां सामानाधिकरण्यं भवतीत्येतदर्थमेव तदुपादानम् । एतेन 'घटः कुम्भ' इत्यादीनां सामानाधिकरण्यासिद्धिः फलिता । तत्र व्युत्पत्तिकालेऽपि प्रवृत्तिनिमित्तभेदा-

**ण्येनैकार्थत्वप्रतीतेः । अनेकगुणविशिष्टाभिधानेऽप्येकार्थत्वमविरुद्धमिति चेत् - अनभिधानज्ञो देवानम्प्रियः । एकार्थत्वं नाम सर्वपदानामर्थैक्यम्; विशिष्टपदार्थाभिधाने विशेषणभेदेन पदानामर्थभेदोऽवर्जनीयः । ततश्चै-कार्थत्वं न सिध्यति । एवं तर्हि सर्वपदानां पर्यायता स्यात्, अविशिष्टार्थाभिधायित्वात् । एकार्थाभिधायित्वेऽ-प्यपर्यायत्वमवहितमनाः शृणु - एकत्वतात्पर्यनिश्चयादेकस्यैवार्थस्य तत्तत्पदार्थविरोधिप्रत्यनीकत्वपरत्वेन सर्व-पदानामर्थवत्त्वमेकार्थत्त्वमपर्यायता च ।**

---

भावात् । तस्यापि लक्षणकोटिप्रविष्टत्वे समानाधिकरणवाक्यस्थले विशेष्यभूतैकार्थबोधनवद्विशेषणभूतजातिगुणादि-बोधनस्याप्यावश्यकतया विशेष्यभूतैकार्थमात्रप्रतिपादकत्वन्न स्यात्, व्यधिकरणस्थल इवानेकार्थबोधकत्वापत्तेः । सर्वैरपि सामानाधिकरण्यस्यैकार्थपरत्वाङ्गीकारेण तद्विरोधापत्तिश्च । अतो न तल्लक्षणप्रविष्टम् । इत्थश्च 'सत्यं ज्ञानमि'त्यादि समानाधिकरणवाक्ये गुणानामपि बोधने एकार्थत्वभङ्गेन सामानाधिकरण्यानुपपत्तिः । अतस्तत्र न गुणानां प्रतीतिरिति ।

ननु गुणानां बोधनेऽपि नैकार्थत्वभङ्गः सकलगुणविशिष्टस्यैकस्यैव बोधनाद्विशेष्यैक्यस्य च सम्मतत्वादिति शङ्कते **अनेकेति** । उपालम्भमुखेन परिहरति - **अनभिधानज्ञ** इति । समानाधिकरणव्यधिकरणवाक्यानामभिधावैषम्यन्न जानासीति भावः । व्यधिकरणवाक्यमेव ह्यनेकार्थबोधकं, समानाधिकरणवाक्यं त्वेकार्थमात्रबोधकम् । एकस्मिन्नर्थे वृत्तिरित्यस्य एकस्मिन्नेवार्थे वृत्तिरिति ह्यर्थः । अन्यथा वैषम्यासिद्धेः । **देवानाम्प्रिय** इति च मूर्खे । अलुक्समासोऽयं । पशुरित्यपि केचित् । तदानीं तु व्यस्तं पदम् । अज्ञ इति तु पर्यवसितम् ॥

अनुपपत्तिमुद्घाटयति - **एकार्थत्वमिति** । **विशेषणभेदेनेति** । विशेषणानां परस्परभेदेन विशेषणानां विशेष्यस्य च भेदेन विशेषणभेदाधीनविशिष्टभेदे विशेष्यभेदप्रसङ्गेन चेत्यर्थः । अयं भावः - न तावत् समानाधिकरणवाक्यस्य विशिष्टार्थपरत्वस्वीकारसम्भवः । विशिष्टार्थपरत्वं हि विशेषणविशेष्योभयार्थपरत्वम् । तत्र विशेषणानां विशेष्यस्य च परस्परभेदेनैकार्थत्वाभावात्सामानाधिकरण्यन्न स्यात् । विशेषणभेदेन विशिष्टस्यापि भेदापत्ति र्विशेषणस्य विशेष्यभेदक-त्वनियमात् । 'खण्डो मुण्डो गौरि'त्यादौ च तथा दर्शनात् । न च 'श्यामो युवा लोहिताक्षः समपरिमाणो देवदत्त'इत्यादौ बहूनामपि विशेषणानां न व्यावर्तकत्वमिति वाच्यम् । तत्र स्वतःप्राप्तविशेष्यभेदकत्वस्य प्रत्यक्षविरोधेनापोदनात् । ब्रह्मणः प्रत्यक्षागोचरत्वेन सत्यमित्यादि विशेषणानां विशेष्यभेदकत्वस्वाभाव्यप्रतिरोधासम्भवात् । न च 'ब्रह्मे'त्येकवचनान्तो विशेष्यशब्दः प्रतिरोद्धा, जात्यैक्यविवक्षयापि तस्योपपत्तिसम्भवात् । 'खण्डो मुण्डो गौरि'त्यादौ च तथैव निर्वाहात् । न च तत्र प्रत्यक्षबलान्निर्वाह इति वाच्यम् । 'खण्डो मुण्डो गौरि'ति शब्दस्थलेऽपि व्यक्तिभेदबुद्ध्या तथैव निर्वाहस्य क्रियमाणत्वात् । अतो विशेषणभेदेन विशिष्टभेदापत्त्या विशेष्यस्यापि भेदप्रसङ्गः । अतो न विशिष्टपरत्वमभ्युपगन्तुं युक्तमिति ॥

इदमुपलक्षणम् । विशिष्टार्थपरत्वस्वीकारे एकविशिष्टेऽपरविशिष्टाभेदबोधने विशेषणानामप्यभेदप्रसङ्गः । एक-विशिष्टे विशेषणमात्रान्वयबोधने विशेषणानामन्योन्यसमवायप्रसङ्गः, विधेयस्य यावदुद्देश्यव्यापित्वनियमात् इति । ननु तर्हि विशेषणामप्यभिधाने दोषजालसम्भवात्सर्वैरपि पदै र्विशेष्यमात्रमुपस्थाप्यत इत्यभ्युपेत्यम् । तथा च धटकुम्भ-शब्दादीनामिव पर्यायतैव स्यादिति चोदयति - **एवं तर्हीति** । इदमुपलक्षणम् । पदान्तरवैयर्थ्यं सामानाधिकरण्यभङ्गश्च भवतीति । परिहरति - **एकेति** । **'अवहितमनाः शृणु'** इति विषयस्यातिकृच्छ्रत्वात्सर्वज्ञम्मन्यमानेन न ज्ञेयं, न मध्ये मध्ये चोदनीयम् । अतो यावद्वाक्यार्थसमाप्त्यवधानेन श्रोतव्यमिति भावः । **एकत्वेति** । अयमत्र भावः - सर्वत्र तात्पर्यानु-रोधेनैव वाक्यार्थो निर्णेतव्यः, सत्यमित्यादिवाक्यञ्च ब्रह्मस्वरूपबुभुत्सायां प्रवृत्तं, समानविभक्तिकञ्च । अत एकार्थ-

**एतदुक्तं भवति - लक्षणतः प्रतिपत्तव्यं ब्रह्म सकलेतरपदार्थविरोधिरूपम् । तद्विरोधिरूपं सर्वमनेन पदत्रयेण फलतो व्युदस्यते । तत्र सत्यपदं विकारास्पदत्वेनासत्याद्वस्तुनो व्यावृत्तब्रह्मपरम् । ज्ञानपदं चान्याधीनप्रकाशजडरूपाद्वस्तुनो व्यावृत्तपरम् । अनन्तपदश्च देशतः कालतो वस्तुतश्च परिच्छिन्नाद्व्यावृत्तपरम् । न च व्यावृत्ति र्भावरूपोऽभावरूपो वा धर्मः । अपि तु सकलेतरविरोधि ब्रह्मैव ।**

---

तात्पर्यकमिति निश्चेतव्यम् । अतो विशेषणार्थं त्यक्त्वा केवलविशेष्यार्थस्वीकार एवोचितः । तत्र विशेषणार्थपरित्यागेऽपि तत्तत्पदजन्यफलभूतव्यावृत्तिपरत्वन्तु न तत्तत्पदानां त्यज्यते । तस्मात्सत्यादिपदैरेकस्यैव ब्रह्मणः सत्यादिपदार्थविरोधिप्रत्यनीकाकारत्वोपस्थापनात् व्यावृत्तिरूपनिमित्तभेदलाभान्न सामानाधिकरण्यभङ्गः । तत्तद्व्यावृत्तिरूपप्रयोजनसिद्ध्या न पदान्तरवैयर्थ्यम् । अत एव न पर्यायत्वमपीति ।

ननु सत्यादिपदानामसत्यवस्त्वादिव्यावृत्तब्रह्मस्वरूपबोधकत्वं, उत ब्रह्मस्वरूपमात्रबोधकत्वम् । नाद्यः स्वेतर तद्व्यावृत्यादीनामपि बोधने एकार्थत्व भङ्गप्रसङ्गात्, नान्त्यः पर्यायत्वादिप्रसङ्गानामनिराकरणादिति चेत्, उच्यते - सत्यादिपदानां स्वेतरवस्तुव्यावृत्ततात्पर्यकत्वधर्मिस्वरूपमात्रबोधकत्वमेव स्वीक्रियते । अतो नैकार्थ्यहानिः । नापि पर्यायत्वम् । पर्यायत्वस्याभिन्नव्यावृत्तिजनकत्वस्वरूपत्वात् । सत्यादिपदजन्यव्यावृत्तीनामनेकत्वेन पर्यायत्वगन्धस्यैवाभावात् । एतेन पदान्तरवैयर्थ्यप्रसङ्गश्च दूरोत्सारितः । न च स्वरूपमात्रबोधकत्वे सामानाधिकरण्यभङ्गः भिन्नप्रवृत्तिनिमित्ताभावादिति वाच्यम् । तस्य लक्षणघटकत्वास्वीकारेण दत्तोत्तरत्वात् । आस्तां वा भिन्नप्रवृत्तिनिमित्तकानामित्यस्य लक्षणघटकत्वम् । तावतापि न क्षतिः, समानाधिकरणपदानां व्युत्पत्तिकाले प्रवृत्तिनिमित्तभेदसत्त्वेन भिन्नप्रवृत्तिनिमित्तकत्वस्याव्याहतत्वात् । अतश्च सर्वत्र समानधिकरणस्थले व्युत्पत्तिकाले प्रवृत्तिनिमित्तभेदसत्त्वेन शब्दानां भिन्नप्रवृत्तिकत्वादिदानीं चैकार्थबोधकत्वात् लक्षणसङ्गतिरिति सम्प्रदाय इत्यनवद्यम् ॥

ननु स्वरूपमात्रप्रश्नानुगुण्यात् 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्युत्तरवाक्यस्य स्वरूपमात्रबोधकत्वाभ्युपगमेऽपि किमर्थं व्यावृत्तिराश्रीयते व्यावर्त्यानां बहुत्वात् स्वेतरसकलव्यावृत्ति र्हि दुश्शका, व्यावृत्तीनाञ्च धर्मत्वात् ब्रह्मणस्सविशेषत्वमेवाभ्युपगतं भवतीत्यादिशङ्कां परिहरन्नुक्तार्थं सङ्कलप्य दर्शयति - **एतदुक्तमिति । लक्षणतः** = स्वरूपलक्षणतः । एतेन ब्रह्मणो जगत्कारणत्वशङ्कितदोषपरिहाराय स्वेतरसकलपदार्थविरोधित्वस्य प्रदर्शनीयतया स्वरूपलक्षणबोधकशोधकवाक्ये व्यावृत्त्याश्रयणं युक्तमिति सूचितम् । **तद्विरोधिरूपं** = तद्विरोधिस्वरूपम् । **पदत्रयेणेति** । एकस्यापि पदस्य कृत्स्नव्युदासक्षमत्वेऽपि पदान्तरस्य नैतादृशं सामर्थ्यमस्तीति भावः । **सर्वं व्युदस्यत** इत्यनेन स्वेतरसकलव्यावृत्ते र्दुश्शकत्वमपोदितम् । **फलत** इत्यनेन सत्यादिपदानां धर्मिस्वरूपमात्रबोधकत्वे स्वेतरव्यावृत्तौ सर्वस्यापि व्युदासः फलिष्यतीति सूचितम् ।

व्युदासप्रकारं दर्शयति - **तत्रेति** । तत्र सत्यपदेन ब्रह्मणः कारणत्वेन शङ्कितं विकारित्वप्रयुक्तमनृतत्वं व्युदस्तम् । **विकारास्पदत्वेनेति** वस्तुनोऽसत्यत्वे हेतुनिर्देशः । **वस्तुनः** = व्यावहारिकसत्यात् । **व्यावृत्तपरं** = व्यावृत्तितात्पर्यकम् । एवमुत्तरत्रापि । **ज्ञानपदेन** कारणत्वशङ्कितमन्याधीनप्रकाशत्वरूपजडत्वं व्युदस्तम् । **अनन्तपदेन** परिच्छिन्नत्वं व्युदस्तम् । एतेन सत्यादिपदेष्वेकपदेनापि सकलेतरव्यावृत्तिसिद्धावपि कारणत्वशङ्कितस्वेतरपदार्थवृत्तिजडत्वाद्याकारस्य पदत्रयाभावे निवर्तनासम्भवात्पदत्रयमपि सफलमिति सिद्धम् । व्यावृत्तिभिर्ब्रह्मणस्सधर्मत्वं व्युदस्यति - **न चेति** । अत्र व्यावृत्ते र्धर्मत्वमभ्युपगम्य तस्या भावरूपत्वाभावरूपत्वयोर्न निषेधः क्रियते असामञ्जस्यात् । किन्तु धर्मत्वस्य निषेधः । तत्र धर्मस्य क्वचिद्भावरूपत्वं क्वचिदभावरूपत्वञ्च दृश्यते । तादृशधर्मत्वं व्यावृत्तेर्न सम्भवतीत्यभिप्रायः । किन्तर्हीत्यत्राह - **अपि त्विति** ।

**यथा शौक्ल्यादेः कार्ष्ण्यादिव्यावृत्तिः तत्पदार्थस्वरूपमेव, न धर्मान्तरम्। एवमेकस्यैव वस्तुनः सकलेतरविरोध्याकारतामवगमयदर्थवत्तरमेकार्थमपर्यायञ्च पदत्रयम्। तस्मादेकमेव ब्रह्म स्वयञ्ज्योतिर्निर्धूत-निखिलविशेषमित्युक्तं भवति। एवं वाक्यार्थप्रतिपादने सत्येव,** (छा.६.२.१.) **'सदेव सोम्येदमग्र आसीदेकमेवा-द्वितीयम्' इत्यादिभिरैकार्थ्यम्।** (तै.भृ.१.) **'यतो वा इमानि भूतानि जायन्ते',** (छा.६.२.१.) **'सदेव सोम्येदमग्र आसीत्',** (ऐत.१.१.१.) **'आत्मा वा इदमेक एवाग्र आसीत्' इत्यादिभिर्जगत्कारणतयोपलक्षितस्य ब्रह्मणः स्वरूपमिदमुच्यते,** (तै.आनं १.१.) **'सत्यं ज्ञानमनन्तं ब्रह्म' इति। तत्र सर्वशाखाप्रत्ययन्यायेन कारणवाक्येषु सर्वेषु सजातीयविजातीयव्यावृत्तमद्वितीयं ब्रह्मावगतम्। जगत्कारणतयोपलक्षितस्य ब्रह्मणोऽद्वितीयस्य**

---

तस्या ब्रह्मस्वरूपत्वेन धर्मित्वमेवेति भावः। सकलेतरविरोधीति हेतुगर्भविशेषणम्। ब्रह्मस्वरूपस्य सकलेतरविरोधि-त्वात्तदेव सर्वव्यावृत्तिरित्यर्थः॥

व्यावृत्तेस्स्वरूपात्मकत्वे दृष्टान्तमाह - **यथेति**। शौक्लयादेः कार्ष्ण्यादिव्यावृत्तिर्हि शौक्ल्यादिधर्मरूपैव, न तु धर्मान्तरम्, अनुपलम्भादन्यथाऽनवस्थानाच्च। तद्वदिति भावः। शुक्लवस्तुनि कृष्णवस्तुव्यावृत्ति वर्तते। सा तु धर्मरूपेति न विवादः। शौक्ल्ये कार्ष्ण्यव्यावृत्ति वर्तते। सा तु व्यावृत्तिरूपापि न धर्मरूपा, परन्तु धर्मिभूतशौक्ल्यरूपैव। यदि धर्मिभूतशौक्लयादेः कार्ष्ण्यव्यावृत्तिर्धर्मरूपा, ततोऽन्या इत्युच्यते तदा कार्ष्ण्यव्यावृत्ति धर्मिभूतशौक्ल्यादे र्व्यावृत्तेति वक्तव्यम्। तथा च व्यावृत्तिगतव्यावृत्तिः किंरूपेति विवेचने शौक्ल्यव्यावृत्तेः कार्ष्ण्यव्यावृत्तेश्चैकरूपत्वं पूर्वोक्तदिशा न सम्भवतीति उभयो र्व्यावृत्यो र्भेदरूपत्वमिति तयोरपि व्यावृत्तिसिद्धिः। एवं रीत्याऽनवस्थैव। एवमेव जातिविशेषक्रियाविशेषयोरपि गुणविशेषवत्स्वेतरव्यावृत्तेः स्वरूपरूपत्वमेव। यथा घटत्वजातिः पटत्वजात्यपेक्षया। तत्र घटत्वजातिव्यावृत्तिः पटत्वजातौ स्थितापि पटत्वजातिरूपधर्मिरूपैव। अन्यथाऽनवस्थानात्। एवं क्रियाविशेषे। गुणपरत्ववादिमतापेक्षयाप्यस्मिन्पक्षेऽपेक्षितकारणत्वशङ्कितदोषव्यावृत्तिलाभात्तत्रापि सकलेतरव्यावृत्तिलाभाच्चाधिक-प्रयोजनमस्तीत्याशयेनोक्तम् - **अर्थवत्तरमिति**। **अपर्यायं** = पर्यायत्वाभाववत्। एवं सिद्धं सहेतुकन्निगमयति - **तस्मादिति**।

ननु सत्यज्ञानादिपदानां स्वेतरवस्तुव्यावृत्ततात्पर्यकत्वं धर्मिस्वरूपमात्रबोधकत्वञ्चाभ्युपेत्य फलांशे इतरपदार्थं व्युदस्य एकार्थवाचकत्वरूपसामानाधिकरण्योपपादनापेक्षया गुणविशिष्टतात्पर्यकत्वं धर्मिस्वरूपमात्रबोधकत्वञ्च स्वीकृत्य एकार्थवाचकत्वरूपसामानाधिकरण्योपपादनेऽपि न किञ्चिद्बाधकमित्यत्र व्यावृत्तिवद्गुणादीनां ब्रह्मस्वरूपत्वा-नभ्युपगमेन ब्रह्मणस्सविशेषत्वापत्त्या कारणवाक्यादिविरोधस्स्यादित्याशयेन दूषणान्तरमाह - **एवमिति**। **सदेवेति**। अत्र सजातीयविजातीयस्वगतभेदराहित्यस्योक्ततया ब्रह्मणो निर्विशेषत्वसिद्धिरिति भावः। ननु भवन्मतेऽपि सर्वज्ञत्वादि-विशिष्टस्याविद्यातिरोहितस्य ब्रह्मण एवोपादानत्वम्, अन्यथा 'यस्सर्वज्ञस्सर्ववित्' 'यस्य ज्ञानमयं तपः', 'तस्मादेतद्ब्रह्म नामरूपमन्नञ्च जायत' इत्यादि श्रुतिविरोधापत्तेः। अत एव 'यतो वा इमानि भूतानि जायन्ते' इत्यादावपि सर्वज्ञत्वादिवि-शिष्टस्य ब्रह्मण एवोपादानत्वमुच्यते, अन्यथा निर्विशेषकूटस्थस्य ब्रह्मणोऽविद्याशाबल्यं विना सृष्टिक्रियाकर्तृत्वादीनामस-म्भव एव। अतः कारणवाक्येषु सर्वेषु विशिष्टब्रह्मण एव कारणत्वं वक्तव्यम्। इत्थञ्च एकमेवाद्वितीयमित्यादिकमपि तदनुसार्यर्थ-परमेवेति कथमेतद्वाक्यैकण्ठयात्सत्यादिवाक्यस्य निर्विशेषबोधकत्वमित्यत्राह - **यतो वा इति**। **जगत्कारणतयोपलक्षित-स्येति**। शाखा हि दूरमेव स्थित्वा चन्द्रमसं ज्ञापयति। तद्वदेव जगत्कारणत्वमपि तटस्थं सज्ज्ञापकम्। अतः कारणवाक्य-मपि निर्विशेषब्रह्मस्वरूपबोधकमेवेति भावः। एतेन प्रस्तुत चोद्यस्य कः परिहार उक्त इत्यत्राभिप्रायं दर्शयति - **तत्रेति**।

**प्रतिपिपादयिषितं स्वरूपं तदविरोधेन वक्तव्यम्। अद्वितीयत्व-श्रुतिर्गुणतोऽपि सद्वितीयतां न सहते। अन्यथा,** (श्वे.६.१९) **'निरञ्जनम्',**(मन्त्रि.१.२;२.४.)**'निर्गुणम्' इत्यादिभिश्च विरोधः। अतश्चैतल्लक्षणवाक्यमखण्डैकरसमेव प्रतिपादयति। ननु च सत्यज्ञानादिपदानां स्वार्थप्रहाणेन स्वार्थविरोधिव्यावृत्तवस्तुस्वरूपोपस्थापनपरत्वे लक्षणा स्यात्। नैष दोषः, अभिधानवृत्तेरपि तात्पर्यवृत्तेर्बलीयस्त्वात्। सामानाधिकरण्यस्य ह्यैक्य एव तात्पर्यमिति सर्वसम्मतम्।**

---

अयं भावः - सर्वशाखाप्रत्ययनयो ह्युपनिषदन्तरानुक्तार्थस्यापि स्वीकर्तव्यतां बोधयति। अतः कारणवाक्ये क्वचिन्निर्गुणस्य ब्रह्मणो बोधने सगुणमात्रपरासूपनिषत्स्वपि निर्गुणं ब्रह्म बोधितमेव। तत्रापच्छेदन्यायान्निर्गुणवाक्यानां बलीयस्त्वमेष्टव्यम्। इत्थञ्च सर्वत्र सजातीयविजातीयस्वगतभेदशून्यस्य ब्रह्मण एव प्रतिपादनात्तदैककण्ठ्याय सत्यमित्यादिशोधकवाक्यस्यापि निर्विशेषपरत्वमेवाभ्युपेत्यम्। अन्यथा कारणवाक्यविरोधात्। न हि कारणवाक्ये ब्रह्मणः सविशेषत्वं बोध्यते। 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इति श्रुतमद्वितीयपदं हि 'सदेव' 'एकमेवेति' विजातीयसजातीयव्यावर्तकावधारणद्वयसमभिव्याहृतं, ब्रह्मणो गुणतोऽपि सद्वितीयत्वन्न सहते। अत एव शोधकवाक्यान्तरेपि 'निरञ्जनं निर्गुणम्' इति स्थूलत्वादिवद्ब्रह्मणि सत्यत्वादिकमपि निषेधति। अन्यथा 'निर्गुणमि'ति गुणसामान्यनिषेधोऽनुपपन्नस्स्यात्। अतः सत्यमित्यादिवाक्यं कारणशोधक-वाक्यैककण्ठ्यान्निर्विशेषब्रह्मस्वरूपबोधकमेवेति। **तदविरोधेन** = कारणवाक्याविरोधेन। 'चोलनृपस्सम्राडद्वितीय' इत्यादाविवाद्वितीयपदस्य समनिषेधार्थकत्वन्निषेधति - **अद्वितीयत्वे**ति। 'सदेव' 'एकमेवेति' विजातीयादिव्यावृत्ति-निरासस्य कृतत्वान्नात्राद्वितीयपदं समनिषेधार्थकं भवितुमर्हतीति भावः ॥

एवमभ्युपगमे शोधकवाक्येनास्य विरोधमाह - **अन्यथे**ति। उपसंहरति - **अत** इति। **चः** उक्तसमुच्चायकः। **एतदि**ति लक्षणवाक्यान्तरेभ्यो व्यावृत्तिसूचकम्। 'यतो वा' इत्यादिकं हि तटस्थलक्षणवाक्यम्। इदञ्च ब्रह्मस्वरूपप्रतिपादकम्। अतः सामानाधिकरण्यबलेन कारणवाक्यैककण्ठ्येन शोधकवाक्यान्तरैकार्थ्याच्चास्य निर्विशेषब्रह्मस्वरूपबोधकत्वेमेवाङ्गीकार्यमिति भावः। **अखण्डैकरसमि**ति। **अखण्डः** = विशेषाभावः। **रसः** = स्वभावः। अखण्डः एकरसः यस्य, विशेषाभावैकस्वभावमित्यर्थः। यद्वा - अखण्डं चैकरसं च नित्यनिर्विशेषं, स्वप्रकाशत्वस्वभावञ्चेत्यर्थः।

ननु विशिष्टवाचिनां सत्यादिपदानां विशिष्टवाचकत्वमनभ्युपगम्य ब्रह्मस्वरूपमात्रबोधकत्वे लक्षणैव स्यात्। अत एव भवद्भिरपि व्युत्पत्तिदशायां विशिष्यवाचकत्वमभ्युपेयते। अतो लक्षणापरिकल्पनापेक्षया व्युत्पत्तिदशागृहीत विशिष्टवाचकत्वमेव स्वीकर्तुं शक्यत इति चोदयति - **ननु चे**ति। **स्वार्थविरोधिव्यावृत्ते**ति। स्वार्थविरोधिव्यावृत्तेर्वस्तुतो ब्रह्माभिन्नत्वाद्वस्तुस्थितिमात्रप्रदर्शनपरोऽयं ग्रन्थः। न तु सत्यादिवाक्येन स्वार्थविरोधिव्यावृत्तिवैशिष्ट्यबोधकत्वाभिप्रायकः। अन्यथा अखण्डार्थत्वविरोधापत्तेः। सामानाधिकरण्यस्य ह्यैक्य एव तात्पर्यमिति समाधानस्यासाङ्गत्यापत्तेश्च। विशेषणांशपरित्यागेऽपि शक्यार्थैकदेशभूतविशेष्यांशापरित्यागान्न लक्षणैव सम्भवति। अथापि जहदजहल्लक्षणा दुर्वारेति भावः। तस्या अदोषत्वं प्रतिजानीते - **नैष दोष** इति। सर्वत्र तात्पर्यानुगुणैवार्थकल्पना। **अत**श्शब्दस्य तात्पर्यविषयार्थ एव प्रामाण्यातिशयः, तात्पर्यविरोधे तु मुख्यवृत्तेर्दौर्बल्यमेवेत्याशयेन हेतुं प्रदर्शयति - **अभिधाने**ति। **तात्पर्यवृत्तेर्बलीयस्त्वादिति**। तात्पर्याद्धि वृत्तिः न वृत्त्यनुरोधात्तात्पर्यमिति न्यायोऽत्राभिप्रेतः। अत्र शुद्धब्रह्मस्वरूपे एव तात्पर्यं, न तु गुणविशिष्टब्रह्मणीत्यत्र किं नियामकमित्यतस्तात्पर्यं व्यनक्ति - **सामानाधिकरण्यस्ये**ति। **सर्वसम्मतमि**ति। न केवलमस्माकमेव सम्मतिः, किन्तु ब्रह्मणस्सविशेषत्ववादिनां भवतामपि सामानाधिकरण्यानुरोधेन ऐक्यतात्पर्ये सम्मतिरावश्यकीति भावः ॥

**ननु च सर्वपदानां लक्षणा न दृष्टचरी। ततः किम्? वाक्यतात्पर्याविरोधे सत्येकस्यापि न दृष्टा। समभिव्याहृतपदसमुदायस्यैतत्तात्पर्यमिति निश्चिते सति, द्वयोस्त्रयाणां सर्वेषां वा तदविरोधाय एकस्येव लक्षणा न दोषाय। तथा च शास्त्रस्थैरभ्युपगम्यते - कार्यवाक्यार्थवादिभिर्लौकिकवाक्येषु सर्वेषां पदानां लक्षणा समाश्रीयते। अपूर्वकार्य एव लिङादेर्मुख्यवृत्तत्वाल्लिङादिभिः क्रियाकार्यं लक्षणया प्रतिपाद्यते - कार्यान्वितस्वार्थाभिधायिनां चेतरेषां पदानामपूर्वकार्यान्वित एव मुख्यार्थ इति क्रियाकार्यान्वितप्रतिपादनं लाक्षणिकमेव।**

---

ननु सत्यादिपदानामैक्यतात्पर्यकत्वन्न सम्भवति, भवद्भिस्सत्यादि सर्वपदानामपि लक्षणाङ्गीकारेण तात्पर्यव्यवस्थापकाभावात्। तात्पर्यं हि क्वचिन्मुख्येन केनचिंदशेन व्यवस्थाप्यते। तदनुरोधेनान्यस्य लाक्षणिकत्वञ्च, यथा च "गङ्गायां घोष" इत्यादौ गङ्गापदस्य प्रवाहार्थकत्वे घोषपदे लक्षणा, घोषपदस्य शबरालयार्थकत्वे च गङ्गापदे लक्षणा। अतो नात्र तात्पर्यकल्पनव्यवस्था सम्भवति। अतस्सर्वत्र लक्षणाकल्पनं दुर्घटम् अदृष्टञ्च तदित्याशयेन शङ्कते—**ननु चेति**। सर्वत्र पदानां मुख्यार्थपरिकल्पनमपि तात्पर्यानुरोधादेव। अत एव गङ्गापदस्य प्रवाहार्थकत्वं, घोषपदस्य मत्स्यतात्पर्यकत्वानुरोधेन स्वीक्रियते। अतो मुख्योंऽशो न तात्पर्यव्यवस्थापकः। अन्यत्र सर्वपदानां लाक्षणिकत्वादर्शनं चाकिञ्चित्करं, प्रकरणादिकमेव च तद्व्यवस्थापकम्। अस्तिचात्र प्रकरणम् ऐक्यतात्पर्यव्यवस्थापकं, ब्रह्मस्वरूपबुभुत्सायाः पूर्वप्रकृतत्वादित्याशयं हार्दं कृत्वा प्रतिवक्ति—**ततः किमिति**। **वाक्येति**। न हि सर्वपदलक्षणायाः क्वचिददर्शनमात्रेणान्यत्र तत्कल्पनन्न युक्तम्। क्वचिद्वाक्यतात्पर्याविरोधे एकपदलक्षणाया एवादर्शनादन्यत्राप्येकपदलक्षणाया अप्यनभ्युपगमप्रसङ्गादिति भावः। अतश्च तात्पर्यमुख्यार्थबाधावेव तत्प्रयोजकौ, न तु पदैकत्वद्वित्वादिकमित्याशयेनाह— **समभिव्याहृतस्येति**। **तदविरोधाय** = तात्पर्याविरोधाय। सर्वपदलक्षणाङ्गीकारपक्षः शास्त्रज्ञसम्मत इत्याह—**तथा चेति**। **शास्त्रस्थैरित्यनेन** स्वपक्षस्य बहुवादिसम्मतत्वादत्रापि तथास्वीकारो न क्षत्यावह इति भावः। तादृशस्थलं प्रदर्शयति — **कार्यवाक्यार्थेति**। लौकिकवाक्ये सर्वेषामपि पदानां लाक्षणिकत्वसमाश्रयणे हेतुमाह—**अपूर्वेति**। अपूर्वमेव कार्यं अपूर्वकार्यम्। वेदवाक्ये सर्वत्रापूर्वरूपकार्य एव लिङ्गादीनां शक्तिसद्भावात् 'गामानये'त्यादिलौकिकवाक्येषु लिङादीनां क्रियाकार्ये लक्षणैवेति भावः। नन्वस्तु लौकिकवाक्ये लिङादीनां लाक्षणिकत्वं, तावता सर्वपदानामपि लाक्षणिकत्वाश्रयणं किमर्थमित्यत्राह — **कार्यान्वितेति**।

अयमाशयः - व्यवहारत एव व्युत्पत्तिरिति प्राभाकराणां मतम्। 'गामानय' 'गां नय' इति व्यवहारत एव शक्तिज्ञानम्। तत्र क्रियारूपं कार्यं लिङर्थः गवानयनं कार्यं गोनयनं कार्यमिति लोके बोधजननात्। 'य एव लौकिकाः शब्दास्त एव वैदिकाः' इति नयेन वेदेपि 'स्वर्गकामो यजेत' इत्यत्रापि यागः कार्य इति बोधः प्रसज्यते। अयञ्च बोधोऽनुपपन्नः। स्वर्गकामस्य यागः कार्य इति हि वक्तव्यम्। यागस्य क्रियारूपस्य क्षणध्वंसिनः कालान्तरभाविस्वर्गजनकत्वानुपपत्तेः, तादृशबोधस्यानन्वयात्। यागे स्वर्गकामस्य पुरुषस्य नियोज्यत्वानुपपत्तेः। अतो यागजन्यमपूर्वं कार्यमिति बोधः कल्पनीयः। तस्मिन्नपूर्वे स्थिरे कालान्तरभावि स्वर्गकामनावन्तं पुरुषं नियोजयतीति दोषवारणं कर्तव्यम्। लोके क्रियारूपकार्यमेवावगम्यते। न त्वपूर्वरूपं कार्यम्। अतः कार्यत्वेन रूपेणापूर्वस्य व्युत्पत्तिर्न जाता। वेदेऽपूर्ववाचकं पदञ्च न दृश्यते। अतो वैदिकलिङादिवाच्यत्वमेवापूर्वस्येति वक्तव्यम्। एवञ्च वेदोक्तमपूर्वं वा लोकोक्तं क्रियाकार्यं वा लिङर्थ इति विमर्शे वेदस्य मुख्यप्रमाणत्वादपूर्वार्थे लिङादे र्लक्षणाकल्पनस्यायुक्तत्वादपूर्वमेव लिङादिशक्यार्थ इति स्वीकर्तव्यम्। लौकिकवाक्यं हि वक्तृभिप्रेतार्थानुवादकमिति लक्षणा कल्पयितुं शक्या। तथा च वेदेऽपूर्वस्य शक्यार्थत्वात्समभिव्याहृतपदानामपूर्वरूपकार्यान्विताभिधायित्वं, लोके लिङादे र्लाक्षणिकत्वात्क्रियाकार्यान्विताभिधायित्वं समभिव्याहृतपदानामिति तेषां क्रियाकार्यान्वितार्थ-

**अतो वाक्यतात्पर्याविरोधाय सर्वपदानां लक्षणाऽपि न दोषः । अत इदमेवार्थजातं प्रतिपादयन्तो वेदान्ताः प्रमाणम् ॥**

बोधने लक्षणैव । अतस्सर्वं लौकिकवाक्यं लाक्षणिकमेव ।

नन्वन्विताभिधानं हि भवदभिमतम् । अभिधा नाम पदशक्तिः, तत्कथं समभिव्याहृतपदानां तत्तदर्थे लक्षणा? विरोधादिति चेत्सत्यम् । अन्विताभिधानवादिनामयमभिप्रायः - अन्वितमेवाभिधेयम् इत्यन्वयांशे एव तात्पर्यं, न तु अभिधान इत्यदोषात् ॥

नन्वन्विताभिधानवादिप्राभाकरमतमुपजीव्याद्वैती कथं सर्वपदानां लाक्षणिकत्वमभिप्रैति । समानाधिकरणस्थले अखण्डार्थबोधस्वीकारादन्वितबोधनस्यैवाप्रसक्तेरिति चेत्प्राभाकरोक्तस्य सर्वस्याप्यनेनानङ्गीकारात् कार्यान्विताभिधायित्वमेव हि प्राभाकराभिमतम् । तत्तु कार्यपरवाक्य एव । न तु सिद्धपरवाक्येपि । अतस्तदुपजीवने सिद्धपरवाक्ये बोधस्यैवानुपपत्तिरिति ब्रह्मस्वरूपमेव न सिद्ध्येत् । तस्मात्कार्यान्वितविषयनियमो यथा त्यज्यते तथैवान्वितविषयबोधननियमोपि त्यज्यते । सर्वपदलक्षणास्वीकारमात्र एव प्राभाकरमतोपजीवनादिति ।

वेदवाक्ये सर्वत्र पदानां कार्यपरतयैव व्युत्पत्तिः । कार्यपरत्वञ्चापूर्वरूपकार्यत्वावच्छिन्नविषयताकबोधं,साक्षाद्वा परम्परया वा कार्यत्वावच्छिन्नविषयतानिरूपितप्रकारताशालिबोधं प्रति वा जनकत्वम् । तत्र लिङादिनां कार्यत्वावच्छिन्नविषयकबोधजनकत्वं, तत्समभिव्याहृतपदानां कार्यत्वावच्छिन्नविषयतानिरूपितप्रकारताशालिबोधजनकत्वमिति कार्यपरत्वोपपत्तिः । इत्थञ्च सर्वत्र वेदवाक्ये लिङादिनाऽपूर्वरूपकार्यस्योपस्थापने तत्समाभिव्याहृतपदानामपूर्वरूपकार्यान्वितार्थे शक्तिरित्यास्थेयम् । ततश्च लिङादीनामपूर्वकार्य एव मुख्यवृत्तत्वाल्लौकिकवाक्येषु क्रियाकार्यप्रतिपादनं लक्षणयैवेति तत्समभिव्याहृतपदैः क्रियारूपकार्यान्वितार्थप्रतिपादनमपि लक्षणयैवेति सर्वपदानामपि लाक्षणिकत्वसिद्धिरिति ।

न चात्रान्यान्वितमात्रे पदान्तरशक्तिसम्भवः, कार्यपरतयैव तेषां व्युत्पत्त्यङ्गीकारात् । न च कार्यमात्रान्विते पदान्तरशक्तिः, तर्हि लिङादीनामपि कार्यमात्रे मुख्यत्वप्रसङ्गात् । न चेष्टापत्ति सम्भवः, अपूर्वाख्यविशेषस्योपस्थित्यसम्भवप्रसङ्गात्, तत्र प्रमाणान्तराभावाच्चाप्रामाणिकत्वप्रसङ्गात् । अत एव क्रियाकार्यान्विते पदान्तरशक्तिकल्पनमपि निरस्तम् । तस्मादन्यान्वितमात्रे कार्यमात्रन्विते क्रियाकार्यान्विते वा पदान्तराणां शक्त्यनभ्युपगमादपूर्वरूपकार्यान्वित एव शक्तिस्वीकारच्च लौकिकवाक्ये सर्वत्र तदभावात् सर्वपदानामपि क्रियारूपकार्यतदन्विततार्थेषु लक्षणैवाभ्युपगन्तव्येति ।

इदमुपलक्षणं,'विषं भुङ्क्ष्व' इत्यादावपि सर्वपदानामपि लक्षणाऽङ्गीक्रियत इत्यपि बोध्यम् । तत्र विषपदं निषिद्धभोज्यं, भुङ्क्ष्वेति पदं तद्भोजनस्याकर्तव्यत्वञ्च लक्षयति । न च तत्र विभक्त्यादीनां न लक्षणेति वाच्यम् । अत्रापि तेषु लक्षणानङ्गीकारात् । एवं लक्षणाया अदोषत्वमुपसंहरति—**अत** इति । **सर्वपदानां लक्षणापी**ति । 'सत्यं ज्ञानमनन्तमि'ति समुदितवाक्यस्य वस्तुतो यत् स्वार्थविरोधिव्यावृत्तं वस्तु तावन्मात्रोपस्थापने लक्षणाङ्गीकारोऽपीत्यर्थः । तथा च तादृशवस्तु ब्रह्मेत्यर्थः । ब्रह्मशब्दवाच्यमिति यावत् । परमप्रकृतं शास्त्रप्राबल्यं निगमयति—**अत** इति । अतः प्रत्यक्षस्य सम्भावितदोषत्वाच्छास्त्रस्य निर्दोषत्वात्तत एव शास्त्रेण प्रत्यक्षबाधसम्भवाच्चेत्यर्थः । **इदमेवार्थजातं** निर्विशेषब्रह्मणस्सत्यत्वं तदन्यस्य मिथ्यात्वं दोषपरिकल्पिततत्वम्, अविद्याया अनिर्वचनीयत्वं, तेन ब्रह्मतिरोधानमधिष्ठानज्ञाननिवर्त्यत्वमित्येवमाद्यर्थजातमित्यर्थः । एवकारः सगुणवस्त्वादिप्रतिपादकानां वेदान्तभागानां प्रामाण्यव्यावृत्त्यर्थकः,

**प्रत्यक्षादिविरोधे च शास्त्रस्य बलीयस्तवमुक्तम्। सति च विरोधे बलीयस्त्वं वक्तव्यम्; विरोध एव न दृश्यते, निर्विशेषसन्मात्रब्रह्मग्राहित्वात्प्रत्यक्षस्य।**

**ननु च -'घटोऽस्ति', 'पटोऽस्ति' इति नानाकारवस्तुविषयं प्रत्यक्षं कथमिव सन्मात्रग्रहीत्युच्यते। विलक्षणग्रहणाभावे सति सर्वेषां ज्ञानानामेकविषयत्वेन धारावाहिकविज्ञानवदेकव्यवहारहेतुतैव स्यात्। सत्यम्; तथैवात्र विविच्यते। कथम्? घटोऽस्तीत्यत्रास्तित्वं तद्भेदश्च व्यवह्रियते। न च द्वयोरपि व्यवहारयोः**

---

तेषां काल्पनिकार्थपरत्वेन तत्त्वावेदकत्वाभावादिति भावः।

एवं शास्त्रप्रत्यक्षयोर्विरोधे शास्त्रप्राबल्यं प्रत्यक्षदौर्बल्यं चाभ्युपेतम्। वस्तुतस्तयोर्विरोध एव नास्तीति प्राबल्यदौर्बल्योक्तिरनपेक्षितेति पक्षान्तरमवलम्ब्य समाधत्ते — **प्रत्यक्षादी**ति। **चः** समुच्चयार्थः। प्रत्यक्षादिविरोधाभ्युपगमेऽपीत्यर्थः। **सति** चेति। चो ह्यर्थकः। अवधारणार्थको वा। प्राबल्यदौर्बल्यविचारस्य मूलमेव नास्तीत्याह—**विरोध एवे**ति। तत्र हेतुं प्रदर्शयति - **निर्विशेषे**ति। प्रत्यक्षं निर्विशेषसन्मात्रब्रह्मैव गृह्णाति, शास्त्रमपि तदेव, अतो विषयविरोधाभावात् शास्त्रस्य बलीयस्त्वोपपादने न हेतुगवेषणाप्रयासोऽपेक्षित इति भावः।

ननु घटपटादिभिन्नपदार्थानां प्रत्यक्षसिद्धत्वात्तादृशपदार्थग्राहिणः प्रत्यक्षस्य कथं सन्मात्रग्राहित्वम्? यदि तादृशप्रत्यक्षे न विषयो विलक्षणः तदा एकविषयत्वमेव स्यात्। इत्थञ्च सर्वमपि ज्ञानं 'स्तम्भः स्तम्भः स्तम्भ' इति धारावाहिकज्ञानतुल्यमेवेति धारावाहिकविज्ञानस्येवैकव्यवहारहेतुत्वमेव सर्वेषामपि ज्ञानानां भवेत्। अतश्च सर्वलोकव्यवहारोपप्लवप्रसङ्ग इति चोदयति **ननु** चेति। समाधत्ते—**सत्यमि**ति। प्रत्यक्षस्य सन्मात्रग्राहित्वेऽभ्युपगमः, सर्वेषां ज्ञानानामेकविषयत्वेऽनभ्युपगमः। ननु व्याहतमिदं भाषसे, यत्प्रत्यक्षं सन्मात्रग्राहि नैकविषयकञ्चेतीत्यत्राह—**तथैवे**ति, **अत्र** - घटोऽस्तीत्यादिव्यवहारे। **तथैव** = प्रत्यक्षस्य सन्मात्रग्राहित्वं भ्रान्तिसिद्धघटपटादिरूपभेदविषयकत्वञ्च। **विविच्यत** इति। यथा 'इदं रजतमि'त्यादि प्रत्यक्षस्य इदमंशमात्रग्राहित्वं भ्रान्तिसिद्धरजतविषयकत्वञ्च तथाऽत्रापीति भावः।

ननु 'इदं रजतमि'त्यादिप्रत्यक्षस्य वस्तुतो रजतस्याभावात् भ्रान्तिपरिकल्पितरजतविषयकत्वम्, अत एव रजतव्यवहारस्य भ्रान्तिमूलत्वञ्च शक्यकल्प्यम्। अत्र तु वस्तुतो घटपटादीनां सत्त्वेन भ्रान्तिपरिकल्पितघटादिविषयकत्वं कथम्? कथन्तराञ्च तन्मूलकव्यवहारस्य भ्रान्तिमूलत्वमित्याशयेन पृच्छति—**कथमि**ति। समाधत्ते - **घटोऽस्ती**ति। **तद्भेदः** = तस्मिन् ब्रह्मणि परिक्लृप्तितो घटपटादिरूपो भेदः। अयं भावः - घटोऽस्तीत्यादिव्यवहारोऽस्तित्वरूपसत्तत्परिकल्पितघटपटादिरूपभेदोभयविषयकश्च, न त्वेकपदार्थविषयकः। अन्यथा अस्तित्वघटयोरैक्यप्रसङ्गात्। न ह्यत्रास्तित्वलक्षणस्वरूपतद्भेदयोरैक्यं प्रामाणिकं, भेदग्रहणस्य स्वरूपग्रहणप्रतियोगिस्मरणसापेक्षत्वात्, सन्मात्रस्वरूपग्रहणस्य च तन्निरपेक्षत्वाच्चैक्यासम्भवात्। न च भिन्न इति ज्ञान इव घट इत्यसाधारणज्ञाने, तदुभयसापेक्षत्वमितिवाच्यम्। घट इत्यसाधारणज्ञानेऽपि घटस्य पटाद्व्यावृत्ततया प्रतीतौ घटग्रहणस्यैव भेदग्रहणरूपत्वेनोक्तोभयसापेक्षत्वस्य दुर्निवारत्वात्। अतो घटपटादिरूपभेदस्यास्तिलक्षणस्वरूपस्य च भेदोऽवर्जनीयः। इत्थञ्चैतदुभयविषयकव्यवहारे व्यवहर्तव्यज्ञानस्य हेतुतया एतदुभयविषयकग्रहणमपेक्षितम्। तत्र प्रत्यक्षं न तावदुभयं गृह्णाति, घटादिभेदग्रहणस्याधिकरणप्रतियोगिधीसापेक्षत्वेन स्वरूपग्रहणस्य चातथात्वेन तस्य स्वरूपग्रहणपश्चाद्भावित्वौचित्यात् प्रत्यक्षेण तयो र्युगपद्ग्रहणासम्भवात्, स्वरूपग्रहणानन्तरं भेदग्रहणसम्भवेऽपि प्रत्यक्षस्यैकक्षणमात्रवृत्तित्वेन भेदग्रहणदशायां स्वरूपग्रहणस्यासत्त्वेन क्रमेणोभयग्रहणस्याप्यसम्भवात्। अतः प्रत्यक्षस्यान्यतरविषयकत्वमेव वक्तव्यम्। तत्र भेदग्रहणस्य पूर्वोक्तयुक्त्या

**प्रत्यक्षमूलत्वं सम्भवति, तयोर्भिन्नकालज्ञानफलत्वात्; प्रत्यक्षज्ञानस्य चैकक्षणवर्तित्वात्। तत्र स्वरूपं वा भेदो वा प्रत्यक्षस्य विषय इति विवेचनीयम्। भेदग्रहणस्य स्वरूपग्रहणतत्प्रतियोगिस्मरणसव्यपेक्षत्वादेव स्वरूपविषयत्वमवश्याश्रयणीयमिति न भेदः प्रत्यक्षेण गृह्यते। अतो भ्रान्तिमूल एव भेदव्यवहारः ॥**

**किञ्च भेदो नाम कश्चित्पदार्थो न्यायविद्भिर्निरूपयितुं न शक्यते। भेदस्तावन्न वस्तुस्वरूपं ; वस्तुस्वरूपे**

---

स्वरूपग्रहणपश्चाद्भावित्वेन प्रथमं स्वरूपग्रहणमेवैष्टव्यम्। तत्रैकेन प्रत्यक्षेण स्वरूपग्रहणे सत्यन्येन प्रत्यक्षेण भेदग्रहणं वक्तव्यम्। तत्र प्रत्यक्षान्तरेण भेदग्रहणे निराधारभेदग्रहणस्यासम्भवात् पूर्वगृहीतस्वरूपग्रहणस्य च नष्टत्वेन पूर्वज्ञानवदुत्तरज्ञानमपि स्वरूपमेव गृहीत्वा विनश्येत्। इत्थञ्च प्रत्यक्षान्तरेण न भेदग्रहणमिति न भेदसिद्धिः। अतो घटोऽस्तीत्यादिप्रत्यक्षस्य सन्मात्रस्वरूपग्राहित्वमेव। घटादयस्तु तत्र भ्रान्तिपरिकल्पिता भासन्ते। तस्मात् घटोऽस्तीत्यादिव्यवहारा भ्रान्तिमूला एवेति। न च भ्रान्तिपरिकल्पितत्वेऽपि कथं भेदानां ग्रहणं, स्वरूपग्रहणं विना तद्ग्रहणासम्भवात् क्रमयौगपद्यादिग्रहणस्य च निरस्तत्वादिति वाच्यम्। अविद्यारूपभ्रान्तेरनुपपन्नैकवेषत्वेन तत्र क्रमयौगपद्यादिविमर्शनस्यैवासम्भवात् ॥

एवमेव हि 'इदं रजतमि'त्यादौ रजतग्रहणम्। अन्यथाऽधिकरणधीसापेक्षस्य रजतग्रहणस्य क्रमयौगपद्याद्यसम्भवेन रजतग्रहणस्यैवानुपपत्तेः। **प्रत्यक्षमूलत्वमिति**। ननु व्यवहारस्य प्रत्यक्षमूलत्वन्न नियतं, घटप्रत्यक्षे जातेऽपि कतिपयदिवसानन्तरमपि घटव्यवहारदर्शनात्। अतः क्वचिददृष्टवशादुद्बुद्धपूर्वानुभवजन्यसंस्कारजन्यस्मृतिमूलत्वमप्यभ्युपेयं, इत्थञ्च प्रकृतेऽपि कदाचिदस्तित्वानुभवजन्यसंस्कारेण कदाचिद्भेदानुभवजन्यसंस्कारेण चोभयविधस्मृतिसत्त्वात्तत एवोभयविधव्यवहारोपपत्तिरिति न कोऽपि दोष इति चेत्, उत्यते। स्मृतावपि पूर्वानुभवस्य हेतुत्वात् पूर्वमेव कथं घटादिरूपभेदानुभवः ? भेदग्रहणे अधिकरणधीप्रतियोगिस्मरणयोर्हेतुत्वेन तयोः पूर्वमभावात्। प्राथमिक प्रत्यक्षेणाधिकरणज्ञानं पश्चात्तनेन भेदग्रहणमित्यपि न सम्भवति, अधिकरणज्ञानस्यैकक्षणवृत्तित्वेन भेदग्रहणदशायामभावेन भेदग्रहणानुपपत्तेः। अतः पूर्ववदत्रापि ज्ञाने स्वरूपमेवविषय इति भेदानुभवो भ्रान्तिमूल एवेति पूर्वोक्तदोषाद्यनिस्तार इति ॥ एतत्सर्वमभिप्रेत्योक्तं यामुनाचार्यैः संवित्सिद्धौ—'यौगपद्यक्रमायोगात् व्यवच्छेदविधानयोः। ऐक्यायोगाच्च भेदो न प्रत्यक्ष इति यो भ्रम' इति। **व्यवच्छेदविधानयोः** = भेदग्रहणस्वरूपग्रहणयोः। उपसंहरति - **अत** इति ॥ इत्थञ्च यथावस्थितं प्रत्यक्षं सन्मात्रग्राह्येव। घटपटादिभेदविषयकन्तु प्रत्यक्षाभास एव शुक्तिरूप्यज्ञानवत्। अतस्सन्मात्रग्राहिणा प्रत्यक्षेण न शास्त्रस्य विरोधः। प्रत्यक्षसिद्धस्य सत एव शास्त्रेण ब्रह्मेति निष्कृष्य बोधनादिति भावः ॥

एवं 'मानाधीना मेयसिद्धि'रिति न्यायेन प्रमेयस्य प्रमाणाधीनत्वाद्भेदरूपप्रमेये प्रमाणस्यैवाभावान्न तत्सिद्धिरित्युक्तम्। अथ वस्तुतः प्रमेयस्वरूपमेव दुर्निरूपमिति सतुरां न भेदरूपपदार्थसिद्धिरित्याह—**किञ्चेति**। **न्यायविद्भिरि**त्यनेनातथाभूतैर्निरूपणे कृतेऽपि तस्य निरूपणाभासत्वेन न तत्प्रकृतोपयुक्तमिति सूचितम्। लोके धर्मी धर्मश्चेति पदार्थो द्विविधः। तत्रायं भेदः धर्मी उत धर्म इति विकल्पं हृदि निधाय धर्मिस्वरूपपक्षं दूषयति — **भेदस्तावदिति**। धर्मिस्वरूपत्वपक्षे तस्य वस्तुस्वरूपत्वेन घटरूपवस्तुग्रहणदशायां घटस्वरूपव्यवहारवद्भेद इति व्यवहारप्रसङ्गः घटेतरभेदस्य घटस्वरूपत्वात् इत्याशयेन दूषणमाह—**वस्तुस्वरूप** इति। वस्तुस्वरूपस्यैव भेदत्वात् वस्तुस्वरूपग्रहे भेदाग्रहो न सम्भवतीति भावः।

ननु भिन्न इति व्यवहारः प्रतियोगिधीसापेक्षः स्वरूपव्यवहारस्तु न तथा। वाच्यस्वरूपग्रहणेऽपि यथा वाचकशब्द-

**गृहीते स्वरूपव्यवहारवत्सर्वस्माद्भेदव्यवहारप्रसक्तेः। न च वाच्यं - स्वरूपे गृहीतेऽपि भिन्न इति व्यवहारस्य प्रतियोगिस्मरणसव्यपेक्षत्वात्तत्स्मरणाभावेन तदानीमेव न भेदव्यवहार इति; स्वरूपमात्रभेदवादिनो हि प्रतियोग्यपेक्षा च नोत्प्रेक्षितुं क्षमा; स्वरूपभेदयोः स्वरूपत्वाविशेषात्। यथा स्वरूपव्यवहारो न प्रतियोग्यपेक्षः, भेदव्यवहारोऽपि तथैव स्यात्; 'हस्तः कर' इतिवत् 'घटो भिन्न' इति पर्यायत्वञ्च स्यात्। नापि धर्मः; धर्मत्वे सति तस्य स्वरूपाद्भेदोऽवश्याश्रयणीयः, अन्यथा स्वरूपमेव स्यात्। भेदे च, तस्यापि भेदस्तद्धर्मः, तस्यापीत्यनवस्था।**

**किञ्च जात्यादिविशिष्टवस्तुग्रहणे सति भेदग्रहणम्, भेदग्रहणे सति जात्यादिविशिष्टवस्तुग्रहणमि-**

---

प्रयोगः सम्बन्धग्रहणापेक्षः, तद्वत्। अतो प्रतियोगिज्ञानाभावेन न भिन्न इति व्यवहारापादनसम्भव इत्याशयेन शङ्कते — **न च वाच्यमिति**। अस्य इतीत्यनेनान्वयः। **भिन्नः** = भेदः। भावे क्तप्रत्ययः। तदेतद्दूषयति — **स्वरूपमात्रेति**। भेदस्यैव धर्मिस्वरूपत्वाङ्गीकारेण धर्मिस्वरूपव्यवहारवत्तदभिन्नभेदव्यवहारोऽपि न प्रतियोगिस्मरणापेक्षः। अन्यथा ऐक्यासम्भवात्। ऐक्याङ्गीकारप्रतियोगिस्मरणसापेक्षत्वनिरपेक्षत्वाङ्गीकारयोर्व्याहतत्वादिति। अतः स्वरूपग्रहणे स्वरूपव्यवहार इव भेदग्रहणतद्व्यवहारादावपि प्रतियोगिग्रहणोत्प्रेक्षापि न सम्भवतीति भावः। **प्रतियोग्यपेक्षः** = प्रतियोगिस्मरणापेक्षः। **भेदव्यवहारोऽपि तथैव स्यादिति**। इदमुपलक्षणम्। भेदव्यवहारस्य प्रतियोगिस्मरणसापेक्षत्वे भिन्नस्वरूपव्यवहारस्यापि प्रतियोगिस्मरणापेक्षत्वं स्याद्भेदस्वरूपयोरविशेषादिति।

दूषणान्तरमाह—**हस्त** इति। भेदस्य घटस्य च एकरूपत्वेन घटो घटः इतिवत् पर्यायत्वं प्रसज्यत इति भावः। धर्मपक्षं प्रतिक्षिपति—**नापीति**। भेदस्य घटस्वरूपधर्मिणो धर्मत्वपक्षे पटव्यावृत्तिरूपस्य तस्य घटधर्मत्वं सम्भवति, तस्य च धर्मत्वात् धर्मिभूतघटस्वरूपत्वाभ्युपगमो न शक्यशङ्कः। अन्यथा स्वरूपत्वाविशेषेण पूर्वोक्तदोषसमुदायप्रसङ्गश्च। अतो धर्मभूतभेदस्य धर्मिभूतस्वरूपापेक्षया भेदोऽवश्यभङ्गीकार्यः। इत्थञ्च धर्मिस्वरूपप्रतियोगिकधर्मभूतभेदानुयोगिकभेदसिद्धौ तादृशभेदस्यापि पूर्वोक्तयुक्त्या धर्मिस्वरूपत्वाङ्गीकारासम्भवाद्धर्मत्वमेव वक्तव्यम्। धर्मत्वे च धर्मभूतभेदानुयोगिकभेदस्यापि धर्मिस्वरूपाद्भेदो वक्तव्यः। अन्यथा स्वरूपात्मकत्वप्रसङ्गात्। एवमुपर्युपरि भेदप्रसङ्गेनानन्तभेदसिद्धिरनवस्था चेत्याशयेन दूषयति—**धर्मत्वे सतीति**। **भेदे च** = धर्मभूतभेदधर्मिणोः भेदाङ्गीकारे च। **तस्यापि भेदः** = धर्मभूतभेदापेक्षया धर्मिणो भेदः। **तद्धर्मः** = स्वरूपधर्मः। यद्वा **तस्यापि भेदः** - धर्मिस्वरूपापेक्षया धर्मभूतभेदस्य भेदः **तद्धर्मः** = तस्य धर्मभूतस्य भेदस्य धर्मः। अस्मिन्पक्षे धर्मिस्वरूपप्रतियोगिकधर्मभूतभेदानुयोगिकभेदस्य नानुयोगिभूतभेदस्वरूपत्वं धर्मधर्मिणोरैक्यप्रसङ्गेन स्वरूपपक्षदूषणप्रसङ्गात्। घटभेदौ भिन्नौ इति पर्यायत्वप्रसङ्गाच्च। अतो धर्मभूतभेदस्य तदनुयोगिकभेदस्य चैक्यासम्भवात् तदनुयोगिकभेदस्य धर्मभूतभेदधर्मत्वमेव वाच्यम्। इत्थञ्च तयोरपि भेदसिध्या सिध्यतो भेदस्य तदनुयोगिकभेदधर्मत्वम्। एवं रीत्याऽनवस्थादिकं बोध्यम्। अनवस्थायामन्ततो भेदस्यासिद्ध्या तत्पूर्वभूदस्यासिद्धिः।

एवं तत्पूर्वस्यापीति प्रथमभेद एव न सिद्ध्येदिति पर्यवसितम्। एवं धर्मत्वपक्षे ग्रहणद्वारा परस्पराश्रयणरूपदोषमप्याह—**किञ्चेति**। अयं भावः - अयं घट इत्यादौ इदंशब्दनिर्दिष्टस्य घटजातीयत्वज्ञाने पटाद्भेदग्रहणसम्भवः, पटजातीयाद्भेदग्रहणे सत्येव च तस्य घटजातीयत्वविशिष्टग्रहणमित्यन्योन्याश्रय इति। एवं धर्मधर्मिग्रहणे भेदग्रहणं, भेदग्रहणे धर्मधर्मिग्रहणं, धर्मिप्रतियोगिग्रहणे भेदग्रहणं, भेदग्रहणे धर्मिप्रतियोगिग्रहणमित्यत्यन्योन्याश्रयौ बोध्यौ। इदमत्र तात्पर्यम् - सति भेदकग्रहणे भेदग्रहणं, भेदग्रहणे सति भेदकग्रहणमिति मिथःसंश्रयो भवतीति। तदत्र तत्त्वटीका—भेदकाग्रहणे

**त्यन्योन्याश्रयणम्। अतो भेदस्य दुर्निरूपत्वात्सन्मात्रस्यैव प्रकाशकं प्रत्यक्षम् ॥**

**किञ्च 'घटोऽस्ति', 'पटोऽस्ति', 'घटोऽनुभूयते', 'पटोऽनुभूयते' इति सर्वे पदार्थाः सत्तानुभूतिघटिता एव दृश्यन्ते। अत्र सर्वासु प्रतिपत्तिषु सन्मात्रमनुवर्तमानं दृश्यत इति तदेव परमार्थः, विशेषास्तु व्यावर्तमानतयाऽपरमार्थाः, रज्जुसर्पादिवत्। यथा रज्जुरधिष्ठानतयाऽनुवर्तमाना परमार्थसती; व्यावर्तमानाः सर्पभूदलनाम्बुधारादयोऽपरमार्थाः।**

**ननु च रज्जुसर्पादौ 'रज्जुरियं, न सर्प' इत्यादिरज्ज्वाद्यधिष्ठानयाथार्थ्य(त्म्य)ज्ञानेन बाधितत्वात्सर्पादि-**

---

भेदो न गृह्येत कथञ्चन। तस्य चाग्रहणे सोऽपि न गृह्येतेति सङ्ग्रह इति। इदमत्राद्वैतिनां रहस्यम् - 'अयं घट' इत्यादौ हि स्वेतरव्यावृत्तिः प्रतीयते स एव च भेदः, तस्य धर्मित्वधर्मत्वाद्यनुपपत्त्या स्वरूपमेव दुर्निरूपमिति कथं प्रत्यक्षं सदतिरिक्तवस्तुग्राहि भवितुमर्हति ? अतो न शास्त्रप्रत्यक्षयोर्विरोधसम्भव इति। तदिदमुपसंहरति—**अत** इति। **सन्मात्रस्यैवे**ति घटपटादिरूपत्वेनाभिमतभेदव्यवहारस्तु भ्रान्तिमूल एवेति तादृशप्रत्यक्षे उक्तभेदविषयकत्वस्य शुक्तिरूप्यप्रत्यक्षे रजतविषयकत्वस्येव भ्रान्तिमूलत्वादिति भावः ॥

एवं भेदरूपवस्तुन एवासत्वात् असदर्थस्य प्रत्यक्षाग्राह्यत्वाच्च प्रत्यक्षं सन्मात्रग्राहीत्युक्तम्। अथ 'सत् परमार्थः अनुवर्तमानत्वादि'त्यनुमानेन सतः परमार्थत्वं 'घटादयोऽपरमार्था व्यावर्तमानत्वादि'त्यनुमानेन घटादीनामपरमार्थत्वञ्च श्रुतिसिद्धमनुमानेनापि साधयितुम्, उक्तहेतुसाध्ययोः व्याप्तिसद्भावसूचनाय प्रथमं व्याप्तिस्वरूपं दर्शयति—**किञ्चे**ति। अनेन बाधकोपन्यासोऽपि सिध्यति। अस्तित्वस्यानुवृत्तिप्रदर्शनाय घटोऽस्ति पटोऽस्तीत्युक्तं, सत्तानुभूत्योः वक्ष्यमाणैक्यसूचनाय 'घटोऽनुभूयते' 'पटोऽनुभूयत' इत्युक्तम्। अनुवृत्तस्यैव ह्यनुवृत्ततादात्म्यमिति भावः। एतेन घटादीनां व्यावृत्तत्वमपि सूचितम्। **सत्तानुभूती**ति सत्ताऽभिन्नानुभूतीत्यर्थकम्। स्वरूपासिद्धिं व्युदस्यति—**अत्रे**ति। सन्मात्रमनुवर्तमानमित्यनेन अनुवर्तमानत्वरूपहेतोः पक्षवृत्तित्वं सूचितम्। तदेव परमार्थ इत्यनेनानुवर्तमानत्वपरमार्थत्वयोः साध्यसाधकभावस्सूचितः। एवमग्रेऽपि। **विशेषाः** - घटादयः। **रज्जुसर्पादिवत्** = रज्ज्वादिवत् सर्पादिवच्चेत्यर्थः। न तु रज्ज्वधिष्ठानसर्पादिवदित्यर्थः। व्याप्तिद्वयस्य दृष्टान्तद्वयाप्रदर्शनापत्तेः। व्याप्तिद्वयं दृष्टान्तद्वये सङ्गमयति—**यथे**ति। अयं भावः—रज्जौ 'अयं सर्पः', 'इदं भूदलनम्', 'इयमम्बुधारा' इति भ्रमे इदमंशभूतस्य रज्ज्वधिष्ठानस्यानुवृत्तिरस्तीति पारमार्थ्यं, सर्पभूदलनादीनां व्यावृत्तिरस्तीति तेषामपरमार्थत्वमिति। अत्रानुवर्तमानत्वमुत्तरोत्तरप्रतीतिविषयत्वम्। व्यावर्तमानत्वञ्चोत्तरोत्तरप्रतीत्यविषयत्वं बोध्यम्।

बाधितत्वाबाधितत्वाभ्यां हेत्वोः सोपाधिकत्वमिति चोदयति—**ननु चे**ति। अयं भावः - उपाधिर्हि साध्यव्यापकः साधनाव्यापकश्च, साध्यव्यापकः पक्षावृत्तिर्वा। तत्र पर्वतो धूमवान्वह्नेरित्यादौ आर्द्रेन्धनसंयोग उपाधिरित्युच्यते, तस्य साध्यव्यापकत्वात् अयोगोलकान्तर्भावेण साधनाव्यापकत्वाच्च, अतस्तत्र प्रथमः, यत्रायोगोलकस्यैव पक्षत्वं तत्रार्द्रेन्धनसंयोगस्य पक्षावृत्तित्वेन द्वितीयोपाधिलक्षणसमन्वयः। वस्तुतः पक्षावृत्तित्वविशेषितस्यैव साध्यव्यापकत्वस्योपाधित्वम्। पर्वतो धूमवान्वह्नेरित्यादौ तु आर्द्रेन्धनसंयोगस्योपाधित्वाभावेऽपि न क्षतिः, तत्र व्यभिचारेणैव हेतुदुष्टत्वोपपत्तेः। इत्थञ्च घटादयोऽपरमार्था व्यावर्तमानत्वादित्यत्र बाधितत्वमुपाधिः। तस्य रज्ज्वधिष्ठानसर्पाद्यन्तर्भावेण साध्यव्यापकत्वात् घटपटादिरूपपक्षे तस्याभावेन पक्षावृत्तित्वाच्च। एवं 'सत् परमार्थः अनुवर्तमानत्वा'दित्यत्राबाधितत्वमुपाधिः, तस्य

**रपारमार्थ्यम्; न व्यावर्तमानत्वात्। रज्ज्वादेरपि पारमार्थ्यं नानुवर्तमानतया; किन्त्वबाधितत्वात्। अत्र तु घटादीनामबाधितानां कथमपारमार्थ्यम्? उच्यते। घटादौ दृष्टा व्यावृत्तिः; सा किंरूपेति विवेचनीयम्। किं घटोऽस्तीत्यत्र पटाद्यभावः? सिद्धं तर्हि घटोऽस्तीत्यनेन पटादीनां बाधितत्वम्। अतो बाधफलभूता विषय-निवृत्ति र्व्यावृत्तिः। सा व्यावर्तमानानामपारमार्थ्यं साधयति। रज्जुवत्सन्मात्रमबाधितमनुवर्तते। तस्मात् सन्मात्रातिरेकि सर्वमपरमार्थः। प्रयोगश्च भवति - सत् परमार्थः, अनुवर्तमानत्वात्, रज्जुसर्पादौ रज्ज्वादिवत्;**

---

रज्ज्वन्तर्भावेण साध्यव्यापकत्वात्। न च साध्यव्यापकत्वसम्भवेऽपि कथं तस्य पक्षावृत्तित्वं, सद्रूपब्रह्मणि अबाधित-त्वस्यैव सत्त्वादिति वाच्यम्। घटादिवत्सतोऽपि माध्यमिकनयेन बाधस्य सुवचत्वेन तस्य पक्षावृत्तित्वसम्भवात्। न च तर्हि तेनैव नयेन रज्ज्वादिबाधस्यापि सुवचत्वात्साध्यव्यापकत्वभङ्ग एवेति वाच्यम्। त्वन्मते रज्ज्वादे र्व्यावहारिक-व्यवस्थया परमार्थसत्वाङ्गीकारेण बाधकथनासम्भवत्। अन्यथा तस्यऽपि घटादवद्वस्तुतोऽपरमार्थतया, सति परमार्थत्व-साधकानुमाने रज्ज्वोर्दृष्टान्तत्वकीर्तनासङ्गत्यापत्तेः। अतश्चात्राबाधितत्वमुपाधिरेवेति ॥

समाधत्ते - **उच्यत** इति। तत्र प्रथमं बाधितत्वं नोपाधिरित्याह—**घटादाविति**। **किंरूपेति** - किं सत्यसर्पनिवृत्तिवत् भ्रान्तिसिद्धा आहोस्वित् रज्जुसर्पनिवृत्तिवत् अभावग्राहिप्रमाणरूपबाधफलभूता इत्यर्थः। **विवेचनीयमिति**, घटादौ दृष्टायाः पटादिव्यावृत्तेस्सत्यसर्पनिवृत्तिवद्भ्रान्तिसिद्धत्वे घटपटादितादात्म्यप्रसङ्ग इति नाद्यपक्षः स्वीकरणीय इति भावः। द्वितीय-पक्षमुत्तरत्र विवक्षुः तत्पक्षसिद्धमर्थमाह—**किं घटोऽस्तीत्यत्र पटाद्यभाव** इति। किंशब्दो नात्र प्रश्नवाची, किन्त्वस्य पक्षस्याभिमतत्वसूचकः। **पटादीनां बाधितत्वमिति**। अनेन बाधितत्वरूपोपाधेः पक्षावृत्तित्वं नास्तीति सूचितम्। **बाधफलभूता** = अदुष्टकारणजन्यनिषेधबुद्धिरूपबाधविषयभूता। इत्थञ्च बाधितत्वस्योपाधित्वासम्भवेन हेतोरुत्तरोत्तर-प्रतीतिविषयत्वाभावरूपव्यावृत्तेस्सोपाधिकत्वाभावान्नापरमार्थत्वसाधनसम्भव इत्याह—**सेति**।

अयं भावः - 'न रजतमि'ति निषेधाभावेऽपि 'इयं शुक्ति'रित्यनेन यथा रजतबाधः, तथा' पटो नास्ती'ति निषेधाभावे-ऽपि 'घटोऽस्ती'त्यनेनैव पटादिनिषेधस्सिध्यति। एवं पटोऽस्तीत्यनेन घटादीनां निषेधः। घटे पटाद्यत्यन्ताभावरूप-व्यावृत्तिः प्रकारद्वयेन सिध्यति। 'पटो नास्ती'ति पटाभावग्राहकप्रमाणेनेत्येकः प्रकारः। अत्र पटाभावरूपव्यावृत्तौ न कस्यचिदपि विसंवादः, 'पटो नास्ती'त्येव संवादप्रतीतेः। अत इयं संवादफलभूता व्यावृत्तिः। 'घटोऽयमि'त्युक्तौ पटस्य बाधात्पटाभावरूपव्यावृत्तिसिद्धिरित्यन्यः प्रकारः। इयं व्यावृत्ति र्बाधफलभूता। यथा रज्जौ सर्पज्ञाने 'नायं सर्प' इत्यनेन सर्पाभावरूपव्यावृत्तिः संवादफलभूता,' रज्जुरियम्' इत्यनेन च सर्पबाधात्सर्पाभावरूपव्यावृत्तिः बाधफलभूता, तथाऽत्रापीति मन्तव्यम्। एतदभिप्रायेणैव "**सिद्धं तर्हि घटोऽस्तीत्यनेन पटादीनां बाधितत्वम्। अतो बाधफलभूता विषयनिवृत्तिर्व्यावृत्तिः**" इति भाषितम्। अनेन 'पटो नास्ती'ति प्रतीतिसिद्धपटाभावरूप व्यावृत्तेः संवाद प्रतीतिसिद्धत्वं ज्ञापितम्। एवं रीत्या वा श्रीभाष्यसूक्ति र्योजनीया। ततश्च 'घटोऽस्ति' 'पटोऽस्ती'त्यादिना घटपटादीनामभावग्राहि-प्रमाणविषयत्वरूपबाधितत्वसम्भवेन घटादिपक्षे बाधितत्वमेवास्तीत्युपाधेः पक्षवृत्तित्वान्नोपाधित्वसम्भव इति।

परमार्थत्वसाधकानुमानेऽबाधितत्वस्योपाधित्वं निराकरोति—**रज्जुवदिति**। अयमाशयः - सतोऽपि ब्रह्मणो माध्यमिकनयेन बाधोक्तिर्न सम्भवति, अन्यथा निरधिष्ठानभ्रमापत्तेः। न हि रज्ज्वाद्यभावेऽपि सर्पभूदलनादिभ्रमसम्भवः। अतो रज्जुवत्सन्मात्रमबाधितमेवेत्यबाधितत्वस्य सद्रूपपक्षवृत्तित्वेन नोपाधित्वसम्भव इति। एवमनुग्राहकतर्केण व्याप्ति-स्वरूपादिशोधनं कृत्वा तदनुग्राह्याऽनुमानं दर्शयति—**प्रयोगश्चेति**। **सदिति**। सदेवेति श्रुतिप्रसिद्धं सच्छब्दवाच्यमि-

त्यर्थः, अन्यथोभयवादिसम्मतपक्षाप्रसिद्धेः। परमार्थत्वं ब्रह्मप्रमातिरिक्ताबाध्यत्वम्। इदञ्च साध्यं रज्जौ सति चास्तीति न साध्यवैकल्यम्, अन्यस्य प्रतीयमानत्वपूर्वकयथावस्थितवस्तुज्ञाननिवर्त्यत्वरूपमिथ्यात्वाभावस्य परमार्थत्वे पक्षे तत्सम्भवेऽपि रज्जौ यथावस्थितब्रह्मज्ञाननिर्वर्त्त्यत्वरूपमिथ्यात्वस्यैव सत्त्वेन दृष्टान्तस्य साध्यवैकल्यापत्तेः। अनुवर्तमानत्वमुत्तरोत्तरप्रमाविषयत्वं, न तु तादृशप्रतीतिविषयत्वं, 'अयं सर्पः','अयं सर्प'इत्यादि प्रतीतिविषयत्वस्यापरमार्थभूते सर्पादावपि सत्त्वेन हेतोर्व्यभिचारितत्वापत्तेः। न चैवमपि 'अयं घटः' अयं घट' इत्यादि प्रमात्माकप्रतीतिविषयत्वस्य घटादावपि सत्त्वेन व्यभिचारस्तदवस्थ एवेति वाच्यम्। अधिष्ठानतयाऽनुवर्तमानत्वस्य हेतुत्वाङ्गीकारेण दोषाभावात्। 'घटोऽस्ति' 'पटोऽस्ती'त्यादौ च सतोऽधिष्ठानत्वेनैव प्रतीतिविषयत्वमिति न स्वरूपासिद्धिः। वस्तुतः प्रमाविषयत्वमेवालं, प्रत्यक्षादेः सन्मात्रग्राहित्वेन घटादिविषयकप्रत्यक्षादेर्भ्रमरूपत्वेनोक्तघटादौ प्रमाविषयत्वरूपहेत्वसिद्ध्यैव व्यभिचारवारणसम्भवात्। एतेनाधिष्ठानतयोत्तरप्रतीतिविषयत्वस्य हेतुत्वेऽपि न पूर्वोक्तसर्पादौ व्यभिचारः, तस्याध्यस्ततयैव विषयत्वात्। अतस्तादृशप्रमाविषयत्वविवक्षणमनुपयुक्तमिति निरस्तम्।

अत्रोत्तरोत्तरेत्यादिकं तूपचायकमेव, न हेतुप्रविष्टं, व्यर्थत्वात्। न च साध्यहेत्वोरैक्यं साध्यस्यान्यस्य पूर्वमुक्तत्वात्। यद्वाऽधिष्ठानत्वमात्रं हेतुः, अन्यत्सर्वं परिचायकम्। इत्थञ्च सत् परमार्थः अधिष्ठानत्वात् रज्जुवदिति पर्यवसितम्। एतेन प्रत्यक्षादेस्सन्मात्रग्राहित्वेन रज्ज्वादावपि प्रमाविषयत्वहेतोरभावेन दृष्टान्तस्य साध्यवैकल्यशङ्का परिहृता। एवमेकाधिष्ठानकानेकाध्यासस्थलेऽधिष्ठानस्यानुवर्तमानत्वमिवानेकाधिष्ठानकैकाध्यासस्थलेऽध्यस्तस्याप्यनुवर्तमानत्वमस्तीति शङ्कनमपि निरस्तं भवति। एवमग्रेपि। सर्पानधिष्ठानरज्ज्वादिदृष्टान्ते वैकल्यमिति रज्जुसर्पादावित्यधिकमुपात्तमुत्तरत्र।

ननु साध्यभूतपरमार्थत्वस्य ब्रह्मप्रमातिरिक्ताबाध्यत्वरूपत्वे घटादयो अपरमार्थाः व्यावर्तमानत्वादित्यत्र तदभावरूपस्य ब्रह्मप्रमातिरिक्तबाध्यत्वपर्यवसितस्यैवापरमार्थत्वरूपतया भवन्मते ब्रह्मज्ञानैक बाध्यत्वस्यैव घटादिषु स्वीकारेण पक्षे ब्रह्मप्रमातिरिक्ताबाध्यत्वस्याभावेन बाधप्रसङ्गः। न च 'घटोऽस्ति' 'पटोऽस्ती'त्यादिना ब्रह्मप्रमातिरिक्तेनज्ञानेन बाधफलभूतविषयनिवृत्तिरूपव्यावृत्तेः पटघटादिषु सत्त्वेन न बाधप्रसङ्ग इति वाच्यम्। तथा सति ब्रह्मप्रमातिरिक्तेन घटपटादीनां बाध्यत्वसम्भवेन घटपटादिरूपप्रपञ्चबाधाय ब्रह्मात्मैक्यज्ञानपर्यन्तानुधावनप्रयासवैयर्थ्यापत्तेः। न च 'घटोऽस्ती'त्यादिज्ञानेन पटाभावप्रतीतावपि न पटादीनां ध्वंसः, ब्रह्मज्ञानेनैव तु पटादीनां ध्वंस इति एतदर्थं ब्रह्मज्ञानानुधावनमिति वाच्यम्। तथा सति घटादिषु ब्रह्मप्रमातिरिक्तबाध्यत्वसाधनेऽपि 'घटोऽस्ती'त्यादौ पटादीनां, 'पटोऽस्ती'त्यादौ घटादीनाञ्चाभावसिद्धावपि न निवर्त्त्यत्वसिद्धिरिति। एतादृशापरमार्थत्वस्यास्मन्मतेऽपि स्वींकारसम्भवेन सिद्धसाधनार्थान्तरापत्तेः। न चापरमार्थत्वं प्रतीयमानत्वपूर्वकयथावस्थितवस्तुज्ञाननिवर्त्त्यत्वरूपमेवेष्यत इति नानुपपत्तिरिति वाच्यम्। तथा सति परमार्थत्वापरमार्थत्वयो र्भावाभावरूपत्वाभावेन एकस्यैव वस्तुनः परमार्थत्वापरमार्थत्वयोरुभयोरपि सम्भवेन ब्रह्मण एव परमार्थत्वं तदतिरिक्तस्य चापरमार्थत्वञ्च न सिध्येत्, ब्रह्मज्ञानैकनिवर्त्त्यघटादीनामपि ब्रह्मप्रमातिरिक्ताबाध्यत्वसत्त्वात्। एवं परमार्थत्वस्य ब्रह्मप्रमातिरिक्ताबाध्यत्वरूपत्वमपि नाङ्गीकर्तुं शक्यम्। तथा सति माध्यमिकनयेन घटादीनामिव सतोऽपि ब्रह्मणो व्यावहारिकत्वस्वीकारेऽप्युक्तपरमार्थत्वाविधानेन भवदभिमतार्थासिद्धेरिति चेदुच्यते - अत्र परमार्थत्वमबाध्यत्वमेव। अपरमार्थत्वञ्च ब्रह्मप्रमातिरिक्ताबाध्यत्वे सति बाध्यत्वम्। एवञ्च सद्रूपब्रह्मणि व्यावहारिकत्वस्वीकारेण न साध्यपर्यवसानसम्भवः, व्यावहारिकस्य बाध्यत्वात्। घटपटादिषु च ब्रह्मज्ञानैकनिवर्त्त्यत्वरूपास्मदभिमतार्थस्य सिद्ध्या च नार्थान्तरादिप्रसङ्गः। परमार्थत्वापरमार्थत्वयोर्भावाभावरूपत्वेन नैकस्य वस्तुनः परमार्थत्वापरमार्थत्वप्रसङ्ग इति दिक्। घटादयोऽपरमार्था भ्रमविषयत्वादध्यस्तत्त्वाद्वेति अनुमाननिष्कर्ष उत्तरत्र बोध्यः। यद्यपि

**घटादयोऽपरमार्थाः, व्यावर्तमानत्वात्, रज्ज्वाद्यधिष्ठानसर्पादिवत् - इति । एवं सत्यनुवर्तमानाऽनुभूतिरेव परमार्थः । सैव सती ।**

**ननु च सन्मात्रमनुभूतेर्विषयतया ततो भिन्नम् । नैवम् । भेदो हि प्रत्यक्षाविषयत्वाद्दुर्निरूपत्वाच्च पुरस्तादेव निरस्तः । अत एव सतोऽनुभूतिविषयभावोऽपि न प्रमाणपदवीमनुसरति । तस्मात्सदनुभूतिरेव । सा च स्वतस्सिद्धा, अनुभूतित्वात् । अन्यतस्सिद्धौ घटादिवदननुभूतित्वप्रसङ्गः । किञ्चानुभवापेक्षा चानुभूतेर्न शक्या कल्पयितुं, सत्तयैव प्रकाशमानत्वात् । न ह्यनुभूतिर्वर्तमाना घटादिवदप्रकाशा दृश्यते, येन परायत्तप्रकाशाऽभ्युपगम्येत ।**

घटादिपक्षे रज्जुरप्यन्तर्भूतैव, अथापि व्यावहारिकव्यवस्थयैव तस्याः पूर्वत्र दृष्टान्तत्वमिति बोध्यम् । एवञ्च हेत्वो र्निरुपाधिकत्वेन न दुष्टत्वमिति ।

व्यावर्तमानत्वहेतुना घटादीनामपरमार्थत्वसिद्धिं मनसि निधाय ब्रह्मणः परमार्थत्वन्निगमयति—**एवं सती**ति । **अनुभूतिरेवे**ति । एवकारेण घटादीनामपरमार्थत्वसिद्धिरभिप्रेता । नन्वेतावता सच्छब्दवाच्यस्य पक्षीकृतस्य कस्यचित् परमार्थत्वं साधितम् । सम्प्रत्यनुभूतेः परमार्थत्वमुच्यत इत्यत्राह - **सैवे**ति । **सैव** = अनुभूतिरेव । **सती** = सच्छब्दवाच्या । एतेन परमार्थवस्तुद्वयसद्भावः प्रतिक्षिप्तः । ननु सच्छब्दार्थस्यानुभूत्यभिन्नत्वमनुपपन्नं तस्यानुभूतिविषयत्वात्, अनुभूति-विषयस्य च घटादेरनुभूतिभिन्नत्वदर्शनादिति शङ्कते - **ननु चे**ति । प्रतिवक्ति - **नैवमि**ति । सति अनुभूतिभेदसाधनमेव न सम्भवति, साध्यरूपभेदस्याप्रसिद्धत्वात् प्रमाणतस्स्वरूपतश्च तदनुपपन्नत्वस्य पूर्वमेव दर्शितत्त्वादिति भावः ।

ननु सदनुभूत्योर्भेदाभावे विषयविषयिभाव एव नोपपद्यते । ततश्च भवतां समान्यतो विशेषतश्च विषयत्वाद्युक्ति र्विरुद्धेत्यत्राह—**अत** इति । भ्रान्तिरूपलोकदृष्ट्यैवास्मद्व्यवहारोऽपि । अतोऽनुभूतिविषयत्वं सतोऽप्रामाणिकमेवेति भावः । अत एव **न प्रमाणपदवीमित्युक्तम्** । निगमयति **तस्मादि**ति । नन्वनुभूतिलक्षणसद्रूपात्मनो मेयत्वाभावे तद्ग्राहक-प्रमाणाभावान्माध्यमिकोक्तनयेन शून्यत्वमेव स्यादित्यत्राह—**सा चे**ति । **सिद्धिः** = प्रकाशः स्वतसिद्धस्वयम्प्रकाशा । स्वयम्प्रकाशत्वञ्च स्वतादात्म्यस्वविषयकत्वोभयसम्बन्धेन वस्तुविशिष्टत्वम् । अयं भावः - 'अत्रायं पुरुषस्स्वयं ज्योति र्भवती'ति अनुभूतिरूपात्मनः स्वयम्प्रकाशत्वोक्त्या स्वस्यैव स्वग्राहकत्वेन ग्राहकप्रमाणसिध्या न शून्यत्वप्रसङ्ग इति । एतेन सतोऽनुभूतिविषयत्वादनुभूतिभिन्नत्वमास्थेयमिति शङ्का चापोदिता, अनुभूतेस्स्वयम्प्रकाशत्वेन सतोऽनुभूत्यभिन्न-त्वेऽप्यनुभूतिविषयत्वसम्भवात् । अयमर्थः **सा चे**त्यत्र चकारेण सूचितः । हेतोरप्रयोजकत्वशङ्कां व्युदस्यति - **अन्यत** इति । नन्वन्यतस्सिद्धिरप्यस्तु अनुभूतित्वञ्चास्तु इति चेन्नानुभूतित्ववतः 'अत्रायं पुरुषः स्वयञ्ज्योतिर्भवती'त्यन्यतस्सिद्धेः निषिद्धत्वात् । अन्यथा श्रुतिविरोधापत्तेरिति भावः ।

ननु 'अनुभूतिः स्वयम्प्रकाशा अनुभूतित्वात्, यन्नैवं तन्नैवं, यथा घट' इतिवत् 'पटः स्वयम्प्रकाशः पटत्वात्' यन्नैवं तन्नैवं यथा घट इत्यपि प्रयोगापत्त्या पटादीनामपि स्वयम्प्रकाशत्वं सिध्येत् । मैवम् । तत्र हेतोरप्रयोजकत्वात्प्रत्यक्षविरोधाच्च । अत्र तु हेतोर्नाप्रयोजकत्वं, श्रुतिसिद्धश्च स्वप्रकाशत्वमिति । अनुमानान्तरमप्यस्तीत्याह—**किञ्चे**ति । अनुभूतिः नानुभवान्तरसापेक्षप्रकाशा प्रकाशाव्यभिचरितसत्ताकत्वात् स्वाधिकरणकालत्वव्यापकप्रकाशाश्रयत्वाद्वेत्यनुमानमत्र विवक्षितम् । पक्षे हेतुसद्भावं विवृणोति **न ही**ति । घटादिवदिति व्यतिरेकदृष्टान्तः । अनेन प्रकृते व्यतिरेकव्याप्तिरेवेति सूचितम् । इत्थञ्चानुभूते वर्तमानदशायां घटादिवदप्रकाशमानत्वाभावेन परायत्तप्रकाशत्वन्न सम्भवतीति स्वयम्प्रकाशत्व-सिद्धिरिति भावः । एतेन ज्ञानं परप्रकाशं वस्तुत्वाद्भासमानत्वाद्वा घटवदिति परोक्तमनुमानं प्रतिक्षिप्तम् । पराधीनप्रकाशत्वे

**अथैवं मनुषे - उत्पन्नायामप्यनुभूतौ विषयमात्रमवभासते 'घटोऽनुभूयत' इति । न हि कश्चित् 'घटोऽयम्' इति जानन् तदानीमेवाविषयभूतामनिदम्भावामनुभूतिमप्यनुभवति । तस्मात्घटादिप्रकाश-**

विद्यमानदशायां कदाचिदप्रकाशमानत्वस्यैव प्रयोजकत्वेन हेतोस्सोपाधिकत्वात्। ज्ञानं स्वयम्प्रकाशं विद्यमानदशायां सर्वदा भासमानत्वादिति प्रत्यनुमानसम्भवाच्चेति भावः । न च सुखादिषु व्यभिचारः सुखादिव्यतिरिक्तत्वे सतीति विशेषणात् । सिद्धान्तिमते सुखादेरपि ज्ञानविशेषत्वेन पक्षान्तर्भावादनैकान्त्यासम्भवाच्च । ननु सतोऽनुभूतिविषयभावो न प्रमाण-पदवीमनुसरतीत्यनेन सतोऽनुभूतिविषयत्वाभावप्रतिपादनात् अत्र च सदभिन्नानुभूतेः स्वप्रकाशत्वाङ्गीकारेण स्वात्मका-नुभूतिविषयत्वप्रतिपादाच्च पूर्वापरग्रन्थविरोध इति प्रतिभातीति चेत्, मैवम्, तत्र वृत्त्यवच्छिन्नचैतन्यरूपज्ञानाविषयत्व-स्यैव प्रतिपादनात् अत्र ब्रह्मस्वरूपानुभूतिविषयत्वस्यैव स्थापनाच्च विरोधासम्भवात् ।

**स्वतसिद्धत्वम्** = अवेद्यत्वे सत्यपरोक्षव्यवहारहेतुत्वमेव, न तु स्वविषयकत्वम् । अद्वैतसिद्धौ तथोक्तेः । अयं भावः - घटादीनां व्यवहारविषयत्वे ज्ञानविषयत्वन्नियामकं ज्ञानस्य व्यवहारविषयत्वे ज्ञानत्वमेव नियामकम्, न तु तद्विषयत्वम् । घटज्ञानविषयकव्यवहारे घटज्ञानज्ञानत्वेन हेतुत्वापेक्षया घटज्ञानत्वेन हेतुत्वे लाघवात् । आलोकवत् । यथा घटादिचाक्षुषे आलोकसंयोगो हेतुः । आलोकस्य तथात्वे आलोकत्वमेव, न तु तत्संयोग ; तद्वत् । अत एवोत्तरत्र अनुभूतिरनन्याधीनस्वव्यवहारेत्युक्तम्, न तु स्वविषयेति । उक्तञ्च स्वतस्सिद्धार्थविवरणमद्वैतसिद्धौ । ननु स्वत इत्यस्य स्वेनैवेत्यर्थे स्वविषयत्वापत्तिरिति चेन्न । मानानपेक्षसिद्धेरेव स्वतस्सिद्धशब्दार्थवात् । न च शशशृङ्गादावतिप्रसङ्गः तदसत्त्वव्यावृत्तिफलकप्रमाणाभावात् । प्रकृते च वेदान्तजन्यवृत्तिविषयतामात्रेण तत्सत्त्वात् सिद्धिरूपे आत्मनि सिद्धि-व्यवहारस्यासिद्धिप्रयुक्तव्यवहारविषयत्वपरतया गौणत्वादिति । इत्थञ्च "सतोऽनुभूतिविषयभावोऽपि न प्रमाणपदवी-मनुसरती" इति न श्रीभाष्यविरोध इति ध्येयम् ।

अथ परप्रकाशत्ववादी भाट्टः शङ्कते - **अथैवमि**ति । यदुक्तं स्वसत्तयैव प्रकाशमानत्वादनुभूतिः नानुभावान्तर-सापेक्षप्रकाशेति, तन्न सम्भवति हेत्वसिद्धेः । घटोऽयमित्यनुभवानन्तरं घटादिरूपविषयस्यैव भासमानत्वात् अनुभूतेश्चा-प्रकाशमानत्वात् । इत्थं ज्ञानं परप्रकाशं वस्तुत्वादित्यानुमाने विद्यमानदशायां कदाचिदप्रकाशमानत्वस्योपाधित्वमपि न सम्भवति, तस्य ज्ञानरूपपक्षवृत्तित्वात् इत्यभिप्रायेणाह - **उत्पन्नायामपी**ति । उक्तमुपपादयति - **घटो ऽनुभूयत** इति न हि कश्चिदनुभूतिमप्यनुभवतीत्यन्वयः । यदा 'घटोऽयमि'ति ज्ञानं जायते, तदा 'घटोऽनुभूयत 'इति नानुभवोऽस्तीति भावः ।' घटोऽनुभूयत' इत्यनुभूतिविषयकानुभावाभावे 'घटोऽयमि'त्यादिहेतु प्रदर्शनम् । **अविषयभूतां** = अघटभूतां, इदञ्च पदार्थान्तरप्रदर्शकम् । अत एवाघटभूतामित्यनुक्तम् । **अनिदम्भूतां** = इदमर्थव्यतिरिक्ताम् । यद्वा 'घटोऽनुभूयत इति' इत्येतत् विषयमात्रमवभासत इति पूर्ववाक्येनैवान्वेति । तत्र इतिशब्दो हेतुवाची । यतो घटोऽनुभूयत इत्यनुभूतिकर्मत्वं घटस्यैव, न त्वनुभूतेः, स्वस्य स्वकर्मत्वविरोधात् अतो विषयमात्रमवभासत इति ।

नन्वालोकलिङ्गादीनां ज्ञायमानानामेवार्थप्रकाशत्वदर्शनेन तद्वज्ज्ञायमानाया अर्थभासकत्वं वक्तव्यम् । अतोऽर्थ-प्रकाशदशायामेवानुभूतिरपि ज्ञेयेत्यत्राह - **तस्मादि**ति । अयं भावः - स्वस्याः सत्तयैव प्रकाशमानत्वहेतोरुक्तयुक्त्या असिद्धेः अस्मदनुमाने उपाधिगन्धाभावाच्च स्वरूपत एवानुभूतेः प्रकाशकत्वमिष्यते, न तु ज्ञायमानायास्तस्या, यथेन्द्रियादेः । अतो इन्द्रियादिवत्स्वरूपसत्तयैवानुभूते र्घटादिगतज्ञातताऽपरपर्यायप्रकाशनिष्पत्तौ हेतुत्वस्वीकारेण न तादृशप्रकाश-निष्पत्त्यर्थमनुभूते र्ज्ञेयत्वमपेक्षितमिति न स्वयम्प्रकाशत्वमास्थेयमिति ।

**निष्पत्तौ चक्षुरादिकरणसन्निकर्षवदनुभूतेः सद्भाव एव हेतुः । तदनन्तरमर्थगतकादाचित्कप्रकाशातिशय-लिङ्गेनानुभूतिरनुमीयते । 'एवं तर्ह्यनुभूतेरजडाया अर्थवज्जडत्वमापद्यत' इति चेत् - किमिदमजडत्वं नाम? न तावत्स्वसत्तायाः प्रकाशाव्यभिचारः ; सुखादिष्वपि तत्सम्भवात् ; न हि कदाचिदपि सुखादयः सन्तो नोपलभ्यन्ते । अतोऽनुभूतिः स्वयमेव नानुभूयते ; अर्थान्तरं स्पृशतोऽङ्गुल्यग्रस्य स्वात्मस्पर्शवदशक्यत्वादिति**

---

ननु 'अयं घट' इत्यादौ अनुभूतेरविषयत्वे तदैव अनुभूयते इत्यनुभूतेर्वर्तमानत्वेन ग्रहणं कथं, पश्चाद्वा कथं तत् गृह्यते, तद्ग्राहकाभावादित्यत्राह - **तदनन्तरमिति** । प्रत्यासत्त्यतिशयादनुभूयत इति वर्तमानोक्तिः । तद्ग्राहकश्च प्राकट्यमेव, ततश्च 'प्राकट्यं कार्यं कादाचित्कत्वात्' इति कार्यत्वे सिद्धे कार्यत्वहेतुना तत्र सकारणकत्वसाधने कारणत्वेन धीरनुमेया भवति । यद्यपि व्याप्तिस्मरणादिना कालविलम्बोऽस्ति, तथापि संस्कारभूम्ना तस्य झटित्युदयात्कालभेदाग्रहः, उत्पलशत-पत्रवेधन्यायादिति भावः । प्रकाशस्यार्थगतत्वोक्त्या आत्मगतबुद्धेः प्रकाशत्वं व्युदस्तम् । प्रकाशशब्दोक्त्या तत्पुरुषधी-जन्यार्थगतप्रकाशस्य तेनैव ग्राह्यत्वसम्भवः नान्येनेति सूचितम् । इत्थं घटादिषु विषयत्वापरपर्यायप्रकाश इति यदस्ति तत्स्वस्य कार्यत्वेन स्वकारणमनुभूतिमनुमिनोति इति तत्पुरुषगतज्ञानानुमापकत्वं तस्य सम्भवतीति सिद्धम् ।

ननु घटादेरिवानुभूतेरपि स्वेतरवेद्यत्वे जडत्वमेव स्यादिति मृषावादी शङ्कते - **एवं तर्हीति** । अन्यतस्सिद्धिस्वीकार इत्यार्थः । **अजडाया** इति स्वमतसिद्धार्थानुवादः । अत्रापाद्यमानजडत्वविपर्ययमजडत्वं यावत्स्वसत्त्वं प्रकाशमानत्वम् उत स्वयंप्रकाशत्वमिति विकल्प्य दूषयति - **किमिति** । किंशब्दो विकल्पपरः । आद्यकल्पं दूषयति - **न तावदिति** । अयं भावः - प्रकाशाव्यभिचरितसत्ताकत्वस्याजडत्वरूपत्वे तद्विपर्ययभूतं यावस्वसत्त्वं प्रकाशमानत्वाभावरूपमापाद्यमान-जडत्वमस्मदिष्टमेव, उत्पन्नायामप्यनुभूतौ विषयमात्रस्यैव भानेनानुभूतेस्तदाऽप्रकाशात् इति । अजडत्वस्यैवं परिष्कारे दूषणमप्याह - **सुखादिष्वपीति** । अपिशब्दो दूषणान्तरसमुच्चयपरः । सुखादिष्वुक्ताजडत्वमुपपादयति - **न हीति** ।

अयं भावः - त्वन्मते सुखादेरपि शुक्तिरूप्यवदध्यस्तत्वेनाध्यस्तस्य यावत्स्वसत्त्वं साक्षिचैतन्येन भासमानत्वात् सुखादीनामप्यजडत्वप्रसङ्ग इति । अदिशब्देन प्रातिभासिकरजतादेर्ग्रहणं प्रतिभाससिद्धस्य वस्तुनः प्रतिभासापगमे अपगमात्, यावत्स्वसत्त्वं प्रतिभासमानत्वस्य तत्र सत्त्वात् । एतेन दूषणोद्घाटयितृमते अनुभूतेरिव सुखादेरप्युत्पत्तिक्षणा-त्पश्चात् ज्ञानान्तरेण ग्राह्यत्वस्वीकारात् ।

सिद्धान्तिमते च तस्यापि धीविशेषत्वेन स्वतसिद्धत्वाङ्गीकाराच्च तत्र दोषोद्घाटनमनुपपन्नमिति निरस्तम् । अनुभूते र्यावत्स्वसत्त्वं प्रकाशमानत्वाङ्गीकारवत्सुखादेरपि तत्त्वस्वीकारप्रसङ्ग इति फलितम् । अतश्च स्वयम्प्रकाशत्वसाधकानुमाने अस्वयम्प्रकाशत्वेन भवदभिमते सुखादौ प्रकाशाव्यभिचरितसत्ताकत्वरूपहेतोस्सत्त्वेन व्यभिचारप्रसङ्गः । द्वितीय-विकल्पं दूषयति - **अत** इति । यतो हेतुरसिद्धोऽनैकान्तिकश्च,, अतः स्वयम्प्रकाशत्वमपि नोपपन्नमिति भावः ।

नन्वनुभूतेः अनुभूतित्वहेतुना स्वयम्प्रकाशत्वं पूर्वसाधितं, तत्र न हेत्वादिदोष इत्यत्र तस्याप्यसिद्धसाध्यत्वेन व्याप्तिग्रहणासम्भवात् न स्वप्रकाशत्वसिद्धिः। केवलव्यतिरेकिणश्चानुमानत्वानङ्गीकारादित्याशयेनाह - **अर्थान्तरमिति** । अत्र 'अङ्गुल्यग्रं यथात्मानं नात्मना स्प्रष्टुमर्हति । स्वांशेन ज्ञानमप्येवं नात्मनं ज्ञातुमर्हती'ति श्लोकोऽनुसन्धेयः । 'अनुभूतिः न स्वकर्तृकस्पर्शकर्म कर्तृत्वात्, अङ्गुल्यग्रवत्' इत्यनुमानं विवक्षितम् । नन्वत्र प्रत्यक्षबाधादङ्गुल्यग्रस्य न स्वात्मस्पर्शजनक-त्वमिति चेत्तथैवानुभूतेस्स्वात्मविषयकत्वे प्रत्यक्षबाधः । अनुभूतौ जातायामपि विषयमात्रस्यैव भानात्, हेतोर-प्रयोजकत्वाच्च ॥

**- तदिदमनाकलितानुभवविभवस्य स्वमतिविजृम्भितम्; अनुभूतिव्यतिरेकिणो विषयधर्मस्य प्रकाशस्य रूपादि-**

अनुभूतेः प्रकटयानुमयेयत्ववादिनमुपालभते - **तदिदमिति**। अनुभवविभवः, स्वव्यतिरिक्तसर्वप्रकाशकस्य स्वस्य स्वात्मन्यप्यनन्यापेक्षत्वरूपः येन सः। **स्वमतिविजृम्भितं** = स्वोत्प्रेक्षामात्रपरिकल्पितम्। तत्र हेतुं दर्शयति - **अनुभूतीति**। विषयस्य प्रकाशोऽनुभूतीति। न तु तदतिरिक्तः कश्चिदिति भावः। न च श्रुतिविरोधः, अनुभूते धर्मभूतज्ञाननिषयकत्व-प्रतिपादनतात्पर्यकत्वात्ताद‍ृशश्रुतीनामिति। **विषयधर्मस्येति**। सा चानुभूति र्न विषयगता, कि न्तु भ्रान्त्या विषयस्येव भाति। अतोऽनुभूतिव्यतिरिक्ततया विषयनिष्ठतया च प्रकाश इति कश्चिन्नाभ्युपेयते इति भावः। तत्र हेतुमाह - **रूपादिवद-नुपलब्धेरिति**। अयं भावः - प्रकाशो हि कस्यचिद्धर्मः, धर्मस्य च निराधारोत्पत्ति र्न सम्भवति। अतोऽतीतानागतार्थ-विषयकज्ञाने जाते वस्तुनोऽभावात्तत्र कथं प्राकट्यापरपर्यायप्रकाशस्योत्पत्तिः। इत्थञ्च प्राकट्यस्यैवाभावेन रूपादि-वत्तदनुपलब्ध्या कथन्तराञ्च प्राकट्येन ज्ञानानुमानसम्भवः ? न चातीतानागतायोरपि द्वित्वाद्युत्पत्तिवत्प्राकट्योत्पत्ति-सम्भवः। द्वित्वादीनामपि निराधारोत्पत्त्यसम्भवात्। अनुत्पन्नघटादीनामिव द्वित्वादीनामनुत्पन्नत्वेऽपि धीस्थतयैव व्यवहारस्वीकारात्। न चैवं प्राकट्येऽपि तत्सम्भवः, प्राकट्यस्य भवद्भिर्विषयधर्मत्वाभ्युपगमात्। वस्तुतो द्वित्वादीनामेवा-नङ्गीकारेण तत्प्रतिबन्दीप्रदर्शनासम्भवाच्च। न च प्राकट्यं विषयविषयिभावसम्बन्ध एव, स च वस्तुनोऽभावेऽपि वस्तुवत् धीस्थतया व्यवहर्तुमर्हतीति वाच्यम्। तथा सति ज्ञानानुमापकत्वासम्भवात्सम्बन्धरूपस्य तस्य सम्बन्धिप्रतीतिं विना प्रतीत्यसम्भवेन सम्बन्धिभूतानुभूतिप्रतीतेरपि वक्तव्यतया तेनानुभूत्यनुमानासम्भवात्।

अपि च प्राकट्यापरपर्यायो प्रकाशोऽप्रत्यक्ष उत प्रत्यक्षः ? आद्ये लिङ्गानुपलम्भान्नानुभूतेरनुमेयत्वसम्भवः। द्वितीये रूपादिवद्विषयधर्मत्वेन सर्वैरप्युपलभ्यत्वापत्तिः। न चापेक्षाबुद्धिजन्यद्वित्वाद्युपलम्भवदेतदुपलम्भस्यापि पुरुषविशेष-नियतत्वकल्पनं सम्भवतीति वाच्यम्। द्वित्वादेरपेक्षाबुध्याभिव्यङ्ग्यत्वेन तज्जन्यत्वाभावात्, अभिव्यङ्ग्याभिव्यञ्जकभाव-स्थले सिद्धाञ्जनाभिव्यङ्ग्यस्य निधेः अभिव्यञ्जकसिद्धाञ्जनत एवावभासमानत्वदर्शनात् द्वित्वादिविषयेऽपि तथा नियम-सम्भवेऽपि प्रकृतेऽनुभूतिप्राकट्ययो र्जन्यजनकभावस्वीकारेण तथा नियमासम्भवात्। अन्यथा जन्यस्य घटस्य कुलालं प्रत्येव भासमानत्वापत्तेः। अतः प्राकट्यं प्रत्यक्षाविषय इति लिङ्गज्ञानाभावान्नानुमानानोदयसम्भवः। अपि चेदं प्राकट्यं किं स्वतः प्रकाशते, उत परतः ? अन्त्येऽनवस्था। आद्ये अनुभूतेरेव तथात्वसम्भव इति। एवं प्राकट्यमनुपलब्धिपराहतमि-त्युक्तम्। अथान्यथानुपपत्त्या कल्पनमपि न सम्भवतीत्याह **उभयेति**। व्यवहारान्यथानुपत्त्या हि प्राकट्यारव्यधर्मः कल्प्यते। स च व्यवहारः प्राकट्यजनकोभयाङ्गीकृतानुभूत्यैवोपपत्तौ किमर्थं प्राकट्यकल्पनमिति भावः।

एवं तावत्प्राकट्याभ्युपगन्तारः प्राकट्यकल्पने युक्तीः कथयन्ति। तथा हि - ज्ञानस्य घटीयत्वपटीयत्वादिकं घटपटादिविषयगतकिञ्चिदुपकारजनकत्वाभावे न स्यात्। कुड्यादाविव घटादावप्यनुपकारकत्वाविशेषात्। एवं 'घटः प्रकाशत' इति व्यवहारो घटगतातिशयाभावेऽनुपपन्न, अन्यथा पटेपि तद्व्यवहारप्रसङ्गात्, ताद‍ृशोपकारादिरेव प्राकट्य-ज्ञाततताप्रकाशादिशब्दवाच्यः। इत्थञ्च ज्ञाततासिद्धौ घटगतोपकारो घटानुभूतिजन्यः घटसमवेतकार्यत्वादित्यनुमानेना-नुभूतेरनुमेयत्वसिद्धिः। एवं पाकादिक्रियाया ओदनादिनिष्ठवैक्लृत्यादिजनकत्वदर्शनेन क्रियात्वस्य कर्मकारकगतकिञ्चि-ज्जनकत्वमावश्यकमिति ज्ञाततासिद्धिः। एवं 'घटः प्रकाशत' इति घटकर्तृकतया प्रकाशस्य घटमनुभवामीति घटकर्मक-तयाऽन्यकर्तृकतया चानुभवस्य प्रतीत्या एकस्यैव कर्मकर्तृव्यवहारोऽनुपपन्न इति ज्ञातता कल्प्या। विशेषाभावेन घट एवोपकारं ज्ञानं जनयति इत्यस्य दुर्वचत्वात्। एवं 'ज्ञातो घट' इति सामान्यतः, साक्षात्कृतो घट इति विशेषतश्च विषय-विशेषणमेव किञ्चित्परिस्फुरतीति सैव ज्ञाततेति ज्ञाततासिद्धिरिति। तदेतदनुपपन्नम्। तथा हि - ज्ञानस्य घटीयमिति

व्यवहारबलात् घटादिविषयगतकिञ्चिदुपकारजनकत्वन्न सम्भवति । घटगतोपकारजनकत्वाभावेऽपि ज्ञाने घटीयत्वस्य वक्तुं शक्यत्वात् । अन्यथा उपकारजननात्प्राक् घटीयत्वरूपविशेषाभावेन घट एवोपकारं जनयति इत्यस्य दुर्वचत्वात् । तत्रेन्द्रियसन्निकर्षस्य हेतुत्वे तेनैव घटीयत्वव्यवस्था सम्भवतीति न तद्व्यवस्थायै ज्ञाततताकल्पनमपेक्षितम् ॥

अपि च वर्तमानेऽर्थे उपकारोत्पत्तेरुपपन्नत्वेऽप्यतीतेऽनागते चार्थे उपकारोत्पत्तिर्दुर्वचा, विषयस्यासत्त्वत् । न च घटत्वरूपसामान्ये तदुत्पत्तिसम्भवः, जात्यनभ्युपगमेन तस्याप्यानित्यत्वात् । जात्यभ्युपगमेपि वा ज्ञानस्य घटत्वीयत्वमेव स्यान्न घटीयत्वम् । न चास्मन्मते धर्मधर्मिणोर्भेदाभेदाङ्गीकाराज्जातितादात्म्यस्य व्यक्तावपि सत्त्वेन जाते ज्ञातताश्रयत्वे व्यक्तेरपि ज्ञातताश्रयत्वोपपत्तिरिति वाच्यम् । तथा सति घटत्वघटयोरपि भिन्नाभिन्नत्वेन घटीयचाक्षुषज्ञानस्यापि रसीयत्वापत्तेः । रसीयत्वमप्यस्त्येवेति चेत्तथा सति रसाकारेण किं न ज्ञायते ? रसत्वेन रुपेण रसस्य चक्षुरन्द्रियजन्यज्ञानजन्यज्ञाततानाधारत्वात् रसाकारेण न ज्ञायत इति चेत् तर्ह्यतीतादिविषयकज्ञानस्यपि सामान्यरूपेणैव ज्ञातताजनकत्वादतीतादिविषयस्य विशेषरूपेण ज्ञाततानाधारत्वाज्ज्ञानस्य विशेषरूपेण तदीयत्वन्न स्यात् । तदिदमुक्तं - "स्वभावनियमाभावादुपकारोऽपि दुर्घटः । सुघटत्वेऽपि सत्यर्थेऽसति का गतिरन्यथा" इति उदयनाचार्यैरिति । संवित्सिद्धावप्युक्तं - "अतीतेऽनगते चार्थे कथं प्राकट्यसम्भवः । न हि धर्मिण्यसत्येव धर्मस्सम्भवमृच्छति" इति ॥ वस्तुतो धर्मधर्मिणो र्भिन्नाभिन्नत्वमपि न सम्भवति । अशेषव्यवहारोपप्लवप्रसङ्गात् । धर्मधर्मिणोर्भेदाभेदाङ्गीकारेण जातिगतज्ञाततताया व्यक्तिगतत्वोपपादने ज्ञातताया अपि धर्मत्वात्तस्याः, धर्मिणश्च भेदाभेदसत्त्वेन धर्मितादात्म्यस्य ज्ञाततायामपि सत्त्वेन धर्मिण इवास्या अपि ज्ञाने घटीयत्वव्यवस्थापकत्वानुपपत्तिः । अतो वर्तमानार्थे ज्ञाततोत्पत्तिसम्भवेऽपि तद्गतज्ञातताया धर्माभिन्नायाः ज्ञाने विषयित्वव्यवस्थापनासम्भवादलमस्या अजागलस्तनतुल्याया ज्ञाततायाः स्वीकारेण । एवं 'घटः प्रकाशत' इति व्यवहारबलाज्ज्ञातताकल्पनमप्यसङ्गतम् । घटे तादृशव्यवहारव्यवस्थापकस्यातिशयस्य घटमात्रवृत्तित्वन्न पटादिवृत्तित्वमित्यत्र नियामकाभावात् । इन्द्रियसंयोगो नियामक इति चेत्तर्हि तेनैव ज्ञानव्यवस्थापनया व्यवहारव्यवस्थापनसम्भवादलं ज्ञाततया ।

एवं क्रियात्वहेतुना ज्ञानस्य घटगतकिञ्चित्काररूपज्ञातताजनकत्वानुमानमपि 'अनेकान्तादसिद्धेर्वा न च लिङ्गमिह क्रिया ।' (कुसुमाञ्जलिः) इत्याद्युक्तरीत्या प्रतिक्षेप्यम् । तथा हि - किमिदं हेतुत्वेनाभिमतं क्रियात्वम् । न तावद्धात्वर्थमात्रत्वं संयोगादिषु व्यभिचारात् । न हि 'शरस्सम्युनक्ति गगनमि'त्यादौ कर्मभूते संयोगस्य किञ्चिज्जनकत्वम् । एवं 'शब्दोऽभिव्यज्यत' इत्यादावन्त्यशब्दाभिव्यक्तेः कर्मभूते शब्देऽभिव्यक्त्यादिरूपकिञ्चिज्जनकत्वाभावेन शब्दे व्यभिचाराच्च । नापि स्पन्दत्वरूपं, ज्ञानेऽसिद्धेः । अतो न ज्ञातताकल्पनसम्भवः । एवमेकस्यैव कर्मकर्तृव्यवहारस्य धातुविशेषायत्तत्वात्, तदर्थमर्थभेदकल्पनाऽसम्भवात् । अर्थभेदाभावेऽपि 'रोचते,' 'स्वदते', इत्यादि धातुप्रयोगे कारकभेदस्य दर्शनात् । अत एव 'परशुमुद्यम्य वृक्षे निपातयति',' परशुना वृक्षं छिनत्ति' इत्यादावर्थभेदाभावेऽपि कारकभेदो दृश्यते । एवं 'ज्ञातो घट' इत्यादिप्रतीतिबलादपि न ज्ञाततासिद्धिः । तादृशव्यवहारस्य कर्मप्रत्ययाधीनत्वात् । अन्यथा' द्विष्टो घटः' 'इष्टो घट' इत्यादावपि ज्ञातताया इवान्यस्याप्युत्पत्त्यापत्तेः । एवं 'ज्ञास्यमानो घट' इत्यादिव्यवहारबलात् ज्ञास्यमानत्वादेरप्युत्पत्त्यापत्तेः । अतो 'ज्ञातो घट' इत्यादे र्ज्ञानवैशिष्ट्यमात्रविषयकत्वमेवेति नातिरिक्तज्ञातताख्यधर्मविशेषसिद्धिः । तदुक्तं - 'तद्वैशिष्ट्यप्रकाशत्वान्नाध्यक्षानुभवोऽधिके' (कुसुमाञ्जलिः) इति ॥

ननु 'ज्ञातो घट' इत्यादौ ज्ञानातिरक्तं विषयत्वं घटे भासते । अन्यथा कर्मकर्तृव्यवहारान्यथाऽनुपपत्त्या तत्कल्पनमपि

**वदनुपलब्धेः ; उभयाभ्युपेतानुभूत्यैवाशेषव्यवहारोपपत्तौ प्रकाशाख्यधर्मकल्पनानुपपत्तेश्च । अतो नानुभूतिरनुमीयते ; नापि ज्ञानान्तरसिद्धा । अपि तु सर्वं साधयन्त्यनुभूतिस्स्वयमेव सिद्ध्यति ।**

---

न प्रामाणिकम् । विषयत्वं प्राकट्यमिति चेत्तर्हि विषयत्वस्य विषयिभावमन्तरेणाभानान्न विषयत्वरूपप्राकट्येन न विषयिभूतानुभूत्यनुमानसम्भवः, विषयगतत्वेन ज्ञानभानस्य भ्रान्त्यधीनतायाः पूर्वमुक्तत्वाच्च, 'ध्वस्तो घट' इत्यादौ ध्वंसस्य घटवृत्तित्वेन भानस्यैवमेवाङ्गीकाराच्चेति । अतो नानुभूतिरनुमेयेत्याह - **अत** इति ।

ननु मा भूदस्या अनुमेयत्वं, मानसप्रत्यक्षवेद्यत्वन्तु स्यात् । तथाहि - 'ज्ञानं मानसप्रत्यक्षवेद्यं क्षणिकत्वे सत्यात्मविशेषगुणत्वात्' । धर्मे व्यभिचारवारणाय क्षणिकत्वपदं, शब्दे व्यभिचारवारणाय आत्मेति । आत्मनस्संयोगेऽनैकान्त्यवारणाय विशेषपदम् । अतश्चानेनानुमानेन ज्ञानान्तरवेद्यत्वसिद्ध्या न स्वयंप्रकाशत्वसिद्धिरित्यत्राह - **नापी**ति । अपिशब्द उक्तानुपलब्धिकल्पनानुपपत्तिरूपहेतुद्वयसूचकः । अयं भावः - स्वस्मिन् वर्तमानज्ञानस्य ज्ञानान्तरवेद्यत्वेनोपलम्भाभावान्न ज्ञानान्तरवेद्यत्वसम्भवः । उक्तानुमानमपि न तथात्वे प्रभवति । क्षणिकत्वात्मधर्मत्वगुणत्वानामस्माभिर्ज्ञानेऽनङ्गीकारेण स्वरूपासिद्धेः । मानसप्रत्यक्षवेद्यत्वस्याबुभुत्सितग्राह्यत्वव्याप्यतया सुखादिवज्ज्ञानास्याबुभुत्सितग्राह्यत्वापत्त्या ज्ञानविषयकज्ञानं तद्विषयकज्ञानश्चेत्यनवस्थाप्रसङ्गाच्च । न च घटविषयकज्ञानस्य मानसप्रत्यक्षवेद्यत्वेपि न तद्विषयकज्ञानस्यापि तथात्वस्वीकार इति नानवस्थेति वाच्यम् । तथा सति ज्ञानविषयकज्ञानेन हेतोर्व्याभिचरितत्वापत्तेः, द्वितीयादिज्ञानस्येव प्रथमज्ञानस्यपि तथात्वस्वीकारसम्भवेन हेतोरप्रयोजकत्वाच्च । द्वितीयज्ञानस्याज्ञेयत्वापत्तेः तस्य स्वयम्प्रकाशत्वे प्रथमस्यापि तथात्वौचित्यात् ।

एवं ज्ञानस्य बुभुत्सितस्य ग्राह्यत्वेऽपि ज्ञाने सतीच्छा, इच्छायां सत्यां ज्ञानमित्यन्योन्याश्रयः । एवं मानसप्रत्यक्षवेद्यस्य सुखादेरुपसब्धिनियमदर्शनेन ज्ञानेऽप्युलाब्धिनियमस्य वक्तव्यतया तदर्थं बुभुत्सा ततो ज्ञानं ततश्च बुभुत्सेति बुभुत्साज्ञानादिपरम्पराया अविरतिरेव स्यात् । न च सुखादीनामबुभुत्सितग्राह्यत्वं, ज्ञानस्य तु बुभुत्सितग्राह्यत्वमेव । अतोऽबुभुत्सितग्राह्यस्योपलब्धिनियमेऽपि न ज्ञानस्येति वाच्यम् । उभयोरपि मानसप्रत्यक्षत्वाविशेषेण सुखादेरपि बुभुत्सितग्राह्यत्वस्य वक्तव्यत्वात् । यदि तु बुभुत्सितग्राह्यत्वेऽपि नोपलब्धिनियम इत्युच्यते तदा मानसप्रत्यक्षत्वरहिते ज्ञाने हेतोरनैकान्त्यम् । एवं ज्ञानविषयकज्ञानस्याप्रमितत्वे निष्प्रमाणकत्वमेव स्यात् । ततश्च प्रथमज्ञानस्य तद्विषयघटादेरपि निष्प्रमाणकत्वमेवेति सर्वशून्यप्रसङ्गः । अत इदमपि निरस्तं - द्वितीयादिज्ञानस्यैव वेद्यत्वमभ्युपगम्यत इति । यदि द्वितीयादिज्ञानं स्वतस्सिद्धं, तर्हि प्रथममपि तथा किन्न स्यात् ? कस्यचित्स्वपरनिर्वाहकत्वेऽस्यापि लाघवात्तथा स्वीकार्तुं शक्यत्वादिति । एवमनुभूतेः परतस्सिद्धि र्निराकृता । अथ स्वतस्सिद्धिरेव परिशिष्यत इति स्वतस्सिद्धत्वमाह - **अपि त्वि**ति । **सर्वं साधयन्ती** = सर्वमपि विषयीकुर्वन्ती । इदं हेतुगर्भम् । **स्वयमेव सिद्ध्य**ति । स्वयमेव प्रकाशते । अन्यनिरपेक्षप्रकाशत्ववतीति यावत् । स्वप्रकाशस्य नित्यत्वात् स्वजन्यस्याप्ययोगादिति भावः ॥

यदत्र 'घटोऽय'मित्यादौ विषयमात्रस्यैवावाभास इति नानुभूत्यनुभाव इति । तन्न । अनुभूयत इति व्यवहारं विना 'घटोऽय'मित्येतावन्मात्रस्य व्यवहारस्य स्वविवक्षाविशेषनिबन्धनत्वेनानुभूत्यनुभवनिर्बन्धत्वाभावात् । 'घटोऽय'मित्यादिव्यवहारे अस्तिर्भवन्तीत्यप्रयुज्यमानोऽप्यस्तीत्यनुशासनेन अस्तीत्यस्य संयोजनीयतया सत्ताऽभिन्नानुभूते र्वस्तुतो भासमानत्वाच्च । न च घटोऽयमिति व्यवहारे तथा निर्वहेऽपि घटोऽयमिति प्रत्यक्षे कथं तन्निर्वाह इति वाच्यम् । प्रत्यक्षस्य सन्मात्रग्रहित्वेन पूर्वं व्यवस्थितत्वात्तत्र सदभिन्नानुभूतेस्स्वयम्भासमानत्वात् । एवमङ्गुल्यग्रनिदर्शनेन व्याहतिप्रदर्शनमपि

**प्रयोगश्च - अनुभूतिरनन्याधीनस्वधर्मव्यवहारा; स्वसम्बन्धादर्थान्तरे तद्धर्मव्यवहारहेतुत्वात् ।**

न सत् । अर्थान्तरप्रकाशस्य दीपादेः स्वात्मप्रकाशकत्वदर्शनेन तद्वदनुभूतेरपि स्वत्मप्रकाशकत्वसम्भवात् । अङ्गुल्यग्रस्य स्वात्मस्पर्शजनकत्वं ह्यनुपलब्धिपराहतम् । अत्र श्रुतिबलसिद्धे यत्किञ्चिद्दृष्टान्तप्रदर्शनेन कथं व्याहत्युद्भावनम् । न च श्रुतीनामान्यपर्यम्, 'अन्तर्ज्योतिः' 'स्वज्ञ्योतिः' आत्मज्योतिरित्यादीनां स्वान्यनिरपेक्षप्रकाशत्वबोधनपराणां स्वरसार्थवाहिनीनां श्रुतीनामान्यपर्यासम्भवात् । वस्तुत आकारभेदेन कर्मकर्तृविरोधोऽपि नास्ति । अन्यथा 'आत्मानं रक्षती'त्यादावपि कर्मकर्तृविरोधापत्तेः ।

ननु घटादिव्यवहारस्य घटादिव्यतिरिक्तज्ञानहेतुकत्वदर्शनेन ज्ञानव्यवहारेऽपि ज्ञानव्यतिरिक्तस्य ज्ञानान्तरस्यैव हेतुत्वं वाच्यमिति चेन्नैवम् । घटादिषु ज्ञेयव्यतिरिक्तज्ञात्रा दृश्यत्वदर्शनेन ज्ञेये ज्ञातरि ज्ञात्रन्तरदृश्यत्वकल्पनापत्तेः । एवं घटादिषु स्वव्यतिरिक्तकरणजन्यज्ञानदृश्यत्वदर्शनेन दृश्ये मनसि स्वव्यतिरिक्तमनोऽन्तरकरणजन्यज्ञानदृश्यत्वापत्तेश्च, तत्र तत्र ज्ञातुरात्मनः करणस्य मनसश्चैव ज्ञेयत्वादिदर्शनेन तद्वदनुभूतेरप्यन्यप्रकाशिकायाः स्वकर्मकत्वमविरुद्धं, नित्यत्वात् । किन्तु स्वान्यनिरपेक्षप्रकाशत्वमेव । अतोऽपि न कर्मकर्तृभावविरोधः । अत एवोपर्यनन्याधीनस्वधर्मत्वं साध्यत इति दिक् ।

एवं परिशेषादनुभूतेः स्वयम्प्रकाशत्वमुक्तम् । अथानुमानेनापि तत्सिद्धिरित्याह - **प्रयोगश्चेति** । अत्र 'अनुभूतिरनन्याधीनस्वधर्मा स्वसम्बन्धादर्थान्तरे तद्धर्महेतुत्वात्' इति, 'अनुभूतिरनन्याधीनस्वव्यवहारा स्वसम्बन्धादर्थान्तरे तद्व्यवहारहेतुत्वादि'ति चानुमानद्वयं विवाक्षितम् । परन्तु ग्रन्थलाघवायैयं तन्त्रितम् । तत्र प्राकट्यमभ्युपगम्य प्रथमानुमानप्रवृत्तिः, अनुभूतरनुमेयत्वस्थापनार्थं प्राकट्याभ्युपगमेऽपि स्वयम्प्रकाशत्वमेव सिध्यतीति वादिबुद्धिमान्द्यसूचनाय । अनुभूतिः स्वात्यन्तसजातीयापेक्षानियमरहितस्वावश्यम्भावि, स्वजन्यपरगतधर्मात्यन्तसजातीय(स्वात्यन्तसजातीयापेक्षानियमरहितस्वावश्यम्भावि)धर्मवती, स्वविसजातीये स्वानन्तरकालोत्तरकालानुवृत्तिरहितस्वगतधर्मात्यन्तसजातीयधर्महेतुत्वादिति प्रथमानुमानपर्यवसितोऽर्थः । अत्र साध्यकोटौ धर्मवत्वमात्रोक्तौ पदार्थत्वादिधर्ममादाय सिद्धसाधनं स्यात् । अतः **स्वजन्येति** । अनुभूतिप्रकाशस्य नित्यत्वात् स्वस्मिन्स्वजन्यधर्मासिद्धिरिति परगतत्वोक्तिः, अनुभूतिजन्यस्य परगतस्य प्राकट्यस्य स्वस्मिन्नसम्भवात्तत्परिहाराय धर्मसजातीयेति । प्रमेयत्वादिनाऽनूभूतिजन्यपरगतप्राकट्यसजातीयस्य एकत्वादेरनुभूतौ सत्त्वेन सिद्धसाधनं स्यादिति साजात्येऽत्यन्तत्वनिवेशः । रूपजन्यपरगतरूपित्वात्यन्तसजातीयरूपित्वरूपधर्माभाववति दृष्टान्ते रूपादौ साध्यविकलत्वस्य, दण्डाधीनपरगतदण्डित्वात्यन्तसजातीयदण्डित्वरूपसाध्याभाववति दण्डे दण्डान्तरेण स्वस्मिन् दण्डित्वापादके व्यभिचारस्य च परिहाराय धर्मे स्वावश्यम्भावित्वोक्तिः । एवमप्यनुभूतिप्राकट्यस्यान्याधीनत्वेऽप्यस्यानुमानस्योपपत्त्या नानुभूतेस्स्वयम्प्रकाशत्वसिद्धिरिति स्वात्यन्तसजातीयापेक्षरहितपदम् । यद्यप्यनन्याधीनत्वमात्रस्य तादृशधर्मे उक्तावप्यनुभूतिप्रकाशस्य स्वतस्त्वं सिध्यति, अथपि दृष्टान्ते रूपादौ चाक्षुषत्वस्य चक्षुराद्यपेक्षत्वेन साध्यवैकल्यं स्यादिति स्वसजातीयापेक्षारहितत्वमुक्तम् । प्रमेयत्वादिना चक्षुरादौ रूपसजातीयत्वस्य सत्त्वेन पुनरपि साध्यवैकल्यमिति तत्परिहाराय साजात्येऽत्यन्तत्वनिवेशः ।

एवमप्यनुमानगम्यपरज्ञानगतप्राकट्यस्य स्वात्यन्तसजातीयानुमित्यात्मकज्ञानाधीनतया स्वात्यान्तसजातीयापेक्षारहिततादृशधर्मस्य पक्षेऽभावेन बाधस्स्यादिति तत्परिहाराय नियमपदम् । परज्ञानं हि न स्वप्रकाशाय नियमतः स्वसजातीयानुमित्यात्मकज्ञानमपेक्षते । वर्तमानकाले स्वाश्रयाय स्वतो भासमानत्वात् । अतो नानुपपत्तिः । हेतौ धर्महेतुत्वादित्युक्ते साध्याभाववति सर्वत्र यत्किञ्चिद्धर्महेतुत्वसत्त्वेन व्यभिचारः, अतः स्वगतेत्यादिः । पितृजन्यपुत्रगतपुत्रत्वरूप-

**यः स्वसम्बन्धादर्थान्तरे यद्धर्मव्यवहारहेतुः, स तयोः स्वस्मिन्ननन्याधीनो दृष्टः; यथा रूपादिश्चाक्षुषत्वादौ। रूपादिर्हि पृथिव्यादौ स्वसम्बन्धाच्चाक्षुषत्वादि जनयन् स्वस्मिन्न रूपादिसम्बन्धाधीनश्चाक्षुषत्वादौ। अतोऽनु-**

---

धर्मात्यन्तसजातीयस्वावश्यम्भावि पुत्रत्वस्य पितरि, स्वात्यन्तसजातीयपित्रन्तरसापेक्षत्वेन तादृशापेक्षानियमरहित-तादृशधर्मवत्वरूपसाध्याभाववति पितरि स्वगतपुत्रत्वसजातीयपुत्रत्वरूपधर्महेतुत्वस्य सत्त्वेन व्यभिचारः। अतः सजातीयधर्मे स्वानन्तरकालोत्तरकालानुवृत्तिरहितत्वनिवेशः। पुत्रत्वादिकस्य पित्रनन्तरकालादुत्तरत्राप्यनुवृत्त्या तादृशानु-वृत्तिरहितधर्महेतुत्वस्य पितर्यसत्त्वेन न व्यभिचारप्रसक्तिः। द्रव्याधीनद्रव्यान्तरगतसंयुक्तत्वात्यन्तसजातीयस्वावश्य-म्भाविसंयुक्तत्वस्य द्रव्ये स्वसजातीयद्रव्यान्तरसापेक्षत्वनियमात् तादृशापेक्षानियमरहिततादृशसंयुक्तत्वरूपसाध्याभाव-वति द्रव्ये स्वसजातीयवृत्तिस्वानन्तरकालोत्तरकालानुवृत्तिरहितस्वगतधर्मात्यन्तसजातीयसंयुक्तत्वरूपधर्महेतुत्वस्य सत्त्वेनाऽनैकान्त्यमिति स्वविजातीय इत्युक्तम्।

नन्वेवं सति परगतसंयुक्तत्वापादके घटे स्वस्य तथात्त्वे घटान्तरसापेक्षे व्यभिचार इति चेन्मैवम्। घटगतसंयुक्त-त्वस्य घटात्यन्तविजातीयपटादिसापेक्षत्वस्यापि दर्शनेन घटात्यन्तसजातीयापेक्षानियमराहित्यस्यैव तादृशधर्मे सत्त्वेन नियमरहिततादृशधर्मवत्वरूपसाध्यस्यैव घटादौ विद्यमानतया व्यभिचारानुपपत्तेः। पूर्वत्र तु द्रव्यगतसंयुक्तत्वस्य नियमेन स्वसजातीयद्रव्यान्तरसापेक्षत्वदर्शनात् व्यभिचारप्रसक्तिरिति, तद्वारकं विशेषणमावश्यकम्। ननु पुत्रे पुत्रत्वापादकपितरि व्यभिचारवारणं विजातीयपदेनैव सम्भवति, पुत्रस्यापि पितृत्वेनरूपेण पितृसाजात्यात्। अतः स्वानन्तरकालेत्यादि-विशेषणं व्यर्थमिति चेन्न—तावतापि अपुत्रपुत्रे पुत्रत्वापादकपितरि व्यभिचारवारणासम्भवात्। तस्य पुत्राभावेन पितृत्वेन सजातीयत्वासम्भवांदिति।

एवं अनुभूतिः स्वात्यन्तसजातीयापेक्षानियमरहितस्वावश्यम्भावि, स्वजन्यपरगतव्यवहारात्यन्तसजातीय-व्यवहारवती, स्वविसजातीये स्वशून्यकालानुवृत्तिरहितस्वगतधर्मात्यन्तसजातीयधर्मसम्बन्धसापेक्षव्यवहारहेतुत्वादिति द्वितीयानुमानम्। स्वशून्यकालानुवृत्तिरहितत्वविशेषणं पूर्वानुमाने धर्म इवात्र न व्यवहारे विशेषणं दृष्टान्तस्य साधन-वैकल्यप्रसङ्गात्। घटादौ चाक्षुषत्वव्यवहारस्य घटनाशानन्तरमपि सम्भवेन रूपगतचाक्षुषत्वव्यवहारात्यन्तसजातीय-चाक्षुषत्वव्यवहारस्य घटादिगतस्य स्वशून्यकालानुवृत्तिरहितत्वाभावात्। घटादिव्यवहारहेतुत्वमादाय सिद्धसाधन-वारणाय स्वजन्येत्यादिकम्। अनुभूतिव्यवहारस्यानुभूत्यन्यवागादिसापेक्षतया बाधः, दृष्टान्ते साध्यवैकल्यश्चेति तत्परिहाराय स्वात्यन्तसाजातीयेत्यादिकम्। परज्ञानव्यवहारे बाधपरिहाराय नियमपदम्। अन्यत्सर्वं पूर्ववत्। उक्तानुमाने सामान्यमुखीं व्याप्तिं दर्शयति—**य** इति। दृष्टान्तमाह—**यथेति**। अत्र रूपादिरित्यत्रादिना स्पर्शसङ्ग्रहः। चाक्षुषत्वादा-वित्यत्राऽऽदिना स्पार्शनत्वतद्व्यवहारविशेषयोस्सङ्ग्रहः। दृष्टान्ते व्याप्तिमुपपादयति—**रूपादि**रिति। **हिः** प्रसिद्धौ। द्रव्यनिष्ठलौकिकविषयतासम्बन्धेन चाक्षुषत्वावच्छिन्नं प्रति समवायेनोद्भूतरूपस्य हेतुत्वादिति भावः।

एवमनुमानादिसिद्धमर्थमाह - **अत** इति। स्वयमेव हेतुः, अनुभूत्यन्तरनिरपेक्ष इत्यर्थः। अन्यथाऽनुभूतिप्रकाशस्य नित्यत्वेन स्वहेतुकत्वोक्तौ व्याघातात्। अयमत्राभिप्रायः—अनुभूतिः स्वात्यन्तसजातीयापेक्षानियमरहितस्वप्रकाशा, तादृशस्वव्यवहारा वा, हेतुत्वात् पदार्थत्वाद्वेत्येतावदेवात्र पर्याप्तम्, क्वचिदपि व्यभिचाराद्यप्रसक्तेः। स्वसम्बन्धादित्यादिकं तु धीवैशद्यार्थमेव। यद्यप्येतादृशस्वयम्प्रकाशत्वं सर्वपदार्थसाधरणं नानुभूतिमात्रवृत्ति, अथाप्यनुभूतिव्यतिरिक्तस्य स्वात्यन्तसजातीयापेक्षारहितस्वप्रकाशकत्वसम्भवेऽपि स्वविजातीयज्ञानसापेक्षप्रकाशत्वरूपपरतो ग्राह्यत्वस्य न

**भूतिरात्मनः प्रकाशमानत्वे प्रकाशत इति व्यवहारे च स्वयमेव हेतुः । सेयं स्वयम्प्रकाशाऽनुभूतिर्नित्या च; प्रागभावाद्यभावात् ।**

निवृत्तिः । अनुभूतेस्तु स्वात्यन्तसजातीयानुभूत्यन्तरापेक्षारहितस्वप्रकाशत्वसिद्धौ ज्ञानसापेक्षप्रकाशत्वाभावेन न ज्ञानान्तरवेद्यत्वप्रसङ्गः । अनुभूतिविजातीयाचेतनानान्तु ग्राहकत्वगन्धस्यैवाभावेन न तत्सापेक्षप्रकाशकत्वापादनसम्भवः । अनुभूतेर्ज्ञानान्तरवेद्यत्वतदभावयोरेव विवादेन ज्ञानान्तरवेद्यत्वाभावसाधनस्यैव पर्याप्तत्वाच्च । अतोऽलं यथोक्तमनुमानमेव । ग्रन्थकर्तुरप्यत्रैवाशय इत्येतत् 'अनुभूतिरात्मनः प्रकाशमानत्वे' इत्यादिना सूचितमिति । उक्तं चात्मसिद्धौ यामुनाचार्यैः -" सजातीयस्वसाध्यार्थनिरपेक्षात्मसिद्धयः । सर्वे पदार्थास्तेनात्मा निरपेक्षात्मसिद्धिकः" इति ।

ननु सतो ब्रह्मणो नित्यत्वं श्रुतम् । अनुभूतेस्त्वनित्यत्वं दृष्टम् । अतः कथं तयोरैक्यम् । अन्यथा योगाचारवैलक्षण्यञ्च न स्यादित्यत्राह **सेयमिति** । यद्वा एवमनुभूतेः स्वतस्सिद्धत्वं प्रतिपादितम् । अथ तत एव हेतो र्नित्यत्वमपि सिध्यतीत्याह **सेयमिति** । सेयं परमार्थभूता, सदभिन्ना । सच्चिद्रूपतया शास्त्रप्रत्यक्षसिद्धा च । स्वयम्प्रकाशेति हेतुगर्भम् । अनुभूतिरिति पक्षनिर्देशः । अनुभूति र्नित्या, प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वादित्यनुमानम् । **प्रागिति** । प्रतियोगितया प्रागभावाभावो हेतुः । अन्यथा ध्वंसप्रागभावयोः स्वसमवायिदेशवृत्तित्वनियमेनानित्येषु घटादिष्वप्यनुयोगितया हेतोः सत्त्वेन व्यभिचारापत्तेः । ध्वंसप्रागभावयो र्वारणाय पदद्वयम् ।

नन्वत्र किमिदं नित्यत्वम् ? न तावत् प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वं साध्यहेत्वोरविशेषात् । नापि प्रागभावाप्रतियोगित्वमात्रं ध्वंसाप्रतियोगित्वमात्रं वा तत् । हेतुघटकान्यतरदलस्य वैयर्थ्यापत्तेः । पूर्वत्र प्रागभावाप्रतियोगित्वस्य संयक्त्वात् ध्वंसे साध्याभावसत्त्वेऽपि हेत्वभावेन प्रागभावे हेतुसत्त्वेऽपि साध्याभावस्यासत्त्वेन व्यभिचाराप्रसक्तेः । उत्तरत्र ध्वंसाप्रतियोगित्वस्य च संयक्त्वात् । प्रागभावे साध्याभावसत्त्वेऽपि हेत्त्वाभावेन, ध्वंसे हेतुसत्त्वेऽपि साध्याभावस्यासत्त्वेन व्यभिचाराप्रसक्तेश्च । हेतोः पक्षवृत्तित्वदशायामेव पक्षस्य साध्यवत्तानिश्चयसम्भवेनोक्तस्य साध्यत्वानुपपत्तेश्च । न चैकैकमात्रमेव हेतुरिति वाच्यं, तस्य साध्याविशिष्टत्वात् । न चोभयं साध्यं प्रत्येकं हेतुरिति वाच्यम् । प्रागभावे ध्वंसे च व्यभिचारात् । एतेन विशिष्टस्य साध्यत्वेऽपि न निस्तारः । अतोऽप्रतिष्ठितमिदमनुमानमिति चेदत्र वदन्ति—अनुभूतिः प्रागभावाप्रतियोगित्वध्वंसाप्रतियोगित्वोभयवती, भावत्वे सति प्रागभावाप्रतियोगित्वात्, भावत्वे सति ध्वंसाप्रतियोगित्वाद्वा । एवमनुभूतिः प्रागभावाप्रतियोगित्ववती भावत्वे सति ध्वंसाप्रतियोगित्वात् । एवमनुभूतिः ध्वंसाप्रतियोगित्ववती भावत्वे सति प्रागभावाप्रतियोगित्वात् । एवमनुभूतिः प्रागभावप्रतियोगित्वविशिष्टध्वंसप्रतियोगित्वाभाववती भावत्वे सति प्रागभावाप्रतियोगित्वात् भावत्वे सति ध्वंसाप्रतियोगित्वादित्याद्यनुमानेषु न कश्चिदपि बाधगन्धावकाश इति । वस्तुतोऽनुभूतिः कालानवच्छिन्नत्ववती प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वात्, इत्येवमनुमाने ध्वंसप्रागभावयोर्वारणाय पदद्वयमिति न कस्यचिदपि दोषस्यावकाशः ।

अत्रेदं बोध्यम् - **उत्पत्तिप्रतिबद्धाश्चान्येऽपि भावविकारास्तस्या न सन्तीत्य**नेन ग्रन्थेन ध्वंसरूपविकारस्योत्तरत्र निराकरिष्यमाणतया तस्यात्र पृथङ्निषेधस्यानुपयुक्तत्वात्तादृशविकाराभावसाधकानुत्पन्नत्वस्यैव चात्रसाधनीयतया चानुभूतिराद्यक्षणसम्बन्धरूपोत्पत्तिशून्या प्रागभावाप्रतियोगित्वात् प्रागभाववदित्यनुमानप्रयोगस्तु सुसमीचीनः । अत एव **अतोऽस्याः प्रागभावाभावादुत्पत्तिर्न शक्यते वक्तु**मित्युपरितनभाष्यग्रन्थस्वारस्यमपीति । यद्वा - **नित्या** = प्रागभावाप्रतियोगित्ववती । सर्वदा सत्त्वमाद्यन्तशून्यत्वं वा नित्यत्वमित्यपि केचित् । तत्र हेतुमाह - **प्रागभावाद्यभावादिति** ।

**तदभावश्च स्वतस्सिद्धत्वादेव । न ह्यनुभूतेः स्वतस्सिद्धायाः प्रागभावः स्वतोऽन्यतो वाऽवगन्तुं शक्यते । अनुभूतिः स्वाभावमवगमयन्ती, सती तावन्नावगमति । तस्याः सत्त्वे विरोधादेव तदभावो नास्तीति, कथं सा स्वाभावमवगमयति ? एवमसत्यपि नावगमयति; अनुभूतिः स्वयमसती स्वाभावे कथं प्रमाणं भवेत् ? नाप्यन्यतोऽवगन्तुं शक्यते ; अनुभूतेरनन्यगोचरत्वात् । अस्याः प्रागभावं साधयत्प्रमाणम् 'अनुभूतिरियम्',**

---

अयं भावः - यस्य प्रागभावप्रतियोगित्वं वक्तव्यं तस्य प्रागभावो वक्तव्यः । इत्थश्चानुभूतेः प्रागभावप्रतियोगित्वं तदा स्याद्यदि तत्प्रागभावस्स्यात् । स च नास्ति । अतश्च तत्प्रागभावाभावेन तस्याः प्रागभावाप्रतियोगित्वसिद्धिरिति ।

इदमत्र तात्पर्यं—अनुभूतिर्नित्या, वस्तुविशिष्टप्रागभावविशिष्टान्यत्वात्, वस्तुविशिष्टध्वंसविशिष्टान्यत्वात् । उभयत्र प्रथमवैशिष्ट्यमनुयोगितासम्बन्धेन । द्वितीयवैशिष्ट्यञ्च प्रतियोगितासम्बन्धेन । वस्तुपदेनानुभूतिव्यतिरिक्तघटाद्युपादानेऽनुयोगितासम्बन्धेन तद्विशिष्टो घटादिप्रागभावो घटादिध्वंसश्च । प्रतियोगितासम्बन्धेन घटादिप्रागभावविशिष्टः घटादि-ध्वंसविशिष्टश्च घटादिः । तदन्यत्वञ्चानुभूतावस्ति । वस्तुपदेनानुभूतिग्रहणन्तु न सम्भवति । अनुयोगितासम्बन्धेन तद्विशिष्टप्रागभावाद्यसिद्धेः । एतेन प्रागभावाद्यभावस्य हेतुत्वे हेत्वसिद्धिः, प्रागभावादेः सप्रतियोगिकत्वेनानुभूतिप्रागभावाद्यभावस्यैव हेतुत्वावश्यकतया तत्प्रागभावादेरेवासिद्धेः । तदन्यप्रागभावाद्यभावस्य हेतुत्वन्तु न संयक् तस्यानुभूतिनित्यत्वासाधकत्वात् । प्रागभावस्य सप्रतियोगिकत्वेन प्रतियोगिनिर्देशावश्यकत्वात्, प्रतियोगितासम्बन्धेन प्रागभावादिविशिष्टान्यत्वमपि न हेतुरित्यादि चोद्यानि परिहृतानि । तत्प्रागभावः कुतो नास्तीत्यत्राह—**तदभावश्चेति । स्वतस्सिद्धत्वात्** = अन्यनिरपेक्षप्रकाशत्त्वादनुभूतेरित्यर्थः । इत्थश्चानुभूतिः प्रागभावाप्रतियोगित्ववती स्वतस्सिद्धत्वादिति पर्यवसितम् । (अत एव हेतोर्न साध्याविशिष्टत्वं, स्वयम्प्रकाशेति हेतुगर्भविशेषणसाङ्गत्यञ्च । अन्यथा नित्यत्वहेतुतया स्वयम्प्रकाशत्वस्यानुभूतिविशेषणत्वोक्तिवैयर्थ्यात्) तत्र हेत्वसिद्धिशङ्कायाम् अनुभूतिः प्रागभावशून्या स्वयम्प्रकाशत्वादित्यनुमानोदयः । स्वयम्प्रकाशत्वविशेषणन्तु नित्यत्वनिदानतयोक्तं, न तु साक्षाद्धेतुत्वेनेति न कोऽपि दोषः ।

ननु प्रागभावप्रतियोगित्वे प्रागभावशून्यत्वे वा साध्ये न स्वयम्प्रकाशत्वं हेतुः तस्य सपक्षे प्रागभावादौ क्वाचिदप्यवृत्तेः ध्वंसाप्रतियोगित्वे साध्ये ध्वंसादौ, उभयरहितत्वे च साध्ये खपुष्पादौ च हेत्ववृत्त्याऽसाधारणत्वात् । न च स्वात्यन्तसजातीयापेक्षानियमरहितस्वप्रकाशत्वरूपं तत्प्रागभावेऽप्यस्तीति वाच्यम् । तथा सति साध्याभाववति सर्वत्रोक्तहेतोस्सत्त्वेनानैकान्त्यापत्तेरित्यत्राह — **न हीति** । अयं भावः - प्रागभावग्राहकप्रमाणाभावात् अनुभूतेः प्रागभावग्राहकप्रमाणानुपपत्तौ हेतुः, न तु प्रागभावशून्यत्वादि साधने इति । स्वतः पक्षे शिरोद्वयं मनसि निधाय प्रथमं शिरो दूषयति - **अनुभूतिरिति** । नन्वनुभूतिस्स्वयं सती स्वाभावं विषयान्तरं भावाभावमिव कुतो नावगमयेदित्यत्राह — **तस्यास्सत्त्व** इति । स्वसत्त्वे स्वाभावरूपविषयस्यैवासत्त्वेन न तद्ग्राहकत्वसम्भव इति भावः । विरोधादेव स्वस्वप्रागभावयोः समकालत्वाभावरूपविरोधादेव । यद्यप्यन्योऽन्याभावस्य स्वप्रतियोगिसमकालत्वं सम्भवति, अथापि प्रध्वंसवत् प्रागभावस्य तन्न सम्भवतीति भावः । द्वितीयं शिरो दूषयति—**एवमसत्यपीति** । तत्र हेतुमाह—**अनुभूतिरिति** । ग्राहकस्य स्वस्याभावेन प्रमाणत्वन्न सम्भवतीति भावः । अन्यत इति पक्षं व्युदस्यति—**नापीति** । तत्र हेतुं प्रदर्शयति — **अनुभूतेरिति** ।

नन्वस्त्वनुभूतेरनन्यगोचरत्वं, तदभावस्य तु नानन्यगोचरत्वम् । अतस्तदभावस्य कथमन्यतोऽवगमासम्भव इत्यत्राह — **अस्या** इति । अनुभूतेरित्यर्थः । अयं भावः - घटप्रागभावस्य ग्राह्यत्वे तत्प्रतियोगिभूतं घटं विषयीकृत्य तत्प्रागभावग्रहणं सम्भवति । अन्यथा घटप्रागभाव इति वक्तुमशक्यत्वात्, अभावबुद्धौ प्रतियोगिज्ञानस्य कारणात्वाच्च ।

**इति विषयीकृत्य तदभावं साधयेत् । स्वतस्सिद्धत्वेन इयमिति विषयीकारानर्हत्वान्न तत्प्रागभावोऽन्यतः शक्यावगमः । अतोऽस्याः प्रागभावाभावादुत्पत्तिर्न शक्यते वक्तुमित्युत्पत्तिप्रति(सं)बद्धाश्चान्येऽपि भाव-विकारास्तस्या न सन्ति । अनुत्पन्नेयमनुभूतिरात्मनि नानात्वमपि न सहते ; व्यापकविरुद्धोपलब्धेः ।**

---

अतोऽत्रानुभूतेरेव प्रागभावो ग्राह्य इति तत्प्रतियोगिभूतानुभूतेर्विषयत्वं वक्तव्यम् । तस्याश्चान्यविषयीभावानर्हत्वेन तत्प्रागभावग्रहणमपि दुश्शकमिति । इत्थञ्च प्रागभावरहितत्वसिध्या प्रागभावाप्रतियोगित्वरूपानुत्पन्नत्वसिद्धया उत्पत्ति-व्याप्यविकाराभावोऽप्यनुभूतौ सेत्स्यति । विकारव्यापकोत्पन्नत्वस्याभावेन व्याप्याभावसिद्धेरित्याशयेनोपसंहरति **अत** इति । **उत्पत्तिप्रतिबद्धाः** = उत्पत्तिव्याप्याः । **भावविकाराः** - अस्ति, जायते, वर्धते, परिणमते, अपक्षीयते, नश्यतीत्युक्ता विकाराः षट् । अत्रानुभूतिः विकारसामान्याभाववती, अनुत्पन्नत्वादिति विकारसामान्याभावो न साध्यते, अस्तित्वरूप-विकारस्यानुभूतौ सत्त्वेन बाधापत्तेः, उत्पत्तिरूपविकारस्य पूर्वमेव साधितत्वेन पुनस्तत्साधनस्यानुपपन्नत्वात् । अत एव **'अन्येऽपीत्युक्तम्'** । **अन्य**शब्दो ह्युक्तादन्यपरः, तस्मात् सत्तोत्पत्तिभिन्नभावविकारसामान्याभाव एव साधनीयः । न चैवं साधने सत्तारूपविकारस्य उत्पत्तिरूपविकारस्य चाभावो न सिध्येदिति वाच्यम् । पूर्वत्रेष्टत्वात्, उत्तरत्रोत्पत्तिरूप-विकारस्य पूर्वं निषिद्धत्वेन तदापादनासम्भवात् ।

न च सत्तारूपविकारस्यानुभूतावभ्युपगमे तस्यास्सधर्मत्वापत्तिरिति वाच्यम् । तस्यानुभूतिस्वरूपत्वाभ्युपगमात् । ननु साध्यकोटौ भावपदं व्यर्थम् । मैवम् । विकारसामान्यान्तर्गतध्वंसरूपविकारवति प्रागभावे व्यभिचारवारकतया तत्सार्थक्यात् । विकारे भावत्वविशेषणेन ध्वंसरूपविकारस्योपादातुमशक्यत्वेन प्रागभाववारणसम्भवात् । न च साध्यघटकपदानां सिद्धसाधनवारकतया सार्थक्यं, हेतुघटकदलानां व्यभिचारवारकताया च सार्थक्यमिति नियमेन साध्यघटकभावपदस्य व्यभिचारवारकतया सार्थक्योपपादनं न समीचीनमिति वाच्यम् । तथा नियमे प्रमाणाभावात् । नन्वेवं सत्यनुभूतौ ध्वंसरूपविकाराभावो न सिध्येत् । भावपदेन विकारस्य विशेषितत्वादिति चेन्न । 'भावानां विकारा' इति षष्ठीतत्पुरुषाश्रयणेन भाववृत्तित्वविशिष्टविकाराभावस्य साध्यत्वाङ्गीकारेण ध्वंसस्यापि विकारपदग्रहणसम्भवेना-दोषात् । न चैवं सति प्रागभावे व्यभिचारवारणानिस्तरः, भाववृत्तित्वविशिष्टध्वंसरूपविकारस्य प्रागभावेऽसत्त्वेन साध्यस्यापि तत्र सत्त्वात् । वस्तुतस्तु भाष्योक्तस्य "भावविकारा" इत्यस्य बाह्येषु भावेषु सम्भवन्तो धर्मा इत्यर्थः । अतो न भावपदस्यापि साध्यघटकत्वम् । तदुक्तिस्तु प्रागभावे व्यभिचारपरिहाराय हेतुकोटौ भावत्वे सतीति विशेषणदान-सूचनायैवेति । एतेन भाववृत्तित्वविशिष्टविकाराभावस्य साध्यत्वे भावपदेनानुभूतिग्रहणे तद्वृत्तित्वविशिष्टविकारस्यैवा-प्रसिद्ध्या तदभावरूपसाध्याप्रसिद्धिः । अनुभूतिव्यतिरिक्तभावग्रहणे तद्वृत्तित्वविशिष्टविकाराणां तत्रैव सत्त्वेनानुभूतौ तदभावस्य सिद्धत्वेन सिद्धसाधनमर्थान्तरञ्चेत्यादिशङ्काऽपास्ता ॥

एवं ज्ञातृज्ञेयनिरासस्य ज्ञानस्वयम्प्रकाशत्वस्य च बौद्धैरप्यङ्गीकृतत्वेन तन्मतवैलक्षण्यसिध्यर्थं तन्मतसिद्धक्षणिक-त्वव्यावृत्त्यै च ज्ञानस्यानुत्पन्नत्वरूपनित्यत्वं स्थापितम् । ततोऽनुत्पन्नत्वेन हेतुना विकारान्तराभावश्च स्थापितः । अथ तेनैव हेतुना तदङ्गीकृतानेकत्वव्युदासाय सजातीयभेदमपि निरस्यति—**अनुत्पन्नेयम**िति । **अनुत्पन्ने**ति हेतुगर्भविशेषणम् । **इयं** = स्वतस्सिद्धेत्यर्थः । स्वतस्सिद्धत्वादपि नानात्वं नास्तीत्यर्थः । स्वयम्प्रकाशवस्तुद्वयस्यासम्भवात् । अनुभूतिर्न नाना स्वतस्सिद्धत्वात्, यन्नाना तदस्वतःसिद्धं, यथा घट इति प्रयोगोऽप्यभिप्रेतः । स्वतस्सिद्धत्वेन स्वतोऽन्यतो वा नानात्वेनापि दुर्ग्रहत्वाच्चेति भावः । **आत्मनि** = स्वस्वरूपे । नानात्वं - स्वानुयोगित्वस्वप्रतियोगित्वोभयसंबन्धेन भेदविशिष्टत्वम् । ज्ञानप्रतियोगिकभेद इति यावत् । हेतुमाह - **व्यापके**ति । नानात्वव्यापकं यदुत्पन्नत्वं तद्विरुद्धानुत्पन्नत्वस्य

**न ह्यनुत्पन्नं नानाभूतं दृष्टम्। भेदादीनामनुभाव्यत्वेन च रूपादेरिवानुभूतिधर्मत्वं न सम्भवति। अतोऽनुभूतेरनुभवस्वरूपत्वादेवान्योऽपि कश्चिदनुभाव्यो नास्या धर्मः। यतो निर्धूतनिखिलभेदा संवित्, अत एव**

पक्षे उपलब्धेरित्यर्थः। व्यापकीभूतोत्पत्तिनिवृत्त्या तद्व्याप्यभूतनानात्वस्याप्यनुभूतौ निवृत्तिरिति भावः।

ननु स्यादेतत् यदि नानात्वोत्पन्नत्वयो र्व्याप्यव्यापकभावस्स्यात्। तदेव तु न पश्यामः, नैयायिकाङ्गीकृतेषु परमाण्वादिपदार्थेषु नानात्वस्योत्पन्नत्वव्यभिचरितत्वात्। अतो व्यापकनिवृत्तावपि व्याप्यनिवृत्तिर्दुश्शकैवेत्यत्र नानात्वोत्पन्नत्वयोर्व्याप्तिं दर्शयति — **न हीति**। नानाभूतमनुत्पन्नं न हि दृष्टमित्यन्वयः, उत्पत्तिमदेव दृष्टमित्यर्थः। **हिः** प्रसिद्धौ। अयं भावः - अन्याङ्गीकृतपरमाण्वादिपदार्थानां प्रमाणशून्यत्वेन खपुष्पशशशृङ्गादिवद्वस्तुन एवाभावेन न तत्र व्यभिचारप्रदर्शनमुपपन्नं भवतीति न व्याप्यव्यापकभावभङ्ग इति। अतो व्यापकनिवृत्त्या व्याप्यनिवृत्तिस्सुशकैव। इत्थञ्चानुभूतिः स्वसजातीयशून्या अनुत्पन्नत्वात्, यन्नैवं तन्नैवं यथा घटादि इत्यनुमानेन नानात्वाभावसिद्धिः निष्प्रत्यूहैवेति भावः।

अनूभूतिः नानात्वाभाववती, अनुत्पन्नत्वादित्यनुमाने दिक्गगनादिषु व्यभिचारो न सम्भवति। तत्र साध्यस्य सत्त्वेन साध्याभावस्याभावाद्वेदान्तसिद्धान्तरीत्योत्पन्नत्वस्यैव सत्त्वेन हेत्त्वभावाच्च। परमाणौ साध्याभावस्य हेतोश्च सत्त्वेपि वेदान्तिभिः परमाणुस्वरूपस्यैवानङ्गीकारात्। जालकरन्ध्रदृश्यमानत्रसरेण्वादीनामुत्पत्तिमत्त्वेन हेतोरसत्त्वाच्च न तत्र व्यभिचारोपपादनं सम्भवति। महदादिहेतुभूतमूलप्रकृते र्नित्यत्वेनैकत्वेन व्यभिचारापादानमपि न युक्तम्। "मायां तु प्रकृतिं विद्यात्" इत्यविद्यातिरिक्तप्रकृत्यनङ्गीकारात्। अङ्गीकारेपि तस्या अपि अविद्याकार्यत्वादुत्पत्तिमत्त्वमेवेति व्यभिचाराप्रसक्तेः। अविद्यायामेव व्यभिचारापादनं तु भाष्यकृतैवोत्तरत्र क्रियते इति विवेकः। पूर्वं प्रत्यक्षादेः सन्मात्रग्राहित्वोपपादनेन घटपटादिविजातीयभेदानां भ्रान्तिमूलत्वोपपादनेन चानुभूतेर्विजातीयभेदशून्यत्वं स्थापितम्। सम्प्रत्यनुत्पन्नत्वहेतुना सजातीयभेदप्रतिक्षेपादस्याः सजातीयभेदशून्यत्वमपि स्थापितं भवति।

अथ स्वगतभेदशून्यत्वस्थापनार्थमनुभूतेर्निर्धर्मकत्वं प्रतिजानीते - **भेदादीनामिति**। तत्रानुभूतेर्निर्धर्मकत्वे अनुभाव्यभेदपक्षकमनुभूतिपक्षकश्चानुमानद्वयं प्रमाणम्। तत्र प्रथमानुमानमाह—**भेदादीनामिति**। आदिशब्दो विकारादिसङ्ग्राहकः। भेदादयो नानुभूतिधर्माः अनुभाव्यत्वा-द्रूपादिवदित्यनुमानप्रयोगो द्रष्टव्यः। एतेनानुभूतेस्सजातीयभेदोऽपि प्रतिक्षिप्तो भवति। यदि धीसजातीयान्यापि स्यात्तदा तद्भेदस्यानुभूतिधर्मत्वसिध्याऽनुभूतिधर्मत्वाभावसाधनाऽसम्भवः। अथ द्वितीयानुमानमाह - **अत** इति। यतो भेदादयो नानुभूतिधर्माः, अत एवानुभूतिरपि नानुभाव्यधर्मवतीत्यर्थः। **अनुभवस्वरूपत्वात्** = अनुभवत्वात्। अनुभूति र्निर्धर्मा अनुभवत्वादिति व्यतिरेकी बोध्यः। **अन्योऽपि कश्चिदिति**। अनुभूतित्वस्वयम्प्रकाशत्वनित्यत्वनिर्विकारत्वनिर्भेदत्वानि 'सत्यं ज्ञानमनन्तं ब्रह्म'त्युक्तानृतादिव्यावृत्तयश्च। अपि शब्दो उक्तविलक्षणधर्मपरः। एतेनानुभूतित्वादिधर्मणामप्यनुभूतिधर्मत्वनिषेधसिध्या स्वगतत्वेनाभिमतभेदशून्यत्वसिद्धिरपि फलिता। हेतुसाध्यनिर्देशस्तु कल्पितधर्मैरेवेति भावः।

नन्वास्तामनुभूते र्निर्विशेषत्वादिसाधनप्रयासः, सदेवेत्यादिप्रतिपन्नस्यात्मनः (ब्रह्मणः) कथं निर्विशेषत्वसिद्धिः? निर्विशेषवस्तुद्वयसिध्या एकमेवेति सजातीयनिषेधश्चानुपपन्नः। इत्थञ्च न कस्यचिदपि निर्विशेषत्वं सिध्येत्। स्वसजातीयवस्तुसद्भावेन स्वसजातीयभेदशून्यत्वाभावादित्यत्र श्रुत्युक्तात्मन अनुभूतिव्यतिरिक्तत्वाभावादुभयोरैक्येन नोक्तदोषावकाश इत्याभिप्रायेणाह—**यत** इति। **यतः** = स्वयम्प्रकाशत्वात्। अत एव = स्वयम्प्रकाशत्वादेव।

**नास्यास्स्वरूपातिरिक्त आश्रयो ज्ञाता नाम कश्चिदस्तीति स्वप्रकाशरूपा सैवाऽऽत्मा ; अजडत्वाच्च। अनात्मत्वव्याप्तं जडत्वं संविदि व्यावर्तमानम्, अनात्मत्वमपि हि संविदो व्यावर्तयति॥**

**ननु चाहं जानामीति ज्ञातृता प्रतीतिसिद्धा। नैवम्; सा भ्रान्तिसिद्धा, रजततेव शुक्तिशकलस्य ; अनुभूतेः स्वात्मनि कर्तृत्वायोगात्।**

---

अयं भावः - संविदः आत्मनश्च स्वयम्प्रकाशत्वं प्रमाणसिद्धम्। स्वयम्प्रकाशस्य च प्रागभावाद्यभावेनानुत्पन्नत्वं सिद्धम्। अनुत्पन्नस्य च नानात्वासम्भवात् स्वसजातीयभेदप्रतिक्षेपश्च स्थापितः। तस्मात् संविदात्मनोर्न भेदः प्रामाणिक इति। परम्परया स्वयम्प्रकाशत्वमेवानुभूतिस्वरूपातिरिक्ताऽऽत्मनिषेधेनाऽऽत्मस्वरूपत्वं स्वस्या बोधयतीति। **स्वरूपातिरिक्त** इति। अनुभूतिस्वरूपातिरिक्तः तदाश्रयो हि ज्ञातेत्युच्यते, स नास्तीत्यर्थः। **स्वप्रकाशेति**, अस्माभिः स्वयम्प्रकाशत्वेन या अनुभूतिरुक्ता सैवात्मेत्यर्थः।

एवं परम्परया स्वप्रकाशत्वस्यानुभूत्यात्मनोरभेदसाधकतां प्रदर्श्य सम्प्रति स्वतन्त्रसाधकत्वमप्यस्तीत्याह - **अजडत्वाच्चेति**। संविदात्मा अजडत्वात्, यो नात्मा तज्जडं यथा घटादि इत्यनुमानं विवक्षितम्। व्यतिरेकव्याप्तिं दर्शयन् व्यापकनिवृत्त्या व्याप्यस्यापि निवृत्तिरिति दर्शयति - **अनात्मत्वेति**। **व्याप्तं** = व्यापकमित्यर्थः। कर्तरि क्तः। योऽनात्मा, स जडः यथा देहादिरिति। इत्थञ्चाजडा संवित् आत्मैवेत्यर्थः। यद्वा, **निर्धूतनिखिलभेदेति**। यस्मात् संविदः निखिलभेदनिषध उक्तः, तस्मात् निषेध्यस्य विजातीयभेदरूपस्य ज्ञातुरपि मिथ्यात्वेन न परमार्थभूतात्मस्वरूपत्वं तस्य सम्भवति, किन्तु परमार्थभूतसंविद एवेति भावः। अतस्स्वयम्प्रकाशत्वनिर्विशेषत्वादीनामात्मस्वभावतया प्रमाणसिद्धानां संविदि स्थापितत्वेनोभयोरैक्येन च न कश्चिद्विरोध इति। इत्थञ्च अनुभूतिरात्मा निर्विशेषत्वात् संवित्त्वाच्चेत्यनुमानं विवक्षितम्। एवमजडत्वहेतुनाप्यात्मत्वं स्थापयितुं शक्यत इत्याह - **अजडत्वाच्चेति**। अन्यत्सर्वं पूर्ववत्।

नन्वनुभूतिरात्मा, अजडत्वादित्यनुमानेनानुभूतेरात्मत्वसाधनन्न सम्भवति। 'अहं जानामी'ति प्रमात्मकप्रतीत्या आत्मनो ज्ञानाश्रयत्वबोधनेन ज्ञानात्मनोरभेदासम्भवेन स्वानुभवबाधादिति शङ्कते—**ननु चेति**। **प्रतीति**शब्दः प्रमात्मकप्रतीतिपरः। उक्तञ्च 'सर्वलोकप्रसिध्या च पक्षबोधोऽत्र ते ध्रुवमि'ति। समाधत्ते—**नैवमिति**। 'अहं जानामी'ति प्रतीते भ्रान्तित्वेन न तेनोक्तानुमानस्य बाधसम्भव इत्यभिप्रायेणाह - **सेति**। यथा देहादेर्ज्ञातृत्वं भ्रान्तिसिद्धं तद्वदेवात्मनोऽपि ज्ञातृत्वमिति भावः। तज्ज्ञातृत्वं भ्रान्तिसिद्धं ज्ञातृत्वस्वरूपत्वात् सम्मतवदित्यनुमानमिह विवक्षितम्। ज्ञातृताया भ्रान्तिसिद्धत्वे दृष्टान्तमाह—**रजतयेवेति**। 'इदं रजतमि'ति ज्ञानविषयरजतताया: शुक्तिज्ञानबाधितत्वेन भ्रान्तिसिद्धत्ववत् ज्ञातृतायाऽपि भ्रान्तिसिद्धत्वमेवेति भावः। यद्वा,' इदं रजतमि'त्यादाविदमंशस्य परमार्थत्वं, रजतताया अपरमार्थत्वञ्च यथा, तथैव 'अहं जानामी'त्यादौ ज्ञातृत्वस्य प्रतीयमानत्वेऽपि ज्ञानांशस्यैव परमार्थत्वेन तदतिरिक्तस्य कर्तृत्वांशस्यापरमार्थत्वमेवेति भावः।

आत्मनि ज्ञातृत्वं भ्रान्तिसिद्धमित्येतदुपपादयति - **अनुभूतेरिति**। अयं भावः - प्रतीयमानं ज्ञातृत्वमात्मस्वरूपभूतज्ञानाश्रयत्वमुत कर्मकर्त्रवच्छिन्नवृत्तिज्ञानाश्रयत्वम् (आद्येऽपि स्वरूपभूतज्ञानाश्रयत्वं स्वरूपस्यैवान्यस्य वा) इति विकल्पे कस्यचिदपि ज्ञातृत्वस्यात्मन्यसम्भवाज्ज्ञातृत्वस्य भ्रान्तिसिद्धत्वमेव वक्तव्यमिति। तत्र स्वरूपभूतज्ञानाश्रयत्वरूपज्ञातृत्वं स्वरूपस्य न सम्भवति व्याघातादित्याह—**स्वात्मनि कर्तृत्वायोगादिति**। कर्तृत्वस्याश्रयरूपत्वे,

**अतो मनुष्योऽहमित्यत्यन्तबहिर्भूतमनुष्यत्वादिविशिष्टपिण्डात्माभिमानवज्ज्ञातृत्वमप्यध्यस्तम्। ज्ञातृत्वं हि ज्ञानक्रियाकर्तृत्वम्। तच्च विक्रियात्मकं जडं विकारिद्रव्याहङ्कारग्रन्थिस्थमविक्रये साक्षिणि चिन्मात्रात्मनि कथमिव सम्भवति?**

---

आत्माश्रयादिति भावः। न हि स्वस्यैव स्वाश्रयत्वं कुत्रचित् प्रामाणिकमित्याशयः।

ननु तर्हि आत्मनो ज्ञातृत्वप्रतीतिः कथमुपपद्यतामित्यत्र पूर्वोक्तभ्रान्तित्वसिध्यै ज्ञातृत्वस्याध्यस्तत्वमुपपादयति — **अत** इति। **अत्यन्तबहिर्भूते**ति। पिण्डस्योत्पत्त्यादिसत्त्वेनात्मनश्च तदभावेनात्मव्यतिरिक्तत्वं पिण्डस्य सम्प्रतिपन्न-मेवेति सूचनाय तदुक्तिः। आत्मशब्दः स्वरूपपरः। आत्मनीत्यध्याहार्यम्। ततश्च मनुष्यत्वादिविशिष्टपिण्डस्वरूपदेहे ज्ञातृत्वाभिमानः, तथैवात्मनि ज्ञातृत्वाभिमान इत्यर्थः। इदमत्र तात्पर्यं - यतो 'मनुष्योऽहम्' इत्यादेस्त्रेधा निर्वाहः कर्तुं शक्यते — आत्मनि ज्ञातृत्वस्य भ्रान्तिसिद्धत्वे ज्ञातृत्वाभावविवेके सत्यपि कथं 'जानामी'ति प्रत्ययोऽनुवर्तत इति शङ्कायां समुचितदृष्टान्तप्रदर्शनमनेन क्रियते।

यथा 'देहो नात्मा' इत्यतिविशदविवेकवतामेवात्मनि बाह्यमनुष्यत्वादिभ्रान्तिरनुवर्तते, पिण्डात्माभिमान-रूपवासनावशात्, तथाऽहमर्थात्माभिमानवशादात्मनि ज्ञातृत्वाध्यासः, अत्यन्तबहिर्भूतविषये भ्रान्तिरेव नापगच्छति चेत् आत्मसन्निकृष्टत्वेनान्तरङ्गाकारे ज्ञातृत्वभ्रान्तिः कथमपसरेत्? **अभिमानवत** इत्यस्य अभिमान इवेत्यर्थः। पिण्डात्मा-भिमानरूपवासनाहेतुरात्मनि मनुष्यत्वादिभ्रान्तौ। अयं दृष्टान्तः। अहमर्थात्माभिमानः दार्ष्टिन्तिकः। अयश्चात्मनि ज्ञातृ-त्वाध्यासे हेतुरिति। अयमेकः प्रकारः। अन्यस्तु—'मनुष्योऽहं', 'ब्राह्मणोऽहं', 'स्थूलोऽहं', 'कृशोऽहमि'ति यस्य भ्रान्ति र्जायते तादृशभ्रान्तिमत एव 'अहं जानामी'ति प्रतीत्या ज्ञातृत्वमप्यध्यस्तम्। एकस्मिन् विषये पुरुषस्य भ्रान्ति-दर्शनादन्यत्रापि तदीयज्ञानं भ्रान्तिरूपमेव स्यादित्यर्थः।

अत्र पक्षे**ऽभिमानवज्ज्ञातृत्वमि**त्येकं पदम्। अभिमानवतो ज्ञातृत्वमध्यस्तामिति तात्पर्यम्। अपरस्तु निर्वाहः - यथा पिण्डस्वरूपदेहे ज्ञातृत्वमभिमानरूपमध्यस्तं, तथाऽऽत्मनि ज्ञातृत्वमप्यध्यस्तम्। चार्वाकपक्षे हि किण्वादिभ्यो मदशक्तिवत् इति देहेऽचेतने एव ज्ञातृत्वं स्वीक्रियते। तद्भ्रान्तिसिद्धमित्यस्माभिरुच्यते। एवमेवात्मन्यपि ज्ञातृत्वमप्य-ध्यस्तमिति। अभिमानादेवाहं जानामीति प्रतीतिरिति भावः।

कर्मकर्त्रवच्छिन्नवृत्तिज्ञानाश्रयत्वपक्षं दूषयितुं ज्ञातृत्वस्वरूपं निष्कर्षति - **ज्ञातृत्वं ही**ति। अनुभूतिरूपात्मनो ज्ञातृत्वासम्भवमुपपादयति - **तच्चे**ति। **विक्रियात्मकमि**ति। वृत्तिज्ञानरूपक्रियाया उत्पत्तिविनाशसत्त्वात्तादृश-ज्ञानाश्रयत्वमप्यात्मन उच्यमानं कादाचित्कमेवेति तद्विकाररूपमेवेति भावः। **जडं** = ज्ञेयम्। **विकारिद्रव्ये**ति। अहङ्कारस्य विक्रियात्मकज्ञानाश्रयत्वसम्भवसूचनाय। **अहङ्कारग्रन्थिः** = अहङ्कार एव ग्रन्थिः। **ग्रन्थिः** = बन्धनस्याशैथिल्यकरो ग्रन्थनविशेषः। ज्ञातृत्वस्य ग्रन्थिस्थत्वोक्तिः अहङ्कारस्य देहादिवदनात्मत्वं व्यनक्ति।

**अविक्रिय** इति। अनुभूतिरूपात्मनि ज्ञातृत्वासम्भवसूचकम्। **सक्षिणी**ति। 'साक्षीचेता केवलो निर्गुणश्च' इत्युक्तसाक्षित्वं 'साक्षाद्द्रष्टरि संज्ञायाम्' इत्यादिप्रमाणबलेन द्रष्टृत्वरूपन्न, निर्विकारत्वश्रुतिविरोधात्। अपि त्वविद्या-नुभवरूपमेवेति भावः। अतः स्वरूपज्ञानाश्रयत्ववृत्तिज्ञानाश्रयत्वयोः स्वरूपेऽविक्रियेऽऽत्मन्यसम्भवात् ज्ञातृत्वं भ्रान्तिसिद्धमेवेत्याशयः।

**दृश्यधीनसिद्धित्वादेव रूपादेरिव कर्तृत्वादेर्नात्मधर्मत्वम् ।**

**सुषुप्तिमूर्च्छादावहम्प्रत्ययापायेऽप्यात्मानुभवदर्शनेन नाऽऽत्मनोऽहम्प्रत्ययगोचरत्वम् । कर्तृत्वेऽहम्प्रत्यय-गोचरत्वे चाऽऽत्मनोऽभ्युपगम्यमाने देहस्येव जडत्वपराक्त्वानात्मत्वादिप्रसङ्गो दुष्परिहरः । अहम्प्रत्ययगोचरात्**

---

एवं ज्ञानाश्रयत्वरूपकर्तृत्वादे र्नात्मधर्मत्वमपि सम्भवतीति सुतरां न ज्ञानाश्रयत्वसम्भवः इत्याह - **दृश्यधीनेति** । कर्तृत्वादि र्नात्मधर्मः दृश्यधीनसिद्धित्वात् (अनुभाव्यत्वात्) रूपादिवदित्यनुमानमत्र विवक्षितम् । एवकारेण भेदादीनामनुभूतिधर्मत्वाभावे यो हेतुरुक्तः स एव कर्तृत्वादेरनुभूतिधर्मत्वाभावसाधक इति सूचितम् । **कर्तृत्वादेरिति** । अहम्प्रत्ययगोचरत्वमादिशब्दार्थः ।

नन्वनुभूतेरात्मत्वे सिद्धे किल तादृशात्मन उभयरूपमपि ज्ञातृत्वं न सम्भवति व्याहतत्वादिति वक्तुं शक्यते, अनुभूतेरात्मत्वसिद्धिरेव न सम्भवति । उक्तानुमानञ्च 'अहं जानामीति' प्रतीत्या बाधितमित्युक्तम् । न च तादृशप्रतीते र्भ्रान्तित्वोपपादनसम्भवः अनुभूतेरात्मत्वनिर्णयानन्तरभावित्वात्तस्य, अन्यथाऽन्योन्याश्रयादित्यत्राह — **सुषुप्तिमूर्च्छादाविति** । आदिशब्दो मरणमोक्षसङ्ग्राहकः । **अहं प्रत्ययापायेऽपीति** । अयमाशयः - ' अहं जानामी'ति प्रतीतिबलाद्धि आत्मनो ज्ञातृत्वं भवद्भिरभ्युपगम्यते, तच्च यद्यहमर्थस्यात्मत्वं स्यात् । तदेव तु नास्ति, सुषुप्त्यादावहमहमिति प्रतीत्य-भावेऽप्यात्मानुभवस्योभयवादिसम्प्रतिपन्नत्वात् । यद्यहंशब्दवाच्य आत्मा, तदा सुषुप्त्यादावात्मानुभवानुरोधेनाहमिति प्रतीतिरपेक्षिता स्यात् । नास्ति च तथा प्रतीतिः ।

अतोऽहमर्थस्यात्मत्वाभावात्, अन्यस्य च भवद्भिरात्मत्वानङ्गीकारात् अस्मदुक्तानुभूतेरेवात्मत्वाभ्युपगमा-वश्यकत्वाच्च तादृशात्मन्यविक्रिये स्वरूपज्ञानाश्रयत्वरूपं वा ज्ञातृत्वन्न सम्भवतीति ज्ञातृताया भ्रान्तिसिद्ध-त्वाभ्युपगमो युक्त एवेति । **आत्मानुभवदर्शनेनेति** । अनेन जडात्मवादिमतं व्युदस्तम् । तर्हि सुषुत्यादौ स्वात्म-प्रकाशोऽपि नास्तीत्युच्यते । **अहम्प्रत्ययगोचरत्वमिति** यद्यहम्बुद्धिरात्मविषया स्यात्तदा सुषुप्त्यादौ स्वरूपस्फुरणवत् साप्यनुवर्तेत । अतो नाहम्प्रत्ययविषयत्वम् । अहम्बुद्धिः नात्मविषया सुषुप्त्यादावविद्यमांनत्वदिति प्रयोगोऽपि भवति इति भावः ।

एवमनुभूतिरूपात्मनः कर्तृत्वम् ,अहम्प्रत्ययगोचरत्वञ्च प्रतिक्षिप्तम् । सम्प्रति विपक्षे बाधकमाह - **कर्तृत्व** इति । आत्मा न कर्ता अजडत्वात्, प्रत्यक्त्वात्, आत्मत्वाच्च । एवमात्मा नाहम्प्रत्ययगोचरः अजडत्वात् प्रत्यक्त्वात् आत्मत्वाच्चे-त्यनुमानान्यप्यत्र विवक्षितानि । ननु यदि कर्तृत्वं नात्मधर्मः तर्ह्यनात्मनः कर्तृत्वमेष्टव्यम् । तथा च कर्तृत्वादिसामानाधि-करण्यात्तन्मूलभोक्तृत्वमप्यनात्मन एव स्यात्, 'शास्त्रफलं प्रयोक्तरी'ति न्यायात् । जातेष्ट्यादौ तु एतन्न्याय सिद्धनियम-स्यागत्या परित्यागः । अन्यत्र तु न तथा ।

एवं कर्तृत्वरूपबन्धस्याप्यन्तःकरणगतत्वेनात्मन्यस्वीकारादात्मनस्संसारस्यैवाभावान्मुक्तिशास्त्रञ्च व्यर्थमित्यत्राह - **अहम्प्रत्यय गोचरादिति** । अत्र प्रत्ययः भ्रमात्मकप्रतीतिः । अयं भावः - यागादिवैधक्रियाणां साक्षाद्देहाश्रयत्वेन 'मनुष्योऽहं यक्ष्ये 'इति प्रतीत्या च अहम्प्रत्ययविषयस्य देहस्यैव कर्तृत्वमभ्युपेत्यम् । आत्मा तु तादृशक्रियाजन्यस्वर्गादि-फलभोक्ता देहादिविलक्षण इति च शास्त्रानुसारिभिस्स्वीक्रियते । अतो न 'शास्त्रफलं प्रयोक्तरी'ति नियमः सार्वत्रिकः । अतः क्वचिदकर्तुरपि भोक्तृत्वदर्शनेनात्रापि तदङ्गीकरणं नायुक्तमिति ।

**कर्तृतया प्रसिद्धाद्देहात्तत्क्रियाफलस्वर्गादेर्भोक्तुरात्मनोऽन्यत्वं प्रामाणिकानां प्रसिद्धमेव; तथाऽहमर्थाज्ज्ञातुरपि विलक्षणः साक्षी प्रत्यगात्मेति प्रतिपत्तव्यम् ।**

**एवमविक्रियानुभवस्वरूपस्यैवाभिव्यञ्जको जडोऽप्यहङ्कारः स्वाश्रयतया तमभिव्यनक्ति । आत्मस्थतयाऽभिव्यङ्ग्याभिव्यञ्जनमभिव्यञ्जकानां स्वभावः । दर्पणजलखण्डादिर्हि मुखचन्द्रबिम्बगोत्वादिकमात्मस्थतयाऽभिव्यनक्ति । तत्कृतोऽयम्, 'जानाम्यहम्' इति भ्रमः । स्वप्रकाशाया अनुभूतेः कथमिव तदभिव्यङ्ग्यजडरूपाहङ्कारेणाभिव्यङ्ग्यत्वमिति मा वोचः ; रविकरनिकराभिव्यङ्ग्यकरतलस्य तदभिव्यञ्जकत्वदर्शनात् ।**

**जालकरन्ध्रनिष्क्रान्तद्युमणिकिरणानां तदभिव्यङ्ग्येनापि करतलेन स्फुठतरप्रकाशो हि दृष्टचरः ।**

---

ननु तर्हि भोक्तृत्ववदात्मनो ज्ञातृत्वमपि किन्न स्यादित्यत्राह—**तथेति** । **साक्षीति** । आत्मनः कर्तृत्वे साक्षित्वन्न स्यात् अकर्तुरेव साक्षित्वादिति भावः । अयमाशयः - न हि भोक्तृत्वमप्यात्मनोऽस्ति । भोक्तृत्वोक्तिस्तु आत्मनोऽभोक्तृत्वेऽपि भोक्तृत्वाध्यासादेव । अतो ज्ञातृत्वस्य नापत्तिः । कर्तृत्वादिविशिष्टान्तःकरणाध्यास एव चिन्मात्रगतस्संसार इति तादृशाध्यासनिवृत्त्यर्थमेव मुक्तिशास्त्रमपि सफलमिति ॥

ननु शुक्तौ रजताध्यासेऽध्यस्यमानं रजतं शुक्तिस्थतया भाति । एवं चिद्रूपात्मन्यहमर्थस्याध्यासेऽहमर्थो धीस्थतया भासेत । न चैवं प्रकाशते । प्रत्युत धीरेवाहमर्थधर्मतया जानाम्यहमिति भासते । अतोऽध्यासोऽनुपपन्न इत्यत्राह — **एवमिति** । **अविक्रियानुभवस्वरूपस्येति** । धियोऽध्यस्यमानधर्मकत्वन्न सम्भवतीति सूच्यते । **अभिव्यञ्जक** इति हेतुगर्भविशेषणम् । अहङ्कारस्याभिव्यञ्जकत्वादनुभवस्वरूपं स्ववृत्तितया प्रकाशयतीत्यर्थः । स्वाश्रयतयेति बहुव्रीहिः । नन्वहङ्कारस्यानुभूत्यभिव्यञ्जकत्वमस्तु, तावता स्वाभिव्यङ्ग्यानुभूतेस्स्ववृत्तितयाभिव्यञ्जनं कुत इत्यत्राह — **आत्मस्थतयेति** । स्ववृत्तित्वेनेत्यर्थः ।

**स्वभाव** इति । उत्सर्गसिद्धस्य स्ववृत्तितयाऽभिव्यञ्जनस्य दुरतिक्रमत्वादिति भावः । उक्तार्थे निदर्शनं दर्शयति - **दर्पणेति** । आत्मस्थतयाऽभिव्यञ्जनस्य तत्तद्विशेषप्रयुक्तत्वव्यक्त्यै बहूदाहरणप्रदर्शनम् । **खण्डादिरित्यत्रादि**शब्देन मुण्डादिग्रहणम् । **तत्कृत**इति । ज्ञातृत्वस्याहङ्कारस्थयाऽवभासमात्रमेव, न तु वास्तवं तस्थत्वमिति भावः । एतेन केवलाध्यासस्थलेऽध्यस्यमानस्याधिष्ठानस्थत्वेन भावनेऽप्यभिव्यङ्ग्याभिव्यञ्जकभावस्थले अभिव्यङ्ग्यस्याभिव्यञ्जकवृत्तित्वेन भानस्य सम्प्रतिपन्नत्वादत्रापि न विरोध इति सूचितम् ।

ननु विरुद्धमिदं भाषसे, यदनुभूतेस्स्वयम्प्रकाशत्वं जडरूपाहङ्कारेणभिव्यङ्ग्यत्वञ्च । एवमनुभूत्यभिव्यङ्ग्यस्याहङ्कारस्यानुभूत्यभिव्यञ्जकत्वञ्च । अतः परस्परं व्यङ्क्तृव्यङ्ग्यत्वे मिथस्संश्रय एव स्यादिति शङ्कामनूद्य परिहरति — **स्वप्रकाशाया** इति । हेतुं प्रदर्शयति—**रविकरेति** । सजातीयनिरपेक्षतया स्वयम्भातस्यापि ह्यन्याभिव्यञ्जकत्वमन्याभिव्यङ्ग्यत्वञ्च दृश्यते, तद्वदत्राप्युपपन्नम् । निदर्शनमुपपादयति **जालकेति** । **स्फुटतरप्रकाशो** हि **दृष्टचर** इति । स्वतस्सिद्धाया रविकराभिव्यक्तेः करतलजन्याभिव्यक्तेरन्यत्ववदहङ्कारजन्यस्वरूपाभिव्यक्तिरपि नित्यसिद्धस्वरूपाभिव्यक्त्यपेक्षया भिन्नैवेति नान्योन्याश्रयादिप्रसक्तिरिति भावः ।

**यतोऽहं जानामीति ज्ञाताऽयमहमर्थश्चिन्मात्रात्मनो न पारमार्थिको धर्मः, अत एव सुषुप्तिमुक्त्योर्नान्वेति । तत्र ह्यहमर्थोल्लेखविगमेन स्वाभाविकानुभवमात्ररूपेणाऽऽत्माऽवभासते । अत एव सुप्तोत्थितः कदाचित्, 'मामप्यहं न ज्ञातवान्' इति परामृशति ॥**

**तस्मात् परमार्थतो निरस्तसमस्तभेदविकल्पनिर्विशेषचिन्मात्रैकरसकूटस्थनित्यसंविदेव भ्रान्त्या ज्ञातृ-ज्ञेयज्ञानरूपविविधविचित्रभेदा विवर्तत इति तन्मूलभूताविद्यानिबर्हणाय नित्यशुद्धबुद्धमुक्तस्वभावब्रह्मात्मैक-त्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्त इति ॥**

---

एतावता अहमर्थत्वरूपाहम्प्रत्ययगोचरत्वज्ञातृत्वयोरनुभूतिस्वरूपात्मन्यसम्भवो तर्केण प्रतिपादितः । सम्प्रति तर्कानुग्राह्यमनुमानं भङ्ग्यन्तरेणाह—**यत** इति । अत्र **यत** इत्यादिसाध्यस्य हेतुतया निर्देशः, अत एवेति च हेतोस्साध्यतया । अग्निमत्त्वेन धूमवत्त्वमितिवत् । **ज्ञाताऽयमहमर्थ** इत्युभयत्रापि भावप्रधाननिर्देशः । **न पारमार्थिकः** = मिथ्याभूतः । ततश्च ज्ञातृत्वेऽहन्त्वे मिथ्याभूतेऽनात्मधर्मौच ।

सुषुप्त्यादावभासत्वात् मनुष्यत्वादिवदिति प्रयोगो बोध्यः । हेतोस्स्वरूपासिद्धिशङ्कां परिहरति — **तत्र हीति** । **हिः** श्रुतिस्मृतिप्रसिद्धिसूचकः । सुषुप्तौ च 'नाहं खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति' इति श्रुतिः, मुक्तौ च 'अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् । विमुच्य निर्ममश्शान्तो ब्रह्मभूयाय कल्पत' इति स्मृतिश्च सुषुप्तिमुक्त्यादाव-हमर्थानन्वयं बोधयतीति भावः ।

एवं 'महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव चे'त्यहमर्थस्याहङ्कारस्य क्षेत्रान्तर्भाव उच्यते । 'अहङ्कारविमूढात्मा कर्ताऽह-मिति मन्यत' इति भ्रान्तिसिद्धत्वञ्च । अतो मिथ्याभूतस्याहमर्थस्याहङ्कारस्य नात्मत्वं प्रामाणिकमिति भावः । एवं सुषुप्ति-विषयकपरामर्शादपि तत्सिद्ध्यतीत्याह - **अत एवेति** । अत्र साध्यस्य हेतुतया निर्देशः । अत्र हेतुसाध्ययो र्विपरीतनिर्देशः हेतुहेतुमद्भावमपेक्ष्य, न तु ज्ञाप्यज्ञापकभावम् । अग्निमत्वाद्धूमोद्गम इतिवत् ।

एवं **यदप्याहु**रित्यादिनोक्तमर्थं निगमयति - **तस्मादिति** । **तस्मात्** = उक्तार्थस्य प्रमाणैस्तदनुग्राहकैश्च स्थापितत्वात् । **विकल्पः** = वैचित्र्यम् । **निरस्ते**त्यादिना सजातीयविजातीयनिवृत्तिरुक्ता । **निर्विशेषे**त्यनेन स्वगत-भेदनिवृत्तिः । **विवर्तते** = परिणमत इत्यर्थः । अतो न भ्रान्त्येत्यस्यानन्वयः । तच्छब्दो भ्रान्तिपरः । **विद्याप्रतिपत्तये** = ज्ञानप्राप्तये । **आरभ्यन्ते** = विचार्यन्ते ।

अयं भावः - वेदान्तशास्त्रमिदमारभ्यन्न वेति संशये बन्धस्य परमार्थत्वेन ज्ञाननिवर्त्तव्यत्वासम्भवेन ज्ञानप्रति-पादकवेदान्तवाक्यविचाररूपमिदं नारभ्यमेवेत्यत्रोक्तप्रमाणैः बन्धस्यापरमार्थत्वात्, अपरमार्थस्य ज्ञानैकनिवर्त्त्यत्वेन ज्ञानप्रधानमिदं शास्त्रमारभ्यमेवेति सिद्धान्तः । वाक्यजन्यमैक्यज्ञानं निवर्तकम् । तदेवोपायः । उपेयश्च निर्विशेषवस्तु । मिथ्याभूतमज्ञानादि निवर्त्त्यम् । ज्ञानावबोधकशास्त्रस्य चास्य कर्मविचारो न पूर्ववृत्तः, अनपेक्षितत्वात् । प्रत्युत विरुद्धत्वादिति भावः ॥

इति महापूर्वपक्षः॥

*************

**तदिदम् - औपनिषदपरमपुरुषवरणीयताहेतुगुणविशेषविरहिणामनादिपापवासनादूषिताशेमुषीकाणामनधिगतपदवाक्यस्वरूपतदर्थयाथात्म्यप्रत्यक्षादिसकलप्रमाणवृत्ततदितिकर्तव्यतारूपसमीचीनन्यायमार्गाणां विकल्पासहविविधकुतर्ककल्ककल्पितमिति, न्यायानुगृहीतप्रत्यक्षादिसकलप्रमाणवृत्तयाथात्म्यविद्भिरनादरणीयम् ।**

---

महासिद्धान्तः

एवं विस्तरेण प्रतिपादितमद्वैतिनां मतमुपपन्नवद्भासमानं सन्मार्गोपप्लवपरिहारायार्थात्स्वमतसिद्धोपायोपेयनिवर्त्त्यस्वरूपं बहुग्रन्थकाराणां तेषां शास्त्रजन्ययथावस्थितज्ञाने सामग्रीविरहेण स्खालित्यञ्च सर्वं प्रतिपादयन् दूषयति — **तदिदमि**त्यादिना । **सर्वे वेदान्ता आरभ्यन्ते इति यदप्याहुः तदिदमनादरणीयमि**त्यन्वयः । तच्छब्द उक्तार्थस्यानेकग्रन्थप्रतिपादितत्वं बहुग्रन्थकारसम्मतत्वञ्च व्यनक्ति । इदंशब्दः कृत्स्नस्यापि दुष्टत्वं दूषणीयत्वमाभासत्वञ्च ब्रवीति । **तदिदं** - परोक्तोपायोपेयपुरुषार्थत्रितयम् । अनेन पक्षो निर्दिष्टः । **अनादरणीयमि**ति साध्यनिर्देशः । **कल्पितमि**तीत्यन्तेन हेतुर्निर्दिष्टः । **औपनिषद**शब्देन 'तं त्वौपनिषदं पुरुषम्' इति श्रुतिस्स्मारिता । अनेन परमपुरुषस्यावेद्यत्वाभ्युपगमः श्रुतिशतविरुद्ध इति सूचितम् । परमत्वविशेषणापन्नेन पुरुषशब्देन त्रिमूर्तिसाम्योत्तीर्णादिपक्षव्युदासः कृतः । 'परा मा = लक्ष्मीः यस्ये'ति व्युत्पत्त्या लक्ष्मीपतित्वस्यापि लाभात् । अर्थादुपेयस्वरूपं सिद्धोपायस्वरूपञ्च दर्शितम् । **वरणीयताहेतुगुणविशेषे**त्यनेन 'यमेवैष वृणुते तेन लभ्य' इति श्रुत्युक्तभक्तिरूपसाध्योपायो व्यञ्जितः । **गुणविशेषविरहिणामि**त्यनेन यथावस्थितशास्त्रार्थज्ञाने स्खालित्यहेतुरुक्तः ।

भगवद्भक्तिरपि हि समीचीनशास्त्रार्थज्ञाननिष्पत्तौ हेतुः । तथाहि श्रूयते 'यस्य देवे परा भक्तिः' इति । स्मर्यते च 'शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दन'मिति । उक्तञ्च साम्प्रदायिकैः 'ये तु त्वदङ्घ्रिसरसीरुहभक्तिहीनास्तेषाममीभिरपि नैव यथार्थबोधः । पित्तघ्नमञ्जनमनापुषि जातु नेत्रे नैव प्रभाभिरपि शङ्खसितत्वबुद्धिः' इति । यथावस्थितज्ञानहेतुभूतभक्त्यभावेन ज्ञानोदयप्रतिबन्धकपापसत्त्वान्न तेषां यथावस्थितज्ञानोत्पत्तिरित्याह — **अनादी**ति ।

अत्र**अनादि**त्वोक्तिः बीजाङ्कुरन्यायेन, वासनया पापं, पापेन वासनेत्यन्योन्याश्रयपरिहारज्ञप्त्यै । पापस्य तत्त्वज्ञानविरोधित्वं हि 'पापं प्रज्ञां नाशयति' इति प्रज्ञानाशकत्वोक्त्याऽर्थसिद्धम् । **पापवासना**शब्देन निवर्त्त्यस्वरूपमुक्तम् । **अशेष**शब्दः तत्त्वहितपुरुषार्थविषयकसर्वबुद्धिसङ्ग्राहकः । **अनधिगते**ति सम्यगित्यादिः । **पदवाक्यस्वरूपे**ति । **पदस्वरूपं** प्रकृतिप्रत्ययसङ्घातः । **वाक्यस्वरूपं** = तादृशपदसमुदायः । शास्त्रप्रत्यक्षयोर्विरोधे शास्त्रप्राबल्यस्य तैरुक्तत्वेन तदनुसारात् प्रथमं शब्दप्रमाणमुक्तम् । अत एवोत्तरत्र स्वमतानुसारेण प्रत्यक्षं प्रथममुपादीयते । ऐतिह्यार्थापत्त्यादीनामतिरिक्तप्रमाणत्वेऽपि तद्वृत्तमपि न सम्यगधिगतमिति **सकलप्रमाणे**त्युक्तिः । अत एव प्रमाणसङ्ख्याविवादेऽपि सर्वाभ्युपगतप्रमाणानामयमेव विषय इत्युत्तरत्र वक्ष्यते ।

**वृत्तं** = प्रवृत्तिः । **समीचीनन्यायः** = साङ्गपञ्चकस्तर्कः । **विकल्पासहत्वं** = विकल्पसमय एव स्फुटप्रतिपन्नदोषत्वम् । **विविध**शब्दः कुतर्काणां ब्रह्मवेद्यत्वावेद्यत्वाद्यन्योऽन्यव्याहतिवैचित्र्यं निर्वक्ति । 'कुतर्का एव कल्कः' **कुतर्ककल्कः** = असारभूतम्, तर्कसाराणां बौद्धैरेवात्तत्वात् । ते हि वेदप्रामाण्यमप्यनादृत्य स्वमतमुपन्यस्यन्ति । स्वमतस्य न्यायानुगृहीतप्रमाणसिद्धत्वं दर्शयति - **न्याये**ति । **समीचीने**त्युपस्कार्यम् । **याथात्म्यविद्भि**रित्यनेन तत्त्वविदां तन्मते स्वत एवादारो न सम्भवतीति सूचितम् । **अनादरणीयमि**ति । पूर्वपक्षोपन्यासतयाप्यादरानर्हमित्यर्थः । सम्प्रति तदुपन्यासतत्प्रतिक्षेपादिकं त्वन्वारोहेण, शिक्षणीयशिक्षार्थं वा । तदशिक्षणे तु सन्मार्गविलोपापत्त्या सर्वेऽपि संसाराङ्गारेषु सम्पच्येरन्निति भावः ।

**तथा हि - निर्विशेषवस्तुवादिभिः निर्विशेषे वस्तुनीदं प्रमाणमिति न शक्यते वक्तुम्; सविशेषवस्तुविषयत्वात्सर्वप्रमाणानाम् ।**

एवं सामान्येन प्रतिक्षिप्य तन्निरसनं विस्तरेण प्रतिपादयितुमुपक्रमते— **तथा ही**ति । अद्वैतिभिः शास्त्रप्रत्यक्षयोर्विरोधे शास्त्रप्राबल्याङ्गीकारेण तदनुसरणतो वेदान्तवाक्यानि प्रथममुदाहृत्य पश्चात्तदतिरिक्तप्रमाणतर्काः प्रदर्शिताः । स्वमते तदनङ्गीकारेण प्रथमं प्रत्यक्षादीनां निर्विशेषवस्तुविषयकत्वं निरस्य, प्रत्यक्षाद्यविरोधेनैव वेदान्तवाक्यानामर्थो वर्णनीय इत्यभिप्रायेणादौ सर्वप्रमाणनामपि निर्विशेषवस्तुविषयकत्वं व्युदस्यति — **निर्विशेषवस्तुवादिभिरि**ति । **निर्विशेषे वस्तुनी**त्युक्तिः 'जननी मे वन्ध्या' इतिवत् व्याघातसूचनाय । निर्विशेषत्वरूपविशेषस्यैवाङ्गीकारेण वस्तुनो निर्विशेषत्वासम्भवात् । **इद**मिति । शृङ्ग्ग्राहितया सम्प्रतिपन्नं प्रमाणमिति निर्दिश्य वक्तुं न शक्यत इत्यर्थः । **निर्विशेषे वस्तुनीदं प्रमाणमिति न शक्यते वक्तु**मिति वचने सिध्यसिद्धिभ्यां व्याघातो भवतीत्यभिप्रेत्य हेतुप्रतिपादनमुखेनाभिप्रायं विवृणोति — **सविशेषवस्तु विषयत्वा**दिति । अत्र प्रमाणशब्दो भावे व्युत्पन्नः प्रमापरः । सर्वशब्दो व्यापकत्वपरः । ततश्च प्रमात्वव्यापकं सविशेषवस्तुविषयकत्वमिति व्याप्तिः पर्यवसिता । अनया च व्याप्त्या निर्विशेषवस्तुसाधकप्रमाणनिरासस्सेत्स्यतीति भावः । न च निर्विशेषसविशेषोभयविषयकज्ञानस्यापि प्रमात्वव्यापकत्वेनोक्तव्याप्त्यभङ्गान्न निर्विशेषवस्तुनिराससम्भव इति वाच्यम् । निर्विशेषविषयकत्वाभावे प्रमात्वव्यापकत्वविवक्षणे नोक्तदोषानवकाशात् । निर्विशेषवस्तुविषयकत्वञ्च 'निर्विशेषं वस्त्वि'ति वाक्यजन्यभ्रमात्मकबोधे प्रसिद्धम् । तस्य तु सिद्धान्ते भ्रमत्वस्वीकारेण तादृशवस्तुनिरासः । अत्र प्रमात्वञ्च स्वव्यधिकरणप्रकारावच्छिन्ना या या विशेष्यता तत्तदनिरूपकत्वरूपं सर्वांशे प्रमात्वं विवक्ष्यम् । अन्यथा 'निर्विशेषं वस्त्वि'ति शब्दजन्यभ्रमस्यापि सर्वं ज्ञानं धर्मिण्यभ्रान्तं प्रकारे तु विपर्यय इति धर्म्यंशे प्रमात्वेन तदाभावस्य प्रमात्वव्यापकत्वासम्भवात् ।

न च सर्वांशे प्रमात्मकस्य निर्विशेषसाधकप्रमाणस्यैवं निरासेऽप्यन्यांशे भ्रमात्मकस्य तादृशप्रमाणस्य निरासो न सम्भवतीति वाच्यम् । निर्विशेषविषयता प्रमाणप्रयोज्यत्वाभाववतीति व्याप्तिपर्यवसानेनादोषात् । निर्विशेषविषयत्वञ्च प्रतियोगितासम्बन्धावच्छिन्नविशेषत्वावच्छिन्नविषयतानिरूपिताभावविषयतानिरूपिताधिकरणविषयतैव । न चैवं व्याप्तिस्वीकारे प्रमाणाभावः । सर्वस्यापि प्रमाणस्य विशिष्टवस्तुविषयकत्वानुभवेन तथा व्याप्तिस्वीकारात् । न च घटत्वादिविशेषविषयकज्ञानस्य भ्रमत्वापत्तिः, घटत्वस्य स्वरूपतो भानादिति वाच्यम् । तत्रापि घटवृत्तित्वरूपविशेषविशिष्टतयैव घटत्वस्य भानेन भ्रमत्वाप्रसक्तेः । विशेषो हि व्यावर्तकः । अतो धर्मभानस्थले आश्रयान्तरगतधर्मात् व्यवच्छेदको धर्मो विशेषः । इत्थञ्च निर्विशेषवस्तुनि प्रमाणाभावात् विशेषसामान्याभावप्रकारकब्रह्मविशेष्यकज्ञानं भ्रम एवेति न निर्विशेषवस्तुसिद्धिः । एवं वस्तुनो निर्विशेषत्वाभावकथनेन ज्ञानीयविषयताया अपि किञ्चिदवच्छिन्नत्वलाभेन ब्रह्मनिष्ठनिरवच्छिन्नविषयताशालिनिर्विकल्पकस्य पराभिमतस्य प्रमाणस्यापि निरास उपपद्यते । विषयतासामान्यस्य किञ्चिदवच्छिन्नत्वनियमात् । न च सांसर्गिकविषयतायां व्यभिचारः । सम्योगरूपसंसर्गस्यापि सम्योगत्वरूपसंसर्गतावच्छेदकपुरस्कारेणैव भानाङ्गीकारात् । 'अयं घट' इत्यादिज्ञानीयघटत्वादिविषयताया अप्याधेयतासम्बन्धेन घटावच्छिन्नत्वान्न तत्र व्यभिचारापादनसम्भवः । न च गन्धादिविषयताया निरवच्छिन्नत्वेन तत्र व्यभिचारः । तत्राश्रयाभानेनाश्रयावच्छिन्नत्वस्य संस्थानरूपजात्यभावेन तदवच्छिन्नत्वस्य चासम्भवादिति वाच्यम् । 'अयं गन्धोऽनुभूयत' इति प्रतीत्या गन्धादिविषयतायाः कालाद्यवच्छिन्नत्वेन दोषाभावात् । 'अनुभूयत' इति संविदवच्छिन्नत्वाच्च । एवं सिद्धान्ते स्वयम्प्रकाशात्मनिष्ठविषयतापि प्रत्यक्त्वानुकूलत्वैकत्वावाच्छिन्नैवेति न तत्रापि दोषप्रसक्तिः । स्वप्रकाशनित्यविभूतिविषयताप्येकत्वावच्छिन्ना । अतश्च न क्वापि निर्विशेषवस्तुसिद्धिः ।

**यस्तु स्वानुभवसिद्धमिति स्वगोष्ठीनिष्ठः समयः ; सोऽप्यात्मसाक्षिकसविशेषानुभवादेव निरस्तः ; 'इदमहमदर्शम्' इति केनचिद्विशेषेण विशिष्टविषयत्वात्सर्वेषामनुभवानाम् । सविशेषोऽप्यनुभूयमानोऽनुभवः केनचिद्युक्त्याभासेन निर्विशेष इति निष्कृष्यमाणः सत्तातिरेकिभिः स्वासाधारणैः स्वभावविशेषैर्निष्क्रष्टव्य इति निष्कर्षहेतुभूतैः सत्तातिरेकिभिः स्वासाधारणैः स्वभावविशेषैः सविशेष एवावतिष्ठते । अतः कैश्चिद्विशेषैः**

---

ननु न प्रमाणान्तरेण निर्विशेषवस्तुनस्सिद्धिं ब्रूमः, तस्य स्वतस्सिद्धत्वात् । सर्वेषां स्वानुभवो हि निर्विशेष एवेति पक्षमनूद्य परिहरति — **यस्त्विति** । **स्वानुभवसिद्धं** = स्वतस्सिद्धं , स्वप्रकाशप्रत्यक्षसिद्धमिति यावत् । **स्वगोष्ठि-निष्ठ** इत्युपालम्भः । परीक्षकाणां सन्निधौ वक्तुमप्यशक्य इत्यर्थः । **समयः** = परिभाषाप्रायः । **आत्मसाक्षिके**त्यनेन सविशेषा-नुभवस्य लौकिकपरीक्षकसर्वजनसम्मतत्वं व्यनक्ति । न ह्यात्मरूपानुभवस्य निर्विशेषत्वं स्वानुभवसिद्धम् । आत्मानुभवस्य सविशेषत्वस्य तत्तदात्मसाक्षिकत्वादिति भावः । तदेतदुपपादयति - **इदमहमिति** । तत्रेदंपदेन विषयगतविशेष उच्यते । अहम्पदेनाऽऽश्रयगतविशेषः । **अदर्शमि**त्यनेनानुभवगतविशेषः । **केनचिद्विशेषेण** = उक्तेन विषयाश्रयस्वगतेन विशेषेण । **विशिष्टविषयत्वात्सर्वेषामनुभवानामि**ति । पूर्वानुभवपरामर्शरूपज्ञानेष्वुक्तविशेषणविशिष्टस्यानुभवस्यैव विषयत्वेन स्वानुभवस्य विशिष्टत्वान्न स्वानुभवस्य निर्विशेषत्वसिद्धिरिति भावः । ज्ञानविषयकपरामर्शादिषु हि कर्मकर्तृविशिष्ट-ज्ञानमेव विषयः । न तु निर्विशेषं ज्ञानं, येनानुभवस्य निर्विशेषत्वसिद्धिस्स्यादिति । यद्वा विशिष्टस्वप्रकाशरूपत्वात्सर्वेषाम-नुभवानामित्यर्थः । विषयस्य प्रकाशार्थकत्वात्, स्वरूपप्रकाशो हि स्वानुभवः । स चोक्तविशेष्यविशिष्ट एवेति । अस्याञ्च योजनायां, स्वानुभवसिद्धं सविशेषानुभवादेव । अनुभवस्सविशेष एवावतिष्ठत इत्यादि पूर्वोत्तरवाक्यानि सुसङ्गतानि । अनुभवस्यैव सविशेषत्वप्रतिपादनावश्यकत्वात् । पूर्वत्राप्यनुभवस्यैव विशिष्टत्वं प्रतिपादितम् । अथापि क्लिष्टा गतिः । **अदर्शमिति** निर्देशस्तु तस्यां योजनायां स्वरसः । अत्र त्वदर्शमित्यत्रातीतत्वन्न विवक्ष्यम् । ननु पूर्वस्मिन्कल्पे पूर्वानुभव-परामर्शरूपज्ञानमादायैव निर्वाह्यत्वात् । **सर्वेषामनुभवानामि**ति निर्देशः कथमिति चेदनुभवपदस्यावभासमानपरत्वेना-दोषात् । अत एवोपरि **सविशेषोऽप्यनुभूयमानोऽनुभव** इत्यत्र **अनुभूयमान** इत्यस्यावभासमानत्वार्थकत्वं स्वीक्रियते । अनेन सर्वेषामपि ज्ञानानां विशिष्टविषयत्वमपि स्थापितं भवति, न पुनरनुभवमात्रस्य ।

नन्विदमहमदर्शमिति प्रतीतिसत्त्वेऽपि तस्याः 'अनुभूतिर्धर्मरहिता अनुभूतित्वादि'त्यादिहेतुबलेन निर्विशेष-विषयकत्वं निष्कृष्यत इत्यत्राह — **सविशेषोऽपीति** । **अनुभूयमानः** = परामृश्यमानः, प्रकाशमानो वा । **केनचित्** = अनुभूतित्वादिव्यतिरेकिणा । युक्तेराभासत्वोक्तिः स्वनिष्कर्षपर्यालोचनया । **निष्कृष्यमाण** इति । यदा केनचिद्धेतुना निर्विशेष इति निष्कृष्यते, तदैव पक्षे हेतुसत्त्वेन सविशेष एवेति निष्कृष्टो भवेदिति भावः । अत एव वर्तमाननिर्देशः । न हि पक्षस्वरूपमेव हेतुः । तस्य पक्षवृत्तित्वात् । अन्यथा साध्यसन्देहसाधनाकाङ्क्षादीनामभावप्रसङ्गात् । स्वस्य स्वधर्म-त्वासम्भवाच्चेत्यभिप्रायेण **सत्तातिरेकिभिरि**त्युक्तम् । **स्वासाधरणैरि**ति । इदञ्चानैकान्त्यभ्रमविरोधव्यधिकरणासिद्धि-व्युदासाय । सर्वेषामपि मते निष्कर्षकहेतोः सत्तातिरेकित्वाद्यपेक्षितमित्यतः पुनस्तदुक्तम् । **सविशेष एवावतिष्ठत** इति । साधनकाल एव हेतुसत्त्वे साध्यकाले तु निवृत्तिरिति न सम्भवति । साधनभूतानुभूतित्वनिवृत्तौ 'इयमनुभूतिरि'ति वक्तुमशक्यत्वात् । साध्यभूतनिर्विशेषत्वस्यैव विशेषत्वेन निर्विशेषत्वासम्भवात् सविशेषत्वस्यैवावश्यकत्वादिति भावः ।

ननु सर्वविशेषनिषेधहेतोस्स्वपरनिर्वाहकत्वं सम्भवति कतकरजोवदित्यत्राह - **अत** इति । व्यतिरेकव्याप्त्या हि निर्विशेषत्वं साधनीयम् । तत्र स्वस्मिन्ननुभूतित्वनिवृत्तौ सविशेषत्वव्यापकाननुभूतित्वस्यैव सत्त्वेन तन्निवृत्त्ययोगात् सविशेषत्वमेव प्रसज्येतेति साध्यस्यैवाप्रसिद्धिरिति भावः। **कैश्चिद्विशेषैः** = हेतुत्वेनाभिमतैः अन्यैश्च तत्समानयोगक्षेमैः विशेषैः । **अन्ये विशेषाः** = अप्रामाणिकविशेषाः । **निरस्यन्त** इति । 'धीः निर्विशेषा धीत्वादि'त्युक्ते हि धीत्वरूपविशेषस्य

**विशिष्टस्यैव वस्तुनोऽन्ये विशेषा निरस्यन्त इति, न क्वचिन्निर्विशेषवस्तुसिद्धिः। धियो हि धीत्वं स्वप्रकाशता च ज्ञातुर्विषयप्रकाशनस्वभावतयोपलब्धेः। स्वापमदमूर्च्छासु च सविशेष एवानुभव इति स्वावसरे निपुणतरमुपपादयिष्यामः। स्वाभ्युपगताश्च नित्यत्वादयो ह्यनेके विशेषाः सन्त्येव। ते च न वस्तुमात्रमिति शक्योपपादनाः। वस्तुमात्राभ्युपगमे सत्यपि विधाभेदविवाददर्शनात्; स्वाभिमततद्विधाभेदैश्च स्वमतोपपादनात्। अतः प्रामाणिकविशेषैर्विशिष्टमेव वस्त्विति वक्तव्यम्॥**

---

हेतोः पक्षवृत्तित्वावश्यम्भावाद्धीत्वादिव्यतिरिक्तविशेषाभाव एव साधनीयः। अन्यथा स्ववचनव्याघातेनाप्रामाणिकत्वप्रसङ्गात्। इत्थञ्च किञ्चिद्विशेषसद्भावाङ्गीकारेण न वस्तुनो निर्विशेषत्वसिद्धिरिति भावः। एवमनुभूतेरनुभूतित्वरूपधर्मवत्वं स्थापितम्। तस्याः कर्मकर्तृवैशिष्ट्यं स्थापयति — **धियो हीति**। **हिः** प्रसिद्धौ। **धीत्वं** = विषयप्रकाशकत्वम्। **स्वप्रकाशता** = अनन्याधीनप्रकाशत्वम्। **ज्ञातुर्विषयप्रकाशनस्वभावतये**ति। अनुभूतिः विषयप्रकाशिका स्वयम्प्रकाशा च, ज्ञातुः विषयप्रकाशनस्वभावतया अवभासमानत्वादिति ह्यनुभूतेर्धीत्वस्वयम्प्रकाशत्वे चोच्येते। ततश्चानुभूतिनिष्ठविषयताया ज्ञातृज्ञेयत्वावच्छिन्नत्वेन तस्या विषयाश्रयरूपकर्मकर्तृवैशिष्ट्यमभ्युपगतं भवति। ततश्च न निर्विशेषत्वसिद्धिरिति भावः।

इदञ्च तन्मते कर्मकर्त्रवच्छिन्नत्वस्वीकारात् वृत्तिज्ञानस्य निर्विशेषत्वाभावबोधकम् **स्वसंबन्धादर्थान्तर** इत्यादिना तस्याः कर्मकर्त्रवच्छिन्नत्वादेस्तस्याभिमतत्वात्। अन्यथापि ज्ञानस्य कर्मकर्त्रवच्छिन्नत्वव्याप्तिबलेन ज्ञातृज्ञेयावच्छिन्नत्वं सिध्यति। ज्ञातृज्ञेयाद्यनवच्छिन्नत्वे तु घटादेरिव ज्ञानत्वं स्वयंप्रकाशत्वमेव चानुपपन्नम्। यत्र ज्ञातृज्ञेयाद्यन्यतमानवच्छिन्नविषयतावत्वं तत्र ज्ञानत्वाभावः स्वप्रकाशत्वाभावश्चेति व्याप्तिः। यद्यपि स्वमतेऽपि ब्रह्मणो ज्ञानरूपत्वमिष्यते तस्य च ज्ञातृज्ञेयानवच्छिन्नत्वञ्च, अथापि स्वप्रकाशत्वात् तद्गुणसारत्वाच्च तत्र ज्ञानत्वव्यपदेशः। सूत्रितञ्च 'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवदि'ति। न हि घटाद्यवगाहिन्याः प्रसिद्धधियः ज्ञातृज्ञेयाद्यनवच्छिन्नत्वमस्माभिरिष्यते। प्रसिद्धधीव्यतिरिक्तस्य तु ज्ञानात्मनोऽऽत्मानः तन्नेष्यते। न हि भवन्मतेऽप्येवमेव। **स्वसंबन्धादर्थान्तरे तद्धर्मादि हेतुत्वादि**ना हि स्वयंप्रकाशत्वमुच्यते। इत्थञ्चानुभूतेः ज्ञातुर्विषयप्रकाशनस्वभावायाः कर्मकर्त्रवच्छिन्नत्वमवर्जनीयमेवेति। ननु स्वापादिषु 'इदमहमि'त्यनुपलम्भात् तत्कालीनानुभवस्य निर्विशेषत्वं स्वीक्रियते इत्यत्राह —**स्वापे**ति। **स्वावसरे** = अहमर्थस्यात्मत्वस्थापनवेलायाम्। **निपुणतरं** = अतिसम्यक्, 'मामप्यहं न ज्ञातवानि'त्यादि भवदुक्तप्रतीतिमवलम्ब्यैवेति भावः।

**उपपादयिष्यत** इति। अयं भावः - अहमर्थातिरिक्तस्यानात्मत्वात् अहमर्थस्यैव चात्मत्वात् सुषुत्यादावहमिति भासमानस्याऽऽत्मस्वरूपभूतज्ञानस्य प्रत्यक्त्वानुकूलत्वादिभिः सविशेषत्वात्। तदानीमपि न निर्विशेषवस्तुभानमिति। एतावता हेत्वंशपर्यालोचनया सविशेषत्वं प्रसाधितम्। साध्यपर्यालोचनेऽपि सविशेषत्वसिद्धिरित्याह - **स्वाभ्युपगताश्चे**ति। **चः** उक्तसमुच्चये। भावविकार आदिशब्दार्थः। न हि नित्यत्वादीनां वस्तुस्वरूपत्वाभ्युपगमसम्भव इत्याह - **ते चे**ति। तत्र हेतुमाह **वस्तुमात्राभ्युपगमे सत्यपीति**। अयं भावः - धीस्वरूपन्तु सर्वैरङ्गीकृतम्। कैश्चित्तु तस्याः क्षणिकत्वम्। अन्यैर्नित्यत्वम्, अपरैस्तु जडत्वबहुत्वादिकमभ्युपगम्यत इति प्रकार एव भेदः। तत्र यदि नित्यत्वादीनामनुभूतिस्वरूपत्वमेव तदा न कोपि विवदेत्, स्वरूपस्य सर्वैरङ्गीकृतत्वात्। अपि चानुभूतिर्नित्येति प्रतिज्ञापि, त्वन्मते न सम्भवति पक्षसाध्ययोरेकरूपत्वात्। नित्यत्वस्य स्वरूपानतिरिक्तत्वेन सिद्धसाधनाच्च। यदि नित्यत्वं स्वरूपातिरिक्तं तर्हि संविदः सविशेषत्वमेवापद्यते इति। उपसंहरति - **अत** इति। **प्रामाणिकविशेषैरि**ति। परमार्थहेतुसाध्यरूपविशेषैरित्यर्थः। यदि हेतोरपारमार्थ्यं न तर्हि तेनापरमार्थहेतुना साध्यसाधनसम्भवः। यदि साध्यस्यापारमार्थ्यं तर्हि नित्यत्वादिविरुद्धक्षणिकत्वादिकमेव सिध्येदिति भवतां प्रयासवैयर्थ्यमेव। ननूक्तं कल्पितधर्माणामेव साध्यसाधकभाव इति, दुरुक्तं तु तत्।

**शब्दस्य तु विशेषेण सविशेष एव वस्तुन्यभिधानसामर्थ्यम्, पदवाक्यरूपेण प्रवृत्तेः। प्रकृतिप्रत्यययोगेन हि पदत्वम्। प्रकृतिप्रत्यययोरर्थभेदेन पदस्यैव विशिष्टार्थप्रतिपादनमवर्जनीयम्। पदभेदश्चार्थभेदनिबन्धनः। पदसङ्घातरूपस्य वाक्यस्यानेकपदार्थसंसर्गविशेषाभिधायित्वेन निर्विशेषवस्तुप्रतिपादनासामर्थ्यान्न निर्विशेषवस्तुनि शब्दः प्रमाणम्।**

---

यदि नित्यत्वं कल्पितं कुतस्तर्हि क्षणिकत्वे प्रद्वेषः, उभयत्र साम्यबुद्धेरावश्यकत्वात्। यदि कल्पितनित्यत्वं साध्येत, तर्हि न कोऽपि भवदनुमाने दोषं ब्रूयात्। वस्तुतो नित्यत्वस्य त्वयाप्यसाधनादिति भावः।

एवं स्वानुभवस्य निर्विशेषत्वं वदन्तः प्रत्युक्ताः। सम्प्रत्यादौ प्रतिज्ञातं **सविशेषविषयत्वात्सर्वप्रमाणनामि**त्येतदुपपादयति। तत्राविशेषतः शास्त्रस्य परेण प्राबल्याङ्गीकारात् सविशेषवस्त्वभिधानसामर्थ्यातिशयस्य तत्र स्वाभिमतत्वाच्चादौ शब्दस्य सविशेषवस्तुबोधजनकत्वं प्रतिजानीते—**शब्दस्ये**ति। यद्यपि प्रमितेरेव सविशेषवस्तु विषयकत्वस्य पूर्वप्रतिज्ञाततयाऽत्रापि शब्दजन्यप्रमितेरेव तथात्वं वक्तुमुचितम्। अथापि शब्दजन्यप्रमितेरपि तथात्वे नियामकं किमिति पर्यालोचने शब्दस्य स्वभावत एव निर्विशेषवस्तुबोधकत्वसद्भावात्, तज्जन्यबोधस्य निर्विशेषवस्तुविषयकत्वेन वक्तव्यमित्यभिप्रायेण प्रमाणपर्यन्तानुधावनं कृतम्। अतो **वस्तुन्यभिधानसामार्थ्यमि**त्युक्तम्। **तु**शब्दः शब्दस्य निर्विशेषवस्तुबोधकत्वाङ्गीकर्तृमतवैलक्षण्यसूचकः। प्रत्यक्षस्य विशिष्टविषयत्वेन तदुपजीवकशब्दस्यापि विशिष्टबोधकत्वमावश्यकमित्यभिप्रायको वा। पदरूपेण वाक्यरूपेण च विशिष्टार्थ बोधकत्वातिशयसूचनाय **विशेषेणे**त्युक्तम्। **विशेषेणे**त्यनेन व्यञ्जितमभिप्रायं दर्शयन् हेतुमाह — **पदे**ति। तत्र पदस्य सविशेषबोधकत्वमाह—**प्रकृती**ति। **हि** शब्दः 'सुप्तिङन्तं पदम्', 'ते विभक्त्यन्ताः पदमि'ति शास्त्रप्रसिद्धिसूचकः। अस्तु पदस्वरूपमिदम्। तावता तत्कथं सविशेषबोधकमित्यत्राह — **प्रकृति प्रत्यययोरि**ति।

अयं भावः - 'गामानये'त्यादि वाक्यघटकस्य गामिति पदस्याधेयतासम्बन्धेन गोविशिष्टकर्मत्वार्थबोधकत्वेन विशिष्टार्थपरत्वमावश्यकमिति। **पदस्यैवे**त्यत्रैवकारः न वाक्यपर्यन्तानुधावनमपेक्षितमिति सूचयति। वाक्यस्य विशिष्टार्थबोधकत्वं दर्शयति — **पदभेदश्चे**ति। अर्थभेदे पदभेदो हेतुरित्यर्थः। यदि पदं भिन्नं तर्हि भिन्न एवार्थोऽपि, प्रकृतिप्रत्ययरूपस्य पदस्यैव भिन्नार्थकत्वात्। किमुत पदभेदेऽर्थभेदस्येति भावः। इदञ्च वाक्यं न पदभेदस्यार्थभेदहेतुकत्वबोधकम्। तथा सति गामित्यत्रार्थभेदेन नैयायिकाभिमतपदभेदस्यावश्यकत्वेन पूर्वोक्तस्य प्रकृतिप्रत्यययोगेन हि पदत्वमित्यस्य विरोधापत्तेः। 'वीप्सादौ च तात्पर्य भेदार्थभेदोप्यस्त्येवे'ति तत्त्वटीका। अनया च श्रीसूक्त्या अर्थभेदे पदभेदस्य निबन्धनत्वं सूचितम्। 'यत्र यत्र पदभेदस्तत्र तत्रार्थभेद' इति व्याप्तौ वीप्सायां पदभेदे सत्यपिऽर्थभेदाभावात्कथमियं व्याप्तिः सङ्गतेति चोद्ये तत्राप्यर्थभेदाभ्युपगमावश्यकत्वेन विरोधो न शङ्क्य इति समाधानं चोपपद्यते। अतो नात्र बहुव्रीहिः। **निबन्धन** इति पुल्लिङ्गनिर्देशो विवक्षाधीनः 'नाभीपद्मश्च मानक्षममिव' इत्यभियुक्तोक्तिवत्। व्रीडहेतुः शिशूनां इतिवच्च। पदभेदस्याप्यर्थभेदहेतुकत्वमिति श्रुतप्रकाशिकासूक्तिः न कारकत्वनिबन्धना परन्तु ज्ञापकत्वाभिप्रायिणी। अर्थभेदे पदभेदस्य कारणत्वादर्थभेदेन पदभेदोऽनुमीयते। अर्थभेदज्ञाप्यत्वादित्यर्थ इति न दोषः।

ननु पदभेदस्यार्थभेदहेतुत्वेऽपि वाक्यस्यैकत्वान्निर्विशेषबोधकत्वमेवेत्यत्राह—**पदसङ्घाते**ति। वाक्येन हि तत्तत्पदाभिहितानामर्थानां संसर्गविशेषः प्रतिपाद्यते। इत्थञ्च विशिष्टमेव वस्तुप्रतिपाद्यम्। यद्यपि वाक्यस्यैकत्वात् वाक्यार्थोऽप्येक एव। उक्तञ्चार्थैकत्वादेकं वाक्यमिति। अथापि विशिष्टवाक्यार्थ एवैकः, सङ्ख्याकारकाद्यनेकार्थगर्भत्वात्। एतेन पदस्थलेऽपि निरर्थकप्रत्यययोगेऽपि एकत्वादिसंख्यावैशिष्ट्यबोधनेन न विशिष्टविषयकत्वनियम इति सिद्धम्। **न निर्विशेषवस्तुनि शब्दः प्रमाणमि**ति। प्रमाणं प्रमितिजनकम्। एतेन 'निर्विशेषं वस्त्वि'ति वाक्येन भ्रमात्मकनिर्विशेष-

**प्रत्यक्षस्य निर्विकल्पकसविकल्पकभेदभिन्नस्य न निर्विशेषवस्तुनि प्रमाणभावः । सविकल्पकं जात्याद्यनेकपदार्थविशिष्टविषयत्वादेव सविशेषविषयम् । निर्विकल्पकमपि सविशेषविषयमेव; सविकल्पके, स्वस्मिन्ननुभूतपदार्थविशिष्टप्रतिसन्धानहेतुत्वात् । निर्विकल्पकं नाम केनचिद्विशेषेण वियुक्तस्य ग्रहणम् ;**

---

वस्तुबोधेऽपि न तस्य कार्यकरत्वमिति दर्शितम् । 'निर्विशेषं वस्त्वि'त्यत्र हि विशेषशब्दस्य सङ्कोचोऽभ्युपेयः, तन्मात्राण्यविशेषाणि, 'निर्विशेषं नगरमि'त्यादिवत् । अन्यथा विशेषसामान्याभावाधिकरणताया एवाप्रसिद्ध्या तद्बोधनासम्भवात् । यद्यनाप्तः कश्चिद्ब्रूयात्तर्हि न तस्य प्रमितिहेतुत्वम् । आप्तवाक्यत्वे तु पूर्वोक्तैव गतिः । न केवलं यथादृष्टार्थवादित्वमाप्तत्वम् । किन्तु यथार्थदर्शित्वविशिष्टम् । अतो 'निर्विशेषं वस्त्वि'ति वाक्यं यत्किञ्चिद्विशेषाभाववद्वस्तुप्रतिपादनपरमेव । ननु 'निर्विशेषं वस्तु नास्ती'ति वदता यत्किद्विशेषशून्यस्य वस्तुनो नास्तित्वमुच्यते, उत सर्वविशेषशून्यस्य । आद्येऽस्मदभिमतनिर्विशेषवस्त्वनिरासः, द्वितीये प्रतीयोग्यप्रसिध्या निषेधानुपपत्तिरिति चेन्मैवम् । सर्वविशेषशून्यस्य वस्तुनो भवदभिमतस्य प्रमाविषयत्वाभावो ह्युच्यते । अस्तित्वस्य प्रमाविषयत्वरूपत्वात् । वस्तुनि भवदभिमतविशेष सामान्याभावो वा निषिध्यते इति न दोष इति ।

एवं स्वानुभवशाब्दयोर्विशिष्टविषयत्वं संस्थाप्य प्रत्यक्षस्य विशिष्टविषयत्वं स्थापयितुमुपक्रमते - **प्रत्यक्षस्येति** । अपरोक्षबुद्धेरित्यर्थः । **निर्विकल्पकसविकल्पकभेदभिन्नस्य** = निर्विकल्पकत्वसविकल्पकत्वरूपासाधारणधर्मप्रयुक्तविभागवतः । निर्विकल्पकरूपस्य सविकल्पकरूपस्य च प्रत्यक्षस्येत्यर्थः । **प्रमाणभावः** = प्रमात्वम् । निर्विकल्पकस्य विशिष्टविषयत्वस्थापनानुमाने दृष्टान्तार्थमविवादेन सर्वाङ्गीकृतं सविकल्पकस्य विशिष्टविषयत्वमादौ प्रतिजानीते - **सविकल्पकमिति** । **जात्यादीति** । आदिशब्देन गुणादिसङ्ग्रहः । 'अयमपि घटः' इत्यादि सविकल्पकं, सविशेषविषयम्, घटत्वरूपजात्याद्यनेकविशिष्टघटविषयकत्वादित्यनुमानप्रयोगः । अत्र न केवलं विशिष्टविषयत्वं हेतुः, तथा सति साध्याविशेषप्रसङ्गात् । अतो **जात्यादी**त्युदाहरणं भाषितम् । अथ 'अस्ति ह्यालोचनाज्ञानं प्रथमं निर्विकल्पकम्, बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम्' इति परैरन्यथोक्तस्य निर्विकल्पकस्यापि विशिष्टविषयत्वमेवेत्याह — **निर्विकल्पकमपीति** । **अपि**शब्देन सविकल्पकस्य विशिष्टविषयकत्वं समुच्चीयते । एवकार उपलब्ध्यनुपपत्त्यनुरोधेन निर्विकल्पकस्य विशिष्टविषयकत्वावश्यकतां ब्रूते , प्रसिद्धिसूचको वा । सर्वस्या अपि धियः विशिष्टविषयत्वदर्शनात् । अविशिष्टविषयस्य च घटादेः धीत्वादर्शनात् । अन्यथा घटादीनामिव सविषयकत्वस्याप्यपलापप्रसङ्गात् । उक्तार्थे हेतुमाह — **सविकल्पक** इति । 'दाने कर्णसम' इत्यादाविव सप्तम्या अभेदोऽर्थः । तस्य च प्रतिसन्धानेऽन्वयः । स्वविषयजात्यादिविशिष्टवस्तुविषयकप्रतिसन्धानरूपसविकल्पकहेतुत्वादित्यर्थः । **प्रत्यभिज्ञाहेतुभूताभिज्ञावदि**त्युदाहरणम् ।

ननु प्रथमवस्तुग्रहणे जात्यादिवैशिष्ट्यभानमेव नेष्यते । तत्कथं निर्विकल्पकानुभूतजात्यादिविशिष्टवस्तु गोचरसविकल्पकहेतुत्वरूपहेतुना विशिष्टविषयकत्वं स्थाप्यते । अभिज्ञारूपदृष्टान्ते तु जात्यादि पदार्थभानमनुभवसिद्धमिति दृष्टान्तोऽपि विषमः । अत एव प्रथमग्रहणस्य निर्विकल्पकमिति समाख्या । न्यायविद्भिरपि विशेषणविशेष्ययोस्तत्र गृहीतत्वेऽपि वैशिष्ट्यं तत्र न प्रतीयते, विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य हेतुत्वेन ततः पूर्वमेव विशेषणज्ञानस्यापेक्षितत्वप्रसङ्गादिति तुरीयविषयताकज्ञानमेव निर्विकल्पकमित्युच्यते इत्यत्रानुपलब्ध्यनुपपत्तिभ्यां जात्यादिविषयकत्वं स्थापयन् प्रथमं समाख्याविरोधपरिहाराय निर्विकल्पकशब्दार्थं दर्शयति—**निर्विकल्पकं नामेति** । अयं भावः - न निर्विकल्पकमिति समाख्याऽवयवशक्तिनिबन्धना । सर्वत्र समाख्याया अवयवशक्तिनिबन्धनत्व नियमाभावात् । अत एव क्षुद्रे वृक्षेऽपि 'महावृक्ष' इति समाख्या । आस्तां वाऽवयवशक्तिनिबन्धनत्वम् । अथापि विकल्पशब्दो न प्रकारसामान्याभावपरः, किन्तु प्रकारविशेषाभावपर एव । **निर्विशेषमि**त्यत्र विशेषशब्दवत् । इत्थञ्च निर्विकल्पकशब्दः किञ्चिद्विशेषयुक्ततद-

**न सर्वविशेषरहितस्य, तथाभूतस्य कदाचिदपि ग्रहणादर्शनात् ; अनुपपत्तेश्च । केनचिद्विशेषेण इदमित्थमिति हि सर्वा प्रतीतिरुपजायते; त्रिकोणसास्नादिसंस्थानविशेषेण विना कस्यचिदपि पदार्थस्य ग्रहणायोगात् । अतो निर्विकल्पकमेकजातीयद्रव्येषु प्रथमपिण्डग्रहणम्, द्वितीयादिपिण्डग्रहणं सविकल्पकमित्युच्यते । तत्र प्रथमपिण्डग्रहणे गोत्वादेरनुवृत्ताकारता न प्रतीयते; द्वितीयादिपिण्डग्रहणेष्वेवानुवृत्तिप्रतीतिः । प्रथमप्रतीत्यनुसंहितवस्तुसंस्थानरूपगोत्वादेरनुवृत्तिधर्मविशिष्टत्वं द्वितीयादिपिण्डग्रहणावसेयमिति, द्वितीयादिग्रहणस्य**

---

तिरिक्तविशेषरहितवस्तुग्रहणपरमेवेति न समाख्याविरोध इति । आवश्यकश्च तथा सङ्कोच इत्याह - **तथाभूतस्येति** । **ग्रहणादर्शनात्** = ग्रहणानुपलब्धेः । **अनुपपत्तेः** = उपपत्त्यभावात् । **ग्रहणादर्शनादि**त्येतद्विवृणोति - **केनचिदि**ति । पृथक्सिद्धेनाऽपृथक्सिद्धेन वेत्यर्थः । अनुपपत्तिमुद्घाटयति - **त्रिकोणे**ति । **त्रिकोणं** = गोमुखम् । अयं भावः - विशिष्टविषयकत्वनिषेध उपलब्ध्याऽनुपपत्त्या वा स्थापनीयः । न तावदुपलब्धिः । विशिष्टविषयकत्वेनैवोपलब्धेः 'इदमित्थम्' इति स्वेतरव्यावृत्तिरूपसंस्थानविशिष्टतयैव प्रतीतिजननात् । नाप्यनुपपत्तिः । प्रत्युत विशिष्टविषयकत्वाभावे धीत्वस्यैव विलोपप्रसङ्गादिति ।

ननु विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य हेतुत्वेन प्रथमग्रहणस्य न विशिष्टविषयकत्वसम्भवः । तत्पूर्वं विशेषणज्ञानाभावादिति चेन्न । एकेन्द्रियग्राह्यस्थले तथानियमाभावात् । भिन्नेन्द्रियग्राह्यस्थले तु विशेष्यस्येन्द्रियसन्निकर्षदशायां विशेषणस्य तदिन्द्रियसन्निकृष्टत्वाभावेन तद्विशिष्टत्वबुद्धिर्नोत्पत्तुमर्हतीति तत्र विशेषणज्ञानस्य हेतुत्वमपेक्षितम् । एकेन्द्रियग्राह्यस्थले च विशेषणविष्ययोरुभयोरपीन्द्रियसन्निकृष्टत्वेन न विशिष्टबुध्युत्पादनासम्भव इति तस्य हेतुत्वकल्पनं व्यर्थमेव । ननु व्यक्तिसंस्थानयोरुभयोरपीन्द्रियसन्निकृष्टत्वेऽविशेषेण कदाचिद्व्यक्तिविशेष्यकजातिविशेषणकप्रतीतिः । कदाचिच्च जातिविशेष्यकव्यक्तिविशेषणकप्रतीतिरिति व्यवस्था न स्यात् । विशेषणज्ञानस्य हेतुत्वे तु यस्य पूर्वमवगमः तद्विशेषणकबुद्धिरेवेति नियमनसम्भव इति विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य हेतुत्वमावश्यकमेवेति चेत् न । विशेषण बुद्धिहेतुत्वस्वीकारेऽपि व्यवस्थायाः दुर्वचत्वात् । वैशिष्ट्यानवगाहिनि विशेषणविशेष्यकोभयविषयके भवदभिमते निर्विकल्पके द्वयोरपि पूर्वमवगतविशेषेण विशेषणविशेष्यभावव्यवस्थाऽसम्भवात् । अदृष्टस्य व्यवस्थापकत्वे समानमेतदस्मन्मतेऽपि । विशिष्टज्ञानकारणत्वकल्पनं त्वधिकं भवताम् । एवं बालमूकादिविज्ञानस्यापि प्रवृत्त्यादिभिर्विशिष्टार्थविषयकत्वावगमान्न तद्दृष्टान्तसाङ्गत्यमपीति । ननूभयोरपि विशिष्टविषयकत्वे वैलक्षण्यन्न स्यादित्यत्राह - **अत** इति । **प्रथमे**ति । अस्य **ग्रहणे**ऽन्वयः । **प्रथमप्रतीत्यनुसंहिते**त्युत्तरत्र भाषणात् । एवमग्रेऽपि ।

नन्वेतावता किं वैलक्षण्यं सिद्धमित्यतस्तदुपपादयति—**तत्रे**ति । अनुवृत्ताकारता - अनुवृत्तत्वम्, अनुवृत्तिरिति यावत् । नन्वनुवृत्तिविधुरजात्यादिविशिष्टपिण्डग्रहणस्य निर्विकल्पकत्वम्, अनुवृत्तिविशिष्टतादृशपिण्डग्रहणस्य सविकल्पकत्वमिति वैलक्षण्यमेतावता सिद्धम् । एतच्च नोपपद्यते । प्रथमपिण्डग्रहणे जातिग्रहणेऽनुवृत्त्यग्रहणायोगात् । जातेरनुवृत्तिरूपत्वादित्यत आह— **प्रथमप्रतीति**ति । गोत्वं नातिरिक्ता जातिः । किन्तु अवयवसंस्थानविशेष एवेति सूचनाय गोत्वे संस्थानरूपत्वोक्तिः । एतेन निर्विकल्पके धर्मिवत् संस्थानस्यापि योग्यतयेन्द्रियसन्निकृष्टत्वात् भानमावश्यकमिति व्यञ्जितम् । **गोत्वादेरि**त्यत्रादिपदेन देशकालादिग्रहणम् । **अनुवृत्तिधर्मे** —अनुवृत्तिरूपधर्मेत्यर्थः । **न प्रथमपिण्डग्रहणे गृह्यत** इति । अयं भावः - जातिर्हि नानुवृत्तिरेव । किन्तु सा अनुवृत्तिविशिष्टैव । तथैव लोक व्युत्पत्तेः । अतो जातिग्रहणेऽपि नानुवृत्तिग्रहणमावश्यकमिति । एतत्सूचनायैव पूर्वत्र **गोत्वादेरनुवृत्तिधर्मविशिष्टत्वमि**ति भाषितम् । अपि च प्रथमपिण्डग्रहणे अनुवृत्त्यग्रहणेन संस्थानरूपगोत्वस्याप्यग्रहणमिति यद्युच्यते, तर्हि द्वितीयदिपिण्डग्रहणेऽपि गोत्वग्रहो न स्यात् । अनुवत्त्यग्रहणात् । अनुवृत्तिर्हि पूर्वगृहीतगोत्वस्य वक्तव्या । पूर्वमेव गोत्वस्याग्रहणेन तदनुवृत्तिग्रहणमुत्तरत्रापि दुःशकम् । एवं तृतीयादिग्रहणानामपि गोत्वरूपसंस्थानाविषयकत्वमेव प्रसज्यते । अतः प्रथमपिण्डग्रहणे गोत्वरूप-

**सविकल्पकत्वम्। सास्नादिवस्तुसंस्थानरूपगोत्वादेरनुवृत्तिर्न प्रथमपिण्डग्रहणे गृह्यत इति, प्रथमपिण्डग्रहणस्य निर्विकल्पकत्वम्; न पुनस्संस्थानरूपजात्यादेरग्रहणात्। संस्थानरूपजात्यादेरप्यैन्द्रियकत्वाविशेषात्,**

संस्थानविषयकत्वमावश्यकमेवेति, तादृशगोत्वानुवृत्तिग्रहणमुत्तरत्र सुवचमेवेति वैलक्षण्यसिद्धिः।

ननु जात्यनुवृत्तिवद्व्यक्त्यनुवृत्तिरप्यस्ति। अतः प्रथमपिण्डग्रहणे अपि व्यक्तिमात्रग्रहणेऽपि द्वितीयादि पिण्डग्रहणे तदनुवृत्तिग्रहोऽधिक इति तत एव वैलक्षण्यसिद्ध्या किमर्थं प्रथमपिण्डग्रहणस्य संस्थानविषयकत्वस्वीकारः। अतः प्रथमं गोत्वाग्रहेऽप्युत्तरत्र, व्यक्त्यनुवृत्तिग्रहणसम्भवात् नानुवृत्तिग्रहणं दुश्शकम्। द्वितीयादिग्रहणस्य संस्थान विषयकत्वं त्विन्द्रियसन्निकर्षाधीनमेव। व्यक्त्यनुवृत्तिरेव नास्ति, व्यक्तीनां परस्परं भिन्नत्वादिति मा वोचः। जात्यतिरेकवादे जातेरेक-रूपत्वेनान्यव्यक्तावनुवृत्तिसम्भवेऽपि संस्थानस्य जातित्वमभ्युपगच्छतां भवतामवयवसन्निवेशविशेषस्य तस्य तन्मात्र-वृत्तित्वे नान्यव्यक्तावनुवृत्त्यसम्भवात्। अतस्संस्थानानुवृत्तिवत् व्यक्त्यनुवृत्तिरपि सुवचैवेत्यत्राह - **संस्थानरूपजात्या-देरिति। ऐन्द्रियकत्वाविशेषादिति।** अयं भावः - द्वितीयपिण्डग्रहणस्य संस्थानविषयकत्वं कुतोऽभ्युपगतम्। प्रथमपिण्ड-ग्रहणगृहीतव्यक्त्यनुवृत्तिमात्रविषयकत्वस्यैव वक्तव्यत्वात्। यदीन्द्रियसन्निकर्षात् द्वितीयग्रहणस्य संस्थानविषयकत्व-मुच्यते, तर्हि तेनैवेन्द्रियसन्निकर्षेण प्रथमग्रहणस्यापि संस्थानविषयकत्वमप्यभ्युपेत्यम्।

ननु कार्यपौर्वापर्यं सामग्रीपौर्वापर्याधीनं दृष्टम्। अतः व्यक्तिग्रहणे चक्षुस्संयोगरूपकारणं प्राथमिकम्। पश्चादेव हि जातिविषयकग्रहणहेतुः चक्षुस्सम्युक्तसमवायः, तस्य चक्षुस्संयोगानन्तरकालिकत्वात्। तस्माच्चक्षुस्सम्योगरूपकारण-बलात्प्रथमं व्यक्तिग्रहणं, अनन्तरञ्च तत्सामग्रीबलात् जातिग्रहणमिति प्रथमग्रहणस्य जातिविषयकत्वन्न सम्भवतीति चेदुच्यते। एतावता एकस्यां व्यक्तौ प्रथमग्रहणं निर्विकल्पकं, द्वितीयादिग्रहणं तु सविकल्पकमिति पर्यवसितम्। एवञ्च विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य हेतुत्वं भवदभिमतं भज्येत। कारणपौर्वापर्यबलेन प्रथमग्रहणस्य विशेष्यमात्रविषयक-त्वेन प्रथमं विशेषणज्ञानस्यैवानुदयात्। अथ यदि सामग्रीपौर्वापर्यमनवलम्ब्य प्रथमग्रहणस्य विशेषणविषयकत्वमुच्यते, तर्हि तत एवोभयविषयकत्वमपि सिध्येत्। न च प्रथमग्रहणस्योभयविषयकत्वेऽपि विशिष्टविषयकत्वन्न सम्भवति। वैशिष्ट्यस्य समवायरूपस्यानैन्द्रियकत्वादिति वाच्यम्। तर्हि द्वितीयग्रहणस्यापि विशिष्टविषयकत्वन्न स्यात्, वैशिष्ट्य-स्यानैन्द्रियकत्वात्। अतो न समवायरूपं वैशिष्ट्यमनैन्द्रियकम्। वस्तुतस्समवायो नातिरिक्त इति 'समवायाभ्युपगमाच्च साम्यादनवस्थितेरि'त्युत्तरत्र वक्ष्यते।

ननु वैशिष्ट्यस्यैन्द्रियकत्वेऽपि न प्रथमग्रहणं विशिष्टविषयकम्।' विमता बुद्धिः विशेषणविशेष्यधीपूर्वका, विशिष्टबुद्धित्वादि'त्यनुमानेन द्वितीयग्रहणात्मकविशिष्टबुद्धेः विशेषणविशेष्यकधीपूर्वकत्वसिध्या प्रथमग्रहणस्य वैशिष्ट्या-नवगाहिविशेषणविशेष्यधीरूपत्वावश्यंभावात् इति चेन्मैवम्। 'वह्निरनुष्ण' इत्याद्यनुमानवत् प्रत्यक्षविरोधेनास्यानुमानस्य बाधितत्वात्। प्रथममेव हि 'अयं गौरि'ति गोत्वविशिष्टतयैव गोग्रहणम्। इन्द्रियसन्निकर्षादिघटितसामग्र्याः पश्चादिव पूर्वमपि सत्वेन विशिष्टबुद्ध्यनुत्पादे बीजाभावात्। 'इदमित्थमि'त्येव सर्वेषामपि प्रतीतेः। हेतौ **विशिष्टे**ति विशेषणस्य व्यर्थत्वाच्च। व्यवच्छेद्यस्याविशिष्टविषयज्ञानस्यासिद्धत्वात्। अन्यतस्तत्सिद्धौ अनुमानमेव व्यर्थम्। तत्साधकमन्यद-प्यनुमानं ततोऽन्यद्वा, न प्रथमः, लिङ्गाभावात्। नापि प्रत्यक्षादिकं, प्रत्यक्षस्य विशिष्टविषयकत्वेनैवानुभवात्। नापि शब्दः, विशिष्टार्थबोधकत्वस्वाभाव्यस्य प्राग्दर्शितत्वात्। यद्यनेनैवानुमानेन तत्सिद्धिरिष्यते तर्ह्यन्योन्याश्रयणम्। अनेन व्यवच्छेद्यसिद्धौ हेतोर्निर्दुष्टत्वम्। हेतोर्निर्दुष्टत्वे व्यवच्छेद्यसिद्धिरिति। ननु विशिष्टधीत्वस्य न हेतुत्वमिष्यते, किन्तु धीत्वमात्रस्येति चेत्, तर्हि भवदभिमत एव निर्विकल्पके व्यभिचारः। न चोक्तयुक्त्या निर्विकल्पकस्य विशिष्टविषयकत्वेन तस्यापि पक्षान्तर्भावान्न व्यभिचारदर्शनं सङ्गच्छत इति चेत्, तर्ह्यागतोऽस्यस्मत्पन्थानम्। निर्विकल्पकादपि पूर्वं विशेषण-

**संस्थानेन विना संस्थानिनः प्रतीत्यनुपपत्तेश्च प्रथमपिण्डग्रहणेऽपि ससंस्थानमेव वस्तु, इत्थमिति गृह्यते ।**

विशेष्यबुद्धिः काचिदस्तीति साधयितुं प्रवृत्तोऽसीति महत्कष्टम् । अपि च विशेषणविशेष्यबुद्धिः वैशिष्ट्यानगाहिनी काचिदस्ति न वा, नो चेत्तत्साधनं बाधितम् । अस्ति चेत्तत्रैव धीत्वसत्वेन व्यभिचारो दुरपह्नवः ।

ननु न वयमनुमानेन साधयामः । किन्त्वनुभवादेव । अनुभवो हि दण्डकुण्डलपुरुषादिषु पृथक्पृथक् दण्डपुरुषादि-विशेषविशेष्ययोः ग्रहणानन्तरमेव 'दण्डीपुरुष' इति दृष्टचर इति चेदुच्यते । तत्र किं पृथक्ग्रहणं विशेषणविशेष्ययोः पृथक्स्थितिवेलायम्, उतापृथक्स्थितिवेलायाम् । नाद्यः, तदानीं पृथक्ग्रहणमेव, न विशिष्टग्रहणमिति तत्र हेतुत्वकल्पनमेव व्यर्थम् । न द्वितीयः, अपृथक्स्थितिवेलायां दण्डवैशिष्ट्यं पुरुषादीनां सर्वेषामप्यैन्द्रियकत्वाविशेषेण विशिष्टत्वेनैव ग्रहणमिति न पृथक्ग्रहणावकाशः । यत्र तु विशेषणविशेष्ययोः भिन्नसामग्रीवेद्यत्वं तत्र पुनः विशिष्टबुद्धेः पृथग्ग्रहण पूर्वकत्वमिष्यते, अनुभवानुरोधात् । घटत्वादिरूपसंस्थानस्य न कदाचिदपि पृथक्ग्रहणसम्भवः । अपृथक्सिद्धत्वादेवैके-न्द्रियग्राह्यत्वाच्च । दण्डादीनां त्वपृथक्सिद्धत्वाभावेन पृथगपि ग्रहणं सम्भवति । तस्याप्यपृथक्स्थितिवेलायां सामग्रीसत्वेन न पृथक्ग्रहणम् । गन्धादीनामपृथक्सिद्धत्वेऽपि गन्धादिग्राहकघ्राणादीनां तदाश्रयग्रहणानर्हत्वेनाऽऽश्रयग्राहकस्य गन्धादि-ग्रहणानर्हत्वेन पृथगेव ग्रहणं, पश्चात्तु विशिष्टबुद्धिरिति यथादर्शनं सर्वमपि व्यवस्थाप्यम् ।

व्यक्तयनुवृत्तिं निरस्यति - **संस्थानेने**ति । अयं भावः - 'अयमपि गौरि'त्यादिसविकल्पके गोत्वरूपसंस्थानविशिष्टस्य वस्तुनोऽनुवृत्तिप्रतीत्या गोत्वरूपसंस्थानस्याप्यनुवृत्तिभानमावश्यकम् । इत्थञ्च निर्विकल्पके संस्थानविशिष्टव्यक्त्यग्रहणे तदनुवृत्तिः कथं द्वितीयग्रहणे भासेत । वस्तुतो व्यक्तेरनुवृत्तिरपि न सम्भवति । व्यक्तीनां परस्परभिन्नत्वात् । संस्थानरूप-जातेः परस्परभिन्नत्वेऽपि पूर्वगृहीतसंस्थानसौसादृश्येन तदनुवृत्तिर्वक्तुं युक्ता । व्यक्तिसौसादृश्यन्तु जात्यात्मकसंस्थान-रूपावयवसन्निवेशमादायैव वक्तव्यमित्यनुवृत्तिर्जातिगतैव पर्यवस्यति । अतस्संस्थानरूपजात्यात्मकगोत्वादेः प्रथमम-ग्रहणे तदनुवृत्तिर्नैव द्वितीयादिग्रहणे भासेतेति प्रथमपिण्डग्रहणस्य जातिलक्षणसंस्थानविषयकत्वमभ्युपेत्यमेवेति । न च द्वितीयादिग्रहणे अनुवृत्तिभानमनपेक्षितमिति वाच्यम् । 'अयमपि घटः' इत्यनुवृत्तिभानस्यानुभवसिद्धत्वेन तदपलापा-सम्भवात् । न चैकस्यां व्यक्तौ द्वितीयादिग्रहणस्यानुवृत्तिविषयकत्वं नास्ति । तत्रायमपि घटः इति प्रतीत्यभावादिति वाच्यम् । 'अयं घटः' इति प्रतीतावपि देशकालाद्यनुवृत्तेर्भासमानत्वात् ।

ननु तर्ह्येकस्यां व्यक्तौ द्वितीयादिग्रहणे एव संस्थानविषयकत्वस्वीकार उचितः । न प्रथमग्रहणेऽपि । संस्थानानु-वृत्तिभानान्यथानुपपत्त्या हि प्रथमग्रहणेऽपि संस्थानग्रहणमपेक्षितम् । अत्र तु द्वितीयादिग्रहणे संस्थानानुवृत्तिरेव नास्ति, येन प्रथमग्रहणेऽपि संस्थानविषयकत्वं कल्प्येतेति चेन्मैवम् । तावतापि द्वितीयादिग्रहणे देशकालाद्यनुवृत्तिभानान्यथा-नुपपत्त्या प्रथमग्रहणस्य देशकालादिविशिष्टवस्तुविषयकत्वावश्यंभावेन निर्विकल्पकस्य तस्य विशिष्टविषयकत्वम-वर्जनीयमिति न निर्विशेषवस्तुसिद्धिस्संभाव्येत । एवं देशकालादिविशिष्टवस्तुविषयकत्वं निर्विकल्पकेऽभ्युपगच्छतां संस्थानिवत्संस्थानेऽपीन्द्रियसन्निकर्ष विशेषेऽपि संस्थाने परं कः प्रद्वेषः । अत इन्द्रियसन्निकृष्टस्य जातिलक्षणसंस्थानस्य प्रथमग्रहणेऽपि विषयत्वमभ्युपेयमेव । विभिन्नव्यक्तिस्थले द्वितीयपिण्डग्रहणस्य संस्थानानुवृत्तिभानान्यथाऽपपत्त्या प्रथमपिण्डग्रहणस्य संस्थानविषयकत्वं स्वीकुर्वतां एकस्यामेन व्यक्तौ द्वितीयग्रहणस्य संस्थानविषयकत्वे कः पक्षपातः । अतो वरं सर्वत्रैव प्रथमग्रहणस्यापि संस्थानविषयकत्वाभ्युपगमः ।

वस्तुतः सर्वास्वपि व्यक्तिषु प्रथमग्रहणं निर्विकल्पकं, द्वितीयग्रहणञ्च सविकल्पकमिति भवत्सिद्धान्तः । तत्र निर्विकल्पकस्य सविकल्पकवदिन्द्रियसन्निकर्षादिसामग्रीसत्त्वेन विशिष्टविषयकत्वं कुतो न स्वीक्रियते । विशेषज्ञानहेतुत्व-विशेषणविशेष्योभयधीपूर्वकत्वादिकञ्च पूर्वमेव निरस्तम् । अपि च सजातीयेषु द्रव्येषु एकव्यक्तिग्रहणानन्तरमन्यव्यक्तौ

**अतो द्वितीयादिपिण्डग्रहणेषु गोत्वादेरनुवृत्तिधर्मविशिष्टता संस्थानिवत् संस्थानवच्च सर्वदैव गृह्यत इति तेषु सविकल्पकत्वमेव। अतः प्रत्यक्षस्य कदाचिदपि न निर्विशेषविषयत्वम्॥**

**अत एव सर्वत्र भिन्नाभिन्नत्वमपि निरस्तम्। इदमित्थमिति प्रतीतौ इदमित्थंभावयोरैक्यं कथमिव प्रत्येतुं शक्यते? तत्रेत्थंभावस्सास्नादिसंस्थानविशेषः, तद्विशेष्यं द्रव्यमिदमंश इत्यनयोरैक्यं प्रतीतिपराहतमेव।**

अयमपि गौरिति प्रथमप्रतीतिः कथम्। अतो न निर्विकल्पकस्याविशिष्टविषयकत्वसम्भवः। अस्माकन्तु संस्कारसचिव-जातिगुणाद्यन्यतमानुवृत्तिविशिष्टवस्तु ग्रहणं सविकल्पकम्। सर्वविधानुवृत्तिरहितजात्यादिविशिष्टवस्तुग्रहणं निर्विकल्प-कमिति सिद्धान्तः। अत्र त्वेकव्यक्तौ प्रथमाक्षसन्निपातजन्यस्य ज्ञानस्य निर्विकल्पकत्वम्, अनुवृत्तिविशिष्टवस्तुग्रहित्वा-भावात्। तत्रैव संस्कारजन्यदेशाद्यनुवृत्तिविशिष्टवस्तुग्रहणे तस्य सविकल्पकत्वमेव। एवमन्यव्यक्तौ एकव्यक्त्यनुभव-जन्यसंस्काराधीनायाः जात्यनुवृत्त्यादिविशिष्टवस्तुविषयिन्याः 'अयमपि गौः' इति प्रथमप्रतीतेरपि सविकल्पकत्वमेवेष्यते। संस्कारानुद्बोधे तु सर्वत्रापि 'अयं गौरि'ति प्रतीतेः निर्विकल्पकत्वमेव, यत्किञ्चिदनुवृत्तेरपि वैशिष्ट्याग्रहणात्। अतस्संस्कार सहकृतेन्द्रियजन्यविशिष्टवस्तुग्रहणस्य सविकल्पकत्वमन्यस्य निर्विकल्पकत्वमित्यङ्गीकारे न काऽपि क्षतिरिति। उक्ताभि-प्रायेण सविकल्पकत्वं निगमयति—**अत** इति। अतः ससंस्थानवस्तुनो ग्रहणावश्यंभावात्। द्वितीयदिपिण्डग्रहणेषु एकजातीयेषु द्वितीयपिण्डस्य ग्रहणे, एकस्मिन्नेव पिण्डे द्वितीयग्रहणे च। **गोत्वादेरि**ति। आदिशब्देन देशकालादिग्रहणम्। **सर्वदैव** उद्बुद्धसंस्कारकाले सर्वदैव। **सविकल्पकत्वमेवे**ति। अयं भावः - एकजातीयद्रव्येषु द्वितीयपिण्डस्य ग्रहणदशायां संस्कारसत्वे 'अयमपि गौरि'ति प्रतीत्या प्रथमपिण्डग्रहणानुसंहितवस्तुसंस्थानरूपगोत्वादेरनुवृत्तिरूपधर्मवैशिष्ट्यस्य भानात्तस्यसविकल्पकत्वं युज्यते। एवमेकस्यां व्यक्तौ द्वितीयग्रहणदशायां संस्कारसत्त्वे 'अयं गौरि'ति प्रतीतौ पूर्वप्रतीत्यनु-संहितदेशकालाद्यनुवृत्तिवैशिष्ट्यभानेन तस्या अपि सविकल्पकत्वमेवेति॥

नन्वेवं सति ईश्वर प्रत्यक्षस्य सविकल्पकत्वन्न स्यात्, संस्काराधीनत्वाभावादिति चेन्न। तस्य निर्विकल्पकत्वस्वी-कारेणेष्टत्वात्। वस्तुतो नित्यमुक्तादिप्रत्यक्षस्येन्द्रियजन्यत्वाभावेन इन्द्रियजन्यत्वादिलक्षणमस्मदादीनामेवेति उक्त निर्विकल्पकसविकल्पकलक्षणस्य ईश्वरादिप्रत्यक्षेऽसम्भवेऽपि नकाऽपि क्षतिः। जातिगुणादिष्वन्यतमानुवृत्तिविशिष्ट-ग्रहणस्य सविकल्पकत्वं सर्वविधानुवृत्तिविधुरग्रहणस्य निर्विकल्पकत्वमित्यङ्गीकारे ईश्वरादिप्रत्यक्षस्यापि सविकल्पकत्व-मुपपद्यत एव। तस्य सर्वज्ञत्वेन सर्वं सर्वदा साक्षात्कुर्वतोऽनुवृत्तिग्रहणस्यापि सत्त्वात्। अत ईश्वरादिप्रत्यक्षस्य निर्विक-ल्पकत्वे सविकल्पकत्वे वा द्वेधापि न विशिष्टार्थविषयत्वभङ्गः। एवमुभयविधस्यापि प्रत्यक्षस्य न निर्विशेषविषयत्वं सम्भवतीप्युपसंहरति — **अत** इति। **न निर्विशेषविषयत्वं** = विशेषसामान्याभाववद्वस्तुमात्रविषयत्वं नास्तीत्यर्थः।

एवं सर्वस्यापि प्रत्यक्षस्य विशिष्टविषयकत्वं स्थापितम्। अथ तत एव हेतोः जातिव्यक्ति,गुणगुणि,क्रियातद्वत्, कार्यकारणयोः भेदाभेद पक्षोऽपि निरस्तो भवतीत्याह—**अत एवे**ति। **अतः** = सविकल्पकवत् निर्विकल्पकस्यापि विशिष्टविषयत्वात्। एवकारः हेतोरन्यनैरपेक्ष्यसूचकः। **सर्वत्र** = जातिव्यक्ति, गुणगुण्यादिषु सर्वत्र भिन्नाभिन्नत्वं = भेदाभेदः। **अपि**शब्दः दूष्याद्वैतिमतप्रसक्तानुप्रसक्तिसूचकः। प्रथमतो भेदाभेदे प्रतीतिविरोधं दर्शयति — **इदमित्थ-मितीति**। **इदमित्थम्भावयोः** = विशेष्यविशेषणयोः। **कथमिव** = न कथञ्चिदपि। **प्रत्येतुं शक्यते** = विषयो भवति। तर्हि तादृशप्रतीतौ को विषय इत्यत्र विषयं विविच्य दर्शयति—**तत्रेति**। **सास्नादिसंस्थानविशेषः** = सास्नाद्यवयवसन्निवेश-विशेषः। विशेषणभूतावयवसन्निवेशवैलक्षण्यसूचनाय **तद्विशेष्यमित्युक्तिः**। न हि 'दण्डीपुरुषः' इत्यादौ विशेषणस्य दण्डस्य विशेष्यभूतमनुष्यैक्यं प्रामाणिकमिति भावः। **प्रतीतिपराहतमेवेति**। तादृशप्रतीतौ विशेषणविशेष्ययोरेव विषय-त्वात्तद्विरुद्धैक्यस्य चाविषयत्वान्न भेदाभेदः प्रामाणिक इति भावः।

**तथाहि - प्रथममेव वस्तु प्रतीयमानं सकलेतरव्यावृत्तमेव प्रतीयते । व्यावृत्तिश्च गोत्वादिसंस्थानविशेष-विशिष्टतया इत्थमिति प्रतीतेः । सर्वत्र विशेषणविशेष्यभावप्रतिपत्तौ तयोरत्यन्तभेदः प्रतीत्यैव सुव्युक्तः । तत्र दण्डकुण्डलादयः पृथक्संस्थानसंस्थिताः स्वनिष्ठाश्च कदाचित्कचिद्द्रव्यविशेषणतयाऽवतिष्ठन्ते । गोत्वादयस्तु**

---

अथ स्यात् - पिण्डानामन्योऽन्यभेदाभेदसमर्थनं हि, 'इदमिदं न भवती'ति भेदः 'इदमिदं भवती'ति अभेदश्च एकस्मिन् वस्तुनि युगपद्विरुद्धत्वान्न सम्भवतीति जात्यात्मनाऽभेदः व्यक्त्यात्मना भेद इत्युपपादयामः । न च तत्रापि जातिगतोऽभेदो व्यक्तिगतश्च भेद इति नैकस्य द्वयात्मकत्वमिति शङ्कनीयम् । प्रतीतिबलेन जातिव्यक्त्योरपि भेदाभेदाङ्गीकारात् । तथाहि — प्रथमपिण्डग्रहणेऽभेदेनग्रहणम्, एकशब्दानुविद्धप्रत्ययः, मत्वर्थीयप्रत्ययनिरपेक्षसमानाधिकरणपदप्रयोगः, सहोपलम्भनियमश्चेतीमे जातिव्यक्त्योर्भेदाभेदसाधकाः । तत्राद्यावभेदसाधकौ, अन्त्यौ भेदाभेदसाधकौ । इत्थञ्च जातिव्यक्त्योर्भेदाभेदः प्रतीत्यैव सिद्ध इति पिण्डानामन्योन्यभेदाभेदविरोधः प्रतीतिपराहत इत्याशङ्क्याह - **तथा हीति** । प्रथमपिण्डग्रहणेऽपि नाभेदेनग्रहणं, किन्तु विशेषणविशेष्यभावेनैव ग्रहणमित्येतदभिव्यक्त्यै **प्रथममेवे**त्युक्तिः । **सकलेतर व्यावृत्तं** = स्वविसजातीयात्सर्वास्माद्भिन्नतयेत्यर्थः । **वस्तु प्रतीयमानं सकलेतरव्यावृत्तमेव प्रतीयते** इति वचनव्यक्त्या यदा वस्तुभानं, तदैव स्वेतरव्यावृत्तिभानमिति स्वेतरव्यावृत्तिरूपसंस्थानाविषयकवस्तुमात्रभानं न कदाचिदपीति सूचितम् । एवकारेण व्यावृत्तिरूपसंस्थानानन्यत्वधीः तदानीं नास्तीति सूचितम् । इत्थञ्च संस्थानरूपव्यावृत्तिविशिष्टतयैव प्रतीत्या न संस्थानस्वरूपयोः ऐक्यप्रसङ्ग इति भावः ।

ननु स्वरूपत एव व्यावृत्तिबुद्धिः किन्न स्यात् सौगतमतवदित्यत्राह — **व्यावृत्तिश्चेति** । **चः** शङ्कानिवृत्तौ । **गोत्वादिसंस्थानविशेष विशिष्टतये**ति । स्वेतरव्यावृत्तिः गोत्वादिसंस्थानविशिष्टतयैवेति निश्चीयत इत्यर्थः । तत्र हेतुं प्रदर्शयति — **इत्थमिति प्रतीतेरिति** । अनेन व्यक्तेः गोत्वरूपत्वे गोत्वादेः 'इत्थमि'ति प्रतीतिसिद्धगोत्वादिरूपसंस्थानविशिष्टत्वाभावात् न धर्मधर्म्यभेदसम्भव इति सूचितम् । इदमुपलक्षणम् । यदि स्वत एव व्यावृत्तिबुद्धिः, तर्हि कुत्रापि संशयो नोपपद्यते । धर्मं विहाय स्वरूपग्रहणस्य सर्वत्र विद्यामानत्वात् गोत्वादिसंस्थानस्यापि स्वरूपत्वाविशेषाच्चेति । अस्माकन्तु स्वरूपग्रहणेऽपि दोषवशात्तदितरव्यावर्तकधर्माग्रहणे संशयादिकमुपपद्येतेति । अतः प्रतीतिबलान्न संस्थानस्वरूपयोरैक्यसम्भव इति भावः । नन्वस्तु प्रतीत्या भेदः, युक्त्याऽभेदोऽपि सिध्येदिप्यत्राह - **सर्वत्रेति** । पृथक्सिद्धेष्विवापृथक्सिद्धेष्वपीत्यर्थः । **अत्यन्तभेदः** = अभेदासहिष्णुभेदः । इत्थञ्च 'यत्र विशेषणविशेष्यभावः तत्रैक्याभावः' इति व्याप्त्या प्रकृते संस्थानव्यक्त्योरपि विशेषणविशेष्यभावापन्नत्वेन प्रतीतयोर्नैक्यसम्भवः । अन्यथा जातिव्यक्त्यादिष्विव दण्डदण्ड्यादिष्वप्यभेदः प्रसज्येत इति भावः ।

नन्वेको गौः इत्येकशब्दानुविद्धप्रत्ययबलेनैक्यसाधनं सुशकमिति चेत्तर्हि 'एको दण्डी'ति एकशब्दानुविद्धप्रत्ययबलेन दण्डपुरुषयोरप्यैक्यसाधने प्रवृत्त इव भासि? यदि तत्रैकशब्दो विशेष्यद्वित्वादिनिवृत्तितात्पर्यकः, तर्हि समानमेतदस्माकम् । नन्वस्तु प्रथमपिण्डग्रहणेऽभेदग्रहणस्य एकशब्दानुविद्धप्रत्ययस्य चाभेदसाधकस्य चानुपपत्तिः । अथापि मत्वर्थप्रत्ययनिरपेक्षसमानाधिकरणपदप्रयोगबलेनाभेदस्सिध्येत् । तस्य भेदाभेदसाधकत्वात् । अत्यन्तभिन्नतयाभिमते दण्डादौ हि सामानाधिकरण्यं 'दण्डी अयं 'इति मत्वर्थीयप्रत्ययसापेक्षम् । गोत्वादौ तु न तत्सापेक्षम् । 'अयं गौरि'ति ह्युच्यते । यद्यपि 'अयं गोत्ववानि'ति क्वचित्प्रयुज्यते , अथापि न तत्सापेक्षत्वनियमः । दण्ड्यादौ तु नियमेन तत्सापेक्षतेति वैषम्यम् । तस्मादभेदो दुरपह्नव एवेत्यत्राह—**तत्रेति** । **पृथक्संस्थान संस्थिता** इति । अनेन दण्डादीनां विशेषणत्वमन्तरेणापि पृथगुपलब्धिस्सूचिता । **स्वनिष्ठाः** = पुरुषादीन्प्रत्यपृथक्सिद्धिरहिताः । कालभेदेन पृथक्सिद्धिसूचनाय **कदाचिदि**त्युक्तम् । देशभेदेनापि तत्सूचनाय **क्वचिदि**त्युक्तम् । **गोत्वादयस्तु** इति तुशब्देन दण्डाद्यपेक्षया

**द्रव्यसंस्थानतयैव पदार्थभूतास्सन्तो द्रव्यविशेषणतयाऽवस्थिताः । उभयत्र विशेषणविशेष्यभावस्समानः । तत एव तयो र्भेदप्रतिपत्तिश्च । इयांस्तु विशेषः - पृथक्स्थितिप्रतिपत्तियोग्या दण्डादयः, गोत्वादयस्तु नियमेन तदनर्हा इति ।**

---

गोत्वादीनां वैलक्षण्यं द्योतितम् । वैलक्षण्यप्रकारं दर्शयति — **द्रव्यसंस्थानतयैवे**ति । **एव**कारः गोत्वादीनां पृथक्संस्थान-संस्थितत्वस्वनिष्ठत्वे व्यवच्छिनत्ति ।

अयमाशयः — अत्यन्तभिन्नतयाऽभिमतेषु दण्डादिषु मत्वर्थप्रत्ययापेक्षा पृथक्सिद्धत्वनिबन्धना, न त्वत्यन्त-भिन्नत्वनिबन्धना । एवं गोत्वादिषु मत्वर्थप्रत्ययनिरपक्षता अथक्सिद्धत्वनिबन्धनैव न त्वभेदनिबन्धना । न चापृथक्सिद्धेषु रूपादिषु मत्वर्थीयप्रत्ययसापेक्षताऽस्तीति वाच्यम् । तस्य निष्कर्षकशब्दत्वात् । यदि स्वरूपसंस्थानयोरभेदनिबन्धना, तर्हि 'इदं गोत्वमि'ति प्रत्ययोऽऽवश्यकः । तस्मान्नाभेदः प्रामाणिक इति । अथ मास्तु मत्वर्थीयप्रत्ययसापेक्षत्वनिरपेक्षत्व-मूलकभेदाभेद सिद्धिः । अथापि दण्डगोत्वादिषु पृथक्सिद्धत्वापृक्सिद्धत्ववैषम्यमूलकभेदाभेदसिद्धिर्निष्प्रत्यूहैवेत्यत्र पूर्वोक्तमैक्याभावसाधकं विशेषणविशेष्यभावं स्मारयति - **उभयत्रे**ति । **विशेषणविशेष्यभावस्समान** इति । दण्डपुरुषादिषु दृष्टस्यऽभेदप्रतिकूलाकारस्य विशेषणविशेष्यभावस्य संस्थानस्वरूपयोरपि दर्शनेन नाभेदक्लृप्तिश्शक्या । यदि विशेषण-विशेष्यभाव इवापृथक्सिद्धत्वमप्यभेदे प्रयोजकमित्युच्यते, तर्हि स्वरूपसंस्थानयोरिव स्वरूपगन्धादीनामाप्यभेदप्रसङ्गः । यदि जाति व्यक्त्योरिव धर्मधर्मिणोरप्यभेदो इष्ट एवेत्युच्यते, तर्हि चक्षुषा स्वरूपे गृहीते गन्धरसादिकमपि गृह्येत ।

ननु गन्धत्वरसत्वादिरूपेण गन्धरसाद्यग्रहणेऽपि स्वरूपतो गन्धरसादिग्रहणं स्वरूपग्रहण दशायामिष्टमेवेति चेत्तर्हि गन्धत्वरसत्वादीनां धर्माणां गन्धरसादिधर्मिस्वरूपत्वं नेष्यत इति वक्तुमुद्यतोऽसि । अतो धर्मधर्मिणोरभेदः त्वयैव परित्यक्तः । एवमपृथक्सिद्धस्य विशेषणस्य स्वरूपरूपत्वे 'रूपं घटः', 'गन्धो घटः' इत्यपि प्रतीत्यापत्तिरिति न मत्वर्थीय-प्रत्ययसापेक्षतैव स्यात् । किञ्च 'गोत्ववान् गौरि'त्यादौ गोत्वगोशब्दौ पर्यायौ उत न ? पर्यायत्वे सहप्रयोगानुपपत्तिः । अपर्यायत्वे तु तच्छब्दवाच्ययोर्भिन्नार्थकत्वेन कथं तयोरैक्यसिद्धिः । अतो विशेषणविशेष्ययोर्न क्वचिदप्यैक्यसम्भव इति । एवञ्च विशेषणविशेष्ययोरैक्यस्य प्रतीतिपराहतत्वेन विशेषणविशेष्यभावाधीनभेदप्रतिपत्तिरेव न त्वभेदधीरित्याह — **तत एवे**ति । **तयोः दण्डपुरुषयोः जातिव्यक्त्योश्च भेदप्रतिपत्तिरिति समान** इति लिङ्गव्यत्ययेनानुषज्यते । **चः** विशेषणविशेष्यभावसाम्यसमुच्चायकः । ननु सहोपलम्भनियमस्य का गतिः । दण्डपुरुषयोः क्वचित्सहदर्शनेऽपि न तन्नियमः, स्वरूपसंस्थानयोस्तु तन्नियमः । तस्मादभेदोऽवर्जनीयः । अन्यथोभयत्र सहोपलम्भनियमस्तदभावे वा स्यादित्यत आह — **इयांस्तु विशेष** इति । **पृथक्स्थितिप्रतिपत्तियोग्याः** = पृथक्स्थितियोग्याः पृथक्प्रतिपतियोग्या इत्यर्थः । अत्र **स्थिति**ग्रहणं दृष्टान्तार्थम् । **तदनर्हाः** = पृथक्स्थित्यनर्हत्ववत्पृथक्प्रतिपत्त्यनर्हश्चेत्यर्थः ॥

अयमभिप्रायः - जातिव्यक्त्योस्सहोपलम्भनियमो दृश्यते, दण्डपुरुषयोस्तु न स दृश्यते । अतोऽत्रैव सहोपलम्भ-नियमः नान्यत्रेति सहोपलम्भनियमस्यैक्यसाधकत्वं वदतां भवतां कोऽभिप्रायः ? किमुक्तव्यवस्थासिद्धयर्थमैक्यं परि-कल्प्यते, आहोस्वित्तस्यैक्यनिबन्धनत्वम् । न प्रथमः, सहोपलम्भनियमव्यवस्थासिध्यर्थं ह्यैक्यं परिकल्प्यते । तर्हि भिन्ना-भिन्नत्ववादिनां भिन्नत्वस्याप्यभिमतत्वाद्भिन्नत्वाविशेषेऽप्यत्रैवैक्यं नान्यत्रेति कथमैक्यव्यवस्था क्रियते । ऐक्यस्य स्वाभाविकत्वमभ्युपगम्य तद्व्यवस्थापकतयाऽन्यस्यान्वेषणं नास्तीति चेत्तर्हि सहोपलम्भनियमस्यैव स्वभाविकत्वम-भ्युपगम्यताम् । किमर्थः तद्व्यस्थापकतया ऐक्यस्याभ्युपगमः । अतः क्वचिदेव सहोपलम्भनियमः, क्वचिन्नेति स्वभाव-सिद्धत्वान्न भिन्नयोरैक्यसम्भवः । न द्वितीयः, धीसाहित्यनियमस्यापृथक्सिद्धि निबन्धनत्वेनैक्यनिबन्धनत्वाभावात् । न चापृथक्सिद्धत्वमेवैक्यमित्यैक्यनिबन्धनत्वं कुतो नाभ्युपेयत इति वाच्यम् । ऐक्यस्यापृथक्सिद्धत्वरूपत्वे धीसाहित्य-

**अतो 'वस्तुविरोधः प्रतीतिपराहत' इति प्रतीतिप्रकारनिह्नवादेवोच्यते । प्रतीतिप्रकारो हि, इदमित्थमित्येव सर्वसम्मतः । तदेतत्सूत्रकारेण, 'नैकस्मिन्नसम्भवात्'** (उ.मी.२.२.३१) **इति सुव्यक्तमुपपादितम् ॥ अतः प्रत्यक्षस्य सविशेषविषयत्वेन प्रत्यक्षादिदृष्टसम्बन्धविशिष्टविषयत्वादनुमानमपि सविशेषविषयमेव । प्रमाणसङ्ख्याविवादेऽपि सर्वाभ्युपगतप्रमाणानामयमेव विषय इति न केनापि प्रमाणेन निर्विशेषवस्तुसिद्धिः ।**

---

नियमस्य तन्निबन्धनत्वाभ्युपगमेपि क्षतिविरहात् । भिन्नस्य वस्तुनः लोकाभिमताभिन्नत्वस्य भवताप्यसाधनात् । वस्तुतस्तथा सति भेदस्यैव अभेदत्वेन सङ्केतकरणमपि शक्यम् । अपि च सहोपलम्भनियमः भेदसाधक एव । साहित्यरूपसहत्वस्य प्रतियोग्यनुयोगिसापेक्षत्वात् प्रतियोग्यनुयोगिनोश्च भेदात् । वस्तुतस्तस्य सम्प्रतिपन्ने भिन्नेऽभिन्ने चादर्शनादुभयव्यावृत्तत्वेनासाधारणानैकान्तिकत्वमेवेति नोभयसाधकत्वम् । अपि च वस्तुनोस्सहोपलम्भनियमो हि सहत्वनियममन्तरा न सम्भवति । सहत्वनियमस्तु भेदस्यैव साधक इति सहोपलम्भनियमोपि भेदसाधक एव । किञ्च भ्रमस्थले व्यक्तिमात्रग्रहणान्न जातिव्यक्त्योस्सहोपलम्भनियमोऽपि । अतो धीसाहित्यनियमस्यैक्यसाधकत्वन्न युक्तमिति ॥

एवं जातिव्यक्त्यादि भेदाभेदानां निराकृतत्वेन यदुक्तं भेदाभेदयोरेकत्रासामानाधिकरण्ये नास्माभिरापद्यमानो विरोधो उपलम्भनिरस्त इति तत्प्रतीतिप्रकारमपह्नुत्यैव वक्तव्यन्न तु प्रतीतिमवलम्ब्य, सर्वप्रतीतेरपि विशिष्टविषयकत्वादिति भेदाभेदवादिनमुपालभते — **अत** इति । **वस्तुविरोधः** भेदाभेदवस्तुनोर्विरोधः । तर्हि प्रतीतिप्रकारः कीदृशः इत्यत्राह — **प्रतीतिप्रकार** इति । **हिः** 'इदमित्थमि'ति प्रतीतेः प्रसिद्धिसूचकः । **सर्वसम्मत** इति । प्रामाणिकानां सर्वेषां सम्मत इत्यर्थः । प्रथमाक्षसन्निपातजन्यनिर्विकल्पकस्यापि सविकल्पकवत् 'इदमित्थमि'ति प्रतीतिरूपत्वं उक्तयुक्त्या प्रामाणिकैरवश्यमभ्युपेयमिति तादृशप्रतीतौ संस्थानस्वरूपयोः विशेषणविशेष्यभावापन्नत्वेन विषयत्वात् विशेषणविशेष्यभावस्य ऐक्याभावव्याप्यत्वेन नाभेदसिद्धिः शङ्कितुमपि शक्येति भावः । एवं भेदाभेदवादस्यातिजघन्यत्वेनास्यानुपपन्नत्वं सूत्रकारेणाप्युपपादितमित्याह - **तदेतदि**ति । 'अंशो नाना व्यपदेशादन्यथा चापि दाशकितवादित्वमधीयते एके', 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च', 'अविभागेन दृष्टत्वात्' इत्यादिसूत्रैः सूत्रकृतोऽप्यत्यन्तभेदोऽनिष्ट इति प्रतीयत इति शङ्कानिरासाय **सुव्यक्तमि**त्युक्तम् । एतेन सुव्यक्तार्थेन सूत्रेण सूत्रकृन्मतस्य निश्चेतव्यत्वात् । अस्पष्टार्थकसूत्राणां तदनुरोधेनार्थवर्णनावश्यंभावाच्चात्यन्ताभिमतात्यन्तभेदरूपार्थानुसारेणैव तेषां सूत्राणामन्यथैव यथान्यायमर्थो वर्णनीय इत्युक्तं भवति । एवं प्रसङ्गाद्भेदाभेदपक्षं निराकृत्य साक्षात्प्रस्तुतं प्रमाणस्य विशिष्टविषयकत्वं शब्दप्रत्यक्षयोरिवानुमानस्यापि स्थापयति - **अत** इति । **अत** इति प्रत्यक्षस्य सविशेषविषयत्वे हेतुप्रदर्शनम् । **प्रत्यक्षादिदृष्टे**ति - प्रत्यक्षादिदृष्टो यो व्याप्तिरूपोलिङ्गसम्बन्धः तद्विशिष्टवह्निविषयकत्वात् इत्यर्थः । यद्वा, प्रत्यक्षादिना दृष्टलिङ्गसंबन्धं यत्साध्यं तद्विशिष्टधर्मिविषयकत्वादित्यर्थः । ततश्च व्याप्तिविशिष्टवह्निविषयकत्वात्तादृशवह्निविशिष्टपर्वतविषयकत्वाच्च नानुमानस्य निर्विशेषविषयकत्वमिति भावः । हेतुसाध्ययोर्वैलक्षण्यं पूर्ववद्बोध्यम् । **प्रत्यक्षादी**त्यादि पदेन वैदिकादिशब्दपरिग्रहः । **प्रत्यक्षस्य सविशेषविषयकत्वेने**त्युक्तिः तादृशप्रत्यक्षमूलकानुमानस्य सविशेषविषयकत्वावश्यंभाव सूचनाय । **सविशेषविषयमेवे**त्येवकारः अनुमानस्य प्रत्यक्षान्तर्भाववादिनामपि विशिष्टविषयकत्वं दुरपह्नवमिति व्यनक्ति । नन्वस्तु शब्दप्रत्यक्षानुमानानां विशिष्टविषयकत्वम्, अथाप्युपमानार्थापत्त्यनुपलब्ध्यैतिह्यादिभिः प्रमाणान्तरैरस्मदिष्टं सिध्येदित्यत्राह — **प्रमाणे**ति । **अयमेव विषयः** = अयमेव न्यायः । सविशेषपदार्थ एव विषयः इति **वार्थः** ।

अयं भावः - प्रत्यक्षादित्रिकमेव प्रमाणम् । अन्येषान्तूक्तेष्वेवान्तर्भावः । अतो न तेषामविशिष्टविषयकत्वसम्भव इति । उक्तञ्च मनुना 'प्रत्यक्षमनुमानञ्च शास्त्रञ्च विविधागमम् । त्रयं सुविदितं कार्यमिति' । इत्थञ्च सर्वेषामपि प्रमाणानां सविशेषवस्तु विषयकत्वेन निर्विशेषवस्तुसिद्धिर्न केनापि प्रमाणेन भवितुमर्हतीत्युपसंहरति - **न केनापी**ति । **न**

**वस्तुगतस्वभावविशेषैस्तदेव वस्तु निर्विशेषमिति वदन् जननीवन्ध्यात्वप्रतिज्ञायामिव स्ववाग्विरोधमपि न जानाति ॥**

**यत्तु प्रत्यक्षं सन्मात्रग्राहित्वेन न भेदविषयं, भेदश्च विकल्पासहत्वाद्दुर्निरूप इत्युक्तम् - तदपि जात्यादि-विशिष्टस्यैव वस्तुनः प्रत्यक्षविषयत्वाज्जात्यादेरेव प्रतियोग्यपेक्षया वस्तुनः स्वस्य च भेदव्यवहारहेतुत्वाच्च दूरोत्सारितम्। संवेदनवद्रूपादिवच्च परत्र व्यवहारविशेषहेतोः स्वस्मिन्नपि तद्व्यवहारहेतुत्वं युष्माभिरभ्युपेतं भेदस्यापि सम्भवत्येव। अत एव च नानवस्थाऽन्योन्याश्रयणञ्च।**

---

**केनापी**त्यनेन निर्विशेषप्रमाणस्य दुर्वचत्वमुक्तम्। एवं सर्वप्रमाणानां विशिष्टविषयकत्वं स्थिरीकृत्य निर्विशेषवस्तुवादिन-मुपालभते — **वस्तुगते**ति। स्वाभीष्टसाधकहेतोः धर्मिस्वरूपत्वे साधकत्वन्न सम्भवतीति सूचनाय **स्वभावे गतत्व-**विशेषणं पृथगुक्तम्। तदेव स्वाभिमतहेत्वादिरूपानेकविशेषास्पदमेव। **स्ववाग्विरोधमपि न जानाती**ति। अयं भावः - उक्तानां प्रमाणानां युक्त्याभासैर्यदि निर्विशेषत्वं स्थाप्यते, तर्हि तैरेव हेतुभिस्तेषां सविशेषत्वसिध्या कथं निर्विशेष-त्वसाधनं, **हेत्वादिविशेषयुक्तं प्रमाणं विशेषसामान्याभाववदि**त्युक्तिर्विरुध्देति किन्न प्रतिभाति। अतो भवदुक्तनिष्कर्ष-हेतुभिरेव सविशेषत्वावश्यम्भावात् न विशेषसामान्याभाव साधनसम्भव इति ॥

अथ, यदुक्तं शास्त्रस्य निर्विशेषब्रह्मबोधकत्वं, शास्त्रप्रत्यक्षयोर्विरोधे शास्त्रस्य बलीयस्त्वं, भेदस्य प्रत्यक्षाविषयत्वेन दुर्निरूपत्वेन च प्रत्यक्षं सन्मात्रब्रह्मग्राहीति, न वस्तुतः शास्त्रप्रत्यक्षयोर्विरोधश्चेति, तस्य प्रातिलोम्येन दूषणं ब्रुवाणस्तत्रादौ भेदस्य दुर्निरूपत्वेन प्रत्यक्षाविषयत्वेन प्रत्यक्षस्य सन्मात्रग्राहित्वमेवेति पक्षमनूद्य निराकरोति — **यत्तु** इति। **जात्यादि-विशिष्टस्यैवे**ति। अनेन जात्यादिरूपभेदस्य धर्मिस्वरूपत्वन्नास्तीति सूचितम्। **प्रत्यक्षाविषयत्वादि**ति। 'इदमित्थमि'-त्यादिप्रतीतौ जात्यादिविशिष्टवस्तुन एव विषयत्वसमर्थनादिति भावः ॥

**जात्यादेरेवे**ति। अनेन जात्यादिरूपभेदस्य प्रतियोग्यप्रतीतावपि स्वरूपतः प्रतीतिसम्भवस्सूचितः। भेदत्वेन प्रतीतावेव प्रतियोग्यपेक्षायास्तन्त्रत्वादिति भावः। **एवकारः** व्यावृत्तिरूपजातेः व्यावृत्तिरूपधर्मान्तरनैरपेक्ष्यञ्च बोधयति। **प्रतियोग्यपे-क्षया** = जात्याश्रयधर्म्यन्तर-तद्धर्मस्वधर्मरूपप्रतियोग्यपेक्षया। **दूरोत्सारित**मिति। गोत्वलक्षणसंस्थानरूपजात्यादेश्च भेदत्वस्वीकाराज्जात्यादेश्च प्रतियोगिस्मरणसव्यपेक्षत्वाभावात् स्वरूपवत् तस्यापि इतरज्ञाननिरपेक्षस्य युगपद्ग्रहणसम्भवेन सुग्रहत्वमेवेति, न सन्मात्रब्रह्मविषयत्वं प्रत्यक्षस्येति भावः। ननु जात्यादिरूपभेदस्य, स्वाश्रयवस्तुनः तदितरभेदव्यवहार-हेतुत्वसम्भवेऽपि स्वस्य स्वेतरभेदव्यवहारे कथं हेतुत्वमित्यत्र भवदभ्युपगतसम्वेदनरूपादीनामिव तस्यापि स्वपरनिर्वाहक-त्वं सम्भवतीत्याह — **संवेदनवदि**त्यादि। एवं जात्यादिधर्मस्यैव भेदत्वेन तस्य धर्मिस्वरूपत्वानभ्युपगमेन तस्य स्वपर-निर्वाहकत्वाङ्गीकारेण उक्तयुक्त्या विशिष्टग्रहणस्य च स्वीकार्यत्वेन च नानवस्थादि दोषाः प्रादुःष्युरित्याह—**अत** इति। अयं भावः- जात्यादिरूपभेदस्य स्वपरनिर्वाहकत्वाङ्गीकारेण नानवस्थाया अवकाशः। विशिष्टग्रहणस्यैव भेदग्रहणत्वान्ना-न्योन्याश्रयस्य च प्रसङ्गः। प्रत्यक्षस्य च क्रमेणोभयग्राहित्वम् अन्यतरग्राहित्वं वा न स्वीक्रियते। किन्तु 'इदमित्थमि'ति प्रतीतिबलात् स्वरूपभेदयोरुभयोर्युगपदेवग्रहणमिष्यते। अतो नोक्तदोषाणामवकाश इति।

ननु भेदस्य धर्मस्वरूपत्वेऽपि भेदशब्दस्य गोत्वादिशब्दानाञ्च पर्यायत्वं स्यात्। न स्यात्। गोत्वे हि व्यावर्तकत्व-लक्षणभेदत्वरूपप्रवृत्तिनिमित्तवशात् भेदशब्द प्रयुज्यते। अत एव गोत्वस्येव घटत्वपटत्वादीनामपि भेदत्वे तस्मात् गोत्वभेदशब्दयोर्न पर्यायत्वम्। एवं गोत्वशब्दो विशेषशब्दः भेदशब्दश्च सामान्यशब्दः। अतोऽपि न पर्यायत्वावकाशः। ननु प्रत्यक्षज्ञानस्यैकक्षणमात्रवृत्तित्वमेवेष्यते। इत्थञ्च जात्यादिलक्षणभेदग्रहणस्य प्रतियोगिस्मरणसापेक्षत्वाभावेऽप्याश्रय-

**एकक्षणवर्तित्वेऽपि प्रत्यक्षज्ञानस्य तस्मिन्नेव क्षणे वस्तुभेदरूपतत्संस्थानरूपगोत्वादेर्गृहीतत्वात्**

ग्रहणसापेक्षत्वात्प्रथममाश्रय एव गृह्येत। एवं द्वितीयक्षणे आश्रयज्ञानाभावेन न तदापि संस्थानरूपभेदग्रहणम्। एवं तृतीयेऽपीति न भेदस्य प्रत्यक्षविषयत्वसम्भव इत्यत्र दत्तोत्तरत्वं मन्यमानः सिंहावलोकनन्यायेन पुनस्समाधानमाह — **एकेति**। **अपि**शब्दः प्रत्यक्षस्य त्रिचतुरक्षणस्थायित्वं व्यनक्ति। **क्षणान्तरग्राह्यं न किञ्चिदिह तिष्ठतीति**। अयं भावः - जातिगुणद्रव्यादीनां क्रमेणेन्द्रियसम्प्रयोगाभावाद्देशादिव्यवधानाभावाच्च न क्रमेण तत्तद्विषयकज्ञानसम्भवः। किन्तु विद्यमानं योग्यं सर्वमपीन्द्रियसन्निकर्षवशात् ज्ञानं स्वमहिम्ना विषयीकरोति। अतः क्षणान्तरग्राह्यस्यैव विषयस्याभावेन न क्रमिकज्ञानसम्भवः येन भेदग्रहणस्यानुपपन्नतां ब्रवीषि। तस्मान्नैकेन्द्रियग्राह्यस्थलेऽऽश्रयज्ञानस्य हेतुत्वकल्पनसम्भव इति।

यत्तावदादौ भेदस्य धर्मित्वं धर्मत्वं वेति विकल्प्य दूषणमुक्तम्, तत्रोच्यते—किमत्र भवद्भिः भेदप्रतीतेरेवापह्नवः क्रियते, उत भेदप्रतीतिकारणापह्नवः, आहोस्विद्भेदप्रतीतेः कार्यत्वापह्नवः, यद्वा तत्कारणस्य दुर्निरूपत्वं, उत तादृशप्रतीते र्निर्विषयत्वम् अथवा तस्या बाध्यविषयत्वम्। न प्रथमः, भेदप्रतीतेरेवापह्नवे 'युष्मदस्मत्प्रत्ययगोचरयोः ... इतरेतरभावानुपपत्तिरित्यादि' भवदीयभाष्यविरोधात्। न द्वितीयः, कार्यभूतभेदप्रतीतिसत्त्वे तत्कारणस्यावश्यंभावात्। न च तस्या अकार्यत्वेन निर्वाहः। नित्यत्वस्य तुच्छत्वस्य वा प्रसङ्गात्। त्वया च तयोरनभ्युपगमात्। एतेन तृतीयपक्षोऽपि निरस्तः। नापि चतुर्थकल्पः, भेदप्रतीतिकारणत्वेनैव कस्यचिन्निरूपणसम्भवदन्वयव्यतिरेकाभ्यामिन्द्रियादिसन्निकर्षस्यैव तादृशप्रतीतिकारणत्वसम्भवात्। अविद्याकारणकत्वस्य भवद्भिस्स्वीकाराच्च। नापि निर्विषयत्व पक्षः पञ्चमो घटते। अस्य प्रतीत्यपह्नवपक्षे एव पर्यवसानेन तत्पक्षोक्तदूषणस्य जागरूकत्वात्। भेदप्रतीतेर्निर्विषयकत्वे बाध्यविषयप्रतीतेरेवाभावेन बाधकज्ञानवैयर्थ्यापत्तेः, परमतविजयप्रसङ्गाच्च। नापि बाध्यविषयकत्वपक्षोऽन्तिमः। तथा सति बाधकप्रमाणस्य किं भेदग्राहित्वम्, उत भेदाभावग्राहित्वं, आहोस्वित् यत्किञ्चिद्ग्राहित्वमपि नास्ति। सर्वस्मिन्नपि पक्षे भेदः स्थिरीकृत एव स्यात्। भेदाभावस्यापि हि सिद्धिः भेदाद्भिन्नत्वेनैव। यदि न भिन्नत्वेन, तर्हि भेदरूपत्वसिध्या न सुतरां भेदनिषेधसम्भवः। तस्माद्भेदस्य दुर्निरूपत्वकथनन्न प्रामाणिकम्। अपि च भेदमेवानङ्गीकुर्वतः धर्मीधर्मो वेति विकल्पनमेव न घटते। तथाहि - किं धर्मधर्मिणोर्भेदमङ्गीकृत्य विकल्पः, उतानङ्गीकृत्य। न प्रथमः, तथा सति भेदाङ्गीकारेण विकल्पस्य निष्प्रयोजनत्वात्। न द्वितीयः, विकल्पस्यैवानुत्थानात्।

ननु प्रतीतिसिद्धधर्मधर्मिभेदमवलब्म्य विकल्पः। दूषणन्तु न प्रतीतिसिद्धभेदस्वरूपस्य, येन प्रतीतिसिद्धभेदस्य निषेधाद्वस्तुनोऽभावाद्विकल्पानुपपत्तिः प्रसज्येत इति चेत्, तर्हि परमार्थभेदस्य दूषणमित्यायातम्। ततश्च न परमार्थस्य निषेधसम्भवः। अन्यथा ब्रह्मणोऽपि निषेधापत्तेः। न च प्रतीतिसिद्धभेदस्य परमार्थतैव निषिध्यत इति वाच्यम्। तथा सति प्रतीतिसिद्धभेदस्यापरमार्थत्वेन तन्मूलकविकल्पस्याप्यनुपपत्तेः। परमार्थतो धर्मिधर्मयोरभेदापत्तेश्च। एतेन परमतसिद्धभेदोपजीवनेन विकल्प इत्यपि निरस्तम्। यदि परमतं प्रामाणिकं, तर्हि न तत्सिद्धभेददूषणसम्भवः, प्रामाणिकत्वस्य त्वयाप्याङ्गीकृतत्वात्। यद्यप्रामाणिकं तर्हि तेनापि परमतेन भेदासिद्धेः तन्मूलकविकल्पोऽनुपपन्नः। तस्मात्प्रामाणिकमेव भेदस्वरूपम्। अपि च ब्रह्माद्वैतवादिनां भवतां किमभेदः स्वरूपम्, अहोस्विद्धर्मः। अभेदस्य स्वरूपत्वे भेदभ्रम एव न स्यात्। भेदविरोधिनोऽभेदस्य स्वरूपस्य ग्रहणदशायामारोपासम्भवात्। 'अभिन्नो घटः' इत्यादेः पर्यायत्वप्रसङ्गाच्च। धर्मत्वे, भेदोऽङ्गीकृत एव स्यात्। धर्मधर्मिभावस्य भेदव्याप्तत्वात्। एवं धर्मरूपाभेदस्य धर्म्यपेक्षया भेदोऽभेदो वा। आद्ये भेदसिद्धिर्निष्प्रत्यूहा, अन्त्ये स चाभेदः स्वरूपं धर्मो वा, स्वरूपत्वे पूर्वोक्तदोषः। धर्मत्वेऽनवस्था। अतो भेदस्वरूपवदभेदस्वरूपमपि दुर्निरूपमेव भवन्मते।

नन्वस्तु भेदस्य सुनिरूपत्वम्। अथापि स किं स्वरूपमुत धर्मः, इत्यत्र किं समाधानमिति चेत्? श्रूयताम्। भेदो

**क्षणान्तरग्राह्यं न किञ्चिदिह तिष्ठति। अपि च सन्मात्रग्राहित्वे 'घटोऽस्ति' 'पटोऽस्ति' इति विशिष्टविषया प्रतीतिर्विरुध्यते। यदि च सन्मात्रातिरेकिवस्तुसंस्थानरूपजात्यादिलक्षणो भेदः प्रत्यक्षेण न गृहीतः किमित्य-**

हि व्यावृत्तव्यवहारहेतुः, तत्त्वञ्च स्वरूपस्य धर्मस्य चेति यथासम्भवमिष्यते। न च शुक्तित्वादिधर्माणां व्यावृत्तव्यवहार-हेतुत्वेन भेदत्वसम्भवेऽपि धर्मिणः कथं भेदत्वसम्भवः, स्वरूपग्रहणेऽपि भ्रमोत्पत्त्या तस्या भ्रमसहत्वादिति वाच्यम्। क्वचिदाश्रयविशेषस्यापि इतरभेदव्यवहारहेतुत्वेन भेदत्वसम्भवात्। सौरभादिविषये हि स्वाश्रयद्रव्यस्य स्वेतरभेदव्यवहार-हेतुत्वं दृष्टम्। तत्र हि सौरभविशेषे गृहीते कस्येदमिति सन्देहे आश्रयदर्शनेन एतदीयमिति ज्ञात्वाऽन्यदीय गन्धात् भेद-व्यवहारः। तस्माद्धर्मवद्धर्मिणोऽपि क्वचिद्भेदत्वमस्ति। एवं स्वरूपधर्मयोर्भेदत्वाङ्गीकारात् संवेदनादिवद्भेदस्यैव स्वपर-निर्वाहकत्वाच्च नानवस्थादिदोषावकाशः। यदपि च पूर्वं धर्मधर्मित्वादिग्रहाद्भेदग्रहः, भेदग्रहे च धर्मधर्मित्वादिग्रहः इत्यन्योऽन्याश्रय इत्युक्तं, तदपि भेदस्वरूपमजानतः स्वकपोलकल्पितम्। भेदत्वस्य व्यावृत्तव्यवहारहेतुत्वरूपत्वेन, धर्मधर्मित्वादिग्रहस्यैव भेदग्रहत्वेन तयोर्भेदाभावात्। न च तर्ह्यात्माश्रय इति वाच्यम्। तद्ग्रहस्य प्रत्यक्षादिसामग्र्यधीनतया तत्रान्यस्य हेतुत्वाभावात्। एवं प्रत्यक्षस्य सन्मात्रग्राहित्वमपि न सम्भवति। तथा सति 'घटोऽस्ति', 'पटोऽस्ती'त्यादि विविधप्रतीतिव्यवहारयोर्विलोपप्रसङ्गात् 'सत्सदि'त्येव प्रतीतिव्यवहारापत्तेश्च।

ननूक्तं 'घटोऽस्ती'त्यादौ स्वरूपतद्भेदयोरुभयोर्न प्रत्यक्षविषयत्वं, किन्तु स्वरूपमात्रस्यैव। भेदस्य त्वविद्या-माहात्म्यादिति इति चेत्तर्हि स्वरूपभेदयोरैक्ये का क्षतिः? प्रतियोगिस्मरणसव्यपेक्षत्वतदभावाभ्यां वैलक्षण्यमेव वक्तव्य-मिति नैक्यसम्भव इति चेन्न, यतस्स्ववाग्विरोधमपि न जानन्ति भवन्तः। भेद एव हि भवतां प्रामाणिकः, येनैक्यासिद्धिं ब्रूयाः। अत एव हि सतोऽनुभूतिविषयत्वेनानुभूतिभिन्नत्वशङ्कां परिहरसि। तदुक्तं - 'भेदापह्नवलोभेन भेदं विधिनिषेधयोः। स्वयं समर्थयन्मूर्खः स्ववाग्वज्रेण खण्डित' इति। वस्तुतो वयमनैक्यमङ्गीकृत्यापि समादध्महेस्वरूपभेदयोर्युगपत्क्रमेण वेत्यत्र योग्ययोस्स्वरूपभेदयोः युगपदेव ग्रहणम्। भाषितश्च **एकक्षणवर्तित्वेपी**त्यादिना। गोत्वादेरेव भेदत्वेन भेदरूपत्वो-क्तिश्च। न च कथं युगपद्ग्रहणं भेदज्ञानस्याश्रयज्ञानसापेक्षत्वादिति वाच्यम्। सहोपलम्भ स्वीकारेणानुपपत्त्यभावात्। न च प्रतियोगिज्ञानसापेक्षत्वं युगपद्ग्रहणविरोधि, अनभ्युपगमात्। ननु प्रतियोगिज्ञाननिरपेक्षस्य कथं भेदत्वं? तर्हि भेदत्वमेव नास्तीति घटस्येव तद्गतघटत्वादेरपि ग्रहणं स्यादेव। वस्तुतः घटत्वादिरूपाणां स्वरूपतो गृह्यमाणानां न प्रतियोग्यपेक्षा। भेदत्वेन तद्गतधर्मेण ग्रहणे तु अस्ति तदपेक्षेति न कश्चिद्दोषः। वक्ष्यति चैतदुत्तरत्र। तस्मान्न सन्मात्रग्राहित्वं प्रत्यक्षस्य।

एवं प्रत्यक्षस्य सन्मात्रग्राहित्वे तन्मूलकानां सर्वेषामपि प्रमाणानां सन्मात्रग्राहित्वमेव प्रसज्येत। ततश्च भेद व्यवहारादीनामपि विलोपप्रसङ्गः। न च भ्रान्त्या भेदव्यवहार इति वाच्यम्। भ्रान्तावपि प्रत्यक्षवत् क्रमयौगपद्यादि विकल्पानुपपत्त्या भेदग्रहासम्भवः। नन्वनुपपन्नतैकवेषायामविद्यारूपभ्रान्तौ नैतादृशविकल्पप्रसरणं युक्तमिति चेत्, किं त्वमनुपपन्नैकवेषत्वं भूषणमिति मन्यसे येनैवं ब्रवीषि। हन्त! तर्ह्यनुपपनन्नैकवेषाविद्यामूलकप्रत्यक्षादेरपि भेदग्राहकत्व सम्भवादलं प्रयासेन। अतो न भेदादिव्यवहारस्य भ्रान्त्यधीनत्वसम्भव इति।

एवं प्रत्यक्षस्य भेदग्राहित्वमुपपादितम्। अथ भेदग्राहित्वाभावे बुद्धिप्रवृत्तिव्यवहारविशेषभङ्गाः प्रदर्श्यन्ते—**अपि चे**त्यादिना। **सन्मात्रग्राहित्व**इति। **मात्र**पदेन भेदग्राहित्वाभाव उक्तः। **विरुध्यत** इति। अविद्यामाहात्म्याद्विशिष्टविषयकत्व निर्वाह उक्तयुक्त्याऽनुपपन्न इति भावः। **यदि चे**त्यत्र **चः** सतो गृहीतत्वसूचकः। **किमिती**ति। अयं भावः - अश्वात् भेदस्य विरुद्धाकारस्य महिषदर्शने विषयत्वे तेन निवृत्तिर्वक्तुं युक्ता। न हि महिषत्वादिभेदविषयकत्वमिष्यते भवद्भिः, सन्मात्रब्रह्मविषयकत्वस्वीकारात्। न च महिषदर्शनेऽश्वत्वविरुद्धमहिषत्वस्याविषयत्वेऽपि तद्विरुद्धास्तित्वस्य विषयत्वेन निवृत्तिर्युक्तैवति वाच्यम्। अस्तित्वस्य महिषत्वविरुद्धत्वाभावात्। अन्यथा अश्वार्थिनोऽश्वदर्शनेनापि निवृत्तिस्स्यात्।

**श्वार्थी महिषदर्शने(नेन) निवर्तते। सर्वासु प्रतिपत्तिषु सन्मात्रमेव विषयश्चेत् - तत्तत्प्रतिपत्तिविषयसहचारिणस्सर्वे शब्दा एकैकप्रतिपत्तिषु किमिति न स्मर्यन्ते? किञ्च, अश्वे हस्तिनि च संवेदनयोरेकविषयत्वेन उपरितनस्य गृहीतग्राहित्वाद्विशेषाभावाच्च स्मृतिवैलक्षण्यं न स्यात्। प्रतिसंवेदनं विशेषाभ्युपगमे प्रत्यक्षस्य विशिष्टार्थविषयत्वमेवाभ्युपगतं भवति। सर्वेषां संवेदनानामेकविषयतायामेकेनैव संवेदनेनाशेषग्रहणादन्धबधिराद्यभावश्च प्रसज्यते। न च चक्षुषा सन्मात्रं गृह्यते ; तस्य(रूप)रूपिरूपैकार्थसमवेतपदार्थग्राहित्वात्। नापि**

---

अश्वत्वविरुद्धास्तित्वोपलम्भात्। अतोऽश्वदर्शनेनानिवृत्त्या महिषदर्शनेन निवृत्त्या चास्तित्वन्न विरुद्धम्। अत्र **किमिति महिषदर्शनेन निवर्तत** इत्यनेन 'किमिति अश्वदर्शनेन न निवर्तत' इत्यपि सूचितम्। यद्वा - **अश्वार्थी**त्यस्याश्वदर्शनार्थीत्यर्थः। **महिषदर्शने - न** इति पदच्छेदः। ततश्चाश्वदर्शनार्थी महिषदर्शने सति किमिति न निवर्तते। अश्वदर्शनविषयभूतास्तित्वस्य महिषदर्शने सत्यप्युपलब्ध्या तत एव निवृत्तेरावश्यकत्वात्। प्रत्युताश्वदर्शनार्थमनिवृत्तः प्रवर्तत एव। अतो न प्रत्यक्षस्य भेदाग्राहित्वमिति भावः। **किमिति न स्मर्यन्त** इति वाच्यविशेषदर्शनस्य एकसम्बन्धिज्ञानमपरसम्बन्धिनं स्मारयतीति न्यायेन वाचकविशेषस्मारकत्वावश्यंभावादिति भावः। 'घटो अस्ति', 'पटोऽस्ति' इत्यादिसर्वप्रतीतीनामपि ब्रह्ममात्रविषयकत्वेन 'घटोऽस्ती'ति व्यवहारस्यापि ब्रह्मबोधकत्वम्। 'पटोऽस्ती'त्यादेरपि ब्रह्मबोधकत्वमेव। ततश्च 'घटोऽस्ती'ति प्रतिपत्तौ व्युत्पन्नस्य 'घटोऽस्ती'ति शब्दस्येव 'पटोऽस्ती'त्यादिशब्दानामपि स्मरणं स्यात्। तद्व्यवहारोऽपि प्रसज्येत। तच्च तेऽनिष्टमिति भावः।

एवमन्यदप्यनिष्टमाह - **किञ्चे**ति। **एकविषयकत्वेन** = सन्मात्रविषयकत्वेन। इदञ्च गृहीतग्राहित्वे हेतुः। **गृहीतग्राहित्वा**दिति। आपाद्यमानस्मृत्यवैलक्षण्ये हेतुप्रदर्शनम्। **विशेषाभावा**दिति प्रत्यभिज्ञाव्यावर्तकं स्मृतिवैलक्षण्यन्न स्यादिति। अयं भावः - अश्वज्ञानस्येव हस्तिज्ञानस्यापि सन्मात्रब्रह्मविषयकत्वेनाश्वज्ञानानन्तरजातहस्तिज्ञानादेः स्मृत्तित्वमेव स्यादिति। यद्यपि संस्काराजन्यत्वात् स्मृतीत्वापादनं दुर्घटम्, अथापि अश्वज्ञानस्य यादृशव्यवहारहेतुत्वं तादृशव्यवहारहेतुत्वस्याश्वस्मृताविव समानविषयकत्वेन हस्त्यादिविज्ञानेऽपि सत्त्वात् हस्त्यादिविज्ञानस्याश्वस्मृतिवैलक्षण्यन्न स्यादित्याभिप्रायः। अत एव स्मृतित्वं स्यादित्यनुक्त्वा **स्मृतिवैलक्षण्यन्न स्या**दिति भाषितम्। ननु सर्वेषां ज्ञानानां सन्मात्र ब्रह्मविषयकत्वमभ्युपगच्छतां नेदमनिष्टमिति चेत्तर्हि 'घटोऽस्ती'ति प्रयोगे 'पटोऽस्ती'त्याद्यपि व्यवह्रियेत इति सर्व व्यवहारविलोपप्रसङ्गः ॥

यदि तु देशकालादिविषयविशेषवैलक्षण्यमिष्यते तर्हि विशिष्टविषयकत्वाभ्युपगम पक्षपात एव स्यादित्याह - **प्रति-संवेदनमि**ति। **विशिष्टार्थविषयत्वमेवे**ति। अयं भावः - देशकालादिभानमात्रस्याङ्गीकारे स्मृतावपि तत्सत्वेन पुनश्च तद्वैलक्षण्यन्न सेत्स्यतीत्यश्वत्वहस्तित्वादिविशिष्टतत्तत्पदार्थविषयकत्वमेवाभ्युपेत्यमिति। एवं ज्ञानवैषम्याभाव आपादितः, अथ ज्ञातृष्वन्धादिवैषम्याभावः प्रसज्यत इत्याह - **सर्वेषामि**ति। **संवेदनानां** = प्रत्यक्षज्ञानानाम्। **अशेषग्रहणात्** = सद्व्यतिरिक्तस्य ग्राह्यस्यानुपलब्धेरित्यर्थः। अयं भावः - यथैकेन चक्षुषा विहीनस्य काणस्यान्येन चक्षुषा तदिन्द्रियग्राह्यरूपादे ग्रहणन्नान्धत्वं तथैव चक्षुरिन्द्रियशून्यस्य तदिन्द्रियग्राह्यसतः श्रोत्रादिना ग्रहणसम्भवेन नान्धत्वस्य सम्भवः। एवमन्यस्यापि। न हि सद्व्यतिरिक्तो विषयोऽभ्युपगतो भवद्भिः येन तत्तद्विषयग्राहकेन्द्रियव्यवस्थासिध्या अन्धत्वात्वादिव्यवस्थां कल्पयेरिति।

एवं प्रत्यक्षस्य भेदग्राहित्वं, भेदग्राहित्वाभावे धीप्रवृत्तिव्यवहारभङ्गश्च उक्ते। अथ प्रत्यक्षज्ञानजनकेन्द्रियाणां सन्मात्रग्राहकत्वाभावेन तज्जन्यज्ञानस्य न सन्मात्रविषयकत्वसम्भव इत्याह **न चे**ति। **चः** समुच्चये। **रूपे**ति। **रूपैकार्थसमवेताः** = रूपसमानाश्रयसमवेताः। रूपेण सहैकस्मिन्नर्थे आश्रये समवेताः आश्रिता इति यावत्। इदं रूपस्या-

**त्वचा ; स्पर्शवद्वस्तुविषयत्वात् । श्रोत्रादीन्यपि न सन्मात्रविषयाणि ; किन्तु शब्दरसगन्धलक्षणविशेष-विषयाण्येव । अतस्सन्मात्रस्य ग्राहकं न किञ्चिदिह दृश्यते । निर्विशेषसन्मात्रस्य(च)प्रत्यक्षेणैव ग्रहणे तद्विषयागमस्य प्राप्तविषयत्वेनानुवादकत्वमेव स्यात्; सन्मात्रब्रह्मणः प्रमेयभावश्च । ततो जडत्वनाशित्वा-दयस्त्वयैवोक्ताः । अतो वस्तुसंस्थानरूपजात्यादिलक्षणभेदविशिष्टविषयमेव प्रत्यक्षम् ।**

**संस्थानातिरेकिणोऽनेकेष्वेकाकारबुद्धिबोध्यस्यादर्शनात्, तावतैव गोत्वादिजातिव्यवहारोपपत्तेः,**

---

प्युपलक्षणम् । क्वचितु 'रूपरूपिरूपैकार्थसमवेत' इत्यपि पाठो दृश्यते । एवमन्यत्रापि । **श्रोत्रादीन्यपीति** । एतेनाद्रव्य-ग्राहकेन्द्रियाणां विशिष्टविषयकज्ञानजनकत्वं नास्तीति शङ्कनमपि निरस्तम् । अत **एवापि**रुक्तः । ननु शब्दरसगन्ध-विषयकज्ञानानां कथं विशिष्टविषयकत्वं तद्ग्राहकेन्द्रियाणां तदाश्रयग्रहणासमर्थत्वात् । नैवं तत्तत्संस्थान विशिष्टतया कालविशिष्टतया च तेषां विषयत्वेन तज्ज्ञानस्य विशिष्टविषयकत्वोपपत्तेश्च । **शब्दे**ति भावप्रधाननिर्देशः । शब्दत्वरसत्व-गन्धत्वरूपाणि लक्षणानि येषां ते शब्दरसगन्धलक्षणाः शब्दरसगन्धाः । त एव विशेषाः तद्विषयाणीत्यर्थः । **एवकारः** सन्मात्रग्राहकत्वे इन्द्रियव्यवस्थाऽसिद्धिं पूर्वोक्तविरोधादिकञ्च व्यनक्ति । निगमयति - **अत** इति । अत्रेन्द्रियाणां सन्मात्र-ग्राहकत्वनिषेधेन तदभिमतसतः ब्रह्माभिन्नस्य इन्द्रियग्राह्यत्वमस्तीति न शङ्क्यम् । ब्रह्मणोऽस्मदादीन्द्रियाग्राह्यत्वात् । किन्त्वत्र प्रत्यक्षस्य सन्मात्रग्राहित्वं तदभिमतं तावन्मात्रनिषेधे तात्पर्यमिति । यद्वा - सन्मात्रग्राहकत्वनिषेधेन सद्ग्राहकत्वापत्तौ न क्षतिः । अस्तित्वलक्षणसत्वस्य ग्राह्यत्वस्वीकारात् ।

एवं सन्मात्रस्य ब्रह्मणः प्रत्यक्षग्राह्यत्वेऽनुपपत्त्यन्तरमाह - **निर्विशेषे**ति । **प्रत्यक्षेणैवे**त्येवकारः 'न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् । न चक्षुषा गृह्यते नापि वाचा, न मांसचक्षुरभिवीक्षते तं, न मांसचक्षुषा द्रष्टुं ब्रह्मभूतस्स शक्यते' इत्यादिश्रुतिस्मृतिविरुद्धस्य शास्त्रप्रत्यक्षविरोधपरिहारार्थमभ्युपगतस्य प्रत्यक्षग्राह्यत्वस्यानुपपन्नतां सूचयति । **अनुवादकत्वमिति** । 'अप्राप्ते हि शास्त्रमर्थवदि'ति न्यायादिति भावः । एतेन नैरर्थक्यप्रसङ्गः सूचितः । एवकारेण शास्त्रयोनित्वाधिकरणविरोधपर्यन्तानुधावनस्यानपेक्षित्वं सूच्यते । इष्टापत्तौ दूषणान्तरमाह - **सन्मात्रे**ति । अत्र ब्रह्म-पदप्रयोगः ब्रह्मण इन्द्रियवेद्यसदनतिरिक्तत्वसूचनार्थः । नन्वस्तु प्रमेयत्वं, तावता का क्षतिरित्यत्राह - **तत** इति । प्रमेयत्वस्य जडत्वनाशित्वमिथ्यात्वादिसाधकतायाः भवद्भिरभ्युपगमादिति भावः । **त्वयैवे**त्यनेन स्वमतविरोधानभिज्ञत्वं सूच्यते । प्रत्यक्षस्य सन्मात्रग्राहित्वं वदता कथमग्राह्यघटादिषु ज्ञेयत्व हेतुना जडत्वनाशित्वादिकं साध्यत इति चाभिप्रायः । न च प्रमा-विषयत्वमेव हेतुरिति घटादीनां भ्रमविषयत्वाज्जडत्वादिकं, ब्रह्मणश्च प्रमितिविषयत्वान्न तथात्वमिति वाच्यम् । निर्विशेष-वस्तुनिरासादेव घटादिषु भ्रमविषयत्वस्यापि निराकृतत्वात् । एवमुक्तानुपपत्त्या प्रत्यक्षस्य सन्मात्रग्राहित्वासम्भवाद-गत्याऽस्मदुक्त विशिष्टविषयकत्वमेव स्वीकर्तव्यमित्युपसंहरति - **अत** इति । एवकारः परोक्तविषयकत्वासम्भवं ब्रूते ।

एवं संस्थानस्य जातित्वं जात्यादेर्भेदत्वं चोक्तम् । तत्र कथमवयवसन्निवेशरूपसंस्थानस्य जातित्वं, तस्याकृति-रूपत्वात् । आकृतेश्च जात्यतिरिक्तत्वात् । अत एव हि 'जात्याकृतिव्यक्तयः पदार्थः' इति न्यायसूत्रे आकृतिविशेषलक्षणाया जातेः पृथग्ग्रहणमित्यत्राह - **संस्थानातिरेकिण** इति । **अनेकेषु एकाकारबुद्धिबोध्यस्य संस्थानातिरेकिणोऽदर्शनादि**-त्यन्वयः । तथा च 'अयं सास्नादिमान्', 'अयमपि सास्नादिमान्', 'अयं पृथुबुध्नोदराकारः', 'अयमपि तदाकार' इति संस्थानस्यैवावयवसन्निवेशरूपस्यानेकेषु एकाकारबुद्धिबोध्यत्वदर्शनादिति भावः । यद्वा **संस्थानातिरेकिणोऽनेकेष्वेका-कारबुद्धिबोध्यस्य कस्यचित्पदार्थस्यादर्शना**दित्यन्वयः । अतश्चातिरिक्तजातिरनुपलम्भो निरस्त इति भावः । ननु संस्थाना-तिरिक्तजात्यनङ्गीकारे सर्वासु गोव्यक्तिषु गोत्वव्यवहारो न स्यादित्यत्राह— **तावतैवे**ति । संस्थानेनैवेत्यर्थः । भवदुक्तजाति-रेव संस्थानशब्देन परिभाष्यत इति न भ्रमितव्यमित्याभिप्रायको एवकारः । अयमाशयः - यथा व्यक्तित्वजातित्वखण्डत्व-

**अतिरेकवादेऽपि संस्थानस्य सम्प्रतिपन्नत्वाच्च संस्थानमेव जातिः । संस्थानं नाम स्वासाधारणं रूपमिति**

मुण्डत्वादिजात्यभावेऽपि बहुषु व्यक्तिषु जातिषु खण्डेषु मुण्डेषु चोपाधिवशात् अनुगतव्यक्तिजात्यादिशब्दप्रयोगः तथैवातिरिक्तजात्यनङ्गीकारेऽपि सर्वासु व्यक्तिषूपाधिभूतसंस्थानवशात् गोत्वादिव्यवाहर उपपद्यत इति ।

एवं गौरवेण तत्कल्पनमप्यनुपपन्नमित्याह - **अतिरेकवादेऽपीति** । **सम्प्रतिपन्नत्वादि**ति । अयं भावः - अनुगतप्रतीतेरनुगतधर्ममन्तरेणासम्भवाद्धि गोत्वाद्यनुगतजातिः कल्प्यते । सा किं सर्वगोव्यक्तिवृत्तिः उत न । अन्त्ये तत्कल्पनं निष्फलम् । आद्ये गोत्वस्य सर्वव्यक्तिवृत्तित्वनिश्चयः कथं? सर्वासु गोव्यक्तिषु 'अयं गौः', 'अयं गौः' इति व्यवहारबलेन सर्वव्यक्तिवृत्तित्वनिश्चय इति चेन्न । आत्माश्रयात् । गोत्वस्य सर्वव्यक्तिवृत्तित्वनियम एवानुगतव्यवहार-सिद्धिः । तस्यां सत्यां तस्यानुगतत्वनिश्चय इति । ननु प्रत्यक्षदृष्टानुगत सास्नादि संस्थानविशेषबलाद्गोत्वस्य सर्वगोव्यक्ति-वृत्तित्वं निश्चीयत इति चेत्तर्हि तेनैव भवत्सम्प्रतिन्नेन संस्थानविशेषेणानुगतव्यवहारस्यापि सिध्या नातिरिक्तजातिकल्पनं प्रमाणपदवीमधिरोहति इति । **जातिः** = जातिशब्दवाच्यम् (वस्तु) ।

नन्वेतावता संस्थानस्यावयवसन्निवेशरूपत्वाभ्युपगमेन निरवयवतयाऽभ्युपगतेष्वात्मगुणादिष्ववयवसन्निवेशा-नभ्युपगमेन तत्रानुगतव्यवहारो न स्यादतोऽतिरिक्ता जातिरभ्युपगन्तव्येत्यत्राह — **संस्थानं नामे**ति । **नामे**ति प्रसिद्धौ । अतिरिक्तजात्यभ्युपगमेऽपि तस्याः निखिलव्यक्तिवृत्तित्वस्यानुगतसंस्थानविशेषाधीनतया निरवयवेष्वात्मादिषु संस्थानविशेषाभावेनात्मत्वजातेः निखिलात्ममात्रवृत्तित्वनिश्चयासम्भवेन तत्राप्यनुगत प्रतीतिर्न स्यात्, यदि चेतन-त्वादिकं निश्चायकमित्युच्यते, तर्हि तदेवाऽस्माकं संस्थानरूपम् । न ह्यवयवसन्निवेश एव संस्थानमिति निर्बन्धः । किन्तु यस्य वस्तुनो यदसाधारणं निरूपकं लक्षणरूपं तदेव तस्य संस्थानम् । इदञ्च सावयवेषु निरवयवेषु सर्वत्र सम्भवतीति किमत्र मुधा शङ्कनमिति भावः ॥

ननु गोलक्षणभूतासाधारणात्मकसास्नादेः प्रतिव्यक्तिभिन्नतया व्यावृत्तत्वेन कथमनुवृत्तव्यवहारहेतुत्वमिति चेन्न । अनुवृत्तव्यवहारस्यैवाभावेन तद्धेतुत्वाभावेऽप्यदोषात् । गकारोत्तरौकारोत्तरविसर्गरूपानुपूर्व्या उच्चारणनिबन्धनायाः प्रति-प्रयोगविनाशेन तादृशानुपूर्वीविशिष्टशब्दरूपव्यवहारस्यानुवृत्तत्वासम्भवात् । अथ तादृशानुपूर्वीविशेषविशिष्टशब्द-सौसादृश्यस्य व्यवहारान्तरेऽपि सत्त्वेन व्यवहारस्य तादृशशब्दसौसादृश्य रूपानुवृत्तिस्सम्भवतीति चेत्? तर्ह्यसाधारण-भूतसास्नादीनामपि सौसादृश्यानुवृत्तिसम्भवेनानुवृत्तव्यवहारहेतुत्वं सम्भवतीत्यवेहि । इत्थञ्च स्वाश्रयत्वनिरूपकत्वा-न्यतरसम्बन्धेन सौसादृश्यवत्वमेवानुवृत्तबुध्यादिनिर्वाहकम् । एकगोसादृश्यस्यापरगवि आश्रयतासम्बन्धेन तद्गत-सास्नादिसदृशसास्नादिमत्वरूपसौसादृश्यस्य सत्वेन तत्र गोत्वव्यवहारोपपत्तिः । गवये गोसादृश्यस्य सत्त्वेऽपि गोसौसा-दृश्यं नास्ति । न चैवं सति प्रथमगोव्यक्तिषु गवा सदृश इति हि प्रयोक्तव्यं स्यादिति वाच्यम् । प्रयोगस्य विवक्षानिबन्धन-त्वात् । उभयप्रयोगेऽपि अर्थ भेदाभावेन लाघवादेवं प्रयोगोपपत्तेश्च । न चैवमप्यग्निर्माणवक इत्यादावग्निशब्दस्याग्नि-सदृशार्थकतया औपचारिकत्ववत् 'अयं गौरि'त्यादावपि गोशब्दस्य गोसुसदृशार्थकत्वेनौपचारिकत्वमेव स्यादिति वाच्यम् । औपचारिकत्वस्य केवलसादृश्यनिबन्धनत्वदर्शनेऽपि सौसादृश्यरूपानुवृत्तिनिबन्धनत्वानभ्युपगमात् । 'अग्निर्माणवक' इत्यादौ हि न सौसादृश्यमग्निमाणवकयोः, सादृश्यलेशमात्र दर्शनात् ।

अथैवमप्यतिरिक्तजात्यनभ्युपगमे 'अयं घट' इत्यादि पृथुबुघ्नोदराकारेण घटस्य भानेऽपि द्रव्यत्वपृथिवीत्वादिना कथं भानम् । अतिरेकवादे तु जातावपि परत्वापरत्वविभागस्वीकारेण घटत्वादिजातिभाने परापरद्रव्यत्वपृथिवीत्वादि भानस्याप्युपपत्तिरिति चेत्, सत्यम् । संस्थानातिरिक्तजात्यनभ्युपगमेऽपि संस्थानस्य स्वासाधारणरूपत्वादवस्थाश्रयत्वेन

**यथावस्तु संस्थानमनुसन्धेयम्। जातिग्रहणेनैव भिन्न इति व्यवहारसम्भवात्, पदार्थान्तरादर्शनात्, अर्थान्तर-वादिनाऽप्यभ्युपगतत्वाच्च गोत्वादिरेव भेदः।**

**ननु च - जात्यादिरेव भेदश्चेत्, तस्मिन् गृहीते तद्व्यवहारवद्भेदव्यवहारः स्यात्। सत्यम्; भेदश्च व्यवह्रियत एव ; गोत्वादिव्यवहारात्। गोत्वादिरेव हि सकलेतरव्यावृत्तिः ; गोत्वादौ गृहीते सकलेतरसजातीय-बुद्धिव्यवहारयोर्निवृत्तेः। भेदग्रहणेनैव ह्यभेदनिवृत्तिः। 'अयमस्माद्भिन्न' इति तु व्यवहारे प्रतियोगिनिर्देशस्य तदपेक्ष(क्ष्य)त्वात् प्रतियोग्यपेक्षया भिन्न इति व्यवहार इत्युक्तम्॥**

---

रूपेण द्रव्यत्वस्य गन्धाश्रयत्वेन रूपेण पृथिवीत्वस्य च भानाङ्गीकारेणोपपत्ति सम्भवात्। एवं ब्राह्मण्यादिजातिरूप-संस्थानमपि 'शमो दमः', 'ब्रह्मणे सत्वमुच्यते' इत्यादिश्रुतिस्मृतिपर्यालोचनया निष्कृष्टव्यम्। विशिष्टमातापितृजन्यत्वन्तु न युक्तम्। अयोनिजब्रह्मणादिष्वसम्भवात्। एवं सङ्केतलिङ्गादिकमप्यति प्रसक्तम्। तत्रावयवसन्निवेशविशेषस्तु सर्वेष्वपि ब्राह्मणक्षत्रियादिषु करचरणाद्यवयवसन्निवेशसत्वेन नावान्तरजातिव्यवस्थापकः। तस्मात् 'तमः शूद्रे , रजः क्षत्रे, ब्राह्मणे सत्वमुत्तममि'त्याद्युक्तगुणतारतम्यप्रयुक्तमेव ब्राह्मण्यादिकं बोध्यम्। अत एव **'स्वासाधारणरूप'**मिति भाषितमिति।

एवं संस्थानस्य जातित्वं प्रत्यपादि। अथ जात्यादेर्भेदत्वं प्रतिपाद्यते — **जातिग्रहणेनैवे**ति। अत्रा**भिन्न**शब्दो पृथक्त्वात्यन्ताभावयोरुपलक्षकः। अयं भावः - गोत्वादिजात्यग्रहे हि गोअश्वत्वाद्यत्यन्ताभाववत्वाश्वाद्यन्योन्याभाववत्व-बुद्धिर्न सम्भवति। अतोऽश्वत्वात्यन्ताभावशब्दविषयत्वं गोत्वस्यैव युक्तम्। गोत्वमेव हि गोरश्वत्वात्यन्ताभावरूपम-श्वाद्यन्योन्याभावरूपश्च। गोत्वग्रहणेनैव 'गौरश्वान्योन्याभाववान्, अश्वत्वाद्यत्यन्ताभाववानि'ति व्यवहारोपपत्तेः। अतो नातिरिक्तमत्यन्ताभावादिकं कल्पनीयम्। पृथक्त्वमपि तदेव। गोत्वरूपान्योन्याभावादेरेव पृथक्त्वव्यवहारोपपत्तेः। भवतापि गुणादिषु पृथक्त्वव्यवहारस्यान्योन्याभावेनैवोपपादनीयत्वाच्च। अतो नान्योन्याभावादिकमतिरिक्तं कल्पनीयमिति। वस्तुत उपलब्धिरेव नास्तीत्याह - **पदार्थान्तरादर्शना**दिति। अन्योन्याभावादिकमेव स्वीक्रियते। गोत्वादिकं तु नेष्यत इति भवता न शक्यते वक्तुमित्याशयेनाह - **अर्थान्तरे**ति। **अभ्युपगतत्वाच्चे**ति। जातिरूपत्वेन गोत्वादीनां भवद्भिस्स्वीकारात् पदार्थद्वयमेवाङ्गीकार्यम्। इत्थश्च गौरवम्। अस्माकन्तु भवदभ्युपगतेन गोत्वेनैव संस्थानरूपेण सर्वोपपत्तिसम्भवान्ना-र्थान्तरकल्पनमिति न गौरवप्रसक्तिः।

ननु जात्यादीनामेव भेदत्वे धर्मिभेदपक्षे पूर्वमुक्तं चोद्यं प्रसजतीति शङ्कते — **ननु चे**ति। अयं भावः - गोत्वादीना-मेव भेदत्वेन, गोत्वग्रहणे 'इदं गोत्ववदि'ति व्यवहारवत् 'अयं भेदवानि'त्यपि व्यवहारः प्रसज्येतेति। तत्र किं वस्तुतो भेदार्थकशब्दव्यवहार आपाद्यते उत भेदत्वेन भेदशब्दोल्लेखीव्यवहार इति विकल्पं हृदिनिधाय पूर्वत्रेष्टापत्त्या परिहारति - **सत्यमि**ति। ननु गोत्वव्यवहारस्य भेदव्यवहारत्वं गोत्वस्य भेदत्वाभावादित्यत्र पूर्वोक्तं गोत्वस्य भेदत्वं लक्षणनिर्वचनेन स्थापयितुकामः तल्लक्षणं दर्शयति - **गोत्वादिरि**ति। उक्तभेदलक्षणस्य गोत्वादौ समन्वयं प्रदर्शयति - **गोत्वादावि**ति। **सकले**ति। स्वेतराश्वादिसकलपदार्थसाजात्यबुद्धितद्व्यवहरयोर्निवृत्तेरित्यर्थः। **भेदग्रहणेनैवे**ति। गवाश्वयोर्या भेदग्रहणेना-भेदनिवृत्तिः सैव हि गोत्वग्रहणेन भवति। अतो गोत्वमेव भेद इति गोत्वव्यवहारो भेदव्यवहार एवेति भावः। गोत्वादिरूप-भावस्याभावरूपभेदत्वं कथमिति न भ्रमितव्यम्। अभावाभावस्य पराङ्गीकृतभावत्ववदुपपत्तेः। द्वितीयविकल्पं परिहरति - **अयमि**ति। **प्रतियोगिनिर्देशस्य** = प्रतियोगिना सह निर्देशस्य। **तदपेक्षत्वात्** = प्रतियोगिज्ञानापेक्षत्वात्।

अयं भावः - भेदत्वेन भेदशब्दोल्लेखीव्यवहारः प्रतियोगिवाचकशब्दनिर्देशसहित एव भवति। केवलं भिन्न इत्युक्तेः कस्मादित्याकाङ्क्षाया अनुपशमात्। ततश्च प्रतियोगिज्ञानं विना प्रतियोगिनिर्देशासम्भवेनास्माद्भिन्न इति व्यवहारो

**यत्पुनर्घटादीनां विशेषाणां व्यावर्तमानत्वेनापारमार्थ्यमुक्तम् - तदनालोचितबाध्यबाधकभावव्यावृत्त्यनुवृत्तिविशेषस्य भ्रान्तिपरिकल्पितम् । द्वयोर्ज्ञानयोर्विरोधे हि बाध्यबाधकभावः ; बाधितस्यैव व्यावृत्तिः । अत्र घटपटादिषु देशकालभेदेन विरोध एव नास्ति । यस्मिन्देशे यस्मिन्काले यस्य सद्भावः प्रतिपन्नः, तस्मिन्देशे तस्मिन्काले तस्याभावः प्रतिपन्नश्चेत्, तत्र विरोधाद्बलवतो बाधकत्वं बाधितस्य च निवृत्तिः ।**

**देशान्तरकालान्तरसंबन्धितयाऽनुभूतस्यान्यदेशकालयोरभावप्रतीतौ न विरोध इति कथमत्र बाध्यबाधकभावः ? अन्यत्र निवृत्तस्यान्यत्र निवृत्तिर्वा कथमुच्यते ? रज्जुसर्पादिषु तु तद्देशकालसम्बन्धितयैवाभावप्रतीतेर्विरोधो बाधकत्वं व्यावृत्तिश्चेति देशकालान्तरदृष्टस्य देशकालान्तरव्यावर्तमानत्वं मिथ्यात्वव्याप्तं न दृष्टमिति, न व्यावर्तमानत्वमात्रमपारमार्थ्यहेतुः ॥**

---

न घटते । एवञ्च गोत्वग्रहणेऽप्यस्माद्भिन्न इति व्यवहारः प्रतियोगिधीसापेक्ष इति तादृशव्यवहारपादनं न सम्भवत्येव । न च भेदस्य भावरूपत्वेन प्रतियोगिज्ञानापेक्षा न सम्भवतीति शक्यं, तस्य भावत्वेऽपि भेदत्वेन व्यवहारे प्रतियोगिज्ञानापेक्षायाः सम्भवात् । अत एव घटाभावाभावस्य घटरूपत्वेऽपि घटाभावाभावत्वेन व्यवहारे प्रतियोगिज्ञानापेक्षा परैरप्यङ्गीक्रियत इति । **इत्युक्तमिति** । भवता भेदपदार्थदूषणावसरे स्वरूपे गृहीतेऽपि 'भिन्न' इति व्यवहारस्य **प्रतियोगिस्मरणसव्यपेक्षत्वादि**त्यादौ अनेनैवाभिप्रायेणोक्तम् । अभिप्रायमजानता पश्चाच्चोदितमिति भावः । गोत्वस्वरूपभेदयोः गोत्वस्वरूपत्वाविशेषेण गोत्वव्यवहारवत् भेदव्यवहारोऽपि प्रतियोगिस्मरणानपेक्ष एवेति कथं वैषम्यमिति न शङ्कनीयम् । भावरूपाभावाभावस्यापि प्रतियोग्यनपेक्षत्वाभावात् । अनुभवबलात्तत्र तथा स्वीकारे तुल्यमिदमत्रापि । अभावाभावस्यानवस्थाभयाद्भावरूपत्वाङ्गीकारवदत्राप्यतिरिक्तभेदकल्पनापेक्षया लाघवात् । गोत्वस्य तथात्वाभ्युपगम एव वर इत्यलम् ।

एवं प्रमाणप्रमेयानुपपत्तिपरिहारेण निर्विशेषवस्तुसिद्धिनिरासः कृतः । अथ घटादिविशेषाणामपरमार्थत्वसाधकानुमानं दूषयति - **यत्पुनरि**ति । **अनालोचिते**ति । बाध्यबाधकभावः व्यावृत्त्यनुवृत्ति विशेषश्चानालोचितो येन तस्येत्यर्थः । अत्रैव बाध्यबाधकभावः, नान्यत्र । अस्यैव व्यावृत्तिः । अन्यस्यैवानुवृत्तिरिति विशेषतोऽपर्यालोचितमित्यर्थः । तर्हि बाध्यबाधकभावः कुत्र, कयोश्च व्यावृत्त्यनुवृत्ती' इत्यत्र स्वमतमुपपादयति - **द्वयोरि**ति । **हिः** प्रसिद्धौ । न केवलमिदं स्वमतं, परन्तु प्रामाणिकैस्सर्वैरप्यभ्युपगतमित्यर्थः । 'घटवद्भूतलमि'ति ज्ञानस्य 'घटाभाववद्भूतलमि'ति ज्ञानस्य च विरोधात्तत्र बाध्यबाधकभावः न्यायविद्भिस्सर्वैरपीष्यते । अतो विरोधस्थले एव बाध्यबाधकभावः, नान्यत्रेति भावः । इत्थञ्च यस्य ज्ञानस्य बाधः, तादृशज्ञानविषयस्य बाधितत्वेन तस्यैव व्यावृत्तिरित्याह - **बाधितस्यैवे**ति । **एवकारो**ऽबाधितस्यानुवृत्तिं व्यनक्ति । त्वन्मते बाध्यबाधकभावप्रयोजक विरोध एव नास्तीत्याह - **अत्रे**ति । विरोधाभावमुपपादयति - **यस्मिन्नि**ति । यस्मिन् भूतले यस्मिन्काले घटवत्ताज्ञानं, तस्मिन्भूतले तस्मिन्काले यदि घटाभावज्ञानं, तर्हि परस्परं विरोधोऽभ्युपेय इति भावः । ततः किमित्यत्राह - **तत्रे**ति । **बलवत** इत्यनेन दुष्टकारणाजन्यत्वादिकं विवक्षितम् । तस्यैव बाधकत्वौपयिकत्वात् । देशकालवैषम्ये विरोधस्यैवाभावेन तत्सहचरितबाधकत्वनिवृत्त्यादीनामप्यसम्भव एवेत्याह - **देशान्तरे**ति ।

**न विरोध** इतीति । विरोधाभावादित्यर्थः । भवदुक्तरज्जुसर्पादिदृष्टान्ते रज्जुसर्पज्ञानयोर्देशकालवैषम्याभावेन परस्परविरोधतत्सहचरित बाधकत्वादीनामुपपन्नतेत्याह - **रज्ज्वि**ति । **अत्रे**ति शब्दः 'विरोध एव नास्तीति' पूर्वोक्तार्थे हेतुपरः । नन्वेतावता 'घटादयोऽपरमार्थाः व्यावर्तमानत्वादि'त्यनुमाने किं दूषणमुक्तमित्यत्राह - **देशे**ति । देशकालान्तरदृष्टस्य घटादेः पटाद्यधिकरणदेशकालव्यावर्तमानत्वन्न मिथ्यात्वसाधकं दृष्टमित्यर्थः । 'घटादयोऽपरमार्थाः व्यावर्तमानत्वादि'त्यत्र

बाधितत्वमुपाधिः। रज्जुसर्पाद्यन्तर्भावेन साध्यव्यापकत्वात् पक्षे घटादाववर्तमानत्वाच्च तस्य।

नन्वभावग्राहिप्रमाणविषयत्वरूपबाधितत्वस्य पक्षवृत्तित्वं पूर्वमेवोपपादितमिति नोपाधिशङ्कासम्भव इति चेत्, सत्यमुक्तम्। तावता भवदभीष्टसिद्धिः किं सेत्स्यति। 'न रजतमि'ति निषेधाभावेऽपि 'इयं शुक्तिरि'त्यनेन रजतबाधवत् 'पटो नास्ती'ति निषेधाभावेऽपि 'घटोऽस्ती'त्यनेन पटादिनिषेधः। एवं 'घटो नास्ती'ति निषेधाभावेपि 'पटोऽस्ती'त्यनेन घटादिनिषेध इति हि घटादीनां बाधितत्वं भवद्भिरुच्यते। तत्रेदं प्रष्टव्यम् - किं 'घटोऽस्ती'त्यत्रैव पटाभावोऽभिमतः आहोस्वित् 'पटो अस्ती'त्यत्रापि पटाभावः। प्रथमे 'घटोऽस्ती'त्यादौ पटाभावस्येष्टत्वेऽपि 'पटोऽस्ती'त्यादौ पटाभावस्यासम्भवेन सर्वदेशकालासंबन्धित्वरूपबाधितत्वस्य पटादावसत्वेन पक्षावृत्तिरेव बाधितत्वरूपोपाधिः। 'इयं रज्जुरि'ति ज्ञानेन हि तद्देशे तत्काल एव हि सर्पाभावो इष्यते। न तु देशान्तरकालान्तरयोरपि। अतस्तद्वदेव 'पटोऽस्ती'त्यादौ घटाभावः कामं स्वीक्रियतम्। तावता देशान्तरकालान्तरदृष्टस्य घटादेः कथं निषेधः। द्वितीये तु, 'घटोऽस्ती'त्यादावेव घटादिनिषेधः कथं शक्यकरणः विरोधात्। अन्यथा 'इयं रज्जुरि'त्यत्रैव सर्पनिषेधवत् रज्जोरपि निषेधापत्त्या व्यावर्तमानत्वाविशेषात् परमार्थत्वसाधकानुमाने दृष्टान्तकरणस्यैवानुपपत्तेः।

ननु किमत्र बाधार्हत्वमुपाधिः उत बाधितत्वम्। नाद्यः, तस्य साध्यविशिष्टत्वेनोपाधित्वासम्भवात्। न द्वितीयः। उपेक्षात्मकज्ञानविषयस्य मिथ्याभूतस्य रज्जुसर्पस्य कथञ्चिदप्यबाधितत्वेन साध्यव्यापकत्वाभावादिति चेन्न। ईश्वरादिज्ञानेन तस्यापि नियमेन बाधितत्वात्साध्यव्यापकत्वाक्षतेः। वस्तुतस्तादृशसर्पस्य मिथ्यात्वमस्ति न वा। अस्ति चेत्, कथमवगतम्। प्रमाणतश्चेत्तत एव बाधितत्वं सिद्धम्। मिथ्यात्वमेवानवगतं चेत् स सम्यक्सर्प एवेति तत्र बाधितत्वस्याव्यावृत्तिः न साध्यव्यापकत्वक्षतिं करोति। उपाधिस्सिद्ध एव। अपि च पक्षीकृतघटादिः कथं प्रतीतः। अप्रतीतत्वेऽऽश्रयासिद्धिः। प्रतीतत्वे कथं प्रतीतिः। प्रत्यक्षादिप्रमाणैरिति चेत्, तर्हि तत एव सत्यत्वे नैव प्रतीतिरिति तत्र मिथ्यात्वसाधने धर्मिग्रहकप्रमाणबाधः। एवं साध्यभूतमिथ्यात्वं परमार्थः उतापरमार्थः। प्रथमेऽद्वैतहानिः, द्वितीये प्रपञ्चसत्यत्वं सुप्रतिष्ठितम्।

ननु भवदभिमतसत्यत्वेप्येवं प्रसङ्गो दुर्वारः। सत्यत्वस्य सत्यत्वेऽनवस्था। मिथ्यात्वे प्रपञ्चमिथ्यात्वसिद्धिः। मैवम्। सत्यत्वस्य स्वपरनिर्वाहकत्वाभ्युपगमात्। मिथ्यात्वे तु नायं समाधिर्युक्तः। तथा सति भवदभिमतमिथ्यात्वस्य स्वमिथ्यात्वनिर्वाहकत्वप्रसक्त्या मिथ्यात्वान्तरमनपेक्ष्यैव स्वयमेव मिथ्या भवतीति प्रपञ्चसत्यत्वं निष्प्रत्यूहमेव। एवमद्वैतहानिप्रसङ्गभिया साधनस्याप्यपारमार्थिकत्वाभ्युपगमावश्यकत्वात्तस्यासाधकत्वमेव। अस्मदभिमतहेतोः सत्यत्वाभ्युपगमेपि न विरोधः। एवं सत्यत्वसाधनानुमाने दृष्टान्तीकृतस्यैव तदन्यासत्यत्वसाधकानुमाने पक्षीकरणसम्भवः उक्तस्याबाध्यस्यापरमार्थत्वस्य दृष्टान्ते समन्वयश्च कथम्। तस्यापि बाध्यत्वाभ्युपगमात्। व्यावहारिकव्यवस्थया दृष्टान्तीकरणमिति चेत् ? तर्हि व्यवाहारिकव्यवस्थया तस्य सत्यत्वेन तत्रासत्यत्वसाधनं बाधितं भवति। यदि तु निषेध्यं परमार्थसत्यत्वमेवेत्युच्यते, तर्हि व्यावहारिकसत्यत्वाश्रायेण दृष्टान्तेन व्यावहारिकसत्यत्वमेव सिध्येत्। तथा च भवदभिमतपरमार्थसत्यत्वसिद्धिः ब्रह्मणि विवक्षिता न भवेत्। परमार्थसत्यत्वस्य ब्रह्मणि साधने तु उक्तस्यान्वयदृष्टान्तस्यासिद्धिरेव। एवं व्यावर्तमानत्वानुवर्तमानत्वे न मिथ्यात्वपरमार्थत्वसाधके भवितुमर्हतः। सर्पाद्भीतस्य पुंसः रज्जुभूविदलनाम्बुधारादिषु सर्पभ्रमानुवृत्तेः तत्र भवदभिमतमिथ्यात्ववतस्सर्पस्यानुवृत्तमानत्वेन परमार्थत्वापत्तेः। वस्तुतः परमार्थत्ववतो रज्ज्वादेर्व्यावर्त्तमानत्वेन मिथ्यात्वापत्तेश्च। अत एकाधिष्ठानकानेकाध्यास-स्थले व्यावर्तमानत्वानुवर्तमानत्वाभ्यां मिथ्यात्वपरमार्थत्वोपपादनेऽप्यनेकाधिष्ठानकैकाध्यासस्थले ताभ्यां विपरीतोपपादनमित्यप्रतिष्ठितमेव भवन्मतम्।

एवमपरमार्थत्वसाधकानुमाने दूषणमुक्त्वा, परमार्थत्वसाधकानुमानं दुदूषुः तदनुवदति — **यत्त्विति**। किमिदम-

**यत्त्वनुवर्तमानत्वात् सत् परमार्थ इति - तत् सिद्धमेवेति न साधनमर्हति। अतो न सन्मात्रमेव वस्तु। अनुभूतिसद्विशेषयोश्च विषयविषयिभावेन भेदस्य प्रत्यक्षसिद्धत्वादबाधितत्वाच्च, अनुभूतिरेव सतीत्येतदपि निरस्तम् ॥**

**यत्त्वनुभूतेस्स्वयंप्रकाशत्वमुक्तम् - तद्विषयप्रकाशनवेलायां ज्ञातुरात्मनस्तथैव;**

---

नुमानं माध्यमिकं प्रति अस्मान्प्रति वा। प्रथमे दृष्टान्तोऽसिद्धः, रज्जोरपि बाध्यत्वात्। द्वितीयेऽपि व्यावहारिकस्य प्रातीतिकस्य वा सच्छब्दवाच्यत्वम् उत परमार्थसतः। आद्ये सिद्धसाधनम्, त्वत्प्रतिज्ञाविरोधश्च। परमार्थसतः पक्षीकारे च सिद्धसाधनमेव। अस्माभिरपि परमार्थसतोऽपि परमार्थत्वाङ्गीकारात्। पक्षसाध्ययोरैकार्थ्यश्चेत्यभिप्रायेण समाधत्ते — **तत्सिद्धमेवेति**। ननु 'सत्परमार्थ' इत्यस्य 'सदेव परमार्थः' इति प्रतिज्ञायां तात्पर्यम्। अतो न सिद्धसाधनावकाशः इत्यत्र समाधानव्याजेनोपसंहरति - **अतो न सन्मात्रमेवेति**। अयं भावः - किं 'सदेव परमार्थः' इत्यत्र सतः पारमार्थ्यसाधने तात्पर्यं वा सदन्यस्यापरमार्थत्वसाधने तात्पर्यं उभयत्र वा। नाद्यः, सिद्धसाधनापत्तेः। न द्वितीयः, सदन्यस्मिन्पक्षेऽनुवर्तमानत्वहेतोरसिद्धेः। न चापरमार्थत्वसाधनपक्षे नानुवर्तमानत्वं हेतुः। किन्तु व्यावर्तमानत्वमेवेति वाच्यम्। तथा सति, अस्य पूर्वानुमानतुल्यतया दत्तोत्तरत्वात्। नाप्युभयत्र, अंशतः उभयदोषापत्तेरिति।

ननूक्तार्थे न तात्पर्यं, किन्तु 'सत् स्वेतरपरमार्थशून्यमनुवर्तमानत्वादि'त्यत्रैवेति न कश्चिदपि दोषः प्रसजेदिति चेत्? तर्हि, भवदुक्तरज्जुरूपदृष्टान्ते साध्यवैकल्यम्। तत्रानारोपितपदार्थानां परमार्थत्वेन स्वेतरपरमार्थशून्यत्वासम्भवात्। न च स्वारोपितपरमार्थशून्यत्वसाधने नानुपपत्तिरिति वाच्यम्। आरोपितस्य न परमार्थत्वं, परमार्थस्य नारोपितत्वमेति आरोपितपरमार्थस्यैव वस्तुतोऽभावात् तद्घटितशून्यत्वरूपसाध्यस्यैवाप्रसिद्धेः। न च 'सत् स्वाध्यस्तप्रदार्थवत् अनुवर्तमानत्वात् रज्जुवत्' इत्यनुमाने नैषः दोष इति वाच्यम्। वस्तुनोऽध्यस्तत्वसिद्धावेवानुमानप्रवृत्तेः। 'घटादयोऽपरमार्थः अनुवर्तमानत्वात् अध्यस्तत्वाद्वे'त्यनुमानमपि हेत्वसिध्या व्यभिचरितत्वेन च निरस्तम् ॥

पूर्वं भेदस्य प्रत्यक्षाविषयत्वेन दुर्निरूपत्वेन चानुभूति सतोः भिन्नत्वं पूर्वपक्षिणा निराकृतम्। सम्प्रति भेदस्य प्रत्यक्षविषयत्वसुनिरूपत्वोपपादनेन पूर्वोक्तहेतुना भेद एव प्रामाणिक इति तयोरैक्यं निरस्यति **अनुभूतीति**। प्रमाणसम्बन्धार्हसद्रूपत्वस्यानुभूतेरपि सत्वेनाभेदनिरासायोगात् **विशेषे**त्युक्तिः। यद्वा, **विशेष**शब्दोऽनुवर्तमानत्व हेत्वोरसिद्धिं व्यनक्ति। सच्छब्दवाच्यस्य वस्तुनः व्यावृत्तत्वात्। न च 'घटस्सन् पटस्सन्नि'त्यादि व्यवहारबलात् सतः अनुवर्तमानत्वमस्तीति वाच्यम्। 'घटो व्यावृत्तः', 'पटो व्यावृत्त' इत्यादाविव तदुपपत्तेः। न हि तत्र व्यावृत्तशब्दितमनुवृत्तपदार्थान्तरमुपेयते। एवं 'शशश्रृङ्गमसत्', 'खपुष्पमसदि'त्यादिव्यवहारबलेनासत्यत्वस्याप्यनुवर्तमानत्वापत्तेः। अतः प्रमाणसम्बन्धार्हत्वतदभावावेव सदसच्छब्दवाच्याविति निर्णेयम्। नन्वनुभूतेरेवानुभूत्यन्तरविषयत्वे विषयविषयिभावरूपहेतुना तयोरपि भेदापत्तिरिति चेत्, घटतद्विषयकज्ञानयोरिव विषयविषयिणोस्सतोस्तयोरपि भेदस्येष्टत्वात्।

एवं सदनुभूत्योर्भेदस्स्थापितः। अथानुभूतेः साधितं स्वयंप्रकाशत्वं स्वाभिमतत्वात् किञ्चित् परिष्कृत्येष्टाप्त्या परिहरति - **यस्त्विति**। परिष्करणीयमंशमाह - **विषयेति**। **तथैवेति**। ननु पूर्वपक्षोक्तस्वयंप्रकाशत्वस्यावेद्यत्वे सत्यपरोक्षव्यवहारहेतुत्वरूपत्वेनावेद्यत्वघटितस्य तस्य कथं तथैवेत्यभ्युपगमः। अनुभूतेरस्माभिर्वेद्यत्वाङ्गीकारात् इति चेदुच्यते। किमवेद्यत्वघटितं स्वयंप्रकाशत्वं सद्रूपानुभूतेस्साध्यते, उत वृत्त्यवच्छिन्नज्ञानस्य। तत्र वृत्त्यवच्छिन्नज्ञानस्य 'त्वं जानासी'ति वाक्यजन्यज्ञानविषयत्वेनावेद्यत्वं तन्मतेऽपि न सम्भवति। अतोऽवेद्यत्वाघटितमेव स्वयं प्रकाशत्वं तैरप्यभ्युपगन्तव्यमिति तादृशस्वयंप्रकाशत्वमेवास्मद्रीत्या किञ्चित्परिकारेणास्माभिरभ्युपेतुं शक्यते इति न दोषः। सद्रूपानुभूते-

**न तु सर्वेषां सर्वदा तथैवेति नियमोऽस्ति; परानुभवस्य हानोपादानादिलिङ्गकानुमानज्ञानविषयत्वात्, स्वानुभवस्याप्यतीतस्य 'अज्ञासिषम्' इति ज्ञानविषयत्वदर्शनाच्च। अतोऽनुभूतिश्चेत्, स्वतस्सिद्धेति वक्तुं न शक्यते ॥**

**'अनुभूतेरनुभाव्यत्वे, अननुभूतित्वम्' इत्यपि दुरुक्तम् ; स्वगततीतानुभवानां परगतानुभवानां चानुभाव्यत्वेनाननुभूतित्वप्रसङ्गात्। परानुभवानुमानानभ्युपगमे च शब्दार्थसम्बन्धग्रहणाभावेन समस्तशब्द-व्यहोरोच्छेदप्रसङ्गः। आचार्यस्य ज्ञानवत्वमनुमाय तदुपसत्तिश्च क्रियते ; सा च नोपपद्यते।**

---

स्स्वयंप्रकाशत्वन्तु न भवद्भिरपि साधितम्। यतः **स्वसंबन्धादर्थान्तरे तद्धर्महेतुत्वाभावेनापक्षवृत्तित्वात्** हेतोः। अतः स्वसजातीयापेक्षारहितस्वप्रकाशत्वमेव साधनीयम्। तस्य च धर्मभूतज्ञाने सत्वेन तदभ्युपगमो न दोषायेति।

ननु ततः पूर्वमेवानुभूतित्वरूपहेतुना सद्रूपस्य निर्विषयानुभवस्य स्वयंप्रकाशत्वं साधितमिति तन्निराकरणं कथमिति चेन्न, विषयप्रकाशत्वरूपानुभूतित्वस्य पक्षेऽसत्वेन स्वरूपासिद्धेः, स्वयंप्रकाशत्वरूपस्य तु तस्य साध्याविशिष्टत्वेन हेतुत्वासम्भवाच्च। एतदुभयविलक्षणानुभूतित्वन्तु नान्यदस्ति। अत एव हि तत्रान्यतस्सिद्धौ घटादिवदननुभूतित्व प्रसङ्ग इत्यनुकूलतर्कः प्रदर्शितः। तस्माद्वृत्त्यवच्छिन्नज्ञानस्यैव तत्र स्वयंप्रकाशत्वाभिमतत्वात् तदस्माकमिष्टमेवेति तथैव इत्युक्तमिति। निवेशितदलद्वयव्यावर्त्यमाह - **न त्विति**। एवमनङ्गीकारे दोषमाह - **परेति**। एतेन साध्यकोटौ ज्ञातुरात्मन इत्यनिवेशे बाध इति सूचितम्। **विषयप्रकाशनवेलयामित्यस्य** फलमाह - **स्वानुभवस्येति**। अनेनापि बाधः फलितः। अयं भावः - आश्रयतः कालतश्चान्यनिरपेक्षप्रकाशत्वस्यात्यन्तायोगव्यवच्छेदः न साधयितुं शक्यते। उक्त-दोषापत्तेः, किन्तु विषयप्रकाशनवेलायां स्वाश्रयं प्रति स्वसजातीयान्यनिरपेक्षप्रकाशत्वमिति। पर्यवसितं साध्यं तु स्वात्यन्तसजातीयापेक्षानियमरहितस्वप्रकाशवत्वमेवानेनोक्तो भयदोषवारणात्। **विषयप्रकाशनवेलायां ज्ञातुरात्मन** इत्येतत् एतत्तात्पर्यकमिति बोध्यम्। निगमयति - **अत** इति। अनुभूतित्वावच्छिन्नं स्वतस्सिद्धमिति वक्तुं न शक्यत इत्यर्थः।

नन्वनुभूतेरन्यज्ञानविषयत्वस्वीकारे घटादेरिवाननुभूतित्वमेव प्रसज्येतेति ज्ञानान्तरवेद्यत्वाभावस्याङ्गीकर्तव्यतया नास्मदुक्तसाध्यपरिष्कारोऽपेक्षित इत्याशयेन शङ्किताननुभूतेरनुभाव्यत्वनिबन्धाननुभूतित्वापत्तिं परिहर्तुकामः तदनुवदति — **अनुभूतेरिति**। अयं भावः - वृत्त्यवच्छिन्नज्ञानेऽवच्छेदकीभूतवृत्तिमात्रस्य वेद्यत्वं, न तु साक्षादनुभूतेः। इत्थञ्चा-नुभूतेरेव वेद्यत्वे घटादिवदेवाननुभूतित्वमेव स्यादिति। परिहरति — **दुरुक्तमिति**। हेतुं दर्शयति - **स्वगतेति**। अयमाशयः - घटादिज्ञानेऽनुभूतित्वस्य लोकसिद्धत्वेन तस्य स्वगतस्य परगतस्य च वेद्यत्वदर्शनात् वेद्यत्वानुभूतित्वयोस्सहदर्शन-मस्तीति वेद्यत्वेनाननुभूतित्वापत्तिसम्भवः। अन्यथाऽनुभाव्यस्वगत परगतानुभवानामननुभूतित्वापत्तेः। तेषामनुभूति-त्वस्य लोकसिद्धत्वेनेष्टापत्तेरप्यसम्भवात्। अवच्छेदकीभूतवृत्तेर्वेद्यत्वमभ्युपगम्य साक्षादनुभूतेरवेद्यत्वसाधनम-प्यनुपपन्नम्। घटादिज्ञानस्यैव साक्षादनुभूतित्वेन तस्य च वेद्यत्वदर्शनात्। ब्रह्मणस्साक्षादनुभूतित्वस्वीकारेण तत्रावेद्य-त्वसाधने च बाधापत्तेः। वेदान्तवाक्यजन्य ज्ञानविषयत्वस्यावश्यस्वीकर्तव्यत्वात्, **स्वसम्बन्धादर्थान्तरे** इत्यादिहेतुप्रयोग-स्यानुपपन्नत्वाच्चेति। एवं वृत्त्यवच्छिन्न ज्ञानस्यावेद्यत्वे लौकिकवैदिकसर्वव्यवहारविरोध इति दर्शयति - **परेति**। 'गामा-नये'त्यादौ प्रयोज्यवृद्धगतगवानयन प्रवृत्त्या तस्य गवानयनज्ञानमनुमाय व्युत्पित्सुः पदानां तत्तदर्थे शक्तिमवधारयति। यदि ज्ञानस्यावेद्यत्वं तदा गवानयन ज्ञानानुमानमेव न सम्भवतीति शब्दार्थयोस्संबन्धग्रहणमेव न स्यात्। अतश्च सर्वोऽपि व्यवहारो उच्छिद्येत। **नोपपद्यत** इति। आचार्यकर्तृकवाक्यार्थादिपर्यालोचनया ह्याचार्यज्ञानमनुमीयते। शिष्यस्तमुप-

**न चान्यविषयत्वेऽननुभूतित्वम्। अनुभूतित्वं नाम वर्तमानदशायां स्वसत्तयैव स्वाश्रयं प्रति प्रकाशमानत्वम्; स्वसत्तयैव स्वविषयसाधनत्वं वा। ते चानुभवान्तरानुभाव्यत्वेऽपि स्वानुभवसिद्धे नापगच्छत इति नानुभूतित्वमपगच्छति। घटादेस्त्वननुभूतित्वम्, एतत्स्वभावविरहात्; नानुभाव्यत्वात्। तथाऽनुभूतेरननुभाव्यत्वेऽपि, अननुभूतित्वप्रसङ्गो दुर्वारः; गगनकुसुमादेरननुभाव्यस्याननुभूतित्वात्।**

---

सम्पद्यते च, आचार्यज्ञानस्यावेद्यत्वे तु कथं तदनुमानसम्भवः। कथन्तराञ्च तदुपसम्पत्तिः। कथन्तमाञ्च तेन तत्त्वोपदेशः। कुतश्च तव तत्त्वज्ञानं कुतस्तरां च तव ब्रह्मप्राप्तिरिति भावः।

ननु वेद्यत्वानुभूत्योस्सहदर्शनसद्भावेऽपि घटादावननुभूतित्वस्य वेद्यत्वप्रयुक्तत्वदर्शनेन तद्वदेवानुभूतेरपि तथात्वप्रसङ्ग इत्यत्राह - **न चेति**। अन्यविषयत्वरूपवेद्यत्वमननुभूतित्वे न हेतुरित्यर्थः। तर्हि को हेतुरित्यत्र कारणं वक्तुकामः आपाद्यमानाननुभूतित्वप्रतियोगिस्वरूपं लक्षणतो निष्कर्षति - **अनुभूतित्वमिति**। प्रकाशमानत्वं घटादेरप्यस्तीति तद्व्यावृत्त्यै **स्वश्रयं प्रतीति**। अणुत्वाद्यत्मधर्मव्यावृत्त्यै **स्वसत्तयैवेत्युक्तिः**। स्वगोचरज्ञानमनपेक्ष्येति तदर्थः। तेषां ज्ञानप्रकाश्यत्वाद्व्यावृत्तिः। सिद्धान्ते ज्ञानद्रव्यस्य नित्यत्वेन स्वसत्तयैव स्वाश्रयं प्रति प्रकाशमानत्वं नास्तीति **वर्तमानदशायामित्युक्तम्**। विषयसंबन्धस्य वर्तमानदशायामित्यर्थः। अत एव पूर्वत्र **विषयप्रकाशनवेलायामिति** भाषितम्। अत्र **स्वाश्रयं प्रतीत्युक्त्या** स्वप्रकाशात्मव्यावृत्तिः, परानुभवेऽसम्भव परिहारश्च। उक्तमनुभूतित्वलक्षणं स्वयम्प्रकाशत्वरूपमेवेत्यनुभूतेस्स्वयंप्रकाशत्वं वदतां मते इदमसम्भवीत्युभयसाधारणं लक्षणान्तरमाह - **स्वसत्तयैवेति**। **वर्तमानदशायां स्वाश्रयं प्रतीति** दलद्वयस्यात्राप्यनुषङ्गः। साधनत्वस्य दण्डसाधारण्यात् **विषयसाधनत्वोक्तिः**। चाक्षुषज्ञानस्य श्रावणज्ञानविषयसाधनत्वं नास्तीति **स्वशब्दोपादानम्**। **स्वविषयसाधनत्वञ्च** व्यवहारानुगुण्यापादकत्वम्। तच्चेन्द्रियादिसाधारणमिति **स्वसत्तयैवेत्युक्तम्**। इन्द्रियादीनाञ्च न स्वसत्तया तादृशत्वम्। किन्तु ज्ञानोत्पादनद्वारा। ततश्च कस्यचिदर्थस्य साक्षाद्व्यवहारानुगुण्यापादकत्वमिति पर्यवसितम्। अन्यं प्रति परानुभवस्य व्यवहारानुगुण्यापादकत्वं नास्तीति तद्व्यावृत्तये **स्वाश्रयं प्रतीति**।

एवमनुभूतित्वस्वरूपं निष्कृष्टम्। अथानुभूतेरनुभाव्यत्वेऽपि न निरुक्तानुभूतित्वाभावप्रसङ्ग इत्याह - **ते चेति**। एवमननुभाव्यत्वानुभूतित्वयोः व्याप्तिर्निराक्रियते - **घटादेरिति**। **अननुभूतित्वं** = अनुभूतिशब्दानभिलप्यत्वम्। तेन **एतत्स्वभावविरहादिति** हेतोः न साध्याविशेषता। 'घटः अनुभूतित्वाभाववान्, वर्तमानदशायां स्वसत्तयैव स्वाश्रयं प्रति प्रकाशमानत्वरूपस्वभावाभाववत्वादि'त्युक्ते हि हेतोस्साध्याविशिष्टत्वं स्यात्। यद्वा - उक्तस्वभावयोरन्यतराभावः अन्यतरविरहश्च हेतुः। अत एव **वाशब्द** प्रयुक्तः। अथवा अनुभूतिभिन्नत्वं साध्यम्। उक्तस्वभावरूपानुभूतित्वशून्यत्वं हेतुः। अनयोश्च पक्षयोः हेतुसाध्ययोः वैलक्षण्यम्। अनुभूतित्वपदं यथाश्रुतार्थकञ्च॥

यथा घटादिवदनुभूतेरनुभाव्यत्वेऽननुभूतित्वप्रसङ्गः भवद्भिरापादितः एवमननुभाव्यत्वेऽपि तस्याः गगनकुसुमादिवदननुभूतित्वप्रसङ्गो दुर्वार एवेति प्रतितर्कप्रतिहतिं दर्शयति - **तथेति**। नन्वनुभूतिभिन्नत्वाननुभाव्यत्वयोः कुत्र व्याप्तिग्रहः, येनाननुभाव्यत्वहेतुनाऽनुभूतावनुभूतिभिन्नत्वं साधयसि इत्यत्र व्याप्तिग्रहस्थलं दर्शयति - **गगनकुसुमादेरिति**। ननु तुच्छे खपुष्पे कथं व्याप्तिग्रह इति चेत्! तत्र 'ख्यातेर्नासत्' इति तुच्छस्य व्यतिरेकदृष्टान्त त्वमभ्युपयन्तो भवन्तः एव प्रष्टव्याः। असत्यस्यापि हि शुक्तिरूप्यस्य दृष्टान्तत्वं तत्र तत्र भवद्भिरभ्युपेयते। शुक्तिरूप्याध्यासवत् गगनकुसुमाध्यासस्यापि दोषवशेनसम्भवात्। अतो वेद्यत्वाननुभूतित्वयो र्घटादौ व्याप्तिग्रहवत् अवेद्यत्वाननुभूतित्वयोरपि गगनकुसुमादौ व्याप्तिधीसम्भवेनानुभाव्यत्वेऽप्यनुभूतेरननुभूतित्वमेव प्रसज्येतेति। ननु 'अनुभूतिः अनुभूतिभिन्ना अननुभाव्यत्वादि'त्यनुमाने बाध एव दोष इति चेत्, 'अनुभूतिः नानुभाव्या अनुभूतित्वादि'त्यनुमानेऽपि भवदीये बाध

**गगनकुसुमादेरननुभूतित्वमसत्त्वप्रयुक्तम्, नाननुभाव्यत्वप्रयुक्तमिति चेत् - एवं तर्हि, 'घटादेरप्यज्ञानाविरोधित्वमेवाननुभूतित्वनिबन्धनम्; नानुभाव्यत्वम्' इत्यास्थीयताम् । अनुभूतेरनुभाव्यत्वेऽज्ञानाविरोधित्वमपि तस्या घटादेरिव प्रसज्यत इति चेत् - अननुभाव्यत्वेऽपि गगनकुसुमादेरिवाज्ञानाविरोधित्वमपि प्रसज्यत एव । अतोऽनुभाव्यत्वेऽननुभूतित्वमित्युपहास्यम् ॥**

---

एव दोषः सुवचः । अननुभाव्यत्वसाधकानुमानप्रमाणवेद्यत्वेनऽननुभाव्यत्वरूपसाध्यस्यासम्भवात् ।

ननु 'अनुभूतिरनुभूतिभिन्ना अननुभाव्यत्वादि'त्यनुमानेऽसत्वमुपाधिः । अनुभूतिभिन्ने खपुष्पेऽसत्वस्य सत्त्वेनानुभूतिरूपपक्षेऽसत्वस्यासत्वेन साध्यव्यापकत्वपक्षावृत्तित्वयोस्सत्वादित्याशयेन शङ्कते - **गगनकुसुमादेरिति** । यद्यप्यत्रासत्त्वस्य न साध्यव्यापकत्वम् अनुभूतिभिन्ने घटादौऽसत्त्वस्याभावात्, अथाप्यनुभूतिभिन्ने घटादावसत्वस्यैवास्माभिरङ्गीकारात् । ब्रह्मैव सत् इति ह्यस्माकं प्रक्रिया । अतः साध्यव्यापकत्वमक्षतमेव । अपि च घटादावसत्त्वस्यानङ्गीकारेप्युपाधित्वं सुवचमित्यभिप्रायः । केवलसाध्यव्यापकत्वं, पक्षधर्मावच्छिन्नसाध्यव्यापकत्वं, साधनावच्छिन्नसाध्यव्यापकत्वम्, उदासीनधर्मावच्छिन्नसाध्यव्यापकत्वम् इत्युपाधिघटकसाध्यव्यापकत्वस्य चतुष्प्रकारेण विभागकरणात् । अत्रोदासीनधर्मावच्छिन्नसाध्यव्यापकत्वस्य वा साधनावच्छिन्नसाध्यव्यापकत्वस्यैववाविवक्षितत्वेनाननुभाव्यत्वविशिष्टानुभूतिभिन्नत्वस्यासति गगनकुसुमादावेव सत्त्वान्न तादृशसाध्यव्यापकत्वभङ्ग इत्याशयः । वस्तुत उदासीनधर्मावच्छिन्नसाध्यव्यापकत्वमेवात्र विवक्षितम् । ततश्च गगनकुसुमत्वसमानाधिकरणाननुभूतित्वव्यापकत्वस्यासति खपुण्पावेव सत्त्वान्न साध्यव्यापकत्व हानिरिति । स्पष्टं चेदम् - **गगनकुसुमादेरननुभूतित्वमिति** श्रीसूक्तौ ॥

एवं तर्हि 'अनुभूतिरननुभूतिः अनुभाव्यत्वादि'त्यनुमानेऽपि अज्ञानाविरोधित्वमुपाधिः, घटादौ साध्यव्यापकत्वस्य पक्षेऽज्ञानविरोधित्वस्यैव सत्वे पक्षावृत्तित्वस्य च सत्वादित्यभिप्रायेण प्रतिबन्दीमाह — **एवं तर्हीति** । **अज्ञानाविरोधित्वं** = ज्ञानवेद्यविषयकाज्ञाननिवर्तकत्वाभावः । नन्वेवमनुभाव्यत्वे अननुभूतित्वपरिहारेऽपि तस्याः घटादिवदज्ञानाविरोधित्वं स्यात् । अनुभाव्यत्वज्ञानाविरोधित्वयोः घटादौ व्याप्तिदर्शनादिति शङ्कते — **अनुभूतेरिति** । एवं तर्ह्यननुभाव्यत्वपक्षेऽप्यनुभूतेरज्ञानाविरोधित्वमापद्यते । गगनकुसुमादावज्ञानाविरोधित्वाननुभाव्यत्वयोर्व्याप्तिदर्शनादिति प्रतिबन्द्या उत्तरमाह - **अननुभाव्यत्वेऽपीति** । 'यश्चोभयोस्समो दोष' इति न्यायादिति भावः । **अज्ञानाविरोधित्वमपीति** । अत्र **अपि**शब्देनासत्त्वं स्वयम्प्रकाशत्वञ्च समुच्चीयते । ततश्च यथाऽनुभाव्यत्वेऽनुभूतेरज्ञानाविरोधित्वं घटादिवदापादितम्, तथैवाननुभाव्यत्वेऽपि तस्या असत्वमापद्यते । असत्वाननुभाव्यत्वयोः गगनकुसुमादौ व्याप्तिग्रहसम्भवादिति भावः । एतेन गगनकुसुमादेरपि अननुभूतित्ववत् अज्ञानाविरोधित्वमप्यसत्वप्रयुक्तमेव नाननुभाव्यत्वप्रयुक्तमिति, 'अनुभूतिरज्ञानाविरोधिनी अननुभाव्यत्वादि'त्यनुमानेऽसत्वस्योपाधित्वम् इति शङ्का निरस्ता । 'अनुभूतिरसती अननुभाव्यत्वात् गगनकुसुमवदि'त्यसत्त्वस्याप्यनुभूतौ साधनेन तस्य पक्षवृत्तित्वेनोपाधित्वासम्भवात् । न चात्राप्यस्वयंप्रकाशत्वे सत्यननुभाव्यत्वमुपाधिः । तस्यासत्त्वरूपसाध्यवति खपुष्पे सत्वेन साध्यव्यापकत्वादनुभूतिरूपपक्षावृत्तित्वाच्चेति वाच्यम् । अननुभाव्यत्वे 'अनुभूतिरस्वयम्प्रकाशा अननुभाव्यत्वात् खपुष्पवदि'त्यनुमानेनानुभूतावस्वयम्प्रकाशत्वस्यापि साधनसम्भवेन तस्य पक्षवृत्तित्वेनोपाधित्वासम्भवात् ।

नन्वसत्वास्वयम्प्रकाशत्वे प्रमाणविरुद्धे इति चेदनुभाव्यत्वेऽननुभूतित्वमपि प्रमाणविरुद्धमेव । उपपादितं चानुभाव्यत्वेऽप्यनुभूतित्वमिति । यद्यपि गगनकुसुमादेरननुभूतित्वमसत्व प्रयुक्तं नाननुभाव्यत्वप्रयुक्तमित्यत्रैवासत्त्वस्योपाधिः पक्षे साधयितुं शक्यम्, अथापि शिष्यबुद्धिवैशद्यार्थं तर्कवैभवात्प्रकारान्तरेण समाहितमिति । एवमुक्तयुक्त्याऽनुभूतेरनुभाव्यत्वेऽपि नाननुभूतित्वापादनसम्भव इत्युपसंहरति **अत** इति । **उपहास्यम्** = परितो हास्यम् । अनुभाव्यत्वेऽननुभूति-

**यत्तु संविदस्स्वतस्सिद्धायाः प्रागभावाद्यभावादुत्पत्तिर्निरस्यते - तदन्धस्य जात्यन्धेन यष्टिः प्रदीयते। प्रागभावस्य ग्राहकाभावादभावो न शक्यते वक्तुम् ; अनुभूत्यैव ग्रहणात्। कथमनुभूतिः सती तदानीमेव स्वाभावं विरुद्धमवगमयतीति चेत् - न ह्यनुभूतिः स्वसमकालवर्तिनमेव विषयीकरोतीत्यस्ति नियमः ; अतीतानागतयोरविषयत्वप्रसङ्गात्। अथ मन्यसे - अनुभूतिप्रागभावादेस्सिद्ध्यतः तत्समकालभावनियमोऽस्तीति, किं त्वया क्वचिदेवं दृष्टम्, येन नियमं ब्रवीषि ? हन्त तर्हि तत एव दर्शनात्प्रागभावादिः सिद्ध इति न तदपह्नवः (तदभावनिह्नवः)। तत्प्रागभावं च तत्समकालवर्तिनमनुन्मत्तः को ब्रवीति? इन्द्रियजन्मनः**

---

त्वापादने प्रवृत्ते त्वयि अनुभूतेरननुभाव्यत्वे अननुभूतित्वाज्ञानाविरोधित्वासत्वास्वयम्प्रकाशत्वादीनां बहूनामापादनमासीदिति हेतोः हास्यमित्यर्थः। एवमनुभूतेरवेद्यत्वं निरस्य तदुक्तं नित्यत्वं दूषयति - **यत्त्विति**। यद्यपि सिद्धान्ते ज्ञानस्य नित्यत्वाङ्गीकारात्तद्दूषणमनुपपन्नम्, अथापि ज्ञानस्वरूपस्य नित्यत्वेपि प्रत्यक्षत्वाप्रत्यक्षत्वाद्यवस्थाश्रयस्य तस्यानित्यत्वेन तद्दूषणं नानुपपन्नम्। **स्वसम्बन्धा**दित्यादिना विषयसंबन्धिज्ञानस्यैव स्वयंप्रकाशत्वनित्यत्वादीनां तेन साधितत्वात्। तस्य चास्माकमनिष्टत्वात्। अतो न विरोधः।

यदुक्तं पूर्वं ग्राह्यस्य प्रागभावस्य ग्राहकं नास्तीति तन्न सम्भवतीत्याह — **प्रागभावस्ये**ति। किं ग्राहकमित्यत्राह — **अनुभूत्यैवे**ति। **एव**कारः स्वतःपक्षं व्यनक्ति। परतःपक्षस्योत्तरत्र वक्ष्यमाणत्वात्। ननु ग्राहकसद्भावाङ्गीकारेण 'अनुभूतिस्स्वयंसती स्वाभावं ग्राहयती'ति पक्ष एवाभ्युपेयः। ततश्च ग्राहकसद्भावात्तत्प्रागभावो नास्तीति ग्राह्याभावेन कथं तद्ग्रहणम्। अन्यथा भ्रान्तित्वापत्तेरित्याशयेन शङ्कते - **कथमि**ति। परिहरति - **न ही**ति। अयं भावः - ग्राहकानुभूतेः स्वसमकालवृत्तिपदार्थग्राहकत्वमिति नियमे हि स्वस्य स्वप्रागभावस्य च समकालवृत्तित्वाभावे तद्ग्राहकत्वं न सम्भवति। तथा ग्रहणे विरोधाद्बुद्धे भ्रमत्वञ्चेति वक्तुं शक्यते। न तथा नियमोऽभ्युपगतः। किन्तु स्वासमानकालवृत्तिपदार्थग्राहकत्वमपि स्वीक्रियते। इत्थञ्च स्वसमानकालवर्तिनः स्वप्रागभावस्याद्यत्वेन ग्रहणसम्भवेन न विरोधः न भ्रमत्वञ्चेति। पूर्वोक्तनियमाङ्गीकारे बाधकमाह - **अतीते**ति। ननु स्वविषयग्राहकप्रत्यक्षस्य स्वसमकालवृत्तिपदार्थ ग्राहकत्वनियमवत् स्वविषयप्रागभावग्राहकानुभूतेरपि स्वसमकालवृत्तिप्रागभावग्राहकत्वनियमेन ग्राहककाले ग्राह्यविशेषस्य, ग्राह्यकाले ग्राहकस्य चासत्त्वेन, न स्वप्रागभावग्राहकत्वं स्वस्येति कस्यचिन्मन्दधियः शङ्कां परिहर्तुमनुवदति - **अथे**ति। **मन्यस** इत्युपालम्भः। किमयं नियमोऽदृष्ट एव प्रतिपाद्यते, उत दृष्ट इति विकल्पं हार्दं कृत्वा प्रथमं निरस्यति - **किं त्वये**ति। **क्वचित्** = अनुभूतितत्प्रागभावयोः। **एवं** = समकालवृत्तित्वेन ग्राह्यग्राहकभावः। **येने**ति। एवमदर्शनादेवं नियमकथनमनुपपन्नमित्यर्थः। द्वितीयं दूषयति - **हन्ते**ति। हन्तेति हर्षेऽनुकम्पायां वा। यतो भवतैवं नियमस्य दृष्टत्वात्स्वप्रागभावग्राहकत्वमनुभूतेः सिद्धमिति तद्गृहीतस्वप्रागभावोऽपि सिद्ध एवेति कथं प्रागभावापह्नवः क्रियते। अनुभूतिप्रागभावनिरासे प्रवृत्तेन त्वयैव तत्र प्रमाणोपन्यासात्कथं प्रागभावासिद्धिरुच्यत इति भावः। वस्तुतोऽनुभूतेः स्वान्यप्रागभावसमकालवर्तित्वदर्शनेन, तद्वत्स्वप्रागभावसमकालवर्तित्वमप्यस्तीति भ्रान्त्या गृहीतमित्याह - **तत्प्रागभावमि**ति। **को ब्रवीती**ति त्वमेव ब्रवीषीत्यर्थः। उन्मत्तवद्वाग्विरोधमप्यजनतस्तव व्याहतभाषित्वस्वाभाव्यादिति भावः।

ननु ज्ञानस्य स्वसमानकालवृत्तिपदार्थग्राहकत्वनियमाभावे सर्वस्यापि पदार्थस्य सर्वत्र सर्वदा ग्रहणं स्यात्। चाक्षुषज्ञानस्याविद्यमानघटादिग्राहकत्वे इन्द्रियाणां प्रतिनियतविषयग्राहकत्वमपि न स्यात्, विषयाभावस्याविशिष्टत्वात् विद्यमानविषयग्राहकत्वनियमे ह्यस्य विषयस्यानेनैवेन्द्रियेणसंबन्धः नान्येनेति कार्यबलान्नियन्तुं शक्यम्। प्रत्यक्षस्यासमानकालवृत्तिपदार्थग्राहकत्वं वदतां सौत्रान्तिकाणां मतञ्च कथं क्षेप्स्यसीत्याशङ्क्याह - **इन्द्रियजन्मन** इति। मनोव्यतिरिक्ताऽस्मदादीन्द्रियजन्यस्येत्यर्थः। मानसप्रत्यक्षस्य योगिज्ञानस्य च स्वसमकालवृत्तिपदार्थ ग्राहकत्वाभावात्।

**प्रत्यक्षस्य ह्येष स्वभावनियमः, यत् स्वसमकालवर्तिनः पदार्थस्य ग्राहकत्वम्; न सर्वेषां ज्ञानानां प्रमाणानाञ्च; स्मरणानुमानागमयोगिप्रत्यक्षादिषु कालान्तरवर्तिनोऽपि ग्रहणदर्शनात्।**

**अत एव च प्रमाणस्य प्रमेयाविनाभावः। न हि प्रमाणस्य स्वसमकालवर्तिना अविनाभावोऽर्थसम्बन्धः; अपि तु यद्देशकालादिसम्बन्धितया योऽर्थोऽवभासते, तस्य तथाविधाकारमिथ्यात्वप्रत्यनीकता। अत इदमपि निरस्तम् - स्मृतिर्न बाह्यविषया नष्टेऽप्यर्थे स्मृतिदर्शनात् - इति॥**

---

ज्ञानस्येत्यनुक्त्वा **प्रत्यक्षस्ये**त्युक्तिः क्वचिल्लिङ्गभूतेन्द्रियजन्यज्ञानव्यवच्छेदाय। **हिः** प्रसिद्धौ। नियमशरीरं वक्ति — **त**दिति। स्वसमकालवर्तिनः पदार्थस्य ग्राहकत्वमिति यत्, एष इन्द्रियजन्यप्रत्यक्षस्य स्वभावनियम इत्यर्थः। विधेय-प्राधान्यात् **एष** इति पुल्लिङ्गनिर्देशः, 'शैत्यं हि यत्सा प्रकृतिर्जलस्ये'त्यादाविव। अत्र ज्ञानकारणभूतेन्द्रियसम्योगस्यातीता-नागतपदार्थनिष्ठत्वासम्भवात्स्वसमकालवृत्तिपदार्थग्राहकत्वमेवेति तादृशं ग्राहकत्वं तज्जन्यप्रत्यक्षज्ञाने उपचरितम्। एतेन पदार्थानां स्थितिक्षणे इन्द्रियसम्बन्धान्नश्यत्क्षणे जायमानाया बुद्धेः स्वग्राह्यविषयसमकालत्वसम्भवेऽपि नश्यत्क्षणे इन्द्रियसन्निकर्षेणानन्तरं जायमानाया धियः विषयसमकालत्वं नास्तीति शङ्का परिहृता। न चोक्तस्थले ज्ञानोत्पत्तिक्षणे विषयस्याभावेन ज्ञानस्य भ्रमत्वमेवेति वाच्यम्। यदा विषयस्तदा तथैव ग्रहणेन भ्रमत्वासम्भवात्।

**इन्द्रियजन्मनः प्रत्यक्षस्ये**त्युक्त्या व्यवच्छेद्यं दर्शयति - **ने**ति। **ज्ञानाना**मित्यनेन भ्रमप्रमितिरूपज्ञानसामान्यस्य ग्रहणम्। **प्रमाणाना**मित्यनेनावान्तरभेदप्रमाणज्ञानस्य, **च**शब्देन प्रत्यक्षज्ञानसामान्यस्य। हेतुं दर्शयति - **स्मरणे**ति। **स्मरण**शब्दः भ्रान्त्युपलक्षकः। अनेन ज्ञानसामान्यस्य पूर्वोक्तनियमो व्युदस्तः। ज्ञानस्य स्वसमकालवृत्तिपदार्थविषयकत्वे नियामकमित्यप्येतेन निरस्तम्। **अनुमानागमे**त्यनेन प्रमाणज्ञानसामान्यस्य नियमो व्युदस्तः। प्रमाणज्ञानत्वस्य नियामक-त्वञ्चानेन निरस्तम्। **योगिप्रत्यक्षे**त्यनेन प्रत्यक्षज्ञानमात्रस्य नियमो व्युदस्तः। प्रत्यक्षत्वं नियामकमित्यपि निरस्तम्। ननु प्रमाणस्य प्रमेयव्याप्यत्वात्कथं प्रमितेस्स्वविषयभिन्नकालत्वम्। अन्यथा क्वचिदर्थशून्यत्वेऽपि ज्ञानस्य प्रामाण्यापत्तिः। प्रामाण्याप्रामाण्यव्यवस्था च न सिध्येत्। अत एव हि प्रमाणस्य प्रमेयाविनाभावरूपसम्बन्ध इति शास्त्रीयैर्घुष्यत इत्यत्राह **अत एवे**ति। **अत एव** = ज्ञानस्यातीतादिपदार्थविषयकत्वसमर्थनादेव। क्वचित्तस्य प्रामाण्यसमर्थनादिति **चा**र्थः। तत्र **प्रमाणप्रमययोरविनाभाव** इत्यन्वयः। अन्यथाऽसमकालवृत्तिपदार्थ-ग्राहिणां तत्तत्प्रमाणानां विद्यमान-विषयसम्बन्धाभावेन प्रमेयाविनाभावासिद्धिप्रसङ्गादिति भावः। विवक्षितमविनाभावं दर्शयति - **अपि त्वि**ति। **आदि**शब्देन संस्थानपरिग्रहः। **तथाविधाकारे**ति। तद्देशकालादिसंबन्धित्वरूपाकारस्य मिथ्यात्वे प्रमाणस्य प्रत्यनीक-त्वमेव प्रमेयाविनाभाव इत्यर्थः। अयं भावः - यद्वस्तु यद्देशकालवृत्तितयाऽवगतं तस्य वस्तुनस्तद्देशकालवृत्तित्वारोपं प्रमाणज्ञानं निवर्तयति। अतः प्रमाणस्य प्रमेयाविनाभावोऽबाधितार्थकत्वरूप एवेति। एवं ज्ञानस्य स्वसमकालपदार्थ-ग्राहित्वमुपपादितम्।

अथ प्रसङ्गात् तद्बलेनैव स्मृतेर्निर्विषयत्वं निरस्यति — **अत** इति। 'स्मृतिर्न बाह्यविषया स्मृतित्वादि'त्यनुमान-प्रयोगः। **नष्टेप्यर्थे स्मृतिदर्शना**दित्यनेन नष्टार्थविषयकस्मृतित्वस्य न हेतुत्वोक्तिः। स्मृतौ **नष्टार्थविषयकत्वं** स्वीकृत्यैव बाह्यार्थविषयकत्वनिरासानुपपत्तेः। **अपि**शब्दानन्वयाच्च। किन्तु न्यायप्रदर्शनं परं तत्। **अर्थे नष्टेऽपि स्मृतिदर्शनादि**-त्यन्वयः। यथा अर्थस्य नष्टत्वेऽपि स्मृतिदर्शनेन तस्याः निर्विषयकत्वं, तद्वद्वर्तमानार्थविषयकत्वेनाभिमता स्मृतिरपि न बाह्यार्थविषयेति भावः। अयमत्र समाधिः - अर्थनाशानन्तरं जायमानायाः स्मृते र्यदि निर्विषयत्वं, तदा तन्न्यायेन सर्वस्यापि स्मृतेः निर्विषयकत्वं स्थापयितुं शक्यते। न च तदेव प्रामाणिकं ज्ञानस्यातीतानागतार्थविषयकत्वस्य

**अथोच्येत - न तावत्संवित्प्रागभावः प्रत्यक्षावसेयः, अवर्तमानत्वात्। न च प्रमाणान्तरावसेयः लिङ्गाद्यभावात्। न हि संवित्प्रागभावव्याप्तमिह लिङ्गमुपलभ्यते। नानुपपत्तिरपि कस्यचिद्दृश्यते। न चाऽऽगमस्तद्विषयो दृष्टचरः। अतस्तत्प्रागभावः प्रमाणाभावादेव न सेत्स्यतीति; यद्येवम्, स्वतस्सिद्धत्वविभवं परित्यज्य प्रमाणाभावे (प्रमाणभावे) अवरूढश्चेत्, योग्यानुपलब्ध्यैवाभावस्समर्थित इत्युपशाम्यतु भवान्॥**

---

स्थापितत्वात्। न हि प्रमाणप्रमेययोः समकालत्वनियमोऽङ्गीकृतः। तस्येन्द्रियजन्यप्रत्यक्षज्ञानप्रमेयमात्रसाधारणत्वात्। अन्यथा कालान्तरवृत्तिपदार्थग्राहकस्मरणानुमानागमयोगि प्रत्यक्षादीनामनुभवसिद्धानामप्रामाण्यप्रसङ्गादिति॥

एवमनुभूतिप्रागभावो अनुभूत्यैव गृह्यत इत्युक्तम्। तत्र स्वप्रागभावग्राह्यानुभूतिः किं प्रत्यक्षरूपा उत तदन्यरूपेति विकल्प्य पक्षद्वयस्याप्यसम्भवेन न तत्प्रागभावसिद्धिः। यदि सा प्रमाणानन्तर्भूता, तर्हि तस्याः प्रामाण्यासम्भवेन प्रागभावासिद्धिर्निष्प्रत्यूहैवेत्याशयेन शङ्कते — **अथोच्येत** इति। **न तावदिति**। **तावदि**त्यवधारणे। प्रत्यक्षरूपया संविदा स्वप्रागभावः दुर्ग्रह एवेत्यर्थः। हेतुमाह — **अवर्तमानत्वादि**ति। प्रत्यक्षस्य स्वसमकालवृत्तिपदार्थग्राहकत्वनियमस्य त्वयैवोक्तत्वात् ग्राहकप्रत्यक्षरूपानुभूतिसद्भावकाले स्वविरुद्धस्वप्रागभावासत्वेन तद्विषयकप्रत्यक्षासम्भवादिति भावः। परोक्षग्राह्यत्वमपि व्युदस्यति — **न चेति**। अत्र **प्रमाणान्तर**शब्दोऽनुमानार्थापत्तिशाब्दबोधरूपप्रमाणपरः। उत्तरत्रा**दि**शब्दप्रयोगात्। हेतुमाह — **लिङ्गादीति**। **आदि**शब्देनानुपपत्तिशब्दयोर्ग्रहणम्। एवं सामान्यतः प्रतिज्ञाय लिङ्गाद्यभावं वाक्यत्रयेणोपपादयति - **न हीत्यादिना दृष्टचर** इत्यन्तेन। तन्मतेऽर्थापत्तेरतिरिक्तप्रमाणत्वे पृथगुपन्यासः। स्वमतेऽनुमानन्तर्भावसूचनार्थमनुमानाव्यवहितनिर्देशः। एवमुक्तमर्थं निगमयति — **अत** इति। अनुभूतिप्रागभावस्य प्रत्यक्षाद्यवसेयत्वाभावेन तत्र न किञ्चिदपि प्रमाणमिति तत्प्रागभावासिद्धिर्दुर्वारैवेति भावः। 'इदं वाक्यं संवित्प्रागभावविषये स्वाभिमतषष्ठप्रमाणनिवृत्तिपरमि'त्यपि तत्वटीका। "प्रमाणपञ्चकं यत्र वस्तुरूपे निवर्तते। वस्तुसत्तावबोधार्थं तत्राभावः प्रमाणता॥" इति परैरुक्तेः। अस्मिन्नर्थे **प्रमाणाभावादे**वेत्यधिकनिर्देशस्स्वरसः। तदेतद्दूषयति — **यद्येवमिति**। केषुचित्कोशेषु **चे**दित्येतन्न दृश्यते। अस्ति चेत्तर्ह्यर्थकः। **यद्येवं** इति श्रीसूक्तेः विवरण रूपं **स्वतस्सिद्धत्वविभवं ... अवरुद्धश्चेत्'** इत्यन्तम्। अतो नान्वयक्लेशः। **तर्हि** इत्यध्याहार्यम्। **चेत्** इति यद्यर्थकम्।

अयमाशयः - संवित्प्रागभावग्राहकप्रमाणाभावद्धि तत्प्रागभावो नास्तीत्युच्यते। तर्हि संविदम् इयमिति विषयीकृत्य तदभावो नास्तीति वक्तव्यम्। तर्हि तस्याः स्वतस्सिद्धत्वं परित्यक्तम्। न ह्यन्यस्य घटादेः प्रागभावो नास्तीत्युच्यते। किन्तु संविद एव। तस्मात्तां विषयीकृत्यैव तत्प्रागभावः प्रमाणाभावान्नास्तीति वक्तव्यम्। इदञ्च स्वतस्सिद्धत्वपरित्यागे एव। अतश्चानुभूतेरन्यगोचरत्वसम्भवेन तां 'इयमि'ति विषयीकृत्य तत्प्रागभावोऽन्यतस्सिध्येत् इति। तदन्यत्किमित्यत्राह — **योग्येति**। यदि स्यादुपलभ्येत, यस्मान्नोपलभ्यत तस्मात्संविन्नास्तीति हि योग्यानुपलब्ध्या संवित्प्रागभावः साधनीयः। तत्र संविदोऽनन्यगोचरत्वेन वस्तुसद्भावेऽपि न तदनुपलब्धिः प्रागभावसाधिकेति न शक्यं वक्तुम्। स्वतस्सिद्धत्वविभवस्य भवद्भिरेव परित्यक्तत्वात्। तस्मात्तत्प्रागभावसिद्धिर्दुस्त्यजैव। अपि च प्रागभावग्राहकज्ञानाभावाद्धि ज्ञानप्रागभावसिद्धिं ब्रवीषि तर्हि तत एव ज्ञानाभावः सिद्ध इति कृतमायासेन।

एवं ज्ञानप्रागभावस्याभावं ब्रुवता स्वज्ञानाभावदर्शनेन ज्ञानिसमाश्रयणमप्यनुपपन्नम्। परज्ञानोत्पादनाय तदनुगुणवाक्यप्रयोगोऽपि निष्फलः। अज्ञातार्थे न जानामीति व्यावहारोऽप्यनुपपन्नः। तस्मादनुभूतिप्रागभावानभ्युपगमे सर्वोपप्लव प्रसङ्ग इति। अत्र योग्यानुपलब्धिरूपप्रमाणोपन्यासः परमतानुसारेण। तन्मते तस्या अभावप्रमाणतया स्वीकारात्। स्वमतेऽप्यवस्थान्तरोपलब्धिरेव ज्ञानस्य योग्यानुपलब्धिः। यथा घटस्य योग्यानुपलब्धिः पिण्डत्वाद्युप-

**किञ्च प्रत्यक्षज्ञानं स्वविषयं घटादिकं स्वसत्ताकाले सन्तं साधयत्, तस्य न सर्वदा सत्तामवगमयद्दृश्यत इति घटादेः पूर्वोत्तरकालसत्ता न प्रतीयते । तदप्रतीतिश्च संवेदनस्य कालपरिच्छिन्नतया प्रतीतेः । घटादिविषयमेव संवेदनं स्वयं कालानवच्छिन्नं प्रतीतं चेत्, संवेदनविषयो घटादिरपि कालानवच्छिन्नः प्रतीयेतेति नित्यस्स्यात् ।**

---

लब्धिः, तद्वत् । एवं ज्ञानप्रागभावग्राहकप्रमाणमुपन्यस्यानुभूतेरनित्यत्वं स्थापितम् । अथानुभूतेर्नित्यत्वे बाधकमप्यस्तीत्याह — **किञ्चेति** । **प्रत्यक्षज्ञानं** = अस्मदादीन्द्रियजन्यज्ञानम् । योगिप्रत्यक्षस्य त्रैकालिकपदार्थग्राहित्वेन तेन विषयनित्यत्वापादनासम्भवात् । उभयत्रापि **स्व**शब्दः प्रत्यक्षज्ञानपरः । **साधयत्** = व्यवहारानुगुण्यमापादयत् । **सर्वदा** = यावद्घटसत्वम् । **पूर्वोत्तरकालसत्तेति** । यदा 'अयं घट' इति ज्ञानम् । ततः पूर्वं तदुत्तरञ्च घटसत्ताप्रतीति र्नास्तीत्यर्थः । ततः किमित्यत्राह — **तदप्रतीतिरिति** । **तदप्रतीतिः** = घटसत्ताऽप्रकाशः । **च**कारः **प्रतीतेरि**त्यत्र योज्यः । संवेदनस्य कालपरिच्छिन्नत्वात् घटाद्यप्रकाश इत्यर्थः ।

ननूक्तयुक्त्या हि संवेदनस्य कालपरिच्छिन्नत्वं कल्प्यम् । स चोपलम्भविरोध इत्यत्राह — **प्रतीतेरिति** । **प्रतीतेश्च** = संवेदनस्य कालपरिच्छिन्नतयोपलब्धेश्च । ततश्च कालपरिच्छिन्नत्वन्न कल्प्यते । किन्त्वनुपपत्तिसहकृतोपलब्धिबलात्तत्स्वीक्रियत इति । अयं त्विह भावः - सर्वलोकसिद्धस्य सविषयकज्ञानस्य हि भवता नित्यत्वं स्थाप्यते । स्वतस्सिद्धत्व हेतूक्तेः । स्वतस्सिद्धत्वमपि हि सविषयकस्यैव । **स्वसंबन्धादि**त्यादि हेतुप्रदर्शनात् । अतश्च सविषयकज्ञानस्य नित्यत्वे तद्विषयघटादेरपि सर्वदाभानापत्तिः । न च तदिष्टम् । अनुपलम्भपराहतत्वात् । अतो घटगतकादाचित्कप्रकाश एव स्वविषयिणोज्ञानस्य कादाचित्कत्वमपि साधयतीति । एवं ज्ञानस्य नित्यत्वे तद्विषयघटादेरपि यावत्कालं प्रकाशमानत्वमापादितम् । अथ ज्ञाननित्यत्ववद्विषयनित्यत्वमप्यापद्यत इत्यापादयति - **घटादिविषयमिति** । **नित्यस्स्यादिति** । ननु घटादिविषयकज्ञानस्य कालानवच्छिन्नत्वे तद्विषयघटादीनामपि कालानवच्छिन्नत्वापादनं कथमिति चेदयमत्र भावः - प्रत्यक्षेविषयस्य हेतुत्वेन यावत्प्रत्यक्षज्ञानं तावत्तद्विषयोऽप्यावश्यकः । अन्यथा प्रत्यक्षज्ञानं स्वविषयघटादेः स्वसद्भावकाले सद्भावं साधयति इति स्वस्येव तस्यापि नित्यत्वमेव प्रसज्येत । न च ज्ञाननित्यत्ववादिनामस्माकं प्रत्यक्षे विषयस्य हेतुत्वं नाभिमतमेवेति वाच्यम् । तथा सतीन्द्रियादिसन्निकर्षस्याप्यहेतुत्वापत्तेः । ततश्च विषयाभावे चक्षुरादीन्द्रियाद्यभावे च सर्वेषां प्रत्यक्षज्ञानापत्तिः, अन्धबधिराद्यभावापत्तिश्चेति दोषः । अत्र **प्रत्यक्षज्ञान**मित्यादिना **नित्यस्स्यादि**त्यन्तेनैकमेवापादनमुच्यते ।

अयमत्र भावः - प्रत्यक्षज्ञानस्य स्वसद्भावकाले विषयसद्भावसाधकत्वनियमेन तस्य च नित्यत्वे सर्वदा विषयप्रकाश आपद्येत । विषयस्य च सर्वदाऽप्रकाशमानत्वेन ज्ञानस्याप्यनित्यत्वमेवेष्टव्यम् । अन्यथा विषयस्य नित्यत्वापत्तिरिति । अस्याञ्च योजनायां **स्वसत्ताकाले सन्तमि**ति पदनिर्देशस्स्वरसः । पूर्वत्र तु घटादेः **पूर्वोत्तरकालसत्ता न प्रतीयत** इति पदनिर्देशस्स्वरस इति बोध्यम् । अत्र **घटादिविषयमेवे**ति अत्यन्तानुपपन्नत्वद्योतकावधारणसहितनिर्देशः प्रत्यक्षज्ञानस्य नित्यत्वोक्तिरपसिद्धान्तेति व्यनक्ति । तन्मतेऽपि प्रत्यक्षज्ञानस्य सन्मात्रग्राहित्वोपपादनायैकक्षणमात्रवृत्तित्वं पूर्वमुपपादितम् । ननु ज्ञाननित्यत्वे विषयनित्यत्वापादनन्न सम्भवति । घटादिविषयकप्रत्यक्षज्ञानस्य भवद्भिः त्रिचतुः क्षणावस्थायित्वस्वीकारेण यदा घटविषयकप्रत्यक्षमुत्पन्नं तदनन्तरक्षणे तत्पूर्वक्षणसन्निपाताद्दृष्टादिनाशकारणजनित घटध्वंसो जातः, तत्र विषयस्याभावेऽपि ज्ञानस्य सत्वात् । न हि तत्र ज्ञानसद्भावहेतुना विषयसद्भावः स्थापयितुं शक्यते । तद्वदेवास्माकमपि ज्ञाननित्यत्वेऽपि विषयनित्यत्वप्रसङ्गो न भवतीति चेन्न । तादृशस्थलेऽस्माभिरपि ज्ञानस्य त्रिचतुःक्षणावस्थायित्वानङ्गीकारेणानुपपत्त्यभावात् । तदनन्तरकालिकव्यवहारादीनां तज्जन्यस्मृतिमूलकत्वा-

**नित्यं चेत् संवेदनं स्वतस्सिद्धं नित्यमित्येव प्रतीयेत। न च तथा प्रतीयते। एवमनुमानादिसंविदोऽपि कालानवच्छिन्नाः प्रतीताश्चेत्, स्वविषयानपि कालानवच्छिन्नान्प्रकाशयन्तीति ते च सर्वे कालानवच्छिन्ना नित्यास्स्युः, संविदनुरूपस्वरूपत्वाद्विषयाणाम्। न च निर्विषया काचित्संविदस्ति, अनुपलब्धेः। विषय-**

---

भ्युपगमेनोपपत्तेः। बाधकान्तरमाह — **नित्यं चेदि**ति। **स्वतस्सिद्धमि**ति हेतुगर्भविशेषणम्। अयं भावः - ज्ञानस्य नित्यत्वं हि भवतेष्यते। तच्च नित्यत्वं स्वयंप्रकाशन्न वा। नो चेत्तदा ज्ञानं इदमिति विषयीकृत्य तस्य नित्यत्वं स्थापनीयम्। न ह्यन्यस्य नित्यत्वं सम्प्रति स्थाप्यते, किन्तु ज्ञानस्यैव। अतो ज्ञानस्य ज्ञानान्तरविषयत्वेन भवदभ्युपगतस्वतःसिद्धत्वं भज्येत। आद्ये यदा घटविषयकज्ञानं, तदा ज्ञानमिव तद्गतनित्यत्वमपि स्वतः प्रकाशेत। न च तथा कस्यचिदपि प्रकाशते। अतो न तन्नित्यत्वसम्भव इति। न चानित्यत्ववादिनां मतेप्येवं विकल्पसम्भव इति वाच्यम्। अनित्यत्वस्यास्वयंप्रकाशत्वेऽपि अन्यतः संविदं इयमिति विषयीकृत्यानित्यत्वसाधन सम्भवात्। न चैतावता संविदस्स्वतस्सिद्धत्वहानिः। अस्मदभ्युपगतस्वयंप्रकाशत्वस्य संविदो ज्ञानान्तर वेद्यत्वाभ्युपगमेऽप्यनपायात्॥

ननु नित्यत्वपक्षेऽपि न नित्यत्वस्य संविद इव स्वयंप्रकाशत्वम्। नापि घटादिवदस्वयंप्रकाशत्वम्। किन्तु यादृशसंविदो नित्यत्वं तादृश संविदैव स्वस्या इव नित्यत्वस्यापि विषयीकारसम्भवेन दोषानुपपत्तेः। संविद्गतनित्यत्वस्यान्यसंविदा विषयीकार्यत्वाङ्गीकारे हि संविदोऽपि तद्विषयीकार्यत्वापत्या संविदस्स्वतस्सिद्धत्वं दूरापास्तमिति शङ्कितुमपि शक्यम्। अतो नित्यत्वसाधनतया संविद इयमिति विषयीकरणाभावेऽपि स्वगतनित्यत्वं स्वयमेवप्रकाशयति। अतो नोक्तदोषावकाश इति चेन्न। संविद्गतनित्यत्वस्य संविदैव प्रकाश्यत्वे स्वतः संविद्भानदशायां तद्गतनित्यत्वस्यापि भासमानत्वापत्तेः। न हि कस्यचिदपि वा स्वसंविद्भानसमये तद्गतनित्यत्वं भासते। अतोऽयं घट इत्यादि प्रत्यक्षज्ञानेनैव स्वगतनित्यत्वभानमनुपपन्नमिति न संविदोनित्यत्वसिद्धिः। न चानित्यतयानवभासमानत्वान्नित्यत्वसिद्धिरिति सम्भवति। संविद्गतानित्यत्वस्य स्वयंप्रकाशत्वानङ्गीकारात्संविदोऽपि ज्ञानान्तरवेद्यत्वाभ्युपगमाच्चेति। यदि स्वतस्सिद्धत्वमपि परित्यज्य, ज्ञानान्तरेण नित्यत्वं साध्यते, तर्हि तेनैव न्यायेन प्रागभावोऽपि सुसाधः। तस्मान्न संविदो नित्यत्वं प्रमाणसिद्धम्।

एवं प्रत्यक्षज्ञानस्य नित्यत्वं न सम्भवतीत्युक्तम्। अथोक्तयुक्त्यैवानुमानादिधियामपि नित्यत्वाङ्गीकरणमयुक्तमिति दर्शयति - **एवमि**ति। नित्यास्स्युरिति। नन्वनुमानादिधियां प्रत्यक्षवन्न स्वसमकालवर्तिपदार्थग्राहित्वनियमः। अन्यथाऽतीतानागतादिविषयकानुमानस्योच्छेदप्रसङ्गात्। ततश्च कथं प्रत्यक्षविषयस्येवानुमानविषयस्य नित्यत्वापादनमिति चेन्न। अनुमानादेरप्यतीतानागतादिपदार्थग्राहित्वाभावात्। अतितत्वानागतत्वयोरेव वस्तुन्यसम्भवात्। न चानुमनादिज्ञानापेक्षया वस्तुन्यतीतत्वसम्भवः। तेषाञ्च नित्यत्वेन सर्वदाविद्यमानत्वात् तदपेक्षयातीतत्वानागतत्वासम्भवात्। नापि लिङ्गापेक्षया तत्सम्भवः। लिङ्गादीनां प्रत्यक्षविषयत्वेन प्रत्यक्षविषयस्य च नित्यत्वोपपादनात्तदपेक्षयाप्यसम्भवात्। वस्तुतो व्याप्यभूतस्य लिङ्गादेः प्रत्यक्षविषयस्य नित्यत्वे तद्व्यापकस्यापि नित्यत्वमभ्युपेयमेव। अन्यथा व्यभिचारादिदोषप्रसक्त्या अनुमानादिधियामप्रामाण्यप्रसङ्गात्। **संविदनुरूपस्वरूपत्वात्** = अनुमानादिसंवित्समकालवृत्तित्वावश्यम्भावात्। अयं भावः - यद्यनुमानादिधियामतीतानागतार्थग्राहित्वमिष्यते, तर्ह्यर्थसद्भावकालापेक्षया तादृशसंविदां कालान्तरभावित्वमभ्युपेयम्। ततश्च तासां कालपरिच्छिन्नत्वेन प्रागभावः सिद्ध एव। यदि तु नेष्यते तदाऽनुमानादिसंविदामपि स्वसमकालवृत्तिपदार्थग्राहित्वाभ्युपगमेन प्रत्यक्षविषयस्येव तद्विषयस्यापि नित्यत्वं प्रसज्यत एवेति।

ननु विषयाश्रयशून्याया एव हि संविदो नित्यत्वमस्माभिरुच्यते। न तु सविषयायाः प्रत्यक्षादिसंविदः येनोक्तदोषः प्रसज्येत इत्यत्र तादृशसंविदः योग्यानुपलब्धिपराहतिः स्वोक्तिविरोधश्च भवतीत्याह - **न चे**ति। **निर्विषयेत्यत्र विषय**शब्दः विषिणोति विशेषेण सम्बध्नातीति व्युत्पत्त्या संविदवच्छेदकवेद्यवेदित्रुभयपरः। निर्विषया निराश्रया

**प्रकाशनतयैवोपलब्धेरेव हि संविदः स्वयम्प्रकाशता समर्थिता। संविदो विषयप्रकाशनतास्वभावविरहे सति स्वयम्प्रकाशत्वासिद्धेः, अनुभूतेरनुभवान्तराननुभाव्यत्वाच्च संविदस्तुच्छतैव स्यात्। न च स्वापमदमूर्च्छादिषु सर्वविषयशून्या केवलैव संवित् परिस्फुरतीति वाच्यम्, योग्यानुपलब्धिपराहतत्वात्। तास्वपि दशास्वनुभूति-रनुभूता चेत्तस्याः प्रबोधसमयेऽनुसन्धानं स्यात्; न च तदस्ति।**

**नन्वनुभूतस्य पदार्थस्य स्मरणनियमो न दृष्टचरः। अतः स्मरणाभावः कथमनुभवाभावं साधयेत्? उच्यते। निखिलसंस्कारतिरस्कृतिकरदेहविगमादिप्रबलहेतुविरहेऽप्यस्मरणनियमोऽनुभवाभावमेव साधयति।**

---

चेत्यर्थः। **विषयेत्यादिकं** प्रागुक्तानुमानसूचकम्। **संविद** इत्यादिकं पराभ्युपगतार्थविरोधबोधकम्। अयमाशयः - विषयप्रकाशत्वं हि संविदो धर्मः। अतस्तत्समकालदृष्टस्वयंप्रकाशत्वमित्युच्यते। सम्प्रति तस्य परित्यागे न स्वयंप्रकाशत्वं सिध्येत्। अनुभूतित्वहेतुनापि स्वयंप्रकाशत्वसाधनन्न सम्भवति, तस्यापि विषयप्रकाशत्वरूपत्वेन तन्निवृत्तौ तत्सिध्य-सम्भवात्। यदि त्वन्यादृशं, किं तर्हि तत्, वर्तमानदशायां स्वसत्तयैव स्वाश्रयं प्रति प्रकाशमानत्वरूपं पूर्वमस्मदुक्तं चेत्, तस्यैव स्वयंप्रकाशत्वरूपतया हेतुसाध्ययोरविशेषापत्तिरिति। न केवलं तस्य स्वयंप्रकाशत्वासिद्धिमात्रम्। वस्तुतो वस्तुनोऽपि तुच्छत्वमापद्यत इत्याह - **अनुभूतेरिति**। भवद्भिः स्वतः परतो वाऽप्रकाशमानस्यैव तुच्छत्वाभि-मतत्वादिति भावः। निर्विषय निराश्रयानुभूतेरनुपलब्ध्यसिद्धिं शङ्कते - **न चेति**। **केवलैव** = निराश्रया। अयं भावः - जागरादिदशासु सविषयानुभूतेरेवोपलब्ध्या निर्विषयकनिराश्रयानुभूतेरनुपलब्धिपराहतत्वेऽपि स्वापादिदशायां तदुपलब्ध्या तत्सिद्धिरिति। तत्रापि योग्यानुपलब्धिपराहतिं दर्शयति - **योग्येति**। यद्यपि स्वापादिदशासु तादृशसंविद-स्सद्भावेऽपि न नित्यत्वप्रसक्तिः। जागरादिदशासु योग्यानुपलब्धिपराहतत्वेन तदभावस्य तेनाप्यङ्गीकार्यत्वात्। अथापि वस्तुन एवासत्त्वेन तत्रनित्यत्वानित्यत्वविचारः सुदूरापास्त इत्याशयेन वस्त्वसद्भावदूषणमेव प्रधानतया भाषितम्। यद्वा - **न चेत्यादि** ग्रन्थः तुच्छत्वमात्रव्यावृत्तये प्रवृत्तः। तत्र पूर्वोक्तस्य तुच्छत्वस्य स्थापनायानुपलब्धिः हेतुतयोक्ता इति न दोषः।

ननु योग्यानुपलब्धिपराहतत्वादित्यसिद्धम्। तथाहि - किमत्र योग्यानुपलब्धिः स्वापादिदशावर्तिनी, उत जागर-वर्तिनी। न प्रथमः। यदि निर्विषयानुभूतिस्स्यात्तर्हि सोपलभ्येतेति तदानीमापादनासम्भवात्, तदानीं तस्या अयोग्यत्वात्। नापि द्वितीयः। स्वापादिदशावर्तिनः निर्विषयकानुभवस्य कालान्तरे प्रत्यक्षयोग्यत्वासम्भवात्। न हि कालान्तरवर्तिनो घटस्याद्यतनानुपलब्ध्या कालान्तरेपि स्थापयितुं शक्यमित्यत्र यदि स्वापादिदशासु निर्विषयकानुभूतेः परिस्फुरणं, तर्हि स्वापानन्तरदशायां स्वापादिषु निर्विषयासंविदासीदिति प्रतिसन्धानं स्यात्। अतश्चैवं प्रतिसन्धानस्य योग्यानुप-लब्धिपराहतत्वेन तदानीं निर्विषयकानुभूतिस्फुरणं निरस्यत इत्याशयेनाह - **तास्वपीत्यादिना न च तदस्तीत्यन्तेन**॥

ननु योग्यानुपलब्धिपराहतानुसन्धानस्याभावमात्रेण नानुभवाभावसाधनसम्भवः। स्मरणस्यानुभवव्यापकत्वा-भावात्। व्यापकत्वे सति हि व्यापकाभावाद्व्याप्याभावसाधनसम्भवः। अस्मदनुभूतसर्वपदार्थस्यापि स्मरणादर्शनेन तयोर्व्याप्यव्यापकभावस्य सुदूरपराहतत्वादिति शङ्कते - **नन्विति**। न केवलं स्मरणस्यानुभवव्यापकत्वमुच्यते येन व्याप्यव्यापकभावो भज्येत, परन्तु स्मरणप्रतिबन्धकशून्यकालस्मरणस्यानुभव व्यापकत्वम्। अतश्चानुभवजन्य-संस्कारादिनाशसामग्र्यभावेऽपि नियमेन स्मरणस्यावश्यकतया तदानीं नियमेनास्मरणे तद्व्याप्यभूतानुभवो नास्तीत्येव वक्तव्यमित्याशयेन समाधत्ते - **उच्यत इति**। अत्र देहविगमादेर्निखिलसंस्कारतिरस्कृतिकरत्वभाषणं प्रायिकाभिप्रायेण। देहविगमे सत्यपि जातमात्रस्य पूर्वानुभव जन्यसंस्कारबलेन स्तन्याभिलाषदर्शनात्। अत्रादिशब्देन नरकक्लेशादीनां

**न केवलमस्मरणनियमादनुभवाभावः ; सुप्तोत्थितस्य, 'इयन्तं कालं न किञ्चिदहमज्ञासिषम्' इति प्रत्यवमर्शेनैव सिद्धेः । न च सत्यप्यनुभवे तदस्मरणनियमो विषयावच्छेदविरहादहङ्कारविगमाद्वेति शक्यते वक्तुम्;**

ग्रहणम् । अत्र 'प्रायणान्नरकक्लेशात्प्रसूतिव्यसनादपि । चिरातिवृत्ताः प्राक्जन्मभेदाः न स्मृतिगोचराः ।।' इति संवित्सिद्धावुक्तः श्लोकोऽनुसन्धेयः । सन्ति केचन जातिस्मराः तेषां तु तत्स्मरणमदृष्टातिशयात् । इत्थञ्च केवलानुभवस्य न स्मरणव्याप्यत्वम् । किन्तु देह विगमादिप्रबलप्रतिबन्धकरहितानुभवस्यैव । प्रकृते च व्यापकीभूतस्मरणाभावेन तद्व्याप्यविशिष्टानुभवाभावस्यावश्यकतया तत्र देहविगमादिप्रतिबन्धकाभावस्य विशेषणस्य सिद्धत्वेन विशेषणवति विशिष्टाभावः सिध्यन् विशेष्यभूतानुभवाभावमदायैव पर्यवस्यतीति न स्वापादिदशास्वपि निर्विषयानुभूतिसिद्धिरिति भावः ।

एवं स्वापादिदशासु निर्विषयानुभवस्य योग्यानुपलब्धिपराहतत्वेन तत्र प्रमाणाभाव उक्तः । अथ तादृशावस्थासु प्रत्युत तादृशानुभवाभावे प्रमाणमस्तीति दर्शयति - **न केवलमि**ति । अनेनार्थात्परोक्तस्य बाधस्सूच्यते । **प्रत्यवमर्शेनैवे**ति । **एव**कारः प्रसिद्धिसूचकः । अयं भावः - संप्रति सुषुप्तिकालमनुमाय तत्र 'यदि किञ्चित् मयाऽनुभूतं स्यात्तर्हि तदद्य स्मर्येत । न च स्मर्यते । तस्मात्तदानीमनुभावो नास्ती'ति सम्प्रतितनेन 'इयन्तं कालं न किञ्चिदहमज्ञासिषमि'ति प्रत्यवमर्शेनानुभवाभाव सिद्धिरिति । ननु 'न किञ्चिदहमज्ञासिषमि'ति प्रत्यवमर्शः न ज्ञानाभावपरः । किन्तु ज्ञाने किञ्चिद्विषयकत्वाभावपरः । अतो भवदुक्तप्रत्यवमर्श एव निर्विषयकानुभूतिसाधनपर इति चेन्न । उक्तप्रत्यवमर्शस्य तथाविधार्थबोधकत्वासम्भवात् । अन्यथा 'देवदत्तो न क्वचिद्गच्छती'त्यादीनामपि वाक्यानां गमने किञ्चित्कर्मकत्वाभाव बोधकत्वापत्तेः । ननु सुषुप्तौ ज्ञानाभाव अनुभूतो न वा ? आद्ये, ज्ञानसामान्याभावः न सम्भवतीति उक्तप्रत्यवमर्शेन ज्ञानसामान्याभावसाधनन्न सम्भवति । द्वितीये, अननुभूतस्य ज्ञानाभावस्य कथमुत्तरत्र प्रत्यवमर्शरूपस्मरणमिति चेत् - सुषुप्तिकालावच्छिन्नतया ज्ञानाभावग्रहणस्यैवात्र प्रत्यवमर्शशब्दार्थत्वादिति ।

ननु निर्विषयकानुभवस्य सुषुप्तावनुभवेऽपि न तत्स्मरणनियम आवश्यकः । सम्प्रतिपन्नस्मरणहेतुभूतविषयरूपावच्छेदान्तःकरणयो तदानीमभावादिति शङ्कां निरस्यति — **न चे**ति । सुषुप्तिदशायां बाह्यार्थसद्भावेऽपि न तदुलब्धिः । तदा अन्तःकरणमपि लीयते । अज्ञानं साक्षिरूपात्मा च साक्षिप्रत्यक्षेण गृह्यते इति परैरभ्युपगतत्वादिति भावः । तत्र हेतुमाह - **अर्थान्तरे**ति । अयं भावः - स्मरणहेतुभूतविषयाहङ्कारयोस्तदानीमभावेनोत्तरत्र स्मरणासम्भववत्तदानीमनुभवस्वरूपमपि न स्यात् । तद्धेतु भूतविषयाहङ्कारयोस्तदानीमभावात् । यदि त्वनुभवं प्रति तयोर्न हेतुत्वं तदा स्मरणं प्रत्यपि हेतुत्वन्न स्यात् । दृष्टिस्तूभयत्रापि तुल्येति । ननु तद्विषयकस्मृतिं प्रति तद्विषयकसंस्कारस्य हेतुत्वात्, सुषुप्तौ च विषयरूपावच्छेदाभावेन संस्कारः किं विषयकस्स्यात् । एवमहङ्काररूपाधाराभावाच्च कुत्र संस्कारो उत्पद्येत । अतः सुषुप्तौ निर्विषयकानुभवसत्वेऽपि संस्काराद्यभावाज्जागरदशायां नियमेनास्मरणमिति चेन्न । किमत्र सुषुप्तौ निर्विषयाऽनुभूतिरनुभूयते, न वा । नो चेत्, गगनकुसुमादिवत्तुच्छत्वापत्तिः । तुच्छत्वपरिहाराय स्वयंप्रकाशत्वकल्पनमप्यनुपपन्नम् । निर्विषयायाः स्वयंप्रकाशत्वासम्भवात् । विषयप्रकाशनस्वभावतयैव भवद्भिस्स्वयंप्रकाशत्वस्य समर्थितत्वाच्च । किञ्च स्वयंप्रकाशत्वं न स्वविषयकप्रकाशत्वरूपम् । तथा सति निर्विषयकत्वेनाभिमतया अनुभूतेः स्वविषयकत्वापत्तिः । नापि स्वविषयक व्यवहारजनकत्वरूपम्, सुषुप्तौ तादृशव्यवहारानुपलब्धेः । जागरदशायामपि सविषयकानुभवस्यैव व्यवहारदर्शनेन निर्विषयकव्यवहाराभावात् । अतो निर्विषयकानुभूतिर्नानुभूयत इति वक्तुं युक्तम् ।

एतेन सुषुप्तौ निर्विषयकानुभूतिसत्वे तत्स्मरणापादनन्न युक्तम् । अनुभवसत्त्वेऽपि तदनुभवाभावात् । न हि घटादिवस्तुसद्भावमात्रेण तत्स्मरणापादनसम्भवः, किन्तु घटाद्यनुभव एवेति शङ्कापि निरस्ता । निर्विषयकानुभूतेरननुभवे उक्तयुक्त्या तुच्छत्वापादनस्य दुस्समाधानत्वात् । नापि द्वितीयः कल्पः । निर्विषयकानुभवस्य सुषुप्तावनुभवे

**अर्थान्तराननुभवस्यार्थान्तराभावस्य चानुभूतार्थान्तरास्मरणहेतुत्वाभावात्। तास्वपि दशास्वहमर्थोऽनुवर्तत इति च वक्ष्यते।**

**ननु स्वापादिदशास्वपि सविशेषोऽनुभवोऽस्तीति पूर्वमुक्तम्। सत्यमुक्तम्; स तु आत्मानुभवः। स च सविशेष एवेति स्थापयिष्यते। इह तु सकलविषयविरहिणी निराश्रया च संविन्निषिध्यते। केवलैव संविदात्मानुभव इति चेत् (न) सा च साश्रयेति ह्युपपादयिष्यते। अतोऽनुभूतिस्सती स्वयं स्वप्रागभावं न साधयतीति प्रागभावासिद्धिर्न शक्यते वक्तुम्। अनुभूतेरनुभाव्यत्वसम्भवोपपादनेनान्यतोऽप्यसिद्धिर्निरस्ता।**

---

पश्चात्तद्विषयकस्मृतिः कुतो न जन्यते। संस्काराभावादीति चेत्? संस्कार एव कुतो नास्ति। तद्विषयकस्मृतिं प्रति तद्विषयकसंस्कारस्य हेतुत्वेन सुषुप्तौ च विषयावच्छेदकाभावात्संस्कारः किं विषयकस्स्यादतो विषयाभावेन संस्कारो नास्तीति चेत्, किमत्र बाह्यविषयाभावात्संस्काराभावः, उत निर्विषयकानुभवाभावात्संस्काराभावः? तत्र निर्विषयकानुभवाभावे सुषुप्त्यादिदशायां निर्विषयकानुभवसाधनमनुपपन्नं भवेत्। बाह्यविषयाभावादिति चेत्तर्हि बाह्यविषयकसंस्कारादिकं मा भूत्। निर्विषयकानुभूतिविषयकानुभूतिविषयकानुभवस्य सत्वेन कुतो न संस्कारोत्पत्तिः। अहमर्थरूपाधाराभावादिति चेत्? तर्हि निर्विषयकानुभूतिविषयकानुभवोऽपि तदा न स्यात्, अधिकरणाभावात्। यदि त्वधिकरणाभावेऽपि तादृशानुभवोत्पत्तिरिष्यते, तर्हि तद्वदेव संस्कारोऽप्युत्पद्येतेति उत्तरत्र स्मरणमापद्यते। तस्मात्संस्कारोत्पत्तिरभ्युपेयैव।

न च निर्विषयकानुभवस्य निराश्रयत्ववत्तद्विषयकानुभवस्यापि निराश्रयत्वं वक्तुं युक्तम्, न संस्कारस्येति वाच्यम्। सविषयकानुभवस्य भवद्भिरपि निराश्रयत्वानङ्गीकारात्। अस्तु वा तथात्वम्, अथापि तद्वदेव संस्कारस्यापि निराश्रयत्वं कुतो न सम्भवति। क्वचिद्दर्शनाद्भवद्भिरप्यङ्गीकृतश्च। कथमन्यथा 'मामप्यहं न ज्ञातवान्' 'सुखमहमस्वाप्सम्' इति भवदभिमतपरामर्शोपपत्तिरिति। एवमस्मरणनियमस्यान्यथासिद्धिः परिहृता। अथ वस्तुतः प्रत्यगात्मन एवाहमर्थत्वात्तस्य च प्रलयेऽपि स्थायित्वात्स्वापादिषु कथं विच्छेद इति प्रत्यक्त्वादिविशिष्टाऽऽत्मानुभवस्य तदानीमपि सत्त्वेन कथं निर्विषयकानुभवस्थापनमित्याशयेनाह - **तास्वपीति**। **अनुवर्तते** = प्रकाशते॥

ननु सुषुप्तावनुभूत्यनङ्गीकारे **'स्वापमदमूर्च्छादिषु च सविशेष एवानुभव'** इति पूर्वोक्तिविरोध इति शङ्कते **ननु स्वापेति**। विरोधं परिहरति - **सत्यमिति**। उक्तांशे अङ्गीकारः, विरोधेऽनङ्गीकारः। तुशब्दोऽनुभूत्यनुभवव्यवच्छेदार्थः। ननु तदानीमनुभूतिविच्छेदे आत्मनो निर्विशेषत्वं स्यादित्यत्राह - **स चेति**। **सविशेषः** - प्रत्यक्त्वानुकूलत्वादिविशिष्टः। तर्हि किमत्र निषिध्यत इत्यत्राह - **इहेति**। नन्वस्माभिः संविद आत्मत्वमिष्यते सैवात्मानुभवशब्देन भवद्भिरुच्यत इति किमत्र दूषणेप्रयास इति शङ्कते - **केवलैवेति**। समाधत्ते - **सा चेति**। अयं भावः - या स्वसंबन्धादर्थान्तरे तद्धर्मव्यवहार हेतुभूता संविदिति भवद्भिरुच्यते तदेवास्माकं धर्मभूतज्ञानं, तच्च सविषयकं साश्रयश्च। सुषुप्तावपि नित्यमात्मनि सम्बन्ध्यमानमिति **साश्रयमेव**। अतो महद्वैलक्षण्यम्। यच्च तदाऽऽत्मस्फुरणं तदपि साश्रयमेव, स्फुरतो वस्तुनो धर्मत्वात्, औज्ज्वल्यस्य दीपधर्मत्ववदिति। प्रकृतप्रागभावसिद्धिमुपसंहरति - **अत** इति। **न शक्यते वक्तुमिति**।

अयं भावः - सुषुप्तौ ज्ञानसामान्याभावस्य स्थापितत्वेन तदन्तरकाले 'इयन्तं कालं न किञ्चिदहमज्ञासिषम्' इति ज्ञानसामान्याभावविषयकप्रतीत्या तदन्तर्गतः स्वाभावोऽपि स्वेनैव विषयीक्रियत इति स्वप्रागभावग्राहकत्वं स्वस्यैव सम्भवति। एवं स्वतःपक्षे प्रागभावसिद्धिरुक्ता। परतःपक्षे सुतरां सिद्धिरित्याह - **अनुभूतेरिति**। **अनुभाव्यत्वसम्भवोपपादनेने**त्येतदनुभाव्यत्वं स्वयम्प्रकाशत्वानुभूतित्वादिविघटक न्न भवतीति पूर्वोक्त सूचनाय। अतोऽनुत्पन्नत्वमनु-

**तस्मान्न प्रागभावाद्यसिद्ध्या संविदोऽनुत्पत्तिरुपपत्तिमती ।**

**यदप्यस्या अनुत्पत्त्या विकारान्तरनिरसनम् ; तदप्यनुपपन्नम्, प्रागभावे व्यभिचारात् । तस्य हि जन्माभावेऽपि विनाशो दृश्यते । भावेष्विति विशेषणे तर्ककुशलताऽऽविष्कृता भवति । तथा च भवदभिमताऽविद्याऽनुत्पन्नैव विविधविकारास्पदं तत्त्वज्ञानोदयादन्तवती चेति तस्यामनैकान्त्यम् । तद्विकाराः सर्वे मिथ्याभूता इति चेत् - किं भवतः परमार्थभूतोऽप्यस्ति विकारः, येनैतद्विशेषणमर्थवद्भवति । न ह्यसावभ्युपगम्यते ॥**

**यदप्यनुभूतिरजत्वात्स्वस्मिन् विभागं न सहत इति - तदपि नोपपद्यते ; अजस्यैवाऽत्मनो देहेन्द्रिया-**

---

पपन्नमिति निगमयति — **तस्मा**दिति । नन्वनुभूतिविशेषप्रागभावस्य विशेषानुभूत्या ग्रहणेऽप्यनुभूतिसामान्यप्रागभावो दुर्ग्रह एव तस्येतराग्राह्यत्वे प्रतियोग्यग्रहणेनाभावग्रहणस्य दुर्वचत्वात्, तस्मादनुभूतिसामान्यं प्रागभावशून्यमिति चेन्न । 'निर्विशेषन्न सामान्यमि'ति न्यायेनानुभूतिविशेषाणां प्रागभाववत्त्वे तत्सामान्यस्य प्रागभावशून्यत्वकथनासम्भवात् । न हि घटविशेषाणां प्रागभाववत्त्वं घटसामान्यस्य तु प्रागभावशून्यत्वमिति त्वदन्यः कश्चिन्मन्येत । तस्मादनुभूतित्वावच्छिन्नं प्रागभाववदेव । वस्तुतः 'न किञ्चिदहम ज्ञासिषमि'ति सुषुप्त्यवस्थापरामर्शेन ज्ञानसामान्याभावगोचरेण ज्ञानसामान्यस्य प्रागभाव उक्त इति ।

एवमनुभूतेरनुत्पन्नत्वं निरस्तम् । अथ तस्याः विकारान्तरनिरसनमप्यनुपपन्नमिति दूषयति — **यदपी**ति । **अत्रानुत्पत्त्ये**ति हेतुनिर्देशः हेत्वसिद्धिरप्यस्तीति सूचनार्थः । अनुपपन्नत्वे हेतुं दर्शयति - **प्रागभाव** इति । व्यभिचारमुपपादयति - **तस्ये**ति । **हिः** प्रसिद्धौ । **जन्माभावेऽपी**त्यनेन हेतुसद्भावः सूचितः । **विनाशो दृश्यत** इत्यनेन साध्याभाववत्त्वं सूचितम् । ननु विकाराभावमात्रं न साध्यम् । किन्तु भावेषु सम्भवतां विकाराराणामभावः । ततश्च हेतुः भावत्वे सत्यनुत्पन्नत्वमिति पर्यवस्यति । अतो न व्यभिचार इत्याशङ्कां परिहरति - **भावेष्विती**ति । **तर्ककुशलते**त्यादिनोपलम्भः । हेतुशिक्षणेऽपि व्यभिचारसाम्यात् । **तथा** = भावरूपत्वेन । तैरविद्यायाः भावरूपत्वसमर्थनादिति भावः । **विविधे**त्याद्य**न्तवती**त्यन्तं साध्याभाववत्वबोधकम् ।

ननु परमार्थविकाराभाववत्वमेव साध्यते । अविद्यागतविकाराणाञ्च मिथ्यात्वेन परमार्थविकाराभावरूपसाध्यस्यैव सत्त्वेन न व्यभिचार इति शङ्कते - **तदि**ति । परिहरति - **किमि**ति । अयं भावः - विकारे परमार्थत्वविशेषणं व्यर्थमनुपपन्नञ्च । भवद्भिस्सर्वस्यापि विकारस्य मिथ्यात्वाभ्युपगमेनापसिद्धान्तात् व्यावर्त्याभावाच्च । अपि च 'अनुभूतिः परमार्थविकाराभाववती अनुत्पन्नत्वादि'त्यत्र यत्परमार्थविकारवत्तदुत्पन्नं, यथा घटः, इति व्यतिरेकव्याप्तिश्च न सम्भवति । घटादेः परमार्थविकारवत्वानङ्गीकारात् । अन्वयित्वन्तु न सम्भवति । अनुभूतिव्यतिरिक्तस्य त्वन्मते भावत्वविशिष्टानुत्पन्नत्वाभावात् । भावत्वविशेषणमपि व्यर्थं, प्रागभावस्य परमार्थविकाररहितत्वेन साध्यस्यैव तत्र सत्वादिति । ननु भावत्वे सतीति न निवेश्यते । ततश्च यत्रानुत्पन्नत्वं तत्र परमार्थविकारशून्यत्वं, यथा प्रागभाव इति कुतोऽन्वयव्याप्तिर्न सम्भवतीति चेन्न । तावतापि कस्यापि विकारस्य परमार्थत्वानङ्गीकारेणापसिद्धान्तादेर्दुर्निवारत्वात् । परमार्थविकारशून्यत्वसाधनेनापरमार्थविकारवत्वस्यानुभूतौ तावतापि वारणासम्भवात् । अनुत्पन्नत्वहेतोस्स्वरूपासिद्धत्वाच्च ॥

एवमनुत्पन्नत्वहेतुना नानात्वनिषेधो न सम्भवतीत्याह - **यदपी**ति । किमत्र यतः कुतश्चेत् भेदो निषिध्यते उत विजातीयात्, यद्वा सजातीयात् इति विकल्पत्रयमभिप्रेत्य त्रिष्वपि कल्पेषु हेत्वसिद्धिः प्रागभावे व्यभिचारश्चेत्याशयेन सामान्यतो दूषयति - **तदपी**ति । प्रथमे द्वितीये च पृथक्व्यभिचारं प्रदर्शयति - **अजस्यैवे**ति । देहेन्द्रियादिप्रतियोगिक-

**दिभ्यो विभक्तत्वात्। अनादित्वेन चाभ्युपगताया अविद्याया आत्मनो व्यतिरेकस्यावश्याश्रयणीयत्वात्। स च विभागो मिथ्यारूप इति चेत्; जन्मप्रतिबद्धः परमार्थविभागः किं क्वचिद्दृष्टस्त्वया ? अविद्याया आत्मनः परमार्थतो विभागाभावे वस्तुतो ह्यविद्यैव स्यादात्मा। अबाधितप्रतिपत्तिसिद्धदृश्यभेदसमर्थनेन दर्शनभेदोऽपि समर्थित एव, छेद्यभेदाच्छेदनभेदवत्॥**

---

भेदवति आत्मानि अजत्वहेतुसद्भावेन व्यभिचारादिति भावः। यद्वा - त्वन्मतेऽनुभूतेरेवात्मत्वात् तत्रानुत्पन्नत्वस्य देहादिविलक्षणत्वस्य भवद्भिः श्रुत्या स्थाप्यमानत्वाद्बाधप्रसङ्गो दुर्वार इति। एवमात्मभिन्नायामविद्यायां व्यभिचारमाह — **अनादित्वेनेति**। ननु परमार्थभेदसामान्याभावः, परमार्थविजातीय भेदाभावो वा साध्यते। आत्मन्यविद्यायाश्च वर्तमानस्य देहेन्द्रियाविद्यादिभेदस्य परिकल्पितत्वेन मिथ्यात्वात्तत्र न परमार्थभेदसत्वमिति साध्यस्य सत्वेन न व्यभिचारादिप्रसक्तिरिति शङ्कते — **सेति**। भेदे परमार्थत्वविशेषण वैयर्थ्यापसिद्धान्तव्याप्तिभङ्गादिकमुत्तरं पूर्वोक्तं मन्यमानस्समाधत्ते — **जन्मेति**। **जन्मप्रतिबद्धः** = उत्पत्तिव्याप्यः। एवमात्माविद्यादेर्भेदस्य मिथ्यात्वे वास्तविकोऽभेद एव सिध्येत् इत्यनिष्टान्तरमाह — **अविद्याया इति**। **एव**कारः आपादनस्य दुर्निवार्यत्वसूचकः। **वस्तुत** इति पदसहितो **हि**शब्दश्चार्वाकादिबाह्यमतप्रवेशं व्यनक्ति। किञ्चानुभूतेः गगनकुसुमादिभिन्नत्वेनानुमानबाधो दुर्वारः, गगनकुसुमाद्यभेदे तु तद्वत्तुच्छत्वापत्तिः।

अथ सजातीयभेदनिरासपक्षं निरस्यति - **अबाधितेति**। अत्र दृश्यभेदान्न दर्शनभेदस्साध्यते। 'घटपटाविमावि'ति ज्ञाने दृश्यभेदेऽपि दर्शनभेदस्याप्रामाणिकत्वात्। किन्तु यथा दृश्यभेदोऽबाधितप्रतिपत्तिबलात्समर्थितः तन्न्यायेना-बाधितप्रतिपत्तिसिद्धतया दर्शनभेदोऽपि सिध्यतीत्यत्रैव तात्पर्यम्। ततश्च 'अयं घटः, अयं पटः' इत्याद्यबाधितप्रतीति-बलाद्दर्शनभेदस्यैष्टव्यतया 'अनुभूतिस्स्वसजातीयभेदरहिता, अनुत्पन्नत्वादि'त्यनुमानं बाधितमिति भावः। यद्वा दृश्यपदं चक्षुरादिनियतग्राह्यरूपरसादिपरम्। तेषाञ्च चक्षुरादिनियतग्राह्यत्वेन भेदसिद्धेः। अतस्तत्तद्विषयचाक्षुषादिकमपि परस्परभिन्नम्। ततश्च 'चाक्षुषं रासनाद्भिन्नं रासनाविषयकत्वात्'। यत् यदविषयविषयकं तत्तद्भिन्नम्, यथा कुठारच्छेदना-विषयविषयकं नखादिच्छेदनम्। यद्वा - **दृश्यभेदः** = दृशिकर्मत्वाकारेण भेदः। ततश्च दृशेरेकत्वमभ्युपगम्य स्वसजातीय-भेदराहित्यसाधने 'घटदर्शनेन घटस्यैव दृष्टत्वन्न पटादेरि'ति विभागो न स्यात्। एवं छेद्यभेदोऽपि छिदिकर्मत्वाकारेण भेदः। 'घटपटावि'ति ज्ञानविषयघटपटयोरेकमेव कर्मत्वमिति दर्शनभेदापादनसम्भवः। यथा दर्शपूर्णमासयोरेकं कारणत्वम्। अत एव **दृश्यभेद** इति भाषितं, न दृष्टभेद इति। एवं दृष्टान्तेऽपि नच्छिन्नभेद इति॥

नन्वेकमेव ज्ञानं ज्ञातृज्ञेयरूपोपाधिभेदात् भेदेन प्रतीयते। यथा घटाद्याकाशादिभेदः। अतो न प्रत्यक्षबाध सम्भवः। अन्यथा कल्पनागौरवप्रसङ्गादिति चेन्न। भेदप्रतीतेरुपाध्यधीनत्वकल्पनेनाक्लृप्तानामुपाधित्वकल्पनेन च महागौरवात्। अन्यथा घटादेरप्यौपाधिकत्वकल्पनापत्तेः। एवमनुभूतिवदिच्छाया अप्यैक्यापत्तेः। घटादीच्छाभेदस्या-प्यौपाधिकत्वकल्पनसम्भवात्। भेदविषयकप्रमाणानां बाधके सत्येवौपाधिकभेदविषयकत्वस्य प्रमाणसिद्धत्वाच्च। प्रकृते च बाधकन्न किञ्चित्पश्यामः। एव'मनुभूतिः स्वसजातीयभेदशून्या, अनुत्पन्नत्वात्' इत्यनुमाने प्रागभावे व्यभिचारः। 'भावत्वे सती'ति विशेषणेऽविद्यायामेव व्यभिचारः। अविद्यायाः नानात्वात्। यदित्वेकैवाविद्येत्युच्यते, तर्हि हेतो-स्स्वरूपासिद्धत्वं दुर्वारम्। ब्रह्माविद्याया एकत्वेऽपि प्रवाहानादित्वस्वीकाराच्च। प्रत्यक्षबाधस्तु पूर्वमेव दर्शितः। एवमनुभूतित्वहेतुना स्वसजातीयभेदनिषेधोऽपि न सम्भवति, हेतोरप्रयोजकत्वात्। व्यतिरेकव्याप्तेः दुर्वचत्वाच्च, स्व-सजातीयभेदवतोऽनुभूतित्वदर्शनादिति॥

अथ संविदि स्वगतभेदराहित्यसाधकम्। 'अनुभूतिः न दृश्यधर्मवती अनुभूतित्वात्','भेदादयो नानुभूति धर्माः

**यदपि नास्या दृशेर्दशिरूपाया दृश्यः कश्चिदपि धर्मोऽस्तिः दृश्यत्वादेव तेषां न दृशिधर्मत्वम् इति च - तदपि स्वाभ्युपगतैः प्रमाणसिद्धैर्नित्यत्वस्वयंप्रकाशत्वादिधर्मैरुभयमनैकान्तिकम्। न च ते संवेदनमात्रम्; स्वरूपभेदात्। स्वसत्तयैव स्वाश्रयं प्रति कस्यचिद्विषयस्य प्रकाशनं हि संवेदनम्। स्वयम्प्रकाशता तु स्वसत्तयैव स्वाश्रयाय प्रकाशमानता; प्रकाशश्च चिदचिदशेषपदार्थसाधारणं व्यवहारानुगुण्यम्; सर्वकालवर्त-**

---

दृश्यत्वादि'त्यनुमानद्वयमनूद्य दूषयति — **यदपीति**। **स्वाभ्युपगतैरि**त्येतदपसिद्धान्तं सूचयति। **प्रमाणसिद्धैरि**त्येतत् बाधसद्भावं व्यनक्ति। **अनैकान्तिकमिति**। अयं भावः - भवदभ्युपगतनित्यत्वस्वयंप्रकाशत्वादीनां सधर्मकत्वमुत निर्धर्मकत्वम्। आद्ये, नित्यत्वादीनां धर्मान्तराभ्युगमे तस्यापि कश्चिद्धर्मः तस्यापीत्यनवस्थापत्तिः। नन्वेतादृश स्थलेऽनवस्था न दोष इति चेत्? तर्हि तद्वदेवानुभूतेरपि सधर्मकत्वं कुतो नेष्यते। अन्त्ये निर्धर्मकत्वरूपसाध्यवत्यनित्यत्वादौ हेतोरसत्वेनासाधारणानैकान्तिकत्वम्। या दृश्यधर्मवती सा नानुभूतिरिति व्यतिरेकव्याप्तिः नित्यत्वस्वयंप्रकाशत्ववत्यामनुभूतौ भग्ना चेति, अस्य हेतो र्न साधकत्वम्। एवमनुभूतिरूपपक्षे उक्तहेतुसाध्ययोस्सत्वेऽपसिद्धान्तः स्ववचनविरधश्च। असत्वे तु न निर्धर्मकत्वसिद्धिः। हेतुसाध्ययोः पक्षरूपत्वे तु पक्षभूतानुभूतेः सर्ववादिसम्प्रतिपन्नत्वेन साध्यांशस्यैवाभावेनानुमानप्रयोगानुपपत्तिः। वस्तुस्वरूपस्य सर्वैरभ्युपगमेऽपि प्रकारभेद एव विवाददर्शनात्। एवं दृशिधर्मत्वाभावसाधकानुमितौ विपक्षे नित्यत्वादौ दृश्यत्वरूपहेतुसत्वेन व्यभिचारः। न च नित्यत्वादीनामपि पक्षकोटिनिक्षेपात् न विपक्षत्वमिति न व्यभिचारापादनं घटते इति वाच्यम्। तथा सति अनुभूतौ नित्यत्वाद्यसिध्या स्वाभ्युपगमविरोधापत्तिः। ननु सर्वेषामपि नित्यत्वादीनां मिथ्यात्वमेवेष्यते इति न व्यभिचार प्रसक्तिरिति **चेन्न** — तथा सति वस्तुतः संविद अनित्यत्वास्वयंप्रकाशत्वाद्यापत्तेः।

ननु नित्यत्वादिकं संवित्स्वरूपमेवेति कथं व्यभिचारप्रदर्शनमिति शङ्कां परिहरति — **न चेति**। विरोधमाह — **स्वरूपेति**। धर्मिभूतसंवेदनस्वरूपात् नित्यत्वादिधर्माणां स्वरूपस्य भेदात्। नित्यत्वादिधर्माणां परस्परं स्वरूपभेदवदित्यर्थः। अयं भावः - नित्यत्वादिधर्माः परस्परं भिन्ना एव, अन्यथा नित्यत्वसाधकानुमानेनैव स्वयंप्रकाशत्वैकत्वादीनामपि सिध्या तदर्थं पृथगनुमानान्तरप्रयोगवैयर्थ्यापत्तेः। स्वयंप्रकाशत्वमङ्गीकर्तारं प्रति नित्यत्वानङ्गीकर्तारं प्रति नित्यत्वसाधनानुपपत्तेश्च नित्यत्वस्यापि स्वत एव सिद्धेः। तस्मन्नित्यत्वाद्यनेकधर्मेषु एकैकधर्माभ्युपगमेऽप्यन्यधर्मानभ्युपगमात्तत्साधनाच्च ते भिन्ना एव। एवञ्च नित्यत्वादिधर्मेषु कस्य धर्मिस्वरूपत्वमविशेषान्न सर्वेषामपि। नित्यत्वादीनामपि परस्परमभेदापत्त्योक्तानुपपत्त्यपरिहारात्। अतो एकस्यैव भवद्भिरपि धर्मिस्वरूपत्वाङ्गीकारसम्भवेन तदन्यधर्ममादाय व्यभिचारो दुरुद्धर एवेति। परस्परस्वरूपेऽपि वैलक्षण्यमस्तीति दर्शयति - **स्वसत्तयैवेति**। **एवकारः** स्वजन्यज्ञाननैरपेक्ष्यसूचनार्थः। स्वयंप्रकाशत्वस्वरूपमाह — **स्वयं प्रकाशतेति**। **तुशब्दो** वैलक्षण्यसूचकः। स्वाश्रयाय प्रकाशमानत्वरूपस्वयंप्रकाशत्वस्य विषयप्रकाशनरूपसंवेदनस्य च परस्परभेदादिति भावः। ननु वर्तमानदशायां स्वसत्तयैव स्वाश्रयं प्रति प्रकाशमानत्वं संवेदनत्वमिति पूर्वं भाषितम्। सत्यम्। तद्धि संवेदनत्वम्। न तु संवेदनम्। उक्तस्य संवेदनत्वस्य स्वयंप्रकाशत्वरूपत्वेपि न संवेदनं स्वयंप्रकाशत्वं चोभयमप्येकं भवितुमर्हति, संवेदनत्वसंवेदयोर्भेदात्, घटत्वघटयोर्भेदवत्। न च धर्मधर्मिणोर्भेदोऽप्रामाणिकः, प्रामाणिकत्वस्य पूर्वमेव समर्थितत्वात्॥

ननूभयत्र प्रकाशशब्दः प्रयुक्तः, स च प्राकट्यरूपः। उभयवाद्यनभिमतश्चेति कथमेवं स्वरूपभेदनिष्कर्ष इत्यत्र प्रकाशशब्दार्थमाह - **प्रकाशश्चेति**। **व्यवहारानुगुण्यं** = व्यवहारयोग्यत्वम्। इदञ्च चिदचिदुभयपदार्थसाधारणम्। उक्तव्यवहारयोग्यतासंपादकं ज्ञानमेव। जाते हि ज्ञाने विषयस्य विषयिणश्च व्यवहारयोग्यत्वं सम्भवति, न ह्यज्ञाते तद्विषयकव्यवहारसम्भवः। तत्राचितो व्यवहारयोग्यत्वं सविषयकज्ञानद्वारा। चितस्तु स्वद्वारैवेति विशेषः। यद्वा -

**मानत्वं हि नित्यत्वम्; एकत्वमेकसङ्ख्यावच्छेद इति। तेषां जडत्वाद्यभावरूपतायामपि तथाभूतैरपि चैतन्य-धर्मभूतैः तैरनैकान्त्यमपरिहार्यम्। संविदि तु स्वरूपातिरेकेण जडत्वादिप्रत्यनीकत्वमित्यभावरूपो भावरूपो वा धर्मो नाभ्युपेतश्चेत्, तत्तन्निषेधोक्त्या किमपि नोक्तं भवेत्।**

**अपि च संवित् सिध्यति वा न वा ? सिध्यति चेत्सधर्मता स्यात्; न चेत्तुच्छता; गगनकुसुमादिवत्। सिद्धिरेव संविदिति चेत् - कस्य कं प्रतीति वक्तव्यम्। यदि न कस्यचित्कञ्चित्प्रति - सा तर्हि न सिद्धिः।**

---

व्यवहारानुगुण्यं व्यवहारकर्मत्वम्। तच्च भासमानत्वरूपं व्यवहारप्रतिसम्बन्धित्वम्। अत एव 'घटः प्रकाशते' इति घटादीनां भासमानत्वेन व्यवहारः। तद्धेतुत्वञ्च ज्ञानस्यैव। अत्र परोक्तप्राकस्याभ्युपगमेऽपि न दोषः, विरोधाभावात्। तस्य ज्ञानानुमापकत्वन्तु नास्माभिरभ्युपगम्यत इति विशेषः। एवं स्वयम्प्रकाशत्वस्वरूपं प्रदर्श्य तस्य संवेदनस्वरूपत्वं न सम्भवतीत्युक्तम्। अथ नित्यत्वैकत्वयोः संवेदनस्वरूपत्वाभावाभिव्यक्त्यै तत्स्वरूपं प्रदर्शयति - **सर्वेति**। इदञ्च कालव्यतिरिक्तसाधारणम्। कालानुगतन्तु नित्यत्वं कालानवच्छिन्नत्वम्। भावत्वे सत्यकारणकत्वं नित्यत्वमित्यपि प्रसिद्धम्। **एकसङ्ख्ययान्यावच्छेदः** = एकत्वसङ्ख्ययारूपो व्यावर्तकधर्मः। **इतीत्यस्य स्वरूपभेदादित्यत्रान्वयः**। ततश्च संवेदनस्वयम्प्रकाशत्वादीनां परस्परं भेदस्यावश्यकतया पूर्वोक्तव्यभिचारादिः दुरुद्धर इति भावः।

ननु स्वयम्प्रकाशत्वनित्यत्वादिकं जडत्वानित्यत्वाभावरूपं, न चैतावताऽद्वैतविरोधः भावाद्वैतस्यैव सम्मत-त्वात्। अतो न दोष इति शङ्कां परिहरति **तेषामिति**। **तथाभूतैरपि** = अभावरूपैरपीत्यर्थः। एतेन तेषां धर्मशून्यत्वं सूचितम्। ततश्चानुभूतित्वहेतोः **भूतैरिति** दृश्यत्वहेतोर्व्यभिचरितत्वं सूचितम्। अयं भावः - स्वयम्प्रकाशत्वादीनाम-भावरूपत्वेऽपि ज्ञानधर्मत्वेन पूर्वोक्तदोषवारणमशक्यमेवेति। ननु तेषामभावस्वरूपत्वे कार्ष्ण्य व्यावृत्तेः शौक्ल्यस्व-रूपत्ववत्तेषामप्यनुभूतिस्वरूपत्वेन नोक्तदोषप्रसर इति शङ्कां परिहरति **संविदि तु** इति। **तुशब्दः** दृष्टान्तवैषम्यं व्यनक्ति। **भावरूप** इति पूर्वोक्तार्थानुवादः, स्वयम्प्रकाशत्वादीनां भावरूपत्वेऽभावरूपत्वे वा संवित्स्वरूपत्वे न भवदभिमतार्थसिद्धिः संवित्स्वरूपस्य सर्वैरप्यभ्युपगतत्वात्। वस्तुमात्रायुपगमे सत्यपि विधाभेदविवाददर्शनात् स्वाभिमततत्तद्विधाभेदैश्च स्वमतोपपादनादिति पूर्वभाषितमिहानुसन्धेयम्। **भावरूप** इति दृष्टान्तार्थम्। तथा च यथा भावरूपाणां स्वयम्प्रकाशत्वादीनां संवित्स्वरूपत्वन्न सम्भवति, तथैवाभावरूपाणामपि तेषामिति भावः। शौक्ल्यादिदृष्टान्तो विषमः, शौक्ल्यादिस्वरूपे प्रतिपन्ने कार्ष्ण्यव्यावृत्तिसंशयानुदयेन तस्यास्तत्स्वरूपत्वाभ्युपगमः सङ्गच्छते, प्रकृते तु संवित्स्वरूपे प्रतिपन्नेऽपि जडत्वनित्यत्वाद्यभावसंशयस्यानिवृत्त्या तेषां तत्स्वरूपत्वाङ्गीकारा-सम्भवात्। अत्र 'न वित्तिधर्मः स्यादि'ति यत्प्रागुदीरितम्, तेनापि साधितं किञ्चित् संविदोऽस्ति न वा त्वया। 'अस्ति चेत्पक्षपातस्यान्न चेत्ते विफलः श्रमः' इति संवित्सिध्युक्तश्लोकोऽनुसन्धेयः।

एवं नित्यत्वस्वयंप्रकाशत्वमादाय सधर्मकत्वं स्थापितम्। अथ केवलं स्वरूपप्रकाशेनापि सधर्मकत्वसिद्धिं दर्शयति - **अपि चेति**। **सिध्यति** = प्रकाशते। आद्ये दोषमाह — **सिध्यति चेदिति**। ततश्चोक्तानुमानयोर्बाधः फलितः। **स्यादिति**। सिद्धिरूपधर्मवत्वादिति भावः। अन्त्ये दोषमाह - **न चेदिति**। स्वतःपरतश्चाभातस्य तुच्छत्व-नियमादिति भावः। ननु 'गमनं गच्छति वा नेवे'तिवत् 'संवित्सिध्यति वा न वे'ति विकल्प एवानुपपन्नः। सिद्धि-संविदोरेकत्वादित्याशयेन शङ्कते — **सिद्धिरेवेति**। तथापि सविशेषत्वंदुर्निवारमित्याह — **कस्येति**। साश्रयत्वसविषय-त्वयोः धर्मिग्राहकमानसिद्धत्वेन तत्परित्यागोऽनुपपन्न इति भावः। सिद्धेस्साश्रयत्वसविषयकत्वाभाव भ्रमेण शङ्कते — **यदीति**। उभयपरित्यागे सिद्धिस्वरूपस्यापि त्यागप्रसङ्ग इत्याह — **सेति**। तत्र सिद्धेः साश्रयत्वसविषयकत्वे

**सिद्धिर्हि पुत्रत्वमिव कस्यचित्कञ्चित्प्रति भवति । आत्मन इति चेत् - कोऽयमात्मा ? ननु संविदेवेत्युक्तम् । सत्यमुक्तम् ; दुरुक्तं तु तत् । तथा हि - कस्यचित्पुरुषस्य किञ्चिदर्थजातं प्रति सिद्धिरूपा तत्सम्बन्धिनी सा संवित्स्वयं कथमिवात्मभावमनुभवेत् ? एतदुक्तं भवति - अनुभूतिरिति स्वाश्रयं प्रति स्वसद्भावेनैव कस्यचिद्वस्तुनो व्यवहारानुगुण्यापादनस्वभावो ज्ञानावगतिसंविदाद्यपरनामा सकर्मकोऽनुभवितुरात्मनो धर्मविशेषो 'घटमहं जानामि', 'इममर्थमवगच्छामि', 'पटमहं संवेद्मि' इति सर्वेषामात्मसाक्षिकः प्रसिद्धः । एतत्स्वभावतया हि तस्याः स्वयम्प्रकाशता भवताऽप्युपपादिता । अस्य सकर्मकस्य कर्तृधर्मविशेषस्य कर्मत्ववत्कर्तृत्वमपि दुर्घटमिति ॥**

---

स्थापयितुं निदर्शनमाह — **सिद्धिरिति** । **हिः** प्रसिद्धौ । नन्वात्मानं प्रत्यात्मनस्सिद्धिरिति शङ्कते — **आत्मन इति चेदिति** । अत्र संबन्धसामान्यषष्ठ्या संबन्धद्वयलाभः । आवृत्तिर्वा ग्राह्या ॥ अत्रात्मत्वं ब्रह्मणः संविदो वा । न ब्रह्मणः, तस्य बोद्धृत्वाभावेन प्रकृतसिध्याश्रयत्वासम्भवात् । नापि संविदः तस्याः प्रकाशफलित्वाभावेन स्वस्मै भासमानत्वाभावादित्याशयेन पृच्छति — **कोऽयमिति** । आक्षेप्तुरभिप्रायमजानानः पूर्वमेवात्मस्वरूपं संविदेवेति दर्शितमिति शङ्कते **नन्विति** । संविदात्मत्वं निराकरोति - **सत्यमिति** । उक्तिमात्रेऽभ्युपगमः । अभिप्रायं दर्शयति **तथा हीति** । धर्मिण इव धर्मस्यापि निर्विकल्पे स्फुरणव्यञ्जनायार्थजातमित्युक्तम् । **तत्सम्बन्धिनी** = विषयाश्रयवती । **स्वयमिति** स्वस्य स्वाश्रयत्वविरोधसूचनाय । अयं भावः - संविदेव सिद्धिः । सैव चात्मा, तदाश्रयश्च स एव । स एव च विषय इति पर्यवसितं भवन्मतम् । तच्च व्याहतम् । पुत्रत्ववत्सिद्धेः सविषयकत्वसाश्रयकत्वनियमेन सिद्धिरूपसंविदः स्वाश्रयत्वस्वविषयत्वासम्भवात् इति ॥

ननु संविदः स्वविषयत्ववत् स्वाश्रयत्वं कुतो न सम्भवति । न च स्वविषयत्वमसिद्धम् । स्वयंप्रकाशत्वाङ्गीकारात् इति चेन्न । तर्हि संवित् सिध्यतीति शिरोऽङ्गीकृतम् । ततश्च सधर्मत्वेन पूर्वानुमानानैकान्त्यमपरिहार्यम् । स्वयम्प्रकाशत्वस्यावेद्यत्वे सत्यपरोक्षव्यवहारहेतुत्वरूपतया भवद्भिरेवाङ्गीकारेण स्वस्य स्वविषयत्वकथनासम्भवात् । अत एव 'सतोऽनुभूतिविषयभावोऽपि न प्रमाणपदवीमनुसरती'त्युक्तं भवद्भिः । ननु सिद्धान्ते स्वस्य स्वविषयत्वाङ्गीकारेण तद्वत्संविदः साश्रयत्वं कुतो न सम्भवतीति चेन्न । प्रत्यक्षबाधात् । 'अहं जानामी'ति हि प्रतीतिः । अतो ज्ञानाश्रयत्वन्न संविदः, अहमर्थस्यैव तथात्वात्, भवन्मतेऽपि संविदः निराश्रयत्वाङ्गीकारेण कथं स्वाश्रयत्वकल्पनसम्भवः । अतो न संविदात्मा ।

ननु संवित् सिध्यति न वेति विकल्पे सिद्धिशब्देन किमभिप्रेतम् । यद्युत्पत्तिः, तर्हि तस्याः कर्मकर्तृसंबन्धाभावात् कस्य कं प्रतीत्यादि प्रश्नकरणमेवानुपपन्नम् । ज्ञप्तिश्चेत् विषयाश्रयसंबन्धनियमे किं प्रमाणम् । यद्यपि वृत्तिज्ञानस्य तन्नियमोऽस्ति, अथापि तदतिरिक्तायां संविदि अस्माभिरात्मत्वेनाभ्युपगतायां विषयाश्रयसंबन्धो नास्ति । अत एव भवन्मतेऽपि ज्ञानस्वरूपस्यात्मनः विषयाश्रयसंबन्धनियमो नाङ्गीक्रियत इत्याद्याशङ्कां परिहरति **एतदिति** । तत्रानुभूतिस्वरूपं तैरात्मत्वेनाभ्युपगतं निष्कर्षति — **अनुभूतिरिति** । **व्यवहारानुगुण्यापादनस्वभाव** इत्यन्तेन पूर्वप्रस्तुतसिद्धिशब्दार्थोऽपि विवृत्तः । ज्ञानावगतिसंविदादीनां पर्यायत्वोक्त्या संविदः वृत्तिज्ञानापेक्षयाऽभिन्नत्वमेवेति दर्शितम् । **तस्याः** कर्मकर्तृसंबन्धनियमं दर्शयति - **घटमहमिति** । ज्ञानावगतिसंविदां पर्यायत्वसूचनाय प्रतीतित्रयमुपात्तम् । **आत्मसाक्षिक** इत्यनेनोक्तार्थस्यानुभवसिद्धत्वमुक्तम् । अनुभूतेः विषयाश्रयसंबन्धः परेणाप्यभ्युपगतः इत्याह - **एतदिति** । एतावता किमुक्तं भवतीत्यत्राह — **अस्येति** । **सकर्मकस्ये**त्येतत् कर्मत्वासम्भवे हेतुकथनं, **कर्तृधर्मविशेषस्येति** कर्तृत्वासम्भवे । **कर्मत्ववदिति** । 'घटमहं जानामी'त्यादिज्ञानविषयघटगतकर्मत्ववदित्यर्थः । **कर्तृत्वमपीति** संविद

**तथा ह्यस्य कर्तुः स्थिरत्वं कर्तृधर्मस्य संवेदनाख्यस्य सुखदुःखादेरिवोत्पत्तिस्थितिनिरोधाश्च प्रत्यक्षमीक्ष्यन्ते । कर्तृस्थैर्यं तावत् -'स एवायमर्थः पूर्वं मयाऽनुभूत' इति प्रत्यभिज्ञाप्रत्यक्षसिद्धम् । 'अहं जानामि', 'अहमज्ञासिषम्', 'ज्ञातुरेव ममेदानीं ज्ञानं नष्टम्' इति च संविदुत्पत्त्यादयः प्रत्यक्षसिद्धा इति कुतस्तदैक्यम् । एवं क्षणभङ्गिन्यास्संविद आत्मत्वाभ्युपगमे पूर्वेद्युर्दृष्टमपरेद्युः 'इदमहमदर्शम्' इति प्रत्यभिज्ञा च न घटते ; अन्येनानुभूतस्य न ह्यन्येन प्रत्यभिज्ञानसम्भवः ।**

---

आत्मत्वे प्रत्यक्त्वमभ्युपगन्तव्यम् । प्रत्यक्त्वञ्च ज्ञानाश्रयस्यैव । अतः संविदो ज्ञानाश्रयत्वमप्यङ्गीकार्यम् । तच्च न सम्भवति स्वस्यस्वरूपाश्रयत्वासम्भवात् । न ह्यात्मभूता संविदन्या, प्रसिद्धन्तु ज्ञानं वृत्ति ज्ञानमिति वक्तुं शक्यम् । प्रत्यक्षादिविरुद्धत्वेन तथाविभागासम्भवात् । प्रसिद्धायाः संविद एव भवद्भिरात्मत्वकथनात् । तदुक्तं — परागर्थप्रमेयेषु या फलत्वेन सम्मता । 'संवित्सैव हि नस्सिद्धा वेदान्तोक्तिप्रमाणत' इति । तस्मादस्माकं धर्मधर्मिज्ञानभेद इव युष्माकं मते वृत्तिज्ञानस्वरूपसंविद्भेदकल्पनमनुपपन्नम् । इत्थञ्च संवित्स्वरूपाभिन्नस्य वृत्तिज्ञानस्यविषयाश्रयसम्बन्धः प्रामाणिक एव । सर्वानुभवसिद्धश्च । संविदः स्वयम्प्रकाशत्वं साधयता त्वयापि विषयाश्रयसम्बन्ध एव हेतुतयोक्तः । तस्मात् प्रसिद्धायाः संविद एवात्मत्वे तस्याः ज्ञानाश्रयत्वमनुपपन्नम् । वक्तव्यं चात्मनो ज्ञानाश्रयत्वं प्रत्यक्त्वसमानाधिकरण-त्वात्तस्य । अतोऽस्या आत्मधर्मत्वमेव युक्तं, नात्मत्वम् । वयं त्वात्मनः स्वम्यप्रकाशत्वं ज्ञानरूपत्वञ्च श्रुत्यादि-बलात्स्वीकुर्मः । तच्च न प्रसिद्धज्ञानरूपत्वमात्मनः । अतो न विरोध इति भावः ।

एवं संविदात्मनोरैक्यासम्भवे धर्मधर्मितया प्रतीतिः हेतुत्वेनोक्ता । अथ तत्र हेत्वन्तरमप्यस्तीत्याह - **तथेति** । **हिः** प्रसिद्धयर्थकः । **ईक्ष्यन्त** इत्यत्र सम्बध्यते । **कर्तृधर्मस्ये**ति सामान्यत उक्त्वापि **संवेदनाख्यस्ये**ति विशेषतः कथन-मात्मत्वादिनित्यधर्मव्यवच्छेदार्थम् । **संवेदनाख्यस्य** = प्रकाशरूपावस्थावतः । अन्यथा ज्ञानविशेषरूपसुखदुःखादि-दृष्टान्तकथनानुपपत्तेः । ततश्च ज्ञानविशेषस्य सुखादेरस्थिरत्वं यथा प्रत्यक्षसिद्धं तथैव प्रकाशरूपावस्थाया इति भावः । यद्वा - **संवेदनाख्यस्य** = ज्ञानस्य । सुखदुःखादेर्दृष्टान्तत्वकथनं परमतानुसारेण । परेण हि तेषामन्तः करण-धर्मत्वमस्थिरत्वं चाप्युपगतम् । एवं सामान्यतः प्रतिज्ञातम् । अथ कर्तुः स्थिरत्वमुपपाद्यते - **कर्तृस्थैर्यमि**ति । 'स एवायमि'ति दृष्टान्तव्यक्त्यै । यथोक्तप्रत्यभिज्ञायार्थस्थैर्यं तद्वत् । 'पूर्वं मयाऽनुभूत' इति प्रत्यभिज्ञया अहमर्थस्य स्थैर्य-मावश्यकमिति भावः । **पूर्वं** = सुषुप्त्यादेः पूर्वं । 'स एव तु कर्मानुस्मृतिशब्दविधिभ्य' इति सूत्रकारेणैव वक्ष्यमाणत्वादिति भावः । अथ संविदोऽस्थिरत्वमुपपादयति — **अहमिति** । **अद्येति** संस्कार्यम् । 'पूर्वमेतद्विषयकज्ञानरहितोऽहं सम्प्रति एतद्विषयकज्ञानवानि'त्यर्थः । एतेन संविदो उत्पत्तिस्थिती उक्ते । 'अज्ञासिषमि'त्यतीतत्वोक्त्या निरोधः । साक्षात् ज्ञानविरोधप्रत्यक्षमाह — **ज्ञातुरेवेति** । **इतिर्हेतौ** । एवं स्थिरत्वास्थिरत्वोपपादनमुखेनैक्यं निषिद्धम् । अथ प्रत्यभिज्ञा-नुपपत्त्यापि संविदात्मत्वं निराकरोति — **एवमिति** । तत्रानित्यायाः संविदः आत्मत्वमुत नित्याया इति विकल्पं हार्दं कृत्वा अनित्यत्वे प्रत्यभिज्ञानुपपत्तिं दर्शयति — **क्षणेति** । **दृष्टमिति** । अत्र **प्रति** इत्यध्याहार्यम् । ततश्च **पूर्वेद्युर्दृष्टं प्रति अपरेद्युः** इत्येतन्न प्रत्यभिज्ञाकारघटकं, 'इदमहमदर्शमि'त्येव प्रत्यभिज्ञा । यद्वा - **पूर्वेद्युर्दृष्टमिदमपरेद्युरदर्शमित्यन्वयः** । संविद एवात्मत्वे तस्याः पूर्वमेव नष्टत्वेन सम्प्रति विद्यमानतया, प्रत्यभिज्ञाविषयत्वकथनासम्भवादिति भावः ।

ननु ज्वालैक्यप्रत्यभिज्ञावदस्या अपि भ्रमरूपत्वं वक्तुं शक्यम् । मैवं, बाधकविरहात् । अस्तु वा भ्रमरूपत्वेन प्रत्यभिज्ञाविषयत्वस्यान्यथासिद्धिः । अथापि भ्रान्तिरूपाया अपि प्रत्यभिज्ञाया आश्रयत्वमनुपपन्नमेव संविदो नष्टत्वात् । अतोऽश्रयस्यस्थैर्यमेव वक्तव्यमिति न क्षणङ्गिनी संविदात्मा । ननु संविदः क्षणिकत्वे तत्सन्ततिस्वीकारेण प्रत्यभिज्ञो-पपत्तिसम्भव इत्यत्राह — **न हीति** । तस्यास्सन्तत्यभ्युपगमे परस्परं तासां विलक्षणत्वेन पूर्वमनुभवितृत्वं कस्याश्चित्

**किञ्चानुभूतेरात्मत्वाभ्युपगमे तस्या नित्यत्वेऽपि प्रतिसन्धानासम्भवस्तदवस्थः। प्रतिसन्धानं हि पूर्वापरकालस्थायिनमनुभवितारमुपस्थापयति, नानुभूतिमात्रम् - 'अहमेवेदं पूर्वमप्यन्वभूवम्' इति। भवतोऽप्यनुभूतेर्न ह्यनुभवितृत्वमिष्टम् ; अनुभूतिरनुभूतिमात्रमेव।**

**संविन्नाम काचिन्निराश्रया निर्विषया वा(चा)त्यन्तानुपलब्धेर्न सम्भवतीत्युक्तम्ः, उभयाभ्युपेता संविदेवाऽऽत्मेत्युपलब्धिपराहतम्। अनुभूतिमात्रमेव परमार्थ इति निष्कर्षकहेत्वाभावसाश्च निराकृताः॥**

---

सम्प्रति स्मर्तृत्वमन्यस्या इति वक्तव्यम्। इदञ्चानुपपन्नम्। अन्यानुभूतेरन्यस्मरणासम्भवादिति भावः। अतः प्रत्यभिज्ञाश्रयत्वेनाप्यात्मनः स्थैर्यमभ्युपगन्तव्यमिति न क्षणभङ्गिन्याः संविद आत्मत्वमिति। अथ संविदः नित्यत्वेपि आत्मत्वाङ्गीकारे दोषमाह — **किञ्चेति**। प्रतिसन्धानासम्भवं विस्तृणीते — **प्रतिसन्धानमिति**। **अनुभवितारमिति** निषेध्यव्यञ्जकम्। निषेध्यं व्यनक्ति — **नानुभूतिमात्रम्**। मात्रचानुभवितृत्वव्यवच्छेदः। अयं भावः - यः प्रतिसन्धा, तमेव प्रतिसन्धातारं प्रतिसन्धानमुपस्थापयेत्। न ह्यनुभूतिरूपं प्रतिसन्धानं प्रतिसन्धातृ भवितुमर्हति। गमनक्रियायाः गन्तृत्ववत्तस्या अनुपपन्नत्वात्। ननु प्रतिसन्धानस्य प्रतिसन्धात्रुपास्थाकत्वं कुतः इत्यत्र प्रतीतिं दर्शयति - **अहमिति**। **एव**कारेण ज्ञातुः स्थिरत्वं चोक्तम्। **अन्वभूवमि**त्यनेन पूर्वानुभवाश्रयत्वेन एतत्प्रतिसन्धानाश्रयत्वेन चाहमर्थप्रतीत्या तदुपस्थापकत्वमवश्यमिति सूचितम्। वस्तुत अनुपपन्नत्वात् अनुभूतेरनुभवितृत्वन्न सम्भवति। अत एव भवतापि नाङ्गीक्रियत इत्याह — **भवतोऽपी**ति। **हिः** तन्मतप्रसिद्धया।

नन्वनुभवितृत्वं नानुभूतेरस्मदिष्टं अपि त्वन्तःकरणस्यैव। अतो न दोष इति चेन्न। अन्तःकरणस्य सुषुप्तौ त्वया नाशाभ्युपगमेन प्रतिसन्धानतद्विषयत्वादीनामनुपपन्नत्वात्। ननु प्रसिद्धसंविदः आत्मत्वं केनोक्तं येनैवं शङ्क्येत। किन्तु **निराश्रयनिर्विषयाया एवे**त्यत्र पूर्वमेव तादृशसंविद अनुपलब्धिपराहतत्वमुक्तमिति दर्शयति - **संविदिति**। ननु भवन्मते आत्मा विषयाश्रयशून्यः ज्ञानरूपश्च। तत्कथं विषयाश्रयशून्यज्ञाननिरासः? उच्यते। न हि भवन्मत इव वयं प्रसिद्धधियो आत्मत्वं स्वीकुर्मः, किन्तु तद्व्यतिरिक्तस्य ज्ञातुः ज्ञानरूपत्वं, श्रुतिस्वारस्यात्। यदि ज्ञातुरेवात्मत्वं स्वीकृत्य संवित्वनित्यत्वादिकं स्थाप्यत तर्हि तदिष्टमेव। यदि ज्ञातृव्यतिरिक्तस्य, तदा विषयाश्रयसंबन्धशून्यं ज्ञानमेवाप्रमाणिकमित्युच्यते। वस्तुतः ज्ञातुरात्मनः निराश्रयत्व-निर्विषयकत्वे न ब्रूम इति नानुपपत्तिः। ननु ज्ञातुर्ज्ञानस्य च नित्यस्य स्वयंप्रकाशस्य ज्ञानस्वरूपस्यार्थद्वयस्य कल्पनापेक्षया एकमेवोभयाभ्युपेतज्ञानं स्वीकर्तुमलं तस्यैव नित्यत्वादिकमपि लाघवादित्यत्राह — **उभयेति**।

अयं भावः — कल्पनाया हि लाघवगौरवविचारः नत्वुपलब्धावपि। अन्यथा सर्वशून्यमतस्यैव सर्वैरप्यङ्गीकर्तुं शक्यत्वात्। यदि तूपलब्धत्वात्संवित्स्वीकरणं, तद्वदेवोपलब्धत्वात् ज्ञातृस्वीकरणमपि वरम्। तस्मात् स्थिरस्य ज्ञातुरहमर्थस्यैवात्मत्वोपलब्ध्या न तद्विपरीतायाः संविद आत्मत्वसम्भवः। धर्मभूतज्ञानस्यापि श्रुतिसिद्धं नित्यत्वन्न कल्प्यते न त्यज्यते च। 'उत्पन्नं नष्टमि'त्यादिप्रतीत्यनुसारेणावस्थाभेदैरनित्यत्वन्तु स्थाप्यते। अतो न दोष इति। ननूपलब्धत्वेऽपि नभस्थलमलिनत्ववत् संविदः सविषयत्वं त्याज्यमेव पूर्वमेव श्रुत्यादीनां प्रदर्शितत्वात्, अतः तत्त्वतो निर्विषयैव भ्रान्त्या सविषयत्वेन प्रतीयत इति न लोकानुभवविरोधोऽपीत्यत्राह - **अनुभूतिमात्रमेवेति**। निर्विषयत्वादिसाधकहेतूनां दृशित्वादीनां पूर्वमेव निरस्तत्वादिति भावः। तस्माद्विषयेषु घटत्वादिरहितं सन्मात्रं विषयिणि कर्मकर्तृक्रियात्वरहितं प्रकाशमात्रं नात्मेति भावः॥

**ननूक्तमिदं सर्वं तदोपपद्यते, यद्यहमर्थस्यात्मत्वं स्यात्। तदेव नोपपद्यते, विरोधात्। चित्पदार्थस्यात्मत्वाच्च। तथा**

**ननु च 'अहं जानामि' इत्यस्मत्प्रत्यये योऽनिदमंशः प्रकाशैकरसश्चित्पदार्थः, स आत्मा। तस्मिन् तद्बलनिर्भासिततया युष्मदर्थलक्षणः, अहं जानामीति सिद्ध्यन्नहमर्थश्चिन्मात्रातिरेकी युष्मदर्थ एव। नैतदेवम्; 'अहं जानामि' इति धर्मधर्मिताप्रत्यक्षप्रतीतिविरोधादेव। किञ्च -**

**अहमर्थो न चेदात्मा, प्रत्यक्त्वं नात्मनो भवेत्। अहम्बुद्ध्या परागर्थात्प्रत्यगर्थो हि भिद्यते॥**

हि 'चिदात्मा प्रत्यक्त्वात्, स्वयंप्रकाशत्वात्, चित्वाच्चे'त्यनुमानैः चिंदशस्यात्मत्वसमर्थनात्। 'अहमर्थो नात्मा पराक्त्वात्, अस्वयंप्रकाशत्वात्, चिदन्यत्वाच्चे'त्यनुमानैश्चाहमर्थस्यात्मत्वाभावसमर्थनाच्चेत्याशङ्कते - **ननु** चेति। **चकारो**ऽस्य चोद्यस्य महापूर्वपक्षेऽनुक्तत्वादपूर्वत्वं व्यनक्ति। **अस्मत्प्रत्यये** = अस्मत्प्रत्ययत्वेन पराभ्युपगते। यद्वा 'जानामी'ति प्रत्यक्त्वलक्षणास्मदर्थत्वविशिष्टविषयकप्रत्ययत्वात् **अस्मत्प्रत्यये** इत्युक्तिः। **अनिदमांशः**। इदमंशः पराक्, तद्व्यतिरिक्तः प्रत्यगर्थः। **प्रकाशैकरसः** = स्वयंप्रकाशः। **चिद्रूपपदार्थः** = चिद्रूपः। **तस्मिन्** = चित्पदार्थे आत्मनि। **तद्बलनिर्भासिततया** = ज्ञानाधीनप्रकाशतया, अस्वयंप्रकाशत्वादिति यावत्। आत्मभूतचित्पदार्थभ्रमाधिष्ठानत्वात्तत्राहमर्थः प्रकाशत इति भावः। **युष्मदर्थलक्षण** इत्यनेन पराक्त्वरूपहेतुरुक्तः। **चिन्मात्रातिरेकी**त्यनेन चिदन्यत्वरूपहेतु र्निदिष्टः। **युष्मदर्थ एव** = नात्मेत्यर्थः॥

यद्वा - पूर्ववाक्ये, 'चित्पदार्थः आत्मा प्रत्यक्त्वात्', 'चित्पदार्थः प्रत्यक् स्वयंप्रकाशत्वात्', 'चित्पदार्थः स्वयंप्रकाशः चित्वादि'त्यनुमानत्रयं विवक्षितम्। तत्र **अनिदमंशः प्रकाशैकरसः चित्पदार्थ** इत्येतानि क्रमेण स्वरूपासिद्धिनिराकरणपराणि। इमे च हेतवो व्यतिरेकिणः। उत्तरवाक्ये च 'अहमर्थः नात्मा पराक्त्वात्', 'अहमर्थः पराक् ज्ञानाधीनप्रकाशत्वात्', 'अहमर्थो ज्ञानाधीनप्रकाशः चिद्व्यतिरिक्तत्वादि'त्यनुमानत्रयं विवक्षितम्। अत्र **तद्बल-निर्भासिततया युष्मदर्थलक्षणः चिन्मात्रातिरेकी**त्येतानि यथायोग्यं स्वरूपासिद्धिनिरासपराणीति बोध्यम्। तदेतद्दूषयति — **नैतदेवमि**ति। तत्र किं संविदः आत्मत्वं प्रतीतिबलात्स्वीक्रियते उत प्रत्यक्त्वहेतुना। यद्वा - श्रुत्यर्थापत्त्या अहोस्वित् श्रुतिस्मृतिसूत्रस्वारस्यादिति विकल्पं मनसि निधाय प्रथमे प्रत्यक्षप्रतीतिविरोधमाह — **अहमि**ति। अयं भावः — 'अहं जानामी'ति प्रात्यक्षिकप्रतीतौ अहमर्थस्य ज्ञानाश्रयत्वे चितोऽहमर्थधर्मत्वेन च विषयीकरणात् स्वस्य स्वाश्रयत्वासम्भवेनात्मत्वसाधकहेतवो बाधिता एवेति। **एव**कारः संविद आत्मत्वमुपलब्धिपराहतमिति पूर्वमेवास्याः शङ्काया उत्तरमुक्तमिति व्यनक्ति। एवमहमर्थस्य ज्ञानाश्रयत्वेन प्रतीत्या, ज्ञानाश्रयस्यैव प्रत्यक्त्वात्, तत एव तस्यात्म-त्वमकामेनापि ग्राह्यमिति अहमर्थानात्मत्वसाधकहेतूनामपि बाधितत्वमेव। यत्तु संविदोऽनुभूतित्वहेतुना स्वयंप्रकाश-त्वमुक्तं तदिष्टमेव। विषयप्रकाशनवेलायामेव स्वाश्रयं प्रत्येव च स्वयंप्रकाशत्वमिति नियमश्च पूर्वमेवोक्तः। अतोऽनु-भूतित्वहेतोस्सिद्धसाधकता। अहमर्थस्य ज्ञानाधीनप्रकाशत्वसाधकहेतोः चिदन्यत्वस्यासिद्धिः। अहमर्थात्मनि चिदन्य-त्वाभावस्य वक्ष्यमाणत्वात्। विशेषतश्चिदन्यत्वस्य हेतुत्वे त्वप्रयोजकता। ज्ञानस्य प्रत्यक्त्वसाधनं ज्ञातुः पराक्त्व-साधनञ्च बाधितम्। अतो'ऽहं जानामी'ति धर्मितया प्रतीयमानः प्रत्यक् आत्मा च। धर्मतया भासमानं अन्यस्मै भासत इति पराक् अनात्मा चेति भावः। एतेनानुभूतेः प्रत्यक्त्वसाधनं, तेनात्मत्वसाधनम्। अहमर्थस्य पराक्त्वसाधनं तेनानात्मत्वसाधनञ्च निरस्तं वेदितव्यम्।

एवं प्रत्यक्षप्रतीतिविरोधप्रदर्शनेन प्रतीतिबलस्य प्रत्यक्त्वरूपहेतुबलस्य चासिद्धिरुक्ता। अथ प्रत्यक्त्वहेतो र्विपरीतसाधकत्वमाह - **किञ्चे**ति। यद्यहमर्थस्य नात्मत्वं तर्ह्यात्मनः प्रत्यक्त्वन्न सिद्ध्येत्। तत्र हेतुमाह **अहमि**ति। प्रत्यगर्थः स्वस्मैभासमानरूपोऽर्थः परागर्थात् परस्मैभासमानदर्थात् अहंबुध्या हि भिद्यते। अयमाशयः - अहंबुद्धिविषयः प्रत्यगर्थः। इदंबुद्धिविषयः परागर्थः। प्रतीपमञ्चतीति प्रत्यङ्। तस्य भावः प्रत्यक्त्वम्। तत्र योऽयं 'अहमिति' व्यवहि-यते, स एव स्वस्मैभासमान इति तस्य प्रत्यक्त्वं वक्तव्यम्। यश्च 'इदमि'ति व्यवहियते, स परस्मा एव भासमान

**निरस्ताखिलदुःखोऽहमनन्तानन्दभाक् स्वराट् । भवेयमिति मोक्षार्थी श्रवणादौ प्रवर्तते ॥**
**अहमर्थविनाशश्चेन्मोक्ष इत्यध्यवस्यति । अपसर्पेदसौ मोक्षकथाप्रस्तावगन्धतः ॥**
**मयि नष्टेऽपि, मत्तोऽन्या काचिज्ज्ञप्तिरवस्थिता । इति तत्प्राप्तये यत्नः कस्यापि न भविष्यति ॥**
**स्वसम्बन्धितया ह्यस्याःसत्तावि(ऽपि)ज्ञाप्तितादि च । स्वसम्बन्धवियोगे तु ज्ञाप्तिरेव न सिद्ध्यति ॥**
**छेत्तुश्छेद्यस्य चाभावे छेदनादेरसिद्धिवत् । अतोऽहमर्थो ज्ञातैव प्रत्यगात्मेति निश्चितम् ॥**

---

इति पराक् । तस्मात् स्वस्मैभासमानरूपाहमर्थादन्यस्याः संविदः स्वयंप्रकाशत्वाद्यभ्युपगमेऽपि परस्मा एव भासमानत्वेन परागर्थत्वमेवाभ्युपेयम् । यद्यहमर्थस्यात्मत्वं नेष्यते, तर्ह्यात्मत्वेनाभ्युपगतायाः संविदः स्वस्मै भासमानत्वरूपप्रत्यक्त्वाभावेन आत्मनोऽभ्युपगम्यमानं प्रत्यक्त्वन्न सिध्येत् । ततश्च प्रत्यक्त्वहेतुना संविदोऽत्मत्वसाधनं सुदूरपराहतम् । तस्मादात्मनोऽभ्युपगम्यमानं प्रत्यक्त्वमेवाहमर्थस्यात्मत्वं साधयतीति । अत्र **हि**शब्देन हेतुवाचकेन, 'संवित् पराची इदं बुद्धिविषयत्वात्घटवत्', 'अहमर्थः प्रत्यक् अहंप्रत्ययविषयत्वादि'त्याद्यनुमानानि सूचितानि । यद्वा - **हि**शब्दः प्रसिद्धिवाचकः । आगमादिष्वात्मन्येव अहंशब्दस्य प्रयुज्यमानत्वादिति भावः । एवं श्रुत्यर्थापत्तिरपि न संविदात्मत्वसाधने प्रभवति । किन्त्वहमर्थात्मत्वसाधने एवेत्याशयेनाह — **निरस्ते**ति । **भवेयमि**त्यन्तं मोक्षार्थिनः श्रवणादौ प्रवृत्तिहेतुकथनम् । **आदि**शब्देन मननादिपरिग्रहः ।

एवं शास्त्रमर्यादा प्रदर्शिता । अथ संविदात्मत्वपक्षे तदनुपपत्तिं प्रदर्शयति — **अहमर्थे**ति । अयं भावः - भवतां संविदः आत्मत्वात्, अहमर्थस्य चानात्मत्वान्मुक्तावहमर्थनाशस्याभ्युपगन्तव्यत्वेन स्वस्य दुःखनिवृत्त्यानन्दप्राप्त्यकर्मवश्यत्वसंपादनार्थमेव शास्त्रश्रवणादिप्रवृत्तेर्वक्तव्यतया शास्त्रश्रवणादिप्रवृत्तस्य स्वस्यैव विनाशं **विदुषः** कथं तत्र प्रवृत्तिः स्यात् । अतः प्रवृत्त्यन्यथानुपपत्त्या न संविद आत्मत्वं किन्तु प्रत्यग्भूतस्य स्थिरस्याहमर्थस्यैव । ज्ञानमेवात्मा नत्वहमर्थ इतीदं, **'न हि कश्चित्' 'अहमस्मि वा न वेति सन्देग्धि नापि विपर्येति'** इति भवद्भाष्यस्यैव विरुद्धम् । अत्र हि स्वयंप्रकाशस्याहमर्थस्यैव आत्मत्वमभिमतम् । यद्यपि परार्थमपि कर्म कैश्चित्क्रियते, अथापि न स्वविनाशार्थमेव तादृशं कर्म प्रामाणिकैराचर्यते । अत एवोक्तम् - **अहमर्थविनाशश्चे**ति । ननु महतां स्वनाशमप्यविगणय्य परार्थकर्मानुष्ठानं दृश्यते । तद्वदत्र किन्न स्यादित्यत्राह **मयी**ति । अयं भावः - स्वनाशापरिगणनेन स्वकीयत्वाभिमानेषु दयया परार्थकर्मानुष्ठानदर्शनेऽपि कथञ्चिदपि स्वसंबन्धशून्येष्वनुकम्पया तदभिमतकर्मानुष्ठानन्न दृष्टम् । अतोऽहमर्थस्य प्रवृत्तिरिति । इदञ्च **काचिदि**त्यनेन सूचितम् ।

ननु यागादिकर्तुर्देहादन्यस्य भोक्तुरात्मानः प्रामाणिकत्ववत् अत्रापि किं न स्यात् । तत्रापि हि कर्तुर्देहादेः विनाश एव । अनुभोक्ता तु तत्सम्बन्धशून्य, अन्य एवेति चेन्न । तत्रापि फलभोक्तुरात्मन एव कर्तृत्वस्वीकारात् । न हि देहादेरचेतनस्य क्रियावत्त्वसम्भवेऽपि स्वबुद्धिपूर्वककर्तृत्वं सम्भवति । तस्मान्न दृष्टान्तसाङ्गत्यम् । एवमहमर्थस्य मोक्षे नाशमन्वारुह्य धीमात्रस्थितौ दूषणमुक्तम् । अथाहमर्थस्य तदा नास्तित्वं प्रतिपादयति - **स्वसम्बन्धितये**ति । उभयत्र **स्व**शब्दोऽऽत्मपरः । **अस्याः** - संविदः । **सत्ते**ति सामान्य निर्देशः । **विज्ञप्तित्वं** = विषयप्रकाशत्वरूपविशेषकारः । **आदि**शब्देन स्वयंप्रकाशत्वसङ्ग्रहः । **न सिध्यती**ति । अयं भावः - यदाश्रयसंबन्धाधीनं यस्य सत्तादिकं तदाश्रयाभावे कथं तस्य स्थितिः । अतोऽहमर्थस्य मुक्तौ विनाशे न संविन्मात्रस्थितिसम्भवः, तदाश्रयस्य नष्टत्वादिति ।

ननु जातिवादिमते आश्रयनाशेऽपि जात्यङ्गीकारवदत्रापि किन्न भवतीत्यत्राह — **छेत्तुरि**ति । अयं भावः - सकर्मस्य धात्वर्थस्य कर्मकर्तृविरहे न सत्तादिसम्भवः । न हि कर्मणश्छेद्यस्य कर्तुः छेत्तुश्चाभावे छेदनसिद्धिरिति । **आदि**शब्देन द्वैधीभावसङ्ग्रहः । एवं सोपपत्तिकं प्रदर्शितमर्थं दृढयति — **अत** इति । एवं श्रुतिस्मृतिसूत्रस्वारस्यमपि

**'विज्ञातारमरे केन', 'जानात्येवे'ति च श्रुतिः। 'एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ' इति च स्मृतिः॥**
**'नाऽत्मा श्रुते'रित्यारभ्य सूत्रकारोऽपि वक्ष्यति। 'ज्ञाऽत एवे' त्यतो नात्मा ज्ञप्तिमात्रमिति स्थितम्॥**

**अहम्प्रत्ययसिद्धो ह्यस्मदर्थः ; युष्मत्प्रत्ययविषयो युष्मदर्थः। तत्र, अहं जानामीति सिद्धो ज्ञाता युष्मदर्थ इति वचनं जननी मे वन्ध्येतिवद्व्याहतार्थश्च। न चासौ ज्ञाताऽहमर्थोऽन्याधीनप्रकाशः ; स्वयम्प्रकाशत्वात्। चैतन्यस्वभावता हि स्वयम्प्रकाशता।**

---

स्वमत एवेति दर्शयति — **विज्ञातारमिति**। 'विज्ञातारमरे केन विजानीयादि'ति श्रुतिः, 'जानात्येवायं पुरुषः' इति श्रुतिश्च विवक्षिता। तत्र प्रथमया ज्ञातव्यस्यात्मनो ज्ञातृत्वमुक्तम्। द्वितीयया ज्ञातृत्वस्य सार्वकालिकत्वमुक्तम्। **वेत्तीत्यनेन** ज्ञातृत्वमुक्तम्। **नात्मा श्रुतेरिति**। अत्रात्मपदघटित सूत्रोदाहरणं पूर्वोक्तश्रुतीनामन्यप्रकरणत्वशङ्का-निरासार्थम्। **अपि**शब्दोऽन्येषामपसिद्धान्तसूचकः। सूत्रे आत्मशब्दस्यैवोपादानात्। तावता ज्ञानाश्रयस्यैवात्मत्वं सूत्रकाराभिमतमिति कथं निर्णीयत इति शङ्कावारणाय 'ज्ञोऽत एवेति' सूत्रान्तरानुसरणम्। एवमहमर्थस्यात्मत्वं स्थापयित्वा ज्ञप्तेरात्मत्वन्न सम्भवतीति निगमयति - **नात्मेति**। **स्थितमिति**। नेदं स्वकपोलकल्पितम्। परन्तु तर्क-सहकृतश्रुतिस्मृतिसूत्रसिद्धमिति भावः। **ज्ञप्तिमात्रमित्यत्र मात्र**शब्दोऽवधारणार्थकः। ज्ञप्तिर्नात्मैवेत्यर्थः। ज्ञप्तेः कदाचिदपि नात्मत्वसम्भव इति भावः। यद्वा - न ज्ञप्तिमात्रमात्मा। किन्तु, ज्ञानरूपो यः ज्ञाता स आत्मा। यद्यपि प्रसिद्धज्ञानस्य परैरात्मत्वस्वीकारात् तन्निराकरणावसरे न ज्ञप्तिमात्रमात्मेत्युक्ते तैरुक्तस्य ज्ञानस्य ज्ञातुश्चात्मत्वं सिध्येत्, तथापि प्रसिद्धज्ञानस्यात्मत्वासम्भवयुक्त्या निराकृतत्वान्न तथाऽर्थो वर्णनीयः। **ज्ञप्तिरिति** कथनं ज्ञानत्वेन रूपेणात्म-भूतधर्मिभूतज्ञानं सङ्गृहीत्वैव इति न दोषः॥

एवं प्रसिद्धज्ञानस्य प्रत्यक्षप्रतीत्यादिबलेनात्मत्वन्न सञ्ज्ञाघटीतीति दर्शितम्। अथाहंप्रत्ययसिद्धस्यास्मदर्थस्य युष्मदर्थत्ववचनं जननीवन्ध्यात्ववचनमिव व्याहतार्थमिति दर्शयति - **अहमिति**। अत्रास्मदर्थस्याहं प्रत्ययसिद्धत्वोक्तिः तस्य स्वतस्सिद्धत्वसूचनार्था। अत एव ह्युत्तरत्र **युष्मत्प्रत्ययविषय** इति भाषितम्। **व्याहतार्थं चेति**। यद्यप्यस्मन्मतेऽपि आत्मव्यक्तिबहुत्वात् अस्मदर्थस्यापि युष्मत्प्रत्ययविषयत्वरूपयुष्मदर्थत्वं सम्भवति, एवमद्वैतिमतेऽहङ्कारभेदात् त्वमर्थस्यापि अहमर्थत्वम्। अथापि घटादिवत्प्रत्यक्त्वसामान्याभावलक्षणं युष्मदर्थत्वमत्र व्याहतमित्याशयः। एवमहम-र्थस्य पराक्त्वसाधकतया पूर्वमुक्तस्य अस्वयंप्रकाशत्वरूपान्याधीनप्रकाशत्वहेतोरसिद्धिं वर्णयति **न चेति**। कुत इत्यत्राह **स्वयंप्रकाशत्वादिति**। तथा श्रुतिप्रमितत्वादिति भावः। यद्वा - स्वधर्मज्ञानवत्स्वस्यापि प्रकात्वादित्यर्थः। ज्ञानरूपत्वा-दिति पर्यवसितम्। एतेन स्वयंप्रकाशत्वरूपहेतोः अनन्याधीनस्वप्रकाशत्वरूपतया साध्याविशिष्टत्वशङ्का परिहृता। ज्ञानत्वस्यैव तदर्थत्वात्। ज्ञानत्वस्यानन्याधीनस्वप्रकाशत्वव्याप्यत्वात्। अत एव हि धर्मभूतज्ञानेऽनन्याधीनस्व-प्रकाशत्वमिति भावः। यद्वा - **स्वयंप्रकाशत्वादि**त्यस्य स्वतःसिद्ध प्रकाशरूपज्ञानवत्वा-दित्यर्थः। एवं वा साध्या-विशिष्टत्वशङ्कापरिहारो बोध्यः। **चैतन्यस्वभावतेति**। **चेतना** = ज्ञानं, तस्याः भावश्चैतन्यं ज्ञानत्वमित्यर्थः। तत्स्वभाव-त्वञ्च ज्ञानत्वगुणकत्वं, तच्च ज्ञानत्वपर्यवसायिज्ञानत्ववत्त्वम्। यद्वा - चैतन्यं ज्ञानं तत्स्वभावः तद्वत्त्वम्। एतेन हेतुतया पूर्वोक्तस्वयंप्रकाशत्वं ज्ञानत्वरूपं ज्ञातृत्वरूपं वेति विवृतं भवति। अत एव **हि**शब्दप्रयोगः।

एवमहमर्थे ज्ञातर्यनन्याधीनप्रकाशत्वसाधनेन पराक्त्वसाधकास्वयंप्रकाशत्वहेतोरसिद्धिर्दर्शिता। अथ तदर्थमेव 'अहमर्थोऽनन्याधीनप्रकाशः प्रकाशस्वभावत्वादि'त्यनुमानं हार्दं कृत्वा लोकबुध्यनुसारेण दृष्टान्तं प्रदर्शयन् तदनुग्राहकम-नुकूलतर्कं व्याप्तिरूपं प्रदर्शयति - **य इति**। **प्रकाशस्वभावः** = व्यवहारानुगुण्यापादनस्वभावयुक्तः। **अनन्याधीनप्रकाशः**

**यः प्रकाशस्वभावः, सोऽनन्याधीनप्रकाशः, दीपवत्। न हि दीपादेः स्वप्रभाबलनिर्भासितत्वेनाप्रकाशत्वमन्याधीनप्रकाशत्वञ्च। किं तर्हि? दीपः(स्वयं)प्रकाशस्वभावः स्वयमेव प्रकाशते ;**

= स्वेतरसजातीयनिरपेक्षप्रकाशवान्। अत्रेदमप्यवधेयम् - 'आत्मा अनन्याधीनप्रकाशत्वरूपस्वयंप्रकाशत्ववान् ज्ञानत्वादि'त्येकमनुमानम्। अत्र धर्मभूतज्ञानं दृष्टान्तः। एवं 'आत्मा स्वयंप्रकाशत्ववान् ज्ञातृत्वादि'त्यपरमनुमानम्। 'यन्नैवं तन्नैवं, यथा घट' इति व्यतिरेक्युदाहरणम्। घटो ह्यन्याधीनप्रकाशः ज्ञातृत्वशून्यश्च। व्यापकीभूतज्ञातृत्वशून्यत्वनिवृत्त्याऽऽत्मनि व्याप्यभूतान्याधीनप्रकाशत्वनिवृत्तिरिति स्वयंप्रकाशत्वसिद्धिः। यद्वा - अत्राप्यन्वय्युदाहरणं सम्भवति। **ज्ञातृत्वादि**त्यस्य प्रकाशाश्रयत्वादित्यर्थः। प्रकाशश्च व्यवहारानुगुण्यापादकत्वम्। दीपस्य प्रभायाश्च व्यवहारानुगुण्यापादकत्वमस्ति। तद्वदेव आत्मनः धर्मभूतज्ञानस्य च। दीपस्य प्रभायाश्च विरोधितमोनिरसनद्वारा। आत्मनो ज्ञानस्य च साक्षात्। आत्मनः स्वज्ञाने स्फुरणात् स्वव्यवहारानुगुण्यापादनशक्तियुक्तत्वञ्च। धर्मज्ञानस्य घटादिषु च तच्छक्तियुक्तत्वम्। अतः प्रकाशस्यैवंरूपत्वाद्दीपादिरपि दृष्टान्तो भवितुमर्हतीति अन्वय्युदाहरणसम्भवः। **स्वयंप्रकाशत्वादि**ति भाष्येण ज्ञानस्वरूपत्वहेतुः प्रदर्शितः। **'चैतन्यस्वभावता हि स्वयंप्रकाशता'** इति भाष्येण ज्ञातृत्वहेतुः प्रदर्शितः। अत्र हेतुसाध्ययोः कथमभेदनिर्देश इति न मन्तव्यम्। धूमवत्वं ह्यग्निमत्वमित्युक्ते यथा धूमवत्वादग्निमत्वमित्युक्तं भवति तथेति द्रष्टव्यम्। अत एवान्यदीये सिद्धिग्रन्थे 'चैतन्यस्वभावतया स्वयंप्रका-शत्वं' इत्युक्तम्। अत्र भाष्ये तृतीयायाः अभेदार्थकत्वविवक्षयापि भाष्यश्रीसूक्तिः प्रवर्तिता स्यात्। कार्यकारणोपचारवज्ज्ञाप्ये ज्ञापकोपचारोपि सम्भाव्यत एव। इत्थञ्च साक्षाद्वा परम्परया वा व्यवहारानुगुण्यापदकत्वापरपर्यायभासमानत्वाश्रयवस्तु (ज्ञानं, प्रभा) धर्मकत्वादात्मा स्वयंप्रकाश इत्युक्तं भवति। अत्र रूपं वा धूमादिर्वा न प्रकाशशब्दवाच्यः। तेषां व्यवहारानुगुण्यापादकत्वाभावात्।

अत्र चैतन्यगुणकत्वादात्मनः स्वयंप्रकाशत्वोक्तिः चैतन्यस्वरूपस्यात्माधीनत्वेन चैतन्याधीनविषयप्रकाशादेरपि आत्माधीनत्वमिति आत्मनः स्वाधीनसर्वप्रकाशत्वम्। अतोऽनन्याधीनप्रकाशत्वसिद्धिः। धर्मभूतज्ञानं तत्प्रकाशतदधीनविषयप्रकाशादिसर्वमपि आत्माधीनं चेत्, तादृशस्यात्मनः कथमनन्याधीनप्रकाशत्वसम्भवः। स्वयंज्योतिष आत्मन एतदधीनप्रकाशाश्रयवस्तुना कथं प्रकाश्यत्वं भवेदिति इत्यभिप्रायिणी इति केषाञ्चिन्मतम्। एवमुपपादनस्य सुन्दरत्वेऽपि ज्ञानाधीनविषयगतप्रकाशादेरात्मरूपधर्मिप्रकाश्यत्वोक्तिः न मनोज्ञा। न हि घटादिः आत्मना प्रकाश्यत इति वा धर्मिज्ञानं घटादिकं प्रकाशयतीति वा व्यवहरन्ति। येनात्मनः घटादिप्रकाशकत्वं युज्येत। एवमेव प्रभाया इव दीपस्यापि न स्वरूपेण वस्तुप्रकाशकत्वम्। दीपस्वरूपे विषयसम्बन्धाभावात्। अत एव श्रुतप्रकाशिकायामेवमुक्तम् विषयप्रकाशनक्षमोऽपि स्वरूपस्य क्वाचित्कतया विषयसंबन्धाभावात् स्वरूपेण न प्रकाशयति, किन्तु विषयसम्बधिन्या स्वपरिकरभूतया प्रभयेति। औपचारिकत्वे न कस्यापि दोष इति।

ननु दृष्टान्तत्वेनोपात्तस्य दीपादेः स्वप्रभाबलभासितत्वेन साध्यवैकल्यमिति शङ्कां परिहरति — **न हीति**। अत्र स्वप्रभाबलनिर्भासितत्वान्नान्याधीनप्रकाशत्वमिति नार्थः। प्रकृतासाङ्गत्यापत्तेः। स्वयमेव प्रकाशते इति वक्ष्यमाणग्रन्थानुपपत्तेश्च। किन्तु स्वप्रभाबलनिर्भासितत्वं दीपादेरस्तीति अन्याधीनप्रकाशत्वं नाशङ्कनीयम्, स्वप्रभाभास्यत्वाभावादित्यर्थः। **अप्रकाशत्वो**क्तिः दृष्टान्तार्था। अभिप्रायं विवृण्वन् दृष्टान्ते व्याप्तिसमन्वयं दर्शयति - **किं तर्हीत्यादिना**। ननु 'दीपः प्रभाबलनिर्भास्यः प्रभान्यत्वे सति चक्षुर्ग्राह्यत्वात् घटवदि'त्यनुमानेन दीपादेः प्रभाग्राह्यत्वमेवेति चेन्न। तमसि व्यभिचारेण हेतोर्दुष्टत्वात्। ननु प्रभातमोऽन्यत्वस्य हेतुघटकत्वेन नानुपपत्तिरिति चेन्न, अभास्वररूपत्वस्योपाधित्वात्। यदि घटादीनामिव दीपादीनामप्यभास्वररूपत्वं स्यात्, तर्हि भास्वरद्रव्यसंबन्धाधीनप्रकाशत्वस्यावश्यक-

**अन्यानपि प्रकाशयति स्वप्रभया ।**

**एतदुक्तं भवति - यथैकमेव तेजोद्रव्यं प्रभाप्रभावद्रूपेणावतिष्ठते ;**

---

तया स्यादेव प्रभाभास्यत्वम् । नहि तदस्ति । अत एव मण्यादीनां पार्थिवांशयुक्तानां घटादीनामिवाभास्वररूपतया प्रभासापेक्षप्रकाशत्वम् । दीपस्य तूद्भूतानभिभूतभास्वररूपस्य स्वभावत एव तन्निरपेक्ष प्रकाशत्वमिति नान्याधीन-प्रकाशत्वं शङ्कनीयमिति भावः ।

नन्वेतावता 'दीपः प्रभानिरपेक्ष प्रकाशः भास्वरत्वादि'ति पर्यवसितम् । ततश्चात्र प्रभात्वमुपाधिः । प्रभानिरपेक्ष-प्रकाशे प्रभात्वस्यैव प्रयोजकत्वेन भास्वरत्वस्याप्रयोजकत्वात् । मैवम् । प्रभात्वाभावेऽप्यन्धरकारे प्रभानैरपेक्ष्यप्रकाश-दर्शनेन साध्यव्यापकत्वभङ्गात् । ननु तमसि भास्वरत्वाभावेऽपि प्रभानिरपेक्षदर्शनेन भास्वरत्वमपि न तत्र प्रयोजकमिति चेदुच्यते । न हि यत्र यत्र प्रभानिरपेक्षप्रकाशत्वं तत्र तत्र भास्वरत्वमिति ब्रूमः । किन्तु यत्र भास्वरत्वं, तत्र प्रभा-निरपेक्षप्रकाशत्वमित्येव । अत्र च व्याप्तिभङ्गाभावान्नानुपपत्तिः । नन्वस्माभिरपि यत्र प्रभात्वं, तत्र प्रभानिरपेक्षप्रकाशत्व-मित्येव व्याप्तिः स्वीक्रियते । ततश्च प्रभानिरपेक्षप्रकाशे प्रभात्वस्य कुतो न प्रयोजकत्वमिति चेत्, सत्यम् । अथापि प्रभात्वस्य व्याप्यत्वेन दीपादौ तन्निवृत्त्या कथं तद्व्यापकभूतप्रभानैरपेक्ष्य प्रकाशस्य निवृत्तिः । व्यापकनिवृत्त्यैव हि व्याप्यनिवृत्तिः । अतो न दीपस्य प्रभासापेक्षप्रकाशवत्वसिद्धिरिति । ननु प्रभादीपयोरेवं तौल्ये प्रभावद्दीपस्य कथं स्वत एव न घटादिप्रकाशत्वमित्यत्राह - **अन्यानपी**ति । अयं भावः - दीपस्वरूपस्य क्वाचित्कत्वाद्वस्तुनः स्वासम्बन्ध-प्रकाशकत्वायोगाच्च स्वधर्मभूतप्रभाद्वारैव प्रकाशकत्वमिति ॥

ननूक्तव्याप्तिबलेन न ज्ञातुरात्मनोऽनन्याधीनप्रकाशत्वसिद्धिः दृष्टान्तवैषम्यात्, प्रभाया इव दीपस्य भास्वरत्वेना-नन्याधीनप्रकाशत्वसम्भवेऽपि ज्ञानाश्रयस्य भवदभिमतस्यात्मनः ज्ञानरूपत्वाभावेन ज्ञानवदस्य नानन्याधीनप्रकाश-त्वसम्भवः । एतेन 'ज्ञाताहमर्थोऽनन्याधीनप्रकाशः ज्ञानत्वादि'त्यनुमानेनानन्याधीनप्रकाशत्व साधनमपि निरस्तम् । भवदभिमतात्मनो ज्ञानरूपत्वे मानाभावात् । आत्मत्वेनास्मभिमतायाः संविदस्तु स्वत एव ज्ञानरूपत्वात् स्वयंप्रकाशत्वं सिध्येत् । न हि ज्ञानाश्रयस्यैव ज्ञानत्वसम्भवः ज्ञानज्ञानाश्रययोस्सजातीयत्वेन धर्मधर्मिभावानुपपत्तेः । विजातीयत्वे तु ज्ञानत्वमेव नास्तीति कथं स्वयंप्रकाशत्वसाधनम् । एवं ज्ञानवत्वरूपज्ञातृत्वहेतुनाऽनन्याधीनप्रकाशत्वसाधनमपि न घटते । अनन्याधीनप्रकाशत्ववति भवदभिमतधर्मभूतज्ञाने सपक्षे, विपक्षे घटादौ च ज्ञातृत्वविरहेण हेतोस्साधारणानै-कान्तिकत्वादित्याद्याशङ्कां तेजोद्रव्यदृष्टान्तेन परिहर्तुं स्वाभिप्रायमाविष्करोति — **एतदुक्तं भवती**ति । यथैकमेव तेजोद्रव्यं प्रभाप्रभावद्रूपेणावतिष्ठते एवमात्मा चिद्रूप एव चैतन्यगुणक इत्येतदुक्तं भवतीत्यन्वयः ।

अयं भावः - यथैकस्यैव तेजोद्रव्यस्य प्रभात्वं प्रभावत्वञ्च तद्वदेकस्यैवात्मनः ज्ञानत्वे ज्ञानाश्रयत्वे च न विरोधः । ततश्च तेजोद्रव्यस्य प्रभारूपस्य प्रभाश्रयस्य च वस्तुनः अनन्याधीनत्वप्रकाशत्ववज्ज्ञानरूपस्य ज्ञानाश्रयस्य चात्मन अनन्याधीनप्रकाशत्वं कुतो न सम्भवतीति । यद्यपि दृष्टान्ते प्रभारूपं तेजोद्रव्यमन्यत् प्रभाश्रयश्च तेजोद्रव्यमन्यत् । दार्ष्टान्तिके तु एकस्यैवात्मनः ज्ञानरूपत्वं ज्ञानाश्रयत्वञ्चेति वैषम्यम् । अथापि श्रुतिप्रामाण्यबलात् एकस्यैवोभयरूप-त्वाङ्गीकारो न क्षत्यापादक इति भावः । अत्र'हमर्थोऽनन्याधीन प्रकाशः ज्ञानत्वात् ज्ञानवत्वाद्वे'ति एकमनुमानं न चासौ इत्यादिनोक्तम् । **यः प्रकाशस्वभाव** इत्यादिना 'अहमर्थ अनन्याधीनप्रकाशः प्रकाशस्वभावत्वादि'त्यपरमनुमानम् । अनुकूलतर्को वा विवक्षितः । न तु पूर्वोक्तानुमानस्य व्याप्ति प्रदर्शनादि परं यः इत्यादिकं, तत्र स्वयंप्रकाशत्वहेतोः **'चैतन्यस्वभावता हि स्वयंप्रकाशता'** इत्यनेन ज्ञानत्वरूपत्वेन ज्ञानाश्रयत्वरूपत्वेनोत्तरत्रैव विवृतत्वेन दीपादिदृष्टान्त-

**यद्यपि प्रभा प्रभावद्द्रव्यगुणभूता ; तथाऽपि तेजोद्रव्यमेव ; न शौक्ल्यादिवद्गुणः ; स्वाश्रयादन्यत्रापि वर्तमानत्वाद्रूपवत्त्वाच्च शौक्ल्यादिवैधर्म्यात्। प्रकाशवत्त्वाच्च तेजोद्रव्यमेव ; नार्थान्तरम्।**

**प्रकाशवत्त्वञ्च स्वस्वरूपस्यान्येषाञ्च प्रकाशकत्वात्। अस्यास्तु गुणत्वव्यवहारो नित्यतदाश्रयत्वतच्छेषत्वनिबन्धनः। न चाश्रयावयवा एव विशीर्णाः प्रचरन्तः प्रभेत्युच्यन्ते, मणिद्युमणिप्रभृतीनां विनाश-**

प्रदर्शनपूर्वकं तथा व्याप्तिप्रदर्शनासाङ्गत्यापत्तेः। अतो यथोक्तयैव रीत्याऽर्थो वर्णनीय इति बोध्यम्। यथा प्रभा प्रकाशे दीपानपेक्षा तथा दीपोऽपि स्वप्रकाशे प्रभानपेक्षः। यथा प्रभायाः स्वधर्मिभूतप्रदीपानपेक्षप्रकाशत्वम्। न च दीपस्य स्वधर्मभूतप्रभानपेक्षप्रकाशत्वम्। दीपाधीनसत्ताकप्रभाया एव स्वप्रकाशेऽऽश्रयसापेक्षता नास्ति चेत्, किमु वक्तव्यम् दीपस्य स्वप्रकाशे स्वाश्रितप्रभापेक्षत्वाभावे। प्रत्युत प्रभाया एव विषयप्रकाशकत्वं दीपाधीनम्। एवञ्चेत् कथं स्वप्रकाशे प्रभां दीप अपेक्षेत इत्यभिप्रायेणाह — **अन्यानपि प्रकाशयति स्वप्रभयेति**। ननु प्रभावतो तेजो द्रव्यत्वसम्भवेऽपि प्रभायाः कथं तेजोद्रव्यत्वं, तस्याः शौक्ल्यादिवत् प्रभावद्द्रव्यापृथक्सिद्धत्वेन गुणत्वादिति शङ्कते — **यद्यपीति**। **गुणभूताः** = अपृथक्भूता। समाधत्ते — **तथापीति**। निषेध्यं व्यनक्ति — **नेति**। प्रभाया अद्रव्यत्वलक्षणगुणत्वाभावे हेतुमाह - **स्वाश्रयादिति**। **अपि**शब्देन स्वाश्रयेपि वर्तमानत्वं विवक्षितम्। अयं भावः - अद्रव्याणां शौक्ल्यादिगुणानां अपृथक्सिद्धानां धर्मिदेशातिवृत्तिर्न भवति। प्रभायास्त्वपृथक्सिद्धाया अपि तदतिवृत्तिः दृश्यते। दण्डकेशनखादीनां संयोगेनाश्रितानां धर्मिदेशातिवृत्तिरिव। तस्मान्न तस्याः गुणत्वमिति। एवं शौक्ल्यादिवैधर्म्ये हेत्वन्तरमाह - **रूपवत्वाच्चेति**। यदि प्रभायाः गुणत्वं तर्हि रूपवत्वन्न स्याच्छौक्ल्यादिवत्, गुणे गुणानङ्गीकारात्। अतो रूपवत्वोपलब्ध्या न शौक्ल्यादिवद्गुणत्वमिति भावः।

ननु प्रभायाः धर्मिदेशातिवृत्या रूपवत्वेन चास्तु गुणत्वाभावः द्रव्यत्वञ्च, अथापि तेजोद्रव्यत्वं कथमित्यत्राह — **प्रकाशवत्त्वाच्चेति**। **प्रकाशः** = तमोनिरासकः स्वभावः औज्वल्यपर्यवसायी। 'प्रभा तेजोद्रव्यं प्रकाशौपाधिकभास्वररूपत्वादि'ति भावः। अवधारणार्थं प्रदर्शयति — **नार्थान्तरमिति**। उक्तं प्रकाशवत्वमुपपादयति — **प्रकाशवत्त्वमिति**। विरोधिभूततमोनिरसनद्वारा स्वपरविषयकप्रकाशजनकत्वादिति भावः। स्वपरविषयकज्ञानविरोधितमोनिरासकत्वमेव पर्यवसितं प्रभायाः अर्थप्रकाशकत्वाभावात्। अन्यथा 'प्रदीपप्रभायास्तु चक्षुरिन्द्रियस्य ज्ञानमुत्पादयतो विरोधितमोनिरसनद्वारेणोपकारकत्वमात्रमेवेति स्फुटतरोत्तरभाष्यग्रन्थविरोधापत्तेः। किञ्च संयोगेन प्रभायाः द्रव्यचाक्षुषे हेतुत्वमपि न सम्भवति। मणिप्रभादौ व्यभिचारात्। प्रभानुयोगिकसंयोगस्य हेतुत्वे घटादौ व्यभिचारः प्रभानुयोगिकत्वतत्प्रतियोगिकत्वान्यतरविशिष्टसंयोगस्य हेतुत्वकल्पनमपि विशेषणविशेष्यभावे विनिगमनाविरहप्रयुक्तकारणताबहुल्यपराहतम्। अतस्तमोऽभाव एव हेतुः। तत्र च स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन तमस्त्वविशिष्टत्वेन हेतुत्वम्। नत्वभावत्वघटितम्। अतः तमः प्रतियोगिकत्वाभावत्वयोर्विशेषणविशेष्यभावे विनिगमनाविरहप्रयुक्तकारणताद्वयापादनन्न सम्भवतीति। नन्वस्तु प्रभायाः तेजोद्रव्यत्वम्। तर्हि गुणत्वव्यवहारः कथमुपपद्यतामित्यत्राह - **अस्यास्त्विति**। आश्रितत्वस्वभावत्वलक्षणगुणत्वव्यवहार एव तत्र, न त्वद्रव्यत्वलक्षणगुणत्वव्यवहारः। गुणशब्दस्य तत्तद्विवक्षाभेदेन द्रव्येषु दासादिषु क्रियान्तरशेषभूतेकर्मणि च प्रयोगदर्शनादिति भावः॥

ननु चिद्रूपस्यात्मनो न चैतन्यगुणकत्वं तयोर्धर्मधर्मित्वाभावात् उभयोर्ज्ञानरूपत्वाविशेषात्। न च तेजोद्रव्यत्वाविशेषेऽपि प्रभायाः दीपधर्मत्ववत्तत्सम्भव इति वाच्यम्। प्रभायाः विशीर्णपूर्वदीपावयवरूपत्वेनोत्तरदीपधर्मत्वप्रसक्तेरेवाभावेन तद्दृष्टान्तस्यैवासङ्गतत्वादित्याशङ्कां दूषयति - **न चेति**। तथानुपलम्भादिति भावः। प्रभायाः तत्तदवयरूपत्वकल्पनेऽनिष्टमाह - **मणीति**। **विनाशप्रसङ्गादिति**। दीपे तैलादिदर्शनवत् मण्यादौ सामग्रीविशेषादर्शनेन

**प्रसङ्गात्। दीपेऽप्यवयविप्रतिपत्तिः कदाचिदपि न स्यात्।**

**न हि विशरणस्वभावा दीपाश्चतुरङ्गुलमात्रं नियमेन पिण्डीभूता ऊर्ध्वमुद्गम्य ततः पश्चाद्युगपदेव तिर्यगूर्ध्वमधश्चैकरूपा विशीर्णाः प्रचरन्तीति शक्यं वक्तुम्। अतः सप्रभाका एव दीपाः प्रतिक्षणमुत्पन्ना विनश्यन्तीति पुष्कलकारणक्रमोपनिपातात्तद्विनाशे विनाशाच्चावगम्यते। प्रभायाः स्वाश्रयसमीपे प्रकाशाधिक्यमौष्ण्याधिक्यमित्याद्युपलब्धिव्यवस्थाप्यम्; अग्न्यादीनामौष्ण्यादिवत् - एवमात्मा चिद्रूप एव चैतन्यगुणक इति। चिद्रूपता हि स्वयम्प्रकाशता॥**

---

प्रतिक्षणमुत्पत्त्यादिकल्पनायोगाद्विनाश एव स्यादित्यर्थः। अयं भावः - यदि प्रभायाः विशीर्णपूर्वदीपावयवत्वं तर्हि मणिप्रभाया अपि विशीर्णपूर्वमण्यवयवत्वं कल्पनीयम्। ततश्च मणेर्नाशः प्रतिक्षणमुत्पत्तिश्च स्यातामिति क्षणिकत्वमापद्यते। न च तदिष्टम्। स्थिरत्वेन सर्वलोकसिद्धत्वात्। पुष्कलकारणक्रमानुपलब्धेश्च। सोऽयं मणिरिति प्रत्यभिज्ञाबाधाच्च। दीप इव प्रत्यभिज्ञाबाधस्वीकारे घटादावप्युक्तरीत्या प्रतिक्षणविनाशाभ्युपगमप्रसङ्गेन क्षणिकत्वापातः।

न च नाशाङ्गीकारेऽपि पुनः नोत्पत्तिरिष्यत इति वक्तुं शक्यम्। क्षणान्तरे मण्याद्यनुपलम्भापत्तेः। यदि दीपादिप्रभाया दीपाद्यवयवत्वं मण्यादिप्रभायास्त्वतिरिक्तत्वमित्युच्यते तर्हि कुत्रचिदेवं कल्पनं कुत्रचिदन्यथेति वैषम्यापत्तेः। तावताप्यस्मदभिमतार्थसिद्धेश्चेति। एवं मण्यादीनां विनाशप्रसङ्गेन प्रत्यक्षानुपपत्तिमुक्त्वा दीपेऽपि तदनुपपत्तिं दर्शयति - **दीपे**ति। अत्रावयविनिर्देशः परमताभिप्रायेण, स्वमतेऽवयविनोऽवयवसङ्घातरूपत्वात्। अयं भावः - यदि प्रभाया दीपावयवत्वं, तर्हि चतुरङ्गुलमात्रं पिण्डीभूते वस्तुनि कथं दीपप्रतीतिः। समुदाय एव हि धर्मिप्रतीतिरनुभवसिद्धा। अतः पिण्डीभूतचतुरङ्गुलमात्रे एव नियमेनावयविप्रतिपत्त्या न प्रभायास्तदवयवत्वकल्पनं प्रामाणिकमिति। कल्पनाया अत्यन्तासम्भवमाह - **न ही**ति। **अग्नेरूर्ध्वज्वलन**मित्यादिभिः ऊर्ध्वगमनशीलत्वेन प्रसिद्धस्य विशरणविशेषकारणवाय्वाद्यभिघाताभावेऽपि विष्वक्विशरणादिकल्पनस्यात्यन्तानुपपन्नत्वादिति भावः। नन्वेवं सति कथं दीपादेः क्षणिकत्वम्। प्रभायाः दीपावयवत्वे दीपावयवानां विशीर्णत्वात्पुनः पुनः दीपोत्पत्तिरिति वक्तुं शक्यत इत्यत्रोपसंहारव्याजेन समाधत्ते - **अत** इति। **सप्रभाका** इत्यनेन यदा दीपस्योत्पत्तिर्विनाशश्च, तदाऽसाधरणप्रभाविशिष्टस्येति सूचितम्। आश्रयनाशे तदपृथक्सिद्धस्यापि नाशावश्यकत्वादिति भावः। तत्र दीपादेः प्रतिक्षणोत्पत्तौ हेतुः पुष्कलेत्यादिनोक्तः। प्रतिक्षणविनाशे हेतुश्च **'तद्विनाशे'** इत्यादिनोक्तः। 'द्वितीयादिवर्त्त्यवयवाग्निसंयोगः दीपोत्पादकः वर्त्त्यवयवाग्निसम्योगत्वात्प्रथमवर्त्यवयवाग्निसंयोगवत्' इति प्रथमानुमान शरीरम्। 'प्रथमवर्त्त्यवयवनाशः दीपनाशहेतुः वर्त्त्यवयवनाशत्वाच्चरमवर्त्त्यवयवनाशवत्' इति द्वितीयानुमानशरीरं बोध्यम्।

ननु प्रभायाः विशीर्णदीपावयत्वाभावे दीपसमीपे तस्याः कथमौष्ण्याधिक्यम्। अन्यत्र चातथात्वम्। कथं वा बहुलत्वप्रकाशादिमत्त्वमसङ्कुचितप्रभोत्पत्तिर्वा कथम्? विशीर्णावयवरूपत्वे तु अवयव बाहुल्यतदभावाभ्यामुपपत्तिस्सुवचा इत्याशङ्कां परिहरति **प्रभायास्त्वि**ति। **उपलब्धिव्यवस्थाप्य**मिति। यथोपलब्धि अर्थतत्त्वं निर्णेयम्। तदनादरे तु अतिप्रसङ्ग एव स्यात् इति भावः। उक्तार्थे समीचीनं दृष्टान्तं प्रदर्शयति **अग्न्यादीना**मिति। प्रकृतमर्थमुपसंहरति **एव**मिति। **चिद्रूप एवे**ति। अनेन दृष्टान्तवैषम्य स्वरूपासिद्धिपरिहारोऽभिप्रेतः। ननु कथमात्मनः चिद्रूपत्वं, भवतां ज्ञानात्मनोर्भेदात्। तथैव पूर्वं सिद्धान्तितत्वाच्चेत्यत्राह **चिद्रूपते**ति। अयं भावः - पूर्वं धर्मभूतज्ञानस्यात्मभेद उक्तः। अत्रापि न स्वधर्मभूतज्ञानतादात्म्यमात्मन उच्यते। परन्तु तस्यापि ज्ञानसजातीयत्वमुच्यते। आत्मनो ज्ञानाश्रयत्वस्य ज्ञानत्वस्य च श्रुतिप्रमितत्वात्। चित्त्वं हि स्वयंप्रकाशत्वं, तद्धर्मभूतज्ञानस्येवात्मनोऽप्यस्ति चेत्तर्हि तस्य तत्स्वीकारे किं बाधकमिति।

**तथा हि श्रुतयः - 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव, एवं वा अरेऽयमात्माऽनन्तरोऽबाह्याः कृत्स्नः प्रज्ञानघन एव'** (बृ.६.५.१२), (बृ.४.४.१२.) **'विज्ञानघन एव'**, (बृ.६.३.९.) **'अत्रायं पुरुषः स्वयंज्योतिर्भवति', 'न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते'** (बृ.६.३.३०.), **'अथ यो वेदेदं जिघ्राणीति, स आत्मा'** (छा.८.१२.४.), **'कतम आत्मेति । योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः'** (बृ.६.३.७.), **'एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः'** (प्रश्न.४.९.), **'विज्ञातारमरे केन विजानीयात्'** (बृ.४.४.१४.), **जानात्येवायं पुरुषः''** (?...), **'न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्'** (छा.७.२६.२.),

---

ननु चिद्रूपता हि स्वयंप्रकाशता इति निर्देशेन स्वयंप्रकाशत्वं चित्वमित्येतदुभयमेकमेवेति पर्यवसितम् । ततश्च **चैतन्यस्वभावता हि स्वयंप्रकाशतेति** ग्रन्थपर्यालोचनयाऽहमर्थेऽनन्याधीनप्रकाशत्वसाधकस्वयंप्रकाशत्वहेतोः चित्वरूपत्वेऽपि साध्याविशिष्टत्वप्रसङ्गो दुर्निवारः । चैतन्यस्यैव स्वयंप्रकाशत्वात्, तस्यानन्याधीनप्रकाशत्वादिति चेन्न । चिच्छब्दवाच्यस्य हेतुत्वाङ्गीकारेण दोषाभावात् । चित्छब्दवाच्यत्वमन्यत् अनन्याधीनप्रकाशत्वश्चान्यदिति तयोर्भेदात् । नन्वेवं सति ज्ञानशब्दस्य संबन्धिशब्दत्वेन कर्मकर्त्रवच्छिन्नवस्तुनि व्युत्पन्नत्वेन कथमात्मनि स्वरूपे ज्ञानशब्दप्रयोग इत्याशङ्कायां स्वयंप्रकाशत्वनिबन्धनस्तत्र ज्ञानशब्दप्रयोग इत्येव समाधानं वक्तव्यम् । ततश्च स्वयं प्रकाशत्वनिबन्धनं स्वरूपस्य ज्ञानशब्दवाच्यत्वं, ज्ञानशब्दवाच्यत्वनिबन्धनं स्वयंप्रकाशत्वमित्यन्योन्याश्रय इति चेन्मैवम् । स्वयंप्रकाशत्वे रूढत्वाज्ज्ञानशब्दस्य । आत्मनश्च स्वयंप्रकाशत्वात्तत्र ज्ञानशब्दप्रयोग इति हि वक्ष्यते । नैतावता ज्ञानशब्दवाच्यत्वे स्वयंप्रकाशत्वं हेतुः । वाच्यत्वं हि शक्तिविषयत्वं शक्तिश्चेश्वरेच्छादिरूपा । न हि कम्बुग्रीवादिमति कलशशब्दप्रयोगः घटत्वे रूढत्वादित्युक्तौ कलशशब्दवाच्यत्वेऽपि घटत्वं निबन्धनमिति वक्तुं शक्यते । सर्वत्र तदर्थे तत्तच्छब्दवाच्यत्वं गृहीत्वा पश्चाद्धितत्तच्छब्दप्रयोगः । ततश्च प्रथमं घटत्वे कलशशब्दवाच्यत्वं गृहीत्वा पश्चाद्यत्र घटत्वमस्ति तत्र कलशशब्दः प्रयुज्यते । न हि तत्रान्योन्याश्रयाद्यवकाशः । तद्वत्प्रकृतेऽपीति ।

एवमात्मनः स्वयंप्रकाशत्वनिबन्धन चिच्छब्दवाच्यत्वं प्रतिपाद्य चिद्रूपहेतुनाऽनन्याधीनप्रकाशत्वं साधितम् । सम्प्रति ज्ञानत्वं ज्ञातृत्वमुभयमपि श्रुतय एव प्रतिपादयन्तीत्याह — **तथा हीति** । **हिशब्दः** शब्दप्रमाणकस्यार्थस्य यथाशब्दं व्यवस्थाप्यत्वं व्यनक्ति । एतेन 'विमतं न ज्ञानाश्रयः ज्ञानत्वाद्धर्मभूतज्ञानवदि'ति परोक्तानुमानं श्रुतिबाधितमिति सूचितम् । **अनन्तर अबाह्य** इत्युक्त्या सर्वांशेष्वपि लवणरसात्मकत्वं सूचितम् । दार्ष्टान्तिके तु जडांशरहितत्वम् । न तु सर्वांशेष्वपि ज्ञानरूपत्वम् आत्मनो निष्कलत्वात् । **प्रज्ञानघनः** = प्रकृष्टसुखात्मकज्ञानैकरूपः । यद्वा सैन्धवदृष्टान्तोक्त्या इदं वाक्यमात्मनो गुणवत्त्वमेव बोधयति । सैन्धवघनशब्दस्य सर्वांशेऽपि लवणरसवद्वस्तुबोधकत्वात् । ज्ञानत्वन्तु वाक्यान्तरेण । **विज्ञानघनः** = ज्ञानैकाकारः । अत्रैवकारः न ज्ञातृत्वनिषेधकः, तस्य श्रुतिप्रमितत्वात् । किन्त्वयोगव्यवच्छेदपरः । **स्वयंज्योतिः** = स्वयंप्रकाशः । अत्र ज्ञानरूपत्वबोधकवाक्यानन्तरं स्वयंप्रकाशत्वश्रुत्युदाहरणं ज्ञानत्वमनन्याधीनप्रकाशत्वरूपस्वयंप्रकाशत्वसाधकमिति पूर्वोक्तानुमानसूचनाय । **न विज्ञातुरिति** । अनेनात्मनो ज्ञातृत्वं ज्ञानधर्मस्य च नित्यत्वमुक्तम् ।

**अथेति** । अनेन ज्ञानाश्रयस्यैवात्मत्वमिति सूचितम् । परोक्तसंविद अनात्मत्वञ्च फलितम् । **कतम** इति क इत्यर्थः । अनया चात्मनः विज्ञानमयत्वं स्वयंप्रकाशत्वं देहेन्द्रियादिविलक्षणत्वञ्च प्रतिपादितम् । **अन्तर्ज्योतिः** — स्वयंप्रकाशः । **एष हीति** । **द्रष्ट्रादिपदं** ज्ञानविशेषवाचकं, **बोद्धृपदं** सामान्यवाचकम् । एतेन ज्ञातृत्वं फलितम् । विज्ञानात्मपदेन ज्ञानरूपत्वम् । **विज्ञातारमिति** । एतेन ज्ञानाश्रयत्वं मुमुक्षुवेद्यत्वञ्चोक्तम् । **जानात्येवेत्यनेन** मुक्तावपि ज्ञानाश्रयत्वं स्वाभाविकमिति दर्शितम् । **न पश्य** इत्यादिना मुक्तौ ज्ञाननिषेधश्रुतीनां विषयविभागदर्शितः । 'सर्वं ह पश्यः

**'स उत्तमः पुरुषः' ... 'नोपजनं स्मरन्निदं शरीरम्'** (छा.८.१२.३.), **'एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति'** (प्रश्न ६.५.), **'तस्माद्वा एतस्मान्मनोमयादन्योऽन्तर आत्मा विज्ञानमयः'** (तै.आनं ४) **इत्याद्याः । वक्ष्यति च 'ज्ञोऽत एव'** (शारी.२.३.१९.) **इति ।**

**अतस्स्वयम्प्रकाशोऽयमात्मा ज्ञातैव ; न प्रकाशमात्रम् । प्रकाशत्वादेव कस्यचिदेव भवेत् प्रकाशः, दीपादिप्रकाशवत् । तस्मान्नात्मा भवितुमर्हति संवित् । संविदनुभूतिज्ञानादिशब्दाः सम्बन्धिशब्दा इति च शब्दार्थविदः । न हि लोकवेदयोर्जानात्यादेरकर्मकस्याकर्तृकस्य च प्रयोगो दृष्टचरः ॥**

---

पश्यती'ति तत्रैवोक्तेः । **नोपजनमि**त्यादिना स्वतस्सिद्धसाक्षात्कारवत्वं व्यञ्जितम् । संस्कारजन्यबुद्धिनिषेधात् । **उपजनं** = जुगुप्सितं परित्यक्तम् । **एवमेवे**ति । अनेन परमपुरुषप्राप्तिदशायां जीवावस्थानं इन्द्रियादिनिवृत्तिश्चोक्तम् । **षोडशकलाः** = भूतेन्द्रियाणि । **तस्मा**दिति । अनेनान्तःकरणादिविलक्षणस्य ज्ञानरूपस्यात्मनो ज्ञातृत्वमुक्तम् । उक्तार्थे सूत्रकारसम्मतिं दर्शयति - **वक्ष्यति चे**ति । पूर्वं ज्ञोत एवेत्यतो नात्मेति श्लोके प्रपञ्चित एवार्थोऽत्र विस्तृतः । 'स्वपदानि च **वर्ण्यन्त**' इति भाष्यलक्षणत्वात् । एवं श्रुत्यादिसिद्धमर्थं निगमयति - **अत** इति । अतो उक्तश्रुत्यादिबलात् । **स्वयंप्रकाश** इत्यनेन चित्त्वं सूचितम् । अवधारणार्थं व्यनक्ति - **ने**ति । आत्मनोऽहमर्थत्वकर्तृत्वज्ञातृत्वाद्यनभ्युपगमे सर्वशास्त्राणां वैफल्यमेव स्यादिति भावः । एवं परोक्तज्ञानस्य साश्रयत्वं युक्त्यापि स्वीकार्यमित्याह - **प्रकाशत्वा**दिति । प्रकाशत्वमत्र स्वरूपभूत-ज्ञानेन्द्रियलिङ्गादिव्यावृत्तमनुसन्धेयम् । निदर्शनमाह - **दीपदी**ति । **तस्मात्** = **प्रका**शरूपसंविदः निराश्रयत्वासम्भवादा-त्मधर्मत्वोक्तेश्च ।

एवमहमर्थस्यात्मत्वं ज्ञानरूपत्वं ज्ञातृत्वञ्च प्रतिपाद्य प्रसिद्धसंविद आत्मत्वं निषिद्धम् । अथ परोक्त संविदः शब्दस्वरूपपर्यालोचनयापि निराश्रयत्वनिर्विषयत्वादिकन्न सम्भवतीति साश्रयत्व सविषयत्वादिकमभ्युपेयमिति दर्शयति - **संवि**दिति । तदेतद्विवृणोति - **न ही**ति । 'जानाती'त्यादेरित्युक्त्या स्वरूपज्ञानादिव्यावृत्तिः । अयं भावः - लोकवेदयोः ज्ञानशब्दप्रयोगस्य सकर्मसकर्तृकार्थे प्रयोगदर्शनेन तदर्थोऽपि तथैव वर्णनीयः । यत्र त्वर्थस्य बाधः, तत्र शब्दप्रति-पन्नोऽप्यर्थः बाध्य एव, यथा दारा इत्यादिषु बहुत्वम् । भार्या इत्यादौ तु बाधकानुपलब्ध्या नार्थस्यान्यथात्वम् । न च तद्वत्प्रकृते बाधकमुपलभामहे । येनान्यथाऽप्यर्थो वर्णयितुं शक्यते । तस्मादसति बाधके शब्दस्यार्थस्वभावायत्तत्वमेवा-ङ्गीकार्यमिति कर्मकर्त्रवच्छिन्ने एव ज्ञानादि शब्दप्रयोगदर्शनेन संबन्धिशब्दत्वमेव तस्येति साश्रयत्वसविषयकत्वम् । प्रवृत्तिनिमित्तकल्पनस्य प्रयोगाधीनत्वादिति ।

ननु स्वरूपभूतज्ञाने ज्ञानशब्दप्रयोगोऽनुपपन्नस्स्यात्तस्य कर्मकर्त्रवच्छिन्नत्वानङ्गीकारेण संबन्धिशब्दत्वासम्भवात् । अतः क्वचिज्ज्ञानशब्दप्रयोगवदन्यत्रापि कर्मकर्त्रनवच्छिन्ने ज्ञानशब्दप्रयोगो नानुपपन्नः । मैवम् । स्वरूपे ज्ञानशब्दस्य स्वयंप्रकाशत्वार्थकतया तत्प्रयोगोपपत्तेः । अत एव हि **चिद्रूपता हि स्वयंप्रकाशता** इति भाषितम् । तस्मात्वयंप्रकाशत्वेन निमित्तेन धर्मधर्मिणोश्शब्दानुवृत्तिः । धर्मभूतज्ञाने सम्बन्धिशब्दस्तु सार्थक एव । तत्र कर्मकर्त्रवच्छिन्नत्वस्वीकारात् । भवद्भिस्तु विषयाश्रयसंबन्धिज्ञानस्यैव निराश्रयत्वादिकमुच्यते । तस्यैव हि स्वयंप्रकाशत्वसाधनार्थं **स्वसम्बन्धादर्थान्तरे** इत्यादिहेतुः प्रयुज्यते । तस्माद्भवदभिमतसंविदः संबन्धिशब्दत्वस्यैव, भवद्भिरेवाङ्गीकारेण तदनुपपत्तिभिया साश्रय-त्वादिकं स्वीकर्तव्यमेवेति ।

ननु गोशब्दस्य 'गच्छती'ति व्युत्पत्तावपि न गमनाश्रयत्वमर्थः, किन्तु जातिविशेष एव, तद्वत् ज्ञानशब्दस्य भ्रान्तिसिद्धकर्मकर्त्रवच्छिन्ने व्युत्पत्ति सत्वेऽपि विषयाश्रयसंबन्धशून्य एव शक्तिरिति कुतो न भवतीति चेन्न ।

**यच्चोक्तम् - अजडत्वात्संविदेवाऽऽत्मेति - तत्रेदं प्रष्टव्यम् - अजडत्वमिति किमभिप्रेतम्? स्वसत्ताप्रयुक्तप्रकाशत्वमिति चेत् - तथा सति दीपादिष्वनैकान्त्यम् । संविदतिरिक्तप्रकाशधर्मानभ्युपममेनासिद्धिर्विरोधश्च । अव्यभिचरितप्रकाशसत्ताकत्वमपि सुखादिषु व्यभिचारान्निरस्तम् ॥**

---

दृष्टान्तवैषम्यात् । गमनाश्रयत्वस्याव्याप्त्यतिव्याप्तिप्रसङ्गपरिहाराय गोत्वस्य प्रवृत्तिनिमित्तत्वमुक्तम् । अत्र तु तादृशदोषासम्भवेन अन्यथाकरणासम्भवात् । नन्वात्मन्यव्याप्तिरिति चेन्न, तस्य पूर्वमेव परिहृतत्वात् । ज्ञातुरात्मनोऽन्यस्य त्वयानभ्युपगमेन लोकदृष्टकर्मकर्त्रवच्छिन्नव्युत्पत्त्यतिक्रमेण बाधकाभावाच्चेति । ननु ज्ञानार्थकभ्रमिधातोरकर्मकत्वं दृष्टमिति चेन्न, तस्यापि महाकविप्रयोगबलेन सकर्मकत्वावश्यकत्वात् । वस्तुतस्सकर्मकत्वं सविषयकत्वं हि । न हि भ्रमात्मकज्ञानस्य निर्विषयकत्वम् । अन्यथा शुक्तिरूप्यज्ञाने रूप्यस्य भ्रमविषयत्वमेव न स्यात् ।

एवं संविद आत्मत्वन्न सम्भवतीति दर्शितम् । अथ परोक्तसंविदात्मत्वसाधकानुमानमनूद्य दूषयति - **यच्चे**ति । तत्राजडत्वं किं स्वसत्ताप्रयुक्तप्रकाशत्वम्, अथवा प्रकाशाव्यभिचरितसत्ताकत्वं, यद्वा स्वस्मै प्रकाशमानत्वमिति विकल्पत्रयं हृदि निधाय पृच्छति - **अजडत्वमि**ति । किमभिप्रेतमिति, अदृष्टं न किञ्चिदपि दुर्वचमित्यर्थः । सर्वस्मिन्नपि विकल्पेऽनुमानस्याहं जानामीति प्रत्यक्षबाधोऽस्त्येव । प्रथमं शङ्कते - **स्वे**ति । स्वप्रकाशे स्वसद्भावस्य प्रयोजकत्वमिति तदर्थः । स्वसत्ताप्रयुक्तः प्रकाशो यस्येति विग्रहात् । अत्र स्वसत्ताप्रयुक्तप्रकाशत्वन्न स्वसत्तामात्र प्रयुक्तप्रकाशत्वं तस्यासिद्धत्वात् । अतः स्वसत्तायाः स्वप्रकाशसामग्र्येकदेशत्वमेव वक्तव्यम् । ततश्च निरुक्तमजडत्वमनात्मनि सर्वत्रापि विद्यमानतया व्यभिचार इति दर्शयति **तथे**ति । केचित्तु निरुक्तस्यानात्मन्यपि वृत्तेः सपक्षवृत्त्यभावाच्च विरुद्धहेत्वाभासत्वमभिप्रयन्ति । अन्ये तु स्वपक्षे ज्ञातुरात्मत्वात्तस्मिन् सपक्षे विपक्षे दीपादौ च हेतुवृत्त्या पक्षत्रयवृत्तित्वलक्षणमनैकान्त्यमिति । **आदि**शब्देन घटादिपरिग्रहः । घटादीनामपि स्वप्रकाशसामग्र्यन्तर्गतत्वात् । दूषणान्तरमाह - **संविदि**ति । अयं भावः - स्वसत्ताप्रयुक्तप्रकाशत्वमिति विवक्षणेऽनुभूतिगतसत्तारूपधर्माप्रसिद्धिः । सत्ताशब्देन स्वरूपविवक्षणेऽपि तत्प्रयुक्तप्रकाशरूपधर्मो न संविदि भवद्भिरिष्यते । ततश्च हेतुस्स्वरूपासिद्धः । अभ्युपगमे त्वपसिद्धान्तापत्त्या निर्विशेषत्वविरोधः । इदञ्च दूषणद्वयं सर्वेष्वपि कल्पेषु समानम् । द्वितीयं शिरः प्रतिक्षिपति - **अव्यभिचरिते**ति । न व्यभिचरति प्रकाशं यस्य सत्तेति अव्यभिचरितप्रकाशसत्ताकं, तस्य भावः, प्रकाशाव्यभिचरितसत्ताकत्वमित्यर्थः । न तावत्स्वसत्तायाः प्रकाशाव्यभिचार इति महापूर्वपक्षे उक्तत्वेन स्वसत्तायाः प्रकाशव्याप्यत्वस्य विवक्ष्यत्वात् । भाष्येऽव्यभिचरितशब्दः कर्मणि क्तप्रत्ययान्तः । **सुखादिष्वि**ति ।

अयं भावः अस्माकं मते सुखादिषु ज्ञानविशेषत्वात्स्वप्रकाशत्वमिष्टम् । आत्मत्वं तु नेष्टम् । भवतामप्यध्यस्तान्तःकरणधर्मेष्वनात्मसु प्रकाशाव्यभिचरितसत्ताकत्वं सम्मतमेव । उभयथापि व्यभिचारो दुरुध्दरः । न च सुखव्यतिरिक्तत्वनिवेशसम्भवः । तथा सति तर्ककौशल्याविष्कारमात्रमेव स्यात् । भवन्मते घटादावपि हेतोस्सत्त्वेन व्यभिचारात् । अत एवादिशब्देन घटादीनां सुखादितुल्यत्वं भाषितम् । तदुक्तं तत्त्वटीकायां "प्रकाशाव्यभिचारो हि घटादिष्वपि ते समः । भ्रान्तिसिद्धत्वसिद्धान्तान्न तेष्वात्मत्वमिच्छसि । अज्ञातत्वदशास्तीति घटादिषु यदि भ्रमः । संविद्यपि तथाऽस्त्येव तज्जाड्यं हि परे विदुः । अज्ञातमपि ते पक्षे साक्षिणा ज्ञायते तथा । अतो ज्ञातवदज्ञातं ज्ञातमित्यभिमन्यसे" इति । एतेन सुखादीनां पुरुषभेदेन यावत्सत्त्वं प्रकाशमानत्वाभावान्न तत्र व्यभिचार इति निरस्तम् । तद्वत्संविदोऽपि तथात्वेन हेतोः स्वरूपासिद्धेः । न ह्येकैव संवित्सर्वेषां प्रकाशत इति वक्तुं शक्यम् । सुखस्यापि तथात्वापत्तेः, भेदकप्रमाणस्योभयत्रापि तुल्यत्वात् । अतो यथोपलब्धि वस्तुतत्त्वाङ्गीकारे अतिप्रसङ्गो दुरुद्धार एव । घटादिव्यभिचारस्य दुर्वारत्वाच्च ।

**यद्युच्येत - सुखादिरव्यभिचरितप्रकाशोऽप्यन्यस्मै प्रकाशमानतया घटादिवज्जडत्वेनानात्मा - इति। ज्ञानं वा किं स्वस्मै प्रकाशते ? तदपि ह्यन्यस्यैवाहमर्थस्य ज्ञातुरवभासते, अहं सुखीतिवत्, जानाम्यहमिति। अतः स्वस्मै प्रकाशमानत्वरूपमजडत्वं संविद्यसिद्धम्। तस्मात्स्वात्मानं प्रति स्वसत्तयैव सिद्ध्यन्नजडोऽहमर्थ एवात्मा। ज्ञानस्यापि प्रकाशता तत्सम्बन्धायत्ता। तत्कृतमेव हि ज्ञानस्य सुखादेरिव स्वाश्रयचेतनं प्रति प्रकटत्वम्, इतरं प्रत्यप्रकटत्वञ्च। अतो न ज्ञप्तिमात्रमात्मा ; अपि तु ज्ञातैवाहमर्थः ॥**

**अथ यदुक्तम् - अनुभूतिः परमार्थतो निर्विषया निराश्रया च सती भ्रान्त्या ज्ञातृतयाऽवभासते, रजततयेव शुक्तिः ; निरधिष्ठानभ्रमानुपपत्तेः - इति - तदयुक्तम्। तथा सत्यनुभवसामानाधिकरण्येना-**

---

अथ स्वस्मै भासमानत्वरूपतृतीयपक्षाङ्गीकारे न किञ्चिदपि बाधकमिति शङ्कते - **यदीति**। तदा स्वरूपासिद्धत्वं हेतोरित्याह - **ज्ञानं वेति**। परस्मै भासमानत्वमुपपादयति - **तदपीति**। तत्र निदर्शनमाह - **अहं सुखीति**। असिद्धिं निगमयति - **अत** इति। एवं त्रिधा विकल्पितहेतो र्दुष्टत्वेन न संविद आत्मत्वसाधनसम्भवः। अतः श्रुतिप्रतिपन्नस्य ज्ञानाश्रयस्याहमर्थस्यैवात्मत्वं युक्तमित्युपसंहरति - **तस्मादिति**। 'स्वात्मानं प्रति स्वसत्तयैव सिद्ध्यन्' इत्यनेनाहमर्थ-स्यात्मत्वसाधकहेतु र्निर्दिष्टः। ततश्चाहमर्थ आत्मा स्वस्मै स्वयम्भासमानत्वादित्यनुमानं सिद्धम्।

ननु स्वगोचरज्ञाननिरपेक्षप्रकाशत्वरूपस्वयम्प्रकाशत्वस्य हेतुत्वे कानुपपत्तिरिति चेन्न, भवद्भिरानात्मत्वेनान-भिमते ज्ञातर्यपि तत्सत्त्वेन व्यभिचारात्। ज्ञातरि स्वगोचरज्ञाननिरपेक्षत्वप्रकाशत्वस्य पूर्वं स्थापितत्वात्। तस्माज्ज्ञातु-रात्मत्वेऽनिष्टे हेतु र्व्यभिचरितः। आत्मत्वस्येष्टत्वे किमिति तद्धर्मस्यात्मत्वं साध्यते। नन्वन्यस्मिन्निरपेक्षप्रकाशत्वं हेतुरिति न दोष इत्यत्रासिद्धिं वदन्ज्ञातृपरित्यागे ज्ञानस्य स्वयम्प्रकाशत्वमपि दुर्वचमित्याह - **ज्ञानस्यापीति**। **प्रकाशता** = व्यवहारानुगुण्यापादकता। तदिति ज्ञातृपरः। तदेतदुपपादयति — **तत्कृतमिति**। अयं भावः - ज्ञातुरभावेऽस्यैव ज्ञानं प्रकाशते नान्यस्येति कथं नियमनसम्भवः। तस्मात्तत्तत्ज्ञातृसम्बन्धाधीन एव तत्प्रकाश इति नान्यनिरपेक्षप्रकाशत्वं नापि ज्ञातृपरित्यागसम्भव इति। एवमुक्तं संविद अनात्मत्वं ज्ञातुरात्मत्वञ्च निगमयति - **अत** इति। अत्र मात्रशब्दस्य पूर्ववदर्थो वर्णनीयः।

ननु 'अहं जानामी'ति प्रतीतिबलात् आत्मनि ज्ञातृत्वप्रतीत्या ज्ञानस्य स्वस्मै भासमानत्वरूपस्वयंप्रकाशत्वम-सिद्धमित्युच्यते। तत्र ज्ञातृत्वस्य भ्रान्तिसिद्धत्वेन न तादृशप्रतीतिमादाय ज्ञाने निरुक्तस्वयंप्रकाशत्वासिद्धिवर्णनसम्भवः। ज्ञातृत्वं हि ज्ञानक्रियाश्रयत्वम्। तत्र किं स्वरूपभूतज्ञानाश्रयत्वमात्मन उच्यते, उत वृत्तिज्ञानाश्रयत्वम्। नाद्यः स्व-रूपज्ञानाश्रयत्वस्य स्वरूपेऽसम्भवात्। न द्वितीयः, विक्रियात्मकज्ञानाश्रयत्वरूपज्ञातृत्वस्याविक्रिये चिन्मात्रात्मन्य-सम्भवात्। अतो मनुष्यत्वादिविशिष्टदेहे आत्माभिमानवत एव ज्ञातृत्वप्रतिभासात् ज्ञातृत्वमपि चिन्मात्रात्मन्यध्यस्त-मिति पूर्वोक्तमनूद्य दूषयति — **अथेति**। नन्वनुभूतौ कुतो ज्ञातृत्वाध्यासः, अविद्यायामेव तत्सम्भावादतोऽनुभूतिर-प्यनपेक्षितेत्यत्राह — **निरधिष्ठानेति**। अयं भावः - अविद्यापि ह्यसत्यभूता। अतस्साप्यधिष्ठानसापेक्षैवेति, अधिष्ठान-भूतानुभूतेः परमार्थत्वं वक्तव्यमेवेति। तदेतद्प्रतिक्षिपति — **तदयुक्तमिति**। दोषादीनां मिथ्यात्वेऽप्यध्यासवत् मिथ्याधिष्ठानादप्यध्यासोपपत्तेः नाधिष्ठानस्य तदर्थं परमार्थत्वमेषितव्यमिति दूषणमुत्तरत्र भाषिष्यते। तत्र हेतुमाह — **तथेति**। यथा शुक्तौ रजताध्यासे अधिष्ठानाध्यासयोस्सामानाधिकरण्येन प्रकाशः तद्वदनुभूतौ अहमर्थाध्यासेऽ-धिष्ठानाध्यासयोस्सामानाधिकरण्येन प्रकाशस्स्यात्। न चैवं प्रकाशत इति भावः।

यद्यपि रजतत्वमेवाध्यस्यते, अथापि तद्विशिष्टवाचिना रजतशब्देनाधिष्ठानवाचिशब्दस्य सामानाधिकरण्य-

**नुभविताऽहमर्थः प्रतीयेत, 'अनुभूतिरहम्' इति ; पुरोवस्थितभास्वरद्रव्याकारतया रजतादिरिव। अत्र तु पृथगवभासमानैवेयमनुभूतिरर्थान्तरमहमर्थं विशिनष्टि, दण्ड इव देवदत्तम्। तथा हि, 'अनुभवाम्यहम्' इति प्रतीतिः। तदेवमस्मदर्थमनुभूतिविशिष्टं प्रकाशयन्ननुभवाम्यहमिति प्रत्ययः, दण्डमात्रे 'दण्डी देवदत्त': इति प्रत्ययवत् विशेषणभूतानुभूतिमात्रावलम्बनः कथमिव प्रतिज्ञायेत ?**

**यदप्युक्तम्, स्थूलोऽहमित्यादिदेहात्माभिमानवत एव ज्ञातृत्वप्रतिभासनाज्ज्ञातृत्वमपि मिथ्येति तदयुक्तम् ; आत्मतयाऽभिमताया अनुभूतेरपि मिथ्यात्वं स्यात्; तद्वत एव प्रतीतेः। सकलेतरोपमर्दितत्त्वज्ञाना-**

वदत्राप्यावश्यकमिति भावः। एवमध्यासे प्रतीतिप्रकारं दर्शयति — **अनुभूतिरहमितीति**। ननु **ज्ञातृतयाऽवभासत** इति भाष्यपङ्क्त्या ज्ञातृत्वस्यैवाध्यस्तत्वप्रतीत्या 'अनुभूतिर्ज्ञात्री' इत्येवप्रतीत्यापादनं युक्तमिति चेत्, सत्यम्। ज्ञातृत्वस्यैवाहमर्थत्वे तथा प्रतीत्यापादन सम्भवात्। अत एवा**नुभविताऽहमर्थः प्रतीयेते**ति भाषितम्। अपि च **तदेव परमार्थ** इत्युक्तत्वादप्ययमर्थो ज्ञायते। **अहम्बुद्ध्या परागर्थादि**तिश्लोकोऽत्र स्मारितः। नन्वेवं प्रतीत्यापादनमसङ्गतम्। शुक्तौ रजताध्यासे हि 'इदं रजतमि'ति प्रतीतिः, न तु 'शुक्तिः रजतमि'ति इति चेन्न। शुक्तौ रजतभ्रमे हि शुक्लभास्वरत्वाद्याकारः प्रतीयते। एवमिह प्रकाशमानानुभूतिव्यतिरिक्ताकारानभ्युपगमेन विशेषाकारेण स्फुरणाभावात् अध्यासानुपपत्तेः। अनुभूतित्वेन स्फुरणे तु विरोधादेव नाध्यासोपपत्तिसम्भवः। अतोऽनुभूतित्वेन स्फुरणेऽध्यासोदयमभ्युपगच्छतां 'अनुभूतिरहमि'त्येव प्रकाशस्स्यात्। अनुभूतित्वस्फुरणस्य इदन्त्वभास्वरत्वस्फुरणवदध्यासाविरोधित्वावश्यकत्वादिति। अत्रान्यथाप्रकाश इति दर्शयति — **अत्र त्विति**। अनुभूत्यहमर्थयोर्विशेषणविशेष्यभावेनैव प्रतीतिरित्यत्र दृष्टान्तमाह — **दण्डइवेति**। यथावस्थितप्रतीत्याकारं सूचयति — **अनुभवाम्यहमिति**।

नन्वधिष्ठानाध्यस्तयोस्सामानाधिकरण्येन प्रकाशस्त्विष्टः, 'अनुभवाम्यहमि'त्यत्रानुभूतिस्तु नाधिष्ठानम्। अस्याः कर्मकर्त्रवच्छिन्नत्वेन निराश्रयनिर्विषयकानुभूतेरेवाधिष्ठानत्वादिति चेन्न। विषयाश्रयशून्यानुभूतेः पूर्वमेव निरस्तत्वेनोभयासम्मतताया अधिष्ठानत्वायोगात्। विषयप्रकाशकानुभूतेरेव त्वयाऽऽत्मत्वाभ्युपगमावश्यकत्वेनाधिष्ठानत्वस्य च वक्तव्यत्वात्। तादृशानुभूतेरेव च स्वयंप्रकाशत्वनित्यत्वैकत्वादिसमर्थनाच्च। तत्र यथा च 'दण्डी देवदत्त' इति प्रत्ययो दण्डविशिष्टपुरुषविषयकः, न दण्डमात्रे भवति, एवं 'अनुभवाम्यहमि'ति प्रत्ययः अनुभूतिविशिष्टाहमर्थविषयकः, नानुभूतिमात्रे भवतीति, 'अनुभवाम्यहमि'ति प्रत्ययस्य न भ्रान्तिकल्पनसम्भव इत्याशयेनोपसंहरति — **तदेवमिति**। न हि विशेष्यविशेषणभावावगाहिनः प्रत्ययस्य भ्रमत्वसम्भवः। न हि 'दण्डी देवदत्तः' इति प्रत्ययः स्वाध्यस्तदेवदत्तविशेषणीभूतदण्डविषयक इति भावः॥

**आत्मनि देहत्वाभिमानवत एव ज्ञातृत्वस्यापि प्रतिभासात् देहत्वादेरिवास्यापि मिथ्यात्वमिति** यदुक्तं, तदनूद्य दूषयति — **यदप्युक्तमिति**। **तद्वत एव प्रतीतेः** देहात्माभिमानवत एवानुभूतेः प्रतिभासादित्यर्थः। अयं भावः - 'ज्ञातृत्वं मिथ्या देहात्माभिमानिप्रतीतिविषयत्वादि'त्यनुमानेन हि मिथ्यात्वं भवद्भिस्साध्यते। तत्र मिथ्यात्वाभाववत्यामनुभूतौ देहात्माभिमानिप्रतीतिविषयत्वस्य सत्वेन हेतुर्व्यभिचरितः। एवं 'अनुभूतिर्मिथ्या देहात्माभिमानिप्रतीतिविषयत्वादि'ति अनुभूतेरपि मिथ्यात्वप्रसङ्गश्चेति। वस्तुतो न 'देह आत्मे'ति विशेषदर्शिनामपि प्रतीतिविषयत्वात्, ज्ञातृत्वस्य न मिथ्यात्वसाधनसम्भवः।

ननु मिथ्यात्वे न तादृशप्रतीतिविषयत्वं प्रयोजकं, किन्तु 'तत्वमसी'ति वाक्यजन्यस्वेतरसमस्तोपमर्दितत्त्वज्ञानबाधितत्वमेव। तच्च नानुभूतौ श्रुत्यादिभिस्तदबाधस्य सिद्धत्वादिति शङ्कते — **सकलेति**। समाधत्ते —

**बाधितत्वेनानुभूतेर्न मिथ्यात्वमिति चेत् - हन्तैवं सति तदबाधादेव ज्ञातृत्वमपि न मिथ्या ॥**

**यदप्युक्तम् - अविक्रियस्याऽऽत्मनो ज्ञानक्रियाकर्तृत्वरूपं ज्ञातृत्वं न सम्भवति। अतो ज्ञातृत्वं विक्रियात्मकं जडं विकारास्पदाव्यक्तपरिणामाहङ्कारग्रन्थिस्थमिति न ज्ञातृत्वमात्मनः ; अपि त्वन्तःकरणरूपस्याहङ्कारस्य। कर्तृत्वादिर्हि रूपादिवद्दृश्यधर्मः। कर्तृत्वेऽहम्प्रत्ययगोचरत्वे चाऽऽत्मनोऽभ्युपगम्यमाने, देहस्येव अनात्मत्वपराक्त्वजडत्वादिप्रसङ्गश्चेति - नैतदुपपद्यते; देहस्येवाचेतनत्वप्रकृतिपरिणामत्वदृश्यत्वपराक्त्वपरार्थत्वादियोगात् अन्तःकरणरूपस्याहङ्कारस्य; चेतनासाधारणस्वभावत्वाच्च ज्ञातृत्वस्य। एतदुक्तं भवति - यथा देहादिर्दृश्यत्वपराक्त्वादिहेतुभिस्तत्प्रत्यनीकद्रष्टृत्वप्रत्यक्त्वादेर्विविच्यते, एवमन्तःकरणरूपाहङ्कारोऽपि तद्व्यत्वादेव तैरेव हेतुभिस्तस्माद्विविच्यत इति।**

---

**हन्तेति**। **हन्त**शब्दः हर्षेऽनुकम्पायां वा। अयमाशयः - तत्त्वज्ञानाबाधितत्वं हि मिथ्यात्वे निबन्धनम्। यथा चानुभूतेः मुक्तावपि श्रुतिसिद्धत्वेन न तद्बाधः, एवं ज्ञातृत्वस्यापि श्रुतिसिद्धत्वात् न तद्बाधसम्भव इति कथं मिथ्यात्वम्। तस्मान्नाध्यस्तं ज्ञातृत्वमिति ॥

एवं विक्रियात्मकज्ञातृत्वमविक्रिये न सम्भवति , विरोधात्। एवमात्मनः कर्तृत्वाहंप्रत्ययगोचरत्वयोरभ्युपगमे देहादेरिवानात्मत्वादिप्रसङ्ग इति यदुक्तं तन्निराकर्तुमनुवदति - **यदप्युक्तमिति**। **कर्तृत्वादिरिति**। **आदि**पदेन विकारित्व-भोक्तृत्वसङ्ग्रहः। **जडत्वादिप्रसङ्गश्चेत्यादि**शब्दः परिच्छिन्नत्वादिबोधकः। अत्र 'आत्मा न कर्ता, नाहं प्रत्ययगोचरश्च अजडत्वात्, प्रत्यक्त्वात् ,आत्मत्वाच्च। यः कर्ता अहंप्रत्ययगोचरश्च, स जडः पराक् अनात्मा च, यथा देहादिरित्यनुमानानि अनुसन्धेयानि। तदेतद्दूषयति - **नैतदिति**। **अचेतनत्वमनात्मत्वम्**। तेन न साध्यहेत्वोरविशिष्टता। **प्रकृतिपरिणामित्वं** = प्रकृतिजन्यत्वम्। **दृश्यत्वं** = स्वविषयकधियैव प्रकाश्यत्वम्। **पराक्त्वं** = परस्मैभासमानत्वम्। **परार्थत्वं** = परप्रयोजनैकस्वभावत्वम्। **आदि**शब्दः विनाशित्वसङ्ग्राहकः। अयं भावः - 'अहङ्कारो न ज्ञाताऽनात्मत्वात् प्रकृतिकार्यत्वात्, दृश्यत्वात्, पराक्त्वात्, परार्थत्वात्, विनाशित्वाच्च देहवदि'ति प्रत्यनुमानेनान्तःकरणेऽपि ज्ञातृत्व-निषेधसम्भव इति। अत्रानात्मत्वं नियन्तृतया शरीरान्तःप्रविष्टत्वेन शास्त्रसिद्धत्वाभावः। **चेतनेति**। 'ज्ञातृत्वमात्मवृत्ति चेतनासाधारणस्वभावत्वात्। यन्नैवं तन्नैवं यथा घटादिरि'ति ज्ञातृत्वसमर्थनसम्भवाच्चेति भावः ॥

ननूक्तानुमानानां प्रत्यनुमानप्रदर्शनमात्रेण निरासो न सम्भवति। देहाहङ्कारयोरनात्मत्वपराक्त्वादिसाधरण्येऽपि अहङ्कारस्य ज्ञातृत्वसम्भवात्। अत एव हि घटादीनामचेतनत्वसाधारण्येऽपि देहेन्द्रियाश्रयत्वम्। अन्येषां तदभावश्चेति व्यवस्था। तस्मादहङ्कारे ज्ञातृत्वाभावसाधने नाचेतनत्वादिकं प्रयोजकमित्याद्याशङ्कां परिहरति — **एतदुक्तमिति**। यथा देहादिः यैस्स्वभावैः द्रष्टृत्वप्रत्यक्त्वभोक्तृत्वादिरहितः निष्कृष्यते, एवमेव तैरेव स्वभावैरहङ्कारद्रव्यमपि द्रष्टृत्वादि-रहिततया निष्कृष्यत इत्यर्थः। अयमाशयः - ज्ञातृत्वाभावसाधनेऽस्माभिरुक्तमचेतनत्वादिकं प्रयोजकं, न वा। आद्येऽन्तःकरणे ज्ञातृत्वाभावः सिद्ध एव। द्वितीये देहस्य ज्ञातृत्वापत्तिः। 'देहो न ज्ञाताऽचेतनत्वादि'त्यनुमानस्यानुपपन्न-त्वात्। ततश्च देहात्मनो भेदाभावेन चार्वाकमतविजयप्रसङ्गः। यदि ज्ञातृत्वाभावेऽचित्वं निबन्धनमिति देहादौ ज्ञातृ-त्वाभाव उच्यते, तर्हि तत एवाहङ्कारेऽपि ज्ञातृत्वनिवृत्तिः। तस्याचित्वे उभयसम्प्रतिपत्तेः। तस्मात्क्वचित्कस्यचिज्ज्ञातृ-त्वाभावप्रयोजकत्वे अन्यत्रापि तस्य प्रयोजकत्वमेषितव्यमेवेति देहादिवदन्तःकरणस्यापि भवत्सम्मतं ज्ञातृत्वमनु-पपन्नमेवेति। वस्तुतः आत्मनः कर्तृत्वाद्यभ्युपगमे जडत्वाद्यापादनमप्यसम्भवि। 'कर्ता विज्ञानात्मे'तिश्रुत्यैव कर्तृत्वादि-बोधनात्।

**अतो विरोधादेव न ज्ञातृत्वमहङ्कारस्य, दृशित्ववत्। यथा दृशित्वं तत्कर्मणोऽहङ्कारस्य नाभ्युपगम्यते, तथा ज्ञातृत्वमपि न तत्कर्मणोऽभ्युपगन्तव्यम्। न च ज्ञातृत्वं विक्रियात्मकम्। ज्ञातृत्वं हि ज्ञानगुणाश्रयत्वम्। ज्ञानञ्चास्य नित्यस्य स्वाभाविकधर्मत्वेन नित्यम्। नित्यत्वञ्चाऽऽत्मनो, 'नात्मा श्रुतेः'** (शा.२.३.१८) **इत्यादिषु वक्ष्यति। 'ज्ञोऽत एव'** (शा.२.३.१९.) **इत्यत्र 'ज्ञ' इति व्यपदेशेन ज्ञानाश्रयत्वञ्च स्वाभाविकमिति वक्ष्यति। अस्य ज्ञानस्वरूपस्यैव, मणिप्रभृतीनां प्रभाश्रयत्वमिव, ज्ञानाश्रयत्वमप्यविरुद्धमित्युक्तम्। स्वयमपरिच्छिन्नमेव ज्ञानं सङ्कोचविकासार्हमित्युपपादयिष्यामः। अतः क्षेत्रज्ञावस्थायां कर्मणा सङ्कुचितस्वरूपं**

---

एवमात्मनि अहन्त्वादिकं प्रत्यक्षसिद्धं निर्बाधञ्च। देहे त्वहंप्रत्ययस्य भ्रान्तत्वादनात्मत्वमिष्यते इति चाभिप्रायः। उपसंहरति — **अत** इति। एवमहङ्कारस्य ज्ञातृत्वासम्भवे उक्तेऽपि अपरितुष्टं तं प्रति दृष्टान्तप्रदर्शनेन समाश्वासमुत्पादयति — **दृशित्ववदि**ति। तदुपपादयति - **यथे**ति। 'अहङ्कारो न दृशिः दृशिविषयत्वादि'ति हि अहङ्कारे दृशित्वाभावस्साध्यते। एवमेव दृशिविषयत्वहेतुनाऽहङ्कारे ज्ञातृत्वाभावोऽपि साधयितुं शक्यते इति कथं ज्ञातृत्वमभ्युपगन्तुं युक्तमित्यर्थः। अयं भावः - यथा देहघटादीनां दृश्यत्वाद्यविशेषेऽपि देहस्येन्द्रियाश्रयत्वं, तथा देहान्तःकरणादीनां दृश्यत्वाविशेषेऽप्यन्तःकरणस्य दृशित्वं कुतो न स्वीक्रियते? यदि दृश्यत्वादिकं दृशित्वाभावे प्रयोजकमिति नाहङ्कारस्य दृशित्वमित्युच्यते। तर्हि दृशित्वाभावे दृश्यत्वस्येव द्रष्टृत्वाभावेऽचेतनत्वादीनामपि ज्ञातृत्वाभावे प्रयोजकत्वान्नाहङ्कारस्य ज्ञातृत्वसिद्धिरिति।

अथ ज्ञातृत्वस्य विक्रियात्मकत्वपक्षं व्युदस्यति - **न चे**ति। ज्ञातृत्वस्वरूपं प्रदर्शयति - **ज्ञातृत्वं ही**ति। **हिः** प्रसिद्धौ। हेतौ वा। अत्र ज्ञानस्य गुणत्वकीर्तनम्। आश्रयापृथक्सिद्धविशेषणत्वाभिप्रायेण। ननु ज्ञानाश्रयत्वमपि यदि कादाचित्कं, तर्हि तत् विक्रियात्मकमेवेत्यत्राह — **ज्ञानमि**ति। यदि धर्मि नाशः तदा ज्ञानस्यापि नाशस्स्यात्। यदि विरोधिगुणान्नाशः तदाविक्रियात्मकत्वशङ्का च। तदुभयमपि नास्माभिस्स्वीक्रियते इत्याह — **नित्यस्य स्वाभाविक धर्मत्वेने**ति। अनेन 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' 'अविनाशित्वादात्मनः' इति श्रुत्यर्थो दर्शितः। तत्र हि आश्रयभूतात्मनो नित्यत्वात् धर्मस्य ज्ञानस्याप्यविनाशेन स्वाभाविकत्वमुच्यते। तत्रात्मनो नित्यत्वे सूत्रकार सम्मतिं दर्शयति — **नित्यत्वमि**ति। एवं सूत्रकारसम्मतिदर्शनेन आप्रलयावस्थायित्वरूपनित्यत्वपक्षाणामपसिद्धान्तत्वं सूचितम्। ज्ञानस्य स्वाभाविकत्वे तां दर्शयति — **ज्ञोऽत एवे**ति। ज्ञानस्वरूपत्वेऽप्यात्मनः ज्ञानाश्रयत्वमपि मण्यादिदृष्टान्तेनाविरुद्धमिति पूर्वमेवोक्तमिति दर्शयति — **अस्ये**ति। अत्र मणेः पार्थिवत्वेऽपि पञ्चभूतमयत्वेन तन्मध्यस्थस्य तेजोंशस्य प्रभाश्रयत्वाद्दृष्टान्तत्वोक्तिः। ज्ञानतदाधारयोः प्रभाप्रभावतोः द्वयोः द्रव्ययोः कथमपृथक्सिद्धिरिति न भ्रमितव्यम्। उपलब्धिसिद्धत्वात्। द्रव्याद्रव्ययोरप्युपलब्धिबलाद्धि अपृथक्सिद्धिः। अत एव द्रव्यभूतमीश्वरं प्रति चिदचिद्द्रव्याणामपृथक्सिद्धिरिति। ननु यदि ज्ञानं स्वाभाविकमनश्वरञ्च तर्हि ईश्वरवत् सर्वेऽपि सर्वज्ञास्स्युरित्यत्राह — **स्वयमि**ति। **स्वयं** = स्वभावतः। यद्यपि ज्ञानं स्वभावत एव सर्वपदार्थग्राहि, अथापि तत्तज्जीवकृतकर्मानुगुण्येन सङ्कोचविकासार्हं भवतीति न सर्वज्ञत्वापदनसम्भवः। मुक्तौ तु सङ्कोचविकासार्हत्वापादककर्मविरहेण सर्वज्ञत्वमिष्टमेवेति भावः। **उपपादयिष्याम** इति। उपरिष्टादिति शेषः।

नन्वेवं ज्ञानगतसङ्कोचविकासस्य कर्मकृतत्वे क्षेत्रज्ञावस्थायां सर्वेषामपि धीसङ्कोचविकासयोस्तारतम्यन्न स्यात्। कर्मणः प्रतिबन्धकस्य सत्वात्। अतस्तदनुपलब्ध्या न कर्मणः प्रतिबन्धकत्वम्। ततश्च स्वाभाविकज्ञानस्य सर्वदा सत्त्वेन सर्वेषां सर्वज्ञत्वापत्तिः। अन्यथा मुक्तावपि सर्वज्ञत्वन्न स्यादविशेषात् इत्यत्राह - **अत** इति **क्षेत्रज्ञावस्थायामि**त्यनेन मुक्तौ न ज्ञानतारतम्यमिति सूचितम्। **कर्मणे**त्यनेन ज्ञानस्य स्वाभाविकत्वेऽपि तारतम्यमौपाधिकमिति सूचितम्।

**तत्तत्कर्मानुगुणतरतमभावेन वर्तते । तच्चेन्द्रियद्वारेण व्यवस्थितम् । तमिममिन्द्रियद्वारा ज्ञानप्रसरमपेक्ष्य उदयास्तमयव्यपदेशः प्रवर्तते । ज्ञानप्रसरे तु कर्तृत्वमस्त्येव । तच्च न स्वाभाविकम् ; अपि तु कर्मकृतमित्यविक्रियस्वरूप एवाऽऽत्मा । एवंरूपविक्रियात्मकं ज्ञातृत्वं ज्ञानस्वरूपस्यात्मन एवेति न कदाचिदपि जडस्याहङ्कारस्य ज्ञातृत्वसम्भवः ।**

**जडस्वरूपस्याप्यहङ्कारस्य चित्सन्निधानेन तच्छायापत्त्या तत्सम्भव इति चेत् - केयं चिच्छायापत्तिः ? किमहङ्कारच्छायापत्तिस्संविदः, उत संविच्छायापत्तिरहङ्कारस्य ?**

---

**तत्तत्कर्मानुगुणे**त्यनेन क्षेत्रज्ञावस्थायां ज्ञानतारतम्ये प्रमाणं दर्शितम् । ननु धियः स्वाभाविकत्वेनानुत्पन्नत्वादिन्द्रियादिसृष्टिर्व्यर्था । ज्ञानाद्युत्पत्त्यर्थमेव हि इन्द्रियादिसृष्टिरपेक्षणीयेत्यत्राह — **तच्चे**ति । तारतम्येन वर्तनमित्यर्थः । इन्द्रियद्वारकतयैव भगवदिच्छासिद्धमिति भावः । एतेन स्थावरादिष्वपि ज्ञानविकासशङ्का निरस्ता । ननु ज्ञातुरेवेदानीं 'मम ज्ञानं नष्टमि'त्यादि प्रतीतिबलात् ज्ञानस्योत्पत्तिनिरोधौ पूर्वं स्थापितौ । सम्प्रति तु स्वाभाविकत्वेन नित्यत्वम् । अतः परस्परविरोध इत्यत्राह — **तमिमम**िति । **प्रसर**शब्दस्तदभावस्याप्युपलक्षकः । ततश्चेन्द्रियद्वारा ज्ञानप्रसरतदभावमूलक एवोदयास्तमव्यपदेश इत्यर्थः ।

नन्वेवं सति ज्ञानस्य सङ्कोचविकासवत्त्वेन सविकारत्वात्, तदाश्रयत्वेनात्मनोपि सविकारत्वमेव स्यादित्यत्राह - **ज्ञानप्रसरेत्वि**ति । उक्तं सविकारत्वं शास्त्रसिद्धत्वेनेष्टमित्यर्थः । हेत्वन्तरमाह - **तच्चे**ति । **च**कारः हेत्वन्तरद्योतकः । अयं भावः - यदि ज्ञानस्य सङ्कोचविकासौ स्वाभाविकौ तदा तस्य विक्रियात्मकत्वमिष्टं वक्तुम्, न च तदस्ति । परन्तु कर्मकृतमेवेत्यौपाधिकम् । ततश्च न वस्तुतः सविकारत्वमिति न दोषः । एवमात्मनि विद्यमानं ज्ञानाश्रयत्वन्तु स्वाभाविकम् । ज्ञान-तदभावयोरात्मनि कादाचित्कत्वे ह्यात्मनो विक्रियात्मकत्वापादनसम्भव इति । अनेन निर्विकारत्वश्रुतिरपि दर्शिता भवति । श्रुत्या हि ज्ञानस्वरूपमात्रस्य नित्यत्वमुक्तम् । अतस्तारतम्यस्य न स्वाभाविकत्वम्, परन्तु तत्र कर्मतारतम्यमेव निबन्धनम् । यथोक्तम् - 'अविद्याकर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते । यया क्षेत्रज्ञशक्तिस्सा वेष्टिता नृप सर्वगा'' इति । अतो न कदाचिदप्यनुपपत्तिः । **अविक्रियस्वरूप** इत्युक्तिरात्मनो न मृदादिवत् स्वरूपविकारः धर्मतोऽपि विकारः औपाधिक एव । तस्मादात्मनो निर्विकारत्वमेव स्वाभाविकमिति सूचयति । एवं कर्मकृतज्ञानप्रसरणकर्तृत्वरूपविक्रियात्मकज्ञातृत्वमप्यहङ्कारस्य दुश्शकमित्याह — **एवं रूपे**ति । **ज्ञानस्वरूपस्य** = ज्ञानं स्वरूपं स्वाभाविकं यस्य । ज्ञानवत इत्यर्थः । अयं भावः - कर्माधीनसङ्कोचविकासशालिज्ञान द्वारकविकारोऽपि ज्ञानवत एव स्यान्न तु ज्ञानशून्यस्याहङ्कारस्य । धर्मद्वारकविकारस्य धर्मिण्येव सम्भवादिति । यद्वा - **ज्ञानस्वरूपस्य** ज्ञानरूपस्येत्यर्थः । ततश्च ज्ञानस्वरूपस्यैव ज्ञातृत्वन्न तु जडस्याहङ्कारस्य घटादिवत् । अतो घटादिवदहङ्कारस्यात्मत्ववज्ज्ञातृत्वमप्यप्रामाणिकमित्याशयः ।

एवमहमर्थस्यात्मन एव ज्ञातृत्वं, नाहङ्कारस्येति स्थापितम् । अथ परोक्तज्ञातृत्वनिर्वाहप्रकारं दूषयितुं शङ्कते - **जडे**ति । परे तु ज्ञातृत्वं चिच्छायापत्तिकृतं, चित्सम्पर्ककृतं, चिदभिव्यञ्जकत्वकृतमिति त्रेधाऽहङ्कारे ज्ञातृत्वं निर्वहन्ति । तत्र चिच्छायापत्तिः चित्स्वभावापत्तिः चिद्गतज्ञातृत्वापत्तिः । यथा जपाकुसुमस्थ लौहित्यस्य स्फटिके । तत्र प्रथमपक्षमुपन्यस्यति — **चित्सन्निधानेने**ति । छायापत्तौ सन्निधानमपेक्षितम् । सम्पर्के तु न सन्निधानमात्रमित्यनयो र्भेदः । दूषयति - **केयमि**ति । दुर्निरूपेत्यर्थः । **चिच्छायापत्तिः** । चितः अहङ्कारे छायापत्तिर्वा, चिति अहङ्कारच्छायापत्ति र्वेत्यर्थः । अत्र केचित् तच्छायापत्तिरिति पाठं पठन्ति । **तच्छायापत्त्ये**ति पूर्वं निर्दिष्टत्वात् । किं तच्छब्दस्याहङ्कारपरामर्शित्वं उत चित्परामर्शित्वम् इति चार्थं वर्णयन्ति । प्रश्नाभिप्रायं विकल्पमुखेन प्रकटयति — **किमि**ति ।

**न तावत्संविदः ; संविदो ज्ञातृत्वानभ्युपगमात् । नाप्यहङ्कारस्य ; उक्तरीत्या तस्य जडस्य ज्ञातृत्वायोगात् । द्वयोरप्यचाक्षुषत्वाच्च । न ह्यचाक्षुषाणां छाया दृष्टा ।**

**अथाग्निसम्पर्कादयःपिण्डौष्ण्यवच्चित्सम्पर्काज्ज्ञातृत्वोपलब्धिरिति चेत् - नैतत्, संविदि वस्तुतो ज्ञातृत्वानभ्युपगमादेव न तत्सम्पर्कादहङ्कारे ज्ञातृत्वं तदुपलब्धिर्वा । अहङ्कारस्य त्वचेतनस्य ज्ञातृत्वासम्भवादेव सुतरां न तत्सम्पर्कात्संविदि ज्ञातृत्वं तदुपलब्धिर्वा ॥**

**यदप्युक्तम्, उभयत्र न वस्तुतो ज्ञातृत्वमस्ति । अहङ्कारस्त्वनुभूतेरभिव्यञ्जकः स्वात्मस्थामेवानुभूतिमभिव्यनक्ति ; आदर्शादिवत् इति - तदयुक्तम् ; आत्मनः स्वयञ्ज्योतिषो जडस्वरूपाहङ्काराभिव्यङ्ग्यत्वायोगात् । तदुक्तम् - 'शान्ताङ्गार इवाऽऽदित्यमहङ्कारो जडात्मकः । स्वयञ्ज्योतिषमात्मानं व्यनक्तीति न युक्तिमत् ॥'** (आत्मसिद्धिः) **इति । स्वयम्प्रकाशानुभवाधीनसिद्धयो हि सर्वे पदार्थाः । तत्र तदायत्तप्रकाशोऽचिद-**

---

प्रथमं दूषयति — **न तावदिति** । अहङ्कारे संविदःच्छायापत्तिर्हि संविद्गतज्ञातृत्वापत्तिः । तत्र न वस्तुतस्संविदि ज्ञातृत्वमस्ति, येन तत्स्वभावापत्तिरहङ्कारस्य युज्येत । न हि जपाकुसुमे लौहित्याभावे स्फटिके तच्छायापत्या लौहित्यप्रतिफलनसम्भव इति भावः । द्वितीयं शिरो निरस्यति - **नापीति** । **उक्तरीत्या** = अचेनत्वप्रकृतिपरिणामित्वादीना । अत्र **जडस्य ज्ञातृत्वायोगा**दित्यनेन जडत्वस्याज्ञत्वं व्यापकमित्यभिप्रेतम् । न त्वजडत्वस्य ज्ञातृत्वं व्यापकमिति । धर्मज्ञाने व्यभिचारेण तत्र तस्याव्यापकत्वात् । दूषणान्तरमाह — **द्वयोरपीति** । न हि जपाकुसुमस्फटिकयोरदर्शनेन तत्सन्निधानमात्रेण तच्छायासम्भव इति भावः ।

अथ सम्पर्कपक्षं दूषयितुमुपन्यस्यति — **अथेति** । अयःपिण्डे यथा वह्निर्भिन्नस्तिष्ठत्यभिन्नवत्, तथा 'विश्वमिदं देवो व्यावृत्त्य परितिष्ठती'त्यादिवाक्यद्योतनार्था अग्निसम्पर्कादित्याद्युक्तिः । अत्रापि पूर्ववत् चित्सम्पर्कस्यार्थद्वयं मनसि निधाय प्रथमपक्षं दूषयति — **संविदिति** । ननु संविदि कुतो न ज्ञातृत्वं, अहङ्कारसम्पर्केन सम्भवादिति चेत्, तर्ह्यहङ्कारे कथं, संवित्सम्पर्कादिति चेत्? न अन्योन्याश्रयापत्तेः । एतत्सूचनायैव **वस्तुत** इति भाषितम् । द्वितीयपक्षं दूषयति — **अहङ्कारस्येति** । **अचेतनस्ये**ति हेतुगर्भम् । **सुतरामिति** ज्ञानस्याजडत्वेन कथञ्चित् ज्ञातृत्वोपपत्तिसम्भवेन तत्सम्पर्कादहङ्कारे ज्ञातृत्वोपपत्तिश्शक्यशङ्का । अहङ्कारस्य त्वजडत्वेन कदश्चिदपि ज्ञातृत्वोपपत्त्यसम्भवेन तत्सम्पर्काद् संविदि ज्ञातृत्वोपपत्तिस्सर्वथा न शक्यवचना । तत्सम्पर्कस्याज्ञत्वजडत्वदिभ्रमहेतुत्वादिति भावः ।

अथाभिव्यक्तिपक्षं दूषयितुमनुवदति — **यदपीति** । छायापत्तिसम्पर्कपक्षापेक्षयाभिव्यक्तिपक्षे वैषम्यमर्थादुपपादयति — **उभयत्रेति** । पूर्वपक्षद्वयेऽन्यत्र ज्ञातृत्वस्यापाद्यत्वेऽन्यत्र ज्ञातृत्वं पूर्वमेवावश्यकम् । अस्मिन्तु न तथा । 'जलाधारेष्विवांशुमान्' इति न्यायेनाभिव्यञ्जकस्य स्वात्मस्थतयाभिव्यञ्जकत्वसामर्थ्यादिति भावः । दूषयति - **तदिति** । उपपादयति — **आत्मन** इति । **स्वयञ्ज्योतिष** इत्यनेन नित्यस्वयंप्रकाशस्य स्वरूपस्य व्यञ्जकान्तरनिरपेक्षा उक्ता । **जडस्वरूपस्ये**त्यनेनाहङ्कारस्याभिव्यञ्जकत्वसामर्थ्यं नास्ति, प्रत्युत वैपरीत्यन्तु युक्तमिति दर्शितम् । उक्तार्थे आत्मसिद्धिग्रन्थस्थं श्लोकं प्रमाणयति — **शान्ताङ्गार** इत्यादिना । अत्र जडात्मकः स्वयञ्ज्योतिषमित्येतद्धेतुगर्भविशेषणम् । **न युक्तिमदि**ति । अनेन दृष्टान्तमात्रेण न युक्तिविरुद्धार्थस्य सिद्धिः प्रामाणिकीति व्यञ्जितम् । दृष्टान्तस्यान्यथोपपत्तिश्च क्रियते । उदाहृतं श्लोकं स्वयमेव विवृणोति - **स्वयंप्रकाशेति** । **सिद्धिशब्दः** प्रकाशपरः । सर्वेषां पदार्थानां स्वयंप्रकाशानुभवाधीनप्रकाशत्वेनाहङ्कारस्यापि तदायत्तप्रकाशत्वान्नाहङ्कारेण तत्प्रकाशसम्भव इति भावः । अत्रानुभवे स्वयंप्रकाशत्वविशेषणेनानुभवस्येतराभिव्यङ्ग्यत्वाभावस्वभावस्सूचितः । पदार्थेषु तदधीनसिद्धिकत्वबोधनेनाहङ्कारस्याभिव्यञ्जकत्वा-

**हङ्कारः अनुदितानस्तमितस्वरूपप्रकाशमशेषार्थसिद्धिहेतुभूतमनुभवमभिव्यनक्तीत्यात्मविदः परिहसन्ति ॥**

**किञ्चाहङ्कारानुभवयोस्स्वभावविरोधादनुभूतेरननुभूतित्वप्रसङ्गाच्च न व्यङ्क्तृव्यङ्ग्यभावः । यथोक्तं- 'व्यङ्क्तृव्यङ्ग्यत्वमन्योन्यं न च स्यात्प्रातिकूल्यतः । व्यङ्ग्यत्वेऽननुभूतित्वमात्मनि स्याद्यथा घटे ॥'** (आत्मसिद्धिः) **इति ।**

**न च रविकरनिकराणां स्वाभिव्यङ्ग्यकरतलाभिव्यङ्ग्यत्ववत्संविदभिव्यङ्ग्याहङ्काराभिव्यङ्ग्यत्वं संविदः साधीयः; तत्रापि रविकरनिकराणां करतलाभिव्यङ्ग्यत्वाभावात् । करतलप्रतिहतगतयो हि रश्मयो बहुलास्स्वयमेव स्फुटतरमुपलभ्यन्त इति तद्बाहुल्यमात्रहेतुत्वात्करतलस्य नाभिव्यञ्जकत्वम् ॥**

---

सम्भव उक्तः । **अनुदितानस्तमितस्वरूपमिति** । यद्यनुभवस्योदयास्तमयौ स्यातां तदा कदाचिदभिव्यङ्ग्यापेक्षापि स्यात् । न च तौ स्त इति भावः । विषयप्रकाशकत्वेन स्वयंप्रकाशत्वं भवद्भिरेव समर्थितमिति सूचनाय - **अशेषार्थसिद्धिहेतुभूतमित्युक्तम्** । **आत्मविदः** = स्वयंप्रकाशत्वेनाङ्गीकृतानुभवमेवात्मानं मन्यमानाः भवदीया एव । **परिहसन्तीति** स्वतस्सिद्धानुभवायत्तप्रकाशस्याहङ्कारस्य तत्प्रकाशकत्वकथनमतीवपरिहासास्पदमिति भावः । न च सूर्याधीनप्रकाशवत आदर्शस्य सूर्याभिव्यञ्जकत्ववत् सम्भवति । आदर्शस्यान्यवस्त्वभिव्यञ्जकत्वसामर्थ्यात्तत्सम्भवेप्यहङ्कारस्य तत्सामर्थ्याभावेन तदयोगात् ॥

दूषणान्तरमाह — **किञ्चेति** । **स्वभावविरोधादिति** । अयं भावः - अहङ्कारानुभवयोः परस्परं व्यङ्क्तृव्यङ्ग्यभाव एव न सम्भवति । तत्राहङ्कारः स्वयमव्यक्तस्सन्ननुभूतिं व्यनक्ति । अनुभवनिरपेक्षसत्ताकत्वेन स्वरूपसत्यत्वप्रसङ्गात् । एतेनाहङ्कारस्य स्वयंप्रकाशत्वाङ्गीकारोऽपि निरस्तः । एवमनुभूतिः स्वयमव्यक्ताऽहङ्कारमभिव्यनक्ति । पश्चादहङ्कारेणाभिव्यज्यते इत्यपि न घटते । तथा सत्यनुभूतेर्जडत्वप्रसङ्गात् । तस्मात्परस्पराभिव्यक्तेः पूर्वमपेक्षत्वेनान्योन्याश्रयो दुर्वारः । न च स्वयंव्यक्ता अनुभूतिरहङ्कारमभिव्यनक्तीति वाच्यम् । तथा सत्यहङ्काराभिव्यङ्ग्यत्वकथनस्य सुदूरपराहतत्वात् । अतः एतादृशस्वभावविरोधात् परस्पराभिव्यङ्ग्याभिव्यञ्जकभावो दुर्घट इति । ननु स्वतस्सिद्धप्रकाशत्वेऽप्यनुभवस्याहङ्काराभिव्यङ्ग्यत्वं सम्भवति । स्वतस्सिद्धप्रकाशापेक्षयाऽहङ्काराधीनप्रकाशस्यानुभूतिगतस्य विलक्षणत्वात् । अत एव हि स्वतस्सिद्धप्रकाशानां सूर्यरश्मीनां तदभिव्यङ्ग्यकरतलाधीनप्रकाशः विलक्षणो दृष्ट इत्यत्राह **अनुभूतेरिति** । यथाकथञ्चिदनुभूतेरहङ्काराधीनप्रकाशत्वोपपादनेऽन्याधीनप्रकाशत्वेऽननुभूतित्वस्य भवद्भिरेवोक्तत्वेनाननुभूतित्वमेव प्रसज्येतेति भावः ।

नन्वनुभूतेः स्वसजातीयसापेक्षप्रकाशत्वे हि अननुभूतित्वापादनसम्भवः । अत्र तु स्वविजातीयाहङ्काराधीनप्रकाशत्वस्योक्तत्वेन नाननुभूतित्वप्रसङ्ग इति चेन्न । तथा सति **अन्यतस्सिद्धौ घटादिवदननुभूतित्वप्रसङ्ग** इति पूर्वोक्तं विरुध्येत । घटादीनां स्वविसजातीयज्ञानापेक्ष प्रकाशवत्वेऽपि स्वसजातीयानपेक्षप्रकाशत्वेनाननुभूतित्वापादनासम्भवात् । त्वदुक्तरीत्या तेषामन्यतः सिद्धेरेवाभावात् । ततश्च 'अनुभूतिः स्वसजातीयानपेक्षप्रकाशा, अनुभूतित्वादि'-त्यनुमाने अन्वयदृष्टान्तवत् व्यतिरेकव्याप्तेर्दुर्वचत्वात् तत्तदृष्टान्तोऽप्यनुपपन्न इति । अन्वयदृष्टान्तार्थं हेत्वन्तरोपन्यासस्तु सिद्धसाधनत्वादिना पूर्वमेव दूषितः । उक्तार्थे आत्मसिद्धिश्लोकमुदाहरति — **यथोक्तमिति** । **प्रातिकूल्यतः** = स्वभावविरोधात् । **आत्मनि स्याद् यथा घटे** इत्यत्र त्वदुक्त्यैव प्रसज्यते इत्यपि कश्चित्पाठः । रविकरनिकरदृष्टान्तमन्यथयति - **न चेति** । हेतुमाह - **तत्रापीति** । **स्वयमेव स्फुटतरमुपलभ्यत** इति । एतेन सूर्यरश्मिबाहुल्यसम्पादकानां करतलानां बाहुल्यप्रकाशकत्वमपि नास्तीति सूचितम् । तदेवोत्तरत्र **बाहुल्यमात्रहेतुत्वादित्यनेन** विवृतम् । तद्वत्, प्रकृते बाहुल्य-

**किञ्चास्य संवित्स्वरूपस्याऽऽत्मनोऽहङ्कारनिर्वर्त्या अभिव्यक्तिः किंरूपा ? न तावदुत्पत्तिः; स्वतस्सिद्ध-तयाऽनन्योत्पाद्यत्वाभ्युपगमात्। नापि तत्प्रकाशनम् ; तस्यानुभवान्तराननुभाव्यत्वात्।**

**तत एव च न तदनुभवसाधनानुग्रहः। स हि द्विधा ; ज्ञेयस्येन्द्रियसम्बन्धहेतुत्वेन वा - यथा जाति-निजमुखादिग्रहणे व्यक्तिदर्पणादीनां नयनादीन्द्रियसम्बन्धहेतुत्वेन; बोद्धृगतकल्मषापनयनेन वा - यथा**

हेतुत्वमप्यहङ्कारस्य नास्ति। अहङ्कारस्य संवित्स्रोतप्रतिघातित्वाभावात्। अनुभूतिद्रव्यस्य ब्रह्मणः प्रसरणस्वभावत्वा-भावाच्चेति भावः।

एवं स्वभावविरोधादिपर्यालोचनया नाहङ्कारानुभूत्योरन्योन्यं व्यङ्क्तृव्यङ्ग्यभाव इति प्रदर्शितम्। अथाभिव्यक्ति-स्वरूपपर्यालोचनयापि नाहङ्काराभिव्यङ्ग्यत्वमनुभूतेरिति प्रदर्शयितुमभिव्यक्तिस्वरूपं किमिति पृच्छति। **किञ्चेति**। **अस्य** = स्वतःसिद्धस्य। **संविद्रूपस्येति** स्वतःसिद्धत्वे हेतुवचनम्। एतेन परोक्तानुमानं सूचितम्। **आत्मन** इत्यनेना-नुभूतेरितरनिर्वर्त्त्याभिव्यक्ति स्वीकारे नित्यत्वाजडत्वादिविरोधप्रसङ्ग इति व्यञ्जितम्। **निर्वर्त्यं** = निष्पाद्यम्। **किं रूपा** = किंचिद्रूपेत्यर्थः। **इदमेवेति** तत्स्वरूपनिरूपणमशक्यमिति यावत्। सम्भावितविकल्पप्रकारान् हृदिनिधाय प्रथममु-त्पत्तिपक्षं निरस्यति - **न तावदिति**। **तावदि**त्यवधारणे। निषेधदार्ढ्यसूचकम्। हेतुमाह - **स्वत** इति। **स्वतस्सिद्धतया** = अनादितयेत्यर्थः। अनादिन उत्पाद्यत्वासम्भवेनाहङ्कारेण न तदुत्पत्तिसम्भव इति भावः। यद्वा - **स्वतस्सिद्धे**त्यनेन **सेयं स्वयंप्रकाशानुभूतिर्नित्या च प्रागभावाद्यभावात्, तदभावश्च स्वतःसिद्धत्वादेवे**ति पूर्वोक्तं स्मारितम्। तदिष्टं प्रकाशनपक्षं निरस्यति — **नापीति**। **तत्प्रकाशनम**नुभवविषयकज्ञानजननम्। एतावताऽहङ्कारस्यानुभूत्यभिव्यञ्जकत्वम-नुभूतिविषयकज्ञानोत्पत्तिकारणत्वं, तज्ज्ञापकत्वं वा पर्यवसितम्। इदमुभयमपि न सम्भवति। तस्या अनुभवान्तरा-विषयत्वादित्यभिप्रायेणाह — **तस्येति**। संविद्रूपस्येत्यर्थः।

उक्तयुक्त्यैवानुभूतिविषयकानुभवसाधनानुग्रहरूपाहङ्कारनिर्वृर्त्त्याभिव्यक्तिपक्षोऽपि न सम्भवतीत्याह — **तत** इति। तदनुभवसाधनानुग्रहश्च न सुवच इत्यर्थः। एवं निषिद्धस्यानुभवसाधनानुग्रहस्य लोकदृष्टप्रक्रियया द्वैविध्यमु-पपादयति—**स हीति**। तच्छब्दस्यासावित्यर्थः। योऽसौ ज्ञेयस्येन्द्रियसम्बन्धहेतुत्वेन बोद्धृगतकल्मषापनयनेन च लोके द्विधा प्रसिद्धः। **सः तदनुभवसाधनानुग्रहस्तत एव न सुवच** इत्यन्वयः। **ज्ञेयस्ये**त्यनेनानुभूतेर्ज्ञानान्तराविषयत्वेन तादृशानुग्रहोऽसम्भवीति सूचितम्। **वा**कारः चार्थः। अन्यथाऽनुग्रहस्य द्विविधत्वानुपपत्तेः। विकल्पस्य द्विविधत्वेऽपि वस्तुनो द्विविधत्वासम्भवात्। न ह्यभिव्यक्तिस्त्रिविधः उत्पत्तिर्वा प्रकाशनं वानुभवसाधनानुग्रहो वेति वक्तुं शक्यम्। ततश्चानुभवसाधनानुग्रहः ज्ञेयस्येन्द्रियसम्बन्धहेतुजन्यः बोद्धृगतकल्मषापनयनहेतुजन्यश्चेति द्विविधः इति भावः। **हेतुत्वेने**त्याद्युक्तिः द्वैविध्यप्रयोजकाकार सूचनार्था। प्रथमस्य निदर्शनमाह — **यथेति**। जातिग्रहणे संयुक्तसमवायेन व्यक्तिसंयोगोऽपेक्षितः। मुखग्रहणे दर्पणं नायनरश्मिप्रतिस्रोतप्रवर्तनद्वारापेक्षितमिति भावः। **बोद्धृगतकल्मषापनयनेन** तादृशापनयनहेतुत्वेन। द्वितीयं निदर्शयति **यथेति**। शास्त्रं हि परतत्त्वविषयकज्ञानसाधनमपि शमादिना पुरुषगत-कल्मषापनयने एव पुरुषे जनयतीति भावः। अत्र शमदमाद्युदाहरणं परमतानुसारेण। स्वमते शमादीनां शास्त्रश्रवणा-नन्तरभवित्वात्। यद्वा - श्रवणाद्युपयुक्तं 'प्रशान्तचित्ताय शमान्विताय' इत्याद्युक्तमेव शमादिकं परम्परया परतत्त्वाव-बोधनसाधनशास्त्रानुग्राहकं भवतीत्यभिप्रायेणोदाहृतम्।

एवं द्विःप्रकारेण स्थितेरनुभवसाधनानुग्रहपक्षः **तत एवे**त्यादिना दूषितः। तत्र प्रथमेऽहङ्कारस्यानुभवविषयकानु-भवसाधनेन्द्रिय संबन्धहेतुत्वेनानुग्राहकत्वम्। द्वितीयेऽनुभूतिविषयकावबोधने शास्त्रेण जननीये बोद्धृगतकल्मषापनयन-

**परतत्वावबोधनसाधनस्य शास्त्रस्य शमदमादिना । यथोक्तम् - 'करणानामभूमित्वान्न तत्सम्बन्धहेतुता'** (आत्मसिद्धिः) **इति ।**

**किञ्चानुभूतेरनुभाव्यत्वाभ्युपगमेऽप्यहमर्थेन न तदनुभवसाधनानुग्रहः सुवचः । स ह्यनुभाव्यानुभवोत्पत्तिप्रतिबन्ध(क)निरसनेन भवेत् - यथा रूपादिग्रहणोत्पत्तिनिरोधि सन्तमसनिरसनेन चक्षुषो दीपादिना । न चेह तथाविधं निरसनीयं सम्भाव्यते । न तावत्संविदात्मगतं तज्ज्ञानोत्पत्तिनिरोधि किञ्चिदप्यहङ्कारापनेयमस्ति । अस्ति ह्यज्ञानमिति चेन्न, अज्ञानस्याहङ्कारापनोद्यत्वानभ्युपगमात् । ज्ञानमेव ह्यज्ञानस्य निवर्तकम् । न च संविदाश्रयत्वमज्ञानस्य सम्भवति ; ज्ञानसमानाश्रयत्वात्, तत्समानविषयत्वाच्च ।**

---

द्वारा अनुग्राहकत्वमिति वक्तव्यम् । इदमुभयमपि न सम्भवति अनुभूतेर्ज्ञानान्तरवेद्यत्वानभ्युपगमात् इति भावः । तत्राद्यानुग्राहकत्वमात्मसिद्धौ दूषितमित्याह — **यथोक्तमिति** । **अभूमित्वात्** = अविषयत्वात् । शमदमादिवदहङ्कारस्य बोद्धृगतकल्मषापनयनद्वाराऽनुग्राहकत्वमप्रामणिकमिति दूषणं स्फुटमिति नादृतम् । "**अहमर्थस्य बोद्धृत्वान्न स तेनैव शोध्यते**" इत्युत्तरार्धेन तत्रैव दूषितम् । अयं भावः - अहमर्थस्यैव त्वन्मते बोद्धृत्वेन स्वगतकल्मषस्य स्वेन निरासासम्भवात् । तथा सति कल्मषनिरासार्थं विहितानां वैयर्थ्यापत्तेश्च । न ह्यदृष्टद्वारापि तदुपपादनसम्भवः । यतो नादृष्टवशादन्तःकरणेन अन्तःकरणशुद्धिरित्यत्र प्रमाणं पश्याम इति ॥

एवमनुभूतिस्वभावपर्यालोचनया तदनुग्रहस्वभावपर्यालोचनया च नानुभूतित्यहङ्कारयोः व्यङ्क्तृव्यङ्ग्यभावः इत्युक्तम् । अथानुभूतेरनुभाव्यत्वाङ्गीकारेपि व्यञ्जकत्वेन स्वीकृताहङ्कारस्वभावपर्यालोचनेऽहङ्कारस्य तदनुग्राहकत्वन्न सुवचमिति दर्शयति — **किञ्चेति** । व्यक्तिदर्पणादीनामभिव्यञ्जकत्वस्योत्तरत्र निरसिष्यमाणतया प्रतिबन्धनिरसनरूपानुग्रहद्वारा व्यञ्जकत्वं दूषयितुं तत्स्वरूपं प्रदर्शयति - **न हीति** । **हि**शब्दसूचितां प्रसिद्धिं दृढयति - **यथेति** । प्रकृतेऽसम्भवं दर्शयति - **न चेति** । तद्विवृणोति - **नेति** । यथा चक्षुषा रूपज्ञाने जनयितव्ये तद्विरोधितमोनिरसनद्वारा दीपस्योपकारकत्वं, तथाऽत्र केनचित् संविद्विषयक ज्ञाने जनयितव्ये तज्ज्ञानोत्पत्तिनिरोधि दृश्यते । येन तस्याहङ्कारापनेयत्वेनाहङ्कारस्य तदनुग्राहकत्वं शक्यशङ्कमिति भावः । **संविदात्मगत**मित्युक्तिः मणौ मालिन्य-तज्ज्ञानोत्पत्तिविरोधिमालिन्यादिवत् आधेयतया छादकतया वा संविद्रूपात्मज्ञानोत्पत्तिप्रतिबन्धकं किञ्चित् वक्तव्यमिति व्यनक्ति ।

**किञ्चिदपि** = कालुष्यादिकम् । अज्ञानमेव तज्ज्ञानोत्पत्तिनिरोधीति शङ्कते - **अस्ति हीति** । अज्ञानस्य तत्प्रतिबन्धकत्वेऽपि दीपादेः प्रतिबन्धसन्तमसनिरासकत्ववदहङ्कारस्य तादृशाज्ञाननिरासकत्वं नास्तीति । न किञ्चिदप्यहङ्कारापनेयमस्तीति प्रागुक्तं स्मारयति — **अज्ञानस्येति** । **अनभ्युपगमा**दित्यनेन स्वमतविरोधः सूचितः । ज्ञानस्यैवाज्ञाननिवर्तकत्वं तन्मतप्रसिद्धिश्च सूच्यते । एतेन प्रमाणविरोधोऽपि सूचितः । घटज्ञानमेव हि घटाज्ञाननिवर्तकं, न त्वन्यत्किञ्चित् । तत्र यद्यहङ्कारस्याप्यज्ञाननिवर्तकत्वमिष्यते तर्हि तेनैवाज्ञाननिवृत्तौ सत्यां ज्ञानतदर्थप्रवृत्तयो निष्फलास्स्युरिति भावः । वस्तुत अज्ञानस्य संविदाश्रयत्वमेव न सम्भवतीत्याह - **न चेति** । संविद् आश्रयो यस्येति विग्रहः । अत्र**आश्रय**शब्दः विषयस्यापि बोधकः । **ज्ञानसमानाश्रयत्वात्तत्समानविषयत्वाच्चे**त्युभय निषेधात् 'आश्रयश्चेतसो ब्रह्मेति' विषयेऽप्याश्रयशब्दप्रयोगाच्च । ततश्च यथा रज्ज्वाद्यज्ञानं यदाश्रितं यद्विषयकञ्च तदाश्रितेन तद्विषयेण बाधकज्ञानेन निवर्त्यते । एवमेव संविदाश्रितं संविद्विषयकं चाज्ञानं संविदाश्रितेन संविद्विषयकज्ञानेनैव निवर्त्यत इत्यभ्युपेयमिति संविदो ज्ञातृत्वज्ञेयत्वापत्तिः । ननु घटाद्यज्ञानं किमाश्रितम् । घटाश्रितमिति चेन्न अज्ञानस्य ज्ञानसमानाश्रयत्वेन तदसम्भवात् । आत्माश्रितिमिति चेत्? तर्हि संविदज्ञानमप्यहङ्काराश्रितमेव । तत्र ज्ञानस्य स्वीकारादतो न संविदः ज्ञातृत्वापत्तिः ।

**ज्ञातृभावविषयभावविरहिते ज्ञानमात्रे साक्षिणि नाज्ञानं भवितुमर्हति; यथा ज्ञानाश्रयत्वप्रसक्तिशून्यत्वेन घटादेर्नाज्ञानाश्रयत्वम्, तथा ज्ञानमात्रेऽपि ज्ञानाश्रयत्वाभावेन नाज्ञानाश्रयत्वं स्यात्।**

---

तर्हि ज्ञानप्रसरणे जीवस्यैव कर्तृत्वात् तत्प्रयुक्तनिर्विकारत्वन्न स्यादिति चेन्न। स्वाभाविकज्ञानवतः तदिष्टमेव। जडस्याहङ्कारस्य सर्वथा ज्ञानशून्यत्वात्तादृशज्ञानप्रसणकर्तृत्वं सर्वथा न सम्भवति। यो हि यद्धर्मकः स एव हि तद्धर्मभूतवस्तुगतकिञ्चित्कर्तृत्वरूपविकारवान् भवेत्। ज्ञातुरात्मनस्तु इदं सम्भवति। ज्ञानशून्यस्याहङ्कारस्य त्वसम्भवि। यथा परमात्मा स्वासाधारणस्वापृथक्सिद्धचेतनाचेतनगतस्थूलत्वरूपप्रसणकर्ता, निर्विकारः, तथा जीवोऽपि स्वासाधारणस्वापृथक्सिद्धज्ञानप्रसणकर्तेति निर्विकार एव। अपि च परस्यापि स्वगतज्ञानप्रसरणे कर्तृत्वमस्त्येव। सूक्ष्मचिदचिद्विशिष्टं वस्तु हि स्वात्मानं स्थूलचेतनाचेतनविशिष्टब्रह्मरूपेण परिणाममपेक्षमाणं तथात्वेन भवनं नियमयति। तथा स्थूलचिदचिद्विशिष्टं सूक्ष्मचिदचिद्विशिष्टवेषेण भवनञ्च नियमयति। तत्र कारणावस्थनियमनमन्यत् कार्यावस्थनियमनमन्यत्। नियमनरूपावस्थायाः भिन्नत्वात् तत्तत्कतृत्वं विभिन्नब्रह्मणोऽस्तीति। तथा जीवेपि ज्ञानप्रसणकर्तृत्वमभ्युपगम्यते। तथाप्युभयोः निर्विकारत्वमेव।

नन्वेवं सति ब्रह्मस्वरूपतः स्वभावतश्च विकारशून्यम्। जीवः स्वरूपतोऽविकार्योऽपि स्वभावतो विकारवान्; अचेतनवस्तु स्वरूपतः स्वभावतश्च विकारवत् इति भवत्प्रक्रिया दूरोत्सारितैव। ब्रह्मणः स्वभावभूतनियमनरूपविकाराभ्युपगमात्। अस्यादोषत्वे जीवस्यापि ज्ञानप्रसरण कर्तृत्वरूपविकारस्यादोषत्वेन स्वभावतो विकाराभावान् इति चेत्, सत्यम्। ब्रह्मणि विभिन्ननियमनकर्तृत्वाभ्युपगमेपि तत्प्रयुक्ताज्ञत्वसुखित्वदुःखित्वाद्यप्रसक्त्या निर्दुष्टत्वम्। जीवस्य तु सङ्कोचविकासरूपज्ञानप्रसरे कर्तृत्वाभ्युपगमेन, तत्प्रयुक्ताज्ञत्वदुःखित्वादिप्रसक्त्या वैलक्षण्यात्। ब्रह्मगतनियमनभेदा हि सूक्ष्मस्थूलचेतनाचेतनविषयकाः ते चेतनाचेतनयोरेव सूक्ष्मत्वस्थूलत्वकरणात् तद्गता इति तेषां सविकारत्वम्। न तु ब्रह्मस्वरूपगतम्। अतो निर्विकारत्वम्। आज्ञाच्छेदिनि पुरुषे परमपुरुषस्य लौकिकभूपते र्वा निग्रहोत्पत्तौ तत्प्रयुक्तविकारवत्वन्न राज्ञि परमपुरुषे वाऽऽपादयितुं शक्यम्। स्वामिगतनिग्रहप्रयुक्तसुखदुःखादिविकारत्वं शास्य एव। 'यदपराधसहस्रमजस्रं त्वयि शरण्यहिरण्य उपावहत्। वरद तेन चिरं त्वमविक्रियः विकृतिमर्क निर्भजनादगाः' इत्युक्तविकृतिमत्वं हि न दोषावहम्, प्रत्युतामोदावहमेवेति गुणायैव भवति।

द्विविधो विकारः, दोषावहः गुणावहश्चेति। दोषावहविकाराभाववत्वपराः निर्विकारत्वश्रुतयः। गुणावहविकारवत्वं त्विष्टमेव। "अविकाराय शुद्धाय नित्याय परमात्मने" इति अविकारत्वमत्रोक्तम्। भगवतः लक्ष्मी भागवतसंश्लेषादिजन्यसन्तोषवत्वेन तत्प्रयुक्तविकारवत्वं न दोषावहम्। रामकृष्णाद्यवतारेष्वपि बाल्ययौवनादिविकारवत्वस्य शरीरे दर्शनेन, युद्धकाले प्रतिपक्षिशरसन्निपातप्रयुक्तरक्तप्रभृतिदर्शनेन, च सविकारत्वस्य स्वीकारः न हि ब्रह्मण्यभ्युपगम्यते, सर्वेषामभिनयरूपत्वस्य स्वीकारात्। जडस्याहङ्कारस्य ज्ञातृत्वासम्भवस्य पूर्वमेवोक्तत्वेन तस्याज्ञानाश्रयत्वासम्भवात्। अहङ्काराश्रिताज्ञानस्याहङ्कारापनोद्यत्वासम्भवाच्च। न हि स्वगतमज्ञानं स्वयमेव निवर्तयति। अत आत्मभूतसंविदाश्रयत्वमेवाज्ञानस्य स्वीकार्यमिति ज्ञातृत्वापत्तिर्दुर्वारैव। न च ज्ञातृत्वं संविदीष्टम्। तथा सति ज्ञानाश्रयः ज्ञानरूपश्चात्मेति प्रकारान्तरेण प्रतिज्ञातस्स्यादित्यपसिद्धान्तात्। **ज्ञानसमाने**ति एतेनाज्ञानाश्रयत्वव्यापकं ज्ञानाश्रयत्वमिति पर्यवसितम्। ततश्च संविदः ज्ञानाश्रयत्वरूपव्यापकाभावात् तद्व्याप्याज्ञानाश्रयत्वमपि न भवितुमर्हतीत्याह - **ज्ञातृभावेऽपी**ति। ततश्च 'संवित् नाज्ञानाश्रयः ज्ञानाश्रयत्वाभावात् घटवदि'त्यनुमानं पर्यवसितम्। तत्र घटादौ दृष्टान्ते व्याप्तिप्रदर्शनेन निर्धारयति — **यथे**ति। अत्र ज्ञानात्यन्ताभावरूपाज्ञानस्य घटज्ञानाद्यश्रयत्वसम्भवेऽपि तस्य तत्स्वरूपानुबन्धित्वेन केनचिन्निवर्त्यत्वाभावेन निवर्त्यभूतज्ञानात्यन्ताभावानात्मकाज्ञानाधारत्वमेव भवतामिष्टं, तदेवात्र घटादिदृष्टान्तेन निरस्यते इति ध्येयम्।

**संविदोऽज्ञानाश्रयत्वाभ्युपगमेऽप्यात्मतयाऽभ्युपगतायास्तस्या ज्ञानविषयत्वाभावेन ज्ञानेन न तद्गता-ज्ञाननिवृत्तिः। ज्ञानं हि स्वविषय एवाज्ञानं निवर्तयति, यथा रज्ज्वादौ। अतो न केनापि कदाचित्संविदाश्रय-मज्ञानमुच्छिद्येत। अस्य च सदसदनिर्वचनीयस्याज्ञानस्य स्वरूपमेव दुर्निरूपमित्युपरिष्टाद्वक्ष्यते। ज्ञान-प्रागभावरूपस्य चाज्ञानस्य ज्ञानोत्पत्तिविरोधित्वाभावेन न तन्निरसनेन तज्ज्ञानसाधनानुग्रहः। अतो न केनापि प्रकारेणाहङ्कारेणानुभूतेरभिव्यक्तिः।**

**न च स्वाश्रयतयाऽभिव्यङ्ग्याभिव्यञ्जनमभिव्यञ्जकानां स्वभावः; प्रदीपादिष्वदर्शनात्; यथावस्थित-पदार्थप्रतीत्यनुगुणस्वाभाव्याच्च ज्ञानतत्साधनयोः, अनुग्राहकस्य च। तच्च स्वतःप्रामाण्यन्यायसिद्धम्।**

---

एवं संविद अज्ञानाश्रयत्वं न युक्तमित्युक्तम्। अथ भ्रमादिना तदभ्युपगमे तस्य कदापि निवृत्तिरेव न स्यादित्याह — **संविद** इति। **आत्मतयाऽभ्युपगताया** इति। इदश्च ज्ञानविषयत्वाभावे हेतुः, ज्ञानविषयत्वे जडत्वादिप्रसङ्गस्य भवद्भिरेव प्रतिपादितत्वादिति भावः। संविद अवेद्यत्वे तावता किमायातमित्यत्राह — **ज्ञानं हीति**। उक्तार्थं निदर्शयति - **यथेति**। न हि रज्जुज्ञानस्यान्याज्ञाननिवर्तकत्वम्, किन्तु रज्ज्वज्ञाननिवर्तकत्वमेव। नापि रज्ज्वज्ञाननिवर्तकत्वं रज्जुज्ञानादन्यस्य। एवं संविद्गतमज्ञानं संविद्विषयकज्ञानेनैव, न त्वहङ्कारात्। ततश्च संविदो ज्ञानविषयत्वाभावे कथं तद्गतमज्ञानं निवर्तेत इति भावः। उपसंहरति — **अत** इति। वस्तुतः भावरूपाज्ञानसिद्धौ तस्य ज्ञानाश्रयत्वतदभावादि-चिन्ता। सिद्धिरेव नास्तीत्याह — **अस्येति**। ननु भावरूपमज्ञानं सिध्यतु नाम ज्ञानप्रागभावरूपमेवाज्ञानं संविदाश्रयं तज्ज्ञानोत्पत्तिनिरोधि अहङ्कारापनेयमित्यत्राह — **ज्ञानेति**। प्रागभावो हि न प्रतियोगिसमकालवर्ती, विरोधात्। तत्पूर्वकाले तु नियतवर्ती, अतो नियतपूर्ववर्तिनः ज्ञानप्रागभावस्य ज्ञानहेतुत्वेन तद्विरोधित्वमेव नास्तीति कथं तन्निरा-सेनाहङ्कारस्यानुग्राहकत्वमिति भावः। एवमसम्भवादहङ्कारस्याभिव्यञ्जकत्वं नास्तीत्युपसंहरति — **अत** इति। **केनापि** उत्पादनज्ञापककरणतदनुग्राहकेष्वन्यतमेनापि।

एवमहङ्कारानुभूत्योः व्यङ्क्तृव्यङ्ग्यभाव एव नास्तीत्युक्तम्। अथानुभूतेरहङ्काराभिव्यङ्ग्यत्वेपि नाहङ्कारे ज्ञातृत्व-तदुपलब्धी, अभिव्यञ्जकस्य स्वाश्रयतयाऽभिव्यङ्ग्याभिव्यञ्जनास्वाभाव्यादित्याह - **न चेति**। एतेन स्वाश्रयतयाऽभि-व्यङ्ग्याभिव्यञ्जनमभिव्यञ्जकानां स्वभाव इति प्रागुक्तं निरस्तम्। एवं स्वभावकल्पनस्य व्यभिचारपराहतत्वमाह — **प्रदीपादिष्विति**। **आदि**शब्देन इन्द्रियलिङ्गानां तदनुग्राहकाणां सङ्ग्रहः। न हि प्रदीपादिरभिव्यञ्जकः स्वाभिव्यङ्ग्यपदार्थं स्वाश्रयतयाऽभिव्यनक्ति। अतो बहुषु स्थूलेषु एवं स्वभावस्य व्यभिचरितत्वेन कल्पनमयुक्तमिति भावः। प्रत्युत दीपादीनां विपरीतस्वभावत्वमेवेत्याह — **यथेति**। **प्रतीतिः** व्यवहारयोग्यतापादनम्। **स्वाभाव्यं** = स्वभावः। प्रदीपादीनां यथावस्थितपदार्थविषयकव्यवहारयोग्यतापादनस्वभाववत्वात् न तानि स्ववृत्तितया पदार्थव्यवहारमा-पादयेयुः, तस्यायथावस्थितत्वादिति भावः। तत्र ज्ञान-तत्साधन-तदनुग्राहकादीनां यथावस्थितपदार्थप्रतीत्यापादन-स्वाभाव्यमुपपादयति — **तथेति**। अयं भावः - 'प्रमात्वाप्रमात्वे स्वत' इति सङ्ख्यानां पक्षः, स चानुपपन्नः। विरुद्धधर्मत्वेन मिथो व्याघातात्।

'उभयमपि परत' इति काणादानाम्। सोऽपि न समीचीनः। निःस्वभावत्वप्रसङ्गात्। प्रमात्वबुभुत्सापरम्परया अनवस्थापाताच्च। 'अप्रामत्वं स्वत' इति बौध्दानाम्। सोऽपि गौरवादिपराहतः। प्रायशो ज्ञानेषु प्रमात्वस्य भूयस्त्वेन, अप्रमात्वस्य चाल्पीयस्त्वेन च, भूयसां निरुपाधिकत्वस्याल्पीयसः सोपाधिकत्वस्य च कल्पने लाघवात्। दृश्यते हि मुक्तनित्येश्वरादिज्ञानानां प्रमात्वस्य निरुपाधिकत्वम्। भ्रमेऽप्यधिष्ठानांशे प्रमात्वम्। अतो क्षेत्रज्ञबुद्धेः दोषवशेन

**न च दर्पणादिर्मुखादेरभिव्यञ्जकः, अपि तु चाक्षुषतेजःप्रतिफलनरूपदोषहेतुः । तद्दोषकृतश्च तत्रान्यथावभासः । अभिव्यञ्जकस्त्वालोकादिरेव । न चेह तथाऽहङ्कारेण संविदि स्वप्रकाशायां तादृशदोषापादनं सम्भवति ।**

भ्रमत्वदर्शनाच्च प्रामाण्यन्न परतः । किन्तु स्वत एव । ततश्च प्रमात्वस्य स्वतस्त्वेन तदाश्रयज्ञान-तत्साधन-तदनुग्राहकाणां यथावस्थितपदार्थव्यवहारयोग्यतापादनमेव स्वभाव इति न स्वाश्रयतया पदार्थव्यवहारयोग्य तामापादयेयुरिति । ननु ज्ञानानां प्रमात्वं यद्यपि स्वभावः, अथापि स संशयादिषु व्यभिचरितोऽपि न परित्यक्तः । तद्वत्, स्वाश्रयतयाव्यभिव्यञ्जकानामभिव्यञ्जनस्वभावः प्रदीपे व्यभिचरितोऽप्यशक्यपरित्याग एवेति चेन्न । बहुषुस्थलेषु व्यभिचारस्योक्तत्वेन तादृशस्वभावकल्पनासम्भवात् । अस्माकं मते तु प्राचुर्यात् सिद्धस्य प्रमात्वस्वभावस्य क्वचिद्व्यभिचारमात्रेणापलापासम्भवात् । अत एव **प्रदीपादिष्विति** **आदि**शब्दबहुवचननिर्देशः । वस्तुतोऽभिव्यञ्जकानां न स्वाश्रयतयाऽभिव्यञ्जनस्वभाववत्वम्, येनेदं क्वचित्स्वभावपरिकल्पनमपि युज्येत । न चाभिव्यञ्जकदर्पणव्यक्त्योः स्वाश्रयतया मुखजात्यभिव्यञ्जनं दृश्यते इति वाच्यम्, तयोस्तत्राभिव्यञ्जकत्वाभावादित्याशयेन दूषयति - **न चेति** । तर्हि दर्पणादावभिव्यञ्जकत्वव्यवहारः कथमित्यत्राह — **अपि त्विति** । तुशब्दः शङ्काव्यावर्तकः । मुखादिव्यञ्जक दृष्टिप्रसरणहेतुत्वमात्रेण तत्राभिव्यञ्जकत्वमुपचरितमिति भावः ।

ननु दर्पणादेरभिव्यञ्जकत्वाभावेः कथं मुखादेरन्यथावभास इत्यत्राह - **तद्दोषेति** । तादृशदोषादेर्हेतुत्वं त्वन्वयव्यतिरेकाभ्यां निर्णीयते । इदमत्राकूतम् । दर्पणादौ निजमुखादिप्रतीतिस्थले चाक्षुषतेजसःप्रसरणेन दर्पणसंयोगो जायते । ततश्च चाक्षुषतेजसि निजमुखादि संयोगजनिका प्रतिहत्यात्मिका क्रिया जायते । ततश्च चक्षुस्सम्योगस्य दर्पणनिजमुखाद्योरुभयोरपि सत्वेन 'मुखवद्दर्पणमि'त्याधाराधेयभावेन प्रतीयते । तस्मात्तत्र दर्पणाश्रयकतया मुखाद्यवभासः । न च चक्षुस्सम्योगस्योभयत्र तौल्यादाधाराधेयभावः किं विपर्यस्तो न स्यादिति शङ्क्यम् । अनुभवानुरोधेन यत्संयोगस्य चाक्षुषतेजसि प्रतिहत्यात्मक क्रियाजनकत्वं तस्यैवाधारत्वमन्यस्याधेयत्वमिति कल्पनात् । एवं प्रतिहत्यादिक्रियाजनकत्वमपि दर्पणादि स्वच्छद्रव्यसंयोगस्यैव अन्वयव्यतिरेकानुरोधात् । नातोऽन्यसंयोगात् तादृशक्रियोत्पत्तिः । नन्वेवमुपपादनेऽपि सव्यासव्यविपर्यासः कथम् ? प्रतिहत्यादिक्रियायाः अन्यथावभासमात्रहेतुत्वादिति चेन्न । सव्यासव्यभावस्यापेक्षिकत्वात् । लोके हि स्वस्य यत् सव्यं तदभिमुखस्य दक्षिणं, यत् स्वस्य दक्षिणं तदभिमुखस्य सव्यञ्च । ततश्चाभिमुखतया भासमानदर्पणे सव्यदक्षिणभावोऽपि विपर्यस्त एव । न चाभिमुखं प्रति सव्यदक्षिणभावप्रतीतावपि अभिमुखदर्पणदर्शने स्वस्य कथं तथाप्रतीतिरिति वाच्यम् । अभिमुखदर्पणे विपर्यस्तसव्यदक्षिणभावस्य मुखस्य भेदाग्रहणेन दर्पणदेशांशे भासमानसव्यत्वादिविशिष्टतया स्वस्यग्रहणात्स्वस्यैव तथाप्रतीतिरित्यदोषादिति ।

वस्तुतोऽत्र दर्पणादौ मुखादिसन्निधाने तद्वशादेव मुखादिसजातीयं प्रतिबिम्बं नाम वस्त्वन्तरं जायते । तस्य चोद्भूतरूपमात्रवत्वाचाक्षुषप्रत्यक्षमात्रं, न स्पार्शनं प्रत्यक्षम् । तत्र क्रियाद्युत्पत्तिं प्रति स्वाश्रयसान्निध्यसंबन्धेन मुखादिगतक्रिया कारणम् । मुखाद्यपगमे तद्विनाशश्चेत्यनुभवबलात्स्वीक्रियते । अत एव 'दर्पणे मुखं प्रतिफलती'ति प्रतीतिः । तस्याः 'दर्पणनिष्ठप्रतिबिम्बजनकत्वाश्रयो मुखमि'ति ह्यर्थ इति पक्षे न दर्पणस्य स्वाश्रयतयाभिव्यञ्जकत्वशङ्का । मुखप्रतिबिम्बस्यैव तत्र सत्वेन 'मुखवद्दर्पणमि'ति प्रतीत्युपपत्तेः । 'दर्पणे मम मुखमि'ति प्रतीतिस्तु बिम्बप्रतिबिम्बयोरत्यन्तसादृश्यकृतभेदाग्रहणमूलेति ना काचिदनुपपत्तिः । नन्वेवं दर्पणादेरभिव्यञ्जकत्वाभावे मुखाद्यभिव्यञ्जकत्वं कस्येत्यत्राह - **अभिव्यञ्जकस्त्विति** । **आलोकादिरेव** = आलोकादिसहकृतं प्रतिफलितं चाक्षुषं तेजः । अवधारणेन दर्पणादेरभिव्यञ्जकत्वनिषेधः । एवमहङ्कारस्य आदर्शादिवदपि संविदि दोषजनकत्वं नास्तीत्याह - **न चेहेति** । अहङ्कारस्य स्वच्छद्रव्यत्वाभावात् संविदो ज्ञेयत्वाभावादचाक्षुषत्वाच्चाविषयभूतायां तस्यां नाहङ्कारेण प्रतिफलनरूपदोषोत्पादनसम्भव इति भावः ।

**व्यक्तेस्तु जातिराकार इति तदाश्रयतया प्रतीतिः ; न तु व्यक्तिव्यङ्ग्यत्वात्। अतोऽन्तःकरणभूताहङ्कारस्थतया संविदुपलब्धेर्वस्तुतो दोषतो वा न किञ्चिदिह कारणमिति नाहङ्कारस्य ज्ञातृत्वं तथोपलब्धिर्वा। तस्मात्स्वत एव ज्ञातृतया सिद्ध्यन्नहमर्थ एव प्रत्यगात्मा ; न ज्ञप्तिमात्रम्। अहम्भावविगमे तु ज्ञप्तेरपि न प्रत्यक्त्वसिद्धिरित्युक्तम्। तमोगुणाभिभवात्परागर्थानुभवाभावाच्चाहमर्थस्य विविक्तस्फुटप्रतिभासाभावेऽपि आप्रबोधादहमित्येकाकारेणाऽऽत्मनः स्फुरणात्सुषुप्तावपि नाहम्भावविगमः। भवदभिमताया अनुभूतेरपि तथैव प्रथेति**

---

एवमहङ्कारस्य स्वस्मिन्स्वच्छद्रव्यत्वाद्यभावेन प्रतिबिम्बजनकत्वाभावोऽपि बोध्यः। एवं व्यक्तिनिदर्शनमप्यन्यथयति - **व्यक्तेरि**ति। तुशब्दः परोक्ताद्वैलक्ष्यसूचकः। **आकारः** नित्यतदाश्रयत्वरूपस्वभावः। **तदाश्रयतया प्रतीतिरि**ति। अनेन जातेः व्यक्त्याश्रितत्वेन प्रतीतिर्यथार्थैव। व्यक्तेरभिव्यञ्जकत्वस्वीकारे प्रतीतेः भ्रमत्वं स्यादिति सूचितम्। **न त्वि**ति। अयं भावः - जातिव्यक्त्योरेकेन्द्रियग्राह्यत्वेन जाताविन्द्रियसम्बन्धस्य व्यक्तिद्वारकत्वमिति तावन्मात्रापेक्षितत्वेन व्यक्तेर्व्यञ्जकत्वं व्यक्तिशब्दस्यात्र व्यञ्जकत्वार्थकत्वाभावादिति। एवमुक्तदृष्टान्तानामन्यथाकृतत्वेन स्वाश्रयतयाहङ्कारस्य व्यञ्जकत्वन्नास्तीति प्रकृतमुपसंहरति - **अत** इति। **वस्तुत** इति भाषणं जात्यभिप्रायेण, **दोषत** इति तु मुखाभिप्रायेण। ततश्च जातिग्रहणे व्यक्तौ वस्तुत एव जातिसत्वेन तदुपलब्ध्यादिकम्। मुखग्रहणं तु दर्पणे मुखाभावेऽपि प्रतिफलनरूपदोषवशात्, नियतधर्मत्वप्रतिफलनरूपहेतुद्वयस्याप्यभावान्नात्र तथा सम्भव इति भावः। ज्ञातुरहमर्थस्यैवात्मत्वं निगमयति - **तस्मादि**ति। **न ज्ञप्तिमात्रमि**ति ज्ञप्तेरनात्मत्वे पूर्वोक्तं हेतुं विवृण्वन्नुपसंहरति - **अहंभावे**ति। **अहमर्थो न चेदात्मा** इति पूर्वोक्तश्लोकोऽनेन स्मारितः। **अहंभावविगमे** = अहंबुद्धिविषयत्वाभावे। अहमिदंबुद्धिभ्यामेव प्रत्यक्पराग्विभागादिति भावः। **ज्ञप्तेरपी**त्यनेन स्वयंप्रकाशत्वस्वीकारेऽपि न निर्वाह इति सूचितम्। **प्रत्यक्त्वं** = स्वस्मै भासमानत्वम्।

ननु सर्वाभ्युपेतात्मनोऽपि स्वयंप्रकाशत्वात्सुषुप्तावपि आत्मस्फुरणमावश्यकम्। तच्चाहमर्थस्यात्मत्वे न सम्भवति, सुषुप्तौ 'नाहं खल्वयमेवं संप्रत्यात्मानं जानाम्ययमहमस्मी'ति श्रुतेः 'ममाप्यहं न ज्ञातवानि'ति सुप्तोत्थितपरामर्शाच्चाहमर्थानुभवस्याभावात्। अतोऽनुभूतिस्फुरणमेव तदास्तीति अनुभूतिरेवात्मेत्यत्राह - **तम** इति। **तमोगुणाभिभवात्** = स्वकर्मपरिगृहीतत्रिगुणद्रव्यस्थेन तमोगुणेन मनोवृत्तेर्निरुद्धत्वात्। ततः किमित्यत्राह - **परागि**ति। परस्मै भासमानानां देहेन्द्रियघटपटदीनां सविकल्पकरूपमनोवृत्तिनिरोधेनानुभवाभावादित्यर्थः। अत्र **च**कारः न हेतुद्वयसमुच्चायकः, किन्तु मतान्तरव्यावर्तकस्त्वर्थकः। ततश्च जागरितावस्थानुभाव्यपदार्थानुभवाभावेन न विविक्तस्फुरणम्। विविक्तस्फुरणं हि व्यावर्तकब्राह्मणत्वादिविशिष्टप्रतिभासः। अतस्सकलेतरव्यावृत्ततया स्फुरणाभावः। तत एव स्फुटतया प्रतिभासाभावश्चेत्यर्थः। एतेन 'नाहं खल्वि'ति श्रुतेराभिप्रायोपि वर्णितः। 'सम्प्रत्यात्मानं न जानामी'ति ब्राह्मणत्वादिविशिष्टवेषेणात्मनः स्फुरणाभावं ब्रुवन्ती सा श्रुतिः कथमिवाहमर्थस्यात्मत्वन्न साधयेदिति च भावः। आत्मनः स्फुरणाकारं दर्शयति — **आप्रबोधादि**त्यादिना। **आ प्रबोधात्** = यावत्प्रबोधम्। अनेन स्वप्नादिषु नानाकारविशिष्टत्वेन स्फुरणेऽपि **न** क्षतिरिति सूचितम्। **अहमित्येकाकारेण** = अनुकूलत्व प्रत्यक्त्वाकारेण। अनुकूलत्वप्रत्यक्त्वाकारो हि सर्वात्मसाधारणः। **नाहंभावविगमः** = नाहंप्रत्ययविगम इत्यर्थः। ततश्च सुषुप्तावहमिति स्फुरणेन तदा भासमानः आत्माऽहमर्थ एवेति भावः।

नन्वविशदस्फुरणं तदापि नोपलभ्यत इत्यत्र प्रतिबन्द्या समाधत्ते - **भवदि**ति। **तथैव** = अविविक्तत्वेनास्फुटत्वेन **च**। भवदभिमताया अप्यनुभूतेः तदाविशदस्फुरणाभावेनासत्वमेव प्रसज्येत। अतोऽविशदावभासमात्रेण न वस्तुनोऽसत्त्वं युक्तमिति भावः। ननु पक्षद्वयेऽप्यविशदावभासतौल्यादनुभूतिस्फुरणस्य तदानीं सत्वेन तस्याः कुतो नात्मत्वमिति

**वक्तव्यम् । न हि सुषुप्तोत्थितः कश्चित्, 'अहम्भावावियुक्तार्थान्तरप्रत्यनीकाकारा ज्ञप्तिरहमज्ञानसाक्षितयाऽवतिष्ठे' इत्येवंविधां स्वापसमकालामनुभूतिं परामृशति । एवं हि सुप्तोत्थितस्य परामर्शः, सुखमहमस्वाप्समिति । अनेन प्रत्यवमर्शेन तदानीमप्यहमर्थस्यैवाऽऽत्मनः सुखित्वं ज्ञातृत्वञ्च ज्ञायते ।**

---

चेन्न । सुषुप्तावहमिति स्फुरणेन पराभिमतायाऽनुभूतेरहंत्वानभ्युपगमेनाऽऽनात्मत्वमिति स्फुरणविषयस्यैवात्मत्वाङ्गीकारावश्यकत्वेनानुभूतेरात्मत्वासम्भवात् । एवं सुषुप्तावहमर्थस्फुरणवत् स्वयंप्रकाशानुभूतिस्फुरणसत्वे हि तस्याः आत्मत्वमभ्युपगन्तुं शक्यम् । तदेव नास्तीत्यभिप्रायेणाह - **न हीति** । **अर्थान्तरप्रत्यनीकाकारा** = ज्ञातृज्ञेयादिसमस्तविशेषरहिता । 'यदि सुषुप्तावनुभूतिस्फुरणं स्यात् तदा सुप्तोत्थितस्य समस्तविशेषरहिता ज्ञप्तिरज्ञानसाक्षितयाऽऽसीदि'ति परामर्शस्स्यात् । अतः उत्तरत्र परामर्शाभावेन न तदा अनुभूतिस्मरणमिति नानुभूतेरात्मत्वमिति भावः । यद्यपि 'ज्ञप्तिरहमि'ति न तन्मते परामर्शाकारः । अत एवा**हंभावावियुक्ते**त्यादि पूर्वं भाषितम् । अथापि सुषुप्तौ प्रत्यगात्मनः प्रकाशाभ्युपगमे अहंत्वेनैव स्फुरणं दुस्त्यजमिति तात्पर्यम् । अन्यथा प्रत्यक्त्वासिद्धेः ॥

ननु सुषुप्तिकालीनानुभूतिपरामर्शाभावेनानुभूतिस्फुरणासिद्धिवदहमर्थपरामर्शाभावेनाहमर्थस्फुरणमपि तदा नास्तीत्यत्र **'स्वावसरे निपुणतरमुपपादयिष्याम'** इति प्रागुक्ते स्वपक्षे प्रमाणं दर्शयति - **एवं हीति** । **हि**शब्दः प्रसिद्धौ । परैरप्युदाहृतत्वसूचको वा । उदाहृतपरामर्शसिद्धमर्थमाह - **अनेनेति** । **तदानीमपीति** = स्वापकालेऽपि । यथा जागरादिष्वहमर्थगतसुखित्वज्ञातृत्वविषयकपरामर्शादहमर्थात्मानुवृत्तिः, तथैव स्वापकालेऽप्यहमर्थात्मगतसुखित्वज्ञातृत्वविषयपरामर्शात् अहमर्थानुवृत्तिर्वक्तव्येत्यर्थः । **अहमर्थस्यैवे**ति । 'सुखमहमि'ति हि परामर्शाकार इति भावः । **ज्ञायते** = परामृश्यते, विषयीक्रियत इति यावत् । अयं भावः - 'सुखमहमस्वाप्समि'ति परामर्शेन स्वापकालीनात्मगतसुखित्वज्ञातृत्वयोर्विषयीकरणदहमर्थस्यैव स्वापकालेऽननुवृत्तौ कथं तद्गतसुखित्वादिपरामर्श उत्तरत्र घटेत । अतोऽहमर्थगतसुखित्वादिपरामर्शात्पूर्वं सुखित्वाद्याश्रयाहमर्थानुवृत्तिर्वक्तव्यैवेति नाहमर्थस्यात्मत्वेऽननुवृत्त्यापादनसम्भवः । तस्य च स्वयंप्रकाशत्वेनाहमहमिति स्फुरणं युक्तमेवेति ॥

ननु 'सुखमहमस्वाप्समि'ति परामर्शे पूर्वाननुभूतयोरतीतकालस्वापयोः कथं भानमिति चेत् ? न, तादृशपरामर्शस्य स्वापकालांशयोरनुमितिरूपत्वमन्यत्र परामर्शरूपत्वमिति ज्ञानद्वयरूपत्वस्वीकारेणादोषात् । 'जागराद्यःक्षणः कालपूर्वकः, कालत्वात्, द्वितीयादिक्षणवदि'त्यनुमानेन प्रथममनुमाय, 'तत्कालावच्छिन्नोऽहं ज्ञानसामान्याभावरूपस्वापवान् ज्ञानसामग्रीशून्यत्वादि'त्यनुमानेन स्वापानुमानसम्भवात् । अत एव प्रातः गजाभावाननुभवेऽपि 'प्रातश्चत्वरे गजो नास्ती'ति परामर्श उपपद्यते । अत्र सुखित्वं सुखत्वरूपानुकूलत्वं, ज्ञातृत्वञ्च प्रत्यक्त्वरूपं स्वस्मैभासमानत्वम् । न तु धर्मभूतज्ञानविशेषः, सुषुप्तौ धर्मभूतज्ञानास्फुरणात् । **विषयप्रकाशनवेलायां ज्ञातुरात्मनस्तथैव, न सर्वेषां सर्वदा** इति भाष्यविरोधात् । **तच्चेन्द्रियद्वारान्यवस्थितमि**त्यादि भाष्यविरोधात् । 'पुंस्त्वादिवत्वस्य सतोऽभिव्यक्तियोगादि'ति सूत्रविरोधाच्च । ततश्च 'मन्दमगच्छम् मधुरमगायमि'त्यादिपरामर्शेन तदानींतनमान्द्यमाधुर्यविशिष्टगमनगानानुसन्धानवत्, 'सुखमहमस्वाप्समि'ति परामर्शेऽपि तदानींतनानुकूलत्वप्रत्यक्त्व विशिष्टमहमर्थानुसन्धानेनाहमर्थस्फुरणसिद्धिः ।

ननु 'मन्दमगच्छमि'त्यादौ मान्द्यादेः क्रियाविशेषणत्ववत् 'सुखमहमस्वाप्समि'त्यादावपि सुखादेः क्रियाविशेषणत्वप्रतीत्या नानुकूलत्वप्रत्यक्त्वयोः आत्मधर्मत्वप्रतीतिरिति चेन्न । स्वापक्रियायाः सुखत्वाश्रयत्वासम्भवेन पुरुषद्वारैव वक्तव्यत्वात् । ततश्च सामानाधिकरण्यसंबन्धेन सुखत्वाश्रयत्वं स्वाप एव विशेषणमिति न दोषः । ततश्चायमर्थः - सुखं = सुखत्ववत्, तस्याभेदेन स्वापेऽन्वयः, सुखत्ववदभिन्नः स्वाप इति । सुखत्ववत्वञ्च स्वाश्रयवृत्तित्वरूपपरम्परासम्बन्धेन । स्वं - सुखत्वमनुकूलत्वरूपं, तदाश्रयात्मवृत्त्यभिन्नत्वं स्वापस्य युक्तम् । यद्वा - सुखं सुखवृत्तिः, तथा

**न च वाच्यम् - यथेदानीं सुखं भवति, तथा तदानीमस्वाप्समित्येषा प्रतिपत्तिरिति ; अतद्रूपत्वात् प्रतिपत्तेः। न चाहमर्थस्याऽऽत्मनोऽस्थिरत्वेन तदानीमहमर्थस्य सुखित्वानुसन्धानानुपपत्तिः ; यतः सुषुप्ति-दशायाः प्रागनुभूतं वस्तु सुप्तोत्थितः, 'मयेदं कृतम्', मयेदमनुभूतम्', 'अहमेतदवोचम्' इति परामृशति।**

च 'अनुकूलत्वविशिष्टसुखरूपात्मवृत्त्यभिन्नातीतकालिकस्वापवानहमि'ति परामर्शार्थः। ततश्चात्मनि अनुकूलत्वरूप-सुखत्वं फलितमिति। अथैवं रीत्या 'दुःखमहमस्वाप्समि'ति परामर्शेन सुषुप्तावात्मनः दुःखवत्वभानापत्तिः। न चेष्टापत्तिः, दुःखावस्थापन्न धर्मज्ञानस्य तदाऽस्फुरणात्। न च क्रियाया एव दुःखरूपत्वविशेषणोपपादनसम्भवः। ज्ञानसामान्या-भावरूपक्रियायाः दुःखत्वासम्भवादिति चेन्न। यत्र मध्ये मध्ये हेतुविशेषेण निद्राविच्छेदः तादृशस्थल एवोत्तरत्र 'दुःखमहमस्वाप्समि'ति परामर्शोदयात्, तदा धर्मभूतज्ञाने विषयप्रकाशात्। अननुकूलत्वरूपदुःखवत्वमहमर्थ एव भासते इति दोषाभावात्। तस्मात् सुखविशिष्टात्मस्फुरणं सुषुप्तावस्त्येव। उक्तं च 'स्वापे सुखत्वाभिज्ञानात्तद्विच्छेदे च रोषतः। तदर्थमन्यच्च्यागाच्च श्रुतिस्मृतिशतैरपि'' इति।

ननु सुषुप्त्युत्तरकाले 'सुखमहमस्वाप्समि'ति परामर्शो न सम्भवति। समानविषयकसंस्कारं प्रति अपृथक्सिद्ध-सम्बन्धेनानुभवस्य हेतुत्वे सुषुप्तिदशायां धर्मभूतज्ञानस्य किञ्चिद्विषयकत्वाभावेनापृथक्सिद्धसंबन्धेन प्रत्यक्त्वानुकूलत्व-विशिष्टात्मस्वरूपानुभवस्यात्मन्यसम्भवात् इति चेन्न। समानविषयकसंस्कारं प्रति तादात्म्यापृथक्सिद्धयन्यतरसंबन्धेन पूर्वानुभवस्य हेतुत्वस्वीकारात्। निरुक्तस्थले स्वरूपात्मकानुभवस्यैव संस्कारजनकत्वसम्भवात्। ननु उक्तप्रत्यभिज्ञा-रूपस्य 'सुखमहमस्वाप्समि'त्यस्य प्रत्यक्त्वानुकूलत्वविशिष्टात्मांशे परामर्शरूपत्वन्न सम्भवति। संस्कारजन्यज्ञानस्यैव परामर्शरूपत्वात्। उक्तात्मस्वरूपात्मकानुभवस्य नित्यत्वेन संस्कारजनकत्वाकल्पनात्। पूर्वमतीतानुभवस्य कालान्तर-भाविविषयकस्मृतिजनकतानिर्वाहार्थमेव संस्कारस्य द्वारत्वकल्पनात्। अनित्यानुभवस्थले संस्कारजनकत्वावश्यकत्वेऽपि नित्यानुभवस्थले संस्कारस्यानावश्यकत्वादिति चेन्न। लाघवान्नित्यानित्योभयसाधारणानुभवत्वेनैवानुभवस्य संस्कार-हेतुत्वकल्पनेन नित्यानुभवस्थलेऽपि संस्कारजननात्। वस्तुतः सुषुप्तिदशायां भासमानमानुकूल्यं जाग्रद्दशाविलक्षणमिति तादृशानुकूलत्वादि विशिष्टात्मानुभवस्यानित्यत्वेन तस्य संस्कारजनकत्वमावश्यकमेवेति न दोषः।

अत्रोक्तपरामर्शस्यान्यथोपपत्तिमाशङ्क्य निराकुरुते — **न** चेति। **वाच्यमि**त्यस्योत्तरत्रे**तिकरणेना**न्वयः। **अत**दिति। 'मन्दमगच्छमि'त्यादौ यथेदानीं मान्द्यं भवति तथाऽगच्छमित्यर्थः। अत्र प्रतीतिस्वारस्यान्न तथा स्वीक्रियते। 'तदानीं सुखमस्वाप्सम् , इदानीं दुःख्यामी'ति परामर्शसत्वाच्चेति चाभिप्रायः। ननु 'सुखमहमस्वाप्समि'त्यत्र स्वापस्य कथं परामर्शः। तस्य पूर्वमननुभवात्। अन्यथा सुषुप्तिव्याघातात्। यदि प्रातर्गजाभावन्यायेन योग्यार्थाननुस्मरणलिङ्गेन ज्ञानाभावरूपस्वापानुमानेन तथा व्यवहार इत्युच्यते। तदा दुःखाभावादिरूपानुकूलत्वदीनामपि पूर्वोक्तलिङ्गेनानुमेय-त्वसम्भवात्। अहमर्थाननुभवेऽपि एवं व्यवहारसम्भव इति नैतादृशपरामर्शः सुषुप्तावहमर्थस्फुरणे प्रमाणं भवितुमर्हति इति चेन्न। गत्यभावस्थले परामर्शस्वारस्य भङ्गेऽप्यन्यत्र तथाकरणासम्भवात्। अन्यथोक्तपरामर्शत्रयेऽपि एवं कल्पनेन परामर्शत्वस्यैवासम्भवात्। नन्वस्या परामर्शत्वमिष्टमेव ज्ञानाभावरूपस्वापवत् सुषुप्तावहमर्थविनाशेनाहमर्थतत्प्रकाशा-भावस्य सत्वेन परामर्शस्वारस्यभङ्गस्यावश्यकत्वादित्यत्राह — **न** चेति। **सुखित्वानुसन्धानानुपपत्ति**रिति। स्वापवद-न्यांशयोरप्यनुमेयत्वेनैव 'सुखमहमस्वाप्समि'ति व्यवहार उपपादनीय इति भावः। हेतुमाह - **अत** इति। **मयेदमि**त्यादिना कायिकमानसवाचिकत्रिविधव्यापरविषयकपरामर्शा उक्ताः। सुप्तोत्थितस्य स्वापदशायाः पूर्वमनुभूतवस्तुपरामर्शसत्वेन नाहमर्थस्य तदानीं नाश इति परामर्शस्वारस्यापवादकाभावेन न तत्स्वारस्यं भञ्जनीयमिति भावः।

ननु 'सुखमहमस्वाप्समि'ति परामर्शबलेन न सुषुप्तावहमर्थानुभवसाधनसम्भवः। 'एतावन्तं कालन्न किञ्चिदहम-

**'एतावन्तं कालं न किञ्चिदहमज्ञासिषम्' इति च परामृशतीति चेत् - ततः किम्? । 'न किञ्चित्' इति कृत्स्नप्रतिषेध इति चेन्न, 'नाहमवेदिषम्' इति वेदितुरहमर्थस्यैवानुवृत्तेः वेद्यविषयो हि स प्रतिषेधः । 'न किञ्चित्' इति निषेधस्य कृत्स्नविषयत्वे भवदभिमतानुभूतिरपि प्रतिषिद्धा स्यात् । सुषुप्तिसमये त्वनुसन्धीयमानमहमर्थमात्मानं ज्ञातारम्, अहमिति परामृश्य, 'न किञ्चिदवेदिषम्' इति वेदने तस्य प्रतिषिध्यमाने, तस्मिन् काले निषिध्यमानाया वित्तेः सिद्धिम्, अनुवर्तमानस्य ज्ञातुरहमर्थस्य चासिद्धिम्, अनेनैव, 'न किञ्चिदहमवेदिषम्' इति परामर्शेन साधयंस्तमिममर्थं देवानामेव साधयतु ॥**

**मामप्यहं न ज्ञातवान्' इत्यहमर्थस्यापि तदानीमननुसन्धानं प्रतीयत इति चेत् - स्वानुभवस्ववचनयो**

ज्ञासिषमि'त्यपि सुप्तोत्थितस्य परामर्शसत्वात् । तेन हि 'न किञ्चिदि'त्यहमर्थस्याभावोऽपि निषिध्यते इति शङ्कते - **एतावन्तमिति** । तेन नाहमर्थो निषिध्यते, तन्निषेधकाभावादिति समाधत्ते - **ततः किमिति** । 'न किञ्चिदि'त्यस्य कृत्स्नप्रतिषेधकत्वं मत्वा शङ्कते - **न किञ्चिदिति** । तस्याहमर्थनिषेधकत्वं नास्तीत्याशयेन समाधिमाह **नाहमिति** । अयं भावः - 'एतावन्तं कालं न किञ्चिदहमज्ञासिषमि'ति परामर्शस्य हि 'सुषुप्तिकालावच्छिन्नोऽहं किञ्चिद्विषयकज्ञानाभाववान्' इत्यर्थः । ततश्चाहमर्थस्तावत्सुषुप्तिकालेऽप्यस्तीति सिद्धम् । अन्यथा स्वस्य स्वापरूपवेदनाभावाधिकरणत्वेन सम्प्रति परामर्शायोगात् । ततश्चाहमर्थानुवृत्त्या तस्य स्वयंज्योतित्वश्रुतिविरोधेन तत्प्रकाशनिषेधोऽपि न सम्भवति ।

नन्वहमर्थाभावेऽपि 'राममहं नाद्राक्षमि'त्यादिप्रतीतिरिव 'नाहमवेदिषमि'ति प्रतीतिः सुषुप्तावहमर्थाभावेऽपि किन्न स्यादिति चेन्न, तथा सति परामर्शत्वासम्भवात् । सुप्तोत्थितो ह्येवं ब्रवीति । इष्यते च भवद्भिः परामर्शत्वम् । सुप्तोत्थितस्यास्य परामर्शत्वाभावे च नैतेन सुषुप्तावहमर्थाभावसाधनसम्भवः । न हि सुप्तादन्यस्यैवं परामर्श इति वक्तुं शक्यम् । पूर्वोक्तानुपपत्तेः । 'स एव तु कर्मानुस्मृतिशब्दविधिभ्यः' इत्यादिसूत्रविरोधाच्च । तस्मादहमर्थाननुवृत्तिस्तदा दुरुपपादा । ननु 'न किञ्चिदवेदिषमि'ति अनुभूतौ किञ्चिद्विषयकत्वाभाव उच्यते । ततश्च निर्विषयानिराश्रयाऽनुभूतिरस्मन्मतसिद्धैव सुषुप्तौ चकास्तीति कथमहमर्थानुवृत्तिरिति चेन्न । दत्तोत्तरत्वात् । भाष्ये एतच्छङ्कातत्परिहारद्योतनायैव शङ्काग्रन्थे 'न किञ्चिदिति' सहप्रयोगः, समाधाने 'नाहमिति' सहप्रयोगश्च कृतः । तेन च नञर्थस्याहमर्थ एवान्वयः । न तु ज्ञाधात्वर्थ इति सूचितम् । ततश्च 'देवदत्तो न क्वचिद्गतः' इत्यस्य देवदत्ते किञ्चित्कर्मकत्वाभाववद्गमनबोधकत्वं यथा नानुभवसिद्धं तथाऽत्रापीति भावः । उक्तनिषेधपरामर्शस्य विषयं दर्शयति - **वेद्येति** । परेष्टे बाधकमाह - **न किञ्चिदिति निषेधस्येति** । 'किञ्चिद्विषयकज्ञानाभाववानहमि'त्येव तादृशपरामर्शार्थ इति भावः । ननु वेदननिषेधस्याकृत्स्नविषयत्वेऽनुभूतिव्यतिरिक्तवेदननिषेधविवक्षा किन्न स्यादित्यत्र पूर्वोक्तमेवार्थं सङ्कलय्य दर्शयति - **सुषुप्तीति** । **अहमिति परामृश्येत्यनेन** सुषुप्तावहमर्थाननुवृत्तिकथनं परामर्शविरुद्धमिति सूचितम् । वेदने तस्य प्रतिषिध्यमाने वेदनाननुवृत्तिरुक्तपरामर्शस्वरससिद्धेति सूचितम् । परामर्शो यादृशार्थकः । तस्य तद्विपरीतार्थकथनं न युक्तमित्यभिप्रायेणोपालभते — **देवानामेवेति** । देवानां = प्रतिवक्तुमनर्हणां, प्रतिमारूपाणाम्, अप्रतिवादिनां त्वत्पक्षपातिनामिति तात्पर्यम् ।

अथ 'मामप्यहं न ज्ञातवानि'ति सुप्तोत्थितपरामर्शस्य सुषुप्तावहमर्थाननुवृत्तिबोधकत्वनिरासार्थं शङ्कते — **मामिति** । अयं भावः - 'न किञ्चिदहमज्ञासिषमि'ति परामर्शे हि 'न किञ्चिदि'त्यस्याहमर्थनिषेधकत्वन्न सम्भवतीत्युक्तम् । 'मामप्यहं न ज्ञातवानि'ति परामर्शे तु विशेषत एवाहमर्थानुभवननिषेधः क्रियते । तस्मादेतादृशस्फुटप्रतीत्या सुषुप्तावहमर्थानुभवो नास्तीत्येवाभ्युपेत्यमिति । अहमर्थानुवृत्तिनिषेधं ब्रुवतो भवतः स्ववाक्येन स्वपरामर्शेन च स्वाभीष्टविरोध इत्याशयेन समाधत्ते — **स्वेति** । **हि**शब्दः विरोधस्फुटत्वसूचकः । अयं भावः - 'मद्विषयकज्ञानाभाववानहमि'ति हि

**विरोधमपि न जानन्ति भवन्तः। 'अहं मां न ज्ञातवान्' इति ह्यनुभववचने। मामिति किं निषिध्यत इति चेत् - साधु पृष्टं भवता। तदुच्यते - अहमर्थस्य ज्ञातुरनुवृत्तेर्न स्वरूपं निषिध्यते। अपि तु प्रबोधसमयेऽनुसन्धीयमानस्याहमर्थस्य वर्णाश्रमादिविशिष्टता। अहं मां न ज्ञातवानित्युक्ते विषयो विवेचनीयः। जागरितावस्थानुसंहितजात्यादिविशिष्टोऽस्मदर्थो मामित्यंशस्य विषयः। स्वाप्ययावस्थाप्रसिद्धाविशदस्वानुभवैकतानश्चाहमर्थोऽहमित्यंशस्य विषयः। 'अत्र सुप्तोऽहम्', 'ईदृशोऽहमि'ति च 'मामपि न ज्ञातवानहमि'त्येव खल्वनुभवप्रकारः।**

**किञ्च सुषुप्तावात्माऽज्ञानसाक्षित्वेनाऽऽस्त इति हि भवदीया प्रक्रिया। साक्षित्वञ्च साक्षाज्ज्ञातृत्वमेव। न ह्यजानतः साक्षित्वम्। ज्ञातैव हि लोकवेदयोः साक्षीति व्यपदिश्यते; न ज्ञानमात्रम्। स्मरति च भगवान्**

---

तत्परामर्शस्यार्थः। तत्र मद्विषयकज्ञानाभाववत्त्वेनानुवृत्ताहमर्थस्याननुवृत्तिकथनमनुभवविरुद्धमुक्तपरामर्शविरुद्धश्चेति। तर्हि 'मामपी'त्यंशस्य का गतिरिति शङ्कते — **मामिति**। पूर्ववदसमीचीनप्रश्नाभावात् सानुकम्पं श्लाघते — **साध्विति**। **तदुच्यते** = सामीचीन्येन पृष्टत्वात्समीचीनमुत्तरमुच्यत इत्यर्थः। अनुभववचनविरोधादहमर्थस्वरूपनिषेधो दुःशक इति दर्शयति — **अहमर्थस्येति**। तर्हि निषेध्यं किमित्यत्राह — **अपि त्विति**। **वर्णाश्रममादिविशिष्टता** = उक्तविशिष्टत्वाभिमानः।

यद्वा - ज्ञेयत्वेनेति शेषः। अयमाशयः - 'सविशेषणे हि विधिनिषेधौ सति विशेष्यबाधे विशेषणमुपसङ्क्रामत' इति न्यायेन सुषुप्तावहमर्थाननुवृत्तेर्बाधितत्वेन 'न मामि'ति वर्णाश्रमपण्डितत्वादिविशिष्टात्मनिषेधः विशेषणमात्रावलम्बन इति। उक्तपरामर्शविषयविवेचनपूर्वकमुक्तार्थं विवृणोति - **अहमिति**। मामित्यंशस्य विषयं दर्शयति - **जागरितेति**। अहमंशस्य विषयं दर्शयति - **स्वाप्ययेति**। एवं विषयविवेचनेन फलितार्थमाह - **अत्रेति**। अयं भावः - यच्च सामग्र्यभावात् तदा न प्रकाशते तस्यैव निषेध्यत्वं, यत्त्वनन्यापेक्षं प्रकाशते तस्यैवानुवृत्तिर्वक्तव्येति तद्विपर्ययोऽनुपपन्नः। अतो प्रकारभूतवर्णादिवैशिष्ट्यमेव निषेध्यम्। अत एव 'तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमि'ति श्रुत्यन्तरेऽपि वर्णादिवैशिष्ट्यमेव निषिध्दमिति भावः। 'नाहं खल्वयमेवमि'ति श्रुतेरप्यनेन निर्वाहः कृतः। ननु 'विनाशमेवापीतो भवती'ति अहमर्थविनाशोक्त्या कथं तदनुवृत्तिकथनम्? उच्यते - तत्प्रकारेणोक्तपुरुषार्थाभावेनासत्कल्पत्वे तादृशश्रुतेस्तात्पर्यात्। सूत्रकारेणापि 'स एवत्वि'ति सूत्रेण सुप्तोत्थितयोरैक्यस्य स्थापयिष्यमाणत्वाच्च। अतः सुषुप्तौ नाहमर्थविनाशः नापि तदननुवृत्तिः नापि च तदप्रकाशः इति सिद्धम्।

एवं स्वमतेन सुषुप्तावहमर्थस्फुरणमुपपद्यभवन्मतेऽपि आत्मभूताहमर्थस्फुरणमावश्यकमिति दर्शयति — **किञ्चेति**। नन्वस्त्वस्मदभिमतात्मन अज्ञानसाक्षित्वरूपतत्प्रकाशात्मत्वं, ततः किमित्यत्राह — **साक्षित्वमिति**। **साक्षात् ज्ञातृत्वं** = मुख्यज्ञातृत्वं, द्रष्टृत्वपर्यवसितम्। यद्यद्रष्टरि ज्ञातृशब्दः प्रयुज्यते, तर्हि तत्र त्वौपचारिकत्वमेव। तावतापि तन्न ज्ञानपरम्। ज्ञानाश्रयपरमेवेति भावः। साक्षिशब्दस्य साक्षात्कर्तर्येव शक्तिरित्यत्र लोकवेदसम्मतिप्रदर्शनेन दृढयति — **ज्ञातैवेति**। **न ज्ञानमात्रमिति**। विशिष्टवाचकशब्दस्य केवलविशेषणमात्रशक्तेस्सर्वसिद्धान्तविरुद्धत्वेन साक्षिशब्दस्य साक्षात्काराश्रयवाचकस्य न ज्ञानमात्रे शक्तिस्वीकारसम्भवः। त्वयापि विशिष्टवाचकस्य विशेषणमात्रे शक्त्यनभ्युपगमात्। अत एव विशिष्टवाचिसत्यादिपदानां जहदजहल्लक्षणा भवद्भिरभ्युपगम्यते इति भावः। ननु साक्षिशब्दस्य साक्षात्कारे एव शक्तिः। तदाश्रयेतु लक्षणा, अतो न दोष इति चेन्न। लोकवेदविरुद्धशक्तिकल्पनाया अनुचितत्वात्। शब्दानुशासनविरुद्धत्वाच्च। अनुशासनविरोधं दर्शयति - **स्मरतीति**। **साक्षिशब्दं स्मरतीत्यन्वयः**।

**पाणिनिः,** (अष्टा.५.२.९१) **'साक्षाद्द्रष्टरि सञ्ज्ञायाम्' इति साक्षाज्ज्ञातर्येव साक्षिशब्दम् । स चायं साक्षी, जानामीति प्रतीयमानोऽस्मदर्थ एवेति कुतस्तदानीमहमर्थो न प्रतीयेत । आत्मने स्वयमवभासमानोऽहमित्येवावभासत इति स्वापाद्यवस्थास्वप्यात्मा प्रकाशमानोऽहमित्येवावभासत इति सिद्धम् ।**

**यत्तु, मोक्षदशायामहमर्थो नानुवर्तत इति - तदपेशलम् । तथा सत्यात्मनाश एवापवर्गः प्रकारान्तरेण प्रतिज्ञातः स्यात् । न चाहमर्थो धर्ममात्रम् ; येन तद्विगमेऽप्यविद्यानिवृत्ताविव स्वरूपमवतिष्ठेत । प्रत्युत स्वरूपमेवाहमर्थ आत्मनः । ज्ञानं तु तस्य धर्मः, 'अहं जानामि', 'ज्ञानं मे जातम्' इति चाहमर्थधर्मतया ज्ञानप्रतीतेरेव ॥**

**अपि च यः परमार्थतो भ्रान्त्या वाऽऽध्यात्मिकादिदुःखैर्दुःखितया स्वात्मानमनुसन्धत्ते 'अहं दुःखी' इति, 'सर्वमेतद्दुःखजातमपुनर्भवमपोह्य कथमहमनाकुलः स्वस्थो भवेयम्' इत्युत्पन्नमोक्षरागः स एव तत्साधने प्रवर्तते । स साधनानुष्ठानेन, यद्यहमेव न भविष्यामीत्यवगच्छेत्; अपसर्पेदेवासौ मोक्षकथाप्रस्तावात् ।**

---

नन्वस्तु सुषुप्तौ साक्षिणः प्रकाशः, तावता **अहमर्थप्रकाशः कथमित्यत्राह — स** इति । **सः** = लोकवेदव्यवहारात् ज्ञातृत्वेन सिद्धः । **अयं** = शब्दानुशासनात् तथात्वेन सिद्धः । अयं भावः - जागरितावस्थासु 'जानामी'ति ज्ञानाश्रयत्वेन प्रतीयमानोऽहमर्थ एवेति पूर्वं स्थापितम् । साक्षित्वमपि ज्ञानाश्रयत्वमेवेति तथात्वमहर्थस्यैव । ततश्च सुषुप्तौ साक्षित्वाश्रयात्मस्फूर्तिरहमर्थस्फूर्तिरेव । कथं तदाऽहमर्थाप्रतीतिरिति ॥ सुषुप्तिकालीन आत्मा 'अहमि'त्येवावभासते । स्वस्मै भासमानत्वादित्यनुमानेनापि अहमर्थस्फुरणं सुषुप्तौ सिध्यति । अन्यथा स्वस्मै भासमानत्वं त्वदभिमतं न सिध्येदित्याशयेनाह — **आत्मने** इति । उक्तानुमाने जाग्रदात्मा निदर्शनम् । अत्र सुषुप्तात्मनो 'अहमि'ति भासमानत्वं साध्यते । उत्तरत्र मुक्तात्मन इति भिदा । अतो न पौनरुक्त्याशङ्का ।

एवं सुषुप्तौ अविशदावभासस्य सर्वसम्मतत्वात् श्रुतिपरामर्शस्वारस्यात्, साक्षित्वप्रत्यक्त्वानुपपत्त्याचाह**मर्थस्फुरणं साधितम्**िति। एतेन **'सुषुप्ति मुक्त्योर्नान्वेती'**ति पूर्वोक्ते एकदेशः दूषितः । अथावशिष्टमनूद्य निराकरोति — **यत्त्विति** । **अपेशलं** = न मनोज्ञम् । न युक्तियुक्तमिति यावत् । आत्मभूतज्ञानसन्ततेः विनाशमेव मोक्षमभ्युपयतः सौगतान्प्रति त्वदुक्तो दोषः तवापि प्रसरतीत्याह - **तथा सतीति** । **प्रकारान्तरेणेति** । सौगतास्तु ज्ञानरूपात्मस्वरूपस्यैव नाश इति कण्ठोक्त्या वदन्ति । त्वं त्वात्मनाशमेवाहमर्थनाश इति शब्दान्तरेण ब्रवीषि । अतश्च मोक्षे दुःखसुखोभयाभावात् पुरुषार्थापुरुषार्थमिश्र एव मोक्षस्स्यादिति दोषः । तस्य तव च समान इति भावः । नन्वहमर्थस्यात्मभूतानुभूतौ कल्पितत्वेन तद्धर्मत्वाद्देहादिवत्तद्विगमेऽपि न स्वरूपनाशप्रसङ्ग इत्यत्राह - **न चेति** । पूर्वमेवाहमर्थस्यानुभूतिधर्मत्वस्य निरासादिति भावः । वस्तुतस्त्वदुक्तिवैपरीत्यमेव लोकानुभवसिद्धमित्याह — **प्रत्युतेति** । अहमर्थस्यात्मत्वेन समर्थितत्वादिति भावः । अहमर्थस्वरूपत्वे ज्ञानस्य तद्धर्मत्वे च प्रतीतिं दर्शयति — **अहमिति** । यद्यप्येकैव प्रतीतिरुभयसाधिका, अथाप्यन्यथासिद्धिसम्भावनाशङ्क्या द्वितीयप्रतीत्युदाहरणम् । तत्र 'मे' इति व्यधिकरणनिर्देशस्य न कथञ्चिदप्यन्यथासिद्धिरिति भावः । एवकारो दत्तोत्तरत्वव्यञ्जकः ।

मोक्षदशायामहमर्थानुवृत्तौ हेत्वन्तरमाह - **अपि चेति** । परमार्थत इति स्वमताभिसन्धिः । **भ्रान्त्येति** परगताभिसन्धिः । अयं भावः - कस्यचित् परमार्थतया स्वस्य दुःखवत्त्वज्ञाने सः तन्निवृत्त्यनगुणसाधानुष्ठाने प्रवर्तते । न तु दुःखाश्रयस्वनिवृत्त्यर्थम् । एवं स्वस्य भ्रान्तिसिद्धदुःखित्वज्ञाने तादृशभ्रमनिवृत्त्यर्थे उपाये प्रवर्तते । न तु भ्रमाश्रय-

**ततश्चाधिकारिविरहादेव सर्वं मोक्षशास्त्रमप्रमाणं स्यात् ॥**

**अहमुपलक्षितं प्रकाशमात्रमपवर्गेऽवतिष्ठत इति चेत् - किमनेन? मयि नष्टेऽपि किमपि प्रकाशमात्रमपवर्गेऽवतिष्ठत इति मत्वा न हि कश्चिद्बुद्धिपूर्वकारी प्रयतते। अतोऽहमर्थस्यैव ज्ञातृतया सिद्ध्यतः प्रत्यगात्मत्वम्। स च प्रत्यगात्मा मुक्तावप्यहमित्येव प्रकाशते, स्वस्मै प्रकाशमानत्वात्। यो यः स्वस्मै प्रकाशते, स सर्वोऽहमित्येव प्रकाशते; यथा तथावभासमानत्वेनोभयवादिसम्मतः संसार्यात्मा। यः पुनरहमिति न चकास्ति, नासौ स्वस्मै प्रकाशते, यथा घटादिः। स्वस्मै प्रकाशते चायं मुक्तात्मा। तस्मादहमित्येव प्रकाशते।**

---

स्वविनाशार्थम्। यदि स्वस्यैव साधनानुष्ठाने नाश इति जानीयात्तर्हि न कदाप्युपायानुष्ठाने प्रवर्तेत इति। ततः किमित्यत्राह — **ततश्चेति**। अननुष्ठानलक्षणाप्रामाण्यं मोक्षशास्त्रस्य प्रसज्येदिति भावः। पूर्वं प्रवृत्त्यनुपपत्तिरुक्ता। अत्र तु शास्त्रप्रामाण्यानुपपत्तिरुक्ता इति वा। नन्वहमर्थविनाशेऽपि तदुपलक्षितस्य प्रकाशस्यापवर्गेऽनुवृत्त्या न प्रवृत्त्याद्यनुपपत्तिरिति शङ्कते - **अहमुपलक्षितम**िति। तावतापि प्रवृत्त्यनुपपत्तिर्दुरुद्धरेत्यभिप्रायेणोपालभते - **किमिति**। प्रवृत्त्यनुपपत्तिमुद्धाटयति — **मयीति**। सम्यगपरामर्श्यकारिणः स्वदुःखविनाशाय स्वनाशप्रयोजकविषपानादिक्रूरकर्मकारित्वमस्तीत्यत उक्तं **बुद्धिपूर्वकारी**ति। अबुद्धिपूर्वकारिवत् साधने प्रवृत्तावपि सौगतादिवत् मोक्षस्यापुरुषार्थत्वं भवतां मते इति प्रागेव दर्शितम्। भवत्सिद्धान्तिनामविवेकित्वापत्तिश्च। वस्तुतो विषपानादि कर्तुरपि न स्वविनाशः। देहादेरनित्यत्वेन नाशेऽपि नित्यस्यात्मनो नाशाभावात्। तत्र देहादिवियोगकरणमात्रेण स्वनाश इति व्यवहारात्। पूर्वत्र ज्ञातुरात्मत्वे इयं युक्तिः प्रदर्शिता। अत्र तु मुक्तिदशानुवृत्तौ इति भिदा। स्वोक्त विवरणं भाष्यकृत्यमित्यपि पठन्ति। एवं **निरस्तेति** श्लोकत्रयं पूर्वोक्तं विवृतञ्च। उपसंहरति - **अत** इति। **अतः** = मुक्तिदशायामप्यहमर्थानुवृत्तेरुक्तत्वात्। साक्षिशब्देन फलितमर्थमाह — **ज्ञातृतया सिध्यत** इति। सर्व दशास्वप्यहमर्थस्यानुवृत्तेस्स्थापितत्वाज्ज्ञातुरहमर्थस्य प्रत्यगात्मत्वे न किञ्चिद्बाधकमिति भावः।

एवं श्रुत्यर्थापत्त्या मुक्तावहमर्थानुवृत्तिरुक्ता। अथ तत्राप्यहमिति स्फुरणान्नाहमर्थाननुवृत्तिरिति हृदि निधायाहमर्थस्फुरणमनुमानेन साधयति — **स चेति**। **पूर्वमपि हि आप्रबोधादहमित्येकाकारेण स्फुरणात्सुषुप्तावपि नाहम्भाव विगम** इति भाषितम्। 'मुक्तिकालावच्छिन्नः प्रत्यगात्माऽहमिति व्यवहारार्हतया प्रकाशवान्, स्वस्मै प्रकाशमानत्वात्, यथा संसार्यात्मा' इत्यनुमानं विवक्षितम्। अतो न साध्याविशेषः। नापि पक्षस्य दृष्टान्ताविशेषः। सम्मतविमतभेदेन तद्विभागात्। नापि हेतोरप्रयोजकत्वम्। प्रत्यक्त्वाभावप्रसङ्गस्यानुकूलतर्कस्य सत्त्वात्। अन्वयव्यतिरेकिण एवानुमानत्वमिति ब्रुवतः सन्तोषाय व्याप्तिद्वयोपादानम्। अत्र पञ्चावयवोपपादनं सर्वत्र पञ्चावयवप्रयोग एव कर्तव्य इति नियमसूचनायेति न मन्तव्यम्। परन्तु यावताऽवयवोपादानेन प्रतिवादिनोऽर्थनिश्चयः तावन्तोऽवयवाः प्रयोक्तव्याः। अत्र कैश्चिदाद्यत्रयावयवप्रयोग एवेष्यते। कैश्चित्त्वन्त्यत्र्यवयवप्रयोगः। अस्माकं तूभयधापि। उक्तञ्च सर्वार्थसिद्धौ — 'अनुदाहरणान्तान्वा यद्वोदाहरणादीकान्' इत्युक्तक्रमेण त्र्यवयवत्वमेव प्रायेण परिपूर्णत्वमिति। न चैतावता पञ्चावयवप्रयोगोऽनुपपन्न इति शङ्क्यम्, उक्तभाष्यानुरोधेन तस्यापि सम्मतत्वात्। उक्तं चेदमपि 'अवयवपञ्चावयवयोर्द्वयोरपि सम्मतत्वात्। असत्पक्षवादिना त्र्यवयवप्रयोगे पञ्चावयवप्रयोगे च न न्यूनाधिकभावप्रसङ्ग इति।

नन्वेवं सति भवतां नियमो न स्यात्? अनियमस्यैव नियमत्वात्। प्रतिवादिनो यावदवयवप्रयोगेऽर्थावबोधः, तावदवयवाः प्रयोक्तव्या इति नियमस्योक्तत्वाच्च। नन्वहमिति प्रकाशमानस्य संसारदशायामज्ञत्वसंसारित्वादिसहचरि-

**न चाहमिति प्रकाशमानत्वेन तस्याज्ञत्वसंसारित्वादिप्रसङ्गः ; मोक्षविरोधात् , अज्ञत्वाद्यहेतुत्वाच्चाहम्प्रत्ययस्य । अज्ञानं नाम स्वरूपाज्ञानमन्यथाज्ञानं विपरीतज्ञानं वा । अहमित्येवाऽऽत्मनः स्वरूपमिति, स्वरूपज्ञानरूपोऽहम्प्रत्ययो नाज्ञत्वमापादयति; कुतः संसारित्वम् ? अपि तु तद्विरोधित्वान्नाशयत्येव ।**

**ब्रह्मात्मभावापरोक्ष्यनिर्धूतनिरवशेषाविद्यानामपि वामदेवादीनां अहमित्येवात्मानुभवदर्शनाच्च । श्रूयते हि -** (बृ.३.४.१०.) **'तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपदे अहं मनुरभवं सूर्यश्चेति'**, (अथर्वशिरः९.) **'अहमेकः प्रथममासं वर्तामि च भविष्यामि च'**, **इत्यादि । सकलेतराज्ञानविरोधिनः सच्छब्दप्रत्ययमात्रभाजः परस्य ब्रह्मणो व्यवहारोऽप्येवमेव -** (छा.६.३.२.) **'हन्ताहमिमास्तिस्रो देवताः'**, (तै.६.२.) (छा.६.२.३) **'बहु स्यां प्रजायेय'**, **'स ईक्षत लोकान्नु सृजा इति'** (ऐतरेय.१.१.१.) **। तथा** (गीता.१५.१८.) **'यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।**

---

तत्त्वदर्शनेन मुक्तावात्मनोऽहमिति भासमानत्वेऽज्ञत्वादिप्रसङ्गस्स्यादिति शङ्कते — **न चेति** । **आदि**शब्देन रागद्वेषादिग्रहणम् । केवलसाहचर्यमात्रमप्रयोजकमतिप्रसञ्जकञ्चेत्याशयेन दूषयति — **मोक्षेति** । 'पश्यति, न पश्यो मृत्युं पश्यति' इत्यादिमुक्तिविषयकश्रुतिविरोधेन व्याप्तेर्भङ्गादिति भावः । एवमहमिति भासमानत्वस्याज्ञत्वादिप्रयुक्तत्वमेव नास्तीत्याह - **अज्ञत्वेति** । अयं भावः - अज्ञत्वादेः कर्मोपाधिकत्वेन मुक्तौ सर्वकर्मक्षये कथं तदुपाधिकाज्ञत्वादि प्रसङ्ग इति । अनेनाज्ञत्वादिप्रसङ्गस्य सोपाधिकत्वञ्चार्थाद्दर्शितम् । यदि तु सहदर्शनमात्रेण मुक्तावज्ञत्वाद्यापादनं तदा त्वदभिमतानुभूतिसंसारित्वादीनामपि सहचारदर्शनेन मुक्तावप्यज्ञत्वाद्यापादनसम्भवः । तत्राप्यात्मभूतानुभूतेः प्रकाशमानत्वात् । अहेतुत्वविवरणार्थमज्ञत्वस्य रूपं विवृणोति - **अज्ञानमिति** । **स्वरूपाज्ञानं** = कर्मतिरोधानेन स्वरूपगोचरज्ञानप्रसराभावः । अन्यथाज्ञानं रजःकार्यम् । विपरीतज्ञानं च तमःकार्यम् । गीयते च 'अयथावत्प्रजानाति बुद्धिस्सा पार्थ राजसी । अधर्मं धर्ममिति या मन्यते तमसावृता । सर्वार्थान् विपरीतांश्च बुद्धिस्सा पार्थ तामसी' इति । **ज्ञानरूपयोः** = अन्यथाज्ञानविपरीतज्ञानयोरज्ञानशब्दार्थत्वं सम्यग्ज्ञानान्यत्वात् तद्विरुद्धत्वाद्वा । उक्ताज्ञानेषु न कुत्राप्यहंप्रत्ययस्य प्रयोजकत्वमित्याह — **अहमिति** । एवमज्ञानप्रसङ्गाभावेन तत्फलभूतसंसारित्वप्रसङ्गोऽपि नास्तीत्याह — **कुत** इति । अहंप्रत्ययस्यैव स्वरूपज्ञानरूपत्वेन कर्मरूपप्रतिबन्धकविरहे स्वरूपज्ञानगोचरप्रसरणसत्वेन कथमज्ञत्वप्रसङ्ग इति भावः । वस्तुतः आत्मतत्त्वज्ञानस्याज्ञाननिवर्तकत्वेन शास्त्रसिद्धत्वात् मुक्तौ च तद्विरोध्यात्मतत्त्वज्ञानसत्वेनाज्ञत्वनाश एवेत्याह — **अपित्विति** । **एव**कारः उक्तप्रसङ्गस्य कथञ्चिदपि साङ्गत्याभावसूचकः ।

अहमर्थस्याज्ञत्वाद्यनापादकत्वं तत्त्वविदामप्यहमर्थप्रकाशबोधकश्रुतिसिद्धमित्यभिप्रायेणाह — **ब्रह्मात्मेति** । अनेन वामदेवादीनामज्ञत्वप्रसक्तिरेव नास्तीति सूचितम् । अतोऽहंप्रत्ययस्याज्ञत्वादिहेतुत्वाभावेन मुक्तावहमिति भासमानत्वहेतुनाज्ञत्वाद्यापादनमनुपपन्नमिति भावः । अनेनार्थात् मुक्तिदशायामहमर्थानुवृत्तिरप्युक्ता भवति । उक्तार्थे श्रुतीः प्रमाणयति - **श्रूयते हीति** । **हिः** प्रसिद्धौ । यद्वा - एतावता मुक्तावहमर्थानुवृत्ति तत्प्रकाशयोरनुकूलतर्कमुक्त्वा तदनुग्राह्याः श्रुतयस्सन्तीत्याह - **श्रूयते हीति** । अत्र तु **हिः** स्वरसः । **तत्** = जगत्कारणं ब्रह्म । **पश्यन्** = स्वान्तरात्मत्वेन पश्यन् । एवमज्ञत्वगन्धशून्यस्य स्वतस्सर्वज्ञस्य परब्रह्मणोऽपि 'अहमि'ति व्यवहासत्वेन नाज्ञत्वाद्यापादकत्वं तस्येत्याह — **सकलेति** । सर्वथाऽज्ञाननिवर्तकस्य स्वस्य कथमज्ञानाश्रयत्वमिति भावः । **सच्छब्देति** । सच्छब्दस्य सदिति प्रत्ययस्य च विषयभूतस्य वाक्यद्वये अहम्प्रत्यय आक्षिप्तः । अनेनाहङ्कारसृष्टेः पूर्वमप्यहंप्रत्ययसत्वेन नाहङ्कारस्य तद्विषयत्वमिति सूचितम् । स्मृतावप्येवं व्यवहार इत्याह — **तथेति** ।

**यस्मादिति** । क्षरान्तर्भूतस्याहङ्कारस्य क्षराक्षरान्यत्वं विरुद्धमिति भावः । **लोके** - स्मृतौ । अयमात्मेति ...

**अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः'** (गीता.१०.२०.) **'अहमात्मा गुडाकेश'**, (गी.२.१२.) **'न त्वेवाहं जातु नासम्'**, (गी.७.६.) **'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा'**, (गी.१०.८.) **'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते'**, (गी१२.७.) **'तेषामहं समुद्धर्ता मृत्युसंसारसागरात्'**, (गी.१४.४.) **'अहं बीजप्रदः पिता'**, (गी.७.२६.) **'वेदाहं समतीतानि' इत्यादिषु ॥**

**यद्यहमित्येवात्मनः स्वरूपम्, कथं तर्ह्यहङ्कारस्य क्षेत्रान्तर्भावो भगवतोपदिश्यते,** (गी.१३.५.) **'महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च' इति । उच्यते - स्वरूपोपदेशेषु सर्वेषु अहमित्येवोपदेशात्तथैवात्मस्वरूपप्रतिपत्तेश्चाहमित्येव प्रत्यगात्मनस्स्वरूपम् । अव्यक्तपरिणामभेदस्याहङ्कारस्य क्षेत्रान्तर्भावो भगवतैवोपदिश्यते । स त्वनात्मनि देहेऽहम्भावकरणहेतुत्वेनाहङ्कार इत्युच्यते । अस्य त्वहङ्कारशब्दस्याभूततद्भावेऽर्थे च्विप्रत्ययमुत्पाद्य**

---

सर्वभूताशयस्थितः इत्युपरि वाक्यम् । अचेतनस्य चिदचिदन्तरात्मत्वं विरुद्धमित्यभिप्रायः । **न त्विति** - उत्पत्तिविनाशवतस्तद्रहितत्वं विरुद्धमिति भावः । **अहमिति** । अन्यस्य जन्यस्य सर्वकारणत्वं विरुद्धमित्याशयः । **प्रभवः** = उत्पत्तिस्थानम् । **प्रलयः** = लयस्थानम् । **तेषामिति** । अन्यस्य संसरतः संसारमोचकत्वं विरुद्धमिति भावः । **अहमित्य**चेतनस्य स्वसङ्कल्पेन बीजाधानकर्तृत्वं विरुद्धमिति भावः । **वेदेति** । अतीतानागतादिसर्वविषयकज्ञातृत्वमन्यस्य विरुद्धमित्यभिप्रायः । एवं चेतनाचेननासम्भावितोत्कृष्टधर्मवतः परब्रह्मणोऽहंशब्देन व्यवहारान्नाज्ञत्वाद्यापादनप्रसक्तिलेशोऽपीति भावः । न चोदाहृतेषु अहंशब्दस्य तदुपलक्षितप्रकाशे लक्षणेति वक्तुं शक्यम्, मुख्यर्थेऽनुपपत्त्यभावात् । अनेकवाक्येषु लक्षणाकल्पनेन गौरवाच्च । 'अहमज्ञानजं तम' इत्यादि **आदिशब्दग्राह्यम्** ।

अहङ्कारशब्दोऽव्यक्तपरिणामेऽहङ्कारतत्त्वरूपान्तःकरणे तदकृतिविशेषे 'गर्वोऽभिमानोऽहङ्कार' इत्युक्ते च प्रयुज्यते । अव्यक्तपरिणामे प्रयोगः 'महाभूतान्यहङ्कार' इति शास्त्रसिद्धः । अन्तःकरणवृत्तौ प्रयोगोऽपि 'अहङ्कारं बलं दर्पमि'त्यादि शास्त्रसिद्धः । एवमहङ्कारशब्दोऽहंग्रहणोपासनवाचित्वेनापि प्रयुज्यते । यथा भूमविद्यायाम् 'अथाऽतोहङ्कारादेश' इति । तत्रान्तःकरणे प्रयुक्तोऽहङ्कारशब्दः 'अनहमहं क्रियतेऽनेनेति' करणे व्युत्पन्नः च्विप्रत्ययगर्भः । तत्राहंशब्दः देहलाक्षणिकः । त्विप्रत्ययार्थस्तु तादात्म्यसंबन्धावच्छिन्नाहमर्थनिष्ठप्रकारतानिरूपितविशेष्यत्वम् । तत्राहंलक्ष्यार्थदेहस्याधेयत्वस्वनिष्ठपूर्वकालावच्छिन्नाभावप्रतियोगित्वोभयसंबन्धेनान्वयः । विशेष्यतायाश्च कृञ्धात्वर्थे भ्रमात्मकज्ञाने प्रयोजकतयान्वयः । ततश्चोक्तोभयसंबन्धेन देहविशिष्टताद्दशविशेष्यताप्रयोजकभ्रमहेतुरित्यर्थः । तमोगुणाभिव्यक्तिविशिष्टाहङ्कारस्य दोषविधया भ्रमं प्रतिहेतुत्वादव्यक्तपरिणामेऽहङ्कारशब्दवाच्यत्वोपपत्तिः । तमोगुणाभिव्यक्तेः पूर्वमुक्तविशेष्यत्वाभावस्य देहे सत्त्वेन च्विप्रत्ययार्थस्याप्युपपत्तिः । द्वितीयस्तु भावे व्युत्पन्नः च्विप्रत्ययगर्भः, गर्वपरः । तृतीयस्तु भावे व्युत्पन्नोऽपि तदगर्भाऽहंग्रहोपसमपर इत्येतेषां भेद इति स्थितिः । तत्रोक्तं भेदमजानानोऽहङ्ग्रहोपासनपराहङ्कारशब्दघटकाहमर्थस्यान्तःकरणे प्रयुज्यमानाहङ्कारस्य चाभेदं मनसिनिधायाहमित्यस्यात्मस्वरूपत्वं न सम्भवति । तथा सति भगवता तस्य क्षेत्रान्तर्भावोपदेशानुपपत्तेरिति शङ्कते — **यदीति** ।

समाधत्ते — **उच्यत** इति । तत्र प्रथममहमित्यस्यात्मस्वरूपत्वं पूर्वोदाहृतानेकश्रुतिस्मृत्यादिवाक्यानुसारेणाभ्युपेत्यमिति प्रतिजानीते — **स्वरूपेति** । अनेन स्वरूपोपदेशपरशास्त्रेष्वहमहमिति स्वरूपस्यैवोपदिष्टत्वेन तेषामन्यथानयनमशक्यमिति सूचितम् । उक्तगीताया उपपत्तिमाह - **अव्यक्तेति** । अव्यक्तपरिणामस्याहङ्कारशब्दवाच्यत्वे हेतुमाह - **स त्विति । अहंभावः** = अहमित्यभिमानः । नन्वुक्तस्याहङ्कारस्य कथमहमित्यभिमानहेतुत्वमित्यत्र शब्दव्युत्पत्तिमाह - **अस्येति** ।

**व्युत्पत्तिर्द्रष्टव्या । अयमेव त्वहङ्कारः उत्कृष्टजनावमानहेतुर्गर्वापरनामा शास्त्रेषु बहुशो हेयतया प्रतिपाद्यते ।**

**तस्माद्बाधकापेताऽहम्बुद्धिस्साक्षादात्मगोचरैव । शरीरगोचरा त्वहम्बुद्धिरविद्यैव । यथोक्तं भगवता पराशरेण - 'श्रूयतां चाप्यविद्यायाः स्वरूपं कुलनन्दन ! । अनात्मन्यात्मबुद्धिर्या'** (वि.६.७.१०.) **इति । यदि ज्ञप्तिमात्रमेवात्मा, तदाऽनात्मन्यात्माभिमाने शरीरे ज्ञप्तिमात्रप्रतिभासः स्यात् ; न ज्ञातृत्वप्रतिभासः । तस्मात् ज्ञाताऽहमर्थ एवाऽऽत्मा । तदुक्तम् - 'अतः प्रत्यक्षसिद्धत्वादुक्तन्यायागमान्वयात् । अविद्यायोगतश्चाऽऽत्मा ज्ञाताऽहमिति भासते ॥'** (आत्मसिद्धिः) **इति ॥ तथा च - 'देहेन्द्रियमनःप्राणधीभ्योन्योऽनन्यसाधनः । नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नः स्वतस्सुखी ॥** (आत्मसिद्धिः) **इति ॥ अनन्यसाधनः = स्वप्रकाशः । व्यापी = अतिसूक्ष्मतया सर्वाचेतनान्तःप्रवेशनस्वभावः ॥**

**यदुक्तं दोषमूलत्वेनान्यथासिद्धिसम्भावनया सकलभेदावलम्बिप्रत्यक्षस्य शास्त्रबाध्यत्वमिति - कोऽयं**

---

गर्वनामधेयमहङ्कारमाह - **अयमेवेति** । **अयमिति** नोक्तपरामर्शी । **अयं** - अनात्मनि, देहेऽहंभावरूपः । यद्वाऽहम्भावकरणहेतुत्वेनेत्यत्र भ्रमे गर्वनामधेये तत्कारणभूताहङ्कारोपचारः । **अयं त्वहङ्कारः शास्त्रेषु हेयतयैव प्रतिपाद्यते** इत्यन्वयः । एवमहङ्कारशब्दनिष्कर्षस्य कृतत्वेनासति बाधकेऽहंबुद्धिरात्मविषयैवेति निगमयति — **तस्मादिति** । ननु शरीरेऽप्यहंप्रत्ययो दृश्यते तस्य का गतिरित्यत्राह — **शरीरेति** । उक्तार्थे पराशरसंवादं दर्शयति — **यथोक्तमिति** । 'अस्वे स्वमिति या मतिरि'ति चतुर्थः पादः । तत्रानात्मनि शरीरादावात्मबुद्धेरविद्यात्वोक्तेरिति भावः ।

शरीरे आत्मबुद्धेरविद्यात्वोक्तिः सम्यग्ज्ञानान्यत्वात् तद्विरुद्धत्वाद्वेति पूर्वमेवोक्तम् । एवं देहात्मबुद्धिः ज्ञप्तेरात्मत्वपक्षे न घटत इति प्रसङ्गाद्दर्शयति — **यदीति** । अहमर्थस्यात्मत्वे हि शरीरे आत्माभिमाने 'स्थूलोऽस्मि'ति प्रतिभासो युक्तः । ज्ञप्तेरात्मत्वे तु स्थूला ज्ञप्तिरिति हि प्रतिभासस्स्यात् । न चैवं दृश्यते इति भावः । ज्ञातुरहमर्थस्यात्मत्वमुपसंहरति — **तस्मादिति** । आत्मसिद्धिग्रन्थं प्रमाणयति — **तदुक्तमिति** । **प्रत्यक्षसिद्धत्वात्** = 'अहं जानामी'ति ज्ञानाहमर्थयोर्धर्मधर्मितया प्रतीतिसिद्धत्वात् । **उक्तन्यायः** = स्थिरत्वास्थिरत्वादिवैषम्य श्रुत्यर्थापत्यादिः । **उक्तागमः** = उदाहृतागमवाक्यानि । **अविद्यायोगतः** = अहमर्थस्यात्मत्वे 'स्थलोऽहमि'ति भ्रान्त्युपपत्तेः । अहमर्थस्यानात्मत्वे उक्तभ्रान्त्यनुपपत्तेर्वा । एवं तत्रत्यश्लोकन्तरमाह — **तथेति** । अत्र **चकार उत्तरत्रेतीत्यत्रान्वेति** । **देहेन्द्रियेति** श्लोकस्यापि आत्मसिद्धिग्रन्थस्थत्वात्, उत्तरत्रेतिकरणाच्च । अनेन श्लोकेन 'कतम आत्मा योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष' इति श्रुत्यर्थः सङ्गृहीतः । **अनन्यसाधन** इत्यस्यार्थमाह - **अनन्यसाधन** इति । **साधनशब्दः** ज्ञापकार्थकः । अन्यथा नित्यत्वोक्त्या पौनरुक्त्यं स्यात् । विभुत्वशङ्काव्यावृत्यर्थं व्यापीत्येतद्विवृणोति — **व्यापीति** । एतेन जीवे व्याप्तिवाचकशब्दानामुक्तार्थ एव पर्यवसानं कार्यमिति सूचितम् । अन्यथोत्क्रान्त्यादिसूत्रविरोधापत्तेरिति भावः ।

एवं सर्वप्रमाणानां विशिष्टविषयकत्वं प्रतिपादितम् । परमार्थत्वतदभावसाधकानुवर्तमानव्यावर्तमानत्वहेतुनिराकरणेन ब्रह्मव्यतिरिक्तस्यापि वस्तुत्वमुपपादितम् । अनुभूतेः परोक्तं स्वयम्प्रकाशत्वं शिक्षितम् । संवित्प्रागभावः स्थापितः । संविदो निर्धर्मकत्वादि च निराकृतम् । अहमर्थस्य ज्ञातृत्वमनन्याधीनप्रकाशत्वं प्रत्यक्त्वादि च प्रत्यपादि । तस्यैवात्मत्वं ज्ञप्तेरनात्मत्वमित्येवमादि च प्रदर्शितम् । एवमुपपादनेन शास्त्रस्य निर्विशेषब्रह्मावबोधित्वे प्रत्यक्षादिसकलप्रमाणविरोधो दुरुद्धर इति तन्मते दूषणमुक्तं भवति । अथैतत्परिहाराय परेण यदुक्तं प्रत्यक्षस्य दोषमूलत्वेनान्यथासिद्धत्वात्, अनन्यथासिद्धशास्त्रबाध्यत्वमिति तन्निराकर्तुमनुवदति - **यदुक्तमिति** । दूषयति - **कोऽयमिति** ।

**दोष इति वक्तव्यम्, यन्मूलतया प्रत्यक्षस्यान्यथासिद्धिः । अनादिभेदवासनैव हि दोष इति चेत् ; भेदवासनायास्तिमिरादिवद्यथावस्थितवस्तुविपरीतज्ञानहेतुत्वं किमन्यत्र ज्ञातपूर्वम् ? अनेनैव शास्त्रविरोधेन ज्ञास्यत इति चेन्नान्योन्याश्रयणात् । शास्त्रस्य निरस्तनिखिलविशेषवस्तुबोधित्वनिश्चये सति भेदवासनाया दोषत्वनिश्चयः, भेदवासनाया दोषत्वनिश्चये सति शास्त्रस्य निरस्तनिखिलविशेषवस्तुबोधित्वनिश्चय इति । किञ्च, यदि भेदवासनामूलत्वेन प्रत्यक्षस्य विपरीतार्थत्वम्, शास्त्रमपि तन्मूलत्वेन तथैव स्यात् ।**

---

तत्रेत्युपस्कार्यम् । यत्तावद्बाध्यत्वप्रयोजकतया दोषरूपमूलमुक्तं तत्र कोऽयं दोष इति पृष्टे, अयं दोष इति विविच्य वक्तव्यमित्यर्थः । न हि सामान्यतो 'दोषोऽस्ती'त्युक्तिमात्रेण प्रत्यक्षस्यान्यथासिद्धिर्वक्तुं शक्या । अन्यथा शास्त्रस्याप्येवं रीत्यैवान्यथासिद्धिसम्भवात् । काचादिविशेषदोषान्तराणान्तु न सर्वव्यापित्वम् । एवं प्रत्यक्षादीनां निर्हेतुकं दोषमूलत्वानुमाने तथैव शास्त्रस्यापि दोषमूलकत्वमनुमातुं शक्यते । हेत्वाद्यभावाच्छास्त्रस्य न तथात्वमिति चेत्तर्हि प्रत्यक्षादिष्वपि तत्तुल्यमिति भावः । **यन्मूलतये**ति । एतेनायं दोष इति विशेषतोऽकथने प्रत्यक्षस्य नान्यथासिद्धिस्सुवचेति सूचितम् । पूर्वमेव भेदवासनाया दोषत्वमुक्तमित्याशयेन शङ्कते - **अनादी**ति । एवकारेणान्यस्य दोषत्वासम्भवं व्यनक्ति । **हिः** पूर्वोक्तप्रसिद्ध्यर्थः । उक्ताया दोषत्वमसम्भावितमित्याह - **भेदे**ति । विपरीतज्ञानहेतोर्हि दोषत्वम् । अत एव तिमिरादीनां दोषत्वमुच्यते । न हि घटादिप्रत्यक्षादिज्ञानं विपरीतज्ञानहेतुजन्यम् । तस्माद्भेदवासनास्वरूपस्य प्रामाणिकत्वेऽपि तस्य दोषत्वमप्रामाणिकमेव ।

ननु द्विचन्द्रभ्रमादौ भेदवासनाया दोषत्वं प्रामाणिकमेवेति, अन्यत्र प्रत्यक्षादावपि तस्या दोषत्वमभ्युपेयमिति चेत्तर्हि भिन्नेष्वभेदबुद्धौ अभेदवासनाया अपि दोषत्वेन दृष्टत्वाच्छास्त्रजन्यैक्यज्ञानेनाभेदवासनाया दोषत्वं स्यादिति शास्त्रस्याप्यन्यथासिद्धिरिति भावः । प्रत्यक्षादौ भेदवासनाया दोषत्वमर्थापत्त्यैव कल्प्यमिति पृच्छति - **अनेनैवे**ति । **एव**कारः शास्त्रविरोधस्य कल्पकत्वप्रसिद्धिसूचकः । अयं भावः - सर्वाभ्युपगतं प्रमाणमूर्धन्यभूतं शास्त्रं निर्विशेषब्रह्मात्मैक्यबोधकमिति तावत्सर्वसम्प्रतिपन्नम् । ततश्च भेदावलम्बिनः प्रत्यक्षस्य शास्त्रविरोधेन कस्यचिद्बाध्यत्वं वक्तव्यम् । तत्र कस्य वा बाध्यत्वमिति विशये, शास्त्रस्य प्रमाणतमत्वेन बाधकत्वायोगात् प्रत्यक्षादेरेव बाध्यत्वमभ्युपेयम् । इत्थञ्च प्रत्यक्षादेर्बाध्यत्वान्यथानुपपत्त्या दोषमूलकत्वावश्यम्भावेन भेदवासनायाः क्वचिद्दोषत्वस्य दृष्टत्वेन चात्रापि तस्या एव दोषत्वं स्वीकरणीयमिति । तदेतद्दूषयति - **ने**ति । मिथः संश्रयमुपपादयति - **शास्त्रस्ये**ति । अयं भावः - शास्त्रस्य निर्विशेषब्रह्मबोधकत्वनिश्चये हि त्वदुक्तरीत्या भेदवासनाया दोषत्वनिश्चयः । स एव न सम्भवति । प्रत्यक्षादिभिस्सकलविशेषग्रहणेन शास्त्रस्य तद्विरुद्धविशेषाभावबोधनासामर्थ्यात् । यदि तु सकलविशेषावगाहिप्रत्यक्षादे र्भेदवासनारूपदोषमूलकत्वेन शास्त्रेण तद्विरुद्धविशेषाभावबोधनसम्भव इत्युच्यते, तर्हि भेदवासनारूपदोषमूलकत्वनिश्चय एव शास्त्रस्य तथात्वनिश्चयसम्भव इति भवत्यन्योन्याश्रय इति । इदमुपलक्षणम् । प्रत्यक्षादेर्बाध्यत्व एव भेदवासनाया दोषत्वनिश्चयः । भेदवासनाया दोषत्वनिश्चय एव तन्मूलकप्रत्यक्षादे र्बाध्यत्वमिति ।

एवं भेदवासनाया दोषत्वेऽपि न तन्मूलकप्रत्यक्षस्य बाध्यत्वसम्भवः । बाधकत्वेनाभ्युपतस्य शास्त्रस्यापि भेदवासनामूलत्वेन बाधकत्वासम्भवादित्याशयेनाह — **किञ्चे**ति । **तथैव** = विपरीतार्थत्वमेव । ततश्च न बाधकत्वमिति भावः । ब्रह्मण एव परमार्थत्वात् तदतिरिक्तस्य प्रत्यक्षादेरिव शास्त्रस्यापि मिथ्यात्वेन दोषमूलकत्वस्याश्रयणीयत्वादिति भावः । ननु ज्वालाभेदानुमानेन ज्वालैक्य बुद्धेः कथं बाध्यत्वम् । तत्राप्येवं प्रसङ्गात् ? मैवम् । तत्रोभयो र्दोषमूलकत्वाभावात् । न च ज्वालाभेदबुद्धिः ज्वालैक्यबुद्धिजनकसादृश्यादिदोषजन्या । एवमन्योन्याश्रयाभावाच्च । न हि दीपसादृश्यवर्तिकासाम्यादेः दोषत्वनिश्चयः ज्वालाभेदनिश्चयाधीनः । न वा ज्वालाभेदनिश्चयः सादृश्यादीनां दोषत्वनिश्चयाधीनः ।

**अथोच्येत - दोषमूलत्वेऽपि शास्त्रस्य प्रत्यक्षावगतसकलभेदनिरसनज्ञानहेतुत्वेन परत्वात्तत्प्रत्यक्षस्य बाधकमितितन्न; दोषमूलत्वे ज्ञाते सति परत्वमकिंचित्करम् । रज्जुसर्पज्ञाननिमित्तभये सति, भ्रान्तोऽयमिति परिज्ञातेन केनचित् 'नायं सर्पः; मा भैषीः' इत्युक्तेऽपि भयानिवृत्तिदर्शनात् । शास्त्रस्य च दोषमूलत्वं श्रवणवेलायामेव ज्ञातम् । श्रवणावगतनिखिलभेदोपमर्दिब्रह्मात्मैकत्वविज्ञानाभ्यासरूपत्वान्मननादेः ॥**

परस्परसामग्रयाः भिन्नत्वात् । दीपसादृश्यवर्तिकासाम्यादेः दोषत्वं चाचिरनिर्वापितारोपितदीपैक्य भ्रमे निश्चितमिति । अथ दोषमूलत्वाविशेषेऽपि शास्त्रस्य परत्वाद्बाधकत्वमिति पूर्वोक्तं शङ्कते — **अथेति** । कथं शास्त्रस्य प्रत्यक्षात्परत्वमित्यत्राह - **प्रत्यक्षेति** । निरसनीयज्ञानहेतोः परत्वं, निरासक ज्ञानहेतोः पूर्वत्वञ्च सर्वसिद्धमिति भावः । **परत्वादिति** । निर्दोषत्वसाम्येऽपि पूर्वापरापच्छेदयोः परस्य बलीयस्त्ववत् दोषवत्वसाम्येऽपि परस्य बलीयस्त्वमिति भावः । तदेतन्निरस्यति - **तन्नेति** । सति दोषत्वनिश्चये ज्ञानयोः बाध्यबाधकतायां न पौर्वापर्यं नियामकमित्याशयेनाह - **दोषेति** । उक्तमकिञ्चित्करत्वं दृष्टान्तेन स्फुटयति — **रज्जिवति** ।

अयं भावः — कस्यचिद्रज्जुसर्पज्ञानेन भीतस्य 'नायं सर्पो, माभैषी' इति वाक्यश्रवणेऽपि भयं न निवर्तते । तादृशवाक्यस्य भ्रान्तपुरुषोच्चरितत्वरूपदोषमूलकत्वनिश्चयात् । यद्यपीदं वाक्यं शास्त्रवत् परमेव । अथापि पूर्वोत्पन्नरज्जुसर्पज्ञानस्य नानेन बाध्यत्वं दृश्यते । अतो दोषमूलकत्वनिश्चये तत्र परत्वं न किञ्चिकरम् । अत एव दोषाभावेऽपि पूर्वापरापच्छेदशास्त्रयोः परस्य बाधकत्वं स्वीक्रियते ॥ उक्तदृष्टान्तस्थले च रज्जुसर्पज्ञानस्य न दोषमूलकत्वनिश्चयः । तन्निमित्तभयदर्शनात् । अतो दृष्टान्तवैषम्यमिति चेत् ? उच्यते । बाधकत्वेनाभिमतस्य परस्य दोषमूलकत्वज्ञाने तत्र परत्वस्याकिञ्चित्करत्वाभिप्रायेणोक्तदृष्टान्तप्रदर्शनात् । न चोभयोः दोषमूलकत्वे निश्चिते पूर्वस्य बाध्यत्वं उत्तरस्यैव बाधकत्वमित्यत्र नियामकमस्ति । उभयोर्दोषमूलकत्वाविशेषेणाकिञ्चित्करत्वात् । पूर्वापरशास्त्रयोस्तूभयोर्दोषवत्वाभावेन कस्य बाध्यत्वं, कस्य बाधकत्वमिति शङ्कायां पूर्वशास्त्राबाधेन परशास्त्रानुत्पत्त्या निमित्तोदयेन नैमित्तिकपरशास्त्रस्य प्रवृत्त्यावश्यकतया च पूर्वस्य बाध्यत्वमुत्तरस्य बाधकत्वञ्च स्वीकृतम् । अत्र तूभयोर्दुष्टत्वेनादुष्टेनान्येन केनचिदेव बाध्यत्वस्य वक्तव्यतया न दुष्टमुलकशास्त्रेणैव दुष्टमूलकप्रत्यक्षस्य बाध्यत्वम् ।

ननु रज्जौ सर्पभूरन्ध्रबुद्धौ दुष्टमूलकेनोत्तर ज्ञानेन दुष्टमूलकस्य पूर्वस्य बाध्यत्वं दृश्यते ? सत्यम् । तत्रोत्तरस्य दुष्टमूलकत्वेऽपि तज्ज्ञानाभावात् । न ह्युत्तरं भूरन्ध्रज्ञानं दुष्टमूलकमिति निश्चयवतः पूर्वस्य सर्पज्ञानस्य तेन बाध्यत्वं दृश्यते । प्रत्युत सर्पज्ञानं दृढीकृतं भवतीति किमनेन वृथाऽऽयासेन । स्यादेतत् - शास्त्रस्य दोषमूलकत्वनिश्चये हि परत्वे बाधकत्वशङ्का । स एव तु नास्तीत्यत्राह - **शास्त्रस्येति** । **चः** प्रत्यक्षसमुच्चये । **एवकारः** तन्मतप्रसिद्धिं सूचयति । मननपर्यन्तानुधावनस्यानपेक्षितत्वसूचको वा । शास्त्रश्रवणसमय एव हि "नेह नानास्ती" त्यादिना ब्रह्मातिरिक्तमिथ्यात्वावगतेः प्रत्यक्षस्य दोषमूलकत्वनिश्चयः । न तु ततः प्राक् हेत्वभावात् । तदैव शास्त्रस्यापि दोषमूलकत्वनिश्चय इति भावः । एवं श्रवणवेलायामेव दोष मूलकत्वनिश्चयावश्यकतायां किमु वक्तव्यमित्याशयेनाह - **श्रवणेति** । **अभ्यासः** = युक्तिभिः प्रतिष्ठापनम् । अनवरतभावना च । **आदि**शब्देन ध्यानपरिग्रहः । यद्वा - शास्त्रस्य श्रवणवेलायामेव दोषमूलकत्वनिश्चयावश्यकतायां हेतुमाह — **श्रवणेति** । अयं भावः - किं शास्त्रश्रवणवेलायां निखिलभेदोपमर्दिब्रह्मात्मैकत्वज्ञानं जातं न वा । न चेत्त्वदुक्तमननादेः विलोपप्रसङ्गः । न हि श्रवणानवगतमर्थं मन्तुं शक्येत । अन्वगतश्चेत् निखिलभेदानामपि ब्रह्मात्मैकत्वज्ञाननिवर्त्यत्वरूपमिथ्यात्वमेषितव्यम् । सकलभेदानां मिथ्यात्वावगतौ च भेदवासनारूपदोषमूलकत्वं स्वीकर्तव्यम् । न हि दोषामूलकस्य मिथ्यात्वम् । अन्यथा परमार्थस्य रज्जुज्ञानस्य मिथ्यात्वापत्तेः । ततश्च निखिलभेदान्तर्गतस्य शास्त्रस्य दोषमूलकत्वं मननादिपर्यालोचनयापि श्रवणदशायां निश्चितमिति ।

**अपि च - इदं शास्त्रम् ; एतच्चासम्भाव्यमानदोषम् ; प्रत्यक्षं तु संभाव्यमानदोषमिति केनावगतं त्वया? न तावत्स्वतस्सिद्धा निर्धूतनिखिलविशेषाऽनुभूतिरिमर्थमवगमयति ; तस्याः सर्वविषयविरक्तत्वात्, शास्त्रपक्षपातविरहाच्च । नाप्यैन्द्रियकं प्रत्यक्षम् ; दोषमूलत्वेन विपरीतार्थत्वात् । तन्मूलत्वादेव नान्यन्यपि प्रमाणानि । अतः स्वपक्षसाधनप्रमाणानभ्युपगमान्न स्वाभिमतार्थसिद्धिः ॥**

**ननु व्यावहारिकप्रमाणप्रमेयव्यवहारोऽस्माकमप्यस्त्येव ॥ कोऽयं व्यावहारिको नाम ? आपातप्रतीतिसिद्धो युक्तिभिर्निरूपितो न तथाऽवस्थित इति चेत् - किं तेन प्रयोजनम् ; प्रमाणतया प्रतिपन्नेऽपि यौक्तिकबाधादेव प्रमाणकार्याभावात् । अथोच्येत शास्त्रप्रत्यक्षयोः द्वयोरप्यविद्यामूलत्वेऽपि प्रत्यक्षविषयस्य शास्त्रेण**

---

प्रत्यक्षादिवच्छास्त्रस्य दोषमूलकत्वाभावं वदतस्तव कथं शास्त्रस्यासम्भाव्यमानदोषत्वनिश्चयः, प्रत्यक्षस्य सम्भाव्यमानदोषत्वनिश्चयः येन बाध्यबाधकभावस्तयोरङ्गीकर्तुं युज्यते इत्याशयेन पृच्छति - **अपि** चेति । शास्त्रे इदमिति विशेषणेनान्यशब्दराशेर्व्यावृत्तिः, तस्य तेनापि असम्भाव्यमानदोषत्वानङ्गीकारात् । **असम्भाव्यमानदोषं** = प्रमाणाभासवर्गाद्विलक्षणम् । अस्यैव शब्दराशेरसम्भाव्यमानदोषत्वं, न तु बौद्धागमरूपशब्दराशेरिति केन प्रमाणेनावगतमिति भावः । तुशब्दः अनभिमतवैलक्ष्याभिप्रायकः । उक्तार्थे त्वदभिमतानुभूतिस्वरूपं वृत्तिज्ञानं वेति विकल्पं हृदि कृत्वा प्रथमं निरस्यति - **न ताव**दिति । **ताव**दित्यवधारणे । **स्वतःसिद्धे**त्येतत् निर्धूतनिखिलविशेषत्वे हेतुः । परेणैवमुक्तत्वात् । **निर्धूते**त्यादिकन्तु हेतुगर्भम् । उक्तं हेतुं विवृणोति - **तस्या** इति । न हि कतिपयविषयकत्वं त्वयाऽभ्युपेतमिति भावः । न हि निर्विषयापि भ्रान्त्याविद्यमानमपि शास्त्रप्राबल्यमवगमयेदित्याह - **शास्त्रे**ति । अन्यथा दोषशून्यत्वमप्यवगमयेदिति भावः । द्वितीयं निषेधति - **नापी**ति । स्वरूपातिरिक्तज्ञानस्य भ्रान्तिरूपत्वेन दोषमूलकत्वान्नार्थव्यवस्थापनक्षमता । अन्यथाऽतिप्रसङ्गापातादिति भावः । अनुमानादिप्रमाणानामपि न तथात्वमित्याह - **तन्मूलत्वेनेति** । भेदवासनारूपदोषमूलकप्रत्यक्षमूलत्वेन भेदवासनारूपदोषमूलत्वेन वेत्यर्थः । **प्रमाणानी**ति बहुवचननिर्देशस्तु प्रमाणसङ्ख्याविवादेपि न त्वदभिमतार्थसिद्धिरिति सूचयति । एवं साधकाभावात् न शास्त्रस्य दोषरहितत्वेन प्राबल्यं त्वदभिमतं सिध्येदित्युपसंहरति - **अत** इति । अनेन परमतस्य निर्मूलत्वमुक्तं भवति । ज्वलाभेदानुमानं तु निदर्शनन्न भवितुमर्हति । तस्य निर्मूलत्वाभावात् । न हि तत्र धर्मिलिङ्गादिबुद्धिनां दोषबाध्यत्वं मानवाध्यत्वम् । नापि तन्मूलोच्छेदित्वम्, शास्त्रं तु स्वमूलोच्छेद्येव । ब्रह्मव्यतिरिक्तस्य मिथ्यात्व बोधनात् ।

अत्र शङ्कते - **नन्विति** । अयं भावः - न हि लोकसिद्धप्रमाणप्रमेयव्यवहार एवास्माभिरपलप्यते, येन प्रमाणाभावेनास्मदभिमतमर्थं दूषयेः । व्यवह्रियन्ते हि सर्वे प्रत्यक्षादिप्रमाणानि तदवान्तरभेदाश्च । अतः परमार्थतः सन्मात्रानुभूत्यतिरिक्तवस्तुनोऽभावेऽपि व्यावहारिकदशायां प्रमाणप्रमेयादिकमस्मदभिमतमेव । अतोऽस्मदभिमतसिद्धौ कः प्रद्वेष इति । व्यावहारिकप्रमाणादीनामतिप्रसञ्जकत्वाभिप्रायेण न तावता त्वदभिमतार्थसिद्धिरित्युपलम्भमुखेन समाधत्ते - **कोऽयमि**ति । व्यावहारिकत्वं दुर्निरूपमिति भावः । अस्मदभिमतं तत् सुनिरूपमेवेति शङ्कते - '**आपाते**ति । प्रमाणप्रमेयादीनामापातप्रतीतिसिद्धत्वं यौक्तिकबोधेनाविद्यमानत्वम् । इदमेव हि व्यावहारिकत्वम् । तादृशप्रमाणादिकं कथमर्थसाधकम् । आपाततः प्रमाणतया प्रतिभासमानत्वेऽपि युक्तिवशेन तत्तत्कार्यस्यासत्त्वादित्याशयेनोपालभते - **किमि**ति । न किमपि प्रयोजनमित्यर्थः । प्रमाणकार्याभावात् । स्वपक्षस्थापनाय स्वीकृतस्य प्रमाणस्यापातप्रतीतिसिद्धत्वेन कार्यसाधकत्वाभावाच्च न तेन स्वपक्षसिद्धिरिति भावः । प्रकारान्तरेण शास्त्रप्रत्यक्षयो र्बाध्यबाधकभावं शङ्कते - **अथे**ति । शास्त्रस्य प्रत्यक्षं बाधित्वैवोदयः । शास्त्रस्य तु न बाधकान्तरं दृश्यते । अतो दूषमूलकत्वाविशेषेऽपि यस्य पश्चात्तनबाधः, तस्य दुर्बलत्वम् । यस्य तु न, तस्य प्राबल्यम् । अतो दूषमूलकत्वबाधकप्रत्यययावुभावपि बाध्य-

**बाधो दृश्यते। शास्त्रविषयस्य सदद्वितीयब्रह्मणः पश्चात्तनबाधादर्शनेन निर्विशेषानुभूतिमात्रं ब्रह्मैव परमार्थः - इति - तदयुक्तम् ; अबाधितस्यापि दोषमूलस्यापारमार्थ्यनिश्चयात्।**

**एतदुक्तं भवति - यथा सकलेतरकाचादिदोषरहितपुरुषान्तरागोचरगिरिगुहासु वसतः तैमिरिकजन-स्याज्ञात(स्य ज्ञात)स्वतिमिरस्य सर्वस्य तिमिरदोषाविशेषेण द्विचन्द्रज्ञानमविशिष्टं जायते। न तत्र बाधक-प्रत्ययोऽस्तीति न तन्मिथ्या न भवतीति तद्विषयभूतं चन्द्रद्वित्वमपि मिथ्यैव। दोषो ह्ययथार्थज्ञानहेतुः - तथा ब्रह्मज्ञानमविद्यामूलत्वेन बाधकज्ञानरहितमपि स्वविषयेण ब्रह्मणा सह मिथ्यैव - इति। भवन्ति चात्र प्रयोगाः - विवादाध्यासितं ब्रह्म मिथ्या, अविद्यावत उत्पन्नज्ञानविषयत्वात् प्रपञ्चवत्। ब्रह्म मिथ्या, ज्ञान-विषयत्वात् प्रपञ्चवदेव।**

---

त्वप्रयोजकाविति भावः। तत्र किं बाध्यत्वेऽपि परमार्थत्वम्, उत न। यदि परमार्थत्वं, तदा न विवादः, शास्त्रेण प्रत्यक्ष-बाधेऽपि प्रत्यक्षस्यापरमार्थत्वाभावाद्ब्रह्मात्मैकत्वविज्ञानेन निखिलभेदानां बाध्यत्वेन वस्तुनः सत्यत्वात्। यदि न परमार्थत्वं, तर्ह्यपरमार्थत्वे बाध्यत्वं प्रयोजकमिति पर्यवसितम्। तच्च न सम्भवति। अबाधितत्वेऽप्यपरमार्थत्वदर्शनात्।

न हि रज्जौ सर्पभूरन्ध्रज्ञानानामबाधितत्वेन परमार्थत्वमिष्यते। न वा पथिकभिक्षुदृष्टशुक्तिरूप्यज्ञानमबाधितमपि परमार्थः। यदि दुष्टमूलकत्वमात्रेणापरमार्थत्वं, तर्हि शास्त्रस्यापि तत्समानम्। अतो दुष्टमूलकत्वबाधकप्रत्ययौ प्रत्येकं मिथ्यात्वे प्रयोजकावित्यङ्गीकारावश्यकतया न शास्त्रजन्यज्ञानस्य परमार्थत्वसम्भव इत्याशयेन समाधत्ते — **तदयुक्तमिति**। अयुक्तत्वमुपपादयति — **अबाधितस्यापीति**। अथोक्तर्थं निदर्शनेन दृढयितुं क्वचित्स्वज्ञानस्य दोषमूलकस्य दोषमूलकत्वानिश्चयेऽपि तन्मूलकबाधकज्ञानाभावेऽपि च मिथ्यात्वं संप्रतिपन्नमेवेत्याह — **एतदिति**। द्विचन्द्रज्ञानस्य बाधानुपपत्त्यै सकलेतराद्युक्तम्। अन्यथा काचादिदोषरहित पुरुषान्तरसत्वे बाधकज्ञानोत्पत्त्या मिथ्यात्वे विप्रतिपत्त्ययोगात्। **तैमिरिकजनस्येत्यनेन** द्विचन्द्रज्ञानहेतुभूतदोषः प्रदर्शितः। स्वगततिमिरदोषस्य ज्ञातत्वे परोक्षात्मक-बाधकज्ञानोदयस्स्यादिति **अज्ञातस्वतिमिरस्येत्युक्तम्**। **सर्वस्येत्यादिना** कथञ्चिदपि द्विचन्द्रभ्रमबाधकज्ञानस्यानुत्पत्ति-स्सूचिता। ततः किमित्यत्राह — **न तत्रेति**। बाधकज्ञानाभावेऽपि द्विचन्द्रज्ञानस्य तद्विषयद्विचन्द्रत्वादेश्च मिथ्यात्वे किं प्रयोजकमित्यत्राह — **दोष इति**। **हिः** प्रसिद्धौ। रज्जुसर्पज्ञानस्य तद्बाधकज्ञानाभावेऽपि मिथ्यात्वं तद्विषयस्य च तथात्वं दृष्टमिति भावः। **अयथार्थज्ञानहेतुः** = भ्रमात्मकज्ञानहेतुः। ज्ञानस्य भ्रमत्वे दोषस्वरूपमेव हेतुः, न तु तज्ज्ञानम्। ज्ञाते तु स्वज्ञानस्य भ्रमत्वग्रहणम्। न तु भ्रमत्वमपैतीति भावः।

एवं फलितमर्थं दृष्टान्ते प्रदर्शयति — **तथेति**। बाधकज्ञानरहितमपीत्युक्तिः शास्त्रजन्यब्रह्मज्ञानस्य इन्द्रियजन्य-बाधकज्ञानानुत्पत्तिमभिप्रेत्य। वस्तुतस्तु शून्यमतावलम्बनेन बाधकज्ञानमप्युत्तरत्र वक्ष्यते। अत्र चन्द्रद्वित्वज्ञानस्य ब्रह्मज्ञानस्य च मिथ्यात्वोक्तिः परमतानुसारेण। स्वमते ज्ञानस्वरूपस्य नित्यत्वेन विषयाणामेव मिथ्यात्वात्। यद्वा - मिथ्यात्वमपरमार्थत्वं, ज्ञाने तु भ्रमत्वरूपम्। एवं जगतः मिथ्यात्वप्रसञ्जकतर्केण भवदभिमतेनैव ब्रह्मणोऽपि मिथ्यात्वं प्रसज्यते इत्याह - **भवन्तीति**। **विवादाध्यासितमित्युक्तिः** सगुणब्रह्मणः मिथ्यात्वस्य तत्सम्मतत्वेन सिद्ध-साधनात्तद्व्यवच्छेदार्था। अत्र ज्ञानविषयत्वे मिथ्यात्वमित्येक एव पर्याप्तः। अथापि बुद्धिवैशद्याय प्रयोगान्तरोक्तिः। यद्वा - परेण जगतो मिथ्यात्वमविद्यावत उत्पन्नज्ञानविषयत्वादसत्यहेतुजन्यज्ञानविषयत्वाच्चापाद्यते। अतस्तद्रीत्यैव तदभिमतब्रह्मणोऽपि त्वदुक्तप्रसञ्जकेन मिथ्यात्वं प्रसज्यते। उक्तमनुमानत्रयमित्यपि सुवचम्। प्रयोगशब्दस्वारस्यात् यद्यपि स्वमते विवादाध्यासित ब्रह्मणः मिथ्यात्वेन स्वमतसिद्धत्वेऽपि, अविद्यावत उत्पन्नज्ञानविषयत्वमसत्यहेतुजन्य-

**न च वाच्यम् - स्वाप्नस्य हस्त्यादिविज्ञानस्यासत्यस्य परमार्थशुभाशुभप्रतिपत्तिहेतुभाववदविद्यामूलत्वेनासत्यस्यापि शास्त्रस्य परमार्थभूतब्रह्मविषयप्रतिपत्तिहेतुभावो न विरुद्ध इति - स्वाप्नज्ञानस्यासत्यत्वाभावात्। तत्र हि विषयाणामेव मिथ्यात्वम्; तेषामेव हि बाधो दृश्यते; न ज्ञानस्य। न हि, 'मया स्वप्नवेलायामनुभूतं ज्ञानमपि न विद्यते' इति कस्यचिदपि प्रत्ययो जायते। 'दर्शनं तु विद्यते, अर्था न सन्ति' इति हि बाधकप्रत्ययः।**

**मायाविनो मन्त्रौषधादिप्रभवं मायामयं ज्ञानं सत्यमेव प्रीतेर्भयस्य च हेतुः; तत्रापि ज्ञानस्याबाधितत्वात्। विषयेन्द्रियादिदोषजन्यं रज्ज्वादौ सर्पादिविज्ञानं सत्यमेव, भयादिहेतुः। सत्यैवादष्टेऽपि स्वात्मनि सर्पसन्निधानाद्दष्टबुद्धिः। सत्यैव शङ्काविषबुद्धिर्मरणहेतुभूता। वस्तुभूत एव जलादौ मुखादिप्रतिभासो वस्तुभूतमुखगतविशेषनिश्चयहेतुः।**

---

ज्ञानविषयत्वं चासिद्धं, दृष्टान्तश्च साधनविकलः साध्यविकलश्च। अथाप्यद्वैतसयूथ्यानां तुर्यबौद्धानां प्रसिद्धमेवेति न दोषः। बौद्धानां प्रयोग इत्यभिप्रायात्। यदि उक्तहेतुना जगतो मिथ्यात्वं साध्यते, तर्हि प्रबुद्धेन त्वत्सयूथ्येनैव एवं प्रयोगे, कथं त्वं विजेव्यसीति भावः॥

ननु शास्त्रस्य दोषमूलत्वेनासत्यत्वेऽपि न परमार्थब्रह्मविषयकज्ञानजनकत्वन्न सम्भवति। असत्यभूतस्य हस्त्यादि स्वाप्नविज्ञानस्य परमार्थशुभाशुभज्ञानजनकत्वदर्शनात्। अतश्शास्त्रप्रत्यक्षयोर्दोषमूलत्वेनासत्यत्वाविशेषेऽपि न शास्त्रप्राबल्यस्यापह्नवसम्भव इत्याशङ्कां परिहरति — **न वाच्यमिति**। **आदि**शब्देनाशुभप्रतिपत्तिहेतुभूत दुःस्वप्नविषयपदार्थसङ्ग्रहः। **इति न वाच्यमि**त्यन्वयः। अत्र **चः** अनुक्तपरिहारकहेतुसमुच्चायकः। अयं भावः - शास्त्रस्यासत्यत्वेऽपि परमार्थब्रह्मविषयकज्ञानजनकत्ववत् प्रत्यक्षज्ञानादिहेतुभूतप्रत्यक्षादेः दोषमूलकत्वेनासत्यत्वेऽपि परमार्थभेदावगाहिज्ञानजनकत्वसम्भव इति भेदादीनामपरमार्थत्वं कथम्। कथन्तराञ्च शास्त्रस्य बलीयस्त्वम्। भवदुक्तमिथ्यात्वसाधकानुमानस्य भवद्भिरेव व्यभिचारश्च प्रदर्शित इति। उक्तदृष्टान्तस्य वैषम्यमप्यस्तीत्याह — **स्वाप्ने**ति। ततश्च सत्यादेव ज्ञानात् सत्योत्पत्तिरिति भावः। तर्हि कथं ज्ञानस्य मिथ्यात्वव्यवहार इत्यत्राह — **तत्र हीति**। विषयाणां मिथ्यात्वे हेतुमाह — **तेषामिति**। स्वाप्नज्ञानस्योत्तरत्र बाधाभावेनामिथ्यात्वं दृढयति — **न हीति**।

ननु स्वप्नभुक्तिक्रियायाः मिथ्यात्ववत्, ज्ञानक्रियाया अपि स्वाप्नत्वाविशेषेण मिथ्यात्वं किन्न स्यादित्यत्रानुभवविरोधं दर्शयति — **दर्शनमि**ति। दर्शनानुरोधेन व्यवस्थाप्यम्। ज्ञाने मिथ्यात्वव्यवहारश्चौपचारिक इति भावः। **अर्था न सन्तीति**। यद्यपि तृतीयाध्याये सन्ध्याधिकरणे स्वाप्नपदार्थसत्यत्वं व्यवस्थापयिष्यते, अथापि परमतमन्वारुह्यापि प्रकृते समाधिः सुलभ इत्याशयेन विषयमिथ्यात्वमुक्तम्। एवं सत्यस्यैव ज्ञप्तिहेतुत्वमित्युक्तम्। अथोत्पत्तिहेतुत्वमपि सत्यस्यैवेत्युदाहरणान्तरेण व्यनक्ति - **मायाविन** इति। **मायामयं** = आश्चर्यभूतम्। **विषयेन्द्रियादिदोषाः** = सादृश्यकाचादिदोषाः। **आदि**शब्देन देशगतदूरत्वादिदोषग्रहः। दोषस्सत्यः। तद्धेतुकं सर्पज्ञानमपि सत्यमिति भावः। **सत्यैवे**ति। यद्यपि दष्टबुद्धौ सत्यत्वविशेषणमनपेक्षितम्, तत्कारणे सर्पसन्निधाने तद्विशेषणञ्चापेक्षितम्, अथाप्युदाहृतोदाहरिष्यमाणोदाहरणबलेन कारणे सत्यत्वनिश्चयः स्फुटं ज्ञायत इति तदनुक्तिः। यद्वा - **दष्टबुद्धिरि**त्येतत् **मरणहेतुभूते**त्यत्रान्वेति। चकारानुक्तिस्तु सिद्धवत्कारेण। शङ्काविषबुद्धेः मरणहेतुत्वं निर्विषयसर्पदष्टादौ छिन्नकण्टकवेधादौ दृष्टम्। **वस्तुभूत एवे**ति। सत्यस्य मुखप्रतिभासस्य मुखगतविशेषनिश्चयहेतुत्वं, सत्यस्य जलस्य मुखप्रतिभासहेतुत्वोपलक्षकम्। अत उदाहृतेषु सर्वत्र ज्ञानस्य सत्यत्वेन, सत्यादेव सत्योत्पत्तिरिति भावः। ज्ञानस्य सत्यत्वं हेत्वन्त-

**एषां संवेदनानामुत्पत्तिमत्वात् अर्थक्रियाकारित्वाच्च सत्यत्वमवसीयते। हस्त्यादीनामभावे(ऽपि) कथं तद्बुद्धयःसत्या भवन्तीति चेत् - नैतत्, बुद्धीनां सालम्बनत्वमात्रनियमात्। अर्थस्य प्रतिभासमानत्वमेव ह्यालम्बनत्वेऽपेक्षितम्; प्रतिभासमानता चास्त्येव दोषवशात्।**

---

रतोऽपि सिध्यतीत्याह — **एषामिति**। प्रत्येकमनयोस्सत्यत्वसाधकत्वम्। न हि शुक्तौ रजतज्ञानं नोत्पत्तिमत्, इन्द्रियसन्निकर्षादिकारणान्वयव्यतिरेकबलात् तदुत्पत्तिसिद्धिः। उत्पत्तिमतश्च सत्यत्वनियमात्। न चैवं रीत्यापि रजतादेः सत्यत्वसम्भवः। अनुत्पन्नत्वादकार्यकरत्वाच्चेति भावः॥

नन्वसत्यात्सत्योत्पत्तिज्ञप्ती दुर्वारे एव। तथाहि - किं स्वप्नज्ञानमात्रं शुभादिप्रतिपत्तिहेतुः, ज्ञानविशेषो वा। नाद्यः, ज्ञानमात्रस्य कार्यविशेषहेतुत्वेऽतिप्रसङ्गात्। द्वितीयपक्षेऽपि। 'अर्थेनैव विशेषो हि निराकारतया धियामि'ति ज्ञानविशेषस्यार्थविशेषरूपावच्छेदकवैलक्षण्याधीनत्वेन स्वप्नादिविज्ञाने मिथ्याभूतविषयावच्छेदस्योपलक्षणत्वं विशेषणत्वं वा स्वीकार्यम्। उभयत्रापि विशेष्येण सहकार्यान्वयिनः विशेषणत्वात्। उपलक्ष्यबहिर्भूतत्वेऽपि उपलक्ष्य प्रतिपत्त्युपायत्वस्योपलक्षणत्वाच्च विशेषणीभूतस्योपलक्षणीभूतस्य वा मिथ्याभूतविषयावच्छेदस्य सत्यप्रतिपत्त्युपायत्वमास्थेयं भवति। अतो यथार्हमसत्यात् सत्यज्ञप्तिः, सत्योत्पत्तिश्च दुस्त्यजैवेति चेत्? उच्यते, ज्ञानविशेष एव सर्वत्र शुभादिप्रतिपत्तिहेतुः। ज्ञानवैलक्षण्यन्तु स्वालम्बनेन। अविद्यमानस्याप्यालम्बनत्वञ्च दोषवशात्। अतस्सर्वत्र विषयावच्छेदस्योपलक्षणत्वे विशेषणत्वे वा ज्ञानहेतुत्वन्न स्वीक्रियते, विषयस्याविद्यमानत्वेऽपि ज्ञानजननात्। यदि विषयस्यापि ज्ञानहेतुत्वं, तर्हि विषयासन्निधानस्थले का गतिः। वस्तुतः व्यवहारानुगुण्यलक्षणस्वभावविशेषैरेव ज्ञानानां व्यावृत्तिः। न चैवमपि व्यवहारविशेषानुगुण्यस्य व्यावर्तकत्वास्वीकारेऽतिप्रसङ्गः। तस्यैव तथात्वस्वीकारे च व्यवहारविशेषस्य तत्सङ्ग्राहकविषयाधीनत्वे मिथ्याभूतविषयस्यैव न सत्यहेतुत्वमापतितमिति वाच्यम्। व्यवहारानुगुण्यमात्रस्य व्यावर्तकत्वेऽपि क्षत्यभावात्। ईश्वरादिबुद्धीनां व्यवहारानुगुण्यस्यानुपाधिकत्वात्। क्षेत्रज्ञानां तत्तद्विषयविशेषोल्लेखस्य तत्तत्कर्मोपनीतहेतुविशेषायत्तत्वात्। अतो नातिप्रसङ्गः।

वस्तुतोऽस्मन्मते स्वाप्नपदार्थानामपि सत्यत्वेन सत्यादेव सत्योत्पत्तिः। भवतान्तु शुभाशुभयोरपि मिथ्यात्वेन असत्यादेवासत्यप्रतिपत्तिः। न चास्मन्मते शुभाशुभयोः व्यावहारिकसत्यत्वस्वीकारेणासत्यस्वाप्नज्ञानात् व्यावहारिकसत्यप्रतिपत्तिरेवेति वाच्यम्। स्वाप्नज्ञानस्यापि अयथार्थत्वेन व्यावहारिकसत्यत्वात्। एवं यथादर्शनमसत्यात् व्यावहारिकसत्यबुद्धिस्वीकारेऽसत्यात् शास्त्रात् व्यावहारिकब्रह्मप्रतिपत्तेरपि स्वीकर्तुं शक्यतया ब्रह्मणोऽपि व्यावहारिकसत्यत्वमापद्येत। अतो न कुत्राप्यसत्यात्सत्यप्रतिपत्त्यादिः। ननु विषयसत्यत्वे हि ज्ञानसत्यत्वम्। अतो विषयासत्यत्वे स्वाप्नादिज्ञानस्याप्यसत्यत्वमेव। व्यापकविषयसत्यत्वनिवृत्तौ तद्व्याप्यज्ञानसत्यत्वमपि निवर्तेत इत्याशङ्कते — **हस्त्यादीनामिति**। सालम्बनत्वमेव ज्ञानसत्यत्वे नियामकन्न तु विषयसत्यत्वम्। विषयमिथ्यात्वे ज्ञानमिथ्यात्ववादिनामेव ज्ञानसत्यत्वस्य विषयसत्यत्वमपेक्षितम्। न त्वस्माकमित्याशयेन समाधत्ते - **नैतदिति**। ज्ञानानां सालम्बनत्वमेव सत्यत्वे निमित्तम्, निरालम्बनस्य ज्ञानत्वाभावात्। अतो विषयसत्यत्वन्न नियतमिति भावः॥

नन्वर्थस्याभावे ज्ञानस्य वा कथं सालम्बनत्वमित्यत्रार्थस्यासत्यत्वेऽप्यालम्बनत्वसम्भवात्, ज्ञानस्य सालम्बनत्वन्न विरुद्धमित्याशयेनाह — **अर्थस्येति**। **एवकारः** विद्यमानस्यैवावलम्बनत्वमिति नियमं व्यवच्छिनत्ति। अर्थस्य प्रतिभासमानत्वमेव विषयत्वमित्यर्थः। यद्वाऽऽलम्बनशब्दः अर्श आद्यजन्तः, धर्मिप्रधाननिर्देशो वा। तथा च ज्ञानस्य सालम्बनत्वेऽर्थस्य प्रतिभासमानत्वमेवापेक्षितम्। न तु सत्यत्वमपीत्यर्थः। ननु कथमसतोऽर्थस्य प्रतिभासमानत्वमित्यत्राह - **प्रतिभासमानतेति**। अर्थस्य ज्ञानापेक्षया प्रतिसंबन्धित्वरूपप्रतिभासमानत्वे **नार्थसत्यत्वमपेक्षितम्**।

**स तु बाधितोऽसत्य इत्यवसीयते। अबाधिता हि बुद्धिः सत्यैवेत्युक्तम्।**

**रेखया वर्णप्रतिपत्तावपि नासत्यात् सत्यबुद्धिः, रेखायाः सत्यत्वात्। ननु वर्णात्मना प्रतिपन्ना रेखा वर्णबुद्धिहेतुः। वर्णात्मता त्वसत्या। नैवम्, वर्णात्मताया असत्याया उपायत्वायोगात्। असतो निरुपाख्यस्य ह्युपायत्वं न दृष्टमनुपपन्नं च। अथ तस्यां वर्णबुद्धेरुपायत्वम्। एवं तर्ह्यसत्यात् सत्यबुद्धिर्न स्यात्; बुद्धेः सत्यत्वादेव। उपायोपेययोरेकत्वप्रसङ्गश्च; उभयोर्वर्णबुद्धित्वाविशेषात्। रेखाया अविद्यमानवर्णात्मनोपायत्वे च, एकस्यामेव रेखायामविद्यमानसर्ववर्णात्मकत्वस्य सुलभत्वादेकरेखादर्शनात् सर्ववर्ण - प्रतिपत्तिः स्यात्। अथ पिण्डविशेषे देवदत्तादिशब्दसंकेतवत् चक्षुर्ग्राह्यरेखाविशेषे श्रोत्रग्राह्यवर्णविशेषसङ्केतवशात् रेखाविशेषो वर्णविशेषबुद्धिहेतुरिति - हन्त तर्हि सत्यादेव सत्यप्रतिपत्तिः, रेखायाः सङ्केतस्य च सत्यत्वात्। रेखागवयादपि सत्यगवयबुद्धिः सादृश्यनिबन्धना। सादृश्यं च सत्यमेव। न चैकरूपस्य शब्दस्य नादविशेषेणार्थभेदबुद्धि-**

किन्तु विषयासन्निधानस्थले दोष एव। ननु तर्हि कथं विषयस्यासत्यत्वनिश्चयः असत्यविषयस्यापि प्रतिभासमान-त्वाविशेषादित्यत्राह — **स त्विति**। बाधितत्वादसत्यत्वमिति भावः। नैतादृशरीत्या बुद्धेरसत्यत्वं सूपपादमित्याह — **अबाधितेति**। विषयस्येव बुद्धेरबाधितत्वात्सत्यत्वमेवेति भावः।

एवं सत्यबुद्धिहेतुभूतज्ञानानां सत्यत्वमुपपादितम्। अथ सत्यबुद्धिहेतुभूतस्य ज्ञानातिक्तस्यापि सत्यत्वं स्थापयति — **रेखाया** इति। ननु रेखायां न वर्णात्मत्वं सत्यम्। अन्यथा दीर्घरेखायाः वर्णप्रतिपत्त्यापत्तेः। अतो वर्णात्मतया प्रतिपन्नरेखाया एव वर्णबुद्धिहेतुत्वं वाच्यम्। ततश्चासत्यायाः वर्णात्मताया अपि हेतुत्वेनासत्यात्सत्योत्पत्ति दुर्वारित्याशङ्कते — **नन्विति**। **किं वर्णात्मताया** इति। **असत्याया** इति हेतुगर्भम्। असतोहेतुत्वासम्भवात्। हेतुत्वं हि नियतपूर्वभावित्वम्। कथमिदमसतः स्यादिति भावः। तदेवोपपादयति — **असत** इति। **निरूपाख्यस्य** = प्रमित्यविषयस्य। न दृष्टमित्युपलम्भविरोधः। कल्पनमपि न सम्भवतीत्याह — **अनुपपन्नश्चेति**। कल्पकाभावादिति भावः। अन्यथा गगनकुसुमस्यापि हेतुत्वप्रसङ्गः। असतः हेतुत्वकल्पनन्तु व्याप्त्यनुसारेण हि। न ह्यसतः व्याप्तिः सम्भवति। एवं हेतुत्वसाधनेऽपि पूर्ववृत्तित्वरूपहेतुत्वाभावेनानुमानं कालात्ययापदिष्टमेव भवेत्। असत्वं वा न स्यात्। नासत् वृत्तिरिति हि व्याहतं भाषणम्। द्वितीयपक्षमनूद्य निरस्यति - **अथेति**। हेतुमाह - **बुद्धेरिति**। **एवकारः** दत्तोत्तरत्वव्यञ्जकः। दूषणान्तरमाह — **उपायेति**। वर्णबुद्धिं प्रति वर्णबुद्धेरेव हि उपायत्वमुच्यत इति भावः।

ननु न वर्णात्मकायाः वर्णबुद्धिहेतुत्वम्। नापि वर्णबुद्धेः। किन्त्वविद्यमान वर्णात्मत्वेन रेखाया एवेति न दोष इत्यत्र तादृशरेखायाः सत्यत्वेन सत्यादेव सत्योत्पत्तिरिति समाधेः पूर्वमुक्तत्वेऽपि दूषणान्तरमाह - **रेखाया** इति। अविद्यमानवर्णात्मकरेखाया एव हि हेतुत्वम्। ततश्चैकरेखादर्शनेऽप्यविद्यमानसर्व वर्णात्मकत्वसत्त्वेन हेतुसत्वात् सर्वेऽपि वर्णाः प्रतीयेरन्निति भावः। ननु न केवलमविद्यमानवर्णात्मकरेखायाः हेतुत्वं, किन्तु सङ्केतसहकृतरेखायाः। अतो न सर्ववर्णप्रतिपत्यापत्तिरिति शङ्कते - **अथेति**। रेखायां चक्षुर्ग्राह्यत्वविशेषणं वर्णे श्रोत्रग्राह्यत्वविशेषणञ्च रेखावर्णयोरैक्यभ्रमनिरासाय। उक्तमेवोत्तरमस्यापीति समाधत्ते - **हन्तेति**। उदाहरणान्तरेऽप्येवमेवेत्याह - **रेखेति**। **च**कारेण रेखासत्यत्वं व्यञ्जितम्।

स्फोटवादावलम्बनेऽपि नासत्यात्सत्यप्रतिपत्तिरित्याह - **न चेति**। अयमत्राशयः - कत्वखत्वाद्युक्तवर्णातिरिक्तः स्वरव्यञ्जनवर्णरूपनादभेदेन स्फोट्यमानः एकरूपः शब्दः स्फोटः। स एवार्थविशेषप्रतिपत्तिहेतुः। कत्वादिकं तु स्फोटाभिव्यञ्जकवर्णगतम्। स्फोटरूपशब्दे आरोपितम्। अतो नादगतानां कत्वादीनां शब्दे स्फोटेऽध्यासात्। तेनारोपेण शब्दस्य स्फोटरूपस्यार्थविशेषप्रतिपत्तिहेतुत्वादसत्यात्सत्यप्रतिपत्तिस्सिद्धेति। तदेतन्निरस्यति — **न चेति**। हेतुमाह - **नानेति**। अभिव्यङ्ग्याभिव्यञ्जकयोः स्फोटनादयोरर्थविशेषसंबन्धस्य तद्ग्रहणस्य च सत्यत्वेन नासत्यात्सत्यप्रतिपत्तिरिति भावः। न च कत्वादीनां नादधर्माणां शब्दे आरोपः। तदभावेऽपि स्फोटस्य कत्वादियुक्त-

**हेतुत्वेऽप्यसत्यात्सत्यप्रतिपत्तिः ; नानानादाभिव्यक्तस्यैकस्यैव शब्दस्य, तत्तन्नादाभिव्यङ्ग्यस्वरूपेणार्थभेदबुद्ध्युत्पत्तिहेतुत्वात् । शब्दस्यैकरूपत्वमपि न साधीयः ; गकारादेर्बोधकस्यैव श्रोत्रग्राह्यत्वेन शब्दत्वात् । अतोऽसत्याच्छास्त्रात्सत्यब्रह्मविषयप्रतिपत्ति दुरुपपादा ।**

---

नादाभिव्यक्ततयैव बोधकत्वसिद्धेः । अस्तु वा कत्वादिवैशिष्ट्यस्य शब्देऽऽरोपः, अथापि तज्ज्ञानस्यैकार्थविशेषप्रतिपत्तिहेतुत्वमिति ज्ञानस्य सत्यत्वेन नासत्यात्सत्यप्रतिपत्तिः । असत्यस्य कत्वादिवैशिष्ट्यस्य च सत्यार्थप्रतिपत्तावुपयोगाभावेनाहेतुत्वाच्च । वस्तुतो वर्णाद्यपेक्षया एकरूपः स्फोटाख्यः शब्द एव नास्ति । वर्णसमूहस्यैवार्थविशेषप्रतिपत्तिहेतुत्वात् । मध्ये स्फोटस्यानुपलम्भनिरस्तत्वात् । लाघवात्कल्पकस्याप्यन्यथासिद्धत्वाच्च । अतोऽत्रासत्यात्सत्योत्पत्तिशङ्कापि सुदूरपराहतेत्याशयेनाह — **शब्दस्येति** । हेतुमाह — **गकारादेरिति** । एतेन गकारादेरेव श्रोत्रग्राह्यत्वात् श्रोत्रग्राह्यस्य च शब्दत्वात्तस्य चानेकरूपत्वात् नैकरूपः स्फोटाख्यः शब्दः प्रमाणसिद्ध इति दर्शितम् । बोधायनापरनामधेयेनोपवर्षेण गकारादेरेव शब्दत्वं बोधकत्वं चोक्तमिति शाबरेप्युक्तम् - 'गौरित्यत्र कः शब्दः गकारौकारविसर्जनीयाः इति भगवानुपवर्ष' इति । अत्र ककारादेरित्यनुक्त्वा गकारादेरित्युक्तिस्तु उक्तवाक्यसूचनायैव । एतेन वृत्तिकृद्बोधायनोपज्ञत्वं स्वमतस्य सूचितम् ।

ननु गौरित्यस्य वाचकत्वमनुपपन्नम् । किमत्रैकैकवर्णस्य वाचकत्वमुत वर्णसमूहस्य । नाद्यः, वर्णान्तरवैयर्थ्यात् । गकारमात्रेण गोगवयगजाद्यप्रतीतेश्च । न द्वितीयः, क्रमेणोच्चरितानां क्रमेण श्रुतानां वर्णानां यौगपद्याभावात् । न चान्त्यवर्णस्य पूर्वपूर्ववर्णानुभवजनितसंस्कारसहकृतस्य वाचकत्वमपि शक्यशङ्कम् । तादृशसंस्काराणां वर्णविषयकस्मरणजनकत्वेऽपि, अननुभूतार्थप्रतिपत्तिहेतुत्वाभावात् । अतः वर्णाभिव्यङ्ग्यः कश्चित्स्फोटः स्वीकर्तव्य इति चेन्न । वर्णानामर्थप्रतिपत्तिहेतुत्वाभाववत् स्फोटाभिव्यञ्जकत्वस्याप्ययोगात् । एकैकवर्णस्य स्फोटाभिव्यञ्जकत्वे वर्णान्तरवैयर्थ्यम् । गकारमात्रेण गोगवयगजादिपदस्फोटाभिव्यक्तिप्रसङ्गश्च । संस्कारसहकृतान्त्यवर्णस्यानुभूत वर्णस्मरणहेतुत्वेऽप्यननुभूतस्फोटाभिव्यञ्जकत्वाभावान्न तेनापि स्फोटाभिव्यक्तिसम्भव इति वर्णसमुदायपक्षोऽपि न घटते । अतः स्फोटाभिव्यञ्जकतया स्वीकृतसामग्रया एवार्थाभिव्यञ्जकत्वं स्वीकर्तुं युक्तम् । लाघवात् ।

ननु 'शब्दादमुमर्थं प्रतीम' इत्यादौ एकवचनोक्तिः कथं, वर्णानां बहुत्वात् ? मैवम् । वर्णसमुदायविषयकत्वादेकवचनस्य । अत एव पदैकत्वबुद्धिरपि । एवं 'द्वे पदे, त्रीणि पदानी'त्यादीन्यपि समुदायगतद्वित्वत्रित्वविवक्षानिबन्धनानि । ननु भिन्नेषु वर्णेषु 'अयं शब्दोऽयं शब्द' इत्यनुवृत्तव्यवहारः कथम्? उच्यते । श्रोत्रग्राह्यत्वोपाधिनिबन्धनत्वात्तद्व्यवहारस्य । ननु श्रोत्रग्राह्यत्वोपाधिः कथं गृहीतः? शब्दवत्तस्यश्रोत्रग्राह्यत्वाभावात् । अनुमानादिना श्रोत्रग्राह्यत्व ग्रहणेऽविलम्बितशब्दसाक्षात्कारश्चानुपपन्न इति चेदुच्यते । 'इदं चाक्षुषम्, इदं चाक्षुषमि'त्यनुवृत्तव्यवहारप्रयोजकस्य चक्षुर्ग्राह्यत्वस्यानुमानादिना ग्रहणेऽप्यविलम्बितरूपादिसाक्षात्कारवदुपपत्तेः । न्यायस्तूभयत्र समानः । अतः स्फोटकल्पनं कल्पकाभावगौरवादिपराहतम् । ननु 'स्फोटस्त्वं वर्णसंश्रय' इत्यागमबलादेव स्फोटसिद्धिरिति चेन्न । स्फुटीकरण शक्तावेवागम तात्पर्यात् । अतोऽसत्यात् सत्यविषयप्रतिपत्तेः कुत्राप्यभावेनासत्याच्छास्त्रादपि सत्यब्रह्मविषयकप्रतिपत्तिः न सूपपादेत्याह — **अत** इति ।

ननु शास्त्रस्यासत्यत्वे हि सत्यप्रतिपत्तिहेतुत्वन्न स्यात् । तदेव तु नास्ति व्यावहारिकसत्यत्वस्वीकारात् । सत्यप्रतिपत्तिहेतूनां सत्यतयाऽभिमतामपीदृश सत्यत्वस्यैव वक्तव्यत्वाच्च । अतो गगनकुसुमादिवदसत्यत्वाभावेन न सत्यब्रह्मविषयकप्रतिपत्तिहेतुत्वं विरुद्धम् । खपुष्पादौ कादाचित्कधीविषयत्वस्याप्यसत्वेन तुच्छत्वसम्भवेऽपि न शास्त्रस्य तत्सम्भवः । 'अस्ती'ति प्रतीतिविषयत्वात् । न च तावता शास्त्रस्य सत्यत्वप्रसङ्गेन सदद्वैतहानिरिति वाच्यम् । तत्त्वज्ञानानन्तरं तेन बाधितत्वेनासत्यत्वात् । न च बाधितस्य शास्त्रस्य कथं निर्विशेष ब्रह्मात्मैकत्वज्ञानजनकत्वमिति शङ्क्यम् । तदा तस्य तादृशज्ञानजनकत्वास्वीकारात् । बाधात्पूर्वमेव हि शास्त्रं तत्वज्ञानं जनयति । न हि शास्त्रेण तत्त्वज्ञानेऽनुत्पन्न एव तत्त्वज्ञानेन शास्त्रबाधः शक्यशङ्कः । अतो ज्ञानजनकत्वदशायां शास्त्रस्य सद्बुद्धिबोध्यत्वेन न शास्त्रस्यासत्यत्वम् ।

**ननु न शास्त्रस्य गगनकुसुमवदसत्यत्वम् ; प्रागद्वैतज्ञानात्सद्बुद्धिबोध्यत्वात् । उत्पन्ने तत्वज्ञाने ह्यसत्यत्वं शास्त्रस्य । न तदा शास्त्रं निरस्तनिखिलभेदचिन्मात्रब्रह्मज्ञानोपायः । यदोपायः, तदा अस्त्येव शास्त्रम्, अस्तीति बुद्धेः । नैवम् । असति शास्त्रेऽस्ति शास्त्रमिति बुद्धेर्मिथ्यात्वात् । ततः किम् ? इदं ततः - मिथ्याभूतशास्त्रजन्यज्ञानस्य मिथ्यात्वेन तद्विषयस्यापि ब्रह्मणो मिथ्यात्वम् ; यथा धूमबुद्ध्या गृहीतबाष्पजन्याग्निज्ञानस्य मिथ्यात्वेन तद्विषयस्याग्नेरपि मिथ्यात्वम् ।**

**पश्चात्तनबाधादर्शनञ्चासिद्धम्; शून्यमेव तत्त्वमिति वाक्येन तस्यापि बाधदर्शनात् । तत्तु भ्रान्तिमूलमिति चेत् - एतदपि भ्रान्तिमूलमिति त्वयैवोक्तम् । पाश्चात्त्यबाधादर्शनं तु तस्यैवेत्यलमप्रतिष्ठितकुतर्कपरिहसनेन ।**

---

ज्ञानानन्तरं तस्यापि बाधितत्वेन नाद्वैतहानिरिति चोदयति — **नन्विति** । **प्रागद्वैतज्ञानादि**त्यनेन शास्त्रस्य कादाचित्कधीविषयतया तुच्छत्वं व्यावर्तितम् । **उत्पन्ने तत्त्वज्ञाने** इत्यनेन सदद्वैतभङ्गः परिहृतः । **न तदे**त्यादिवाक्यजातेन कथमसत्यस्य शास्त्रस्य निर्विशेषब्रह्मप्रतिपत्तिहेतुत्वमिति शङ्का परिहृता । **'अस्ती'ति बुद्धेरि**ति पुनः भाषणन्तु समाधिसौकर्याय । प्रतिक्षिपति — **नैवमिति** । उपायकालेऽपि शास्त्रस्य सत्यत्वाभावादिति भावः । तदेवोपपादयति — **असतीति** । अस्तु शास्त्रबुद्धेर्मिथ्यात्वं किं तावतेति शङ्कते — **ततः किमिति** । दूषणस्य स्फुटत्वाभिप्रायेणोपालभते - **इदं तत** इति । दूषणं विवृणोति - **मिथ्येति** । निदर्शनेनोपपादयति - **यथेति** । अयं भावः - वस्तुतः शास्त्रस्य ज्ञानबाध्यत्वेनासत्यत्वादसत्येवशास्त्रेऽस्तीति बुद्धिः मिथ्याभूतार्थविषयिणी मिथ्यैव । ततश्च धूमत्वेन गृहीतबाष्पजन्यस्याग्निज्ञानस्य मिथ्यात्वेन तद्विषयाग्नेर्मिथ्यात्ववदस्तित्वप्रकारकभ्रमविषयमिथ्याभूतशास्त्रजन्यस्य ब्रह्मज्ञानस्यापि मिथ्यात्वेन तद्विषयब्रह्मणोऽपि मिथ्यात्वं प्रसज्येत इति । इदञ्च परमतमनुसृत्य । तन्मते स्वाप्नादिज्ञानस्य तद्विषयस्य च मिथ्यात्वस्वीकारात् । स्वमते तु धूमत्वप्रकारकबाष्पज्ञानस्य तज्जन्याग्निज्ञानस्य मिथ्याभूतशास्त्रज्ञानस्य तज्जन्यब्रह्मज्ञानस्य च सत्यत्वस्वीकारात् । न च परमते तादृशज्ञानस्यासत्यत्वेऽपि तज्जन्यज्ञानविषयस्य सत्यत्वमिष्टमेवेति वाच्यम् । असत्यस्य हेतुत्वास्वीकारात् । वस्तुतोऽत्र मिथ्यात्वं भ्रमत्वमेव । ततश्चासति शास्त्रे 'शास्त्रमस्ती'ति बुद्धिः भ्रम एव । तथा च यथा धूमभ्रमजन्याग्निज्ञानविषयस्याग्नेर्यथा न सत्यत्वम्, 'अस्ति शास्त्रमि'ति भ्रमजन्यज्ञानविषयस्यापि असत्यत्वमेव स्यात् ,पूर्वं सतः पश्चादसत्वस्वीकारे च शास्त्रस्यासत्यत्वमेव न मिथ्यात्वं युष्मदभिमतं सिध्येत् । ननु पश्चात्तनबाध एव मिथ्यात्वे प्रयोजकम् । ब्रह्मणस्तु न सोऽस्ति । अतो न मिथ्यात्वमित्यत्राह — **पश्चादिति** । बाधदर्शनमुपपादयति — **शून्यमेवेति** ।

ननु 'शून्यमेव तत्त्वमि'त्यस्य भ्रान्तिमूलत्वेन न प्रामाण्यमिति शङ्कते — **तत्त्विति** । प्रतिबन्द्या समाधत्ते — **एतदपीति** । त्वयैवोक्तमित्यनेन नास्माकं तदुपपादने प्रयासोऽपेक्षित इति सूचितम् । पाश्चात्यबाधादर्शनस्य प्रामाण्यहेतुत्वे सर्वशून्यवादिमतमेव विजयि स्यात् । तदुपरि निषेध्याभावेन बाधासम्भवादित्याह — **पाश्चात्येति** । ननु 'सर्वं नास्ती'ति सर्वशून्यवादिनोऽपि 'सर्वमस्ती'ति पाश्चात्यबाधो दृश्यते इत्यत्राह — **इत्यलमिति** । प्रपञ्चमिथ्यात्ववादिनोऽपि 'सत्यः प्रपञ्च' इति पाश्चात्यबाधसम्भवात् । यदि नास्तीति वचनस्यैव निषेधत्वं, तर्हि सर्वमस्तीत्यस्यापि न निषेधत्वसम्भवः ।

ननु 'सर्वं नास्ती'ति निषेधो न सम्भवति शास्त्रेण ब्रह्मणो बोधनादिति चेत्, तर्ह्यनुभूतित्यतिरिक्तं नास्तीति निषेधोऽप्यसम्भवी । प्रत्यक्षादिना निखिलपदार्थप्रतिपादनेन बाधात् । दोषमूलकत्वमुभयत्राप्यविशिष्टमिति भवतां गोष्ठीषु न किञ्चिदपि वक्तव्यमवशिष्यते इति भावः । अतो बौद्धाः भवन्तश्च किञ्चिदपि प्रमाणादिकमादाय किञ्चिदर्थजातम् साधयितुमसमर्थाः । सर्वस्याप्रामाण्यात् । तदुक्तं - 'वेदोऽनृतो बुद्धकृतागमोऽनृतः प्रामाण्यमेतस्य च तस्य चानृतम् ।

**यदुक्तम्, वेदान्तवाक्यानि निर्विशेषज्ञानैकरसवस्तुमात्रप्रतिपादनपराणि, 'सदेव सोम्येदमग्र आसीत्' इत्येवमादीनीति - तदयुक्तम्। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनमुखेन सच्छब्दवाच्यस्य परस्य ब्रह्मणो**

---

एवं प्रत्यक्षशास्त्रयोरुभयोर्दोषमूलकत्वाविशेषान्न बाध्यबाधकभावसम्भव इति न प्रत्यक्षविरुद्धां सकलभेदनिवृत्तिं शास्त्रमवगमयेदिति न शास्त्रस्य निर्विशेषपरत्वसम्भवः। प्रत्यक्षविरोधादेव हि 'आदित्यो यूप' इत्यादि यूपादित्याद्यैक्य-प्रतिपादने न समर्थम्। न च यूपाञ्जनविधिशेषत्वेनान्यपरत्वात्तदप्रतिपादनमिति शङ्क्यम्। अर्थवादवाक्यानामन्यपरत्वेऽपि स्वार्थे प्रामाण्यस्य वेदान्तिभिरत्यागात्। स्वार्थे प्रामाण्यस्य भवद्भिरप्यङ्गीकारात्। अतोऽन्यपरत्वेऽपि स्वार्थे प्रामाण्यस्य वक्तव्यतया यूपादित्याद्यैक्याप्रतिपादने प्रत्यक्षविरोधं विना नान्यं हेतुं द्रक्ष्यामः इति प्रत्यक्षविरोध एव शरणीकरणीयः। न चार्थवादानां स्वार्थेऽपि प्रामाण्ये प्रत्यक्षविरुद्धमपि यूपादित्याद्यैक्यं कुतो नावगमयतीति वाच्यं, तात्पर्यलिङ्गाभावात्। 'उपक्रमोपसम्हारावभ्यासोऽपूर्वताफलम्। अर्थवादोपपत्ती च' इति षड्विधतात्पर्यलिङ्गस्यापि स्वार्थबोधने हेतुत्वोक्तेः साधकबाधकप्रमाणाभावरूपापूर्वत्वस्यापि तात्पर्यलिङ्गत्वात्तस्य च प्रकृते अभावात्। अपूर्वत्वं हि साधकबाधक-प्रमाणाभावः। तदुक्तं - 'असन्निकृष्टवाचा च द्वयमत्र जिहासितम्। तादूप्येण परिच्छित्तिस्तद्विपर्ययतोऽपि वा॥' इति। अतो न शास्त्रस्य प्रत्यक्षविरुद्धार्थबोधकत्वमिति न निर्विशेषबोधकं शास्त्रम्। एवं प्रमाणानां विशिष्टविषयकत्वस्थापनेन विशिष्य शब्दस्य च विशिष्टबोधकत्वस्थापनेन च, न शास्त्रस्य निर्विशेषत्वपरत्वं सिद्धम्।

अथ तेनापरितुष्यत उदाहृतानां बहूनां कारणशोधकवाक्यानां निर्विशेषपरत्वन्न सम्भवतीति प्रदर्श्यते। तत्रादौ परोक्तमनुवदति - **यदुक्तमिति**। **वस्तुमात्रप्रतिपादने**त्यनेन वेदान्तवाक्यानां सगुणब्रह्मणि तात्पर्यं नास्तीति व्यञ्जितम्। सगुणवाक्यानां दृष्टिविधिवदन्यपरत्वञ्च सूचितम्। **एवमि**त्युक्तिः उपनिषदन्तरवृत्त्येतादृशवाक्यसजातीयवाक्यसङ्ग्राहिका। प्रत्यक्षश्रुतिलिङ्गादिसर्वविरोधेनानुपादेयमिदमित्याभिप्रेत्याह — **तदयुक्तमिति**। उपक्रमोपसम्हारादि तात्पर्यलिङ्गैः पराभीष्टं न सेत्स्यतीति स्फुटयति — **एके**ति।

प्रतिपत्तिसौकर्याय किञ्चिद्विलिख्यते। समस्तवेदतदङ्गान्यधीत्यागतं श्वेतकेतुं पुत्रं स्नेहेन ब्रह्मोपदिदिक्षुरुद्दालकः ब्रह्मजिज्ञासोत्पादनार्थमाह - 'स्तब्धोऽस्युत तमादेशमप्राक्ष्यः येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमि'ति। अत्र स्तब्धत्वं निर्व्यापारत्वं, मोक्षसाधनीभूतब्रह्मज्ञानेच्छाप्रयोज्यव्यापाराभावपर्यवसितम्। किमस्य ब्रह्मज्ञानसिद्ध्या स्तब्धत्वमित्याशङ्क्याह — **उत तमादेशमिति**। **त**च्छब्दः प्रसिद्धपरः, आदेशविशेषणभूतः। पृच्छते र्द्विकर्मत्वात्। आचार्यमित्यध्याहारः। 'तपस्स्वाध्यायनिरतं तपस्वी वाग्विदां वरम्। नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवमि'त्यत्र नारदं तपः - परमात्मनं परिपप्रच्छेति द्विकर्मकत्वेन प्रयोगात्। तपश्शब्दः परमात्मवाचकः। तन्नामसु पाठात्। यद्वा - **तं** = आचार्यमित्यर्थः। यद्यपि **येने**ति यच्छब्दश्रवणात्तच्छब्दो यच्छब्दार्थक एव, अथापि यत्तदोर्नित्यसंबन्धात्तच्छब्दः स्वरससिद्ध इति न तच्छब्दस्य तदर्थकत्वावश्यकता। आचार्यमित्यध्याहाराभावप्रयुक्तलाघवञ्च। **आदेशं** = प्रशासितारम्। दिशिधातोः प्रशासने प्रसिद्धिप्राचुर्यात्।

अत्र केचित् - आदेशशब्दो न प्रशासनकर्त्रर्थकः, अपि तूपदेशकर्मत्वार्थकः। 'अकर्तरि च कारके सञ्ज्ञायामि'ति कर्तृव्यतिरिक्तकारके घञो विहितत्वेनास्य घञन्तत्वात्। ब्रह्मणः प्रशासनकर्मत्वापत्तेः, न चात्र कर्तरि 'पचाद्यच्'प्रत्ययः शङ्कनीयः। 'इगुपधात्क' इत्यपवादसूत्रेण कप्रत्ययप्रसङ्गात्। न च कर्तरि 'क'प्रत्यय एव साधनीयः। तथा सति 'क्ङिति चे'ति गुणनिषेधेनादेशरूपासिद्धेः। तस्मादस्य घञन्तत्वस्यैव वक्तव्यतया घञश्चाकर्तरिविहितत्वेन प्रशास्तिकर्मत्वस्य ब्रह्मणि बाधेनोपदेश्यपरत्वमेव स्वीकर्तुं युक्तमिति। अत्रोच्यते - उपदेश्यत्वस्यानुक्तावपि तत्सिद्धेस्तदुक्तिनैष्फल्यात्। आङ्पूर्वकदिशिधातोरुपदेशवाचित्वाभावात्मुख्यार्थपरित्यागे प्रमाणाभावात्। उपदेश्यत्वस्य कर्मब्रह्मसाधारणत्वेन ब्रह्मा-

साधारण्याभावाच्च । इष्टप्राप्त्यनिष्टनिवृत्तितत्साधनेष्वपि ह्युपदेश्यत्वं साधारणम् । 'येनाश्रुतमि'त्यादिवाक्यैककण्ठ्यात् स्वज्ञानेनान्यज्ञानहेतुत्वविशिष्टोपदेश्यत्वस्यासाधारणत्वेऽपि तस्यार्थसिद्धत्वेन तदुक्तेरनपेक्षितत्वादनपेक्षितार्थस्वीकारा-पेक्षयापेक्षितार्थस्यैव वाच्यत्वाच्च । शासितृत्वन्तु 'अन्तः प्रविष्टः शास्ता जनानां', 'एतस्य वाऽक्षरस्य प्रशासने' इत्याद्युक्तेः ब्रह्मण असाधारणम् । अकर्तरि विहितत्वेऽपि घञः कर्तरि लक्षणायाः स्वीकारेणानुपपत्त्यभावात् ।

न च प्रकृत्यैव किन्न लक्षणा स्वीक्रियते इति वाच्यम् । तस्य प्रथमश्रुतत्वेन प्रसिद्धिप्राचुर्यात् प्रशासनार्थकत्वस्य वाच्यतया तत्कर्मकत्वस्य ब्रह्मणि बाधेन प्रत्ययलक्षयाया एव युक्तत्वात् । प्रकृतिप्रत्यययोः प्रत्ययलक्षणायाः सर्वसिद्धत्वाच्च । 'प्राणा वा व ऋषय' इत्यत्र ऋषिशब्दानुरोधेन बहुवचनश्रुतेः गौणत्वं हि स्थापितम् । 'उपदेशोऽजननुनासिक' इति सूत्रे 'करणाधिकरणयोश्चे'ति ल्युटा बाधितस्य घञ 'अकर्तरि च कारक' इत्यनेनाप्रसङ्गमाशङ्क्य 'कृत्यल्युटो बहुलमि'ति सूत्रेण भाष्यकृता घञः समर्थितत्वात् । तन्न्यायेनात्रापि तेनैव सूत्रेण घञ्प्रत्ययसिद्धिसम्भवेन लक्षणाया अभावात् । घञन्ताद्भाव-वाचिन आदेशशब्दात् कतृतासम्बन्धेन सम्बन्धिपरामर्शस्य 'अर्शआद्यच्' प्रत्ययस्य स्वीकारे लक्षणागन्धस्याप्यभावाच्च । 'विवक्षातः कारकाणि भवन्ती'ति न्यायेन कतुरिव साधकतमत्वविवक्षया घञ उपपत्तिसम्भवाच्च ।

ननु तर्ह्यकर्तरीति नियमः व्यर्थस्स्यात् । मैवम् । करणत्वादिविवक्षाविरहे कर्तरि तस्यासाधुत्वनिर्वाहार्थत्वात् । अतः प्रसिद्धिप्राचुर्यात्घञ उपपत्तिसम्भवात्प्रकृत्यर्थस्वारस्यादर्थौचित्याच्चादेशपदस्य प्रशासनकर्तैवार्थः । **येन** = सूक्ष्म-चेतनाचेतनविशिष्टब्रह्मणा । 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विज्ञातं भवति', 'कस्मिन्नु भगवो विज्ञात इदं सर्वं विज्ञातं भवती'त्यादि श्रुत्यन्तरैककण्ठ्यात् 'श्रुतेन मतेन विज्ञातेनाश्रुतममतमविज्ञातं श्रुतं मतं विज्ञातं भवती'त्यर्थः । ब्रह्मणस्सत्तया सर्वस्य विज्ञातत्वासम्भवात्, मृत्पिण्डसत्तया तत्कार्यस्य ज्ञाततत्वासम्भवेन दृष्टान्तसामर्थ्यादपि यथोक्तार्थस्य स्वीकर्तव्यत्वात् । उक्तश्रुत्यनुसारादेव सर्वमित्यध्याहार्यम् । स्थूलचिदचिच्छरीकमिति तदर्थः । **येन** = सूक्ष्म-चिद्रचिच्छरीरक ब्रह्मणाः ततश्च सूक्ष्मचिदचिच्छरीकब्रह्मज्ञानेन स्थूलचिदचिच्छरीरकज्ञानं भवतीत्युक्ते तयोः कार्य-कारणभावः प्रतीयते । कार्याभिन्नत्वे सति कारणत्वरूपमुपादानत्वं विशिष्ट ब्रह्मण उक्तं भवति । अन्यथोपादानोपादेय-भावाभावे एकविज्ञानेनापरविज्ञानस्यानुपपन्नत्वात् । एतच्छङ्का परिहारायैव 'यथा सोम्ये'ति वाक्यप्रवृत्तेः । **मृण्मयं** = मृद्विकारः । कारणीभूतैकमृत्पिण्डज्ञानेनतत्कार्यभूततद्विकारज्ञानम् ।

नन्वसत्कार्यवादिनां कथं कारणविज्ञानेन कार्यविज्ञानमित्यत्राह — **वाचेति** । **वाचेति** तृतीयान्तम् । वाक्पूर्वकव्य-वहारसिद्ध्यर्थमिति तदर्थः । 'अध्ययनेन वसती'त्यादाविव प्रयोजनतया हेतुत्वं विवक्षितम् । **विकारः** घटत्वाद्यवस्था । **नामधेयं** = घट इत्यादि नाम । **आरम्भणमिति** कर्मणि ल्युट् । आरभ्यते = आलम्ब्यते स्पृश्यत इति यावत् । केनेत्यपेक्षायां मृत्पिण्डेनेत्यर्थसिद्धम् । तथा च वाक्पूर्वकहानोपादानादिव्यवहार सिध्यर्थं मृत्पिण्डेन नामरूपे स्पृश्येते । मृत्पिण्डो नामरूपभाक् भवतीति यावदित्यर्थः पर्यवसति । नन्वेतावता कार्यकारणयोरेकत्वं कथं सिद्धमित्यत्राह - **मृत्तिकेत्येव सत्य-मिति** । मृत्तिकात्वमेवसत्यमित्यर्थः, इतिशब्दकरणात् । परेषान्तु मृत्तिकामात्रस्य परमार्थत्वाद्विकारासत्यत्वाच्च मृत्तिकैव सत्यमिति वक्तव्यमिति इतिशब्दो व्यर्थः । अनेन कार्यकारणयोरनन्यत्वं सिद्धम्, नामरूपादीनां व्यवहारादिसिद्ध्यर्थत्वात् । **मृत्तिकेत्येव सत्यमिति** निदर्शितत्वेनाद्वैतिमतस्यावकाश एव न भवति । तदा हि रज्जुसर्पादि दृष्टान्तयितव्यम् । सत्यज्ञानेन मिथ्याभूतस्य ज्ञाततत्वोक्तेर्विरुद्धत्वात् । 'विज्ञातं स्यादि'त्यपि न घटते, मिथ्यात्वेन ज्ञातं भवतीत्यध्याहारोऽप्यनुपपन्नः । अगतिकस्थल एवाध्याहर्तव्यत्वात् । घटादेरिव मृदोऽपि तन्मतेऽसत्यत्वेन लोकदृष्ट्या विभज्योदाहृति प्रदर्शनं चानुपपन्नम् । बहुदृष्टान्तोक्तिः कार्यकारणयोरनन्यत्वस्थापनार्था । तस्मात् 'येने'त्यादिकं कारणविज्ञानेन कार्यविज्ञानप्रदर्शनपरमेव ।

ननु धूमज्ञानेन वह्निज्ञानोदयेन धूमस्यापि वह्न्युपादनत्वापत्तिः? मैवम्। धूमस्य ज्ञापकहेतुत्वेऽपि कारकहेतुत्वाभावात्। अत्र 'विज्ञातमि'त्युक्त्या कार्यकारणज्ञानयोरेकत्वं प्रतीयते। न हि धूमज्ञान एव वह्नेर्विषयत्वमिति, किन्तु ज्ञास्यमानत्वमेव। सूक्ष्मचिदचिद्विशिष्टब्रह्मज्ञानेन स्थूलचेतनाचेतन विशिष्टब्रह्मणः ज्ञातत्वमेवेति लक्षणसमन्वयः। यथा 'गच्छन्तं देवदत्तं किमसौ ज्ञात 'इत्युक्ते ज्ञात एवेति समाधिः। न हि तत्र देवदत्तस्य ज्ञातत्वेऽपि गमनविशिष्टदेवदत्तो ज्ञातः। सम्प्रत्येव गमनाश्रयत्वात्। तद्वत्। एवं दृष्टान्तादिप्रदर्शनमुखेन 'एवं सौम्य स आदेशो भवती'ति आदेशस्वरूपं निरूपयामास। पश्चात् श्वेतकेतुः अन्तरङ्गभूताय स्वस्मै अनुपदिष्टत्वेन स्वाचार्यैरपि दुर्ग्रहत्वमभिसन्धाय, पितरमेव 'भगवन्स्त्वेव मे तद्ब्रवीत्वि'ति पप्रच्छ। एवं सत्कार्यवादादीनां सम्भवेऽपि, कार्यवैचित्र्यदृष्ट्या कारणवैचित्र्यमप्यावश्यकमिति मत्वा कथमेकविज्ञानेन सर्वविज्ञानमित्याशयेनोक्तादेशस्वरूपं निष्कृष्य ज्ञातव्यमिति पुनः प्रश्नः कृतः। तत्रोत्तरं **सदेवे**त्यादि। अत्र **सच्**छब्दः विशिष्टब्रह्मपरः। उत्तरत्र सृष्टेर्वक्ष्यमाणतया तदुपयुक्त वैशिष्ट्यस्यापेक्षितत्वात्। प्रलयकालेऽपि वैषम्यनैघृण्याकृताभ्यागमकृतप्रणाशप्रसङ्गपरिहाराय सूक्ष्मचिदचिद्भेदादीनामवश्यं स्वीकर्तव्यत्वात्। त्वयापि स्वगतविशेषाणां सत्यत्वैकत्वाद्वितीयत्वादीनामुक्तत्वाच्च। तस्मात्प्रलयकालावच्छिन्नसत्ताविशिष्टं सूक्ष्मचिदचिच्छरीरकं ब्रह्म सच्छब्दार्थः। एतेन सृष्टेः प्राक् सतो निर्विशेषत्वबोधनमपास्तम्।

यद्यपि सच्छब्दः सत्तामात्रस्यावबोधि, अथापि आज्यस्य पृषदाज्यवाचित्ववद्विशिष्टवाचित्वाङ्गीकारो न क्षत्यापादकः। निर्विशेषब्रह्मबोधेऽपि स्वतस्तस्य कारणत्वाभावेनाविद्योपहितस्यैव कारणत्वं वक्तव्यमित्यध्याससम्पादनाय सविशेषत्वमेव स्वीकार्यं, ततश्च शाखान्तरनयेन कारणवाक्यानामपि निर्विशेष परत्वोक्तिरपगतैव। परन्तु भवतां दृष्टान्ताननुगुण्यम्। अस्माकन्तु दृष्टान्तस्स्वरसः। **अग्रे** = सृष्टेः प्राक्। उत्तरत्र सृष्टेर्वक्ष्यमाणत्वात्। **सदेवे**त्येवकारोऽसत्कार्यवादनिरासपरः। एवकारस्य स्वसमभिव्याहृतपदार्थ विरोधव्यावर्तकत्वनियमात्। 'तद्धैक आहुः असदेवेदमि'त्याद्यसत्कार्यवादिमतोपन्यासनिरासपरवाक्यपरामर्शोपीदं सुव्यक्तम्। **एकमेवाद्वितीयमि**त्येतदुत्तरत्र वक्ष्यते। **कुतस्तु** इत्यादीनाऽसत्कार्यवादस्य प्रमाणतर्काभाव उच्यते। सत एव द्रव्यस्यावस्थान्तरापत्तिः तत्तदवस्थावत उत्पत्तिरित्ति प्रमाणसिद्धत्वात्। पूर्वं द्रव्यस्यासत्वे घटत्वाद्यवस्थारूपोत्पत्तिः कथं स्यात्। अन्यथा तुच्छत्वप्रसङ्गः इति प्रमाणैः तदनुग्राहकैश्चेदं निर्णीतमित्याशयः। **सदेवे**त्यादिकं निगमनपरम्। 'इदमग्रे एकमद्वितीयं सदेवासीदि'त्यन्वयः। **एकं** = अविभक्तनामरूपम्। **अद्वितीयं** = अधिष्टात्रन्तररहितम्।

एवं प्रकरणपरामर्शात् सिद्धमर्थमाह — **परस्ये**त्यादि। अत्र गुणवैशिष्ट्यकथनं कल्पिताकारविषयमित्यन्यथासिद्धि शङ्कानिरासाय **परस्ये**ति भाषितम्। अन्यथा एतत्प्रकरणप्रगृहीतसच्छब्दस्यापि कल्पितगुणविशिष्टब्रह्मपरतया 'सदेवे'त्यादिना निर्विशेषब्रह्मबोधनं भवदभिमतं विरुध्येत। अतः आदेशशब्दोक्तं सच्छब्देन परामृश्योपसंहारात्, आदेशशब्दवाच्यस्य सत एव जगदुपादानत्वादिकं वक्ष्यमाणं सर्वमिति न निर्विशेषवस्तु बोधनसम्भव इति भावः। **जगदुपादानत्वमि**ति। 'बहु स्यां प्रजायेये'त्युत्तरवाक्यपरामर्शेनैव सिध्यतीति भावः। 'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नाम रूपाभ्यां व्याक्रियत ' इति हि श्रुत्यन्तरम्। 'बहुस्यामि'ति कार्यसृष्टिरूपव्यष्टिसृष्टिः। 'प्रजायेये'ति कारणसृष्टिरूपसमष्टिसृष्टिरुच्यते। 'स्वर्गार्थं यक्ष्ये' इतिवत् कार्यकारणक्रमनिर्देशः। देवादिरूपेण बहुभवनार्थं प्रजायेयेत्यर्थः। अत्र निर्विकारत्वेन श्रुतस्य ब्रह्मणः स्वरूपतो बहुभवनानुपपत्त्यापि 'येनाश्रुतमि'त्यत्र यच्छब्दस्य विशिष्टपरत्वमाश्रयणीयम्। **जगन्निमित्तत्वमि**ति उदाहृतमृदाद्युपादानानां स्वव्यतिरिक्तकुलालादिनिमित्तकारणप्रेर्यत्वदर्शनात्, इहाप्यादेशशब्देनोक्तं निमित्तमुपादानव्यतिरिक्तमन्यत् स्यादिति शङ्का 'अद्वितीयमि'त्यनेन निरस्तेति भावः। अन्यथा ह्यन्यस्य निमित्तत्वेनैकविज्ञानेन तत्कार्यविश्वविज्ञानमनुपपन्नं स्यात्। अतः कारणप्रस्तावे बुद्धिस्थमधिष्टात्रन्तरमेवाद्वितीयपदेन निषिध्यते। 'तदैक्षत' इत्यस्यैव हि सङ्कल्पाश्रत्वरूपनिमित्तत्वमुक्तम्। 'तत्तेजोऽसृजत तदात्मानं स्वयमकुरुत' इत्यादिभिः ब्रह्मण एव **निमित्तत्व**-

**जगदुपादानत्वं जगन्निमित्तत्वं सर्वज्ञता सर्वशक्तियोगः सत्यसङ्कल्पत्वं सर्वान्तरत्वं सर्वाधारत्वं सर्वनियमन-मित्याद्यनेककल्याणगुणविशिष्टतां, कृत्स्नस्य जगतस्तदात्मकताञ्च प्रतिपाद्य, एवम्भूतब्रह्मात्मकस्त्वमसीति श्वेतकेतुं प्रत्युपदेशाय प्रवृत्तत्वात्प्रकरणस्य। प्रपञ्चितश्चायमर्थो वेदार्थसङ्ग्रहे। अत्राप्यारम्भणाधिकरणे निपुण-तरमुपपादयिष्यते।**

**'अथ परा यया तदक्षरम्' इत्यत्रापि प्राकृतान् हेयगुणान् प्रतिषिध्य नित्यत्वविभुत्वसूक्ष्मत्वसर्वगतत्वा-**

---

मुपादानत्वञ्चावगम्यते। उपादानत्वं तादात्म्यसंबन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणताश्रयत्वम्। निमित्तत्वन्तु तादात्म्यसंबन्धावच्छिन्नकार्यतानिरूपित सङ्कल्पवत्वसंबन्धावच्छिन्नकारणताश्रयत्वम्। इदमुभयञ्चैकस्यैव सम्भवति। न तूपादानकारणभिन्नत्वं निमित्तत्वम्, प्रमणाभावात्। स्वज्ञानघटेश्वरसंयोगादिषु एकस्यापि निमित्त-त्वोपादानत्वयोर्वक्तव्यत्वाच्चेति भावः।

**सर्वज्ञतेति** - 'तदैक्षत' इत्यत्रायमर्थोऽभिप्रेतः। कारणवाक्यान्तरे 'यस्सर्वज्ञ' इति कण्ठोक्तत्वादिति भावः। **सर्व-शक्तियोग** इति। उपादानत्वनिमित्तत्वशक्त्येकाश्रयत्वमित्यर्थः। **सत्यसङ्कल्पत्वमिति**। **असृजतेत्यादिना** फलितम्। **सर्वान्तरत्वमिति**। 'हन्ताहमिमास्तिस्त्रो देवता अनेन जीवेनात्मनानुप्रविश्ये'त्यनेनेदं सिद्धमिति भावः। **जीवेन** = जीव-शरीरकेण। यद्यपि जीवानुप्रवेशः न कण्ठोक्तः, अथापि 'तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवदि'ति श्रुत्यन्तरै-ककण्ठ्यादत्रापि तत्सिद्धिः। यद्यपि विभुत्वाद्ब्रह्मण अनुप्रवेशो नेदानीं साध्यः, तस्यानादिसिद्धत्वात्, अथापि सङ्कल्प-विशिष्टवेषेणानुप्रवेशोऽत्र विवक्षित इति न दोषः। अतः 'अनुप्रविश्ये'ति जीवेऽप्यनुप्रवेशश्रवणात् 'यस्यात्मा शरीरं' इति जोवं प्रत्यपि शरीरित्वश्रवणाच्छरीरवाचकशब्दस्य शरीरिवाचकत्वसम्भवात् सर्वज्ञत्वादिविशिष्टब्रह्मणः जीवस्व-रूपत्वासम्भवाज्जीवात्मन एव नामरूपव्याकृतत्वासिद्धेः 'सिंहेन भूत्वा बहवो मयात्ता' इतिवत् 'जीवशरीरकेण मये'त्यर्थ एवात्र विवक्षणीयः। **सर्वाधारत्वमिति** सदायतनत्वोक्तिसिद्धम्। **सर्वनियमनन्तु** आत्मत्वोक्त्या लब्धम्। **तदात्मकतामिति** 'ऐतदात्म्यमि'त्यनेनावगतम्। एषः आत्मा यस्य। स्वार्थेष्यङ्। **तत्सत्यमिति** जगतः तदात्मकत्वेनैव प्रमाणिकत्वमिति च दर्शितम्। न त्वत्र ब्रह्मणः जगतो वा सत्यत्वमुच्यते, कृतकरत्वात्। अतो जगतः स्वनिष्ठत्वभ्रान्तिनिरासाय तदात्मक-त्वस्य प्रामाणिकत्वमुच्यते। 'मृत्तिकेत्येव सत्यमि'त्यत्र कार्यस्य कारणात्मकत्वसत्यत्ववत्।

पूर्वोक्ताकारविशिष्टपरामर्शिनस्तच्छब्दस्य नान्यथावर्णनसम्भव इत्याह - **एवं भूतेति**। **श्वेतकेतुं प्रत्युपदेशायेति**। अनेनात्माद्वैतपक्षोपदेशो न घटत इति सूचितम्। प्रबुद्धस्य गुरोर्भ्रान्तिसिद्धं शिष्यं प्रत्युपदेशानुपपत्तेरिति भावः। **प्रकरण-स्येति**। अनेनोपक्रमोपसम्हारादि षड्विधतात्पर्यलिङ्गानामपि स्वमते एव सत्वमिति दर्शितम्। तथा हि - उपक्रममारभ्य 'तत्त्वमसी'त्युपसम्हारपर्यन्तं हि निरुपाधिकप्रशासनादिकल्याणादिगुणजातं ब्रह्मणः दर्शितम्। बहुदृष्टान्तकथनेन 'स य एषोऽणिमे'त्यादि बहुशोऽभ्यासश्च प्रदर्शितः। अस्यार्थस्य प्रमाणान्तराविषयत्वेनापूर्वत्वञ्च, 'तस्य तावदेव चिरमि'त्या-दिना फलम्। एवमर्थवादोऽपि। असत्कार्यवादनिरासात्, विवर्तवादविरुद्धदृष्टान्तप्रदर्शनात्, त्रिवृत्करणप्रदर्शनाच्च स्वमते उपपत्तिश्चेति। प्रतिज्ञावाक्य तदुपपादकतत्तात्पर्यादि निरूपणेनान्यत्र सविस्तरमयमर्थः निरूपित इत्याह — **प्रपञ्चित** इति। अत्राप्यपेक्षितार्थनिरूपणमतिविशदं करिष्यत इत्याह - **अत्रापीति**। **आरम्भणाधिकरणे** = 'तदनन्यत्वमारम्भण-शब्दादिभ्य' इति सूत्रव्याख्यानावसरे। एवं सद्विद्यायाः सविशेषपरत्वं स्थापितम्। अथ परविद्यायाः सविशेषपरत्वमुपपाद-यति - **अथेति**। अथ प्रस्तूयते। **परा** = परविद्या। 'द्वे विद्ये वेदितव्ये, परा चापरा चैव' इति विद्याया द्वैविध्यमुक्तम्। 'धीराः यद्भूतयोनिं परिपश्यन्ति, तदक्षरं यया विद्ययाऽधिगम्यते सा परा विद्या'। **प्रस्तूयते** - आरभ्यते। **प्राकृतान्** = प्रकृतिसम्बन्धान्

**व्ययत्वभूतयोनित्वसार्वज्ञ्यादिकल्याणगुणयोगः परस्य ब्रह्मणः प्रतिपादितः ।**

**'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यत्रापि सामानाधिकरण्यस्यानेकविशेषणविशिष्टैकार्थाभिधानव्युत्पत्त्या न निर्विशेषवस्तुसिद्धिः । प्रवृत्तिनिमित्तभेदेनैकार्थवृत्तित्वं हि सामानाधिकरण्यम् । तत्र सत्यज्ञानादिपद-मुख्यार्थैर्गुणैस्तत्तद्गुणविरोध्याकारप्रत्यनीकाकारैर्वैकस्मिन्नेवार्थे पदानां प्रवृत्तौ निमित्तभेदोऽवश्याश्रयणीयः । इयांस्तु विशेषः - एकस्मिन्पक्षे पदानां मुख्यार्थता, अपरस्मिंश्च तेषां लक्षणा । न चाज्ञानादीनां प्रत्यनीकता**

प्रकृतिसंसर्गप्रयुक्तजीवगताश्च । अनेन ब्रह्मणि निषिध्यमानानां हेयगुणानां क्वचित्प्रसिद्धिरुक्ता । **हेयगुणान् प्रतिषिध्येति** । अनेन 'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्रोत्रं तदपाणिपादमि'त्येतत्पर्यन्तं हेयगुणनिषेधपरमिति दर्शितम् । **अद्रेश्यं** = प्रत्यक्षागोचरम् । चक्षुरगोचरं वा । **अग्राह्यं** = अनुमानागोचरं, इन्द्रियान्तरागोचरं वा । **अगोत्रमवर्णं** = प्राकृतनामरूपरहितम् । **अचक्षुश्श्रोत्रं** = इन्द्रियनिरपेक्षज्ञानम् । **अपाणिपादं** = कर्मेन्द्रिय निरपेक्षचेष्टावत् । 'अपाणिपादो जवनो ग्रहीता' इति श्रुत्यैककण्ठ्यात् । 'नित्यमि'त्यादि श्रुत्यंशस्यार्थमाह — **नित्यत्वेति** । **नित्यत्वं** = कालापरिच्छेदः । **विभुत्वं** = वस्त्व-परिच्छेदः । **सर्वगतत्वं** - देशापरिच्छेदः । देशापरिच्छेदे सुसूक्ष्मत्वं हेतुरिति द्योतनाय **सूक्ष्मत्वसर्वगतत्वेति** विपर्ययेण भाषितम् । **अव्ययत्वं** = दोषविरोधित्वं , हेयप्रत्यनीकत्वपर्यवसितम् । **एकरूपत्वं** रूपपूर्णत्वम् । **भूतयोनित्वं** जगत्कारणत्वम् । **सर्वज्ञत्वं** = 'यस्सर्वज्ञः' इत्युपयुक्तं स्वरूपतो ज्ञानाश्रयत्वम् । **आदिशब्देन** 'सर्वविदि'त्युक्तं प्रकारतस्सर्वविषयकज्ञाना-श्रयत्वम् । यद्वा - सर्ववित्त्वं, लब्धसमस्तकामत्वम् । विद लाभे इति हि धातुः । अयं भावः - उत्तरत्र नित्यत्वादिगुणप्रति-पादनात्, पूर्वोक्तगुणनिषेधः हेयगुणविषय एव । दृश्यत्वादीनां जीवगतत्वप्रसिद्धेश्चेति भावः । वस्तुतः 'अदृश्यत्वादिगुणको धर्मोक्तेः' इति सूत्रकारेणैवादृश्यत्वादीनां ब्रह्मगुणत्वोक्तेः, न निर्विशेषत्वशङ्कापि । अन्यथा सूत्रविरोधः स्फुट एव । अत्रादृश्यत्वादीनां **हेयगुणनिषेध**परतया भाषणं सम्भवाभिप्रायकम् । अत एवाव्ययत्वस्य कल्याणगुणेऽन्तर्भावः कृतः ।

अथानन्तरोपात्तस्य 'सत्यं ज्ञानमि'त्यादिशोधकवाक्यस्य निर्विशेषपरत्वं व्युदस्यति — **सत्यमिति** । सामानाधि-करण्यस्य केवलविशेष्यरूपार्थाभिधानव्युत्पत्ति र्नास्तीत्याशयेनाह — **अनेक विशेषणेति** । तथा सति सामानाधिकरण्यन्न स्यादित्यभिप्रेत्याह — **प्रवृत्तीति** । **हिः** हेतौ । प्रवृत्तिनिमित्तभेदस्यावश्याश्रयणीयतयानेकविशेषणविशिष्टैकार्थाभिधायक-त्वमभ्युपेयमिति भावः । तदेतदुपपादयति — **तत्रेति** । **सत्यज्ञानादिपदमुख्यार्थैर्गुणै** इति स्वमतोपन्यासः । सत्यत्वज्ञान-त्वादिभिर्गुणैरिति तदर्थः । **तत्तद्गुणविरोध्याकारप्रत्यनीकाकारैरिति** परमतोपन्यासः । सत्यत्वादिविरोध्यसत्यत्वाद्याकार-प्रत्यनीकैरित्यर्थः । असत्यत्वव्यावृत्तिरूपैरिति यावत् , पूर्वमसत्यादि व्यावृत्तपरत्वेनोक्तत्वात् । अत्र मुख्यार्थैरित्यनुक्त्या परोक्तार्थानां लाक्षणिकत्वं व्यज्यते । तदेव स्फुटयति — **इयांस्त्विति** ।

ननु यथा घटादिपदैः घटेतरव्यावृत्तिरूपघटत्वोपस्थापने न लक्षणा, तथाऽस्मन्मतेऽपि सत्यत्वादिपदैः सत्येतर-व्यावृत्त्युपस्थापने कथं लक्षणोद्भावनमिति चेन्न, वैषम्यात् । घटत्वं घटेतरव्यावृत्तिश्चोभयमप्येकमेवाऽस्मन्मते । यदि सत्यपदेन सत्यत्वात्मकं सत्येतरव्यावृत्तिरूपं स्थाप्यते, तर्ह्यस्मदिष्टमेवेति कथं तव विवादः । सत्यत्वादिकमपि ब्रह्मण्य-भ्युपगतमेवेति कथं त्वं निर्विशेषत्वबोधकतयेदं वाक्यमुदाहरसि । अतः सत्यत्वविलक्षणसत्येतरव्यावृत्तिरेव भवद्भिरुच्यते, तच्च लक्षणयैव शक्यमित्यभिप्रायः । ननु सत्यादिव्यावृत्तीनां ब्रह्मस्वरूपत्वात् तद्बोधकानां सत्यादिपदानां न लक्षणा । नापि व्यावृत्तीरुपादाय ब्रह्मणस्सविशेषत्वप्रसङ्गः इत्याशङ्कां परिहरति — **न चाज्ञानादीनामिति** । अयं भावः - व्यावृत्ते र्ब्रह्मस्वरूपत्वेऽपि किं सत्यादिपदानामसत्यादिव्यावृत्तिबोधकत्वम् , उत ब्रह्मस्वरूपबोधकत्वम् । नाद्यः, व्यावृत्तीनामनेक-त्वेनैकार्थत्वासिद्धेः । न च तिसृणामपि व्यावृत्तीनां ब्रह्मरूपत्वान्नानेकार्थत्वमिति वाच्यं, ब्रह्मस्वरूपत्वासम्भवात्तासाम् । ब्रह्मस्वरूपस्फुरणेऽपि तदितराध्यासस्य भवद्भिरेवाङ्गीकारादितरव्यावृत्तीनां ब्रह्मस्वरूपत्वेऽध्यासासम्भवात् । न हि

**वस्तुस्वरूपमेव ; एकेनैव पदेन स्वरूपं प्रतिपन्नमिति पदान्तरप्रयोगवैयर्थ्यात्। तथा सति सामानाधिकरण्यासिद्धिश्च ; एकस्मिन्वस्तुनि वर्तमानानां पदानां निमित्तभेदानाश्रयणात्। न चैकस्यैवार्थस्य विशेषणभेदेन विशिष्टताभेदादनेकार्थत्वं पदानां सामानाधिकरण्यविरोधि ; एकस्यैव वस्तुनोऽनेकविशेषणविशिष्टताप्रति-**

---

व्यावृत्तिस्फुरणेऽपीतराध्यासः शक्यशङ्कः। अन्यथा शुक्तित्वरूपेतरव्यावृत्तिस्फुरणेऽपि रजताध्यासापत्तेः। न च कार्ष्ण्य-व्यावृत्तिवदस्याः स्वरूपत्वं कुतो न सम्भवतीति वाच्यं, वैषम्यात्। न हि शौक्ल्यस्फुरणे कार्ष्ण्याध्यासो जायते। ब्रह्म-स्वरूपस्य भ्रमसहत्वञ्च भवद्भिरेवाङ्गीकृतम्। अतो न व्यावृत्तीनां ब्रह्मस्वरूपत्वसम्भवः।

एवं व्यावृत्तिमात्रबोधकत्वे विशिष्टवाचकानां सत्यादिपदानां विशेषणमात्रवाचकत्वञ्च व्युत्पत्तिविरुद्धम्। नान्त्यः, सत्यादिपदेन ब्रह्मोपस्थापनासम्भवात्। न हि ब्रह्मपदं ब्रह्माभिन्नत्वेप्यसत्यव्यावृत्तिं बोधयेत्, तद्वदेव सत्यपदमपि ब्रह्मस्व-रूपमात्रन्न बोधयेत्। ननु ब्रह्मपदासमभिव्याहृतसत्यादिपदस्य ब्रह्मस्वरूपोपस्थापनासम्भवेऽपि, तत्समभिव्याहृतस्य तथा बोधकत्वं कुतो न सम्भवतीति चेन्न। विशेषणद्वारेण विशेष्यपर्यवसायिनः शब्दस्य द्वारानभिधाने द्वार्यभिधाना-सम्भवात्। अन्यथा लक्षणा प्रसङ्गात्। ननु लाक्षणिकत्वन्न दोषावहम्। वस्तुतो लक्षणापि च नास्ति शक्यार्थैकदेशस्यैव परित्यागादिति चेन्न। विशिष्टाभिधाने स्वरसस्य पदस्य विशेष्यमात्राभिधायकत्वे शब्दस्वारस्यहानेः। न च सामानाधि-करण्यानुपपत्त्या स्वारस्यभङ्गस्य न दोषावहत्वमिति वाच्यम्। विशिष्टवाचकत्वेऽपि सामानाधिकरण्योपपत्ते र्वक्ष्यमाण-त्वात्। एवं ब्रह्मस्वरूपमात्रबोधकत्वे पर्यायत्वप्रसङ्गश्च। न चाभिन्नव्यावृत्तिजनकत्वस्यैव पर्यायरूपत्वादत्र च ततत्पद-जन्यव्यावृत्तीनां भिन्नत्वान्न पर्यायत्वप्रसङ्ग इति वाच्यम्। एकार्थबोधकत्वस्यैव पर्यायत्वमिति लोकप्रसिद्धत्वात्। तिसृणामपि व्यावृत्तीनां ब्रह्मस्वरूपत्वाङ्गीकर्तुः भिन्नव्यावृत्तिजनकत्वस्य दुरुपपादत्वाच्च। तथा हि - किं व्यावृत्तीनां परस्परं ब्रह्मणश्च वैलक्षण्यमुत न? नो चेत्कथं व्यावृत्तीनां भिन्नव्यावृत्तिजनकत्वम्। परस्परविलक्षणत्वात् व्यावृत्तीनाम्। अस्ति चेत्, कथं ब्रह्मस्वरूपत्वम्। अतः पर्यायत्वादिप्रसङ्गेन विशिष्टवाचकत्वमेव शब्दानामभ्युपेत्यमिति। व्यावृत्तीनां स्वरूपत्वपक्षे दूषणान्तरमाह — **एकेनैवे**ति। सामानाधिकरण्यासिद्धिरप्यस्तीत्याह — **तथा सती**ति। तदेवोपपादयति — **एकस्मिन्नि**ति। **वर्तमानानां** = प्रतिपादकतासम्बन्धेनेति भावः।

ननु भवतां मते सामानाधिकरण्यमेव न स्यात्, विशेषणादीनामपि बोधनेन परस्परं विशेषणभेदेन वैशिष्ट्यभेदात् तत्प्रयुक्तविशेष्यभेदाच्चेत्याशङ्कां परिहरति — **न चे**ति। अविरोधित्वे हेतुमाह — **एकस्यैवे**ति। विशेष्यभूतैकार्थबोधकत्वं हि सामानाधिकरण्यम्। तच्चानेकविशेषणबोधनेऽपि तद्विशिष्टविशेष्यरूपैकार्थबोधनाङ्गीकारान्नापैति। अतस्सामानाधि-करण्यस्य नानुपपत्तिरिति भावः। ननु भवतां विशेषणानां मिथो भिन्नत्वेन तत्प्रयुक्तविशेष्यभेदप्रसङ्गो दुरुद्धर एवेति चेन्न। विशेषणभेदस्य विशेष्यभेदप्रयोजकत्वाभावात्। 'देवदत्तो श्यामो युवो लोहिताक्षस्समपरिमाणः' इत्यादौ विशेषणभेदेऽपि विशेष्य भेदादर्शनात्। ननु विशेषणभेदस्य विशेष्यभेदकत्वमसति बाधके स्वभावः, उक्तस्थलेषु प्रत्यक्षबाधेन न विशेष्य-भेदकत्वम्। प्रत्यक्षागोचरे ब्रह्मणि तु बाधकाभावेन विशेषणभेदात् विशेष्यभेदः प्रसज्येतैवेति चेन्न। प्रत्यक्षागोचरेऽपि धर्मिवाचकपदैक्यात् समानविभक्तिनिर्देशाच्च ऐक्यसम्भवात्।

ननु नैक्ये धर्मिवाचकपदैक्यं नियामकम्। तत्सत्त्वेऽपि 'खण्डो मुण्डो पूर्णश्रृङ्गो गौरि'त्यादौ विशेष्यभेददर्शनात्। अतो धर्मिवाचकपदैक्येऽपि विशेषणभेदादेव विशेष्यभेदस्स्वीकार्य इति चेन्न। तत्र विशेष्यैक्यनिश्चायकस्य प्रत्यक्षेण बाधितत्वाद्विशेषणभेदप्रतीतेः। 'ब्रह्मे'ति धर्मिवाचकपदैक्यस्य विशेष्यैक्यनिश्चायकस्य बाधकाभावेन विशेष्यैक्यप्रतीतेः दुरुद्धरत्वात्। न च परोक्षविषयेऽपि 'खण्डो मुण्डो' इत्यादौ विशेष्यभेदो दृश्यत इति वाच्यम्। परोक्षविषयेऽपि 'देवदत्तः श्यामो युवे'त्यादौ विशेषणभेदेऽपि विशेष्यैक्य प्रतीतिर्दृश्यते इति न विशेषणानां विशेष्यभेदकत्वस्वभावः।

वस्तुतो भवतां 'खण्डो मुण्डो' इत्यादौ एकार्थबोधकत्वरूपसामानाधिकरण्योपपादनार्थं खण्डादिपदानामपि स्वरूपमात्रबोधकत्वेन न विशेष्यभेदोऽप्यपेक्षितः । न हि लौकिके वाक्ये सामानाधिकरण्यवाक्यमन्यत्, वैदिके चान्यदिति व्यवस्थापयितुं शक्यम्, नियामकाभावात् । अस्माकं त्वनेकविशेषणविशिष्टैकार्थबोधकत्वाङ्गीकारात् यत्रैकस्यपरस्पर-विरुद्धविशेषणवैशिष्ट्यं न घटते तत्र विशेष्यभेदः, यथा 'खण्डो मुण्डो गौरि'त्यादौ । यत्र चाविरुद्धविशेषणानां वैशिष्ट्यं तत्र न विशेष्यभेदः, यथा 'देवदत्तः श्यामो युवे'त्यादौ । एवं सत्यत्वादिविशेषणानां मिथोऽविरुद्धत्वेनैकस्मिन् ब्रह्मणि समावेशसम्भवात्, न विशेष्यभेदप्रसङ्गः । तस्मात्समानाधिकरणवाक्यस्थले येषां विशेषणानामेकाधिकरणवृत्तित्व-रूपाविरोधः, तेषान्न विशेष्यभेदकत्वम् ।

ननु विशेषणभेदानां विशेष्यभेदकत्वाभावेऽपि एकविशेषणविशिष्टे वस्तुनि विशेषणान्तरान्वये विशेषणानां मिथस्समवायप्रसङ्गो दुर्वार एवेति चेन्न । समानाधिकरणवाक्यस्थले सर्वेषामपि पदानां युगपदेवानेकविशेषणविशिष्टैकार्थ विषयकज्ञानजनकत्वस्वीकारेण एकविशेषणविशिष्टेऽपरविशेषणान्वयानभ्युपगमेनादोषात् । प्रथमं हि पदश्रवणानन्तरं पदार्थस्मरणदशा । ततः परामर्शदशा । पश्चाच्च वाक्यार्थाभिधानदशा । तत्र पदार्थस्मरणदशायां मिथोऽन्वयस्यैवाभावेन नापादानसम्भवः । परामर्शदशायामपि प्रत्यक्षादिदृष्टस्यानेकविशेषणवैशिष्ट्यस्यैकस्मिन्वस्तुनि परामृश्यमानत्वाच्च नापत्तिस्सुशका । वाक्यार्थाभिधानदशायां तु क्रमाभिधानाभावेन न तत्प्रयुक्तविशेषणान्तरसमवायः । अतो विशेषणानां मिथः समवायापादनमज्ञातृ चोद्यमेव । तदुक्तं 'पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकम् । न्यायसम्पादितव्यक्ति पश्चाद्वाक्यार्थबोधकमि'ति । न च पदानां क्रमाभिधानमेवेषितव्यमिति नियमः । चक्षुर्द्वयस्य युगपदेव जातिगुणाद्यनेक-विशेषणविशिष्टैकवस्तुविषयकधीजनकत्ववदनेकपदानामपि युगपदेवानेकविशेषणविशिष्टैकवस्तुबोधकत्वसम्भवात् । अस्तु वा क्रमाभिधानं, न तदापि मिथः समवायप्रसङ्गः । पदान्तरोपात्तविशिष्टैकदेशभूतविशेष्ये एवान्यपदोपात्तस्य विशेषणत्वात् । समानाधिकरणस्थले सर्वेषामपि पदानां विशिष्टवाचकत्वात्, तेषां चोपात्तविशेष्येऽभेदेनान्वयेनैक-विशेषणविशिष्टेऽपरविशेषणस्यैवान्वयाभावाच्च । न ह्येकविशेषणविशिष्टाभिन्न वस्तुनोऽपरविशेषणविशिष्टाभिन्नत्व-बोधने विशेषणानां परस्परसमवायः प्रसज्यते । अन्यथा 'घटरूप'मित्यादिव्यधिकरणस्थलेऽपि घटत्वविशिष्टे रूपत्व-विशिष्टबोधने विशेषणान्योन्यसमवायः प्रसज्येत ।

ननु दण्डविशिष्टपुरुषस्य भूतलवृत्तित्वे दण्डस्यापि भूतलवृत्तित्ववत्सत्यत्वविशिष्टब्रह्मण अनन्तत्वविशिष्ट-ब्रह्माभिन्नत्वे सत्यत्वस्यापि तदभिन्नत्वं स्यादिति चेत्, मैवम् । किं दण्डस्योक्तं भूतलवृत्तित्वं साक्षात् वा पुरुषद्वारा वा । नाद्यः, असम्भवेन दृष्टान्तानुपपत्तेः । न हि स्वातन्त्र्येण वर्तमानदशायां 'दण्डीपुरुषः भूतलवृत्तिरि'ति व्यवहारः प्रामाणिकः । पुरुषद्वारा चेत्, तावता भवतां किमभीष्टं सिद्धम् । सत्यत्वस्यानन्तत्वविशिष्टब्रह्माभिन्नत्वं हि सत्यत्वविशिष्टब्रह्मद्वारक-मेवेति सत्यत्वविशिष्टब्रह्मण एवानन्तत्वविशिष्टब्रह्माभिन्नत्वमुक्तं भवतीति, किमिति मुधा चोद्यते । ननु समानाधिकरण-वाक्यस्य विशिष्टैक्य प्रतिपादकत्वस्वीकारे विशेष्यैक्यवत् विशेषणानामप्यैक्यं प्रसज्येत? मैवम् । किमत्र विशिष्टैक्या-न्यथानुपपत्त्या विशेषणानामैक्यमिष्यते, विशेष्यैक्यानुपपत्त्या वा ? नाद्यः, विशेषणानां विभिन्नत्वेऽपि विशिष्टैक्यसम्भवात् । 'देवदत्तः श्यामो युवे'त्यादौ तथा दर्शनात् । न च प्रत्यक्षत्वमुपाधिः, परोक्षेऽपि तथाप्रयोगे तथादर्शनात् । नान्त्यः, विशेषणभेदानां विशेष्यभेदकत्वासम्भवेन विशेषणानां विभिन्नत्वेऽपि विशेष्यैक्यस्य समर्थितत्वात् । न च समानविभक्ति-रेव विशेषणानामभेदं समर्थयेत् । तस्याः विशेष्यैक्यमात्रपरत्वात् । न हि समानविभक्तिरेव विशेष्यैक्यमिव विशेषणैक्यम-प्यवगमयेत्, व्युत्पत्तिविरोधात् । व्युत्पत्तेश्च विशेष्यमात्रैक्यावगमकप्रत्यक्षमूलत्वात् । न हि 'गौरि'त्युक्ते तद्गतमेकवचनं प्रातिपादिकावगतविशेषविशेष्ययोरप्यैक्यं बोधयति । तद्वत्, समानविभक्तिरपि न विशेषणैक्यबोधने नियामिका भवितु-मर्हति । अन्यथा 'देवदत्तः श्यामो युवा', 'खण्डोमुण्डो पूणश्रृङ्गो गौरि'त्यादिप्रत्यक्षे तथाप्रयोगेऽपि विशेषणानामैक्यं

**पादनपरत्वात्सामानाधिकरण्यस्य। 'भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्'** (कैयटे वृद्ध्याह्निके) **इति हि शाब्दिकाः।**

---

प्रसज्येतेति।

ननु स्यादेतत्, यद्यनेकविशेषणविशिष्टैक्यार्थबोधकत्वं समानाधिकरणवाक्यव्युत्पत्तिसिद्धम्, तदेव तु नास्ति। केवलैकार्थबोधकत्वस्य तादृशवाक्यव्युत्पत्तिसिद्धत्वात्। अतस्सत्यादिवाक्यानां केवलब्रह्मस्वरूपमात्रबोधकत्वेन न लक्षणादिप्रसक्तिरित्यत्र पर्यायत्वनिष्प्रयोजनत्वादिदूषणानां स्वतस्सिद्धत्वं मत्वा, तन्मतस्य सामानाधिकरण्यलक्षणानानुगुण्यं, स्वमते तदानुगुण्यं चाभिप्रेत्य शब्दानुशासननिष्ठैरुक्तं सामनाधिकरण्यस्वरूपं प्रदर्शयति — **भिन्नेति**। अयं त्विह भावः - एकार्थबोधकत्वस्यैव सामानाधिकरण्यरूपत्वे 'घटः कुम्भ' इत्यादीनामपि सामानाधिकरण्यं प्रसज्येत।

ननु सामानाधिकरण्यं हि वाक्यगतम्। अभेदसम्बान्धावच्छिन्नप्रकारतानिरूपितविशेष्यताकबोधजनकत्वं, 'नीलो घट' इत्यादेरभेदसम्सर्गकनीलत्वावच्छिन्नप्रकारताकघटत्वावच्छिन्नविशेष्यताकबोधजनकत्वेन तादृशबोधे नीलादिपदसमभिव्याहृतघटपदजन्योपस्थितिघटितसामग्र्या हेतुत्वमिष्यते। एवमभेदसम्सर्गकघटत्वावच्छिन्नप्रकारताककुम्भत्वावच्छिन्नविशेष्यताकबोधस्यैवाप्रसिद्ध्या घटपदसमभिव्याहृतकुम्भपदजन्योपस्थितिघटितसामग्र्या एवाकल्पनात्। कथमत्र 'घटः कुम्भ' इति सामानाधिकरण्यमापाद्यते।

न च 'कुम्भो नीलघट' इत्यादौ तादृशबोधः प्रसिद्ध इति वाच्यम्। तत्रापि प्राचीनै र्न्यायविद्भिर्नीलत्वावच्छिन्नप्रकारकबोधस्यैवाङ्गीकारात्। अस्तु वा नवीनानामपि विधेयकोटावधिकावगाहिनो बोधस्याङ्गीकारः। अथापि तत्र नीलभानप्रयोजकनीलपदोपस्थितिघटितसामग्र्या एव हेतुत्वात्तादृशसामग्र्याश्च 'घटः कुम्भ' इत्यादावभावेनापादनासम्भवात्। अत 'एकस्मिन्नर्थे वृत्तिस्सामानाधिकरण्यमि'त्येव तत्स्वरूपम्। न तु 'भिन्नप्रवृत्तिनिमित्तानामि'त्यस्यापि तद्घटकत्वम्। अतो 'घटः कुम्भ' इति व्यवहारापादनमेव न सम्भवति इति चेन्मैवम्। 'द्रव्यं घट' इत्यादौ द्रव्यत्वे घटत्वावच्छिन्नप्रकारताकबोधस्य प्रसिद्ध्या तादृशबोधजनकत्वस्य 'घटः कुम्भ' इत्यादावपि आपादनसम्भवात्। न च तादृशबोधे द्रव्यजन्यद्रव्यत्वावच्छिन्नविषयकोपस्थितेरपि कारणत्वेन प्रकृते च तदभावेनापादनासम्भव इति वाच्यम्। यतो धर्मितावच्छेदकतासम्बन्धेन घटत्वावच्छिन्नप्रकारताकशाब्धबोधे तेन सम्बन्धेन घटत्वावच्छिन्नप्रकारताकयोग्यताज्ञानस्य हेतुत्वं कल्प्यते।

न तु समवायेन द्रव्यत्वावच्छिन्नविशेष्यताकशाब्दबोधे समवायेन द्रव्यत्वावच्छिन्नविशेष्यताकयोग्यताज्ञानस्य, तथा सति 'द्रव्यं घटः', 'प्रमेयो घटः', 'वाच्यो घट' इत्यादौ धर्मितावच्छेदकभेदेन कार्यकारणभावभेदापत्तेः। ततश्च धर्मितावच्छेदकतासम्बन्धेन घटत्वावच्छिन्नप्रकारताकयोग्यतादिघटितसामग्र्या द्रव्यत्व इव घटत्वादावपि घटत्वावच्छिन्नप्रकारताकबोधापत्तिसम्भवेऽपि 'घटो घट' इति सामानाधिकरण्यं दुर्वारमेव। न चैतन्मते धर्मितावच्छेदकमनिवेश्य विषयनिष्ठप्रत्यासत्त्या हेतुत्वकल्पनात् चैत्रस्य योग्यताज्ञानसत्त्वे मैत्रस्यापि द्रव्यत्वे तादृशबोधापत्तिरिति वाच्यम्। धर्मितावच्छेदकतासम्बन्धेन तत्पुरुषीयतादृशबोधं प्रति तेन सम्बन्धेन तत्पुरुषीययोग्यताज्ञानस्य हेतुत्वकल्पनात्। न चैवं सति पक्षद्वयेऽपि न लाघवगौरवावकाशः। धर्मितावच्छेदकं निवेश्यात्मनिष्ठप्रत्यासत्त्या कार्यकारणभावकल्पने एकस्यैव पुरुषस्य द्रव्यादिनानाविशेष्यकशाब्दबोधोत्पत्त्याऽनन्तकार्यकारणभावकल्पनं विषयनिष्ठप्रत्यासत्त्या हेतुत्वकल्पने धर्मितावच्छेदकतासम्बन्धेन तत्पुरुषीयघटत्वावच्छिन्नप्रकारताकयोग्यताज्ञानस्यैकस्यैव कारणत्वेन न कार्यकारणभावानन्त्यमिति वैषम्यात्। अतो 'घटो घट' इति सामानाधिकरण्यवारणं दुरुद्धरमेव। तस्माद्भिन्नप्रवृत्तिनिमित्तानामित्यस्य लक्षणघटकत्वमेव। सत्यादिपदानाञ्च स्वरूपमात्रबोधकत्वे प्रवृत्तिनिमित्तभेदाभावेन सामानाधिकरण्यहानिः। अत एव

**यदुक्तम् 'एकमेवाद्वितीयम्' इत्यत्राद्वितीयपदं गुणतोपि सद्वितीयतां न सहते; अतः सर्वशाखाप्रत्यय-**

नैयायिकैरपि तद्धर्मावच्छिन्नाभेदसम्सर्गावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबोधं प्रति तद्धर्म-भेदस्यापि हेतुत्वं स्वीकृतम्। न च 'भिन्नप्रवृत्तिनिमित्तानामि'त्यस्य लक्षणघटकत्वेऽपि व्युत्पत्तिदशायां भिन्नप्रवृत्तिकानां शब्दानामेकार्थवृत्तित्वमेव सामानाधिकरण्यमिति वक्तुं शक्यम्। तथा सति लक्षणाघटकत्वमेव हि पर्यायेणोक्तं भवति।

ननु भिन्नप्रवृत्तिनिमित्तानामित्येतन्न लक्षणघटकमेव। तदुक्तिस्तु सामानाधिकरण्यस्थले एकार्थवृत्तित्वरूपं यत्, तत् वस्तुतो व्युत्पत्तिकाले भिन्नप्रवृत्तिनिमित्तकानां शब्दानामेवेत्येतत्सूचनायैव। 'घटो घट' इत्यादौ च व्युत्पत्तिकालेऽपि प्रवृत्तिनिमित्तभेदाभावान्न सामानाधिकरण्यमिति न काप्यनुपपत्तिरिति चेन्न। एवं सङ्कोचतोऽध्याहारतश्चार्थवर्णने प्रमाणा-भावात्। न चानेकविशेषणाभिधाने सामानाधिकरण्यानुपपत्तिरेव नियामिका। अनेकविशेषणविशिष्टैकार्थबोधकत्वाभ्युप-गमेऽप्यनुपपत्तेः परिहृतत्वात्। अपि च व्युत्पत्तिदशायां विशिष्टवाचिनां सत्यादिशब्दानां सम्प्रति विशिष्यमात्रबोधकत्वे किं नियामकम्। न तावत् सामानाधिकरण्यम्। अन्यथापि सामानाधिकरण्योपपत्तेः। सामानाधिकरण्ये सत्यपि 'देवदत्तः श्याम' इत्यादौ विशिष्टवाचकत्वाङ्गीकारात्। प्रत्यक्षत्वादिवैषम्यञ्च दुर्घटम्। एतेन समानविभक्तिकत्वस्य नियामकत्वमपि निरस्तम्। समानविभक्तिनिर्देशो हि विशेष्यैक्यमात्रमवगमयति। न तु विशेषपरित्यागमपि। 'स कीचकै र्मारुतपूर्णरन्ध्रैरि'त्य-त्रापि हि विशेषणवाचकपदसन्निधानाद्विशिष्टवाचककीचकशब्दस्य विशेष्यमात्रपरत्वं स्वीकृतम्। तत्रापि नासाधारण-कीचकत्वधर्मः परित्यक्तः। न ह्यत्र तन्निरोधकं विशेषणवाचकपदमन्यदस्ति। तदापि हि सविशेषत्वमेव ब्रह्मण आपतित-मिति वृथाऽऽयास एव। तस्मात्सत्यादिपदानां विशिष्टवाचकानां विशेष्यमात्रबोधकत्वे न किञ्चिदनन्यथासिद्धलिङ्गमुप-लभामहे।

अपि च भवन्मते सत्यादिपदानां किं तत्तपदार्थविरोधिव्यावृत्तिपरत्वमुत व्यावृत्तिविशिष्टपरत्वमाहोस्वित् व्यावृत्त्युप-लक्षितपरत्वमुतस्वरूपमात्रपरत्वम्। नाद्यः, व्यावृत्तीनामनेकत्वेनैकार्थत्वासिध्या भवदभिमतसामानाधिकरण्यस्याप्य-सिद्धेः। न हि सत्येतरव्यावृत्तिः ज्ञानेतरव्यावृत्तिश्चैकरूपा। तथा सति पदान्तरवैयर्थ्यप्रसङ्गात्। तत्तत्पदव्यावर्त्या हि पदार्था अनन्ताः। न च ब्रह्मस्वरूपत्वेन तासामेकत्वम् पूर्वमेव प्रतिक्षिप्तत्वात्। नापि द्वितीयः, विशिष्टपरत्वेनास्मन्मार्गावरोहात्। अस्मन्मतोक्तदूषणानामपरिहारात्। अस्मदुक्तरीत्यैव परिहारे न ते कश्चिद्विवादः। ब्रह्मणस्सविशेषत्वं भवतां स्थिरं दूषणम्। नापि तृतीयः, एकेनैवोपलक्ष्येण स्वरूपप्रतिपत्तेरुपलक्षणान्तरवैयर्थ्यात्। उपलक्षणलक्षणं हि स्वरूपप्रतिपत्त्यर्थम्।

ननु भवतामपि कथं जन्मादिकारणत्वमुपलक्षणलक्षणं भवेत्। अन्यवैयर्थ्यस्य दुर्वारत्वात्। मैवम्। एकैकेनोप-लक्षणेन तत्तदनुगुण ज्ञानशक्त्याद्यनेकगुणवत्वसूचनार्थमनेकोपलक्षणस्वीकारात्। न हि तथा भवतामुपपद्यते ब्रह्मणो निर्विशेषत्वाङ्गीकारात्। न चात्रापि ब्रह्मणसत्यव्यावृत्त्याद्यनेकव्यावृत्तिबोधनात्त्रयाणामप्युपलक्षणलक्षणानां सार्थक्यं सम्भवतीति वच्यम्। ब्रह्मण्यसत्यादिव्यावृत्तिसत्त्वे सविशेषत्वापातात् व्यावृत्तीनां ब्रह्मस्वरूपत्वनिराकरणाच्च। जन्मादि-कारणत्ववदस्य तटस्थलक्षणत्वानङ्गीकारेणापसिद्धान्ताच्च। नान्त्यः, स्वरूपमात्रबोधकत्वस्य प्रतिक्षिप्तत्वात्। प्रवृत्ति-निमित्तभेदानङ्गीकारेण सामानाधिकरण्यानुपपत्तेः पर्यायत्वादिप्रसङ्गाच्च। अतो यथोक्तरीत्यैव सामानाधिकरण्यमुपपाद-नीयमिति, नात्र निर्विशेषवस्तुसिद्धिरित्यलम्॥

एवं सामानाधिकरण्यस्वरूपपर्यालोचनया 'सत्यं ज्ञानमि'त्यादेः निर्विशेषपरत्वं व्युदस्तम्। अथ कारणवाक्यैक-कण्ठ्यादपि निर्विशेषपरत्वं वक्तव्यमिति परोक्तं निरसितुमनुवदति — **यदुक्तमिति**। **गुणतोऽपि सद्वितीयतां न सहत** इति। 'सदेव एकमेवे'ति विजातीयसजातीयभेदव्यावर्तकावधारणद्वयसमभिव्याहृतत्वात्, अद्वितीयपदस्य गुणतोऽपि **सद्वितीयत्वनिरासकत्वमावश्यकमिति** भावः। एतेन यथा 'चोलनृपस्सम्राडद्वितीयोऽस्ति भूतल' इत्यादिवन्निर्वाहो न

**न्यायेन कारणवाक्यानामद्वितीयवस्तुप्रतिपादनपरत्वमभ्युपगमनीयम् । कारणतयोपलक्षितस्याद्वितीयस्य ब्रह्मणो लक्षणमिदमुच्यते, 'सत्यं ज्ञानमनन्तं ब्रह्म' इति । अतो लिलक्षयिषितं ब्रह्म निर्गुणमेव । अन्यथा 'निर्गुणम्', 'निरञ्जनम्' इत्यादिभिर्विरोधश्चेति - तदनुपपन्नम्; जगदुपादानस्य ब्रह्मणः स्वव्यतिरिक्ताधिष्ठात्रन्तरनिवारणेन विचित्रशक्तियोगप्रतिपादनपरत्वादद्वितीयपदस्य । तथैव विचित्रशक्तियोगमेवावगमयति,** (छा.६.२.३.) **'तदक्षैत बहु स्यां प्रजायेयेति; । तत्तेजोऽसृजत' इत्यादि । अविशेषेणाद्वितीयमित्युक्ते निमित्तान्तरमात्रनिषेधः कथं ज्ञायत इति चेत् - सिसृक्षोर्ब्रह्मण उपादानकारणत्वम्, 'सदेव सोम्येदमग्र आसीदेकमेव' इति प्रतिपादितम् ।**

---

सम्भवतीति सूचितम् । नञः स्वसमभिव्याहृतपदार्थतावच्छेदकावच्छिन्नप्रतियोगिताकाभाव बाधने व्युत्पत्तेश्च । अतः कारणवाक्येषु निर्गुणत्वबोधनात्तदानुगुण्येन सत्यमित्यादिवाक्यस्यापि निर्गुणपरत्वमेव वक्तव्यमित्याशयः ।

ननु 'यस्सर्वज्ञस्सर्ववित्', 'यस्य ज्ञानमयं तपः', 'तस्मादेतन्नामरूपमन्नश्चजायते' इत्यादि सगुणविषयककारणवाक्यैक-कण्ठ्यात्सगुणपरत्वमेव किमिति न स्वीक्रियत इत्यत्राह - **अत** इति । अयमाशयः - यद्यपि कारणवाक्येषु ब्रह्मणस्सगुण-त्वमप्युक्तमथापि सर्वशाखाप्रत्ययन्यायात्सगुणनिर्गुणोभयवाक्येष्वपि सगुणत्वं निर्गुणत्वञ्चोभयं वक्तव्यम् । ततश्चापच्छेद-न्यायेन परत्वेन निर्गुणवाक्यस्य प्राबल्याभ्युपगमावश्यकत्वात्सर्वकारणवाक्यानामपि निर्गुणपरत्वमेव स्वीकर्तव्यम् । ततश्च तदैककण्ठ्यात्सत्यादिवाक्यस्य निर्विशेषपरत्वमेवेति । कारणवाक्यैकण्ठ्यस्यावश्यमभ्युपगन्तव्यत्वे हेतुमाह - **कारणतये**ति । तन्मते चन्द्रस्य शाखेव ब्रह्मणः जगत्कारणत्वं हि तटस्थलक्षणं, अत **उपलक्षितस्ये**ति भाषितम् । तत्र 'सदेवे'त्यादिभिः ब्रह्मणःकारणत्वे कथिते कारणत्वशङ्कितदोषाणां ब्रह्मण्यसम्भवोपपादनाय 'सत्यं ज्ञानमि'ति शोधकवाक्यस्य प्रवृत्त्या कारणवाक्याविरोधेनैवास्य शोधकवाक्यस्यार्थवर्णनं युक्तमिति तदैककण्ठ्यमवलम्बनीयमेवेति भावः । **लिलक्षयिषितं** = स्वरूपलक्षणेन लक्षयितुमिष्टम् । आस्तां कारणवाक्यैककण्ठ्यम् । शोधकवाक्यान्तरैककण्ठ्यादपि, अस्य निर्विशेष-परत्वमेवाभ्युपेत्यम् । अन्यथा शोधकवाक्यानामेव परस्परं विरोध इत्याह — **अन्यथे**ति । निर्गुणमित्यादिषु गुणत्वाद्यव-च्छिन्नप्रतियोगिताकाभावरूपसामान्याभावस्य बोधनादिति भावः । तदेतद्दूषयति — **तदनुपपन्नमि**ति । कारणवाक्यगता-द्वितीयत्वश्रुतिविरोधं परिहरति — **जगदि**ति । **विचित्रशक्ती**ति । उपादानत्वनिमित्तत्वोभयानुगुणोभयशक्तीत्यर्थः । इदञ्चोपरितन वाक्येष्वेव स्पष्टमित्याह — **तथैवे**ति । **तथैव** = अद्वितीयपदस्याधिष्ठात्रन्तरनिवारणपरत्वानुगुण्येन । 'तदैक्षत', 'असृजत' इत्यादिभिः 'बहुस्यां' इति उपादानस्य परिणामशक्तियुक्तस्याधिष्ठातृत्वशक्तिमत्वप्रतिपादनादिति भावः । एवमुत्तरवाक्यैः कारणत्वानुगुणगुणतत्त्वबोधनान्नाद्वितीयपदं निर्गुणत्वबोधने क्षममित्याशयः ।

नन्वद्वितीयपदेन निमित्तान्तरनिषेधो नास्माभिरप्युपलभ्यते । अथापि निरुपपदत्वेन तस्य सर्वनिषेधसाधारणत्वात् तेन स्वगतभेदोऽपि निषेध्य इत्येव वक्तव्यम् । एवमुपक्रमोक्ता 'एकविज्ञानेन सर्वविज्ञान'प्रतिज्ञाऽपि नोपपद्यते भवताम् । 'सदेव', 'एकमेवे'ति विजातीयसजातीयभेदयोर्निषिद्धत्वेन मिथ्यात्वसम्भवेऽपि स्वगतभेदस्य सत्यस्य सत्वात् । अत उपक्रमानुरोधेनाद्वितीयपदस्य स्वगतभेदनिषेधपरत्वमेवाभ्युपेत्यम् । उपक्रमप्राबल्यादित्याशयेन चोदयति - **अविशेषेणे**ति । निमित्तान्तरनिषेधस्य सम्प्रतिपन्नत्वात् **मात्रे**ति । समाधत्ते — **सिसृक्षोरि**ति वाक्यत्रयेण । अयं भावः -'सदेवे'ति वाक्यं कारणवाक्यन्न वा । नो चेत्, तदैककण्ठ्यात् 'सत्यमि'त्यादिवाक्यस्य निर्विशेषत्वपरत्वोपपादनमयुक्तमनपेक्षितञ्च । 'तदैक्षत बहुस्यामि'त्यनन्तरवाक्यविरोधश्च । कारणपरत्वे च न तद्वाक्यघटकं 'सदेवे'ति पदं विजातीयनिषेधपरः, विजातीयस्य कालस्य सत्त्वात् । 'न कर्माऽविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते चे'त्यादिभिः जीवतद्गतकर्मणामनादित्व-बोधनेन तद्विरोधप्रसङ्गाच्च । अन्यथा ह्यकृताभ्यागमकृतविप्रणाशप्रसङ्गः। ब्रह्मणो वैषम्यनैघृण्यापत्तिश्च । एवमद्वीतीयपदन्न स्वगतभेदनिषेधपरम् । अत्र कारणवाक्यत्वेन तदनन्तरवाक्योक्तसृष्ट्यौपयिकसर्वज्ञत्वसर्वशक्तित्वादीनां ब्रह्मण्यभ्युप-

**कार्योत्पत्तिस्वाभाव्येन बुद्धिस्थं निमित्तान्तरमिति तदेवाद्वितीयपदेन निषिद्ध्यत इत्यवगम्यते। सर्वनिषेधे हि स्वाभ्युपगताः सिषाधयिषिताः नित्यत्वादयश्च निषिद्धाः स्युः। सर्वशाखाप्रत्ययन्यायश्चात्र भवतो विपरीत-फलः; सर्वशाखासु कारणान्वयिनां सर्वज्ञत्वादीनां गुणानामत्रोपसंहारहेतुत्वात्। अतः कारणवाक्यस्वभावादपि, 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यनेन सविशेषमेव प्रतिपाद्यत इति विज्ञायते। न च निर्गुणवाक्यविरोधः, प्राकृतहेयगुणविषयत्वात्तेषाम्, 'निर्गुणम्', 'निरञ्जनम्', 'निष्कलं निष्क्रियं शान्तम्' इत्यादीनाम्।**

---

गन्तव्यत्वात्। अतो नास्य वाक्यस्य सजातीयविजातीयस्वगतभेदव्यावर्तकत्वं सम्भवति।

ननु 'एकमेवे'ति सजातीयव्यावर्तकं किन्न स्यादिति चेन्न। 'बहु स्यां', 'नामरूपे व्याकरवाणी'त्याद्युत्तरवाक्यपर्यालोचनया ब्रह्मणः विभक्तनामरूपत्वाभाववत्वस्य बोधनात्। अस्तु वाऽविभक्तनामरूपब्रह्मसजातीयव्यावर्तकम्। अथापि न निर्विशेषत्व बोधकम्। न चोपक्रमोक्तप्रतिज्ञायाः का गतिरिति वाच्यम्। उक्तार्थाविरोधेनैव तस्याः नेयत्वात्। वस्तुत उक्तप्रतिज्ञायाः दृष्टान्तादिस्वारस्येन विरोध एव नास्तीति पूर्वमेवोक्तम्। तस्मान्न प्रमाणसिद्धसर्वनिषेधकत्वमस्य वाक्यस्य। अन्यथा भवदभ्युपगतनित्यत्वादीनामपि निषेधस्स्यात्। यदि प्रमाणबलेन नित्यत्वादिव्यतिरिक्तनिषेधपरतया 'अद्वितीयमि'त्यादिनिषेधः सङ्कोच्यते, तर्हि तत एव हेतोरस्मदभिमतार्थव्यतिरिक्तनिषेधपरतयाऽपि सङ्कोच्येत। प्रमाणस्योभयत्रापि सत्वात्। ननु पूर्वं एकविज्ञानेन सर्वविज्ञानप्रतिपादनमुखेन ब्रह्मण उपादानत्वस्य लाभात्, अत्राद्वितीयपदमुपादानान्तर-निषेधपरं किन्न स्यात्? उच्यते।' एकमि'त्यस्याविभक्तनामरूपत्वार्थकत्वेन ब्रह्मण उपादानत्वस्य सिद्धत्वादेवकारेण तदन्योपादानत्वनिषेधात्कार्योत्पत्तिस्वाभाव्येन निमित्तकारणस्य बुद्धिस्थत्वाच्च तन्निषेधपरत्वाश्रयणस्यैव युक्तत्वात्। न च कालादृष्टादीनामपि निमित्तत्वेन कथं निमित्तान्तरनिषेध इति शङ्क्यम्। 'न तत्समश्चाभ्यधिकश्च दृश्यते' इत्यादिभिः स्वतन्त्रवस्तुनो निषिद्धत्वात्। 'एकमेवे'ति पदसमभिव्याहृताद्वितीयपदस्य स्वतन्त्रवस्तुरूपनिमित्तान्तरनिषेधपरत्वौचित्यात्, कालादृष्टादीनाञ्च स्वातन्त्र्येण निमित्तत्वाभावेन चाविरोधात्। अतः श्रुत्यन्तरप्रकरणादिपर्यालोचनया यथोक्त एवार्थः स्वीकरणीय इति।

एवं परोक्तस्य सर्वशाखाप्रत्ययन्यायस्य विपरीतसाधकत्वमित्युपालभते - **सर्वेति**। अत्र **भवत** इत्युमालम्भः। निर्गुण-वादे तस्यानुपयुक्तत्वादिति भावः। विपरीतफलकत्वमेवोपपादयति - **सर्वशाखास्विति**। सर्वासु शाखासु पठितस्याग्निहोत्रस्यैकत्वे निश्चिते हि तत्र तत्रानुक्तानामङ्गानामुपसंहार एव क्रियते। तद्वदत्रापि ब्रह्मणः सर्वकारणवाक्येषु पठितस्य कारणस्यैकत्वे निश्चिते तत्र तत्रोक्तानां सर्वज्ञत्वादिगुणानां सर्वत्रोपसम्हारेण गुणवत्वसिध्या निर्गुणत्वासम्भवात्। नन्वपच्छेद-न्यायसहकृतेन सर्वशाखाप्रत्ययन्यायेन सर्वकारणवाक्यानां निर्गुणपरत्वं स्थापयितुं शक्यमिति चेन्न। अपच्छेदन्यायप्रसक्तेरेव प्रकृतेऽभावात्। सति विरोधे ह्यपच्छेदन्यायप्रवृत्तिः। प्रकृते निर्विशेषपरत्वेनाभिमतकारणवाक्यानामपि निर्विशेषपरत्वा-सम्भवस्योक्तत्वात् सर्वशाखाप्रत्ययन्यायेन सर्वकारणवाक्येष्वपि सर्वज्ञत्वादिगुणानामेवोपसम्हारात्। यदि निर्विशेषत्व-मपि क्वचिद्बोधितं स्यात्, तर्हि तदप्युपसंहियेत। अतस्तदुपसम्हाराभावेन विरोधाभावान्न प्राबल्यादिविचार इति॥

शोधकवाक्यान्तरविरोधं परिहरति — **न चेति**। विरोधाभावे हेतुमाह — **प्राकृतेति**। **प्राकृताः** - प्रकृतिगताः, प्रकृतिसम्सर्गप्रयुक्तजीवगताश्च। अनेन ब्रह्मणि निषेध्यहेयगुणानां प्रसिद्धिर्दर्शिता। निर्गुणवाक्यानां सगुणवाक्यानाञ्च मिथो विरोधे सति ह्यपच्छेदन्यायप्रवृत्त्या परस्य निर्गुणवाक्यस्य प्राबल्यं शङ्कितुं शक्येत। पूर्वस्य हेयगुणाभावपरत्वात् परस्य कल्याणगुणपरत्वाच्च विरोधाभावेन नापच्छेदन्यायप्रवृत्तिरिति भावः। वस्तुतो विरोधसत्त्वेऽपि न तन्न्यायप्रवृत्ति-सम्भवः। अपच्छेदन्यायस्यानियत विरोधपौर्वापर्यविषयत्वात्। तथा हि - न ह्यपच्छेदस्थले पौर्वापर्यनियमः। कस्मिंश्चित्

**ज्ञानमात्रस्वरूपवादिन्योऽपि श्रुतयो ब्रह्मणो ज्ञानस्वरूपतामभिदधति। न तावता निर्विशेषज्ञानमात्रमेव तत्त्वम्; ज्ञातुरेव ज्ञानस्वरूपत्वात्। ज्ञानस्वरूपस्यैव तस्य ज्ञानाश्रयत्वं मणिद्युमणिदीपादिवद्युक्तमेवेत्युक्तम्। ज्ञातृत्वमेव हि सर्वाः श्रुतयो वदन्ति -** (मुण्ड १.१.१०.) **'यः सर्वज्ञः सर्ववित्',** (छा.६.२.३.) **'तदैक्षत',** (छा.६.३.२.) **'सेयं देवतैक्षत',** (ऐ.१.) **'स ईश्रत लोकान्नु सृजा इति',** (कठ ५.१३.) **'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्',** (श्वे.१.९.) **'ज्ञाज्ञौ द्वावजावीशनीशौ',** (श्वे.६.७.८.) **'तमीश्वराणां परमं महेश्वरं तं देवतानां परमञ्च दैवतम्। पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम्॥ न तस्य कार्यं करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च',** (छा.८.१.५.) **'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः'**

---

प्रयोगे उद्गातुः कस्मिंश्चित्प्रतिहर्तुश्चापच्छेदात्। कस्मिंश्चित्प्रयोगेऽपि क्रमेणापच्छेदस्यानियतत्वात्। अत एव विरोधनियमोऽपि न नियतः। तस्मात्प्रयोगभेदेन कदाचित् उद्गात्रपच्छेदप्रायश्चित्तस्य कदाचित्प्रतिहर्त्रपच्छेदप्रायश्चित्तशास्त्रस्य चानुष्ठानमिति न सर्वथाऽप्रामाण्यम्। अत्र निर्गुणसगुणवाक्योर्विरोधः स्वरूपप्रयुक्त इति नियतः। विधिनिषेधरूपत्वात्पौर्वापर्यमपि नियतम्। तस्मादनियतविरोधपौर्वापर्यविषयापच्छेदन्यायस्य नियतविरोधपौर्वापर्यस्थले न प्रवृत्तिः। अतो विरोधसत्त्वेऽपि न पूर्वस्य दौर्बल्यसम्भव इति।

ननु 'निर्गुणमि'त्यादीनां गुणत्वावच्छिन्नप्रतियोगिताकाभावबोधकानां कथं सङ्कोचः। अत एव हि ब्रह्मणो ज्ञानमेव स्वरूपमिति श्रुतयो वदन्ति इत्यत्राह — **ज्ञानमात्रेति। मात्र**शब्देन ज्ञानस्वरूपत्वस्यायोगव्यवच्छेदमेव तादृशश्रुतयो वदन्ति। न त्वन्ययोगव्यवच्छेदमपि। अन्यथाश्रुत्यन्तरविरोधादिति सूचितम्। किं तर्हि नाभिदधतीत्यत्राह - **न तावतेति।** ननु ज्ञानस्य कथं ज्ञानाश्रयत्वं? कथं वा एकजातीययोः नियतधर्मिधर्मभाव इत्याशङ्कायां वाक्यद्वयेन परिहरति - **ज्ञातुरेवेति।** अयं भावः - ज्ञानस्य ज्ञानाश्रयत्वाभावः, किं व्याप्त्या, उत श्रुतिबलात्। न प्रथमः, असिद्धेः ज्ञानत्वहेतुना ज्ञानानाश्रयत्वसाधने तु सोपाधिकत्वम्। ज्ञानानाश्रयत्वस्य धर्मज्ञानप्रयुक्तत्वात्। ज्ञानरूपस्य धर्मिणः ज्ञानवत्वबोधकश्रुतिविरोधाच्च। अन्यथा ज्ञानानाश्रयस्य ज्ञानस्य विषयप्रकाशकस्य कस्यचिद्धर्मत्वेन लोकदृष्टत्वात्। भवतां तस्य ज्ञानस्य धर्मत्वापत्तेश्च। न द्वितीयः, भवदभिमताऽर्थे श्रुत्यभावात्। प्रत्युत ज्ञानस्यैव ज्ञानाश्रयत्वे श्रुतिसत्वाच्चेति। **ज्ञानस्वरूपस्यैवेति।** एकजातीयद्रव्ययोरेव नियतधर्मधर्मिभाव उपलब्धिसिद्ध इति द्वितीयशङ्कापि न पराक्रमितुमलमिति भावः।

ननु ज्ञानरूपस्यैव ज्ञातृत्वं श्रुतिप्रतिपन्नं चेत्, युक्तं तथाऽभ्युपगन्तुमित्यत्राह - **ज्ञातृत्वमेवेति। एवकारो** ज्ञातृत्वस्यानन्यथासिद्धत्वसूचनाय। उक्ते श्रुतीरुदाहरति - **य** इति। **इतीति** भाष्यवाक्यम्। अत्र कण्ठत एव ज्ञातृत्वं प्रतिपन्नमिति भावः। एवं ज्ञातृत्वकण्ठोक्तिमत्श्रुतिवाक्योदाहरणेन ज्ञानरूपगुणवत्वं स्थापितम्। अथ फलतः साक्षाच्च ज्ञातृत्वप्रतिपादिकाः गुणान्तरप्रतिपादिकाश्च श्रुतीरुदाहरति - **नित्य** इति। बहूनां नित्यानां चेतनानां 'यः एको नित्यश्चेतनः कामान् विदधाती'त्यन्वयः। अनेन नित्यत्वैकत्वकामप्रदत्वज्ञानवत्वमुक्तम्। चेतनबहुत्वमप्युक्तम्। ज्ञश्चाज्ञश्च - ज्ञाज्ञौ। अज्ञः = अल्पज्ञ इत्यर्थः। अजाविति नित्यत्वम्। ईशश्चानीशश्च इशनीशौ। अलोपस्तु छान्दसः। ईशत्वं नियन्तृत्वम्। ईश्वरत्वमपि तदेव। परमं = परो मा यस्मादिति विग्रहः। अनेन तस्यापि कश्चिदीश्वरो नास्तीति सूचितम्। **दैवतं** = कर्माराध्यम्। **पतिः** = शेषित्वे सति चेतनः। **कार्यं** = प्राकृतं शरीरम्। **करणं** = प्राकृतेन्द्रियाणि। अत्र प्राकृतेन्द्रियादिनिषेधेन 'निर्गुणमि'त्यादिसामान्यनिषेधस्य विशेषपर्यवसायित्वं सूचितम्। समाभ्यधिकनिषेधात् 'अद्वितीयमि'ति सामान्यनिषेधस्येश्वररूपद्वितीयपर्यवसायित्वं सूचितम्। **परेति।** अस्य शक्तिः परा विविधा च श्रूयते। ज्ञानबलाभ्यां सहिता क्रिया। क्रिया = नियमनम्। अनेन

**इत्याद्याः श्रुतयो ज्ञातृत्वप्रमुखान्कल्याणगुणान्ज्ञानस्वरूपस्यैव ब्रह्मणः स्वाभाविकान्वदन्ति ; समस्तहेयरहितताञ्च ।**

ज्ञानबलादीनां स्वाभाविकत्वमुक्तमिति नाविद्यौपाधिकत्वकल्पनासम्भव इति भावः ।

**आत्मा** = आप्नोतीत्यात्मा । **अपहतपात्मा** = पापसम्बन्धाभाववान् । पापकृतसुखदुःखभाक्त्वाभाववानिति भावः । **विजरः** = जरारहितः । जग्धुमिच्छा **जिघित्सा** । तद्रहितः । **सत्यकामः** = अवाप्तकामः । **सत्यसङ्कल्पः** = अप्रतिहतसङ्कल्पः । यदा यदा यद्यदिच्छति, तदा तदा तत्तत्सिद्धिमानिति यावत् । **समस्तहेयरहितताञ्चे**त्यनेन निर्गुणवाक्यानां गतिरपि प्रदर्शिता ।

अयमाशयः - एकस्यैव ब्रह्मणो निर्गुणत्वं सगुणत्वमुभयमपि बोधितम् । उभयोरपि श्रुतित्वाविशेषेण प्रामाण्यस्य वक्तव्यतया पशुशब्दस्य 'छागो वा मन्त्रवर्णादि'ति सूत्रोक्तन्यायेन छागपर्यवसानवदत्रापि तेनैव सामान्यविशेषन्यायेन 'अपहतपाप्माविजरो विमृत्युर्विशोको विजिघत्से'ति विशेषगुणाभाववाचकपददर्शनेन 'निर्गुणमि'ति गुणसामान्याभावबोधकशब्दस्य तत्पर्यवसानमेव युक्तम् । ननु "सामान्यविधिरस्पष्टः संह्रियेत विशेषके" इति न्यायेनास्फुटसामान्यवाचकशब्दस्य हि विशेषपर्यवसानसम्भवः । अत्र च निर्गुणमिति गुणसामान्याभावबोधकत्वेन शब्दस्य स्फुटत्वान्न तन्न्यायप्रवृत्तिरिति चेन्न । श्रुत्यन्तरे एकस्मिन्नेव वाक्ये 'अपिपास' इत्यन्तेन हेयगुणाभावमुक्त्वा 'सत्यकाम' इत्यादिना कल्याणगुणप्रतिपादनात्, 'यस्सर्वज्ञ' इति गुणविशिष्टस्यैव 'निर्गुणमि'त्यादिना निर्गुणत्वबोधनेन संशयसम्भवादत्रापि तच्छब्दस्यास्फुटत्वात् ।

ननु निषेधस्थले सामान्यविशेषन्यायः नैव प्रवर्तते । अन्यथा 'ब्राह्मणन्न हन्यात्', 'आत्रेयं न हन्यादि'त्यादावपि तत्प्रवृत्त्या विपरीतार्थ बोधनसम्भवात्, इति चेन्न । दृष्टान्तवैषम्यात् । उक्तस्थले हि तन्न्यायप्रवृत्तौ आत्रेयव्यतिरिक्तब्राह्मणहननस्यादुष्टत्वापत्त्या इतरशास्त्राणि कुप्येरन् । प्रकृते तु हेयगुणाभावपरतया पर्यवसाने न किञ्चित्बाधकम् । प्रत्युत साद्गुण्यमेव । कथमन्यथा प्रत्यक्षानवगतस्य ब्रह्मणः सर्वज्ञत्वादिगुणं प्रतिपाद्य, सैव श्रुतिः गुणाभावं बोधयेत् । तथा सत्युन्मत्तप्रलपितत्वापत्तेः । अस्तु वा सामान्यविशेषन्यायाप्रवृत्तिः, अथाप्युत्सर्गापवादन्यायेनैव प्रकृतार्थः सिध्यति । तथा हि - 'न हिंस्यात्सर्वा भूतानी'ति विहितस्य भूतसामान्यहिंसानिषेधस्य 'अग्नीषोमीयं पशुमालभेत' इति विहितपशुहिंसाव्यतिरिक्त विषयकत्ववदत्रापि 'निर्गुणमि'ति गुणसामान्याभावबोधकस्य 'यस्सर्वज्ञः सर्ववित्' 'सत्यकामस्सत्यसङ्कल्प' इत्याद्युक्तसर्वज्ञत्वादिगुणव्यतिरिक्तहेयगुणसामान्यभावपरत्वात् । एतेन गुणसामान्यभावस्य विशेषाभावकूटरूपत्वानङ्गीकारमते निर्गुणवाक्यस्य हेयगुणाभावरूपविशेषाभावपर्यवसानमनुपपन्नमिति शङ्का निरस्ता । उत्सर्गापवादन्यायेनैवास्मदभिमतार्थसिद्धेः । न चैवं सति तत्तद्विद्याप्रतिपादितगुणव्यतिरिक्तगुणाभावपरत्वेनानुक्तगुणानां ब्रह्मणि समन्वयो न स्यादिति वाच्यम् । सर्वशाखाप्रत्ययनयेनैकत्रैव सर्वगुणानामपि वक्तव्यतया तद्व्यतिरिक्तगुणाभावपरत्वेनैव निर्गुणमित्यादीनां नेयत्वात् । अपि च 'सत्वाद्यैरखिलैर्गुणैः',' निर्गुणस्याप्रमेयस्य', 'कारणं गुणसङ्गोऽस्य',' निर्गुणं गुणभोक्तृ च', 'नान्यं गुणेभ्यः कर्तरमि'त्यध्यात्मशास्त्रेषु गुणशब्दस्य सत्वरजस्तमस्सु प्रयोगान्निर्गुणशब्दोऽपि तदभावबोधक इति न तेन निर्विशेषत्वसाधनसम्भवः । अत्र विरोधाधिकरणन्यायेन निर्गुणसगुणवाक्योः निर्गुणवाक्यस्यैव बाध्यत्वं स्यात् । तथाहि - 'औदुम्बरीं स्पृष्ट्वा उद्गायेदि'ति श्रुतिः । 'औदुम्बरी सर्वा वेष्टयितव्या' इति च स्मृतिः । तत्र श्रुतिस्मृत्योर्विरोधे 'विरोधेत्वनपेक्ष्यं स्यादसति ह्यनुमानमिति' श्रुतेः प्रामाण्यमुक्तम् । अविलम्बेन श्रुत्या प्रमित्युत्पादनात्स्मृत्या च विलम्बेनोत्पादाच्छीघ्रधीहेतोः प्राबाल्यात् । ततश्च निर्गुणवाक्यानां निषेध्यगुणसापेक्षत्वात्, प्रथमत एव सगुणवाक्यप्रवृत्त्या तेन ब्रह्मणः सगुणत्वबोधने पश्चात्तद्विरुद्धार्थबोधनं निर्गुणवाक्येन न सम्भवति । नन्वत्र निर्गुणवाक्यमपि श्रूयत इति चेन्न ।

**निर्गुणवाक्यानां सगुणवाक्यानाञ्च विषयम् - अपहतपाप्मेत्याद्यपिपास इत्यन्तेनहेयगुणान् प्रतिषिद्ध्य, 'सत्यकामः सत्यसङ्कल्प' इति ब्रह्मणः कल्याणगुणान् विदधतीयं श्रुतिरेव विविनक्ती ति सगुणनिर्गुणवाक्ययो र्विरोधाभावादन्यतरस्य मिथ्याविषयताश्रयणमपि नाशङ्कनीयम् ।** (तै.आनं.८.) **'भीषाऽस्माद्वातः पवते' इत्यादिना ब्रह्मगुणान् आरभ्य, 'ते ये शतम्' इत्यनुक्रमेण क्षेत्रज्ञानन्दातिशयमुक्त्वा, 'यतो वाचो निवर्तन्ते ।**

निर्गुणवाक्यसत्त्वेऽपि प्रमित्यदुयासम्भवात् ।

ननु विरोधाधिकरणे श्रुतित्वस्मृतित्वे प्रयोजकीकृत्य हि बाध्यबाधकभाव उक्तः । अत्र चोभयोरपि श्रुतित्वाविशेषात्कथं निर्णय इति चेन्न । श्रुतित्वस्मृतित्वयोरपि पौर्वापर्यहेतुत्वेनैव निर्णीतत्वात् । अन्यथा स्मृतिरेव बाधिका किन्न स्यात् । तस्मात्तेनैव नयेन तत्रापि सगुणवाक्यानामेव प्राबल्यम् । एवमुपक्रमोपसंहाराधिकरणन्यायेनापि सगुणवाक्यानामेव प्राबल्यं स्यात् । सगुणवाक्यस्य पूर्वत्वेनोपक्रमवाक्यत्वादन्यस्य च परत्वात् । उपक्रमाधिकरणे हि उपक्रमस्य प्राबल्यमुपसम्हारवाक्यस्य च दौर्बल्यं प्रदर्शितम् । अतो भवद्भिरपच्छेदनयेन सगुणवाक्यस्य बाध्यत्वस्थापने तथैवोक्तन्यायद्वयेन निर्गुणवाक्यस्यापि बाध्यत्वं प्रसज्येत । यदि तु विरोधाभावेनोक्तन्यायद्वयस्याप्यप्रवृत्तिरित्युच्यते, तर्हि विरोधाभावादेवापच्छेदन्यायस्याप्यप्रवृत्तिरिति प्रतिबन्दीं मनसि निधाय निर्गुणसगुणवाक्ययोः विरोधभावं श्रुतिरेव व्यनक्तीति नास्मत्प्रयासोऽप्यपेक्षित इति नान्यतरस्यापि बाध्यत्वमाश्रयणीयमित्याशयेनाह - **निर्गुणेति** । क्वचित्क्वचिद्ब्रह्मगुणानां स्वाभाविकत्वकथनेनाऽऽविद्यकत्वकल्पनासम्भवात् । सर्वशाखाप्रत्ययन्यायेन स्वाभाविकत्वकण्ठोक्त्यभावस्थलेऽपि स्वाभाविकत्वप्राप्तेः । उपासनविधिरहितेषु स्वरूपवद्गुणस्यापि प्रतिपन्नत्वेन सगुणवाक्यानामुपासनशेषत्वकल्पनासम्भवात् । विधिप्रत्ययवत्सु वाक्येष्वपि गुणानामिव स्वरूपस्याप्युपासनशेषत्वेनाविद्याकत्वापत्तेः प्रमाणान्तरागोचरब्रह्मणोगुणवत्वमुक्त्वा तन्निषेधस्यायुक्तत्वात् । 'अपहतपाप्मा' इत्यादि श्रुतौ विषयविभागस्य दृष्टत्वेन तयैवरीत्या सामान्यविशेषोत्सर्गापवादन्यायाभ्यां सगुणनिर्गुणवाक्ययोः विषयविभागस्य सुकरत्वाद्विरोधाभावेनापच्छेदन्यायाप्रवृत्तेः । ईदृशस्थले प्रवृत्तौ च 'अग्नीषोमीयं पशुमालभेत' इति पूर्वशास्त्रापेक्षया 'न हिंस्यात्सर्वभूतानि' इति निषेधशास्त्रस्य परत्वेनाग्नीषोमीयशास्त्रस्य बाध्यत्वप्रसक्त्या तदनुष्ठानविरोधापत्तेः । विरोधस्वीकारे च विरोधाधिकरणन्यायोपक्रमाधिकरणन्यायाभ्यां निर्गुणवाक्यस्य बाध्यत्वापत्तेश्च यथोक्तरीत्यैव सगुणनिर्गुण वाक्ययोविषयविभागः कार्य इति भावः ॥

एवं निर्गुणसगुणवाक्ययोर्विषयव्यवस्था कृता । अनेन 'सत्यं ज्ञानमनन्तं ब्रह्मे' त्यत्र ज्ञानपदमार्थगुणनिषेधपरमिति शङ्का च निरस्ता । अथ 'सत्यं ज्ञानमि'त्यनुवाकोपक्रमे उपसंहारे च 'यतो वाचो निवर्तन्तेऽप्राप्य मनसा सह' इति वाङ्मनसयो र्निवृत्त्यभिधानाद्ब्रह्मणो निर्गुणत्वं फलिष्यतीति तदैकार्थ्यात्सत्यादिवाक्यस्यापि निर्विशेषत्वपरत्वसिद्धिरिति शङ्कां परिहरति - **भीषेति** । 'भीषाऽस्माद्वातः पवते । भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम' इति । अस्यायमर्थः - अग्नीन्द्रप्रभृतयो देवप्रवराः परमात्मशासनातिवृत्तौ किमपि भविष्यतीति भीताः स्वस्वकर्मस्वत्यन्तं जागरूकास्सन्तीति । अनेन भगवतः शासितृत्वरूपगुणप्रकर्ष उक्तः । 'अन्योऽन्तर आत्मा आनन्दमय' इत्युक्तानन्दमयशब्दार्थानन्दप्राचुर्यमुपपादयति - **सैषेत्यादिना** । उत्कृष्टवस्तुविचारो मीमाम्साशब्दार्थः । अथ क्रमेण ब्रह्मण आनन्दातिशयं दर्शयितुमादौ मनुष्यानन्दमाह - **युवेति** । **युवेत्यनेनाधिकवयोराहित्यमुक्तम्** । **साधु** = यथाविधि । सम्यक्सम्प्रदायसिद्धतया स्वरवर्णादिभ्रमरहितं वा । **युवाध्यायकः** । **युवा** चासावध्यायकश्च । अध्यापक इत्यपि वा पाठः ।

युवत्वञ्च प्रत्यग्रत्वम् । अध्यापकस्य युवत्वमध्ययनद्वारा । तथा चाविस्मरणात् नित्यं नवं यथा भवति तथाऽध्ययनवानित्यर्थः । यूनां - स्वसमानवयस्कानां सर्वेषामध्यापकः तदधिकज्ञानवानिति वार्थः । साधुयुवाध्यायक इत्येकं पदं वा । शिष्यगुणपूर्तियुक्तानां यूनामध्यापक इत्यर्थः । **आशिष्टः** = आशुतरक्रियः अशनक्षम इति वा । अरोग इति पर्यवसितम् ।

यद्वा - सर्वाशीर्वादविषयभूतः । सर्वानुरञ्जक इति यावत् । **द्रढिष्ठः** = शरीरबलवान् । **बलिष्ठः** = मनोबलवान् । अथवा **द्रढिष्ठः** = दृढतरः व्यवस्थितस्वभाव इति यावत् । **बलिष्ठः** = सर्वविधबलवान् । **वित्तस्य पूर्णा** = वित्तेन पूर्णा । **वित्त**शब्दः धान्यादिसर्वसमृध्द्युपलक्षकः । 'युवा स्यादि'ति वाक्येन गुणसमुदाय उक्तः । 'तस्येयमि'त्यादिना विभूतिपौष्कल्यमुक्तम् । 'स एको मानुष आनन्द' इत्यनेन गुणसमुदायस्य विभूतेश्चाऽऽनन्दत्वमुक्तम् ।

ननु ज्ञानस्यानन्दत्वेऽपि तद्भिन्नगुणविभूत्यादेः कथमानन्दत्वम्? उच्यते । स्वतो इष्टत्वरूपानुकूलत्वस्यैवानन्दत्व-रूपत्वेन तस्य गुणविभूत्यादावपि सम्भवेनानन्दत्वोपपत्तेः । वस्तुतो गुणविभूत्यादिविषयकज्ञानस्याप्यनुकूलत्वं विषया-नुकूलत्वप्रयुक्तमेवेति, अन्वयव्यतिरेकबलादपि ज्ञानविषयज्ञानभिन्नगुणविभूत्यादीनामनुकूलत्वरूपानन्दत्वसिद्धिः । अत एव ह्यत्र श्रुतौ युवत्वादिगुणविभूत्यादिकं प्रदर्श्य तस्यैव मानुषानन्द इत्यानन्दत्वमुपवर्णितम् । अतो विषयस्यैवानन्दरूपत्वे श्रुतिस्वारस्यम् । अन्यथा श्रुतिरेव गुणविभूत्यादिविषयकज्ञानं मानुषानन्दः इति निर्दिशेत् । **श्रोत्रियः** = ब्रह्मनिष्ठः । **अकामहतः** = समस्तसाम्सारिकभोगानुपहतः । मुक्त इति यावत् । तथा च युवत्वदृढगात्रत्वैश्वर्यादयः सम्भूय यत्र भवन्ति, स एव मानुषानन्दवान् । स चानन्दः मुक्तस्याप्यस्ति । तस्य सर्वानन्दानुभवशालित्वेन शते पञ्चाशन्न्यायेन तदानन्दे मानुषानन्दस्याप्यन्तर्गतत्वात् । अनेन मुक्तानन्दस्य भगवदानन्दसाम्यमुक्तं भवति । 'ते ये शतमि'त्यादिना आनन्दातिशयः उच्यते । अत्रानन्दस्यानवधिकातिशयत्वप्रतिपादनेन गुणानां विभूतेश्चानवधिकातिशयत्वमुक्तं भवति । गुणविभूत्योरेवानन्दशब्देन निर्देशात् । **मनुष्यगन्धर्वाः** = मनुष्या एव सन्तः कर्मविशेषेण विद्याविशेषेण वाऽन्तर्धानादि-शक्त्युपेता गन्धर्वत्वं प्राप्ताः । **देवगन्धर्वाः** = अन्तरिक्षलोकवासिनः । **चिरलोकलोकाः** = चिरकालस्थायीलोकः चिरलोकः । चिरलोको लोको येषां ते = चिरलोकलोकाः, पितृविशेषणमिदम् । **आजानजाः** = आजानो देवलोकः, तत्र जाताः । स्मार्त-कर्मविशेषेण देवस्थानेषु जाताः इत्यर्थः । **कर्मदेवाः** = अग्निहोत्रादिकर्मणा अग्नीन्द्रादिसायुज्यं प्राप्ताः । **देवाः** वसुरुद्रादयः त्रयस्त्रिंशत् हविर्भुजः । **इन्द्रः** शतमखः । **बृहस्पति**र्देवगुरुः । **प्रजापति**श्चतुर्मुखः । ब्रह्मशब्दो भगवत्परः ।

अत्र 'स एकः प्रजापतेरानन्द' इत्यन्तेन क्षेत्रज्ञानन्दातिशयो उक्तः । 'ते ये शतं प्रजापतेरानन्दा' इत्यादिना ब्रह्मगता-नन्दानन्त्यमुच्यते । यत्तु - ' स एकः प्रजापतेरानन्द' इत्यत्र प्रजापतिशब्दः दक्षादिपरः । 'स एको ब्रह्मणः आनन्द' इत्यत्र ब्रह्मशब्दः चतुर्मुखब्रह्मपर इति । तन्मन्दम् । प्रकरणे 'ब्रह्मविदाप्नोति', 'ब्रह्मणा विपश्चिता', 'आनन्दं ब्रह्मणः', 'असद्ब्रह्मेति वेद चेदि'त्यादौ ब्रह्मशब्दस्य ब्रह्मपरत्वेन तत्प्रकरणस्थस्यास्य ब्रह्मशब्दस्य चतुर्मुखपरत्वायोगात् । एवं सूत्रकारेण 'परं जैमिनिर्मुख्यत्वादि'त्यादौ परमात्मन्येव ब्रह्मशब्दस्य मुख्यवृत्तत्वोपपादनात् । तदनुसारिणा भाष्यकृता 'अथातो ब्रह्म-जिज्ञासा' इत्यत्र ब्रह्मशब्दस्य तत्रैव मुख्यवृत्तत्वस्थापनेन चतुर्मुखे ब्रह्मशब्दस्यास्वारस्यात् ।

'सैषानन्दस्ये'ति प्रकान्तभगवदानन्दस्य चतुर्मुखानन्दे उपसम्हारायोगात् । 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह आनन्दं ब्रह्मणो विद्वान्' इति पूर्वोत्तरवाक्ययोः आनन्दप्रतिसम्बन्धिवाचिषष्ठ्यन्तब्रह्मशब्दस्य परब्रह्मपरत्वात् । 'स एको ब्रह्मण आनन्द' इत्यत्रापि तादृशब्रह्मशब्दस्य परब्रह्मवाचित्वस्वारस्यात् ॥ न हि 'आनन्दं ब्रह्मणो विद्वानि'त्यत्रैव ब्रह्मशब्दः चतुर्मुखपरः । तदपि 'एष श्लोको भवती'ति परब्रह्मानन्दस्यैव प्रक्रमात् । अन्यथा निगमनानुपपत्तेरुक्तत्वात् । 'स यश्चायं पुरुषे' इत्यनन्तरवाक्यस्थप्रकृतपरामर्शि कारणवाचितच्छब्दबलेनाप्यस्य ब्रह्मशब्दस्य परब्रह्मपरत्वस्य निश्चेतव्यत्वात् । अन्यथा चतुर्मुखस्य सर्वान्तरात्मत्वपरमकारणत्वप्रसङ्गात् । तदपि 'एषः श्लोको भवती'ति ब्रह्मानन्दस्य वक्ष्यमाणत्वेन पूर्वं तत्प्रसङ्गावश्यकत्वेनापि ब्रह्मशब्दस्य परब्रह्मपरत्वनिश्चयात् । एवं निरुपपदैकवचनान्तप्रजापतिशब्दो हि चतुर्मुखे स्वरसः । अन्यथा हि बहुवचनमपेक्षितं स्यात् । न च जात्येकवचनत्वेनोपपत्तिः, प्रकरणविरोधात् । बहुवचन-निर्देशस्थले बहुवचनस्य, एकवचननिर्देशस्थले एकवचनस्य च, देवानां देवगन्धर्वाणां मनुष्यगन्धर्वाणां इन्द्रस्य बृहस्पते

**अप्राप्य मनसा यह । आनन्दं ब्रह्मणो विद्वान्' इति ब्रह्मणः कल्याणगुणानन्त्यमत्यादरेण वदतीयं श्रुतिः ।** (तै.आनं.१.) **'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति ब्रह्मवेदनफलमवगमयद्वाक्यं परस्य विपश्चितो ब्रह्मणो गुणानन्त्यं ब्रवीति । विपश्चिता ब्रह्मणा सह सर्वान् कामान् समश्नुते । काम्यन्त इति कामाः =**

---

इति निर्देशादपि अपेक्षितबहुवचनान्ततया निर्देशावश्यकत्वात् । अत उक्तोपपत्त्यनुपपत्तिभ्यां प्रजापतिशब्दः चतुर्मुख परः । ब्रह्मशब्दो भगवत्पर इत्यास्थेयम् । न च परब्रह्मानन्दस्यापरिच्छिन्नत्वात् 'स एक' इति कथं परिच्छिन्नत्वमिति वाच्यम् । आधिक्यमात्रे वाक्यतात्पर्यात् । यथा हि क्षणार्धेन बहूनि योजनानि 'गच्छति रवौ इषुवद्गच्छति सविता' इति वाक्यस्य गतिमान्द्यनिवृत्तिपरत्वमेव नत्विषुवत् गमनसाम्यप्रतिपादनपरत्वं तथैव 'स एकः', 'ते ये शतं' इत्यादौ चतुर्मुखा-नन्दाधिक्यमात्रपरत्वमेव, न तु शतगुणितचतुर्मुखानन्दान्यूनानधिकत्वपरत्वम् ॥

अथवा 'स एकः', 'ते ये शतमि'त्यस्य सङ्ख्यापरत्वेऽपि नानुपपत्तिः । 'रोमकूपेष्वनन्तानि ब्रह्माण्डानि भ्रमन्ति ते । अण्डानां तु सहस्राणां सहस्राण्ययुतानि च । ईदृशानां तथा तत्र कोटिकोटिशतानि च । गङ्गायां सिकताधारा यथा वर्षति वासवे । शक्या गणयितुं लोके न व्यतीताः पितामहा' इत्यादिभिर्ब्रह्माण्डानां तत्र तत्र चतुर्मुखानां चासङ्ख्येयत्वबोधनात्कालत्रय-वर्तिसमस्तब्रह्माण्डगतचतुर्मुखानन्दापेक्षया भगवदानन्दस्य शतगुणितत्वकथने भगवदानन्दस्यापरिच्छिन्नत्वस्यार्थसिद्धे र्भगवदानन्दानन्त्यासिद्धिरिति । **ब्रह्मणः कल्याणगुणानन्त्यमि**ति । अयं भावः - अत्र हि कल्याणगुणानां क्रमेण न्यूनताप्रतिपादन-पूर्वकन्न सर्वाभावे पर्यवसानं कृतं, येन निर्विशेषत्वसिद्धिराशङ्क्येत । किन्तु गुणानामाधिक्यप्रदर्शनपूर्वकं तत्प्रकर्ष एवोक्तः । ततश्च भगवद्गुणप्रकर्षस्य निरतिशयत्वेन 'यतो वाचो निवर्तन्ते अप्राप्यमनसा सह' इति वाङ्मनसयोर्निवृत्त्याभिधानमिति । **अत्यादरेणे**ति । ब्रह्मस्वरूपापेक्षयापि ब्रह्मगुणेषु आदरातिशयः श्रुत्यैव स्वीकृतः । यत आनन्दान्वितं ब्रह्म विद्वानित्यनुक्त्वा 'आनन्दं ब्रह्मणो विद्वान्' इत्याह । अतः ब्रह्मगुणानन्त्ये श्रुतेरेवादरातिशयोऽस्तीति ज्ञायते । अत एव 'सङ्ख्यातुं नैव शक्यन्ते गुणा दोषाश्च शार्ङ्गिणः । आनन्त्यात्प्रथमो राशिरभावादेव पश्चिम' इत्युक्तम् । अतो निर्गुणत्वेन भवदभिमता श्रुतिरप्यस्मदनुकूलैव ॥

एवं सत्यादिवाक्यस्य तत्प्रकरणगतवाक्यान्तरपर्यालोचनया निर्विशेषपरत्वं व्युदस्तम् । अथ तद्वाक्यैकदेशेनापि गुणानन्त्यबोधनान्न निर्विशेषपरत्वमित्याशयेनाह - **सोऽश्नुत** इति । 'ब्रह्मविदाप्नोति परं', 'तदेवाऽभ्युक्ता', 'सत्यं ज्ञानमनन्तं ब्रह्म', 'यो वेद निहितं गुहायां परमे व्योमन्', 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चितेति' इति श्रूयते । 'ब्रह्मविदि'ति तु ब्राह्मणं वाक्यम् । तत्रोक्तं - ब्रह्म तद्वेदनं प्राप्तिः प्राप्यं चोत्तरमन्त्रवाक्येन विव्रियते । उत्तरवाक्यं चैतद्विवरणार्थमेव प्रयुक्तमि'त्येतत् 'तदेवाभ्युक्ता' इत्यनेन स्पष्टम् । एषा = ऋक्, तदेव = ब्राह्मणमेव, अभ्युक्ता = अभिमुखीकृत्याध्येतृ-भिरुक्तेत्यर्थः । ततश्चोक्तमन्त्राणां ब्राह्मणवाक्यविवरणरूपत्वान्नित्यनिर्दुष्टत्वाविशेषादापाततोऽपि विरोधस्याप्रतीतत्वाच्च नोपक्रमाद्यधिकरणन्यायेन मन्त्राणां दौर्बल्याशङ्कासम्भवः । 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति वाक्यं विभिन्नं चेत्, तदा प्रथमा-न्तत्वान्न विद्यते अन्तः यस्य तदिति विग्रहः । 'गुहायां निहितं', 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति विना वाक्यभङ्गमन्वयस्वीकारे न बहुव्रीहिः ब्रह्मण्यनन्तपदस्य क्लीबस्य रूढत्वात् । एवं सति न देवतान्तरादिशङ्कापि । तत्र 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्येनेनं ब्रह्मशब्दः विवृत्तः । 'यो वेद निहितं गुहायां' इति विच्छब्दः विवृतः । **गुहायां** = हृदयगुहायां । 'परमेव्योमन् सोऽश्नुते' इति प्राप्तिश्च विवृता । 'सर्वान्कामान्सह ब्रह्मणा विपश्चिता' इति प्राप्यं विवृत्तम् । **परस्ये**ति भाषणं 'आप्नोति परमि'ति परशब्दार्थविवरणार्थमेव प्रवृत्तमिति सूचनाय **विपश्चित्त्वश्च विविधं पश्यश्चित्त्वम् । पृष्टोदरादित्वात्पश्यच्छब्दा-वयवस्य यच्छब्दस्य लोप** इत्युत्तरत्र भाषिष्यते । उक्तमन्त्रवाक्यस्यान्वयमाह - **विपश्चितेति** ।

नन्वत्र गुणवाचिपदमेव न श्रूयते, येन ब्रह्मणस्सविशेषत्वं स्थापयितुं युक्तमित्यत्राह - **काम्यन्त** इति । एवं कामपदव्युत्पादनेन 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिता' इति त्याज्यत्वेनोक्तकामव्यावृत्तिः फलिता । 'सर्वान्

**कल्याणगुणाः ; ब्रह्मणा सह तद्गुणान्सर्वानश्नुत इत्यर्थः । दहरविद्यायाम्,** (छा.८.१.१.) **'तस्मिन् यदन्तस्तदन्वेष्टव्यम्' इतिवद्गुणप्राधान्यं वक्तुं सहशब्दः । फलोपासनयोः प्रकारैक्यम्,** (छा.३.१४.१.) **'यथाक्रतुरस्मिन् लोके पुरुषो भवति, तथेतः प्रेत्य भवति' इति श्रुत्यैव सिद्धम् ।**

**'यस्यामतं तस्य मतम्...अविज्ञातं विजानताम्' इति ब्रह्मणो ज्ञानाविषयत्वमुक्तं चेत् -** (तै.आनं.१.) **'ब्रह्मविदाप्नोति परम्',** (मुण्ड.३.२.९.) **'ब्रह्म वेद ब्रह्मैव भवति' इति ज्ञानान्मोक्षोपदेशो न स्यात् ।** (तै. आनं.६.) **'असन्नेव स भवति असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः' इति, ब्रह्मविषयज्ञानासद्भावसद्भावाभ्यामात्मनाशमात्मसत्ताश्च वदति ।**

---

कामानि'ति निर्देशनं ब्रह्मणः गुणानन्त्यव्यक्त्यै । काम्यत्वस्य ब्रह्मस्वरूपे सम्भवेऽपि 'ब्रह्मणा सह कामानि'ति व्यतिरेकनिर्देशः, नात्र कामशब्दो ब्रह्मवाचीति व्युत्पत्त्यै । 'मनसैतान्कामान्पश्यन्रमते । य इहात्मानमनुविद्य व्रजन्त्येताश्च सत्यान् कामान्' इति कामशब्दस्य गुणपरत्वं सिद्धम् । अतस्त्याज्यकामानामिवाभोग्यत्वशङ्काव्युदस्त्यै **कल्याणगुणा** इति भाषितम् । एवमर्थमुक्त्वा वाक्यार्थमाह - **ब्रह्मणेति** । **अश्नुते** = व्याप्नोति । व्याप्तिश्चानुभवरूपा । अनुभवतीति यावत् । 'ब्रह्मणा सह तद्गुणानि'ति निर्देशेनात्रत्यसहशब्दः 'क्षीरेण सहोदनं भुङ्क्ते' इत्यादाविव भोग्यसाहित्यपर इति सूचितः । अन्यथा 'पुत्रेण सहोदनं भुङ्क्त' इत्यादाविव भोक्तृसाहित्यपरत्वे जीवापेक्षया ब्रह्मण अप्राधान्यं प्रसजेत् । 'सहयुक्तेऽप्रधाने' इत्यनुशासनात् । भोग्यसाहित्यपक्षे गुणापेक्षयाऽप्रधान्यन्तु नापकर्षावहम् । 'स्वया दीप्त्या रत्नं भवदपि महार्घं न विगुणं न कुण्ठस्वातन्त्र्यम्' इति नयेनापकर्षावहत्वाभावात् । प्रत्युत गुणिषु गुणानामुत्कृष्टत्वापदकत्वाच्च । 'गुणाः सत्यज्ञानप्रभृतय उत त्वद्गततया शुभीभूयं याता' इति तु 'सर्वभूषणभूषार्हाः किमर्थं नैव भूषिता' इतिवन्नेयम् ।

गुणप्राधान्यमन्यत्राप्युक्तमित्याह - **दहरेति** । तत्रोपासने गुणप्राधान्यमुक्तम् । तद्वदत्रापि 'यो वेदे'ति विहितोपासने गुणप्राधान्यसूचनार्थं प्राप्यदशायां सहशब्दोक्तिरिति भावः । यद्यपि 'तदन्वेष्टव्यमि'त्यत्र तच्छब्दो गुणब्रह्मोभयपर इत्युभयोः प्राधान्यम्, अथापि गुणप्राधान्यन्न तत्रत्यक्तमित्याशयः । गुणप्राधान्यस्य क्वचिद्दर्शनात्तत्स्वीकारे नानुपपन्नः । भोक्तृसाहित्यपक्षे तु जीवप्राधान्यमेव स्यादिति महान्दोषः । वस्तुतोऽत्र 'सर्वान्कामान्सह ब्रह्मणे'ति भोग्यवाचिपदसमभिव्याहृतिबलात् प्राप्यवाचिपदशब्दार्थविवरणरूपत्वाच्च भोग्यसाहित्यमेव विवक्षणीयम् । नन्वत्र सर्वकामानां ब्रह्मगतत्वं कथं प्रतीयते । मैवम् । ब्रह्मणः सन्निहितत्वेन तस्यैव तदाश्रयत्वौचित्यात् । तथा च सर्वकल्याणगुणविशिष्टं ब्रह्मानुभवतीति पर्यवसितोऽर्थः । ननु 'यो वेदे'ति विहितोपासने कथं गुणप्राधान्यसिद्धिः । 'सोऽश्नुते सर्वान् कामानि'ति फलदशायामेव गुणप्राधान्यकथनादित्यत्राह - **फलेति** । **यथाक्रतुः** - यत्प्रकारकोपासन विशिष्टः । इह यथोपास्ते तथा फलमनुभवतीत्यर्थः ।

एवं 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति सविशेषपरत्वं स्थापितम् । तत एव 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनमि'ति वाक्यस्यापि सामानाधिकरण्येन निष्कलत्वाद्यनेकगुणविशिष्टब्रह्मबोधकत्वमेव । निर्गुणवाक्यस्य हेयगुणनिषेधपरत्वेन व्याख्यानसमये निष्कलादिशब्दानामपि व्याख्यातत्वम् । अनन्तरोदाहृतस्य 'यस्यामतं' इत्यादेरर्थविवरणार्थं तद्वाक्यमुपादत्ते - **यस्येति** । **ज्ञानविषयत्वमिति** । पूर्वपक्षिणोऽयमाशयः - सगुणानामेव ज्ञेयत्वदर्शनाद्ब्रह्मणश्चानयाश्रुत्या ज्ञेयत्वनिषेधान्निर्गुणत्वं फलिष्यतीति । तदेतद्दूषयति - **ब्रह्मविदिति** । ब्रह्मणः ज्ञानाविषयत्वाङ्गीकारे ब्रह्मज्ञानस्य मोक्षोपायत्वश्रुतिः दत्तजलाञ्जलिस्स्यात् । ब्रह्मणो ज्ञानाविषयत्वं वदन्ती श्रुतिरेव तद्विषयकज्ञानस्य मोक्षोपायत्वं ब्रुवन्ती कथमिव प्रमाणं भवितुमर्हतीति भावः । एवं सादरं ब्रह्मणो ज्ञानविषयत्वं दर्शयति श्रुत्यन्तरमित्याह - **असन्नेवेति** । 'यस्य ब्रह्म वेदे'ति यत् (ब्रह्मवेदनमिति यत्) तदसच्चेत् - तदवर्तमानं चेत्, स असन्नेव भवति - आत्मनाशं प्राप्नोतीत्यर्थः । यस्य ब्रह्म वेदेति यत्तदस्ति चेत्, तत एनं पुरुषं सन्तं विदुः । आत्मसत्तां लभत इति यावदित्यर्थः । **ब्रह्मविषयज्ञानासद्भावसद्भावेत्यादि**

**अतो ब्रह्मविषयवेदनमेवापवर्गोपायं सर्वाः श्रुतयो विदधति। ज्ञानञ्चोपासनात्मकम्, उपास्यश्च ब्रह्म सगुणमित्युक्तम्।**

(तै.आनं.८.) **'यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह' इति ब्रह्मणोऽनन्तस्यापरिच्छिन्नगुणस्य वाङ्मनसयोरेतावदिति परिच्छेदायोग्यत्वश्रवणेन ब्रह्मैतावदिति ब्रह्मपरिच्छेदज्ञानवतां ब्रह्माविज्ञातममतमित्युक्तम्, अपरिच्छिन्नत्वाद्ब्रह्मणः। अन्यथा 'यस्यामतं तस्य मतम्', 'विज्ञातमविजानताम्' इति मतत्वविज्ञातत्ववचनं तत्रैव विरुध्यते।**

---

भाषणात्। यथाश्रुते ब्रह्मनास्तित्वज्ञानब्रह्मास्तित्वज्ञानाभ्यामात्मनाशात्मसत्ताबोधने केवलब्रह्मास्तित्वज्ञानादेरात्मसत्तारूपमोक्षतदभावहेतुत्वाभावात्। तत्प्रकरणस्य मोक्षप्रकरण प्रगृहोतत्वेन केवलास्तित्वाज्ञानस्य मोक्षाहेतुत्वेऽविप्रतिपत्तेः। शास्त्रेषु चोपासनात्मकज्ञानस्यैव मोक्षहेतुत्वोक्तेश्च। एतदाशयेनाह - **अत** इति। अत्र **ब्रह्मविषयकवेदनमेव...सर्वाश्श्रुतयो विदधती**त्यनेन प्रपञ्चमिथ्यात्वज्ञानमेव मोक्षोपायः, न तु ब्रह्मज्ञानम्। 'विद्ययाऽमृतमश्नुते', 'तदा विद्वान्नामरूपाद्विमुक्तः', 'ततो ज्ञानं प्रवर्तत', 'ज्ञानाग्निस्सर्वकर्माणि' इत्यादिषु ब्रह्मविषयकस्यैव वेदनस्य मोक्षहेतुत्वमिति विषयविशेषस्यानिर्देशात्। तस्य च प्रपञ्चमिथ्यात्वविषयकत्वसाधारण्यात्। अतो ब्रह्मणो ज्ञानाविषयत्वेऽपि न क्षतिरिति पक्षो निरस्तः। 'ब्रह्मविदाप्नोति परं', 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिषु ब्रह्मविषयकवेदनस्यैवापवर्गोपायत्वोक्त्या सर्वशाखाप्रत्ययन्यायेन मोक्षसाधनज्ञानस्य सर्वस्यापि ब्रह्मविषयकत्वस्य सामान्यविशेषन्यायेन वा क्वचिद्विशिष्यब्रह्मज्ञानस्य मोक्षहेतुत्वोक्त्यान्यत्र विषयविशेषानिर्देशेन ज्ञानस्य मोक्षहेतुत्वोक्तावपि मोक्षकारणज्ञानस्य ब्रह्मविषयकत्वस्य सिद्धेरित्याशयः। **सर्वाः श्रुतयः**। निर्दिष्टविषयविशेषाः, अनिर्देशविषयविशेषाश्च श्रुतयः।

ननु 'यस्यामतमि'ति न ज्ञानमात्रविषयत्वमुच्यते। किन्तूपासनात्मकज्ञानविषयत्वमित्याह — **ज्ञानश्चे**ति। अयं भावः - 'तदेव ब्रह्म त्वं विद्धि, नेदं यदिदमुपासत' इति उपासनात्मकज्ञानविषयत्वोक्त्या तद्विरोधः स्यात्। तदेव ब्रह्मेत्यस्यायमर्थः - यदिदं प्रतीकमुपासते तन्न। तदेव परं ब्रह्मैव त्वमुपास्वेति। सगुणोपासनात्मकज्ञानाविषयत्वमित्यर्थवर्णनेऽपि न निस्तार इत्याह - **उपास्यश्चे**ति। सगुणोपासनस्यैव मोक्षोपायत्वश्रुतेः तदविषयत्वकथनमनुपपन्नमिति भावः। तावतापि ज्ञानसामान्याविषयत्वाभावेन न तेन निर्गुणत्वाक्षेपसम्भव इति ध्येयम्। निर्गुणपरत्वेनाभिमतविद्याया अपि सगुणविषयकत्वस्योपपादितत्वात्। ततश्च ब्रह्मणो ज्ञेयत्वान्न निर्गुणत्वाक्षेपसम्भवः। 'यस्यामतमि'त्यादेः स्वयमविरोधेनार्थमाह - **यत** इति। **अनन्तस्य** = 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्युक्तापरिच्छिन्नस्य, 'इदञ्चापरिच्छिन्नत्वं स्वरूपम परिच्छिन्नगुणस्ये'त्यत्र गुणेऽपरिच्छिन्नत्वविशेषणाद्गुणानामानन्त्यमुक्तम्। यद्यप्यत्र 'ब्रह्मणोऽपरिच्छिन्नस्यानन्तगुणस्ये'ति भणितुं शक्यम्, अथापि स्वरूपेऽपरिच्छिन्नत्वं 'सत्यं ज्ञानमनन्तमि'त्यनेन बोधितमिति तादृशवाक्यस्मरणार्थ**मनन्तस्ये**त्युक्तम्। यद्यपि - 'यतो वाचो निवर्तन्त' इत्यादौ ब्रह्मणो गुणानामेव परिच्छेदायोग्यत्वमुक्तम्। न तु ब्रह्मणः, अथापि तदपरिच्छेद्यत्वकथनं गुणविशिष्टब्रह्मण्येव पर्यवस्यतीत्याशयः। स्वरूपेऽनन्तत्वं परिच्छेदत्रयरहितत्वम्। गुणेऽपरिच्छिन्नत्वमसङ्ख्यातत्वम्। तदुक्तं - 'यथा रत्नानि जलधरे सङ्ख्येयानि पुत्रक। तथा गुणा ह्यनन्तस्यासङ्ख्येया महात्मनः। इषुक्षयान्निवर्तन्ते नान्तरिक्षक्षितिक्षयात्। मतिक्षयान्निवर्तन्ते न गोविन्दगुणक्षयादि'त्यादि। **एतावत्** = एतत्संख्याकगुणकम्। अस्त्वनवधिकगुणस्य ब्रह्मणः वाङ्मनसागोचरत्वम्। प्रकृते ततः किमित्यत्राह - **ब्रह्मैतावदि**ति। परिच्छेदज्ञाने ब्रह्मणोऽज्ञातत्वं कथमित्यत्राह - **अपरिच्छिन्नत्वादि**ति। स्वरूपतो गुणतो वाऽपरिच्छिन्नत्वादिति भावः। एवं श्रुत्यन्तरोपजीवनेन 'अमतमविज्ञातमि'त्यनयोः ज्ञेयत्वनिषेधार्थकत्वं व्युदस्तम्। अथ ताभ्यां ज्ञेयत्वनिषेधे तत्रोक्तमतत्वविज्ञातत्ववचनं विरुद्धं स्यादिति तच्छ्रुति विरोधं दर्शयति - **अन्यथे**ति। **तत्रैव** = तद्वाक्य एव।

**यत्तु 'न दृष्टेर्द्रष्टारं...न मतेर्मन्तारम्' इति श्रुतिर्दृष्टेर्मतेर्व्यतिरिक्तं द्रष्टारं मन्तारञ्च प्रतिषेधतीति - तदागन्तुकचैतन्यगुणयोगितया ज्ञातुरज्ञानस्वरूपतां कुतर्कसिद्धां मत्वा, 'न तथाऽऽत्मानं पश्येः, न मन्वीथाः ; अपि तु द्रष्टारं मन्तारमप्यात्मानं दृष्टिमतिरूपमेव पश्येः' इत्यभिदधातीति परिहृतम्। अथवा दृष्टेर्द्रष्टारं मतेर्मन्तारं जीवात्मानं प्रतिषिध्य सर्वभूतान्तरात्मानं परमात्मानमेवोपास्स्वेति वाक्यार्थः। अन्यथा** (बृ.४.४.१४.) **'विज्ञातारमरे केन विजानीयात्' इत्यादिज्ञातृत्वश्रुतिविरोधश्च।**

**'आनन्दो ब्रह्म' इत्यानन्दमात्रमेव ब्रह्मस्वरूपं प्रतीयत इति यदुक्तम्; तत् - ज्ञानाश्रयस्य ब्रह्मणो**

---

एवं ब्रह्मणो ज्ञेयत्वस्थापनेन निर्गुणत्वासिद्धिर्दर्शिता। अथानन्तरोदाहृतश्रुते र्ज्ञातृत्वनिषेधपरत्वं निषेधति - **यत्त्विति**। **आगन्तुकचैतन्यगुणयोगितयेति**। **आगन्तुकगुण**शब्दौ भावप्रधानौ। ततश्च 'ज्ञानं न नित्यभूतात्मस्वरूपम-नित्यत्वात्, गुणत्वाच्चे'ति प्रयोगेणऽऽत्मनो ज्ञानस्वरूपत्वं नास्तीति कुतर्कवादिनोऽभ्युपयन्ति। तन्निरासार्था 'न दृष्टेरि'ति श्रुतिरिति भावः। आत्मा ज्ञातृमात्रमेव, न तु ज्ञानरूपमपि इति न मन्तव्यम्। अपि तु ज्ञाता, ज्ञानरूपश्चेति। ततश्च 'द्रष्टारं आत्मनं दृष्ट्यतिरिक्तं न पश्येः' इति वाक्यार्थः पर्यवसितः। परोक्तानुमानद्वयं त्वयुक्तम्। ज्ञानस्य गुणत्वाभावात्। 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति श्रुत्याऽऽगन्तुकत्वनिषेधाच्च। अथ पञ्चमी विभक्त्याश्रयणे व्यतिरिक्तपदाध्याहारः। अतः षष्ठीपक्षमवलम्ब्य श्रुत्यर्थमुपवर्णयति — **अथवेति**। अयं भावः - 'यत्साक्षादपरोक्षात् ब्रह्म', 'यः आत्मा सर्वान्तरः तन्मे व्याचक्ष्वे'ति उषस्तेन पृष्टः। 'यः प्राणेन प्राणिति , योऽपानेनापानिति, एष तु आत्मा सर्वान्तर' इति सर्वान्तरात्मभूतं साक्षाद्ब्रह्म प्रतिपादयामास। प्राणयितृत्वादिधर्माणां जीवगतत्वं मन्यमानेनातुष्टेन पुनः पृष्टः, 'न दृष्टेः दृष्टारं पश्येः, न श्रुतेः श्रोतारं श्रुणुयाः, न मतेर्मन्तारं मन्वीथाः, न विज्ञातेः विज्ञातरं विजानीयाः। एष त आत्मा सर्वान्तरोऽतोन्यदार्त्तं' इति प्राणयितृत्वेनोक्तो न जीवः, तस्य निरुपाधिकप्राणयितृत्वाभावात्। अतो 'यः प्राणेन प्राणिति' इत्युक्तं निरुपाधिक-प्राणयितृत्वाश्रयः ब्रह्मैवेति नेन्द्रियाधीनदर्शनाश्रयो जीवः प्राणयितृत्वेन मन्तव्य इत्युवाच। तस्मात् 'सर्वान्तरत्वेन पृष्टः परमात्मैव मयोक्तः तमेवोपास्वे'ति पर्यवसितमिति। अन्यथा 'न दृष्टे'रित्यनेन ज्ञातृत्वं निषिध्य ज्ञानरूपत्वोक्तौ तद्वदेव, न श्रुतेरित्यादिबलाच्छ्रोतृत्वनिषेधेन ब्रह्मणश्श्रवणरूपत्वमपि प्रसज्येत। 'न श्रुतेरि'त्यस्यान्यथाऽर्थवर्णनेन स्वारस्यभङ्गः। अस्माकन्तु प्रथमपक्षावलम्बने श्रोतृत्ववत् श्रावणरूपत्वापादनसम्भवेऽपि मुख्ये द्वितीयपक्षे तादृशदोषापादनन्न सम्भवति। अत्र 'पाकं पचती'तिवत् 'न दृष्टेः द्रष्टारं' इत्यादिनिर्देशः। अत्र श्रुत्यन्तरवशात् आत्मनो ज्ञानत्वाङ्गीकारेऽपि तद्विशेषश्रुतिमतिध्यानरूपत्वं नाशङ्कनीयम्। भवतामपि तदाशङ्कावारणासम्भवात्। अतः स्वप्रकाशत्वरूपं ज्ञानत्वमात्र-मङ्गीकर्तव्यम्। **वाक्यार्थ इति इत्यभिदधातीति परिहृतमि**त्यस्यात्राप्यनुषङ्गः। अन्यथा प्रतिषेधक्रियाकर्तुः उपासन-क्रियाकर्तृश्च भिन्नत्वेन प्रतिषिध्येति ल्यबन्तानुपपत्तेः। यद्वा - **प्रतिषिध्येत्ये**तत् परित्यज्येत्यर्थकमिति नानुषङ्गापेक्षापि। आत्मनो ज्ञातृत्वानभ्युपगमे दूषणान्तरमाह - **अन्यथेति**। 'विज्ञातारमि'ति ज्ञातृत्वस्य कण्ठोक्तेरिति भावः।

अथ परोक्तं 'आनन्दो ब्रह्मे'ति ब्रह्मण आनन्दरूपोक्त्याऽऽनन्दित्वनिषेधोऽर्थसिद्ध इति गुणनिषेधो आर्थ इति तद्दूष-णायोपक्षिपति - **आनन्द** इति। पूर्वमेव निर्गुणसगुणवाक्ययोः परस्परविरोधोपशमनेन सगुणत्वं स्थापितमिति निर्गुणत्वा-शङ्कैव न पुनः प्रसरति। अथापि तदुदाहृतश्रुतीनां यथावस्थितमर्थं प्रदर्शयितुं पुनः प्रवृत्तिः। अत एव **परिहृतमिति** भाषितम्। दूषयति - **तदिति**। उदाहृतश्रुतौ ब्रह्मणो ज्ञानत्वं ह्युक्तं, तच्चास्माभिः ज्ञानाश्रयस्य ब्रह्मणः स्वीक्रियत एवेति कथं विरोधः। न हि तत्र गुणनिषेधो आर्थः, सूचकाभावात्। न च सर्वं वाक्यं सावधारणमिति न्यायेन ब्रह्मण आनन्दरूपत्व-स्यैव लाभेनानन्दाश्रयत्वनिषेधसम्भव इति वक्तुं शक्यम्। प्रमाणविरोधेनावधारणासम्भवात्। सम्भवेऽपि वाऽयोगव्यव-च्छेदपरमेवावधारणमिति न ज्ञातृत्वनिषेधसम्भव इति। ननूदाहृतश्रुतौ आनन्दपदं हि श्रूयते, तेनानन्दरूपत्वसिद्धावपि

**ज्ञानं स्वरूपमिति वदतीति परिहृतम्। ज्ञानमेव ह्यनुकूलमानन्द इत्युच्यते।** (बृ.५.९.२.८) **'विज्ञानमानन्दं ब्रह्म' इति, आनन्दरूपमेव ज्ञानं ब्रह्मेत्यर्थः। अत एव भवतामेकरसता। अस्य ज्ञानस्वरूपस्यैव ज्ञातृत्वमपि श्रुतिशतसमधिगतमित्युक्तम्। तद्वदेव,** (तै.आनं.) **'स एको ब्रह्मण आनन्दः', 'आनन्दं ब्रह्मणो विद्वान्' इति व्यतिरेकनिर्देशाच्च नानन्दमात्रं ब्रह्म; अपि त्वानन्दि; ज्ञातृत्वमेव ह्यानन्दित्वम्।**

**यदिदमुक्तम्, 'यत्र हि द्वैतमिव भवति', 'नेह नानाऽस्ति किञ्चन। मृत्योः स मृतयुमाप्नोति य इह नानेव पश्यति', 'यत्र त्वस्य सर्वमात्मैवाभूत्, तत्केन कं पश्येत्' इति भेदनिषेधो बहुधा दृश्यत इति - तत् कृत्स्नस्य जगतो ब्रह्मकार्यतया तदन्तर्यामिकतया च**

---

कथं ज्ञानरूपत्वसिद्धिरित्यत्राह - **ज्ञानमेवेति**। **एवकारः** प्रतिकूलज्ञानस्यानन्दत्वव्यवच्छेदकः। ननु ज्ञानानन्दयोः पर्यायत्वे कथं सहप्रयोग इत्यत्र स्वयम्प्रकाशत्वानुकूलत्वरूपप्रवृत्तिनिमित्तभेदाधीनः स इत्याशयेनाह - **विज्ञानमिति**। **आनन्दरूपमेवेति**। अनेन ब्रह्मणो ज्ञानरूपत्वमिति यत् तदानन्दरूपात्मकज्ञानरूपत्वं, न तु केवलज्ञानरूपत्वं, प्रतिकूलज्ञानरूपत्वं वेति सहप्रयोगप्रयोजनमधिकं दर्शितम्। **आनन्दमिति** क्लीबनिर्देशश्छान्दसः। 'अदितिः पाशान्' इति न्यायाद्विभक्त्यविवक्षा वा। वस्तुत आनन्दोऽस्यास्तीत्यर्शआद्यच्प्रत्ययविवक्षायां ब्रह्मविशेषणत्वेन क्लीबता। आनन्दाश्रय इत्यर्थः। अतः सहप्रयोगानुपपत्तिरपि परिहृता भवति। ज्ञानत्वज्ञानाश्रयत्वोभय बोधनादिति द्रष्टव्यम्। ब्रह्मणो ज्ञानरूपत्वमङ्गीकुर्वद्भिः भवद्भिरपि तथैवाभ्युपगम्यत इत्याह - **अत एवेति**। **एकरसता** = ज्ञानानन्दशब्दयोरेक विषयत्वम्।

ननु ज्ञानरूपस्य कथं ज्ञातृत्वम्? ज्ञानत्वस्य ज्ञानानाश्रयत्वव्याप्यत्वाद्धर्मधर्मिणोरुभयोरपि ज्ञानरूपत्वेन सजातीययो र्नियतधर्मिधर्मभावानुपपत्तेश्चेत्यत्राह - **अस्येति**। **इत्युक्तमिति** दृष्टान्तपुरस्सरमुक्तमिति भावः। एवं ब्रह्मण आनन्दरूपत्वं प्रतिपाद्यानन्दित्वमपि ज्ञातृत्ववच्छ्रुत्यैव कण्ठोक्तमित्याह - **तद्वदेवेति**। **व्यतिरेकनिर्देशादित्यनेन** ब्रह्मण एवानन्दरूपत्वमनया श्रुत्या बोधयितुमशक्यमिति सूचितम्। न चात्र 'राहोश्शिरः' इत्यादिवदुपपत्तिसम्भवः यथाश्रुते बाधकाभावात्। न च ब्रह्मण आनन्दाश्रयत्वाभाव एव बाधक इति वाच्यम्। ज्ञातृत्वस्य प्रमाणसिद्धत्वात्। ननु ज्ञातृत्वं प्रामाणिकमस्तु, तावताऽऽनन्दित्वस्य किमायातमित्यत्र पूर्वोक्तं ज्ञानानन्दयोः पर्यायत्वं स्मारयति - **ज्ञातृत्वमेवेति**। **एवकारो** दत्तोत्तरत्व-व्यञ्जकः। ज्ञानानन्दयोरेकत्वात् ज्ञातृत्वानन्दित्वयोरप्येकरूपत्वमेवेति भावः। 'ब्रह्मण आनन्द' इत्यादिवन्न ज्ञातृत्वश्रुतेर-न्यथासिद्धिसम्भवः। 'विज्ञातारमि'ति श्रवणात्। इदमत्र तात्पर्यं - 'राहोश्शिर' इत्यादिवत् 'ब्रह्मण आनन्द' इत्यस्यौप-चारिकत्वे, 'स एकः प्रजापतेरानन्द' इत्यादीनामप्यौपचारिकत्वं स्यात्। वैरूप्ये तु स्वारस्यहानिरिति।

अथ ब्रह्मणः निर्विशेषत्वस्थापनार्थं भेदनिषेधपरत्वेनोदाहृतानां श्रुतीनामन्यथासिद्धिप्रदर्शनार्थमनुवदति - **यदिदमिति**। 'नेह नानास्ति किञ्चन' इत्यादिवाक्यस्य मध्ये उपादानं 'यत्र हि द्वैतमिव भवती'ति श्रुत्यैकार्थ्यात्। 'बहुधे'ति भेदनिषेधस्य बहुप्रकारत्वसूचनार्थः। 'द्वैतमिवे'त्यादौ इवपदप्रयोगाद्भेदनिषेधस्य फलितत्वं, 'नेहे'त्यादौ तु कण्ठरवेणेति भावः। 'बहुश' इति पाठे त्वनेकस्थलेष्वित्यर्थः। तत्र सामान्यतो न भेदो निषिध्यते बाधितत्वादित्याशयेन दूषयति - **तदिति**। इदञ्च **परिहृतमि**त्युत्तरस्थेन सम्बध्नाति। **जगतः** = स्थूलचेतनाचेतनात्मकजगच्छरीरकब्रह्मणः। **ब्रह्मकार्यतया** = सूक्ष्मचेतनाचेतनशरीरक ब्रह्मकार्यतया। विशिष्टयोरेवोपादानोपदेयभावाभ्युपगमेन यथाश्रुते बाधात्। **कृत्स्नस्येत्यस्य** त्वेकदेशान्वय एव। **तदन्तर्यामिकतयेत्यत्र तच्छब्दः** विशेष्यमात्रपरामर्शी, न तु विशिष्टब्रह्मपरामर्शी। सर्वनाम्नां विवक्षितप्रकृतपरामर्शित्वनियमात्। 'शोभना गौस्तिष्ठति तामानये'त्यादौ तिष्ठन्त्या गोरानयनासम्भवेन गोमात्रपरामर्शित्व-दर्शनात्। स्थितिदशायां सूक्ष्मावस्थानाशेन सूक्ष्मशरीरस्य परमात्मनः अन्तर्यामित्वासम्भवरूपानुपपत्तेस्सत्वात्। एवं

**तदात्मकत्वेनैक्यात्तत्प्रत्यनीकनानात्वं प्रतिषिद्ध्यते; न पुनः 'वहु स्यां प्रजायेय'** (छा.६.) **इति बहुभवनसङ्कल्प-**

'सन्मूला' इत्यत्र सच्छब्दस्य विशिष्टवाचकत्वेऽपि 'सदायतना' इत्यादौ सच्छब्दस्य विशेष्यमात्रपरत्वाङ्गीकारात्।

न च तत्र सच्छब्दभेदेन नानुपपत्तिरिति वाच्यम्। तथापि 'ऐतदात्म्यमि'त्यत्र विशिष्टस्य प्रक्रान्तत्वेऽपि एतच्छब्देन विशेष्यमात्रपरामर्शदर्शनात्। **तत्** = ब्रह्म अन्तर्यामि यस्येति विग्रहः। अत्र विशेष्यभूतब्रह्मान्तर्यामिकत्वन्न जगच्छब्दो-पात्तविशिष्टब्रह्मणः, बाधात्। अपि तु विशेषणांशस्य जगत एवेति विशेषणवाचकं 'जगत' इति पदमध्याहार्यम्। यद्वा - **कृत्स्नस्ये**त्येतन्न **जगत** इत्यत्र सम्बध्यते। **तदन्तर्यामिकतये**त्यत्रैव। ततश्च **जगतः** = विशिष्टब्रह्मणः विशिष्टब्रह्मकार्यतया कृत्स्नस्य तदन्तर्यामिकतयेत्यर्थः पर्यवसितः। अत्र चकारो भिन्नक्रमः। **तदात्मकत्वे तदन्तर्यामिक**त्वं हेतुः। **ब्रह्मकार्यत्वे, तदन्तर्यामिकतया तदात्मकत्व**श्चेत्युभयं जगद्ब्रह्मणोरेक्ये हेतुः। हेतुत्रयशङ्कानिवारणार्थं 'तदात्मकत्वेन चे'त्यनुक्तिः। अयमाशयः - 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्तोपासीत' इत्यादौ जगच्छरीरकब्रह्मणः विशिष्टब्रह्मकार्यत्वाद्विशिष्ट-ब्रह्मलयकत्वाज्जगतो विशेष्यान्तर्यामिकत्वाच्च जगद्ब्रह्मणोरैक्यं स्वीकर्तव्यम्।

ननु तदन्तर्यामिकत्वेन जगद्ब्रह्मणोरैक्यसम्भवेऽपि तज्जत्वतल्लत्वादिकं कथमनयोरैक्यमवगमयेत्? कार्यकारणयो-रैक्यादिति चेत्, विशिष्टं ब्रह्म प्रत्येव विशिष्टब्रह्मणः कारणत्वेन, तयोरैक्येपि विशेष्यस्य ब्रह्मणश्चैक्यासम्भवात्। अन्तर्यामि-कत्वपक्षे तु विशेषणजगत एव तदन्तर्यामिकत्वस्वीकारेणैक्यमुपपन्नमिति चेत्? मैवम्। विशिष्टस्य कार्यकारणभावस्वी-कारेण तदपृथक्सिद्धिकत्वेन ब्रह्मजगतोरैक्यसम्भवात्। ततश्च ब्रह्मान्तर्यामिकत्वं तदपृथक्सिद्धिकत्वं च जगद्ब्रह्मणोरेक्ये हेतुरिति, **तज्जत्वतल्लत्वोभयविवक्षयैव ब्रह्मकार्यतये**ति भाषितम्। वस्तुतो 'जगत' इति न विशिष्टपरं, किन्तु चेतनाचेतन-प्रपञ्चपरमेव। ब्रह्मपदमपि विशेष्यमात्रपरम्, तथा च कृत्स्नस्य जगतः ब्रह्मकार्यत्वात् तदन्तर्यामिकत्वाच्च तदात्मकत्वमिति तदात्मकत्वे उभयं हेतुः जगद्ब्रह्मणोरैक्ये च तदात्मकत्वम्। अत्र तु पक्षे नाध्याहारादिप्रसङ्गः। अत्रोक्तं जगतस्तदात्मकत्वं तत्प्रकारतैकस्वभावत्वेन पृथगवस्थानाभाव एव। तेनैव रूपेणैक्यमपि। विशिष्टस्य कारणत्वे विशेषणांशं प्रति विशेष्यांश-स्यापि हेतुत्वस्यावर्जनीयत्वात्, विशेषणांशं प्रत्यहेतुत्वे ब्रह्मणः सर्वकारणत्वविरोधापत्तेश्च। अतो जगतो ब्रह्मकार्यतयेति निर्देशो नानुपपन्नः।

नन्वस्तूक्तयुक्त्या जगद्ब्रह्मणोरैक्यं, ततः किमित्यत्राह - **तत्प्रत्यनीके**ति। **तच्छब्दः** विहितैक्यपरः। नानात्वं भेदः। तथा च कुतर्कबलेन कार्यकारणयोर्भ्रान्तिविषयीकृतो भेदः लौकिकप्रतिबलेन स्वनिष्टभेदश्च भ्रान्तिविषयीकृत इति तयोर्भेदयोः भ्रान्तिमूलक श्रुतिसिद्धैक्यप्रत्यनीकत्वाविशेषात्तादृशमुभयविधमपि भेदं नानाशब्देन परामृश्य स नेति निषिध्यत इति भावः। 'नेह नानास्ती'ति प्रकरणे 'एकधैवानुद्रष्टव्यमि'ति ऐक्यविधिश्च दृश्यते। अतो 'नेह नानास्ती'ति भेदनिषेधो ऐक्यविधिशेषभूतः। तत्र यादृशमैक्यमुक्तं तद्विरोधिभेदनिषेधपरत्वमेव निषेधस्याभ्युपगन्तव्यं, तथा सति उक्तार्थस्थिरीकरणं स्यात्। अन्यथा विहितनिषेधेन सर्वस्याप्यप्रामाण्यं प्रसज्येत। **एकधा** सर्वस्यापि परमात्मा-पृथक्सिद्धत्वादेकप्रकारेण। एवमन्यत्र। 'न चास्य कश्चिज्जनिता न चाधिपः', 'न तत्समश्चाभ्यधिकश्च दृश्यते' इत्यादिभिः स्वतन्त्रवस्तुरूपविशेष-निषेधात्। 'नेह नाने'ति भेदसामान्यनिषेधः विशेष एव पर्यवस्यति। अन्यथा सामान्यतो भेद-निषेधे भेदसद्भावबोधकानां प्रमाणनामप्रामाण्यमेव स्यात्।

वस्तुतः सगुणनिर्गुवाक्ययोरिव विरोधाधिकरणनयोपक्रमाधिकरणनययोः प्रवृत्त्या 'नेह नानास्ती'त्यादीनां सामान्यतो निषेधकानां बाध्यत्वं प्रसज्यत इति कथं भेदसामान्यनिषेधसम्भवः। तस्मात्सामान्यविशेषोत्सर्गापवाद-न्यायाभ्यां भेदनिषेधस्य स्वतन्त्रभेदादिविषयत्वमेवाभ्युपगन्तव्यमिति। एवमभिप्रेत्य न श्रुतिसिद्धभेदस्य निषेध्यत्वसम्भव इत्याह - **न पुनरि**ति। 'बहुस्यामि'त्यनेन कार्यनानात्वं दर्शितम्। इदश्च 'अनेन जीवेनात्मनानुप्रविश्य', 'तदनुप्रविश्य सच्च

**पूर्वकं ब्रह्मणो नानात्वं श्रुतिसिद्धं प्रतिषिध्यत इति परिहृतम्। नानात्वनिषेधादियमपरमार्थविषयेति चेन्न। प्रत्यक्षादिसकलप्रमाणानवगतं नानात्वं दुरारोहं ब्रह्मणः प्रतिपाद्य तदेव बाध्यत इत्युपहास्यमिदम्।**

**'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति' इति ब्रह्मणि नानात्वं पश्यतो भयप्राप्तिरिति यदुक्तम् - तदसत्।** (छा.३.१४.) **'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इति तन्नानात्वानुसन्धानस्य शान्तिहेतुत्वोपदेशात्। तथा हि - सर्वस्य जगतस्तदुत्पत्तिस्थितिलयकर्मतया तदात्मकत्वानुसन्धानेनात्र शान्तिर्विधीयते। अतो यथावस्थितदेवतिर्यङ्मनुष्यस्थावरादिभेदभिन्नं जगद्ब्रह्मात्मकमित्यनुसन्धानस्य शान्तिहेतुतयाऽभयप्राप्तिहेतुत्वेन न भयहेतुत्वप्रसङ्गः। एवं तर्हि, 'अथ तस्य भयं भवति' इति किमुच्यते। इदमुच्यते, 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते, अथ**

---

त्यच्चाभवदि'त्याद्युक्तान्तर्यामिकत्वप्रयुक्तप्रकारनानात्वस्याप्युपलक्षणम्।

ननु नानात्वनिषेधबलादेवोक्तश्रुतीनामपरमार्थविषयकत्वं कुतो न स्वीक्रियत इति शङ्कते - **नानात्वेति**। निषेधो हि अनुवादपुरस्सरः। निषिध्यमानस्य च भेदस्य कथमनुवादसम्भवः। प्रमाणान्तराप्राप्तत्वात्। अतः श्रुत्यैव भेदं प्रथमं विधाय तदेव निषेध्यमिति न शोभनमेतदित्याशयेन समाधत्ते - **नेति**। एवमसकृत् श्रुतिशतैर्भेदस्य प्रतिपादनेऽपि भवद्भिरनभ्युपगमात्। ननु कथमस्य प्रत्यक्षादिप्रमाणेन प्राप्तिसम्भव इत्युपालम्भाय **दुरारोहमि**त्युक्तम्। स्वतन्त्रभेदस्य च वा कथं निषेध्यत्वम्। अप्रसक्तत्वादिति चेन्मैवम्। प्रसक्तेः पूर्वमुपपादितत्वात्। तथा च 'नेहे'त्यादिश्रुतेरयमर्थः। इह = प्रपञ्चे। नाना = अब्रह्मात्मकं वस्तु नास्ति। अतो न तथा द्रष्टव्यम्। अन्यथा प्रत्यवायस्स्यादित्याह - **मृत्योरिति**। 'तमसो वा एषः तमः प्रविशती'तिवदयं निर्देशः। अब्रह्मात्मकस्वतन्त्रदर्शने उपर्युपर्यज्ञानमेव लभते। स्वनिष्ठतया दर्शनं सर्वाज्ञानापेक्षयातिशयितमज्ञानमित्यर्थ इति॥

एवं 'नेह नानास्ती'त्यादिना न भेदनिषेधः प्रतिपाद्यते इत्युक्तम्। अथ 'यदा ह्येवैष' इति श्रुत्यापि न नानात्वनिषेधस्य भयप्राप्तिहेतुत्वमुच्यते इति प्रदर्शनार्थं तन्मतमनूद्य निरस्यति - **यदेत्यादिना**। **सर्वमिति**। जायत इति जं, लीयत इति लं, अन्यत इत्यन्। जं च लं च अन् च तज्जलान्। हेतुवाचक इतिशब्दः। तस्य जलान् इति सम्बन्धसामान्ये षष्ठीतत्पुरुषः। तथा च 'तस्माज्जायते, तस्मिन् लीयते, तेनान्यते' इत्यर्थः। तज्जत्वात्तल्लत्वात्तदनत्वाच्च परिदृश्यमानं जगत्सर्वं ब्रह्मात्मकमित्यर्थः। ततश्च विविधभेदप्रपञ्चरूपजगतः ब्रह्मात्मकत्वानुसन्धानं हि नानात्वविशिष्टब्रह्मानुसन्धानमेव। तादृशानुसन्धानस्य शान्तिहेतुत्वद्वारा तदद्वारकं वा भयप्राप्तिहेतुत्वमनया श्रुत्या न बोधयितुं शक्यमिति भावः। **तन्नानात्वानुसन्धानस्य शान्तिहेतुत्वोपदेशादि**ति परमतानुसारेण। स्वमते हि शान्त इति पदस्वारस्येण 'शान्तस्सन्नुपासीत' इत्यर्थलाभात्। एवमुपासनस्य शान्तिपूर्वकत्वमेवलभ्यते इति नास्य शान्तिद्वारकमभयप्राप्तिहेतुत्वम्। व्यक्तीभविष्यति चेदनुपरिष्टात्। नानात्वानुसन्धानस्य शान्तिहेतुत्वमेवोपपादयति - **तथा हीति**। अत्र 'सर्वं खल्विदं ब्रह्मे'त्यनेन ब्रह्मैकत्वविज्ञानमेव हि प्रतीयते। अतस्तत्र कथं नानात्वानुसन्धानमित्याशङ्कापरिहाराय - **तदुत्पत्तिस्थितिलयकर्मतये**त्युक्तिः। सर्वस्यापि जगतः ब्रह्माभिन्नत्वं तज्जलानितीति हेतुनिर्देशात्। अत्र नानात्वविशिष्टस्यैव जगतस्तज्जत्व-तल्लत्व-तदनत्वैर्ब्रह्मात्मकत्वानुसन्धानं विहितमित्यास्थेयम्। अतो न स्वरूपतः ब्रह्मैकत्वोपासनं विहितमिति भावः। अत्र नानात्वानुसन्धानं स्वयमेव स्फुटयति - **अत इति**।

ननूक्तरीत्या नानात्वानुसन्धानस्याभयप्राप्तिहेतुत्वे 'यदा ह्येवे'त्यादिभेदबुद्धेः भयप्राप्तिहेतुत्ववादिन्याः का गति अस्याः अन्यार्थस्याप्यसम्भवादित्याशयेन शङ्कते - **एवं तर्हीति**। समाधत्ते - **इदमुच्यत इति**। 'अदृश्ये' इत्यनेनाचितो व्यावृत्तिः। **अनात्म्यं** = आत्मना व्याप्यमात्म्यम्। बद्ध इत्यर्थः। तस्य परमात्मना व्याप्यत्वात्। तद्भिन्न इत्यर्थः। यद्वा -

**सोऽभयं गतो भवति' इत्यभयप्राप्तिहेतुत्वेन ब्रह्मणि या प्रतिष्ठाऽभिहिता, तस्या विच्छेदे भयं भवतीति । यथोक्तं महर्षिभिः - 'यन्मुहूर्तं क्षणं वाऽपि वासुदेवो न चिन्त्यते । सा हानिस्तन्महच्छिद्रं सा भ्रान्तिः सा च विक्रिया ॥'** (गा.पु.२.२२.२२.) **इत्यादि । ब्रह्मणि प्रतिष्ठाया अन्तरम् = अवकाशो विच्छेद एव ।**

---

आप्यत इत्यात म्यं, शरीरमित्यर्थः । **अनात्म्यं** = शरीररहितम् । **अनिरुक्तं** = देवादिशब्दैरनिरुक्तम् । **अनिलयं** = अनन्याधारम् । तादृशे ब्रह्मणि । **अभयं** = अभयार्थं, **प्रतिष्ठां** = दृढसम्बन्धम् । अयं भावः - 'यदा ह्येवैष एतस्मिन् ... गतो भवति' इति वाक्यानन्तरं, 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं' इति वाक्यं श्रूयते । तत्र पूर्वमभयप्राप्तिहेतुत्वेन प्रतिष्ठाऽभिहिता, तस्या विच्छेदः **भयं भवतीत्यनेन** वाक्येनोच्यते । तस्याः पूर्वप्रकृतत्वादिति भावः । उक्तार्थे उपबृंहणं प्रमाणयति - **यथोक्तमिति** । **मुहूर्तमित्यादि** अत्यन्तसंयोगे द्वितीया । वासुदेवचिन्तनस्य मुहूतादिकालव्यवधानेऽपि अपुरुषार्थत्वम् । अव्यवधानेन क्षणकालमचिन्तनस्याप्यपुरुषार्थहेतुत्वात् क्षणानुधावनम् । **न चिन्त्यत इति यत्सेत्यन्वयः** । **सेति** निर्देशः विधेयप्राधान्यात् । **हानिः** = पुरुषार्थहानिः । **छिद्रं** = अनिष्टप्राप्तिरन्ध्रम् । **भ्रान्तिः** = चित्तविकारः । **विक्रियाः** = देहविकारः । अज्ञानामवशाद-यथायथव्यापार इति यावत् । 'एकस्मिन्नप्यतिक्रान्ते मुहूर्तध्यानवर्जिते । दस्युभिर्मुषितेनैव युक्तमाक्रन्दितुं भृशमि'त्याद्यादि-शब्दग्राह्यम् ।

ननूक्तश्रुतौ प्रतिष्ठाविच्छेदवाचक पदाभावेन कथमयमर्थः प्रतीयत इत्यत्राह - **ब्रह्मणीति** । **ब्रह्मणीति** पदेन **एतस्मिन्नित्यस्यार्थो** वर्णितः । एतेनैतस्मिन्नत्यस्य प्रतिष्ठार्थकत्वे एतस्यामिति स्त्रीलिङ्गनिर्देश आवश्यकः । 'प्रतिष्ठामि'ति पूर्वोक्तस्यैतच्छब्देन परामर्शात् । 'अदितिः पाशान्' इत्यादौ बहुत्वाविवक्षावदत्रापि क्लीबत्वाविवक्षयाऽस्वारस्यं परिहार्यम् । अगतिकस्थल एव तथास्वीकारात् । एतस्या विच्छेद इति षष्ठ्या एव साधुत्वेन सप्तमीनिर्देशश्चानुपपन्नः प्रातिपादिका-स्वारस्यश्च । पूर्वत्र 'एतस्मिन्नि'ति ब्रह्मपरतया प्रयुक्तस्यैवात्रापि तेन परामर्शस्वारस्यात् इति शङ्का च निरस्ता । **ननु** 'एतस्मिन्' इत्यस्य ब्रह्मपरत्वे प्रतिष्ठाया इत्यस्य कथं लाभ इति चेन्न । पूर्वत्र प्रतिष्ठायाः प्रकृतत्वेन तत्सान्निध्यात् । अन्तरशब्दस्य निरन्तरं सान्तरमित्यादौ विच्छेदरूपावकाशपरत्वेन प्रसिद्धेः कस्य विच्छेदः इत्याकाङ्क्षायां - 'प्रकृतप्रतिष्ठाया' इति स्वत एव उक्तार्थलाभसम्भवात् । पक्षान्तराङ्गीकारस्य चातिजघन्यत्वात् । तथा हि - उत्तरत्र भयहेतुत्वोक्त्या तत्पूर्वत्राभयं प्रतिष्ठां विन्दत इत्यनेन प्रतिष्ठाया अभयहेतुत्वमेवोक्तमित्यङ्गीकरणीयम् । तत्रोत्तरत्र नानात्वदर्शनस्य भय-हेतुत्वोक्त्या तत्पूर्वत्राभयहेतुत्वं ऐक्यदर्शनस्येति वक्तव्यम्, तन्नोक्त म् । अपि तु प्रतिष्ठाया एवाभयहेतुत्वमुक्तम् । न चैक्यमेव प्रतिष्ठाशब्दार्थः तस्य तत्रामुख्यत्वात् । 'राज्ये प्रतिष्ठित' इत्यादौ दृढसम्बन्धे प्रतिष्ठाशब्दप्रयोगात् । उत्तरगत-वाक्यानुसारेणोपक्रमवाक्यस्यार्थान्तरत्वकल्पनमप्यनुपपन्नम् । विन्दतिकरोत्योः ज्ञानार्थकत्वकल्पनेनाप्यस्वारस्यम् ।

एवमुभयत्र सप्तमीप्रयोगोऽप्यनुपपन्नः । तेन साकमस्य भेदोऽभेदो वा । तस्मादस्य भेदोऽभेदो वा इति हि प्रयोगः न तस्मिन्निति । अतः तृतीया पञ्चमी वा युक्ता । सम्बन्धसामान्यविवक्षया षष्ठी वा युक्ता । न कथञ्चिदपि सप्तमी । तस्मान्नात्र भेदाभेददर्शनस्य भेदाभेदहेतुत्वमुच्यते । किन्तु भगवत्प्रतिष्ठाया अभयहेतुत्वं तद्विच्छेदस्य भयहेतुत्वञ्च । अन्यथा 'एष ह्येवानन्दयाति' इति पूर्वत्र, 'भीषाऽस्मादि'त्युत्तरत्र च भेदस्योक्त्या मध्ये तन्निषेधोऽत्यन्तमसङ्गतस्स्यात् । तस्मात्पूर्वोत्तरश्रुतिवाक्यानुसारेणोक्तार्थपरत्वमेव युक्तम् । अत एव हि 'आनन्दं ब्रह्मणो विद्वान् । न बिभेति कुतश्चन' इति आनन्दादिगुणविशिष्टब्रह्मवेदनस्याभयहेतुत्वोक्तिस्सङ्गच्छते । अन्यथा ब्रह्मणि भेदनिषेधस्याभयहेतुत्वकथनं भेददर्शनस्य भयहेतुत्वकथनञ्च पूर्वोत्तरश्रुतिविरुद्धमिति सर्वस्या अपि श्रुतेरुन्मत्तप्रलपतितत्वापत्तेः । तस्मात् 'ब्रह्मविदा-प्नोति परम्' इति वेदनस्योपक्रान्तेः, 'आनन्दं ब्रह्मणो विद्वान्, न बिभेति कुतश्चने'त्युक्तेश्चात्र ब्रह्मणि प्रतिष्ठावेदनस्यैव, तस्याश्च निरन्तरस्मृतिसन्ततिरूपत्वाद्दृढसम्बन्धवाचकप्रतिष्ठाशब्दवाच्यत्वं योयुज्यते । उक्तार्थपरैवेयं श्रुतिरिति । अतः

**यदुक्तम् 'न स्थानतोऽपि' इति सर्वविशेषरहितं ब्रह्मेति च वक्ष्यतीति - तन्न। सविशेषं ब्रह्मेत्येव हि तत्र वक्ष्यति। 'मायामात्रं तु' इति च स्वाप्नानामप्यर्थानां जागरितावस्थानुभूतपदार्थवैधर्म्येण मायामात्रत्वमुच्यत इति जागरितावस्थानुभूतानामिव पारमार्थिकत्वमेव वक्ष्यति।**

---

'सर्वं खल्वि'त्यादिना नानात्वानुसन्धानस्य शान्तिहेतुत्वद्वाराऽभयहेतुत्वोक्तेः तद्विरुद्धार्थबोधनासम्भवात् पूर्वापरश्रुतिवाक्यपर्यालोचनया च नात्र भेददर्शनस्य भयप्राप्तिहेतुत्वमुच्यत इत्याशयः ॥

एवं परोदाहृतश्रुतीनां पराभिमतार्थे तात्पर्यं नास्तीति प्रदर्श्य तदुदाहृतसूत्रद्वयस्यापि न निर्विशेषब्रह्मबोधने तात्पर्यमित्यभिप्रायेण दूषयति - **यदुक्तमित्यादिना। सविशेषं ब्रह्मेत्येव हि तत्र वक्ष्यती**ति। दोषदर्शनेन वैराग्योदयार्थं जीवस्य जाग्रदाद्यावस्थाविशेषनिरूपणेन दुःखवत्वमुपपादितम्। 'परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि' इत्याद्युक्तप्रकारेण परमात्मनः प्राप्यस्य प्राप्तितृष्णाजननाय निर्दोषत्वकल्याणवत्वप्रतिपादनार्थं तदधिकरणस्य प्रवृत्तत्वात्। जीवस्य तत्त्स्थानप्रयुक्तदोषवत् तदन्तर्यामिणः तत्तदवस्थितस्यापि दोषाभावो हि तत्रोच्यते। न तु निर्विशेषत्वम्। अतः पूर्वापरसूत्रपरामर्शेनैव सर्वत्रार्थस्य वर्णनीयत्वात् न कथञ्चिदपि निर्विशेषब्रह्मणस्तत्र प्रतीतिः। 'पूर्वापरापरामृष्टः शब्दोऽन्यां कुरुतेमतिं' इति हि न्यायविदः इत्याशयः। **जागरितावस्थानुभूतपदार्थवैधर्म्येणे**ति। अयं भावः - सन्ध्ये रथादिसृष्टिः जीवस्य उत परमात्मनः इत्याशङ्क्य परमात्मन एव सृष्टिकर्तृत्वं, न तु जीवस्य, सत्यसङ्कल्पत्वादियुक्तत्वेऽपि सम्सारदशायां 'कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादि'ति ह्युच्यते। तत्र मायामात्रं आश्चर्यरूपमित्यर्थः। 'जनकस्य कुले जाता देवमायेव निर्मिता' इत्यादौ मायाशब्दस्याश्चर्यवाचकत्वदर्शनात्। परमपुरुषसृष्टस्याश्चर्यरूपत्वञ्च स्वेतरसकलपुरुषानुभाव्यत्वाभावात्। ततः पुरुषकर्मानुगुण्येन जागरितावस्थायां सृष्टानां पदार्थानां न तत्पुरुषमात्रानुभाव्यत्वनियमः। स्वप्ने तु तत्तत्क्षेत्रज्ञकर्मानुगुणं भगवता परेण ब्रह्मणा तत्तद्भोग्त्वाय सुखदुःखोपेक्षाफलानुभवानुभाव्याः पदार्थाः तत्कालमात्रावसानाः तत्तत्पुरुषमात्रानुभाव्याश्च सृज्यन्ते। अतः एवंविधाश्चर्यरूपा सृष्टिर्भगवत एवेति तत्र प्रतिपाद्यते, इति न निर्विशेषं ब्रह्म तत्र प्रतिपाद्यम्। न च तत्तत्कालमात्रावसानाः तत्तत्पुरुषमात्रानुभाव्याश्च पदार्था न प्रसिद्धा इति वक्तुं शक्यम्। जागरितदशायामेव बुद्बुदादीनां भगवता सृष्टानां पदार्थानां दर्शनात्। एवमेव हि भ्रमविषयाणां पदार्थानां सृष्टिः। उपपादयिष्यते चेदमुपरिष्टात्।

ननु स्वाप्नपदार्थानां कथं तत्पुरुषमात्रानुभाव्यत्वम्। स्वप्नदृष्ट पुरुषैरप्यनुभाव्यत्वात्। कस्यचित्स्वप्ने ह्यनेके पुरुषाः दृश्यन्ते। ते च गजाद्यारोहणादि विविधं कर्म कुर्वन्ति। तेषामपि परमार्थत्वात्स्वप्नदृष्टपदार्थानां स्वप्नदृष्टैस्तैरप्यनुभाव्यत्वस्यावश्यकत्वादिति चेन्न। स्वप्नद्रष्टुः धर्मभूतज्ञानेनैव तेषामपि शरीराणां धार्यत्वेन स्वप्नदृष्टपुरुषाणां ततोऽनन्यत्वात्। कर्मवैचित्र्येणैव तेषामुपपत्तेः। तदुक्तं - 'चित्तोद्यद्धीप्रसृत्येतरतनुभजने सौभरिन्याय सिद्धे' इति। नन्वेवं सति कथं स्वप्नदृष्टानां परस्परं स्वस्स्य वा खड्गाद्यायुधैः प्रहरणादिकर्मोपपद्यते। स्वेनैव स्वप्रहरणानुपपत्ते इति चेन्न ; कर्मवैचित्र्येण तथोपपत्तेः। कथमन्यथा कस्यचित् पुरुषस्य जायमानः स्वेनैव क्रियमाण स्ववधविषयकस्वप्न उपपद्यते। जागरदशायामपि हि रोषवशात्स्वयमेव स्वशिरः हस्ताभ्यां ताडयति, अन्यच्च कुरुते। तत्र सर्वत्र तत्तदनुगुणकर्मैव निदानम्। एवमेवात्रापीति न कश्चिद्विशेषः। एवं स्वप्नदृष्टपुरुषेषु स्वप्नद्रष्टुः कर्मवशात्स्वात्माभिमानाभावेन तथाविधकार्योपपत्तिश्च। अथवा स्वप्नदृष्टपुरुषाणां स्वप्नदृष्टपुरुषाभिन्नत्वं मास्तु। तच्छरीराणां एतद्धार्यत्वं च मास्तु। तावतापि स्वप्नद्रष्टृगतकर्मपरिपाकवत्स्वप्नदृष्टपुरुषकर्मपरिपाकवशात्तदा तदाऽपूर्वतया तत्तत्स्वप्ने सृज्याः सृष्टाश्च यथायथं फलमनुभवन्तीति न कापि क्षतिः। उक्तं तत्पुरुषमात्रानुभाव्यत्वञ्च स्वप्नदृष्टृस्वप्नदृष्टेतरपुरुषास्मदाद्यननुभाव्यत्वमात्रमिति न कश्चिद्विरोधः।

**स्मृतिपुराणयोरपि निर्विशेषज्ञानमात्रमेव परमार्थः, अन्यदपारमार्थिकमिति प्रतीयत इति यदभिहितम् - तदसत् -** (गी.१०.३.) **'यो मामजमनादिञ्च वेत्ति लोकमहेश्वरम् ।',** (गी.९.४-५.) **'मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् । भूतभृन्न च भूतस्थो ममाऽऽत्मा भूतभावनः ॥',** (गी.७.६,७.) **'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ मत्तः परतरं नान्यत् किञ्चिदस्ति**

---

एवं श्रुतिसूत्रयोस्सविशेषवस्तुपरत्वमुपपादितम् । अथ परोदाहृतस्मृतिपुराणवचनयोस्सविशेषपरत्वमुपपादयिष्यन्परोक्तं दूषयितुमनुवदति - **स्मृतीति** । दूषयति - **तदसदिति** । अयमाशयः - सामान्यतः प्रमाणानां प्रमाणान्तररूपशब्दस्य च सविशेषपरत्वं प्रागुपवर्णितम् । शास्त्रस्य प्रत्यक्षविरुद्धार्थप्रतिपादनासामर्थ्योपवर्णनेन विशेषतो वेदान्तवाक्यस्य तथात्वं चोपपादितम् । अतः स्मृतिपुराणयोः श्रुतिप्रतिपन्नार्थोपबृंहणरूपयोः श्रुतिविरुद्धार्थे प्रामाण्यासम्भवेनैव तयोरपि सविशेषपरत्वं सिद्धमेव । अथापि निर्विशेषपरत्वेन तदुपवर्णितवचनानां सविशेषपरत्वोपपादनमात्रमेवावशिष्टम् ।

तत्र तेषां तथात्वोपपादनञ्च पूर्वापरवचनपर्यालोचनयैव । न हि पूर्वापरवचनविरुद्धमर्थं स्मृतिपुराणानि बोधयितुं प्रभवन्ति । 'पूर्वापरापरामृष्टः शब्दोऽन्यां कुरुतेमतिमि'ति नयेन पूर्वापरापरामर्शे अन्यथाप्रतीतेः । अतः पूर्वापरवाक्यपर्यालोचनायां कृतायां सर्वस्यापि सविशेषपरत्वप्रतीतेः न ताभ्यां निर्विशेषवस्तुसिद्धिरिति । अथ तत्पर्यालोचनं दर्शयति - **योमामिति** । यद्यपि परेण पूर्वं पुराणवचनान्युदाहृत्यानन्तरमेव गीतास्मृतिवचनानि प्रदर्शितानि, अथापि परेण सर्वस्याप्याविद्यकत्वाभ्युपगमेन गीतास्मृतेः वक्तृवैलक्षण्यस्याप्यनङ्गीकारात्स्वेष्टं तथोपन्यस्तम् । सिद्धान्ते तु गीतायाः भगवन्मुखारविन्दनिस्सृतत्वेन इतरपुराणापेक्षया वक्तृवैलक्षण्याभ्युपगमात् पूर्वं गीतावचनानि प्रथमं प्रदर्श्यन्ते । ततः पुराणवचनानि । एतदभिप्रायेणैवानुवादावसरेपि **स्मृतिपुराणयो**रिति व्युत्क्रमेण भाषितम् । **अजमि**त्यनेनाचेतनतत्संसृष्टचेतनयोर्व्यावृत्तिः । तयोर्जायमानत्वात् । **अनादि**पदेन मुक्तव्यवच्छेदः । यद्यपि स्वरूपस्यानादिमत्वं मुक्तविषयेऽप्यस्ति, तथाप्यत्र 'अजमनादि'मित्यनेनानादितयाऽजत्वस्य विवक्षणात् तद्व्यवच्छेदो युक्तः । मुक्तगताजत्वस्यादिमत्वात् । **लोक** शब्दः लोक्यत इति व्युत्पत्त्या समस्तचेतनाचेतनवर्गवाचकः । तस्य महेश्वरम् । 'असम्मूढः स मर्त्येषु सर्वपापैः प्रमुच्यत' इत्येतदुत्तरार्धमप्यत्रानुसन्धेयतया विवक्षितम् ।

अयं भावः - चेतनाचेतनवैलक्षण्यमुपपाद्य तथाजानतः असम्मूढत्वसर्वपापविमोक्षकथनमनुपपन्नं स्यात् । न ह्ययथावस्थितज्ञानवतः एवं विधफलस्योपपत्तिः । अतः उक्तं **सर्ववैलक्षण्यं तात्त्विकमेवे**ति सर्वस्य चेतनाचेतनवर्गस्य परमार्थत्वमावश्यकमिति ॥ **मत्स्थानिसर्वभूतानी**ति । सर्वभूतानि मदायत्तस्थितीनि इत्यर्थः । **न चाहं तेष्ववस्थित** इति । नायं तदायत्तस्थितिरित्यर्थः । **न च मत्स्थानि भूतानि** । घटाधारभूतलमिव न लोकदृष्टप्रकारेणाहं सर्वभूताधारभूतः, किन्तु सङ्कल्पमात्रादित्यर्थः । **ऐश्वरंयोगं** = एवं भूतमीश्वरासाधारणं सर्वशक्तियोगम् । **भूतभृत्** इत्यनेन 'मत्स्थानि सर्वभूतानि' इत्येतत् 'न च भूतस्थ' इत्यनेन 'न चाहं तेष्ववस्थित' इत्येतच्च विवृतम् । 'ममात्मा भूतभावनः' इत्येतत् 'न च मत्स्थानि भूतानि' इत्युक्तसिद्धार्थविवरणम् । अत्रात्मशब्दार्थो ज्ञानम् । 'यत्नेऽर्केऽग्नौ मतावात्मा' इति कोशात् । स च सङ्कल्पविशेषः । **भूतभावनः** भूतानां सत्तानुवर्तक इत्यर्थः । न चात्र 'मत्स्थानानि सर्वभूतानि' इत्युक्तं धारकत्वं 'न च मत्स्थानि भूतानि' इत्यनेन परमार्थतो निषिध्यते इति शङ्क्यम् । तथा सति 'पश्य मे योगमैश्वरं' इत्युक्त्यसाङ्गत्यापत्तेः । भ्रान्तिं मे पश्य तत्त्वतः इत्युक्तेरेव सामञ्जस्यात् । उपरिष्टात् 'ममात्मा सर्वभावन' इति सङ्कल्पमात्रेण सर्वसत्तानुवर्तकत्वरूपधारकत्वकथनानुपपत्तेश्च । ननूक्तं सविशेषत्वम् अवरब्रह्मणोः अस्माभिरपीष्यत एवेति किं नश्छिन्नमित्यत्राह - **अहमिति** । प्रभवत्यस्मादिति **प्रभवः** । प्रलीयतेऽस्मिन्निति **प्रलयः** । अनेन जगज्जन्मादिकारणत्वरूपं लक्षणं ब्रह्मण उक्तम् ।' परतरं किञ्चित् मत्तोऽन्यन्नास्ती'त्यर्थः । अनेन कारणातिरिक्तवस्तुनिषेधः कृतः । 'मयि सर्वमि'त्यनेन धारकत्वमुक्तम् । तेन

**धनञ्जय । मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥'**, (गी.१०.४२.) **'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥'**, (गी.१५.१७,१८.) **'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ।'**,

---

स्थितिश्च सिद्धा । अत्र 'मां', 'मत्', 'अहं', 'मे', 'मम', 'मयि' इत्युक्तेस्तेषां चैकार्थवाचित्वात् पूर्वोक्तसविशेषवस्तुन एवाहमर्थत्वात् 'मतः परतरं नान्यदि'त्यनेन सविशेषब्रह्मापेक्षयाऽन्यस्य निषेधाच्चावरब्रह्मणस्सविशेषत्वं परब्रह्मणो निर्विशेषत्वमिति विभागो न युक्त इति भावः । **विष्टभ्य** = अधिष्ठाय । **एकांशेन** = सङ्कल्पैकदेशेन । अनेन ब्रह्मणः जगच्छरीरि-त्वलक्षणमुक्तम् ॥

एवमार्थिकं चिदचिद्वैलक्षण्यं प्रदर्शितम् । अथ तत्र साक्षात्प्रमाणं दर्शयति - **उत्तम** इति । 'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यत' इति एतत्पूर्वश्लोकः । **सर्वभूतानि** बद्धः । **कूटस्थः** निर्विकारो मुक्तः । तस्य ज्ञानसङ्कोचविकाराभावात् । यद्वा - कूटस्थशब्दः साधारणवाचकस्सन् मुक्तार्थकः मुक्तस्योभय-विभूतिसाधारणत्वात् । 'सर्वेषु लोकेषु कामचारो भवती'ति श्रुतेः । तथा च क्षरशब्दः बद्धवाचकः । अक्षरशब्दः मुक्तवाचकः इति पर्यवसितम् । **परमात्मेत्युदाहृत** इत्यनेन तस्याः शिखायाः मध्ये परमात्मा व्यवस्थित इति वाक्यं स्मारितम् । 'यो लोत्रयमाविश्ये'त्यनेन 'व्याप्य नारायणः स्थित' इति 'ईश्वर' इत्यनेन 'पतिं विश्वस्यात्मेश्वरं' इति च स्मारितम् । 'बिभर्ति' इत्यनेन 'अक्षरादपि चोत्तम' इत्यनेन 'सोऽक्षरः परमः स्वराट्' इति वाक्यम् । तत्राक्षरशब्दो उक्तयुक्त्या मुक्तपरः । **स्वराट्** = स्वतन्त्रः, अकर्मवश्य इति यावत् । परमः उत्कृष्टावस्थावान् । जीवस्य मोक्षावस्थाया एव सर्वावस्थापेक्षयोत्कृष्टत्वात् तदपेक्षयोत्कृष्टावस्थान्तराभावाच्च । अत्र 'विश्वमेवेदं पुरुषः' इति सामानाधिकरण्यनिर्देशेन तत्र च 'तद्विश्वमुपजीवति', 'पतिं विश्वस्यात्मेश्वरं', 'व्याप्य नारायणः स्थितः' इत्यादिभिः धार्यत्वधारकत्व-नियन्तृत्वनियाम्यत्व-शेषत्वशेषित्व-व्याप्यत्वव्यापकत्वादीनां निबन्धनत्वप्रदर्शनेन च 'सोऽक्षरः' इति सामानाधिकरण्यञ्च स्वरूपैक्यकृतमिति । अक्षरशब्दो मुक्तशरीरकब्रह्मपरः । तत्र 'महानुदारः' इत्यादौ महत्वस्यौदार्यद्वाराऽन्वयवत्स्वराट्त्वस्य परमत्वस्य चाक्षरशब्दनिर्दिष्टमुक्त-शरीरकब्रह्मणि मुक्तद्वाराऽन्वयो बोध्यः ।

ननु स्वराट्त्वपरमत्वयोः साक्षाद्भगवत्यन्वयसम्भवे किमिति तयोः सद्वारकान्वयः स्वीक्रियते? उच्यते । 'स ब्रह्मा स शिवः सेन्द्रः सोक्षरः परमःस्वराट्' इति वाचनश्रवणात्तत्र च ब्रह्मत्वादीनां सद्वारकान्वयस्वीकारेण तद्वदनयोरपि सह पाठात्सद्वारकान्वयस्य युक्तत्वात् । तत्र च सन्निहिताक्षरशब्दोक्तमुक्तशरीर्येकदेशमुक्तद्वाराऽन्वयस्त्वतिसमीचिनः । यद्वा - सर्वत्र भगवद्वाचितच्छब्दः तच्छरीरपरः । तथा च 'परमः स्वराट्' अक्षरो मुक्तः भगवच्छरीरभूत इत्यर्थः । **प्रथितः पुरुषोत्तम** इति । अत्र समासस्तु पञ्चमी इति वा सप्तमी इति वा योगविभागेन बोध्यः । न तूत्तमश्चासौ पुरुषश्चेति सामानाधिकरण्यविवक्षया समासः । तथा सति उत्तमशब्दस्योपसर्जनत्वेन 'उपसर्जनं पूर्वमि'ति तस्य पूर्वनिपातापत्त्या उत्तमपुरुष इति रूपप्रसङ्गात् । अतो यथोक्तरीत्यैव समासः । अयमेव 'अक्षरादपि चोत्तम' इत्यनेन कथञ्चित्प्रदर्शितश्च । एतदाशयेनैव महाभाष्यकृता 'नगोत्तमादि च सिद्धं भवती'ति भाषितम् । एवमत्र चिद्वैलक्षण्यादिकं कण्ठत उक्त्वा एवं विदः 'यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् । स सर्वविद्भजति मां सर्वभावेन भारत', 'इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ', 'एतद्बुध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत' इति सर्ववित्वादिकमुक्तम् । उक्तार्थस्य च गुह्यतमत्वञ्च । अत उक्तस्य सर्वस्य प्रामाणिकत्वावश्यकत्वेन 'यो लोकत्रयमि'त्यादिना कृत्स्नजगतः शेषत्वधार्यत्वत्वादेर्विहितत्वात् तस्य निषेधासम्भवात् 'न तदस्ति विना यत्स्यात्' इत्यादौऽब्रह्मात्मकं किञ्चिदपि नास्तीत्युच्यते इत्यभ्युपेयम् । विनाशब्दस्य सम्बन्धविरहपरत्वेन अविनाभावशब्दस्य सम्बन्धनियमवाचित्वात् । मिथ्यावाचित्वेन प्रसिद्ध्यभावाच्च ॥



14

(वि.६.५.८३-८७.) **'स सर्वभूतप्रकृतिं विकारन् गुणादिदोषाश्च मुने! व्यतीतः। अतीतसर्वावरणोऽखिलात्मा तेनास्तृतं यद्भुवनान्तराले ॥ समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशोद्धृतभूतव(स)र्गः। इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितोऽसौ ॥ तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः। परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे ॥ स ईश्वरो व्यष्टिसमष्टिरूपोऽव्यक्तस्वरूपः प्रकटस्वरूपः।**

---

एवमुत्तरत्र परोदाहृतगीतावचनानामन्यथाकरणाय तदुपयोगितया सविशेषपराणि तद्वचनानि प्रदर्शितानि। अथ तदर्थमेव पुराणवचनान्युदाहरति - **स** इति। **सर्वभूतप्रकृतिं** = सर्वभूतानां कारणभूतं प्रधानम्। **विकारान्** = महदादीन्। **गुणादिदोषान्** = सत्त्वरजस्तमोहेतुकान्क्लेशादिदोषान्। **व्यतीतः** = नियमेनातत्परवशः। कदाचिदपि तत्सम्बन्धानर्हः। **अतीतसर्वावरणः** = अतीतं सर्वावरणं, प्रकृतिसम्बन्धकर्मवासनादिकं, येन सः। यद्वा सर्वस्य विषयस्यावरणं ज्ञानसङ्कोचः। स अनेनातीत इत्यर्थः। अथवा सर्वगुणानामावरणं सङ्कोचः अनेनातीत इत्यर्थः। तथा च सर्वविषयकज्ञानसङ्कोचाभाववान् ज्ञानशक्त्यादिसर्वगुणसङ्कोचाभाववानिति वा पर्यसितम्। **अखिलात्मा** = निखिलजगच्छरीरी। तत्त्वमेवोपपादयति - **तेने**ति। **भुवनान्तराले** = उभयविभूत्यन्तराले॥ एवमुभयविभूतिव्याप्त्युक्त्या 'मृदात्मको घटः' इतिवन्न स्वरूपैक्यकृतमखिलात्मत्वमिति फलितम्। अनेन श्लोकेन हेयप्रत्यनीकत्वमुक्तम्।

नन्वद्वैत्यभिमतब्रह्मणोऽपि हेयप्रत्यनीकत्वात्परब्रह्मणो निर्विशेषत्वे किं बाधकमित्यत्र तस्य सविशेषत्वबोधनायोदाहरति - **समस्ते**ति। **आत्म**शब्दः स्वभावपरः, स्वभावे परमात्मनीत्युक्तेः। समस्तकल्याणगुणः स्वभावो यस्येति विग्रहः। **शक्तिः** = सामर्थ्यम्। **सर्गः** = समूहः। स्वसामर्थ्यैकदेशेन धृतभूतसमूहः इत्यर्थः। यद्वा - **सर्गः** = सृष्टिः स्वांशलेशोद्धृतभूतसर्गः। **अभिमतं** = अभिमत्यर्हम्, अर्हार्थे निष्ठा। स्वानुरूपमिति यावत्। लोकदृष्टप्रक्रियाव्यवच्छेदार्थम् इच्छारहितत्वाभिमतत्वयोरुक्तिः। इच्छाशब्दः नित्यानित्येच्छोभयसाधारणः। **ऊरुदेहः** = महाकायः। अथ दिव्यमङ्गलविग्रहप्रयोजनमाह - **सम्साधिते**ति। **समस्तकल्याणगुणात्मक** इत्यस्य कल्याणशब्दस्य भावप्रधानत्वमभ्युपगम्य समस्तकल्याणत्वं गुणः - स्वभावः यस्य सः - समस्तकल्याणगुणः, सः आत्मा - धर्मिस्वरूपं यस्येति विगृह्य, बहुव्रीहेः 'शिलापुत्रकस्य शरीरमि'त्यादाविव औपचारिकत्वाङ्गीकारेण दिव्यात्मस्वरूपपरत्वं तत्पदस्य केचिद्वर्णयन्ति। अपरे तु बहुव्रीहिगर्भबहुव्रीहिमनङ्गीकृत्यैव कल्याणत्वरूपो गुणः कल्याणगुणः, स आत्मा स्वभावो यस्येति विग्रहवर्णनेनोक्तार्थपरत्वमेवोपपादयन्ति।

अथ समस्तकल्याणेत्याद्युक्तमेवार्थं दृढीकरणाय विस्तरयति — **तेजोबले**ति। अत्र महच्छब्दः सुशब्दश्च सर्वगुणेष्वन्वेति। अत एव सर्वगुणसाधारणतया महत्वमन्यत्रोक्तं - 'महोत्साहो महाबलः। महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिरि'त्यादौ। महत्वं चापरिच्छिन्नत्वम्। सुशब्दः उत्कृष्टवाचकः। सर्वेषामेव गुणानां सुशब्दबोधितमुत्कृष्टत्वादिकमन्यत्रोक्तं - 'प्रकृष्टं विज्ञानं बलमतुलमैश्वर्यमखिलं विमर्यादं वीर्यं वरद परमाशक्तिरपि चे'ति। यद्यपि महत्वादेः न सर्वगुणेष्वप्यन्वयः शक्यसम्भवः, अथापि न्यायसाम्येन सिद्धिरभ्युपेया। अत्र 'तेजो बले'त्यादिक्रमविवक्षा नास्ति।

एवं गुणविग्रहादियोगात्सर्वपरत्वमाह - **पर** इति। 'सकला न यत्रे'त्यादिकं 'गुणादिदोषाश्च व्यतीत' इति पूर्वोक्तविवरणम्। **आदि**शब्देन कर्मविपाकाशयग्रहणम्। अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः। पुण्यमपुण्यं च कर्म। जात्यायुर्भोगा विपाकाः। वासना अशयः संस्कार इति यावत्। **परावरेशे**। परत्वं सर्वातिशायित्वम्, अवरत्वं सुलभत्वम्। ईशत्वं तु स्पष्टम्। यद्वा परावरशब्दः परावरजन्तुशरीरकः। स चासावीशश्च। अथवा परा एवावराः विभूत्या यस्य, स चासावीशश्च। यद्वा पराश्चावराश्च ये तेषामीशः। **स ईश्वरः** इति। अनेन 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुष विशेषः ईश्वरः' इति योगसूत्रं स्मारितम्। **व्यष्टिसमष्टिरूपः** = कार्यकारणावस्थचेतनवर्गशरीरकः। अनेनैक्यश्रुतिनिर्वाहकः घटकश्रुत्यर्थः उक्तः। **अव्यक्तस्वरूपः**। स्वस्य रूपं स्वासाधारणं शरीरम्। अव्यक्तं शरीरं यस्य सः।

**सर्वेश्वरः सर्वदृक् सर्ववेत्ता समस्तशक्तिः परमेश्वराख्यः ॥ सं(स)ज्ञायते येन तदस्तदोषं शुद्धं परं निर्मलमेक-रूपम् । संदृश्यते वाऽप्यधिगम्यते वा तज्ज्ञानमज्ञानमतोऽन्यदुक्तम् ।'**, (वि.६.५. ७२-७५.) **'शुद्धे महावि-**

---

**सर्वेश्वरः** = सर्वनियन्ता । अनेन सर्वस्य नियाम्यत्वरूपं शरीरत्वमुक्तं भवति । **सर्वदृक्** स्वरूपतः । **सर्ववेत्ता** प्रकारतः । यद्वा - **सर्वदृक् सर्ववेत्ता** = विश्वतश्चक्षुरित्यादिश्रुत्युक्तप्रक्रियया सर्वतो दृग् भवन् सर्वं जानातीत्यर्थः । अथवा, सर्वदृक् सर्वेषां दृक् = चक्षुः ज्ञानप्रद इति यावत् । 'चक्षुर्देवानामुत मर्त्यानामि'ति श्रुतेः । **सर्ववेत्ता** = सर्वं विन्दतीतित्यर्थः विदिर्लाभे इति धातुः । यद्यप्ययं सेट्, अथापीडभावश्छान्दसः । अवाप्तसमस्तकाम इति यावत् । **समस्तशक्तिरि**ति । शक्तिः कार्योपयोग्यपृथक्सिद्धविशेषणम् । सर्वस्य वस्तुनः परब्रह्मशरीरत्वेनापृथक्सिद्धविशेषणत्वम् । स क इत्यत्राह - **परमे**ति । परो मा यस्येति परमः । अनेन ईश्वरान्तरमस्य निषिध्यते । अथोक्तेश्वरविषयक ज्ञानमेवापवर्गोपायभूतज्ञानशब्द-वाच्यमित्याह - **सञ्ज्ञायत** इति । येन शास्त्रजन्यज्ञानेनास्तदोषत्वादिविशिष्टं तत् ब्रह्म संज्ञायते = ज्ञानविषयीक्रियते । येनोपासनात्मकेन सन्दृश्यते । येन परभक्तिरूपेणानुभवरूपेण **चाधिगम्यते** = प्राप्यते, तदेव ज्ञानम् । 'सा विद्या या विमुक्तय' इति वचनात् । अतोऽन्यदज्ञानमित्यर्थः । 'भक्त्या त्वनन्यया शक्योऽहमेवंविधोऽर्जन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप' इत्युक्तेः ।

**अस्तदोषं** = दोषास्पदाचिद्विलक्षणम् । **शुद्धं** = कर्मवश्याशुद्धविलक्षणम् । **एकरूपं** = आश्रितरक्षणादि-प्रतिज्ञायां दृढतरमित्यर्थः । **अज्ञानं** = मोक्षोपायज्ञानभिन्नम् । ज्ञानाभावो वा । सर्वस्यापि ब्रह्मात्मकत्वेन ब्रह्मपर्यन्तत्वात्, ज्ञानस्य ब्रह्मपर्यत्वत्वाभावेऽयथावस्थितवस्तुविषयकत्वेन न तस्य ज्ञानत्वमिति भावः । अत्र 'स ज्ञायते' इत्यपि क्वचित्पाठो दृश्यते । तदाऽस्तदोषत्वादिकं ज्ञानविशेषणम् । तदा अचिद्बद्धमुक्तनित्यविषयकज्ञानाद्ब्रह्मविषयकज्ञानस्य व्यावृत्तिर्बोध्या । येन सः परमात्मा ज्ञायते संदृश्यते = अधिगम्यते वा, तत् = ज्ञानम् अस्तदोषत्वादिविशिष्टम् । 'तदेव च ज्ञानं ततोऽ-न्यदज्ञानमि'त्यन्वयः ।

एवं ब्रह्मणः सविशेषत्वे वचनानि प्रदर्शितानि । अथ परमतसिद्धशब्दागोचरत्वचिखण्डयिषया शब्दगोचरत्वे वचनान्याह - **शुद्ध** इति । शुद्धे नित्यशुद्धे । अवधारणगर्भोऽयं शब्दः । यथा च 'सिद्धे शब्दार्थसम्बन्धे' इत्यत्रावधारणगर्भः सिद्धशब्दः नित्यसिद्धपरः नित्यार्थपर्यवसितः । अनेन बद्धमुक्तनित्यव्यावृत्तिः तेषां नित्युशुद्धत्वाभावात् । नित्यगतं नित्यशुद्धत्वमपि भगवत्सङ्कल्पाधीनमिति तद्व्यावृत्तिः । **महाविभूत्याख्ये** । महत्यौ विभूती यस्य सः महाविभूतिः । महाविभूतिरित्याख्या यस्य तस्मिन् । अनेनोभयविभूतिशेषित्वमुक्तम् । इदमपि समस्तार्थव्यावर्तकम् । विभूतिभूतस्य सर्वस्य तच्छेषित्वासम्भवात् । 'अशब्दगोचरस्यापि तस्य वै ब्रह्मणो द्विज । पूजायां भगवच्छब्दः क्रियते ह्युपचारतः ॥' इति मुक्तात्मनो ब्रह्मशब्देन निर्देशात्तद्व्यावृत्यर्थं 'परे ब्रह्मणी'त्युक्तम् । अत एव परमब्रह्मभूतस्य वासुदेवस्य 'नान्यग' इत्युपरिष्टाद्वक्ष्यते ।

ननु 'अशब्दगोचरस्यापी'त्यतः पूर्वश्लोके 'श्रुतिवाक्योदितं सूक्ष्मं तद्विष्णोः परमं पदम् । तदेव भगवद्वाच्यं स्वरूपं परमात्मनः । वाचको भगवच्छब्दस्तस्याद्यस्याक्षयात्मनः' इत्यत्र परब्रह्मण एव प्रस्तुतत्वात् । 'अशब्दगोचरस्या-पी'त्यत्र तच्छब्दस्य कथमप्रस्तुतमुक्तात्मपरामर्शित्वमिति चेदुच्यते - 'तत्र पूज्यपदार्थोक्तिपरिभाषा समन्वितः । शब्दोऽयं नोपचारेण ह्यन्यत्र ह्युपचारत' इति भगवच्छब्दस्य ब्रह्मणि मुख्यत्वस्यान्यत्रौपचारिकत्वस्य चोक्तत्वाद्ब्रह्मण्यौपचारिकत्वा-सम्भवेन, अत्र च पूजायां भगवच्छब्दः क्रियते ह्युपचारत इत्युक्तत्वाच्च तच्छब्दोऽप्रस्तुतमुक्तपरामर्शक इत्यभ्युपेत्यम् । अत एव हि परमात्मनः भगवच्छब्दमुख्यार्थप्रतिपादनं उपपद्यते । सर्वकारणकारणत्वमपि परब्रह्मासाधारणम् । मुक्तात्म-नोऽपि जगद्व्यापरविरहस्य सूत्रकृतैव वक्ष्माणत्वात् । अनेन च भगवच्छब्दप्रवृत्तिनिमित्तमुक्तम् । तेन 'अशब्दगोचरस्य' इति पूर्वश्लोके उक्तस्य मुक्तात्मनि भगवच्छब्दौपचारिक त्वस्योपपादनं च सिद्धं भवति ॥

**भूत्याख्ये परे ब्रह्मणि शब्द्यते । मैत्रेय भगवच्छब्दः सर्वकारणकारणे ।। सम्भर्तेति तथा भर्ता भकारोऽर्थ-द्वयान्वितः । नेता गमयिता स्रष्टा गकारार्थस्तथा मुने ।। ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्य-योश्चैव षण्णां भग इतीरणा ।। वसन्ति तत्र भूतानि भूतात्मन्यखिलात्मनि । स च भूतेष्वशेषेषु वकारार्थ-स्ततोऽव्ययः ।।'**, (वि.६.५.७९) **'ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणा-**

---

अथोक्तार्थमेवोपपादयितुं समुदायार्थमत्तरत्र विवक्षन्नादावक्षरार्थमाह — **सम्भर्तेतीति** । भश्च गश्च वश्च तेषां समाहारः भगवः । अन्येष्वपि दृश्यते इति डप्रत्यये रिलोपे च कृते भः गः वः इति रूपम् । **सम्भर्ता** = उपकरणविधानरूप-सम्भरणकर्ता । प्रकृतिपुरुषकालान्कार्योत्पत्तियोग्यान्करोतीत्यर्थः । यद्वा - अण्डरूपकार्योत्पत्त्युपयुक्त महदादिसृष्टिकर्ता इत्यर्थः । **भर्ता** = स्वामीत्यर्थः । यद्यपि भरणं धारणरूपं पोषकत्वरूपमेव वा, अथापि धारणस्य वकारवाच्यत्वात्, पोषक-त्वस्य च गकारवाच्य नेतृत्वान्तर्भावात्, पुनरुक्तिपरिहारायापेक्षितार्थव्यक्त्यै च स्वामित्वरूपमिह विवक्षितम् । न च साधुत्वमात्रफलक 'ड' प्रत्ययान्तस्य भः इत्यस्य कथं स्वामिवाचकत्वम् । तृच्प्रत्यययुक्तस्य भरतेरेव स्वामिवाचकत्वादिति वाच्यम् । अगत्याऽऽर्षत्वबलात् तद्वाचकत्वस्वीकारात् । प्रसिद्धार्थस्य गकारादिना सिद्धेः ।

अत्र 'इति भकारोऽर्थद्वयान्वित' इत्युक्त्योक्तमुभयमपि भकारपदप्रवृत्तिनिमित्तमिति प्रतीयते । गकारादिपद-प्रवृत्तिनिमित्तं तु न प्रत्येकं परन्तु समुदितमेव । नेता गमयिता स्रष्टेति गशब्दार्थविवरणम् । 'उत्समि'त्युपसर्गसूचितार्थानां धातुलीनत्वात् नेतृत्वादिकं गशब्दार्थः । उद्गमयिता, इत्यनेन सूचितोऽर्थः **स्रष्टेत्यनेनोक्तः** । गमयितृशब्दसूचितोऽर्थः **नेतेत्यनेन** । नेतृत्वं रक्षकत्वम् । सङ्गमयितृशब्दसूचितः सम्हाररूपोऽर्थः गमयितृशब्देनोक्तः । सृष्टिस्थितिसम्हारकर्ता गशब्दार्थ इति पर्यवसितम् । अत्र स्थितिसम्हारसृष्टयः व्युत्क्रमेणोक्ताः । अत्र समित्युपसर्गमन्तरेणापि गमयितेत्यस्यैव कारणभूतमात्मानं गमयितेत्यर्थमवलम्ब्य कार्यवर्गस्य स्वस्मिन् लयकर्तेत्यर्थवर्णनमपि युक्तम् । अथ वकारशब्दार्थमुत्तरत्र विवक्षन्प्रसङ्गाद्भकारगकारसमुदायार्थमाह - **ऐश्वर्यस्येति** । समग्रस्येति सर्वान्वयि । तेन चतुर्मुखादिपरिच्छिन्नैश्वर्यादि-व्यावृत्तिः । **यशः** = गुणवत्ताप्रथा । **श्रीः** भोग्यसम्पत् । ज्ञानं स्पष्टम् । **वैराग्यं** = विरक्तिः, अनादर इति यावत् । स्वस्य सर्वस्मात्परिपूर्णत्वेनादर्तव्याभावात्, अन्यत्र विरक्तिः । यथाह श्रुतिः - मनोमयः - सर्वमिदमभ्यात्तोऽवाक्यानादर इति । एवं भगशब्दार्थो विवृतः । अस्यास्तीत्यर्थकमतुप्प्रत्ययार्थः स्पष्ट इति न व्याख्यातः । **वसन्तीत्यनेन** वकारार्थकथनम् । **भूतात्मनि** = भूतानामात्मनि । **अखिलात्मनि** = निखिलशरीरके । अथवा - **भूतात्मनीत्यनेन** कार्यवर्गात्मत्वमुक्तम् । **अखिला-त्मनीति** नित्यमुक्तात्मत्वमुक्तम् । एवं 'वसन्त्यस्मिन् सर्वाणीति वः' इति व्युत्पत्त्यर्थ उक्तः । अथ उ प्रत्ययस्याधिकरणार्थे इव कर्त्रर्थेऽपि व्युत्पत्तिसम्भवात् 'सर्वस्मिन्नयं वसतीति' व्युत्पत्तिमवलम्ब्यार्थमाह - **स चेति** । अथ वकारार्थमुक्त्वा तत उपरितनस्य 'अन्' इत्यस्याव्ययत्वमाह - **ततोऽव्यय** इति ।

अथ भगवच्छब्दसमुदायार्थमाह — **ज्ञानेति** । अत्रोदाहरिष्यमाणस्य 'एवमेष' इत्यस्य 'तत्र पूज्यपदार्थोक्तिरि'-त्यस्य चान्तरमेव 'ज्ञानशक्ति' इत्यादि श्लोकः श्रूयते इति तदुदाहरणानन्तरमेवैतदुदाहरणं युक्तम् । अथापि प्रवृत्तिनिमित्त-कथनावसरलब्धत्वात् 'उत्पत्तिं प्रलयञ्चैव भूतानामगतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिती'ति प्रस्तुता-नुपयुक्तश्लोकस्य मध्ये व्यवहितत्वेन क्रमेणोदाहरणप्रदर्शनासम्भवाच्चैवमुपन्यस्तम् । **अशेषत** इत्यनेनैकैकस्य न प्रवृत्ति-निमित्तत्वम् । परन्तु ज्ञानादि समुदायस्यैवेति सूचितम् । अत एव पूर्वं **ऐश्वर्यस्य समग्रस्येत्युक्तम्** । गवादिष्वतिप्रसङ्गभयात् प्रकर्षविशेषवतां ज्ञानादीनां समुदायस्य प्रवृत्तिनिमित्तत्वमभ्युपेयम् । **भगवच्छब्दवाच्यानि** = भगवच्छब्दस्य प्रवृत्ति-निमित्तत्वेन वाच्यानि । अत्र वाक्यशक्तिवादिवैयाकरणमतानुरोधेन मतुबन्तसमुदायस्य ज्ञानादिसमुदायावच्छिन्ने शक्ति-रुक्ता । अन्यथा पुनः भगशब्दस्य ज्ञानादिसमुदाये मतुपः सम्बन्धिनि च शक्तिं स्वीकृत्य तयैव विशिष्टलाभो वक्तव्यः ।

**दिभिः ॥,'** (वि.६.५.७६,७७.) **'एवमेष महाशब्दो मैत्रेय ! भगवानिति । परमब्रह्मभूतस्य वासुदेवस्य नान्यगः ॥ तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः । शब्दोऽयं नोपचारेण ह्यन्यत्र ह्युपचारतः ॥'**, (वि.६.७.७०,७१,७२.) **'समस्ताश्शक्तयश्चैता नृप यत्र प्रतिष्ठिताः । तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥ समस्तशक्तिरूपाणि तत्करोति जनेश्वर । देवा तिर्यङ्मनुष्याख्या चेष्टावन्ति स्वलीलया ॥ जगतामुपकाराय न सा कर्मनिमित्तजा । चेष्टा तस्याप्रमेयस्य व्यापिन्यव्याहतात्मिका ।'**,

वस्तुतोऽत्र भकारगकार वकाराणां समुदायशक्तिः प्रदर्श्यते । भगवशब्देति न्यासं विना, भगवच्छब्देति कथनं त्वार्षम् ।

अत एव भगवच्छब्दविवरणानन्तरम्, अनन्तरं स्थितस्य 'अन्' इत्यस्य 'कश्यपः पश्यकोऽभवदि'ति न्यायेन नेत्यर्थकत्वं स्वीकृत्य 'विना हेयैर्गुणादिभिरि'त्यनेन विवरणं क्रियते ॥ 'साक्षरा विपरीताश्चेत् राक्षसा एव केवलम्' इत्यत्र साक्षरशब्दस्य विपर्ययेन पठने राक्षसा इति भवति । तथा 'कश्यप' इत्यस्य विपर्ययेण पठने 'पश्यक' इति भवति । एवमेव अन् इत्यस्य विपर्ययेण पठने 'न् अ (न)' इति भवति । तथा च भगवान् इत्यस्य हेयगुणविरहविशिष्टकृष्टज्ञानादिसमुदायावच्छिन्ने शक्तिः । अत एव 'मैत्रेय भगवानिती''त्युपरि उक्तम् । अत एव च ऐश्वर्यवीर्यज्ञानानां भगशब्दप्रवृत्तिनिमित्ततयोक्तत्वेऽपि शक्त्यादि सहितानां तेषां भगवशब्दार्थप्रवृत्तिनिमित्तत्वकथनादपुनरुक्तिः । अन्यथा पुनः कतिपयसमुदाय्यावापोद्वापप्रयुक्तसमुदायभेदात्सा परिहार्या । अत्र भगवच्छब्दस्यैवमर्थस्वीकारस्तु उक्तवचनबलादेव । भगशब्दस्यैवं शक्तिस्वीकारेपीदं वचनमेव शरणम् इति । अथ शब्दस्य भगवति निमित्तपौष्कल्यान्मुख्यवृत्तत्वमाह - **एवमिति** । **महाशब्द** इति । महार्थगर्भोऽयमित्यभिप्रायः । **परमब्रह्मे**ति मुक्तव्यावृत्तिः । अथान्यत्र तत्प्रयोगस्यौपाचरिकत्वमाह - **तत्रेति** । **पूज्यानामवयवार्थानामुक्तिः** = पूज्यपदार्थोक्तिः योगः । रूढिः, परिभाषा ताभ्यां युक्तः । प्रथमो हिः भगवति समन्वितत्वे प्रसिद्धिद्योतकः, द्वितीयः मुक्तात्मनीवान्यत्राप्यौपचारिकत्वे प्रसिद्ध्यर्थकः । इतरप्रयोगस्यान्यथासिद्धत्वेन निरङ्कुशज्ञानादिमति गुणलेशवति उपचार इति भावः ॥

एवमुपक्रमगतसविशेषपरवचनानि दर्शितानि । अथोपसम्हारगतताद्दशवचनानि प्रदर्शयितुमाह - **समस्ता** इति । **शक्तयः** = बद्धः मुक्तः कर्मरूपाविद्या च । उक्तशक्तीनां भगवति प्रतिष्ठितत्वं च तत्तदभिमानि देवताद्वारा । विश्वरूपाद्वैरूप्यं यस्य । यद्वा - विश्वरूपमेव वैरूप्यम् । अनेन सन्निवेशवैलक्षण्यं दिव्यमङ्गलविग्रहस्योक्तम् । **महत्** = अपरिच्छेद्यम् । **अन्यत्** = द्रव्यान्तरम् । अथोक्तशक्त्याश्रयस्य दिव्यमङ्गलविग्रहस्य कार्यं प्रदर्शयति - **समस्ता** इति । बद्धमुक्ताविद्याख्यशक्तिमत्तद्दिव्यमङ्गलविग्रहाख्यं रूपं स्वलीलया देवतिर्यङ्मनुष्याख्य(सजातीय)चेष्टावन्ति रूपाणि करोतीत्यर्थः । अनेन सर्वशक्त्याश्रयस्य परविग्रहस्य देवादिसजातीयरामकृष्णादिविग्रहरूपेणावतार उक्तः । **स्वलीलयेत्य**नेन कर्मव्यावृत्तिः । **स्वलीलया** = लीलाभिसन्धिना । अनेन लीलाया उत्तरभावित्वेन न तत्प्रयोजकत्वमिति शङ्कनमपास्तम् । ननु न लीलामात्रप्रयोजनाभिसन्धिना रामकृष्णादिविग्रहरूपेणावतारो युक्तः, तथा सति भारतप्रसिद्धासमञ्ज(स)न्यायप्रसङ्गादित्यत्राह — **जगतामिति** । अनेन जगदुपकाररूपप्रयोजनसद्भावान्न तन्न्यायावतरो युक्त इति दर्शितम् । कर्मनिमित्तजन्मनिषेधेन स्वकर्मफलभोगार्थत्वं निषिद्धम् । कुत इत्यत्राह - **चेष्टेति** । **तस्य** = दिव्यमङ्गलविग्रहवतः । **व्यापिनी**ति देशादिसर्वनियमराहित्यमुक्तम् । वैदिकपुत्रा हि भगवता श्रीकृष्णेन वैदिकमर्जुनश्च रथमारोप्य देशादिनियम मन्तरेणापि वैकुण्ठं गत्वा आनीताः । तदुक्तं श्रीवत्सचिह्नमिश्रैः अतिमानुषस्तवे -' सञ्जीवयन्नपि मृतं सुतमुत्तरायाः सान्दीपिनेश्चिरमृतं सुतमानयश्च । धाम्नो निजात् द्विजसुतान् पुनरानयन्वा स्वामेव तां तनुमहो कथमानयस्त्वम् ॥' **व्यापिनी** = सर्वावतारानुरूपा इति वाऽर्थः । व्यापनशक्तायाः । चेष्टायाः प्रतिहरतिरपि नास्तित्याह — **अव्याहतात्मिकेति** । अव्याहतः आत्मा स्वरूपं यस्याः ॥

एवं श्रीविष्णुपुराणस्थ षष्टांशश्लोकानां हेयगुणराहित्यकल्याणगुणवत्वप्रतिपादकत्वमुक्त्वा प्रथमांशस्थ-

(वि.१.२२.५३) **'एवं प्रकारममलं नित्यं व्यापकमक्षयम्। समस्तहेयरहितं विष्ण्वाख्यं परमं पदम् ॥'** (वि.१.२.१०-१४.) **'परः पराणां परमः परमात्माऽऽत्मसंस्थितः। रूपवर्णादिनिर्देशविशेषणविवर्जितः ॥ अपक्षयविनाशाभ्यां**

श्लोकानामपि तथात्वं प्रतिपादयति - **एवं प्रकारमिति**। 'निर्व्यापारमनाख्येयं व्याप्तिमात्रमनूपमम्। आत्मसम्बोधविषयं सत्तामात्रमलक्षणम् ॥ प्रशान्तमनसं शुद्धं दुर्विभाव्यमसंस्थितम्। विष्णोर्ज्ञानमयस्योक्तं तज्ज्ञानं परमं पदम् ॥ तत्राज्ञानविरोधेन योगिनो यान्ति ये लयम्। सम्सारकर्षणादेते यान्ति निर्बीजतां द्विज: ॥' इति मुक्तात्मविषयकश्लोकाः 'एवं प्रकारमि'ति श्लोकात्पूर्वं दृश्यन्ते। अतोऽत्र 'एवं प्रकारमि'त्यनेन मुक्तात्मनि उक्ताः गुणाः परमात्मन्यतिदिश्यन्ते। यद्यपि 'निर्व्यापारमि'त्यादिश्लोकस्य परमात्मस्वरूपपरत्वमपि वक्तुं युक्तम्। 'एवं प्रकारमि'त्यस्योपसंहाररूपत्वाभ्युपगमात्। 'विष्वाख्यं परमं पदमि'त्येतद्विलक्षणतया 'विष्णोः परमं पदमि'ति श्रूयमाणस्य 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः' इतिवत् पदशब्दस्य स्वरूपपरत्वाभ्युपगमेनोपपतिश्च सम्भवति। अथापि 'एवं' शब्दस्वारस्यात् अतिदेशरूपत्वावगतेः तत्परित्यागेनोपसम्हाररूपत्वक्लृप्तेरसामञ्जस्यात् मुक्तात्मपरत्वमुक्तम् ॥ अत्र व्यापकत्वादिकिञ्चिद्धर्माणां पृथगुक्तेः न तेषां 'एवं प्रकारमि'त्यनेनातिदेशः ॥

एवं मुक्तगुणातिदेशेन परस्य निर्विशेषत्वं व्युदस्तम्। अथ नैतावन्मात्रं, अधिकाऽपि गुणाः सन्तीत्याह - **अमलमिति**। हेयप्रत्यनीकमित्यर्थः। 'समस्तहेयरहितमि'त्यनेन तु हेयराहित्यमात्रमुच्यते। 'नित्यमि'ति हेयप्रतिभटत्वस्य नित्यत्वमुक्तम्। 'व्यापकमि'ति स्वरूपतो व्यापकत्वमुक्तम्। 'अक्षयमि'ति स्वत एव धर्मतो विकाररहितत्वात्। मुक्तात्मनः संसारदशायां ज्ञानसङ्कोचरूपविकारवत्वम्। नित्यानां परनित्यसङ्कल्पाधीनसार्वकालिकविकाररहितत्वेऽपि स्वतो न ज्ञान सङ्कोचविकारशून्यत्वमिति व्यावृत्तिः। **समस्तहेयरहितं** = स्वतो हेयाभाववत्। **पदमिति**। पद्यत इति व्युत्पत्त्या पदशब्दो दिव्यात्मस्वरूपवाचकः। 'विष्ण्वाख्यमि'त्यनेन 'परमं पदमि'त्यस्य दिव्यलोकमुक्तात्मपरत्वव्यावृत्तिरुक्ता। एवं प्रथमांशोपसंहारस्य सविशेषपरत्वमुक्त्वा तदुपक्रमस्यापि सविशेषपरत्वं दर्शयति - **परः पराणामिति**। एतेन प्रथमांशोपक्रमोपसंहारयोः षष्ठांशस्य च सविशेषपरत्वोपपादनेन सर्वस्यापि शास्त्रस्य सविशेषपरत्वमेवेत्युक्तं भवति। इत्थञ्चोपक्रमोपक्रमभूतस्यापि 'ज्ञानस्वरूपमि'ति श्लोकस्य महावाक्यस्वारस्येन सविशेषपरत्वमावश्यकमिति च सिध्यति। **पराणां परमः परः**। ये त्वधिककालवर्तिनः तदपेक्षयाप्ययमधिककालवर्ती, एतदपेक्षया तु न कश्चिदप्यधिककालवर्ती। अनेन कालपरिच्छेदरहितत्वमुक्तम्। **परमात्मेति**। आप्नोतीत्यात्मा। सर्वं चेतनाचेतनं वस्तु व्याप्य वर्तते इत्यर्थः। अनेन देशपरिच्छेदराहित्यमुक्तम्। **आत्मसंस्थित** इति। सर्वेषामात्मत्वेन संस्थितः। अनेन सर्ववस्तुवैशिष्ट्यमुक्तम्। यद्वा - आत्मनि स्वास्मिन् संस्थितः स्वनिष्ठ इत्यर्थः। अत्र स्वस्य स्वनिष्टत्वोक्त्याऽन्यस्य स्वनिष्टत्वनिषेधसिद्धेः।

सर्वस्यापि प्रपञ्चस्य शरीरतया विशेषणत्वेन परमात्मनिष्टत्वं फलितम्। अत्र पारम्यविशेषणादनन्तवस्त्वन्तरं निषिद्धम्। उभयथापि वस्त्वपरिच्छेदरहितत्वमुक्तं भवति। अत्र च ब्रह्मणः कृत्स्नजगत्कारणत्वसिध्यौपयिकं त्रिविधपरिच्छेदराहित्यरूपं 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादिश्रुतिप्रसिद्धमानन्त्यं प्रदर्शितम्। सार्वकालिकसार्वदेशिकपदार्थं प्रति कस्यचित्कारणत्वे हि कालदेशापरिच्छेदावावश्यकौ। उपादानकारणत्वे च वस्त्वपरिच्छेदः। न हि वस्तुपरिच्छेदयुक्तकुलालादेरुपादानकारणत्वमिति। अथ 'परः पराणां परमः' इत्यनेनोक्तं कालापरिच्छेदं विस्तरेणार्थत्रयेण व्युत्पादयति — **रूपवर्णादि**ति। **आदि**शब्दो गन्धरसादिसङ्ग्राहकः। **रूप**शब्दो जातिपरः। जातिगुणौ हि रूपिणां रूपे। **वर्ण**शब्देन रूपाख्यगुणविशेष उच्यते। **रूपवर्णादिनिर्देशे**ति पाठे तु **रूप**शब्दो नीलत्वादिगुणपरः। **वर्ग**शब्दो देवत्वादिजातिपरः। रूपवर्णादिविषयकनिर्देशरूपशब्दवाच्यरूपादिविशेषशून्य इत्यर्थः। अनेनानित्यद्रव्यत्वव्यापकीभूतकर्मकृतरूपादिमत्वस्य ब्रह्मणि निषेधेन तद्व्याप्यानित्यत्वस्य निवृत्तिरिति कालापरिच्छेदः उक्तः। अथानित्यत्वव्यापकविकारसामन्यनिवृत्त्याप्यनित्यत्वनिवृत्तिरिति कालापरिच्छेदस्सिध्यतीत्यभिप्रयन्नाह - **अपक्षयेति**। एकैकस्यापि वस्तुनः षड्विकार-

**परिणामर्द्धिजन्मभिः । वर्जितः शक्यते वक्तुं यः सदाऽस्तीति केवलम् ॥ सर्वत्रासौ समस्तश्च वसत्यत्रेति वै यतः । ततः स वासुदेवेति विद्वद्भिः परिपठ्यते ॥ तद्ब्रह्म परमं नित्यमजमक्षर(य)मव्ययम् । एकस्वरूपं च सदा हेयाभावाच्च निर्मलम् ॥ तदेव सर्वमेवैतत् व्यक्ताव्यक्तस्वरूपवत् । तथा पुरुषरूपेण कालरूपेण च स्थितम् ॥'**, (वि.६.४.३९.४०.) **'प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी । पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि । परमात्मा च सर्वेषामाधारः परमेश्वरः । विष्णुनामा स वेदेषु वेदान्तेषु च गीयते ॥'**, (वि.१.२२.५५-

---

वत्वम् । तत्र नाशेऽपक्षयविनाशरूपप्रकारद्वयम् । स्थितौ परिणामऋद्धिरूपप्रकारद्वयम् । उत्पत्तौ जनिसत्तारूपप्रकारद्वयम् । अत्र जन्मशब्दो उत्पत्तिसत्तारूपावस्थाद्वयतात्पर्यकः । विकारषट्रहितत्वे कथं तादृशवस्तुनो व्यवहार इत्यत्राह — **शक्यते वक्तुमिति** । सदाशब्दः कादाचित्कास्तित्वनिवृत्तितात्पर्यकः । केवलशब्देन, उत्पद्यते इत्यादिशब्दैः व्यवहारानर्हत्वमुक्तम् ।

अथ 'परमात्मे'त्यनेन दर्शितं देशापरिच्छेदं परमात्मन ईश्वरातिरिक्तत्वशङ्कानिवृत्त्यै देवतान्तरत्वशङ्काव्युदासाय च वासुदेवनामधेयनिर्वचनपुरस्कारेण दर्शयति - **सर्वत्रेति** । 'सर्वत्रासौ वसती'ति कर्तरि व्युत्पत्तिः । 'समस्तमस्मिन् वसती'ति अधिकरणे व्युत्पत्तिः । वासुश्चासौ देवश्च । **असौ** = परमात्मा । **वासुदेवेति** इतिसमस्तत्वोक्तिः आर्षा । यद्वा - **वासुदेव** इति सम्बुध्यन्तम् । ततश्च **वासुदेव** इति भगवत्सम्बोधनं सर्वत्रासौ समस्तश्च 'वसत्यत्रे'ति हेतोरित्यर्थः । तेनापि वासुदेवशब्दव्युत्पत्तिश्च दर्शिता भवति । ननु परमात्मनि वासुदेवनामधेयनिर्वचनमुखेन देशापरिछेदादिकं न वक्तुं शक्यते । परब्रह्मैव हि वासुदेवशब्दाभिधेयम् । अतः परब्रह्मणि देशापरिच्छेदादिसम्भवेपि न परमात्मनि तत्सम्भव इत्यत्र परमात्मन एव परब्रह्मत्वमिति न दोष इत्याह - **तद्ब्रह्मेति** । **तत्** = परमात्मा । विधेयप्राधान्यात्क्लीबतया निर्देशः । **परममिति** नित्यसिद्धाः व्यावृत्ताः । **नित्यमिति** कार्यत्वं व्यावर्त्तितम् । **अजमक्षयमव्ययमिति** । सविकारप्रधानव्यावृत्तिः । प्रधानं हि वृध्यादिपरिणामवत् । **एकस्वरूपमिति** बद्धा व्यावृत्ताः । **सदेत्यादिना** मुक्ताः व्यावृत्ताः । इत्थश्च परमात्मनः स्वतेरसकलवस्तुविलक्षणत्वात् ब्रह्मत्वं वासुदेवशब्दबोधित देशापरिच्छेदवत्वञ्च युक्तमिति । **अथात्मसंस्थित** इत्यनेन दर्शितं वस्त्वपरिच्छेदं दर्शयति - **तदेव सर्वमिति** । **तदेव** = ब्रह्मैवेत्यर्थः । अवधारणेनातदात्मकत्वं व्युदस्तम् । **सर्वमेवे**-त्यवधारणं एकैकपदार्थापरित्यागव्यक्त्यै प्रसिध्यतिशयाभिव्यक्त्यै वा ।

**सर्वमेवैतत् तदेवे**त्यन्वयः । एतच्छब्दविवक्षितमाह — **व्यक्तेत्यादि** । स्वरूपशब्दः स्वभावपरः । व्यक्तत्वाव्यक्तत्वस्वभाववत् । व्यक्तमव्यक्तञ्चेति यावत् । पुनस्तद्विवक्षितमर्थमाह — **तथेति** । व्यक्ताव्यक्त पुरुषकालरूपं सर्वं ब्रह्मात्मकमित्यर्थः । इत्थश्च सर्ववस्तुसामानाधिकरण्यार्हत्वरूपः वस्त्वपरिच्छेदः ब्रह्मणि उक्तः । स च ब्रह्मणः सर्ववस्तुशरीरित्वादुपपद्यते । अनेन च सर्ववस्तुशरीरकत्वहेतूभूतव्यापनभरणादिगुणवत्वमप्युक्तं भवति । एवं 'परः पराणां परमः परमात्मात्मसंस्थितः'' इत्युक्तं त्रिविधपरिच्छेदरहितत्वरूपमानन्त्यं ब्रह्मण्युक्तम् । इदमेव चानन्त्यं 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यत्र नारायणपर्यायेण योगरूढेनानन्तशब्देन परमात्मनि दर्शितम्।

एवं शास्त्रोपक्रमे हेयप्रत्यनीकत्वकल्याणैकतानत्वविशिष्टस्य वासुदेवशब्दबोधितस्य परमात्मनः प्रतिपाद्यतां प्रतिपाद्य, शास्त्रोपसम्हारेपि तथा प्रतिपादनं प्रतिजानीते - **प्रकृतिर्येति** श्लोकद्वयेन । व्यक्ताव्यक्तस्वरूपिणी या प्रकृतिर्मयाऽऽख्याता यश्च पुरुषोऽऽख्यातः, उभावेतौ परमात्मनि लीयेत इत्यर्थः । अत्र प्रकृतिपुरुषयोर्लयवचनं तमायस्तोयनीत्योपपाद्यम् । **परमात्मेति** । अनेन श्लोकेन परमात्मशब्दबोधितस्य परमेश्वरत्वविष्णुनामत्वादिकं बोध्यते । तेन चेश्वरानतिरिक्तत्वदेवतान्तरातिरिक्तत्वे सिध्यतः । अत्र परमात्मशब्देन 'अभेदव्यापिनो वायोस्तथाऽसौ परमात्मनः' इत्यादाविव न

५७.) **'द्वे रूपे ब्रह्मणस्तस्य मूर्तं चामूर्तमेव च। क्षराक्षरस्वरूपे ते सर्वभूतेषु च स्थिते ॥ अक्षरं तत्परं ब्रह्म क्षरं सर्वमिदं जगत्। एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा ॥ परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत् ॥'**, (वि.६.७.६१-६३.) **'विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथाऽपरा। अविद्या कर्मसञ्ज्ञाऽन्या तृतीया शक्तिरिष्यते ॥ यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा। संसारतापानखिलानवाप्नोत्यतिसन्ततान् ॥ तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसञ्ज्ञिता। सर्वभूतेषु भूपाल तारतम्येन वर्तते (लक्ष्यते) ॥'**,

---

जीवग्रहणमिति सूचनाय 'लीयेते परमात्मनी'त्युक्तम्। ततश्च लयाधारस्यैव साक्षात् परमात्मनः परमेश्वरत्वादिकं बोध्यते इति 'यस्मिन्परमात्मनि प्रकृतिपुरुषौ लीयेते, स परमात्मा सर्वाधारः, सर्वेश्वरः, (परमेश्वरः) विष्णुनामा, वेदान्तप्रतिपाद्य' इति श्लोकद्वयस्यैकवाक्यतयान्वयः। अत्र परमात्मा सर्वेषामाधारः परमेश्वर इति पदैः नियन्तृत्वधारकत्वशेषित्वरूपं शरीरलक्षणमुपदर्शितम्। नियाम्यत्वधार्यत्वशेषत्वानां शरीरलक्षणत्वात्। **परमत्वविशेषणान्नियन्त्रन्तरादिनिषेधः**।

एवमुपक्रमोपसंहारयोः परमात्मनः उभयलिङ्गत्वप्रतिपादनपरत्वमुक्तम्। अथ तत्र तत्र श्रुता अविद्यासंबन्धादयो न ब्रह्मणः। किन्तु तच्छरीरभूतजीवात्मनामेवेति सूचनार्थं जीवब्रह्मणोः शरीरात्मभावसंबन्धबोधकप्रमाणं तत्रस्थं वचनमुदाहरति - **द्वे रूपे** इति। **मूर्त**शब्दो बद्धपरः। **अमूर्त**शब्दो मुक्तपरः। स च बद्धः ज्ञानसङ्कोचलक्षणक्षरणवान्। मुक्तस्तु अङ्कुचितज्ञानवान्। एतदेवाह **क्षराक्षरस्वरूपे** इति। **सर्वभूतस्थितत्वं** सर्वभूतस्थित्यर्हत्वात्। यद्वा - बद्धस्य सर्वभूतस्थितत्वं स्वरूपेण, मुक्तस्य स्वधर्मभूतज्ञानद्वारेत्यर्थः। अथा**मूर्त**शब्दबोधितमक्षरस्वरूपं किं तत्, मूर्तशब्दबोधितं क्षरस्वरूपञ्च किं इत्यत्राह — **अक्षरमिति**। **परं ब्रह्म** = मूर्तस्वरूपमक्षरमित्यर्थः। 'सोक्षरः परमः स्वराट्' इत्यत्राक्षरशब्दस्य मुक्तवाचिस्वराट्शब्दसामानाधिकरण्येन मुक्तपरत्वदर्शनात्। **सर्वमिदं जगत्** = बद्धस्वरूपं क्षरमित्यर्थः। यद्यपि **जगच्छब्दः** चिदचिदात्मकप्रपञ्चपरः, अथापि क्षरशब्दसामानाधिकरण्यरूपापवादबलात् तस्य बद्धमात्रपरत्वं स्वीकृतम्। अथ 'द्वे रूपे ब्रह्मण' इत्युक्तं रूपत्वमुपपादयति। **एकदेशेति**। अत्र परस्परासङ्कीर्णस्वभावाग्निज्योत्स्नादृष्टान्तोपादानबलेन जीवब्रह्मणोरप्यसङ्कीर्णस्वभावत्वं दर्शितं भवति। **शक्तिः** = कार्योपयोग्यपृथक्सिद्धविशेषणम्। **अखिलं जगत्** = चिदचिदात्मकं जगदित्यर्थः। यद्यपि अक्षरशब्दबोधितस्य मुक्तस्य परब्रह्मशरीरत्वं नोक्तं जगच्छब्देन तदविवक्षणात्। **जगच्छब्दो** हि गच्छति = नश्यतीति व्युत्पत्त्या विनाशिमात्रपरः। अथापि न्यायतौल्यात्तस्यापि ब्रह्मशक्तित्वसिद्धिः। वस्तुतो **जगच्छब्द** एवाचेतनबद्धमुक्तसाधारणः लोकशब्दवत्। अत एव हि त्रिपाद्विभूतिवाचकलोकशब्दसमानार्थकतयापि जगच्छब्दः प्रयुज्यते। तत एव चाखिलशब्दासङ्कोचसिद्धिः। इदंशब्दोऽपि प्रकृतपरामर्शीति क्षराक्षरपरो भवितुमर्हतीति। एवं परब्रह्मशरीरत्वं जीवात्मनामुक्तं भवति। एतेन परब्रह्मणः क्वचिदविद्यान्वयप्रतिपादनमपि सद्वारकमिति ज्ञापितं भवति ॥

अथ जीवात्मनि अविद्यान्वयकण्ठोक्तत्वादपि ब्रह्मण्युक्तोऽविद्यान्वयः सद्वारक इति निश्चीयत इत्यभिप्रयन् जीवात्मन्यविद्यान्वयबोधकवचनमाह — **विष्णुशक्तिरि**ति। विष्णोः शक्तिः नियमनरूपाशक्तिरित्यर्थः। 'शक्तिस्सापि तथा विष्णोरि'ति हि वक्ष्यते। विष्णुरूपा शक्तिरित्यर्थकरणे तु कार्योपयोग्यपृथक्सिद्धविशेषणलक्षणविष्णुरूपशक्तेरपि इतरापृथक्सिद्धत्वं वक्तव्यम्। तच्च प्रमाणविरुद्धम्। **क्षेत्रज्ञाख्या** = बद्धलक्षणेत्यर्थः। **यया** = अविद्यासंज्ञककर्मलक्षण शक्त्या। **सर्वगा** = चतुर्मुखादिसर्वशरीरस्था। **क्षेत्रज्ञशक्तिः वेष्टिता** = कर्मणा सङ्कुचितज्ञानेन वेष्टितेत्यर्थः। यद्यपि बह्वयः क्षेत्रज्ञशक्तयः सर्वशरीरस्थाः न त्वेका ; जीवानां बहुत्वात्, अथापि **सर्वगा क्षेत्रज्ञशक्तिरि**ति जात्येकवचनम्। अथवा - सर्वगत्वं स्वधर्मभूतज्ञानेन सर्वव्यापनार्हत्वम्। **अतिसन्ततान्** = अतिविस्तृतान्, अनन्तानिति यावत्। ननु सर्वेषां जीवानां कर्माख्याविद्ययावेष्टितत्वे अज्ञत्वप्रसङ्ग इत्यत्राह — **तयेति**। तथा च कर्मतारतम्यानुगुणं ज्ञानतारतम्यं क्षेत्रज्ञशक्तेरित्यर्थः। **तारतम्येन वर्तते** इति। 'अप्राणिमत्सु स्वल्पा सा स्थावरेषु ततोऽधिका। सरीसृपेषु तेभ्योऽन्याप्यधिका

(वि.पु.२.७.२९-३१.) **'प्रधानञ्च पुमांश्चैव सर्वभूतात्मभूतया। विष्णुशक्त्या महाबुद्धे वृतौ संश्रयधर्मिणौ ॥ तयोः सैव पृथग्भावकारणं संश्रयस्य च। ...यथा सक्तं जले वातो बिभर्ति कणिकाशतम्। शक्तिः साऽपि तथा विष्णोः प्रधानपुरुषात्मनः ॥'**, (वि.पु.१.२२.६.) **'तदेतदक्षयं (रं) नित्यं जगन्मुनिवराखिलम्। आविर्भावतिरोभावजन्मनाशविकल्पवत् ॥' इत्यादिना परं ब्रह्म स्वभावत एव निरस्तनिखिलदोषगन्धं समस्तकल्याणगुणात्मकं जगदुत्पत्तिस्थितिसंहारान्तःप्रवेशनियमनादिलीलं प्रतिपाद्य, कृत्स्नस्य चिदचिद्वस्तुनः सर्वावस्थावस्थितस्य पारमार्थिकस्यैव, परस्य ब्रह्मणः शरीरतया रूपत्वं शरीररूपतन्वंशशक्तिविभूत्यादिशब्दैः तत्तच्छब्दसामानाधि-**

च पतत्रिषु। पतत्रिभ्यो मृगास्तेभ्यस्तच्छक्त्या पशवोऽधिकाः। पशुभ्यो मनुजाश्चापि शक्त्या पुंसः प्रभाविताः। तेभ्योऽपि नागगन्धर्वयक्षाद्या देवता नृप। शक्रस्समस्त देवेभ्यस्ततश्चापि प्रजापतिः। हिरण्यगर्भश्च ततः पुंसः शक्त्युपलक्षितः' इति ज्ञानतारतम्यं तत्रैव प्रदर्शितम्। यद्यप्यस्मन्मते ज्ञानं नित्यं, मुक्तौ च सर्वविषयकम्, अथापि कर्मकृतसङ्कोचविकासवत्वात्तारतम्यसिद्धिः।

अथ प्रधानपुरुषयोर्नियाम्यत्वरूपं ब्रह्मरूपत्वमित्याह - **प्रधानञ्चेति**। **सर्वभूतात्मभूतया** = सर्वभूतव्यापिकया। **विष्णुशक्त्या** = विष्णुसंबन्धिनियमनशक्त्या। **वृतौ** = व्याप्तौ। संश्रयधर्मिणौ। संश्रयः = भगवदपृथक्स्थितिर्धर्मः ययोः। भगवदपृथक्सिद्धविशेषणौ प्रधानपुरुषौ सर्वभूतव्यापकभूतया विष्णुनियमनशक्त्या व्याप्तावित्यर्थः। **तयोः** = प्रधानपुरुषयोः। **सैव** = विष्णुशक्तिरेव। **पृथग्भावकारणं** = करणकलेबरादिरहितसम्हारकारणमित्यर्थः। संहारदशायां हि प्रधानपुरुषयोरुपकरणत्वोपकरणित्वरूपसम्बन्धविशेषो नास्ति। **संश्रयस्य चेति**। **कारणमित्युपस्कार्यम्**। यद्वा - **कारणमिति** बुद्ध्या विभज्यानुषञ्जनीयम्। **संश्रयः** = सम्बन्धः। सा चोपकरणोपकणिकत्वरूपासृष्टिः। तथा च संहारसृष्ट्योः भगवन्नियमनाधीनत्वमुक्तम्। **यथाऽसक्तं** इति। कृत्स्नचेतनाचेतनवस्तुजातमिति कर्मवाचकपदं सम्योज्यम्। प्रधानपुरुषयोरात्मभूतस्य विष्णोस्संबन्धिनी नियमनशक्तिः समस्तं बिभर्ति, यथा सक्तो वायुः जलेकणिका शतं बिभर्ति। अनेन दृष्टान्तेन प्रकृतिपुरुषसंबन्धिदोषगन्धराहित्यं प्रदर्शितम्। **प्रधानपुरुषात्मन** इति द्वितीयान्तं पदम्। **पुरुष**शब्दः बद्धपरः। **आत्म**शब्दश्च मुक्तात्मपरः। तान् बिभर्तीत्यर्थः।

एवं परमात्मन उभयलिङ्गत्वं कृत्स्नस्य जगतः तद्व्याप्यत्वं परस्य शक्तित्रयवत्वं कर्माख्यशक्त्या क्षेत्रज्ञशक्ते र्वेष्टितत्वमित्यादि प्रतिपाद्य, जगतः पारमार्थिकत्वादिबोधकं वचनमुदाहरति - **तदेतदिति**। तदेतदखिलं जगत् **अक्षयं** नित्यमित्यर्थः। तर्हि जन्मनाशौ न स्यातां इत्यत्राह - **आविर्भावेति**। आविर्भावतिरोभावाख्यजन्मनाशवदित्यर्थः। नित्यस्यैव हि द्रव्यस्यावस्थावत्वादिकमस्मदभिमतम्। अतो उत्पत्तिराविर्भावः नाशश्च तिरोभाव इति न नित्यत्वादिविरोधः। अत्र नित्यत्वाद्युक्त्या पारमार्थिकत्वं सिद्धम्। मिथ्याभूतत्वे बाध्यत्वेनानित्यत्वाद्यावश्यकत्वात्। अथ सविशेषत्वादिसाधनाय स्वोपात्तवचनानां यथावस्थितमर्थं प्रदर्शयति - **इत्यादिनेति**। **आदि**शब्देन 'क्रीडतो बालकस्येवे'त्यादिवचनसङ्ग्रहः। अत एव 'नियमनादिलीलमि'त्युच्यते। अत्रोभयलिङ्गत्वं 'स सर्वभूतप्रकृति'मित्यादिनोक्तम्। **जगदुत्पत्तिस्थितिसंहारान्तःप्रवेशनियमनादिलीलमिति**। 'सम्भर्तेति तथा भर्ते'त्यादिश्लोकोक्तभगवच्छब्दनिर्वचनलब्धोऽयमर्थः। **आदि**पदमध्यक्षत्वानुमन्तृत्वसङ्ग्राहकम्। **सर्वावस्थावस्थितस्य** = कार्यकारणोभयावस्थावस्थितस्य बद्धमुक्तोभयावस्थावस्थितस्य चेत्यर्थः। पारमार्थिकस्यैवेति 'तदेतदक्षयमि'ति श्लोकार्थः। परमात्मनियाम्यत्वाद्युक्ति सिद्धार्थकथनं वा। न हि नियाम्यत्वादिकं प्रमाणान्तरगोचरं येनात्र निषेधार्थमनुवाद इति शङ्क्येत। अतस्तद्विधित्सितमेवात्रेति पारमार्थिकमिति भावः। **शरीरतया रूपत्वमिति**। इदञ्च नियाम्यत्वादिप्रतिपादनात्सिद्धम्। **शरीररूपतन्वंशेति**। 'द्वे रूपे ब्रह्मणस्तस्ये'-त्यादिनोक्तम्। **तत्तच्छब्दसामानाधिकरण्येनेति**। 'तदेव सर्वमेवैतदि'त्यादिनायमर्थः उक्तः। यद्यपि तच्छब्दसामानाधि-

**करण्येन चाभिधाय, तद्विभूतिभूतस्य चिद्वस्तुनस्स्वरूपेणावस्थितिमचिन्मिश्रतया क्षेत्रज्ञरूपेण स्थितिञ्चोक्त्वा, क्षेत्रज्ञावस्थायां पुण्यपापात्मककर्म(स्व)रूपाविद्यावेष्टितत्वेन स्वाभाविकज्ञानरूपात्वाननुसन्धानमचिद्रूपार्थाकारतयाऽनुसन्धानञ्च प्रतिपादितमिति - परं ब्रह्म सविशेषम् ; तद्विभूतिभूतं जगदपि पारमार्थिकमेवेति ज्ञायते ॥**

**'प्रत्यस्तमितभेदम्' इत्यत्र देवमनुष्यादिप्रकृतिपरिणामविशेषसंसृष्टस्याप्यात्मनः स्वरूपं तद्गतभेदरहितत्वेन तद्भेदवाचिदेवादिशब्दागोचरं ज्ञानसत्तैकलक्षणं स्वसंवेद्यं योगयुङ्मनसो न गोचर इत्युच्यत इति, अनेन न प्रपञ्चापलापः । कथमिदमवगम्यत इति चेत्तदुच्यते - अस्मिन्प्रकरणे संसारैकभेषजतया योगम-**

---

करण्येन रूपत्वप्रतिपादनानन्तरमेव शरीरतन्वंशादिभिः रूपत्वप्रतिपादनमित्युदाहृतपुराणवचनक्रमविपर्ययः, अथापि शरीरतन्वादिशब्दानां शरीरत्वसाधकस्फुटप्रमाणत्वाद्भाव्ये क्रमपरित्यागेन तन्वादिशब्दैः रूपत्वप्रतिपादनमादौकृतम् । क्षराक्षरस्वरूपे इत्याद्यर्थमाह - **तद्विभूतिभूतस्येति** । 'अविद्या कर्मसञ्ज्ञान्या' इत्याद्यर्थमाह - **क्षेत्रज्ञावस्थायामिति** । **प्रतिपदितमिति** । शास्त्रोपक्रमोपसंहारयोः अवान्तरप्रकरणोपक्रमोपसंहारयोश्च तथाप्रतिपादित-त्वाद्ब्रह्मणः सविशेषत्वं जगतः सत्यत्वञ्च स्थितमिति भावः ॥

एवं स्मृतिपुराणवचनोदाहरणेन परस्य ब्रह्मणः सविशेषत्वं, तद्विभूतिभूतस्य जगतः पारमार्थिकत्वञ्च निरणायि । अथ निर्विशेषपरत्वेन परोक्तवचनानामपि, उदाहृतवचनानुसारेणार्थं वर्णयितुमुपक्रमते । तत्रादौ तदुदाहृतश्लोकस्यार्थं व्याचष्टे - **प्रत्यस्तमितेति** । प्रकृतिपरिणामविशेषस्यैव देवमनुष्यादिरूपत्वमिति द्योतनायोभयनिर्देशः । एतेन 'दुःखाज्ञानमलाधर्माः प्रकृतेस्ते न चात्मनि' इत्यत्र दुःखादिधर्मवत्वेनोक्तः प्रकृतिशब्दार्थः तत्परिणामभूतदेह एवेति सूचितम् । उक्तञ्च 'शरीराकृतिभेदास्तु भूपैते कर्मयोनयः' इति । **अपि**शब्देनाऽऽत्मस्वरूपस्य माहात्म्यमुक्तम् । आत्मनस्तादृशशरीरसंसृष्टत्वेऽपि पातकिसंसर्गिकृतपातकित्ववत् शरीरगतदोषाणामात्मन्यभावात् । **तद्गतभेदः** = देवत्ववर्णादिः । **एतेन प्रत्यस्तमितभेदमि**त्यत्र निषेध्यस्य भेदस्य शरीरे प्रसिद्धिस्सूचिता । **भेदरहितत्वेने**त्यनेन प्रथमपदस्यार्थो वर्णितः । **रहितत्वेने**त्युक्त्या वचसामगोचरत्वे हेतुबोधकं **प्रत्यस्तमितभेदमि**ति पदमिति द्योतितम् । आत्मस्वरूपे उक्तभेदस्य सर्वथाऽसम्भवद्योतकः **प्रति**शब्दः । अत्र **प्रत्यस्तमितभेदमि**ति शब्दविन्यासेन पूर्वं भेदसत्त्वं, सम्प्रति भेदस्यास्तमय इति शङ्का जायेतेति तद्वारणार्थं संसृष्टस्याप्यात्मनस्स्वरूपं **तद्गतभेदरहितत्वेने**त्युक्तम् । अत**श्चास्तमित**शब्दो न पूर्वसद्भावद्योतकः । परमात्मनि अपहतपाप्मशब्दप्रयोगवदिति भावः । **तद्भेदवाचीत्यादिना वचसामगोचरमि**त्यस्यार्थो वर्णितः । **ज्ञानसत्तैक लक्षणं** = ज्ञानैकलक्षणं, सत्तैकलक्षणमित्यर्थः । **ज्ञानैकलक्षणं** = ज्ञानासाधारणकमित्यर्थः । श्लोके **ज्ञान**शब्दस्तद्गुणसारत्वनयाभिप्रायकः । अन्यथाऽऽ**त्मसंवेद्यमि**त्यनेन पुनरुक्तिप्रसङ्गादात्म संवेद्यत्वरूपस्वयंप्रकाशत्वस्य ज्ञानपदप्रवृत्तिनिमित्वादिति भावः । **सत्तैकलक्षणम**पक्षयादिविकारपञ्चकरहितम् । **योगयुगिति** । उक्तविशेषणविशिष्टस्यात्मस्वरूपस्य **प्रकान्तयोगगोचरत्वमेवे**त्यनेन श्लोकेनोच्यत इति भावः ।

ननूक्तश्लोकस्योक्तरीत्यैवार्थो वर्णनीय इत्यत्र किं नियामकमिति चोद्यमवतार्य परिहरति **कथमिति** । **अस्मिन् प्रकरणेति** । सर्वत्र पूर्वापरप्रकरणपरामर्शेनैव ह्यर्थो वर्णनीयः । अन्यथाऽन्यथार्थप्रतीतिरेव स्यात् । 'पूर्वापरापरामृष्टश्शब्दोऽन्यां कुरुते मतिमि'ति हि न्यायविद इति भावः । **संसारेति** । एकशब्देनान्यस्य संसारभेषजत्वाभाव उक्तः । खाण्डिक्येन 'तं ब्रूहीह महाभाग योगं योगविदुत्तम' इति पृष्टः केशिध्वजः, 'योग स्वरूपं, खाण्डिक्य श्रूयतां गदतो मम' इत्यारभ्य योगं, योगावयवेषु यमनियमासनप्राणायामप्रत्याहरधारणाध्यानेषु बहिरङ्गभूतप्रत्याहारपर्यन्तं योगावयवं चोक्त्वा धारणासिध्यर्थं शुभाश्रय-

**भिधाय, योगावयवान् प्रत्याहारपर्यन्तांश्चोक्त्वा, धारणासिद्ध्यर्थं शुभाश्रयं वक्तुं परस्य ब्रह्मणो विष्णोश्शक्तिशब्दाभिधेयं रूपद्वयं मूर्तामूर्तविभागेन प्रतिपाद्य, तृतीयशक्तिरूपकर्माख्याविद्यावेष्टितमचिद्विशिष्टं क्षेत्रज्ञं मूर्ताख्यविभागं भावनात्रयान्वयादशुभमित्युक्त्वा, द्वितीयस्य कर्माख्याविद्याविरहिणोऽचिद्वियुक्तस्य ज्ञानैकाकारस्यामूर्ताख्यविभागस्य निष्पन्नयोगिध्येयतया, योगयुञ्जनसोऽनालम्बनतया, स्वतश्शुद्धिविरहाच्च शुभाश्रयत्वं प्रतिषिध्य,** परशक्तिरूपमिदममूर्तमपरशक्तिरूपं **क्षेत्रज्ञाख्यमूर्तञ्च परशक्तिरूपस्याऽऽत्मनः क्षेत्रज्ञतापत्तिहेतुभूततृतीयशक्त्याख्यकर्मरूपाविद्या चेत्येतच्छक्तित्रयाश्रयो** भगवदसाधारणम्, **'आदित्यवर्णम्' इत्यादिवेदान्तसिद्धं मूर्तरूपं शुभाश्रय इत्युक्तम्। अत्र परिशुद्धात्मस्वरूपस्य शुभाश्रयतानर्हतां वक्तुं 'प्रत्यस्तमितभेदं यत्' इत्युच्यते।**

**तथा हि -** (वि.पु.६.७.५५.) **'न तद्योगयुजा शक्यं नृप चिन्तयितुं यतः।'**

---

प्रस्तावे 'कथ्यतां मे महाभाग चेतसो यश्शुभाश्रय' इति पुनः पृष्टः तदर्थं 'भूप मूर्तममूर्तञ्च परञ्चापरमेव च। परस्य ब्रह्मण' इति रूपद्वयमभिधाय, 'त्रिविधा भावना भूप विश्वमेतन्निबोधताम्। ब्रह्माख्या कर्मसंज्ञा च तथा चैवोभयात्मिका। कर्मभावात्मिका ह्येका ब्रह्मभावात्मिका परा। उभयात्मिका तथैवान्या त्रिविधाभावभावना। सनन्दनादयो ये तु ब्रह्मभावनया युताः। कर्मभावनया चान्ये देवाद्याः स्थावरावराः। हिरण्यगर्भादिषु च ब्रह्मकर्मात्मिका द्विधा। बोधाधिकारयुक्तेषु विद्यते भावभावना' इत्यचिद्विशिष्टस्य क्षेत्रज्ञस्य यथासम्भवं भावनात्रयान्वयादशुभत्वं प्रतिपाद्याचिद्वियुक्तस्यात्मस्वरूपस्य निष्पन्नयोगिभिरेव ध्यातुं शक्यत्वात्प्रकान्तयोगेन ध्यातुमशक्यमिति शुभाश्रयत्वं नास्तीत्याशयेनामुम्श्लोकमाह। अतः प्रकरणपरामर्शे इदं सुस्पष्टं विज्ञायत इति भावः।

**विष्णोश्शक्तिशब्दाभिधेय**मिति **तृतीयशक्तिरूपकर्माख्याविद्यावेष्टित**मिति च तत्रैवोत्तरत्र वक्ष्यमाणं 'विष्णुशक्तिः परा प्रोक्ता' इत्यारभ्य 'वेष्टिता नृप सर्वगा' इत्यमुमभिप्रेत्योक्तम्। तत्र विष्णुरूपाशक्तिरिति भ्रमनिरासार्थं **विष्णो**रिति भाषितम्। **शक्तिशब्दाभिधेय**मिति। अपृथक्सिद्धविशेषणभूतमित्यर्थः। ब्रह्मणोऽपृथक्सिद्धविशेषणत्वाभावेन न शक्तित्वसम्भवः। 'परस्य ब्रह्मणश्शक्तिः', 'परब्रह्मस्वरूपस्य विष्णोश्शक्तिसमन्वितं', 'शक्तिस्सापि तथा विष्णोः' इत्यादिभि जगतः शक्तित्वबोधनेन ब्रह्मापृथक्सिद्धविशेषणत्वेन च शक्तित्वमुपपन्नमित्याशयः। **रूपद्वयं मूर्तामूर्तविभागेने**ति। 'द्वे रूपे ब्रह्मणस्तस्य मूर्तञ्चामूर्तमेव च', 'भूप मूर्तममूर्तञ्चे'त्यादिकमभिप्रेतम्। **निष्पन्नयोगिध्येयतये**ति। प्रकान्तयोगेन ध्यातुमशक्यत्वादिति भावः।

**स्वतश्शुद्धिविरहात्** = भगवत्प्रसादसापेक्षशुद्धिमत्वात्। औपाधिकदोषनिरासे स्वयमशक्तत्वादिति भावः। **परशक्तिरूपस्यात्मनः** = जीवस्वरूपस्येत्यर्थः, न तु मुक्तस्य। अन्यथा क्षेत्रज्ञतापत्तीत्यनन्वयात्। **भगवदसाधारणमि**त्यनेन भगवदधिष्ठितचतुर्मुखादिशरीरव्यावृत्तिः। तेषां शरीराणां चतुर्मुखादिजीवाभिमानविषयत्वेन भगवदसाधारणत्वासम्भवात्। **शुभाश्रय** इति। शुभत्वं हेयप्रतिभटत्वम्। आश्रयत्वं चित्तालम्बनसुकरत्वम्। उदाहृतश्लोकस्य प्रकरणवशेन न ब्रह्मविषयकत्वं सम्भवतीत्याशयेनाह — **अत्रे**ति। **परिशुद्धात्मस्वरूपस्य** = कर्मविहीनस्यात्मस्वरूपस्य। मुक्तात्मन इति यावत्। ननूक्तश्लोकस्य मुक्तात्मविषयकत्वे '**देवमनुष्यादिप्रकृति परिणामविशेषसंसृष्टस्याप्यात्मन** इति कथं पूर्वं भाषितमिति चेन्न। आत्मस्वरूपस्य प्रकृतिसंसृष्टत्वेऽपि न तद्गतभेदस्यात्मस्वरूपे सम्भवः। एवञ्च सति प्रकृतिवियुक्ते आत्मस्वरूपे किमु वक्तव्यमित्याशयेन तथा भाषितत्वात्। मुक्तात्मविभेदस्यापुनरुदयविनाशसूचनार्थं प्रतीत्युक्तिः। श्लोकार्थः पूर्वमेव व्याख्यातः। एवमुक्ते परिशुद्धात्मस्वरूपस्य प्रक्रान्तयोगिचिन्त्यत्वासम्भवे भगवद्दिव्यमङ्गलविग्रहस्य तत्सम्भवे च तत्रैव विष्णुपुराणे उक्तं श्लोकद्वयं संवादार्थं प्रदर्शयति — **तथा ही**त्यादिना। **योगयुजा** = प्रक्रान्तयोगेन।

'द्वितीयं विष्णुसञ्ज्ञस्य योगिध्येयं महामते (परं पदम्) ।' 'समस्ताः शक्तयश्चैताः नृप यत्र प्रतिष्ठिताः । तद्विश्वरूपवैरूप्यं रूपमन्यद्धरे र्महत् ॥' इति च वदति ।

तथा चतुर्मुखसनकसनन्दनादीनां जगदन्तर्वर्तिनामविद्यावेष्टितत्वेन शुभाश्रयतानर्हतामुक्त्वा, बद्धानामेव पश्चाद्योगेनोद्भूतबोधानां स्वस्वरूपापन्नानाञ्च स्वतश्शुद्धिविरहाद्भगवता शौनकेन शुभाश्रयता निषिद्धा, 'आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः । प्राणिनः कर्मजनितसंसारवशवर्तिनः ॥ यतस्ततो न ते ध्याने ध्यानिनामुपकारकाः । अविद्यान्तर्गताः सर्वे ते हि संसारगोचराः ॥ पश्चादुद्भूतबोधाश्च ध्याने नैवोपकारकाः । नैसर्गिको न वै बोधस्तेषामप्यन्यतो यतः ।' (भविष्य.वि.ध.१०४.२३-२६) । 'तस्मात्तदमलं ब्रह्म निसर्गादेव बोधवत् ॥' इत्यादिना परस्य ब्रह्मणो विष्णोस्स्वरूपं स्वासाधारणमेव शुभाश्रय इत्युक्तम् । अतोऽत्र न भेदापलापः प्रतीयते ।

'ज्ञानस्वरूपम्' इत्यत्रापि ज्ञानव्यतिरिक्तस्यार्थजातस्य कृत्स्नस्य न मिथ्यात्वं प्रतिपाद्यते ; ज्ञानस्वरूपस्याऽऽत्मनो देवमनुष्याद्यर्थाकारेणावभासो भ्रान्तिरित्येतावन्मात्रवचनात् । न हि शुक्तिकाया रजततयाऽ-

---

**विष्णुसञ्ज्ञस्य द्वितीयम्** विष्णोः शक्त्यात्मकं मूर्तरूपम् । **योगिध्येयं** = निष्पन्नयोगिध्येयम् । यतः परिशुद्धात्मस्वरूपं निष्पन्नयोगिन एव ध्यातुं योग्यम् । अतस्तत् न प्रक्रान्तयोगेन ध्यातुं शक्यमिति भावः । **अन्यत्** = योगयुजापि ध्यातुं शक्यमित्यर्थः । **महदि**त्यनेन विभुत्वमुक्तम् ॥

एवं चतुर्मुखसनकसनन्दसनत्कुमारसनत्सुजातादीनां बद्धानां पश्चादवाप्तस्वरूपाणाञ्च परिशुद्धात्मनाञ्च शुभाश्रयत्वं नास्तीति कण्ठरवेण शौनकेनोक्तमित्याह - **तथे**ति । **अविद्यावेष्टितत्वेने**ति शुभाश्रयत्वानर्हतायां हेतुः । 'पश्चादुद्भूतबोधानां योगेन स्वस्वरूपापन्नानामि'त्यन्वयः । पूर्वत्र शुभत्वं नास्ति । उत्तरत्र त्वाश्रयत्वमिति विवेकः । **आब्रह्मे**ति व्यस्तं पदम् । **स्तम्ब**शब्दः तृणविशेषवाची कीटविशेषवाची वा । **कर्मजनिते**त्यादिस्वरूपकीर्तनम् । **उपकारका** इति । ध्यानस्य सविषयकत्वेन तत्र स्वात्मकविषयप्रदानद्वारा नोपकारकत्वमिति भावः । **यत अविद्यान्तर्गताः ततस्ते नोपकारका** इत्यन्वयः । 'सर्वे ते' इत्यादिकं, तेषामविद्यावेष्टितत्वासिद्धिपरिहारकम् । **संसारगोचराः** संसारवन्तः । **नैसर्गिकः** = स्वाभाविकः । ननु जीवात्मनामपि बोधस्स्वाभाविक एव । 'यथा न क्रियते ज्योत्स्नेत्या'त्यादिकं ह्युच्यते इत्यताह - **तेषामप्यन्यत** इति । तेषां ज्ञानस्य स्वाभाविकत्वेऽपि औपाधिकदोषनिरासे स्वयमशक्तत्वेन भगवत्प्रसादसापेक्षत्वमस्तीत्यभिप्रायः । **तस्मान्नैवोपकारका** इत्यन्वयः । नन्वेवं तर्हि कस्य शुभाश्रयत्वसम्भव इत्यत्राह - **तदि**ति । **तत्** = 'आदित्यवर्णमि'त्यादिषु प्रसिद्धमित्यर्थः । 'अमलमि'त्यनेन शुभत्वमुक्तम् । 'निसर्गादेवे'त्यनेन स्वतश्शुद्धिविरहो नास्तीति सूचितम् । **बोधवत्** = तादात्म्येन बोधाश्रयः । अनेनाश्रयत्वं फलितम् । **इत्यादिने**ति । अस्य **निषिद्धे**त्यनेनान्वयः । **तदमलमि**त्यनेनोक्तमर्थं विवृणोति - **परस्ये**ति । **स्वरूपं** = दिव्यमङ्गलविग्रहः । **स्वासाधारणमि**त्यस्य पूर्ववत्प्रयोजनमनुसन्धेयम् । **एवकारो**ऽन्यस्य शुभाश्रयत्वं प्रतिषेधति । यद्वा - **एवकारः** अप्यर्थकः । **इत्यप्युक्तमि**त्यन्वयः । एवमुपपादनात् न 'प्रत्यस्तमितभेदमि'ति श्लोकस्य भेदनिषेधपरत्वमित्युपसंहरति - **अत** इति । अत्र श्लोके **ब्रह्मसंज्ञितमि**त्यस्य ब्रह्मशब्दत्वमित्यर्थः । परिशुद्धात्मस्वरूपस्य ब्रह्मशब्दवाच्यत्वञ्च ब्रह्मण इव श्लोकोक्तप्रत्यस्तमितभेदत्वादीनां सत्त्वात् ॥

एवं परोदाहृतस्य 'ज्ञानस्वरूपमि'तिश्लोकस्यापि नार्थबाधकत्वमित्यभिप्रायेणाह - **ज्ञाने**ति । अर्थस्य मिथ्यात्वे हि बाध्यत्वसम्भवः, तदेव नास्तीत्याह - **ज्ञानव्यतिरिक्तस्ये**ति । ननु ज्ञानरूपस्यात्मनः देवाद्यर्थाकारेण प्रतिभासनात् तादृशप्रतिभासस्य भ्रान्तित्वेन तद्विषयस्य मिथ्यात्वमङ्गीकार्यमेवेत्यत्राह - **ज्ञानस्वरूपस्ये**ति । अर्थभासस्य भ्रान्तिरूपत्वेऽपि नार्थस्य मिथ्यात्वमित्येतदुदाहरणेन व्यनक्ति - **न हीति** । ननु दृष्टान्तो विषमः विपरीतार्थसाधकश्चेत्याशयेन

**वभासो** भ्रान्तिरित्युक्ते, **जगति** कृत्स्नं रजतजातं **मिथ्या भवति ।** जगद्ब्रह्मणोः सामानाधिकरण्येनैक्यप्रतीतेः, **ब्रह्मणो ज्ञानस्वरू**पस्यार्थाकारता भ्रान्तिरित्युक्ते **सति** अर्थजातस्य कृत्स्नस्य **मिथ्यात्वमुक्तं स्यादिति चेत् - तदसत्; अस्मिन् शास्त्रे परस्य ब्रह्मणो** [illegible]-**त्मकस्य महाविभूतेः** प्रतिपन्नतया **तस्य** भ्रान्तिदर्शित्वासम्भवात् । सामानाधिकरण्येनैक्यप्रतिपादनञ्च [illegible] । अतोऽयमपि **श्लोको नार्थस्वरूपस्य बाधकः । तथा हि -** [illegible] **'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्** प्रयन्त्यभिसंविशन्ति, **तद्विजिज्ञासस्व तद्ब्रह्म' इति** जगज्जन्मादिकारणं ब्रह्मेत्यवगमिते **सति, 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।** बिभेत्यल्प-

---

शङ्कते - जगदिति । अयं भावः - न हि शुक्तिशकलस्य कृत्स्नरजताकारेण प्रतीतिः, येन कृत्स्नस्यापि रजतस्य मिथ्यात्व-माशङ्कितुं शक्यम् । अत्र तु कृत्स्न[illegible] मिथ्यात्वमवर्जनीयम् । अतो विषमो दृष्टान्तः । एवं शुक्तौ यद्रजताकारेण प्रतीतिः तद्रजतस्य मिथ्यात्वं सर्वसम्मतम् । अत्र च जगद्ब्रह्मणोस्सामानाधिकरण्यात् ज्ञानरूपब्रह्मणः कृत्स्नार्थाकारेण प्रतीत्या तद्विषयस्य कृत्स्नस्याप्यर्थस्य मिथ्यात्वमभ्युपेत्यमेवेति । ज्ञानाकारस्यार्थाकारता भ्रान्तिरिति [illegible] नार्थस्य मिथ्यात्वसम्भव [illegible] जगद्ब्रह्मणोस्सामानाधिकरण्येनैक्यप्रतीते-रित्युक्तम् । [illegible] - तदसदिति । प्रथमतो ब्रह्मणः भ्रान्तिदर्शनमेवानुपपन्नम् । अन्यथा पूर्वापरप्रबन्धविरोध इत्याशयेनाह - अस्मिन्निति । 'ज्योतींषि विष्णुरि'त्याद्युक्तं सामानाधिकरण्यमप्यन्यथैवोपपद्यत इत्याह - **सामानाधिकर-ण्येनेति** । [illegible] । प्रवृत्तिनिमित्तभेद एव सामानाधिकरण्यसम्भवादाकारद्वयस्यावश्यमङ्गीकार्यतयाऽन्यतरविरोधे सामानाधिकरण्यभङ्ग[illegible] च न सामानाधिकरण्यस्य बाधसापेक्षत्वसम्भव इति भावः । **अविरुद्धमिति** । आकारद्वया-ङ्गीकारेण [illegible] विशेष्यस्यैक्येनाविरुद्धत्वसम्भव इति भावः । उक्तश्लोकस्यार्थ-[illegible] - **अत इति** ।

[illegible] - **तथा हीति** । 'यतो वा' इत्यादि-श्रुत्यर्थः [illegible] इति **जगज्जन्मादिकारणं ब्रह्मेत्यवगमिते सतीति** । अनेन श्रुतवेदान्तेनैवोपबृंहण-स्य कर्तव्यत्वं सूचितम् । [illegible] इतिहासपुराणाभ्यामुपबृंहणं कार्यमित्ययमर्थः **'इतिहास...मामयं प्रतरिष्यती'ति शास्त्रेण विज्ञायत** इत्यन्वयः । [illegible] श्रुतार्थविशदीकरणरूपत्वेन श्रवणानन्तर्यलाभात् श्रुत्वोपबृम्हणं कार्यमित्यर्थः । अनेन [illegible] इति मत्वा **ब्रह्मेत्यवगमिते सति...कार्यमिति विज्ञायत** इति भाषितम् । वेदोपबृम्हणभूतानां धर्मशास्त्रेतिहास-पुराणानां मध्ये धर्मशास्त्राणां कर्मप्रतिपादकवेदपूर्वभागोपबृंहणरूपत्वादितिहासपुराणानां ब्रह्मप्रतिपादकवेदोत्तरभागो-पबृंहणरूपत्वात् [illegible] इतिहासपुराणाभ्यामित्युक्तम् । पुराणशब्दस्य [illegible] पुराणादपि इतिहासस्याभ्यर्हितत्वेन तद्वाचकशब्दस्य पूर्वनिपातः । वेदशब्दो वेदान्तपरः ।

अत्र स्वाध्यायाध्ययनमनुतिष्ठतः फलवदर्थापातप्रतीतेः कर्मविचारे तदनन्तरं ब्रह्मविचारे च रागात्प्रवृत्तिवच्छ्रुतार्थ-विशदीकरणरूपोपबृम्हणेऽपि रागादेव प्रवृत्तिरुपपद्यते । नानाशाखाप्रतिपाद्यस्य वाक्यार्थस्य स्वाधीताल्पभागश्रवणमात्रे-णापातप्रतीतिमता निर्णेतुमशक्यत्वात् । अत उपबृंहणविधिर्व्यर्थः । न चास्य वेदानामानन्त्यमेवानवगतम् । स्वाधीतभागे तु विचारकरणेनार्थनिर्णय इति कथमुपबृम्हणस्य कार्यत्वनिर्णय इति वाच्यम् । स्वाधीयमानशाखायामेव 'अनन्ता वै वेदा' इति मन्त्रेण तेनैव वेदानन्त्यावगमात् । अत एव 'स्मृतेश्च', 'अपि स्मर्यते' इत्यादौ वेदान्तार्थनिर्णयस्योपबृंहणसापेक्ष-त्वमुच्यते । अतोऽपि ब्रह्मविचारकर्तुः उपबृम्हणकर्तव्यताध्ययननिश्चिता । अतस्साङ्गवेदाध्ययनानन्तरं क्रमेण कर्मब्रह्मविचारयोः प्रवृत्तिः, ततः पूर्वभागोपबृंहणरूपधर्मशास्त्रश्रवणम्, अनन्तरमुत्तरभागोपबृम्हणरूपेतिहासपुराणश्रवणमिति रागादेव प्रवृत्तिरि-त्याभिप्रायेणोपबृम्हणं कार्यमिति विज्ञायते इत्युक्तं, न तूपबृंहणं विधीयत इति । 'समुपबृम्हयेदि'ति तु [illegible] न्याय-

**श्रुताद्वेदो मामयं प्रतरिष्यति ॥'** (भा. आदि.१.२७५) **इति शास्त्रेणार्थस्य इतिहासपुराणाभ्यामुपबृंहणं कार्यमिति विज्ञायते। उपबृंहणं नाम - विदितसकलवेदतदर्थानां स्वयोगमहिमसाक्षात्कृतवेदतत्त्वार्थानां वाक्यैः स्वावगत-वेदवाक्यार्थव्यक्ती करणम्। सकलशाखागतस्य वाक्यार्थस्याल्पभागश्रवणाद्दुरवगमत्वेन तेन विना निश्चया-योगादुपबृंहणं हि कार्यमेव।**

---

सिद्धोपबृम्हणापेक्षितत्वानुवादरूपमिति न दोषः। अथोपबृम्हणस्यावश्यकर्तव्यत्वानुगुणव्याप्तिप्रदर्शनार्थं प्रथममुप-बृम्हणस्वरूपं प्रदर्शयति - **उपबृंहणमिति**। **नामेति** प्रसिद्धौ। **विदितसकलवेदतदर्थानामित्यनेन** परोक्षज्ञानमुक्तम्। सकलवेदतदर्थयोरविदितत्वे हि तद्वाक्यैः श्रुतवेदान्तस्यानधीतशाखार्थैस्सहाधीतशाखार्थनिष्कर्षरूपव्यक्तीकरणन्न स्यात्। **स्वयोगेत्यनेनापरोक्षज्ञानमुक्तम्**। कपिलादिभ्योपि प्राबल्यसूचनार्थो बहुवचननिर्देशः। 'इतरेषां चानुपलब्धेरि'ति हि सूत्रम्। **वाक्यैरित्यनेन इतिहासपुराणाभ्यां** इति व्याख्यातम्।

ननु वेदान्तार्थरूपब्रह्मविचारेणैव निष्कृष्टत्वान्नोपबृंहणस्यावश्यकतेत्यत्राह - **सकलशाखा गतस्येति**। अयं भावः - सकलशाखाप्रतिपाद्यो हि वाक्यार्थः, स च नाल्पशाखाश्रवणमात्रेणाल्पभगविचाररूपब्रह्मविचारेण वा न सुखावागमः। अतो विदितसकलशाखार्थानां वाक्यैरेव सकलशाखाप्रतिपाद्यवाक्यार्थनिर्णय इत्यधीतशाखान्तरार्थेन सहानधीतशाखार्थनिष्क-र्षरूपोपबृंहणं कार्यमिति। वस्तुतः 'इतिहासपुराणाभ्यां वेदं समुपबृम्हयेदि'ति उपबृम्हणमेव विधीयते। न च रागतः प्राप्त-त्वेन कथं विधानमिति शङ्कितुं शक्यम्। समन्वयाध्यायेन विरोधपरिहाराध्यायेनैव च तत्त्वस्थितेर्निर्णीतत्वेन रागात्प्र-वृत्ते र्दुरूपपादत्वात्। न च वेदानन्त्येनार्थविरोधसम्भावनया प्रवृत्तिः सुशका। वस्तुनि विरोधाकारासम्भवात्। वेदैकदेशस्य स्वाधीतवेदप्रतिपादितार्थविरुद्धार्थप्रतिपादकत्वे श्रुतेः भ्रान्तिजल्पितायमानत्वापत्तेश्च। न च विरूद्धार्थसम्भावनाया अभावेऽपि ब्रह्मणोऽनन्तगुणविभुतिविशिष्टत्वेन स्वाधीयमानश्रुतिषु तावदर्थनिर्णयासम्भवादवगतगुणविभूत्यादि-विशेषार्थनिर्णयाय रागादुपबृंहणे प्रवृत्तिरिति नियन्तुं शक्यम्। तावताप्युपबृम्हणसहस्रैरपि ब्रह्मणि गुणविभूत्यादीयत्ताप्रति-पादनासम्भवेन प्रवृत्तेर्निष्फलत्वापत्तेः। एतेन पुरुषार्थाभिलाषिणः तत्सिद्ध्युपपत्त्यै सकलगुणविशिष्टब्रह्मोपासनायोपबृम्हणे स्वमेव प्रवर्तते इत्यपि निरस्तम्। कतिपयगुणविशिष्टोपासनेनैव पुरुषार्थसिध्युपपत्तेः। अतस्तत्त्वस्थितेः निश्चितत्वात्पुरु-षार्थोपयुक्तगुणविशिष्टज्ञानस्य सिद्धत्वाच्चोपबृम्हणमनपेक्षितमिति तत्छ्रवणनिरपेक्षं प्रति 'उपबृम्हयेदि'ति विधीयत इति।

नन्वेवं सत्युपबृम्हणविधेः किं प्रयोजनम्। उपयुक्तज्ञानस्य सूत्रादिनैव निष्कृष्टत्वात्। न चादृष्टं प्रयोजनम्। 'मामयं प्रतरिष्यती'ति दृष्टप्रयोजनस्य कण्ठोक्तत्वेन तदुपेक्षाऽयोगात्। न च तदेव वेदप्रतारणनिवृत्तिरूपं दृष्टं प्रयोजनम-स्त्विति शङ्क्यं, तत्त्वविपर्यासाद्यसम्भवस्य पूर्वमेवोपपादितत्वेन प्रतरणासम्भवादिति चेत्, सत्यम्। यथा च 'अहल्यायै जारा' इत्यादिषु अह्नि लीयतेत्यहल्या - रात्रिः। तस्या जाराः - जरणहेतुः - सूर्यः इत्याद्यर्थ एव स्वीक्रियते। न तु शब्द-योग्येन प्रतीयमानोप्यहल्यादिवृत्तान्तो विवक्षितो मीमम्सकैः। तद्वत्, वेदान्तभागेष्वपि नारायणपरब्रह्मादिशब्दप्रतिपन्नेषु देवताविशेषरूपार्थेष्वप्यविवक्षितत्वमेवेति कस्यचिन्मन्दधियः शङ्का स्यात्। तदा चाश्रुतोपबृम्हणत्वेन वेदप्रतारणमेवानेन कृतमिति तन्निवृत्त्यर्थं 'वेदं समुपबृम्हयेदि'ति विधिरिति नावद्यं किञ्चित्।

अथैवमप्युपबृंहणविधेः पुराणमध्यगतत्वेनान्योन्याश्रयः। उपबृंहणरूपपुराणप्रवृत्तौ उपबृंहणस्य कर्तव्यत्वज्ञानम्। तस्मिन्सति तत्प्रवृत्तिरिति। मैवम्। उपबृम्हणस्यावश्यकर्तव्यत्वबोधकवचनाभिज्ञशिष्टजनज्ञवादेन तादृशशिष्टस्वपितृ-गुर्वादिवचनेनोपबृंहणप्रवृत्तपुरुषान्तरदर्शनेन वा स्वस्याप्युपबृंहणकर्तव्यत्वज्ञानसम्भवेन तत्प्रवृत्तेरन्योन्याश्रयाभावात्। एवमेव 'स्वाध्यायोऽध्येतव्यः' इत्यस्य स्वाध्यायान्तर्भावेऽपि अन्योन्याश्रयः परिह्रियते। अन्यथाऽध्ययनाद्विध्यवगमः, विध्यवगमादध्ययनमित्यन्योन्याश्रयः दुष्परिहरस्स्यात्। अतोऽत्रापि तत्परिहारगमनिकैव सुशोभनेति ध्येयम्।

**तत्र पुलस्त्यवसिष्ठवरप्रदानलब्धपरदेवतापारमार्थ्यज्ञानवतो भगवतः पराशरात्**

अथैवं रीत्या उपबृम्हणस्यावश्यकर्तव्यत्वज्ञानसम्भवेनोपबृम्हणमित्छोः मैत्रोयस्य प्रश्नप्रकारमाह - तत्रेति। विष्णु-नारद-भागवत-गारुड-पाद्म-वाराह-पुराणानि षड् सात्त्विकपुराणानि। ब्रह्माण्ड-ब्रह्मवैवर्तक-मार्कण्डेय-भविष्यत्-वामन-ब्राह्म-पुराणानि षट् राजसपुराणानि। मात्स्य-कौर्म-लैङ्ग-शैव-स्कान्द-आग्नेयपुराणानि तामसपुराणानि। आहत्याष्टदश पुराणानि। एतेषु सात्त्विकपुराणानामेव च मुख्यत्वम्। 'सात्त्विकेषु तु कल्पेषु माहात्म्यमधिकं हरेः। तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिम्' इत्युक्तेः। 'नारायणं परं यानि वदन्ति जगदीश्वरम्। तानि सर्वाणि शास्त्राणि सात्त्विकानि मतानि वै। चतुर्मुखं कृशानुश्च तथा देवीं सरस्वतीम्। परत्वेन वदेच्छास्त्रं राजसं सम्प्रचक्षते। मल्लिङ्गदुर्गविघ्नेशकुमारप्रमुखान्सुरान्। प्रशंसन्ति च यच्छास्त्रं तत्तामसमुदाहृतम्। तामसं दुर्गतिं दत्ते राजसं स्वर्गदं भवेत्। सात्त्विकं मोक्षसाम्राज्यधौरन्धर्यं ददात्यहो' इत्यादिभिर्भगवतो वासुदेवस्यैव सत्त्वमूर्तित्वम्, अन्येषां रजस्तमोभिभूतत्वं, नारायणपरत्ववादिपुराणानामेव प्राबल्यं सात्त्विकत्वम्, अन्येषां दौर्बल्यं राजसत्वतामसत्त्वादि च प्रतिपादितम्। अतो वैष्णवपुराणस्य प्रामाण्यमधिकं, पुराणेषु वैष्णवमिति च प्रसिद्धेः। न च राजसतामसपुराणानां तत एवाप्रमाणत्वे तदुक्तवचनानामप्यप्रामाण्यतया उदाहृत-वचनैः कथं सात्त्विकपुराणस्य प्रमाणत्वं, येन त्वदभिमतसिद्धिः शङ्क्येतेति वाच्यम्। रजस्तमोमूलकपुराणानामप्रामाण्स्य तत्स्थवचनानामपि तत एवाप्रामाण्यस्येष्टत्वेपि विधिशिवलिङ्गदुर्गादिष्वभिमानेनाग्राहवतामपि पुराणानां तेषामेव पर-देवतात्वोत्कर्षादिकथन एव प्रवृत्तेरावश्यकतया तद्विहाय भगवत्प्रकर्षोक्तेः प्रतिवादिहस्तात् पत्रिकास्वीकारस्येव सात्त्विक-पुराणानां प्रामाण्यस्य सिद्धिः। स्वस्ववस्तुप्रतिपादन एव हि वक्तुराग्रहातिशय आवश्यकः। नान्यत्रः। एवं सति तद्विहाय भगवत एव परत्वेक्तिः अत्यन्तानुकूला हि वादिनाम्। परस्परविरुद्धार्थप्रतिपाद-कत्वमपि तेषामप्रामाण्ये हेतुः।

सात्त्विकपुराणे तत्रापि विष्णुपुराणे न व्याघातोक्तिः। अपि चैतत्पुराणकर्तुर्देवतापारमार्थ्यज्ञानवेदित्वमपि हेतुरत्यन्त-प्रामाण्ये। पराशरो हि स्वपितुः शक्तेः राक्षसमूलहननश्रवणेन क्रुद्धः अराक्षसयागे प्रवृत्तः। तमपि साम्ना पुलस्त्यो निवारया-मास। सत्त्वगुणेन प्रतिबुद्धो झटिति यागं कर्तुं नैच्छत्। तेन प्रीतः पुलस्त्यः 'देवतापारामार्थ्यं च यथावद्वेत्स्यते भवान्' इत्यन्वग्रहीत्। तदैव समागतो वसिष्ठोपि 'पुलस्त्येन यदुक्तं ते सत्यमेतद्भविष्यति' इत्यनुमोदनं चकार। एवं पुलस्त्य-वसिष्ठवरप्रदानलब्धदेवतापारमार्थ्यज्ञानवता विरचितेऽस्मिन्पुराणे न दोषगन्धप्रसक्तिः। 'यथा श्रीमद्रामायणकर्तुः नारद-चतुर्मुखोभयानुग्रहभाक्त्वमिति तत्प्रणीतरामायणस्य सर्वदा सर्वथा सकललोकमान्यस्य प्रामाण्यम्। अत एव यामुनार्या अपि विष्णुपुराणस्य तत्कर्तुश्च सर्वप्रकारेण, 'तत्त्वेन यश्चिदचिदीश्वरतत्स्वभावभोगापवर्गतदुपायगतीरुदारः। सन्दर्शयन् निरमिमीत पुराणरत्नं तस्मै नमो मुनिवराय पराशराय' इति प्रशस्तिं प्रतिपादयामासुः। अपि चैतत्पुराणपठनेनैव सत्त्व-विवृद्धिः, इतरत्र वैराग्यं मोक्षेऽभिलाषश्चेति हेतोरपि प्रामाण्यं सुप्रतिष्ठम्। अत एव कस्याश्चित् स्वैरिण्याः पराशरशब्द-श्रवणमात्रेणैव ज्ञानोदयः पुराणपठनेन वैराग्यपूर्वकं मोक्षलाभश्चोक्तः॥

'पठति पराशरशब्दं सोपि युवा सरसकाव्यदुर्ललितः। अहो कालस्य गतिः वयमपि निजम्पतिं गमिताः।'

अत्र श्रुतप्रकाशिका - अन्यपर-उक्तिप्रसिद्धपरिग्रहातिशयं चेदमिति। अत्र भावप्रकाशिका - इदं चासत्काव्य-प्रलापप्रवणस्योपपत्तौ कालविशेषे विष्णुपुराणपाठने बद्धादरतामात्मनश्च स्वैरविहारनिवृत्तिश्च स्मृत्वा विस्मितायाः कस्याश्चिद्वचनम्। अतोऽन्यार्थप्रवृत्तत्वमस्येति द्रष्टव्यम्। ननु पराशरपुराणेपि पराशरशब्दशब्दो भवत्येव। तत्रचामूलाग्रं शिवपारम्यमेव प्रदर्श्यत इति चेन्न, तस्मिन् विष्णुपुराण इव परशरशब्दशब्दप्रसिध्यभावेन श्लोकस्थ पराशरशब्दशब्देन विष्णुपुराणस्यैव विवक्षितत्वादिति भाव इति।

अपि च पुराणस्यास्योत्कृष्टत्वे हेतुरन्योपि। स्कान्दादि पुराणेषु 'स्कन्दमाहात्म्यमुच्यतां', 'लिङ्गमहात्म्यमुच्यतामि'-

**स्वावगतवेदार्थोपबृंहणमिच्छन्मैत्रेयः परिपप्रच्छ** - (वि.पु.१.१.४,५.) **'सोऽहमिच्छामि धर्मज्ञ श्रोतुं त्वत्तो यथा जगत्। बभूव भूयश्च यथा महाभाग भविष्यति ॥ यन्मयश्च जगद्ब्रह्मन् यतश्चैतच्चराचरम्। लीनमासीद्यथा यत्र लयमेष्यति यत्र च ॥'** इत्यादिना ।

**अत्र ब्रह्मस्वरूपविशेषतद्विभूतिभेदप्रकारतदाराधनस्वरूपफलविशेषाश्च पृष्टाः । ब्रह्मस्वरूपविशेषप्रश्नेषु, यतश्चैतच्चराचरमिति निमित्तोपादानयोः पृष्टत्वात् 'यन्मयमि'त्यनेन सृष्टिस्थितिलयकर्मभूतं जगत् किमात्मकमिति पृष्टम् । तस्य चोत्तरम्, 'जगच्च स' इति । इदश्च तादात्म्यमन्तर्यामिरूपेणाऽऽत्मतया**

---

त्यादिविशेषप्रश्नः। प्रश्नकर्तुरभिप्रायेण तत्तन्माहात्म्यस्यैव वक्तव्यतेति तत्र तत्र तत्तन्महिमा प्रोक्तः। अत्र तु न तथा। विष्णुमाहात्म्यमुच्यतामिति न विशेषप्रश्नः। सामान्यप्रश्ने कृते विशेषे उत्तरिते सति कस्य वा प्रामाण्यमिति निश्चेतुं शक्यम्। यथा रामायणे सामान्यप्रश्नः रामविशेषे समाधानम्। तत्र हि 'कोऽन्वस्मिन्साम्प्रतं लोके' इति सामान्यप्रश्नः। उत्तरन्तु देवताविशेषे रामे। एवमेवात्रेति भाव्यम्। एतदेवोपपादयति - **स्वावगतेति**। अनेनास्य पुराणस्योपबृंहणत्वं सूचितम्। सोऽहमित्यादिश्लोके न विशेषप्रश्नः। स्वस्य पराशरनिकट एव सर्वविद्यास्वप्यधिकृतत्वमिति विशेषज्ञप्त्यै, सोऽहमिति आत्मानं निर्दिदेश। शिष्यपुत्रवैलक्षण्यप्रदर्शनं नाचार्यस्येति ज्ञप्त्यै 'धर्मज्ञ' इति सम्बोधनं कृतम्। पुत्रापेक्षयापि शिष्ये आदरातिशयसूचनं महतः आचार्यस्य। यथा द्रोणाचार्यः स्वपुत्रापेक्षया स्वशिष्ये अर्जुने बहुमतिमानासीत्। अत एव हि ब्रह्मास्त्रप्रयोगतदुपसंहारादिमन्त्रमर्जुनायोपादिशत्। पुत्रस्य तूपसंहारमन्त्रं नोपदिदेश। अस्य कारणमानृशंस्यरूपधर्मवत्ताज्ञानमिति। आनृशंस्यं परो धर्म इति श्रीमद्रामायणम्।

यद्वा महाभाग इत्यादिनाऽयमर्थ उक्तः। शिष्यसंरक्षणस्यैव आचार्यपूर्णकृत्यत्वात्। कृपया निरस्पृहो वदेदिति प्रतीकारानपेक्षयोपदेशस्याचार्यकृत्यत्वात्। 'बभूव, भूयश्च भविष्यति' इत्यनेन सर्वसृष्टीनामेकप्रकारत्वम्, अनादिप्रवाहत्वञ्च सूचितम्। यथा बभूव, यथा भविष्यति इत्यत्रापि यत इति सम्योज्यम्। यतो बभूव, यतो भविष्यति इति प्रश्ने कालभेदेन कारणवस्तुनोऽपि किं भेद इति प्रश्नतात्पर्यम्। अन्तराधिकरणोक्तपूर्वपक्षोपि सूचितो भवति। यथा बभूव यथा भविष्यति इति प्रश्ने सर्गभेदेन उपादानकारणभेदोपि किं स्यात् इति तात्पर्यम्। वृश्चिकस्य हि गोमयात् अन्यस्माच्चोत्पत्ति र्दृश्यते। यन्मयमिति स्वारसिकार्थरूपप्राचुर्ये मयटः श्रवणात् यत्प्रचुरं जगत् इति प्रश्नः। अत उत्तरत्र वक्ष्यमाणविष्णुप्रचुरत्वलाभात् स्वरूपतः प्राचुर्यस्य वक्तुमशक्यत्वादन्तर्यामिरूपेणैव वक्तव्यत्वं सिध्यति। अनेनात्मतया व्याप्तेर्वक्तव्यतयाऽऽत्मत्वस्य धारकत्वरूपत्वात् सत्तानुवृत्तिलक्षणस्थितिप्रश्नश्च फलितः। यतश्चैतेच्चराचरमित्युक्त्या निमित्तत्वमुपादानत्वञ्च प्रश्नस्य विषयः। यतो वा इमानि भूतानीत्यत्रेव। बभूव, भविष्यति इति प्रश्न इव यत्र लीनमासीत् यत्र लयमेष्यति इति प्रश्नः।

अत्र ब्रह्मस्वरूपेति — मैत्रेयेण सच्छिष्येण पृष्टा इमे - १. जगतः पूर्वस्थितिः, २. पश्चाद्भवनप्रकारः, ३. कस्मात् जगदुत्पत्तिः, ४. जगतो मूलकारणं किम्, ५. कथमस्य स्थितिः, ६. कुत्र लयः, ७. पूर्वं कुत्र प्रलीनं, ८. पञ्चमहाभूतपरिणामेयत्ता, ९. देवजननम्, १०. समुद्रस्थितिः ११. पर्वतस्थितिः १२. सूर्याद्याकार सन्निवेशः १२. देववंशः १३. मन्वादिकालः १४. महाकल्पः १५. चतुर्मुखस्य कल्पावकल्पाः, १६. युगचतुष्टयं, १७. प्रलयस्वरूपं, १८. युगधर्माः, १९. देवर्षीणां राजर्षीणाञ्च चरित्रं, २० व्यासवृत्तवेदविभागः, २१. वर्णाश्रमधर्माः इत्यादयः। अत्रेमे विवक्षिताः। एते सर्वेऽपि सकलश्रुतिषु, इतिहासेषु, पुराणेषु च प्रतिपाद्याः। अत्रापेक्षितप्रश्नश्लोकस्य भावं विवृणोति - **यतश्चैतच्चराचरमिति। सृष्टिस्थितिलयकर्मभूतं जगदिति**। जगतः सृष्टिस्थितिलयकर्मत्वं नोच्यते विरोधात्। जगतः खलु सृष्टिस्थितिलयाः। अतस्तैः कर्तृव्यापारकर्मभूतं जगत् इत्यर्थः। यद्वा कर्मत्वं विषयत्वं जगत्सृष्ट्यदिविषयत्वं जगतः॥ **तस्य चोत्तरं जगच्च स** इति। यतो वा इमानि इत्यादिश्रुतिसरूपमिदं प्रश्नवाक्यम्। अत उभयोरैकार्थ्यं प्रतीयते, जगच्च स इति समाधाने च

**व्याप्तिकृतम् ; न तु व्याप्यव्यापकयोर्वस्त्वैक्यकृतम्; यन्मयमिति प्रश्नस्योत्तरत्वात् जगच्च स इति सामानाधिकरण्यस्य । यन्मयमिति मयडत्र न विकारार्थः; पृथक्प्रश्नवैयर्थ्यात् । नापि प्राणमयादिवत्स्वार्थिकः, जगच्च स इत्युत्तरानुपपत्तेः । तदा हि, विष्णुरेवेत्युत्तरमभविष्यत् । अतः प्राचुर्यार्थ एव ।** (अष्टा.५.४.२१) **'तत्प्रकृतवचने मयट्' इति मयट् । कृत्स्नश्च जगत्तच्छरीरतया तत्प्रचुरमेव । तस्माद्यन्मयमित्यस्य प्रतिवचनं जगच्च स इति सामानाधिकरण्यं जगद्ब्रह्मणोः शरीरात्मभावनिबन्धनमिति निश्चीयते । अन्यथा निर्विशेषवस्तुप्रतिपादनपरे शास्त्रेऽभ्युपगम्यमाने, सर्वाण्येतानि प्रश्नप्रतिवचनानि न सङ्गच्छन्ते ; तद्विवरणरूपं कृत्स्नश्च शास्त्रं न सङ्गच्छते । तथा हि सति, प्रपञ्चभ्रमस्य किमधिष्ठानमित्येवंरूपस्यैकस्य प्रश्नस्य निर्विशेषज्ञानमात्रमित्येवंरूपमेकमेवोत्तरं स्यात् । जगद्ब्रह्मणोरेकद्रव्यत्वपरे च सामानाधिकरण्ये, सत्यसङ्कल्पत्वादिकल्याणगुणैकतानता निखिलहेयप्रत्यनीकता च बाध्येत; सर्वाशुभास्पदश्च ब्रह्म भवेत् । आत्मशरीरभाव एवेदं सामानाधिकरण्यं मुख्यवृत्तमिति स्थाप्यते ॥**

---

तच्छब्दवाच्यस्य ब्रह्मणो जगदात्मकत्वं प्रतीतम् । समाधानानुसारेण च प्रश्नार्थो ज्ञातव्यः । जगतो ब्रह्मणश्च सामानाधिकरण्यबोधनात्स्वरूपे तदसम्भवादन्तर्यामितयाऽऽत्मशरीरभावमादाय सामानाधिकरण्यमुक्तं भवति । **न तु व्याप्येति** । अन्तः प्रविष्टश्शास्ता जनानामिति नियन्तुर्व्यापकत्वं नियाम्यस्य च व्याप्यत्वं बोधितम् । कथमनयोस्स्वरूपतादात्म्यसम्भवः । मयटः विकारार्थत्वासम्भवे हेतुमाह **वैयर्थ्यादिति** । मृण्मयमित्यादिवद्विकारार्थत्वे उपादानप्रश्नः स्यात् । यत इति पञ्चम्यन्तपदेनोपादानस्य पृष्टत्वात् यन्मयमिति प्रश्नो नोपादानकारणविषयकः । **उत्तरानुपपत्तेरिति** । स्वार्थिकत्वपक्षे, ब्रह्माज्ञानादिवादिमते जगद्यत्स्वरूपमिति प्रश्ने विष्णुरेव जगदिति वक्तव्यम् । जगच्च सः इत्युत्तरपरामर्शो वस्तुद्वयसद्भावप्रतीतिर्विरूध्येत । यत्स्वरूपमित्यस्य जगत् सत्यं वा मिथ्या वेति प्रश्नरूपत्वे मिथ्यैव जगदिति उत्तरं वाच्यम् । न च तदस्ति । न च चोरः स्थाणुरित्यादिवज्जगच्च सः इति सामानाधिकरण्यं बाधार्थं स्यादिति वाच्यं, व्याहतत्वात् । सामानाधिकरण्यमित्युक्तिमात्रेण वस्तुद्वयलाभात्तत्र कस्यचिद्बाध इति कथनस्यैवानुपपन्नत्वात् ।

**तत्प्रकृतेति** - प्रकर्षेण कृतं प्रकृतं, प्रचुरमिति यावत् । प्रकृत्यर्थस्य प्रचुरतया वचने प्रकृत्यर्थेन प्रचुरमिति वचने वा मयडिति सूत्रार्थः । यत्प्रचुरमित्यर्थः । अनेन स्थितिप्रश्नः । अस्य समाधाने जगद्धारकत्वं ब्रह्मण उक्तं स्यात् । 'यस्य चेतनस्य' इत्यादि शरीरलक्षणपर्यालोचने नियमेन जगद्धारकत्वस्य ब्रह्मणि लाभात् । शरीरात्मभावेनान्तर्यामितया धारकत्वोक्तेर्भगवतो जगदन्तर्यामित्वं सिद्धम् । तथा च **जगच्च सः** = सः परमात्मा जगदन्तर्यामी चेत्यर्थः । शेषत्वादीनां त्रयाणां शरीरलक्षणत्वात् । नियताधारत्वस्य ब्रह्मणि लाभे शेषित्वनियन्तृत्वादीनामपि लाभः स्वत एव सिध्यति । **निश्चीयत** इति । तथा च प्रत्ययवैयर्थ्यापत्त्या न स्वार्थिकत्वम् । जगच्च सः इति भिन्नार्थवाचित्वेन सामाधिकरण्यरूपोत्तरवचनाच्च । अन्यथा न जगत्, किं तु स एव इत्येवोत्तरयितव्यत्वात् । अद्वैतिमते मयडर्थस्यास्वारस्यं सामानाधिकरण्यानुपपत्तिश्च । जगद्ब्रह्मणोरैक्यस्वीकारमते अर्थविरोधः प्रश्नानुगुणोत्तरवचनानुपपत्तिश्च । अन्यथा 'निर्विशेषवस्तु' इत्यादिना अद्वैतमतनिरासः । जगद्ब्रह्मण इत्यादिना भास्करपक्षदूषणम् । अत्रापि पूर्वोक्त 'अन्यथा' इत्यस्यानुषङ्गः । **मुख्यवृत्तमिति** । लक्षणादिकं विना लोकव्यवहारानुगुण्येनेति भावः । **स्थाप्यते** - उत्तरत्र ।

'यन्मयं जगत् ब्रह्मन्' इति प्रश्नस्योत्तरं विष्णोस्सकाशादिति । अत्र सङ्ग्रहेण समाधानमुक्तम् । उपरि 'परः पराणाम्' इत्यारभ्य विस्तरेण च वक्ष्यति । मध्ये अभीष्ट नमस्कारः क्रियते । 'अविकाराय शुद्धाय नित्याय परमात्मने । सदैकरूपरूपाय विष्णवे सर्वजिष्णवे' इतीदं नित्यसिद्धस्वासाधारणविग्रहविशिष्टवासुदेवविषयकम् । अविकारपदमचेतनव्यावर्तकम् । शुद्धपदं क्षेत्रज्ञव्यावर्तकम् । शुद्धिश्च क्लेशकर्मादिराहित्यम् । नित्यपदं मुक्तव्यावर्तकम् । नित्यशुद्धे मुक्तेष्वभावात् ।

नित्यसूरिव्यावर्तकं परमात्मपदम्। परो यस्मान्नास्ति सः परमः। नित्यसूरिषु न परमत्वम्। तेषां परमात्मना परवत्वात्। अपराधीनत्वस्य तेष्वसम्भवात्। नियन्तृतया सर्वस्य व्यापनात्स एव परम आत्मा। अनेन सर्वव्यावृत्तपरमात्मस्वरूपमुक्तं भवति। 'सदैकरूपरूपाय' इति अस्य सर्वविलक्षणस्वानुरूपज्योतिमर्यदिव्यमङ्गलविग्रहवत्ता प्रतिपाद्यते। 'आदित्यवर्णं', 'हिरण्मयः पुरुषो दृश्यते'। 'विद्युतः पुरुषादधि' 'दिवो ज्योतिर्दीप्यते' इत्याद्युपनिषत्सु चेदं प्रसिद्धम्। अत्र प्रथमो रूपशब्दः स्वभाववाची। द्वितीयरूपशब्दो विग्रहवाची। तस्य विग्रहः सर्वदा एकस्वभावविशिष्टः। सर्वव्याप्तिलक्षणमैश्वरं गुणं ख्यापयति - विष्णवे इति विशेष्यवाचिना। विषु व्याप्तौ इति सर्वव्यापित्वे तत्प्रयुक्तदोषभाक्त्वं स्यादिति शङ्कापरिहाराय सर्वजिष्णवे इत्युक्तम्। सर्ववस्तूनां स्ववशे स्थापनमेव जयः। अतस्तद्गतदोषाणां स्वस्मिन्नसम्भवकरणमर्थसिद्धम्।

'नमो हिरण्यगर्भाय हरये शङ्कराय च। वासुदेवाय ताराय सर्गस्थित्यन्तकारिणे' इत्येतन्मनसि निधाय 'तमेव हिरण्यगर्भस्वावतारशङ्कररूपत्रिमूर्तिं' इति भाषितम्। **ताराय** = संसारोत्तारकाय, मोक्षप्रदाय इति यावत्। अत्र हरेः अवतारत्वज्ञापनार्थं हरिशब्दवासुदेवशब्दोपादनम्। हिरण्यगर्भादेरिव हरे र्विभूतित्वं तु नास्ति। तस्य हरेः साक्षादवताररूपत्वात्। 'न हि पालनसामर्थ्यमृते सर्वेश्वरं हरिम्' इति प्रमाणात्। यद्यपि 'रक्षार्थं सर्वभूतानां विष्णुत्वमुपजग्मिवान्' इति विष्णोरेव मध्येऽवतारः। तथापि स एवात्र हरिशब्दवाच्यः, पूर्वश्लोके विष्णव इति पदं व्यापित्वबोधकं, न त्ववतारपरम्। 'एकानेकस्वरूपाय स्थूलसूक्ष्मात्मने नमः। अव्यक्तव्यक्तरूपाय विष्णवे मुक्तिहेतवे' इति पद्यं मनसि निधाय प्रधानरूपेणावस्थितमित्युक्तम्। कारणदशायामेकसूक्ष्माव्यक्तत्वादिकं कार्यदशायाम् अनेकस्थूलाव्यक्तत्वादिकम्।

'सर्गस्थितिविनाशानां जगतो यो जगन्मयः। मूलभूतो नमस्तस्मै विष्णवे परमात्मने' इति श्लोकपरामर्शेन कालरूपेणावस्थितमित्युक्तम्। अत्र भगवतोऽव्यक्तशरीरकत्वमिव कालशरीरकत्वमुक्तम्। कालस्य जगत्सर्गादिमूलभूतत्वम्। 'न कालेन विना ब्रह्मा सृष्टिनिष्पादकृद्भवेत्' इति प्रमाणसिद्धम्। न च चतुर्मुखस्य स्वसृष्टौ कालापेक्षा सम्भवेपि भगवत्सृष्टौ न कालापेक्षेति वाच्यम्। भगवतोपि चतुर्मुखद्वारैव सकलपदार्थसृष्टिकरणात्। प्रलयकालेऽपि 'हन्ताहमिमास्तिस्त्रोदेवता' इति कर्मसम्बद्धजीवानां कर्मपरिपाककालपरिगणनपूर्वकमेव प्रकृत्यादे र्महदादिसृष्टिं करोति। कर्मपरिपाकाभावे सृष्टेरभावात्। कर्मणां परिपक्वदशा च कालविशेष एव। अन्यथा सर्वदा सृष्टिर्वा असृष्टिर्वा स्यात्। अयन्त्वकर्मवश्य इति द्योतनाय परमात्मन इत्युक्तम्। उन्मेषनिमेषकलोन्मानसूर्यगमनादिना पदार्थव्यवच्छेदकरूपः परमः। अत एव जगन्मयः। स्वस्य तु न कालवश्यत्वं कर्मवश्यत्वमिव। 'कालः पचति भूतानि सर्वाण्येव सहात्मना।' 'कालः पक्वो यमन्वेति यस्तं वेद स वेदवित्।' 'कलामुहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुः' इत्युक्तत्वात्॥

'आधारभूतं विश्वस्याप्यणीयांसमणीयसाम्। प्रणम्य सर्वभूतस्थमच्युतं पुरुषोत्तमम्।' इति श्लोकं मनसि निधाय क्षेत्रज्ञसमष्टिरूपेणावस्थितमिति भाषितम्। मूलप्रकृतितो महदाद्यवस्थारूपस्योत्पत्तिः विश्वोत्पत्तिश्च जीवकर्ममूलिकेति विश्वस्य समष्टिपुरुष आधारभूतः। 'भूतामात्राः प्रज्ञामात्रास्वर्पिताः' 'ययेदं धार्यते जगदि'त्युक्तेः। प्रकृतेरतिसूक्ष्मावस्थाविशेषाणामपि व्याप्त्या ततोपि सूक्ष्मतरम्। 'अव्यक्तमक्षरे लीयते' इति प्रमाणात्। सर्वभूतेष्वात्मतयाऽवस्थितम्। अच्युतम् = अचेतनविकाररहितम्। एवंरूपसमष्टिपुरुषशरीरकं पुरुषोत्तमं प्रणम्य कथयामीत्यर्थः। 'ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः। तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्' इतीदं व्यष्टिरूपेणावस्थितपुरुषोत्तमनमस्कारविषयकमित्याशयवान् व्यष्टिरूपेणावस्थितमित्याह। वस्तुगत्या जीवोऽपरिच्छिन्नानुकूलज्ञानैकस्वरूपवानेव। सर्वप्रकारेण मलरूपदुःखाज्ञानादिरहितः। अनात्मन्यात्मज्ञानरूपाविद्यया देवमनुष्यादिपिण्डमात्रतया प्रतिभासते। तथा च परमात्मा, वस्तुतोऽपरिच्छिन्नानन्दजीवस्वरूपशरीरकोऽविद्यया स्वशरीर एवात्माभिमानयुक्तजीवशरीरकश्च। एवं स्थितं पूर्वोक्तप्रकारविशिष्टश्च परमात्मानं प्रणम्य कथयामीति प्रघट्टार्थः। उपरि च "विष्णुं ग्रसिष्णुं विश्वस्य स्थितौ सर्गे तथा प्रभुम्। प्रणम्य जगतामीशमजमक्षरमव्ययम्। कथयामि यथापूर्वम्" इत्युपरितनग्रन्थाः। अतोऽत्र 'भ्रान्तिदर्शनत' इत्युक्त-

अतो (वि.१.१.३१.) **'विष्णोस्सकाशादुद्भूतं जगत्तत्रैव च स्थितम् । स्थितिसम्यमकर्ताऽसौ जगतोऽस्य जगच्च सः ॥' इति सङ्ग्रहेणोक्तमर्थं, 'परः पराणाम्' इत्यारभ्य विस्तरेण वक्तुं परब्रह्मभूतं भगवन्तं विष्णुं स्वेनैव रूपेणावस्थितम्, 'अविकाराय' इति श्लोकेन प्रथमं प्रणम्य, तमेव हिरयगर्भस्वावतारशङ्कररूपत्रिमूर्ति-प्रधान-काल-क्षेत्रज्ञसमष्टि-व्यष्टिरूपेणावस्थितश्च नमस्करोति । तत्र, 'ज्ञानस्वरूपम्' इत्ययं श्लोकः क्षेत्रज्ञ-व्यष्ट्यात्मनाऽवस्थितस्य परमात्मनः स्वभावमाह । तस्मान्नात्र निर्विशेषवस्तुप्रतीतिः ॥**

**यदि निर्विशेषज्ञानरूपब्रह्माधिष्ठानभ्रमप्रतिपादनपरं शास्त्रम्, तर्हि -** (वि.१.३.१.) **'निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः । कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यत ॥' इति चोद्यम्,** (श्लो.३.१.२,३.)**'शक्तयस्सर्व-भावानामचिन्त्यज्ञानगोचराः । यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ॥ भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णता ।' इति परिहारश्च न घटते । तथा हि सति - 'निर्गुणस्य ब्रह्मणः कथं सर्गादिकर्तृत्वम्', 'न ब्रह्मणः पारमार्थिकः सर्गः ; अपि तु भ्रान्तिपरिकल्पितः' इति चोद्यपरिहारौ स्याताम् । उत्पत्त्यादिकार्यं सत्त्वादिगुणयुक्तापरिपूर्णकर्मवश्येषु दृष्टमिति सत्त्वादिगुणरहितस्य परिपूर्णस्याकर्मवश्यस्य कर्मसम्बन्धानर्हस्य**

---

भ्रान्ति र्न परमात्मन्युक्ता । परन्तु तच्छरीरभूते जीवात्मनि । एवं सर्वशरीरकं परमात्मानं प्रणम्य कथयामीत्युक्तम् । अन्यथा साक्षादेव परमात्मन्यन्वये पूर्वश्लोकप्रतिपन्नानामपि परमात्मन्येव वक्तव्यतया पररूपस्यैव व्यक्ताव्यक्तस्वरूपत्वं काल-स्वरूपत्वमित्यादि प्रसजेत् । 'अश्मादिवच्च तदनुपपत्ति'रिति सूत्रविरुद्धंचेदम् । अतो नात्र ब्रह्मण्यधिष्ठाने भ्रमाज्जगदुत्पत्ति-रुच्यते । विष्णोस्सकाशादुद्भूतमि'ति पूर्वश्लोकोक्तार्थविरोधाच्च । **विष्णोः सकाशात्** - विष्णुत इत्यर्थः । पञ्चमीतात्पर्येण सकाशादित्युक्तम् । अनेन विष्णोः कारणत्वमुपादानत्वरूपं सिध्यतिः, मृदः सकाशात् घट इत्यादाविव । यद्वा सकाशादि-त्यस्य सङ्कल्पादित्यर्थः । काशृ = दीप्तौ । प्रकाशः = सङ्कल्प इत्यर्थः अनेन निमितत्वमप्युक्तम् । एतद्विस्तररूपाणां 'परः पराणा'मित्यादीनामपि भवन्मते विरुद्धतैव ।

ब्रह्माज्ञानवादिमतस्यात्र प्रकरणे उपरि प्रकरणेच सर्वात्मनाऽसम्भवं चोद्यमुखेन उत्थाप्योपपादयति - **यदीति** । अत्र 'सर्गाद्या भावशक्तय' इति सविशेषत्वस्यैव प्रतिपादनान्न निर्विशेषत्वमिति भावः । अद्वैतपक्षावलम्बनं यदि स्यात्तदा चोद्यपरिहारावन्यादृशौ स्यातामित्याह - **तथा हि सतीति** । भवन्मते वा कथं चोद्यपरिहारयोरुपपत्तिरित्यत्र भावं प्रदर्शयति - **उत्पत्त्यादीति** । निर्गुणस्येति श्लोकोक्तार्थप्रदर्शनं 'सत्त्वादिगुणरहितस्ये'त्यादिना । एतद्विपरीताकारप्रदर्शनं **सत्त्वादि-गुणयुक्तेत्यादि** । अयं चोद्यस्य भावः - सृष्ट्यादिकर्तृत्वं यत्र, तत्र गुणत्रयवश्यत्वसापेक्षत्वकर्माधीनफलभाक्त्वकर्मसम्ब-न्धार्हत्वमिति व्याप्तिसत्त्वात् व्यापकीभूतगुणवश्यत्वादीनामभावेन परमात्मनि व्याप्यस्य सृष्ट्यादिकर्तृत्वस्याप्यभावः स्यादिति । परिहारस्यायं भावः - एवं विरोधप्रसञ्जनमनुपपन्नम् । धर्मिग्राहकप्रमाणविरोधात् । अग्निरनुष्णो द्रव्यत्वादित्युक्तौ को दोष? यत्र यत्र द्रव्यत्वं तत्र तत्रानुष्णत्वस्य विद्यमानत्वात् । न हि पक्षान्तर्भाविण व्यभिचार आपादयितुं शक्यः, सन्दिग्ध-साध्यत्वेन तस्य पक्षत्वात्, धर्मिग्राहकश्रुतिबाधः । अतो लोकविसजातीये धर्मिणि ब्रह्मणि लोकविसजातीयधर्माणां सम्भवोपपत्तेः । जलगतधर्माणामग्नौ अग्निगत धर्माणाश्च जलेऽभावमात्रेण तत्तद्धर्माणामप्रसक्तिः नापादयितुं शक्या, एकैकपदार्थस्याप्येकैकस्वभावत्वात् । 'आत्मनि चैवं विचित्राश्च हि' इति सूत्रे इदं व्यक्तीभविष्यति ।

यद्यपि वैद्युताग्निरप्यग्निरेव । न हि सः लोकदृष्टाग्निरिव जलेन निर्वाप्यो भवति । घटो न घटत्ववान् द्रव्यत्वादिति घटव्यतिरिक्तेद्रव्ये सर्वत्र घटत्वाभावस्य दृष्टे घटेपि घटत्वाभावः साधयितुं शक्यत एव । एवं सर्वत्रानुमानप्रसक्तौ सर्व-स्यापि तज्जायीतीयत्वमपगच्छेदेवेति लोकमर्यादाविप्लवप्रसङ्ग इति । श्लोके **ब्रह्मणो भाव शक्तय** इति । अत्र भावेति

**कथं सर्गादिकर्तृत्वमभ्युपगम्यत इति चोद्यम् ; दृष्टसकलविसजातीयस्य ब्रह्मणो यथोदितस्वभावस्यैव, जलादिविसजातीयस्याग्न्यादेरौष्ण्यादिशक्तियोगवत्, सर्वशक्तियोगो न विरुध्यत इति परिहारः ।**

**'परमार्थस्तवमेवैक' इत्याद्यपि न कृत्स्नस्यापारमार्थ्यं वदति ; अपि तु कृत्स्नस्य तदात्मकतया तद्व्यतिरेकेणावस्थितस्यापारमार्थ्यम् । तदेवोपपादयति** - (वि.१.४.३८.) **'तवैष महिमा येन व्याप्तमेतच्चराचरम्' इति । येन त्वयेदं चराचरं व्याप्तम्, अतस्त्वदात्मकमेवेदं सर्वमिति त्वदन्यः कोऽपि नास्ति । अतः सर्वात्मतया त्वमेवैकः परमार्थः । अत इदमुच्यते - तवैष महिमा, या सर्वव्याप्तिः - इति । अन्यथा तवैषा भ्रान्तिरिति वक्तव्यम् । जगतः पते, त्वमित्यादीनां पदानां लक्षणा च स्यात् । लीलया महीमुद्धरतो भगवतो महावराहस्य स्तुतिप्रकरणविरोधश्च ॥**

---

पदमधिकम् । ब्रह्मणः शक्तय इत्येतावतैवार्थसिद्धेः । अतो भावशब्दो ब्रह्मपरः । ब्रह्मणो ब्रह्मशक्तय इति फलितम् । अत्रापि वस्तुवाचकभावशब्दो ब्रह्मवाचकः । न च पौनरुक्त्यं शङ्क्यम् । ब्रह्मतादात्म्यमितिवत्परिहारात् । ब्रह्म तादात्म्य-मित्यत्र तादात्म्यशब्दैकदेशे तच्छब्दार्थे ब्रह्मशब्दार्थस्यान्वयवदत्राप्यन्वेतुं शक्यात्वात् । यद्वा भावशब्दः स्वभावपरः । अनेन ब्रह्मगतकर्तृत्वादिशक्तीनां स्वाभाविकत्वमुक्तं भवति । 'स्वाभाविकी ज्ञानबलक्रिया च' इत्यादिवत् । तत्रापि - 'पराऽस्य शक्ति र्विविधैव श्रूयते स्वाभाविकी' इत्युक्तमनुसन्धेयम् । **घटस्य भावः** = घटत्वम् । असाधारणधर्म इत्यर्थः । भावाश्च ताः शक्तयश्चः । असाधारणधर्मभूताः स्वाभाविकाः । एतेन परमात्मगतकर्तृत्वादिशक्तीनां स्वाभाविकत्वमेव । न त्वविद्यादिकल्पितत्वमित्युक्तं भवति । अथवा **भावाः** = अभावभिन्नाः व्यावृत्तिरूपा न भवन्तीत्यर्थः । यथाऽद्वैतिमतेऽसत्यव्यावृत्तिः सत्यपदवाच्येति तस्या ब्रह्मस्वरूपत्वमिष्यते तथाऽत्रोक्तानां शक्तीनामप्यभावरूपतां स्वीकृत्य तासां ब्रह्मस्वरूपत्वमेवेति शङ्काप्यनेन व्युदास्ता । सर्वस्याप्यभावरूपत्वाङ्गीकारेण ब्रह्मभिन्नत्वाच्छक्त्यादिरूपविशेषवत्वं नात्र प्रतिपाद्यमिति शङ्कापि व्युदस्ता ॥

**परमार्थ** इति । सर्वमपि 'चराचरव्यापाश्रयस्तु' इति न्यायेन ब्रह्मपर्यन्तम् । सर्वैश्च वेदैरहमेव वेद्य इत्युक्तेश्च समस्त-चिदचित्प्रकारं ब्रह्म एकमेव । **तत्त्वमिति** । परमार्थस्त्वमेवैक इत्युक्तम् । अत्र परम अर्थ इति पदद्वयसमभिव्याहारोऽप्यमुमर्थं बोधयति । अर्थस्य परमत्वबोधनात्परो मा यस्येति व्युपत्त्या चेतनाचेतनशरीरकादन्यस्याविद्यमानत्वोक्तेः । इममर्थमेव व्यतिरेकमुखेन प्रतिपादयति - **नान्योस्तीति** । जगतःपते इति जगत्पतित्वमुक्तम् । अनेन सर्वस्य शेषत्वादि, तेन सर्वस्य वस्तुनः परमात्मानं प्रति शरीरत्वं, तेन च नियन्तृत्वं सिद्ध्यति । आकाशस्य ''येन व्याप्त''मित्युक्तव्यापित्वसत्त्वेपि न नियन्तृत्वम् । राज्ञो नियन्तृत्वेपि न व्याप्तत्वम् । अन्तःप्रविष्टः शास्ता इत्युक्तान्तःप्रवेशविशिष्टनियन्तृत्वं न कस्यापि । अर्थ इति शब्दस्वारस्यश्चास्माकमेव । यदि च परमार्थशब्दस्य मिथ्यावाचित्वं तदापि नाभिमतार्थसिद्धिः । **जगतःपते** = जगच्छरीकस्त्वमेकएव सत्यः । अन्यत् मिथ्या इत्यर्थो वर्णनीयः । एतेन शरीरभूतस्य जगतो मिथ्यात्वं नोक्तं भवति । नृपभूपतिशब्देन सम्बोध्य, भूपते ! त्वदन्यो नास्तीत्युक्ते, नहि भूम्या अपि नास्तित्वं प्रतीयेत । शरीरात्मभावं विना स्वतन्त्रस्यान्यस्य वस्तुन एवः निषेधः सिध्येत् । यद्वा श्लोकगत एकशब्दः प्राधान्यपरः । त्वमेक एव प्रधान इत्युक्त्या त्वद्भिन्नानामप्राधान्यमुक्तं भवति । न चैकशब्दस्य प्राधान्यवाचित्वं कथमिति वाच्यम् । त्वमेक एव शूर इत्युक्तौ अन्येषां शौर्येऽप्राधान्यं स्वत एव सिद्धमिति अस्य प्राधान्यलाभः ।

ननु 'एकात् आकिनिच्चासहाये' इति सूत्रेण एकशब्दात् असहायरूपार्थे आकिनिच् कन् वा प्रत्ययो विहितः । तस्य च लुक् । एकाकी, एककः, एक इति रूपत्रयम् । सङ्ख्यावाचकत्वमिवासहायतारूपार्थोप्यनेन सिध्यति । प्रधानत्व-

**यतः कृत्स्नं जगज्ज्ञानात्मना त्वयाऽऽत्मतया व्याप्तत्वेन तव मूर्तम्, तस्मात् त्वदात्मकत्वानुभवसाधन-योगविरहिण एतत्केवलदेवमनुष्यादिरूपमिति भ्रान्तिज्ञानेन पश्यन्तीत्याह, 'यदेतद्दृश्यते' इति ॥**

**न केवलं वस्तुतस्त्वदात्मकं जगद्देवमनुष्याद्यात्मकमिति दर्शनमेव भ्रमः, ज्ञानाकाराणामात्मनां देवम-नुष्याद्यर्थाकारत्वदर्शनमपि भ्रम इत्याह, 'ज्ञानस्वरूपमखिलम्' इति ॥ ये पुनर्बुद्धिमन्तो ज्ञानस्वरूपात्मविदः सर्वस्य भगवदात्मकत्वानुभवसाधनयोगयोग्यपरिशुद्धमनसश्च, ते देवमनुष्यादिप्रकृतिपरिणामविशेषशरीर-रूपमिदमखिलं जगच्छरीरातिरिक्तज्ञानस्वरूपात्मकं त्वच्छरीरश्च पश्यन्तीत्याह, 'ये तु ज्ञानविद' इति । अन्यथा श्लोकानां पौनरुक्त्यं पदानां लक्षणा, अर्थविरोधः, प्रकरणविरोधः, शास्त्रतात्पर्यविरोधश्च ॥**

---

रूपार्थो नोक्त इति चेत् - असहाय इतीदमेव सहायव्यवच्छेदमिव प्राधान्यादिकमपि व्यवच्छिनत्ति । असहायशूर इत्युक्तौ सहायं विना कार्यकरणे प्रधान इति ह्यर्थः । अतोऽन्यस्य सहायतामिवान्यस्य प्रधानत्वमपि निवारयति । अतस्त्वमेव प्रधान इति वचनभङ्ग्या त्वदितरस्याप्रधानत्वं बोध्यते, न त्वन्यस्य मिथ्यात्वम् । येन व्याप्तमित्युक्तिरपि चराचरसद्भावं तत्र भगवद्व्याप्तिश्च दृढयति न त्वसत्यतां वदति । सर्वव्याप्ते र्महिमात्वमेव बोधयति । सर्वव्याप्तिः भ्रान्तिरिति नोक्तम् । व्याप्तमित्येषः तव महिमेत्यर्थः ।

यदेतद्दृश्यत इत्यस्य भावमाह - **यतः कृत्स्नमिति** । पूर्वं देवोऽहं स्थूलोऽहमिति प्रत्यक्षसिद्धदेहात्मभ्रमः शास्त्रेण निवारितः, तथा स्वतन्त्रात्मभ्रमोऽपि निवार्यते । ज्ञानस्वरूपत्वदात्मकं सर्वं जगत् । त्वया सर्वं व्याप्तम् । तत एव मूर्तिमत् । इदश्च तदात्मकत्वानुसन्धानरूपसाधनवत एव ज्ञातुं शक्यम् । साधनाभाववान् अहं स्वतन्त्रः, न भगवदात्मक इत्येव जानीयात् । इदश्च ज्ञानं भ्रान्त्या इत्ययमर्थोऽत्रोपपाद्यते । केवलदेवमनुष्यादीति केवलशब्देनाऽयमर्थः सूचितः । भगवदात्मकत्वज्ञाने सति हि ममापि परमात्मा आत्मा = व्यापक इति ज्ञानमुदियात् । तेन च स्वस्य शेषत्वज्ञानसम्भवः । अस्याभावे स्वतन्त्रत्वज्ञानमेव तस्येति भावः ॥

**न केवलमिति** - अत्र श्लोके जगच्छब्दस्चेतनपरः । ज्ञानस्वरूपमिति विशेषणबलात् । 'त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् । मोहितं नाभिजानाती'त्यत्र यथा जगच्छब्दः । ज्ञानस्वरूपस्यात्मनो जडरूपार्थस्वरूपतादर्शनं भ्रम इत्युक्तं भवति । तस्यार्थस्वरूपस्य तथादर्शने वा ज्ञानरूपस्य ज्ञानरूपतादर्शने वा न भ्रमः । अनेन देहात्मभ्रम उक्तः । आत्मनामेव देहातिरिक्तत्वज्ञानं यस्य नास्ति तस्य कथं परमात्मपारतन्त्रय(शेषत्व)बुद्धिः ।

**ये पुनरिति** पूर्वश्लोकोक्तार्थविलक्षणार्थप्रतिपादकोऽयं श्लोकः । पूर्वत्र अबुद्धयः । अत्र बुद्धिमन्तः । अस्य विवरणं ज्ञानस्वरूपात्मविद इति । शुद्धचेतस इत्यस्य विवरणं भगवदात्मकत्व .... परिशुद्धमनस इति । पूर्वश्लोके जगच्छब्दो जीवपरः । अत्राचेतनपरः । देवमनुष्यादिप्रकृतिपरिणामेत्यादिकं हेतुगर्भविशेषणं ज्ञानस्वरूपत्वात्मस्वरूपत्वाद्यसम्भवात् । श्लोके **त्वद्रूप** इत्यस्यार्थः त्वच्छरीरमिति । ज्ञानस्वरूपं त्वद्रूपमिति निर्देशात् चकारोऽध्याहृतः । ननु जगतोऽचेतनस्य भगवच्छरीरत्वोकि र्युक्ता । ज्ञानस्वरूपत्वोक्तिः कथं, तस्य जडत्वादिति चेत्तदर्थमेव ज्ञानस्वरूपात्मक इत्यर्थो वर्णितः । तथा चाचेतनं ज्ञानस्वरूपजीवात्मात्मकं जीवात्मशरीरमित्यर्थः । तथा च जीवशरीरकं परमात्मशरीरकश्चेत्युक्तं भवति । एतेन जीवशरीरभूतमस्मदीयं साक्षादपि परमात्मशरीरमित्यर्थलाभः । **अन्यथेति** बाधकमाह । अर्थविरोधः प्रत्यक्षादि-प्रमाणसिद्धस्यार्थस्यासत्त्वं न भवति । तथा सति प्रमाणविरोधः । प्रकरणविरोधः । रोमान्तरस्था मुनयः स्तुवन्ति इति प्रकरणविरोधः । **शास्त्रतात्पर्यविरोधः** - उपक्रमोपसंहारादि विरोधः ॥

एतावता परोक्तश्लोकचतुष्टयार्थविवरणं तन्मतनिरासपुरस्सरं कृतम् । अथ आदिभरतचतुश्लोक्यास्तत्र तत्रोक्तायाः

**'तस्यात्मपरदेहेषु सतोऽप्येकमयम्' इत्यत्र, सर्वेष्वात्मसु ज्ञानैकाकारतया समानेषु सत्सु देवमनुष्यादि-प्रकृतिपरिणामविशेषरूपपिण्डसंसर्गकृतमात्मसु देवाद्याकारेण द्वैतदर्शनमतथ्यमित्युच्यते। पिण्डगतमात्मगत-मपि द्वैतं न प्रतिषिध्यते। देवमनुष्यादिविविधविचित्रपिण्डेषु वर्तमानं सर्वमात्मवस्तु सममित्यर्थः। यथोक्तं भगवता,** (गी.५.१.) **'शुनि चैव श्वपाके च पण्डिताः समदर्शिनः',** (गी.५.१६.) **'निर्दोषं हि समं ब्रह्म' इत्यादिषु। 'तस्यात्मपरदेहेषु सतोऽपि' इति देहातिरिक्तेवस्तुनि स्वपरविभागस्योक्तत्वात्।**

**'यद्यन्योऽस्ति परः कोऽपि' इत्यत्रापि नात्मैक्यं प्रतीयते; 'यदि मत्तः परः कोऽप्यन्य' इत्येकस्मिन्नर्थे परशब्दान्यशब्दयोः प्रयोगायोगात्। तत्र परशब्दः स्वव्यतिरिक्तात्मवचनः। अन्यशब्दस्तस्यापि ज्ञानैकाकार-त्वादन्याकारत्वप्रतिषेधार्थः। एतदुक्तं भवति - यदि मद्व्यतिरिक्तः कोऽप्यात्मा मदाकारभूतज्ञानाकारादन्या-कारोऽस्ति, तदा, अहमेवमाकारः, अयश्चान्यादृशाकार इति शक्यते व्यपदेष्टुम्। न चैवमस्ति; सर्वेषां ज्ञानैकाकारत्वेन समानत्वादेवेति।**

**'वेणुरन्ध्रविभेदेन' इत्यत्राप्याकारवैषम्यमात्मनां न स्वरूपकृतम्; अपि तु देवादिपिण्डप्रवेशकृतमि-**

---

स्वमतेनार्थं विवृणोति - **तस्यात्मेति**। देवो मनुष्यस्तिर्यक् इत्यादिपिण्डविशेषाश्च दृश्यन्ते। देवत्वादिपिण्डाः प्रकृति-परिणामभूताः। एतेषां पिण्डानां परस्परभेदोऽपि सर्वैर्ज्ञातप्रायः। एतेषु विद्यामानाः देवोऽहं मनुष्योऽहमित्याद्युक्ता आत्मानोऽपि परस्परं भिन्नाः। परस्परसुखदुःखादिवैषम्यदर्शनात्। अतः पिण्डेषु वाऽत्मसु वा स्थितस्य भेदस्य निषेधो न केनापि अपह्नोतुं शक्यते। परस्परमात्मवस्तुनि भेदे विद्यमानेऽपि सर्वेषामात्मनामेकाकारत्वमेव। अणुत्वज्ञानस्वरूप-त्वानुकूलत्वशेषत्वादिना सर्वेषां समत्वात्। एवं तत्त्वस्थितौ सत्यां देवमनुष्यादिपिण्डभेदमादाय तद्गतात्मानां देवत्व-मनुष्यत्वाद्याकारभेददर्शनमतथ्यमित्यभिप्रायकोऽयं 'तस्यात्मपरदेहेषु' इति श्लोकः। आत्मगतपरस्परभेदापह्नवश्च नात्र सिद्धः। आत्मपर इति देहस्थितस्यात्मनः परस्परभेदबोधनात्। 'नित्यो नित्यानां चेतनश्चेतनानाम्' इति जीवचेतनपरस्पर-भेदस्य, जीवपरमात्मभेदस्य च श्रुत्यैव बोधितत्वात्। 'शुनि चैव श्वपाके च' इत्यत्रापि विभागस्य गीतायां स्पष्टमुक्तत्वाच्च। अत्र सप्तमीनिर्देशात्तत्र तत्र विद्यामानानामात्मनां समत्वमेवाक्तम्। न त्वभेदः। श्लोके एकमयमित्यस्यैकरूपमित्यर्थः। स्वार्थे मयट्। यद्वा एकशब्दो भावप्रधानः। ऐक्यमित्यर्थः। प्राचुर्ये मयट्। शुद्धावस्थस्यात्मनो ज्ञानत्वाद्याकारैक्य-प्राचुर्यमस्ति। ननु एकशब्दश्रवणादात्मनामेकत्वमेव वक्तव्यमिति चेत् 'एको व्रीहिः सुनिष्पन्नः सुपुष्टं कुरुते प्रजा' इत्यादौ का गतिः। एकजातीयकमित्यर्थस्वीकारेण ह्युपपत्तिः। 'पुमान्न देवो न नरः, शरीराकृतिः, पिण्डः पृथग्यतः पुंसाम् इत्यादिषु चेतनानेकत्वबोधनादपि नैक्यपरता॥

'यद्यन्योऽस्ति परः कोपि' इति सुस्पष्टमेव जीवभेदं निषेधतीति परोक्तं दूषयति - **यदीति**। अत्रात्मभेदो न निषिध्यते। परन्त्वन्यादृशाकार एव निषिध्यते। सर्वेषामात्मवस्तूनां ज्ञानत्वाणुत्वादिनैकाकारत्वात्। स्वात्मानमेकाकारविशिष्टमन्यमा-त्मानं ततो विलक्षणाकारविशिष्टञ्च यः पश्यति स भ्रान्त इत्यर्थतात्पर्येऽयं श्लोकः प्रवृत्तः। अन्यथाऽन्यशब्दपरशब्दानामे-कार्थबोधकानामन्वयासम्भवः। अन्यशब्दस्य अन्याकारविशिष्टत्वार्थे न पौनरुक्त्यम्। मत्तो व्यत्तिरिक्तमात्मवस्तु अन्या-कारविशिष्टं यदि स्यात् तदा विविच्य वक्तुं शक्यम्। न तदस्तीति भावः। 'यदा समस्तभूतेषु पुमानेको व्यवस्थितः। तदा हि को भवान्सोऽहमित्येतद्विफलं वचः' इत्यनन्तरश्लोकोऽप्यस्माकमेवानुगुणः। अत्र एकशब्द आकारैक्यपरः। सर्वभूतेषु विद्यमानस्सर्वोऽप्येकाकारविशिष्टः स्वयम्प्रकाशत्वज्ञानत्वाणुत्वादिभिः। एवं सति त्वं कः अहं क इति अस्मद्वि-लक्षणस्त्वं त्वद्विलक्षणः, अहमिति वचनं विफलमेव। आत्मन्याकारवैलक्षण्ये सति तु तथा वक्तुं शक्यम्। **पिण्डत्वा-**

**त्युपदिश्यते ; नात्मैक्यम् । दृष्टान्ते चानेकरन्ध्रवर्तिनां वाय्वंशानां न स्वरूपैक्यम्; अपि त्वाकारसाम्यमेव । तेषां वायुत्वेनैकाकाराणां रन्ध्रभेदनिष्क्रमणकृतो हि षड्जादिसञ्ज्ञाभेदः; एवमात्मनां देवादिसञ्ज्ञाभेदः । यथा तैजसाऽऽप्यपार्थिवद्रव्यांशभूतानां पदार्थानां तत्तद्रव्यत्वेनैक्यमेव; न स्वरूपैक्यम्, तथा वायवीयानामंशानामपि स्वरूपभेदोऽवर्जनीयः ।**

**'सोऽहं स च त्वम्' इति सर्वात्मनां पूर्वोक्तं ज्ञानाकारत्वं(रं) तच्छब्देन परामृश्य तत्सामानाधिकरण्येन**

---

**दीनान्तु नात्माकारता** इति । पूर्वं व्यतिरेकमुखेन आत्मनामेकाकारत्वमुक्तम् । अत्रान्वयमुखेनेति भेदः ।

'अत्रायं पुरुषः स्वयं ज्योतिः' 'आराग्रमात्रो ह्यवरोऽपि दृष्टः' 'नीवारशतभागस्य शेषो हि परमात्मन' इत्याद्युक्तस्वयम्प्रकाशत्वाणुत्वशेषत्वादिनाऽऽकारेणात्मनां सर्वेषामपि एकरूपत्वमेव, देवमनुष्यादिपिण्डादिना तु भेद इतीममर्थमन्वयव्यतिरेकमुखेन स्थापयित्वा तत्र दृष्टान्तप्रदर्शनं विरचय्य पुनरपि सिंहावलोकनन्यायेन स्थापयति । अत्राभेदव्यापिदृष्टान्तो भवतां प्रतिकूलः । षड्ज-ऋषभ-गान्धार-मध्यम-पञ्चम-दैवत-विषादरूपावान्तरभेदः एकाकाराणां वायूनामवान्तरभेदः । न चैकस्यैव वायोरवान्तरभेदा इमे इति वक्तुं शक्यम् । अनेकरन्ध्रवर्तिनां वाय्वंशानां भिन्नत्वात् । वायुत्वेन तेषामाकार-साम्यमेव । नहि एक एव वाय्वंशोऽनेकरध्रगतो भवति । एकत्र प्रवेशेऽन्यत्र प्रवेशासम्भवात् । युगपद्धि वेणोः रन्ध्रेषु वायुः प्रविशति । अतो वाय्वंशा भिन्नाः । क्रमेण रन्ध्रप्रवेशोऽपि । एकरन्ध्रगतस्य वायोरन्यरन्ध्रगतस्य च वायो र्भिन्नत्वमेव । तदा सञ्चरतो वायोः कथमेकत्वम् । प्रातस्सञ्चरतो वायो र्विलक्षण एव पश्चात्सञ्चारी वायुः । अनेकरन्ध्रेषु यौगपद्ये वा क्रमिकत्वे वा वायो र्भिन्नत्वादेकाकारत्वं वायोरभ्युपगम्य निर्वाहः कार्यः । एवञ्च कथमयं दृष्टान्तो भवदनुकूलः । तत्तद्वाय्वंशास्तत्र तत्र रन्ध्रेणु गताः षङ्जादिसञ्ज्ञाभेदं जनयन्तीति विषमोऽयं दृष्टान्तः । अत एक एवात्मा तत्र तत्र प्रविष्टो देवादिसञ्ज्ञाभेदं प्राप्नोतीति निरस्तम् । वायौ षड्जादिसञ्ज्ञाभेदः । दार्ष्टन्तिके देवादिसञ्ज्ञाभेदः । **परमात्मनः** = जीवस्येत्यर्थः । परम् आत्मन इतिच्छेदो वा । 'भेदः षड्जादिसञ्ज्ञित' इति पुराणश्लोकः ।

अत्र षड्जऋषभाद्यर्थभेद उक्तः, न तु वाचकसञ्ज्ञाभेद इति न मन्तव्यम् । अर्थभेदस्य सञ्ज्ञाभेदाधीनत्वात् । तथा सत्यर्थभेदप्रतिपत्तिस्सुकरा स्यात् । एतदर्थमेव भाष्ये षड्जादिसञ्ज्ञाभेद इत्युक्तम् । दार्ष्टन्तिकाऽऽनुगुण्याय च । अभेदव्यापिन इत्युक्तत्वाद्वायोरेकत्वमेव, न तु व्यक्तिबहुत्वमिति शङ्कापरिहाराय च । तत्रापि वायुत्वेनैकत्वेऽपि व्यक्तिबहुत्वमस्तीत्यत्र तर्कमाह - **तैजसाऽऽप्येति** । इदं दृष्टान्ततयोक्तम् । यथा तेजोद्रव्यं जलद्रव्यं पार्थिवद्रव्यं च सावयवं तत्र तत्र बह्वंशानां सत्त्वेऽपि तेजस्त्वादिनैक्यं, तथैव वायुत्वेनैकत्वेऽपि वायवीयांशानां स्वरूपभेदोऽस्त्येव । वायोः प्रत्यक्ष-त्वेऽपि वाय्वंशविभागस्य प्रत्यक्षेण सूचयितुं न शक्यमिति तेजआदिदृष्टान्त उक्तः । तत्र स्वरसत एव भेदः प्रत्यक्षित इति भावः । न च 'सितनीलादिभेदेन यथैकं दृश्यते नभः । भ्रान्तदृष्टिभिरात्मापि तथैकस्सन् पृथक् पृथक्' इति निरवयवा-काशदृष्टान्तस्य का गतिरिति वाच्यम् । विकल्पासहत्वात् । किमत्र नभसि सितनीलादिभेदो यौगपद्येन क्रमेण वा । न प्रथमः । तत्र तद्भेदस्य शरत् प्रावृट्सन्ध्यादिसमयभेदेनैव प्रतीयमानत्वाद्यौगपद्यासिद्धेः । नान्त्यः । तथा सत्याकाश रीत्यैव एकस्यैवात्मनः देवादिभेदस्य क्रमभावित्वमिति भवदभिमतासिद्धेः । एक एवात्मा स्वगतकर्मानुसारेण देवत्वमन्यजन्मनि मनुष्यत्वमित्यादिरूपेण जन्म प्राप्नोति । नात्र विवादः । किञ्चाकाशस्यापि कार्यत्वेन सावयवत्वाद्वायुतौल्यमेवेति शङ्काया एवानवतारात् ॥

'**सोऽहं स च त्व**'मिति निगमनश्लोकः । देहातिरिक्तज्ञानैकाकारात्मोपदेशस्य प्रकृतत्वादुपक्रान्तं तमेवोपसंहरति । आत्मा ज्ञानैकाकारः । शरीरं तद्विलक्षणम् । देहगतदेवत्वाद्याकारभेदं वह्निसम्पर्काज्जले औष्ण्यमिव देहसंसर्गादात्मनि पश्यति । अतो भेदमोहहेतुः देवत्वाद्याकारभेदः । आत्मनि तु ज्ञानैकाकारे न देवत्वाद्याकारभेदः । पिण्डे एव स आकारः ।

**अहं त्वमित्यादीनामर्थानां ज्ञानमेवाऽऽकार इत्युपसंहरन् देवाद्याकारभेदेनाऽऽत्मसु भेदमोहं परित्यजेत्याह। अन्यथा देहातिरिक्तो(क्तात्मो)पदेश्यस्वरूपे, अहं त्वं सर्वमेतदात्मस्वरूपमिति भेदनिर्देशो न घटते। अहं त्वमादिशब्दानामुपलक्ष्येण सर्वमेतदात्मस्वरूपमित्यनेन सामानाधिकरण्यादुपलक्षणत्वमपि न सङ्गच्छते। सोऽपि यथोपदेशमकरोदित्याह, 'तत्याज भेदं परमार्थदृष्टिः' इति। कुतश्चैष निर्णय इति चेद्देहात्मविवेकविषयत्वादुपदेशस्य। तच्च, 'पिण्डः पृथक् यतः पुंसश्शिरः पाण्यादिलक्षणः'** (२.१३.८९.) **इति प्रक्रमात्।**

**'विभेदजनकेऽज्ञाने' इति च नात्मस्वरूपैक्यपरम्; नापि जीवपरयोः। आत्मस्वरूपैक्यमुक्तरीत्या**

---

अतस्तं भेदमोहं परित्यजेत्युपसंहरति। 'पिण्डः पृथक् यतः पुंसः शिरः पाण्यादिलक्षण' इति आदिभरतेन पूर्वं प्रस्तुतत्वात् तस्यैवोपसंहारः। तत्रैव ऋभुनिदाघसंवादोपि साक्षितया प्रादर्शि। अतः सोऽहमिति तच्छब्दो ज्ञानैकाकारात्मवस्तुपरामर्शी। तत्रापि ज्ञानैकाकारत्वे प्राधान्यम्। तथा चाहमपि ज्ञानैकाकारस्त्वमपि सर्वमपीत्युक्त्या सर्वस्यापि ज्ञानैकाकारत्वं प्रदर्शितम्। अत्र अहं त्वं सर्वमिति निर्देशोऽप्यात्मबहुत्वसाधक इति आत्मैक्यवादि विरोधी। 'भाष्ये देहातिरिक्तोपदेश्याऽऽत्मस्वरूपे' इति पाठः। न तु 'आत्मोपदेश्यस्वरूपे' इति। देहातिरिक्तत्वेनोपदेश्यमात्मस्वरूपम्। तथा च प्रकरणम् आत्मस्वरूपं देहातिरिक्तमिति बोधयितुं प्रवृत्तमित्यर्थः। आत्मोपदेश्यस्वरूप इति पाठे विशेष्यपूर्वपदकर्मधारयसमासो बोध्यः। 'सोऽहं स च त्वम्' इत्युत्तरार्धस्य पूर्वार्धम् 'एकं समस्तं यदिहास्ति किञ्चित्तदच्युतो नास्ति परं ततोऽन्यत्' इति। अत्र सर्वस्य अच्युतात्मकत्वम्। उत्तरार्धे स इति पदं पूर्वोक्ताच्युतपरामर्शीति च वक्तुं शक्यम्। तदप्यस्माकं जगद्ब्रह्मणोः शरीरात्मभावमगम्युपगन्तृणामनुकूलमेव। अथापि पूर्वोपक्रान्तस्य देहात्मविवेकस्योपसंहारावश्यकत्वात्तदुपसंहाररूपं निगमनवाक्यमित्यत्रैव स्वारस्यम्। तदच्युत इत्यनेनैव सर्वात्मकत्वस्योपसंहृतत्वाच्च। जीवानामच्युतात्मकत्वं द्विविधं तच्छरीरतारूपं एकम्। ज्ञानैकाकारत्वादीनामस्माकं भगवतश्चैकरूपत्वात्। गीतायामुक्तज्ञानैकारत्वमपरम्। उभयमप्यस्माकमविरोध्येव। अहं = सः = अच्युतः। त्वं सः अच्युतः। सर्वम् अच्युत इत्युक्तसर्वात्मकत्वस्य पूर्वमेवोपसंहृतत्वात्। अवश्यापेक्षितनिगमनस्यैव कार्यत्वात्। श्रीभाष्ये देहात्मविवेकपरतयोपसंहृतम्। **'अहं त्वं सर्वमिति**। अत्र अहं त्वमित्यादयो न देहपराः। तच्छब्दोक्तात्माभेदाभावात्। नाप्यन्तःकरणवाचिनः, तच्छब्दवाच्यपरमात्मना तेषामैक्याभावस्योभयवादिसम्प्रतिपन्नत्वात्। अत एव देहविशिष्टान्तःकरणपरत्वमपि निरस्तम्। अत इदं प्रकरणं देहातिरिकात्मबोधनार्थमेव प्रवृत्तम्॥

ननु सोहमित्यादिश्लोक आत्मस्वरूपमेकमेवोच्यते। न च 'सः त्वम् अहं सर्वमित्यनेकात्मप्रदर्शनमस्तीति वाच्यम्। अहं त्वमादीनामुपलक्षणत्वात् अहं त्वमादिशब्दा अन्तःकरणवाचिनः। तदुपलक्ष्यमात्मवस्तु एकमेव। देवादिपिण्डानामनेकत्वेऽपि यथा तदुपलक्षित आत्मा एकः, तथैवात्रीपीति शङ्कां निरस्यति - **अहं त्वमादीति**। अयं भावः - आत्मस्वरूपमिति निर्दिष्टमेकमेव वस्तु तवोपलक्ष्यम्। यथा चन्द्रः। अत उपलक्ष्यवाचिशब्दः आत्मस्वरूपशब्दः। तथा च अहम् आत्मस्वरूपं, त्वम् आत्मस्वरूपं, सर्वमात्मस्वरूपमिति वक्तव्यम्। इदञ्चानुपपन्नम्। यत्रायं सारसः स देवदत्तकेदार इत्येव प्रयोगान्न तु शाखाचन्द्रः सारसो देवदत्तकेदार इति। अथवा एतदात्मस्वरूपस्यैवोपलक्ष्यत्वात् अन्येषामुपलक्षणत्वात् अहं त्वं सर्वम् इति शब्दा अपि केवलात्मस्वरूपवाचका एवेति कथं सामानाधिकरण्यम्। न हि घटो घट इति पर्यायशब्दानां सामानाधिकरण्यमिष्यते। न च अहं त्वमादिशब्दानाम् अहं त्वमाद्युपलक्षितमित्यर्थस्वीकारे नानुपपत्तिरिति वाच्यम्। तत्त्वमसीत्यादौ अखण्डार्थवादिभिः, युष्माभिस्तथाऽस्वीकारात्। आत्मस्वरूपमेतदेकमित्येवं निर्देशं विना पृथक् पृथक् निर्देशबलादप्युपलक्षणत्वासम्मतेः। अतो यथोक्त एवार्थः।

**'विभेद जनके'** इति श्लोकः किं जीवात्मनां परस्परं" भेदनिषेधक उत जीवपरयो र्भेदनिषेधकः। अत्र ब्रह्मशब्दस्वारस्याज्जीवब्रह्मोभयविषयकत्वशङ्कापि युक्ता। तत्र प्रथमः पक्षोऽनुपपन्नः। आत्मस्वरूपैक्यस्य निषिद्धत्वात्। नापि द्वितीयः।

**निषिद्धम्। जीवपरयोरपि स्वरूपैक्यं देहात्मनोरिव न सम्भवति । तथा च श्रुतिः** - (मु.३.१.१.) **'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्ति, अनश्नन्नन्योऽभिचाकशीति',** (कठ.३.१.) **ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये। छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ॥',** (यजुरारण्य.३.२०.) **'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा' इत्याद्या। अस्मिन्नपि शास्त्रे,** (वि.६.५.८३-८५.) **'स सर्वभूतप्रकृतिं विकारान् गुणादिदोषांश्च मुने व्यतीतः। अतीतसर्वावरणोऽखिलात्मा तेनाऽऽस्तृतं यद्भुवनान्तराले॥ समस्तकल्याणगुणात्मकोऽसौ...परः पराणां सकला न यत्र केल्शादयः सन्ति परावरेशे',** (वि.६.७.६१.) **'अविद्या कर्मसञ्ज्ञाऽन्या तृतीया शक्तिरिष्यते। यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा' इति भेदव्यपदेशात्;** (शारी.१.२.२१.) **'उभयेऽपि हि भेदेनैनमधीयते',** (शारी.१.१.२२.) **'भेदव्यपदेशाच्चान्यः',** (शारी.२.१.२२.) **'अधिकं तु भेदनिर्देशात्' इत्यादिसूत्रेषु च,** (बृ.माध्यं.६.७.) **'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरं य आत्मानमन्तरो यमयति',** (बृ.६.३.२१.) **प्राज्ञेनात्मना सम्परिष्वक्तः',** (बृ.६.३.३५.) **'प्राज्ञेनाऽऽत्मनाऽन्वारूढः' इत्यादिभिरुभयोरन्योन्यप्रत्यनीकाकारेण स्वरूपनिर्णयात्।**

**नापि साधनानुष्ठानेन निर्मुक्ताविद्यस्य परेण स्वरूपैक्यसम्भवः; अविद्याश्रयत्वयोग्यस्य तदनर्हत्वासम्भवात्। यथोक्तम्** - (वि.२.१४.२७.) **'परमात्मात्मनोर्योगः परमार्थ इतीष्यते। मिथ्यैतत्; अन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः ॥' इति। मुक्तस्य तु तद्धर्मतापत्तिरेवेति भगवद्गीतासूक्तम्** - (गी.१४.२.) **'इदं ज्ञानम(मु)पाश्रित्य**

---

जीवपरमात्मनोरपि स्वरूपैक्यसम्भवस्य श्रुत्यापि प्रतिपादनासम्भवात्। प्रथमपक्षे देहात्मभ्रमनिवृत्तिः। यथा देहात्मनो र्भेदस्तथैव जीवपरयोरपि भेदः। अतोऽयं श्लोको जीवदेहयोरैक्ये जीवानां परस्परैक्ये जीवपरयोरैक्ये च न प्रमाणं भवति। तथा च भाष्ये - 'इत्याद्या श्रुतिः' इति वाक्यसमाप्तिः। 'द्वा सुपर्णा' 'ऋतं पिबन्तौ' इत्यादिश्रुतिस्स्पष्टमेव भेदं बोधयति। न केवलं श्रुतौ, अस्मिन्नेव पुराणे भेदः प्रतिपाद्यत इत्येतदर्थम् 'अस्मिन्नपि शास्त्रे' इत्यादि 'भेदव्यपदेशात्' इत्यन्तमुक्तम्। सूत्रकारसम्मत्यर्थमुपरि सूत्रप्रदर्शनम्। **इत्यादिसूत्रेषु च भेदव्यमदेशात्** इति सम्योज्यान्वयो वाच्यः॥ उपरि 'य आत्मनि इत्यादि श्रुतिनिर्देशः प्राज्ञेनात्मना' इत्यादि सूत्रनिर्देशश्च पुनः कृतः। सुषुप्तिदशायामुत्क्रान्तिदशायामपि चैक्यनिषेधार्थम्॥

मुक्तदशायां ऐक्यनिषेधार्थमाह - **नापीति**। संसारदशायां जीवपरयो र्भेदसत्त्वेपि मोक्षदशायामविद्याया निवृत्त्या अधिष्ठानवस्तुनः शुक्तिरूपस्य एकस्येव ब्रह्मण एकस्यैव सत्त्वात् वस्तुन ऐक्यम्। अतो जीवपरमात्मनोः ऐक्यमेवेति औडुलोमिमतम्। इदमेव चाद्वैतिमतम्। 'उत्क्रमिष्यत एवं भावादित्यौडुलोमिः' इति एतन्मतमुपन्यस्य पश्चात् 'अवस्थितेरिति काशकृत्स्न' इति स्वमतमुपपादयति। तत्सूत्रपर्यालोचनया तत्पक्षखण्डनार्थमयं ग्रन्थः। एकस्य द्रव्यस्य द्रव्यान्तरत्वं न सम्भवतीति उत्तरार्धार्थः। न हि घटद्रव्यं पटद्रव्यं भवितुमर्हति, कुड्यं वा कुसूलम्। एवमेव जीवो न परो भवितुमर्हति। एवमत्र खण्डनादैक्यमतं मिथ्या इत्युक्तं भवति। अतो जीवस्य परस्य च ऐक्यं परमार्थ इष्यत इत्येतदनुपपन्नम्। खण्ड्यमानपक्षः पूर्वार्धे प्रतिपाद्ये। तत्र योगशब्द ऐक्यपरः। अत एव 'योगो योगविदां नेता' इति सहस्रनाम शङ्करभाष्ये 'ज्ञानेन्द्रियाणि सर्वाणि निरुध्य मनसा सह। एकत्वभावना योगः क्षेत्रज्ञपरमात्मनोः' इत्युक्तम्। तत्रैक्यरूपयोगः खण्ड्यते।

नन्वेकस्य द्रव्यस्य द्रव्यान्तरत्वं न सम्भवतीति सत्यमेव। परन्तु जीवस्य परस्य च द्रव्यान्तरत्वाभावादयं हेतु र्नात्र प्रवर्तत इति चेत् किं घटघटयोरिवैक्यमुत शुक्तिरजतयोः, अधिष्ठानाध्यस्तयोरिव। न प्रथमः, अपसिद्धान्तात्। तथा सति सर्वदा ब्रह्मैकमेव स्थितं स्यान्न जगतः स्थितिः। न द्वितीयः। पूर्वं भेदसत्त्वेन द्रव्यान्तरसत्त्वात्। अन्यथा अध्यस्तस्य

**मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥' इति । इहापि -** (वि.६.७.३०.) **'आत्मभावं नयत्येनं तद्ब्रह्मध्यायिनं मुने । विकार्यमात्मनः शक्त्या लोहमाकर्षको यथा ॥' इति । आत्मभावम् - आत्मनः स्वभावम् । न ह्याकर्षकस्वरूपापत्तिराकृष्यमाणस्य । वक्ष्यति च,** (शारी.४.४.१७.) **'जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च',** (शारी.४.४.२१.) **'भोगमात्रसाम्यलिङ्गाच्च',** (शारी.१.३.२.) **'मुक्तोपसृप्यव्यपदेशाच्च'**

---

जगतः अधिष्ठानस्य ब्रह्मणश्च सर्वथैव भेदो नासीदिति घटपट्योरपि न द्रव्यान्तरत्वमिति हेतुः कुत्रापि न प्रसिध्यति । 'ज्ञाज्ञौ अजौ' 'पिप्पलं स्वाद्वन्ति' इत्यादिभिः द्रव्यान्तरत्वोक्तेरैककण्ठ्यं च । अतो भिन्नस्यैव जीवस्य उपासनेन परेणैक्यं मुक्तिदशायामिति मतखण्डनार्थमेवास्य श्लोकस्य प्रवृत्तिः ॥

श्रेयांस्येवमनेकानि शतशोऽथ सहस्रशः । सन्त्यत्र परमार्थस्तु न त्वेते श्रूयतां च मे । धर्माय त्यजते किन्तु परमार्थो धनं यदि । व्ययश्च क्रियते कस्मात्कामप्राप्त्युपलक्षणः । पुत्रश्चेत्परमार्थस्स्यात् सोऽप्यन्यस्य नरेश्वर । परमार्थभूतस्सोऽन्यस्य परमार्थो हि तत्पिता । एवं न परमार्थोस्ति जगत्यस्मिन्चराचरे । परमार्थो हि कार्याणि कारणानामशेषतः । (इत्याद्यारभ्य नैति तद्द्रव्यतां यत इत्यन्तं धन-पुत्र-राज्य-काम्यकर्मादीनाम् 'आत्मनस्तु कामाय सर्वं प्रियम्' इति श्रुत्यनुसारेण, न परमार्थत्वमित्युक्त्वा 'तस्मात् श्रेयांस्यशेषानि नृपैतानि न संशयः । परमार्थस्तु भूपाल सङ्क्षेपाच्छ्रूयतां मम' इति परमप्रयोजनत्वरूपपरमार्थत्वस्योपरि वक्ष्यमाणत्वात् एतदन्तर्गतानां परमार्थत्वनिराकरणमेव क्रियत इति ज्ञायते । अतोऽत्र निराक्रियमाणमैक्यमपि न परमार्थ इति अस्य श्लोकस्य सारार्थः । अतोऽस्य श्लोकस्य निषेध्यनिराकरणपरत्वादभ्युपगन्तव्यार्थपरता न सम्भवति । एतेन, अन्यद्द्रव्यं तद्द्रव्यतां नैति इत्येतन्मिथ्या, तस्मात्परमात्मनो योग एव परमार्थ इति सिद्धान्तस्थापनार्थमिदं प्रवृत्तमित्यपि परास्तम् । परमार्थस्तु भूपाल इत्युपरि स्वसिद्धान्तपक्षस्य वक्ष्यमाणात्तद्व्यतिरिक्तपक्षाणां निराकरणपरत्वमेव पूर्वश्लोकानां स्वीकर्तव्यतया मध्यपठितस्य श्लोकस्य स्वाभ्युपगन्तव्यपक्षप्रतिपादनपरत्वं न स्वारसिकम् ।

अपि चैक्यपक्षसाधकतापि नोत्तरार्धस्य स्वीकर्तुं शक्यम् । तथा सत्येकस्य द्रव्यस्य द्रव्यान्तरत्वमभ्युपगतं भवेत् । तच्च सकलप्रमाणविरुद्धम् । न हि जडम् अजडं भवितुमर्हति । अतः परपक्षप्रतिक्षेपपरे प्रकरणे ऐक्यस्यापि निराकरणपरत्वेनैवास्य प्रवृत्तिरिति वक्तव्यम् । 'यथाऽग्नौ अग्निः सङ्क्षिप्तः समानत्वमनुव्रजेदित्युभयोरग्न्योः समानत्वमेवोक्तं न तु स्वरूपैक्यम् । एवम् 'यथा उदकम् उदके शुद्धमासिक्तं तादृगेव भवति' इति श्रुतिरपि भवतां विपरीता । न तु तदेव भवतीत्युक्तम् । तथाभावस्य प्रत्यक्षविरुद्धता च । उपरि गीतापि प्रमाणत्वेन प्रदर्श्यते । ब्रह्मवेद ब्रह्मभवतीति श्रुत्यर्थनिर्वाह उपरि वक्ष्यते । अत्रैव परस्परभेदप्रदर्शकं प्रमाणं प्रदर्शयति **इहापीति** । अस्य श्लोकस्य बहुधा अर्थः श्रुतप्रकाशिकायामुक्तः । आकर्षकशब्दो वह्निपरः, दोषमाकर्षतीति व्युत्पत्तेः । दोषनाशकत्वमग्नेः श्रुतम् । 'यथाग्निरुद्धतशिखः कक्षं दहति सानिलः । तथा चित्तस्थितो विष्णु र्योगिनां सर्वकिल्बिषम् । 'यथाग्निसङ्गात्कनकमपदोषं प्रजायत' इत्यादौ । तथा च 'अग्नि र्यथा आत्मनो भावं = स्वभावं निर्दोषत्वं लोहं नयति तथेत्यर्थः । 'अजां ग्रामं नयति' इतिवत् द्विकर्मकप्रयोगः । तथा च परमात्मा स्वं ध्यायिनं जीवात्मानम् आत्मस्वभावं नयति । न त्वात्मताम् । आत्मस्वभावश्च निर्दोषत्वादि, ब्राह्मगुणादिकं वा । यद्वा आकर्षकशब्दोऽयस्कान्तवाची । स च लोहमात्मभावं नयति । स्वव्यापारं कारयति । स्वयमनुकारयतीत्यर्थः । स्थितः स्थिताम् उच्चलितः प्रयातामितिवत् । लोहस्य अयस्कान्तस्थितिधावनानुगुणस्थित्यनुधावनवत्वस्य प्रसिद्धेः । तद्वदेकः परमात्मा उपासकं मुक्तं स्वसमानचेष्टितं करोति । 'कामान्नी कामरूप्यनुसञ्चरन् सर्वेषु कामचारो भवति' इति श्रुतेः ॥

यद्वा प्रकृति सम्बन्धराहित्येन शुद्धतां नयति । यथा चायस्कान्तो दारूनिमग्नं लोहं तस्माद्दारुण उद्धृत्य केवलतां नयति । यद्वा आत्मभावः = आत्मप्राप्तिः । भूः प्राप्तावात्मनेपदी । यथा च अयस्कान्तो लोहं स्वप्राप्तिं नयति, तथा पर उपासकं स्वप्राप्तिं नयति । अतो स्वरूपैक्यनिषेधः सर्वात्मना कृतः । उक्तार्थे सूत्रं प्रमाणयति - **जगदिति** । भोगमात्रेति

**इति। वृत्तिरपि, 'जगद्व्यापारवर्जं समानो ज्योतिषा' इति। द्रमिडभाष्यकारश्च, 'देवतासायुज्यादशरीरस्यापि देवतावत्सर्वार्थसिद्धिः स्यात्' इत्याह। श्रुतयश्च,** (छा.८.१.६.) **'य इहाऽऽत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्, तेषां सर्वेषु लोकेषु कामचारो भवति',** (तै.आनं.१.) **'ब्रह्मविदाप्नोति परम् ... सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता',** (तै.भृ.) **'एतमानन्दमयमात्मानमुपसङ्क्रम्य, इमान् लोकान् कामान्नी कामरूप्यनुसन्चरन्',** (छा.८.१२.३.) **'स तत्र पर्येति',** (तै.आनं.७.) **'रसो वै सः। रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति',** (मु.३.२.८.) **'यथा नद्यः स्यन्दमानाः समुद्रे अस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्',** (मु.३.१.३.) **'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इत्याद्याः।**

**'परविद्यासु सर्वासु सगुणमेव ब्रह्मोपास्यम्; फलञ्चैकरूपमेव; अतो विद्याविकल्प' इति सूत्रकारेणैव,** (शारी.३.३.११.) **'आनन्दादयः प्रधानस्य',** (शारी.३.३.७५.) **'विकल्पोऽविशिष्टफलत्वात्' इत्यादिषूक्तम्। वाक्यकारेण च सगुणस्यैवोपास्यत्वं विद्याविकल्पश्चोक्तः, 'युक्तं तद्गुणकोपासनात्' इति। भाष्यकृता व्याख्यातश्च, 'यद्यपि सच्चित्त' इत्यादिना।** (मु.३.२.९.) **'ब्रह्म वेद ब्रह्मैव भवति' इत्यत्रापि,** (मु.३.२.८.) **'नामरूपाद्विमुक्तः**

---

मात्रचा कारणत्वलक्ष्मीपतित्वच्छत्रचामरादिषु न साम्यमुक्तम्। **ज्योतिषा** = परब्रह्मणा। परं ज्योतिरुपसम्पद्य, 'दिवो ज्योति र्दीप्यते' इति प्रसिद्धेः। **अशरीरस्य** = मक्तस्य कर्मकृतशरीराभावात्। देवतावदित्यनेन मुक्तस्य देवतासाधर्म्यमेवोपपादितं, न त्वैक्यम्। देवताभावापन्नत्वात्सर्वानुभवसिद्धिः। उक्तार्थेषु श्रुत्युपन्यासो य इहेत्यादिना॥

साम्यसायुज्यसाधर्म्यशब्दा भेदमेव बोधयन्ति। न त्वैक्यम्। तद्भिन्नत्वे सति तद्गतधर्मवत्वस्यैव साम्यपदार्थत्वात्। साधर्म्यमपि समानधर्मवत्वम्। इदं सर्वं भेदघटितमेव। सायुज्यमपि भेदगर्भम्। युज्यत इति युक्शब्दो गुणपरः। तथा च समानगुणवत्वमेवोक्तम्। अत्र - सम्बन्धार्थस्य युजिरयोगे इत्यस्य रौधादिकस्य कर्तरि युज्यत इति रूपं न भवति। समाध्यर्थस्य युजेः कर्तरि एतद्रूपसम्भवेऽपि तस्यार्थस्य न प्रकृते उपयोगः। युजिर् योग इत्यस्यैव कर्मणि एतद्रूपम्॥ तत्र च ऋत्विक्दधृक् इत्यादिसूत्रेण क्विनो वा, सत्सुद्विषा इत्यादिना क्विप् च इत्यनेन वा कर्तरि विहितत्वेन कर्मण्यसम्भवात् युज्यतेऽनेनेति कर्तर्येव क्विन्। पच्यतेऽनेनेति पाचक इतिवत्। तस्य सदृशवाचिना सहशब्देन बहुव्रीहिः। अस्ति च सहशब्दः सदृशपर्यायः। यथा सदृशः सरव्या ससखीति। तस्यास्वपदविग्रहोऽयं बहुव्रीहिः। समानं युक् गुणजातमस्येत्यर्थः। तत्र च 'उपसर्जनस्य' इति सहस्य सभाव इति। यद्वा युज्यतेऽनेनेति युक् - गुणकर्ता गुणाश्रय इत्यर्थः। गुणाश्रयः = परमात्मेति यावत्। समानः सदृशः गुणाश्रयः परमात्मा यस्येति विग्रहः। गुणाश्रयत्वविशिष्टपरमात्मसादृश्यं बोध्यते। सदृशगुणाश्रयत्वविशिष्टपरमात्मकत्वस्य जीवे बोधनात्। तथा च गुणाश्रयत्वेन परमात्मजीवात्मनोः सदृश्यबोधनमिति समानगुणकताप्रतीतिः। अत्र सदृशपर्यायः समानशब्दः इति निर्वाहः।

ननूपासने द्वैविध्यमस्ति। एकं सगुणब्रह्मोपासनमर्वाचीनमोक्षफलदायकम्। अन्यत् निर्गुणब्रह्मोपासनम्। इयमेव परविद्या। इयञ्चास्मदभिमतस्वस्वरूपावाप्तिरूपयथार्थमोक्षदेति शङ्कां परिहरति - **परविद्यास्विति**। सर्वास्वित्यनेन निर्गुणब्रह्मोपासनम् अध्यायचतुष्टयात्मके सूत्रे न क्वाप्युक्तमिति। तथा निर्गुणपरविद्यात्वेन याऽभिमता तत्रापि गुणविशिष्टब्रह्मण एवोपासनं विहितम्। दहरविद्यायां पृथक् गुणगणानुसन्धानम्। अन्यत्र गुणगर्भपरदेवतोपासनमित्येव विशेषः। न तु गुणरहितस्य ब्रह्मण उपासनम्। यदि शारीरकशास्त्रे चतुरध्यायात्मके गुणविशिष्टतद्रहितोपासनं विहितं तर्हि निर्गुणोपासनमपि भवितुमर्हति। अन्यत्र च न कुत्रापि। अतो निर्गुणोपासनमेवाप्रमाणभूतम्। अत्रैव द्विविधोपासनं विहितं चेन्भवन्मतरीत्या फलवैषम्यस्य वक्तव्यत्वा'द्विकल्पोऽविशिष्टफलत्वा'दिति विरुध्येतेति भावः। **युक्तं** = गुणयुक्तमेव प्राप्यम्। **सच्चित्तः**

**परात्परं पुरुषमुपैति दिव्यम्',** (मु.३.१.) **'निरञ्जनः परमं साम्यमुपैति',** (छा.८.१२.) **'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इत्यादिभिरैकार्थ्यात्प्राकृतनामरूपाभ्यां विनिर्मुक्तस्य निरस्ततत्कृतभेदस्य ज्ञानैकाकारतया ब्रह्मप्रकारतोच्यते। प्रकारैक्ये च तत्त्वव्यवहारो मुख्य एव, यथा सेयं गौरिति।**

**अत्रापि,** (६.७.९३.) **'विज्ञानं प्रापकं प्राप्ये परे ब्रह्मणि पार्थिव। प्रापणीयस्तथैवाऽऽत्मा प्रक्षीणाशेषभावनः॥' इति परब्रह्मध्यानादात्मा परब्रह्मवत्प्रक्षीणाशेषभावनः - कर्मभावाना ब्रह्मभावनोभयभावनेति भावनात्रयरहितः - प्रापणीय इत्यभिधाय,** (वि.६.७.९४.) **'क्षेत्रज्ञः करणी ज्ञानं करणं तस्य वै द्विज (तेन तत्)। निष्पाद्य मुक्तिकार्यं वै (हि) कृतकृत्यं निवर्तते(येत्)' इति करणस्य परब्रह्मध्यानरूपस्य प्रक्षीणाशेषभावनात्मस्वरूपप्राप्त्या कृतकृत्यत्वेन निवृत्तिवचनात्, 'यावत्सिद्ध्यनुष्ठेय' मित्युक्त्वा** (६.७.९५.) **'तद्भावभावमापन्नस्तदाऽसौ परमात्मना। भवत्यभेदी; भेदश्च तस्याज्ञानकृतो भवेत्॥' इति मुक्तस्य स्वरूपमाह। तद्भावः = ब्रह्मणो भावः - स्वभावः, न तु स्वरूपैक्यम्, तद्भावभावमापन्न इति द्वितीयभावशब्दानन्वयात्; पूर्वो-**

= सद्विद्यानिष्ठः। गुणाविशिष्टोपासनमेव त्वन्मते नास्ति। कस्योपासनं क्रियत इत्याकाङ्क्षायां ब्रह्मण इति हि वक्तव्यम्। स्वरूपनिरूपकधर्ममन्तरा कथं निर्गुणब्रह्मण उपासनञ्च। अन्यथा शशविषाणतुल्यतेति वस्तुन एवासिद्धिः। गुणनास्तितावादिनापि अन्ततो गत्वा स्वरूपनिरूपकधर्मविशेषोपासनमेषितव्यम्। एतदर्थम् 'आनन्दादयः प्रधानस्ये'ति उपात्तम्। 'ब्रह्मैव भवति' इत्यस्य निर्वाहं प्रदर्शयति—**नामरूपादिति**। **ब्रह्मप्रकारतोच्यत** इति। ब्रह्मगतगुणविशिष्टता, 'ब्राह्मेण जैमिनिः' इति सूत्रात्। उक्तानां प्रमाणगणानामविरोधाय ईषदमुख्यार्थस्वीकारो न दोषाय। **प्रकारैक्य** इति। **तत्त्वव्यवहारः** - तद्गतधर्मवत्त्वव्यवहारः। अत्रोदाहरणं ... सेयं गौरिति। नात्र प्रत्यभिज्ञोच्यते। पूर्वमेका गोव्यक्ति र्दृष्टा। पश्चात्तद्भिन्नस्यान्यस्य गोव्यक्तिविशेषस्य दर्शने 'सेयं गौः' इति उच्यते। सोऽयं व्रीहिरितिवत्। अत्र प्रकारैक्यमादयैव व्यवहारः। तथाऽत्रेति भावः। एवममुख्यार्थस्वीकारप्रदर्शनार्थमेवैवकारः प्रयुक्तः। अन्यथा ब्रह्म भवतीत्येवोक्तं स्यात्। वस्तुत एवकार इवकारपर्यायः। कोशेऽपि सादृश्यार्थकत्वमुक्तम्। विष्णुरेव भूत्वा इमाँल्लोकानभिजयतीत्यादौ च दृष्टम्॥

**विज्ञानमिति**। अत्र प्राप्यप्रापकप्रापणीयानामुक्तिः। अनेन सर्वभेदलाभः। 'प्रक्षीणाशेषभावनत्वं समानधर्मः। क्षेत्रज्ञः करणी, तस्य ज्ञानं करणम्। परब्रह्मध्यानं मोक्षरूपकार्यं प्रति करणं यावत्कार्यं तदनुष्ठेयम्। फलनिष्पत्तौ कृतकृत्यत्वात्स्वयमेव निवर्तते। अत्रोपायस्य ध्यानस्य निवृत्तिः कृतकृत्यत्वात्। न तु कर्तुर्जीवस्याभावात्। अतो जीवपरभेदसिद्धिः। **तद्भावेति** मुक्तस्वरूपनिरूपणपरः श्लोकः। अत्र जीवस्य न ब्रह्मस्वरूपत्वं प्रतिपाद्यते। परन्तु ब्रह्मस्वभाववत्त्वैव। यदि प्रथमभावशब्दमात्रपर्यालोचनया ब्रह्मत्वमित्युच्यते। तदा द्वितीयभावशब्दस्यान्वयो दुर्घटः स्यात्। ननु भवत्पक्षेऽपि ब्रह्मभाव(स्वभाव)मापन्न इत्येव पर्याप्तम्। द्वितीयभावशब्दो निष्फलस्स्यादिति चेत्, श्रुणु। तत्तद्गतस्वभावास्तस्मिन् तस्मिन्नेव। न हि घटादिस्वभावोऽन्यत्र भवितुमर्हति। तद्गतस्वभावसदृशस्वभावस्तु अन्यस्यापि स्यात्। तदर्थमन्यभावशब्दान्तरम्। त्वत्पक्षे द्वितीयभावशब्दस्य न केनापि प्रकारेण निर्वाहसम्भवः। मन्मते उभयोरपि स्वभावयोः सौसादृश्यमुक्तं भवति। 'ब्राह्मेण जैमिनिः' इति सूत्रेण निष्कृष्टोऽयं विषयः।

यद्वा ब्रह्मगतस्वभावेन अस्य सत्ताभावः। जीवस्य मुक्तदशायां यादृशी सत्ता सत्यसङ्कल्पत्वादिप्रयुक्तजक्षत्क्रीडाभगवदनुभावादिरूपा सा भगवतः स्वभावेन सङ्कल्पेन भगवद्गतसत्यसङ्कल्पत्वादिस्वभावप्राप्त्यावा सम्भवति। अथवा तस्य भावः यस्य सः मुक्तः तद्भावशब्देनोच्यते। तस्य मुक्तस्य भावः तमित्यर्थः। मुक्तदशायां स्वभावस्यैकरूपत्वाज्ज्ञानैकाकारतयाऽस्यापि परमात्मनैकप्रकारत्वम्। पूर्वं देवादिरूपभेदो यः कर्मरूपाज्ञानकृतः स इदानीं नास्ति? अतोऽभेदीति

**क्तार्थविरोधाच्च। यद्ब्रह्मणः प्रक्षीणाशेषभावनत्वम्, तदापत्तिः तद्भावभावापत्तिः। यदैवमापन्नः, तदाऽसौ परमात्मना अभेदी भवति = भेदरहितो भवति। ज्ञानैकाकारतया परमात्मनैकप्रकारस्यास्य तस्माद्भेदो देवादिरूपः। तदन्वयोऽस्य कर्मरूपाज्ञानमूलः ; न स्वरूपकृतः। स तु देवादिभेदः परब्रह्मध्यानेन मूलभूता-ज्ञानरूपे कर्मणि विनष्टे हेत्वभावान्निवर्तत इत्यभेदी भवति। यथोक्तम् -** (वि.२.१४.३३.) **'एकस्वरूपभेदस्तु बाह्यकर्मवृतिप्रजः। देवादिभेदो(दे)ऽपध्वस्ते नास्त्येवावरणे(स्तयनावरणो)हि सः॥' इति।**

**एतदेव विवृणोति, 'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति' इति। विभेदः = विविधो भेदः - देवतिर्यङ्मनुष्यस्थावरात्मकः। यथोक्तं शौनकेनापि,** (वि.ध.१००.२१.) **'चतुर्विधोऽपि भेदोऽयं मिथ्याज्ञाननिबन्धन' इति। आत्मनि ज्ञानरूपे देवादिरूपविविधभेदहेतुभूतकर्माख्या-ज्ञाने परब्रह्मध्यानेनात्यन्तिकनाशं गते सति हेत्वभावादसन्तं परस्माद्ब्रह्मण आत्मनो देवादिरूपभेदं कः करिष्यतीत्यर्थः। 'अविद्या कर्मसञ्ज्ञाऽन्या' इति (हि) अत्रैवोक्तम्।**

**'क्षेत्रज्ञं चापि मां विद्धि' इत्यादिनाऽन्तर्यामिरूपेण सर्वस्याऽऽत्मतयैक्याभिधानम्। अन्यथा,** (गी.१५.१६.) **'क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते। उत्तमः पुरुषस्त्वन्यः' इत्यादिभिर्विरोधः। अन्तर्यामि-रूपेण सर्वेषामात्मत्वं तत्रैव भगवताऽभिहितम्,** (गी.१८.६१.) **'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति',** (गी.१५.१५.) **'सर्वस्य चाहं हृदि सन्निविष्ट' इति च। 'अहमात्मा गुडाकेश! सर्वभूताशयस्थितः' इति च तदेवोच्यते। भूतशब्दो ह्यात्मपर्यन्तदेहवचनः। यतः सर्वेषामयमात्मा, तत एव सर्वेषां तच्छरीरतया पृथगवस्थानं प्रतिषिध्यते, 'न तदस्ति विना यत्स्यात्' इति; भगवद्विभूत्युपसंहारश्चायमिति तथैवा-भ्युपगन्तव्यम्। तत इदमुच्यते,** (गी.१०.४१.) **'यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा। तत्तदेवावगच्छ त्वं मम**

---

वाक्यार्थः। एतद्विवरणं — **एकस्वरूपेति**। **आवरणं** = कर्म। इदञ्च ध्यानादिनाऽत्यन्तिकनाशं यदा प्राप्नोति, तदा भेद-कारणस्यास्याभावाद्देवादिभेदो न भवति। सर्वेषामात्मनां स्वरूपं ज्ञानैकाकारम्। एवं सति तादृशात्मनो देवादिरूपो यो भेदः स बाह्यकर्मरूपावरणजन्यः। फलाभिसन्धियुक्तं कर्म बाह्यकर्म, भगवत्यसमर्पितश्च कर्म। तदेवावरणमात्मस्वरूपा-च्छादकं भवति। तदेव ज्ञानैकाकारात्मसु देवाभिभेदभ्रमं जनयति। तस्य ध्वंसे नास्त्येव भेदग्रहणमिति भावः।

स्वोक्तार्थेऽन्यदपि प्रमाणमाह। उदाहृतश्लोकास्सर्वेऽप्यैककण्ठ्येन जीवपरयो र्भेदमेव वदन्ति। अतस्सृष्टिदशायां वा जागरणसुषुप्त्युत्क्रान्तिमोक्षदशासु वा कस्यामपि दशायामभेदबोधकप्रमाणं भवतां नास्तीत्युक्तं भवति। परोदाहृत-भगवद्गीतावचनानामपि भेदबोधकतैव, नाद्वैतबोधकत्वमित्याह - **क्षेत्रज्ञम्** इति। आपतप्रतीत्या ऐक्यमेव सिध्येदिति न मन्तव्यम्। तथा सति पूर्वोक्तविरोध इत्याह अन्यथेति। 'ईश्वरः सर्वभूताना'मिति स्त्रोक्तार्थोपपादने प्रमाणप्रदर्शनम्। हृद्देशस्थे आत्मनि ईश्वरस्तिष्ठतीत्यर्थः। आशयस्थित इत्युक्त्याऽन्तर्यामित्वं प्रोक्तं।

ननु भूतशब्दस्याचेतनवाचित्वमेव। अतः कथं जीवान्तर्यामित्वसिद्धिः ? तत्राह - **भूतशब्दो हीति**। 'न हिंस्यात् सर्वाभूतानी'ति भूतशब्दः प्राणिपर्यन्तवाचकतया दृष्टः। 'यः पृथिव्यां तिष्ठन्' इत्यादिनापि जीवान्तर्यामित्वसिद्धिः। अन्तर्यामितया सर्वस्यापि ब्रह्मात्मकत्वम्। अतदात्मकं वस्तु नैवेति तत्रैव प्रतिपाद्यत इत्याह - **न तदस्तीति**।

**विभूतिमत्** = नियाम्यवत्। **श्रीमत्** = भोग्यसमृद्धिमत्। **ऊर्जितं** = बलवत्। **सत्त्वं** = प्राणिः। **तेजोंऽशसम्भवं** = मदीयसङ्कल्पैकदेशजातमित्यर्थः। मन्नियमनशक्तेः मदाज्ञायाश्चैकदेशसम्भवमिति यावत्। अत्र गीतायां क्षेत्रज्ञशब्दितस्य

**तेजोऽंशसम्भवम् ॥ विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥' इति । अतश्शास्त्रेषु न निर्विशेष-वस्तुप्रतिपादनमस्ति ; नाप्यर्थजातस्य भ्रान्तत्वप्रतिपादनम्; नापि चिदचिदीश्वराणां स्वरूपभेदनिषेधः ॥**

(अविद्याविषयसप्तविधानुपपत्त्यारम्भः)

**यदप्युच्यते - निर्विशेषे स्वयम्प्रकाशे वस्तुनि दोषपरिकल्पितम् ईशे(श्वरे) शिताव्याद्यनन्तविकल्पं सर्वं जगत् । दोषश्च स्वरूपतिरोधानविविधविचित्रविक्षेपकरी सदसदनिर्वचनीयाऽनाद्यविद्या । सा चावश्या-भ्युपगमनीया ;** (छा.८.३.२.) **'अनृतेन हि प्रत्यूढा' इत्यादिभिः श्रुतिभिः, ब्रह्मणस्तत्त्वमस्यादिवाक्यसामानाधि-करण्यावगतजीवैक्यानुपपत्त्या च । सा तु न सती ; भ्रान्तिबाधयोरयोगात् । नाप्यसती ; ख्यातिबाधयोश्चा-योगात् ।**

---

जीवस्य चशब्दसूचितस्य क्षेत्रस्याचेतनस्य भगवच्छरीरत्वमुक्तम् । **चापी**त्यत्रापिशब्दोऽचेतनस्यैव चेतनाधिष्ठितत्वमिति न मन्तव्यम् । चेतनोऽपि पराधिष्ठित इति सूचनार्थः । **मया विना** = मां विहाय । अचेतनस्य चेतनस्य च स्थित्यभावोक्तेः सर्वमपि चेतनाचेतनं भगवधिष्ठितमिति ज्ञापितम् । अतोऽचेतनचेतनेश्वररूपवस्तुत्रयस्य गीतायां स्पष्टं बोधनान्न कस्यापि ब्रह्मण ऐक्यं शक्यवचनम् । 'अश्मादिवच्च तदनुपपत्ति' रित्यप्यचेतनशब्दोपादानेन सूचितम् । उपसंहरति - **अतश्शास्त्रेष्विति** ।

एवमादौ सामान्यतो ब्रह्मणस्सविशेषत्वस्थापनाय स्मृतिपुराणवचनान्युदाहृत्य तदैककण्ठ्येन परोदाहृतवचनानां तात्पर्यमुपवर्णितम् । अथ तदुक्तमविद्यांशम् आश्रय-तिरोधान-स्वरूप-अनिर्वचनीयत्व-प्रमाण-निवर्तक-निवृत्त्यनुपपत्या निरसितुं सङ्ग्रहेण पूर्वोक्तमपि हेत्वन्तरेण सङ्कलय्य शिष्यावधानाय चानुवदति — **यदपीति** । पूर्ववदर्थः । निर्विशेषत्वोक्त्या वक्ष्यमाणविकल्पस्य भ्रमसिद्धत्वं द्योतितम् । नित्यत्वनानात्वाभावादि सिद्धिमभिप्रेत्य स्वयम्प्रकाशत्वोक्तिः । शब्दाविषयत्व-द्योतनाय वस्तुनीति भाषितम् । निर्विशेषस्य भ्रमोपपत्तये **दोषेति** । एकस्मिन्नेवाधिष्ठाने एकदैव गन्धर्वनगरनीत्या नानाविधाध्याससम्भवसूचनाय **परी**त्युक्तिः । आदिशब्दप्रयोगाद्गोबलीवर्दन्यायेन ईशितव्यसङ्कोचोऽभ्युपेयः । 'ज्ञातृज्ञेय-तत्कृतज्ञानभेदादिसर्वमि'ति हि पूर्वमपि भाषितम् । दोषस्वरूपं दर्शयति - **दोषश्चेति** । चकारस्त्वर्थकः शङ्कात्रयव्यावृत्त्यर्थः । तच्च स्वयम्प्रकाशस्याद्वितीयस्य ब्रह्मणः कथं विविधविकल्परूपप्रपञ्चभ्रमसम्भवः ? स्वरूपतिरोधायिकया विविधभ्रमहेतु-भूताविद्ययेति चेत् ? स्वरूपतिरोधानमेव कथम् ? न हि स्वयम्प्रकाशस्वभावस्य प्रदीपस्य तमसा तिरोधानसम्भवः । अस्मदभिमताविद्यायाया ब्रह्मतिरोधानस्य चानादित्वेन निरुक्तहेतुप्रश्न एव न सम्भवतीति चेत् ? तर्हि दोषस्यापि परमार्थत्वावश्यम्भावेनाद्वैतहानिरिति ।

**स्वरूपेति** । स्वरूपतिरोधानकरी विक्षेपकरी चेत्यर्थः । सदसदनिर्वचनीयेत्यनेनानादित्वेऽप्यविद्याया अपरमार्थत्वं युक्तमङ्गीकर्तुमिति सूचितम् । 'जीव ईशो विशुद्धा चिद्विभागश्च तयोः पुनः । अविद्या तच्चितोर्योगः षडस्माकमनादयः' इत्यनादित्वेन जीवेशादीनामङ्गीकारेऽप्यपरमार्थत्वाङ्गीकारात् । न च ब्रह्मणोऽप्येवमपरमार्थत्वप्रसङ्गः निरधिष्ठानभ्रमानुपपत्तेः । अन्यथाधिष्ठानस्यापि भ्रान्तिसिद्धत्वे तस्या भ्रान्तेरधिष्ठानान्तरापेक्षा । तस्याप्यधिष्ठानान्तरस्य भ्रान्तिसिद्धत्वे तस्या भ्रान्तेरधिष्ठानान्तराषेक्षा इत्यनवस्था स्यादिति भावः । उक्ताविद्यास्वीकारे श्रुतितदर्थापत्ती दर्शयति — **सेति** । **अनृतेन** = अविद्यया । **प्रत्यूढाः** = प्रतीपं नीताः । पाशाधिकरणन्यायेन बहुत्वमविवक्षितम् । आदिशब्दोऽनृतमपिधानमित्यादीनां श्रुत्यन्तराणां सङ्ग्राहकः । **जीवैक्यानुपपत्त्येति** । अल्पज्ञत्वसर्वज्ञत्वादिविरुद्धधर्मवतो जीवब्रह्मणोरैक्यस्यासम्भवेन श्रुत्यु-क्तस्य तस्योपपत्यै धर्माणां कल्पितत्वस्यैव वक्तव्यतया तत्कल्पकत्वेन कस्याश्चिदङ्गीकार्यत्वादिति भावः । कल्पकस्या-विद्यात्वोक्तिस्तु श्रुतिप्रसिद्धा । उक्तमविद्यायाः सदसदनिर्वचनीयत्वं युक्तिबलादुपपादयति - **सा त्विति** । अविद्या

**अतः कोटिद्वयविनिर्मुक्तेयमविद्येति तत्त्वविदः - इति - तदयुक्तम्। सा हि किमाश्रित्य भ्रमं जनयति? न तावज्जीवमाश्रित्य ; अविद्यापरिकल्पितत्वाज्जीवभावस्य। नापि ब्रह्माश्रित्य ; तस्य स्व(यं) प्रकाशज्ञान-स्वरूपत्वेनाविद्याविरोधित्वात्। सा हि ज्ञानबाध्याऽभिमता।**

**'ज्ञानरूपं परं ब्रह्म तन्निवर्त्यं मृषात्मकम्। अज्ञानं चेत्तिरस्कुयात्कः प्रभुस्तन्निवर्तने ॥**
**ज्ञानं ब्रह्मेति चेज्ज्ञानमज्ञानस्य निवर्तकम्। ब्रह्मवत्तत्प्रकाशत्वात्तदपि ह्यनिवर्तकम् ॥**

---

सद्विलक्षणा भ्रान्तिविषयत्वाद्बाधविषयत्वाच्च शुक्त्यधिष्ठानरूप्यवत्। एवं साऽसद्विलक्षणा ख्यातिविषयत्वाद्बाध-विषयत्वाच्च यन्नैवं तन्नैवं यथा शशश्रृङ्गादि। न ह्यसतः शशश्रृङ्गादेः ख्यातिबाधविषयत्वसम्भवः।

नन्वेकस्यैव हेतोः कथं साध्यतदभावसाधकत्वम्। तथा सति हेतोर्व्यभिचारित्वापत्तेः। नैवम्। सद्विलक्षणत्वा-सद्विलक्षणत्वयोः साध्यतदभावरूपत्वाभावस्य तैरङ्गीकारात्। तथा च प्रतीतिविषयत्वमसद्विलक्षणत्वसाधकम्। भ्रान्ति-विषयत्वन्तु सद्विलक्षणत्वसाधकम्। बाधविषयत्वन्तूभयसाधकमिति विवेकः। एवं प्रतीतिभ्रान्तिबाधविषयत्वानुपपत्त्या सदसदनिर्वचनीयत्वं सिद्धमित्युपसंहरति - **अत इति**। तत्त्वविद इत्यनेनोक्तार्थस्यैव तात्त्विकत्वं, नान्यस्येति सूच्यते।

तदेतन्मतं दूषयति — **तदयुक्तमिति**। 'आश्रयोऽस्याः तिरोधिश्च स्वरूपं सदसदन्यता। मानं निवर्तकश्चैव निवृत्तिर्नोपपद्यत' इति श्लोकोऽत्रानुसन्धेयः। आदावाश्रयानुपपत्तिं प्रदर्शयति — **सा हीति**। अविद्यायाः किञ्चिदाश्रित्यैव भ्रमजनकत्वस्वभावः, तथैव परमतप्रसिद्धिश्चेति सूचनाय हिशब्दः। अविद्याया जीवाश्रयत्वपक्षं व्युदस्यति — **नेति**। तावदित्यवधारणे। हेतुं विवृणोति — **अविद्येति**। ब्रह्मण एकस्यैव परमार्थत्वेन जीवस्याप्यविद्याकल्प्यत्वाङ्गीकारात्। अविद्याया जीवाश्रयकत्वसम्भवे जीवादिसिद्धिः। जीवसिद्धौ तदाश्रयकत्वसिद्धिरित्यन्योन्याश्रयः। क्लप्तेः प्राक् स्वात्महाने-रिति भावः। न च बीजाङ्कुरन्यायेन प्रवाहानादित्वाभ्युपगमसम्भवः। जीवनित्यत्वश्रुतिविरोधात्। अकृताभ्यागमकृतवि-प्रणाशादिप्रसङ्गात्। आमोक्षं जीवस्य भवन्मते स्थायित्वाभ्युपगमेन तद्विरोधापत्तेश्च। अत एव हि भवदेकदेशिनो ब्रह्मा-ज्ञानपक्षमवलम्बन्ते। अतो नात्रास्माभिः किञ्चित्प्रतिसमाधातव्यम्। विस्तरेणोपपादयिष्यते चेदमुपरिष्टात्।

अथ ब्रह्माश्रयत्वपक्षं व्युदस्यति - **नापीति**। अपिः पक्षदूषणान्तरसूचकः। भ्रमं जनयतीत्यनुषङ्गः। कुत इति शङ्कां परिहरति - **तस्येति**। **तस्य** = ब्रह्मणः। स्वयम्प्रकाशत्वज्ञानत्वयोरैक्यसूचनाय 'स्वयम्प्रकाशत्वज्ञानस्वरूपत्वेनेत्युक्तिः। अविद्याविरोधित्वमुपपादयति - **सा हीति**। **हिः** पूर्ववत्। न हि दीपनिवर्त्यस्यान्धकारस्य दीपाश्रयत्वसम्भवः। अतो ब्रह्मात्मकज्ञाननिवर्त्यस्याज्ञानस्य न ब्रह्माश्रयत्वं जाघटीतीति भावः।

ननु प्रासादनिगरणादिवदनुपपन्नतैकवेषाया अवस्तुभूताया अविद्याया ब्रह्मज्ञाननिवर्त्यायाः कथं स्वयम्प्रकाश-ब्रह्माश्रयत्वमिति शङ्कैवानुपपन्नेत्यत्र नाथमुनिभिरुक्तां परिहारगमनिकां तदुक्तश्लोकेन प्रदर्शयति — **ज्ञानरूपमिति**। मृषात्मकमिति निवर्त्यत्वे हेतूक्तिः। **कः प्रभुरिति**। अयं भावः - स्वनिवर्तकत्वेनाभ्युपगतं ज्ञानरूपं ब्रह्मैव यद्यविद्याऽऽ-श्रयेत्तर्हि तस्य निवर्तकत्वं नास्तीत्यभ्युपगतं भवति। तथा च निवर्तकान्तराभावेन कदाचिदप्यविद्याया अनिवृत्त्याऽनि-र्मोक्षप्रसङ्ग इति। शास्त्रजन्यब्रह्मविषयकज्ञानमेव निवर्तकमिति तन्मतसिद्धपक्षमनूद्य परिहरति - **ज्ञानमिति**। **ब्रह्मवत्तत्प्र-काशत्वादिति**। यथा ज्ञानरूपस्य ब्रह्मणः स्वयम्प्रकाशत्वेन ब्रह्मस्वरूपप्रकाशत्वम्, एवं ज्ञानं ब्रह्मेति शास्त्रजन्यज्ञानस्यापि ब्रह्मस्वरूपप्रकाशकत्वमेवेति स्वरूपज्ञानस्य शास्त्रजन्यज्ञानस्य च विषयवैलक्षण्याभावेन पूर्वस्येवोत्तरस्यापि निवर्तकत्वं न स्यात्। इयांस्तु विशेषः। पूर्वन्तु स्वयम्प्रकाशत्वेन स्वत एव ब्रह्मस्वरूपप्रकाशकम्। उत्तरन्तु प्रमाणाधीनमिति। अत उभयोरपि ज्ञानयोः स्वरूपानतिरिक्तप्रकाशकत्वेन विषयवैलक्षण्याभावाच्च निवर्तकत्वमिति भावः। एवं प्रमाणजन्य-

**ज्ञानं ब्रह्मेति विज्ञानमस्ति चेत्स्यात्प्रमेयता। ब्रह्मणोऽननुभूतित्वं त्वदुक्त्यैव प्रसज्यते॥'**

**ज्ञानस्वरूपं ब्रह्मेति ज्ञानं तस्या अविद्याया बाधकम्, न स्वरूपभूतं ज्ञानमिति चेन्न - उभयोरपि ब्रह्मस्वरूपप्रकाशत्वे सति (सत्यपि) अन्यतरस्याविद्याविरोधित्वम्, अन्यतरस्य नेति विशेषानवगमात्। एतदुक्तं भवति - ज्ञानस्वरूपं ब्रह्मत्यनेन ज्ञानेन ब्रह्मणि यः स्वभावोऽवगम्यते, स ब्रह्मणः स्वयम्प्रकाशत्वेन स्वयमेव प्रकाशत इत्यविद्याविरोधित्वे न कश्चिद्विशेषः स्वरूपतद्विषयज्ञानयोरिति। किञ्च - अनुभवस्वरूपस्य ब्रह्मणोऽनुभवान्तराननुभाव्यत्वेन भवतो न तद्विषयं ज्ञानमस्ति। अतो ज्ञानमज्ञानविरोधि चेत्, स्वयमेव विरोधि**

---

ज्ञानस्य निवर्तकत्वाभ्युपगमे दूषणान्तरमप्यस्तीत्याह — **ज्ञानं ब्रह्मेति**। भवद्भिरनुभाव्यस्याननुभूतित्वोक्तेरनुभवरूपस्य ब्रह्मणोऽपि सम्प्रत्यनुभाव्यत्वाङ्गीकारेणाननुभूतित्वं भवदुक्तव्याप्तिबलादेवाङ्गीकर्तव्यमिति भावः। प्रमेयत्वे जडत्वविनाशित्वाद्यापत्तिश्च। तैः प्रमेयत्वस्य जडत्वादिव्याप्यत्वाङ्गीकारादिति।

उदाहृतश्लोकेषु द्वितीयश्लोकं शिष्यानुग्रहाय विवृणोति — **ज्ञानस्वरूपं ब्रह्मेतीति**। **विशेषानवगमात्** = विषयवैलक्षण्यस्यानवगतत्वादित्यर्थः। प्रमाणजन्यज्ञानत्वतदभावौ त्वप्रयोजकौ। स्वरूपभूतज्ञानस्य प्रमाणजन्यज्ञानस्य च भ्रमसह विषयत्वेन तदाकारस्वरूपज्ञान इव प्रमाणजन्यज्ञानेऽप्यसत्त्वेनाविद्यानिवर्तकत्वासम्भवात्। न हि शुक्लभास्वरद्रव्यस्य शतशः प्रतिपत्तावपि भ्रमनिवृत्तिसम्भव इति भावः। ब्रह्मातिरिक्तप्रकाशत्वे तत्त्वज्ञानत्वहानिः। ब्रह्मातिरिक्तं सत्यं चेदद्वैतहानिश्च। असत्यं चेदसत्यविषयकज्ञानेन मिथ्याभूतविषयकज्ञाननिवृत्तिश्च नोपपद्यते। तत्त्वज्ञानन्मोक्ष इति केवलवादमात्रापत्तिश्च। निवर्तकस्यासत्यविषयकज्ञानस्यापि मिथ्यात्वेन तन्निवृत्त्यर्थमन्यस्य तत्त्वज्ञानस्यापेक्षापत्तिश्च। प्रकाशितस्य सर्वस्य ब्रह्मत्वे स्वयम्प्रकाशब्रह्मरूपज्ञानाविशेषः प्रमाणजन्यज्ञानस्येति भावः।

ननु 'अयं देवदत्तः' 'सोऽयं देवदत्त' इत्यभिज्ञाप्रत्यभिज्ञयो र्देवदत्ताभेदविषयकत्वे समानेऽपि पूर्वस्या भेदभ्रमनिवर्तकत्वं नास्ति। उत्तरस्यास्तु भेदभ्रमनिवर्तकत्वमनुभवसिद्धम्। अतो विषयबैलक्षण्याभावेऽपि कस्यचिन्निवर्तकत्वं कस्यचिच्च नास्तीत्यवश्यमभ्युपेयमिति शङ्कायां विषयावैलक्षण्यमेव पुनरुपपाद्य सिंहावलोकितनयेन स्वरूपभूतज्ञानस्येव प्रमाणजन्यज्ञानस्याप्यविद्याविरोधित्वाभावमुपपादयति - **एतदुक्तमिति**। प्रमाणजन्यज्ञाने ज्ञानत्वाद्यतिरिक्तविषयकत्वमस्तीति शङ्काव्यावृत्तये 'यः स्वभाव' इति भाषितम्। ज्ञानत्वादीनां धर्मत्वे सविशेषत्वापत्तिरिति बह्मस्वरूपत्वाङ्गीकाराऽऽवश्यकत्वेन स्वरूपस्य च स्वरूपज्ञानेऽपि प्रकाशमानत्वान्नातिरिक्तविषयकत्वमिति भावः। **अविद्याविरोधित्वे न कश्चिद्विशेष** इति। अभिज्ञाप्रत्यभिज्ञादृष्टान्तस्तु विषमः। अभिज्ञाया एकदेशैकसम्बन्धिधर्मिविषयकत्वेन प्रत्यभिज्ञाया देशद्वयकालद्वयसम्बन्धिधर्मिविषयकत्वेन च विषयवैलक्षण्यस्य सर्वानुभवसिद्धत्वात्। उदाहृततृतीयश्लोकाभिप्रेतमर्थमाह - **किञ्चेति**। **अनुभवस्वरूपस्येति** अनुभवान्तराननुभाव्यत्वे हेतुगर्भविशेषणम्। **न तद्विषयं ज्ञानमस्तीति**। अन्यथाऽपसिद्धान्त इति भावः। एवं ब्रह्मविषयकप्रमाणजन्यज्ञानस्यैव निषेधेन तस्याविद्यानिवर्तकत्वासम्भवेन ज्ञानरूपब्रह्मण एवाविद्याविरोधित्वमावश्यकमिति कथं स्वनिवर्त्याविद्याश्रयत्वं ब्रह्मणो घटत इत्यभिप्रायवानुपसंहरति - **अत** इति। **ज्ञानमज्ञानविरोधीति**।

ननु ज्ञानयोरेव हि परस्परं विरोध्यविरोधकभावः। अत एव घटवत्ताज्ञानं प्रतिरुणद्धि घटाभाववत्ताज्ञानमिति न्यायविदः। अत्र च ज्ञानाभावरूपाज्ञानस्य कथं ज्ञानविरोधित्वमिति चेन्न। शुक्तिज्ञानस्य शुक्त्यज्ञाननिवर्तकत्ववत् प्रकृतेऽपि सम्भवात्। यदि शुक्त्यज्ञानस्य शुक्तौ रजतत्वप्रकारकज्ञानरूपत्वमिति विभाव्यते तर्हि प्रकृतेऽपि ब्रह्मज्ञानस्य सद्वितीयत्वप्रकारकज्ञानरूपत्वमिति विभावय। अतस्तादृशाज्ञानविरोधित्वं शुक्तिज्ञानस्येव ब्रह्मरूपज्ञानस्यैव सम्भवेन अज्ञानस्य तदाश्रयत्वभाषणम्। ननु स्वज्ञानमेव स्वाज्ञाननिवर्तकं दृष्टं, यथा शुक्त्यज्ञाने शुक्तिज्ञानम्। न हि घटाज्ञाननिवर्तकत्वं न घटज्ञानस्य, किन्तु घटादेरेवेत्युपपद्यते। अतस्स्वस्य स्वाज्ञाननिवर्तकत्वासम्भवेन ब्रह्मज्ञानस्यैव प्रमाण-

**भवतीति नास्या ब्रह्माश्रयत्वसम्भवः । शुक्त्यादयस्तु स्वयाथात्म्यप्रकाशे स्वयमसमर्थाः स्वाज्ञानाविरोधिनः; तन्निवर्तने च ज्ञानान्तरमपेक्षन्ते । ब्रह्म तु स्वानुभवसिद्धस्वयाथात्म्यमिति स्वाज्ञानविरोध्येव ; तत एव निवर्तकान्तरञ्च नापेक्षते ।**

---

जन्यस्य निवर्तकत्वमेषितव्यम्। अन्यथाऽनुभवविरोधादित्यत्राह - **शुक्त्यादयस्त्विति**। तुशब्दः शङ्काव्यावर्तकः। **स्वयमसमर्था** इति जडत्वेनेत्यादिः ।

अयं त्विह भावः - यद्यपि स्वज्ञानमेव स्वाज्ञाननिवर्तकमिति नियमोऽस्ति, अथापि स जडविषय एव। न त्वजडे ब्रह्मण्यपि। ब्रह्मण एव ज्ञानरूपत्वेन स्वयम्प्रकाशत्वाज्ज्ञानान्तरापेक्षाया असम्भवात्। शुक्त्यादीनां जडत्वेन स्वज्ञानमन्तरा स्वस्फुरणासम्भवाज्ज्ञानान्तरापेक्षाऽऽवश्यकीति वैषम्यात् । ज्ञानरूपब्रह्मणो ज्ञानान्तरवेद्यत्वानङ्गीकारेण तद्विषयकज्ञानासम्भवस्योपपादितत्वाच्च । तदभ्युपगमेऽपि स्वरूपतद्विषयज्ञानयो र्विषयवैलक्षण्याभावेन तद्विषयज्ञानस्यापि निवर्तकत्वासम्भवेन भवतामपि नियमविरोधस्यापातात्। ततश्चानिर्मोक्षादिप्रसङ्गस्तदवस्थः। अतोऽनुभवानुरोधाज्जडविषय एवेत्ययं नियमः सङ्कोच्यः । स्वविषयकत्वस्वतादात्म्यान्यतरसम्बन्धेन स्वज्ञानस्य निवर्तकत्वाङ्गीकरणनियमसङ्कोचोऽप्यनपेक्षितः। अतो ब्रह्मणः शुक्त्यादिविलक्षणत्वान्न ज्ञानान्तरापेक्षयाऽज्ञाननिवर्तकत्वमिति भावः। एतदेवोपपादयति **ब्रह्मेति** वाक्यद्वयेन ।

नन्वन्यस्य पुंसो जातस्य शुक्तिज्ञानस्य रजतज्ञानत्वेनान्येन ग्रहणे शुक्तिज्ञानाज्ञानस्य अस्य शुक्तिज्ञानमेव जातमिति शुक्तिज्ञानाज्ञानेन निवर्त्यत्वदर्शनाज्ज्ञानस्याज्ञानविरोधित्वे स्वयमेव निवर्तकत्वमिति भाषणं कथं सङ्गच्छते । अतो ज्ञानस्यापि स्वज्ञानद्वारा निवर्तकत्वदर्शनेन ब्रह्मरूपज्ञानस्यपि न स्वरूपतो निवर्तकत्वमिति ज्ञानान्तरापेक्षाऽस्त्येवेति चेन्मैवम्। ब्रह्मविषयकज्ञानस्यानुभ्युपगमेन, अभ्युपगमेऽपि निवर्तकत्वाभावोपपादनेन ज्ञानान्तरापेक्षायामपि स्वरूपस्येव तस्याप्यनिवर्तकत्वं तदवस्थम्। परपुरुषाधिकरणकशुक्तिज्ञानस्य तद्विषये स्वयम्प्रकाशत्वेन ज्ञानान्तरापेक्षाविरहेऽप्यन्यस्य रजतज्ञानमेवास्य जातमिति भ्राम्यतः पुंसः स्वयम्प्रकाशत्वाभावेन ज्ञानान्तरापेक्षाऽऽवश्यकी । ब्रह्म तु स्वानुभवसिद्धस्वयाथात्म्यमिति कदाचिदप्यस्वयम्प्रकाशत्वाभावभ्युपगमेन ज्ञानान्तरस्यानपेक्षिततत्वमिति दृष्टान्तवैषम्यात् । न हि यस्य शुक्तिविषयकज्ञानं जातं तस्य शुक्तिज्ञानाज्ञानसम्भवः । वस्तुतोऽन्यदीयशुक्तिज्ञानस्य रजतज्ञानत्वेनान्यस्य ग्रहणं नाम रजतविषयत्वेन ग्रहणमेवेति तादृशरजतविषयकत्वप्रकारकान्यथाग्रहणं चान्यदीयज्ञानस्य न रजतविषयकत्वं, किन्तु शुक्तिविषयकत्वमेवेति ग्रहणान्निवर्तते न तु शुक्तिज्ञानज्ञानादिति सुदूरपरामर्शे ज्ञायत इति न तत्रापि ज्ञानान्तरापेक्षा । अन्यथाऽनवस्थापातादिति ध्येयम् ।

नन्वेवं सति शुक्त्यज्ञाननिवर्तकत्वमपि शुक्तेरेव स्यान्न तु शुक्तिज्ञानस्य। अनुभवानुरोधेनैव विरेध्यविरोधकभावस्याङ्गीकर्तव्यत्वात्। तथा हि - किं ज्ञानस्य निवर्तकत्वं शुक्तिविषयकत्वादुतान्यविषयकत्वात्। नान्त्यः। तस्याप्रयोजकत्वात्। अन्यथा घटादिज्ञानस्यापि शुक्त्यज्ञानविरोधित्वापातात्। प्रथमे शुक्तिविषयकत्वेन प्रयोजकत्वे विषयभूतशुक्तेरेव प्रतिबन्धकत्वं, लाधवात् । अतस्तद्विषयकज्ञानपर्यन्तानुधावनं किमर्थमिति चेन्न । शुक्त्यज्ञाननिवर्तकत्वस्य शुक्तावेव स्वीकारे कदाचिदपि शुक्त्यज्ञानं न स्यात्। स्वरूपसत्तायाः शुक्तेः प्रतिबन्धिकायास्सत्त्वात्। शुक्तिज्ञानस्य निवर्तकत्वे तु तदभावदशायां शुक्त्यज्ञानोत्पत्तिसम्भव इति प्रमाणबलेन शुक्तिज्ञानस्य ज्ञायमानायाः शुक्तेरेव वा निवर्तकत्वाङ्गीकार एवोचितः ।

अथैवं रीत्यैव ब्रह्मणोऽपि न स्वाज्ञाननिवर्तकत्वाभ्युपगः शक्यः । तस्य नित्यस्य सर्वदा सत्त्वेनाज्ञानोत्पत्ते र्दुर्घटत्वात्। अतस्तद्विषयकज्ञानस्यैव प्रमाणजन्यस्य निवर्तकत्वं युक्तमिति चेन्न। शुक्त्यादिवत्तस्यापि ज्ञानविषयत्वाभ्युगमे

**अथोच्येत - 'ब्रह्मव्यतिरिक्तस्य मिथ्यात्वज्ञानमज्ञानविरोधि' इति । न । इदं ब्रह्मव्यतिरिक्तमिथ्यात्वज्ञानं किं ब्रह्मयाथात्म्याज्ञानविरोधि, उत प्रपञ्चसत्यत्वरूपाज्ञानविरोधीति विवेचनीयम् । न तावद्ब्रह्मयाथात्म्याज्ञानविरोधि ; अतद्विषयत्वात् । ज्ञानाज्ञानयोरेकविषयत्वे(त्वेन) हि विरोधः । प्रपञ्चमिथ्यात्वज्ञानं तत्सत्यत्वरूपाज्ञानेन विरुध्यते । तेन प्रपञ्चसत्यत्वरूपाज्ञानमेव बाधितमिति ब्रह्मस्वरूपाज्ञानं तिष्ठत्येव । ब्रह्मस्वरूपाज्ञानं नाम तस्य सद्वितीयत्वमेव । तत्तु तद्व्यतिरिक्तस्य मिथ्यात्वज्ञानेन निवृत्तम् । स्वरूपन्तु स्वानुभवसिद्धमिति चेन्न ।**

---

जडत्वप्रसङ्गात् । ब्रह्म तु ज्ञानरूपं स्वयम्प्रकाशमिति हि सिद्धान्तः । एतेन प्रमाणज्ञानत्वमेव निवर्तकत्वे प्रयोजकं न त्वधिष्ठानत्वं तस्य भ्रमसहत्वात् । अतो ज्ञानरूपस्यापि ब्रह्मणोऽधिष्ठानत्वात्प्रमाणज्ञानरूपत्वाभावेव प्रमाणज्ञानापेक्षाऽस्त्येवेति निरस्तम् । शुक्त्यादावधिष्ठानत्वस्य ज्ञानान्तरविषयत्वरूपजडत्वव्यापकत्वदर्शनेन ब्रह्मरूपाधिष्ठानस्यापि जडत्वापाताज्जडत्वनिवृत्त्याऽधिष्ठानत्वस्य वा निवृत्त्यापातात् । यदि शुक्त्याद्यधिष्ठानस्य भ्रमाविरोधित्वदर्शनाद्ब्रह्मणोऽपि भ्रमाविरोधित्वमित्याग्रहः, तर्हि शुक्त्यादिवदेवाध्यासाधिष्ठानत्वार्थं ज्ञानान्तरवेद्यत्वमप्यापद्येत । यदि ज्ञानान्तरवेद्यत्वं जडत्वप्रयुक्तमिति विभाव्यते, तर्हि भ्रमाविरोधित्वमपि जडत्वप्रयुक्तमिति विभाव्य सन्तुष्टो भव । अतो ब्रह्म स्वानुभवसिद्धस्वयाथात्म्यं भ्रमाविरोधि चेत्येतन्न विद्वत्परिषदि कथनार्हमित्याशयः ॥

अथ पक्षान्तरमवलम्ब्य शङ्कते - **अथेति** । अयं भावः - ब्रह्मविषयकप्रमाणज्ञानस्य भ्रमनिवर्तकत्वाभावेऽपि प्रपञ्चमिथ्यात्वज्ञानस्यैव भ्रमनिवर्तकत्वमस्मदभिमतं सेत्स्यति । अतश्च नानिर्मोक्षादिप्रसङ्ग इति । तदेतन्निरस्यति **नेति** । इदञ्च नेत्यर्थः । अनुपपन्नमिति यावत् । अत्र प्रपञ्चसत्यत्वस्याज्ञानरूपत्वोक्तिः 'प्रपञ्चसत्यत्वं तत्प्रतिभासश्च विक्षेपरूपाज्ञानमिति' तन्मतसिद्धमर्थमवलम्ब्य । शुक्त्यज्ञानस्य रजतज्ञानरूपत्ववत्, अद्वितीयब्रह्माज्ञानस्य सद्वितीयत्वज्ञानरूपप्रपञ्चसत्यत्वज्ञानरूपत्वेन प्रपञ्चसत्यत्वस्याप्यज्ञानरूपत्वसम्भवात् । स्फुटंचेदमुपरि । ब्रह्मव्यतिरिक्तप्रपञ्चमिथ्यात्वज्ञानस्य ब्रह्मस्वरूपाज्ञानविरोधित्वमुत प्रपञ्चसत्यत्वविरोधित्वमिति विकल्पितपक्षद्वये प्रथमपक्षं व्युदस्यति - **न तावदिति** । **अतद्विषयत्वादिति** । असमानविषयकत्वादित्यर्थः । तदेवोपपादयति - **ज्ञानेति** । घटज्ञानं हि घटाज्ञानं निरूणाद्धि । न तूदासीनमित्यनुभवसिद्धमित्याशयः । द्वितीयपक्षं प्रतिक्षिपति - **प्रपञ्चेति** । **विरुध्यते** = प्रपञ्चमिथ्यात्वज्ञानस्य तत्सत्यत्वरूपाज्ञानस्य समानविषयकत्वेन विरोधोऽभ्युपगन्तव्य एवेत्यर्थः । न तु विरुध्यत इत्यर्थः । प्रपञ्चमिथ्यात्वज्ञानस्य सत्यत्वरूपाज्ञानेन विरोधासम्भवात् । प्रत्युताज्ञानस्यैव ज्ञानेन निरोधात् ॥

ननु समानविषयकत्वेन परस्परविरोधे कथं द्वितीयपक्षप्रतिक्षेप इत्यत्राभिप्रायं विवृणोति - **तेनेति** । **तिष्ठत्येवेति** । प्रपञ्चसत्यत्वरूपाज्ञाननिवर्तकज्ञानसत्त्वेन तादृशाज्ञाननिवृत्तावपि ब्रह्मस्वरूपाज्ञानस्य निवर्तकासत्त्वेन ब्रह्माविद्यानिवृत्तिर्दुश्शकैवेत्याशयः । ननु ब्रह्मस्वरूपाज्ञानस्य सद्वितीयत्वज्ञानरूपत्वेन ब्रह्मव्यतिरिक्तस्य द्वितीयस्य प्रपञ्चस्य मिथ्यात्वज्ञानेन निवृत्तौ सद्वितीयज्ञानरूपब्रह्माज्ञाननिवृत्तेः फलितत्वात्पक्षद्वयेऽपि नानुपपत्तिरिति शङ्कते । यद्वा - ननु शुक्तित्वज्ञानस्य यथा रजततदवभासादि निवर्तकत्वं, तथैव प्रपञ्चमिथ्यात्वज्ञानस्यापि ब्रह्माज्ञाननिवर्तकत्वं सम्भवति । नेदं रजतमिति ज्ञानमपि रजतत्वमिथ्यात्वज्ञानरूपं सद्भ्रमनिवर्तकम् । तथैव प्रपञ्चमिथ्यात्वज्ञानं ब्रह्म सद्वितीयमिति ज्ञानात्मकस्य ब्रह्मस्वरूपाज्ञानस्य निवर्तकं स्यादित्याशयेन शङ्कते - **ब्रह्मस्वरूपाज्ञानं नामेति** । **सद्वितीयत्वं** = सद्वितीयत्वज्ञानम् । सद्वितीयत्वविशिष्टब्रह्मज्ञानस्य तद्व्यतिरिक्त मिथ्यात्वज्ञानेन निवृत्तौ विशेष्यांशस्यापि निवृत्तिस्स्यादित्यत्राह - **स्वरूपं त्वितु** । यद्वा प्रमाणजन्यस्य प्रपञ्चमिथ्यात्वज्ञानस्याविद्यानिवर्तकत्वे तस्यैव शास्त्रवेद्यत्वेन ब्रह्मणः शास्त्रात्सिद्धिर्न स्यादित्यत्राह - **स्वरूपं त्विति** । तदेतत्क्षिपति - **नेति** ।

**ब्रह्मणोऽद्वितीयत्वं स्वरूपं स्वानुभवसिद्धमिति तद्विरोधि सद्वितीयत्वरूपाज्ञानं तद्बाधश्च न स्याताम्। अद्वितीयत्वं धर्म इति चेन्न। अनुभवस्वरूपस्य ब्रह्मणोऽनुभाव्यधर्मविरहस्य भवतैव प्रतिपादितत्वात्। अतो ज्ञान(स्व)रूपस्य ब्रह्मणो विरोधादेव नाज्ञानाश्रयत्वम्।**

किं ब्रह्मणोऽद्वितीयत्वं स्वरूपम् उत्त धर्म इति विकल्पं हृदि निधाय प्रथमकल्पं निरस्यति - **ब्रह्मण** इति। अयं भावः - अद्वितीयत्वस्य ब्रह्मस्वरूपत्वाभ्युपगमेन स्वयम्प्रकाशे ब्रह्मणि सर्वदा भासमानेऽद्वितीयत्वमपि सर्वदा भासत एवेति तद्विरोधि सद्वितीयत्वरूपाज्ञानं कथं सम्भवति। विरोधिस्फुरणदशायां तद्विरोध्यस्यानुपपत्तेः। अतोऽज्ञानस्यैवासम्भवेन तन्निवृत्तिरपि दूरोत्सारितेति।

द्वितीयंकल्पमनूद्यापसिद्धान्तेन दूषयति - **अद्वितीयत्वमिति**। एवमुक्तानुपपत्तिबलान्न ज्ञानरूपब्रह्मणोऽज्ञानाश्रयत्वसम्भव इत्युपसंहरति - **अत** इति। **विरोधादेव** = स्वनिवर्त्यस्याज्ञानस्य स्वाश्रितत्वासम्भवरूपविरोधादेव। नन्वविद्याया अनुपपन्नैकवेषाया अपरमार्थत्वेनोपपत्त्यपेक्षाया एवासम्भवेन निवर्त्यत्वेऽपि स्वनिवर्तकमाश्रयादेव। तदुक्तं 'दुर्घटत्वमविद्याया भूषणं न तु दूषणमि'ति इति चेन्न। दुर्घटत्वस्योपपत्तिनिरपेक्षत्वेन प्रपञ्चस्याप्यपरमार्थस्य दुर्घटत्वेनोपपत्तिनिरपेक्षत्वावश्यम्भावेनाविद्याकल्पनस्यैवानुपपत्तेः। न च कारणाविद्याभावे कथं प्रपञ्चसिद्धिरिति वक्तुं शक्यम्। प्रपञ्चस्य दुर्घटत्वेनोपपत्त्यपेक्षाया एवासम्भवात्। एवमविद्याया दुर्घटस्वभावत्वे निवर्तकज्ञानसत्त्वेऽपि साऽवतिष्ठेत। विरोधान्न स्थास्यतीति चेत्किमुपपत्त्यनुपपत्त्यनुवर्तिनी अविद्या ? अतो दुर्घटस्वभावत्वेऽपि न तस्या ब्रह्माश्रयत्वसम्भवः।

परमते धर्मधर्मिज्ञानयो र्ज्ञानत्वेनावैलक्षण्येपि सङ्कोचविकासार्हत्वतदनर्हत्वाभ्यां वैलक्षण्यमिव ब्रह्मरूपज्ञानस्य प्रमाणजन्यब्रह्मज्ञानस्य च ज्ञानत्वेनावैलक्ष्येपि जन्यत्वतदभावाभ्यां वैलक्षण्यसत्त्वान्निवर्तकत्वतदभावोपपत्तिरिति न स्वरूपज्ञानं निवर्तकं, प्रमाणज्ञानं तु निवर्तकमिति पक्षोऽपि निरस्तो वेदितव्यः। घटपटयोः प्रथिवीत्वादिना, जलपृथिव्यो र्द्रव्यत्वादिना, राजभृत्यो र्नरत्वादिना साम्येऽप्यन्याकारेण वैलक्षण्यमस्तीत्युक्तौ तावता विवक्षितार्थस्यासिध्देः। जन्यत्वतदभावयोर्निवर्तकत्वानिवर्तकत्वानुपयुक्तत्वात्। न हि तत्त्वमसीति वाक्यावगमितब्रह्मात्मैकत्वविज्ञानम् अविद्यानिवर्तने स्वस्य जन्यत्वमपेक्षते। ब्रह्म सद्वितीयम् इत्यविद्याभूततत्कार्यप्रपञ्चादिनिवर्तने ब्रह्मात्मैकत्वविज्ञानमेव हि पर्याप्तम्। जन्यत्वस्य निवर्तकतावच्छेदककोटावप्रयोजकत्वात्। तद्वत्ता बुध्दौ तदभाववत्तानिश्चयस्यैव प्रतिबन्धकत्वात्। तद्भाववत्तानिश्चयस्य प्रत्यक्षरूपस्यैव प्रतिबन्धकत्वम्, अनुमितिरूपस्यैव, शाब्दबोधात्मकस्यैव इति नहि कश्चिद्ब्रूयात्। एवमेव जन्यस्यैव निवर्तकत्वमिति नियमनमपि न सम्भवति। यदि जन्यत्वं प्रयोजकं, तर्हि घटज्ञानस्यापि जन्यस्याविद्यानिवर्तकत्वापत्तिः। घटज्ञानस्य विपरीताकारत्वं नास्तीति चेद्विवपरीताकारस्यैव निवर्तकत्वात्स्वरूपज्ञानेऽपि तदक्षतमिति न प्रमाणज्ञानमपेक्षितम्। नहि घटकारणस्य दण्डादे रूपविशेषापेक्षा, न वा वृक्षविशेषापेक्षा। रूपविशेषवृक्षविशेषादीनामप्रयोजकत्वात्। अविद्यानिवर्तनांशे यः स्वभावो ज्ञानेऽपेक्षितः स प्रमाणज्ञाने स्वरूपज्ञाने च वर्तत इति स्वरूपस्य कथमनिवर्तकत्वम्। अन्यथा प्रमाणज्ञानस्य न निवर्तकत्वापन्तिः।

ननु स्वरूपब्रह्मभूतप्रकाशरूपज्ञानस्य निर्विषयत्वान्निराश्रयत्वाच्च ब्रह्म प्रपञ्चरूपद्वितीयरहितमित्यस्याविषयीकरणात् ब्रह्म सद्वितीयमिति ज्ञानं प्रति निवर्तकत्वं न सम्भवति विपरीताकारानवगाहित्वादिति चेन्न। तथा सति प्रपञ्चभ्रमस्यैव ब्रह्मण्यसम्भव इति सद्वितीयज्ञानस्यैवानुदय इति सर्वोपप्लवप्रसङ्गः। यद्यपि प्रमाणजन्यज्ञानविषयत्वे ब्रह्मणः प्रमेयत्वापादनं तेनऽननुभूतित्वप्रसङ्ग इत्यादि न सम्भवति। शुद्धब्रह्मणो वेद्यत्वानङ्गीकारात्। अविद्याविषयब्रह्मण एव जिज्ञास्यत्वाभ्युपगमात्। "सच्चित् ब्रह्म न संवेद्यं संवेद्यमनृतं जडम्" इत्येवास्मत्सिद्धान्तात् 'अवचनेन प्रोवाच' इत्येवास्माकं मतम्। अत उपदेश्यत्वं शुद्धब्रह्मणो नाङ्गीक्रियते। अविद्यानिष्ठं शिष्यं प्रत्यविद्यानिष्ठो गुरुः अविद्याश्रयं ब्रह्म अविद्यारहितत्वेनोप-

**किञ्च - अविद्यया प्रकाशैकस्वरूपं ब्रह्म तिरोहितमिति वदता स्वरूपनाश एवोक्तः स्यात्। प्रकाशतिरोधानं नाम प्रकाशोत्पत्तिप्रतिबन्धः, विद्यमानस्य विनाशो वा। प्रकाशस्यानुत्पाद्यत्वाभ्युपगमेन प्रकाशतिरोधानं प्रकाशनाश एव ॥**

---

दिशति। अयमर्थः भागवतश्लोकेऽपि स्पष्टः - 'स वै न देवासुरमर्त्यतिर्यक् न स्त्री न षण्डो न पुमान्न जन्तु, नायं गुणः कर्म न सन्न चासन् निषेधशेषो जयतादशेष' इति ॥

तदपि मन्दम् - शुद्धब्रह्मणो वेद्यत्वानङ्गीकारस्यायुक्तत्वात्। ब्रह्म निर्विशेषमिति हि भवन्मतम्। तत्राविद्याविशिष्ट-ब्रह्मणि निर्विशेषत्वोक्तौ बाधः। शुद्धब्रह्मणि तदुक्तौ वेद्यत्वप्रसङ्गः। अविद्याश्रयभूतं ब्रह्म अविद्यारहितत्वेन गुरुरुपदिशतीति च व्याहतार्थकं, माता मे वन्ध्येतिवत्। अविद्याविशिष्टस्य ब्रह्मणोऽविद्यारहितत्वं नहि सम्भवति। अविद्याविशिष्टत्वेन सम्प्रति दृश्यमानं पूर्वं वस्तुतोऽविद्यारहितमित्युक्तौ शुद्धस्य तद्रहितत्वमुक्तं भवतीति शुद्धस्य वेद्यत्वमायातम्।

अपि च 'अथातो ब्रह्मजिज्ञासा' इत्यत्राविद्याविशिष्टब्रह्मण एव जिज्ञास्यत्वमिति भवत्सिद्धान्तः। एवञ्चेच्छ्रवण-मननादिकमपि तस्यैवेति ध्यानसाक्षात्कारादि च तस्यैवेति च हेतोः सविशेषब्रह्मण एवोपास्यत्वं, ततो मोक्षश्चेति निर्गुण-ब्रह्मण एवासिद्धिः। किञ्च तत्त्वमसीति वाक्यजन्यज्ञानविषयत्वं निर्गुणब्रह्मण इष्यते सगुणब्रह्मणो वा। पूर्वत्र ज्ञानवेद्यत्वम्, उत्तरत्र बाधः। शुद्धब्रह्मण एव भवन्मते उपदेश्यत्वानङ्गीकारात्तस्मिन् प्रमाणमेव नास्ति। मानाधीना हि मेयसिद्धिः। प्रमाणाभावेपि तत्सिध्दौ शशश्रृङ्गस्यापि सिद्धिप्रसङ्गः। अतो भवन्मते ब्रह्म शशश्रृङ्गायितमेव। अधिष्ठानरज्जुयाथात्म्य-ज्ञानेन ह्यध्यस्तसर्पनिवृत्तिः। एवं ब्रह्म याथात्म्यज्ञानेनैव प्रपञ्चनिवृत्तिर्वक्तव्या। अतोऽपि वेद्यत्वमवर्जनीयम्। 'स वै न देवासुर' इत्यादिभागवतश्लोको न ब्रह्मणोऽवेद्यत्वं बोधयति। न वाऽविद्याश्रयत्वम्। परन्तु लोकदृष्टविसजातीयं ब्रह्म वस्तु इति सर्वोत्कृष्टत्वं बोधयति इत्यलम् ॥

एवमाश्रयानुपपत्तिरुद्घाटिता। अथ तिरोधानानुपपत्तिरुच्यते - **किञ्चेति**। तिरोहितमितीति पर्यन्तं तन्मतानुवादः। स्वरूपनाश एवोक्तस्स्यादिति दूषणम्। वदता इत्युक्तिः तिरोधानपक्षस्यात्यन्तहेयत्व सूचनार्था। दोषोद्भावने नान्येन प्रयतितव्यमिति हि तदभिप्रायः। कथं ब्रह्मणस्तिरोहितत्वे स्वरूपनाश इरत्यत्र नाशप्रकारमुपपादयति - **प्रकाशेति**। प्रकाशोत्पत्तिप्रतिबन्धकल्पः न कल्पत इत्येतत् 'प्रकाशस्यानुत्पाद्यत्वाभ्युपगमेन' इत्यनेन सूचितम्। अन्यथा प्रकाशरूप-ब्रह्मण एवोत्पाद्यत्वाङ्गीकारेणापसिद्धान्तप्रसङ्गः। न हि ब्रह्मणि प्रकाशाख्यः स्वरूपानतिरिक्तः कश्चनधर्मो भवद्भिरङ्गीकृतः, येन ब्रह्मणो नित्यत्वं रक्षितं भवेदिति भावः। एतत्सूचनायैव प्रकाशैकस्वरूपं ब्रह्मेति भाषितं पूर्वम्। अतो द्वितीयपक्ष एवावशिष्यते। सोऽपि सर्वविद्वज्जन निन्दितः, भवतामप्यनिष्ट इत्याशयेनाह - **प्रकाशतिरोधानं प्रकाशनाश एवेति** ॥

नन्विदमसङ्गतं घटादिर्भित्त्यादिना तिरोहित इत्युक्ते हि न घटस्वरूपविनाश आपादयितुं शक्यः। एवमविद्यया ब्रह्म तिरोहितमित्युक्तेऽपि न ब्रह्मस्वरूपनाशः प्रसज्यत इति चेदुच्यते। घटस्तिरोहितः, तेन न प्रकाशत इति हि व्यवह्रियते। अतो घटगतप्रकाशोत्पत्तिस्तत्र विरुध्यते। यत्र तु घटप्रकाशे सत्यावरणादिना घटादिस्तिरोहितस्तत्र विद्यमानस्य प्रकाशस्य विनाशः। अतस्तत्र न घटदीनां विनाशः। न ह्येवं ब्रह्मणि प्रकाशाख्यधर्मशून्ये उपपादयितुं शक्यमिति। नन्वविद्यया प्रकाशाख्य-ब्रह्मतिरोधानं नाम प्रकाशावारकाविद्यासम्योग एव। यथा घटतिरोधानं घटाच्छादकभित्त्यादिसम्योगः। तादृशसम्योगस्य ब्रह्मनिष्ठत्वेनाविद्याश्रयत्वोपपत्तिश्चेत्येवमवलम्बने न कोऽपि दोष इति चेद्ब्रूमः। प्रकाशतिरोधानस्य प्रकाशावारकवस्तु-सम्योगरूपत्वे आवारकत्वघटकं तिरोधानं किंरूपं, तस्याप्येतद्रूपत्वेऽनवस्था। उत्पत्तिप्रतिबन्धतद्विनाशान्यतररूपत्वे पूर्वोक्तदोषानिस्तार एव। अतो नाविद्याया ब्रह्म तिरोधायकत्वसम्भवः ॥

**अपि च निर्विषया निराश्रया स्व(यं)प्रकाशेयमनुभूतिः स्वाश्रयदोषवशादनन्ताश्रयमनन्तविषयमात्मानमनुभवतीत्यत्र किमयं स्वाश्रयदोषः परमार्थभूतः, उतापरमार्थभूत इति विवेचनीयम्। न तावत्परमार्थः, अनुभ्युपगमात्। नाप्यपरमार्थः। तथा सति (हि) द्रष्टृत्वेन वा दृश्यत्वेन वा दृशित्वेन वाऽभ्युपगमनीयः। न तावद्दृशिः, दृशिस्वरूपभेदानभ्युपगमात्; भ्रमाधिष्ठानभूतायास्तु साक्षाद्दृशेर्माध्यमिकपक्षप्रसङ्गेनापारमार्थ्यानभ्युपगमाच्च। द्रष्टृदृश्ययोस्तदवच्छिन्नाया दृशेश्च काल्पनिकत्वेन मूलदोषान्तरापेक्षयाऽनवस्था स्यात्।**

---

ननु भवन्मतेऽपि ज्ञानरूपाणां जीवात्मनां कर्मभिः तिरोधानाङ्गीकारेण स्वरूपनाशः प्रसज्येत। मैवम्। स्वरूपतिरोधानानङ्गीकारात्। ननु तर्हि ज्ञानरूपस्य स्वरूपस्य नित्यं स्फुरणाभ्युपगमात् कथं देहात्मादिभ्रमः। अतस्स्वरूपतिरोधानमवश्यमभ्युपेयमेवेति चेन्न। नित्यं स्वरूपस्फुरणेऽपि भ्रमविरोधीनां नित्यत्वाणुत्वनिरवयवत्वादीनां स्वरूपगतानां धर्माणां तिरोधानेन भ्रमोत्पत्तेस्सूपपादत्वात्। तेषां तिरोधानं हि तद्विषयकज्ञानप्रसराभावः। स च कर्मकृतः। तस्मात् स्वरूपातिरिक्तधर्मतिरोधानस्याङ्गीकारेण न स्वरूपनाशापादनसम्भवः। भवतां स्वरूपातिरिक्तिधर्मानभ्युग्पगमेन स्वरूपनाशप्रसङ्गो दुष्परिहरः। एवं धर्मभूतज्ञानतिरोधानाङ्गीकारेऽपि न तदनित्यत्वनाशापादनसम्भवः। ज्ञानरूपद्रव्यस्य स्वरूपातिरेकेण सङ्कोचविकासरूपावस्थाद्वयाङ्गीकारेण क्रमेण सङ्कोचविकासरूपतिरोधानतन्निवृत्तिद्वयसत्त्वेऽपि क्षतिविरहात्। विकासरूपप्रकाशस्यानित्यत्वाङ्गीकाराच्च। द्रव्यस्वरूपं हि नित्यम्। अवस्थाद्वयं त्वागमापायि। न च तर्हि धर्मज्ञानस्य कथं स्वप्रकाशत्ववादः, कर्मवशात्तस्य सङ्कुचितत्वेन तत्प्रकाशाभावादिति वाच्यम्। स्वप्रकाशनरूपप्रसरणार्हत्वनिबन्धनत्वात्तस्य। अतो नास्मन्मतेऽनुपपत्तिगन्धः॥

एवं तिरोधानानुपपत्तिरुक्ता। अथ दोषस्वरूपस्यानुपपत्तिरुच्यते - **अपि चेति**। निर्विषयेत्यारभ्यानुभवतीत्येतदन्तं परमतानुवादः। **निर्विषया** = निराश्रया। अनन्ताश्रयमनन्तविषयमित्यनेन दोषकल्पनाबीजं प्रदर्शितम्। विवेचनीयमित्यनेन भवद्भिरपि नैतावता विवेचितमिति सूचितम्। प्रथमकल्पं दूषयति - **न तावदिति**। अनभ्युपगमादिति। अन्यथाऽद्वैतहानिस्स्यादिति भावः। द्वितीयकल्पं दूषयति - **नापीति**। द्वितीयकल्पेऽपि सम्भावितकल्पत्रयमनुवदति - **तथा सति हीति**। द्रष्टृदृश्यदृशिव्यतिरिक्तस्यापरमार्थस्याभावेनैतेष्वन्यतमत्वेनैवाविद्यायाः स्वीकर्तव्यत्वं हिशब्दो दृढयति। दृशित्वपक्षं दूषयति - **न तावदिति**। किमनवच्छिन्नदृशेरविद्यात्वमुतावच्छिन्नदृशेरिति विकल्पमभिप्रेत्य प्रथमेऽपि किं स्वरूपातिरिक्तत्वमुत स्वरूपात्मकत्वमिति शिरोद्वयं मनसि निधाय क्रमेण व्युदस्यति - **दृशीति**। अनवच्छिन्नाधिष्ठानभूतदृशिस्वरूपापेक्षयाऽतिरिक्ताया दोषभूताया अपरमार्थभूताया अनवच्छिन्नदृशेरनङ्गीकारादित्यर्थः। अनवाच्छिन्नदृशेरेकत्वस्याङ्गीकारादित्याशयः।

द्वितीयं शिरो दूषयति - **भ्रमेति**। भवन्मते भ्रमाधिष्ठानभूताया ब्रह्माभिन्नदृशेः परमार्थत्वादपरमार्थदृशिस्वरूपत्वकल्पनमनुपपन्नम्। तथा सति साक्षाद्दृशेरपरमार्थत्वमेवाङ्गीकृतं स्यात्। न चेष्टापत्तिः। माध्यमिकविजयप्रसङ्गात्। ते हि दोषदोषाश्रयत्वादीनामिवाधिष्ठानस्याप्यपरमार्थत्वमुशन्ति इति भावः। अनवच्छिन्नदृशित्वविकल्पस्य परमार्थविकल्प एवान्तर्गततया स्वरूपतदतिरिक्तत्वविकल्पेन साऽप्यनुपपन्न इत्याशयः। अनवच्छिन्नदृशित्वद्रष्टृत्वदृश्यत्वस्वरूपत्वं व्युदस्यति - **द्रष्टृिति। काल्पनिकत्वेन** = अपरमार्थत्वादित्यर्थः। एष्वन्यतमरूपाया अविद्याया अपि परमार्थत्वेनापरमार्थप्रपञ्चस्येव तत्कल्पकदोषान्तरापेक्षा। कल्पकत्वेनाङ्गीकृतदोषस्याप्येवं विकल्पेनापरमार्थत्वस्याङ्गीकर्तव्यतया मूलदोषापेक्षेत्यनवस्था दुरुद्धरेत्याशयः।

नन्वनस्थादोषो न भवति। जीवाज्ञानवादिपक्षेऽविद्यया जीवः जीवादविद्येति बीजाङ्कुरन्यायेन प्रवाहानादित्वस्वीकारात्। ब्रह्माज्ञानपक्षेऽप्यपरमार्थाया अविद्यायाः स्वरूपानादित्वस्वीकारात्। पक्षद्वयेऽप्यविद्याया दुर्घटस्वभावत्वेना-

**अथैतत्परिजिहीर्षया परमार्थसती अनुभूतिरेव ब्रह्मरूपा दोष इति चेत् - ब्रह्मैव चेद्दोषः, प्रपञ्चदर्शनस्यैव तन्मूलं स्यात् ; किं प्रपञ्चतुल्याविद्यान्तरपरिकल्पनेन? ब्रह्मणो दोषत्वे सति तस्य नित्यत्वेनानिर्मोक्षश्च स्यात् । अतो यावद्ब्रह्मव्यतिरिक्तपारमार्थिकदोषानभ्युपगमः, न तावद्भ्रान्तिरुपपादिता भवति ॥**

**अनिर्वचनीयत्वञ्च किमभिप्रेतम् । सदसद्विलक्षणत्वमिति चेत्तथाविधस्य वस्तुनः प्रमाणशून्यत्वेन**

परमार्थत्वेऽप्युपपत्तिनिरपेक्षत्वात् स्वपरनिर्वाहकत्वाङ्गीकाराच्चानवस्थापरिहारसम्भवादिति चेत् ? उच्यते । जीवाज्ञानवादिमते प्रवाहानादित्वसमाधि र्जीवनित्यत्वादिश्रुतिविरुद्धः । आमोक्षं जीवस्य स्थायित्वाभ्युपगमपराहतश्च । ब्रह्माज्ञानवादिपक्षे स्वरूपानादित्वसमाधिरपि भ्रमाधिष्ठानस्यापि ब्रह्मणोऽपरमार्थत्वप्रतिबन्द्या पराहतः । अधिष्ठानापरमार्थ्येऽपि भ्रान्तिसिद्धत्वसम्भवादनवस्थायाश्च स्वरूपानादित्वेन परिहारसम्भवात् । एवं प्रपञ्चस्यापि स्वरूपानादित्वसम्भवेन तत्कल्पकत्वेनाविद्याया अभ्युपगमोऽनावश्यकः । अनादित्वेनाभ्युपगतजीवस्याप्यविद्यापरिकल्पितत्वस्य भवद्भिरङ्गीकारेणाविद्यायास्स्वरूपानादित्वेऽपि मूलदोषापेक्षाया आवश्यकत्वेनानवस्था तादवस्थ्यञ्चेत्यादिकमनुसन्धेयम् ।

उभयवादिमतेऽपि दुर्घटत्वपक्षो दुर्घट एव । तथा सत्यपरमार्थप्रपञ्चस्यैव दुर्घटत्वाङ्गीकारसम्भवेन प्रपञ्चतुल्याविद्यास्वीकारस्य निष्प्रयोजनत्वात्, निवर्तकज्ञानसमवधानवेलायामप्युपपत्तिनिरपेक्षाया अविद्यायाः स्थितिप्रसङ्गात् । अधिष्ठानस्यापि दुर्घटत्वाङ्गीकारेण तदपारमार्थ्येऽप्यनवस्थापरिहारसम्भवेन माध्यमिकपक्षविजयप्रसङ्गात् । मोक्षेऽप्यविद्याया ब्रह्माश्रयत्वापत्तेश्च । दुर्घटस्यप्यपारमार्थिकस्य वस्तुनः पारमार्थिकवस्तुसामग्रीनिरपेक्षत्वेऽप्यपारमार्थिकवस्तुसामग्रीसापेक्षत्वदर्शनेनाविद्याया अप्यपरमार्थवस्तुसामग्र्यन्तरावश्यकत्वेनानवस्थाया अपरिहारात् । न हि स्वल्पास्यस्य, विपुलप्रासादनिगरणं पारमार्थिकप्रासादनिगरणहेतुनिरपेक्षमप्यपरमार्थतद्धेतुभूतैन्द्रजालिकादि निरपेक्षं दृश्यते । एवं दोषस्य स्वपरनिर्वाहकत्वकल्पोपि न कल्पते । अन्यथाऽधिष्ठानस्यापि स्वपरनिर्वाहकत्वकल्पनेनापरमार्थत्वेऽपि दोषाभावात् । उभयत्राक्षेपसमाधानयोस्तुल्यत्वात् । अतो जीवाज्ञानपक्षे प्रवाहानादित्वदुर्घटत्वस्वपरनिर्वाहकत्वरूपानवस्थापरिहारमार्गो ब्रह्माज्ञानपक्षे स्वरूपानादित्वदुर्घटत्वस्वपरनिर्वाहकत्वरूपानवस्थापरिहारमार्गश्च न सम्भवतीति दोषभूताविद्याया अपरमार्थत्वाङ्गीकारपक्षेऽनवस्थादोषो दुरुद्धर एवेत्याशयः ॥

अविद्यायाः परमार्थत्वं ब्रह्मरूपत्वञ्चाभ्युपगम्यते । अतो नानवस्था । नाप्यद्वैतहानिरित्याशयेन शङ्कते - **अथेति** । **एतद्दोषेत्य**नेन वक्ष्माणदूषणस्य परिहारोऽनालोचित इति सूचितम् । पक्षोऽयमतिजघन्य इति व्यञ्जयितुं 'ब्रह्मैव चेद्दोष इति पुनरनूदितम् । **तत्** = ब्रह्म । दोषत्वाकारेण ब्रह्मणो मूलत्वमिष्टमेवेति गूढाशयः । कुत इत्यत्राह — **ब्रह्मण** इति । चो ह्यर्थे हेतुवाचकः । यतो ब्रह्मणो दोषत्वे तस्य नित्यत्वेन प्रपञ्चवत्तस्य नाशासम्भवेनाविद्यानिवृत्तिरूपमोक्षः कदापि न स्यात् । अतः प्रपञ्चतुल्याविद्यापरिकल्पनं न सिध्येदिति भावः ।

यद्वा ब्रह्मणो दोषत्वेन तत्त्वज्ञानेन तन्निवृत्तौ निर्विशेषब्रह्म-रूपमोक्षो न सिद्ध्येदित्याशयः । एवमुक्तानुपपत्तिभिर्दोषरूपाविद्यायाः परमार्थत्वब्रह्मव्यतिरिक्तत्वानङ्गीकारे न निस्तारः । सोऽप्यद्वैतहान्या निरस्त इत्याशयेन दोषस्वरूपमेवानुपपन्नम् । तत एव तत्कार्यभ्रान्तिरप्यनुपपन्नेति निगमयति - **अत इति** । अत्र दोषस्वरूपाद्यियायाः परमार्थत्वापरमार्थत्वोभयविलक्षणत्वाङ्गीकारेण समाधनं तु सदसदनिर्वचनीयत्वानुपपत्तिवदनुपपन्नमितपि ध्येयम् ।

अथ दोषस्यानिर्वचनीयत्वाभिमानं व्युदस्यति - **अनिर्वचनीयश्चेति** । ख्यातिबाधाद्यनुपपत्त्या पूर्वोक्तं सदसद्विलणत्वमेव तदिति शङ्कते - **सदिति** । दूषयति - **तथेति** । **प्रमाणशून्यत्वेनेति** । अयं भावः - सतोऽसद्विलक्षणत्वमसतस्सद्विलक्षणत्वञ्च दृष्टमिति न सदसद्विलक्षणमिति किञ्चिद्दृष्टम् । न हि भावाभावविलक्षणः कश्चन पदार्थः कैश्चिदपि

**अनिर्वचनीयतैव स्यात्। एतदुक्तं भवति - सर्वं हि वस्तुजातं प्रतीतिव्यवस्थाप्यम्। सर्वा च प्रतीतिः सदसदाकारा। सदसदाकारायास्तु प्रतीतेस्सदसद्विलक्षणं विषय इत्युभ्यपगम्यमाने सर्वं सर्वप्रतीतेर्विषयस्स्यादिति।**

**अथ स्यात् - वस्तुस्वरूपतिरोधानकरमान्तरबाह्यरूपविविधाध्यासोपादानं सदसदनिर्वचनीयमविद्याऽज्ञानादिपदवाच्यं वस्तुयाथात्म्यज्ञाननिवर्त्यं ज्ञानप्रागभावातिरेकेण भावरूपमेव किञ्चिद्वस्तु प्रत्यक्षानुमानाभ्यां प्रतीयते। तदुपहितब्रह्मोपादानश्चाविकारे स्वप्रकाशचिन्मात्रवपुषि तेनैव तिरोहितस्वरूपे प्रत्यगात्मनि अहङ्कारज्ञानज्ञेयविभागरूपोऽध्यासः। तस्यैवावस्थाविशेषेणाध्यासरूपे जगति ज्ञानबाध्यसर्प-**

प्रमाणानुसारिभिरङ्गीक्रियते। अतः प्रमाणमार्गमवलम्बमानानां सदसद्विलक्षणपदार्थः शशश्रृङ्गायमान एवेति। **अनिर्वचनीयतैव** = कथकपरिषदि न कथञ्चिदपि सूपपादत्वम्। ननु कथं प्रमाणशून्यत्वम्। अस्ति हि सदसद्विलक्षणमिति प्रतीतिः। अतोऽनयैव प्रतीत्या कुलधनभूतया सदसद्विलक्षणपदार्थसिद्धिरिति चेत्? प्रतीतिः स्वप्नलब्धसुवर्णसदृशीति प्रमाणशून्यत्वमुक्तं दुर्वारमित्याशयेनाह - **एतदुक्तमिति**। अर्थसिध्दौ प्रमाणतया प्रतीत्यवलम्बनं युक्तमेव। अथापि सदसद्विलक्षणाकारप्रतीति र्नास्तीत्याह - **सर्वमिति**।

नन्वस्तु सर्वस्या अपि प्रतीतेस्सदसदाकारत्वम्, अथापि तत्प्रतीतौ सदसद्विलक्षण एव किं विषयो न स्यादित्यत आह - **सदसदाकारायास्त्विति**। तुशब्दः सदसद्विलक्षणमिति प्रतीतेरपि सद्विलक्षणस्यासतोऽसद्विलक्षणस्य सत एव च विषयत्वं न तूभयविलक्षणस्य कस्यचिदिति व्यनक्ति। अतस्सदसद्विलक्षणमिति प्रतीतिरपि सदसदाकारैवेत्यर्थः। अयं भावः - ख्यातिबाधानुपत्त्या ह्यनिर्वचनीयवस्तुकल्पनम्। तच्चानुपपत्यन्तरं जनयति। घटपटाकार प्रतीतेरुभयविलक्षणस्य कुड्यस्येव सदसदाकारप्रतीतेरुभयविलक्षणस्य विषयत्वायोगात्। अन्यथा सर्वप्रतीतावपि सर्वस्याप्यर्थस्य विषयत्वमापतेत्। अतः ख्यातिबाधानुपपत्त्या तदुपपत्यर्थमेवं परिकल्पनमन्यस्यानुपपत्तिमेवावहति। न हि कस्यचिदनुपपत्या तदुपपत्त्यर्थं परिकल्प्यमानमन्यस्यानुपपत्त्यावहं चेत् कथं तर्हि कल्पितस्य युक्तम् भवेत्। अनुपपत्त्यन्तरपराहतत्वात्। तदुक्तं 'यदर्थापत्तितः कल्प्यं तदन्यस्य विरोधिताम्। भजेत चेन्न तत्कल्प्यं विरोधस्याप्रशान्तितः' इति। अपि च ख्यातिबाधाविषयत्वमविद्याया ब्रुवन् कथं सदद्विलक्षणत्वं ब्रवीति ख्यातिविषयत्वस्य सत्त्वरूपत्वाद्बाधविषयत्वस्यासत्त्वरूपत्वाच्च। अतः ख्यातिबाधानुपपत्तिरपि नास्तीति कथमनिर्वचनीयत्वकल्पनमिति॥

अथ प्रमाणानुपपत्त्याऽविद्यां दूषयिष्यन् आदौ तदुक्तं प्रत्यक्षानुमानप्रमाणमुपन्यस्यति - **अथ स्यादिति**। इति निरवद्यं स्यादितीत्यनेनोत्तरत्र स्यादित्यस्यान्वयः। तिरोधानाद्यंशस्य पूर्वं दूषितत्वेऽप्यनुमाने तस्यापि साधयिष्यमाणत्वात् सिद्धवत्कारेण तदाकारमप्यनुवदति - **वस्तुस्वरूपतिरोधानेति**। अध्यासेति कर्मणि घञन्तम्। अध्यस्तमित्यर्थः। एवमुत्तरत्रापि। अध्यासोपादानत्वोक्त्याऽविद्याया मिथ्यात्वमेव स्वरूपमित्युक्तम्। अविद्याऽज्ञानादिपादानां श्रुतिप्रत्यभिज्ञापानार्थं तत्पदवाच्यत्वोक्तिः। वस्तुयाथात्म्येत्यादिकं दूषयिष्यमाणाकारसाधनम्।

नन्वविद्याया एव विविधाध्यासोपादनत्वे ब्रह्मण उपादानत्वोद्घोषः कथमित्यत्राह - **तदुपहितेति**। न केवलमविद्याया उपादानत्वं, नापि केवलब्रह्मणः, किन्तु तदुपहितब्रह्मण एव। 'तस्मै गूढमग्रे प्रकेतमिति' श्रुतेरिति भावः। अविकार इत्यनेन निष्कृष्टब्रह्मण उपादानत्वमनुपपन्नमिति सूचितम्। अविकारत्वं स्वप्रकाशत्वं प्रत्यक्त्वञ्च विकारास्पदजडपराग्रूपपरिणामे बाधकमिति भावः। तिरोहितस्वरूप इत्यनेन प्रकाशैकस्वरूपस्याप्यध्याससम्भव उक्तः। आन्तरब्राह्यरूपविविधाध्यासोपादानमित्यत्रोक्त आन्तर-शब्दोऽहङ्कारज्ञानाभ्यां व्याख्यातः। बाह्यशब्दश्च ज्ञेयेन। नन्वेवं जगदध्यासस्याविद्यामूलत्वेऽध्यस्तेऽपि जगति पुनरध्यासः किन्निबन्धनः। दृश्यते हि रज्जुशुक्त्यादौ सर्परूप्यादेरध्यास इत्यत्राह - **तस्यैवेति**। **अवस्थाविशेषेणेति**। एकैवाविद्या, परन्त्ववस्थाभेदेनानेक विधा। तूलाविद्या पल्लवाविद्यादिभेदात्। अतो रज्जुशुक्त्यज्ञान-

**रजतादिवस्तुतत्तज्ज्ञानरूपा(पोऽ)ध्यासोऽपि जायते । कृत्स्नस्य मिथयारूपस्य तदुपादानत्वञ्च मिथ्या-भूतस्यार्थस्य मिथ्याभूतमेव कारणं भवितुमर्हतीति हेतुबलादवगम्यते ।**

**कारणाज्ञानविषयं प्रत्यक्षं तावत् - 'अहमज्ञः, मामन्यं च न जानामि' इत्यपरोक्षावभासः । अयन्तु न ज्ञानप्रागभावविषयः । स हि षष्ठप्रमाणगोचरः । अयन्तु 'अहं सुखी' तिवदपरोक्षः । अभावस्य प्रत्यक्ष(गोचर)त्वाभ्युपगमेऽप्ययमनुभवो नात्मनि ज्ञानाभावविषयः; अनुभववेलायामपि ज्ञानस्य विद्यमान-त्वात् ; अविद्यमानत्वे ज्ञानाभावप्रतीत्यनुपपत्तेश्च । एतदुक्तं भवति - अहमज्ञ इत्यस्मिन्ननुभवेऽहमिति आत्मनोऽभावधर्मितया, ज्ञानस्य च प्रतियोगितयाऽवगतिरस्ति वा, न वा । अस्ति चेद्विरोधादेव न ज्ञानाभावा-नुभवसम्भवः । नो चेत्, धर्मिप्रतियोगिज्ञानसव्यपेक्षो ज्ञानाभावानुभवः सुतरां न सम्भवति ।**

---

रूपाविद्याविशेषेण तत्तदध्यासोपपत्तिरिति भावः । एवन्तु निष्कृष्टब्रह्मण उपादानत्वानुपपत्तिमुक्त्वाऽविद्याया उपादानत्वे औचित्यं दर्शयति - **कृत्स्नस्येति** । मृत्सजातीयस्य घटस्य मृदेव त्वुपादानं दृष्टम् । अतः कार्यकारणयोस्सजातीयत्वदर्शनेन मिथ्याभूताविद्याया एवोपादानत्वं युक्तिमदिति भावः । न चैतावता ब्रह्मणोऽनपेक्षितत्वम् । अध्यासाधिष्ठानत्वेना-पेक्षितत्वात् ।

अविद्यायां प्रत्यक्षप्रमाणं दर्शयति - **कारणेति** । अहज्ञः, मामन्यश्च न जानामीत्यपरोक्षावभासः कारणाज्ञानविषयं प्रत्यक्षमित्यन्वयः । तावदिति वाक्यालङ्कारे । यद्वा तावदित्यवधारणे । अपरोक्षावभास एव कारणाज्ञानविषयं प्रत्यक्षमित्य-न्वयः । अज्ञ इत्येतद्विवरणं मामन्यश्च न जानामीति । अज्ञाने कारणत्वविशेषणेन कार्यमज्ञानं व्यावर्तितम् । इदश्च कारणाज्ञानं सौषिप्तिकं विवक्षितम् । जागरिताद्यवस्थायां घटाद्यवच्छिन्नमज्ञानं प्रतीयते सविकल्पकप्रत्यक्षेण । सुषुप्तावनवच्छिन्न-कारणाज्ञानप्रतीतिरिति तत्त्वशुद्धिकारादिभिरुक्तत्वात् । अन्यश्च न जानामीत्यन्यपरामर्शः पाश्चात्यः । जागरितावस्थानुभूता-ज्ञानमेव विवक्षितमिति केचित् । अज्ञ इत्यनुभूयमानस्याज्ञानस्याच्छादकत्वेन प्रतीयमानस्य वस्तुतः कारणत्वात्कारणा-ज्ञानमित्युक्तम् । ननु जानामीति ज्ञः, न ज्ञोऽज्ञः - इत्येवं व्युत्पत्त्याऽहमर्थस्य ज्ञातृभिन्नत्वमेव प्रतीयते, न त्वज्ञानाश्रयत्वं भवदभिमतमिति चेन्न । न जनामीत्यज्ञ इत्येव व्युत्पत्यङ्गीकारेणाज्ञानाश्रयत्वलाभात् । अत एव न जानामीति विवृतम् ।

उक्तप्रत्यक्षस्यान्यथासिद्धिं परिहरति - **अयमिति** । तुशब्दः उक्तप्रत्यक्षस्यान्यविषयत्वासम्भवद्योतकः । स ज्ञानप्राग-भावः । **षष्ठप्रमाणगोचरः** = अनुपलब्ध्यात्मकप्रमाणैकगोचरः । परोक्षप्रमाणगोचरस्यापि वह्निमत्वादेरपरोक्षत्वदर्शनेना-स्यापि तथात्वे नानुपपत्तिरिति चोद्यं परिहृतम् । अत एव परोक्षप्रमाणगोचर इति न भाषितम् । षष्ठप्रमाणगोचरत्वाभावम-हमज्ञ इत्यत्राज्ञानस्य दृष्टान्तप्रदर्शनेन दृढयति - **अयं त्वहं सुखीतिवदिति** । अहं सुखीत्यस्य प्रत्यक्षत्ववदहमज्ञ इत्यस्य प्रत्यक्षत्वेन प्रत्यक्षस्य च परोक्षप्रमाणैकगम्याभावग्राहकत्वाभावेन नाभावविषयकत्वं युक्तमित्याशयः । अस्तु वा नैयायिका-दिवद्योग्यानुपलब्धिसहकृतेन्द्रियस्यैवाभावग्राहकत्वाभ्युपगमेनाभावस्य प्रत्यक्षविषयत्वम् । अथाप्यहमज्ञ इत्यनुभव आत्म-धर्मिकज्ञानाभावविषयको न भवतीत्याह - **अभावस्येति** । **आत्मनीति** सप्तम्या विशेष्यत्वमर्थः । अहमज्ञ इत्यभावानुभव-वेलायां ज्ञानं विद्यते न वा । अस्ति चेत् ज्ञानस्यैव सत्त्वेन ग्राह्यज्ञानाभावाभावेन नाभावप्रतीतिः शक्या । नो चेद्ग्राहकस्यैवा-सत्त्वेन न ज्ञानाभावोल्लेखसम्भव इति वाक्यद्वयेन हेतुं प्रदर्शयति - **अनुभवेत्यादिना** ।

नन्वहमज्ञ इति प्रतीते र्ज्ञानाभावविषयकत्वेऽपि न क्षतिः, ग्राहकज्ञानाभावविषयकज्ञानसत्त्वेऽपि ज्ञानाभावज्ञाना-तिरिक्तवस्तुविषयकज्ञानाभावस्य ग्राह्यस्य सत्त्वेऽनुपपत्त्यभावात् इत्याशङ्कायामभिप्रायमुद्घाटयति - **एतदिति** । विकल्पि-तयोः प्रथमपक्षे दूषणमाह - **अस्ति चेदिति** । द्वितीयपक्षे तदाह - **नो चेदिति** । अयं भावः सर्वत्राभावज्ञाने प्रतियोगिधर्मिणो

**ज्ञानाभावस्यानुमेयत्वेऽभावाख्यप्रमाणविषयत्वे चेयमनुपपत्तिः समाना । अस्याज्ञानस्य भावरूपत्वे धर्मिप्रतियोगिज्ञानसद्भावेऽपि विरोधाभावादयमनुभवो भावरूपाज्ञानविषय एवाभ्युपगन्तव्यः - इति ।**

**ननु च - भावरूपमप्यज्ञानं वस्तुयाथात्म्यावभासरूपेण साक्षिचैतन्येन विरुध्यते । मैवम् - साक्षिचैतन्यं न वस्तुयाथात्म्यविषयम्; अपि त्वज्ञानविषयम्; अन्यथा मिथ्यार्थावभासानुपपत्तेः । न ह्यज्ञानविषयेण ज्ञानेनाज्ञानं निवर्त्यत इति न विरोधः ॥**

---

ज्ञानमावश्यकम्, अन्यथाऽभावबुद्ध्यनुदयात् । अतोऽत्राभावग्रहणव्यतिरिक्तधर्मिप्रतियोगिविषयकज्ञानस्यैव सत्त्वेनाभावग्रहणव्यतिरिक्तविषयकज्ञानाभावरूपग्राह्याभावेनाभावप्रतीतिरेवानुपपन्ना । न चाभावधर्मिप्रतियोगिरूपत्रितयव्यतिरिक्तविषयकज्ञानाभाव एवात्रविषयः । स च न बाधित इति वाच्यम् । उक्तयुक्त्या प्रतियोगिभूतज्ञानस्यापि प्रतीत्यावश्यकत्वेन प्रतीयमानस्य च तस्य स्वविषयावच्छिन्नत्वेनैव प्रतीत्या विषयाणामपि प्रतियोगिज्ञानावच्छेदकतया प्रतीयमानत्वेन त्रितयव्यतिरिक्तविषयज्ञानाभावस्य ग्राह्यस्यासत्त्वेन सङ्कोचेऽप्यप्रतीकारात् । अतोऽभावधर्मिप्रतियोगिविषयात्मकसर्वविषयकज्ञानस्य सत्त्वेन बाधान्नास्यानुभवस्य ज्ञानाभावविषयकत्वसम्भवः ॥

एतेनाहमज्ञ इत्यनुभवस्योक्तयुक्त्या अज्ञानसत्त्वे ज्ञानसामान्याभावस्यानुपपन्नत्वेन ज्ञानात्यन्ताभावविषयकत्वाभ्युपगमासम्भवेऽपि ज्ञानप्रागभावविषयकत्वाङ्गीकारपक्षो युज्यते । तथा सति प्रागभावस्य सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वविरहेण किञ्चिद्विषयकज्ञानप्रतियोगिताकाभावस्यैवात्र विषयत्वाभ्युपगमावश्यकत्वेन ज्ञानाभावनुभवदशायामपि ज्ञानाभावविषयसत्त्वेनानुपपत्ति र्नास्तीति निरस्तम् । ज्ञानप्रागभावबुद्धावपि प्रतियोग्यादिज्ञानस्यावश्यकत्वेन प्रतियोगिभूतज्ञानप्रतीतौ स्वविषयावच्छिन्नत्वेनैव प्रवृत्त्या विषयस्य प्रतियोगिभूतज्ञानावच्छेदकतया प्रतीतिरवर्जनीयेति तज्ज्ञानसत्त्वे तज्ज्ञानप्रागभावस्यासत्त्वेन ग्राह्याभावप्रयुक्तप्रतीत्यनुपपत्तेस्समानत्वात् । प्रतियोगिभूतज्ञानस्य च स्वविषयावच्छिन्नत्वेनैव प्रतीतिश्चेष्टव्या । अन्यथा व्यावर्तकविषयाप्रतीत्या विषयविशेषव्यावृत्तज्ञानाभावग्रहणानुपपत्तेरिति । एवं ज्ञानाभावस्य प्रमाणान्तरवेद्यत्वाङ्गीकारेऽप्युक्तं दूषणं समानतित्याह - **ज्ञानाभावस्येति** । भावरूपत्वाङ्गीकारे विरोधाभावमुपपादयति - **अस्येति** । **धर्मिप्रतियोगिज्ञानसद्भावेऽपीति** । आश्रयविषयकज्ञानाज्ञानविषयकज्ञानयोस्सत्त्वेऽपि । अत्र प्रतियोगिपदमज्ञानविषयकग्राहकज्ञानपरम् । न त्वभावपरत्व इव प्रतियोगिज्ञानपरम् । अज्ञानस्य भावरूपत्वाभ्युपगमात् । उक्तश्च तैरज्ञानस्य भावरूपत्वेऽविरोधः । यथा - भावरूपाज्ञानप्रत्यक्षवाद इति । उभयोरपि भावरूपत्वेन भावाभावरूपत्वाभावान्न विरोध इत्याशयः ।

नन्वेतावता 'अहमज्ञो' 'मामन्यश्च न जानामी'त्यनेनाज्ञानस्याहमर्थाश्रयकत्वमहमर्थाद्यर्थविषयकत्वञ्चोक्तम् । तत्रास्मदर्थस्य साक्षिचैतन्यरूपस्य स्वयम्प्रकाशत्वेन वस्तुयाथात्म्यप्रकाशरूपत्वेन तेजस्तिमिरयोरिव भावरूपत्वेऽपि विरोधात्कथमज्ञानाश्रयत्वमिति शङ्कते - **नन्विति** । चः वक्ष्यमाणचोद्यसमुच्चये । अपिशब्दो भावरूपत्वाभ्युपगमेऽपि विरोधस्तदवस्थ इति सूचनाय । समाधत्ते - **मैवमिति** । **न वस्तुयाथात्म्यविषयं** = वस्तु याथात्म्यविषयकप्रमाणज्ञानं न भवतीत्यर्थः । प्रमाण ज्ञानस्यैवाज्ञाननिवर्तकत्वाभ्युपगमः । तस्यैव वस्तुयथात्म्यविषयकत्वाङ्गीकारस्यावश्यकत्वात् । अत एव च न साक्षिचैतन्यस्य वस्तुयाथात्म्यविषयकत्वमिति भावः । **अज्ञानविषयमिति** - अज्ञानाश्रयत्वमुच्यते । साक्षिचैतन्यस्यैव वस्तुयथात्म्यविषयत्वं स्वीकृत्य निवर्तकत्वस्वीकारेऽविद्याश्रयत्वास्वीकारे च बाधकमाह - **अन्यथेति** । प्रपञ्चमिथ्यात्वस्य सम्प्रतिपन्नत्वमभिप्रेत्य मिथ्यार्थेत्युक्तम् । ब्रह्मणोऽज्ञानाश्रयत्वस्वीकारे च न विरोध इत्याह - **न हीति** । अज्ञानाश्रयशुक्तेरज्ञाननिवर्तकत्वादर्शनेनाज्ञानाश्रयब्रह्मणोऽपि नाज्ञाननिवर्तकत्वं शुक्तिज्ञानस्येव प्रमाणज्ञानस्य निवर्तकत्वादित्याशयः । एवमस्मदर्थाज्ञानयोराश्रयाश्रयिभावानुपपत्तिः परिहृता ।

**ननु चेदं भावरूपमप्यज्ञानं विषयविशेषव्यावृत्तमेव साक्षिचैतन्यस्य विषयो भवति। स विषयः प्रमाण-(न)धीनसिद्धिरिति कथमिव साक्षिचैतन्येनास्मदर्थव्यावृतमज्ञानं विषयीक्रियते ? नैष दोषः। सर्वमेव वस्तु-जातं ज्ञाततयाऽज्ञाततया वा साक्षिचैतन्यस्य विषयभूतम्। तत्र जडत्वेन ज्ञाततया सिध्यत एव प्रमाणव्यवधा-नापेक्षा। अजडस्य तु प्रत्यग्वस्तुनः स्वयं सिध्यतो न प्रमाणव्यवधानापेक्षेति सदैवाज्ञानस्य व्यावर्तकत्वेनाव-भासो युज्यते। तस्मान्न्यायोपबृंहितेन प्रत्यक्षेण भावरूपमेवाज्ञानं प्रतीयते॥**

**तदिदं भावरूपमज्ञानमनुमानेनापि सिध्यति - विवादाध्यासितं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्त-**

---

अथ विषयिविषयभावप्रयुक्तविरोधः परिह्रियते। तत्र पूर्वपक्षमनुवदति - **ननु चेति**। **विषयविशेषव्यावृत्तं** = अवच्छेदकविशेषावच्छिन्नम्। ज्ञानमित्युक्ते हि किं घटज्ञानमुतान्यज्ञानमिति संशयो जायते। घटज्ञानमित्युक्ते त्वितर-ज्ञानाद्व्यावृत्तिस्स्फुटमवगम्यते। अतस्तत्र विषयविशेष एव **अवच्छेदः** = व्यावर्तकः। तद्वदज्ञानस्यापि विषयविशेष एव व्यावर्तक इति विषयविशेषावच्छिन्नाज्ञानमेव। अहमज्ञ इति प्रतीतौ विषयोऽभ्युपगन्तव्य इति भावः। ततः किमि-त्यत्राह - **स विषय** इति। **सः** = अवच्छेदकीभूतः। **प्रमाणाधीनसिद्धिकः** = प्रमाणाधीनप्रकाशाश्रयः = ज्ञानविषय इत्यर्थः।

अयं भावः - दृश्यघटविशेषणस्य रूपादे र्दृश्यत्वदर्शनेनास्मदर्थावच्छिन्नाज्ञानस्यापि 'अहमज्ञ' इति दृश्यत्व-रूपज्ञानविषयत्वेन तदवच्छेदकस्यास्मदर्थस्यापि दृश्यत्वमेव प्रसज्यते। दृश्यत्वञ्च भवद्भिर्नाभ्युपगम्यते। अतस्तद-वच्छिन्नाज्ञानस्य विषयीकार एव न घटत इति। प्रमाणानधीनसिद्धिक इति पाठे त्वज्ञानविषयस्यावच्छेदकीभूतस्या-स्मदर्थस्य दृश्यत्वानङ्गीकारेण प्रमाणानधीनसिद्धिकत्वात् कथं तदवच्छिन्नाज्ञानस्य साक्षिचैतन्यभास्यत्वमित्यर्थः। इति हेतौ। पूर्वत्र व्याप्तिप्रदर्शनम्। अत्र साक्षिचैतन्यविषयत्वं साक्षिभास्यत्वम्। 'अहं सुखी'त्यादौ सुखादे र्मनोवेद्यत्ववत्तन्मते 'अहमज्ञ' इत्यादावज्ञानादेः साक्षिभास्यत्वाभ्युपगमात् दृश्यत्वविशेषणस्य दृश्यत्वं जडत्वप्रयुक्तमित्याशयेन परिहरति - **नैष दोष** इति। **ज्ञाततया** = ज्ञानान्तरसव्यपेक्षम्। **अज्ञाततया** - ज्ञाननिरपेक्षम्। **साक्षिचैतन्यस्य विषयभूतमिति**। अयं भावः। अस्मदर्थस्य ज्ञानरूपत्वेन स्वयम्प्रकाशत्वाज्ज्ञानान्तरविषयत्वासम्भवेन तस्य प्रमणाधीनसिद्धिकत्वमनपेक्षितम्। जडस्य तु स्वयम्प्रकाशत्वाभावेन प्रमाणाधीनसिद्धिकस्यैव सतः दृश्यविशेषणत्वम्। अतोऽस्मदर्थावच्छिन्नाज्ञानस्य साक्षिभास्यत्वे न किञ्चिद्बाधकम्। तस्माद्दृश्यविशेषणावच्छिन्नस्यैव भास्यत्वमिति जडविषय एव व्याप्तिर्न त्वजडेऽपीति। **ज्ञाततया सिध्यतः** = ज्ञानसापेक्षं प्रकाशमानस्य। तत्र जडत्वेनेति हेत्वनुक्तिः। अजडस्येति हेतुगर्भविशेषणम्। **स्वयं सिध्यतः** = स्वयम्प्रकाशस्य। इति हैतौ। अहमज्ञ इति प्रत्यक्षेऽज्ञानस्याभावरूपत्वे उक्तामनुपपत्तिं भावरूपत्वे उपपत्तिमनु-पपत्यभावं चाभिसन्धाय तादृशप्रत्यक्षभावरूपाज्ञानविषयत्वमेव युक्तमित्युपसंहरति - **तस्मादिति**।

एवं प्रत्यक्षेण भावरूपाज्ञानं प्रसाध्य स्वनिवर्त्यत्वाकारेण सहोक्ताकारविशिष्टमज्ञानमनुमानेनापि साधयितुं शक्य-मित्याह - **तदिदमिति**। **तत्** = प्रत्यक्षसिद्धम्। **इदं** = वक्ष्यमाणानुमानगम्यम्। भावरूपमेवेत्यवधारणेनाज्ञानस्याभावरूपत्वं कथञ्चिदपि प्रमाणागम्यमिति व्यनक्ति। अहमज्ञो मामन्यञ्च न जानामीत्यत्र 'अहमज्ञ' इत्यनेनाज्ञानस्य साश्रयत्वमुक्तम्। मामन्यञ्च न जनामीत्यनेन सविषयत्वमुक्तम्। तच्च सविषयत्वरूपधर्मान्तरवैशिष्ट्यावगाहीत्यज्ञानविषयावरणरूपकार्य-वैशिष्ट्यमुक्तं भवति। ततश्च प्रत्यक्षेऽज्ञानस्य भावरूपत्वं स्वविषयावरणत्वं किञ्चिदाश्रयत्वरूपदेशगतत्वञ्च सिद्धम्। अनुमाने तु स्वनिवर्त्यत्वाकारोऽधिक इति ज्ञेयम्। प्रभाभावव्यतिरिक्तप्रभाविषयावारकप्रभानिवर्त्यप्रभासम्युक्तदेशगता-न्धकाररूपवस्त्वन्तरपूर्वकत्वम् अप्रकाशितार्थप्रकाशिकाया निदर्शितायाः प्रभाया अस्तीति समन्वयः। एवं प्रमाणज्ञान-स्याज्ञानपूर्वकत्वं प्रमाणज्ञाने जननीयेऽज्ञानस्य पूर्वमवश्यं सत्त्वात्। तादृशज्ञानस्याभावव्यतिरिक्तत्वस्वविषयावारकत्व-स्वनिवर्त्यत्वात्स्वदेशगताज्ञानस्य वस्त्वन्तरशब्देनोपादानसम्भवात्। केवलज्ञानस्य पक्षीकारे ब्रह्मणोऽपि ज्ञानरूपत्वेन

**स्वविषयावरण-स्वनिवर्त्य-स्वदेशगत-वस्त्वन्तरपूर्वकम् ; अप्रकाशितार्थप्रकाशकत्वात् ;**

तस्योक्तवस्त्वन्तरपूर्वकत्वाभावेन बाधस्स्यात्। अतः प्रमाणज्ञानमिति। प्रमीयतेऽनेनेति प्रमाणम्। तज्जन्यं ज्ञानमित्यर्थः। यद्वा प्रमीयत इति प्रमाणं तदात्मकज्ञानं, प्रमित्यात्मकं ज्ञानमिति यावत्। एतेनैव भ्रमात्मकज्ञानस्याज्ञानपूर्वकत्वाभवाभ्युपगमपक्षे तत्र बाधोऽपि वारितः। धारावाहिकविज्ञाने उत्तरोत्तरविज्ञानानां प्रमाणज्ञानानां वस्त्वन्तरपूर्वकत्वं नास्तीति तद्व्यावृत्यर्थं विवादाध्यासितमिति। न चाबाधितानधिगतार्थगन्तृत्वस्यैव प्रामाण्यरूपत्वेन धारावाहिकविज्ञानस्याधिगतार्थगन्तृत्वेन नानुपपत्तिरिति वाच्यम्। तत्राप्युत्तरोत्तरविज्ञानानां तत्तत्कालांशभानाङ्गीकारेणानधिगतार्थगन्तृत्वसम्भवात्। वस्तुतो धारावाहिकज्ञानस्यैकत्वमङ्गीकुर्वतां नानुपपत्तिः। तदुक्तं - 'स्तम्भस्स्तम्भस्स्तम्भ इति धीर्धारावाहिका मता। धारावाहिकविज्ञानमेकं ज्ञानं मतं हि नः' इति। परन्तु विवादाध्यासितं प्रमाणज्ञानमित्युभयोपादानं ज्ञानमात्रमित्युक्तौ ब्रह्मणोऽपि ग्रहणसम्भवेन तद्व्यावृत्त्यर्थम्। विवादाध्यासितमित्युक्तिः तच्च ज्ञानं प्रमाणज्ञानमेवेति स्फुटीकरणाय। विवादा-ध्यासितत्वञ्च ज्ञाने स्वप्रागभावकालावच्छिन्नसंशयविपर्ययाज्ञानान्यतमविषयविषयकत्वम्।

ननु प्रमाणज्ञानोत्पत्तेः पूर्वं संशयस्य विपर्ययस्य वा सत्त्वे तस्य संशयविपर्ययान्यतरपूर्वकत्वमेव स्यात्। न त्वज्ञानपूर्वकत्वमिति चेन्न संशयविपर्ययसत्त्वेऽपि ततः पूर्वमज्ञानस्यावश्यसत्त्वात्। घटो न वेति संशयसत्त्वेपि घटयाथात्म्याज्ञानमस्त्येव, किमुत विपर्ययसत्त्वे। साध्यस्वरूपं प्रदर्शयति - **स्वेति**। पूर्वतासम्बन्धेन स्वप्रागभावव्यतिरिक्तत्वस्वविषयावरणत्वस्वविषयत्वस्वदेशगतत्वविशिष्टवस्त्वन्तरवत्वं साध्यम्। अतोऽज्ञानस्य भावरूपत्वादिसिद्धिः। अत्राज्ञानस्य भावरूपत्वस्वविषयावरणत्वादीनां सिध्यर्थमेव स्वप्रागभावव्यतिरिक्तेत्यादि विशेषणम्। अन्यथा तेषामसिद्धिस्स्यात्। अतस्साध्यघटकदलानां नान्यत्प्रयोजनं वक्तव्यम्। अथापि साध्यघटकदलानां निष्प्रोजनत्वे तदभावेऽपि साध्योपपत्तावनपेक्षितदलांशनिवेशनेन निग्रहस्थानापत्तिरिति सिद्धसाधनपरिहारार्थतया प्रयोजनं बुद्धिवैशद्यायोच्यते। अत्र दलानां प्रतिलोमव्यावृत्तिरनुलोमव्यावृत्तिश्चेत्युभयविधव्यावृत्तिकथनमेकैकदलेनान्यदलवैयर्थ्यं न सम्भवतीति सर्वदलस्याप्यावश्यकत्वद्योतनार्थमेव।

तदेव दिङ्मात्रं प्रदर्श्यते। स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकत्वरूप साध्ये वस्तुनि स्वप्रागभावव्यतिरिक्तत्वविशेषणाभावे ज्ञानप्रागभावमादाय सिद्धसाधनं स्यात्। तस्य स्वविषयप्रकाशविरोधित्वेन स्वविषयावरणत्वात्स्वनिवर्त्यत्वात्स्वदेशगतत्वाच्च। अतस्तन्निवेशः। स्वविषयावरणत्वविशेषणाभावे भयमादाय सिद्धसाधनं स्यात्। तस्य ज्ञानप्रागभावव्यतिरिक्तत्वात्स्वनिवर्त्यत्वात्स्वदेशगतत्वाच्च। भयस्य क्षणिकत्वात्स्वयमेव विनाशेन ज्ञाननिवर्त्यत्वाभावेऽपि ज्ञानोत्पादकादृष्टमादाय सिद्धसाधनं स्यात्। तस्य स्वप्रागभावादि व्यतिरिक्तत्वसम्भवात्। ज्ञानोत्पादकादृष्टस्य ज्ञानोत्पत्त्या निवृत्त्या, ज्ञाननिवर्त्यत्वस्यापि सत्वात्। ज्ञानप्रतिबन्धकादृष्टमादाय सिद्धसाधनपरिहाराय स्वनिवर्त्यत्वविशेषणं, तादृशादृष्टस्य ज्ञानविषयार्थप्रकाशविरोधित्वेन स्वविषयावरणत्वस्यान्यस्य च सत्त्वात्। वेद्यगतवित्तिरूपविषयाधिष्ठानचैतन्यनिष्ठाभिव्यक्तिप्रागभावव्यावृत्तये स्वदेशगतत्वोक्तिः। तस्य प्रमाणज्ञानप्रगभावव्यतिरिक्तत्वात्। अर्थप्रकाशविरोधित्वेन स्वविषयावरणत्वात्प्रमाणज्ञानेनाज्ञाननिरासे वेद्यगतचैतन्याभिव्यक्तेस्तैरङ्गीकारेण स्वनिवर्त्यत्वाच्च। तन्निवेशे तु वित्तिनिष्ठाभिव्यक्तिप्रागभावस्य वित्तिगतत्वेन प्रमाणज्ञानदेशगतत्वं नास्तीति व्यावृत्तिः। एवं विषयगताप्रकाशापरपर्यायाज्ञातता व्युदासाय स्वदेशगतत्वनिवेशः। तस्य विषयप्रकाशविरोधित्वेन स्वविषयावरणत्वात्, ज्ञानोत्पत्तौ अप्रकाशनिवृत्त्या ज्ञाननिवर्त्यत्वाच्च। अत्र स्वाश्रयगतत्वोक्तौ दृष्टान्तः साध्यविकलस्स्यात्। प्रभाश्रयदीपस्य तमोधिकरणत्वाभावात्। प्रभादेशे 'अयं प्रभाश्रय' इति व्यवहाराभावेन तमोधिकरणस्य प्रभाश्रयत्वाभावाच्च। अतस्स्वदेशगतत्वोक्तिः इति ॥

हेतुमाह - **अप्रकाशितेति**। साक्षाद्वा परम्परया वाऽप्रकाशितार्थविषयकाबाध्यव्यवहारानुगुण्यहेतुत्वं तदर्थः।

**अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति । आलोकाभावमात्रं वा रूपदर्शनाभावमात्रं वा तमः ; न द्रव्यान्तरम् (द्रव्यम्) । तत् कथं भावरूपाज्ञानसाधने निदर्शनतयोपन्यस्यत इति चेत् -**

ज्ञानस्य साक्षाद्व्यवहारहेतुत्वं, प्रभायास्तु स्वविरोधिसन्तमसनिरासेन ज्ञानमुत्पाद्य । अतो न पक्षदृष्टान्तयोस्साधनवैकल्यम् । धारावाहिकविज्ञाने व्यभिचारपरिहाराय व्यवहारेऽप्रकाशितार्थविषयकत्वम् । इदं रजतमिति भ्रमात्मकज्ञानस्याज्ञानपूर्वकत्वाभावेन तत्र व्यभिचारवारणायाबाध्यत्वनिवेशः । तस्यापि प्रातिभासिकाज्ञानपूर्वकत्वाभ्युपगमेऽबाध्यत्वमनपेक्षितम् । वस्तुतः प्रमाणज्ञानमिति पक्षनिर्देशस्वारस्यात्भ्रमात्मकज्ञानस्याज्ञानपूर्वकत्वं नास्तीति युक्तम् । इन्द्रिये व्यभिचारवारणाय भासमानत्वे सतीति हेतौ विशेषणं देयम् । स्वरूपसत एवेन्द्रियस्यार्थप्रकाशत्वमिति न दोषः । मण्यादिप्रभाया अर्थप्रकाशकत्वाभावेन प्रदीपप्रभेत्युक्तम् । उत्तरोत्तरप्रभावारणाय प्रथमोत्पन्नेति । दिवाकालिकतादृशप्रभावारणाय - **अन्धकारेति** । अन्यथोक्तस्थलेषु साधनवैकल्यं स्यादिति भावः ।

अत्र नैयायिकादिमतावलम्बनेन शङ्कते - **आलोकेति** । अयमत्र नैयायिकानामभिसन्धिः - नीलं तमश्चलतीत्यबाधितनीलादिप्रतीतिबलाद्धि तमसो द्रव्यत्वमुच्यते । तच्च न घटते, नीलादिप्रमाहेत्वालोकसम्योगाभावेनाविद्यमाने आलोके जायामानाया अस्याः प्रतीते र्बाधितत्वेन विषयसाधकत्वाभावात् । आलोकसन्निधाने तु विषयस्यैवासत्त्वेनास्य ग्राह्यत्वमेव न सम्भवति । अतो नीलं तमश्चलतीति रूपवत्वप्रतीति र्भ्रान्तिरेव । यथा निमीलने नीलप्रतीतेर्भ्रान्तित्वम् । निमीलितनेत्रस्य पुंसो नीलं तमश्चलतीति प्रतीतिर्हि जायते । किमत्र बाह्यं तमः प्रतीयते आन्तरं वा । न प्रथमः बहलालोकवितते प्रदेशे बाह्यस्य तमसोऽसम्भवात् । नापि द्वितीयः । प्रसरणस्वभावानां नायनरश्मीनामान्तरतमोग्राहकत्वासम्भवात् । अन्यथा नयनान्तरस्थाञ्जनग्रहणापत्तेः । अतस्सा भ्रान्तिः । तद्वदियमपि भ्रान्तिरेव । आलोकाभावे तदनुगृहीतग्राहकाभावात् । तत्सत्त्वे ग्राह्यस्यासत्त्वात् । एवं तमसो द्रव्यत्वे तदुत्पादकं किम् ? न तावद्वाय्वाकाशादीनि । भवद्भिः तमसो रूपवत्त्वाङ्गीकारेण तेषामुत्पादकत्वासम्भवात् । कारणे गुणसत्वे कार्ये गुणोत्पत्तिः । अन्यथा आकाशादीनामपि रूपवत्वापत्तेः । तमसि स्पर्शरसगन्धानङ्गीकारेण नान्यद्रव्याणामप्युत्पादकत्वम् । अत उत्पादक-ज्ञापकानुपपत्त्या न तमसो द्रव्यत्वसम्भवः । किन्त्वालोकाभावरूपत्वमेवेति ।

नन्वालोके सति उलूकादीनां निमीलिताक्षाणामस्माकञ्च तमः प्रतिपत्तिर्न स्यात् । आलोकाभावरूपतमसोऽसत्त्वादित्यत्राह - **रूपेति** । **तत्कथं भावरूपाज्ञानसाधने निदर्शनतयोपन्यस्यत** इति । ननु प्रभैव हि निदर्शिता । न तमः । एवं सति कथमियमाशङ्का? उच्यते । निदर्शितयाः प्रभायास्तमः पूर्वकत्वं हि विवक्षितम् । तदानीमेव साध्यवैकल्यासम्भवः । अत्र च तमसः प्रभाभावरूपत्वेन स्वप्रागभावव्यतिरिक्तवस्तुपदेन तमस उपादानासम्भवेन साध्यविकलो दृष्टान्त इत्यभिप्रायः । अत एव हि अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति अन्धकारस्यापि निदर्शनघटकत्वमुक्तम् । न चेदमनुमानं तमसोऽपि भावरूपत्वं साधयितुमीष्टे । दृष्टान्तत्वासम्भवात् । प्रभापक्षकैतत्साध्यकानुमाने दृष्टान्तान्तरञ्च दुर्वचम् । अतो दृष्टान्ते साध्यसाद्गुण्याय स्वप्रागभावव्यतिरिक्तत्वविशेषणं त्याज्यम् । ततश्चाज्ञानस्य भावरूपत्वं न सिध्यति ।

ननु प्रागभावव्यतिरिक्तत्वं विशेषणमुपात्तम् । तमसश्चालोकात्यन्ताभावरूपत्वेन न विशेषणदौर्घट्यमिति चेन्न । तमस आलोकप्रागभावरूपत्वाभ्युपगमेऽपि क्षतिविरहेण दौर्घट्ययतादवस्थ्यात् । वस्तुतः **प्रागिति** न विवक्षितम् । अन्यथाऽज्ञानस्य ज्ञानप्रागभावरूपत्वाभावेऽपि ज्ञानात्यन्ताभावरूपत्वे अनुमानक्षत्यभावेन भावरूपत्वासिद्धेः । अत एव प्रत्यक्षेण भावरूपाज्ञानसाधनसमये 'एतदुक्तं भवतीत्यादिना' अज्ञानस्य सामान्यतोऽभावरूपत्वं प्रतिक्षिप्तम् । ज्ञानप्रागभावमादाय 'साध्यपर्यवसानं क्रियत इत्याशङ्कायां बुद्धिस्थत्वात्तथापर्यवसानासम्भवाय स्वप्रागभावव्यतिरिक्तेत्युक्तम् । ततश्च तमसः भावरूपत्वेन दृष्टान्तस्य साध्यवैकल्यं सुस्थम् ।

**उच्यते। बह(हु)लत्वविरलत्वाद्यवस्थायोगेन रूपवत्तया चोपलब्धेर्द्रव्यान्तरमेव तम इति निरवद्यमिति।**

ननु तमसः प्रभाभावरूपत्वे एवं दोषसम्भवेऽपि रूपदर्शनाभावरूपत्वे का क्षतिः ? न हि तदानीमपि दृष्टान्तस्य साध्यवैकल्यं तमसः प्रभाभावव्यतिरिक्तत्वसम्भवात् स्वपदेन च प्रभाया एव ग्राह्यत्वादिति चेत्सत्यम्। अथापि तमसः प्रभाभावव्यतिरिक्तत्वेऽप्यभावरूपत्ववदज्ञानस्य ज्ञानाभावव्यतिरिक्तत्वेऽप्यन्याभावरूपत्वं किं न स्यात्। अतो भावरूपमज्ञानं नानुमानसाध्यं भवेदिति शङ्काया अनिवारणेनाक्षेपोत्थितेः। (एतत्सर्वमभिप्रेत्यैव 'भावरूपाज्ञानसाधन इति भणितम्।) वस्तुतः स्वप्रागभावेत्यत्र स्वेत्येतदप्यविवक्षितार्थम्। अभावव्यतिरिक्तत्वनिवेश एव तात्पर्यम्।

न हि भावरूपाज्ञानवादी अज्ञानस्य ज्ञानाभावरूपत्वमिवान्याभावरूपत्वमनुमनुते। घटपटयोरिवान्याज्ञानयोरपि भावरूपत्वस्यैव तत्सम्मतत्वात्। यद्यपि स्वप्रागभावव्यतिरिक्तत्वविशेषणेऽप्यज्ञानस्य ज्ञानात्यन्ताभावरूपत्वे वाऽन्याभावरूपत्वेऽपि वा न साध्यपर्यवसानसम्भवः। तयोः स्वप्रागभावव्यतिरिक्तत्वेऽपि यथासम्भवं स्वविषयावरणत्वस्वनिवर्त्यत्वस्वदेशगतत्वानामभावेन तादृशवस्त्वन्तरपदेन तदुपादानसम्भवात्। अथापि स्वप्रागभावव्यावृत्तयेऽभावव्यतिरिक्तत्वनिवेशेनैव सामञ्जस्ये स्वप्राक्शब्दयो र्वैयर्थ्यमस्त्येवेत्यभावव्यतिरिक्तत्वमेव विवक्षितम्।

यद्वा - तमसः प्रभात्यन्ताभावरूपत्वे रूपदर्शनाभावरूपत्वे वा यथाश्रुतप्रभाप्रागभावव्यतिरिक्तत्वसम्भवेऽपि यथासम्भवं स्वविषयावरणत्वादीनामसम्भवेन तादृशवस्त्वन्तरपदेन प्रभात्यन्ताभावस्य रूपदर्शनाभावस्य वोपादानासम्भवेन साध्यवैकल्यं दृष्टान्तस्य सुस्थमिति शङ्कोत्थितिरिति॥

अतस्तमसः प्रभात्यन्ताभावरूपत्वे रूपदर्शनभावरूपत्वेऽपि वा साध्यवैकल्यं दृष्टान्तस्य तदवस्थमिति पक्षद्वयेऽप्याशङ्का समीचीनैव। एतत्सर्वमभिप्रेत्यैव 'भावरूपाज्ञानसाधने निदर्शनतयोपन्यस्यत इति भाषितमिति। तदेतत्समाधत्ते - **उच्यत** इति। इदमत्राकूतम् - आलोकमन्तरेण जायमानाया नीलं तम इति प्रतीते र्बाधितविषयकत्वं हि भवद्भिरनुमन्यते। तथा सत्यालोकमन्तरेण जायमानायाः तेजोविषयकप्रतीतेरपि बाधितत्वमापतेत्। तेजोविषयकचाक्षुषव्यतिरिक्तत्वे सत्यालोकाभावदशायां जायमानचाक्षुषत्वस्य बाधितत्वव्याप्तत्वाभ्युपगमेऽपि न निस्तारः। आलोकाभावत्वेन भवदभिमततमश्चाक्षुषस्य आलोकाभावेऽपि जायमानस्याबाधितत्वाङ्गीकारेण व्यभिचारात्।

नन्वनुभवाविरोधेन हि कार्यकारणभावः कल्प्यः। तथा च तमसोऽभावरूपत्वेऽपि तच्चाक्षुषजननात्। तस्य चक्षुर्योग्यत्वसिध्यर्थमविरोधार्थञ्च तद्विषयकप्रत्यक्षे नालोकस्य हेतुत्वमिष्यते। तत्र वस्तुनः प्रत्यक्षयोग्यत्वं द्विविधं स्वरूपयोग्यत्वं सहकारियोग्यत्वञ्च। तत्र सहकारियोग्यत्वमितरसामग्रीसाकल्यम्। यद्यालोकाभावरूपतमसो निरूक्तयोग्यतासिद्ध्यर्थमितरसामग्रीसाकल्यरूपसहकारियोग्यतायामालोकस्यापि घटकत्वं, तर्ह्यालोकसत्त्वे तत्समवधानाभावेन योग्यतैव न स्यात्। प्रत्युत विरोधेन विषयाभाव एव प्रसजेत्। अतो योग्यताहानिविरोधपरिहारार्थं तत्प्रत्यक्षे नालोकस्य हेतुत्वमभ्युपगम्यते।

अत आलोकाभावरूपतमोविषयकप्रत्यक्षस्य न भ्रान्तत्वम्। तमस्तेजोविषयकचाक्षुषव्यतिरिक्तत्वे सत्यालोकाभावदशायां जायमानचाक्षुषत्वस्य बाधितत्वव्याप्तत्वाभ्युपगमादिति चेत् - हन्त ! तर्हि, तथैव नीलत्वचलत्वद्रव्यत्वभावत्वाद्याकारेण प्रतीयमानस्यान्धकारस्य योग्यतासिध्यर्थमविरोधार्थञ्च भावस्वरूपतमसः प्रत्यक्षेऽप्यालोकस्य न हेतुत्वमित्यालोकाभावदशायां जायमानाया 'नीलं तम' इत्यादिप्रतीते र्न बाधितत्वमिति तस्य द्रव्यत्वमेव साधितं भवति। अतस्तमोभिन्नद्रव्यप्रत्यक्ष एवाऽऽलोकस्य हेतुत्वम्। न च तमोभिन्नत्वनिवेशो गौरवम्। फलमुखगौरवस्यादोषत्वात्। अत एव प्रभाभिन्नत्वं भवद्भिर्निवेश्यते।

**अत्रोच्यते - 'अहमज्ञः, मामन्यं च न जानामि' इत्यत्रोपपत्तिसहितेन केवलेन च प्रत्यक्षेण न भावरूपमज्ञानं प्रतीयते। यस्तु ज्ञानप्रागभावविषयत्वे विरोध उक्तः, स हि भावरूपाज्ञानेऽपि तुल्यः। विषयत्वेनाश्रयत्वेन चाज्ञानस्य व्यावर्तकतया प्रत्यगर्थः प्रतिपन्नो वा, अप्रतिपन्नो वा। प्रतिपन्नश्चेत् - व्यावर्तकाश्रयविषयज्ञानशून्यमज्ञानं कथमनुभूयेत ?**

---

वस्तुतो द्रव्यविषयकप्रत्यक्षे नालोकसम्योगस्य हेतुत्वं, किन्तु तमोऽभावस्यैवेति प्रागेव निरूपितम्। तथा च तमोभिन्नद्रव्यविषयकप्रत्यक्षे तमोऽभावस्य हेतुत्वाङ्गीकारेण न तमःप्रत्यक्षे तदपेक्षासद्भावः। अनुभवानुरोधेन कार्यकारणभावकल्पनस्य भवतामपीष्टत्वात्।

यदपि तमो न रूपिद्रव्यम्, आलोकासहकृतचक्षुर्ग्राह्यत्वात् आलोकाभाववदित्यनुमानेन द्रव्यत्वाभावसिद्धिरिति तन्न। आलोकेद्रव्ये व्यभिचारात्। आलोकभिन्नत्वनिवेशेऽपि न निस्तारः। साञ्जनचक्षुर्ग्राह्यघटादिषु व्याभिचारध्रौव्यात्। आलोकसहकृतसाञ्जनचक्षुर्भिन्नचक्षुर्ग्राह्यत्वस्य हेतूकरेणे तादृशयोगिचक्षुर्ग्राह्यघटादावनैकान्तिकं तदवस्थम्। यत्र यत्र व्याभिचारस्तत्तद्भिन्नत्वनिवेशे तर्ककौशलमेवाविष्कृतं भवति। वस्तुतोऽस्यानुमानस्य श्रुतिस्मृतिबाधो दुर्वारः। सृष्ट्यादिप्रकरणेषु तेजस इव तमसोऽपि सृष्टिः, संहारः, शरीरत्वश्च हि तत्र तत्र प्रतिपाद्यते। 'तमस्ससर्ज भगवान्। नाहो न रात्रिर्न नभो न भूमिर्नासीत्तमोज्योतिरभून्न चान्यत्।' 'यस्य तेजश्शरीरं यस्य तमः शरीरम्' इति। एवं 'नासीत्तमो ज्योतिरभून्न चान्यदि'ति प्रलयकाले तमसस्तेजसश्च निषेध उक्तः। स च तमसस्तेजोभावरूपत्वेऽनुपपन्नः, भावाभावनिषेधस्य व्याहतत्वात्। तस्मात्तमो द्रव्यमेवेति। बहुलेत्यादिना द्रव्यलक्षणमवस्थायोगित्वरूपञ्च तमस्युक्तम्।

न च तम आरोपितनीलरूपमिति वक्तुं शक्यम्। निरधिष्ठानभ्रमासम्भवात्। अतो निमीलने नीलप्रतिभानस्य बाधितविषयत्वेऽपि नास्यास्तथात्वं, प्रमाणाभावात्। अन्यथा सर्वानुभवविलोपापत्तेः। अतो ज्ञापकोत्पादकानुपपत्त्यभावेन न तमसो द्रव्यत्वनिषेधसम्भवः। लोके हि कार्यं यथा प्रतीतं तथा कारणकल्पनायां प्रमाणमन्वेषणीयम्। न पुनः स्फुटावधारितं कार्यं कारणनिरूपणायापह्नवार्हमिति हि न्यायविदः। अत उत्पादकानुपपत्तिर्न शक्यशङ्का। श्रूयते हि - 'तमस्ससर्ज भगवान्' इति। स्वच्छद्रव्यत्वादकाशकार्यमिति केचित्। तदा रूपवत्वस्योपपत्तिः पञ्चीकरणात्। रूपवत्वात्तेजः कार्यं तम इत्यपरे। तर्हि स्पर्शानुपलम्भः कथमिति चेत् ? प्रभावत्स्वच्छद्रव्यविशेषत्वादित्यवधारय। **द्रव्यान्तरमेवेति** प्रसिद्धद्रव्येष्वनन्तर्भावादिति भावः। तदुक्तं - 'तमः खलु चलं नीलं परापरविभागवत्। प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हतीति। ततश्च तमसो विलक्षणद्रव्यत्वेनाभावरूपत्वाभावान्न दृष्टान्तस्य साध्यवैकल्यम्। अत एव न भावरूपाज्ञान साधने निदर्शन-त्वेनोपन्यासोऽनुपपन्न इति भावः॥

एवं परैर्भावरूपाज्ञाने प्रमाणमुपन्यस्तम्। अथैतदूषयितुमुपक्रमते - **अत्रोच्यत** इति। तत्रादौ प्रत्यक्षस्य भावरूपाज्ञानसाधकत्वं व्युदस्यति - **अहमिति**। केवलेन चेत्यत्र चः इवार्थः। यथा केवलेन प्रत्यक्षेण न भावरूपाज्ञानं प्रतीयते। एवमुपपत्तिसहितेन प्रत्यक्षेणापीत्यर्थः। अभावरूपाज्ञानस्यैव प्रतीतेरिति भावः। ननु प्रागभावरूपाज्ञानविषयत्वे विरोध उक्त इत्यत्र भावरूपाज्ञानविषयत्वेऽप्युक्तविरोधस्तदवस्थ इत्याह - **यस्त्विति**। तौल्यमुपपादयति - **विषयत्वेनेति**। **प्रतिपन्नः** = भासनम्। न तु ज्ञानविषयत्वं प्रत्यगर्थस्य तथात्वानङ्गीकारात्। **तत्स्वरूपज्ञाननिवर्त्यमिति**। **स्वरूपज्ञानं** = स्वरूपावभासः। अयं भावः - अज्ञानं हि ज्ञाननिवर्त्यं भवदभिमतम्। तत्र प्रत्यगर्थरूपप्रतिभासस्य निवर्तकस्य सत्त्वे कथं तदज्ञानसम्भवः ? न हि घटज्ञाननिवर्त्यं घटाज्ञानं घटज्ञाने सत्यपि तिष्ठेत्। अतो भावाभावयोर्विरोध इव निवर्त्यानिवर्तकयोरिति ज्ञानाज्ञानयोः प्रभातमसोरिव विरोधान्न भावरूपाज्ञानसिद्धिः।

**व्यावर्तकेति**। आश्रयतया विषयतया च व्यावर्तकीभूतप्रत्यगर्थावभासशून्यमित्यर्थः। विषयाश्रयभूतप्रत्यगर्थ-

**अथ विशदस्वरूपावभासोऽज्ञानविरोधी ; अविशदस्वरूपन्तु प्रतीयत इति आश्रयविषयज्ञाने सत्यपि नाज्ञानानुभवविरोध इति - हन्त तर्हि ज्ञानप्रागभावोऽपि विशदस्वरूपविषयः ; आश्रयप्रतियोगिज्ञानं तु अविशदस्वरूपविषयमिति न कश्चिद्विशेषोऽन्यत्राभिनिवेशात् ।**

---

मादायैव हि ब्रह्माज्ञानस्य व्यावृत्तिः । तदध्यासाभावे कथमहमर्थाज्ञानमित्येव वक्तुं शक्यमिति 'अहमज्ञ' इत्यस्य प्रत्यगर्थाज्ञानप्रतीतिरेव न स्यात् । न ह्यन्याज्ञानं प्रकृतेऽपेक्षितम् । कारणाज्ञानरूपत्वाभावात् । अन्यस्यापि ज्ञानाभावे तदज्ञानमित्यपि हि दुर्वचम् । ज्ञानसत्त्वे च विरोध इति भावः । एतावता भावरूपमप्यज्ञानं वस्तुयाथात्म्यावभासरूपेण साक्षिचैतन्येन विरुध्यत इति पूर्वोक्तदूषणं स्थापितम् । यद्यपि तत्रैव 'साक्षिचैतन्यं न वस्तुयाथात्म्यविषयम्' इत्यादिना प्रत्यगर्थस्वरूपज्ञानस्य प्रमाणजन्यज्ञानत्वाभावेन न निवर्तकत्वमित्युक्तम् । अथापि प्रमाणजन्यज्ञानस्य विषयवैलक्षण्याभावेन इदं रजतमित्यादौ इदं शुक्लभास्वरमिति प्रमाणज्ञानशते जातेऽपि भ्रमानिवृत्तिदर्शनेन प्रमाणज्ञानत्वमप्रयोजकमेवेति स्वरूपज्ञानस्यैव तथात्वकल्पनमुचितमित्यभिप्रायः । प्रतिपादितश्च प्रागेवैतत् । एतदभिप्रेत्यैव 'तत्स्वरूपज्ञाननिवर्त्यमिति' भाषितम् ॥

अथ प्रत्यगर्थस्वरूपज्ञानस्याविशदरूपत्वात्प्रमाणजन्यप्रत्यगर्थप्रतिभासस्यैव विशदरूपत्वेन च शुक्त्याद्यविशदज्ञानतद्विशदज्ञानयो र्भ्रमनिवर्तकत्वतदभावदर्शनेन च प्रमाणजन्यस्यैव विशदस्वरूपावभासस्यैवाज्ञानविरोधित्वेन निवर्तकत्वमिष्यते । अत आश्रयतया विषयतया च व्यावर्तकीभूतप्रत्यगर्थस्वरूपावभासस्याज्ञानाविरोधित्वेन न स्वरूपप्रतिभासेऽप्यज्ञानानुभवविरोध इति शङ्कते - **अथेति** । एवं तर्हि 'अहमज्ञ' इति प्रत्यक्षस्य ज्ञानप्रागभावविषयत्वेऽप्यभावधर्मिणोऽभावप्रतियोगिनश्चावगतिसत्त्वेऽपि तदवभासस्याविशदरूपत्वेन प्रागभावप्रतियोगिभूतज्ञानस्य च विशदरूपत्वेन च न कश्चिद्विरोधः । **विशदस्वरूपविषय इति** । विशदं स्वरूपं यस्य प्रागभावविषयकज्ञानस्य तद्विषयः ज्ञानप्रागभाव इत्यर्थः । ज्ञानप्रागभावविषयकज्ञानं विशदमिति यावत् ।

**आश्रयेति** । आश्रयज्ञानं प्रतियोगिज्ञानश्चाविदशस्वरूपप्रत्यगर्थविषयकमित्यर्थः । अहमज्ञ इत्यस्याहं मां न जनामीत्यर्थः । तत्तज्ज्ञानाभावाश्रयः प्रतियोगी च प्रत्यगर्थः । स च ज्ञानरूपः । स्वयम्प्रकाशः । अथाप्यविशदावभासः । प्रमाणजन्यतदवभासस्यैव विशदावभासरूपत्वमिति भवद्भिरभ्युपगमात् । ततश्चाश्रयप्रतियोगिज्ञानमविशदस्वरूपप्रत्यगर्थावभासरूपमिति पर्यवसितम् ।

अयं भावः - अहमज्ञ इत्यस्य ज्ञानाभावविषयत्वे अभावबुद्धौ धर्मिप्रतियोगिज्ञानस्य हेतुत्वेनात्र धर्मिप्रतियोगिभूतप्रत्यगर्थज्ञानस्य वक्तव्यतया ज्ञानस्यैव सत्त्वेन कथं ज्ञानाभावः प्रतीयत इति हि विरोध आपादितः । स तु भवदुक्तप्रक्रिययैव निरस्तः । धर्मिप्रतियोगिभूतप्रत्यगर्थावभासस्याविशदत्वेन विरोधाभावात् । निवर्तकज्ञानस्य विशदावभासस्य चेदानीमसत्त्वात् । तत्सत्त्वे भावरूपाज्ञानस्यापि स्थित्यसम्भवेन तत्प्रतिपादनस्याप्यसम्भावात् । न च प्रत्यगर्थस्य ज्ञानाभावधर्मित्वेऽपि कथं तत्प्रतियोगित्वं, ज्ञानस्यैव हि तत्प्रतियोगित्वम् । तथा च प्रतियोगिभूतज्ञानस्य ज्ञानरूपाभावबुद्धिहेतोर्विशदत्वेन नाभावबुद्धिसम्भव इति वाच्यम् । यतोऽत्र अहमज्ञ इत्यस्य मां न जानामीतित्यर्थरूपत्वेन प्रत्यगर्थविषयकज्ञानाभाव एवोच्यते ।

तत्र च प्रत्यगर्थस्य ज्ञानान्तराविषयत्वात्तद्विषयकज्ञानं स्वयमेवेति प्रतियोगित्वसम्भवात्तदवभासस्य चाविशदत्वान्न दोष इति । न चान्यश्च न जानामीति विवरणे नान्यविषयकज्ञानस्यापि प्रतियोगित्वेन तद्विषयकज्ञानस्य विशदत्वं शक्यम् । तस्यापि स्मृतिरूपत्वेनाविशदत्वात् । को ह्यभावबुद्धौ प्रतियोगिज्ञानस्य हेतुभूतस्य विशदत्वमभ्युपगच्छेत् । अन्यथा कुत्राप्यभावबुद्धिरेव न स्यात् । तस्मादहमज्ञ इत्यत्र ज्ञानप्रागभावज्ञानस्यानुभवरूपत्वेन विशदत्वात्तद्धेतुभूतस्य

धर्मिभूतप्रत्यगर्थावभासस्य प्रतियोगिभूतप्रयगर्थावभासस्य पदार्थान्तरविषयकज्ञानरूपप्रतियोगिविषयकज्ञानस्याविशदत्वात्स्मृतिरूपत्वाच्च न विरोध इति।

नन्वेतावतोक्तस्य चोद्यस्य कः परिहार उक्तः ? धर्मिप्रतियोगिज्ञानस्याविशदत्वेनानिवर्तकत्वेऽप्यभावबुद्धिहेतुभूतस्य तस्याविशदज्ञानस्य सत्त्वेन ज्ञानसामान्याभावविषयणी बुद्धिः कथं जायेत ग्राह्यस्यैवासत्त्वादिति चेत् ? अभावप्रतियोगिभूतज्ञानस्य विशदरूपत्वेनाविशदज्ञाने सत्यपि विशदज्ञानाभावविषयकबुद्ध्युत्पुत्तेरविरोधात्। विशदज्ञानाभावश्चानुभवादिरूपः। घटं नानुभवामीति घटानुभवनिषेधो हि घटानुभवस्मरणसव्यपेक्षः, न त्वनुभवानुभवापेक्षः, येन तत्सत्त्वेनानुभवनिषेधोऽनुपपन्नः स्यात्। स्मर्यमाणस्यानुभवस्य स्मृतिसमकालवृत्तित्वनियमाभावेनानुभवनिषेधे नानुभवस्मरणस्य विरोधित्वं, घटनिषेधे घटस्मरणस्येव।

नन्वेतावताऽभावप्रतियोगिभूतज्ञानं विशदस्वरूपं धर्मिप्रतियोग्युभयविषयकं ज्ञानं त्वविददस्वरूपमिति पर्यवसितम्। ततश्चैवं वक्तव्येऽभावज्ञानस्य विशदत्वकथनं कथं सङ्गच्छत इति चेद्ब्रूमः - धर्मिप्रतियोगिज्ञानस्याविशदत्वकथनेन प्रतियोगिभूतज्ञानस्य विशदत्वं स्वतः सिद्धमित्यभिप्रायेणोक्तेः। वस्तुतो ज्ञानप्रागभावोऽपि विशदस्वरूपविषय इत्यनेनैव प्रतियोगिभूतज्ञानस्य विशदस्वरूपत्वं प्रदर्शितम्। तत्र विषयोऽवच्छेदकम्। विशदस्वरूपमवच्छेदकं यस्य प्रागभावस्येति विग्रहः। विशदस्वरूपस्य प्रागभावावच्छेदकत्वञ्च स्वविषयज्ञानद्वारा। ज्ञानप्रागभावविषयकज्ञानेति पूर्वज्ञानस्याभावावच्छेदकत्वं स्पष्टम्। ततश्च विशदस्वरूपज्ञानावच्छिन्नो ज्ञानप्रागभाव इत्यर्थः। ज्ञानस्याभावावच्छेदकत्वं प्रतियोगितया। विशदस्वरूपज्ञानप्रतियोगिको ज्ञानप्रागभावः। विशदस्वरूपज्ञानं प्रागभावप्रतियोगीति यावत्। तथा चाभावप्रतियोगिभूतज्ञानस्य वैशद्यं स्पष्टमेव ॥

इदमत्राकूतम् - अभावज्ञानेऽनुयोगिप्रतियोग्युभयज्ञानस्यावश्यकत्वात्, भावरूपाज्ञाने प्रतियोगिज्ञानस्यानपेक्षितत्वेऽप्यनुयोगिज्ञानमावश्यकम्। न हि घटज्ञानमधिकरणज्ञानमन्तरा उपपद्यते। इह घटोऽस्तीति भूतले घट इति हि प्रतीतिः। अतोऽज्ञानस्य भावरूपत्वेऽपि ज्ञानवानहमिति प्रतीतौ अहमर्थस्य प्रत्यगर्थस्य प्रतीतिरावश्यकी। इत्थञ्च धर्मिणः प्रतिपन्नत्वे तन्निवर्त्यस्याज्ञानस्य कथं सद्भावः। अप्रतिपन्नत्वे धर्मिज्ञानमन्तरा कथमज्ञानानुभवः। एवं घटज्ञाने घटो विषयः, व्यावर्तकज्ञानावच्छेदकश्च। अत एव पटज्ञानात् व्यावृत्त्यर्थं घटज्ञानमित्युच्यते। एवमेव घटाज्ञानेऽपि घटो विषयो व्यावर्तकश्च। अन्यथा घटाज्ञानस्य पटाद्यज्ञानरूपत्वापत्तेः।

एवञ्च ज्ञानविशेषणत्वेन घटादिभाने यथा ज्ञानविषयत्वं तथैवाज्ञानविशेषणतया घटादिभानेऽप्यज्ञानविषयत्वमावश्यकमिति सति घटज्ञाने कथं घटाज्ञानसम्भवः। यदि घटादीनां ज्ञानविशेषणतया भानं तदैव घटादीनां विषयत्वम्। अज्ञानविशेषणतया भाने न तद्विषयकत्वमावश्यकमिति मन्यसे तदा ज्ञानविशेषणतया घटादिभानेऽपि न तज्ज्ञानमपेक्षितमित्यपि कल्पयितुं शक्यत इति समौ दोषपरिहारौ। यदि घटपटादीनां ज्ञानाभावेऽप्यज्ञानविशेषणत्वेन भानमनुमन्यसे, तर्हि देशान्तरकालान्तरवर्तिसर्वपदार्थविशेषनिर्देशपूर्वकं तत्तदज्ञानव्यवहारः सर्वैरपि कर्तव्यः स्यात्। न हि समान्यतः किञ्चिदज्ञानमस्ति। विषयविशेषनिर्देशपूर्वकं हि सर्वैरज्ञानमिति व्यवह्रियते। अन्यथा तत्तदज्ञानादीनां भेदासिद्धिः ॥

ननु तत्तदज्ञाने वस्तूनां भानमस्ति, तथापि तद्वाचकशब्दाज्ञानात्पदार्थविशेषनिर्देशपूर्वकं न तदज्ञानव्यवहार इति चेत्तर्हि पदार्थविशेषनिर्देशाभावेपि वाचकशब्दाज्ञानात् तेषामज्ञानविशेषणतया भानाद्वाचकशब्दप्रयोगापत्तेरनिवार्यत्वात्। अतो ज्ञानविशषणत्व इवाज्ञानविशेषणत्वेपि तत्तद्वस्तूपादानमावश्यकम्। अतो ज्ञाततयाऽज्ञानतया वा वस्तुनः साक्षिभास्यतायां विषयज्ञानमपेक्षितमेवेति ॥

ननु 'अहमज्ञ' इति प्रत्यगर्थाज्ञानानुभवे प्रत्यगर्थस्य विषयतयावच्छेदकतयाऽऽश्रतया च भानेपि तद्भानं न विशद-

रूपम्। परन्तु स्वरूपमात्रावभासरूपम्। तत्र न स्वरूपयाथात्म्यावभासः। स हि प्रमाणज्ञान एव। अतः प्रमाणज्ञानभासमान-स्वरूपयाथात्म्याभावसनिवर्त्यमज्ञानं स्वरूपमात्रावभासरूपप्रत्यगर्थानिवर्त्यमिति नाज्ञानानुभवविरोध इति चेन्न। तस्याज्ञानस्य प्रत्यगर्थवैशद्याभावानगाहित्वमस्ति वा न वा। आद्ये वैशद्याभावस्याज्ञानविशेषणतया प्रतियोगिभूतवैशद्यज्ञानस्यापेक्षित-त्वेन सति वैशद्यज्ञाने कथं तदभावानुभवः ? अज्ञानस्य ज्ञानाभावरूपत्वे यद्दूषणं त्वयोक्तं तस्यात्रापि समानत्वात्। द्वितीये वैशद्यावगाहित्वमिति कथमज्ञानानुभवः ? उक्तप्रकारातिरिक्ताकारस्य च दुर्वचत्वात्॥

नन्वभावज्ञाने प्रतियोगिज्ञानस्यकारणत्वेऽपि तज्ज्ञानमविशदस्मरणरूपं, न तु विशदसाक्षात्काररूपम्। घटाभाव-ज्ञाने प्रतियोगिभूतघटज्ञानस्यापेक्षितत्वेपि तस्यानुभवरूपतां हि नेष्यते। अन्यथा प्रतियोगिघटानुभवरूपज्ञानस्य सत्त्वे तदभावावगाहिज्ञानस्यानुत्पत्तेः। अतो प्रतियोगिघटस्मरणमेवापेक्षितमिति वक्तव्यम्। एवञ्चात्रापि प्रत्यगर्थाज्ञाने वा प्रत्यगर्थवैशद्याभावाज्ञाने वा प्रतियोगिनः प्रत्यगर्थस्य वैशद्यस्य च स्मरणमेवास्तीति तदज्ञानानुभवस्य न तेन प्रतिबन्ध इति चेत्सत्यमेतत्। अज्ञानस्याभावरूपत्वेऽप्येतादृशसमाधेस्तुल्यत्वात्।

अज्ञानस्य ज्ञानाभावरूपत्वे प्रतियोगिभूतज्ञानस्य स्मरणमेवापेक्षितं, न तु तत्साक्षत्कारः। अत्र निषिध्यमानं ज्ञानं तु साक्षात्काररूपं (विशदस्वरूपं) अविशदस्मरणरूपप्रतियोगिज्ञानस्य सत्त्वेपि विशदरूपज्ञानाभावस्यैव विषयीकरणात्। यथा घटो नास्तीति निषेधे घटः स्मर्यते। एवं घटसाक्षात्कारो नास्तीति निषेधे घटसाक्षत्कारस्य निषेधः। स्मर्यमाणस्य न निषेधसमकालवर्तित्वनियमः। अतो निषेधवेलायां स्मर्यमाणस्य नाभावप्रतियोगित्वविरोधः। अतो ज्ञानाभावानुभव-वेलायां स्मर्यमाणस्य प्रतियोगिभूतस्य ज्ञानस्य नाज्ञाननिवर्तकत्वमिति। यद्यपि ज्ञानाभावरूपाज्ञानं प्रति ज्ञानं निवर्तकमेव। अथापि पूर्वानुभूतस्य ज्ञानस्याद्य स्मृत्यारूढत्वात्तदद्य नास्तीति निषिध्यत इति न विरोधः। पूर्वानुभूतस्य घटस्य स्मृत्यारूढस्याद्य नास्तीति निषेधवत्। पूर्वानुभव एव कथं जात इति चेद्भवतां वा कथं निवर्तकज्ञानमनुभूतमिति प्रश्नस्य समानत्वात्।

ननु 'अहमज्ञः', 'मां न जानामी'त्यस्योपपत्तावप्यन्यं न जानामीत्यस्य कथमुपपत्तिः। तत्रान्यविषयकाज्ञाने घट-पटादीनां प्रत्यक्षितत्वेन तत्स्मरणसम्भवेपि मेर्वादीनामप्रत्यक्षितत्वात्कथं तत्स्मरणसम्भवः। कथं वा मेरुसाक्षात्कारस्य निषेधसम्भवः। ज्ञानसामान्याभावरूपाज्ञाने मेरुसाक्षात्काररूपज्ञानस्यापि प्रतियोगितयाविषयत्वात् इति चेद्भवतां वा कथं निर्वाहः। अज्ञाततया साक्षिभास्यतायां विषयज्ञानस्यानपेक्षितत्वादिति चेत्। दत्तोत्तरत्वात्। विषयोल्लेखमन्तराऽ-ज्ञानस्वरूपस्य निरूपणासम्भवात्। न ह्यज्ञाने विषयभानाभावे ज्ञानेन तस्य प्रतिबन्धसम्भवः। विषयद्वारैव हि ज्ञानाज्ञानयो र्निवर्त्यनिवर्तकभावः।

अपि चाज्ञाने विषयभानाभावे 'मामन्यञ्च न जानामी'त्यत्राज्ञाने 'मामन्यमि'त्यस्य कथमन्वयः। विषयतयैवाव-च्छेदकतयैव वा वक्तव्योऽन्वयः। प्रकारद्वयेपि पदार्थानां भानमावश्यकमेवेति। अतश्च विषयतयाऽवच्छेदकतया वाऽज्ञाने 'अन्यम्' इत्युक्तान्यपदार्थाभाने तदज्ञानमसम्भव्येव। अयं दोषो 'अन्यञ्च न जानामी'त्यत्र। 'मां न जानामी'त्यत्र त्वस्मद-र्थस्य स्वयम्प्रकाशत्वात्तत्प्रयुक्तमधिकं दूषणञ्च बोध्यम्।

वस्तुतोऽहमज्ञ इत्यवभासस्वरूपमेव पर्यालोचनीयम्। अत्रावभासे को विषय इत्यादिपर्यालोचने भवदभिमता-ज्ञानस्यैव न सिद्धिः। जाग्रद्दशायां यत्किञ्चिदवभासस्यैव सत्त्वेनाहमिति प्रतिभासस्यैवानुपपत्तेः। अत्र सौषुप्तिकमज्ञानं विवक्षितमित्यपि न युक्तम्। तदाऽन्यप्रतिभासासम्भवेनान्यमिति परामर्शस्यैवासम्भवात्। सुषुप्तावनवच्छिन्नकारणा-ज्ञानप्रतीतेरेवाभ्युपगमात्। स्वापेऽन्यपरामर्शस्यैवासम्भवादन्यमित्युल्लेखासम्भवात्। जाग्रद्दशायां हि घटाद्यवच्छिन्नाज्ञान-प्रतीति र्भवतामभिमता। अत्र वक्तव्यांशस्सर्वोऽप्यस्मदीये ब्रह्मसूत्रविमर्शे द्रष्टव्यः॥

**भावरूपस्याज्ञानस्यापि ह्यज्ञानमिति सिद्ध्यतः प्रागभावसिद्धाविव सापेक्षत्वमस्त्येव । तथा हि - अज्ञानमिति ज्ञानाभावः, तदन्यः, तद्विरोधी वा । त्रयाणामपि तत्स्वरूपज्ञानापेक्षाऽवश्याश्रयणीया । यद्यपि तमस्स्वरूपप्रतिपत्तौ प्रकाशापेक्षा न विद्यते, तथाऽपि प्रकाशविरोधीत्यनेनाऽऽकारेण प्रतिपत्तौ प्रकाशप्रतिपत्त्य-**

---

एतावता, यथा ज्ञानाभावस्य विषयाश्रयाद्यवच्छिन्नतया भानं, एवमेवाज्ञानस्य भावरूपत्वेपि स्वरूपतो भानेपि विषयाद्यवच्छिन्नतया भानमावश्यकमिति स्थापितम् । अथाज्ञानस्य स्वरूपेणैव प्रतिपत्तिसम्भवः । न तु ज्ञानप्रतिपत्त्य-पेक्षा । 'अहमज्ञ' इत्यत्र भावरूपस्यैवाज्ञानस्य सिद्धिः । अकारोपक्रमत्वमात्रमवलम्ब्य तस्याभावरूपत्वसाधनं साहसम् । अकरोपक्रमाः शब्दाः बहवो वर्तन्ते, अथ, अइउण्, अधरः, अवनम्, आदिः, अन्यः, अशनम्, अतिशयः, अकारः, अभीच्यदर्शनम्, अवधारणम्, अश्मा, अहः, अन्तरा, अङ्गम्, अम्बा, अग्निः, अयः, अलकम्, असूया, अर्च्यः, अर्चक इत्यादयश्शब्दा अकारोपक्रमा एव । नैतावता एतच्छब्दवाच्या अभावरूपाः । अतोऽज्ञानाविद्यादिशब्दा अपि नाभाववाचकाः भवितुमर्हन्ति । यथा मोहशब्दः । एवञ्च भावरूपस्यास्याऽऽश्रयप्रतियोगिज्ञानापेक्षा नास्ति । यथा भावरूपस्य घटस्येत्याशङ्कां परिहर्तुमारभते - **भावरूपस्याज्ञानस्यापीति** । अयं भावः - त्वदुक्ताज्ञानस्य ज्ञानघटित-त्वात्तेनैव रूपेण भानमावश्यकमिति स्वरूपेण भानं नैव सम्भवतीति । एवञ्च, 'तदन्य-तद्विरुद्ध-तदभावेषु नञ्' इति प्रमाणानुसारेणान्यतरार्थकत्वं वक्तव्यम् । अतस्स्वरूपेण न सिद्धिः । प्रमाणज्ञानादन्यत् प्रमाणज्ञानविरोधि इत्येव प्रति-पत्तिस्स्यात् । एवञ्च घटकज्ञानस्य विषयावच्छिन्नत्वेनैव प्रतिपन्नत्वमिति पूर्वोक्तविरोधसाम्यं दुष्परिहरम् । अत्र भाष्ये ज्ञानाभाव इत्युक्तिः अभावस्य नञर्थत्वसम्भवमभिप्रेत्य । न तु प्रकृतोपयोगिनी ।

ननु अधर-अशनिप्रभृतिशब्दवदयमपि शब्द इति वदतां कथं निरास इति चेत् - इदमत्राकूतम् - न हि वयं अकारोपक्रमत्वतदभावरूपहेतुमादाय शब्दानामभाववाचकत्वं भाववाचकत्वञ्चेति ब्रूमः, अकारोपक्रमाभावेपि नञ्शब्दोऽभाववाचको दृष्टः । इन्द्रियव्यापारोपरतिवाचकाः शमादिशब्दाः नाकारोपक्रमाः । अतोऽर्थस्वारस्यमवलम्ब्यैव । अत अधरादिशब्दा अकारोपक्रमा अपि भावरूपा भवितुमर्हन्ति । तद्बोध्यस्यान्यनिरासकत्वाभावात् अन्यनिरास्यत्वा-भावाच्च । अज्ञानं तु भावरूपमपि तत्त्वज्ञानेन निवर्त्यते इति भवद्भिरुच्यते । घटज्ञानघटाज्ञानयोरिव विरोध्यविरोधक-भावस्वीकारात् । अन्यथा ब्रह्मज्ञानेन तदज्ञानानिवृत्तिरेव स्यादिति वेदान्तो दत्तजलाञ्जलिः स्यात् । एवञ्च तत्तदभावाव-गाहित्वेन बाध्यबाधकभावस्य वक्तव्यत्वात्, भवदभिमताज्ञानस्योक्तरूपेणैव सिद्धिरावश्यकी । योऽज्ञानी, सः स्वाज्ञान-निवर्तकज्ञानार्थं प्रवर्तते । तदर्थमिच्छाः, तदर्थं ज्ञानज्ञानम्, अतो ज्ञानाज्ञानयोः विरोधोऽवश्यम्भावीति न स्वरूपतः प्रतिपत्तिः ।

न च 'मुग्धोस्मि', 'मूढोहमि'ति स्वरूपतः मोहस्याज्ञानापरपर्ययस्य प्रतीतिरस्तीति वाच्यम् । तत्रापि न स्व-रूपेण मोहस्य सिद्धिः । यतो मोहः कस्यचित्कस्मिंश्चिद्विषय एव वाच्यः, तेन विषयाश्रयावच्छिन्नत्वं स्वरसतः प्रतीतम् । 'स विमलमतिरेति नात्ममोहं' इति विषयावच्छिन्नतयैव प्रतीतेः । 'दिङ्मोहः', 'दिग्भ्रान्तिः' इत्येवोच्यते । 'अहं मुग्धः' इत्युक्त्याऽऽश्रयावच्छिन्नत्वस्यापि प्रतीतिः । 'अहमज्ञ' इति हि भवद्भिरुच्यते । 'मामन्यं च न जानामी'ति इति भवतां विवरणञ्च । मोहः विपरीतज्ञानम्, अज्ञानञ्चेति द्विरूपः । तत्र विपरीतज्ञानवारणाय 'ज्ञानं मोहः' इत्युच्यते, तदज्ञाननिवर्तनाय च ज्ञानार्थप्रवृत्तिः । अत आश्रयविषयावच्छिन्न एव । 'धर्मसम्मूढचेता' इत्यप्युच्यते । मायाशब्दोऽपि अज्ञानपर्याय एव । 'यवनिका माया', 'मायया मोहितं' इत्यादिषु ज्ञानावरणत्वेनैव प्रयोगात्तेषामज्ञानरूपत्वमेव । 'माया वयुनं ज्ञानम्' इति ज्ञानपर्यायत्वे सुतरां विषयाद्यवच्छिन्नत्वम् । ननु तमस्स्वरूपप्रतिपत्तिवदज्ञानस्वरूपप्रतिपत्तिरस्तु । तत्र प्रकाशापेक्षाऽभाववदत्रापि ज्ञानापेक्षाभावः स्यादिति शङ्कां परिहरति - **तथापीति** ।

**पेक्षाऽस्त्येव। भवदभिमताज्ञानं न कदाचित्स्वरूपेण सिद्ध्यति ; अपि त्वज्ञानमित्येव। तथा सति ज्ञानाभाववत् तदपेक्षत्वं समानम्। ज्ञानप्रागभावस्तु भवताऽप्यभ्युपगम्यते, प्रतीयते चेत्युभयाभ्युपेतो ज्ञानप्रागभाव एव 'अहमज्ञो मामन्यश्च न जानामि' इत्यनुभूयत इत्यभ्युपगन्तव्यम्।**

---

**अपि त्वज्ञानमित्येव** । तत्र यत्किञ्चित्विषयकज्ञानाघटने ब्रह्मज्ञानानिवर्त्त्यत्वप्रसङ्ग इति भावः । **तथा सति** = तथा चेत्यर्थः । अत्र ज्ञानाभावः, तदन्यः, तद्विरोधी वेति विकल्पयितुरयमाशयः - अज्ञानस्य ज्ञानप्रागभावरूपत्वे च अस्मन्मतप्रवेशः । ज्ञानान्यत्वरूपत्वे ज्ञानविरोधित्वरूपत्वे वा प्रतियोग्यपेक्षाऽस्त्येव । यदि ज्ञानान्यत्व-रूपत्वं नेष्यते, तर्ह्यज्ञानस्य ज्ञानरूपत्वापत्तिः । अतो नाज्ञानं ज्ञानरूपं ब्रह्मस्वरूपं नाच्छादयितुं प्रभवेत् । एवं ज्ञानविरोधित्वाभाव-रूपत्वेपि न ब्रह्मस्वरूपतिरोधायकं भवेदिति ।

ननु पक्षद्वयेपि साधनं वा दूषणं वा समानम् । कुतो भावरूपाज्ञानपरिग्रहे प्रद्वेष इत्यत्र लाघवन्यायोऽस्मन्मते इति वैषम्यं दर्शयति । भवद्भिश्चाभावपदार्थोऽभ्युपगम्यते । अत एव साध्यकोटौ प्रागभावव्यतिरिक्तत्वविशेषणं दीयते । यदि प्रागभावो नेष्यते, तर्हि प्रमाणज्ञानस्य प्रागभावो नास्तीति तज्ज्ञानमनादि स्यात् । ततश्च तन्निरसनीयभावरूपा-ज्ञानस्यैवानुदय इति महान् व्यर्थः प्रयासः । अभावविवक्षया 'घटो नास्ति', 'पटो नास्ती'ति व्यवह्रियते । एवमेव घटपटादिज्ञानं यागज्ञानं ब्रह्मज्ञानं नास्तीत्यपि व्यवह्रियते । 'शब्दविदेवास्मि नात्मवित्' इति च व्यवह्रियते । अतो ज्ञानाभावप्रतीतिरस्तीत्युपेयम् । व्यवहारस्य नियामकत्वादिदमभिप्रत्योक्तं - **प्रतीयते चे**ति । अतो ज्ञानोत्पत्तेः ज्ञानाभाव-व्यवहारस्य चाभ्युपगमाज्ज्ञानाभावः स्वीकार्यः । **उभयाभ्युपेत** इति ।

ननु स्वमते अभावपदार्थ एव नास्ति, भावान्तराभाववादित्वात् । प्रागभावप्रध्वंसाभावान्योन्याभावसंसर्गाभाव-रूपान्यन्ताभावानां चतुर्णामपि भावरूपत्वाङ्गीकारात् । तथाहि - प्रागभावः 'अत्र भविष्यती'ति प्रतीतिविषयः । स च स्वविरुद्धपूर्वावस्थापरम्परास्वरूपः । 'ध्वस्त' इति प्रतीतिविषयश्च ध्वंसः, स्वोत्तारविरुद्धावस्थापरम्परास्वरूपः । अन्योन्याभावो भेदः, स च स्वविरुद्ध वस्त्वन्तरासाधारणधर्मस्वरूपः । 'घटो न पटः', 'घट पटात् पृथक्' इत्यादि-प्रतीतिविषयः । 'अत्र घटो नास्ति', 'इदानीं घटो नास्ती'त्यादिप्रतीतिविषयस्संसर्गाभावः । स एवात्यन्ताभावः । देशा-न्तरकालान्तरवृत्तिपदार्थस्य देशान्तरे कालान्तरे चाभावः संसर्गाभावः । स च यत्किञ्चिद्देशकालस्वरूपो घटाभावादिः । एवं कृत्स्नदेशकृत्स्नकालासम्बन्धिप्रतियोगिकस्संसर्गाभावोऽत्यन्ताभावः । न च गगनकुसुमशशविषाणाद्यभावः । अयञ्च कृत्स्नदेशकृत्स्नकालस्वरूपः चिदधिकरणविशेषे कालत्रयेऽप्यसंबन्धरूपोऽप्यत्यन्ताभावः । यथा नित्येषु संसाराऽ-भावः । ईश्वरे दुःखाभावश्च । सर्वोऽप्ययमधिकरणविशेषरूपः ।

एवञ्चाभावसामान्यं भावान्तरमेव । परमते त्वभावान्तरं स्वीक्रियते, तत्कथमुभयाभ्युपेतो ज्ञानप्रागभाव इति भाषणम् ? उच्यते - अत्र उभयाभ्युपगत इति नोक्तम् । **अभ्युपेत** इति वचनभङ्ग्याऽयमर्थः सूचितः । अभावशब्द-वाच्यत्वेन कस्यचिदर्थस्याभ्युपगम आवश्यकः । स च भावरूप इत्यस्माकं मतम् । अभावरूप इति परेषां मतम् । अतो भावत्वेनास्माकमभिमतो योऽभावशब्दवाच्यतया परेणाभिमतश्च यः पदार्थः तयोरन्यतरेणैव 'अहमज्ञः' इति निर्वाहसम्भवादेतदतिरिक्ताज्ञानरूपपदार्थकल्पनं गौरवहतमिति । अत्रेदमवधेयं - श्रुत्यादिभिः सर्वस्यापि वस्तुजातस्य ब्रह्मान्तर्यामिकत्वब्रह्मकार्यत्वविधानात् 'नेह नानास्ति किञ्चन' इत्यादौ तत्प्रत्यनीकाब्रह्मात्मकत्वाब्रह्मकार्यत्वादि निषिध्यते । अयं निषेधोऽत्यन्ताभावः, देशविशेषस्वरूपः । जगति काल त्रयेपि अब्रह्मात्मकत्वसम्बन्धस्य अब्रह्मकार्यत्व-सम्बन्धस्य चाभावात् । कथञ्चिन्नित्यवस्तुनि अब्रह्मकार्यत्वसम्बन्धस्य सत्त्वेप्यब्रह्मात्मकत्वसम्बन्धो दुरुपपादः । अथ वा 'घटत्वेन पटो नास्ती'त्यादिबलाद्व्यधिकरणधर्मावच्छिन्नाभावः स्वीक्रियते । अयं पटे घटत्वनिषेधरूपः । एवं

**नित्यमुक्तस्वप्रकाशचैतन्यैकस्वरूपस्य ब्रह्मणोऽज्ञानानुभवश्च न सम्भवति, स्वानुभवस्वरूपत्वात्। स्वानुभवस्वरूपमपि तिरोहितस्वरूपमज्ञानमनुभवतीति चेत् - किमिदं तिरोहितस्वरूपत्वम्? अप्रकाशित-स्वरूपत्वमिति चेत् - स्वानुभवस्वरूपस्य कथमप्रकाशितस्वरूपत्वम्? स्वानुभवस्वरूपस्याप्यन्यतोऽप्रकाशित-स्वरूपत्वमुपपद्यत इति चेत् - एवं तर्हि प्रकाशाख्यधर्मानभ्युपगमेन प्रकाशस्यैव स्वरूपत्वादन्यतः स्वरूपनाश एव स्यादिति पूर्वमेवोक्तम्।**

---

जगति अब्रह्मात्मकत्वनिषेधः 'नेह नानास्ती'त्यादिनोच्यते। निरीश्वरसाख्यसिद्धान्ताद्यनुसारेणाब्रह्मात्मकत्वं प्रसिद्धम्। तदत्र निषिध्यते। अतो व्यधिकरणधर्मावच्छिन्नाभावः स्वीकर्तुं शक्यत इव।

ननु भवद्भिरपि भावरूपमज्ञानमङ्गीकृतमेवेति कथं तन्निषेधः? भावान्तराभाववादिनां युष्माकं ज्ञानप्रागभावस्य भावरूपस्वाङ्गीकारात्। उच्यते। अस्माकं मते ज्ञानप्रागभावो ज्ञानसङ्कोचरूपो भावरूपः, ज्ञानरूपे स्वयम्प्रकाशे आत्मनि वर्तमानं यज्ज्ञानं, तस्य प्रागभावः ज्ञानसङ्कोचावस्थारूपः। पराभिमतं त्वज्ञानं स्वयम्प्रकाशज्ञान व्यतिरिक्तं ब्रह्माश्रयमिति वैषम्यम्। ननु सिद्धान्तिनापि ज्ञानसङ्कोचावस्थारूपज्ञानप्रागभावोऽज्ञानशब्दवाच्यो भावरूपोऽङ्गीकृतः। परेणापि ज्ञान-प्रागभावत्वेनाभिमतः अज्ञानशब्दवाच्यो भावरूपः पदार्थोऽङ्गीकृतः। तथा च तदङ्गीकृतभावरूपाज्ञानेनैवोपपत्तौ भवदभिमतज्ञानसङ्कोचरूपभावपदार्थस्य किमर्थमङ्गीकरणदिति चेन्न। स्वयम्प्रकाशस्य धर्मिणः तद्गतज्ञानस्य च 'नित्यो नित्यानां', 'न विज्ञातुर्विज्ञातेः विपरिलोपोविद्यते' इत्यादिश्रुतिसिद्धत्वादङ्गीकरणम्। तस्य ज्ञानस्य च 'सर्वभूतेषु भूपाल! तारतम्येन वर्तते' इति सङ्कोचश्च श्रुतिसिद्धः। न चैवं भावरूपमज्ञानं श्रुतिसिद्धम्। कल्पनमप्यन्यथासिद्धमिति महद्वैषम्यम्। अयं भावः - सिद्धान्ते स्वयम्प्रकाशस्य ब्रह्मस्वरूपस्य सगुणस्य, सङ्कोचविकासार्हधर्मज्ञानस्य चाभ्युपगमः। परमते निर्विशेषस्य परब्रह्मण एवाङ्गीकरणं, न तु सङ्कोचविकासार्हस्य ज्ञानस्य तद्गतधर्मस्य। अतो ज्ञानसङ्कोचरूपावस्था-पन्नभावरूपमज्ञानं दुर्घटम्। अतो भावरूपमज्ञानं कल्प्यं, तत्र च प्रमाणं 'अहमज्ञः' इत्यादिकम्। अत्र प्रतीयमानमज्ञानं किं भावरूपमुताभावरूपमिति विचारः। सर्वाङ्गीकृतज्ञानप्रागभावमादायैव निर्वाहसम्भवे किमर्थमतिरिक्तभावरूपाज्ञान-कल्पनमित्युत्तरमिति।

दूषणान्तरमाह - **नित्येति**। अनेन परमते ब्रह्मणोऽज्ञानानुभवासम्भवः प्रतिपाद्यते। अज्ञानानुभवो हि हेयः, बन्धरूपः। मुक्ते कथं तस्य सम्भवः। न तस्य कादाचित्कत्वमपि। नित्यमुक्तत्वाद्ब्रह्मणः। स्वप्रकाशस्वरूपत्वेन स्वाज्ञानानुभवोपि न सम्भवति। ब्रह्मणश्चैतन्यस्वरूपत्वादज्ञानानुभवितृत्वरूपज्ञातृत्वमपि न सम्भवति। **एकस्वरूप-स्येति**। अनेन ज्ञेयत्वाभावोपि विवक्षितः। ब्रह्मण्यज्ञानानुभवः स्वविषयकः स्वाश्रयश्च। यतस्चैतन्यस्वरूपत्वान्नानुभवि-तृत्वं तथैव न स्वविषयत्वमपि। **स्वानुभवरूपत्वात्**। तस्य नित्यत्वादित्यर्थः। सर्वदा स्वानुभवसत्वादपरमार्थविषयका-नुभवस्योत्पत्तिर्नैव सम्भावनार्हा। स्वानुभवैकस्वभावत्वस्याज्ञानानुभवात्प्रागपि विद्यमानत्वेन तन्निवर्त्यापरमार्थाज्ञाना-नुभवो नैवोपपन्न इति भावः। ननु वह्नेर्दाहकत्वशक्तेः स्वाभाविकत्वेपि कारणवशात्तिरोधानसम्भववद्ब्रह्मगतस्य नित्यस्य स्वानुभवस्वरूपस्य कारणवशात्तिरोधानसम्भवः। अतस्तिरोहितस्वरूपमज्ञानमनुभवतीति शङ्कते - **स्वानुभवस्वरूप-मपीति**।

तिरोधायककारणविचारः पश्चाद्भवतु स्वरूपस्य तिरोधानं नाम किमिति सिद्धान्ती पृच्छति। **किमिदमिति**। तिरोधानमप्रकाश एवेति शङ्कते - **अप्रकाशितस्वरूपत्वमिति**। दूषयति - **स्वानुभवस्वरूपस्येति**, आद्यन्तरहितत्वादिति भावः। कारणवशादप्रकाशस्वरूपत्वमितीमां शङ्कां खण्डयति - **एवं तर्हीति**। ननु स्वयम्प्रकाशस्य ब्रह्मणोऽविद्यया तिरोधानन्न सम्भवतीत्येतदयुक्तम्। प्रकाशस्वरूपस्यैव सूर्यस्य तमः पुञ्जेनाच्छादनस्य यजुर्वेदसंहितायामुक्तत्वात्

**किञ्च - ब्रह्मस्वरूपतिरोधानहेतुभूतमेतदज्ञानं स्वयमनुभूतं सद्ब्रह्म तिरस्करोति, ब्रह्म तिरस्कृत्य स्वयं तदनुभवविषयो भवतीत्यन्योन्याश्रयणम्। अनुभूतमेव तिरस्करोतीति चेत् - यद्यतिरोहितस्वरूपमेव ब्रह्म अज्ञानमनुभवति, तदा तिरोधानकल्पना निष्प्रयोजना स्यात् ; अज्ञानस्वरूपकल्पना च। ब्रह्मणोऽज्ञान-दर्शनवदज्ञानकार्यतयाऽभिमतप्रपञ्चदर्शनस्यापि सम्भवात्।**

---

तन्नयेनात्रापि सम्भवात्। 'सुवर्भानुः आसुरः सूर्यं तमसाऽविध्यत् तस्मै देवाः प्रायश्चित्तमैच्छन्' इति हि यजुस्संहितायां द्वितीयकाण्डे द्वितीयानुवाके श्रूयते। सुवर्भानुः = स्वर्गस्थां भां नुदति इति व्युत्पत्तिः। तमः पुञ्जोऽसुरः स्वकीयतमसा सूर्यं च्छादयामास। ततो जगत आन्ध्यमभवत्। सूर्यप्रभाच्छादकस्य तमसः प्रायश्चित्तं देवाः किमित्यालोचयामासुः। ततः नानाविधैः प्रकाशरूपैर्मण्यादिद्रव्यैस्तमोऽपाघ्नन्निति कथा तत्र श्रूयते। प्रकाशस्वरूपस्य तमोनिरासकस्यैव सूर्यस्य तमसाऽऽच्छादनमिव प्रकाशस्वरूपस्य स्वयंज्योतिषो ब्रह्मणोऽविद्यया तिरोधानं सम्भवत्येव। तत्र मण्यादिद्रव्यैः तमोपहननमिवात्रापि वाक्यजन्यज्ञानादविद्यानिरासश्चोपपद्यते। स्वयम्प्रकाशमपि सूर्यमुपरागकाले राहुराच्छादयतीति च प्रसिद्धमिति चेत्, ब्रूमः। उदाहरणे, सूर्यतत्प्रभेति वस्तुद्वयस्वीकारात्, प्रभाया आच्छादनमुपपद्यते।

अत्र ब्रह्म-तत्प्रकशेति वस्तुद्वयाभावात्तद्भदाच्छादनासम्भवात्। निर्धमकं हि भवदभिमतं ब्रह्म। अतो दृष्टान्तो विषमः। वस्तुतस्तु तमःपुञ्जेन सूर्यस्याच्छादनेपि सूर्यविषयकदर्शनं प्रजानां नासीत्। सूर्यस्य तु स्वदर्शनं नापह्नवर्हम्। अविद्यया ब्रह्मणोऽऽच्छादने ब्रह्मैव तिरोहितमिति स्वविषयकदर्शनं तस्यैव नास्तीति वैलक्षण्यात्। अन्यथा जगद्भ्रमा-नुपपत्तेः। 'तमेव भान्तमि'ति सर्वभासकस्यापि ब्रह्मणः यवनिकया आच्छादने तत्स्वरूपज्ञानस्य तस्मिन्नभावापादना-सम्भवात्। 'माया जगन्मोहिनी','भगवत्स्वरूपविरोधानकरीं' इति तत्स्वरूपतद्गुणादिविज्ञानस्याभावोऽस्माकमेवेति निश्चप्रचम्। अतो ब्रह्म नाज्ञानविषयः, नाज्ञानाश्रयो वा भवितुमर्हति। अतस्सूर्यादिदृष्टान्तोऽनुपपन्नः॥

एतेन, परमते ब्रह्मणः सूक्ष्मचेतनाचेतनविशिष्टत्वं स्थूलचेतनाचेतनविशिष्टत्वमित्यवस्थाद्वयस्याङ्गीकारवत् अस्मन्मतेपि अविद्यासाहित्य, अविद्याविधुरत्वरूपावस्थाद्वयस्वीकारेण विशिष्टत्वावस्थायां सगुणश्रुत्युपपत्तिः राहित्या-वस्थायां निर्गुणश्रुत्युपपत्तिरिति च निरस्तम्। स्वयंप्रकाशस्य सूर्यस्य तमसेव ज्ञानरूपब्रह्मणः तमोरूपाविद्यया अच्छाद-नासम्भवादविद्यावैशिष्ट्यस्य दुरुपपादत्वात्। अविद्यासिद्धौ प्रमाणाभावाच्च। **किञ्चेति** दूषणान्तरम्। अज्ञानस्य स्वानुभवस्वरूपब्रह्मतिरोधायकत्वमुच्यते। किमज्ञानमपरमार्थ उत परमार्थः। परमार्थश्चेदद्वैतहानिः, अपसिद्धान्तश्च। अपरमार्थश्चेत्, न सत्तया तिरोधायकं भवेत्। परमार्थस्यैव सत्तया तिरोधायकत्वात्। परन्तु प्रतीयमानतयैवेति वाच्यम्। इत्थञ्चाज्ञानानुभवः पूर्वः पश्चात्तिरस्कार इति वक्तव्यम्।

तिरोधानाभावे कथमज्ञानानुभव इति शङ्कायां पूर्वं तिरोधानं पश्चादज्ञानानुभव इत्यभ्युपेत्यं, एवं चान्योन्या-श्रयणम्। पूर्वमज्ञानानुभवः पश्चात्तिरोधानमिति पक्षे दूषणान्तरमाह - **यद्यतिरोहितेति**। विना तिरोधानमज्ञानानुभवे प्रपञ्चदर्शनमपि तिरोधानं विनैव स्यात्, अज्ञानदर्शनवत्। अतस्तिरोधानकल्पनमज्ञानानुभवश्च वृथेति भावः। पूर्वं तिरोधानं पश्चादज्ञानानुभव इति पक्षे दूषणान्तरं **ब्रह्म तिरस्कृत्यैव** इत्यनेनोपरि वक्ष्यति। नन्वज्ञानकल्पनस्य निष्प्रयोजनत्वशङ्काऽनुचिता, अज्ञानाभावे कथं प्रपञ्चोत्पत्तिः, कथं वा तद्दर्शनमिति चेत्सम्यगालोचय। अनुत्पन्नस्या-ज्ञानस्य कथं दर्शनम्। एवमेव प्रपञ्चस्यापि दर्शनम्। यथाऽज्ञानं न हेतुमपेक्षते, तथैव प्रपञ्चोपीति तद्दर्शनोपपत्तिः। अतो जगतोऽज्ञानोपादानकत्वमपि परास्तम्। न च दोषाभावे कथं प्रपञ्चकल्पनं इति मन्वीथाः। दोषाभावेप्यज्ञान-कल्पनवत्तत्सम्भवात्।

**किञ्च - ब्रह्मणोऽज्ञानानुभवः किं स्वतः, अन्यतो वा? स्वतश्चेदज्ञानानुभवस्य स्वरूपप्रयुक्तत्वेनानिर्मोक्षः स्यात्; अनुभूतिस्वरूपस्य ब्रह्मणोऽज्ञानानुभवस्वरूपत्वेन, मिथ्यारजतबाधकज्ञानेन रजतानुभवस्यापि निवृत्तिवत्, निवर्तकज्ञानेनाज्ञानानुभूतिरूपब्रह्मस्वरूपनिवृत्तिर्वा। अन्यतश्चेत्, किं तदन्यत्? अज्ञानान्तरमिति चेदनवस्था स्यात्। ब्रह्म तिरस्कृत्यैव स्वयमनुभवविषयो भवतीति चेत्तथा सतीदमज्ञानं काचादिवत्स्वसत्तया ब्रह्म तिरस्करोतीति ज्ञानबाध्यत्वमज्ञानस्य न स्यात्॥**

**अथेदमज्ञानं स्वयमनादि, ब्रह्मणः स्वसाक्षित्वं ब्रह्मस्वरूपतिरस्कृतिश्च युगपदेव करोति; अतो नानवस्थादयो दोषा इति - नैतत्; स्वानुभवस्वरूपस्य ब्रह्मणः स्वरूपतिरस्कृतिमन्तरेण साक्षित्वापादनायोगात्। हेत्वन्तरेण तिरस्कृतमिति चेत्तर्ह्यस्यानादित्वमपास्तम्। अनवस्था च पूर्वोक्ता। अतिरस्कृतस्वरूपस्यैव साक्षित्वापादने ब्रह्मणः स्वानुभवैकतानता च न स्यात्। अपि च - अविद्यया ब्रह्मणि तिरोहिते तद्ब्रह्म न किञ्चिदपि प्रकाशते, उत किञ्चित्प्रकाशते? पूर्वास्मिन् कल्पे, प्रकाशमात्रस्वरूपस्य ब्रह्मणोऽप्रकाशे तुच्छतापत्तिरसकृदुक्ता। उत्तरस्मिन्कल्पे, सच्चिदानन्दैकरसे ब्रह्मणि कोऽयमंशस्तिरस्क्रियते; को वा प्रकाशते? निरंशे निर्विशेषे प्रकाशमात्रे वस्तुन्याकारद्वयासम्भवेन तिरस्कारः प्रकाशश्च युगपन्न सङ्गच्छेते॥**

---

अथ ब्रह्मण अज्ञानानुभवं स्वाभाविकम्, उतौपाधिकमिति विकल्प्य दूषयति - **किञ्च ब्रह्मणोऽज्ञानानुभव** इति। स्वाभाविकत्वपक्षे अनिर्मोक्षरूपदोषमुक्त्वा **अनुभूतिस्वरूपस्ये**ति दूषणान्तरं वदति। बाधकज्ञाने सति विषयनिवृत्तिर्वक्तव्या। 'नेदं रजतमि'ति ज्ञाने रजतानुभवस्य रजतस्य च निवृत्तिरुच्यते। एवमत्रापि निवर्तकज्ञाने सति अनुभूतिरूपब्रह्मस्वरूपस्यापि निवृत्तिर्वक्तव्या। न च निवर्तकज्ञाने सति तन्निवर्त्यभूताज्ञानानुभव एव निवर्तते। तत्कथमनिवर्त्यस्य ब्रह्मस्वरूपानुभवस्य निवृत्तिरिति वाच्यम्। अज्ञानानुभवस्य स्वाभाविकत्वाभ्युपगमात्। अज्ञानानुभव एव ब्रह्मस्वरूपम्। एवञ्च निवर्तकज्ञानेन स्वाभाविकस्याप्यज्ञानानुभवस्य निवृत्त्युक्त्या स्वाभाविकब्रह्मस्वरूपस्यापि निवृत्तेरनपनोदनात्। यतस्त्वम् अज्ञानानुभवस्य स्वाभाविकत्वं मनुषे, तर्हि तत्ब्रह्मस्वरूपापेक्षया अन्यदिति वक्तुं न शक्नोषि। अन्यथाऽद्वैतभङ्गश्च स्यात्। एतत्सूचनायैव **अज्ञानानुभतिरूपब्रह्मस्वरूपे**ति भाषितम्। औपाधिकत्वपक्षेऽनवस्था दूषणम्। तिरस्कारपूर्वकानुभवपक्षे पूर्वोक्तान्योन्याश्रयदूषणव्यतिरिक्तं दूषणमाह - **तथा सती**ति। **काचः** = दृष्टिमान्द्यहेतुर्नयनदोषः। **न स्या**दिति परमार्थत्वावश्यंभावादिति भावः। यौगपद्यपक्षं दूषयति। **नैत**दिति। स्वरूपतिरस्कृतिमन्तरेणेत्ययोगे हेतुः। **स्वानुभवैकतानता** = अपरमार्थविषयानुभवविरोधिस्वानुभवस्वरूपत्वम्। **च**कारेण अनिर्मोक्षादिसत्वसमुच्चयः।

अथ तिरोधानासम्भवमेव मुखान्तरेण दूषयति - **अपि चे**ति। 'भित्त्या घटस्तिरोहितः' इत्युक्तौ घटस्य सर्वात्मनाऽप्रकाशो उक्तस्स्यात्। एवं ब्रह्म अविद्यया तिरोहितं चेत्सर्वात्मना तस्याप्रकाशो वक्तव्यः। स च न सम्भवति। प्रकाशातिरिक्तरूपघटस्य सत्त्वात्घटगतप्रकाशः तिरोहित इति वक्तुं शक्यम्। अत्र ब्रह्मगत प्रकाशस्य कस्यचिदभावाद्ब्रह्मण एवाप्रकाश इति तुच्छत्वमेवापद्यते। किञ्चिदंशाप्रकाशकथनमपि न शक्यम्। सावयवपदार्थेषु कस्यचित्प्रकाशः कस्यचिदंशस्याप्रकाश इति सुशकं वक्तुम्। निरवयवे ब्रह्मण्यंशभेदाभावात्प्रकाशाप्रकाशौ न शक्यवचनौ। 'ब्रह्म सच्चिदानन्दस्वरूपमि'त्युक्तावपि नांशभेदः। सर्वस्यापि स्वरूपमात्रसारकत्वात्। अत एव एकरसे इत्युक्तम्। एवञ्च प्रकाशमात्रे वस्तुन्याकारद्वयं न सम्भवतीति तिरस्कारप्रकाशौ युगपन्न सम्भवतः। **प्रकाशमात्र** इति। **मात्रचा** अविषयत्वं सूचितम्, अविषयभूत इत्यर्थः। **कोऽयमंश** इति विशेषस्याप्युपलक्षणम्। को वा विशेषस्तिरस्क्रियते को वा प्रकाशत इति भावः। **निरंशे निर्विशेष** इत्युत्तरत्रोभयोपादानात्।

**अथ सच्चिदानन्दैकरसं ब्रह्माविद्यया तिरोहितस्वरूपमविशदमिव लक्ष्यत इति। प्रकाशमात्रस्वरूपस्य विशदताऽविशदता वा किंरूपा ? एतदुक्तं भवति - यः सांशः सविशेषः प्रकाशविषयः, तस्य सकलावभासो विशदावभासः, कतिपयविशेषरहितावभासश्चाविशदावभासः। तत्र य आकारोऽप्रतिपन्नः, तस्मिन्नंशे प्रकाशाभावादेव प्रकाशावैशद्यं न विद्यते। यश्चांशः प्रतिपन्नः, तस्मिन्नंशे तद्विषयप्रकाशो विशद एव। अतः सवर्त्र प्रकाशांशेऽवैशद्यं न सम्भवति। विषयेऽपि, स्वरूपे प्रतीयमाने तद्गतकतिपयविशेषाप्रतीतिरेवावैशद्यम्। तस्मादविषये निर्विशेषे प्रकाशमात्रे ब्रह्मणि, स्वरूपे प्रकाशमाने(तद्गत)कतिपयविशेषाप्रतीति(षाप्रतिपत्ति) रूपावैशद्यं नामाज्ञानकार्यञ्च न सम्भवति - इति।**

**अपि च - इदमविद्याकार्यमवैशद्यं तत्त्वज्ञानोदयान्निवर्तते, न वा। अनिवृत्तौ अपवर्गाभावः। निवृत्तौ च वस्तु किंरूपमिति विवेचनीयम्। विशदस्वरूपमिति चेत्; तद्विशदस्वरूपं प्रागस्ति, न वा। अस्ति चेत्, अविद्याकार्यमवैशद्यं तन्निवृत्तिश्च न स्याताम्। नो चेत्, मोक्षस्य कार्यतयाऽनित्यता स्यात्।**

---

यथाकथञ्चिदुपपादनसम्भवाशङ्कामनूद्य परिहरति **अथे**त्यादिना। **अविशदमिव लक्ष्यत** इति। एवं पूर्वपक्षोस्थितेः अनर्हत्वं सूचितम्। **किं रूपे**ति। ज्ञाने वैशद्यं विशदवस्तुविषयकत्वं, तथाऽवैशद्यमविशदवस्तुविषयकत्वमेव। न तु साक्षात्। एतदेवोपपादयति - **यः सांश** इत्यादिना। कस्मिंश्चिद्धर्मिणि योंऽशः प्रतिपन्नः तत्प्रकाशे विशदतया तद्विषयकत्वं, यश्चाप्रतिपन्नः तस्मिन्नंशे प्रकाशाभावादवैशद्यमेव नास्ति। ब्रह्मण अविषयत्वान्निर्विशेषत्वाच्चांशभेदस्यैवासम्भवात्। अंशविशेषाप्रतीतिरूपावैशद्यं न सुवचम्। अवैशद्याभ्युपगमेपि दोषमाह - **अपि चे**ति। अवैशद्यस्याविद्याकार्यत्वात्तत्त्वज्ञानानन्तरं निवृत्तिर्वक्तव्या। अन्यथाऽपवर्ग एव न सम्भवति। निवृत्यङ्गीकारे वस्तुस्वरूपविवेचनं कार्यम्। विशदस्वरूपमेव तदिति चेत्तस्य पूर्वमपि सत्त्वादविद्याकार्यस्यावैशद्यस्य तन्निवृत्तेश्च कथमुपपत्तिः। पूर्वं विशदस्वरूपस्य ब्रह्मण असत्वे तत्त्वज्ञानाद्विशदस्वरूपत्वोत्पत्त्या मोक्षस्य कार्यत्वं तत एवानित्यत्वं चेति तात्पर्यम्। इदमत्रावधेयं - सत्यं ज्ञानमनन्तं ब्रह्मेत्यनेन ब्रह्मणि निर्विशेषे, असत्यव्यावृत्तिजडव्यावृत्तिपरिच्छिन्नव्यावृत्तिरूपा धर्मा बोध्यन्ते। एते च धर्माः धर्मिभूतब्रह्मस्वरूपभूताः इत्येतादृशज्ञानं पूर्वं नास्ति अविद्यामाहात्म्यात्। एतदेव ब्रह्मण्यवैशद्यम्, एतन्निवृत्तिः निवर्तकतत्त्वज्ञानात्। एवञ्च पूर्वमविशदस्वरूपं, तत्त्वज्ञानाद्विशदस्वरूपं भातीत्यवैशद्यवैशद्योपपादनं तैः क्रियते।

अस्यैवं समाधिः। तत्त्वज्ञानादवैशद्यनिवृत्तौ जडव्यावृत्त्यादिधर्मप्रकाशनमावश्यकम्। ब्रह्मणस्तेन सधर्मत्वापत्तिः। न च व्यावृत्यादीनां ब्रह्मस्वरूपत्वं युक्तम्। पूर्वमेव धर्मधर्मिणोः ऐक्यस्य निषिद्धत्वात्। न च मुक्तावपि धर्माग्रहणमेवेति वाच्यम्। अविद्यानिवृत्तावप्यग्रहणे पूर्वमविद्यायाः तद्धेतुत्वासम्भवात्। व्यावृत्तिरूपधर्म, तद्धर्म्यैक्यरूपवैशद्यं पूर्वमस्ति वा न वा। अस्ति चेदविद्याकार्यमवैशद्यं तन्निवृत्तिश्च न स्याताम्। न चेत्प्रागसतः पश्चादुत्पन्नस्य वैशद्यस्यानित्यत्वमेव स्यात्। शास्त्रं तु ब्रह्मणः सविशेषत्वमेव बोधयतीति। इदमप्यत्राभिप्रेतम् "आत्मभूतं सच्चिदानन्दं ब्रह्म स्वयम्प्रकाशम्। स्वविषये संशयविपर्ययौ विना सर्वदाभासमानत्वात्। न जातु कश्चित् 'नाहमि'ति विपर्येति, न वा 'अहमस्मि न वे'ति सन्देग्धि" इति शाङ्करभाष्यम्। अतः स्वयम्प्रकाशे आत्मनि भासमाने संशयविपर्ययोरभावादज्ञानानुभवस्य नैव प्रसक्तिः। अतोऽहमज्ञः इत्यज्ञानानुभवो नैव सम्भवति। अतोऽविशदानुभवः पश्चाद्विशदानुभवः इत्येतत्सर्वथाऽनुपपन्नम्॥

यथाऽज्ञानानुभवोऽनुपपन्नः, तथा 'अज्ञ' इत्याश्रयत्वयोगोऽप्यनुपपन्न इत्याह - **अस्ये**ति। दूषणान्तरमाह -

**अस्याज्ञानस्याश्रयानिरूपणादेवासम्भवः पूर्वमेवोक्तः। अपि चापरमार्थदोषमूलभ्रमवादिना निरधिष्ठान-भ्रमासम्भवोऽपि दुरुपपादः, भ्रमहेतुभूतदोषदोषाश्रयत्ववदधिष्ठानापारमार्थ्येऽपि भ्रमोपपत्तेः। ततश्च सर्वशून्य-त्वमेव स्यात्॥**

**यदुक्तमनुमानेनापि भावरूपमज्ञानं सिध्यतीति - तदयुक्तम्। अनुमानासम्भवात्। ननूक्तमनुमानम्। सत्यमुक्तम्। दुरुक्तं तु तत्; अज्ञानेऽप्यनभिमताज्ञानान्तरसाधनेन विरुद्धत्वाद्धेतोः। तत्राज्ञानान्तरासाधने हेतोरनैकान्त्यम्। साधने च, तदज्ञानमज्ञानसाक्षित्वं निवारयति। ततश्चाज्ञानकल्पना निष्फला स्यात्।**

---

**अपि चापरमार्थेति**। ब्रह्मैव परमार्थ इति वदतामतिरिक्तस्य सर्वस्याप्यपरमार्थत्वमेषितव्यम्। ततोऽविद्यारूपदोषोप्यपर-मार्थ इति सिध्यति। अपरमार्थस्य दोषस्य कथं भ्रमहेतुत्वं, काचादीनां व्यावहारिकसत्यानामेव हि भ्रमहेतुत्वं स्वीक्रियते। अन्यथा दोषस्यापरमार्थत्वेपि भ्रमोपपादने सर्वस्यापि सर्वभ्रमापत्तिः दोषाभावेपि दोषवत्वग्रहणसम्भवात्। न च काचादीनां सत्तया हेतुत्वम्, अविद्याया न तथेति वाच्यम्। तथा सत्यविद्यारूपदोषः केन जातः। दोषहेतुभूतदोषश्च कः। स किं परमार्थ उतापरमार्थः। तत्राप्येवं विचारेऽनवस्थैव। एवं दोषस्यापारमार्थ्येपि भ्रमः सम्भवतीति वदतो-ऽधिष्ठानस्याप्यपरमार्थत्वं वक्तुं शक्यम्। अधिष्ठानाभावे कथं भ्रमोपपत्तिरिति चेत्, कल्पिताधिष्ठाने एवं भ्रमोपपादने इदमधिष्ठानं कुत्र कल्पितमिति चेदधिष्ठानान्तरे कल्पितमिति ब्रूमः। एवमुपपादनेऽनवस्था स्यादिति चेत्? दोषस्या-परमार्थत्वे कथमनवस्थापरिहारः। कल्पितप्रपञ्चं प्रति कल्पितदोषः यथा कारणं, तथैव कल्पितदोषं प्रति कल्पितदोष इत्यनवस्था। प्रवाहानादित्वेन परिहारश्चेदत्रापि स तुल्यः। कल्पिताधिष्ठान एव भ्रमः, तच्चाधिष्ठानमन्यत्र कल्पितं तदप्यन्यत्रेत्यनवस्थायाः प्रवाहानादित्वेन परिहारः समानः। अपि च दोषस्यापरमार्थत्वं, अधिष्ठानस्य परमार्थत्वञ्च वदता कस्मिन्नधिष्ठाने इयमपरमार्थभूताऽविद्या दोषरूपा प्रतीता इत्यत्र समाधि र्वाच्यः। अस्मिन्नेव ब्रह्मरूपाधिष्ठाने कल्पिता इति वक्तव्यम्। तथा सति कल्पनात्पूर्वं ब्रह्म अविद्याविधुरं स्वाभाविकरूपमासीदिति पूर्वं प्रपञ्चभ्रमो नास्ती-त्यायातम्। कथमस्य प्रपञ्चस्यानादित्वम्। अन्यत्र कल्पितमिति तव न शक्यं वक्तुम्। अधिष्ठानान्तरानङ्गीकारात्। अङ्गीकारेऽधिष्ठानापरमर्थत्वस्वीकार एवोचितः।

एतावता भावरूपाज्ञानविषयकप्रत्यक्षनिरासः कृतः। अथानुमानं तत्र निरस्यति - **तदयुक्तमिति**। **असम्भवादिति**। अनुमानाभास इति भावः। **अज्ञानेऽपीति**। **प्रमाणज्ञानं स्वविषयावरण...प्रकाशकत्वात्** इत्यनुमानेन ब्रह्मावारकाज्ञानं साध्यते। तेन ब्रह्माज्ञानसिध्या प्रपञ्चभ्रम उपपाद्यते। अत्रानुमितौ ब्रह्माज्ञानस्यैव साध्यत्वेन विवक्षितत्वादेतत्साधकभव-दुक्तानुमितिरूपप्रमाणज्ञानमपि अप्रकाशितार्थप्रकाशकत्वात्, एतदनुमिति विषयाज्ञानावारकाज्ञानन्तरसाधकं भवतीति ब्रह्मज्ञानं सिषाधयिषितमज्ञानावारकाज्ञानमाच्छादयेत्। आच्छादितमज्ञानं न ब्रह्म साक्षात्कर्तुमलम्। ततश्चाज्ञानसाक्षित्वं ब्रह्मणो नास्तीति कथं प्रपञ्चभ्रमः। अज्ञानकल्पनेपि न लाभः। अज्ञानान्तरासाधने साध्याभाववति अज्ञानसाधकरूप-प्रमाणज्ञाने हेतुसत्त्वात् व्यभिचारः। साधने तु विरुद्धता। अत्र विरुद्धत्वं साध्याभावसाधकहेतुत्वरूपं न। परन्त्वनभित-मतार्थसाधकत्वरूपम्। 'अभ्युपेतसिद्धान्तविरोधिहेतुवचने विरुद्धत्वम्' इति न्यायसूत्रम्।

नन्वस्माभिरज्ञानस्य 'अहमज्ञः' इति साक्षिभास्यत्वमेव स्वीक्रियते। अतोऽप्रकाशितार्थप्रकाशकता नास्ति। साक्षिण एवाज्ञानप्रकाशकत्वादतो न व्यभिचार इति चेत्तर्ह्यनुमानमेव नास्तीति नैव विवादः। अज्ञानस्य साक्षिभास्य-त्वेन त्वदुक्तानुमानस्यैवाप्रवृत्तेः। न च साक्षिप्रकाश्यमज्ञानं तत्र भावत्वमनुमानेन साध्यते इति वाच्यम्। प्रमाणान्तरसिद्धे एवार्थेऽन्यसाधनं सम्भवति। अत्रत्वज्ञानस्यैव ज्ञानाभावरूपत्वेन स्थापितत्वात्तत्र भावत्वसाधने व्याघातः। अतो भावत्व-

**दृष्टान्तश्च साधनविकलः ; दीपप्रभाया अप्रकाशितार्थप्रकाशकत्वाभावात् । सर्वत्र ज्ञानस्यैव हि प्रकाशकत्वम् ; सत्यपि दीपे ज्ञानेन विना विषयप्रकाशाभावात् । इन्द्रियाणामपि ज्ञानोत्पत्तिहेतुत्वमेव; न प्रकाशकत्वम् । प्रदीपप्रभायास्तु चक्षुरिन्द्रियस्य ज्ञानमुत्पादयतो विरोधितमोनिरसनद्वारेणोपकारकत्वमात्रमेव । प्रकाशकज्ञानोत्पत्तौ व्याप्रियमाणचक्षुरिन्द्रियोपकारकहेतुत्वमपेक्ष्य दीपस्य प्रकाशकत्वव्यवहारः । नास्माभिर्ज्ञानतुल्यप्रकाशकत्वाभ्युपगमेन दीपप्रभा निदर्शिता, अपि तु ज्ञानस्येव(स्यैव) स्वविषयावरणनिरसनरूप (पूर्वक)प्रकाशकत्वमङ्गीकृत्येति चेन्न - न हि विरोधिनिरसनमात्रं प्रकाशकत्वम् ; अपि त्वर्थपरिच्छेदः ; व्यवहारयोग्यतापादनमिति यावत् । तत्तु ज्ञानस्यैव । यद्युपकारकाणामप्यप्रकाशितार्थप्रकाशकत्वमङ्गीकृतम्, तर्हीन्द्रियाणामुपकारकतमत्वेनाप्रकाशितार्थप्रकाशकत्वमङ्गीकरणीयम् । तथा सति तेषां स्वनिवर्त्यवस्त्वन्तर-पूर्वकत्वाभावाद्धेतोरनैकान्त्यमित्यलमनेन ।**

**प्रतिप्रयोगाश्च - विवादाध्यासितमज्ञानं न ज्ञानमात्रब्रह्माश्रयम् ; अज्ञानत्वात् ; शुक्तिकाद्यज्ञानवत् ।**

---

विशिष्टाज्ञानमेव साधनीयं इति पूर्वोक्तदोषः तदवस्थः । नन्वनुमितिरूपप्रमाणज्ञानेऽज्ञानावारकाज्ञानपूर्वकत्वं नेष्यते । तावता को दोषः । अप्रकाशितार्थप्रकाशकत्वरूपहेतोः साध्याभाववत्यामस्यामनुमितौ सत्त्वाद्व्यभिचार इति नाशङ्कनीयं, हेतोर्दुष्टत्वेनाप्रकाशिताज्ञानरूपार्थप्रकाशकत्वाभावात् । एतादृशहेतुमुपपाद्य व्यभिचारोपपादनं कथमिति पूर्वपक्षसम्भवात्? उच्यते - अज्ञानावारकाज्ञानपूर्वकत्वाभावेपि अप्रकाशितार्थप्रकाशकत्वं स्वीक्रियते चेत्साध्यं विनापि हेतुरङ्गीकृतः स्यात् । तदा हेतोरप्रयोजकत्वमापद्यते इत्याशयात् ।

दूषणान्तरमाह - **दृष्टान्तश्चे**ति प्रकाशकत्वं नाम व्यवहारानुगुण्यहेतुत्वम् । इदञ्च ज्ञानस्यैव । न तु दीपप्रभायाः । अत्र **च**शब्दो हेत्वसिद्धिरूपदोषान्तरसमुच्चायकः । घटादिज्ञानेऽप्रकाशितार्थबोधकत्ववत् ब्रह्मरूपज्ञानेऽप्रकाशितार्थप्रकाशक-त्वन्नास्ति । ब्रह्मविषयकाखण्डाकारवृत्तौ प्रकाशितार्थप्रकाशकत्वस्यैव सत्त्वात् । अखण्डाकारवृत्तौ ब्रह्मणो विषयत्वा-नुभ्युपगमे प्रकाशकत्वमेव नास्तीति सुतरामसिद्धिः । साक्षात्प्रकाशकत्वस्य हेतुत्वे दृष्टान्ते साध्यवैकल्यम् । परम्परया प्रकाशकत्वविवक्षणे पक्षे हेत्वसिद्धिः । साक्षाद्वा परम्परया वेति विवक्षणे इन्द्रियेषु व्यभिचारः । तेषां स्वनिवर्त्यवस्त्वन्तर-पूर्वकत्वाभावेन साध्याभावसत्वम् । इन्द्रियपक्षीकारेण स्वविषयावरणस्वनिवर्त्यवस्त्वन्तरपूर्वकत्वसाधनमप्यनुपपन्नं, तेषामाहङ्कारिकत्वादहङ्काररूपवस्त्वन्तरपूर्वकत्वमेव सिद्ध्येत् । तस्य च वस्तुनः स्वविषयावरणस्वदेशगतत्वाभावात् । स्वविषयावरणनिरासकत्वं प्रकाशकत्वम् । इदं पक्षसपक्षसाधारणमित्यपि न भवति तस्य साध्याविशिष्टत्वात् । इतीमे दोषा अत्राभिप्रेताः । परम्परया प्रकाशकत्वरूपद्वितीयपक्षेपि दीपप्रभायाः परम्परया प्रकाशकत्वमपि नास्तीति बोधयितुं **प्रदीपप्रभायास्तु** इत्यादिकम् । तर्हि 'घटादिकं दीपः प्रकाशयती'ति व्यवाहरः कथमित्यत्राह - **प्रकाशकज्ञानोत्पत्ता**विति । स्वविषयावरणनिरासकत्वरूपचतुर्थपक्षं शङ्कते - **नास्माभिरि**ति । **निरसनरूपप्रकाशकत्वमि**त्युक्त्या प्रकाशकत्व-परिष्कारः कृतः । अत्र साध्याविशिष्टदूषणस्य स्फुटत्वादन्यदूषणमाह - **न ही**ति । परम्परयोपकारकाणामपि प्रकाशकता-स्वीकारे इन्द्रियेषु व्यभिचारमाह - **तर्हीन्द्रियाणामि**ति । हेतौ भासमानत्वविशेषणदानादिन्द्रियव्यभिचारवारणम् । तज्ज्ञानाभावेऽपि प्रकाशकत्वादिति चेत्तर्हि लिङ्गादौ व्यभिचारः, तस्य भासमानत्वेनार्थप्रकाशकत्वात् । भासमानत्वे सतीति विशेषणदानेप्यप्रकाशितार्थप्रकाशकत्वादित्यत्र प्रकाशकत्वे पूर्ववद्विकल्पस्य तद्दूषणस्य चापरिहारात् ॥

**प्रतिप्रयोगाश्चे**ति प्रत्यनुमानानि विवक्षितानि । तदुक्तानुमाने प्रागभावव्यतिरिक्तत्वविषये विचारः कृतः पश्चात् हेतुविषये । अधुना साध्ये एव स्वदेशगतत्व-स्वविषयावरणत्व-स्वनिवर्त्यत्वविषये विचारः क्रियते । प्रथमानुमानं

**ज्ञात्राश्रयं हि तत्। विवादाध्यासितमज्ञानं न ज्ञानमात्रब्रह्मावरणम् ; अज्ञानत्वात् ; शुक्तिकाद्यज्ञानवत्। विषयावरणं हि तत्। विवादाध्यासितमज्ञानं न ज्ञाननिवर्त्यम् ; ज्ञानविषयानावरणत्वात् ; यज्ज्ञाननिवर्त्यमज्ञानम्, तत् ज्ञानविषयावरणम् ; यथा शुक्तिकाद्यज्ञानम् ॥**

**ब्रह्म नाज्ञानास्पदम् ; ज्ञातृत्वविरहात् ; घटादिवत्। ब्रह्म नाज्ञानावरणम् ; ज्ञानाविषयत्वात्। यदज्ञानावरणम्, तज्ज्ञानविषयभूतम् ; यथा शुक्तिकादि। ब्रह्म न ज्ञाननिवर्त्याज्ञानम् ; ज्ञानाविषयत्वात्। यज्ज्ञाननिवर्त्याज्ञानं तज्ज्ञानविषयभूतम् ; यथा शुक्तिकादि ॥**

**विवादाध्यासितं प्रमाणज्ञानं स्वप्रागभावातिरिक्ताज्ञानपूर्वकं न भवति ; प्रमाणज्ञानत्वाद्भवदभिमताज्ञानसाधनप्रमाणज्ञानवत्। ज्ञानं न वस्तुनो विनाशकम् ; शक्तिविशेषोपबृंहणविरहे सति ज्ञानत्वात्। यद्वस्तुनो विनाशकम्, तच्छक्तिविशेषोपबृंहितज्ञानमज्ञानञ्च दृष्टम् ; यथेश्वरयोगिप्रभृतिज्ञानम्, यथा च मुद्गरादि। भावरूपमज्ञानं न ज्ञानविनाश्यम् ; भावरूपत्वात्, घटादिवदिति ॥**

**अथोच्येत - बाधकज्ञानेन पूर्वज्ञानोत्पन्नानां भयादीनां विनाशो दृश्यते इति - नैवम्। न हि ज्ञानेन तेषां विनाशः ; क्षणिकत्वेन तेषां स्वयमेव विनाशात्। कारणनिवृत्त्या च पश्चादनुत्पत्तेः। क्षणिकत्वञ्च तेषां**

---

स्वदेशगतत्वनिरासे। द्वितीयानुमानं स्वविषयावरणत्वनिरासे। तृतीयं स्वनिवर्त्यनिरासे। अज्ञानत्वे ज्ञानमात्रब्रह्मानाश्रितत्वप्रसङ्गः। यदि ज्ञानमात्रब्रह्माश्रितं स्यात्, तर्हि तदज्ञानन्न स्यात्। शुक्तिकाद्यज्ञानस्य ज्ञात्राश्रितत्व दर्शनात्। एतमुत्तरत्र। एवं रीत्या प्रतितर्कप्रयोगपरतयापि योजयितुं शक्यम्। एतत्त्रीण्यज्ञानपक्षकानि। ब्रह्मपक्षकानुमानत्रयमुत्तरत्र। तदेतदाह - **ब्रह्म नाज्ञानास्पदमिति**। पूर्वं साध्ये हेतौ च विचारः कृतः। अधुना पक्षविचारमुखेन तदुक्तानुमानसामान्यं दूषयति - **विवादाध्यासितमिति**।

भावरूपाज्ञानस्य ज्ञानमात्रब्रह्मणश्च स्वमतेऽप्रामाणिकतैव। अथापि परमतानुसारेणाभ्युपगम्यवादः। ब्रह्मपक्षकप्रथमानुमाने ब्रह्मणो ज्ञातृत्वापादनं, द्वितीये तृतीये च ज्ञेयत्वापादनम्। प्रमाणज्ञानपक्षके चतुर्थे प्रागभावातिरिक्ताज्ञानपूर्वकत्वाभावापादनं इति विवेकः। ज्ञानस्य वस्तुनाशकत्वाभावः साध्यते। घटादिवस्तुनाशकत्वं मुद्गरादीनामेव। न ज्ञानस्य। न हि घटादिज्ञानं घटादिनाशकम्। न चेश्वरस्य योगिपुरुषस्य च 'घटो ध्वस्तो भवत्वि'ति सङ्कल्परूपनाश्यत्वं दृष्टमिति वाच्यम्। तत्रापि सङ्कल्परूपज्ञानस्यैव। न तु ज्ञानसामान्यस्य। एवं व्यभिचारवारणायैव शक्तिविशेषोपबृम्हणविरहेसतीत्युक्तम्। ततश्च ज्ञानं न वस्तु नाशकं शक्तिविशेषरूपसहकाराभावविशिष्टज्ञानत्वात्। अत्र व्यतिरेकव्याप्तिः। अत्र सङ्कल्परूपज्ञानं मुद्गरादि चोदाहरणम्। सङ्कल्परूपज्ञाने ज्ञानत्वसत्त्वेपि विशेषणाभावाद्विशिष्टाभावः। मुद्गरे विशेष्याभावादिति बोध्यम्। न च ज्ञाने जाते तदुत्पादकादृष्टरूपवस्तुविनाशो दृष्ट इति कथं वस्तुनाशकत्वाभाव इति वाच्यम्। ज्ञानस्योत्पादकादृष्टनाशकत्वेपि ज्ञानत्वेन तत्र हेतुत्वानङ्गीकारात्। अदृष्टवशेन ज्ञानोत्पत्तिस्थले ज्ञानस्थैर्यरूपकार्यदर्शनेनादृष्टस्थैर्यस्यप्यावश्यकत्वात् ॥

अभावरूपाज्ञानपक्षकानुमाने न ज्ञानमात्रविनाश्यमिति साध्यपरिष्कारः सङ्कल्पज्ञानविनाश्ये घटे व्यभिचारात्। भावरूपत्वे ज्ञानमात्रनिवर्त्यत्वं न स्यादिति भावः। भावरूपस्य भयादेः ज्ञाननिवर्त्यत्वदर्शनाद्व्याप्तिभङ्ग इति शङ्कते - **अथोच्येतेति**। **पूर्वज्ञानमिति** भ्रान्तिज्ञानं विवक्षितम्। तस्यैव भ्रमजनकत्वात्। **क्षणिकत्वञ्चेति**। घटादीनां स्वकारणदण्डचक्रादिनिवृत्तावपि स्थायित्वं दृश्यते। दीपज्वालाया इव ज्ञानस्य न तथात्वं कारणनिवृत्तौ नाशात्। भया-

**ज्ञानवदुत्पत्तिकारणसन्निधान एवोपलब्धेः, अन्यथाऽनुपलब्धेश्चावगम्यते । अक्षणिकत्वे च भयादीनां भयादिहेतुभूतज्ञानसन्ततौ अविशेषेण सर्वेषां ज्ञानानां भयाद्युत्पत्तिहेतुत्वेनानेकभयोपलब्धिप्रसङ्गाच्च । स्वप्रागभावव्यतिरिक्तवस्त्वन्तरपूर्वकमिति व्यर्थविशेषणोपादानेन प्रयोगकुशलता चाऽऽविष्कृता । अतोऽनुमानेनापि न भावरूपाज्ञानसिद्धिः ।**

**श्रुतितदर्थापत्तिभ्यामज्ञानासिद्धिरनन्तरमेव वक्ष्यते । मिथ्यार्थस्य (हि) मिथ्यैवोपादानं भवितुमर्हतीत्येतदपि,** (शारी.२.१.४.) **'न विलक्षणत्वात्' इत्यधिकरणन्यायेन परिह्रियते । अतोऽनिर्वचनीयाज्ञानविषया**

दिकमपि कारणसन्निधाने सत्त्वं, तदसन्निधानेऽसत्त्वञ्च । अतः क्षणिकत्वम् । **अक्षणिकत्व** इत्यादिना बाधकप्रदर्शनम् । भ्रान्तिज्ञानं भयहेतुः ।

एवं ज्ञानसन्ततौ सत्यामविशेषेण सर्वेषामेव भयोत्पत्तिहेतुत्वविशेषाद्भयसन्ततिरप्यावश्यकी । ततोऽनेकभयसन्तत्युपलब्धिः स्यात् । ज्ञानस्येव भयादेरपि क्षणिकत्वे तु यथा नानेकज्ञानोपलब्धिः, तथाऽनेकभयोपलब्धिश्च परिहृता भवेत् । 'ज्ञानं क्षणिकं, भयमक्षणिकमि'त्यङ्गीकारे त्वेष दोषो दुरपह्नवः । प्रतिक्षणमुत्पद्यमाना बहवो घटाः स्थायिनो दृश्यन्ते । एवमेव ज्ञानसन्ततिजन्यप्रतिक्षणभयादिकमपि स्थिरमिति बहुभयोपलब्धिरपरिहार्या । अतो भयादेर्न ज्ञाननिवर्त्यत्वं, क्षणिकतया स्वयमेव नाशः । स्वमते भयादिकं ज्ञानविशेषरूपमिति क्षणिकमेव । भयस्य दुःखविशेषरूपत्वं सर्ववादिसंप्रतिपन्नम् । दुःखञ्च स्वमते ज्ञानरूपम् । तद्दुःखरूपमपि ज्ञानातिरिक्तमित्यन्येषां मतम् । सर्पादिभ्रमानुवृत्तौ भयादिरूपज्ञानावृत्तिरपि । तदुक्तानुमानदूषणमाह - **स्वप्रागभावेति** । प्रागभावव्यतिरिक्तेत्येवालं स्वपदं व्यर्थम् । अभावव्यतिरिक्तेत्येव च पर्याप्तम् । प्राक्पदं निरर्थकम् । वस्तुशब्दस्य भाववाचित्वात्, तेनैवाभाववारणादभावव्यतिरिक्तेत्यप्यधिकम् । एवमन्तरपदमपि व्यर्थम् । स्वनिवर्त्यत्वोक्त्या वस्तुनः पूर्वत्वं लभ्यत इति पूर्वेत्यपि व्यर्थम् ।

ननु वस्तुपूर्वकत्वसाधने वस्तुपदेनाविद्याग्रहणं न भवति, तस्याः सदसद्विलक्षणत्वेन वस्तुशब्दवाच्यत्वाभावात् । अतस्तस्याः सदसदनिर्वचनीयत्वलाभार्थमन्तरपदमिति चेत्तर्हि दृष्टान्तः साध्यविकलः स्यात् । तस्य सदसद्विलक्षणत्वाभावात् । अतोऽस्यानुमानत्वमेव न सम्भवति । उपसंहरति - **अत** इति । श्रुतिः श्रुत्यर्थापत्तिश्च नाज्ञानसाधने प्रमाणमित्युपरि वक्ष्यते ॥

ननु मा भूदज्ञाने प्रत्यक्षम्, अनुमानं श्रुतिस्तदर्थापत्ति र्वा प्रमाणम् । कार्यभूतं जगन्मिथ्याभूतमिति सर्वसम्प्रतिपन्नम् । स्वप्ने दृश्यमानस्य कार्यभूतस्य वस्तुनो मिथ्यात्वदर्शनात् । कार्यस्य मिथ्यात्वे तदुपादानस्यापि मिथ्यात्वावश्यकत्वादुपादानभूतस्य मिथ्याज्ञानस्य स्वत एव सिद्धेः । अतोऽज्ञानापलापो न सम्भवति । एतादृशाज्ञानमेव प्रत्यक्षविषय इत्यस्माभिरुच्यत इति शङ्कां परिहरति - **मिथ्यार्थस्येति** । अत्र कार्यस्यार्थस्य मिथ्यात्वमभ्युपगम्य समाधानभाषणम् । वस्तुनो मिथ्यात्वेपि तदुपादानस्य मिथ्यात्वावश्यकत्वमप्रामाणिकम् । तथा व्याप्त्यदर्शनात् । विलक्षणयोरपि कार्यकारणभावस्याङ्गीकारान्न साजात्यनियमः । अयमर्थः विलक्षणत्वाधिकरणे प्रतिपाद्यते इत्याशयः । त्वन्मतेपि कार्यकारणयोः साजात्यन्न स्वीकृतम् । अविद्यायाः कारणत्वं वदतां भवतां मते विवर्तब्रह्मण एवोपादानत्वात्, उपादानभूतं ब्रह्म परमार्थः, कार्यं तु जगदपरमार्थभूतम् ।

ननु न केवलं ब्रह्मणः उपादानत्वम् । अविद्यानाशे मुक्तौ ब्रह्मण उपादनत्वाभावात् । न हि तदा जगद्भ्रमः, अतोऽविद्याया एवेति न दोष इति चेन्न, केवलाविद्याया एवोपादानत्वे ब्रह्मरूपाधिष्ठानं विना जगद्भ्रमापत्तेः ब्रह्मणोप्यसिद्धिप्रसङ्गात् । अत उभयकारणत्वमेव वाच्यमिति मिथ्याऽमिथ्योभयकारणात्केवलमिथ्याभूतजगदुदय इति कार्यकारणयोर्वैषम्यमेव ।

**न काचिदपि प्रतीतिरस्ति। प्रतीतिभ्रान्तिबाधैरपि न तथाऽभ्युपगमनीयम्। प्रतीयमानमेव हि प्रतीतिभ्रान्तिबाधविषयः। आभिः प्रतीतिभिः प्रतीत्यन्तरेण चानुपलब्धमासां विषय इति न युज्यते कल्पयितुम्।**

**शुक्त्यादिषु रजतादिप्रतीतेः, प्रतीतिकालेऽपि तन्नास्तीति बाधेन च, अन्यस्यान्यथाभानायोगाच्च सदसदनिर्वचनीयमपूर्वमेवेदं रजतं दोषवशात्प्रतीयत इति कल्पनीयमिति चेन्न - तत्कल्पनायामप्यन्यस्यान्यथा-**

---

व्यावहारिकसत्यात्प्रातिभासिकज्ञानोत्पत्तिं वदतस्तव कार्यकारणयोर्वैलक्षण्यमवर्जनीयम्। एकाधिष्ठानकानेकभ्रमस्थले प्रातिभासिकतत्तज्ज्ञानानामनेकविषयकत्वावश्यकतया तत्प्रयुक्तज्ञानवैलक्षण्यमिति विजातीयोत्पत्तिरपनोदितुमशक्या चेत्यप्याशयः। न **काचिदपि** = भ्रान्तिरूपापि प्रतीतिर्नास्तीत्यज्ञानसिद्धौ नैव प्रमाणम्॥

ननु जगन्मिथ्या प्रतीतिविषयत्वाद्भ्रान्तिविषयत्वाद्बाधविषयत्वाच्च। अनेन सदसद्विलक्षणत्वरूपं मिथ्यात्वात्मकमनिर्वचनीयत्वं सिध्यति। असच्चेन्न प्रतीयेत। यतो जगतप्रतीतिविषयत्वम्, अतः सद्विलक्षणत्वम्। सच्चेन्न बाध्येत। यतो बाधविषयता, अतस्सद्विलक्षणत्वम्। एवमेवाज्ञानमपि सदसद्विलक्षणं प्रतीतिभ्रान्तिबाधविषयत्वादिति अज्ञानसाधनारम्भावसरे उक्तां युक्तिं निरस्यति - **प्रतीतिभ्रान्तिबाधैरपी**ति। अयं भावः - प्रतीतिभ्रान्तिबाधविषयत्वहेतुना हि सदसद्विलक्षणत्वं साध्यते, किं जगत उताविद्यायाः। प्रथमे काममस्तु जगतः सदसद्विलक्षणत्वम्। किं जगति इदमस्तीति, जगतः सदसद्विलक्षणसाधनप्रयासः। द्वितीये जगति स्थितं प्रतीतिभ्रान्तिबाधविषयत्वं, अविद्यायाः सदसद्विलक्षणत्वसाधकं कथं भवेत्। न चाविद्यागतप्रतीतिभ्रान्ति बाधविषयत्वहेतुनैव तस्यामनिविचनीयत्वं साध्यते, न तु जगद्गतेन तेनेति वाच्यम्। जगतः प्रतीयमानत्वात्, तत्र प्रतीतिभ्रान्तिबाधविषयत्वं शक्यशङ्कम्। अविद्यायां प्रतीयमानत्वस्यैवाभावात्कथं प्रतीतिभ्रान्तिबाधविषयत्वं तन्मूलमनिर्वचनीयत्वमपि।

न च जगत इवाविद्याया अपि, 'अहमज्ञः, मामन्यं च न जानामि', 'न किञ्चिदहमवेदिषं', 'प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तवस्तुपूर्वकं' इत्यादि-प्रतीतिविषयत्वमस्तीति प्रतीतिभान्तिबाधविषयत्वोपपादनं शक्यमिति वाच्यम्। तासां प्रतीतीनामज्ञानविषयकत्वासम्भवस्य प्रागेव प्रतिपादितत्वात्। न च श्रुत्यर्थापत्तिश्रुतिभ्यां प्रतीयमानत्वसिद्धिः तस्य निरसिष्यमाणत्वात्। तथा च प्रतीतिभ्रान्तिविषयत्वं जगत एव। न त्वज्ञानस्य। प्रत्यक्षादिकमप्युक्तं नाज्ञानविषयकम्। अतो जगतोऽनिर्वचनीयत्वसिद्धावपि नाज्ञानस्य तथात्वसिद्धिः। न च जगद्विषयकप्रतीतिभ्रान्तिबाधनामेवाज्ञानविषयकत्वं वक्तुं शक्यम्। अन्यविषयकज्ञानस्य तदन्यविषयकत्वासम्भवात्। न हि नीलज्ञानं पीतविषयकं भवेत्। अन्यथा सर्वोपप्लवप्रसङ्गादिति। अत्र **प्रतीतिभ्रान्तिबाधैरपि** इत्यादिभाष्यं अविद्याया अनिर्वचनीयत्वप्रतिक्षेपाय प्रवृत्तम्। तथापि जगतोपि तत्प्रतिक्षेपतात्पर्यकमित्यवधेयम्। 'सच्चेत् न बाध्येत, असच्चेत् न प्रतीयेत' इत्यादेः रजतादिस्थले सम्भवात्। सत्यरजतस्य बाधासम्भवात्। असतः शतश्रृङ्गस्येव प्रतीत्यसम्भवादिति।

एतावताऽनिर्वचनीयस्य वस्तुनोऽसिद्धिरुक्ता। अथाऽन्यथानुपपत्याऽनिर्वचनीयवस्तुसिद्धिं शङ्कते - **शुक्त्यादिष्विति**। अयमाशयः - शुक्तौ 'इदं रजतम्' इति ज्ञानं जायत इति सर्वसम्प्रतिपन्नं, शुक्तौ 'रजतं नास्ती'ति निर्विवादम्। शुक्तिनिष्ठविशेष्यतानिरूपितरजतनिष्ठप्रकारताकं ज्ञानं चेदम्। कथमस्य ज्ञानस्य निर्वाहः। ख्यातिद्वयवादिमीमांसकमतस्य चात्र न प्रवृत्तिः। अत्रेदमंशे प्रत्यक्षं रजतांशे स्मरणमिति मीमांसकाः। 'इदं रजतमि'ति ज्ञानमेकमिति प्रतिभाति। अतो ज्ञानद्वयवादिमीमांसकपक्षस्य नात्र प्रवेशः। अन्यथाख्यतिवादितार्किकपक्षोपि न सम्भवति। रजतमिति प्रत्यक्षस्योपपादनासम्भवात्। न हि रजतमत्र विद्यते, येन तस्य प्रत्यक्षत्वं वक्तुं शक्यम्। आपणस्थरजतन्तु दूरस्थम्। न तेन सन्निकर्षः। अतस्तन्मते रजतप्रत्यक्षनिर्वाहो न भवतीति तन्मतानुसरणमपि न भवति। असत्ख्यातिपक्षः, आत्म-

**भानस्यावर्जनीयत्वात्; अन्यथाभानाभ्युपगमादेव ख्यातिप्रवृत्तिबाधभ्रमत्वानामुपपत्तेरत्यन्तापरिदृष्टाकारणकवस्तुकल्पनाऽयोगात्।**

**कल्प्यमानं हीदमनिर्वचनीयं न तावत्(तदानीं) अनिर्वचनीयमिति प्रतीयते; अपि तु परमार्थरजतमित्येव। अनिर्वचनीयमित्येव प्रतीतश्चेत्; भ्रान्तिबाधयोः प्रवृत्तेरप्यसम्भवः। अतोऽन्यस्यान्यथाभानविरहे प्रतीतिप्रवृत्तिबाधभ्रमत्वानामनुपपत्तेः, तस्यापरिहार्यत्वाच्च शुक्त्यादिरेव रजताद्याकारेणावभासत इति भवताऽभ्युपगन्तव्यम्।**

**ख्यात्यन्तरवादिनाञ्च सुदूरमपि गत्वाऽन्यथावभासोऽवश्याश्रयणीयः - असत्ख्यातिपक्षे सदात्मना; आत्मख्यातिपक्षेऽर्थात्मना।**

---

ख्यातिपक्षश्च नात्र सम्भवतः। वस्तुन एवासत्त्वात्। अतोऽनिर्वचनीयसिद्धिः। अतोऽपूर्वमेव रजतमत्रोत्पद्यते। न चानिर्वचनीयरजतस्योत्पत्तौ कुतो न सर्वग्राह्यत्वमिति वाच्यम्। दोषवशेन तद्वारणात्। यस्य दोषस्तस्यैव ग्रहणम्। भवन्मते स्वाप्नार्थस्य परमार्थत उत्पन्नत्वेपि न सर्वप्रत्यक्षविषयता तथा इति। तदेतद्दूषयति नेति। **अवर्जनीयत्वादिति**। अनिर्वचनीयापूर्वरजतोत्पत्त्यभ्युपगमवादिनाप्यन्यथाभानं न परित्यक्तुं शक्यम्। एवञ्च तेनैव निर्वाहेऽत्यन्तापरिदृष्टवस्तुकल्पनं किमर्थं सहसे। अत्र शुक्तिगतो रजतांशः परिदृष्टः तदेव शुक्लभास्वरशकलत्वम्। आपणस्थरजतमिदानीमपरिदृष्टमपि पूर्वं दृष्टम्। अनिर्वचनीयरजतं त्वन्यन्तापरिदृष्टम्। परमार्थत 'इदं रजतमि'ति परमार्थस्यैवास्य प्रतीतिः। अन्यथा प्रवृत्तिबाधादीनामयोगस्स्यादिति।

अपरिवर्जनीयत्वमेवोपपादयति - **कल्प्यमानं हीति**। शुक्तौ 'इदं रजतमि'त्यत्रानिर्वचनीयरजतोत्पत्तिवादिनस्तवानिर्वचनीयमिदं रजतमिति प्रतीयते, अन्यथा वा ? न तावदाद्यः, अनिर्वचनीये वस्तुन्यनिर्वचनीयमिति प्रतीतेः कथं भ्रान्तित्वम्। कथं वा बाधः। अनिर्वचनीयं निर्वचनीयं प्रतीयत इति चेत्, अन्यथाख्यात्यङ्गीकारः स्यात्। एतेनापरमार्थे परमार्थबुद्धिरित्यप्यपास्तम्। तदाप्यन्याथाख्यातेरवर्जनीयत्वात्। एवमनिर्वचनीयवस्तुवादिनाप्यन्यथाख्यातेरवश्यं स्वीकर्तव्यत्वादत्रापि शुक्त्यादिरेव रजताद्याकारेणभासत इत्यङ्गीकारैणोपपत्तावत्यन्तापरिदृष्टापूर्वमिथ्याभूतरजतकल्पनं गौरवपराहतं निष्प्रयोजनश्चेति भावः।

असत्ख्यातिः, आत्मख्यातिः, अख्यातिः, अन्यथाख्यातिः, यथार्थख्यातिरिति बहवः पक्षाः। तत्र यथार्थख्यातिव्यतिरिक्तपंक्षेषु सर्वत्रान्यथाख्यातिः स्वीकर्तव्यैवेत्यन्यथाभानं न निराकरणार्हमित्याह - **ख्यात्यन्तरेति**। **असत्ख्यातीति** - इदं माध्यमिकमतम्। सः सर्वमसदिति मन्यते। तत्र सर्वं किमसदित्येव प्रतीयते उत सदिति। असदित्येव प्रतीतौ, न कस्यचिदपि प्रवृत्तिर्जायेत। तेन बाधो न भवति। सत्वेन प्रतीयते चेदिदमेवान्यथाभानम्। **आत्मख्यातिपक्षे** इति। **आत्मा** = ज्ञानं। विज्ञानरूपात्मव्यतिरिक्तबाह्यवस्तूनां तन्मतेऽनङ्गीकारः। एकमेव विज्ञानरूपमात्मानमङ्गीकरोति। तच्च विज्ञानाकारत्वं विहाय बाह्यपदार्थरूपेण भासते इत्यङ्गीक्रियते। ज्ञानस्यार्थरूपेण भानमेवान्यथाख्यातिः। अयं योगाचारपक्षः। **अख्यातिपक्ष** इति। अयं मीमांसकपक्षः। अस्मिन्पक्षेऽन्यथाभानमस्ति। **अख्यातिः** ज्ञानाभावः। स चाग्रह इति यावत्। शुक्तौ स्थितस्य शुक्तित्वस्य भेदस्य (भेदकाकारस्य) ग्रहाभावः। यद्वा - **अख्यातिः** विशिष्टज्ञानाभावः। 'इदं रजतमि'त्यत्र इदमंशे प्रत्यक्षं रजतांशे स्मरणमिति ज्ञानद्वयेनैवास्य व्यवहारस्य निर्वाहः।

एवं ज्ञानद्वयानन्तरभावि 'इदं रजतमि'ति विशिष्टं ज्ञानम्। ततो व्यवहार इत्यन्यथाख्यातिवादिमतं न स्वीकुर्वन्ति प्रभाकाराः। अतो विशिष्टज्ञानमेव ते नेच्छन्ति। अतो विशिष्टज्ञानाभाव एवाख्यातिः। एतन्मतेप्यन्यथाख्यातिं विना

**अख्यातिपक्षेऽप्यन्यविशेषणमन्यविशेषणत्वेन, ज्ञानद्वयमेकत्वेन च ; विषयासद्भावपक्षेऽपि विद्यमानत्वेन।**

निर्वाहो न सम्भवति। 'इयमि'ति रज्जुज्ञानस्य यथार्थत्वं, 'सर्प' इति सर्पस्मरणस्य च यथार्थत्वमास्ताम्। अथापि इदमर्थविशेषणत्वानर्हस्य सर्पस्य तद्विशेषणत्वेन भानमन्यथाख्यातिरेव। विशेषणत्वाभाने 'अयं सर्पः', 'इदं भूदलनमि'ति समानलिङ्गकत्वमपि न स्यात्, ज्ञानद्वयस्य एकत्वेन भानादपि अन्यथाख्यातिः। एकत्वेनाभाने 'ज्ञानद्वयवानहमि'ति कथं प्रतीत्यनुदयः। 'नाहं ज्ञानद्वयवान्, किन्तु एकज्ञानवानहमि'ति लोकानुभवविरोधश्च। एतन्मते 'इदं रजतमि'त्यादौ विशिष्टज्ञानाभावेपि व्यवहारनिर्वाहः, लाघवञ्च। सर्वस्यापि ज्ञानस्य यथार्थत्वञ्च रक्षितम्। अथाप्यन्यथाख्यातिः न परित्यक्तुं शक्यते। असत्ख्यातिवादे आत्मख्यातिवादे च ज्ञानस्यायथार्थत्वे एवादरः, अन्यथाख्यातिपक्षप्रतिषेधे नादरः। मीमासकमते तु ज्ञानस्य यथार्थत्वे आदरः, अन्यथाख्याति प्रतिक्षेपे च। अथापि अन्यथाख्यातिप्रतिक्षेपो न सम्भवतीति ज्ञेयम्। अत एव **अख्यातिपक्षेऽपीति अपि**शब्दः प्रयुक्तः। अतोऽख्यात्यङ्गीकर्तृ मीमांसकमतेप्यन्यथाभाने स्वारस्यमस्ति इतीदमत्र दर्शितम्। तैस्त्वख्यातिपरिग्रहेणैव सर्वत्रोपपाद्यते इति ज्ञेयम्।

**विषयासद्भावे**ति। किमविद्यमानो विषयः अविद्यमानत्वेन प्रतीयते उत विद्यमानत्वेन? न प्रथमः, प्रवृत्तिबाधादीनामसम्भवप्रसङ्गात्। न द्वितीयः। अविद्यमानस्य विद्यमानत्वेन भाने अन्यथाख्यात्यङ्गीकारात्। अयमत्राशयः - असत्ख्यातित्वाभ्युपगमः क्वचिद्भवति। अतस्सर्वत्रैवासत्ख्यातिरस्तु इति तेषामभिप्रायः। आत्मख्यातिपक्षेपि विज्ञानमात्रस्फूर्तेरभावादविद्यमानेनार्थेन सहैव नीलज्ञानं पीतज्ञानमिति स्फुरणात् सर्वा भ्रान्तिरेव। अतो विद्यमानत्वेन स्फुरणेऽन्यथाख्यातिः। निर्विषयाख्यातिवादिनः केचित्। एषां मते विषयाविषयिकैव भ्रान्तिरूपाख्यातिः विषयविषयकतया भाति। अतोऽत्राप्यन्यथाख्यातिः। रजताविषयके ज्ञाने रजतविषयकत्वावगाहनात्।

वस्तुतः ख्यातेर्निर्विषयकत्वं न सम्भवति। ज्ञानञ्चेत्सविषयकमेव। अन्यथा घटादेरपि ख्यातित्वापत्तेः। स्वयम्प्रकाशत्वात्ख्यातिशब्दव्यवहार इत्यपि न युक्तम्। ज्ञानस्य स्वयंप्रकाशत्वेपि त्वदुक्तस्य अस्वयम्प्रकाशत्वात्। न हि रजतादिविषयसामान्याविषयकं ज्ञानं इति किञ्चिदस्ति। सर्वस्यापि ज्ञानस्य रजतादिविषयकतयैव स्फुरणात्। अतो निर्विषयकाख्यातिरेव नास्ति। यदि सर्वथैवासतः सत्वेन ग्रहणं, तर्हि साऽसत्ख्यातिः ? यदि क्वचित्कदाचित्स्थितस्य ग्रहणं, तर्ह्येषा अन्यथाख्यातिः। अतो निर्विषयख्यातेः ख्यातित्वं संपाद्यं चेत्, अविद्यमानरजतादिविषयक ख्यातिरित्यर्थो वाच्यः। एवञ्चाविद्यमानत्वं विहाय विद्यमानत्वेन रजतावगाहने अन्यथाख्याति र्निष्प्रत्यूहा।

अथ शुक्तौ 'इदं रजतमि'ति प्रत्यक्षरूपा प्रतीतिर्जायते। रजतं तु नास्ति। प्रत्यक्षे विषयस्य कारणत्वादविद्यमानरजतविषयकप्रत्यक्षं कथम्। अपूर्वस्यानिर्वचनीयस्य रजतस्य एतादृशस्थले भवतां स्वप्ने इवोत्पन्नत्वात्तद्विषयकप्रत्यक्षरूपा प्रतीतिरुपपद्यते इति चेत्, सामग्र्यभावे कथं कार्योत्पत्तिः। अकारणककार्योत्पत्तेः बौद्धादिवद्भवद्भिरनङ्गीकारात्। तथा सति अविद्यारूपकारणाभावेपि प्रपञ्चोत्पत्तेरापादयितुं शक्यत्वात्। न च रजतविषयिणी प्रतीतिरियमेव कारणमिति वाच्यम्। रजतोत्पादकत्वेनाङ्गीकृताया अस्याः प्रतीतेः रजतपूर्वभावित्वावश्यकतया प्रथमं जातेयं प्रतीतिः किं विषयिणीति प्रश्नसम्भवात्। न हि निर्विषया भवितुमर्हति। प्रतीतित्वव्याघाताज्जडत्वापाताच्च। पश्चात्सविषयकत्वे जडभूताया अस्या अजडत्वायोगाच्च। अनिर्वचनीयवस्तुवादिनां भवतां मते निर्विषयकाप्रतीतिः विषयमुत्पाद्य तदेव विषयीकरोति इति वचनात्प्रतीतिरियं निर्विषायका = विषयं करोति = जनयतीति वक्तव्यम्। तथा च रजतादिविषयकारणत्वेनाङ्गीकृताया अस्याः प्रत्यक्षप्रतीतेः रजतोत्पत्तेः पूर्वं कथं स्वरूपलाभः।

न हि विषयोल्लेखं विना प्रतीतिर्नाम काचिदास्ति। अतो विषयोल्लेखं विना प्रतीतिसद्भावः, पश्चाच्च विषयोत्पत्तिरि-

**किञ्च - अनिर्वचनीयमपूर्वरजतमत्र जातमिति वदता तस्य जन्मकारणं वक्तव्यम् ; न तावत्तत्प्रतीतिः ; तस्यास्तद्विषयत्वेन तदुत्पत्तेः प्रागात्मलाभायोगात् । निर्विषया जाता तदुत्पाद्य तदेव विषयीकरोतीति महतामिदमुपपादनम् ।**

**अथेन्द्रियादिगतो दोषः - तन्न; तस्य पुरुषाश्रयत्वेनार्थगतकार्यस्योत्पादकत्वायोगात् । नापीन्द्रियाणि;**

---

त्यादिकं न प्रामाणिकपदवीमनुसरेदित्याशयेनानिर्वचनीयरजतोत्पत्तिं खण्डयति - **किञ्चेति** । **तद्विषयकत्वेन** = विद्यमानरजतादिविषयोत्पत्तिकारणत्वेनेत्यर्थः । यत इयं प्रतीतिः विषयोत्पत्तिं प्रति कारणभूता, अतः कथं पूर्वं रजतादिकमनुत्पन्नं विषयीकुर्यादिति तात्पर्यम् । यद्वा **तद्विषयकत्वेन** = रजतादिविषयकत्वेन इत्येवार्थः । शुक्तौ 'इदं रजतमि'ति प्रतीतिः वस्तुतो रजतादिविषयिणीति सर्वसंप्रतिपन्नम् । कथमस्या रजतादिविषयकत्वेनात्मलाभः । रजतोत्पत्तेरेतत्पश्चाद्भावित्वेन पूर्वं तद्विषयकत्वासम्भवादिति भावः । 'इदं रजतमि'ति ज्ञानं हि वृत्तिज्ञानम् । अस्य च विषयताराहित्यावस्था भवद्भिः प्रतिपाद्यते । तेन रूपेण कारणत्वाङ्गीकारश्चापसिद्धान्तः । अपि च निर्विषयख्यातिवादे एव भवन्मतं पर्यवस्यति । तर्हि तदुक्तरीत्यैव प्रवृत्यादिनिर्वाहसम्भवे अनिर्वचनीयवस्तुकल्पनं किमर्थमित्यादिदूषणं चोह्यम् । **इन्द्रियादिगतो दोषः** इति । **आदिशब्देन** पुरुषगतानवधानदोषस्य सङ्ग्रहः । **महतामिदमुपपादनमिति** परिहासः - प्रातिभासिकवस्तुवादिनो यूयम् । 'इदं रजतमि'त्यादौ प्रातिभासिकवस्तूपत्तिमुशन्ति भवन्तः । यद्युत्पन्नस्यैव रजतस्य पश्चाद्ग्रहणं कथं तस्य प्राति भासिकत्वम् । प्रातिभासिकवस्तुनो स्थापनार्थं अपूर्वरजतोत्पत्तिवादः प्रातिभासिकत्वनिरासने एव पर्यवस्यत्यहो ।

नन्विन्द्रियगतस्य वाऽनवधानादिरूपस्य पुरुषगतस्य वा दोषस्य पुरुषगतकार्यकरत्वमेव न तु विषयगतकार्यकरत्वमिति हेतोः तस्य दोषस्य विषयगतरजतादिकार्यकरत्वासम्भव इत्युक्तिर्न घटते । पुरुषाश्रितस्य चक्षुरिन्द्रियस्य स्वरश्मिद्वारा विषयसंबन्धभाजः विषये कार्यकरत्वदर्शनादिति चेन्न । तत्रापि पुरुषगतज्ञानकरत्वस्यैवेष्टत्वात् । न ह्यर्थे ज्ञानं जनयति । इन्द्रियकार्यं ज्ञानं हि पुरुषाश्रितमेव । ननु विषयगतदोष एवार्थे रजतोत्पत्तिकार्यं जनयतु इति चेत्स दोषो विषयगतः क इति विवेचनीयम् ? सादृश्यं दोष इति चेत्तस्य सर्वदा वर्तमानत्वेन सर्वदोत्पादकत्वप्रसङ्गः । ननु इन्द्रियसङ्गस्य पुरुषगतज्ञानहेतुत्वेपि तदतिरिक्तकार्यहेतुत्वमप्यस्ति । दृष्टिविषाणां सर्पाणां स्वदृष्टिविषयपुरुषेषु विषमुत्पाद्य हन्तृत्वदर्शनात् । एवं केषाञ्चित्क्रूरदृष्टीनां स्ववक्रनयनदृष्टिद्वारा समीचीनफलजनकलतादिहन्तृत्वदर्शनाच्च । साधूनां योगिनां च दर्शनस्य दृष्टविषये उपकारत्वदर्शनाच्च । 'नाम्भोमयाति तीर्थानि न देवा मृच्छिलामयाः । ते पुनन्त्युरुकालेन दर्शनादेव साधवः' इति ह्युच्यत इति चेत्सत्यम् । एवं रीत्या दृष्टिविषयदृष्टेषु जातस्योपकारस्य वान्यस्य वा सर्वैरुपलम्भात्तन्नयेनापूर्वरजतस्यान्येनाप्युपलब्धिप्रसङ्गात् ॥

न च पीतिमायुक्तेन्द्रियसम्योगवशाच्छङ्खःपीत इति बुध्युत्पत्तिरिव इन्द्रियगतदोषवशाद्विषये रजतोत्पत्तिः स्यादिति वाच्यम् । वैषम्यात् । पीतिमाख्यो दोष इन्द्रियगतः, स च नायनरश्मिद्वारा शङ्खे सम्बद्धः । स च नयनवर्तिपित्तद्रव्यगतः । तद्द्रव्यसम्भिन्ना नायनरश्मयः शङ्खादिभिः समुज्यन्ते । तत्पीतिमाभिभूतः शङ्खगतशुक्तिमा न दृश्यते । अतः 'पीत शङ्ख' इति प्रतीतिः । तथाऽत्र नयनगतो दोषः कः । रजतबुद्ध्युत्पत्त्या रजतमेव दोष इति वक्तव्यमिति परिहास्यं भवन्मतम् । न च दूरस्थत्वादिदोषो भवितुमर्हति । तस्य विषयगतत्वमिव पुरुषगतत्वमप्यस्तीति विषय इव पुरुषेपि कार्यकरत्वप्रसङ्गात् । अत इन्द्रियादिगतदोषः कारणं न भवितुमर्हति । रजतस्मरणरजतभेदाग्रहादिविशिष्टशुक्तिरूपधर्मिग्रहस्य कारणत्वकल्पनमपि न युक्तम् । तेषां पुरुषगतत्वेन शुक्तौ रजतानुत्पादकत्वात् । पुरुषे किञ्चित्कार्यजनकत्वेपि प्रकृते अनुपयोगात् । वस्तुतोऽविद्याया उपादानत्ववादिनां मते शुक्तौ रजतोत्पादकोपादानकारणविचारे निमित्तकारणकल्पनस्यानुपयोगात् । शुक्तेरुपादानत्वं न सम्भवति । विजातीयत्वात् । सर्वदोत्पत्तिप्रसङ्गाच्च । मृद इव घटस्येव शुक्तेः रजतो-

**तेषां ज्ञानका(क)रणत्वात्। नापि दुष्टानीन्द्रियाणि; तेषामपि स्वकार्यभूते ज्ञान एव हि विशेषकरत्वम्। अनादिमिथ्याज्ञानोपादानत्वन्तु पूर्वमेव निरस्तम्।**

**किञ्च - अपूर्वमनिर्वचनीयमिदं वस्तुजातं रजतादिबुद्धिशब्दाभ्यां कथमिव विषयीक्रियते, न घटादि-बुद्धिशब्दाभ्याम्? रजतादिसादृश्यादिति चेत् - तर्हि तत्सदृशमित्येव प्रतीतिशब्दौ स्याताम्। रजतादिजाति-योगादिति चेत्; सा किं परमार्थभूता; अपरमार्थभूता वा। न तावत्परमार्थभूता; तस्या अपरमार्थान्वया-**

---

त्पत्त्या व्यावहारिकसत्यत्वापत्त्या प्रातिभासिकत्वासिद्धेः। न हि शुक्तिरेव रजतरूपेण परिणमत इति वक्तुं शक्यम्। न वा शुक्तौ रजतस्योत्पत्तिरिति वक्तुं शक्यम्। तदा इयं रजतवतीति प्रत्ययस्स्यान्न त्विदं रजतमिति। न च प्रपञ्चं प्रति ब्रह्माज्ञानस्येव रजतं प्रति शुक्त्यज्ञानस्योपादानत्वमिति वाच्यम्। तथा सति इदं रजतमित्यज्ञानेन सामानाधिकरण्यं स्यान्न तु शुक्त्या। न च प्रपञ्चस्य ब्रह्माज्ञानोपादानकत्वेपि ब्रह्मणैव प्रपञ्चसामानाधिकरण्यं न त्वज्ञानेन, तद्वदत्रापीति वाच्यम्। तथाप्यज्ञानस्य पुरुषगतत्वेन विषये किञ्चित्कार्यकरत्वाभावस्य प्रतिपादितत्वात्। अज्ञानं भावरूपमभावरूपं वेति विकल्पे समाधेर्वक्तुमशक्यत्वाच्च।

एवं दुष्टेन्द्रियसम्बन्धाद्विषये कार्यविशेषः स्यादिति शङ्कां परिहरति - **नापीति**। दुष्टेन्द्रियसम्बन्धस्य कार्ये विशेष-जनकत्वं नास्तीति न ब्रूमः। अस्त्येव जनकत्वम्। परन्तु तदिन्द्रियजन्ये ज्ञाने एव। न त्वन्यत्र। महापातकिसम्बन्धेन तत्सम्बद्ध एव विशेषजनकत्वं, न तु तत्सम्बन्धशून्ये। तद्वदिन्द्रियस्य दोषवत्वे तज्जन्यज्ञाने विशेषकरत्वम्। इन्द्रियं ज्ञान-जनकम्। ज्ञाने भ्रमत्वरूपविशेषं दोषः उत्पादयति। न तु तस्य ज्ञानविषये वस्तुनि रजताद्युत्पादकत्वम्। तत्र प्रपञ्चोत्पादकमज्ञानं यत् तदेव शुक्त्याद्युत्पादकमिव शुक्तावनिर्वचनीयापूर्वरजतोत्पादकमपि। सर्वस्यापि मूलाज्ञानमूल-त्वादितीमां शङ्कामपाकरोति - **अनादीति**। अनाद्यविद्याया व्यावहारिकवस्तूत्पादकत्वेपि प्रातिभासिकवस्तूत्पादकत्वं कथम्? तर्हि तस्यास्सत्त्वेन सर्वदैव प्रातिभासिकवस्तूत्पत्यापत्तेः। सर्वस्य सर्वत्र सर्वदा सर्वभ्रमापत्तेश्च। कस्मिंश्चिदेव काले कस्यचिदेव पुरुषस्य कस्मिंश्चिद्वस्तुनि कस्यचिद्वस्तुविषयस्य भ्रमो दृष्टः। तत्रानादिमूलाविद्याव्यति-रिक्तस्य तत्र कस्यचिद्विशेषस्योपादानत्वमन्तरा स भ्रमो निर्वोढुमशक्य इत्यप्युपलक्षणम्। ननु महापातकिनामालयादिगमने देशरूपालयस्य दुष्टत्वमङ्गीकृतम्। अत एव शुनकादिगमनप्रयुक्तपापप्रायश्चित्तादिकं कुर्वन्ति। पापकरणेन आत्मनो दुष्टत्वात्तत्प्रयुक्तदोषादिकं शरीरे इष्यते। 'अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत्' इति सूत्रमप्यमुमर्थं दृढयति।

एवमनिर्वचनीयवस्तूत्पत्तिर्निरस्ता। अथ तदुत्पत्यङ्गीकारेपि शुक्तिरजतभ्रमस्थले इदं रजतमिति भ्रमानुपपत्तिः। 'इदं वस्तु' इति भ्रमोपपत्तावपि वस्तुविशेषविषयकभ्रमो न सम्भवतीत्याह - **किञ्चेति**। शुक्तिरजतस्थले अयं घट इति घटादिशब्देनापि तद्वस्तु व्यवहर्तुं शक्यं, न तु रजतशब्देन। एवम् 'इदं रजतम्' इति बुद्ध्यैव विषयीकरणं न तु अयं घटः इति बुद्ध्या इति व्यवस्थापकं न किञ्चित्पश्याम इति भावः।

ननु रजतभ्रमस्थले प्रतिभासिकं रजतमेव जायते न तु घटादि। रजतेन यदुत्पाद्यं कार्यं तत्कार्यलाभानुगुणतदादान-प्रवृत्ते दर्शनात्। व्यावहारिकरजतदर्शने या बुद्धिः तया बुद्ध्याऽर्थक्रियाकारित्वं निश्चित्य प्रवृत्तेः। अतो रजतसादृश्य-सत्त्वादिदं रजतमिति प्रतीतिर्व्यवहारश्चेति शङ्कां निरस्यति **तर्हीति। इत्येवेति**। रजतसदृशे रजतबुद्धिरिति समाधानं तु न युक्तम्। गवये गोसादृश्यस्यसत्त्वाद्गवयेपि गोबुद्धिः स्यादिति दूषणं स्पष्टमिति नोक्तम्। शुक्तौ रजतभ्रमस्थले अनिर्वचनीयवस्तुन उत्पत्त्यङ्गीकारे न भवदुक्तदोषस्यावकाशः। सादृश्यस्य निर्वाहकत्वाभावे उत्पन्नानिर्वचनीयापूर्व-वस्तुनि रजतत्वजातिरेवास्ति। न घटत्वादिजातिरित्यतो रजतबुद्धिशब्दौ इति शङ्कां द्यति - **सा किमिति**। अनिर्वचनीयं

**योगात्। नप्यपरमार्थभूता; परमार्थान्वयायोगात्; अपरमर्थे परमार्थबुद्धिशब्दयोर्निर्वाहकत्वायोगच्चेत्यलम-परिणतकुतर्कनिरसनेन। अथ वा -**

**यथार्थं सर्वविज्ञानमिति वेदविदां मतम्। श्रुतिस्मृतिभ्यः सर्वस्य सर्वात्मत्वप्रतीतितः ॥**
**'बहु स्यामि'ति सङ्कल्पपूर्वसृष्ट्याद्युपक्रमे। 'तासां त्रिवृतमेकैका'मिति श्रुत्यैव चोदितम् ॥**
**त्रिवृत्करणमेवं हि प्रत्यक्षेणोपलभ्यते। यदग्ने रोहितं रूपं तेजसस्तदपामपि ॥**
**शुक्लं कृष्णं पृथिव्याश्चेत्यग्नावेव त्रिरूपता। श्रुत्यैव दर्शिता तस्मात्सर्वे सर्वत्र सङ्गताः ॥**
**पुराणे चैवमेवोक्तं वैष्णवे सृष्ट्युपक्रमे।**

---

वस्तु तत्रोत्पद्यत इत्युच्यते भवद्भिः। तत्रापरमार्थे रजतत्वजातिरस्ति, इत्यप्यभ्युपगम्यते। तस्या जातेः परमार्थत्वे अपरमार्थभूततादृशव्यक्तौ कथमन्वयः ? तत्त्वज्ञानेन तस्या अपूर्वव्यक्ते र्बाधे परमार्थभूतजातेरपि बाधितत्वमस्ति वा न वा ? अबाधे बाधार्हतद्वस्तुनि परमार्थस्य रजतत्वस्य कथमन्वयः। बाधस्वीकारे कथं तस्य परमार्थत्वम्।

वस्तुतो व्यक्तिरिव जातिरपि बाध्यत एव। नेदं रजतमिति हि बाधः। न तु नेदं वस्त्विति। व्यक्तिर्नास्ति जातिरस्तीति नैवोच्यते। अतः प्राक्प्रतिपन्नाया रजतप्रतीतेः जातेर्वाऽतः पश्चात्तद्विषयकप्रतीत्या जातेः परमार्थत्वं न सम्भवति। न च तर्हि जातेरपरमार्थत्वमिष्यत इति वाच्यम्। परमार्थान्वयायोगात्। रजतत्वस्य जातित्वादापणस्थ-सत्यरजतेपि रजतत्वस्यान्वयो वक्तव्यः। न ह्यपरमार्वरजतत्वं प्रतिभासिकनिष्ठं व्यावहारिकापणस्थरजते दृश्यते। नेदं रजतमिति बाधे आपणस्थरजतव्यक्तिस्तु न बाधिता। अपरमार्थभूतं प्रातिभासिकनिष्ठं तु बाध्यते। अतोऽपरमार्थभूत-रजतत्वस्य कथं परमार्थरजतेऽन्वयः रजतत्वस्य जातित्वात्सर्वरजतेप्यावश्यकवादिति भावः। यद्यपरमार्थरजतत्वस्य व्यावहारिकसत्यरजतेऽन्वयोऽनभिमतः, तर्हि रजतत्वं रजतबुद्धिशब्दनिर्वाहकं सत्यरजतेपि न भवतीति प्रातिभासिक-स्थलेपि न तन्निर्वाहकं भवेदित्यनिर्वचनीयवस्तूत्पत्त्यभ्युपगमोपि निरर्थक एव स्यादिति ॥

एतावता असत्ख्यातिपक्षः, आत्मख्यातिपक्षः, अख्यातिपक्षः, विषयाख्यातिपक्षः, अन्यथाख्यातिपक्षः इतीमा-न्पक्षानुपन्यस्य सर्वत्रान्यख्याथातेरवर्जनीयत्वमुपपादितम्। सम्प्रति स्वमतसिद्धां यथार्थख्यातिमुपपादयितुमारभते - **अथ वेति**। **वेदविदां** = भगवद्बोधायननाथमुनियामुनमिश्रादीनाम्। अनेन यथार्थख्यातेः साम्प्रदायिकत्वमुक्तम्। यतस्ते संयङ्न्यायनिरूपणमुखेन वेदार्थं याथार्थ्येन ज्ञातवन्तः। सर्वस्य ज्ञानस्य यथार्थत्वाभ्युपगमे श्रुत्यादिकं प्रमाणयति - **श्रुतीति**। सृष्ट्यादीत्यत्रादिशब्दः नामरूपव्याकरणपरः। प्रकरण इति विशेष्यम्। श्रुतिक्रम एवम्। स्वर्गार्थं यक्ष्य इत्युक्तौ प्रथमतः फलनिर्देशः पश्चादुपायनिर्देशः। इयं विमर्शदशा। उत्पत्तिदशाऽन्या। तत्र उपायोक्तिः प्रथमम्। पश्चात्फलोक्तिः - यजेत स्वर्गकाम इति। पाठक्रमः यथातथाऽवास्तु 'स्वर्गकामो यजेत' इति। परन्तु उत्पत्तिक्रममनु-सृत्यैवार्थो वर्णनीयः। अग्निहोत्रं जुहोति यावागूं पचनीत्यत्र पाठक्रमबोधेनैवार्थो वर्ण्यत इति सर्वसिद्धान्तः। अतोऽत्र व्यष्टिसंकल्पसमष्टिसंकल्पव्यष्टिसृष्टिसमष्टिसृष्टिनामरूपव्याकरणत्रिवृत्करणादिषु पौर्वापर्यं विना निर्देशेपि पाठक्रमं बाधित्वाऽर्थक्रममनुसृत्यैवार्थो वर्णनीयः। अतः प्रथमं बहु स्यामिति समष्टिसृष्टिसङ्कल्पः। ततः समष्टिसृष्टिः। ततस्त्रि-वृत्करणम्। पश्चाद्व्यष्टिसृष्टिसङ्कल्पः। **आदिः** = कारणं, नामरूपव्याकरणं, तस्योपक्रमे इत्यप्यर्थो वर्णयितुं शक्यः।

एवञ्च श्रुतौ त्रिवृत्करणं श्रुतं स्मृतौ पञ्चीकरणं सप्तीकरणञ्च। यदग्ने रोहितं रूपं तेजसस्तद्रूपमित्यादिना त्रिवृ-त्कृतभूतादिना सृष्टे अण्डमध्ये पूर्वोक्तत्रिवृत्करणसंभावना प्रदर्शिता। अण्डान्तर्गतभूतस्यैव प्रत्यक्षयितुं योग्यत्वात्। उतरत्र चेदं विवरिष्यते। अग्नेर्यद्रोहितं रूपं तत्तेजसः। यदप्यग्नेः शुक्लं रूपं तदपाम्। यच्चाग्नेः कृष्णं रूपं तत्पृथिव्याः।

**'नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना । नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ॥**
**समेत्यान्योन्यसम्योगं परस्परसमाश्रयाः । महदाद्या विशेषान्ता ह्यण्ड'मित्यादिना ततः ॥**
**सूत्रकारोऽपि भूतानां त्रिरूपत्वं तथाऽवदत् । त्र्यात्मकत्वात्तु भूयस्त्वादिति तेनाभिधाभिदा ॥**
**सोमाभावे च पूतीकग्रहणं श्रुतिचोदितम् । सोमावयवसद्भावादिति न्यायविदो विदुः ।**
**व्रीह्यभावे च नीवारग्रहणं व्रीहिभावतः । तदेव सदृशं तस्य, यत्तद्द्रव्यैकदेशभाक् ॥**
**शुक्त्यादौ रजतादेश्च भावः श्रुत्यैव बोधितः । रूप्यशुक्त्यादिनिर्देशभेदो भूयस्त्वहेतुकः ॥**
**रूप्यादिसदृशश्चायं शुक्त्यादिरुपलभ्यते । अतस्तस्यात्र सद्भावः प्रतीतेरपि निश्चितः ॥**
**कदाचिच्चक्षुरादेस्तु दोषाच्छुक्त्यंशवर्जितः । रजतांशो गृहीतोऽतो रजतार्थी प्रवर्तते ॥**
**दोषहानौ तु शुक्त्यंशे गृहीते तन्निवर्तते । अतो यथार्थं रुप्यादिविज्ञानं शुक्तिकादिषु ॥**

---

एवञ्च भूतत्रयसंहननादग्नेस्त्रिरूपता । अयं विषयः 'यदग्नेः रोहितं रूपं' इत्यादिना प्रदर्शितः । अत एकस्य वस्तुनः त्रिरूपत्वसंभवनाहेतुभूतं त्रिवृत्करणं भूतेषु कृतमिति सुज्ञेयं भवति । अतः पृथिव्यादिभूतानां तेजः प्रभृतिभूतात्मकत्वं सिद्धम् । **संहतिं विना** = साधारणसंयोगं विना । **असमागम्य** = विशेषसम्योगं विना । पृथक्स्थित्यर्हसंयोगः पृथक्स्थित्यनर्हसंयोगश्चेति अवस्थाद्वयं दर्शितम् । एतद्द्वयाभावे स्त्रष्टुं महदाद्याः न शक्नुवन्तीति श्लोकार्थः । **वीर्यम्** = दाहक्लेदादिकरणशक्तिः । **महदाद्या** इत्युक्तत्वात्पञ्चीकरणमिव सप्तीकरणमपीति ज्ञायते । एतावता एकस्य भूतस्य अन्यभूतांशवत्वमुक्तम् । तत्र सूत्रमपि प्रमाणयति - **सूत्रकारोपी**ती ॥

**अभिधाभिदा** = व्यवस्था भेदः । पृथिव्यां पृथिवीशब्दप्रयोग एव इति व्यवस्थाप्रकारः भूयस्त्वनिबन्धनः । एवमन्यत्रापि । पूर्वमीमांसायामप्ययमर्थः सिद्ध इत्याह - **सोमाभावे चेति** । अर्थवादाः प्राशस्त्यमात्रपराः, न तु तदुक्तार्थे प्रामाण्यमिति मीमांसकाः । अतोऽर्थवादोक्ते त्रिवृत्करणे प्रामाण्यं नेच्छन्तीव । अथापि सोमाभावे पूतीकग्रहणोक्त्या सदृशे सदृशान्तरवस्त्वयवसद्भावस्तैः स्वीकृत इवेति सूचितम् । 'यदि सोमं न विन्देत्पूतीकानभिषिणुयात्' इति श्रुतिः । अत्र सोमलताभावे पूतीकलताभिषवेण रसं संपाद्य यागः कार्य इत्युक्तं भवति । अयं नापूर्वविधिः । अपि तु नियमविधिः । सोमेन यजेत इति सोमलतायाः यागसाधनत्वमुक्तम् । तदलाभेऽन्यलताग्रहणमुक्तम् । सोमलता भूयःसोमावयवकलता । तद्व्यक्त्यभावेऽन्यलताग्रहणविधानादत्र लतायाम् अल्पसोमावयवनां सद्भावः प्रतीयते । एतेन भूयस्सोमावयवकसोमव्यक्त्यभावे द्रव्यान्तरवर्तिनामल्पसोमावयवानामपि साधनत्वं कण्ठोक्तं भवति । तत्राप्यल्पसोमावयकद्रव्येषु बहुषु सत्सु अल्पसोमावयकपूतीकग्रहणमेव कर्तव्यमिति नियम्यते । अतस्सोमावयवा बहुषु द्रव्येषु सन्तीति प्रतीत्या अन्यस्यान्यांशवत्वं सिद्धम् । एवमेव व्रीहिभि र्यजेतेत्यत्र व्रीह्यभावे नीवारद्रव्यग्रहणमनुमतम् । अत्रैवं प्रथग्वचनाभावेपि तुल्यन्यायतया सिध्यति ।

नन्वन्यत्रान्यावयवसत्वे सर्वत्र सर्व प्रतीतिः स्यात् । शुक्तौ रजतभ्रम एवेति किं निबन्धनमिति शङ्कापरिहाराय **तदेव सदृशं तस्येति** । दार्ष्टान्तिके संगमयति - **शुक्त्यादाविति** । ननु शुक्तौ रजतांशस्य सत्वेपि भूयोरजतांशाभावेनेदं रजतमिति ग्रहणं कथमित्यत्राह - **कदाचिदिति । दोषः** शुक्त्यंशाग्रहहेतुः । भूयश्शुक्त्यंशग्रहणाभावात् इदं रजतमिति रजतांशग्रहणेन विषयीकृतः । रजतांशग्रहणाभिभावकभूयश्शुक्त्यंशग्रहणं न जातम् । भेरीताडने महास्वने जाते यथा अल्पनिनादोऽभिभूतो भवेत्तथाऽत्रापि शुक्तिभूयस्त्वग्रहणे रजतांशग्रहणं अभिभूतं भवति । प्रतिबन्धकभूतस्य तस्याभावाद्रजतांशग्रहणम् अदृष्टमपि हेतुः । **तन्निवर्तते** - केवलरजतांशग्रहणं निवर्तते, इयं शुक्तिरिति शुक्तिभूयस्त्वग्रहणात् । तत्र रजतत्वाभावात् । ननु भ्रमस्यापि यथार्थत्वं स्यादिति शङ्कामिष्टापत्या परिहरति - **अतो यथार्थ** इति ।

**बाध्यबाधकभावोऽपि भूयस्त्वेनोपपद्यते । शुक्तिभूयस्त्ववैकल्यसाकल्यग्रहरूपतः ॥**
**नातो मिथ्यार्थसत्यार्थविषयत्वनिबन्धनः । एवं सर्वस्य सर्वत्वे व्यवहारव्यवस्थितिः ॥**

तद्वति तत्प्रकारकं ज्ञानं यथार्थः, सैव प्रमेत्युच्यते । तदभाववति तत्प्रकारकं ज्ञानम् अयथार्थः, स एव भ्रम इत्युच्यत इति नैयायिकमतम् । अस्माकं मते तु सर्वस्यापि यथार्थत्वमेव । शुक्तौ रजतज्ञानस्यापि तद्वति तत्प्रकारकत्वात् ।

ननु तर्हि ज्ञानस्य भ्रमत्वं न स्यादिति चेत्क एवमाह - भ्रमात्मकज्ञानं नास्तीति । सर्वस्यापि यथार्थत्वेपि कस्यचिद्भ्रमत्वस्यापि स्वीकारात् । न च व्याहतमिदं यथार्थं भ्रमश्चेति वाच्यम् । बाधितप्रवृत्तिकत्वस्य भ्रमत्वस्य यथार्थत्वेपि सम्भवात् । ज्ञानस्य प्रमात्वं अबाधितप्रवृत्तिकत्वम् । भ्रमत्वं च बाधितप्रवृत्तिकत्वम् । फलद्वारा भ्रमत्व-प्रमात्वे ज्ञानस्य स्वरूपतो वा विषयतो वा न बाध्यत्वादि, परन्तु प्रवृत्तिद्वारा । पूर्वज्ञानजन्यप्रवृत्तिनिवारकं बाधकज्ञानम् । अन्यथाख्यतिमतेपि ज्ञानस्य स्वरूपतो बाध्यत्वं नेष्टम् । विषयस्य बाध्यत्वमेवाभिमतम् । अस्माकं तु ज्ञानफलभूतप्रवृत्ते र्बाध्यत्वम् । इत्थञ्च शुक्तिज्ञानाद्रजतज्ञानबाधो नाम प्रवृत्तेः प्रतिबन्धः, विफलत्वञ्चेति ॥

ज्ञानद्वयस्य बाध्यबाधकभावमुपपादयति - **बाध्येति** । **शुक्तिभूयस्त्वेति** । इदं रजतमिति पूर्वज्ञानं बाध्यम् । इयं शुक्तिः इति ज्ञानं बाधकं अनयोर्बाध्यबाधकभावनिर्वाहार्थमयं ग्रन्थः प्रवृत्तः । पूर्वरजतज्ञानं शुक्तिभूयस्त्ववैकल्यग्रहरूपं पश्चात्तनशुक्ति ज्ञानं शुक्तिभूयस्त्वरूपसाकल्यग्रहरूपम् । अतो बाध्यबाधकभावः । **शुक्ते र्भूयस्त्वं** = शुक्तिभूयस्त्वम् । वैकल्यं च साकल्यं च वैकल्यसाकल्ये । शुक्तिभूयस्त्वस्य वैकल्यसाकल्ये । तयो र्ग्रह इति समासः । तथा च शुक्ति-भूयस्त्ववैकल्यग्रहः शुक्तिभूयस्त्वसाकल्यग्रह इति पर्यवसितम् । एवञ्च बाध्यबाधकभावोपपत्तिः शक्यवचना । अथापि शुक्तिभूयस्त्ववैकल्यग्रह इत्युक्ते भूयस्त्वे सति वैकल्यग्रहणमङ्गीकृतं स्यात् । तथा सति तदभाववति तत्प्रकारकत्वं ज्ञानस्यापततीत्यन्यथाख्यातिसिद्धिः । अतोऽस्य ग्रन्थस्यान्यथार्थवर्णनं वक्तव्यम् । वैकल्यञ्च साकल्यञ्च तयोर्ग्रह इति नार्थः । साकल्यस्य ग्रहः साकल्यग्रहः । साकल्यञ्च शुक्तिभूयस्त्ववैकल्यसहितम् । वैकल्येन सह साकल्यस्य ग्रह इत्यर्थः । तथा च प्रथमे इदं रजतमिति ज्ञाने शुक्तिभूयस्त्ववैकल्यम् । इयं शुक्तिरिति ज्ञाने शुक्तिभूयस्त्वसाकल्यं च विषयः । अतो ज्ञानद्वयस्य बाध्यबाधकभावः । अत एकस्मिन् ज्ञाने साकल्ये वैकल्यं गृहीतमिति नाक्षेपप्रसक्तिः । तथा च शुक्तिभूयस्त्ववैकल्यस्य रजतावयवाल्पत्वस्य पूर्वज्ञाने विषयीकरणादभिभावकभूयस्त्वग्रहणाभावादिदं रजतमिति ज्ञानम् । पश्चाच्छुक्तिभूयस्त्वसाकल्यस्य गृहीतत्वान्नेदं रजतमिति बाध्यज्ञानमिति फलितम् ।

यद्वा शुक्तिभूयस्त्ववैकल्यस्य शुक्तिभूयस्त्वसाकल्यस्य च ययो र्ग्रहयो र्विषयता तौ ग्रहौ शुक्तिभूयस्त्ववैकल्य-साकल्यग्रहौ । भावप्रधाननिर्देशः । तादृशग्रहत्वात् - तादृशग्रहत्वरूपत्वादिति भावः । तथा च पूर्वोत्तरज्ञानयोस्तथारूपत्वा-द्बाध्यबाधकभाव इति श्रुतिप्रकाशिका । दर्पणेऽन्या गतिरुक्ता । शुक्तीति तत्वज्ञानं, नेदं रजतं किंतु शुक्तिः इति यज्ज्ञानं तत्र इदमिति सर्वांशविशिष्टधर्मो विषयः । तत्र भूयोरजतांशकद्रव्यभेदः, भूयः शुक्त्यंशकद्रव्याभेदश्च विषयीभवति । एवं शुक्तिरिति शुक्त्यंशभूयस्त्वस्य इदमिति पुरोवर्तिगतांशसाकल्यस्य, इतरांशेन रजतांशन्यूनत्वादिरूपस्य वैकल्यस्य च ग्रहः ग्रहणमेव यत् रूपं धर्मः तस्मादिति । शुक्तीत्यादिपञ्चम्यन्तार्थः । शुक्तिरूपधर्मिविषयकं यत् । **भूयस्त्वस्य** = शुक्त्यंशभूयस्त्वस्य, **वैकल्यस्य** = रजतांशवैकल्यस्य, **साकल्यस्य** = धर्म्यंशगतकार्त्स्न्यस्य च ग्रहणं, तदभिन्नात् रूपात् 'इत्यर्थोचितविग्रहो भाव्यः । प्रतीतिविषयाणामिह व्युत्क्रमेण प्रदर्शनमिति इति ।

वस्तुतो 'भूयस्त्वेनोपपद्यते' इत्यत्र भूयस्त्वेन इत्यस्य सम्पूर्णत्वेनेत्यर्थः । इदमेव च सम्पूर्णत्वम् उत्तरार्धे साकल्यशब्देन विवृतम् । भूयस्त्वं सकलत्वं पुष्कलत्वं सम्पूर्णत्वमे-तत्सर्वं प्रायशः पर्यायं भवितुमर्हति । तथा च इयं शुक्तिः इति ज्ञाने शुक्तिभूयस्त्वं सम्पूर्णतया गृहीतम् । इदं रजतम् इति पूर्वज्ञाने शुक्तिवैकल्यं पूर्णतया गृहीतम् । यस्य

शुक्तौ रजतभ्रमः तस्य पूरोवर्तिशुक्तिधर्मिणि शुक्त्यंशविकलत्वमेव गृहीतं भवेत् । अत एव रजतभ्रमः । शुक्तिभूयस्त्वपूर्णत्वज्ञाने नेदं रजतमिति बाधितं भवति । तथा च शुक्तिभूयस्त्वस्य शुक्तिवैकल्यस्य च सम्पूर्णग्रहणरूपत्वाद्बाध्यबाधकभाव इत्यर्थस्तूचितः ॥

पूर्वार्धे बाध्यत्वे बाधकत्वे च भूयस्त्वस्योपपपादकतया प्रतिपादनात्तदनुगुणतयोत्तरार्धो वर्णनीयः । संपूर्णत्वेनेत्यर्थवर्णने त्वर्थसाङ्गत्यम् । भूयस्त्वस्य बाध्यत्वे प्रयोजकत्वात् । अत्र, पुत्रः पिता चागत इति वचनभङ्गीं विहाय पुत्रसहितः पिता आगत इत्युक्तावपि पुत्रस्याप्यागमनक्रिययामन्वयः सिध्यति । एवमेव शुक्तिभूयस्त्ववैकल्यसहितसाकल्यस्य ग्रहेऽन्वये, शुक्तिभूयस्त्ववैकल्यसहिततया ग्रह इत्यन्वये वा शुक्तिभूयस्त्ववैकल्यसहितं ज्ञानमिति सिध्यति । एवञ्च ज्ञाने शुक्तिभूयस्त्ववैकल्यं गृहीतमिति भूयस्त्वे सत्यपि वैकल्यग्रहणमापतत्येव । एवं बहुव्रीह्याश्रयणेपि ज्ञानस्य शुक्तिभूयस्त्ववैकल्यविषकत्वं सम्भवतीति अन्यथाख्यातिरनिवार्यैव । अतः शुक्तिभूयस्त्ववैकल्पग्रह इत्यस्य विद्यमानशुक्त्यवयवभूयस्त्वाग्रह इत्यर्थो वर्णनीयः । ज्ञाने शुक्तिभूयस्त्वाभावरूपवैकल्यं विषयश्चेत्तच्च ज्ञानं शुक्तिभूयस्त्वाग्रहरूपं तदेव रजतज्ञानं बाध्यं भवति । यस्मिन् ज्ञाने शुक्ति भूयस्त्वसाकल्यं विषयः तच्च ज्ञानं विद्यमानशुक्तिभूयस्त्वग्रहरूपम् । तच्च 'इयं शुक्तिः' इति ज्ञानं, इदं च बाधकं भवति । एवं चैतादृशसमाधानं, शुक्तेर्भूयस्त्वं, वैकल्यञ्च साकल्यञ्च भूयस्त्वस्य वैकल्यसाकल्यं, तयोर्ग्रह इति व्युत्पत्तिमङ्गीकृत्यार्थवर्णनेपि वक्तुं शक्यम् ।

शुक्तिभूयस्त्ववैकल्यग्रहस्य विद्यमानशुक्त्यववयभूयस्त्वाग्रहरूपत्वेन अन्यथाख्यात्यसम्भवात् । वस्तुतो वैकल्यमित्यस्य राहित्यमर्थः । धनविकलः धनरहितः धनदरिद्र इति प्रयोगेऽप्येकार्थत्वात् । तथा च **शुक्तिभूयस्त्ववैकल्यं** = शुक्तिभूयस्त्वाभावः । तद्विषयकज्ञानं इदं रजतमिति ज्ञानम् । अस्मिन् रजतावयवाल्पत्वस्यैव ग्रहणेन शुक्तिभूयस्त्वाग्रहणात् । अत इदं ज्ञानं बाध्यं, शुक्तिभूयस्त्वसाकल्यग्रहः इयं शुक्तिरिति ज्ञानं, तच्च बाधकमिति शोभनः पन्थाः । सर्वं ज्ञानं यथार्थमिति स्वसिद्धान्त उक्तः । भेदाग्रहरूपाख्यातिवादिनां प्राभाकराणां मतेपि सर्वं ज्ञानं यथार्थमेव । परन्तु तेषां मते धर्मिज्ञानं ज्ञानद्वयमपि प्रत्यक्षरूपम् । रजतज्ञानस्य प्रत्यक्षत्वोपपादनयैव त्रिवृत्करणादिकमादृतम् । भ्रमस्थले प्रवृत्त्याद्युपपादनाय साधारणाकारग्रहणं भेदाग्रहो दोषोऽदृष्टश्चावश्यकमिति सर्ववादिसम्प्रतिपन्नम् । विशिष्टाद्वैतमते त्रिवृत्करणं सादृश्यमूलकप्रतिनिधिन्यायश्चाश्रितः । मन्त्रार्थवादानां तात्पर्यानभ्युपगमात् प्राभाकराः त्रिवृत्करणं नाभ्युपयन्ति । केवलभेदाग्रहेणैव निर्वहन्ति । तैरपि प्रतिनिधिन्यायोऽवश्यमङ्गीकार्यः । तेन सदृशद्रव्येषु सदृशद्रव्यान्तरावयवस्वीकरणमवर्जनीयम् । केवलत्रिवृत्करणम् अस्माकमपि न पर्याप्तम् । अन्यथा भूते भूतान्तरसंसर्गेण भूतान्तरावयवसत्वनिबन्धनतया सर्वत्र सर्वभ्रमापत्तिरिति विषयव्यवस्था न स्यात् । प्रतिनिधिन्यायाश्रयणे सदृशवस्तुन एव प्रतिनिधित्वान्नान्यस्य वस्तुनो भ्रमः ।

ननु प्रतिनिधिन्याय एव पर्याप्तो भ्रमोपपादने । त्रिवृत्करणस्य तदुपपादकत्वं किमर्थम् । अभ्युपगमेपि न प्रयोजनम् । शुक्तौ रजतभ्रमे त्रिवृत्करणमूलकरजतावयवसत्वमुपजीव्य शुक्तौ रजतावयवसद्भावः स्थापनीयः । न हि रजतावयवास्त्रिवृत्करणात्पूर्वं वर्तन्ते, अण्डसृष्टेः पूर्वभावित्वात् त्रिवृत्करणस्य । पश्चादेव रजतावयप्रसक्तेरिति चेदुच्यते - रजतारम्भकावयावारम्भकभूतस्य शुक्त्यारम्भकावयवारम्भकभूतभूतान्तरेण सह त्रिवृत्करणादारम्भकभूतेषु परस्परावयवसत्त्वात्तदारम्भकेष्वपि तदवयवसत्वं स्थितं, सौसादृश्यात्प्रतीयते । तेन भ्रमोपपत्तिः त्रिवृत्कृतवस्तुभिः तत्तत्कार्योत्पत्त्या भौतिककार्येषु भौतिकान्तरकार्यबुद्धिः सम्प्रतिपन्ना भवति । त्रिवृत्करणेन शुक्तौ तेजोंशोऽन्तर्गतः । स एव शुक्लभास्वररूपेण परिणमते । तस्य च रजतसौसादृश्यं दृश्यते । अतो रजतावयववत्त्वम् । एतेन शुक्तौ प्रतीयमानानामवयवानां रजतादिभ्य आनीय निवेशितत्वाभावात्कथं शुक्तौ रजतावयववत्वमिति शङ्का परस्ता । आपणद्वयस्थरजतादि-

ष्वपि न परस्परं रजतावयवानीतत्वम् । परन्तु तत्तदवयवसौसादृश्यमेव । न हि पूतिकादिषु प्रतीयमाना अवयवाः सोमलतादिभ्य आनीय निवेशिताः । परन्तु सम्प्रतिपन्नसोमलताद्यवयवसुसदृशत्वेमेव । अतः शुक्तौ इदं रजतमिति ज्ञानस्यापि यथार्थत्वमेव । तत्रापि रजतावयवसत्वेन तद्वति तत्प्रकारकत्वात् । अतो ''यथार्थं सर्वविज्ञानमि''ति भाषितम् । अनेन ज्ञानत्वव्यापकत्वं यथार्थत्वे सिद्धम् ।

न च सर्वं ज्ञानं धर्मिण्यभ्रान्तं प्रकारे तु विपर्यय इति न्यायेन भ्रमस्यापि धर्म्यंशे यथार्थत्वस्वीकारान्नैयायिकमतस्यास्मन्मतस्य को विशेष इति वाच्यम् । वैषम्यसत्त्वात् । हेतुव्यापकसाध्यसामानाधिकरण्यं व्याप्तिरित्युक्तौ 'वृक्षः कपिसम्योगी एतद्वृक्षत्वात्' इत्यादौ हेत्वधिकरणवृत्त्यन्ताभावाप्रतियोगित्वरूपव्यापकत्वोपपादनं साध्ये न सम्भवति । कपिसम्योगाभावस्य मूलावच्छेदेन सत्त्वात् । अतः प्रतियोगिवैयधिकरण्यं निवेश्य हेतुनिरूपितप्रतियोगिवैयधिकरण्यघटितव्यापकत्वमुपपाद्यते । तद्वदत्रापि प्रतियोगिवैयधिकरण्यघटितज्ञानत्वनिरूपितव्यापकत्वं तन्मते वक्तव्यम् । अस्मन् मते तु ज्ञानत्वनिरूपितप्रतियोगिवैयधिकरण्याघटितव्यापकत्वमेव स्वीक्रियत इति वैषम्यात् ।

न चैवं प्रतियोगिवैयधिकरण्यघटनाऽघटनारूपवैषम्यसत्वेपि सिद्धान्तरीत्या ज्ञानत्वनिरूपितव्यापकत्वं भग्नमेवेत्यस्य कः परिहारः । अपि च, घटवद्भूतलमिति ज्ञाने भूतलत्ववति भूतलत्वप्रकारकत्वस्य सत्वेपि घटत्वावच्छेदेन तदभावस्य सत्त्वात्, घटत्ववति घटत्वप्रकारकत्वस्य सत्त्वेपि भूतलावच्छेदेन तदभावसत्त्वाच्च प्रामाण्ये ज्ञानत्वव्यापकत्वं भग्नमिति शङ्कायाः प्रतियोगिवैयधिकरण्यनिवेशेनैव परिहारस्य कर्तव्यत्वाद्वैषम्योपपादनं दुःशङ्कश्चेति वाच्यम् । प्रतियोगिवैयधिकरण्यमनिवेश्यैव नैयायिकमतवैलक्षण्यस्य वक्तुं शक्यत्वात् । तत्तद्धर्मप्रकारकज्ञानत्वव्यापकं तत्तद्धर्मवद्विशेष्यकत्वमिति परिष्कारात् । इदञ्च नैयायिकानभिमतम् । इदं रजतमित्यादिभ्रमस्थले रजतत्वप्रकारकत्वमस्ति । तस्य ज्ञानस्य रजतत्ववद्विशेष्यकत्वमप्यस्ति, शुक्तौ रजतावयवसत्वात् । तन्मते रजतावयवाभावेन रजतत्ववद्विशेष्यकत्वं नास्तीति व्यापकत्वभङ्गात् ।

वस्तुतस्तद्विशेष्यकज्ञानसाम्रायन्यं तदवृत्तिधर्मप्रकारत्वाभाववत् । तज्ज्ञानीयविशेष्यताश्रयावृत्तिधर्मः तज्ज्ञानीयप्रकारत्वाभाववान्, तदवृत्तिधर्मस्तन्निष्ठविषयतावच्छेदकत्वाभाववान् इत्येवंरूपेण विवक्षणे न काप्यनुपपत्तिः । यो यदवृत्तिः सः तन्निष्ठधर्मनिरूपितावच्छेदकत्वाभाववान् इति सामान्यव्याप्तिः । घटत्वादि दण्डावृत्ति । तच्च दण्डनिष्ठकारणतावच्छेदकत्वाभाववदिति समन्वयः । प्रकृते रजतत्वस्य शुक्त्यावृत्तित्वाच्छुक्तिनिष्ठविषयतावच्छेदकत्वाभावत्वम् । तदवृत्तिधर्मस्य तन्निष्ठविषयतावच्छेदकत्वाभावसाधनेन तन्निष्ठविषयतावच्छेदकत्वाश्रयस्य तदवृत्तिधर्मत्वमवश्यं सिध्यतीति शुक्तिनिष्ठविषयतावच्छेदकरूपरजतत्वस्य शुक्तिवृत्तिधर्मत्वसिद्धिः । शुक्तावपि रजतावयवसत्त्वादिति । न च शुक्तौ रजतावयवसत्त्वेपि रजतत्वरूपजात्याश्रयस्य वस्तुनोऽभावात् कथं तत्र सन्निकर्षः कथञ्च प्रत्यक्षत्वं कथञ्च तस्य शुक्त्यंशवृत्तित्वमिति वाच्यम् । सिद्धान्तेऽवयवसङ्घातस्यैवावयाविरूपत्वेन रजतावयवस्यैव रजतत्वाश्रयत्वात् ।

भ्रमस्थले प्राभाकरमते ज्ञानद्वयम्, अस्मन्मतेपि । परन्तु तेषां मते रजतस्य स्मरणम्, अस्माकं मते रजतस्य प्रत्यक्षत्वम् । प्रतिविधिन्यायत्रिवृत्करणाभ्यां शुक्तावपि रजतावयवस्य सत्वेनेन्द्रियसन्निकर्षसम्भवाद्रजतांशे प्रत्यक्षत्वम् । यद्यपि रजतस्मरणपुरोवृत्तिग्रहणाभ्यामेव भ्रमस्थले प्रवृत्त्यादीनां निर्वाहस्सुवचः । तथापि रजतं पश्यामीत्येवानुभवसत्त्वेन स्मरणरूपत्वकल्पनासम्भवात् । न हि रजतंस्मरामीत्यनुभवः । अतस्साक्षात्कारित्वव्यञ्जकविषयताया अवगाहनान्न स्मरणरूपता । यद्यप्यात्मविषयकस्मरणसन्ततिरूपस्य ध्यानस्य निरन्तराभ्यासवशात्पश्यमीति साक्षात्कारित्वव्यञ्जकविषयताकत्वमस्ति । तथाप्यभ्यासविरहदशायां स्मरणे लौकिकविषयतावत्त्वरूपवैशद्यमसम्भवि । अतः प्रत्यक्षात्मकं ज्ञानं स्वीकरणीयम् । तत्र रजतप्रत्यक्षे रजतचक्षुस्संयोगस्य कारणत्वात्तादृशसंयोगोपपादनाय त्रिवृत्करणस्यावश्यकतेति ध्येयम् ।

ननु शुक्तौ रजतावयवसद्भावेनेदं रजतमिति प्रत्यक्षञ्चेत्कथं नेदं रजतमिति बाधप्रतीतिः। कथमियं शुक्तिरिति ज्ञानस्य बाधकत्वम्। 'इदं रजतं, नेदं रजतमित्येकत्रैव कथं व्यवहारः। विप्रतिषिद्धमभिधीयत इति चेत्? सावधानमनाः श्रृणु। इदं रजतमिति प्रतीतेः अल्पावयवकरजतविषयकत्वं, नेदं रजतमित्यस्य भूयोंशकरजतविषयकत्वाभावः। न चेदमुभयं परस्परविरुद्धम्। ननु तर्हि एकदैवेदं रजतमिति प्रतीति र्नेदं रजतमिति प्रतीतिश्च स्यातां परस्परविरोधाभावात्। नचेष्टापत्तिः। लोकानुभवविरुद्धत्वादिति चेदुच्यते। नेदं रजतमित्यत्र रजतावायवभूयस्त्वाभावप्रतिपादनमुखेन शुक्तिभूयस्त्वमवगाहते। अपि च, शुक्तिः इति प्रतीतेः। इत्थञ्च शुक्तिभूयस्त्वज्ञानं तदन्तर्गतरजतांशग्रहं प्रतिबध्नाति, यथा मन्दतरशब्दग्रहं प्रति तारतरशब्दग्रहस्याभिभावकज्ञानविधया प्रतिबन्धकत्वम्। अत एव शुक्तिज्ञानदशायां नेदं रजतमिति प्रतीतिः। अल्पतरशुक्तिसंसृष्टरजतांशग्रहं प्रति प्रचुरशुक्तिज्ञानस्य प्रतिबन्धकत्वमनुभवबलात्स्वीक्रियते॥

एतेन, तद्वत्ताबुद्धिं प्रति तदभावप्रकारकनिश्चयस्य तदभावव्याप्यप्रकारकनिश्चयस्यचैव प्रतिबन्धकत्वात् इयं शुक्तिः इति ज्ञानस्य कथमिदं रजतमिति ज्ञानं प्रति प्रतिबन्धकत्वम्। न च तदभावप्रकारकज्ञानस्येव तदभावव्याप्यप्रकारकज्ञानस्येव च तदभावावच्छेदकप्रकारकस्यापि ज्ञानस्य प्रतिबन्धकत्वात् शुक्तित्वावच्छेदेन रजतत्वाभावनिश्चयविशिष्टस्येयं शुक्तिरिति निश्चयस्य प्रतिबन्धकत्वं सम्भवतीति वाच्यम्। रजतं न इत्यादि निश्चयशून्यदशायामपि इयं शुक्तिरित्यादिज्ञानस्य प्रतिबन्धकत्वानुभवेन तदविरोधप्रसङ्गात् इत्यादिकं परास्तम्। एवञ्च शुक्तावपि रजतावयवसद्भावात् इदं रजतमिति ज्ञानस्य यथार्थत्वम्। एतदर्थमेव श्रुतौ त्रिवृत्करणोपदेशः। तेजः जलप्रतियोगिकविलक्षणसम्योगवत् एवं प्रथिवीप्रतियोगिकविलक्षणसम्योगवत्। तथा पृथिवी जलप्रतियोगिकविलक्षणसम्योगवती। एवं पृथिवी तेजः प्रतियोगिकविलक्षणसम्योगवती एवं परस्परसम्मेलनाद्भूते भूतान्तरावयवसत्वम्। न च भूतेषु परस्परावयवसम्मेलनसत्त्वेपि शुक्तिरूपपृथिव्यां रजतांशरूपतेजस्सम्योगसिद्धिः कथं महाभूतानामेव परस्परं त्रिवृत्करणाङ्गीकारेण शुक्तिरजतयोः त्रिवृत्करणाभावात् इति शङ्क्यम्। शुक्त्यारम्भकतावच्छेदकधर्मावच्छिन्नानां पार्थिवभागानां महापृथिव्यां स्थितेः रजतारम्भकतावच्छेदकधर्मावच्छिन्नानां तेजोभागानां महातेजसि च स्थितेस्तयोर्महाभूतत्रिवृत्करणदशायां मेलनात् शुक्त्यादौ रजतावयवसद्भावात्।

अथैवं त्रिवृत्करणस्थले एवं भ्रामोपपादनेपि स्थाणौ पुरुषभ्रमोपपादनं कथम्? पार्थिवभागयोः परस्परं त्रिवृत्करणाभावात्। स्थाणौ पुरुषावयवासम्भवात्। न च विजातीयभूतस्थल एव परस्परावयवसत्त्वाङ्गीकारे सजीतीयभूतस्थले कथं परस्परावयवसद्भावो नासम्भवीति वाच्यम्। पुरुषद्वये एकपुरुषारम्भकतावच्छेदकधर्मस्यापरपुरुषारम्भकतावच्छेदकत्वं प्रत्यक्षसिद्धम्। न तथा पुरुषारंभकतावच्छेदकधर्मस्य स्थाण्वारम्भकतावच्छेदकत्वं प्रत्यक्षसिद्धं भवति। अतः स्थाणौ पुरुषावयवसद्भावो न शङ्कितुमपि शक्यम्। एवं शुकतुण्डे पलाशकुसुमभ्रामस्य भ्रमरे जम्बूफलभ्रमस्य चोपपत्तिर्दुर्वचा। पलाशकुसुमभ्रान्त्या शुकतुण्डे पतत्यलिः। सोपि जम्बुफलभ्रान्त्या तमलिं हन्तुमिच्छतीत्यालङ्कारिकैरङ्गीकृतोऽयं भ्रम इति शङ्कापरिहारार्थं प्रतिनिधिन्यायश्च स्वीकृतः॥

सोम-पूतीक-व्रीहि-नीवारादिषु पार्थिवेष्वेव सदृशावयवसत्वमादाय शास्त्रज्ञै र्निर्वाहः कृतः। एवञ्च स्थाण्वादापि पुरुषावयवत्वमस्ति। पुरुषादिसादृश्यप्रकारकबहिरिन्द्रियजन्यप्रत्यक्षविषयत्वात्। पूतीकादौ सोमावयववत्वं नीवारे व्रीह्यवयववत्वं चैवमेव। "तदेव सदृशं तस्य यत्तद्द्र्व्यैकदेशभाक् इति व्याप्तिश्च दर्शिता। यत्र यत्सादृश्यं तत्र तदवयववत्वमिति न व्याप्तिः। तत्सादृश्यप्रकारकबहिरिन्द्रियजन्यप्रत्यक्षविषयत्वं यत्र तत्र तदवयववत्वमिति व्याप्तिः। अन्यथा व्योमसादृश्यवति ब्रह्मणि तदवयववत्वाभावेन व्याप्तिभङ्गात्। ब्रह्मसादृश्यवति जीवे तदवयववत्वाभावेन भङ्गात् पण्डित-श्व-श्वपाक-हस्तिप्रभृतिषु परस्परसादृश्यसत्त्वेपि तत्तदवयवत्वाभावेन भङ्गाच्च। यद्वा यत्र यत्सादृश्यं

**स्वप्ने च प्राणिनां पुण्यपापानुगुणं भगवतैव तत्तत्पुरुषमात्रानुभाव्यास्तत्तत्कालावसानास्तथाभूताश्चार्थाः सृज्यन्ते। तथा हि श्रुतिः स्वप्नविषया,** (बृ.६.३.१०.) **'न तत्र रथा न रथयोगा न पन्थानो भवन्ति ; अथ रथान् रथयोगान् पथः सृजते। न तत्राऽऽनन्दा मुदः प्रमुदो भवन्ति ; अथानन्दान्मुदः प्रमुदः सृजते। न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्ति ; अथ वेशान्तान्पुष्करिण्यः स्रवन्त्यः सृजते। स हि कर्ता' इति। यद्यपि सकलेतरपुरुषानुभाव्यतया तदानीं न भवन्ति, तथाऽपि तत्तत्पुरुषमात्रानुभाव्यतया तथाविधानर्थान् ईश्वरः सृजति। स हि कर्ता। तस्य सत्यसङ्कल्पस्याऽऽश्चर्यशक्तेः तथाविधं कर्तृत्वं सम्भवतीत्यर्थः।** (कठ.२.५.८.) **'य एषु सुप्तेषु जागर्ति कामंकामं पुरुषो निर्मिमाणः'। 'तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते। तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन' इति च। सूत्रकारोऽपि,** (शा.३.२.१.२-३.) **'सन्ध्ये सृष्टिराह हि', 'निर्मातारं चैके पुत्रादयश्च' इति सूत्रद्वयेन स्वाप्नेष्वर्थेषु जीवस्य स्रष्टृत्वमाशङ्क्य, 'मायामात्रं तु कात्स्न्र्येनानभिव्यक्त-**

---

तत्र तदवयववत्वमित्येव व्याप्तिः। तदवयववत्वं नाम तत्सम्बन्धितावच्छेदधर्मावच्छिन्नसम्बन्धित्वम्। व्योमसम्बन्धिमहत्वम्। तत्सम्बन्धितावच्छेदकं महत्वत्वं तदवच्छिन्नसम्बन्धो ब्रह्मणि वर्तते। एवं ब्रह्मसम्बन्धितावच्छेदकमानन्दत्वम्, एकजीवसम्बन्धितावच्छेदकं ज्ञानस्वरूपतात्वं, तदवच्छिन्नसम्बन्धस्यान्यत्रसत्वेन व्याप्त्यभङ्गात् इति बोध्यम्। एतत्सर्वं श्रीभाष्यश्रुतप्रकाशिकाज्ञानयाथार्म्यवादादिषु विशदं द्रष्टव्यम्॥

ननु जागरे रजतभ्रमस्थले त्रिवृत्करणप्रतिनिधिन्यायाभ्याम् अर्थसद्भावमंगीकृत्य परमार्थता स्थाप्यते। स्वप्ने कथम्? न तत्रैतन्न्यायः प्रवर्तयितुं शक्यः। वस्तुमिथ्यात्वं विना न तत्र निर्वाहस्संभवति। अतोऽपरमार्थवस्तुसद्भावः स्वीकार्यः। तद्दृष्टान्तेन सर्वस्याप्यपरमार्थत्वं साधयितुं शक्यमित्येतत् निरस्यति - **स्वप्ने चेति**। जागरणपदार्था इव स्वाप्नार्था अपि सत्या एव। पुण्यपापानुगुण्येनैव भगवता सृज्यत्वात्। जागरणदशायामप्यस्मदीयपुण्यपापानुगुणं भगवता सृष्टं पदार्थमनुभूय सुखं वा दुःखं वा प्राप्नुमः। एवमेव तत्रापि। अत्र सकलानुभाव्यपदार्थाः, तत्र तन्मात्रानुभाव्याः पदार्थाः। जागरेपि एकपुरुषमत्रानुभाव्याः बहवस्सन्ति, क्षुधप्रभृतयः। **तथाभूताः** = आश्चर्यभूताः। **रथयोगाः** = युग्याः = अश्वादयः। **न भवन्ति** = दृष्टसजातीया न भवन्ति। स्वप्नदृगतिरिक्तपुरुषानुभाव्यतया न भवन्तीत्यर्थः। **अथेति** प्रकारान्तरकथनम्। स्वप्नदृगतिरिक्तपुरुषानुभाव्यत्वं नास्ति। तथापि न वस्तुनोऽसत्त्वम्। **आनन्दः** = अनुकूलवस्तुदर्शनजा प्रीतिः। **मुत्** = तस्य स्वकीयत्वबुद्धिजा प्रीतिः। **प्रमुत्** = अनुभव जन्या प्रीति। आनन्दमुत्प्रमुच्छब्दाः प्रीतिवाचका अपि प्रीतिविषयवस्तुपराः। सुखरूपा प्रीतिरपि जागरे एकेनानुभूता नान्येनानुभूयते। अतः जागरसुखात्स्वाप्नसुखवैलक्षण्यं दुर्वचम्। तस्माद्वस्तुपरत्वेनार्थो वर्ण्यः। तथा च स्वप्नद्रष्टुः प्रीतिजनकाः, इतरेषां प्रीत्यजनका इति पर्यवसितम्। न तत्रेति उदाहरणान्तरम्। **वेशान्ताः** = वेशन्ताः, छान्दसो दीर्घः, पल्वलानीत्यर्थः यद्वा **वेशान्ताः** = गृहाणीत्यर्थः। **पुष्करिण्यः** = पुष्करिणीः स्रवन्त्यः = स्रवन्तीः, द्वितीयार्थे प्रथमा। **पुष्करिण्यः** = पद्मिन्य इत्यर्थः। यद्वा पुण्यतीर्थानीत्यर्थः। यद्वा देवालयभूतदेवस्थानानीति।

**स हि कर्तेति** - भगवतः सर्वशक्तित्वं प्रतिपादितम्, अत्र तच्छब्दः न जीवपरः। तस्य कर्तृत्वासम्भवात्। न तत्रेत्यादिना कालान्तरस्थायित्वपुरुषान्तरानुभाव्यत्वनिषेधः । न तु तत्कालतत्पुरुषमात्रानुभाव्यतया स्वरूपनिषेधः। य एषु इत्यादि श्रुतिः स्फुटमेव ईश्वरकर्तृत्वं बोधयतीत्याह - **य एष्विति**। कामं कामं = सङ्कल्प्य सङ्कल्प्य। शुक्रं = शुद्धं = हेयप्रत्यनीकम्। पराभिमतार्थनिषेधार्थं सूत्रकारसम्मतिं प्रदर्शयति - **सूत्रकारोऽपीति**। सन्ध्ये = सन्धौ भवे। इदश्च परलोकस्थानम् इत्युक्तपुरुषानुभाव्यस्थानद्वयसन्धौ भवे। सुषुप्तिजागरमध्यभवे स्वप्ने इत्यर्थः। जीवस्य

**स्वरूपत्वात्' इत्यादिना न जीवस्य सङ्कल्पमात्रेण स्रष्टृत्वमुपपद्यते ; जीवस्य स्वाभाविकसत्यसङ्कल्पत्वादेः कृत्स्नस्य संसारदशायामनभिव्यक्तस्वरूपत्वात्, ईश्वरस्यैव तत्तत्पुरुषमात्रानुभाव्यतया आश्चर्यभूता सृष्टिरियम्। 'तस्मिँल्लोकाःश्रितास्सर्वे तदु नात्येति कश्चन' इति परमात्मैव तत्र स्रष्टेत्यवगम्यते इति परिहरति। अपवरकादिषु शयानस्य स्वप्नदृशः स्वदेहेनैव देशान्तरगमनराज्याभिषेकशिरश्छेदादयश्च पुण्यपापफलभूताः शयानदेहसरूपसंस्थानदेहान्तरसृष्ट्योपपद्यन्ते।**

**पीतशङ्खादौ तु नयनवर्तिपित्तद्रव्यसम्भिन्नाः नायनरश्मयः शङ्खादिभिः सम्युज्यन्ते। तत्र पित्तगतपीतिमाभिभूतः शङ्खगतशुक्लिमा न गृह्यते। अतः सुवर्णानुलिप्तशङ्खवत् 'पीतः शङ्ख' इति प्रतीयते। पित्तद्रव्यं तद्गतपीतिमा चातिसौक्ष्म्यात्पार्श्वस्थैर्न गृह्यते। पित्तोपहतेन तु स्वनयननिष्क्रान्ततयाऽतिसामीप्यात्सूक्ष्ममपि**

---

स्वाभाविकस्यापि सत्यसंकल्पत्वस्य न स्वप्नदशायामाविर्भावः। यथा जागरे, अतस्तद्दशायामाविर्भावकल्पनं न संभवति इत्याशयेन - **तस्मिँल्लोका** इति श्रुत्युपादानम्। स्वदुःखावहसृष्टेरपि स्वप्ने दर्शनाज्जीवस्य स्वाप्नार्थसृष्टत्वं न भवतीति च 'शिरश्छेदादय' इत्यनेन सूचितम्। ननु स्वप्नेऽनुभाव्यपदार्थसृष्टिः भगवताऽस्तु। अनुभविता शयानः। तस्य देहोपि तथाविधः। कथं तस्य देशान्तरगमनं स्वशिरश्छेदश्च ? अतस्तस्यापरमार्थत्वं स्वीकार्यमित्यत्राह - **अपवरकादिष्विति**। अपवरकं - शयनगृहम्। देहसरूपसंस्थानदेहान्तर इत्यनेन परिहारः कृतः॥

**पीतशङ्खादौ त्विति**। तु शब्दो वैलक्षण्यसूचकः। रजतभ्रमस्थल इव वा स्वाप्नपदार्थ इव वा नात्र निरूपणं शक्यम्। अतोऽन्यथाख्यातिराश्रयणीया इतीमां शङ्कां प्रकारान्तरेण परिहरतीति भावः। अयमाशयः - इदं रजतमित्यत्र प्रत्यक्षात्मकं ज्ञानद्वयं स्वीकृतं धर्मिप्रत्यक्षं रजतप्रत्यक्षं चेति। रजतांशे न स्मरणरूपम्। रजतं साक्षात्करोमीत्यनुभवात् ज्ञानद्वयस्य निरूप्यनिरुपकभावश्च स्वीकृतः। इदमर्थनिष्ठविशेष्यतानिरूपितरजतत्वनिष्ठप्रकारताशालिज्ञानरूपं तत्। एवं पीतः शङ्ख इत्यादौ न निर्वाहः कर्तुं शक्यः, शङ्खस्य प्रत्यक्षत्वेपि पीतरूपस्य न प्रत्यक्षता। तत्र पीतरूपाभावात्। न च पीतांशे प्रत्यक्षाभावेपि स्मरणरूपत्वसम्भव इति वाच्यम्। तत्रापि पीतं साक्षात्करोमीत्यनुभवविरोधात्। ज्ञानयाथार्थ्यवादिमते ज्ञानद्वयस्यापि प्रत्यक्षत्वस्वीकारेणापसिद्धान्तात्। एकत्र दर्शनस्मरणरूपत्वमन्यत्रोभयस्य दर्शनरूपत्वमिति वैषम्ये सर्वत्रैकरूपत्वाङ्गीकर्तृप्राभाकरमतविजयप्रसङ्गाच्च।

न च त्रिवृत्करणप्रतिनिधिन्यायाभ्यामुपपादनसम्भवोऽत्र भवति। पीतः शङ्ख इति पीतरूपवत्त्वस्य प्रतीतेः। रूपद्रव्ययोस्त्रिवृत्करणाभावात्। न चात्र पीतरूपाश्रयद्रव्यप्रतीतिः। तथा सत्यपि, पीतरूपाश्रयद्रव्यशङ्खद्रव्ययोरुभयोरपि पार्थिवत्वेन त्रिवृत्करणासम्भवात्। न च स्थाणौ पुरुषभ्रमे उभयोरपि पार्थिवत्वेपि भ्रामोपपादनसंभवदत्रापि भ्रमस्योपपत्तिः सुशका। तत्र पुरुषसादृश्यस्य सत्वेन तन्निबन्धनभ्रमोपत्तेः। अत्र च पीतरूपाश्रयद्रव्यसादृश्यस्य कथञ्चिदपि शङ्खे वक्तुमशक्यत्वादिति शङ्कितुरभिप्रायः। सिद्धान्ते नयनगतं पीतरूपाश्रयपित्तद्रव्यं नयनाद्बहिर्निष्क्रम्य शङ्खेन सम्युक्तं भवति। तच्च द्रव्यं चक्षुस्सन्निकृष्टम्। अत्रापि चाक्षुषद्वयम्। पीतरूपत्वावच्छिन्नप्रकरतानिरूपितपीतद्रव्यनिष्ठविशेष्यताशालिचाक्षुषमेकम्। शङ्खत्वप्रकरतानिरूपितशङ्खनिष्ठविशेष्यताशालिचाक्षुषमपरम्, इदं रजतमिति स्थल इवाङ्गीक्रियते। अत्रापि ज्ञानद्वयीविषयितयो र्निरूप्यनिरूपकभावः। तथा च पीतरूपत्वावच्छिन्नप्रकरतानिरूपितशङ्खत्वावच्छिन्नविशेष्यताशालिबोधः। अतः पीतः शङ्ख इति भ्रमः। अतोऽत्रापि नान्यथाख्यातिः।

ननु पित्तद्रव्यगतपीतरूपे चक्षुस्सन्निकर्षस्येव शङ्खगतशुक्लरूपेपि चक्षुस्सन्निकर्षसत्वात् कुतः शुक्लप्रत्यक्षं नास्तीति चेत्? शङ्खगतशुक्लरूपस्य पित्तद्रव्यगतपीतिमारूपरूपाभिभूतत्वान्न तत्प्रत्यक्षम्। तथैव हि सुवर्णानुलिप्ते

**गृह्यते। तद्ग्रहणजनितसंस्कारसचिवनायनरश्मिभिर्दूरस्थमपि गृह्यते ॥**

**जपाकुसुमसमीपवर्तिस्फटिकमणिरपि तत्प्रभाभिभूततया रक्त इति गृह्यते। जपाकुसुमप्रभा विततापि स्वच्छद्रव्यसम्युक्ततया स्फुटतरमुपलभ्यत इत्युपलब्धिव्यवस्थाप्यमिदम्।**

**मरीचिकाजलज्ञानेऽपि तेजःपृथिव्योरप्यम्बुनो विद्यमानत्वादिन्द्रियदोषेण तेजःपृथिव्योरग्रहणात् अदृष्टवशाचाम्बूनो ग्रहणाद्यथार्थत्वम्।**

---

शङ्खे शुक्लरूपस्याभिभवेनान्यसुवर्णरूपेण प्रत्यक्षविषयता। ननु स्वनयननिष्क्रान्तपीतिमाश्रयपित्तद्रव्यस्य बहिर्गमनं शङ्खे सङ्क्रान्तिश्चेत्यभ्युगमे भ्रान्तपुरुषस्येव पार्श्वस्थानामपि पित्तद्रव्यस्य तद्गतपीतिमायाश्च कथं नानुपलब्धिरिति चेन्न। तयोरतिसूक्ष्मत्वात्। पित्तदूषितपुरुषस्य तु स्वनयननिष्क्रान्तत्वेनातिसामीप्यमिति सूक्ष्मस्य ग्रहणसंभव इति। ननु शङ्खस्य दूरस्थत्वात्तद्गतपित्तद्रव्यस्यापि नातिसामीप्यमिति कथं पित्तद्रव्यग्रहणमिति चेदुच्यते। पित्तद्रव्यस्य स्वनयन-गतत्वात्तन्निष्क्रमणकाल एव नायनरश्मिभिः ग्रहणसंभवात्तज्जनितसंस्कारसचिवा नायनरश्मयो दूरस्थमपि पित्तद्रव्यं गृह्णन्ति। यथा पतगः स्वसमीपादुत्पतन् सन्निकृष्टदशायां चक्षुर्विषयः, दूरस्थोपि दर्शनार्हो भवति। न च चक्षुर्गतपीतिमाया निष्क्रमणेपि तदाश्रयद्रव्यस्य कथं निष्क्रमणम्, अन्यद्रव्ये वा कथं सम्योजनमिति वाच्यम्। पुष्प-गतगन्धस्य वायुसनिकर्षकाले तदाश्रयपुरस्कारेणैव सम्योगाङ्गीकारात्। वायुर्गन्धानिवाश्रयात् इति ह्युच्यते।

न च तत्र निराश्रयाणां गमनं स्वीक्रियते। तथा च पार्श्वस्थानां, पित्तद्रव्यसाक्षात्कारस्य पित्तद्रव्यगतसूक्ष्मत्वं प्रतिबन्धकम्। स्वाश्रयपित्तद्रव्यानाश्रयचक्षुर्जन्यप्रत्यक्षं प्रति पित्तद्रव्यगतसूक्ष्मत्वं प्रतिबन्धकम्। स्वं - सूक्ष्मत्वं। पित्तोपहतस्य तादृशप्रत्यक्षोपपत्तये चक्षुषि स्वाश्रयपित्तद्रव्यानाश्रयत्वविशेषणम्। विषयतासम्बन्धः प्रतिबध्यताव-च्छेदकसम्बन्धः प्रतिबन्धकतावच्छेदकसम्बन्धः अपृथक्सिद्धिः। नन्वेवं रीत्या निर्वाहे शङ्खः पीत इति व्यवहारवत्पटः पीत इत्यपि व्यवहारस्स्यात्। अतोऽव्यथाख्यातिराश्रयणीयेति चेदन्यथाख्यातिस्वीकारे वा कथं पीतः पट इति भ्रामो नास्तीति शङ्काया उन्मेषात्। यत्र भ्रमस्तत्र निर्वाहार्थमन्यथाख्यातिः, अतस्सर्वत्र भ्रम आवश्यक इति न नियम इति चेदेवमेवास्माकमपीति पश्य ॥

जपाकुसुमस्फटिकस्थलेऽपि एवमेवरीतिरिति दर्शयति - **जपेति**। लोहितः स्फटिक इति भ्रमो जायते। स्फटिके लौहित्यं तु नास्ति। जपाकुसुमस्य समीपवृत्तित्वदशायामेवैवं भामः। अतस्तद्गतं लौहित्यं स्फटिके सङ्क्रामति। ततश्च लौहित्यप्रकारकप्रभाविशेष्यकप्रत्यक्षस्फटिकत्वप्रकारकस्फटिकविशेष्यकप्रत्यक्षात्मकज्ञानद्वयरूपं लोहितः स्फटिक इति ज्ञानम्। अत्रापि नान्यथाख्यातिः। तद्विषयतयोश्च निरूप्यनिरूपकभावः। तथा च लौहित्यप्रकारकस्फटिकविशेष्यक-प्रत्यक्षम्। लोहितः स्फटिक इतिवद्भूतलं लोहितमिति भूतलत्वावच्छेदेन तथा प्रथ्यक्षं कुतो न जायते प्रभायाः स्फटिक इव भूतलेपि संक्रान्तेः इति न वाच्यं - स्वच्छद्रव्यसम्योगस्य तत्र कारणत्वात्। स्वच्छद्रव्यसम्योगावच्छेद-देशावच्छिन्नचक्षुस्सम्योग एव तथा प्रत्यक्षे कारणम्। स्फटिकगतं रक्तरूपं कुतो न गृह्यत इति चेत्पूर्ववदेव प्रभागतरक्त-रूपेणाभिभूतत्वादिति ज्ञेयम्।

मरीचिकाजलभ्रमस्थले त्रिवृत्करणेन निर्वाहः, तेजसि पृथ्व्यान्यां च जलांशसत्वं सिद्धम्। इन्द्रियदोषात्तेजस्त्वं पृथिवीत्वं च न गृहीतम्। अदृष्टश्च तत्र हेतुः। अदृष्टस्य नियामकत्वं सर्वैरङ्गीकरणीयम्। अन्यथा सर्वदा सर्वेषां सर्वत्र सर्वविषयभ्रमप्रसङ्गात्। कदाचिदपि वा भ्रमाभावप्रसङ्गाच्च। अतः शुक्तौ रजतभ्रम इव मरीचिकायां जलभ्रामः। तत्रापि ज्ञानद्वयम्। विषयितयोः निरूप्यनिरूपकभावश्च।

**अलातचक्रेऽप्यलातस्य द्रुततरगमनेन सर्वदेशसम्योगादन्तरालाग्रहणात्तथा प्रतीतिरुपपद्यते। चक्रप्रतीतावप्यन्तरालाग्रहणपूर्वकतत्तद्देशसम्युक्ततत्तद्वस्तुग्रहणमेव। कचिदन्तरालाभावादन्तरालाग्रहणम्, कचिच्छैघ्र्याद-ग्रहणमिति विशेषः। अतस्तदपि यथार्थम्। दर्पणादिषु निजमुखादिप्रतीतिरपि यथार्था। दर्पणादिप्रतिहतगतयो हि नायनरश्मयो दर्पणादिदेशग्रहणपूर्वकं निजमुखादि गृह्णन्ति। तत्राप्यतिशैघ्र्यादन्तरालाग्रहणात्तथा प्रतीतिः।**

**दिङ्मोहेऽपि दिगन्तरस्यास्यां दिशि विद्यमानत्वाददृष्टवशेनैतद्दिगंशवियुक्तो दिगन्तरांशो गृह्यते। अतो**

---

ननु मरीचिकायां जलसत्वे मरीचिकात्वप्रकारकज्ञानसत्त्वेपि जलज्ञानं कुतो न जायत इति चेच्छुक्तौ रजतांशसत्त्वे शुक्तित्वप्रकारकज्ञानसत्त्वे रजतज्ञानं कुतो न जायत इति प्रतिबन्द्या परिहारात्। शुक्तित्वज्ञानं तदन्तर्गतरजतज्ञाने प्रतिबन्धकमिति चेदत्रापि मरीचिकात्वलप्रकारकज्ञानं तदन्तर्गतजलज्ञाने प्रतिबन्धकमिति मत्वा तृप्तो भव। मरीचिकात्वप्रकारकं ज्ञानं प्रति दोषः प्रतिबन्धकः। दोषसत्तादशायां प्रतिबध्यं मरीचिकात्वप्रकारकज्ञानं न जायते। दोषविरहदशायां मरीचिकात्वप्रकारकज्ञानस्य यथावस्थितस्य जननादेतत्प्रतिबन्धेन जलज्ञानानुदयः। ननु जलज्ञानोत्पत्तिं प्रति मरीचिकात्वप्रकारकं ज्ञानं प्रतिबन्धकम्। अतस्तत्सत्त्वे जलभ्रमो न सम्भवतीति वास्तवं, यदा मरीचिकात्वप्रकारकज्ञानोत्पत्तिः, तदा पूर्वं तज्ज्ञानाभावात्तस्मिन्क्षणे जलभ्रामोत्पत्तिः स्यात्। प्रतिबन्धकस्य पूर्वमसम्भवादिति चेत्सर्वत्र भ्रमस्थले एवमेवापादनसम्भव इति सर्वदा सर्वभ्रामापत्तेः। अदृष्टस्य नियमकत्वात्परिहार इति रीतिस्सर्वत्र समाना।

अलातन्तु न चक्राकारम्। पुरुषेण भ्रमणे सति भ्राम्यमाणं चक्राकारं दृश्यते। अचक्रे तस्मिन् चक्रत्वबुद्ध्या अन्यथाख्यातिरिति शङ्कां परिहरति - **अलताचक्र इति**। चक्रत्वं हि मण्डलाकारेण वर्तमानत्वम्। तन्मण्डलीयसर्वप्रदेशविशेषसंयुक्तत्वम्। अलातस्य भ्रामणकाले सर्वप्रदेशविशेषसंयुक्तत्वमस्ति। अतो न चक्रत्वभङ्गः, परन्तु अलातं भ्रमणदशायां क्रमेण विभिन्नदेशसम्योगमाप्नोति। देशभेदेन प्रथमसम्योगकालद्वितीयसम्योगकालेत्यादिना क्रमेण जातानामलातसम्योगानां वेगवशात्कालाग्रहणम्। इत्थञ्च तेषां क्रमिकत्वाग्रहणम्। दिक्सम्योगानां क्रमभावित्वात् मेलनं न सम्भवति। अत एकप्रत्यक्षविषयत्वञ्च न। सामान्यचक्रस्थले युगपदनेकप्रदेशसम्बन्धः। अत्र तु न तथा। तत्रान्तरालं नास्ति। अत्र त्वस्ति। अन्तरालाग्रहणं तूभयत्र तुल्यम्। सामान्यचक्रस्थले सर्वदिक्सम्योगत्वावच्छिन्नप्रकरताशालि एकमेव ज्ञानम्। अत्र तु ज्ञानद्वयम्॥

अत्र ज्ञानयाथार्थ्यवादे - चक्रत्वं हि तत्प्रदेशसम्बन्धिसप्तदिक्सम्योगविशिष्टाष्टमदिक्सम्योगवत्वम्। वैशिष्ट्यञ्च स्वसामानाधिकरण्यकालिकविशेषणत्वोभयसम्बन्धेन। यद्यप्यलाते एकदिक्सम्योगध्वंसानन्तरमेवापरदिक्सम्योग इत्युभयसम्बन्धेन सप्तदिक्सम्योगवैशिष्ट्यमष्टमदिक्सम्योगे नास्ति, तथाप्युभयसम्बन्धावच्छिन्नसप्तदिक्सम्योगनिष्ठप्रकारतानिरूपितनिरवच्छिन्नविशेष्यताशालिज्ञानाष्टमदिक्सम्योगत्वावच्छिन्नप्रकरतानिरूपितालातत्वावच्छिन्नविशेष्यताशालिज्ञानरूपज्ञानद्वयस्वीकारान्नात्यन्यथाख्यातिः। तादृशज्ञानद्वयसप्तदिक्संयोगत्वावच्छिन्नप्रकारत्वाष्टमदिक्संयोगत्वावच्छिन्नप्रकरतानिरूपितविशेष्यतयो र्निरूप्यनिरूपकभाव इति सुविशदं प्रतिपादितम्।

ननु मुखं दर्पणवृत्ति इति ज्ञानस्यान्यथाख्यातित्वमवर्जनीयं रजतत्वाभववति रजतत्वप्रकारकज्ञानस्येवास्यापि दर्पणवृत्तित्वाभाववति दर्पणवृत्तित्वावगाहतात्। नात्र तत्रेवावयवसद्भादिप्रवृत्तिः। सादृश्यस्यापि नात्र प्रसक्तिः। अतस्त्रिवृत्करणप्रतिनिधिन्याययोरनवकाशात् कथं निर्वाहः। स्थाणौ पुरुषकाले सादृश्यस्य नियामकत्वाङ्गीकारवदत्र सादृश्यग्रहस्याप्यभावादिति शङ्कां मनसि निधायान्यथाख्यातिं विना निर्वाहं कर्तुमाह - **दर्पणादिष्विति**। मुखवद्दर्पणं दर्पणवृत्तिमुखमित्यादे र्भ्रमरूपत्वेपि नान्यथाख्यातित्वम्। यथार्थज्ञानस्यापि भ्रमरूपत्वाङ्गीकारात्। मुखस्य दर्पणाभि-

मुखतया सद्भावकाल एवैतादृशप्रतितेर्जायमानत्वात्, चाक्षुषं तेजः दर्पणे प्रसरति । तस्य च तेजसो दर्पणसम्योगे तत्र तेजसि निजमुखसम्योगजनिका क्रिया जायते । सैव क्रिया प्रतिहत्यात्मिका । तादृशक्रियां प्रति स्वच्छद्रव्यरूपदर्पण-सम्योगः कारणम् । तेन पाषाणाद्यन्यवस्तुसम्योगे न तादृशी क्रिया जायते । एवञ्च निजमुखेपि चाक्षुषरश्मीनां सम्योगः । ततश्च मुखे दर्पणे च चक्षुस्संयोगस्य सद्भावेन दर्पणे मुखमिति बुद्धिर्जायते । अतो दर्पणवृत्तित्वज्ञानं मुखज्ञानं चैकदा भवति । दर्पणवृत्तित्वप्रकारकं ज्ञानमन्यत् । मुखत्वावच्छिन्नमुखविशेष्यकं ज्ञानञ्चान्यत् । अत उभयोश्चाक्षुत्वम् । तत्र मुखदर्पणयो र्मध्यदेशरूपान्तरालसत्त्वेपि चाक्षुषतेजसः अतिशैघ्र्यात्तदग्रहणम् । अतो दर्पणे मुखमिति दर्पणस्थत्वेन मुखग्रहणम् ।

न च दर्पणमुखयोरियदन्तरालमस्तीति ज्ञानवतामपि तथा प्रतीतिर्जायते कथं तत्र निर्वाह इति वाच्यम् । तत्रापि रश्मिप्रतिघातशैघ्र्यात् मुखदर्पणज्ञाने शीघ्रं जायमाने सति तद्ग्राहकज्ञानेनैतदन्तरालाग्रहणमिति सुवचत्वात् । बिम्बाति-रिक्तप्रतिबिम्बासत्वेपि तत्सद्भावभ्रान्तिवासनाबलादेवं प्रतीतिः । मुखदर्पणनिरन्तरभानं शैघ्र्यरूपदोषश्च मुखवद्दर्पण-मिति भ्रमव्यवहारहेतुः । दर्पणवृत्तित्वप्रकारकज्ञानमुखत्वावच्छिन्नमुखविशेष्यकज्ञानरूपज्ञानद्वयनिष्ठप्रकारताविशेष्तयोः पूर्ववन्निरूप्यनिरूपकभावाच्च तथा व्यवहारः । दर्पणवृत्तित्वज्ञाने दर्पणस्याभिमुखस्थत्व एव तथा प्रतीतेर्दर्पणांशे आभिमुख्यमपि भासते । तज्ज्ञानगताभिमुख्यनिष्ठप्रकरतानिरूपितत्वमपि ज्ञानान्तरीयमुखत्वावच्छिन्नविशेष्यतायां स्वीक्रियते । अत एव दर्पणे ममाभिमुखं मुखमिति प्रतीतिः । एवं दर्पणांशे भासमानं मलिनत्वाल्पत्वादिकमपि ज्ञाने प्रकारतया भासते । एतादृशाल्पत्वमलिनत्वादिनिष्ठप्रकरतानिरूपितत्वमपि ज्ञानान्तरीयमुखत्वावच्छिन्नविशेष्यतायां स्वीक्रियते । अतो मुखं मलिनमल्पम् इति प्रतीतेर्निर्वाहः ।

ननु सव्यतया धृतं वस्त्रं दर्पणे दक्षिणतया दृश्यते उपवीततया धृतं यज्ञसूत्रं प्राचीनावीतत्वेन । कथमत्र सव्य-दक्षिणभावविपर्यासः । न च प्रतिबिम्भे आभिमुख्यस्य सव्यदक्षिणभावस्य च यथार्थत्वात्तथा प्रतीते र्न दोष इति वाच्यम् । बिम्बादन्यस्य प्रतिबिम्बस्यानङ्गीकारेण एवंविधसमाधानस्यायुक्तत्वात्सव्यदक्षिणभावस्यापेक्षिकत्वात् प्रतिबिम्बगतविपर्यासस्य समर्थनेऽपि बिम्बगततद्विपर्यासस्य निर्वाहाभावादिति चेदुच्यते - बिम्बस्य दर्पणगतसव्यत्वा-दीनाञ्चान्तरालाग्रहणमेव तत्रापि हेतुरिति स्वीकारात् । तथा च सव्यदक्षिणभावस्यापेक्षिकत्वात्स्वाभिमुखदर्पणे सव्य-दक्षिणभावो विपर्यस्तो दृश्यते । तत्रस्थमुखस्य भेदाग्रहाद्दर्पणदेशे भासमानसव्यत्वादिनिष्ठप्रकारतानिरूपितत्वस्य स्वदेशांशे भासमानवस्त्रादिनिष्ठविशेष्यतायां स्वीकाराद्दक्षिणस्य सव्यतया सव्यस्य दक्षिणतया च भानमित्यदोषात् । अयं भावः - स्वस्य यत्सव्यं तदभिमुखपदार्थस्य दक्षिणं, स्वस्य च यद्दक्षिणं तदभिमुखपदार्थस्य सव्यम् इत्यनुभवसिद्धं लोके । अताभिमुखतया भासमाने दर्पणे सव्यदक्षिणभावो विपर्यस्त एव । तथाविधसव्यदक्षिणभावविशिष्टतया मुखस्य भेदाग्रहेण विपर्यासेन भानोपपत्तिः । सव्यं वस्त्रमिति ज्ञानं वस्त्रत्वप्रकारकज्ञानवस्त्रविशेष्यकज्ञानरूपद्वयरूपम् । तत्र सव्यत्वनिष्ठप्रकारताया वस्त्रत्वावच्छिन्नविशेष्यतायाश्च निरूप्यनिरूपकभावः । अतो नान्यथाख्यातिः ।

यद्वा - मुखादिसन्निधानान्मुखसजातीयं प्रतिबिम्बं जायते तच्च वस्त्वन्तरम् । तस्य स्पर्शशून्यत्वात्त्वाचप्रत्यक्षं न भवति । आधुनिकविज्ञानबलात्प्रदर्शिते चित्रपटे यथा न त्वगिन्द्रियजन्यप्रत्यक्षम् । उद्भूतरूपवत्वाच्चाक्षुषप्रत्यक्षम् । तत्र क्रियोत्पत्तिं प्रति मुखगतक्रिया स्वाश्रयसान्निध्यसंबन्धेन कारणम् । एवं तिलकाद्युत्पत्तौ मुखगततिलकादिकारणम्, एतेषां नाशस्य च तन्नाशः कारणम् इत्यनुभवबलात्स्वीक्रियते । दर्पणे मुखं प्रतिफलति, मुखप्रतिबिम्बो जायते इत्यादि व्यवहारश्चोपपन्नः । भूतले घटः प्रतिफलतीति व्यवहाराभावात्तत्र न प्रतिबिम्बोत्पत्तिः । अस्मिन्पक्षेऽन्यथाख्याते र्नैव प्रसक्तिः । 'अनवस्थितेरसम्भवाच्च नेतरः' इति सूत्रे तद्भाष्ये चायमर्थ ऊहितुं शक्य इति ।

**दिगन्तरप्रतीतिर्यथार्थैव ।**

**द्विचन्द्रज्ञानादावप्यङ्गुल्यवष्टम्भतिमिरादिभिर्नायनतेजोगतिभेदेन सामग्रीभेदात्सामग्रीद्वयमन्योन्यनिरपेक्षं चन्द्रग्रहणद्वयहेतुर्भवति । तत्रैका सामग्री स्वदेशविशिष्टं चन्द्रं गृह्णाति । द्वितीया तु किञ्चिद्वक्रगतिः चन्द्रसमीपदेशग्रहणपूर्वकं चन्द्रं स्वदेशवियुक्तं गृह्णाति । अतः सामग्रीद्वयेन युगपद्देशद्वयविशिष्टचन्द्रग्रहणे ग्रहणभेदेन ग्राह्याकारभेदादेकत्वग्रहणाभावाच्च द्वौ चन्द्राविति भवति प्रतीतिविशेषः । देशान्तरस्य तद्विशेषणत्वम्, देशान्तरस्य चागृहीतस्वदेशचन्द्रस्य च निरन्तरग्रहणेन भवति । तत्र सामग्रीद्वित्वं पारमार्थिकम् ; तेन देशद्वयविशिष्टचन्द्रग्रहणद्वयञ्च पारमार्थिकम् ; ग्रहणद्वित्वेन चन्द्रस्यैव ग्राह्याकारद्वित्वञ्च पारमार्थिकम् । तत्र, 'विशेषणद्वयविशिष्टचन्द्रग्रहणद्वयस्यैक एव चन्द्रो ग्राह्य' इति ग्रहणे प्रत्यभिज्ञानवत्केवलचक्षुषः सामर्थ्याभावाच्चाक्षुषज्ञानं तथैवावतिष्ठते । द्वयोश्चक्षुषोरेकसामग्र्यन्तर्भावेपि तिमिरादिदोषभिन्नं चाक्षुषं तेजः सामग्रीद्वयं भवतीति कार्यकल्प्यम् । अपगते तु दोषे स्वदेशविशिष्टस्य चन्द्रस्यैकग्रहणवेद्यत्वादेकश्चन्द्र इति भवति**

---

प्राच्याम् इयं प्रतिचीति दिक्भ्रमः- ग्रामान्तरगतस्य सम्भवति । तत्रापीदं रजतमित्यादिवन्निर्वाहः । शुक्तौ रजतांशस्य विद्यमानत्ववदेकस्यां दिशि दिगन्तरांशस्य विद्यमानत्वात् । स दिगन्तरांशो गृह्यते एतद्दिगंशस्तु अदृष्टवशान्न गृह्यते । यथा रजतभ्रमे शुक्तित्वांशो न गृह्यते । अतो नात्रान्यथाख्यातिः । तत्रापि ज्ञानद्वयस्य स्वीकारात्प्रकारताविशेष्यतयो र्निरूप्यनिरूपकभावांगीकाराच्च । वस्तुतो दिक्त्वं नैयायिकमत इव नास्माकं मतेऽधिकम् । कथं तर्हि प्राचीप्रतीचीत्यादिव्यवहार इति चेदुभयवादिसंमतैस्तत्तदुपाधिविशिष्टाकाशादिद्रव्यैः । यद्वा तत्तदुपाधिभिः । ननु तर्हि 'पद्भ्यां भूमि र्दिशः श्रोत्रात्' इति श्रुतेः कथं निर्वाह इति चेदभिमानदेवतासृष्ट्यापि निर्वोढुं शक्यत्वात् । एवं चोपाधिविशेषविशिष्टगगनस्यैव दिक्त्वे, प्राच्याम्, 'इयं प्रतीची' इति भ्रमस्थले इदंत्वेन प्राचीप्रत्यक्षम् । तत्र सन्निकृष्टप्रतीचीत्वरूपोपाधिविशेषप्रकारकप्रत्यक्षम् । इति ज्ञानद्वयम् । तत्र च विषयितयो र्निरूप्यनिरूपकभावः । उपाधे र्दिक्त्वपक्षेपि प्राचीरूपोपाधिविशेष्यकप्रत्यक्षं तादात्म्येन प्रतीचीरूपोपाधिप्रकारकप्रत्यक्षमिति ज्ञानद्वयम् । निरूप्यनिरूपकभावः पूर्ववत् । पुरोवर्तिनि शुक्तित्वज्ञाने इवात्रापि प्राचीत्वरूपधर्मज्ञाने दोषस्य प्रतिबन्धकत्वमिति विवेकः ।

द्वौ चन्द्राविति द्विचन्द्रज्ञानादावप्यन्यथाख्यातिं विना निर्वाहप्रकारं प्रदर्शयति - **द्विचन्द्रेति** । चक्षुर्मध्यदेशेऽङ्गुलिसम्योगेऽङ्गुल्यवष्टम्भबलात् द्वौ चन्द्रौ इति प्रत्ययः । एवं नयने तिमिरदोषसद्भावेपि । अङ्गुल्या वा दोषेण वा चक्षुर्वृत्तिः प्रतिबद्धप्रसरणा भवति । तदा तदंगुलिपार्श्वद्वये चक्षुस्तेजसः वृत्तिद्वयमुत्पद्यते । तत्रैकावृत्तिः चन्द्रतद्देशसम्युक्ता । आधेयतासम्बन्धेनैकत्वविशिष्टतद्देशप्रकारकचन्द्रविशेष्यकं ज्ञानं वास्तविकं जनयति । तद्देशे चन्द्र इत्याकारकं ज्ञानं तत् । अन्या वक्रगतिः ज्ञानद्वयं जनयति । एकत्वविशिष्टचन्द्रसमीपदेशप्रकारकप्रत्यक्षरूपं, चन्द्रत्वावच्छिन्नचन्द्रविशेष्यकप्रत्यक्षरूपं ज्ञानद्वयं तत् । एतद्देशे चन्द्र इत्याकारकं भ्रमात्मकं ज्ञानं तत्, इदं रजतमिति भ्रमात्मकज्ञानवत् । अत्र ज्ञानद्वयीयविषयितयो र्निरूप्यनिरूपकभावः । चन्द्रसमीपदेशनिष्ठप्रकारतायाश्चन्द्रत्वावच्छिन्नविशेष्यतायाश्च निरूप्यनिरूपकभावः । वक्रगत्या जायमानं ज्ञानद्वयमिति सूचनाय चन्द्रसमीपदेशग्रहणपूर्वकं चन्द्रं स्वदेशवियुक्तं गृह्णातीति भाषितम् । स्वदेशग्रहणं विना चन्द्रं गृह्णातीत्यर्थः । अतः सामग्रीद्वयेनाधेयतासम्बन्धेन एकत्वविशिष्टतद्देशप्रकारकचन्द्रविशेष्यकं तद्देशे चन्द्र इत्याकारकज्ञानमेकं, चन्द्रसमीपदेशप्रकारकप्रत्यक्षचन्द्रविशेष्यकप्रत्यक्षरूपज्ञानद्वयरूपमन्यज्ज्ञानं जातम् । एवञ्च सामग्रीद्वयेन युगपद्देशद्वयविशिष्टचन्द्रग्रहणाद्ग्रहणभेदः । तेन ग्राह्याकारभेदः ।

न च वक्रगत्या ज्ञानद्वयं जायतां, ज्ञानद्वये विषयतयोः निरूप्यनिरूपकभावश्चास्ताम् । चन्द्रस्य तत्समीपदेशयोः

**प्रत्ययः। दोषकृतं तु सामग्रीद्वित्वं, तत्कृतं ग्रहणद्वित्वं, तत्कृतं ग्राह्याकारद्वित्वञ्च इति निरवद्यम् ॥**

**अतः सर्वं विज्ञानजातं यथार्थमिति सिद्धम्। ख्यात्यन्तराणां दूषणानि तैस्तैर्वादिभिरेव प्रपञ्चितानीति न तत्र यत्नः क्रियते।**

कथं विशेषणविशेष्यभावः तद्ग्राहकप्रमाणाभादिति वाच्यम्। चन्द्रसमीपदेशस्य चन्द्रस्य च ज्ञानद्वये एकस्मिन्नेव वा ज्ञाने निरन्तरग्रहणवशात्तत्सम्भवात्। तस्य देशस्य च यदन्तरालं तदग्रहणसहितं - तयोश्चन्द्रदेशयोर्मिथोऽसम्बन्धाग्रहण-पूर्वकं भानमेवात्र निरन्तरभानम्। अतश्चन्द्रदेशयो वैशिष्ट्यप्रतीतिः। अतो ग्रहणभेदाद्ग्राह्याकारभेदः प्रतिबन्धकैकत्व-ग्रहणाभावाच्च द्वौ चन्द्रौ इति प्रत्ययः। न च ग्राह्याकारभेदेपि न ग्रहणभेदः, घटपटौ इति समूहालम्बने ग्रहणभेदाभावात्। एवं ग्रहणभेदेपि न ग्राह्यभेदः धारावाहिकविज्ञाने तदभावात्। अतः कथं ग्राह्यभेदस्य ग्रहणभेदनिबन्धनत्वं भाषितमिति वाच्यम्। एवमाशयात् - यत्र धारावाहिकविज्ञाने ग्रहणभेदेपि ग्राह्यभेदो नास्तीत्युच्यते तत्र सामग्रीभेदो नास्ति। अत्र सामग्रीभेदनिबन्धनग्रहणभेदसत्वाद्ग्राह्याकारभेद इति। 'सोऽयं देवदत्त इतिवच्चन्द्रैक्यप्रतीतिरूपत्वमप्यत्रासम्भवि। पूर्वानुभवपाश्चात्यानुभवयोरिवात्रानुभवाभावात्।

ननु चक्षुर्द्वयमपि प्रत्यक्षजनने एकसामग्रीप्रविष्टमित्यनुभवसिद्धम्। न हि चक्षुर्द्वयेन दर्शने ज्ञानद्वयं जायते। एवं सत्येकस्य चक्षुषः प्रसरणभेदेन सामग्रीद्वित्वं कथमिति चेद्दोषाभावे केवलचक्षुषः त्वदुक्तं सामर्थ्यम्। दोषसत्त्वे तु दोषसम्भिन्नं चाक्षुषं तेजः सामग्रीद्वयं भवतीत्यनुभवबलेन स्वीकारात्। अतः सामग्रीद्वयस्य देशद्वयविशिष्टचन्द्रग्रहण-द्वयस्य ग्रहणद्वित्वेन ग्राह्याकारद्वित्वस्य प्रामाणिकत्वात् द्वौ चन्द्रौ इति ज्ञानं यथार्थभूतमेव। एकत्वाग्रहो देशचन्द्रयो र्निरन्तरभानं च दोषः। अयं घटः अयं घटः इति ज्ञान-द्वयात्मकापेक्षाबुद्धिविषयद्वित्वरूपधर्मावगाही इमौ द्वौ इति प्रत्ययस्तथैवाङ्गुल्यवष्टम्भजनितचक्षुर्वृत्तिद्वयजनितपूर्वोक्तज्ञानद्वयात्मकापेक्षाबुद्धिविषयत्वरूपदेशनिष्ठद्वित्वावगाही द्वौ चन्द्रौ इति प्रत्यय इति। यथार्थख्यातिपक्षमुपसंहरति - **अतस्सर्वमिति**।

ज्ञानानां यथार्थत्वं स्थापितं, भ्रमस्थलेऽप्युपपादितम्। परन्तु भ्रमस्थले शङ्खे पीतत्वं चन्द्रे द्वित्वञ्च गृह्यते। पीत-त्वद्वित्वादिवैशिष्ट्यं शङ्खचन्द्रादावविद्यमानमेव भासते। तच्च निर्विवादम्। स्वप्नेपि स्वाप्निकपदार्थस्य जागरपदार्था-भेदग्रहणमप्युपपन्नम्। एवं सत्यन्यथाख्यातिपरित्यागपूर्वकं सर्वज्ञानयाथार्थ्यप्रदर्शनम् 'अथ वे'त्यादिभाष्येण कृतम्। भाष्यकृतोऽयमाशयः - द्वित्वपीतत्वादीनां चन्द्रशंखादौ निरन्तरभानमात्रं, न तु वैशिष्ट्यभानमपि। अत एव तत्र तत्र निरन्तरग्रहणेन इति मुहुर्मुहुर्भाषितं। वैशिष्टग्रहाभावे कथं निर्वाह इति चेदसंसर्गाग्रहात्। इदमपि 'एकत्वाग्रहणात्' इत्यादि बहुषुस्थलेषु भाषितम्। अतोऽन्यथाख्यातिं विनाऽख्यात्यैव सर्वत्र निर्वाह इत्यख्यातिपक्ष एवोचितः। परन्तु यत्र वैशिष्ट्यं त्रिवृत्करणप्रतिनिधिन्यायसादृश्यादिभिरुपपादितुं शक्यं तत्र सर्वत्र यथार्थख्यातिरेव। अख्यातिसंवलित-यथार्थख्यातिर्भाष्यकाराभिमता। कतिपयापरोक्षस्थले यथार्थख्यातिः। अन्यथा निर्वाहाभावे कतिपयापरोक्षस्थले अख्यातिः। परोक्षस्थले सर्वत्र अख्यात्यैव यथार्थत्वस्थापनम्।

ननु देहात्मभ्रमस्थले कथं निर्वाहः। आत्मनो नित्यत्वेन प्रकृतिपरिणामित्वाभावात् त्रिवृत्करणाप्रसक्तेः। नापि प्रतिनिधिन्यायसंभवः, अवयवाभावात्। नापि सौसादृश्येन निर्वाहः शरीरात्मनो र्जडत्वाजडत्वादिभिरत्यन्तविसदृशत्वात्, नापि शेषत्वादिना सौसादृश्यं शक्यवचनम्। पदार्थत्वविशेषत्वादीनां सर्वसाधारण्येन सर्वत्रात्मभ्रमप्रसंगात्। न च यस्य मते वस्तुद्वयसम्भवः वस्तुद्वयविवेचनं च तस्यैव कदाचिद्दोषवशादन्यत्रान्यभ्रमः। यथा शुक्तिरजतयो र्वस्तुनो र्भेद इति वस्तुद्वयं, दोषवशादन्यत्रान्यभ्रमः। यथा शुक्तिरजतयो र्वस्तुनो र्भेद इति वस्तुद्वयतद्विवेचनं, तत्रैव तादृश-पुरुषस्य दोषवशाच्छुक्तौ रजतभ्रमः। एवमेव स्थाणौ पुरुषभ्रमः। शरीरात्मभ्रमस्थले अस्माकं वस्तुद्वयविवेचनादिसत्वेन

न देहात्मभ्रमः । नास्तिकानां चार्वाकादीनां वस्तुद्वयस्यैवाभावात्तद्विवेचनाभावाच्च तेषाम् आत्मभ्रम एव नास्ति । अस्मन्मतरीत्या यत् शरीरं तत् तस्य मते, आत्मा । अतो नास्माकमपि शरीरात्मभ्रमः, तस्यापि न शरीरात्मभ्रमः । शरीरात्मरूपवस्तुद्वयसद्भावस्थल एव भ्रमसम्भवात्तन्मतरीत्या शरीरमेवात्मा न तु वस्तुद्वयमिति वाच्यम् । चार्वाकमतम् अस्मन्मतं च पर्यालोचयितुः मध्यस्थस्य भ्रमतन्निवारणयोरावश्यकत्वात् । अत एवोक्तं 'शरीरात्मभ्रान्तिर्गलति चिदचिल्लक्षणधिया' इति । एवं शरीरात्मभ्रमस्थले यथाकथञ्चिन्निर्वाहेपि स्वतन्त्रात्मभ्रमस्थले निर्वाहासम्भवात् । 'योन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चोरेणात्मपहारिणा' इति ह्युच्यते । एवं गीतायामपि 'अयथावत् प्रजानाति बुद्धिस्सा पार्थ राजसी' इति । अनात्मन्यात्मबुद्धिर्या अस्वे स्वमितियामतिः' इत्याद्यपि ।

कथं वा अहङ्कारशब्दव्युत्पत्तिः । अनहमि = शरीरे अहं बुद्धिः इति, एतत्बुद्धिकारणत्वेन अहंकारशब्दव्युत्पत्तिः क्रियत इति चेत्सत्यम् । एतस्य सर्वस्यापि अख्यात्यैव निर्वाहात् । अख्यातिश्च भेदाग्रहः पूर्वमीमांसकेन प्राभाकारेण चांगीकृतः । तथा च असत्ख्यातिः, आत्मख्यातिः, अनिर्वचनीयख्यातिः अन्यथाख्यातिः अख्यातिः यथार्थख्यातिः इति ख्यातिषट्कम् । तत्र 'षष्ठी चेयं ख्यातिर्यथार्थख्यातिः' इति न्यायतत्वे भ्रान्त्यधिकरणसिद्धान्ते नाथमुनिभिः निरधार्यत । सैव अख्यातिः भाष्यकारेणापि । तत्र षष्ठी ख्यातिः अख्यातिसहितयथार्थख्यातिः ॥

अत्र सर्वार्थसिद्धिः - ज्ञानस्य यथार्थत्वमयथार्थत्वमिति द्वैविध्यमाश्रयणीयम् । यदि सर्वस्यापि ज्ञानस्य प्रमितित्वं तदा परमतस्य विजयप्रसङ्गात् । स्वाभिमतपक्षसाधकतत्वेन प्रयुज्यमानवाक्यान्तरस्यापि यथार्थत्वापातात् । न च परेषामुक्तितो ज्ञानमेव न जायते । यथा 'अग्निना सिञ्चे'दिति अयोग्यार्थकस्थले न बोधः, तद्वत् । अतः प्रमितित्वप्रसक्तिरेव नास्तीति वाच्यम् । परोक्तवचनानामयोग्यार्थप्रतीतिकत्वे प्रमाणाभावात् । त्वदुक्तवाक्यनामेवायोग्यार्थप्रतिपादकत्वमिति तेनापि वक्तुं शक्यत्वात् । किञ्च परोक्तवाक्यात्प्रतिपत्तिरेव नास्तीति चेत्त्वदुक्तिविरुद्धबुद्धिजनकत्वं नास्तीति विवाद एव न स्यात् । सर्वस्यापि ज्ञानस्यायथार्थत्वे स्वमतस्यासंगत्यापत्तिः । अतो ज्ञाने द्वैविध्यमाश्रयणीयमिति ।

अत्र नैयायिकाः - शुक्तिशकलमेव मया रजततया गृहीतमिति पामरव्यवहारात् 'योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते', 'अयथावत्प्रजानाति', 'अनात्मन्यात्मबुद्धिर्या', इत्यादेः प्रामाणिकानां व्यवहाराच्च भ्रान्तावन्यथाभानं स्वीकार्यमिति वदन्ति । साङ्ख्यास्तु भ्रान्तिस्थले शुक्तिरूपधर्मिज्ञानं शुक्तिरजतसाधारणाकारस्फुर्तिः रजतस्मरणं रजतस्य शुक्तेश्च वस्तुतो वर्तमानो यो भेदः तदग्रहश्चेत्येतादृशसामग्रीबलादेव व्यवहारोपपत्तौ मध्येऽन्यथाख्यातिमवलब्येदं रजतमिति व्यवहारोपपादनमयुक्तं गौरवात् । न चान्यथाख्यातेः प्रत्यक्षसिद्धत्वात्कथमस्मिन्नर्थे लाधवादरणम् । अन्यथा ज्ञानस्याप्यपलापः कर्तुं शक्यम् । ज्ञानसामग्र्यैव व्यवहारोपपादनसम्भवात् । अतः प्रत्यक्षविरुद्धलाघवाश्रयणमयुक्तमिति वाच्यम् । प्रत्यक्षविरुद्धलाघवस्य त्वयाप्याश्रितत्वात्क्वचित्स्थले । अनुग्राहकतर्कस्य सर्वप्रमाणोपजीव्यत्वात् । परत्वमपरत्वं पृथक्त्वं विभागो द्वित्वादिसङ्ख्या दिगादिद्रव्यं, तार्किकैरभिमतमपि दीधितिकारादयो नाङ्गीकुर्वन्ति । क्लृप्तोपाधिभिरेव निर्वाहसम्भवात् किमर्थमतिरिक्तत्वम् ? एतावता न प्रत्यक्षस्यापलापः । लाघवसहकृतप्रत्यक्षबलान्नैतेषामतिरिक्तकल्पनमावश्यकमिति । अभिनवदेशिकव्याख्याने इदं स्फुटम् ।

अपि च घटो नास्तीत्यभावस्य प्रत्यक्षसिद्धत्वेपि भावातिरिक्तत्वं नेष्यते । घटो घट इत्यनुगतप्रतीतिसत्वेपि घटत्वादिजाति र्नेष्यते । जातेराकृतिव्यङ्ग्यत्वे सत्यप्याकृतिव्यतिरिक्तजातिर्न स्वीक्रियते । घटे पटभेदज्ञानेपि घटत्वसंस्थानरूपभेदो नाभिमतः । एको घट इति प्रतीतिसत्वेप्यवयवातिरिक्तावयवो नाभ्युपेयते । देवदत्तः श्यामो युवा लोहिताक्ष इति शब्दचतुष्टयाद्धर्मिभानचतुष्टये सत्यपि सकलधर्मविशिष्टधर्मिभानमेकमेवेति तर्कबलादुच्यते । तद्वदत्रापि भेदाग्रहरूपसमाग्रीबलादेवोपपत्तौ मध्येऽन्यथाख्यातिरूपज्ञानं न स्वीकार्यम् । न चाख्यातिशब्दवाच्यः क इति वाच्यम् ।

धर्मिस्फुरणं रजतस्मरणं भेदाग्रह इति या सामग्री तस्यां भेदाग्रहो निविष्टः । तस्यैवाख्यातिशब्दवाच्यत्वात् ।

न च भेदाग्रहस्य जडस्य कथं ख्यातिशब्दवाच्यत्वं ख्यातिगणने तस्य कथं वा परिगणनमिति वाच्यम् । सामग्र्यां दर्शनस्मरणरूपज्ञानस्य प्रविष्टत्वेन ख्यातिशब्दवाच्यत्वसम्भवात् । निर्विषयख्यातौ सर्वात्मना ज्ञानस्याघटकत्वेन ख्यतिशब्दवाच्यत्वानुपपत्तेरिवात्राभावात् । साङ्ख्यमते प्राभाकरमते च धर्मिस्फुरणधर्मस्मरणभेदाग्रहादिभिरुपपत्तिः । विशिष्टाद्वैतमते रजतावयवस्य सत्वेन, साक्षात्करोमीत्यनुभवबलेन च रजतप्रत्यक्षम् । यावद्बलमन्यथाख्यातिमनङ्गीकृत्यैव ज्ञानस्य यथार्थत्वम् । असम्भवस्थले प्रतिनिधिन्यायं सादृश्यञ्चावलम्ब्य । सर्वथाऽसंभवस्थलेऽख्यातिमुपजीव्यापीति अन्यथाख्यातिस्वीकर्तृमतेपि भेदाग्रहरूपाख्यातेः कारणत्वं स्वीकर्तव्यम् । न हि रजतभेदग्रहकाले रजतभ्रमो भवितुमर्हति । अतस्त्वयापि क्लृप्तेनाभिमतेन भेदाग्रहेणैवोपपत्तौ किमर्थमन्यथाख्यात्यङ्गीकरणम् ।

नन्वन्यथाख्यात्यनङ्गीकारे कथं ज्ञानस्य भ्रान्तित्वमिति चेद्विफलप्रवृत्तिजनकत्वादित्यवेहि । ननु दूरस्थमणिप्रभामवेक्ष्य मणिरिति भ्रान्तः दूरं गत्वा मणिमेव लभते । तत्र प्रभायां मणिज्ञानस्य कथं विफलप्रवृत्तिजनकत्वमिति चेत्तत्रापि मणिज्ञानादेव मणिलाभः । न तु प्रभायां मणिज्ञानात् । प्रभामवेक्ष्य समीपं गत्वा मणिज्ञानं प्रथमतो लभते पश्चान्मणिम् । न च वृक्षस्थपक्षिणमवेक्ष्य ग्रहीतुकामो यावद्गच्छति तावत्काले पक्षिण अपसरणे पक्षिणं न विन्दतीति सर्वसम्प्रतिपन्नम् । तदा तस्य ज्ञानस्य यथार्थत्वेऽपि भ्रान्तिरूपत्वमेव स्यात् । एवं बुद्बुदादिदर्शनस्यापीति चेत्तत्रापि प्रमात्वस्यानपायात् । पक्षिणो विषयस्यापक्रमादेव हि पक्षिणोऽलाभः । अपक्रमाभावे पक्षिलाभरूपयोग्यतायाः प्रवृत्तौ सत्वाच्च । पक्षिलाभे पक्षिज्ञानमात्रं न कारणम्, एवं बुद्बुदप्राप्तौ न तज्ज्ञानमात्रम् । परन्तु कारणकलापरूपसामग्री । तस्यां पक्षिणः स्थितिः बुद्बुदस्याविनाशश्च घटकभूतम् ॥

ननु जानाति इच्छति यतते करोति अनुभवतीत्यनुभवसिद्धम् । सम्यग्रजते रजतज्ञानविषयत्वाभावे तदिच्छा वा तत्र प्रवृत्तिर्वा नैव भवति । तद्विषयकप्रवृत्तौ तद्विषयकेच्छा कारणम् । तदिच्छां प्रति तद्विषयकेष्टसाधनत्वज्ञानं कारणम् । इत्थं रजतार्थिप्रवृत्तिविषयत्वे रजतज्ञानविषयकत्वमवश्यंभावि । एवमेव शुक्तिरजतभ्रमस्थलेपि धर्मिणि रजतबुद्धिविषयकत्वमावश्यकम् । अन्यथा तदर्थप्रवृत्तिविषयत्वासंभवात् । अनुमानञ्च विवादास्पदं शुक्तिशकलं रजतज्ञानविषयः रजतोपायान्यत्वे सति रजतार्थिप्रवृत्तिविषयत्वादिति । रजतज्ञानविषयत्वरूपसाध्याभाववति रजतोपाये व्यभिचारवारणाय सत्यन्तम् । तथा च शुक्तिविशेष्यकभेदप्रकारकज्ञानरूपान्यथाख्यात्यनङ्गीकारे रजतेच्छोः शुक्तिविषये प्रवृत्तिर्न स्यात् ।

अतो भेदाग्रहस्य व्यवहारादिहेतुत्वकल्पनमयुक्तमिति चेदत्र तत्त्वमुक्ताकलापश्लोकः - 'रत्नांशौ रत्नबुद्ध्या विदुरनवगते रत्न एव प्रवृत्तिं ज्ञातस्वेष्टानुषङ्गादविदितमपि खल्वाददीतात्र चैवम्' इति । यत्र रत्नकिरणे रत्नभ्रमः तत्र पुरुषेण हस्तप्रसारणे रत्नलाभश्च, तत्र प्रभाया एव ज्ञानविषयत्वेन रत्नस्य धीविषयत्वाभावेपि रत्नार्थिप्रवृत्तिविषयत्वरूपहेतोस्सत्वाव्द्ययभिचरितो हेतुः । स्वेष्टक्षीरसेवार्थं क्षीरोपादाने तत्संसृष्टस्य जलस्य तृणादेश्चादानं भवति । तत्र पुरुषप्रवृत्तिविषयत्वं तृणादावस्ति । ज्ञानविषयत्वं क्षीरस्यैव न जलतृणादेः सामान्यतोपि । अतस्तत्रापि व्यभिचारः । ज्ञानविषयत्वाभावेपि प्रवृत्तिविषयत्वात् । एवञ्च सामान्यतोऽप्य विदितस्यापि प्रवृत्तिविषयत्वे सति, शुक्तिभ्रमस्थले सामान्यत इदमिति विषये शुक्तौ कथं प्रवृत्तिविषयत्वं न स्यात् ॥

एवं प्रकृतसाध्यवत्त्वविवादास्पदभूता शुक्तिर्न रजतत्वप्रकारकज्ञानविषयः शुक्तित्वादित्येकमनुमानम्, अरूप्यत्वात् रजतविरुद्धार्थक्रियाकारित्वादिति प्रतिप्रयोगादप्यन्यथाख्यतिसाधकानुमानस्य निषेधः शक्यवचनः । किञ्चन्यथाख्याति-

**अथ वा किमनेन बहुनोपपादनप्रकारेण। प्रत्यक्षानुमानागमाख्यं प्रमाणजातमागमगम्यं च निरस्त-निखिलदोषगन्धमनवधिकातिशयासङ्ख्येयकल्याणगुणगणं सर्वज्ञं सत्यसङ्कल्पं परं ब्रह्माभ्युपगच्छतां किं न सेत्स्यति? किं नोपपद्यते? भगवता हि परेण ब्रह्मणाक्षेत्रज्ञपुण्यपापानुगुणं तद्भोग्यत्वायाखिलं जगत्सृजता सुखदुःखोपेक्षाफलानुभवानुभाव्याः पदार्थाः सर्वसाधारणानुभव विषयाः, केचन तत्तत्पुरुषमात्रानुभवविषयाः तत्तत्कालावसानाः तथातथाऽनुभाव्याः सृज्यन्ते। तत्र बाध्यबाधकभावः सर्वानुभवविषयतया तद्रहिततया चोपपद्यत इति सर्वं समञ्जसम्॥**

---

वादिना असत्ख्यातिपक्षः कथं दूष्यते। त्वन्मतेप्यंशेऽसत्ख्यातिवादस्याङ्गीकार्यत्वात्। न चान्यथाख्यातिवादेऽधिष्ठानस्य सत्यत्वं रजतस्य रजतत्वस्य चान्यत्र प्रसिद्धिश्चास्तीति कथं तदारोपेऽत्यन्तासत्ख्यातिरिति वाच्यम्। शुक्तिशकले रजततादात्म्यस्य रजतसंसर्गस्य वा तत्रान्यत्रचासिद्धिरस्ति। इदमेव हि निषेध्यं रजतं नेत्यनेन। इत्थञ्चास्यैव ख्याति-विषयत्वादत्यन्तासत्ख्यातेस्त्वयाप्यङ्गीकार्यत्वात्। इदं सह्यमिति चेदिदमेव दूषणं भवताम्। अत्यथाख्यातिं विनैव निर्वाहसम्भवे एतदाश्रयणं गौरवपराहतम्।

ननु ख्यात्यन्तरवादिनां...सुदूरं गत्वाप्यन्यथाख्यातिरवर्जनीयेति भाष्ये कथनादन्यथाख्यातिर्भाष्यकाराभिमतेति प्रतीयत इति चेदाशयानभिज्ञानां चोद्यमिदम्। अन्यथाख्यातिरित्यस्यान्यथाऽवगतिरित्यर्थः। अन्यथावभास इति यावत्। अवभासो विषयता। इदं रजतमित्यत्र शुक्तिनिष्ठा विषयता, अन्यथाऽन्यप्रकारिका, अन्यनिष्ठविषयत्वनिरूपिते-त्यर्थः। भ्रमात्मकं ज्ञानं हि ज्ञानद्वयमस्माकम्। ज्ञानद्वयीयविषयतयोः निरूप्यनिरूपकभावोपि स्वीकृतः। ज्ञानद्वयं चेत् कथमेकं ज्ञानमिति व्यवहार इति चेद्विशिष्टविषयतायां विद्यमानस्यैकत्वस्य ज्ञानेऽवगाहनादुपपन्नम्, एवं तत्तद्भ्रमस्थलेषु तत्तत्प्रकारमवलम्ब्य ज्ञानस्य यथार्थत्वनिर्वाहः कृतः। अथैकेनैवोक्तप्रकारेण सर्वत्र निर्वाहं कर्तुकामः तदुपयुक्तमुपोद्धातं प्रदर्शयति - **अथ वेति**।

**अथ** वेति भाष्यपाठः क्वाचित्क इत्याभिप्रयन्ति केचित्। प्राचीनव्याख्यातृभिरादृतत्वाद्भाष्यपाठ इत्येव मन्तव्यम्। प्रत्यक्षानुमानागममं प्रमाणजातमित्युक्तिः प्रामाणिकानां वक्ष्यमाणार्थे विवादकरणमनुपपन्नमिति सूचनाय। ब्रह्मण आगम-गम्यत्वविशेषणदानं वक्ष्यमाणार्थस्याप्यागमगम्यत्वतौल्यस्फोरणाय। अत्रोभयलिङ्गत्वोक्तिः भ्रमविषयपदार्थस्य स्रष्टृत्वेऽपि ब्रह्मणो न तत्प्रयुक्तहानिसम्भव इति व्यक्तीकरणाय। क्षेत्रज्ञस्य रजतादिभ्रमोस्तीति ज्ञानसत्वे हि तत्सृष्टिसंभव इत्यत उक्तं **सर्वज्ञमिति**। ज्ञानेऽपि तत्सृष्टिप्रतिहतिः सम्भाव्येतेत्यत आह - **सत्यसङ्कल्पमिति**। उक्तविशेषणविशिष्टतयैवागम-गम्यत्वं ब्रह्मण इत्यभिप्रायः। **किं न सेत्स्यतीति** प्रमाणस्य सद्भावस्सूचितः। किं नोपपद्यत इत्युपपत्तिरुक्ता। प्रमाणोपपत्तीः प्रदर्शयति - **भगवतेति**। **अखिलजगत्सृजतेति**। इदं सर्वमसृजत इति श्रुतिरत्र विवक्षिता। भ्रमविषयपदार्थस्यापि सर्वान्तर्गतत्वेन तस्यापि सृज्यत्वमावश्यकमिति परमार्थत्वं तस्येति भावः।

भगवतो जगत्सृष्टिर्हि क्षेत्रज्ञपुण्यपापानुगुणा। अतः क्षेत्रज्ञस्य तत्कालमात्रानुभवहेतुभूतपुण्यपापसत्वे तदनुगणं रजतसर्पादिसृष्टिरावश्यकी। अत एव हि स्वाप्निकपदार्थानपि भगवान्सृजति। तत्र प्रदर्शिता च श्रुतिः। तद्वदत्रापि भ्रमविषयपादार्थसृष्टिस्वीकारे न बाधकं किञ्चित्। प्रत्युतोत्कर्ष एव ब्रह्मण इत्याशयः। पथिकभिक्ष्वादिदृष्टरजतादावुपेक्षा। भ्रमविषयपदार्थस्यापि सर्गे नेदं रजतं शुक्तिरेवेत्यनेन कथं बाध्यत्वमित्यत्रास्मिन्नपि कल्पे बाध्यबाधकभावं व्यवस्थापयति - **तत्रेति**। अयं भावः - नेदं रजतमित्युत्तरकालीनस्य बाधज्ञानस्य चिरकालस्थायिपुरूषानुभाव्यरजतभेदावगाहित्वात् प्रतिबन्धकत्वम्। इदं रजतमिति पूर्वोत्पन्न ज्ञानस्य तत्कालमात्रावसानवत्पुरुषमात्रानुभाव्यरजतावगाहित्वात्प्रतिबध्यत्वम्।

**यत्पुनः सदसदनिर्वचनीयमज्ञानं श्रुतिसिद्धमिति - तदसत् ;** (छा.८.३.२.) **'अनृतेन हि प्रत्यूढा' इत्यादिष्वनृतशब्दस्यानिर्वचनीयानभिधायित्वात् । ऋतेतरविषयो ह्यनृतशब्दः ।**

येन येन प्रकारेण पुरुषस्य भ्रमो भवति तेन प्रकारेण तत्कालमात्रावसानस्य तत्पुरुषमात्रानुभाव्यस्य पदार्थस्य सृष्टेरत्र कल्पेऽभिप्रेतत्वादिति भावः ॥

न च पुरुषभ्रमानन्तरमेव तं ज्ञात्वा तदनुगुणं भगवत्सृष्टिः । सृष्ट्यनन्तरमेव च भ्रमः । अन्यथाविषयस्यैवाभावेन पूर्वं ज्ञानस्य यथार्थत्वनिर्वाहासम्भवादित्यन्योन्याश्रय इति वाच्यम् । सृष्ट्यनन्तरमेव भ्रमोत्पत्तेस्स्वीकारात् । सर्वज्ञस्य ब्रह्मण एवमस्य जीवस्य भ्रमो भवतीति पूर्वमेव ज्ञानसम्भवेन तदनुगुणं पूर्वसृष्टिसम्भवात् । ननु भ्रमविषयपदार्थसृष्टि-स्वीकारे भगवान्भ्रान्त इति कस्यचिद्भ्रमे जाते भगवतोऽपि भ्रान्तत्वसृष्ट्या तस्य भ्रान्तत्वापत्तिः । एवं हेयास्पदं ब्रह्मेति कस्यचिद्भ्रमे जाते तदनुगुणं स्वस्मिन्हेयसृष्टेरावश्यकतया हेयप्रत्यनीकत्वं ब्रह्मणो न स्यात् । एवं जगज्जन्मादिकारणं प्रधानमिति कस्यचिद्भ्रमे प्रधानेऽपि तादृशकारणत्वस्य सृष्ट्यावश्यकतया ब्रह्मलक्षणस्य तस्य प्रधानेऽतिव्याप्तिः । जगज्जन्मादिहेतुत्वस्यासाधारणलक्षणत्वेन हेतूकरणे साध्यशून्ये प्रधानादौ हेतुभ्रमे तादृशहेतोः साध्याभाववद्वृतित्वेन व्याभिचारश्चेत्यप्रतिष्ठितोऽयं कल्प इति चेदत्र प्राहुः - भ्रमविषयपदार्थसृष्टिस्वीकारेऽपि भगवान् भ्रान्त इति भ्रमानुरोधेन भ्रान्तित्वविशिष्टस्यान्यस्य भगवत एव सृष्टिस्वीकारेणानाद्यनन्तभूतस्य पुरुषोत्तमस्य भ्रान्तत्वापादनं न सम्भवति । एवं हेयास्पदं ब्रह्मेत्यादावपि । लक्ष्यभिन्नभ्रमाविषयवृत्तित्वस्यैवातिव्याप्तिरूपत्वात् लक्ष्याभिन्ने भ्रमविषये प्रधानादौ जगज्जन्मादिहेतुत्वसत्वेऽपि न क्षतिः । साध्याभाववत्ब्रह्माविषयवृत्तित्वस्यैव व्यभिचाररूपत्वेन साध्याभाववति भ्रमविषये हेतोस्सत्वेऽपि न क्षतिरिति ।

वस्तुतो भ्रमस्थले भ्रमविषयपदार्थसृष्टिः स्वाप्निकसृष्टिवत्प्रत्यक्षविषयपदार्थस्यैव । न तु परोक्षविषयपदार्थ-स्यापीत्यभिप्रायः । प्रत्यक्षस्थले साक्षात्कारोमीत्यनुव्यवसायबलेन सन्निकर्षघटनाय तथासृष्टिस्वीकारेऽपि परोक्षे तदनङ्गी-कारात् । तत्र तु परोक्षात्मकज्ञानद्वयाङ्गीकारेणैव ज्ञानस्य याथार्थ्यनिर्वाहात् । एतेन - भ्रमविषयस्य स्वाप्निकार्थस्य सृष्टिस्वीकारे सदसद्विलक्षणत्वादिरूपमिथ्यात्वस्य भ्रमे स्वप्ने वा जाते तद्विशिष्टधर्मिसृष्टया मिथ्यात्वसाधकदृश्यत्वाद्य-नुमानस्य दृष्टान्तसौलभ्यादप्रसिद्धविशिषणत्वाभिधानमसङ्गतमित्यादि चोद्यानि परिहृतानीति ॥

ननु वृश्चिकभिया पलायमानस्याशीर्विषमुखे निपात इतिवद्भवतां प्रक्रिया । भ्रमस्थले अनिर्वचनीयरजतोत्पत्तिं निषिध्य स्वप्ने भ्रमस्थले चापूर्वरजतादिसृष्टिकल्पनम् । अनिर्वचनीयवस्तूत्पत्यङ्गीकारे किं बाधक म् । भवद्भिरपि हि अपूर्ववस्तूत्पत्तिरिष्यते । उत्पन्नं वस्तु अनिर्वचनीयमिति वयमभिदध्महे, यूयं तत्कालानुभाव्यमपूर्वं वस्त्विति । नाम्नि परं विपर्यास इति चेच्छृणु । वयन्तूत्पन्नस्य वस्तुनः परमार्थत्वमुशामः भवन्तस्तु मिथ्यात्वम् । जागर इव तत्तज्जीवीय-कर्मानुगुणं भगवता सर्वज्ञेन सृज्यत्वं, भवद्भिरविद्योपादानकत्वम् । अस्माभिः सत्यत्वं, भवद्भिः सदसद्विलक्षणत्वमित्येव-मादिबहुवैषम्यमस्त्यावयोरिति वेदितव्यम् ॥

यत्पुनरविद्याया अवश्याभ्युपगमनीयत्वे 'अनृतेन हि प्रत्यूढा' इति श्रुतिरेव प्रमाणमिति तदनूद्यदूषयति - **यदिति** । **अनिर्वचनीयानभिधायित्वादिति** । पूर्वमनिर्वचनीयवस्तुनोऽप्रामाणिकत्वेन निरस्तत्वात्, तत्र व्युत्पत्त्यसम्भ-वादिति भावः । तर्हि कुत्र व्युत्पत्तिरित्यत्राह - **ऋतेतरविषय** इति । यद्यपि 'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिता' इति नञः षडर्थास्सन्ति । अथाप्यत्र तदन्यत्वार्थकत्वमेव सम्भावितम् । इतरन्न सम्भवितम् । ज्ञानरूपब्रह्मण अज्ञाननाशकत्वाङ्गीकारेण विनाश्यविनाशकभावलक्षणविरोधित्वस्य ब्रह्मज्ञानयो-स्सत्त्वादनृतपदस्य ऋतविरोधिपरत्वे तस्य ब्रह्माश्रयत्वमनुपपन्नम् । ऋताभावपरत्वे तु भवदभिमतभावरूपाज्ञानासिद्धिः

**ऋतमिति कर्मवाचि;** (कठ.१.३.१.) **'ऋतं पिवन्तौ' इति वचनात्। ऋतं = कर्मफलाभिसन्धिरहितं परमपुरुषाराधनवेषं तत्प्राप्तिफलम्। अत्र त(अतस्त)द्व्यतिरिक्तं सांसारिकफलं कर्मानृतम्, ब्रह्मप्राप्तिविरोधि;** (छा.८.३.१.) **'एतं ब्रह्मलोकं न विन्दन्ति; अनृतेन हि प्रत्यूढा' इति वचनात्॥**

(यजु.२.८.९.) **'नासदासीन्नो सदासीत्तदानीम्' इत्यत्रापि सदसच्छब्दौ चिदचिद्व्यष्टिविषयौ; उत्पत्तिवेलायां सत्त्यच्छब्दाभिहितयोश्चिदचिद्व्यष्टिभूतयोर्वस्तुनोरप्ययकालेऽचि(चिदचि)त्समष्टिभूते तमश्शब्दाभिधेये वस्तुनि प्रलयप्रतिपादनपरत्वादस्य वाक्यस्य। नात्र कस्यचित्सदसदनिर्वचनीयतोच्यते; सदसतोः**

---

सादृश्यादिकन्तु भवतामप्यनभिमतम्। अतः परिशेषेण ऋतेतरविषयकत्वमेवेति भावः। अनृतशब्दघटकऋतशब्दार्थमाह - **ऋतमिति**। **कर्मवाचि** - भगवत्प्राप्तिफलककर्मवाचीत्यर्थः। श्रुतिसंवादं दर्शयति - **ऋतं पिबन्ताविति**। 'ऋतं पिबन्तौ सुकृतस्य लोके' इति वचनादत्यन्तातिशयितफलप्राप्तिफलकसुकृतकर्मैव ऋतशब्दवाच्यं भवतीति भावः। श्रुतिघटकं ऋतशब्दार्थमाह - **ऋतं कर्मेति**। स्वर्गादिफलाभिसन्ध्याऽनुष्ठीयमानकर्मणो मोक्षविरोधिफलजनकत्वेन मोक्षविरोधित्वाद्ब्रह्मप्राप्तिकामस्य दुष्कृतवत्पापकोटिनिवेशात् 'न सुकृतं न दुष्कृतं सर्वे पाप्मान' इति तस्मिन् पापशब्दप्रयोगाच्च फलाभिसन्धिरहितं कर्मैवात्र ऋतशब्दवाच्यत्वेनाङ्गीकार्यमिति भावः।

एवं ऋतशब्दस्य ब्रह्मप्राप्तिफलककर्मपरत्वेऽनृतशब्दस्तद्व्यतिरिक्तस्य सांसारिकफलकस्य ब्रह्मप्राप्तिविरोधिनः कर्मणो वाचक इत्यर्थादुक्तं भवति। प्रकरणस्वारस्यादपि तदर्थकत्वमेवोचितमित्याह - **अत्रेति**। 'तद्यथेह हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तोऽपि न निन्देयुः एवमेवेमाः सर्वाः प्रजाः अहरहर्गच्छन्त्यो एतं ब्रह्मलोकं न विन्दति अनृतेन हि प्रत्यूढा' इति हि श्रुतिवाक्यम्। यत इमाः प्रजा अनृतेन ब्रह्मप्राप्तिविरोधिकर्मणा प्रत्यूढा अतस्तेन ब्रह्मरूपफलं न विन्दन्तीत्यर्थः। संसारिकफलकर्मणां ब्रह्मप्राप्तिविरोधित्वं चान्यत्रापि श्रुतमिति यथोक्त एवार्थः। प्रत्यूढा इत्यत्र पाशाधिकरणन्यायेन बहुत्वस्याविवक्षितत्वमस्माकं नास्ति इति। एवमनृतेन हि प्रत्यूढा इति श्रुत्युक्तानृतशब्दव्याख्यानेन 'तेषां सत्यानां सतामनृतमपिधानम्' इति श्रुत्युक्तानृतशब्दोऽपि व्याख्यातः॥

अथ 'नासदासीत्' इति श्रुतेः सदसदनिर्वचनीयवस्तुबोधकत्वं व्युदस्यति - **नासदिति**। सदसच्छब्दयोरर्थमाह - **सदिति**। तथा च प्रलयकाले चिद्व्यष्टिः अचिद्व्यष्टिश्च नास्ति। केवलं तमश्शब्दवाच्यसूक्ष्मप्रकृतिरेवास्तीति वाक्यतात्पर्यमिति भावः। तत्र हेतुमाह - **उत्पन्नेति**। उत्पन्नस्यैव स्वकारणे लयसम्भवाच्चिदचिद्व्यष्ट्युत्पत्तेः श्रुतिसिद्धत्वाच्चात्र लयप्रतियोगित्वेनोक्तौ सदसच्छब्दवाच्यौ चेतनाचेतनव्यष्टिविषयावेवेति भावः। **सत्यशब्दाभिहितयोरिति**। सच्च त्यच्चाभवदित्यत्र कार्यावस्थचेतनस्य सच्छब्देन कार्यावस्थाचेतनस्य त्यच्छब्देन चोक्तत्वात्तदैककण्ठ्यायात्रापि सच्छब्देन तदन्यवाचकासच्छब्देन च कार्यावस्थचेतनयोरेव बोधनं युक्तमिति भावः। **अचित्समष्टिभूते तमश्शब्दाभिधेये वस्तुनीति**। यद्यपि चिदचिद्व्यष्ट्योरचित्समष्टिभूतायां प्रकृतौ लयो न भवति। तस्याश्चिव्द्यष्टिहेतुत्वाभावात्। अथापि सूक्ष्मचिदचिच्छरीरकपरमात्मन्येव लयप्रतिपादने तात्पर्यमिति न विरोधः। वस्तुतो नासदासीदिति श्रुतिपर्यालोचनेऽपि नानिवर्चनीयवस्तुप्रतीतिरित्याह - **नात्रेति**। हेतुमाह - **सदसतोरिति**।

अयं भावः - प्रलयकाले सत् नास्ति, असन्नास्तीत्युक्तं, न तु सदसद्विलक्षणं किंचिदस्तीत्युक्तम्। उक्तवाक्यात् सदसतो र्निषेध एव हि फलति। अन्यथा 'अनादि मत्परं ब्रह्म न सत्तन्नासदुच्यत' इति प्रमाणबलादपि सदसदनिर्वचनीयब्रह्मणः सिद्ध्यापत्तिः। यदि सदसदनिर्वचनीयत्वं ब्रह्मणोऽप्रामाणिकमिति तद्वाक्यमन्यथा क्रियते। तर्हि सदसदनिर्वचनीयवस्तुन एवाप्रामाणिकत्वस्योपवर्णितत्वादिदमपि वाक्यं न सदसद्विलक्षणवस्तुप्रतिपादनक्षममिति विभावयेति।

**कालविशेषेऽसद्भावमात्रवचनात्। अत्र तमश्शब्दाभिहितस्याचित्समष्टित्वं श्रुत्यन्तरादवगम्यते,** (सुबाल.२.) **'अव्यक्तमक्षरे लीयते। अक्षरं तमसि लीयते' इति ॥**

**सत्यं तमश्शब्देनाचित्समष्टिरूपायाः प्रकृतेः सूक्ष्मावस्थोच्यते। तस्यास्तु,** (श्वे.४.१०) **'मायां तु प्रकृतिं विद्यात्' इति मायाशब्देनाभिधानादनिर्वचनीयत्वमिति चेत् - नैतदेवम्; मायाशब्दस्यानिर्वचनीयवाचित्वं न दृष्टमिति। मायाशब्दस्य मिथ्यापर्यायत्वेनानिर्वचनीयवाचित्वमिति चेत् - तदपि नास्ति। न हि सर्वत्र मायाशब्दो मिथ्याविषयः; आसुरराक्षसास्त्रादिषु सत्येष्वेव मायाशब्दप्रयोगात्। यथोक्तम् -** (वि.पु.१. १९.२०.) **'तेन मायासहस्रं तत् शम्बरस्याऽऽशुगामिना। बालस्य रक्षता देहमैकैकश्येन सूदितम् ॥' इति। अतो मायाशब्दो विचित्रार्थसर्गकराभिधायी। प्रकृतेश्च मायाशब्दाभिधानं विचित्रार्थसर्गकरत्वादेव।** (श्वे.४.९.) **'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः' इति, मायाशब्दवाच्यायाः प्रकृतेर्विचित्रार्थ-सर्गकरत्वं दर्शयति। परमपुरुषस्य च तद्वत्तामात्रेण मायित्वमुच्यते; नाज्ञत्वेन। जीवस्यैव हि मायया निरोधः श्रूयते, 'तस्मिंश्चान्यो मायया सन्निरुद्धः' इति; 'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते'** (गौड.का.) **इति च।** (बृ.४.६.१९.) **'इन्द्रो मायाभिः पुरुरूप ईयते' इत्यत्रापि विचित्राः शक्तयोऽभिधीयन्ते। अत एव हि**

तमसोऽचित्समष्टित्वं श्रुत्यन्तरादप्यवसीयत इति दर्शयति - **अत्रेति** ॥

ननु तमश्शब्देन भवदभिमतायाः प्रकृतेस्सूक्ष्मावस्थैवोच्यते। परन्तु सैव माया 'मायान्तु प्रकृतिं विद्यात्' इति प्रकृते मर्यायात्वरूपानिर्वचनीयत्वविधानात्। ततश्चानिर्वचनीयवस्तुसिद्धिरिति शङ्कते - **सत्यमिति**। दूषयति - **नैतदेवमिति**। अत्र मायां तु प्रकृतिं विद्यादित्यत्र मायानुवादेन प्रकृतित्वविधान एव वाक्यस्वारस्यं प्रकृतिशब्दस्य 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादि'त्यादिषूपादानवाचकत्वेन 'अस्मान्मायी सृजते विश्वमेत'दित्युक्तमायाया उपादानत्वसम्भवात्। न तु दृश्यविधेयभावविपरिणामे वाक्यस्वारस्यमिति दूषणं स्फष्टमित्युपेक्षितम्। ऐन्द्रजालिकादिषु मयाशब्दप्रयोगदर्शनान्मायामिथ्याशब्दयोः पर्यायत्वादनिर्वाच्यस्य मिथ्यात्वाच्च मायाशब्दस्यानिर्वचनीयवाचित्वं युक्तमेवेति शङ्कते - **मायाशब्दस्येति**। मायाशब्दस्य मिथ्यापर्यायत्वमेव न संभवतीति परिहरति - **तदपीति**। कुत इत्यत्राह - **आसुरेति**। सत्येषु मायाशब्दप्रयोगे प्रमाणं दर्शयति - **यथोक्तमिति**।

अत्र वचनेऽस्त्राणामेकैकशः छेद्यत्ववचनान्न मिथ्यावाची मायाशब्दः। मिथ्याभूतस्य च ज्ञानबाध्यस्य छेद्यत्वासम्भवेन सूदितमिति कथनस्यानुपपन्नत्वापातात्। अतो मायाशब्दस्याश्चर्यत्वमेव प्रवृत्तिनिमित्तम्। इदमेव सर्वत्रानुगतम्। ऐन्द्रजलिकादिष्वपि मायाविशब्दप्रयोग एतन्निबन्धन एव। अतो मिथ्यात्वस्याननुगतत्वात्सर्वप्रयोगसाधारण एवार्थो वक्तव्य इति आश्चर्यवाच्येव मायाशब्दः। एतदभिप्रेत्यैव 'न हि सर्वत्र मायाशब्दः मिथ्याविषय' इति पूर्वं भाषितम्। अनुगतमर्थं स्वयमाह - **अत इति**। **विचित्रेति**। आश्चर्यत्वं विस्मयनीयत्वम्। इदमेव तच्छब्दप्रवृत्तिनिमित्तम्। तत्र हेतुः विचित्रार्थसर्गकरत्वम्। एतेन न मायाशब्दो ह्याश्चर्यवाचीति सन्ध्याधिकरणभाष्यविरोध इति बोध्यम्। एवं प्रकृतौ नानाविधार्थसर्गकरत्वान्मायाशब्दप्रयोगः पुष्कल इत्याह - **प्रकृतेश्चेति**। प्रकृतेर्विचित्रार्थसर्गकरत्वे श्रुतिं दर्शयति - **अस्मादिति**। उदाहृतश्रुतिघटकमायीशब्दस्यार्थमाह - **परमपुरुषस्येति**। **मायित्वं** = मायाशेषित्वम्। न तु जीवस्येव ब्रह्मणोऽपि मायातिरोधेयत्वम्। तस्मिंश्चान्यो मायया सन्निरुद्ध इति ब्रह्मान्यस्यैव मायातिरोधानश्रवणात्। मायया जीवस्यैव तिरोधानमित्यत्र श्रुत्यन्तरं प्रमाणयति - **अनादीति**। एवम् 'इन्द्रो मायाभि'रित्यत्रापि न मायाशब्दोऽनिर्वचनीयवाचकः। किन्तु विचित्रशक्तिवाचक एवेत्याह - **इन्द्र इति**। त्वदभिमताविद्याया एकत्वाद्बहुवचनश्चानुपपन्नमिति भावः।

(१...) **'भूरि त्वष्टेव राजति' इत्युच्यते । न हि मिथ्याभिभूतः कश्चिद्विराजते ।** (गी.७.१४.) **'मम माया दुरत्यया' इत्यत्रापि गुणमयीति वचनात्सैव त्रिगुणात्मिका प्रकृतिरुच्यत इति न श्रुतिभिः सदसदनिर्वचनीयाज्ञानप्रतिपादनम् ॥**

**नाप्यैक्योपदेशानुपपत्त्या । न हि, 'तत्त्वमसि' इति जीवपरयोरैक्योपदेशे सदि सर्वज्ञे सत्यसङ्कल्पे सकलजगत्सर्गस्थितिविनाशहेतुभूते तच्छब्दावगते प्रकृते ब्रह्मणि विरुद्धाज्ञानपरिकल्पनाहेतुभूता काचिदप्यनुपपत्ति दृश्यते । ऐक्योपदेशस्तु 'त्वं'शब्देनापि जीवशरीरकस्य ब्रह्मण एवाभिधानादुपपन्नतरः ।** (छा.६.३.२.) **'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति सर्वस्य वस्तुनः परमात्मपर्यन्तस्यैव हि नामरूपभाक्त्वमुक्तम् । अतो न ब्रह्माज्ञानपरिकल्पनम् ॥**

**इतिहासपुराणयोरपि न ब्रह्माज्ञानवादः क्वचिदपि दृश्यते । ननु** (वि.२.१२.) **'ज्योतींषि विष्णुः' इति**

---

**भूरीति** - तादृशशक्तिमत्वादेव निकामं प्रकाशमानत्वम् । न त्वविद्यावत्वात् । अविद्यावतः प्रकाशमानत्वासम्भवादिति भावः । एवं 'मम माया दुरत्यया इत्यनया स्मृत्यापि नानिवर्चनीयसिद्धिरित्याह - **ममेति** । **गुणमयीति** - 'दैवी ह्येषा गुणमयी मम माया दुरत्यया' इति हि तद्वचनम् । सत्वरजस्तमप्रचुरत्वरूपगुणमयत्वं हि न भवदभिमतानिर्वचनीयाया अविद्याया भवद्भिङ्गीक्रियते । अतः त्रिगुणात्मकत्वेनास्मदभिमतप्रकृतिरेव तत्रापि मायाशब्दवाच्या । अन्यथा व्याहतार्थबोधकत्वेन, तत्स्मृतेरेवाप्रामात्यापत्तेः । **श्रुतिभिरिति** स्मृतिसहिताभिः श्रुतिभिरित्यर्थः । अन्यथा मम माया दुरत्ययेति स्मृत्युपादानस्यासङ्गत्यापत्तेः । यद्वा गीतास्मृतेर्भगवन्मुखाम्भोजादागतत्वेनेतरस्मृत्यपेक्षयाऽतिवैलक्ष्यण्याच्छ्रुतित्वानुसन्धानमिति ।

ननु मिथ्याभूतविषयेष्वपि मायाशब्दः प्रयुज्यते ? सत्यम् । अथापि स लाक्षणिक एव । अर्थस्य सत्यत्वे ह्याश्चर्यत्वसम्भवः । अतस्सत्यभूतार्थसम्बन्धानमिथ्याभूतेषु मायाशब्दप्रयोग इति लाक्षणिकत्वं सिद्धमिति । अथानिर्वचनीयसिद्धौ श्रुत्यर्थापत्तिं दूषयति - **नापीति** । अत्र सर्वज्ञे ... तच्छब्दावगतेः इत्युक्तिः श्रुतगुणपरित्यागस्यान्यायत्वसूचनार्थम् । अन्यथा समानविभक्तिश्रुतिसिद्धैक्यस्यापि परित्यागः स्यादिति भावः । **विरुद्धाज्ञानेति** । कल्प्यमानेनापि ह्यविरुद्धेन भवितव्यम् । विरुद्धधर्मास्पदयोरुभयोरैक्यासम्भवपरिहाराय हि धर्मणां कल्पकमज्ञानं परिकल्प्यते । तदपि ब्रह्मणि स्वयं ज्योतिषि निवर्तके विरुद्धमेवेति भावः ।

ननु कथमनुपपत्यदर्शनं दृश्यते ह्यैक्योपदेशः । न हि सर्वज्ञत्वादिविशिष्टब्रह्मणा तद्विपरीताकारविशिष्टजीवस्यैक्यसम्भव इत्यत्राह - **ऐक्योपदेशस्त्विति** । तत्त्वंपदयोरुभयोरपि विशिष्टपरमात्मपरत्वेन नैक्यविरोधः । सर्वज्ञत्वादीनां परमात्मन्यन्वयः । हेयसंबन्धस्तु जीवद्वारकः । अतो न विरोधः । एवं वाक्यार्थे सत्येव न समानविभक्तिश्रुतिसिद्धैक्यपरित्यागः । नापि श्रुतबहुगुणपरित्यागोऽपीति भावः । ननु जीववाचिना त्वंशब्देन तच्छरीरपरब्रह्माभिधानं लक्षणयेति चेत्तुल्य एव दोष इत्यत्र मुख्यमेव तदभिधानमित्याह - **अनेनेति** । श्रुत्यर्थः भाष्यकृतैव वक्ष्यते । उपसंहरति - **अत** इति । एवं श्रुतितदर्थापत्तिभ्यामज्ञानसिद्धिर्न भवतीत्यभिधाय - अथेतिहासपुराणाभ्यामपि नाज्ञानसिद्धिरित्याह - **इतिहासेति** । अभ्यर्हितत्वात्पूर्वनिपातः । शङ्कते - **नन्विति** ॥

ज्योतींषि विष्णु र्भुवनानि विष्णु र्वनानि विष्णु र्गिरयो दिशश्च । नद्यस्समुद्राश्च स एव सर्वं यदस्ति यन्नास्ति च विप्रवर्य ॥
ज्ञानस्वरूपो भगवान्यतोऽसावशेषमूर्तिर्न तु वस्तुभूतः । ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि ॥

**ब्रह्मैकमेव तत्त्वमिति प्रतिज्ञाय, 'ज्ञानस्वरूपो भगवान् यतोऽसौ' इति शैलाब्धिधरादिभेदभिन्नस्य जगतो ज्ञानैकस्वरूपब्रह्माज्ञानविजृम्भितत्वमभिधाय, 'यदा तु शुद्धं निजरूपि' इति ज्ञानस्वरूपस्यैव ब्रह्मणः स्वस्वरूपावस्थितिवेलायां वस्तुभेदाभाव(प्र)दर्शनेनाज्ञानविजृम्भितत्वमेव स्थिरीकृत्य, 'वस्त्वस्ति किम्', 'मही घटत्वम्' इति श्लोकद्वयेन जगदुपलब्धिप्रकारेणापि वस्तुभेदानामसत्यत्वमुपपाद्य, 'तस्मान्न विज्ञानमृते' इति प्रतिज्ञातं ब्रह्मव्यतिरिक्तस्यासत्यत्वमुपसंहृत्य, 'विज्ञानमेकम्' इति ज्ञानस्वरूपे ब्रह्मणि भेददर्शननिमि-**

---

यदा तु शुद्धं निजरूपि सर्वकर्मक्षये ज्ञानमपास्तदोषम् । तदा हि सङ्कल्पतरोः फलानि भवन्ति नो वस्तुषु वस्तुभेदाः ॥
वस्त्वस्ति किं कुत्रचिदादिमध्यपर्यन्तहीनं सततैकरूपम् । यच्चान्यथात्वं द्विज याति भूयो न तत्तथा तत्र कुतो हि तत्त्वम् ॥
मही घटत्वं घटतः कपालिका कापालिका चूर्णरजस्ततोऽणुः । जनैस्स्वकर्मस्तिमितात्मनिश्चयैरालक्ष्यते ब्रूहि किमत्र वस्तु ॥
तस्मान्न विज्ञानमृतेऽस्ति किञ्चित्क्वचित्कदाचित् द्विज वस्तुजातम् । विज्ञानमेकं निजकर्मभेदविभिन्नचित्तैर्बहुधाभ्युपेतम् ॥
ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम् । एकं सदैकं परमः परेशः स वासुदेवो न यतोऽन्यदस्ति ॥
सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत् । एतत्तु यत्संव्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं ते ॥

इति श्लोकक्रमः । अत्र सर्वेऽपि श्लोका ब्रह्मपरा इत्यद्वैतिनः । अत्र प्राथमिकश्लोको ब्रह्मपरः । अन्ये तच्छरीरचेतनाचेतनपरा इति सिद्धान्तः । **ब्रह्मैकमेव तत्त्वमिति प्रतिज्ञायेति** । जडभूतानामजडेन ब्रह्मणा स्वरूपैक्यासम्भवात् । ज्योतींषि विष्णुरित्यादिकं बाधार्थसामानाधिकरण्यमेव । अत एवोत्तरत्र ब्रह्मव्यतिरिक्तस्य मिथ्यात्वं प्रतिपाद्यते । ततश्च सामानाधिकरण्यस्य बाधार्थत्वे ज्योतिरादिपदानां निवृत्तौ लक्षणेति ब्रह्मैकमेव तत्वमिति सामानाधिकरण्येन प्रतिज्ञातं भवतीति भावः ।

ननु ब्रह्मण एकस्यैव पदार्थत्वे कथमुपलभ्यमानस्य शैलादिभेदस्य निर्वाह इत्यत्राह - **ज्ञानस्वरूप इति** । विज्ञानविजृम्भितानीत्यत्र विज्ञानशब्दो विविधं विपरीतं वा ज्ञायते अनेनेति व्युत्पत्या अविद्यापरः । न तु विज्ञानमेकमित्यत्रेव ज्ञानरूपकर्मपरः । तथा सति यदा तु शुद्धमिति श्लोकस्यासङ्गतत्वापातात् । तत्र ह्यज्ञानाभावे प्रपञ्चाभावः प्रतिपाद्यते । ब्रह्मपरत्वे तु प्रपञ्चस्य ब्रह्मविजृम्भितत्वस्य वक्तव्यतया ब्रह्मणस्सर्वदासत्त्वे तदव्यतिरेके प्रपञ्चव्यतिरेकप्रतिपादनानौचित्यप्रसङ्गात् । विज्ञानस्य विजृम्भणानि इत्यर्थः । यद्यपि विजृम्भणरूपधात्वर्थत्वं शैलादिभेदस्य न भवति । तथाप्यौपचारिकः प्रयोगः । न च विज्ञाने विजृम्भितानि कल्पितानीति स्वीकारे न औपचारिकत्वकल्पनमिति वाच्यम् । तथा सति भेदानिति विशेष्यानुसारेण विजृम्भितानित्येवरूपप्रसंगात् । अस्मत्पक्षे तु भावप्रत्ययान्तत्वात् 'नपुंसके भावे क्तः' इति नपुंसको युक्तः । ततश्च विजृम्भणरूपभावस्य कर्त्रपेक्षाया एव स्वरसतस्सम्भवात्षष्ठ्येव युक्ता । एवं ब्रह्मव्यतिरिक्त-स्याविद्यापरिकल्पितत्वं कण्ठत उक्तम् । अथ व्यतिरेकमुखेनापि स्थिरीकरोति - **यदा त्विति** । समन्तात्कल्प्यतेऽनेनेति सङ्कल्पो दोषः अविद्यारूपः । भवन्ति नो वस्तुषु वस्तुभेदा इत्युक्तेरिति भावः । वस्तुष्विति बहुत्वमविवक्षितम् । वस्तुनि = आत्मनि । वस्तुभेदाः - जडगतभेदाः सजातीयभेदाः । **वस्त्वस्ति किमिति** । अनेनार्थस्वभाव उक्तः । तत्र कुतो हि तत्त्वमिति वस्तुनो असत्यत्वप्रतिपादनात् । **मही घटत्वमिति** । अनेनोदाहरणं दर्शितम् । न केवलं विदितवेदार्थवेदान्तार्थनिश्चयैरेवासत्यत्वमुपलक्ष्यते । अपि तु जडैरपीत्याह - जनैस्स्वकर्मस्तिमितात्मनिश्चयैरिति । प्रतिबन्धककर्मवद्भिः आत्मनिश्चयशून्यैरपीत्यर्थः । किमुतात्मनिश्चयवतामिति भावः ।

यद्वा ननु वस्तुनस्सत्यत्वेन केषाञ्चिदुपलब्धिरस्तीत्यत्राह - जनैरिति । यथावस्थितात्मनिश्चयशून्यैरेव जनैस्तथोपलभ्यते । यथावस्थितब्रह्मस्वरूपज्ञानिभिस्तु न तथेत्यर्थः । **ब्रह्मव्यतिरिक्तस्यासत्यत्वमुपसंहृत्येति** । पूर्वश्लोकद्वयेन सजातीयविजातीययोरसत्यत्वमुपपादितम् । तच्चात्रोपसंहृतमिति भावः । भेददर्शननिमित्ताज्ञानमूलं निजकर्मैवेति बहुधा

**त्ताज्ञानमूलं निजकर्मैवेति स्फुटीकृत्य, 'ज्ञानं विशुद्धम्' इति ज्ञानस्वरूपस्य ब्रह्मणः स्वरूपं विशोध्य, 'सद्भाव एवं (षो) भवतो मयोक्त' इति, 'ज्ञानस्वरूपस्य ब्रह्मण एव सत्यत्वम्, नान्यस्य ; अन्यस्य चासत्यत्वमेव; तस्य भुवनादेः सत्यत्वं व्यावहारिकमिति तत्त्वं तवोपदिष्टम्' इति ह्युपदेशो दृश्यते ॥**

**नैतदेवम्। अत्र भुवनकोशस्य विस्तीर्णं स्वरूपमुक्त्वा, पूर्वमनुक्तं रूपान्तरम्,** (२.१२.३६.) **'सङ्क्षेपः श्रूयताम्' इत्यारभ्याभिधीयते। चिदचिन्मिश्रे जगति चिदंशो वाङ्मनसागोचरस्वसंवेद्यस्वरूपभेदो ज्ञानैकाकारतयाऽस्पृष्टप्राकृतभेदोऽविनाशित्वेनास्तिशब्दवाच्यः; अचिदंशस्तु चिदंशकर्मनिमित्तपरिणामभेदो विनाशीति नास्तिशब्दाभिधेयः; उभयं तु परब्रह्मभूतवासुदेवशरीरतया तदात्मकम् - इत्येतद्रूपं सङ्क्षेपेणात्राभि-**

---

अभ्युपेतं बहुधाज्ञातम्। गत्यर्थानां बुद्ध्यर्थत्वात्। ततश्च भेददर्शनमुक्तम्। निजकर्मभेदविभिन्नचित्तैः - निजकर्मभेदेन विभिन्नज्ञानवद्भिः। भेदज्ञानवद्भिरित्यर्थः। अत्र च भेदज्ञानं तद्धेतुभूताज्ञानपरम्। तत्राचाज्ञाने निजकर्महेतुरिति भावः। उत्तरश्लोकेन ज्ञानरूपं ब्रह्म शोधितमित्याह - **ज्ञानं विशुद्धमिति**। एकमिति सजातीयभेदनिषेधः। सदैकमिति विजातीयभेदनिषेधः। ततश्च सामान्यतो उक्तस्य निषेधस्यात्र विभज्य प्रदर्शनम्। नेदं परमतोपन्यासरूपम्। किन्तु तत्त्वार्थोपदेश एवायमित्याह - **सद्भाव इति**। **तत्रापि** = व्यावहारिकसत्यत्वेऽपि उक्तम् = अज्ञानमेव हेतुरित्युक्तम्। **भुवनाश्रितम्**। भुवनेनाधिष्ठानतया-ऽऽश्रितम्। यद्वा भुवनमाश्रितम्। प्रतिज्ञायेत्यादीनाम् इत्युपदेशो दृश्यत इत्यत्रान्वयः। **दृश्यते** = पुराणादिषु ब्रह्माज्ञानवादो दृश्यत एवेति। तत्र ब्रह्माज्ञानवादो न दृश्यत इति कथनमनुपपन्नमिति भावः॥

एवमुक्तं पूर्वपक्षं निरस्यति - **नैतदेवमिति**। एतत् - ब्रह्मणोऽविद्याश्रितत्वम्। ब्रह्मव्यतिरिक्तस्याज्ञानविजृम्भितत्वेनासत्यत्वं च न भवति। पूर्वोक्तविरोधादेवेति भावः। सर्वज्ञत्वादिगुणकस्याज्ञानादिप्रसक्तिविरोधरूपादविद्याया आश्रयतिरोधानानुपपत्तिविरोधरूपाच्चार्थविरोधात्। असत्यस्य प्रपञ्चस्य विस्तरेण प्रतिपादनवैयर्थ्यरूपात्प्रकरणविरोधाच्छास्त्रतात्पर्यविरोधात्। प्रपञ्चधर्मिग्राहकप्रमाणविरोधान्नैवं संभवतीत्याशयः। श्रुतेः सविशेषवस्तुपरत्वस्य पूर्वमुपपादितत्वेन स्मृत्या तद्विरुद्धार्थप्रतिपादनासंभवात्। 'अशेषमूर्तिर्भगवान्' इत्यादिसविशेषबोधकपुराणवचनानां लाक्षणिकत्वकल्पनापत्तेश्च नाविद्याप्रपञ्चमिथ्यात्वकल्पनादिकं युक्तमिति भावः। तर्हि उदाहृतश्लोकेषु किं प्रतिपाद्यत इत्यत्राह - **अत्रेति**। **विस्तीर्णं स्वरूपमुक्त्वेति**। भुवनकोशस्य विस्तरेणपूर्वमुक्तत्वान्न मिथ्यात्वं वक्तुं शक्यम्। न हि भ्रान्तस्यैव भ्रमापादनं तत्त्ववित्कृत्यमिति भावः। वक्ष्यमाणसंक्षेपोऽयमित्यभिव्यक्त्यै - **पूर्वमनुक्तमिति**। आदिभरतचरितमेवोत्तरत्र विस्तरेण वक्ष्यते। तत्संक्षेप एवायम्। नतूक्तसंक्षेप इति भावः। रूपान्तरमित्येतत् 'एतद्रूपमित्युत्तरवाक्येन विवरिष्यते। सङ्क्षेपेण प्रतिपाद्यं रूपान्तरं मिथ्यात्वमेवेत्यत्र तन्नास्तीत्याह - **चिदिति**। वाङ्मनसेत्यादिकम् अगोचरं वचसामात्मसंवेद्यमित्यभिप्रेत्य। ज्ञानैकाकारतया अस्पृष्टप्राकृतभेद इत्येतत् 'ज्ञानं प्रत्यस्तमितभेदमित्यभिप्रेत्य। **अस्तिशब्दवाच्य इति**। अस्तिशब्दोऽविनाशित्वरूपप्रवृत्तिनिमित्तमादायैव चिदंशे प्रयुज्यत इति भावः। अचिदंशस्यैतद्विरुद्धाकारवत्वान्नास्तिशब्दाभिधेयत्वमित्याह - **अचिदंशस्त्विति**।

अयं भावः - असत्यशब्दवन्नास्तिशब्दो विनाशित्वं परिणामित्वं वा निमित्तीकृत्य चेतने प्रयुज्यते। अचेतनस्य पूर्वावस्थाप्रहाणेनोक्तरावस्थासत्वेनोत्तरावस्थायां पूर्वावस्थस्य वस्तुनोऽसत्वान्नास्तिशब्दप्रयोगस्य स्वरसत्वात्। एवं हि महीघटत्वमित्यत्रोपपाद्यते। एतेन सत्यशब्दवदस्तिशब्दस्य चेतने प्रयोगो ज्ञानैकाकारस्य चितः सर्वदा एकरूपत्वेन सत्वात्तन्निबन्धन इत्युक्तं भवति। अतो दशश्लोक्याम् अस्तिसत्यशब्दौ चेतनविषयौ नास्त्यसत्यशब्दौ अचिद्विषयौ इति भावः। उक्तस्य चेतनाचेतनस्य भगवच्छरीरत्वेन तदात्मकत्वमेव तत्रोच्यते इत्याह - **उभयं त्विति**। संसृष्टयो र्निष्कृष्टयो र्वा चेतनाचेतनयोः भगवच्छरीरत्वं शरीरत्वस्य निरूपाधिकतया स्वरूपप्रयुक्तत्वात्। अतो मनुष्यादिशरीराणां

**हितम् । तथाहि** - (वि.पु.२.१२.३७.) **'यदम्बु वैष्णवः कायस्ततो विप्र ! वसुन्धरा । पद्माकारा समुद्भूता पर्वताब्ध्यादिसम्युता ॥' इति, अम्बुनो विष्णोश्शरीरत्वेनाम्बुपरिणामभूतं ब्रह्माण्डमपि विष्णोः कायः तस्य च विष्णुरात्मेति सकलश्रुतिगततादात्म्योपदेशोपबृंहणरूपस्य सामानाधिकरण्यस्य 'ज्योतींषि विष्णुः' इत्यारभ्य वक्ष्यमाणस्य शरीरात्मभाव एव निबन्धनमित्याह । अस्मिन् शास्त्रे पूर्वमप्येतदसकृदुक्तम्** - (वि.१.२२.८६.३६.) **'तानि सर्वाणि तद्वपुः' 'तत्सर्वं वै हरेस्तनुः'**, (वि.१.२.६९.) **'स एव सर्वभूतात्मा विश्वरूपो यतोऽव्यय' इति । तदिदं शरीरात्मभावायत्तं तादात्म्यं सामानाधिकरण्येन व्यपदिशति(श्यते) 'ज्योतींषि विष्णुः' इति । अत्रास्त्यात्मकं नास्त्यात्मकञ्च जगदन्तर्गतं वस्तु विष्णोः कायतया विष्ण्वात्मकमित्युक्तम् ;**

---

सृष्टजीवं प्रति शरीरत्वं दृश्यते । न तु पिण्डावस्थायामपि, इति परमात्मानं प्रत्यपि चेतनाचेतनयोरवस्थाविशेष एव शरीरत्वम्, न तु सर्वावस्थायामपीति शङ्का निरस्ता ॥

उक्तमर्थमुपपादयितुं प्रतिजानीते - **तथा हीति** । अत्र ज्योतींषि विष्णुरिति श्लोकात्पूर्वं 'यदम्बुवैष्णवः कायस्ततो विप्र वसुन्धरा । पद्माकारा समुद्भूता पर्वतब्ध्यादिसम्युता ॥' इति श्लोकः । सद्भाव एवमितिश्लोकानन्तरं 'यज्ञः पशुर्वह्निरशेषऋत्विक् सोमस्सुरा स्वर्गमयश्च कामः । इत्यादि कर्माश्रितमार्गदृष्टं सुरादिभेदाश्च फलानि तेषाम्' इति श्लोकः । ततश्चास्यां दशश्लोक्यां शरीरात्मभावः प्रकृतिपुरुषविवेकश्च । तत्र भगवत्तदन्ययोः सामानाधिकरण्येन प्रयोगश्शरीरात्मभावनिबन्धन इत्येतत्प्रथमश्लोकेन स्पष्ट इति सूचनाय यदम्बु इति श्लोक उपात्तः । पर्वताब्ध्यादिसम्युतत्वं स्वरूपकीर्तनं, न तु विशिष्टस्योत्पत्तौ तात्पर्यम् । अद्भ्यः पृथिवीति पृथिव्याः एव तत उतपत्तिश्रुतेः पृथिव्युत्पत्तेः पूर्वं त्रिवृत्करणाद्यभावेन पर्वताब्ध्यादीनामुत्पत्त्यसम्भवाच्च । श्लोकाभिप्रेतमर्थमाह - **इति अम्बुन** इति । अम्बुनः कार्यत्वे तत्परिणामभूतस्यापि ब्रह्मकार्यत्वं वक्तव्यमिति भावः । **उपबृंहणरूपस्येति** । एतेन श्रुत्युक्तार्थस्यात्रोपबृंहितत्वात्तात्त्विकत्वं सूचितम् । सकलश्रुतिगततादात्म्योपदेशोपबृंहणरूपस्य ज्योतींषि विष्णुरिति वक्ष्यमाणस्य सामानाधिकरण्यस्य शरीरात्मभाव एव निबन्धनमित्यभिप्रेत्य 'यदम्बु' इति श्लोकेन ब्रह्माण्डं विष्णोः कायः तस्य च विष्णुरित्याहेत्यन्वयः । यद्यपि श्लोके ब्रह्माण्डस्य विष्णुकायत्वमेवोक्तं, न तु विपर्ययेण विष्णोः तदात्मत्वम्, अथापि तत्फलितमित्यभिप्रेत्योक्तम् ।

यद्वाऽनेन श्लोकेन तस्य विष्णुरात्मेति निश्चित्य तात्पर्यतो वक्ष्यमाणसामानाधिकरण्यस्य शरीरात्मभावो निबन्धनमित्याहेत्यन्वयः । न केवलमस्मिन् शास्त्रे अत्रैव प्रकरण इदमुक्तम् । परन्तु पूर्वमपीत्याह - **अस्मिन्शास्त्र** इति । समष्टिसृष्टिदशायां यदम्बु वैष्णवः काय इत्यनेन समष्टिवस्तुनो विष्णुकायत्वमुक्तमिति व्यष्टिसृष्टिदशायामपि विष्णुकायत्वं सर्वस्यावगतम् । तानि सर्वाणि तद्वपुरित्यादिना तु व्यष्टिदशायामपि विष्णुशरीरत्वं कण्ठत एवोक्तमिति भावः । सर्वभूतात्माविश्वरूप इत्युक्त्या शरीरात्मभाव एव सामानाधिकरण्यनिबन्धनमिति ज्ञायत इत्याशयः । एवञ्च सामानाधिकरण्यप्रयोगस्य शरीरात्मभावायत्तसामानाधिकरण्यनिबन्धनत्वात् ज्योतींषि विष्णुरित्यादिसामानाधिकरण्यव्यपदेश इत्याह - **तदिदमिति** ।

प्रधानतया श्लोकप्रतिपाद्यमर्थमाह - **अत्रेति** । श्लोके कानिचित्पदानि संसृष्टजीवपराणि । कानिचित्त्वचेतनपराणीति विवेकः । अत एव यदस्ति, यन्नास्ति इत्युच्यते । अस्तिशब्दः चित्परः नास्तिशब्दश्चाचित्पर इति पूर्वमेवोक्तम् । अत्राचेतनस्य संसृष्टचेतनस्य च भगवदात्मकत्वमुक्तम् । असंसृष्टचेतनस्य भगवदात्मकत्वं युक्त्यैव लब्धम् । ननु यदम्बु वैष्णव काय इत्यादिनाऽचेतनाया एव वसुन्धराया अद्भ्यः पृथिवीति प्रसिद्धायाः विष्णुकायत्वमुक्तमिति शरीरशरीरिभावनिबन्धनतादात्म्यसत्वेनाचेतनसामानाधिकरण्यव्यपदेशो युज्यते । न तु चेतनसामानाधिकरण्य-

**इदमस्त्यात्मकम्, इदं नास्त्यात्मकम्, अस्य च नास्त्यात्मकत्वे हेतुरयमित्याह, ज्ञानस्वरूपो भगवान् यतोऽसौ इति। अशेषक्षेत्रज्ञात्मनाऽवस्थितस्य भगवतो ज्ञानमेव स्वाभाविकं रूपम् ; न देवमनुष्यादिवस्तुरूपम्। यत एवम्, तत एवाचिद्रूपदेवमनुष्य(ष्याः)शैलाब्धिधरादयश्च तद्विज्ञानविजृम्भिताः = तस्य ज्ञानैकाकारस्य सतो देवाद्याकारेण स्वात्मवैविध्यानुसन्धानमूलाः ; देवाद्याकारानुसन्धानमूलकर्ममूला इत्यर्थः। यतश्चाचिद्वस्तु क्षेत्रज्ञकर्मानुगुणपरिणामास्पदम्, ततस्तन्नास्तिशब्दाभिधेयम्, इतरदस्तिशब्दाभिधेयमित्यर्थादुक्तं भवति।**

**तदेव विवृणोति - 'यदा तु शुद्धं निजरूपि' इति। यदैतज्ज्ञानैकाकारमात्मवस्तु देवाद्याकारेण स्वात्मनि वैविध्यानुसन्धानमूलसर्वकर्मक्षयान्निर्दोषं परिशुद्धं निजरूपि भवति, तदा देवाद्याकारेणैककृत्याऽऽत्मकल्पना-मूलकर्मफलभूतास्तद्भोगार्था वस्तुषु वस्तुभेदा न भवन्ति ये देवादिषु वस्तुष्वात्मतयाऽभिमतेषु भोग्यभूता**

---

व्यपदेशः तस्य पूर्वं शरीरत्वानुक्तेः। मैवम्। पर्वताब्ध्यादिसंयुता इत्युक्त्या पर्वतादिपदानां संसृष्टजीववाचित्वेन तस्यापि शरीरत्वस्योपपादितत्वात्। उत्तरश्लोकमवतारयति - **इदमिति**। नास्त्यात्मकत्वे हेतुरयमित्यन्यस्यास्यात्मकत्वे हेतुः फलिष्यतीति भावः। श्लोकार्थमाह - **अशेषक्षेत्रज्ञेति**। अशेषक्षेत्रज्ञात्मनावस्थितस्येत्यनेनाशेषमूर्तिरित्येतद्विवृतम्। अयमर्थः, श्लोके भगवच्छब्दो भगवच्छरीरपरः। तथा च क्षेत्रज्ञशरीरकस्य भगवतः शरीरभूतोऽसौ चेतनो यतो ज्ञान-स्वरूपः। न तु देवाद्यचिद्रूप इति। शरीरवाचकस्य शरीरिपर्यन्तत्ववच्छरीरिवाचकस्य शरीरबोधकत्वसम्भवात्। अत एव - 'एकं सदैकं परमः परेशः स वासुदेवो न यतोऽन्यदस्ति' इत्यत्र परमपरेशवासुदेवादि शब्दानां शरीरभूतचेतनार्थ-कत्वम्। अत एव तच्च वासुदेवशरीरमिति तदात्मक इत्युत्तरभाष्यसङ्गतिः। अन्यथा 'न यतोऽन्यदस्ति' इति वासुदेवात्म-कादन्यस्य निषेधानुपपत्तेः। जीवशरीरिवासुदेवापेक्षयाऽन्यस्य निषेधे तु जीवस्यान्यशरीरत्वनिषेधसम्भवेऽपि वासुदेव-शरीरत्वेन तदात्मकत्वस्य जीवेऽनेन साधनं न स्यात्। अतदात्मकस्य कस्यचिदभावादिति हि भाष्यम्। अत्र यद्यप्य-शेषशब्दश्चेतनाचेतनोभयवाची, अथापि भगवच्छरीरभूतस्य चेतनस्यैव ज्ञानरूपत्ववस्तुरूपत्वनिषेधयोरुपदेशाद्भगव-च्छरीरत्वं क्षेत्रज्ञस्यास्तीति सूचनार्थं क्षेत्रशरीरकस्येत्युक्तम्। अचिच्छरीरकत्वस्य प्रकृतेऽनुपयुक्तत्वात्तत्परित्यक्तम्।

तज्ज्ञानविजृम्भिता इत्यस्यार्थमाह - **तस्येति**। विज्ञानशब्दो विविधानुसन्धानपरः। उक्तानुसन्धानमूलत्वं सद्वारकमित्यभिप्रायेणेत्याह - **देवाद्याकारानुसन्धानमूलकर्ममूला** इति। कर्माविद्ययो बीजाङ्कुरवत्परस्परहेतुत्वात्कर्मणोऽपि देवाद्याकारानुसन्धानं हेतुः। तथा च पूर्वपूर्ववैविध्यानुसन्धानेन कर्मणा च देवादिभेदः। भूपैते कर्मयोनयः बाह्यकर्मवृति ... अविद्यासञ्चितं कर्म इत्याद्युक्तेश्च न केवलकर्ममूलत्वं देवादिभेदानाम्। निजकर्मभेदविभिन्नचित्तैः सर्वकर्मक्षय इत्यादिकमप्येतदभिप्रायकमेवेति भावः। श्लोकतात्पर्यमाह - **यतश्चेति**। उत्तरश्लोकमवतारयति - **तदेवेति**। **तदेव** = विज्ञानविजृम्भितत्वमेव। विवृणोति - व्यतिरेकखेमुनेति भावः। श्लोकार्थमाह - **यदैतदिति**। **देवाद्याकारेणैकी कृत्या-त्मकल्पनेति**। कल्पनाशब्दोऽनुसन्धानपरः। एकीकृत्येत्युक्त्या सङ्कल्पेत्यत्र समित्युपसर्गः एकीकारे इति सूचितम्। सङ्कल्पः = एकीकृत्यानुसन्धानम्। **मूलकर्मेति**। अनेन पूर्वश्लोकोक्तं विवृतम्। निर्दोषं शरीरसम्बन्धरहितम्। परिशुद्धं = शरीरसम्बन्धकृतरागद्वेषसुखदुखादिशून्यम्। निजरूपि = आविर्भूतस्वरूपम्। देवादिभेदानां स्वात्मवैविध्यानुसन्धान-मूलत्वं सद्वारकमिति व्याख्यातम्। व्यतिरेकमुखेन विवरणे कर्महेतुकत्वश्रवणाद्युक्तमिति दर्शितं भवति। 'तद्भोगार्था' इति वस्तुभेदस्य कर्मफलत्वं कथमिति शङ्काव्युदासाय। सुखादिभोगद्वारमूलत्वाद्देवादिभेदानामपि कर्मफलत्वमित्याशयः। वस्तुष्विति जीवपर्यन्तपरम्। **वस्तुभेदाः**= देवादिशरीरभेदाः। पूर्वश्लोकविवरणरूपप्रदर्शनार्यमर्थमुखेन श्लोकतात्पर्यमाह - **य इत्यादिना**। देवादिषु वस्तुष्वत्यन्तभिन्नेष्वित्यनेन **वस्तुष्विति** श्लोकस्थं पदं विवृतम्। संसृष्टाकार एवात्माभिमानात् संसृष्टदेहपरो वस्तुशब्द इति भावः। वस्तुभेदा इति पदमभिप्रेत्याह - **भोग्यभूता इति**।

**देवमनुष्यशैलाब्धिधरादिवस्तुभेदाः, ते तन्मूलभूतकर्मसु विनष्टेषु न भवन्तीत्यचिद्वस्तुनः कादाचित्कावस्थाविशेषयोगितया नास्तिशब्दाभिधेयत्वम्, इतरस्य सर्वदा निजसिद्धज्ञानैकाकारत्वेनास्तिशब्दाभिधेयत्वमित्यर्थः। प्रतिक्षणमन्यथाभूततया कादाचित्कावस्थायोगिनोऽचिद्वस्तुनो नास्तिशब्दाभिधेयत्वमेवेत्याह 'वस्त्वस्ति किम्' इति। अस्तिशब्दाभिधेयो ह्यादिमध्यपर्यन्तहीनस्सततैकरूपः पदार्थः, तस्य कदाचिदपि नास्तिबुद्ध्यनर्हत्वात्; अचिद्वस्तु किञ्चित्कचिदपि तथाभूतं न दृष्टचरम्। ततः किमित्यत्राह 'यच्चान्यथात्वम्' इति। यद्वस्तु प्रतिक्षणमन्यथात्वं याति, तदुत्तरोत्तरावस्थाप्राप्त्या पूर्वपूर्वावस्थां जहातीति तस्य पूर्वावस्थस्योत्तरावस्थायां न प्रतिसन्धानमस्ति। अतस्सर्वदा तस्य नास्तिशब्दाभिधेयत्वमेव। तथा ह्युपलभ्यत इत्याह 'मही घटत्वम्' इति। स्वकर्मणा देवमनुष्यादिभावेन स्तिमितात्मनिश्चयैस्स्वभोग्यभूतमचिद्वस्तु प्रतिक्षणमन्यथाभूतमालक्ष्यते; अनुभूयत इत्यर्थः। एवं सति किमप्यचिद्वस्त्वस्तिशब्दार्हमादिमध्यपर्यन्तहीनं सततैकरूपमालक्षितमस्ति किम्? न ह्यस्तीत्यभिप्रायः।**

**यस्मादेवं, तस्माज्ज्ञानस्वरूपात्मव्यतिरिक्तमचिद्वस्तु कदाचित्कचित्केवलास्तिशब्दवाच्यं न भवतीत्याह 'तस्मान्न विज्ञानमृत' इति। आत्मा तु सर्वत्र ज्ञानैकाकारतया देवादिभेदप्रत्यनीकस्वरूपोऽपि देवादि-**

---

अनेन पदेन तस्य पदस्याचिदर्थकत्वमुक्तं भवति। 'भोक्ता भोग्यं प्रेरितारञ्च' इत्यत्र भोग्यपदार्थोऽपि विवृतः। कारणाभावात्कार्याभावरूपं व्यतिरेकं प्रदर्शयति - **तन्मूलभूतकर्मसु विनष्टेष्विति**। परिणामित्वमेव नास्तिशब्दप्रवृत्तिनिमित्तं सततैकरूपत्वमस्तिशब्दप्रवृत्तिनिमित्तम् इत्येतदत्रोक्तं भवतीत्यभिप्रेत्याह - **इत्यचिद्वस्तुन इत्यादि**। **प्रतिक्षणमिति**। जगदुपलब्धिप्रकारेणापि वस्तुभेदानां श्लोकद्वयेन परिणामित्वोपपादानादचिद्वस्तुनो नास्तिशब्दाभिधेयत्वमेवेति भावः। अचिद्वस्तुनि अस्तिशब्दाभिधेयत्वं नास्तीति सूचनायास्तिशब्दाभिधेयमर्थमाह - **अस्तिशब्देति**। श्लोक एवादिमध्यपर्यन्तहीनं सततैकरूपमित्युक्तेरिति भावः। ततश्च श्लोकोत्तरार्धप्रवृत्तिरित्याह - **ततः किमिति**। चिद्वस्तुनीत्युक्त्या वस्तुनि कदाचिदपि नास्तिबुध्यनर्हत्वं न सम्भवतीत्याह - **यद्वस्तु** इत्यादि। अन्वयमुखेन व्यतिरेकमुखेन चाचिद्वस्तुनो नास्तिशब्दाभिधेयत्वमुपपादितमित्युपसंहरति - **अत इति**। तत्र कुतो हि तत्त्वमित्यत्र कुतश्शब्दः प्रमाणप्रतिक्षेपपरः। तत्त्वशब्दश्च तदिदमिति प्रतिबन्धानर्हत्वपर इति भावः।

अनन्तरश्लोक उदाहरणपर इत्याह - **तथा हीति**। स्तिमितं = प्रतिबध्दम्। **प्रतिक्षणमन्यथाभूतम्** = अस्थिरत्वेन स्थितम्' आदिमध्यपर्यन्तहीनस्य वस्तुनः सततैकरूपस्य नानुभवः। परिणामित्वेन चोपलब्धेः। **ज्ञानस्वरूपेति**। चिद्वस्तु तु नैतादृशमिति भावः। **केवलास्तिशब्दवाच्यमिति**। एतेन श्लोकस्थास्तिशब्दो व्याख्यातः। पूर्वपूर्वावस्थाप्रहाणेनोत्तरोत्तरावस्थप्राप्तौ पूर्वावस्थानुसन्धानाभावेन नास्तिशब्दवाच्यत्वेपि तत्तदवस्थायां तत्तदवस्थानुसन्धानसत्त्वेनास्तिशब्दवाच्यत्वात्कथमस्तिशब्दवाच्यत्वनिषेध इत्याशङ्कापरिहाराय **केवलेति**। अवच्छिन्नास्तिशब्दवाच्यत्वमेवाचिद्वस्तुनः। न तु चिद्वस्तुन इवानवच्छिन्नास्तिशब्दवाच्यत्वं, तदानीमस्ति इदानीमस्ति, इत्यनुभवस्य सम्भवात्। 'अचिद्वस्तुनः कदाचिदस्तिशब्दवाच्यत्वसम्भवेन कदाचिदस्तिशब्दवाच्यं वस्तुजातं न' इति निषेधोऽनुपपन्न इति न भ्रमितव्यम्। केवलास्तिशब्दवाच्यं वस्तुजातं क्वचिदिव कदाचिदपि नास्तीत्यत्र निषेधतात्पर्यात्। उत्तरार्धार्थानुवादपूर्वकमवतारयति **आत्मेति**। तुशब्दोऽचिद्वैलक्षण्याभिप्रायकः। **सर्वत्र** = सर्वशरीरेषु। आत्मेत्यनेन विज्ञानशब्दार्थ उक्तः, विज्ञानशब्दसमभिव्याहृत-एकशब्दमभिप्रेत्य **ज्ञानैकाकारतयेति** भाषितम्" ॥

अत्रैकशब्दो ज्ञानस्वरूपात्मनो नैकत्वसङ्ख्याबोधकः। किन्तु 'एको व्रीहिः सुनिष्पन्नः सुपुष्टं कुरुते प्रजा'

**शरीरप्रवेशहेतुभूतस्वकृतविविधकर्ममूलदेवादिभेदभिन्नात्मबुद्धिभिस्तेन तेन रूपेण बहुधाऽनुसंहित इति तद्भेदानुसन्धानं नात्मस्वरूपप्रयुक्तमित्याह 'विज्ञानमेकम्' इति। आत्मस्वरूपन्तु कर्मरहितम्; तत एव मलरूपप्रकृतिस्पर्शरहितम्; ततश्च तत्प्रयुक्तशोकमोहलोभाद्यशेषहेयगुणासङ्गि; उपचयापचयानर्हतयैकम्; तत एव सदैकरूपम्; तच्च वासुदेवशरीरमिति तदात्मकम्, अतदात्मकस्य कस्यचिदप्यभावादित्याह 'ज्ञानं विशुद्धम्' इति।**

**चिदंशः सदैकरूपतया सर्वदाऽस्तिशब्दवाच्यः; अचिदंशस्तु(प्रति)क्षणपरिणामित्वेन सर्वदा नाशगर्भ इति सर्वदा नास्तिशब्दाभिदेयः; एवंरूपचिदचिदात्मकं जगद्वासुदेवशरीरं तदात्मकमिति जगद्याथात्म्यं सम्यगुक्तमित्याह 'सद्भाव एवम्' इति। अत्र 'सत्यम् असत्यम्' इति, 'यदस्ति यन्नास्ति' इति प्रक्रान्तस्योपसंहारः। एतज्ज्ञानैकाकारतया समम्, अशब्दगोचरस्वरूपभेदमेवाचिन्मिश्रं भुवनाश्रितं देवमनुष्यादिरूपेण सम्यग्व्यवहारार्हभेदं यद्वर्तते, तत्र हेतुः कर्मैवेत्युक्तमित्याह 'एतत्तु यत्' इति। तदेव विवृणोति - 'यज्ञः पशुः' इति। जगद्याथात्म्यज्ञानप्रयोजनं मोक्षोपाययतनमित्याह 'यच्चैतत्' इति।** (वि.पु.२.१२.४६.४७.)॥

**अत्र निर्विशेषे परे ब्रह्मणि, तदाश्रये सदसदनिर्वचनीये चाज्ञाने, जगतस्तत्कल्पितत्वे चा(वाऽ)नुगुणं किञ्चिदपि पदं न दृश्यते; अस्तिनास्तिशब्दाभिधेयं चिदचिदात्मकं कृत्स्नं जगत् परमस्य परेशस्य परस्य ब्रह्मणो विष्णोः कायत्वेन तदात्मकम्, ज्ञानैकाकारस्याऽऽत्मनो देवादिविविधाकारानुभवेऽचित्परिणामे च हेतुर्वस्तुयाथात्म्यज्ञानविरोधि क्षेत्रज्ञानां कर्मैवेति प्रतिपादनात्; अस्तिनास्तिसत्यासत्यशब्दानाञ्च सदसदनिर्वचनीयवस्त्वभिधानासामर्थ्याच्च। नास्त्यसत्यशब्दावस्तिसत्यशब्दविरोधिनौ। अतश्च ताभ्यामसत्त्वं हि प्रतीयते; नानिर्वचनीयत्वम्। अत्र चाचिद्वस्तुनि नास्त्यसत्यशब्दौ न तुच्छत्वमिथ्यात्वपरौ प्रयुक्तौ; अपि**

---

इत्यादाविवाकारैक्यपरः, उत्तरत्र 'बहुधा अभ्युपेयम्' इत्युक्तेः। तस्य बहुप्रकारार्थकत्वात्तत्प्रतियोगिन एवाकारैक्यस्य अनेनोपस्थापनसम्भवात्। **नात्मस्वरूपप्रयुक्तमिति** = औपाधिकत्वमेवाश्रयणीयमिति भावः। **आत्मस्वरूपमिति** - उपाधिप्रहाणे स्वरूपमेतादृशं भवतीति भावः। **एकं** = निरवयवम्। **सदैकरूपं** = सावयवत्वप्रयुक्तवृद्धिक्षयरहितम्। **अतदात्मकस्य** = स्वतन्त्रस्य। **सत्यमित्यादि** परिणामित्वापरिणामित्वे एव पदयुग्मयोः प्रवृत्तिविमित्ते इति भावः। कर्मण एव हेतुत्वमुत्तरश्लोकेन विवृणोतीत्याह - **तदेवेति**। स्वर्गमयः कामः = स्वर्गविषयकेच्छा। आश्रितमार्गदृष्टं कर्म = आश्रितमार्गेषु वर्णाश्रमेषु दृष्टं कर्मेत्यर्थः। यज्ञदानहोमादिकं कर्मेव पूर्वोक्तार्थे हेतुरिति भावः। यच्चैतद्भुवनगतं मया तवोक्तं सर्वत्र व्रजति हि तत्र कर्मवश्यः। ज्ञात्वैतद्ध्रुवमचलं सदैकरूपं तत्कुर्याद्विशति हि येन वासुदेवमित्यनन्तरश्लोकार्थ माह - **जगदिति**।

एवं स्वोक्तार्थे श्लोकानां साङ्गत्यं प्रादर्शि। अथ परोक्तार्थे श्लोकानामननुगुणत्वमित्याह - **अत्रेति**। नास्त्यादिशब्दानामननुगुणत्वप्रदर्शकमस्तीत्यादिकम्। **विष्णोः कायत्वेनेति**। यदम्बु वैष्णवः काय इति पूर्वं प्रस्तुतत्वात्तस्यैवोत्तरत्र विवरणादिति भावः। **तदात्मकमिति**। परमते सामानाधिकरण्यममुख्यमिति दर्शितम्। अज्ञानवाचिपदमपि हेतुभूतं कर्मैव परामृशतीति न भवदनुगुणमित्याह - **ज्ञानैकाकारस्येति**। नास्त्यसत्यशब्दयोः अनिर्वचनीयवस्त्वभिधानसामर्थ्यमेव नास्तीत्याह - **अस्तीति**। अस्तिसत्यशब्दौ दृष्टान्तार्थौ। ननु नास्त्यसत्यशब्दयोरसत्यपरत्वे तुच्छत्वं मिथ्यात्वमेव वोक्तं स्यात्तत्राह - **अत्र चेति**।

**तु विनाशित्वपरौ। 'वस्त्वस्ति किम्', 'मही घटत्वम्' इत्यत्रापि विनाशित्वमेव ह्युपपादितम्; न निष्प्रमाणकत्वम्, ज्ञानबाध्यत्वं वा; एकेनाऽऽकारेणैकस्मिन् कालेऽनुभूतस्य कालान्तरे परिणामविशेषेणान्यथोपलब्ध्या नास्तित्वोपपादनात्। तुच्छत्वं हि प्रमाणसम्बन्धानर्हत्वम्। बोधोऽपि यद्देशकालादिसम्बन्धितया यदस्तीत्युपलब्धम्, तस्य तद्देशकालादिसम्बन्धितया नास्तीत्युपलब्धिः; न तु कालान्तरेऽनुभूतस्य कालान्तरे परिणामादिना नास्तीत्युपलब्धिः; कालभेदेन विरोधाभावात्। अतो न मिथ्यात्वम्।**

**एतदुक्तं भवति - ज्ञानस्वरूपमात्मवस्तु आदिमध्यपर्यन्तहीनं सततैकस्वरूपमिति स्वत एव सदा अस्तिशब्दवाच्यम्; अचेतनन्तु क्षेत्रज्ञभोग्यभूतं तत्कर्मानुगुणपरिणामि विनाशीति सर्वदा नास्त्यर्थगर्भमिति नास्त्यसत्यशब्दाभिधेयम् - इति। यथोक्तम् -** (२.१३.१००.) **'यत्तु कालान्तरेणापि नान्यसनञ्ज्ञानमुपैति वै। परिणामादिसम्भूतां तद्वस्तु नृप तच्च किम्॥'** (वि.२.१४.२४.) **'अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते। तत्तु नास्ति(नाशि)न सन्देहो नाशिद्रव्योपपादितम्॥' इति। देशकालकर्मविशेषापेक्षया अस्तित्वनास्तित्वयोगिनि वस्तुनि केवलास्तिबुद्धिवोध्यत्वमपरमार्थ इति ह्यपरमार्थ इत्युक्तम्। आत्मन एव केवलास्तिबुद्धिबोध्यत्वमिति**

हेतुमाह - **वस्त्वस्ति किमिति**। ननु विनाशित्वोपपादनेऽपि न क्षतिः, तस्यैव मिथ्यात्वादित्यत्राह - **एकेनेति**। विनाशित्वमेवात्रोक्तं, न तु तुच्छत्वं मिथ्यात्वं वेत्युपपादनाय तुच्छत्वस्वरूपमाह - **तुच्छत्वं हीति**, बाध्यत्वमेव हि मिथ्यात्वम्, अत्र च बाधानुपपादनान्न तद्भवतीति वक्तुं बाधस्वरूपमाह - **बाधोऽपीति**। यद्वा - ननु 'वस्त्वस्ति किम्' इत्यादिना विनाशित्वमेवोपपादितं, न तु तुच्छत्वं मिथ्यात्वं वेत्यत्र किं नियामकम्? तत्राह - **एकेनाकारेणेति**। अयमिह भावः - अत्रोपपादितं नास्तित्वं प्रमाणसम्बन्धानर्हत्वरूपं तुच्छत्वे वा प्रतिपन्नदेशकालोपाधौ निषेधप्रतियोगित्वरूपे मिथ्यात्वे वा न पर्यवस्यति, असम्भवात्। अतो विनाशित्व एवेति। अन्यत्पूर्ववत्।

सिध्दान्ते - उत्तरावस्थाप्राप्तेरेव पूर्वावस्थाविनाशरूपत्वं, तस्या एवचोत्पत्तिरूपत्वं घटकपालचूर्णावस्थासु पिण्डघटकपालसन्तानामभावेनाचेतनस्य नाशगर्भत्वात्। चेतनस्य त्ववस्थान्तरापत्तिः, अवस्थान्तरप्रहाणाभावेनैकरूपत्वेन नाशगर्भत्वाभावाच्च नास्त्यस्तिशब्दादीनां विनाशित्वसततैकरूपत्वे एव प्रवृत्तिनिमित्ते इति निष्कृष्टमर्थमाह - **एतदिति**। आदिमध्यपर्यन्तहीनमित्यनेन, यत्सदाऽस्त्येव, तदस्तीति सावधारणमस्तिशब्दप्रवृत्तिनिमित्तं वक्तव्यमिति सूचितम्। अस्तिनास्तिशब्दयोरेवं प्रवृत्तिनिमित्ताश्रयणे 'वस्त्वस्ति किम्' इति श्लोक एव प्रमाणम्। स्फुटप्रमाणमप्यस्तीत्याह - **यथोक्तमिति**। उदाहृतश्लोकयोरर्धत्रयं वस्तुत्वाविनाशित्वपरमार्थत्वबोधकम्। तुर्यं त्वचितो नाशित्वोपपादनान्नास्तिशब्दवाच्यत्वबोधकम्। अर्थाच्चितोऽस्तिशब्दवाच्यत्वसूचकश्च। नन्वचिद्वस्तुनोऽस्तिशब्दवाच्यत्वं कुतो नेष्यते घटत्वावस्थायां घटोऽस्तीति प्रयोगसत्त्वात्? तत्राह - **देशेति**। अचिद्वस्तुनोऽस्तित्वमौपाधिकमेव न स्वाभाविकम्। देशविशेषे कालविशेषे एव भोक्तृगतकर्मविशेषे तदनुगुणं तत्तदवस्थस्य सत्त्वात्। अन्यथा असत्वाच्च। अतः केवलास्तिशब्दच्यत्वमपरमार्थ एवेति भावः। स्वाभाविकास्तिशब्दवाच्यत्वस्यौपाधिकास्तित्वयोगिन्यपरमार्थत्वेपि स्वाभाविकास्तित्वयोगिनि चिद्वस्तुनि परमार्थतैवेत्याह - **आत्मन एवेति**।

एवं परोदाहृतश्लोकानां स्वमतेऽनुगुणत्वं परमतेऽननुगुणत्वमस्तिनास्तिशब्दयोः प्रवृत्तिनिमित्तविशेषः, तादृशनिमित्ताक्रान्तचिदचिद्वस्तुनो भगवच्छरीरत्वमत एव ज्योतींषि विष्णुरित्यादि सामानाधिकरण्यस्य शरीरात्मभावनिबन्धनत्वं भगवदन्यस्य पराभिमताज्ञानविजृम्भितत्वपक्षनिरासश्च कृतानि। तथा उक्तार्थेश्रोतृमैत्रेयस्य स्फुटतरानुवादाच्चायमेवार्थ इति विज्ञायते। अन्यथाऽन्यदुक्तमन्यदनूदितं स्यादिति यथावस्थितज्ञानसम्पत्तये गुरुं प्राप्तस्य यथावस्थितज्ञान-

**स परमार्थ इत्युक्तम्। श्रोतुश्च मैत्रेयस्य,** (वि.२.२.२.) **'विष्णवाधारं यथा चैतत् त्रैलोक्यं समवस्थितम्। परमार्थश्च मे प्रोक्तो यथाज्ञानं प्रधानतः॥' इत्य(त्याद्य) नुभाषणाच्च, 'ज्योतींषि विष्णुः' इत्यादिसामानाधिकरण्यस्याऽऽत्म-शरीरभाव एव निबन्धनम्; चिदचिद्वस्तुनोश्चास्तिनास्तिशब्दप्रयोगनिबन्धनं ज्ञानस्याकर्मनिमित्तस्वाभाविक-(स्व)रूपत्वेन प्राधान्यम्; अचिद्वस्तुनश्च तत्कर्मनिमित्तपरिणामित्वेनाप्राधान्यमिति प्रतीयते।** (इति प्रमाणानुपपत्तिः)

अथ निवर्तकानुपपत्तिः

**यदुक्तम् - निर्विशेषब्रह्मविज्ञानादेवाविद्यानिवृत्तिं वदन्ति श्रुतयः-इति। तदसत्-**(तै.उत्त.मा.) **'वेदाहमेतं पुरुषं महान्तम्। आदित्यवर्णं तमसः परस्तात्। तमेवं विद्वानमृत इह भवति। नान्यः पन्था विद्यतेऽयनाय',** (तै.ना.) **'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि,...न तस्येशे कश्चन तस्य नाम महद्यशः,...य एनं विदुरमृतास्ते भवन्ति' इत्याद्यनेकवाक्यविरोधात्। ब्रह्मणस्सविशेषत्वादेव सर्वाण्यपि वाक्यानि सविशेषज्ञानादेव मोक्षं वदन्ति। शोधकवाक्यान्यपि सविशेषमेव ब्रह्म प्रतिपादयन्तीत्युक्तम्।**

---

सिद्धिरनिष्प्रत्यूहैव स्यादित्याशयेनाह - **श्रोतुश्चेति**। चो हेत्वन्तरे। त्रयो लोकाः त्रैलोक्यम्। **यथाज्ञानं** = यथा मम ज्ञानं स्यात्तथोक्तमित्यर्थः। यद्वा यथा भवता विदितं तथेत्यर्थः। परमार्थवस्तु च मे प्रोक्तमित्यर्थः। यद्वा ज्ञानं परमार्थः प्रोक्तः। यथेति भिन्नं पदम्। **प्रधानतः** = प्राधान्येन। **आत्मशरीरभाव एवेति**। त्रैलोक्यस्य विष्णवाधारत्वोक्त्या विष्ण्वेकधार्यत्वरूप शरीरत्वलाभादिति भावः। **ज्ञानस्य** - चिद्वस्तुनः। श्लोकोक्तं ज्ञानस्य प्राधान्यमुपपादयति - **अकर्मेति**। अत्र प्राधान्यमुत्कर्षः, अप्राधान्यं तदभावः। इमौ च सततैकरूपत्वपरिणामित्वरूपौ, वस्तुनस्सत्त्वे हि प्राधान्याप्राधान्यविचारः। सति धर्मिणि धर्माश्चिन्त्यन्त इति न्यायात्। अतो भवन्मतरीत्या वस्तुनोऽसत्त्वात्तत्राप्राधान्यादि विचारोऽयुक्त इति भावः॥

एवं प्रमाणानुपपत्तिरुक्ता। अथ निवर्तकानुपपत्तिरुच्यते - श्रुतिभिः निर्विशेषवस्तुज्ञानस्याविद्यानिवर्तकत्वोक्तौ हि त्वन्मतसिद्धिः तदेव नास्तीति दूषयति - **तदसदिति**। सविशेषब्रह्मण एव श्रुतिभि र्बोधनादिति भावः। **अहं** = वेदपुरुष एव। आदित्यस्य वर्ण इव वर्णो यस्येति व्युत्पत्या दिव्यमङ्गलविग्रहवैशिष्ट्यसिद्धिः। **तमसः परस्तात्**। पर-शब्दात् अस्तात्प्रत्ययः। प्रकृतेरूर्ध्वदेशवर्तित्वमुक्तम्। **इह भवति** - इहामृततुल्यो भवतीति भावः। जीवन्मुक्तेरुत्तरत्र निराकरिष्यमाणत्वात्। गुणविशिष्टब्रह्मोपासनस्य मोक्षोपायत्वमुक्तं, तदन्यस्य मोक्षोपायत्वनिषेधः कण्ठत एवोक्त इत्याह - **नान्य** इति। ईयत इत्ययनं प्राप्यं परमपदमित्यर्थः। सर्वे निमेषा इति कार्यवर्गोपलक्षकम्। **विद्युतः** = विद्युद्व-र्णात्। अधिजज्ञिरे इत्यन्वयः। 'व्यवहिताश्च' इति व्यवधानमुपसर्गस्य। **ईशे** = ईष्टे। नामेति प्रसिद्धौ। **ब्रह्मण** इति। उक्तवाक्यैर्ब्रह्मणः सविशेषत्वसिद्ध्या तद्विषयकज्ञानस्यैव मोक्षोपायत्वं श्रुतिभिस्सिध्दमित्याकूतम्। **सर्वाण्यपि वाक्यानि** = कारणवाक्यान्यपीति भावः। एतेन सदेवेत्यादिकारणवाक्येषु निर्विशेषवस्तुनः प्रतिपन्नत्वात्तज्ज्ञानस्यैव मोक्षोपायत्वं, सविशेषज्ञानस्य मोक्षोपायत्ववादिनीनां श्रुतीनां न ब्रह्मणः सविशेषत्वे तात्पर्यं, वस्तुमात्रस्यैव तत्र लक्ष्यमाणत्वात्। अस्तु वा तासामपि व्यवहितोपायपरतया सविशेषब्रह्मबोधकत्यमिति शङ्का निरस्ता।

सदेवेत्यादिवाक्यानां सविशेषब्रह्मविषयकत्वस्य पूर्वमुपपादितत्वान्निर्विशेषवस्तुनोऽप्रामाणिकत्वोपपादनाच्च। अतः सर्वाण्यपि वाक्यानि सगुण-ज्ञानस्योपायत्वपराण्येवेति भावः। कारणवाक्येषु निर्विशेषब्रह्मबोधने 'सत्यं ज्ञानं' इत्यादिशोधकवाक्यानां सविशेषब्रह्म-बोधकत्वस्य पूर्वं समर्थितत्वात्तद्विरोधोऽपि दुर्वार इत्याह - **शोधकेति**। सामानाधिकरण्यस्य विशिष्टैक्यपरत्वेन शोधकवाक्यानां सविशेषबोधकत्वमेवेति भावः। अनेन शोधकवाक्यानुगुण्यमपीति दर्शितम्। न च समानाधिकरणवाक्येषु सामानाधिकरण्यनिर्वाहाय वस्तुमात्रलक्षकत्वं

**तत्त्वमस्यादिवाक्येषु सामानाधिकरण्यं न निर्विशेषवस्त्वैक्यपरम् ; तत्त्वंपदयोः सविशेषब्रह्माभिधायित्वात् । तत्पदं हि सर्वज्ञं सत्यसङ्कल्पं जगत्कारणं ब्रह्म परामृशति ; 'तदैक्षत बहु स्याम्' इत्यादिषु तस्यैव प्रकृतत्वात् । तत्समानाधिकरणं त्वम्पदं चाचिद्विशिष्टजीवशरीरकं ब्रह्म प्रतिपादयति ।**

सर्वपदानामुररीकार्यमिति तत्र निर्विशेषप्रतीतिरेवेति वाच्यम् । लक्षणाया अभावेपि सामानाधिकरण्यस्याविरुद्धत्वोपपादनात् । ब्रह्मव्यतिरिक्तवस्त्वन्तराभावेन तत्सम्बन्धाभावाल्लक्षणानुपपत्तेश्च । न च प्रातिभासिकवस्तु सम्बन्धमादाय लक्षणोपपत्तिः । वस्तुतस्तत्सम्बन्धाभावेन लक्षणाया दुरुपपादत्वात् । अन्यथा प्रातिभासिकसम्बन्धमादाय सर्वपदानां सर्वत्र लक्षणासम्भवेन लक्षणायाः शक्यसम्बन्धत्वरूपत्वानावश्यकत्वात् । परमार्थस्येवान्यत्रापि लक्षकत्वदर्शनाच्च । न हि गङ्गाशब्दस्याध्यस्तप्रातिभासिकतीरलक्षकत्वमिति कश्चिद्ब्रूयात् । एवं सर्वपदलक्षणाङ्गीकरणमप्यनुपपन्नम् । कस्यचिदपि पदस्य मुख्यार्थाभावेन लक्षणाक्षेपकशब्दाभावात् ।

ननु 'विषं भुङ्क्ष्व' इत्यादौ सर्वपदलक्षणा दृष्टा । न च तत्रापि विभक्त्यादीनां न लक्षणेति वाच्यम् । तस्योत्तरस्य सत्यं ज्ञानमित्यत्रापि समानत्वात् । यश्चात्र विभक्त्यादीनां लक्षणाक्षेपकशब्दत्वं नास्ति, अपि तु प्रातिपदिकस्यैव, सर्वप्रातिपदिकस्यापि लक्षणास्वीकारे कस्यचिदपि मुख्यार्थाभावेन लक्षणाक्षेपकशब्दाभावान्न सर्वपदलक्षणेति नियमः, सोपि विषं भुङ्क्ष्व इत्यत्र निरस्तः । तत्र विषपदस्य भोज्ये, धातोः निवृत्तौ च लक्षणास्वीकारात् । अतो न सर्वपदलक्षणाऽनुपपन्नेति चेन्मैवम् । भुजिधातो र्लक्षणानङ्गीकारात् । तत्र विषपदं हि निषेधमात्रलक्षकम् । तेनैव सर्वानुपपत्तेः शान्तत्वात् । अतः सर्वपदलक्षणाऽनुपपन्नैवेति ।

ननु निर्विशेषज्ञानस्य मोक्षोपायत्वनिराकरणं न सम्भवति । तत्त्वमसीति सामानाधिकरण्यान्यथाऽनुपपत्त्यैव तत्सिद्धेः । तत्र तत्त्वंपदयो र्विशिष्टब्रह्मजीववाचित्वे हेयानर्हतदर्हयोरैक्यव्यपदेशोऽनुपपन्नस्स्यात् । अतः स्वरूपमात्रलक्षकत्वमभ्युपगम्य निर्विशेषविषयकस्य मोक्षोपायत्वमित्यत्राह **तत्त्वमस्यादि वाक्येष्विति** । हिशब्दो हेतुवाचकः । यतस्तच्छब्दस्य गुणविशिष्टब्रह्मपरामर्शकत्वं, तत एव तस्य विशिष्टवाचकत्वमिति न तत्र सामानाधिकरण्यस्य निर्विशेषवस्त्वैक्यतात्पर्यकत्वमिति भावः । तच्छब्दस्य ब्रह्ममात्रपरामर्शित्वासम्भवे हेतुमाह - **तदैक्षतेति** । **प्रकृतत्वादिति** । 'देवदत्तः श्यामो युवा लोहिताक्षः, तमाह्वय' इत्यादौ तच्छब्दस्य प्रकृतसर्वाकारविशिष्टवस्तुपरामर्शित्वं हि व्युत्पत्तिसिध्दम् । अत्रापि तदैक्षत इत्यादिना सत्यसङ्कल्पत्वादिविशिष्टस्य प्रकृतत्वेन तत्त्वमसीत्यत्र तच्छब्देनापि तस्यैव परामर्शित्वादिति भावः ।

ननु तच्छब्दस्य प्रकृतसर्वाकारविशिष्टवस्तुपरामर्शित्वमिति न नियन्तुं शक्यम् । गौस्तिष्ठति तामानयेत्यादौ आनयनादिक्रियानर्हस्थित्यादिविशेषणविधुरवस्तुमात्रपरामर्शित्वदर्शनात् । अतः केवल प्रकृतपरामर्शित्वमेव तच्छब्दस्य । अत्र च प्रकृतब्रह्ममात्रपरामर्शित्वस्वीकारेण नानुपपत्तिरिति चेन्न । गौस्तिष्ठतीत्यादावानयनपूर्वस्थितिवैशिष्ट्यस्यैव विशेषणत्वेन विवक्षितत्वात् । तामानयेत्यत्र तच्छब्देन पूर्वकालस्थितिविशिष्टगोपरामर्शेऽनुपपत्त्यभावेन व्युत्पत्त्यन्यथाकरणे बीजाभावात् । अन्यथा धावतो गोपिण्डस्याप्यानयनापत्तेः । अतः सर्वाकारविशिष्टवस्तुपरामर्शित्वमावश्यकं तच्छब्दस्य । 'शुक्ला पूर्णशृङ्गा शोभनाक्षी मदीया गौः' इत्यादौ किञ्चिद्विशेषणेतरसर्वविशेषणान्वितगोव्यक्तेरानयनेऽपि प्रकृतव्यक्तेरानीतत्वाभावात्, सविशेषस्य प्रकृतत्वे निर्विशेषस्य प्रकृतत्वासम्भवात्प्रकृतनिखिलविशेषणविधुरवस्तुमात्रपरामर्शित्वस्य कैमुतिकनयेनानुपपत्तेश्च, अत्र तच्छब्दः उक्तनिखिलगुणविशिष्टब्रह्मैव परामृशतीत्येषितव्यमिति ।

तच्छब्दस्य सर्वज्ञत्वादिविशिष्टब्रह्मपरामर्शित्वात् त्वंशब्दस्याप्यल्पज्ञत्वविशिष्टजीवपरामर्शित्वावश्यकत्वेन सामानाधिकरण्यविरोधस्स्यादिति न शङ्क्यमित्याह - **तत्समानाधिकरणमिति** । न हीदं व्यधिकरणं पदं, येन धर्मिपर्यन्त-

**प्रकारद्वयावस्थितैकवस्तुपरत्वात्सामानाधिकरण्यस्य। प्रकारद्वयपरित्यागे प्रवृत्तिनिमित्तभेदासम्भवेन सामानाधिकरण्यमेव परित्यक्तं स्यात्। द्वयोः पदयोर्लक्षणा च। 'सोऽयं देवदत्त' इत्यत्रापि न लक्षणा; भूतवर्तमानकालसम्बन्धितयैक्यप्रतीत्यविरोधात्। देशभेदविरोधश्च कालभेदेन परिहृतः। 'तदैक्षत बहु स्याम्'**

त्वाभावः शङ्क्येत। ब्रह्मवाचकतत्पदेन त्वंपदस्य सामानाधिकरण्योक्तेः तस्यापि विशिष्टब्रह्मपरामर्शित्वात्। यथा शुक्लो घट इत्यादौ शौक्ल्यविशिष्टपरामर्शित्वं शुक्लपदस्य। तथा चाल्पज्ञत्वादिगुणानां सर्वज्ञे परमात्मनि सद्वारकत्वान्न विरोधः। ननु सर्वत्र व्यासस्थले युष्मच्छब्दस्य सम्बोध्यवाचकपदसमानार्थकत्वनियमेन 'श्वेतकेतो' इति सम्बोध्य-वाचकपदस्य श्वेतकेतुमात्रपरत्वेन तदैकार्थ्याय त्वंशब्दस्यापि तावन्मात्रपरत्वमेव युक्तम्। न तु विशिष्टब्रह्मपरत्वम्। यदि श्वेतकेतो इत्यस्यापि विशिष्टब्रह्मपरत्वं स्वीक्रियते तदा सम्बोध्यत्वस्यान्वयो दुर्वचः, परस्य प्रकृतवाक्यजन्य-बोधाश्रयत्वेन इच्छाविषयत्वाभावात्।

न च परमात्मन एव प्रकृतत्वमिति तस्यैव सम्बोध्यत्वमिति वाच्यम्। तस्य प्रकृतत्वे प्रश्नं प्रति जिज्ञासायास्तां प्रत्यज्ञानस्य च हेतुत्वेन परामात्मनोऽज्ञत्वापत्तेः। प्रकृत्यर्थैकदेशे श्वेतकेतौ सम्बोध्यत्वान्वयाभ्युपगमोपि न सम्भवति। विभक्त्यर्थसम्बोध्यत्वनिष्ठप्रकरतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधे पदजन्यपदार्थोपस्थितेर्मुख्यविशेष्यतासम्बन्धेन हेतुत्वात्। अन्यथाऽतिप्रसङ्गादिति चेदत्राहुः - सामानाधिकरण्यस्याभेदापृथक्सिद्ध्यन्यतरसम्बन्धावच्छिन्नप्रकारता-निरूपितविशेष्यताशालिबोधजनकत्वाभ्युपगमेन क्षतिविरहात्। दण्डी कुण्डली इत्यादावभेदसंसर्गः। नीलो घट इत्यादावपृथक्सिद्धिः। नीलादिशब्दा अपि गुणमात्रपरा एव। एवं तत्त्वमसीत्यादौ त्वं पदं श्वेतुकेतुमात्रपरम्। तस्यापृथक्सिद्धिसम्बन्धेन परमात्मन्यन्वयान्न सामानाधिकरण्यबाधः। नाप्युक्तव्युत्पत्तिविरोधः। भगवन् त्वां शरणं गतोऽस्मीत्यादौ भगवतोपि सम्बोध्यत्वदर्शनेन तत्प्रयुक्ताज्ञत्वाद्यापादनासम्भवश्चेति। अन्ये तु शरीरवाचकपदस्य शरीरिपर्यन्तत्ववच्छरीरिवाचकपदस्यापि शरीरमात्रपरत्वं 'क्षेत्रज्ञञ्चापि मां विद्धि' इत्यादिप्रमाणबलात् स्वीकार्यम्। तथा च त्वंपदं श्वेतुकेतुपरं, तत्पदं तु ब्रह्मशरीरपरम्। त्वं सर्वज्ञत्वादिविशिष्टब्रह्मशरीरभूतोऽसीति वाक्यार्थ इति वदन्ति।

वस्तुतस्तु - त्वंश्वेतकेतुपदयो र्विशिष्टब्रह्मपरामर्शित्वेपि सम्बोध्यत्वस्यैकदेशेऽन्वयो नानुपपन्नः। परमसुन्दर इत्यादौ पारम्यस्यैकदेशसौन्दर्येऽन्वयस्वीकारादगतिकत्वाश्रयणमुभयसाधारणम्। यद्वा मुख्यविशेष्यतासम्बन्धेन पद-जन्यपदार्थोपस्थिते र्हेतुत्वमित्यत्र विशेष्यतायां मुख्यत्वमपृथक्सिद्धिसम्बन्धातिरिक्तसम्बन्धावच्छिन्नप्रकारताभिन्नत्व-रूपमिति न यथोक्तव्युत्पत्तिविरोध इति।

**प्रकारद्वयेति**। द्वयशब्दः प्रकारन्यूनत्वनिवर्तनाभिप्रायकः। अवस्थितशब्दो विशिष्टपरः। एवमनभ्युपगमे सामानाधिकरण्यस्य परित्याग एव स्यादित्याह **प्रकारेति**। **द्वयोरिति**। लक्ष्णारूपदूषणमत्यधिकं भवताम्। अविरोधेन मुख्यतया च सति निर्वाहे एकस्यापि पदस्य न लक्षणोचिता किमुत पदद्वयस्येति भावः। **लक्षणा** = जहदजहल्लक्षणा। **भूतेति**। समानाधिकरणस्थले लक्षणाभ्युपगमो दोषावह एव। सोऽयमित्यादौ एकदेशकालविशिष्टाकारे देशकाला-न्तरान्वये विरोधेन वाक्यार्थस्यासमञ्जसत्वेन पदद्वयस्यापि लाक्षणिकत्वाभ्मुपगम आवश्यक इति न भ्रमितव्यम्। तत्रैकविशेषणविशिष्टाकारे विशेषणान्तरान्वयास्वीकारेणाविरोधात्केवलविशेष्यमात्रान्वयस्योररीकारात्। तथा चैकविशेषविशिष्टस्यापरविशेषविशिष्टस्य चैक्यमेव तत्र प्रतीयते। किमत्रैकस्य कालद्वयसम्बन्धो विरुद्धः, देशद्वय-सम्बन्धो वा विरुद्ध इत्यापाद्यते। नाद्यः। बौद्धवत् क्षणिकत्वापत्तेः। नापि द्वितीयः देशभेदेन तत्सम्भवात्। प्रत्यभिज्ञायां हि देशद्वयस्य कालद्वयस्य वा न युगपद्भावः स्वीक्रियते। किन्तु तज्ज्ञानस्यैव। ततश्च क्रमभाविदेशकालद्वयसम्बन्धस्य प्रत्यभिज्ञया विषयीकरणान्न काचिदनुपपत्तिरिति। **तदैक्षतेति**। उपक्रमविरोधोपि भवतां दूषणम्।

**इत्युपक्रमविरोधश्च । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानञ्च न घटते । ज्ञानस्वरूपस्य निरस्तनिखिलदोषस्य सर्वज्ञस्य समस्तकल्याणगुणात्मकस्याज्ञानम्, तत्कार्यानन्तापुरुषार्थाश्रयत्वं च भवति ।**

**बाधार्थत्वे च सामानाधिकरण्यस्य त्वंतत्पदयोरधिष्ठानलक्षणा निवृत्तिलक्षणा चेति लक्षणादयस्त एव**

---

उपसंहारापेक्षयोपक्रमस्य प्राबल्यं हि शास्त्रसिद्धम् । उपक्रमे च ब्रह्मणो गुणवत्वं बोधितम् । अत उपसंहारे तद्विरुद्धार्थस्वीकरणमनुचितमिति भावः । **एकविज्ञानेनेति** । उपक्रमोपक्रमभूते येनाश्रुतमित्यादिवाक्येपि नैक्यं प्रतिपिपादयिषितं, येन तत्प्राबल्यमुपजीव्य उपक्रमस्योपसंहारस्य चान्यथाऽर्थवर्णनमाशङ्क्येत । उपकमोपक्रमे हि निमित्तत्वोपादनत्वे प्रतिपादिते । तदनुगुणसर्वज्ञत्वसर्वशक्तित्वादिकञ्च गुणजातं प्रतिपन्नम् । अतो न निर्विशेषैक्यसिद्धिः । सूक्ष्मचिदचिद्विशिष्टब्रह्मरूपकारणं प्रति स्थूलचिदचिद्विशिष्टब्रह्मणः कार्यत्वेन द्रव्यान्तरत्वाभावात्कारणज्ञानेन कार्यज्ञानस्योपपत्तिरस्मन्मते स्वरसा । मृषावादिनां तु ब्रह्मव्यतिरिक्तस्यान्यस्याभावात्तदन्यसर्वविषयकज्ञानमनुपपन्नं, सर्वस्य ब्रह्मात्मकत्वं तु भवतामेवानभिमतं, जगद्ब्रह्मणोस्तादात्म्याभावात् । परमार्थब्रह्मणि ज्ञाते सर्वस्य मिथ्यात्वेन ज्ञानमुपपद्यत इति चेत्तर्हि मिथ्यात्वेनेत्यध्याहारप्रसङ्गः सत्यभूतकारणज्ञाने मिथ्याभूतस्य विषयत्वञ्च न सम्भवति । अविषयत्वे तु विदितत्वोक्ति र्विरुद्धा ।

ननु येनाश्रुतमित्यादे र्येनाश्रुतममतमविदितं, श्रुतं मतं विदितं भवतीति नार्थः । परन्तु येन श्रुतं मतं विदितमश्रुतममतमविदितं भवतीत्यर्थः । परमार्थब्रह्मज्ञाने व्यावहारिकजगतोऽध्यस्तस्य निवृत्याऽविदितत्वादिसम्भवादिति चेन्मैवम् । एवं तर्हि नेयमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञा । परन्तु एकविज्ञानेन सर्ववस्तुनिवृतिप्रतिज्ञा स्यात् । न चेष्टापत्तिः । कस्मिन्खलु विदिते इदं सर्वं विदितं भवतीत्युपक्रमविरोधात् । न हि तत्राविदितं भवतीति प्रोक्तम् । अतो भवतां वाक्यार्थकौशलमतिमनोज्ञम् । एतत्समानार्थकस्य 'आत्मनि खल्वरे श्रुते' इत्यादिकस्यानुपपत्तेश्च । ज्ञानस्वरूपस्येत्यनेन धर्मिज्ञानं, सर्वज्ञस्येत्यनेन धर्मज्ञानञ्च प्रोक्तम् । प्रायः सर्वासु श्रुतिष्वनन्तगुणविशिष्टं हेयगुणविधुरं ब्रह्मैव प्रतिपन्नं, तत्त्वमसीत्यादौ ब्रह्मण्यज्ञानमभ्युपगम्य धर्माणां परिकल्पितत्वस्वीकारेण स्वरूपमात्रलक्षणया सामानाधिकरण्योपपादने सर्वज्ञे ब्रह्मण्यपुरुषार्थाज्ञानकल्पनं हेयरहित एव तस्मिन्तत्प्रयुक्तानन्तापुरुषार्थदोषकल्पनञ्च प्रसज्यत इत्युपक्रमतदुपक्रमविरोधवत्सर्वश्रुतिविरोधोपि दुर्द्धर्षो भवतामिति भावः । न भवतीति पाठेऽनुपपन्नमित्यर्थः । अनुपपन्नं ब्रह्मण्यापतितमिति प्रसङ्गः ।

नन्वस्मन्मते चतुर्विधं हि सामानाधिकरण्यम् । सत्यं ज्ञानमनन्तमित्यादावतद्व्यावृत्तिमुखेन वस्त्वैक्यबोधकमेकम् । तत्त्वमसीत्यादावन्वयमुखेनोपलक्षितवस्त्वैक्यबोधकमपरम् । अतात्विकरूपारोपणेनैक्यबोधकमपरम् । इदं रजतमित्यादौ ज्योतींषि विष्णुरित्यादौ बाधार्थमन्यत् । तत्र तत्त्वमसीत्यादावन्वयमुखेनोपलक्षितवस्त्वैक्यबोधकसामानाधिकरण्यस्य निरासेपि बाधार्थमेव तद्भवतु । दृश्यते च बाधार्थसामानाधिकरण्यं चोरः स्थाणुरित्यादाविति चेत्तदपि न सम्भवतीत्याह - **बाधार्थत्वे चेति** । चकारोऽन्यत्र कथञ्चित्सामानाधिकरण्यस्य बाधार्थरूपत्वसम्भवेपि तत्त्वमसीत्यादौ तन्न सम्भवतीति दूषणं समुच्चिनोति । सामानाधिकरण्यस्यैकस्मिन् विशेष्ये प्रकारद्वयोपस्थापकत्वरूपतयाश्चोरः स्थाणुरित्यादौ चोरपदलक्षणयाऽचोरः स्थाणुरित्यभ्युपगमेनोपपत्तावपि तत्त्वमसीत्यादौ ब्रह्मणः सविशेषत्वप्रसङ्गभयेनाधिष्ठानमात्रलक्षणाया आवश्यकतया प्रकारानुपस्थापनेन सामानाधिकरण्यासिध्देरिति । **तत्त्वंपदयोरिति** । अन्यत्र बाधार्थसामानाधिकरण्यस्थले एकपदलक्षणा । अत्रोभयपदलक्षणेति भावः । **अधिष्ठानेत्यादि** तत्पदस्याधिष्ठाने लक्षणा, त्वंपदस्य जीवभावनिवृत्ताविव्यर्थः । आदिशब्द उक्तक्रमविरोधादिदूषणाभिप्रायकः । **त एव** = उक्ता एव । लक्षणादिदोषान् विहायान्यद्दूषणं वक्तव्यमित्यर्थः । यद्वा, **त एव** = भवत एव । नास्माकम् । दोषा इति बहुवचनमविरोधेनास्मदुक्तरीत्या सामानाधिकरण्यनिर्वाहे

**दोषाः । इयांस्तु विशेषः - नेदं रजतमितिवदप्रतिपन्नस्यैव बाधस्यागत्या परिकल्पनम् । तत्पदेनाधिष्ठानातिरेकिधर्मानुपस्थापनेन बाधानुपपत्तिश्च ॥**

**अधिष्ठानं तु प्राक्तिरोहितमतिरोहितस्वरूपं तत्पदेनोपस्थाप्यत इति चेन्न - प्रागधिष्ठानाप्रकाशे तदाश्रयभ्रमबाधयोरसम्भवात् ॥ भ्रमाश्रय(?)मधिष्ठानमतिरोहितमिति चेत्तदेवाधिष्ठानस्वरूपं भ्रमविरोधीति तत्प्रकाशे सुतरां न तदाश्रयभ्रमबाधौ । अतोऽधिष्ठानातिरेकिपारमार्थिकधर्मतत्तिरोधानानभ्युपगमे भ्रान्ति-**

सम्भवति, एकं दोषमभ्युपगम्य निर्वाहकरणमेवानुपपन्नं चेत्? किमिति बहुदूषणाभ्युपगमेन निर्वाहकरणमिति दोषभूयस्त्वं व्यनक्ति ॥

अधिकमपि दूषणमाह - **इयांस्त्विति** । शुक्तिरेव रजतमित्यत्र नेदं रजतमिति बाधस्य प्रमाणान्तरप्रतिपन्नत्वं बाधकल्पनञ्च कथञ्चिदुपपन्नम् । अत्र तु बाधोऽप्रतिपन्नः नेह नानास्तीत्यादीनामत्यन्थासिद्धत्वात् । अतो दृष्टान्तापेक्षया उपलक्ष्यस्वरूपसामानाधिकरण्यपक्षापेक्षया च दूषणमधिकम् । **तत्पदेनेति** । शुक्तिरेव रजतमित्यादौ शब्देन शुक्तित्वरूपविरुद्धधर्मोपस्थितिरिति बोधोपपत्तिः । तत्त्वमसीत्यादौ निर्विशेषत्वभङ्गपरिहाराय स्वरूपमात्रोपस्थित्या विरुद्धधर्मानुपस्थित्या बाधोऽप्यनुपपन्नः । नहि यावद्विरुद्धधर्मोपस्थिति र्नास्ति तावद्बाधसम्भवः । न हि शुक्लभास्वरद्रव्यमिति शतशः प्रतिपतावपि शुक्तित्वाप्रतिपत्तौ बाधस्य वा भ्रमनिवृत्तेर्वा उपपत्तिः शक्येति भावः ॥

नन्वधिष्ठानातिरेकि धर्मोपस्थापन एव बाधकल्पनोपपत्त्योः सम्भव इति न नियमः । पूर्वमप्रकाशितविरोधिप्रकाशनेऽपि तत्सम्भवात् । अतोऽत्र ब्रह्मातिरिक्तधर्मानभ्युपगमेऽपि नानुपपत्तिः । पूर्वमप्यधिष्ठानस्य तिरोहितत्वात्सम्प्रत्यतिरोहितविरोध्यधिष्ठानस्वरूपस्य तत्पदेनोपस्थापनाच्च भ्रमाद्युपपत्तेरिति शङ्कते - **अधिष्ठानं त्विति** । **ने ति** । किमत्राधिष्ठानस्य भ्रमविरोधित्वमुत न ? नो चेदतिरोहितस्वरूपस्य तत्पदेनोपस्थापनेऽपि बाधोऽनुपपन्नः । अस्ति चेत् किमत्र विरोधिभूतमधिष्ठानं प्रकाशते उत न ? न चेत्कथं भ्रमसम्भवः ? न ह्यधिष्ठानरूपशुक्लभास्वरद्रव्यस्याप्रकाशेपि रजतादिभ्रमसम्भवः । किमुत बाधस्य । अधिष्ठानाप्रकाशेपि भ्रमवादिना निरधिष्ठानभ्रम एवाऽभ्युपगतस्स्यादिति निरर्थकमधिष्ठानकल्पनमेव । निरधिष्ठानभ्रम एव कुतो नाभ्युपगम्यते ? कथञ्च बौध्दपक्षः परित्यज्यते । निरर्थकाधिष्ठानकल्पनमपि भवतामधिकदूषणम् । अथैतत्परिजिहीर्षयाऽधिष्ठानप्रकाशोऽभ्युपगम्यते तर्हि विरोध्यधिष्ठानस्य प्रकाशाभ्युपगमात्कथं भ्रमबाधादिसम्भवः ? विरोधिप्रकाशे भ्रमाद्यनुदयात् । अतो वृश्चिकभिया भीतस्य आशीर्विषमुखे निपातः । न हि प्रकाशमानस्वरूपस्य विरोधित्वमविरोधित्वमित्याकारद्वयसम्भव इति प्रघट्टार्थः ।

**तदाश्रयेति** तदधिष्ठानकमित्यर्थः । भ्रमाश्रयमिति लिङ्गव्यत्यय इति न भ्रमितव्यम् । आश्रीयत इत्याश्रयमिति व्युत्पत्त्या कर्तरि च 'कारके' इत्यधिकारे कर्मणि 'एरच्' इत्येरच्प्रत्ययात् । घञजन्ताः पुंसि इत्यस्य च भावार्थघञादि विषयत्वेन पुंस्त्वाप्रसक्तेः । यद्वा आश्रय शब्दो विषयीकरणपरः । तथा च भ्रमस्याश्रयो यत्रेति व्युत्पत्त्या अविरोधात् । अथ वा आश्रयः = आश्रयणीयः = सम्बन्धनीय इति यावत् । भ्रमः आश्रय येनेति बहुव्रीहिः । पूर्वत्र तु आरोप्याकाराधिकरणभूतमित्यर्थः । उपसंहरति - **अत इति** । अधिष्ठानस्यैव तिरोधाने भ्रान्तिबाधयो र्दुरुपपादत्वमभिसन्धायाधिष्ठानातिरेकित्वोक्तिः । धर्मस्य पारमार्थिकत्वानभ्युपगमेऽध्यस्तत्वमेव वाच्यम् । शुक्तौ शुक्तित्वाग्रहणेन रजतत्वस्याध्यस्तत्ववत् । तथा च जीवभाववद्धर्मस्याध्यस्तत्वाविशेषात्ततः पूवर्मधिष्ठानप्रकाश आवश्यकः । तस्मिंश्च सति कथमध्यासः ? विरोधिप्रकाशस्य सत्त्वात् । यद्यधिष्ठानस्य न विरोधित्वं, किन्तु तद्गतधर्मस्यैव । स तु तिरोहित इत्युच्यते, तर्हि स धर्मः किं जीवत्वाध्यासनिवृत्तिहेतुभूताध्यस्यमानधर्मादन्यो न वा । नो चेदुभयोरेकत्वेन स्वरूपे कथमध्याससम्भवः । स्वस्य तिरोहितत्वात् ।

**बाधौ दुरुपपादौ । अधिष्ठाने हि पुरुषमात्राकारे प्रतीयमाने, तदतिरेकिणि पारमार्थिके राजत्वे तिरोहिते सत्येव व्याधत्वभ्रमः, राजत्वोपदेशेन च तन्निवृत्तिर्भवति; नाधिष्ठानमात्रोपदेशेन; तस्य प्रकाशमानत्वेनानुपदेश्यत्वात्; भ्रमानुपमर्दित्वाच्च ।**

**जीवशरीरकजगत्कारणब्रह्मपरत्वे मुख्यवृत्तं पदद्वयम् । प्रकारद्वयविशिष्टैकवस्तुप्रतिपादनेन सामानाधिकरण्यञ्च सिद्धम् । निरस्तनिखिलदोषस्य समस्तकल्याणगुणात्मकस्य ब्रह्मणो जीवान्तर्यामित्वमप्यैश्वर्यमपरं प्रतिपादितं भवति । उपक्रमानुकूलता च । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिश्च ; सूक्ष्मचिदचिद्वस्तुशरीरस्यैव ब्रह्मणस्स्थूलचिदचिद्वस्तुशरीरत्वेन कार्यत्वात् ।** (श्वे.६.७.८.) **'तमीश्वराणां परमं महेश्वरम्......पराऽस्य शक्तिर्विविधैव श्रूयते',** (छा.८.१.६.) **अपहतपाप्मा....सत्यकामः सत्यसङ्कल्पः' इत्यादिश्रुत्यन्तराविरोधश्च ।**

**'तत्त्वमसि' इत्यत्रोद्देश्योपादेयविभागः कथमिति चेत् - नात्र किञ्चिदुद्दिश्य किमपि विधीयते ;**

---

न हि स्वाप्रकाशे स्वाध्यासः । अतिरोधाने वा कथमध्यासनिवृत्तिः । अन्यत्वे, सोपि किं परमार्थ उताध्यस्तः ? अन्त्ये उक्तदूषणापरिहारः । आद्ये परमार्थधर्मप्रसङ्गेन सविशेषत्वं ब्रह्मण इत्यभिप्रायेण धर्मे पारमार्थिकत्वोक्तिः ।

यद्वा जीवाध्यासनिवृत्तिहेतुभूतधर्मस्यापारमार्थिकत्वे तद्धेतुत्वेनाधिष्ठानगततदन्यधर्माप्रकाशस्य वक्तव्यतया तस्याप्यपारमार्थिकत्व उक्तयुक्त याऽनवस्था स्यादित्याशयेनापारमार्थिकत्वोक्तिः । एवं वा तदुक्तेरभिप्रायः - भ्रमविरोध्याकारस्यापारमार्थिकत्वेनाध्यस्तत्वादध्यस्तस्वरूपस्येव पारमार्थिकत्वं स्यात् । शुक्तित्वस्यापारमार्थ्ये हि रजतत्वस्य पारमार्थिकत्वम् । अतो यावता विरोध्याकारस्य न पारमार्थिकत्वं तावता न भ्रमनिवृत्तिस्सूपपादा । रज्जुविषयकसर्पभूदलनाम्बुधाराभ्रमपरम्परास्वपि ह्यन्ततो गत्वा निश्शेषभ्रमनिवृत्तये (सर्पत्वस्य) पारमार्थिकविरोध्याकारोऽभ्युपगमनीयः । न हि तत्रोत्तरोत्तरभ्रमेण पूर्वपूर्वभ्रमनिवृत्त्या भ्रमविरोध्याकारस्यापारमार्थिकत्वं दृष्टमिति वक्तुं शक्यम् । तावतापि अन्तिमभ्रमस्य परमार्थविरोध्याकारज्ञानेनैव निवृत्तेः । अन्यथा निश्शेषाविद्यानिवृत्ति र्न स्यात् । न हि शुक्ताववविद्यमानस्फुरणेन रजतभ्रमनिवृत्तिस्सम्भवतीति । **अधिष्ठाने हीति** । हीति प्रसिद्धौ हेतौ वा । हेत्वन्तरमाह - **भ्रमेति** । भ्रमसहत्वादिति भावः । बाधार्थत्वं पराकृतम् । स्वमते शिष्यानुग्रहेणोक्तेषु दूषणेषु न कस्यचिदप्यवकाश इति दर्शयति - **जीवेति** । तत्पदं जगत्कारणब्रह्मपरम् । त्वंपदञ्च जीवशरीरकब्रह्मपरम् । **मुख्यवृत्तं** = शक्तम् । अनेन लक्षणाभाव उक्तः । **अपरमैश्वर्यमिति** । अचेतानान्तर्यामित्वस्यान्यत्र दर्शनेपि चेतनान्तर्यामित्वं भगवतोऽधिकोत्कर्षापादकमित्याशयः ।

ननु तत्त्वमसीत्यादौ तत्त्वंपदयोर्जगत्कारणजीवान्तर्यामिब्रह्मपरत्वमभ्युपगम्य सामानाधिकरण्योपपादनं न सम्भवति । तथा सति किमुद्दिश्य किं विधीयते । न तावत्तच्छब्दबोधितसर्वज्ञत्वादिविशिष्टब्रह्मोद्दिश्य जीवान्तर्यामित्वं विधीयते । सर्वज्ञत्वादिगुणकत्वस्य प्रत्यक्षाद्यगोचरत्वेनोद्दश्यत्वासम्भवात् । ज्ञातस्य हि सर्वत्रोद्देश्यत्वं, ज्ञातं पर्वतादिकमुद्दिश्य हि बह्न्यादिमत्वं विधीयते । न च पूर्ववाक्यादिषु सर्वज्ञत्वादिगुणकं ब्रह्म प्रतिपन्नमेवेति नोद्देश्यत्वक्षतिरिति वाच्यम् । तावतापि तच्छब्दवाच्यस्योद्दश्यत्वे मध्यमपुरुषानुपपत्तेरवारणात् । नापि त्वंशब्दबोधितजीवान्तर्यामिण उद्देश्यत्वं, तस्यापि प्रत्यक्षाद्यविषयत्वेनाप्राप्तत्वात् । न हि पूर्ववाक्यसन्दर्भेण परमात्मनोऽन्तर्यामित्वमवगतं, येनोद्देश्यत्वमभ्युपगम्येत । ब्रह्मणो जीवान्तर्यामित्वस्यावगतौ च सत्यां जीवान्तर्यामिणो ब्रह्माभिन्नत्वविधानमप्यनतिप्रयोजनमित्युपदेशवैयर्थ्यञ्च । न चात्रोद्दश्यविधेयभाव एव न स्वीक्रियत इति वाच्यं वाक्यस्योद्देश्योपादेयविभागवद्रूपत्वनियमादित्याशयेन शङ्कते - **तत्त्वमसीति** । तस्मात्तथेति निगमनवाक्यस्य प्रतिज्ञावाक्यावगतार्थोपसंहाररूपत्वेन यथा नोदेश्यविधेयभावबोधने तात्पर्यं, तथाऽत्राप्युपसंहाररूपनिगमनवाक्यरूपत्वेनास्यापि नोद्देश्यविधेयभावबोधनपरतेत्याशयेन समाधते **नात्रेति** ।

**'ऐतदात्म्यमिदं सर्वम्' इत्यनेनैव प्राप्तत्वात्। अप्राप्ते हि शास्त्रमर्थवत्। इदं सर्वमिति सजीवं जगन्निर्दिश्य,**

ननु तस्मात्तथेति निगमनवाक्ये तथेत्येकपदेन प्रतिज्ञावाक्यावगतार्थबोधनान्नोद्देश्यविधेयभावस्वीकारः। असम्भवात्। न चैकस्यैव पदस्योद्देश्यसमर्पकत्वं विधेयसमर्पकत्वञ्च दृष्टं, अत्र भिन्नपदप्रयोगसत्त्वादवश्यमावश्यक इति चेन्मैवम्। तस्मात्पर्वतो वह्निमान् इति भिन्नपदघटितत्वेप्युद्देश्यविधेयविभागानभ्युपगमात्। न हि तत्रापि पर्वतोद्देशेन वह्निमत्वादि विधेयतया प्रतीयत इति शक्यशङ्कम्। विरोधात्। अप्रतिपन्नार्थस्यैव विधेयत्वं प्रतिपन्नार्थस्योद्देश्यत्वञ्चेति भवतापि प्रतिपादनात्। विधायकवाक्यस्योद्देश्योपादेयसमर्पकत्वप्रत्यभिज्ञानान्निर्देशसारूप्याच्च तथा प्रतीतिरिति सा भ्रमरूपैव। अत्र च मध्यमपुरुषोपपत्तिरस्मदीये ब्रह्मसूत्रविमर्शग्रन्थे द्रष्टव्या। किञ्चात्र 'नात्र किमपि विधीयते' इत्येतदप्राप्तनिषेधाभिप्रायकमेव। न तु वाक्यञ्चेदुद्देश्यविधेयविभागवद्रूपमिति नियमनिषेधकम्। तथा सति त्वंशब्दस्योद्देश्यत्वानुपपत्त्याऽसीति मध्यमपुरुषस्यानुपपत्तेः। उक्तं चेशावास्योपनिषद्भाष्ये वेदान्तदेशिकैः - एवं तत्त्वमसीत्यादिष्वसिशब्दो निर्वाह्यः। तत्रापि 'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यम' इत्येतावदेव हि स्मर्यते, न तु युष्मच्छब्दस्य स्वाभिमुखचेतनद्वारा तदन्तर्यामिपर्यन्तत्वे मध्यमनिवृत्तिः।

लोके त्वहं त्वमस्मि त्वमहमसीत्याद्युपचारेषु उद्देश्यानुसारेण मध्यमोत्तमयो र्व्यवस्था। तद्वदत्रापि व्यवस्थोपपद्यते। उद्देश्यविषययोरेवात्र युष्मदस्मच्छब्दयोरुपपदत्वेन सूत्रपदाभिप्रेतत्वात्। भाष्ये तु तत्त्वमसिनिरूपणावसरे 'नात्र किञ्चिदुद्दिश्य किमपि विधीयते' इत्युक्तिरप्राप्तांशनिषेधाभिप्राया व्यक्ता। उपसंहारत्वोपपादनादिति। इत्थञ्च तथैव तत्त्वमसीत्यत्र जगत्कारणब्रह्मपरस्य तच्छब्दस्य ज्ञातार्थबोधकत्वेनोद्देश्यत्वसम्भवेऽपि असिशब्दप्रयोगबलेन त्वंशब्दस्यैवोद्देश्यत्वमित्यभ्युपगन्तव्यम्, तथा तस्य च जीवान्तर्यामिपरत्वे तस्याज्ञातत्वेन नोद्देश्यत्वमिति उद्देश्यविधेयविभागो न स्यादित्यभिप्रायेण शङ्कायां जीवान्तर्यामिणो ब्रह्माभिन्नत्वं 'ऐतदात्म्यम्' इत्यनेनैव सिद्धं नेदमज्ञातार्थज्ञापनरूपम्। अतो जीवान्तर्यामित्वमपि परमात्मनो ज्ञातमेवेति त्वंशब्दस्योद्देश्यत्वं नानुपपन्नमित्यभिप्रायेण नात्र किञ्चिदुद्दिश्य किमपि विधीयत इत्युक्तमिति ध्येयम्। उपसंहाररूपत्वेन नोपदेशवैयर्थ्यमनतिप्रयोजकत्वञ्च। एवमेव निगमनवाक्यस्यापि।

उद्देश्यविधेयभावानङ्गीकरणप्रयोजकं प्रतिपन्नार्थबोधकत्वमेवात्रास्तीत्याह - **ऐतदात्म्यमिति**। हिशब्दस्सर्वशास्त्रप्रसिद्धिसूचकः। **अर्थवत्** = अपूर्वार्थज्ञापनरूपफलवत्। सर्वशब्दनिर्दिष्टाचेतने ब्रह्मानुप्रवेशेन ब्रह्मान्तर्यामिकत्वसिद्धावपि चेतने तदसिद्ध्या कथं प्राप्त्युपपादनमिति न शङ्क्यमित्याशयेनाह - **इदं सर्वमिति**। **सजीवं जगदिति**। सर्वशब्दः सङ्कोचकप्रमाणाभावात्स्वारस्यभङ्गायोगाच्च चेतनाचेतनजगत्परः। सन्मूला इति पूर्ववाक्येपि सर्वाः प्रजा इत्युक्त्याऽचिद्विशिष्टचेतनबोधनात्। इदं सर्वमसृजत इति वाक्यान्तरे विज्ञानञ्चाविज्ञानञ्च इति वाक्यपर्यालोचनया चिदचिदात्मकजगत एव सर्वशब्देन बोधनाच्च तथैवाभ्युपगन्तव्यमित्याशयः। तस्यैष आत्मा इति ऐतदात्म्यमित्यस्य विवरणम्। एष आत्मा यस्य = एतदात्मा। एतदात्मैव ऐतदात्म्यं, स्वार्थे ष्यञ्। तत्सत्यं = एतदात्मकत्वमेव सत्यं, स आत्मेति 'रामानुजं लक्ष्मणपूर्वजञ्चे'तिवन्निर्देशः॥

ननु प्रत्यक्षादिप्रमाणान्तरप्राप्तार्थबोधकत्वे ह्यनुवादकत्वम्। न तु वाक्यान्तरप्राप्तार्थबोधकत्वेऽपि। अत एव ब्रह्मणः शास्त्रैकप्रमाणकत्वबोधनाय प्रत्यक्षादिमानान्तराप्रवृत्तिरुच्यत इति चेन्न। उभयस्यापीष्टत्वात्। अत एव निगमनवाक्यस्य प्रतिज्ञावाक्यप्राप्तार्थबोधकत्वमित्यनुवादकत्वमिति। ननु तत्त्वमसीत्यादौ उद्देश्यविधेयभावानङ्गीकारे कथं तिङ्विभक्तेरुपपत्तिः ? तस्या उद्देश्यत्वानुगुणत्वात्। सर्वत्र मध्यमोत्तमपुरुषव्यवस्थाया उद्देश्यत्वानुगुणत्वस्य दर्शनात्। अतोऽत्रासीति निर्देशानुसारेण त्वंशब्दार्थस्योद्देश्यत्वमेष्टव्यमिति चेदुद्देश्यविधेयभावाभावेपि त्वंशब्दार्थविवक्षया मध्यमपुरुषोपपत्तेः। प्रथमोत्तमादिपुरुषाणामुद्देश्यानुगुणतयैव प्रवृत्तिरित्यस्योद्देश्यविधेयभावस्थल एवेत्यङ्गीकर्तव्यत्वात्।

**'ऐतदात्म्य'मिति, तस्यैष आत्मेति तत्र प्रतिपादितम् । तत्र च हेतुरुक्तः - 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा' इति,** (छा.३.१४.१.) **'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त' इतिवत् ॥**

**तथा श्रुत्यन्तराणि च ब्रह्मणस्तद्व्यतिरिक्तस्य चिदचिद्वस्तुनश्च शरीरात्मभावमेव तादात्म्यं वदन्ति -** (तै.आरण्यके ३.११.२१.) **'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा'** (बृ.५.७.३.) **'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति, स त आत्माऽन्तर्याम्यमृतः', 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरं य आत्मानमन्तरो यमयति, स त आत्माऽन्तर्याम्यमृतः',** (सुबा.८.९.६.२.) **'यः पृथिवीमन्तरे सञ्चरन्' इत्यारभ्य, 'यस्य मृत्युश्शरीरम्, यं मृत्युर्न**

---

अन्यथोपसंहारस्थले प्राप्तार्थबोधकत्वेनोद्देश्यविधेयविभागाभावात्प्रथमपुरुषस्याप्यनुपपत्तेः । न च तस्मात्पर्वतो वह्निमान् इत्यादावत एव तिङ्विभक्ति र्न प्रयुज्यत इति वाच्यम् । अप्रयोगेपि तिङ्विभक्तेः स्वतः प्राप्तत्वात् । अस्तिर्भवन्तिर-प्रयुज्यमानोऽप्यस्तीति हि शाब्दिकाः । निगमनवाक्यस्य चोद्देश्योपादेयसमर्पकत्वं न कस्यापि शास्त्रज्ञस्येष्टम् । तिङन्त-विभक्तिस्तु दृश्यते । तत्र तत्त्वमसीत्यादौ तत्त्वंपदयोस्सत्त्वेन प्रथममध्यमपुरुषयोरुभयोरपि प्रयोगार्हत्वाद्विनिगमना-विरहेण मध्यमपुरुषः प्रयुक्तः । ऐतदात्म्यमिदं सर्वमित्यत्रोद्देश्यवाचकसर्वपदनिर्दिष्टैकदेशाचेतनविशिष्टपरमात्मवाचि-त्वेन त्वंपदस्य, तदनुरोधेन मध्यमपुरुषोपपत्तिश्चेति निरवद्यम् ।

ननु तत्त्वमसीत्यादाविव ऐतदात्म्यमित्यत्राप्यस्मन्मते एतच्छब्दो न विशिष्टपरः । किन्तु विशेष्यब्रह्ममात्रपरः । तथा च सर्वशब्दनिर्दिष्टस्य तदात्मकत्वं मृदात्मको घट इत्यादाविव स्वरूपैक्यकृतमिति तद्वाक्येन न जीवान्तर्यामित्वप्राप्तिरि-त्यत्राह - **तत्र च हेतुरिति** । चः भिन्नक्रमस्सन् नामरूपव्याकरणश्रुतिं हेतुत्वेन परामृशति । 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी'ति श्रुतिर्हि तदनुप्रविश्य सच्च त्यच्चाभवदित्युपनिषदन्तरवाक्यसहिता चेतनाचेतनयोः परमात्मानुप्रवेशं ब्रुवन्ती परस्यान्तर्यामित्वं बोधयति । अतः, पूर्वमपि परमात्मनोऽन्तर्यामित्वप्राप्त्या ऐतदात्म्यमित्युक्ततदात्मकत्वं न स्वरूपैक्यकृतम् । तयोः शरीरशरीरिभावात् । शरीरशरीरिभावसिद्धौ च एतच्छब्दस्सूक्ष्मचेतनाचेतनशरीरकब्रह्मपरः । सर्वशब्दश्च स्थूलचेतनाचेतनशरीरकब्रह्मपर इति भावः । **सर्वमिति** । तज्जत्वतन्मूलत्वोभयं, तल्लत्वतत्प्रतिष्ठितत्वोभयं तदनत्वसदायतनत्वोभयं चैकरूपम् । तज्जलानितीतिकरणाद्धेतुत्वं स्फुटम् ।

**तथेति** । चकारः स्मृतिं समुच्चिनोति । शरीरात्मभावमेव तादात्म्यमित्युपचारः । तन्निबन्धनं तादात्म्यमित्यर्थः । आत्मशरीरभावादेवेत्युत्तरत्र भाषिष्यमाणत्वात् । नृपव्यावृत्त्यर्थ'मन्तः प्रविष्ट' इति । नभोव्यावृत्त्यर्थं 'शास्ता जनाना-मि'ति । अनेनान्तः प्रविश्य नियमनकर्तृत्वरूपमात्मत्वमित्युक्तं भवति । भगवतोऽन्तः प्रवेशोक्त्याऽन्तर्यामित्वसिद्धिः । अनेन जीवानां नियाम्यत्वरूपशरीरत्वम् । 'यः पृथिव्यां तिष्ठन्' इति बहिर्व्याप्तिरुक्ता । 'प्रथिव्या अन्तर' इत्यन्तर्व्याप्तिः । यद्वा 'पृथिव्या' इति पञ्चम्यन्तम् । उत्तरत्र 'अद्भ्य' इति श्रवणात् । 'आदित्यादन्तर' इत्युक्तेश्च । 'अन्तर' इत्युक्तामन्तर्व्याप्तिं 'पृथिवीमन्तर' इत्यनूद्य नियमयतीति नियमनविधाने तात्पर्यम् । अतो न पौनरुक्त्यम् । 'पृथिवी न वेद' इति पृथिव्या वेदननिषेधो निदर्शनार्थम् । यथाऽचेतनवस्तु न वेद तथा चेतनोपि न वेदेत्यर्थः । अन्यथाऽप्रसक्तप्रतिषेधापत्तेः । यद्वा क्वचिदप्रसक्तप्रतिषेधोऽपीष्यते । यथा - भूमौ हिरण्यशकलं निधाय चयनकरणार्थं 'न पृथिव्यां चिन्वति न वियति चिन्वति नान्तरिक्षे' इति पृथिव्यादौ चयननिषेधः क्रियते । अत्र धार्यत्वनियाम्यत्वोक्त्या शेषत्वप्रयोजकोक्त्या च शरीर-लक्षणमुक्तं भवति ।

अन्तर्यामिणः सर्वत्र विद्यमानत्वेन हेयप्रत्यनीकत्वं न स्यादित्यत उक्तं - **अन्तर्याम्यमृत इति** । प्रत्येकमतद्वचना-

**वेद, एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः',** (तै.आनं) **'तत् सृष्ट्वा । तदेवानुप्राविशत् । तदनुप्रविश्य । सच्च त्यच्चाभवत्' इत्यादीनि ।**

**अत्रापि -** (छा.६.३.२.) **'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति ब्रह्मात्मकजीवानुप्रवेशेनैव सर्वेषां वस्तुत्वं शब्दवाच्यत्वञ्च प्रतिपादितम् । 'तदनुप्रविश्य । सच्च त्यच्चाभवत्' इत्यनेनैकार्थ्याज्जीवस्यापि**

दिति सूत्रकारोप्युपरि वक्ष्यति । पूयशोणितादिहेयवस्तुनि स्वेच्छया परस्य सत्त्वेपि नापुरुषार्थसम्बन्धः । करेण घृतसम्युक्तक्षीरान्नभोजने हस्ते घृतलेपो जायते । न रसनायाम् । हस्ते तन्निवृत्त्यर्थं लेपनिवारणवस्त्वपेक्षा । एवममेध्यसम्बन्धेपि कस्यचित्कृमिविशेषस्य नापुरुषार्थसम्बन्धो दृश्यते । मनुष्यस्यामेध्यसम्बन्धेऽपुरुषार्थवत्वञ्च । 'य आत्मनि तिष्ठन्नि'त्यत्रात्मशब्दः परिशुद्धात्मपरः । नक्षत्रचन्द्रादीनामचित्संसृष्टचेतनविशेषाणां पृथगुक्तत्वात् । ननु सर्वज्ञस्याचिद्वियुक्तस्य परिशुध्दात्मस्वरूपस्य कथं भगवज्ज्ञातृत्वाभावो मुक्तनित्यादीनां तद्विषयकज्ञातृत्वावश्यम्भावादिति चेत्तेषामपि कार्त्स्न्येन ब्रह्मज्ञातृत्वासम्भवात् । 'यतो वाचो निवर्तन्ते' इति हि श्रुतिः । 'देवि त्वन्महिमावधि र्न हरिणा नापि त्वया ज्ञायते' इति लक्ष्म्याः भगवतश्च माहात्म्यावधिज्ञानं न सम्भवतीति ह्यनुसन्धीयते पूर्वाचार्यैः । अनेनाचेतनस्य चेतनस्य संसृष्टचेतनस्य च भगवच्छरीरत्वोक्त्या सर्वावस्थास्वपि परस्य ब्रह्मणश्चेतनाचेतनौ प्रत्यात्मत्वं उक्तम् । आत्मनोऽन्तर्व्याप्तिस्तु दशादिक्सम्योगरूपा । 'यमात्मा न वेद' इति ब्रह्मणोऽपरिच्छिन्नगुणकत्वेनेयन्तया जीवस्य तन्निषेधः । भगवत्प्रसादाभावे ज्ञानस्य शक्यत्वनिषेधो वा ।

**यस्यात्मा शरीरमिति** । शिलापुत्रकस्य शरीरमितिवदस्यापि निर्देशस्यौपचारिकत्वमेवेति न भ्रमितव्यम् । व्यतिरेकनिर्देशस्यास्वरसत्वप्रसङ्गात् । स्वारस्यभङ्गे प्रमाणाभावाच्च । 'यस्य पृथिवी शरीरमि'त्यादौ स्वारस्याभङ्गेनार्थस्योक्तत्वादत्र स्वारस्यभङ्गे प्रकरणविरोधात् । अन्यथा 'य आत्मनि तिष्ठन्नि'त्यादिविरोधापत्तेः । 'य आत्मनि तिष्ठन्नि'त्यनेन ह्यधिकरणाधिकर्तव्यत्वमुच्यते । 'आत्मनोऽन्तर' इति व्याप्यव्यापकभावः । 'यमात्मा न वेद' इत्यनेनाज्ञप्राज्ञभावः । 'अन्तरो यमयती'ति नियाम्यनियन्तृभावश्च । एवञ्चात्मपरमात्मनो र्विरुद्धधर्मप्रतिपादनात् 'यस्यात्मा शरीरम्' इत्यस्य पूर्वापरनिर्दिष्टात्मशब्दसजातीयात्मशब्दघटितस्यौपचारिकत्वे परमात्मन एव प्राज्ञत्वादिवदसत्वादिधर्माणामपि प्रसक्तिरिति विरोधो दुष्परिहरस्स्यात् । अतो नौपचारिकत्वमिति शरीरात्मभाव एव प्रतिपाद्यते । 'य' इति सुबालोपनिषद्वाक्यम् । अत्र सञ्चरणमधिष्ठानमात्रम् । मृत्युशब्देन तमश्शब्दवाच्या प्रकृतिरभिधीयते । 'अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयत' इति वचनात् । वक्ष्यति चेदमुत्तरत्र । अन्यत्रामृत इति स्थाने अपहतपात्मेत्युक्तिः । एवं शरीरशरीरिभावसिद्ध्या सर्वस्य वस्तुनः परमात्मपर्यन्तस्यैव नामरूपभाक्त्वमिति तत्सृष्ट्वा इत्यादिना दर्शितम् ।

**जीवेन** = जीवशरीरकेण । एतच्छ्रुत्यर्थः सञ्ज्ञामूर्त्यधिकरणे व्यक्तीभविष्यति । अस्मदीये विमर्शे विस्तारो द्रष्टव्यः । **वस्तुत्वमिति** । तत्तद्देवादिवस्तुत्वमित्यर्थः । अनेन रूपशब्दार्थ उक्तः । **शब्दवाच्यत्वं** = देवादिशब्दवाच्यत्वम् । अनेन नामशब्दार्थ उक्तः । अत्रैतदुपनिषद्घटकश्रुत्युदाहरणेन श्रोतुः श्वेतकेतोरपि जीववाचकशब्दस्य परमात्मपर्यन्तत्वमवगतमिति सूचितम् । जीवेनात्मनेत्यत्र तादात्म्यं न स्वरूपैक्यकृतम् । किन्तु शरीरात्मभावकृतमित्यत्र श्रुत्यन्तरं प्रमाणयति - **तदनुप्रविश्येति** । अनुप्रवेशपूर्वकनियाम्यत्वप्रतिपादनादात्मत्वं सिद्धम् । 'अकार्यचिन्ता समकालमेव प्रादुर्भवन् चापधरः पुरस्तात् । अन्तःशरीरेष्विव यः प्रजानां प्रत्यादिदेशाविनयं विनेता' इत्यत्र कार्तवीर्यार्जुनस्याप्यन्तःप्रवेशो जनेष्वस्तीति न मन्तव्यम् । वरप्रसादात्प्रजानामन्तः शरीरेषु स्थिति र्लक्ष्यत इव । न तु वास्तवम् । अत एव इवेत्युक्तिः ।

ननु ब्रह्मणो जीवानुप्रवेशोऽपि न नामरूपव्याकरणश्रुत्या नामवाच्यत्वसम्भवः । तादृशश्रुते रूपनिष्पादनरूपपरूप-

**ब्रह्मात्मकत्वं ब्रह्मानुप्रवेशादेवेत्यवगम्यते। अतश्चिदचिदात्मकस्य सर्वस्य वस्तुजातस्य ब्रह्मतादात्म्यमात्मशरीरभावादेवेत्यवगम्यते। तस्माद्ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य तच्छरीरत्वेनैव वस्तुत्वात्तस्य प्रतिपादकोऽपि शब्दस्तत्पर्यन्तमेव स्वार्थमभिदधाति। अतः सर्वशब्दानां लोकव्युत्पत्त्यवगततत्तत्पदार्थविशिष्टब्रह्माभिधायित्वं सिद्धमिति, 'ऐतदात्म्यमिदं सर्वम्' इति प्रतिज्ञातार्थस्य, 'तत्त्वमसि' इति सामानाधिकरण्येन विशेष उपसंहारः।**

व्याकरणपरत्ववन्नामव्याकरणरूपशब्दसृष्टिपरत्वेन ब्रह्मणस्तद्बोध्यत्वापादनपरत्वाभावात्। न हि रूपव्याकरणं रूपबोध्यत्वापादनरूपमिति चेन्न। 'तद्धेदं तर्ह्यव्याकृतमासीत्, तन्नामरूपाभ्यां व्याक्रियत' इति समानवाक्यबलादेवात्र नामरूपव्याकरणस्य नामबोध्यत्वापादनपरत्वसम्भवात्। अस्य चायमर्थः - तर्हि = प्रलये, इदं तत् = जगदात्मकं ब्रह्म। अव्याकृतं = उपसंहृतनामरूपमासीत्। तत् = तादृशं ब्रह्म। नामरूपाभ्यां विशिष्टमक्रियतेति। अविभक्तनामरूपम् एकीकृतं वस्तु नामरूपाभ्यां करणाभ्यां विभिन्नतयाऽज्ञायतेति वा। तथा च ब्रह्मणो नामविशिष्टत्वं नामवाच्यत्वञ्च लब्धमिति ॥

ननु प्रथमपक्षे नामविशिष्टत्वलाभेऽपि कथं नामवाच्यत्वलाभ इति चेन्नामविशिष्टत्वस्यैव नामवाच्यत्वरूपत्वात्। न च नामकर्तृत्वमेव नामविशिष्टत्वम्। घटादिनामोच्चारयितरि सञ्ज्ञासञ्ज्ञिसम्बन्धव्युत्पादकपित्रादौ च घटादिनामविशिष्टत्वाप्रसिद्धेः। न च नामरूपशब्दोपादनत्वं नामविशिष्टत्वं, तच्च ब्रह्मण्युपपन्नमिति वाच्यम्। आकाशस्यापि शब्दोपादानत्वेन नामविशिष्टत्वापत्तेः। न चेष्टापत्तिः। तथाऽप्रसिद्धेः। अतो नामलक्षणशब्दवाच्य एव नामी। न च लक्षणया ब्रह्मणस्तत्तन्नामबोध्यत्वमादाय नामित्वोपपत्तिः। लक्ष्यार्थेषु नामित्वाप्रसिद्धेः। अतो नामव्याकरणं शक्त्या तत्तन्नामवाच्यत्वमेव। अत एव 'वचसां वाच्यमुत्तमम्'। 'नतास्स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वती'त्यादिस्मृत्योपबृंहणभूतया ब्रह्मणो नामवाच्यत्वमुच्यते। अपि च नामव्याकरणं न केवलं वर्णसृष्टिः। नामशब्दस्य वर्णार्थकत्वाभावात्। ब्रह्मव्यतिरिक्तसर्वपदार्थस्वरूपसृष्टेः रूपव्याकरणोक्त्यैव सिद्धत्वेन गगनासाधारणशब्दलक्षणरूपसृष्टेरपि तत एव सिद्ध्या नामरूपव्याकरणोक्तिवैयर्थ्यापत्तेश्च। न च ब्राह्मणपरिवाजकन्यायेन रूपशब्दसङ्कोचसम्भवः। सङ्कोचकाभावात्। न च वर्णसृष्टिबोधकनामव्याकरणनिर्देश एव सङ्कोचकः। तस्योक्तयुक्त्याऽन्यथासिद्धत्वात्। ततश्च पृथङ्निर्देशवैयर्थ्यादनन्यथासिध्दसङ्कोचकाभावान्नामशब्दस्य वर्णपर्यायत्वाभावाच्च नामव्याकरणनिर्देशस्य वर्णसृष्टिपरत्वाभावेनोक्तयुक्त्या ब्रह्मणो निष्पद्यमानतत्तद्रूपवाचकशब्दव्युत्पादनबोधकत्वमेवेष्टव्यमिति न काप्यनुपपत्तिः ॥

ननु जीवादिवाचकशब्दैः परमात्मपर्यन्ताभिधानमनुपपन्नम्। लोके तत्तद्वस्तुमात्रपर्यन्तत्वेन व्युत्पन्नत्वात्। लोकसिद्धव्युत्पत्तिभङ्गेन परमात्मपर्यन्ताभिधायित्वस्वीकारे न सामानाधिकरण्यं मुख्यवृत्तमित्याक्षेपपरिहाराय लोकव्युत्पत्त्यवगतत्वोक्तिः। अयं भावः - यथा चार्वाकादीनां देवादिशब्दा देहमात्रपरा अन्येषाञ्च देहविशिष्टात्मपराः, अथापि देहादिविशिष्टात्मपरत्वे न तदमुख्यं, शब्दस्य तावत्पर्यन्ताभिधायित्वसामार्थ्यसत्त्वात्। तावत्पर्यन्ताभिधानसामर्थ्यसत्त्वेऽप्यात्मनास्तित्ववादिनां तावत्पर्यन्तव्युत्पत्त्यभावादेहमात्रपरत्वं स्वीकृतम्। एवं जीवादिशब्दानामपि ब्रह्मपर्यन्ताभिधानसामर्थ्यसत्त्वेपि वेदान्तव्युत्पत्तिशून्यस्य वैदिकप्रमाणैकगोचरब्रह्मपर्यन्तव्युत्पत्त्यभाव इति।

नन्वेवं शब्दव्युत्पत्त्यभावपरिहारे ज्योतींषि विष्णुः इत्यादौ ज्योतिश्शब्देन परमात्मपर्यन्ताभिधानावश्यकत्वेन ब्रह्मणश्चैकत्वात्कथं बहुत्वोपपत्तिः। मैवम्। द्वित्वबहुत्वादीनां सद्वारकत्वस्वीकारेणोपपत्तिसम्भवात्। स्वाश्रयापृथक्सिद्धिसम्बन्धेन द्वित्वबहुत्वादिकं ब्रह्मण्येवान्वेतीत्यभ्युपगच्छामः। साक्षादन्वयस्येष्टत्वे एकदेशस्वीकरणेनोपपत्तेरेकदेशान्वये व्युत्पत्तिविरोधपरिहारगमनिका पूर्वमेवोक्तेति दिक्। ऐतदात्म्यमित्यत्र बहुव्रीहिणा वैय्यधिकरण्येन शरीरात्मभावोपपादनम्। तत्त्वमसीत्यत्र सामानिधिकरण्येन। इदं सर्वमिति सामान्यतो विशिष्टः सः। अत्र त्वमिति विशेषः।

**अतो - निर्विशेषवस्त्वैक्यवादिनो, भेदाभेदवादिनः, केवलभेदवादिनश्च वैयधिकरण्येनसामानाधिकरण्येन च ब्रह्मात्मभावोपदेशाः सर्वे परित्यक्ताः स्युः। एकस्मिन् वस्तुनि कस्य तादात्म्यमुपदिश्यते ? तस्यैवेति चेत् ; तत्स्ववाक्येनैवावगतमिति न तादात्म्योपदेशावसेयमस्ति किञ्चित्। कल्पितभेदनिरसनमिति चेत्, तत्तु न सामानाधिकरण्यतादात्म्योपदेशावसेयमित्युक्तम्। सामानाधिकरण्यन्तु ब्रह्मणि प्रकारद्वयप्रतिपादनेन विरोध-मेवाऽऽवहेत्। भेदाभेदवादे तु ब्रह्मण्येवोपाधिसंसर्गात्तत्प्रयुक्ताः जीवगता दोषाः ब्रह्मण्येव प्रादुःष्युरिति निरस्त-निखिलदोषकल्याणगुणात्मकब्रह्मात्मभावोपदेशा हि विरोधादेव परित्यक्तास्स्युः। स्वाभाविकभेदाभेदवादे-ऽपि ब्रह्मणस्वत एव जीवभावाभ्युपगमाद्गुणवद्दोषाश्च स्वाभाविका भवेयुरिति निर्दोषब्रह्मतादात्म्योपदेशो**

---

एवं भेदश्रुतेरभेदश्रुतेश्चाविरोधनिर्वाहाय घटकश्रुतिमवलम्ब्य तत्त्वमसीत्यादौ सामानाधिकरण्यं शरीरात्म-भावायत्तमित्युपपादितम्। एवमनङ्गीकर्तृणां मतेष्वविरोधेन सर्ववेदान्तभागस्याप्यर्थवर्णनासम्भवात्तत्परित्याज्यमेव स्यादित्याह - **अत इति**। **निर्विशेषवस्त्वैक्यवादिनः** = अज्ञानवादिनोऽद्वैतिनः। **भेदाभेदवादिनः** = औपाधिकभेदाभेद-वादिनो भास्कराः स्वाभाविकभेदाभेदवादिनो यादवप्रकाशाश्च। उभयोरपि तन्त्रेणात्र भाषणम्। उपरि मतद्वयस्यापि निरासात्। **केवलभेदवादिनः** = स्वतन्त्रभेदवादिनः। **वैयधिकरण्येनेति** - ऐतदात्म्यमित्यादिषु। सामानाधिकरण्येन तत्त्वमसीत्यादिषु। **ब्रह्मात्मभावः** = ब्रह्मणा आत्मतादात्म्यम्। एकस्मिन्नित्यादिना मृषावादिपक्षे तादात्म्यानुपपत्तिप्रदर्शनम्। भेदासहिष्णु च तादात्म्यं नास्तीति भवद्भिरेवानभ्युपगमात्। अस्तु वा तादृशं तादात्म्यम्। स्वतादात्म्यसत्त्वेऽपि तदुपदेशो निरर्थक इत्याह - **तस्येत्यादि**। **स्ववाक्येन** = 'सदेव सौम्येदं' 'सत्यं ज्ञानम्' इत्यादिवाक्येन।

ननु स्वतादात्म्यस्य स्ववाक्यावगतत्वेऽप्यन्यस्य कस्यचित्तादात्म्योपदेशावसेयत्वं स्यादित्यत्राह - **न तादा-त्म्योपदेशेनेति**। ननूपदेशवैयर्थ्यपरिहाराय किञ्चित्प्रयोजनं कल्पनीयमेव तच्चाविद्याकल्पितजीवादिभेदनिरसनमेव। तत्त्वमसीत्यादि तादात्म्योपदेशे हि त्वंपदस्य त्वन्निवृत्तौ लक्षणास्वीकारेण कल्पितसामानाधिकरण्यभेदनिरासः सम्भवतीत्याशङ्कते - **कल्पितेति**। दूषयति - **तत्त्विति**। तुशब्दश्चोद्यस्य मन्दतासूचनार्थः। **सामानाधिकरण्येति**। तादात्म्योपदेशावसेयमिति शेषः। प्रत्युत भवन्मते सामानाधिकरण्यं विरुद्धमित्याह - **सामानाधिकरण्यमिति**। औपाधिकभेदाभेदवादिमते तादात्म्यानुपपत्तिमाह - **भेदेति**। अचिद्ब्रह्मणोर्भेदाभेदौ स्वाभाविकौ। चिद्ब्रह्मणोरभेदस्स्वा-भाविकः। भेदस्त्वौपाधिकः मुक्तावभेदवचनादिति भास्कराः। चिद्ब्रह्मणोरपि भेदाभेदौ स्वाभाविकाविति यादवप्रकाशः। **उपाधिसंसर्गात्** - उपाधिसंसर्गस्याभ्युपगमादित्यर्थः। **तत्प्रयुक्ताः** = उपाधिसंसर्गप्रयुक्ताः। **प्रादुष्ष्युरिति** - अत्र भास्करमतप्रतिक्षेप एवमुक्तः वेदान्ताचार्यैः -

व्योमैकं स्याद्घटाद्यैः पृथगुपधिगणैर्ब्रह्म बह्वंशमेवं तत्रोपधिव्यपाये भवभृदयमियाद्ब्रह्मतामित्ययुक्तम्।
स्वानर्थारम्भदौस्थ्यात्प्रतिनियतगुणप्रत्यभिज्ञाद्यदृष्टेः च्छिन्नाच्छिन्नांशचिन्तोदितबहुविहतेः साम्यशब्दाच्च मुक्तौ ॥ इति।

**निरस्तेति**। ब्रह्मणो निरस्तनिखिलदोषत्वकल्याणगुणात्मकत्वयोः श्रुतिभि र्बोधनेन तस्याभ्युपगन्तव्यत्वादिति भावः। यद्यप्युपाधिसंसर्गप्रयुक्तजीवगतदोषणां ब्रह्मण्येव प्रादुर्भावाद्ब्रह्मण एव निरस्तनिखिलदोषत्वादिभङ्गेन निरस्त-निखिलदोषत्वादिबोधकश्रुतिविरोध एव वाच्यः। अथापि क्लेशकर्माद्यस्पृष्टसर्वसत्त्वादिगुणकस्य निर्दोषस्येश्वरस्य तदनर्हानीश्वरतादात्म्यमप्यत एव व्याहतं भवतीत्येवमुक्तम्।

स्वाभाविकभेदाभेदवादिमते तदनुपपत्तिं दर्शयति - **स्वाभाविकेति**। सन्मात्रं ब्रह्म सर्वानुभूतमिह पुनर्नित्यसिद्धाः त्रयोंशाः जीवेशाचित्प्रभेदादिति तेषां मतम्। अत्र ब्रह्मण ईश्वरांशत्वेन सर्वज्ञत्वादिगुणानां स्वाभाविकत्ववज्जीवांशत्वेना-ल्पज्ञत्वादिदोषाणामपि तस्यैव स्वाभाविकत्वं प्रसज्यत इति दूषयति - **ब्रह्मण इति**। स्वत एवेत्यनेनौपाधिकभेदाभेद-

**विरुद्ध एव । केवलभेदवादिनाश्चात्यन्तभिन्नयोः केनापि प्रकारेणैक्यासम्भवादेव ब्रह्मात्मभावोपदेशा न सम्भवन्तीति सर्ववेदान्तपरित्यागस्स्यात् ।**

**निखिलोपनिषत्प्रसिद्धं कृत्स्नस्य ब्रह्मशरीरभावमातिष्ठमानैः कृत्स्नस्य ब्रह्मात्मभावोपदेशाः सर्वे सम्यगुपपादिता भवन्ति । जातिगुणयोरिव द्रव्याणामपि शरीरभावेन विशेषणत्वेन, 'गौरश्वो मनुष्यो देवो जातः पुरुषः कर्मभिः' इति सामानाधिकरण्यं लोकवेदयोर्मुख्यमेव दृष्टचरम् । जातिगुणयोरपि (हि) द्रव्यप्रकारत्वमेव,**

---

वादिपक्षादप्यस्यातिजघन्यत्वं सूचितम् । अत्रापि निर्दोषश्रुतिविरोधदूषणमनपहाय तादृशब्रह्मतादात्म्योपदेशविरोधोद्भावनं हेयानर्हस्य हेयार्हतादात्म्यस्याप्यपुरुषार्थत्वमभिप्रेत्येति द्रष्टव्यम् । केवलभेदवादिमते तदुपपत्तिमाह - **केवलेति** । **अत्यन्तभिन्नयोरिति** । सर्वात्मनाप्यैक्यासम्भवहेतुसूचनम् । न हि घटपटयोरैक्यसम्भवः । तादात्यरूपमैक्यं हि प्रकारप्रकारिभावापन्नयोरेव, न तु तद्रहितयोरिति भावः । **केनापि प्रकारेण** - विशेष्यांशतोपि । अत्र केवलब्रह्मतादात्म्योपदेशविरोधोद्भावनात्, पूर्वं पक्षद्वये निर्दोषब्रह्मतादात्म्योपदेशविरोधोद्भावनाच्च मतद्वये निर्दोषश्रुतिविरोधमूलकमेव तत्तादात्म्योपदेशविरोधोद्भावनमिति मन्तव्यम् । **सर्ववेदान्तपरित्यागस्स्यादिति** । सर्ववेदान्तस्यापि यथावस्थितस्वारसिकार्थपरित्यागादविरोधायास्वारसिकार्थवर्णनेप्यर्थात्सर्ववेदान्तपरित्यागः फलतीति भावः ॥

अथ पक्षचतुष्टयेषूक्ताया अनुपपत्तेरभावं स्वमते दर्शयति - **निखिलेति** । अनेन पदेनास्मदुक्तः कृत्स्नस्य ब्रह्मशरीरभावो विरोधपरिहाराय कल्पित इति न मन्तव्यम् । परन्तु श्रुत्यैवैवं विरोधः परिहृत इति सूचितम् । नन्वस्तु शरीरशरीरिभावोपदेशः, सिध्यतु च तेन शरीरशरीरिभावः, अथापि शरीरस्य जगतः शरीरिभूतब्रह्मतादात्म्योपदेशः कथम् ? तयोर्भिन्नत्वात् । अन्यथा शरीरशरीरिभाव एव न स्यादिति चेत् - शरीरवाचकशब्दस्य शरीरिपर्यन्ताभिधायकत्वस्य मुख्यत्वात्तादात्म्योपदेशः । अस्य समाधेः पूर्वमुक्तत्वेपि शिष्यानुग्राहार्थं दृष्टान्तप्रदर्शनपूर्वकं पुनर्वक्ति - **जातीत्यादि** । **द्रव्याणामपीति** । द्रव्यत्वस्य शरीरलक्षणघटकत्वात् । **शरीरभावेन** = शरीरत्वेन । अनेनाशरीरस्य दण्डकुण्डलादेर्व्यावृत्तिः । अपृथक्सिद्धतया विशेषणस्यैव तथात्वादित्याशयः । **गौरिति** । पुरुषः कर्मभिः गवादिशरीरको जात इत्यर्थः । **मुख्यमेव दृष्टचरमिति** । अयमत्र भावः - यथा जातिवाचकगवादिशब्दस्य गुणवाचकशुक्लादिशब्दस्य च व्यक्तिगुणिवाचकपदेन सामानाधिकरण्यं व्यक्तिगुण्यपृथक्सिद्धत्वेन तद्वाचकत्वमादाय मुख्यवृत्तं तद्वच्छरीरवाचकशब्दस्य शरीर्यपृथक्सिद्धत्वेन तद्वाचकत्वमादाय शरीरिवाचकशब्दसामानाधिकरण्यं मुख्यवृत्तमेव भवतीति । अपिशब्दोऽपृथक्सिद्धद्रव्यस्यापि सूचनार्थः । जातिगुणविषये येन प्रकारेण खण्डो गौः शुक्लः पट इत्यादिसामानाधिकरण्यं मत्वर्थप्रत्ययनिरपेक्षमुपपद्यते तेनैव प्रकारेणापृथक्सिद्धद्रव्यविषयेपि मनुष्योऽहमित्यादिसामानाधिकरण्यमुपपन्नमिति न तदर्थं पृथक् प्रयत्नोऽस्माभिः कार्य इति ।

ननु जातिगुणविषये तादृशसामानाधिकरण्ये अद्रव्यत्वे सति विशेषणत्वं, जातिगुणयोरन्यतरत्वे सति विशेषणत्वं वा प्रयोजकम् । तस्य च प्रयोजकस्यापृथक्सिद्धद्रव्यविषयेऽभावान्न सामानाधिकरण्यस्य मुख्यवृत्तत्वोपपत्तिः । अमुख्योपि प्रयोगो दृश्यत एव । यथा गङ्गायां घोष इति । दण्डादे र्द्रव्यभूतत्वेऽपि तद्वाचकशब्दौन्मुख्यतया विशेष्यपर्यन्ताभिधानस्यादर्शनात् । अपृथक्सिद्धद्रव्यत्वमपि न प्रयोजकम् । दीपापृथक्सिद्धप्रभावाचिशब्देन दीपाभिधानादर्शनादित्यत्राह - **द्रव्यप्रकारत्वमेवेति** । एवकारोऽन्यस्य निबन्धनत्वव्यवच्छेदकः । अयमत्र भावः - गङ्गायां घोष इतिवदस्य प्रयोगस्यामुख्यत्वोक्ति र्न घटते । गङ्गापदस्य क्वचित्कूले क्वचित्प्रवाहे च प्रयोगदर्शनात् । उभयानुयायि प्रवृत्तिनिमित्तादर्शनाच्च कस्मिंश्चिदर्थे मुख्यत्वं कस्मिंश्चिदर्थेऽमुख्यत्वमिति व्यवस्थाप्यते । अत्र तु मत्वर्थप्रत्ययनिरपेक्षसामानाधिकरण्येन प्रयोगदर्शनात्तादृशप्रयोगेषु सर्वत्र विशेष्यपर्यन्ताभिधायित्वस्याकारस्य दर्शनात् अपृथक्सिद्धप्रकारत्वस्यानुयाय्याकारस्य

**'खण्डो गौः' 'शुक्लः पट' इति सामानाधिकरण्यनिबन्धनम् ; मनुष्यत्वादिविशिष्टपिण्डानामपि आत्मनः प्रकारतयैव पदार्थत्वात् 'मनुष्यः पुरुषः षण्डो योषिदात्मा जात' इति सामानाधिकरण्यं सर्वत्रानुगत-मिति प्रकारत्वमेव सामानाधिकरण्यनिबन्धनम् ; न परस्परव्यावृत्ता जात्यादयः । स्वनिष्ठानामेव हि द्रव्याणां कदाचित्कचिद्द्रव्यविशेषणत्वे मत्वर्थीयप्रत्ययो दृष्टः, 'दण्डी' 'कुण्डली' इति ; न पृथक्प्रतिपत्तिस्थित्यनर्हाणां द्रव्याणाम् ; तेषां विशेषणत्वं सामानाधिकरण्यावसेयमेव ॥**

---

दर्शनाच्चाननुगताकारप्रयोजकत्वाश्रयणेन क्वचिदमुख्यत्वकल्पनमनुपपन्नम् ॥

नन्वत्रापि देवादिशब्दस्य देह-जीव-परमात्मसु त्रिषु प्रयोगात् त्रितयानुयायि प्रवृत्तिनिमित्तादर्शनेन गङ्गापदवत् क्वचिदमुख्यत्वं सोढव्यमिति चेन्न । जातिगुणवाचकशब्दानामपि जातिगुणादिषु तदाश्रयद्रव्ये च प्रयोगदर्शनेन तत्रापि मुख्यत्वामुख्यत्वयो र्निर्णयासम्भवप्रसङ्गात् । देवत्वादीनामेव देवादिशब्दप्रवृत्तिनिमित्तत्वाश्रयणेन शरीरात्मसाधारण-त्वेनानुयाय्याकारस्य सत्त्वाच्च । स्थूलो मनुष्यो देह इत्यबाधितप्रतीतिबलादात्मनोपि देवत्वाद्यश्रयत्वाभ्युपगमावश्यकत्वात् । न च देहे साक्षाद्देवोऽहमिति प्रतीतिबलात्तस्यापि परम्परया देवत्वाश्रयत्वसम्भवादास्तरणान्तरितस्यापि पर्यङ्कादेः शयानदेवदत्ताधारत्ववदत्रापि देहान्तरितस्याप्यात्मनो देवत्वाद्यश्रयत्वमविरुद्धम् । प्रतीतेरेवात्र गमकत्वात् । प्रतीति-शरणा हि वयम् । एतेन घटद्वारा घटत्वाश्रयभूतलस्यापि घटशब्दवाच्यत्व शङ्का निरस्ता ॥

भूतलस्य घटत्वाश्रयत्वग्राहकाबाधितप्रतीत्यभावात् । अत एव च दीपापृथक्सिद्धप्रभावाचिशब्दानां न दीपादि वाचकत्वप्रसङ्गः । दीपस्य तच्छब्दप्रवृत्तिनिमित्तप्रभात्वाश्रयत्वग्राहकाबाधितप्रतीत्यभावात् । अतोऽत्रानुयाय्याकार-दर्शनेनाननुगताकारस्य प्रयोजकत्वं परिकल्प्य क्वचिदमुख्यत्वकल्पनं प्रामाणिकपथारूढम् ॥ एवं जातिवाचकगुणवाच-कयोरन्यतरस्य मुख्यत्वमन्यतरस्यामुख्यत्वमिति किमिति न स्वीक्रियते । उभयेषामपि विशेष्यपर्यवसायित्वेन प्रयोग-दर्शनादिति चेदत्रापि तत्समम् । अतो जातिगुणवाचिशब्दानामिव शरीरवाचिशब्दानामपि सामानाधिकरण्यं मुख्य-वृत्तमेवेत्यकामेनापि स्वीकरणीयमिति । **खण्डो गौरिति** गोत्ववाचकोऽपि गोशब्दः खण्डशब्दसामानाधिकरण्याज्जाति-विशिष्टवाचकः । शुक्लशब्दार्थोऽप्येवमेव । गोशुक्लशब्दादीनां गोत्वशौक्ल्यवाचकत्वमभ्युपगम्य खण्डपटादिष्वपृथ-क्सिद्धिसम्बन्धेनान्वयान्मुख्यत्वोपपादनं सामानाधिकरण्यव्याहतम् । भिन्नप्रवृत्तिनिमित्तानामेकार्थबोधकत्वस्यैव सामा-नाधिकरण्यरूपत्वोक्तेः । प्रकारतयैव पदार्थत्वादित्यनेनापृथक्सिद्धप्रकारवाचित्वमेव सामानाधिकरण्यनिबन्धनमिति दर्शितम् । एवकारव्यवच्छेद्यमाह - **नेति** ।

**परस्परव्यावृत्ता इति** । जात्यादीनां निबन्धनत्वाभावे हेतुः । दण्डादीनां प्रकारत्वेऽप्यपृथक्सिद्धप्रकारत्वाभावेन न तद्वाचिशब्देन सामानाधिकरण्यम् । किन्तु मत्वर्थीयप्रत्यय एवेत्याह - **स्वनिष्ठानामेवेति** । प्रथक्प्रतिपत्त्यनर्हाणां पृथक्स्थित्यनर्हाणाञ्च न मत्वर्थप्रत्यय इत्याह - **नेति** । सिद्धिपदमुभयपरम् । ननु विशेषणत्वज्ञानं सामानाधिकरण्य-निबन्धनं सामानाधिकरण्यञ्च विशेषणत्वनिबन्धनमित्यन्योन्याश्रयः । उक्तञ्च भाष्येपि - विशेषणत्वं सामानाधिकरण्याव-सेयमेव द्रव्यप्रकारत्वमेव सामानाधिकरण्यनिबन्धनमितीति चेन्न, प्रवाहानादित्वेनादोषात् । कश्चिदेव सामानाधिकरण्य-बलाद्विशेषणत्वमवगच्छति । अवगम्य च सामानाधिकरण्येन प्रयुङ्क्त इति न दोषः ॥

ननु प्रथक्स्थितिप्रतिपत्त्यनर्हप्रकारत्वमेव मत्वर्थप्रत्ययनिरपेक्षसामानाधिकरण्ये प्रयोजकमिति सिद्धान्तितम् । इदं भवतामेव विपरीतफलकम् । जाति गुणयोरन्यतरत्वे सति विशेषणत्वं प्रयोजकमित्यस्मदुक्तं हि शरीरवाचकशब्द-सामानाधिकरण्यस्य मुख्यत्वोपपादनाय प्रदूष्य भवद्भिरन्यथोपपादितम् । एवमपि शरीरवाचकशब्दसामानाधिकरण्यम-

**यदि 'गौरश्वो मनुष्यो देवः पुरुषो योषित् षण्ड आत्मा कर्मभिर्जातः' इत्यत्र, 'खण्डो मुण्डो गौः' 'शुक्लः पटः' 'कृष्णः पटः' इति जातिगुणवदात्मप्रकारत्वं मनुष्यादिशरीराणामिष्यते, तर्हि जातिव्यक्त्योरिव प्रकारप्रकारिणोश्शरीरात्मनोरपि नियमेन सह प्रतिपत्तिः स्यात्; न चैवं दृश्यते । न हि नियमेन गोत्वादिवदात्माश्रयतयैवाऽऽत्मना सह मनुष्यादिशरीरं पश्यन्ति । अतो 'मनुष्य आत्मा' इति सामानाधिकरण्यं लाक्षणिकमेव ॥**

**नैतदेवम्; मनुष्यादिशरीराणामप्यात्मैकाश्रयत्वम्, तदेकप्रयोजनत्वम्, तत्प्रकारत्वञ्च जात्यादितुल्यम् । आत्मैकाश्रयत्वमात्मविश्लेषे शरीरविनाशादवगम्यते । आत्मैकप्रयोजनत्वं च तत्कर्मफलभोगार्थतयैव सद्भावात् । तत्प्रकारत्वमपि 'देवो मनुष्य' इत्यात्मविशेषणतयैव प्रतीतेः ।**

---

मुख्यवृत्तमेव भवन्मते । शरीरात्मनोः पृथक्प्रतिपत्त्यर्हत्वात् । न च पृथक्स्थित्यनर्हप्रकारत्वमेव निबन्धनं, न तु पृथक्प्रतिपत्त्यनर्हत्वघटितं तदिति वाच्यम् । पृथक्प्रतिपत्त्यर्हाणामपि गन्धरसादीनां पृथक्स्थित्यनर्हत्वेन तद्वाचिशब्देन मत्वर्थप्रत्ययनिरपेक्षसामानाधिकरण्यापत्तेः । एवं पृथक्स्थित्यनर्हजात्यादेः पृथक्प्रतिपत्त्यनर्हत्वनियमदर्शनेनाऽऽत्मनश्च पृथक्प्रतिपत्त्यर्हत्वेनापृथकसिद्धत्वाभावान्नात्र सामानाधिकरण्यं मुख्यवृत्तं भवितु मर्हतीति शङ्कते - **यदीति** । जातिगुणादिवाचिशब्दसामानाधिकरण्यस्य यादृशं निबन्धनमादाय मुख्यवृत्तत्वमुपपाद्यते तादृशस्य प्रकृतेपि सत्त्वे कथं मुख्यवृत्तत्वपरित्यागः ? जातिगुणयोरिव पृथक्स्थित्यनर्हे शरीरेपि सामानाधिकरण्येन बाधितप्रतीतिरस्ति । अनुयाय्याकारश्च पूर्वमेव दर्शितः ।

एवमनयोर्वैलक्षण्याभावेन क्वचित्सामानाधिकरण्यस्य मुख्यवृत्तत्वमन्यत्रामुख्यवृत्तत्वमित्यत्र किं निबन्धनम् । जातौ गुणे वा किमिति सामानाधिकरण्यस्यामुख्यवृत्तत्वं स्वीक्रियते । पृथक्स्थित्यनर्हप्रकारत्वस्य प्रयोजकत्वाभ्युपगमे गन्धरसादिवाचिशब्दसामानाधिकरण्यापादनमपि न युक्तम् । जातिगुणयोरन्यतरत्वे सति विशेषणत्वस्य प्रयोजकत्ववादिनां भवतामपि पक्षे तदापादनवारणासम्भवात् । पृथक्स्थित्यनर्हप्रकारस्य पृथक्प्रतिपत्त्यनर्हत्वनियमदर्शनेन सहप्रतिपत्त्यापादनं न सम्भवति । भवद्भिरपि पृथक्स्थित्यनर्हाणां गन्धरसादीनां पृथक्प्रतिपत्त्यर्हत्वेन स्वीकारात् । सहप्रतिपत्तिनियमस्य एकसामग्रतिवेद्यत्वनिबन्धनत्वाश्रयणमस्माकमप्यविशिष्टम् । अतः सहप्रतिपत्त्यभावेपि प्रकारतैकस्वभावत्वस्य जात्यादितुल्यस्य निबन्धनस्यात्रापि सत्त्वेन सामानाधिकरण्यस्य मुख्यत्वे न काप्यनुपपत्तिरित्याशयेन समाधत्ते - **नैतदेवमिति** । शरीरस्यात्मप्रकारतैकस्वभावत्वावगमाय हेतुत्रयमाह - **मनुष्यादिशरीराणामपीति** । अत्र मिलितं हेतुः । न तु प्रत्येकम् । अन्यथा दण्डादिष्वपि तत्प्रकारत्वसत्त्वेन प्रकारतैकस्वभावत्वापत्तेः । आत्मैकाश्रयत्वमुपपादयति - **आत्मेति** । **अवगम्यत** इति । शरीरस्यात्मैकाश्रयत्वाभावे ह्यात्मविश्लेषेपि स्थीयेत । न तदस्ति । अतो ज्ञायत इति भावः ।

नन्वात्मविश्लेषेणशरीरनाशाभ्युपगमे कथं शरीरत्वव्यवहार इति मा वोचः । पूर्वं शरीरतया परिक्लृप्तसङ्घातैकदेशत्वेन तथाव्यवहारात् । वक्ष्यति चेदमुत्तरत्र । द्वितीयं प्रयोजकमुपपादयति - **आत्मेति** । अत्र कर्मफलेत्युक्त्या नारकशरीरेष्वव्याप्तिनिरासः । दुःखस्याप्रयोजनत्वेपि पापक्षयरूपकर्मफलायत्तत्वात् । भृत्यादिदेहस्य स्वामिप्रयोजनसाधनत्वेन स्वामिकर्मफलभोगार्थत्वेऽपि भृत्यादिगतकर्मफलभोगार्थत्वस्यापि सत्त्वेन नातिव्याप्तिः । एतत्सूचनायावधारणोक्तिः । एवं पत्नीपुत्रादिशरीरेऽपि । क्रमनिर्देशे तच्छब्दघटितत्वेऽप्यत्रात्मशब्दप्रयोगस्तच्छब्दार्थविवरणाय । उत्तरत्रात्मशब्दाप्रयोगस्तु स्फुटत्वादुपेक्षितः । **तदिति** । एवकारो भिन्नक्रमः । आत्मविशेषणतया प्रतीतेरेवात्मप्रकारत्वं

**एतदेव हि गवादिशब्दानां व्यक्तिपर्यन्तत्वे हेतुः । एतत्स्वभावविरहादेव दण्डकुण्डलादीनां विशेषणत्वे 'दण्डी ; कुण्डली' इति मत्वर्थीयप्रत्ययः । देवमनुष्यादिपिण्डानामात्मैकाश्रयत्वतदेकप्रयोजनत्वतत्प्रकारत्वस्वभावात् 'देवो मनुष्य आत्मा' इति लोकवेदयोस्सामानाधिकरण्येन व्यवहारः । जातिव्यक्त्योर्नियमेन सहप्रतीतिरुभयोश्चाक्षुषत्वात् । आत्मनस्त्वचाक्षुषत्वाच्चक्षुषा शरीरग्रहणवेलायामात्मा न गृह्यते ।**

**पृथग्ग्रहणयोग्यस्य प्रकारतैकस्वरूपत्वं दुर्घटमिति मा वोचः ; जात्यादिवत्तदेकाश्रयत्वतदेकप्रयोजनत्वतद्विशेषणत्वैश्शरीरस्यापि तत्प्रकारतैकस्वभावत्वावगमात् । सहोपलम्भनियमस्त्वेकसामग्रीवेद्यत्वनिबन्धन इत्युक्तम् । यथा चक्षुषा पृथिव्यादेर्गन्धरसादिसम्बन्धित्वं स्वाभाविकमपि न गृह्यते, एवं चक्षुषा गृह्यमाणं शरीरमात्मप्रकारतैकस्वभावमपि न तथा गृह्यते ; आत्मग्रहणे चक्षुषः सामर्थ्याभावात् । नैतावता शरीरस्य**

---

सिद्धम् । यस्य यत्प्रकारतया प्रतीतिः तस्य तत्प्रकारत्वं स्वतस्सिद्धमिति तत्प्रकारत्वस्य सुलभसिद्धत्वमिति ।

यद्यपि तदेकाश्रयत्वोक्त्यैव तत्प्रकारत्वं फलितम्, आश्रयशब्दसामर्थ्यात्, अथापि तत्सम्बन्धसत्ताविरहव्यापकस्वसत्ताविरहकत्वरूपतदेकाश्रयत्वस्यैव विवक्षितत्वेन तेन तत्प्रकारकत्वालाभ इति ध्येयम् । अत एव ह्यात्मविश्लेषे शरीरविनाशादिति तदेकाश्रयत्वमुपपादितम् । **एतदेव हीति** । यद्यपि तत्प्रकारत्वस्वभावत्वमेव निबन्धनं, तदेव व्यक्तिपर्यन्तत्वे हेतुः, तत्प्रकारत्वस्वभावत्वमेव सामानाधिकरण्यनिबन्धनमित्युत्रत्र भाषणमत एव सङ्गच्छते, तदेकाश्रयत्वादि तदवगमहेतुः, तथापि ज्ञाप्ये ज्ञापकोपचारेणात्रैवमुक्तिरिति द्रष्टव्यम् । अत एव जात्यादिवत्तदेकाश्रयत्वादिभिः शरीरस्यापि तत्प्रकारतैकस्वभावत्वावगमादिति भाषिष्यते । हिशब्दो वाद्यभिमतत्वसूचकः । **एतत्स्वभावेति** । उक्तप्रकारेत्यर्थकम् । उक्ताकार इति यावत् । ननु प्रकारतैकस्वभावत्वं ह्यपृथक्सिद्धविशेषणत्वपर्यवसितमेव । ततश्च नियमेन सहप्रतीतिरावश्यकी सहोपलम्भनियमस्यापृथक्सिद्धविशेषणत्वप्रयुक्तत्वात् । दृश्यते च नियमेन जातिव्यक्त्योः सहप्रतिपत्तिरित्यत्र चाक्षुषत्वादीनामुपाधित्वमाह - **जातिरिति** । चाक्षुषत्वमुपलक्षणम् । उपाधेः पक्षवृत्तित्वमाह - **आत्मनस्त्विति** । तुशब्दो वैलक्षण्यसूचकः ॥

ननु पृथग्ग्रहणयोग्यस्य कथं प्रकारत्वस्वभावत्वमपृथक्सिद्धविशेषणत्वरूपस्य तस्य एकसामग्रीवेद्यत्वनिबन्धनत्वादित्यत्राह - **पृथगिति** । **प्रकारतैकस्वरूपत्वं** = प्रकारतैकधर्मत्वम् । कुत इत्यत्राह - **जात्यादिवदिति** । जात्यादिषु तदेकाश्रयत्वादेरपृथक्सिद्धविशेषणत्वप्रयोजकत्वदर्शनेन शरीरेपि तस्यैव प्रयोजकत्वमिति प्रकारत्वस्वभावपरित्यागो न सम्भवतीति भावः । तत्प्रकारतैकस्वभावत्वादित्यत्र स्वभावशब्दो धर्मपरः । अन्यथा स्वभावशब्देनैव प्रकारत्वनियमस्य सिद्धेः एक शब्दप्रयोगवैयर्थ्यात् । एवं तत्प्रकारतैकस्वभावत्वेन सामानाधिकरण्यनिबन्धनमित्यत्रापि द्रष्टव्यम् । अनेन जात्यादिवच्छरीरस्यापृथक्सिद्धविशेषणत्वरूपप्रकारत्वस्वभावत्वे प्रमाणं प्रदर्शितम् ॥

ननु जात्यादिष्वपृथक्सिद्धविशेषणत्वे एकसामग्रीवेद्यत्वस्य निबन्धनत्वदर्शनादत्रैकसामग्रीवेद्यत्वाभावेन कथमपृथक्सिद्धविशेषणत्वमित्यत्राह - **सहेति** । **सहोपलम्भनियमः** = सदैव प्रकारतयोपलम्भनियमः । तुः अवधारणे । सहोपलम्भनियम एवैकसामग्रीवेद्यत्वं निबन्धनम् । न त्वपृथक्सिद्धविशेषणत्वरूपे प्रकारत्वस्वभावत्वेऽपीति भावः । नन्वेकसामग्रीवेद्यत्वस्यापृथक्सिद्धविशेषणत्वे प्रयोजकत्वं नास्तीत्यत्र किं मानमित्यत्र भवदभिमतस्थलाननुयायित्वमेवेत्याशयेनाह - **यथेति** । पृथिव्यपृथक्सिद्धस्य गन्धादेरेकसामग्रीवेद्यत्वाभावेन नापृथक्सिद्धत्वहानिः, तद्वत् । अन्यथाऽपृथक्सिद्धत्वमेव गन्धादीनां भज्येतेति भावः । **एवं** = तथा । आत्मप्रकारतैकस्वभावत्वेनेत्यर्थः । **एतवता** = चक्षुषाऽऽत्मनो ग्रहणाभावेनैकसामग्रीवेद्यत्वाभावादित्यर्थः । एवं पराभिमतप्रयोजकस्याननुयायित्वेनाप्रयोजकत्वात्सर्वानुयायिप्रयोजका-

**तत्प्रकारत्वस्वभावविरहः । तत्प्रकारैकस्वभावत्वमेव सामानधिकरण्यनिबन्धनम् । आत्मप्रकारतया प्रतिपादन-समर्थस्तु शब्दः सहैव प्रकारतया प्रतिपादयति ॥**

**ननु च शाब्देऽपि व्यवहारे शरीरशब्देन शरीरमात्रं गृह्यत इति नात्मपर्यन्तता शरीरशब्दस्य ॥ नैवम्; आत्मप्रकारभूतस्यैव शरीरस्य पदार्थविवेकप्रदर्शनाय निरूपणान्निष्कर्षकशब्दोऽयम् ।**

कारस्योक्तत्वाच्च शरीरस्य प्रकारत्वस्वभावत्वसिध्या तस्यैव सामानाधिकरण्यनिबन्धनत्वमित्याह - **तदिति** । एवकारः एकसामग्रीवेद्यत्वतन्निबन्धनसहोपलम्भनियमव्युदसनपरः ।

ननु तत्प्रकारत्वस्वभावत्वस्य सामानाधिकरण्यनिबन्धनत्वे तद्वाचिशब्देन तद्विशिष्टपर्यन्ताभिधानं ह्यावश्यकम् । तद्विशिष्टपर्यन्तन्तु न तच्छब्दः प्रतिपादयतीत्यत्राह - **आत्मेति** । **समर्थ** इत्यनेन धर्मिपर्यन्तवाचकत्वं जातिगुणवाचक-शब्दवत् व्युत्पत्तिसिद्धमिति सूचितम् । सहैव प्रकारतया प्रतिपादयतीत्यनेन सहैव प्रकारतया शब्दजन्यप्रतीतिनियमो दर्शितः । एतदुक्तं भवति - अपृथक्सिद्धविशेषरूपप्रकारतैकस्वभावत्वं सामानाधिकरण्ये प्रयोजकं, तत्र सिद्धिपदेन शब्दजन्यबोधरूपोपस्थितिर्विवक्षिता । पृथक्स्थित्यनर्हत्वे सति पृथक्शब्दजन्यबोधानर्हत्वमेव सामानाधिकरण्ये प्रयोज-कमिति फलितम् । भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिरिति सामानाधिकरण्यस्य शब्दगतत्वेन देवादिशब्दैः प्रकारभूतशरीरोपस्थापनदशायां प्रकारिभूतवस्तूपस्थापनस्यापि सत्त्वेन देवादि शरीरस्य पृथक्स्थित्यनर्हत्ववत्पृथक्शब्द-जन्यबोधानर्हत्वस्यापि सत्त्वेन सहोपलम्भनियमस्वीकारेऽपि न सामानाधिकरण्यस्य मुख्यवृत्तत्वानुपपत्तिरिति ।

वस्तुत एवं परिष्कारे गन्धरसादिशब्दैः पृथिवीशब्दस्य सामानाधिकरण्यवारणं न सम्भवति । गन्धरूपादिशब्दानां सदैव प्रकारतया प्रतिपादकत्वाभावेन गन्धादीनां पृथक्स्थित्यनर्हत्वेपि पृथक्शब्दजन्यबोधार्हत्वात् । घटः शुक्ल इत्यादौ तु शुक्लादिशब्दानां सदैव प्रकारतया प्रतिपादकत्वेपि शौक्ल्यादेः पृथक्शब्दजन्यबोधार्हत्वेन सामानाधिकरण्यो-पपादनं दुर्घटमिति मत्वैव प्रकारतैकस्वभावत्वस्यैव सामानाधिकरण्यनिबन्धनत्वं भाषितं, न तु पृथक्शब्दजन्य-प्रतिपत्त्यनर्हत्वविशिष्टस्येति ध्येयम् ।

ननु शब्दस्यापि शरीरिपर्यन्तत्वाभिधेयत्वं नास्ति । न हि शरीरशब्दस्यैव गवादिशब्दवत्प्रकार्यात्मपरत्वं दृष्टम् । अत एकार्थवृत्तित्वरूपसामानाधिकरण्याभावेन सामानाधिकरण्यमनुपपन्नमेवेति शङ्कते - **ननु चेति** । चः चोद्यान्तरसमुच्चये । **व्यवहारे** = प्रामाणिकव्यवहारे । समाधत्ते - **नैवमिति** । **प्रदर्शनायेति** । देवादिशब्दैः शरीरात्मनो र्विविच्य ज्ञापनं दुर्घटम् । शरीरादिशब्दैस्तु सुघटमिति भावः । **निरूपणात्** = शरीरशब्देन बोधनात् । पदार्थविवेकप्रदर्शनायेति फलोक्तिः । शरीरशब्देन बोधने हि पदार्थविवेकसम्भवः । न तु देवादिशब्देनापीति भावः । **निष्कर्षकशब्दः** = नियतनिष्कर्षकशब्दः । निष्कर्षकशब्दो द्विविधः - नियतनिष्कर्षकः, वैवक्षिकनिष्कर्षक इति । शरीरादिशब्दः प्रथमः । आत्मादिशब्दो द्वितीयः । शब्दे निष्कर्षकानिषकर्षकविभागवन्निष्कर्षकशब्देपि नियतनिष्कर्षकवैवक्षिकनिष्कर्षकविभागोपि प्रयोगमूलक एव । अत एव 'यस्यात्मा शरीरं यस्य पृथिवी शरीरम्' इत्यादिष्वात्मादिनिष्कर्षकशब्दानामपि विशेष्यपर्यन्ताभिधेयत्वं, तेषां वैवक्षिकनिष्कर्षकत्वात् । एवं शुक्लादिशब्दानामपि तथात्वं बोध्यम् । 'गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति' इति शुक्लादिशब्दानां गुणवाचकत्वं गुणिवाचकत्वञ्च स्वीकृतमिति वैवक्षिकनिष्कर्षकत्वाभ्युपगमात् ।

ननु 'रसोऽहमप्सु कौन्तेय प्रभास्मि शशिसूर्ययोः, पुण्यो गन्धः पृथिव्याञ्चे'त्यादिषु रसादिशब्दैः परमात्म-पर्यन्ताभिधानाद्रसादिशब्दानामपि वैवक्षिकनिष्कर्षकत्वं वक्तव्यम् । मैवम् । तेषां नियतनिष्कर्षकत्वात् । अन्यथा 'गन्धः पृथिवी, जलं रस' इत्यादिप्रयोगापत्तेः । रसोऽहमप्सु इत्यादौ त्वगत्या तदाश्रयणम् । उपचारतो रसाभेदाश्रयणे

**यथा गोत्वं शुक्लत्वमाकृतिर्गुणः इत्यादिशब्दाः । अतो गवादिशब्दवद्देवमनुष्यादिशब्दा आत्मपर्यन्ताः ।**

तु न कश्चिद्दोषः । गन्धः पृथिवीत्यादौ औपाचारिकत्वाश्रयणं तु न युक्तम् । प्रामाणिकप्रयोगाभावात्प्रयोगस्यैव व्यवस्थापकत्वात्सर्वत्रास्मदुपरि कृतं चोद्यमस्मदुक्तसमाधानञ्च भवतामपि समानमित्याशयेनाह - **यथा गोत्वमिति** । अस्मदुक्तसमाधानानङ्गीकारे जातिवाचकगोत्वादिशब्देन प्रकार्यनुपस्थापनाज्जातिवाचकशब्दसामानाधिकरण्यमप्यनुपपन्नं स्यादिति भावः । **आत्मपर्यन्ता इति** । जातिवाचकानां गवादिशब्दानां यथा व्यक्तिपर्यन्तबोधनं शक्तिनिबन्धनमिति मुख्यं, तद्वद्देवादिशब्दानामपि व्यक्तिपर्यन्ताभिधानं शक्तिनिबन्धनत्वान्मुख्यमेवेति भावः ।

ननु गवादिशब्देपि व्यक्तिपर्यन्यन्तबोधनं न मुख्यम् । अपि तु लाक्षणिकमेव । शक्यार्थस्य जात्यादेरानयनाद्यनर्हत्वात् व्यक्तिसम्बन्धसत्त्वाच्च सम्बन्धानुपपत्तिभ्यां व्यक्तौ लक्षणाया एव स्वीकारात् । अतस्तत्तुल्यन्यायेन देवादिशब्दै र्व्यक्तिबोधनमपि लाक्षणिकमेव स्यादिति चेन्न । गवादि शब्दानां व्यक्तिबोधने शक्तत्वं जातिबोधने लाक्षणिकत्वमित्यपि स्वीकारप्रसङ्गात् । व्यक्तिसम्बन्धस्य संस्थानरूपजातिं विना व्यक्तिमात्रानयनानुपपत्तेश्च सत्त्वेन सम्बन्धानुपपत्तिरूपलक्षणाबीजस्य प्रकृतेपि सम्भवात् । अनन्यलभ्यस्यैव शब्दार्थत्वमुभयमतेपि तुल्यम् । अनयैव रीत्या नीलशुक्लादिशब्दानामपि व्यक्तिबोधने लाक्षणिकत्वापत्तेः । अपृथक्सिद्धविशेषणवाचकशब्दत्वस्य विशेष्यलक्षणाप्रतिबन्धकत्वानुसरणं तूभयस्थलानुगुणमेव । निष्कर्षकशब्दस्थले गत्यभावाश्रयणमप्युभयमतसिद्धम् । न हि भवतामपि जात्यादिशब्दै र्लक्षणया व्यक्तिपर्यन्तबोधनवारणसम्भवः । सम्बन्धानुपपत्तिरूपलक्षणाबीजस्य तत्रापि सत्त्वात् ।

ननु भवन्मतेपि विशेष्यवाचकपदासमभिव्याहृतस्थले गवादिशब्दानां जातिमात्रवाचकत्वं स्वीकृतं नैवं रीत्या क्वचिव्द्यक्तिमात्रवाचकत्वमभ्युपगतम् । अतः सर्वप्रयोगेष्वपि जातिबोधनं शक्त्या, व्यक्तिपर्यन्ताभिधानं तु लक्षणयैव । गुणिलिङ्गास्तु तद्वतीत्येतदपि तद्वद्वाचकत्वे लक्षणाग्राहकमेवेति किं न स्यादिति चेन्न । जातिमात्रबोधनस्थले लक्षणया व्यक्तिपर्यन्तबोधनापादनस्यैतावतापि वारणासम्भवात्सम्बन्धानुपपत्तेस्तत्रापि सत्त्वात् । विशेष्यवाचकपदसमभिव्याहारस्यापि हेतुत्वेऽपृथक्सिद्धविशेषणवाचिशब्दशब्दत्वस्य विशेष्यलक्षणाप्रतिबन्धकत्वकल्पनमतापेक्षया किमस्ति लाघवम् । सम्बन्धानुपपत्तिरूपलक्षणाबीजसत्त्वेपि विशेष्यवाचकपदसमभिव्याहार एव लक्षणया व्यक्तिबोधनमिति भवतां मतम् । अस्माकन्तु विशेष्यवाचकपदसमभिव्याहारस्थलेऽपृथक्सिद्धविशेषणवाचिशब्दत्वस्य विशेष्यलक्षणाप्रतिबन्धकत्वमिति साम्यात् । ननूक्तप्रतिबन्धकत्ववद्विशेष्यवाचकपदसमभिव्याहारस्थले जाताविव व्यक्तावपि शक्तेः स्वीकाराद्गुरुभूतमेव भवतां मतमिति चेन्न । भवद्भिरपि लक्षणायाः स्वीकारेण तुल्यत्वात् ॥

ननु लक्षणा नात्र कल्प्यते । लक्षणाबीजसत्त्वेन स्वतस्सिद्धा सा । न हि गङ्गायां घोष इत्यादावनुपपत्तिबलेन प्रतिसन्धीयमाना लक्षणा गौरवमावहति, व्यक्तिं विना जातौ शक्तिस्तु भवतामपि क्वचिदिष्टा । सामानाधिकरण्यस्थले व्यक्तिशक्तेः कल्पनमेवेति चेन्न - सामानाधिकरण्यस्थलेपि व्यक्तिशक्तेः स्वतः सिद्धत्वेन शक्तेरेवाकल्पनात् । तस्याः समानाधिकरणसर्वप्रयोगानुगणत्वात् । न हि क्वचिदेव समानाधिकरणस्थले व्यक्तिपर्यन्तभानमन्यत्र तत्र नेति केनचिदिष्यते । अतस्सर्वप्रयोगानुगतत्वेनास्या वृत्ते र्न लक्षणा । गङ्गायां घोष इत्यादौ प्रयोगे क्वचिद्गङ्गापदे लक्षणानङ्गीकारेण न तस्या वृत्तेः सर्वप्रयोगानुगुतत्वम् । वस्तुतोऽत्र शक्ते र्जातिव्यक्त्युभयविषयकत्वकल्पनागौरवमपि न दोषावहम् । लाधवेन निर्वाहासम्भवस्थले गौरवस्यादोषत्वात् । ननु लाधवेन निर्वाहाभावे लक्षणाश्रयणेन किमिति न निर्वाहः क्रियत इति चेन्न, लक्षणाश्रयणस्यैवानुपपन्नत्वात् । गवादिशब्दानां जातिमात्रपरत्वेन व्यक्तिबोधनं लक्षणयेति ह्युच्यते । तत्र गवादिशब्दानां जातिमात्रमुख्यार्थत्वासम्भवात् । तथा सति जातिमात्रे गवादिशब्दानां प्रचुरप्रयोगापत्तेः । न हि व्यक्तिनिष्ठा गौः इत्यादिप्रयोगो दृश्यते । व्यक्तिनिष्ठं गोत्वमिति हि प्रयोगः ।

**एवं देवमनुष्यादिपिण्डविशिष्टानां जीवानां परमात्मशरीरतया तत्प्रकारत्वाज्जीवात्मवाचिनः शब्दाः परमात्मपर्यन्ताः। अतः परस्य ब्रह्मणः प्रकारतयैव चिदचिद्वस्तुनः पदार्थत्वमिति तत्सामानाधिकरण्येन प्रयोगः। अयमर्थो वेदार्थसङ्ग्रहे समर्थितः। इदमेव शरीरात्मभावलक्षणं तादात्म्यम्, 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इति वक्ष्यति। 'आत्मेत्येव तु गृह्णीयात्' इति च वाक्यकारः॥**

(सङ्ग्रहेण सिद्धान्तोपन्यासः)

**अत्रेदं तत्त्वम् - अचिद्वस्तुनः, चिद्वस्तुनः, परस्य च ब्रह्मणो भोग्यत्वेन भोक्तृत्वेन चेशितृत्वेन च स्वरूपविवेकमाहुः काश्चन श्रुतयः,** (श्वे.४.९.१०.) **'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्नि-**

---

ननु गवादिशब्दानां व्यक्तौ निरूढलक्षणासत्त्वेन जातिमात्रे न प्रचुरप्रयोगः। अत एव च व्यक्तिनिष्ठं गोत्वमिति भावप्रत्ययापेक्षत्वश्चेति चेत्तन्न। प्रचुरप्रयोगानुगतेरेव निरूढलक्षणारूपत्वेनान्योन्याश्रयप्रसङ्गात्। प्रचुरप्रयोगापादने क्रियमाणे प्रचुरप्रयोगाभावान्नास्तीति परिहारः कथं घटते। एवं निरूढलक्षणा स्वीकारेण धर्मवाचकत्वे भावप्रत्ययापेक्षत्ववर्णनमपि न युक्तम्। शुक्लः पट इतिवत्पटस्य शुक्ल इति भावप्रत्ययाभावेऽपि गुणिगुणोभयार्थबोधनात्। अतो गवादिशब्दानां जातिमात्रवाचकत्वासम्भवात्प्रयोगानुगुण्येन लाघवेन निर्वाहासम्भवस्थले गौरवाश्रयणस्यादोषत्वाल्लक्षणया आश्रयणस्यानुपपत्तेश्च सामानाधिकरण्यस्थले उभयविषयकत्वाश्रयणं शक्तेर्न दोषः।

अत एवं रीत्यैव देवादिशब्दानामप्यात्मपर्यन्तत्वं मुख्यमेव। देवादिशब्दानामात्मपर्यन्तत्वे यो हेतुः तेनैव हेतुना जीवादिशब्दानामपि परमात्मपर्यन्तत्वं युक्तमिति दर्शयति - **एवमिति**। **अत** इति। तत्त्वमसीत्यत्र सूक्ष्मचिदचिच्छरीरकब्रह्मपरं तत्पदम्। त्वंपदं स्थूलचिदचिच्छरीरकब्रह्मपरम्। कार्यावस्थस्य कारणावस्थस्य च ब्रह्मण एकत्वं सामानाधिकरण्यावसेयम्। कार्यकारणावस्थप्रकर्यैकत्वन्तु तत्त्वमसीति वाक्यानवगम्यमिति विवेकः। अत्र परमात्मनः शरीरित्वे जगतश्च शरीरत्वे शरीरित्वप्रयुक्तदोषाणां ब्रह्मण्यसम्भवप्रकारस्सर्वोपि विलक्षणत्वाधिकरणे विशदं वक्ष्यते॥

**इदमेवेति**। अनन्यत्वेनोपासनं हि सूत्राकाराभिमतमिति हि भवद्भिरुच्यते। तत्र सूत्रोक्तमनन्यत्वमस्मदुक्तमेव। उक्तदिशैव श्रुतिस्मृत्यादिभिरनन्यत्वोपपादनात्। अतस्तदभिमतानन्यत्वे न तत्सूत्रं प्रमाणमित्यन्यथासिद्धमिदम्। एवं श्रुतिस्मृत्युपपादितं सूत्रकाराभिमतमेवानन्यत्वं वाक्यकारोपि ब्रूयान्न त्वन्यथेति न वाक्यकारवचनमपि भवदभिमतसाधकम्। 'आत्मेत्येव तु गृह्णीयात्सर्वस्य तन्निष्पत्ते'रिति हि वाक्यकारः। तन्निष्पत्तेरित्यनेनान्यस्य ब्रह्मजन्यत्वं ह्युच्यते। न ह्यसत्यस्योत्पत्तिः। उत्पत्तिबलादेव जगतः सत्यत्वसिद्धौ स्वरूपतो जगद्ब्रह्मणोरनन्यत्वाभावेन अस्मदुक्तरीत्यैवानन्यत्वोपपादनावश्यकत्वात्। जगतः कल्पितत्वे हि भवदुक्तदिशाऽनन्यत्वोपपादनसम्भवः। न ह्यत्र निष्पत्तिशब्दः कल्पितत्वाध्यस्तत्वादिवाचकः। न हि घटो निष्पद्यत इत्यक्तौ घटः कल्पित इति वक्तुं शक्यते। आत्मेत्येव तु गृह्णीयादित्युक्तस्यात्मत्वोपासनस्य तन्निष्पत्तेः इति हेतुप्रदर्शकं, यतः स्थूलसर्वचिदचिच्छरीकब्रह्मणः सूक्ष्मचिदचिच्छरीकब्रह्मण उत्पत्तिः, अतः कार्यकारणयोरैक्यादनन्यत्वेनैवोपास्यं ब्रह्मेति वाक्यार्थः। अतो न भवदभिमतानन्यत्वसिद्धिरिति॥

**अत्रेदमिति - ईशितृत्वेत्यनेन** भोग्यभोक्त्रोरीशितव्यत्वमुक्तम्। अत एव भोग्यत्वेन भोक्तृत्वेन च इति चकारोऽधिकः प्रयुक्तः। उभयोरीशितव्यत्वरूपैककोटिप्रवेशात्। यद्वा प्रकृते भोग्यत्वमात्रं, चेतनस्य भोग्यत्वं भोक्तृत्वञ्च। ईशस्य भोग्यत्वं भोक्तृत्वमीशितृत्वञ्चेति सूचनार्थं चकारद्वयोपादनम्। **मायी** = मायाशब्दवाच्यप्रकृतिशेषी। अज्ञत्वार्थकत्वे मायिनं तु महेश्वरं इत्युपपादनानुपपत्तेः। न ह्यज्ञस्य महेश्वरत्वम्। सृष्टिकर्तृत्वेनोक्तो महेश्वरो मायानियन्तैवेति।

**रुद्धः, मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्'**, (श्वे.१.१०.) **'क्षरं प्रधानममृताक्षरं हरः, क्षरात्मानावीशते देव एकः' - अमृताक्षरं हर इति भोक्ता निर्दिश्यते, प्रधानमात्मनो भोग्यत्वेन हरतीति हरः -** (श्वे.६.९.) **'स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः'**, (श्वे.६.१६.) **'प्रधानक्षेत्रज्ञपतिर्गुणेशः'**, (तै.नारा.) **'पतिं विश्वस्याऽऽत्मेश्वरं शाश्वतं शिवमच्युतम्'**, (श्वे.१.९.) **'ज्ञाज्ञौ द्वावजावीशनीशौ'**, (कठ.५.१३.) **'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्'**, (श्वे.१.१२.) **'भोक्ता भोग्यं प्रेरितारञ्च मत्वा'**, (मु.३.१.१.) **'तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति'**, (श्वे.१.६.) **'पृथगात्मानं प्रेरितारञ्च मत्वा जुष्टस्ततस्तेनामृतत्वमेति'**, (तै.नारा.) **'अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः'**, (श्वे.४.७.) **'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक' इत्याद्याः ।**

---

**क्षरं प्रधानमिति** क्षरशब्दार्थो विवृतः । **अमृताक्षरं हर** इत्यक्षरशब्दः । **ईशते** = ईष्टे । बहुवचनोक्तिः चेतनाचेतनेश्वररूपतत्वत्रयसूचनार्था । अर्थान्तरभ्रमनिरासाय हरशब्दार्थमाह - **अमृतेति** । **करणं** = शरीरादिप्रधानं । तदधिपो जीवः । **तदधिपः** परमात्मा । अनेनैकेन समस्तपदेन परमात्मवाचिना तत्त्वत्रयं निर्दिष्टम् । तत्राधिपत्वोक्त्या परस्येशितृत्वमन्यस्येशितव्यत्वञ्चोक्तम् । परमात्मानं प्रत्यपि जनकः, अधिपो वा नास्तीत्याह - **न चेति** । करणाधिपाधिपशब्दविवरणरूपं प्रधानक्षेत्रज्ञपतिः इतीदम् । **गुणेशः** - सत्वरजस्तमसां नियन्ताः । 'पतिं विश्वस्ये'त्यनेन ईशेशितव्यविभागः प्रदर्शितः । नात्र पतिशब्दो रक्षकवाची । शेषिणि रूढत्वात् । पा रक्षणे इतिधातो र्निष्पन्नत्वाद्रक्षकवाचित्वमेव युक्तमिति न भ्रामितव्यम् । गमिधातुनिष्पन्नगोशब्दस्याप्यन्यार्थवाचकत्वप्रसङ्गात् । अन्यत्राप्रयोगस्त्वत्रापि तुल्यः । न हि पित्रादिरक्षके पुत्रे पतिशब्दः प्रयुज्यते । एवं तिष्ठत्यपि गवि गोशब्दस्येव गृहाद्यरक्षके स्वामिन्यपि पतिशब्दस्य प्रयोगसत्वाच्च । अतोऽन्वयव्यतिरेकाभ्यां पतिशब्दः स्वामिवाचकः । न ह्यत्र पतिशब्दवाच्यशेषित्वं ब्रह्मणो बाधितमित्यन्यार्थकत्वमेव युक्तम् । तस्याबाधितत्वात् । स्मृत्यादिभि र्जगद्ब्रह्मणो र्दासस्वामिशेषशेषिभावावगमात् । यस्यात्मा शरीरमित्यादिना जगतः परमात्मशरीरत्वसिद्ध्या शरीरत्वस्य नियाम्यत्वरूपतया नियमनकार्यत्वस्य दासनिष्ठतया दासत्वशेषत्वसिद्धेश्च ॥

**आत्मेश्वरम्** = अनन्येश्वरम् । स्वे महिम्नि प्रतिष्ठित इत्यादिवत् । **शाश्वतं** = **पुराणम्** । **शिवं** = मङ्गलम् । यद्वा शिवशरीरकम् । **अच्युतं** = नाशरहितम् । पूर्वं शाश्वतमित्युक्तेः । यद्वा - न च्यावयति भक्तानित्यच्युतः । ज्ञत्वाज्ञत्वोक्त्या जीवेश्वरयो र्भेदसिद्धिः । **अज्ञः** ईषज्ज्ञः । अनुदरा कन्येतिवत् । ईशनीशौ इति छान्दसः प्रयोगः । नित्यो नित्यानामित्युपादानं जीवेश्वरभेदसूचनाय, जीवेष्वानन्त्यसूचनाय च । न हि कामप्रदातुः कामप्रतिगृहीतुश्चैक्यं घटते । जीवेश्वरयोः स्वरूपतोऽभेदो न सम्भवतीत्यत्र स्पष्टप्रमाणमाह - **तयोरिति** । न हि कर्मफलभोक्तुः तदनशनेनात्यन्तं देदीप्यमानस्य चाभेदः प्रामाणिकः । **पृथगिति** । जीवेश्वरपृथक्त्वज्ञानस्य साक्षान्मोक्षसाधनत्वेनोक्ततया पृथक्त्वमेव प्रामाणिकम् । न ह्ययथावस्थितज्ञानान्मोक्षसिद्धिः । न वाश्रुतिस्तादृशमर्थं बोधयेत् । **तेन** - परमात्मना । **जुष्टः** - प्रीतिविषयीकृतः । **ततः** = परस्मात्पुंसः । **अमृतत्वमेति** - मोक्षं प्राप्नोति । **अजा** = न जायत इत्यजा प्रकृतिः । **लोहितशुक्लकृष्णां** = सत्त्वरजस्तमोगुणकाम् । **अजः** - बद्धजीवः । **जुषमाणः** = प्रीयमाणः । **अन्योऽजः** = मुक्तः । **भुक्तभोगां** = भुक्ताः भोगाः यस्यास्ताम् । अनेन बद्धमुक्तयोर्भेद उक्तः । **समाने** = एकस्मिन् । **वृक्षे** = शरीरे । वृश्च् च्यवने इति धातुः । **अनीशया** = भोग्यभूतया प्रकृत्या । **जुष्टं** = प्रीयमाणम् । इतिश्चार्थे । अन्यमीशमस्य महिमानञ्च यदा पश्यति तदा वीतशोको भवतीत्यर्थः । यद्वा **इति** = एति इत्यर्थः । यदा अन्यमीशं पश्यति तदा वीतशोकोऽस्य महिमानं प्राप्नोतीत्यर्थः । **इत्याद्या** इत्येतत्काश्चन

**स्मृतावपि -** (गी.७.४-५) **'अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥',** (गी.६.७.८.) **'सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् । कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः । भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥',** (गी.९.१०.) **'मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् । हेतुनाऽनेन कौन्तेय जगद्धि परिवर्तते ॥',** (गी.१३.१६.) **'प्रकृतिं पुरुषञ्चैव विद्ध्यनादी उभावपि ।',** (गी.१४.३.) **'मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् । सम्भवः सर्वभूतानां ततो भवति भारत ॥' इति जगद्योनिभूतं महद्ब्रह्म मदीयं प्रकृत्याख्यं भूतसूक्ष्ममचिद्वतु यत्; तस्मिंश्चेतनाख्यं गर्भं यत्सम्योजयामि, ततो मत्कृताच्चिदचित्संसर्गात् देवादिस्थावरान्तानामचिन्मिश्राणां सर्वभूतानां सम्भवो भवतीत्यर्थः ।**

**एवं भोक्तृभोग्यरूपेणावस्थितयोस्सर्वावस्थावस्थितयोश्चिदचितोः परमपुरुषशरीरतया तन्नियाम्यत्वेन तदपृथक्स्थितिं परमपुरुषस्य चात्मत्वमाहुः काश्चन श्रुतयः,** (बृ.५.७.७.) **'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति' इत्यारभ्य, 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृत' इति । तथा,** (सुबाल.७.) **''यः पृथिवीमन्तरे सञ्चरन् यस्य पृथिवी शरीरं यं पृथिवी न वेद' इत्यारभ्य, 'योऽऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं यमक्षरं न वेद, यो मृत्युमन्तरे सञ्चरन् यस्य मृत्युः शरीरं यं मृत्युर्न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' । अत्र मृत्युशब्देन तमश्शब्दवाच्यं सूक्ष्मावस्थमचिद्वस्त्वभिधीयते ; अस्यामेवोपनिषदि -** (सुबाल.२.) **'अव्यक्तमक्षरे लीयते । अक्षरं तमसि लीयते' इति वचनात्,** (यजुरारण्य.३.११.२१.) **'अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा' इति च ।**

---

श्रुतय इत्यत्रान्वेति । उपात्तश्रुतिषु मध्ये 'अमृताक्षरं हर' इति भोक्ता निर्दिश्यते, प्रधानमात्मनो भोग्यत्वेन हरति इति हर इति वाक्यं प्रसङ्गादापतितम् ।

प्रधानजीवेश्वरभेदः स्मृतावप्युक्त इत्याह - **स्मृतावपीति** । अहङ्कार इति । 'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च' इति पूर्वार्धम् । एवमष्टधा भिन्ना प्रकृतिः **मे** = मदीयेत्यर्थः । इयमपरा, परापि जीवभूता काचित्प्रकृतिः मदीयेत्याह - **अपरेति** । अनेन जीवेश्वरप्रधानरूपतत्त्वत्रयं प्रदर्शितम् । प्रकृतिपुरुषयोरनादित्वोक्त्या कल्पितत्वं व्युदस्तम् । मम योनिरिति निर्देशेन भेदस्सिद्धः । उदाहतश्लोकेषु अन्तिमश्लोकमस्फुटत्वात् व्याचष्टे - **जगदिति** । अनेन योनिशब्दो व्याख्यातः । मदीयमित्यनेन ममशब्दस्य ब्रह्मशब्देनान्वयस्सूचितः । अन्यथा योनिशब्देनान्वये मां प्रति कारणमित्यर्थः शङ्क्येत । भूतसूक्ष्ममिति कार्यावस्थाव्यावृत्त्यर्थम् । **तत** इत्यादि उत्तरार्धविवरणम् ॥

एवमीशेशितव्ययो र्ब्रह्मजगतो र्भेदसिद्धौ एकमेवाद्वितीयमित्यादिभिरेकमेव तत्त्वमित्यवधारणं कथमित्यत्र चिदचिद्रूपजगतः परमपुरुषशरीरत्वेन परमात्मनः शरीरित्वाच्चिदचिच्छरीरकमेकमेव तत्त्वमित्यवधरणे न दोष इति वक्तुमात्मत्वबोधकघटकश्रुतिमवतारयति - **एवमिति** । सर्वावस्थाशब्दः कार्यकारणोभयावस्थापरः । मृत्युशब्दो न यमपर इत्याह - **अत्रेति** । तमश्शब्दवाच्यमिति तमसि लीयत इति प्रत्यभिज्ञानार्थम् । **वचनात्** = क्रमस्य प्रत्यभिज्ञातत्वादिति भावः । यस्याव्यक्तमित्यादिनाऽव्यक्ताक्षरमृत्युशब्दा निर्दिष्टाः । अव्यक्तमक्षर इत्यादिनाऽव्यक्ताक्षरतमश्शब्दाः । अतः क्रमप्रत्यभिज्ञानान्मृत्युशब्दस्तमश्शब्दपर्याय इति ज्ञायते । तमश्शब्दश्च प्रकृतौ प्रसिद्धः । अतो मृत्युशब्देनाचिद्-

**एवं सर्वावस्थावस्थितचिदचिद्वस्तुशरीरतया तत्प्रकारः परमपुरुष एव कार्यावस्थकारणावस्थजगद्रूपेणावस्थित इतीममर्थं ज्ञापयितुं काश्चन श्रुतयः कार्यावस्थं कारणावस्थञ्च जगत्स एवेत्याहुः** - (छा.६.२.१.) **'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं, तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोसृजत' इत्यारभ्य, 'सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः। ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इति। तथा,** (तै.आनं.) **'सोऽकामयत, वहु स्यां प्रजायेयेति। स, तपोऽतप्यत। स तपस्तप्त्वेदं सर्वमसृजत' इत्यारभ्य, 'सत्यश्चानृतश्च सत्यमभवत्' इत्याद्याः। अत्रापि श्रुत्यन्तरसिद्धः चिदचितोः परमपुरुषस्य च स्वरूपविवेकः स्मारितः,** (छा.६.३.२.) **'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नासरूपे व्याकरवाणि' इति,** (तै.आनं) **'तत्सृष्ट्वा। तदेवानुप्राविशत्। तदनुप्रविश्य सच्च त्यच्चाभवत् ... विज्ञानश्चाविज्ञानश्च। सत्यश्चानृतश्च सत्यमभवत्' इति च। 'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य' इति जीवस्य ब्रह्मात्मकत्वम्, 'तदनुप्रविश्य सच्च त्यच्चाभवत्', 'विज्ञानश्चाविज्ञानं च' इत्यनेनैकार्थ्यादात्मशरीरभावनिवन्धनमिति विज्ञायते। एवंभूतमेव नामरूपव्याकरणम्,** (बृ.३.४.७.) **'तद्धेदं तर्ह्यव्याकृतमासीत्। तन्नामरूपाभ्यां व्याक्रियत' इत्यत्राप्युक्तम्। अतः कार्यावस्थः कारणावस्थश्च स्थूलसूक्ष्मचिदचिद्वस्तुशरीरः परमपुरुष एवेति कारणात्कार्यस्यानन्यत्वेन कारणविज्ञानेन कार्यस्य ज्ञाततयैकविज्ञानेन सर्वविज्ञानं च समीहितमुपपन्नतरम्।**

---

स्त्वभिधीयत इति भावः। एकीभवतीति कार्योपयुक्तस्य तमसः कार्यानुपयुक्ततमश्शरीरके एकीभाव उक्तः। तत्र देवविशेषणीभूतकार्यानुपयुक्ततमसाऽस्य तमस एकीभावः। तमो हि कार्योपयुक्तं कार्यानुपयुक्तमिति द्विविधम्। यत्र प्रकृत्याख्ये तमसि सत्त्वरजस्तमोगुणवैषम्यं तत्रैव सृष्टेस्स्वीकारेण तस्यैव कार्योपयुक्तत्वात्। अन्तः प्रविष्ट इत्यनेनात्मत्वं सुव्यक्तम्।

एवं भेदश्रुतीः घटकश्रुतीश्च प्रदर्श्य तदविरोधेनैक्यश्रुत्यर्थं वक्तुमवतारयति - **एवमिति**। शरीरतयेत्यन्तं जगतः प्रकारत्वोपपादक म्। कार्यावस्थकारणावस्थजगद्रूपेणेत्यनेन कार्यावस्थस्य कारणावस्थस्य च चिदचिच्छरीरकब्रह्मण ऐक्यं प्रदर्शितम्। 'जगत्स एवे'त्यनेन कार्यकारणैक्यं समानाधिकरणपदद्वयविभक्त्यवसेयमिति दर्शितम्। अर्थात्कार्यकारणावस्थप्रकार्येकत्वं वाक्यावसेयमिति सूचितम्। सन्मूला इत्यादिकमैक्योपपादकतयोपात्तम्। 'सोऽकामयत' इत्यारभ्य 'इदं सर्वमसृजत' इत्यन्तेनैक्यहेतुरुक्तः। सत्यमित्यादिना भेदनिर्देशः। एवमुपनिषदन्तरसिद्धेशेशितव्यभेदमवलम्ब्य एतदुपनिषद्यभेदनिर्देशः, घटकश्रुतिबलादात्मशरीरभावनिबन्धन इत्युक्तम्। अथाऽत्रापि भेदस्फुरणादभेदनिर्देशो न स्वरूपैक्यकृत इत्याह - **अत्रापीति। स्मारित** इति। भोक्ता भोग्यं प्रेरितारश्चेत्यादिवदत्रापि साक्षाद्भेदानुक्तावप्यन्यत्रोक्तभेदस्मारकपदसत्त्वेन भेदः स्मारित इति भावः। 'हन्ताह'मिति च्छान्दोग्येऽहमिति परमात्मा। तिस्रो देवता इति तेजोबन्नाः, जीवेति जीवश्च निर्दिष्टाः। तत्सृष्ट्वेत्यादि तैतरीये। सत्यशब्देन ब्रह्म। सत्त्यच्छब्दाभ्यां चेतनाचेतनौ। जीवेनात्मनेत्यस्यार्थमाह - **अनेनेति**। कथं जीवस्य ब्रह्मात्मकत्वलाभ इत्यत्राह - **तदनुप्रविश्येति**। सर्वशाखाप्रत्ययन्यायेनान्यत्रानुक्तस्याप्यन्यत्र प्राप्तत्वमस्तीति अत्रानुप्रवेशस्यानुक्तावप्यपेक्षितत्वात्स्वीकार इत्यभिप्रायेणाह - **एवम्भूतमिति**। अनुप्रवेशपूर्वकमित्यर्थः। एवं नामरूपव्याकरणोक्त्या, जीवानामुत्पत्तिः = नामरूपव्याकरणम्। नाशश्च तदभावः, न तु स्वरूपस्यैवोत्पत्तिः विनाशश्चेति प्रलये तत्त्वैक्यबोधनमपि नामरूपव्याकरणाभावमात्रं न तु स्वरूपैक्यमेवेति सूचितम्।

एवमुपसंहरन्परमतेऽनुपपन्नायाः प्रतिज्ञायास्स्वमते उपपन्नत्वमाह - **अत इति। उपपन्नतरं** = अत्यन्तमुपपन्नम्। अस्मन्मते सामानाधिकरण्यस्य मुख्यवृत्तत्वं कार्यकारणयोरैक्यश्च पूर्वमेव प्रतिपादितं विशिष्टस्यैव कारणत्वात्कार्यत्वाच्च

**'अहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति, 'तिस्रो देवता' इति सर्वमचिद्वस्तु निर्दिश्य तत्र स्वात्मकजीवानुप्रवेशेन नामरूपव्याकरणवचनात्सर्वे वाचकाश्शब्दा अचिद्विशिष्टजीवविशिष्टपरमात्मन एव वाचका इति कारणावस्थपरमात्मवाचिना शब्देन कार्यवाचिनश्शब्दस्य सामानाधिकरण्यं मुख्यवृत्तम् । अतः स्थूलसूक्ष्मचिदचित्प्रकारं ब्रह्मैव कार्यं कारणं चेति ब्रह्मोपादानं जगत् ।**

**सूक्ष्मचिदचिद्वस्तुशरीरकं ब्रह्मैव कारणमिति ब्रह्मोपादानत्वेऽपि, सङ्घातस्योपादानत्वेन चिदचितो र्ब्रह्मणश्च स्वभावासंकरोऽप्युपपन्नतरः ॥ यथा शुक्लकृष्णरक्ततन्तुसङ्घातोपादानत्वेऽपि चित्रपटस्य तत्तत्तन्तुप्रदेश एव शौक्ल्यादिसंबन्ध इति कार्यावस्थायामपि सर्वत्र वर्णासङ्करः - तथा चिदचिदीश्वरसंघातोपादानत्वेऽपि जगतः, कार्यावस्थायामपि भोक्तृत्वभोग्यत्वनियन्तृत्वाद्यसङ्करः । तन्तूनां पृथक्स्थितियोग्यानामेव पुरुषेच्छया कदाचित्संहतानां कारणत्वं कार्यत्वञ्च; इह तु चिदचितोः सर्वावस्थावस्थितयोः परमपुरुषशरीरत्वेन तत्प्रकारतयैव पदार्थत्वात्तत्प्रकारः परमपुरुषः सर्वदा सर्वशब्दवाच्य इति विशेषः । स्वभावभेदस्तदसङ्करश्च तत्र चात्र**

---

नैक्यविरोधः । एवं प्रतिज्ञापि कारणीभूतमृज्ज्ञानेन तत्कार्यघटादिज्ञानवदुपपद्यते । वह्निकार्यज्ञानेपि यथाऽपृथक्सिद्धरूपादिनिषेधस्तद्वदत्रापि ब्रह्मापृथक्सिद्धचिदचिद्व्यनिषेधो न भवति । अतस्सामानाधिकरण्यप्रतिज्ञाकार्यकारणैक्यप्रतिपादनैरद्वैतप्रतीतिरुपपन्नैव । तत्त्वमसीत्युपसंहारसमानाधिकरणवाक्यस्योपक्रमवाक्यानुसारेणैव मुख्यवृत्तत्वमुपपादयति - **अहमिति** । **सर्वमचिद्वस्त्विति** । त्रिस्रो देवता इतीदमुपलक्षणमिति भावः । सर्वशाखाप्रत्ययन्यायेनान्यत्रोक्तस्यात्रापि ग्रहणमित्यभिप्रायो वा । **अत** इति । स्थूलसूक्ष्मशब्दाभ्यामवस्थाविशेषद्वयं दर्शितम् । भाव्यवस्थाविशेषवतः प्रागवस्थायोगित्वस्यैवोपादानतारूपत्वेनोपादनत्वोपपत्ति र्दर्शिता ।

नन्वेवमुपादानोपादेयभावाङ्गीकारे स्वभावसाङ्कर्यं स्यात्कार्यकारणयोरेकद्रव्यत्वात् । तत्राह = **सूक्ष्मेति** । **सङ्घातोपादानत्वेनेति** । विशिष्टयोः कार्यकारणभावाङ्गीकारात्कार्यकारणयोरेकद्रव्यत्वं न विरुद्धम् । चिदचिद्ब्रह्मणां स्वभावासाङ्कर्यमप्युपपन्नं तत्तप्रदेश एव तत्तत्स्वभावस्य व्यवस्थिततत्वादिति भावः । उक्तमर्थं दृष्टान्तप्रदर्शनेन स्थापयति - **यथेति** । नानावर्णकतन्तुसङ्घातोपादानके हि चित्रपटे तत्तद्वर्णानां तत्तत्तन्तुप्रदेशेष्वेव स्थितिः न त्वन्यवर्णकतन्तावन्यवर्णसाङ्कर्यम् । तद्वदत्रापि चेतनाचेतनविशिष्टब्रह्मण उपादानत्वेपि कार्यदशायां भोग्यत्वभोक्तृत्वादिस्वभावानां तत्तद्वस्तुन्येव स्थितिः । न तु जीवे भोग्यत्वमीश्वरे वा भोग्यत्वमचेतने वा भोक्तृत्वमित्याकूतम् ।

ननु दृष्टान्ते तन्तूनां बहुत्वादन्यं प्रत्यन्यस्य हेतुत्वाभावाच्च स्वभावासाङ्कर्यमुपपादयितुं शक्यम् । अत्र तु ब्रह्मैकमेव, कालविशेषे तथैवश्रवणात्, तत एव च सर्वस्याप्युत्पत्ति र्वक्तव्या । ततश्चैकस्मादितरस्योत्पत्तेः स्वभावसाङ्कर्यं दुस्त्यजमेवेत्यत्राह - **तन्तूनामिति** । दृष्टान्तदार्ष्टान्तिकयोः कस्मिंश्चिदंशे वैषम्यं प्रधानांशे चावैषम्यमिति नैष दोषः । **तत्प्रकारतयैव पदार्थत्वादिति** । जगद्ब्रह्मणो र्मिथः प्रकारप्रकारित्वात्प्रकारशब्देनेव प्रकारिशब्देनापि विशिष्टब्रह्मबोधसम्भवाद्विशिष्टस्यैकस्यैव पदार्थत्वादेकत्वश्रवणस्य नामरूपविभागाभावनिबन्धनत्वाच्च वस्तुत्रयसिद्धावन्यस्मादन्यस्योत्पत्त्यभावेन स्वभावासाङ्कर्यं सुवचमिति भावः । तन्तूनामेव व्यतिषङ्गविशेषभाजां पटत्वेन व्यवहार इति कार्यकारणयोरनन्यत्वमिति पटवच्चेति सूत्रक.ारोप्यमुं वक्ष्यति । स्वभावसाङ्कर्योपपादनाय चित्रपटोदाहृतिः ।

ननु कालविशेषे एकत्वावधारणं नामरूपविभागाभावनिबन्धनम् । तदा वस्तुभेदसत्त्वेपि न क्षत्यावहमित्युक्तम् । इत्थञ्च ब्रह्मणि तत्तद्वस्तुस्वभावसाङ्कर्याभावेपि सर्वदा तत्संसर्गसत्त्वेन संसर्गप्रयुक्तस्वभावसाङ्कर्यं दुर्निवारम्, अविकृत-

**च तुल्यः । एवञ्च सति परस्य ब्रह्मणः कार्यानुप्रवेशेऽपि स्वरूपान्यथाभावाभावादविकृतत्वमुपपन्नतरम् ।**

त्वश्रुतिविरोधश्चेत्यत्राह - **एवञ्च सतीति । कार्यानुप्रवेशेपीति** । यथा सशरीराणामेव देवमनुष्यादीनां क्षेत्रज्ञानां शरीरगतबालत्वयुवत्वादयो नात्मस्वरूपे सङ्करं प्राप्नुवन्ति । आत्मगतज्ञानसुखादयोपि न शरीरे, अथापि देवो जातः, मनुष्यो जातः, स एव बोलो युवा जात इति व्यपदेशो मुख्यः । तद्वद्ब्रह्मणः सूक्ष्मचिदचिच्छरीरकस्य कार्यत्वेपि संसर्गनिबन्धनभोग्यत्वादयो न परमात्मनि सम्बध्यन्त इति भावः । आत्मनो जीवस्य शरीरप्रयुक्तसुखदुःखभाक्त्ववत्परमात्मनोपि चेतनाचेतनशरीरसम्बन्धप्रयुक्तसुखदुःखभाक्त्वापादनं, सुखदुःखयोः कर्मनिबन्धनत्वमेव न शरीरनिबन्धनत्वमित्युत्तरत्र निराचिकीर्ष्यते ॥

ननु परस्य कार्यत्वेपि चेतनाचेतनगतभोग्यत्वादि स्वभावसाङ्कर्याभावेपि निर्विकारत्वं दुरुपपादं, मृदो घटत्वावस्थयेव सूक्ष्मचिदचिद्ब्रह्मण एव स्थूलचिदचिच्छरीरकब्रह्मत्वावस्थया परिणामादित्यत्राह - **स्वरूपान्यथाभावाभावादिति** । अयं भावः - ब्रह्मणो न स्वरूपतोऽन्यथाभाव उच्यते येन सविकारत्वमापतेत् । किन्तु विशिष्टब्रह्मण एव । स्थूलत्वसूक्ष्मत्वे तु चेतनाचेतनगते । तत्राचेतनस्य स्थूलत्वं स्वरूपान्यथाभावः चेतनस्य ज्ञानसङ्कोचादिरूपः । तौ च विकारौ ब्रह्मणः सद्वारकावस्थारूपौ । तत्तदवस्थचिदचिन्नियमनरूपविशेषास्तु ब्रह्मणोऽद्वारकावस्थाः । इमाश्चावस्थाः परमात्मनो मुख्यभूता एव । बहु स्यामिति स्वस्यैव बहुभवनरूपत्वेन सङ्कलिपतत्वाद्ब्रह्मणः सद्वारकाद्वारकावस्थाविशेषसत्त्वेन कार्यत्वेपि स्थूलत्वसूक्ष्मत्वादीनां चेतनाचेतनगतत्वेन ब्रह्मस्वरूपान्यथाभावाभावेन च न सविकारत्वप्रसङ्ग इति । नन्वचितः स्वरूपान्यथाभावेन विकृतत्वं, जीवस्य तु न स्वरूपान्यथाभावेन, परन्तु स्वभावान्यथाभावेनैव विकृतत्वम् । ततश्च परमात्मनोपि स्वभावभूतचिदचिदन्यथाभावेन विकृतत्वं तदवस्थमेवेति चेन्न । विकृतत्वस्य स्वभिन्नत्वस्वसामानाधिकरण्योभयसम्बन्धेन परिणामविशिष्टपरिणामत्वरूपत्वेनादोषात् । परिणामवत्वञ्च स्वाश्रयत्वस्वाश्रयज्ञानापृथक्सिद्धत्वान्यतरसम्बन्धेन । अचेतने सूक्ष्मत्वस्थूलत्वपरिणामसत्त्वाच्चेतने सङ्कोचविकासात्मकपरिणामद्वयाश्रयज्ञानापृथक्सिद्धिसत्त्वाच्च विकृतत्वोपपत्तिः । ब्रह्मणि स्वरूपे परिणामाभावात्स्वभावभूतज्ञाने सङ्कोचादिरूपपरिमाणाद्यभावाच्च न विकृतत्वमिति ।

अयमाशयः - अचेतने स्वरूपान्यथाभावरूपपरिणामात्मकविकारवत्वं, चेतने स्वभावसङ्कोचविकासात्मकान्यथाभावरूपपरिणामात्मकविकारवत्वम् । परमात्मन्युभयविधविकारोपि नास्ति, परन्तु तदीयचेतनाचेतनरूपस्वभावगतस्वरूपस्वभावन्यथाभावरूपपरिणामात्मकविकारवत्वन्तु स्वीक्रियते । अयञ्च विकारो न हेयभूतः न प्रतिकूलश्च । निर्विकारत्वश्रुतिश्च हेयविकारनिषेधाभिप्रायिणी । स्वभावभूतचेतनाचेतनान्यथाभावाभावे हि जगत्सृष्टिरेव न भवति । 'बालः क्रीडनकैरिव' 'लोकवत्तु लीला कैवल्यम्' इत्यदिकं चेतनाचेतनात्मजगतोऽन्यथाभावोत्पादनाद्धि सूपपादम् । एतादृशान्यथाभावोत्पादनम् ईश्वरस्य गुण एव । अतोऽयं विकारो न हेयः । एतादृशविकृतत्वं त्विष्टमेव । अत एव आत्मधिकरणभाष्ये 'उभयप्रकारविशिष्टे नियन्त्रंशे तदवस्थतदुभयविशिष्टतारूपविकारो भवति । कारणावस्थाया अवस्थान्तरापत्तिरूपो विकारः प्रकारद्वये प्रकारिणि च समान' इति भाषितम् । अत्रापि ब्रह्मणः कार्यानुप्रवेशेपि स्वरूपान्यथाभावाभावादविकृतत्वमुपपन्नतरमिति भाषितम् ।

ननु स्वापृथक्सिद्धयोः, अत एव शरीरभूतयोश्चेतनाचेतनयोरन्यथाभावोत्पादने स्वस्यैवानर्थोत्पादनं स्यात् । न हि स्वाक्षिसूच्या स्वयं प्रमृजेत् इति वाच्यम् । जीवकर्मानुगुणतथैव तयोरन्यथाभावकरणेन तज्जन्यसुखदुःखभाववादीनां जीवगतत्वेन स्वस्मिन्नसम्भवात् । यथा जीवशरीरस्य जीवकर्मकृतत्वमिति तदपृथक्सिद्धशरीरान्यथाभावादिना तस्य सुखदुःखभाक्त्वं, न तथा चेतनाचेतनयो र्भगवच्छरीरत्वं तत्कर्मकृतम् । येन तत्प्रयुक्तसुखाद्यापादनं युज्येत ।

**स्थूलावस्थस्य नामरूपविभागविभक्तस्य चिदचिद्वस्तुन आत्मतयाऽवस्थानात्कार्यत्वमप्युपपन्नतरम् । अवस्थान्तरापत्तिरेव हि कार्यता ।**

**निर्गुणवादाश्च परस्य ब्रह्मणो हेयगुणासम्बन्धादुपपद्यन्ते ।** (छा.८.१.५.) **'अपहतपाप्मा विजरो विमृत्यु र्विशोको विजिघत्सोऽपिपास' इति हेयगुणान्प्रतिषिध्य, 'सत्यकामः सत्यसङ्कल्प' इति कल्याणगुणान् विदधतीयं श्रुतिरेवान्यत्र सामान्येनावगतं गुणनिषेधं हेयगुणविषयं व्यवस्थापयति ।**

---

ननु जीवस्य स्वभावभूतज्ञानान्यथाभाववत्त्वमिव परमात्मनोपि बहु स्यामिति सङ्कल्पकरणाच्चेतनाचेतननियमनकरणाच्च स्वभावान्यथावत्त्वमिति कथं जीवस्य विकृतत्वं परस्याविकृतचमिति चेदुच्यते । जीवस्य स्वभावभूतज्ञानस्य यादृशोऽन्यथाभावः ज्ञानसङ्कोचविकासरूपः । न तादृशः परमात्मनः । सर्वज्ञस्य तस्य ज्ञाने सङ्कोचविकासाभावात् । तदीयज्ञानस्य परिणामरूपोऽन्यथाभावः नियमनसङ्कल्पाद्यत्मक इष्यत एव । स तु न दोषमावहति । भगवान् हि पुण्यपापकृतो जीवान्निग्रहानुग्रहाभ्यां फलेन योजयति । स च निग्रहानुग्रहादिर्ज्ञानिस्यावस्थाविशेषः । सर्वज्ञो देवो जीवकृतक्रियमाणादिकर्म तत्काले जानातीति तद्विषयकज्ञानवत्त्वप्रयुक्तज्ञानविकासवान् भवतीति न तादृशविकासादिकमादाय तस्य विकृतत्वं प्रामाणिक आपादयेत् । मित्रशत्रुप्रमृतिषु तत्तत्कृतसदाचारदुराचारज्ञानपूर्वकनिग्रहानुग्रहकरणं हि तस्य गुण एव । अत एतादृशविकारो न हेयः, अनुकूलश्च । 'विकृतिमर्भकनिर्भजनादगा' इत्युक्तं विकृतत्वञ्च भगवतो गुणाय खलु भवति । अतश्चेतनाचेतननियमनादिकं स्तुत्यमिति न भगवतो हेयप्रत्यनीकत्वविरोधः । अविकाराय शुद्धाय इति विभुस्वरूपे विकारराहित्यं बोधयति तदीयधर्मभूतज्ञाने तु नियमनादि विकारसत्त्वेपि न तस्य हेयत्वमिति भिदा । आत्माधिकरणभाष्ये एव - स्वरूपान्यथात्वज्ञानसङ्कोचविकासरूपोभयविधानिष्टविकाराभावाभिप्रायाः परविषयाः श्रुतय इति च प्रतिपादितमत्र द्रष्टव्यम् । अत्रानिष्टविकाराभावाभिप्राया इत्युक्त्या सोऽकामयत 'बहु स्याम्' इत्याद्युक्तेष्टविकारा ब्रह्मण्यङ्गीकृता इति द्योतितम् ॥

एतदुक्तं भवति - यश्च कर्मकृतः शरीरसम्बन्धः कर्मकृतश्च ज्ञानसङ्कोचादिः स एव हेयः । अपहतपात्मनः सर्वज्ञस्य तादृशसम्बन्धाद्यभावात्तदीयचेतनाचेतनादि शरीरसम्बन्धतदीयज्ञानविकासादिः न हेयभूतः । यथा च विभवाद्यवतारे शरीरसम्बन्धो न हेयः । यथा च विभवादावनित्येच्छाधीनो देहसम्बन्धः । चेतनाचेतनादि शरीरसम्बन्धस्तु नित्येच्छाधीनः । नित्यं नित्येच्छासिद्धम्, अनित्यमनित्येच्छयोत्पन्नमिति न्यायात् । इच्छया रेतः प्रभृतिषु वर्तमानत्वमपि हि न हेयत्वमापादयतीति । अतश्चेतनाचतनयो र्यादृशं विकृतत्वं, न तादृशं ब्रह्मण इत्यविकृतत्वोपपत्तिः । उक्तञ्च 'सत्यत्वं विश्वहेतौ बहुविधचिदचिद्विक्रियाजालहाने र्ज्ञानित्वं ज्ञातृभावात्स्वरबहुलतया स्वप्रकाशत्वतश्चेति' । अत्र हि विकारिचेतनवत्सङ्कुचितज्ञानत्वपरिच्छिन्नत्वादि प्रसक्तौ तन्निषेधः क्रियते ।

नन्वविकृतस्य कथं कार्यत्वं, विकृतस्यैव कार्यत्वदर्शनादित्यत्राह - **स्थूलावस्थेति** । विकृतस्यैव कार्यत्वमिति न नियमः । यथा स्वरूपविकाराभावेऽपि जीवस्य कार्यत्वम्, अवस्थाविशेषप्रयुक्तम्, एवं स्वभावभूतज्ञानविकाराभावेपि अवस्थाविशेषनिबन्धनं कार्यत्वं ब्रह्मण उपपन्नमिति । ब्रह्मणश्च सद्वारकावस्थाऽद्वारकावस्थारूपधर्मवत्त्वञ्चोपपादितम् । अतो न कार्यत्वविरोधः । तथा च कार्यत्वबोधकश्रुतीनां कार्यावस्थचिदचिन्नियमनरूपावस्थान्तरापत्तिं स्वरूपान्यथाभावरूपज्ञानसङ्कोचाद्यात्मकसद्वारकावस्थापत्तिश्चादाय निर्वाह इत्याशयः ॥

**निर्गुणवादश्चेति** । यद्यप्ययं विषयः प्रागेव दर्शितः । अथापि 'अत्रेदं तत्त्वमि'ति स्वसिद्धान्तार्थं सङ्कलय्य शिष्यानुग्रहेण वक्तुं प्रवृत्तत्वात्पुनरप्युक्तः । **श्रुतिरेवेति** - अनेनेतरकृतनिर्वाहापेक्षया स्वनिर्वाहस्योत्कर्षः सूचितः । अन्यत्र

**ज्ञानस्वरूपं ब्रह्मेतिवादश्च सर्वज्ञस्य सर्वशक्तेर्निखिलहेयप्रत्यनीककल्याणगुणाकरस्य ब्रह्मणः स्वरूपं ज्ञानैकनिरूपणीयं स्वयम्प्रकाशतया ज्ञानस्वरूपं चेत्यभ्युपगमादुपपन्नतरः।** (मु.१.१.९.) **'यः सर्वज्ञः सर्ववित्',** (श्वे.६.८.) **पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च'',** (बृ.४.४.१४.) **'विज्ञातारमरे केन विजानीयात्' इत्यादिकाः ज्ञातृत्वमावेदयन्ति;** (तै.आनं.) **'सत्यं ज्ञानम्' इत्यादिकाश्च ज्ञानैकनिरूपणीयतया स्वप्रकाशतया च ज्ञानस्वरूपताम्।**

(तै.आनं.) **'सोऽकामयत बहु स्याम्',** (छा.६.२.३.) **'तदैक्षत बहु स्याम्'** (बृ.३.४.७.) **'तन्नामरूपाभ्यां व्याक्रियत' इति ब्रह्मैव स्वसङ्कल्पाद्विचित्रस्थिरत्रसरूपतया नानाप्रकारमवस्थितमिति तत्प्रत्यनीकाब्रह्मात्मक-वस्तुनानात्वमतत्त्वमिति तत्प्रतिषिध्यते,** (कठ.४.१०.११.) **'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति...यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं विजानीयात्' इत्यादिना। न पुनः, 'बहु स्यां प्रजायेय' इत्यादिश्रुतिसिद्धं स्वसङ्कल्पकृतं ब्रह्मणो नानानामरूपभाक्त्वेन नानाप्रकारत्वमपि निषिध्यते। 'यत्र त्वस्य सर्वमात्मैवाभूत्', इत्यादिनिषेधवाक्यादौ च तत्स्थापितम्,** (बृ.४.४.६.) **'सर्वं तं परादाद्योऽन्यत्राऽऽ-त्मनः सर्वं वेद',** (बृ.४.१०.) **'तस्य ह वा एतस्य महतो भूतस्य निश्श्वसितमेतद्यदृग्वेदो यजुर्वेद' इत्यादिना॥**

---

हि श्रुतपरित्यागः अश्रुतपरिकल्पनश्च। अत्र तु श्रौत एव निर्वाहः। श्रुतानुगुणश्च। अन्यत्र सामान्येनावगतं गुणनिषेधं श्रुतिर्हेयगुणविषयं व्यवस्थापयतीत्यधिकमत्र विवृतम्। आनन्दो ब्रह्म, विज्ञानमानन्दं ब्रह्म इत्यादिभिर्ब्रह्मणो ज्ञानस्वरूप-त्वबोधकश्रुतीनामर्थमाह - **ज्ञानस्वरूपमिति**। सर्वज्ञस्येति ज्ञानैकनिरूपणीयत्वे हेतुप्रदर्शनाय। न हि ज्ञानस्यैवाभावे ज्ञानैकनिरूपणीयत्वसम्भवः। तत्तद्वृत्तिधर्मेण हि तत्तद्वस्तु निरूपणं युक्तम्। सर्वशक्तेरित्यादिगुणकथनं दृष्टान्तप्रदर्शना-र्थम्। ब्रह्मणो निर्विशेषत्वसिद्धये हि गुणवत्त्वं न स्वीक्रियते। तत्रापहतयात्मा इत्यादिना सत्यसङ्कल्प इत्यन्तेन निखिल-हेयप्रत्यनीकत्वकल्याणगुणवत्त्वसिद्ध्या निर्विशेषत्वं परित्याज्यमेव। ततश्च ज्ञानगुणकत्वस्वीकारेपि को विरोधः। निर्विशेषत्वविरोधस्तु इतरगुणवत्त्वस्वीकारावश्यम्भावेन निर्विशेषत्वस्यानङ्गीकारान्न भवति। अतो यथा इतरगुणवत्त्वं ब्रह्मणि श्रुतिप्रामाण्यात्, तत एव हेतोर्ज्ञानवत्त्वमपि। न हि ज्ञानवत्त्वनिषेधः कुत्रचिच्छ्रौतः। नापि कल्पनार्हः। प्रत्युत विधिरेव ज्ञानवत्त्वस्येति भावः। ज्ञानस्वरूपवादस्य ज्ञानगुणकत्वबोधने ज्ञानस्वरूपत्वं न सिध्येदित्यत्राह - **स्वयम्प्रका-शतयेति**। उक्तनिर्वाहद्वयमपि तद्गुणसारत्वात्स्वप्रकाशत्वतश्चेति सारावल्यामुक्तम्। उक्तनिर्वाहद्वयेपि श्रुत्यानुगुण्यं दर्शयति - **यस्सर्वज्ञ इति**। सर्वज्ञ इत्यादिकं ज्ञातृत्वबोधकम्। सत्यं ज्ञानमित्यादिकं ज्ञातृत्वज्ञानरूपत्वोभयबोधकम्। ज्ञानैकनिरूपणीयतया स्वप्रकाशतया चेति पूर्वमुक्तत्वात्। **ज्ञानस्वरूपतामिति**। स्वरूपशब्दो व्यवहारयोग्यतापरः। ज्ञानव्यवहारयोग्यतामित्यर्थः। आवेदयन्तीत्यनुषङ्गः। यथा च ज्ञानस्य ज्ञानाश्रयत्वमुपपद्येत तथोपपादितमधस्तात्॥

य इह नानेव पश्यतीति भेदनिषेधपरत्वेन परोदाहृतश्रुतीनामर्थमाह - **सोऽकामयतेति**। **स्थिरत्रसरूपतया** = स्थावरजङ्गम-शरीरतया। **नानाप्रकारं** = नानात्मकं वस्तु = अब्रह्मात्मकं **वस्तु**। निषेधस्य विहितव्यतिरिक्तविषयत्वमभिप्रेत्याह - **न पुनरिति। श्रुतिसिद्धमिति**। अनेन विहितत्वमुक्तम्। न हिंस्यादिति निषेधस्य विहितव्यतिरिक्तविषयत्वाङ्गीकारात्। ऐक्यश्रुतेः प्रकार्यैक्यपरत्वेनोक्तत्वात्तच्छेषभूतभेदनिषेधस्तदनुसारेण प्रकारिभेदनिरसनतत्पर इति चाभिप्रायः। **यत्र त्विति**। निषेधवाक्यादौ तत्केन कं पश्येदिति निषिद्धत्वादिति भावः। **तत्** = अब्रह्मात्मकवस्तुनिषेधः। **स्थापितं** = स्थापनीयः। यद्वा - वेदस्य स्थापनकर्तृत्वम्। सर्वमिति कर्तृ। **परादात्** = पराकुर्यात् निन्द्यादिति। **आत्मनोऽन्यत्र** = ब्रह्मणः पृथग्भूतम्। यः ब्रह्मणोऽविनाभावरहितं सर्वं वेद तं सर्वं परादादित्यर्थः। **तस्य** = परमात्मनः। **निःश्वसितं** = सङ्कल्पमात्राद्विजृम्भितम्।

**एवं चिदचिदीश्वराणां स्वभावभेदं स्वरूपभेदं च वदन्तीनां कार्यकारणभावं कार्यकारणयोरनन्यत्वञ्च वदन्तीनां सर्वासां श्रुतीनामविरोधः, चिदचितोः परमात्मनश्च सर्वदा शरीरात्मभावं शरीरभूतयोः कारणदशायां नामरूपविभागानर्हसूक्ष्मदशापत्तिं कार्यदशायां च तदर्हस्थूलदशापत्तिं वदन्तीभिः श्रुतिभिरेव ज्ञायत इति, ब्रह्माज्ञानवादस्यौपाधिकब्रह्मभेदबादस्यान्यस्याप्यपन्यायमूलस्य सकलश्रुतिविरुद्धस्य न कथञ्चिदप्यवकाशो दृश्यते। चिदचिदीश्वराणां पृथक्स्वभावतया तत्तच्छ्रुतिसिद्धानां शरीरात्मभावेन प्रकारप्रकारितया श्रुतिभिरेव प्रतिपन्नतया श्रुत्यन्तरेण कार्यकारणभावप्रतिपादनं कार्यकारणयोरैक्यप्रतिपादनं च ह्यविरुद्धम्।**

**यथा - आग्नेयादीन् षड्यागान् उत्पत्तिवाक्यैः पृथगुत्पन्नान्समुदायानुवादिवाक्यद्वयेन समुदाय-द्वयत्वमापन्नान् 'दर्शपूर्णमासाभ्याम्' इत्यधिकारवाक्यं कामिनः कर्तव्यतया विदधाति ; तथा चिदचिदीश्वरान्**

---

अत्र ब्रह्मसङ्कल्पविजृम्भितत्वेन वस्तुजातानामुक्तत्वाद्ब्रह्मभिन्नत्वसिद्ध्या 'सर्वं तं परादादि'त्यस्य ब्रह्मभिन्नवस्तुनिषेध-परत्वमनुपपन्नमित्यन्यवस्तुनो ब्रह्मात्मकत्वश्रुतेश्चाब्रह्मात्मकवस्तुनिषेधपरत्वमेव युक्तमिति यत्र त्वस्येत्यादि सामान्य-निषेधवाक्यस्य विशेषनिषेध एव तात्पर्यमिति भावः। अत्र इतिशब्दमध्याहृत्य निषेधवाक्यादौ यजुर्वेद इत्यादिना स्थापितमिति 'अत्रेदं तत्त्व'मिति विशिष्टान्वयः।

चिदचिद्ब्रह्मस्वरूपस्वभावबोधकश्रुतीनां कार्यकारणभावकार्यकारणानन्यत्वबोधकश्रुत्यविरोधः श्रुतिमूल एवेत्याह - **चिदचिदिति**। ब्रह्माज्ञानवादस्येत्यद्वैतिमतम्। औपाधिकब्रह्मभेदवादस्येति भास्करमतमन्यस्येति यादवप्रकाशस्य स्वतन्त्रभेदवादिनश्च। अपन्यायमूलस्य सर्वश्रुतिविरुद्धस्येति सर्वत्रान्वेति। **अपन्यायमूलस्य** = अपगतेन्यायमूले यस्मात्तस्य। न्यायानुगृहीतं मूलं = न्यायमूलम्। अपगतं न्यायमूलं यस्मात्तस्येति वाऽर्थः। **चिदचिदीश्वराणामिति**। अत्रोभयत्र श्रुतिशब्दनिर्देशः स्वकृतनिर्वाहस्य श्रुत्युक्तत्वेन श्रुत्यानुगुण्यं सूचयति। सर्वमपन्यायेत्यादिना स्वमतात् परमतस्य वैषम्यञ्च दर्शितम्।

एवं श्रुतिभिश्चिदचिदीश्वरतत्त्वभेदं, चिदचितोः परमात्मशरीरत्वेन परमात्मनस्तदात्मत्वं, पृथगुक्तवस्तुत्रयं, कार्यावस्थः कारणावस्थश्च परमात्मैक एवेति प्रतिपादितम्। तत्र वैदिकदृष्टान्तमाह - **यथेति**। आग्नेयादिषड्यागाः - आग्नेय-अग्नीषोमीय-उपांशुयाजाः-ऐन्द्रयागः आग्नेयश्च। ऐन्द्रं दधिपयसीति ऐन्द्रस्य यागद्वयत्वम्, उत्पत्तिवाक्यैः= यदाग्नेयोऽष्टाकपालोऽमावास्यायाञ्च पौर्णमास्याञ्चाच्युतो भवति ... इति वाक्यैः। उत्पत्तिवाक्यत्वञ्च प्रथमप्रतिपत्ति-जनकवाक्यत्वम्। समुदायानुवादिवाक्यद्वयं = 'य एवं पौर्णमासीं यजते', 'य एवं विद्वान्नमावास्यां यजत' इति वाक्य-द्वयम्। **समुदायद्वयत्वमापन्नमिति**। उदाहृतवाक्यद्वयेन हि पौर्णमासीकालकर्तव्ययागान् अमावास्याकालकर्तव्ययागांश्च क्रोडीकृत्य द्वौ समुदायौ प्रदर्शितौ। **कामिनः कर्तव्यतया विदधातीति**। उक्तसमुदायद्वयं समुच्चित्य स्वर्गसाधनत्वाकारेण कामिकर्तव्यतया 'दर्शपूर्णमासाभ्याम्' इत्यधिकारवाक्यं विदधातीत्यर्थः। यदाग्नेय इत्यादिवाक्यं यच्छब्दघटितमित्यनुवादरूपत्वमिति न भ्रमितव्यम्। तत्पुरोवादवाक्याभावात्। 'प्रतितिष्ठन्ति हवा य एता रात्रीरूपयन्ती'-ति वाक्यवत्। अतो 'यदाग्नेय' इत्यादिवाक्यं प्रथमं यागप्रतिपत्तिं जनयति। दर्शपूर्णमासाभ्यामिति तु कर्तव्यतया यागविधायकमिति विशेषः।

अत्रायं भावः - यदाग्नेयोऽष्टाकपालः पौर्णमास्याममावास्यायाञ्चाच्युतो भवतीत्यत्राग्नेयद्वयं विधीयत इति। इदं वाक्यमाग्नेययागद्वयोत्पत्तिबोधकम्। अत्रैक एवाऽऽग्नेययागः पर्वभेदेन प्रयोगभेदमात्रमिति प्राच्यमीमांसकाः। नवीनास्तु आग्नेयद्वयमेव विधीयते उत्पत्तिवाक्य एव विरुद्धकालद्वयश्रवणादिति वदन्ति। एतन्मतमभिप्रेत्यात्र

**विविक्तस्वरूपस्वभावान्,** (श्वे.१.१०.) **'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः',** (तै. नारा.) **'पतिं विश्वस्याऽऽत्मेश्वरम्....आत्मा नारायणः परः' इत्यादिवाक्यैः पृथक् प्रतिपाद्य,** (बृ.माध्य ६.७.) **'यस्य पृथिवी शरीरम्...यस्याऽऽत्मा शरीरम्',** (सुबा.७.) **'यस्याव्यक्तं शरीरम्...यस्याक्षरं शरीरम्...एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण' इत्यादिभिर्वाक्यैश्चिदचितोः सर्वावस्थावस्थितयोः परमात्मशरीरतां परमात्मनस्तदात्मताञ्च प्रतिपाद्य शरीरिभूतपरमात्माभिधायिभिः सद्ब्रह्मात्मादिशब्दैः कारणावस्थः कार्यावस्थश्च परमात्मैक एवेति पृथक्प्रतिपन्नं वस्तुत्रितयं** (छा.६.२.१.) **'सदेव सोम्येदमग्र आसीत्',** (छा.६.८.७.) **'ऐतदात्म्यमिदं सर्वम्',** (छा.३.१४.१.) **'सर्वं खल्विदं ब्रह्म' इत्यादिवाक्यं प्रतिपादयति। चिदचिद्वस्तुशरीरिणः परमात्मनः**

---

भाष्यकारोक्तिः। अग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छदित्यत्राग्नीषोमीययागः। 'उपांशुयाजमन्तरा यजति' इत्युपांशुयागः। तथा चाऽऽग्नेयाग्नीषोमीययागः उपांशयाग इति यागत्रितयं पौर्णमास्याम्। 'ऐन्द्रं दध्यमावास्यायाम्' 'ऐन्द्रं पयोऽमावास्यायाम्' इति ऐन्द्रयागद्वयं प्रतिपन्नं, एवञ्चाऽऽग्नेयः ऐन्द्रयागद्वयमिति यागत्रयममावास्यायाम्। तथा च षड्यागाः। उत्पत्तिवाक्यैः प्रतिपन्ना आग्नेय-अग्नीषोमीय-उपांशुयागरूपत्रिकम्, आग्नेयं दधिद्रव्यकेन्द्रदेवताकयागपयोद्रव्यकेन्द्रदेवताकयागरूपत्रिकञ्च प्रतिपन्नम्। अत्र त्रिकस्य त्रिकस्य समुदायरूपेणानुवादः 'य एवं विद्वान् पौर्णमासीं यजते' 'य एवं विद्वान् अमावास्यां यजते' इति विद्वत्पदघटितवाक्यद्वयेन क्रियते। अत्र तत्तत्कालकर्तव्यत्वं बोध्यते। एतद्रूपेण पूर्वत्रिकस्य पौर्णमासीसमुदायत्वम् उत्तरत्रिकस्यामावास्यासमुदायत्वमुक्तम्। अनन्तरं दर्शपूर्णमासाभ्यां यजेतेति दर्शपूर्णमासपदयोः प्रत्येकं त्रिकत्रिकबोधकत्वं प्रतिपादितम्। एवमेवात्र त्रीणि तत्त्वानि पूर्वं पृथक्बोधितानि। अन्तर्यामिब्राह्मणादिना समुदायीकृतानि, सदेवेदमग्र इत्यादिवाक्यैः समुदिततया बोधितानीति विवेकः। एवमत्र दृष्टान्तसाम्यं बोध्यम्। प्राचीनमीमांसकमतानुसारेणाऽऽग्नेयस्यैकत्वे षट्त्वसम्पादनार्थमैन्द्राग्नयागो योजनीयः। अयञ्च पक्षः श्रुतप्रकाशिकायामुक्तः।

ननु षड्त्वकथने ऐन्द्राग्नयागसहितानामेतेषां षण्णां फलार्थं कथं मेलनं सम्भवति, ऐन्द्राग्नयागस्य दर्शे वा पूर्णमास्यां वाऽनन्तर्गतत्वात्? दर्शपूर्णमासाभ्यां यजेतेति कामिनः कर्तव्यतया विहितपृथग्भूतत्वादिति चेत् - उच्यते - अनेकयागसमुदायमात्र एव भाष्यतात्पर्यात्। आग्नेययागस्य एकत्वपक्षेप्युभयकालावच्छिन्नव्यक्त्योर्द्वित्वमेवेति व्यक्तिषड्कस्यैव फलहेतुत्वमिति तावतापि षड्कसिद्धिरित्याशयेनाविरोधाच्च॥

**शरीरिभूतपरमात्माभिधायिभिरित्यादि।** अयमत्रान्वयः - सदेव सोम्येदमग्र आसीत्। ऐतदात्म्यमिदं सर्वं, सर्वं खल्विदं ब्रह्म इत्यादिवाक्यं (कर्तृ) षड्यागबोधकवाक्यस्थाने 'क्षरं प्रधानम्' इत्यादि वस्तुत्रितयबोधकं वाक्यम्। समुदायद्वयत्वबोधकवाक्यस्थाने विशिष्टैक्यबोधकं सदेवेत्यादिकम्। वस्तुत्रितयस्यैक्यबोधने हेतुसूचनार्थं घटकश्रुत्युपादानम्। दृष्टान्ते षड्यागाः। द्वौ समुदायौ। अत्र तु वस्तुत्रितयम्, एकस्समुदाय इति विवेकः। ननु दृष्टान्त आग्नेयादिसमुदाये यागषट्के आग्नेयादिवाक्येनैकेन न समुदायाभिधानम्, अत्र तु समुदायघटकपरमात्मवाचिशब्देन समुदायरूपविशिष्टपरमात्मबोधनं कथं योयुज्यत इत्यत्राह - **चिदचिद्वस्तुशरीरिण** इति।

अयं भावः - दृष्टान्ते परस्परं प्रकारप्रकारिभावानापन्नत्वान्नान्यतमवाचिशब्देन समुदायाभिधानसम्भवः। अत्र तु परस्परं प्रकारप्रकारिभावापन्नत्वाच्चेतनाचेतनयोरपृथक्सिद्धप्रकारत्वान्निष्कृष्टब्रह्मणः कारणत्वानुपपत्तेश्चान्यतमवाचिना शब्देन विशिष्टोपस्थापनं युक्तम्। एवं सद्ब्रह्मशब्दयोश्चेतनाचेतनविशिष्टस्यापि ब्रह्मणः सत्त्वबृहत्वयोगेन विशिष्टोपस्थापकत्वं युक्तम्। आत्मशब्दस्य व्याप्तिरूपप्रवृत्तिनिमित्तवाचकत्वेन व्याप्तेश्च व्याप्यसापेक्षत्वाद्व्याप्यभूतचेतनाचेतन-

**परमात्मशब्देनाभिधाने हि नास्ति विरोधः, यथा मनुष्यपिण्डशरीरकस्याऽऽत्मविशेषस्य 'अयमात्मा सुखी' इत्यात्मशब्देनाभिधाने इत्यलमतिविस्तरेण ॥**

**यत्पुनरिदमुक्तम् - 'ब्रह्मात्मैकत्वविज्ञानेनैवाविद्यानिवृत्तिर्युक्तेति तदयुक्तम्। बन्धस्य पारमार्थिकत्वेन ज्ञाननिवर्त्यत्वाभावात्। पुण्यापुण्यरूपकर्मनिमित्तदेवादिशरीरप्रवेशतत्प्रयुक्तसुखदुःखानुभवरूपस्य बन्धस्य मिथ्यात्वं कथमिव शक्यते वक्तुम्। एवंरूपबन्धनिवृत्तिर्भक्तिरूपापन्नोपासनप्रीतपरमपुरुषप्रसादलभ्येति पूर्वमे-**

विशिष्टोपस्थाकत्वम्। एवमक्षरसर्वज्ञादिशब्दानां विशेष्यमात्रशक्तानामपि निष्कृष्टब्रह्मणः कारणत्वे स्वरूपविकारादि-प्रसङ्गबलेन कार्योपयुक्तानुक्तचेतनाचेतनविशिष्टब्रह्मवाचित्वं 'देवानाज्यपानावहे' इत्यादिष्वाज्यशब्दस्य पृषदाज्य-शब्दार्थदधिमिश्राज्यवाचित्ववत् युक्तमिति। विशेष्यवाचिशब्देन विशिष्टाभिधानं मुख्यमेवेत्यत्र लोकसम्मतं दृष्टान्तमाह - **यथेति**। अयमात्मा सुखीत्यत्र ह्यात्मनो वैषयिकसुखवत्वमुच्यते। शरीरविधुरस्यात्मनस्तादृशसुखासम्भवाद्वैषयिक-सुखोपयुक्तमनुष्यादिपिण्डविशिष्टात्मैवाऽऽत्मशब्दार्थ इति सामर्थ्यात्सिद्धम्। तद्वदेव परमात्मवाचिशब्देन विशिष्टो-पस्थापनं युच्यत इत्याशयः ॥

एवं षड्विधानुपपत्तयः प्रदर्शिताः। अथ सप्तमां निवृत्त्यनुपपत्तिं गदितुं तन्मतमनुवदति - **यदिति**। एवकार उपासनादिव्यवच्छेदकः। पुनश्शब्दस्तदुक्ताविद्यानिवृत्युक्ते र्हेयत्वद्योतकः। दूषयति - **तदयुक्तमिति**। बन्धस्य मिथ्यात्वे हि ज्ञानबाध्यत्वं, यथा प्रातिभासिकसर्पस्य रज्जुज्ञानबाध्यत्वम्। मिथ्यात्वमेव प्रपञ्चस्य न सम्प्रतिपन्नमिति ज्ञाननिवर्त्यत्वाभावेन कथं ज्ञानेन निवृत्तिकथनमित्याशयेनाह - **बन्धस्येति**। यद्यप्यविद्यानिवृत्तिर्युक्ता इत्यनुवादानुसारेण अविद्याया इत्येव निर्देशः कार्यः, अथापि सिद्धान्ते तन्मतसिद्धाविद्याया एवानङ्गीकारेण पारमार्थिकत्वं सुतरां न सम्भ-वतीति बन्धस्येति भाषितम्। बन्धस्तूभयसम्मतः। परस्याविद्याहेतुकः। स्वस्य, कर्महेतुकः। अविद्यानिवृत्तिरित्यत्रा-विद्याशब्दो बन्धपरो वा। बन्धस्य पुण्यपापहेतुकत्वमुपपादयन् मिथ्यात्वं न सम्भवतीति प्रतिजानीते - **पुण्येति**। पुण्यापुण्यशब्देन कर्मशब्दो विवृतः। अस्मन्मते भगवन्निग्रहानुग्रहरूपमेव कर्म। उक्तञ्च 'नादृष्टं किञ्चिदन्यत् श्रुतिसरणिजुषां देवतानुग्रहादेः' इति। आदिशब्दो निग्रहपरः। 'क्षेत्रज्ञानां समानां विषमयतनता तादृशादृष्टभेदात् नादृष्टं त्वन्यदिष्टं नियमनभिदया हीशितुस्तत्र भाव्यम्' इति च कर्मनिमित्तो देवादिशरीरप्रवेशः। तत्कृतः सुखदुःखाद्यनुभव इत्यर्थः। एतेन देवतायास्तदनुग्रहनिग्रहयोस्तत्प्रयुक्तशरीरप्रवेशस्य तत्कृतसुखदुःखानुभवस्य च सत्यत्वात् मिथ्यात्वम-सिद्धमिति सूचितम्। अयं भावः - बन्धस्य मिथ्यात्वं न सम्भवति। तथा सति हेतुहेतुमद्भावनियमानुपपत्तेः। न ह्यस-त्यस्य हेतुसापेक्षत्वसम्भवः। नाप्युत्पत्तिसम्भवः। परमार्थस्यैवार्थक्रियाकारित्वादुत्पत्तिमत्वाच्च। अतो बन्धस्यार्थक्रिया-कारित्वादिसत्त्वेन परमार्थत्वमेवेष्टव्यम्।

ननु परमार्थानामर्थक्रियाकारित्वमुत्पत्तिमत्त्वञ्च विरुद्धमित्युच्यत इति चेन्न। ज्ञानबाध्यत्वाभावात्। अपि च सर्वस्यापि मिथ्यात्वे पापस्यापि मिथ्यात्वेन तत्करणं न क्षत्यावहम् इति तदर्थं प्रायश्चित्तानुष्ठानवैयर्थ्यापत्तिः। न च प्रायश्चित्तानुष्ठानस्यापि मिथ्यात्वेन तद्वैयर्थ्यापादनं न सम्भवतीति वाच्यम्। मिथ्याभूतस्य ज्ञाननिवर्त्यत्वेन पापं मिथ्येति ज्ञानादेव निवृत्त्या प्रायश्चित्तविधानतदनुष्ठानविरोधापत्तेः। अतो जगतो मिथ्यात्वमनुपपन्नम्। उपपादितश्चेदम-धस्तात्। ननु बन्धस्य सत्यत्वे कथं निवृत्तिरित्यत्राह - **एवंरूपबन्धेति**। निवृत्त्युपपत्तये एवं रूपत्वोक्तिः। भक्तिरूपेत्यत्र रूपशब्दो रूपत्वपरः। बन्धस्य भगवन्निग्रहमूलकत्वेन तन्निग्रहनिवृत्त्यर्थं भक्तिरूपोपासनानुष्ठाने तेन प्रीतः परमपुरुषः स्वयं निवर्तयति ॥

**वोक्तम्। भवदभिमतस्यैक्यज्ञानस्य यथावस्थितवस्तुविपरीतविषयस्य मिथ्यारूपत्वेन बन्धविवृद्धिरेव फलं भवति।** (वि.२.१४.२७.) **'मिथ्यैतदन्यद्रव्यं हि नैति तद्रव्यतां यत' इतिशास्त्रात्,** (गी.१५.१७.) **'उत्तमः पुरुषस्त्वन्यः',** (श्वे.१.६.) **'पृथगात्मानं प्रेरितारञ्च मत्वा' इति, जीवात्मविसजातीयस्य तदन्तर्यामिणो ब्रह्मणो ज्ञानं परमपुरुषार्थलक्षणमोक्षसाधनमित्युपदेशाच्च।**

**अपि च - भवदभिमतस्यस्यापि निवर्तकज्ञानस्य मिथ्यारूपत्वात् तस्य निवर्तकान्तरं मृग्यम्॥ निवर्तकज्ञानमिदं स्वविरोधि सर्वं भेदजातंविनिवर्त्य, क्षणिकत्वात्स्वयमेवविनश्यतीति चेन्न ; तत्स्वरूपतदुत्पत्तिविनाशानां काल्पनिकत्वेन विनाशतत्कल्पना कल्पकरूपाविद्यायाः निवर्तकान्तरमन्वेषणीयम्॥**

ज्ञाननिवर्त्यत्वं मिथ्याभूतस्यैव, बन्धस्य परमार्थत्वे कथमुपासनात्मकज्ञाननिवर्त्यत्वमिति मा वोचः। दृष्टद्वारा निवर्त्यत्वासम्भवेप्यदृष्टद्वारा निवर्त्यत्वसम्भवात्। उपासनप्रीतगरुडप्रसादेन सत्यसर्पदष्टविषवत्। अतोऽस्मन्मते निवर्त्यत्वं नानुपपन्नम्। न केवलं बन्धानिवृत्तिमात्रं बन्धविवृद्धिरपीत्याह - **भवदिति**। ऐक्यज्ञानस्य स्वमतेपि बन्धनिवर्तकत्वस्वीकारात्तव्द्यावृत्तये भवदभिमतस्येत्युक्तिः। स्वमते उपासनात्मकं ज्ञानं परमते वाक्यार्थज्ञानमिति विवेकः। स्वमते शरीरशरीरिभावनिबन्धनं सोऽहमित्यैक्यज्ञानं, परमते स्वरूपैक्यकृतम्। **यथावस्थितेति**। चिदचिच्छरीरकब्रह्मरूपतत्त्वस्यैव यथावस्थितत्वम्। भवदुक्तज्ञानस्य स्वरूपविषयकस्य विषयभूतं स्वरूपैक्यं न यथावस्थितमिति भावः। विपरीतविषयस्येति हेतुगर्भम्। **बन्धविवृद्धिरेव फलमिति**। तत्त्वज्ञानमेव हि मोक्षोपायः भवदुक्ताभेदज्ञानन्तु अतत्त्वज्ञानरूपमिति विपरीतफलकत्वमेव तस्येति भावः।

नन्वन्यथाकृतमकृतं भवतीति न्यायेनान्यथाज्ञानस्योपायत्वाभावेनाविद्यानिवृत्तिरूपफलाभावेपि कथं बन्धविवृद्धिजनकत्वमिति चेन्न यागादिष्वन्यथाकरणे मुख्यफलाभावेपि ब्रह्मराक्षसादि फलजननवदत्रात्युपपत्तेः। नन्वन्यथाकृतस्य तथाफलजनकत्ववचनात्तत्र तथा सम्भवेपि वचनाभावादत्रापादनमयुक्तमिति चेन्न। यथाक्रतुन्यायेनायथाभूतविषयकज्ञानेनायथाभूतफलप्राप्तेरावश्यकत्वादिति भावः। **मिथ्येति** - परमात्मात्मनोर्योगः परमार्थ इतीरित इत्यर्धम्। यतोऽन्यद्रव्यं तद्रव्यतां नैति, अतः परमात्मात्मनो योगः परमार्थ इत्येतन्मिथ्येत्यर्थः। एवं भेदज्ञानस्यैव मोक्षोपायत्वोक्त्या भेदस्य सत्यत्वमभेदस्यापारमार्थिकत्वञ्च स्वतः फलतीत्याह - **उत्तम इति**। 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य विभर्त्यव्यय ईश्वर' इति श्लोकः। 'पूर्वं, मिथ्यैतत्' इति स्मृत्युपपादनेन प्रसङ्गात्स्मृतिः 'उत्तम' इत्यादिना निर्दिष्टा। पश्चाच्च श्रुतिरिति बोध्यम्॥

एवमविद्यानिवृत्त्यनुपपत्तिरुक्ता। अथाविद्यानिवर्तकत्वेन स्वीकृतज्ञानस्यापि मिथ्यात्वेन तन्निवृत्ति र्वक्तव्या साप्यनुपपन्ना तन्निवर्तकाभावान्निर्वर्तकान्तरस्वीकारे तस्यापि तथेत्यनवस्थेति सर्वथा निवृत्त्यनुपपत्ति र्दुस्त्यजा इत्याशयेनाह - **अपि चेति**। क्षणिकत्वान्न नाशकान्तरापेक्षेति शङ्कते - **निवर्तकेति**। इदमुपलक्षणं - यथा दावानलः इन्धनानि विनाश्य, इन्धनान्ते स्वयमेव नश्यति, तथेदं निवर्तकज्ञानमिदं निवर्त्यबन्धं विनाश्य तन्नाशे स्वयमेव नश्यतीति। **दूषयति नेति**। निवर्तकज्ञानविनाशस्य ब्रह्मव्यतिरिक्तत्वमुत ब्रह्मस्वरूपत्वमिति विकल्प्य प्रथमं निराकरोति - **तदिति**। अत्र स्वरूपतदुत्पत्तिशब्दौ दृषान्तार्थौ। यथा निवर्तकज्ञानस्वरूपस्य तदुत्पत्तेश्च ब्रह्मव्यतिरिक्तत्वेन काल्पनिकत्वं तद्वन्निवर्तकज्ञानविनाशस्यापीत्यर्थः। यद्वा निवर्तकज्ञान-तदुत्पत्ति-तद्विनाशेषु स्वरूपादेः काल्पनिकत्वे हि स्वरूपविनाशोपि कल्पनीयो नान्यथेति। तद्विनाशो ब्रह्मस्वरूपमेवेत्युत्तरभाष्येपि विनाशमात्रस्यैव कोट्यन्तरप्रदर्शनादुक्त एवार्थो ग्राह्यः। 'विनाशतत्कल्पनाकल्पकरूपाविद्याया' इति समाधानभाष्येणाप्ययमेवामर्थः। विनाशः कल्प्यमानः निवर्तकज्ञानविनाशः। **तत्कल्पना** = विनाशविषयभ्रमबुद्धिः। **कल्पकः** = भ्रमाश्रयादिः, एतद्रूपाविद्याया इत्यर्थः। अत्रोपादनोपादेययोरभेदोपचारः। **निवर्तकान्तरमिति**। निवर्तकज्ञानस्य ब्रह्मव्यतिरिक्तत्वेन काल्पनिकत्वात्तद्विनाशोपादानभूताविद्यायास्तत्कल्पना-

**तद्विनाशो ब्रह्मस्वरूपमेवेति चेत् - तथा सति निवर्तकज्ञानोत्पत्तिरेव न स्यात् ; तद्विनाशे तिष्ठति, तदुत्पत्य-सम्भवात् ।**

**अपि च चिन्मात्रब्रह्मव्यतिरिक्तकृत्स्ननिषेधविषयज्ञानस्य कोऽयं ज्ञाता? अध्यासरूप इति चेन्न ; तस्य निषेध्यतया निवर्तकज्ञानकर्मत्वात् तत्कर्तृत्वानुपपत्तेः । ब्रह्मस्वरूपमेवेति चेत्; ब्रह्मणो निवर्तकज्ञानं प्रति ज्ञातृत्वं किं स्वरूपम्, उताध्यस्तम् ? अध्यस्तश्चेत् - अयमध्यासः तन्मूलाविद्यान्तरञ्च निवर्तकज्ञाना-विषयतया तिष्ठत्येव । निवर्तकज्ञानान्तराभ्युपगमे तस्यापि त्रिरूपत्वाज्ज्ञात्रपेक्षयाऽनवस्था स्यात् । ब्रह्म-स्वरूपस्यैव ज्ञातृत्वेऽस्मदीय एव पक्षः परिगृहीतस्स्यात् ।**

---

कल्पकोपादानाविद्यायाश्च किं निवर्तकान्तरम् । न हि क्षणिकत्वसमाधिर्युक्तः । अन्यथाऽविद्यानिष्पत्तये तत्त्वज्ञानमेवा-पेक्षितं स्यादिति भावः । अत्र मिथ्याभूतस्य ज्ञाननिवर्त्यत्वनियमेन मिथ्याभूतनिवर्तकज्ञानस्य क्षणिकत्वाद्विनाश इति समाधानमयुक्तमिति दूषणं स्फुटमिति तदुपेक्षितम् । ब्रह्मस्वरूपतापक्षमपाकर्तुमाह - **तद्विनाश** इति । ब्रह्मस्वरूपत्वपक्षे काल्पनिकत्वाभावेन न निवर्तकान्तरान्वेषणमिति भावः । निवर्तकज्ञानोत्पत्त्यनुपपत्तौ हेतुमाह - **तद्विनाश** इति । निवर्तकज्ञानविनाशरूपब्रह्मणो नित्यत्वेन सर्वदा विद्यमानत्वेन निवर्तकज्ञानोत्पत्तिरेव न स्यात् । नहि ज्ञानतद्विनाशयो र्युगपत्सम्भवः । घटनाशे सति घटसद्भावाभाववत् । ज्ञानविनाशश्च ब्रह्मरूपत्वेन नित्यः । अतो निवर्तकज्ञानस्यैवानु-त्पत्त्याऽविद्यानिवृत्तिः सुतरां न घटत इत्याशयः ॥

अथ निवर्तकज्ञानाश्रयानुपपत्त्यापि निवृत्त्यनुपपत्तिरित्याह - **अपि चेति** । स्वरूपभूतज्ञानस्य ब्रह्मरूपत्वेन ज्ञात्रन्तरापेक्षाविरहेपि प्रमाणजन्यत्वेनास्य साऽस्तीति सूचनाय कृत्स्ननिषेधविषयज्ञानस्येत्युक्तम् । उक्तज्ञानेन ब्रह्मनिवृत्तेर-निष्टत्वाच्चिन्मात्रब्रह्मव्यतिरिक्तत्वनिवेशः । **ज्ञाता** = आश्रयः । एवं धर्मिप्रश्नः कृतः । ब्रह्मव्यतिरिक्त आश्रय इति पक्षमनूद्य दूषयति - **अध्यासरूप** इति । जीवादिरित्यर्थः । **तत्कर्तृकत्वानुपपत्तेरिति** । स्वस्याध्यासरूपत्वेन निवर्त्यत्वान्निवर्तक-ज्ञानकर्मत्वमिति तत्कर्मभूतस्यैव तत्कर्तृत्वमनुपपन्नम् । न चैकस्यैवैकस्मिन् क्रियाविशेषे कर्मकर्तृत्वसम्भव इति भावः ।

ननु ब्रह्मस्वरूपत्वेन निवर्त्यत्वाभावात्कर्तृत्वसम्भव इति द्वितीयपक्षमनूद्य परिहरति - **ब्रह्मेति** । यदि ब्रह्मैव निवर्तकज्ञानाश्रयः, तर्हि तादृशज्ञानाश्रयत्वं स्वाभाविकमुताध्यस्तमिति विकल्पयति - **ब्रह्मण** इति । **स्वरूपं** = स्वस्य रूपं स्वाभाविकमित्यर्थः । ब्रह्मस्वरूपस्यैव ज्ञातृत्व इति दूषणं भाष्यानुरोधात् । द्वितीयशिरसः पाश्चात्यत्वेन बुद्धि-स्थत्वादधिकदूषणसत्वाच्च प्रथमं द्वितीयशिरः प्रतिक्षिपति - **अध्यस्तश्चेदित्यादिना** । निवर्तकज्ञानाविषयतयेति । निवर्तक-ज्ञानाश्रयत्वस्यैवाध्यस्तत्वेन तस्य तन्मूलाविद्यायाश्च तादृशज्ञानाविषयत्वेन निवर्तकान्तरसापेक्षत्वान्निवर्तकान्तरस्य च भवद्भिरनङ्गीकारान्निश्शेषाविद्यानिवृत्ति र्भवदभिमता न सिध्यतीति भावः । निवर्तकज्ञानान्तराभ्युपगमेप्यनवस्थया निश्शेषाविद्यानिवृत्ति र्दुरुपपादेति दूषयति - **निवर्तकेति** । त्रिरूपत्वादिति । ज्ञानस्य कस्यचित्कञ्चित्प्रति सिद्धिरूपत्वेन ज्ञात्रपेक्षायाः सत्त्वात्तादृशज्ञानाश्रयत्वस्याध्यस्तत्वस्यैवोक्तयुक्त्या स्वीकारादाश्रयत्वेनाध्यस्तस्य तस्यानवस्थायास्सत्त्वेन कदाचिदपि निश्शेषाविद्यानिवृत्ति र्न भवतीति भावः । स्वाभाविकत्वशिरो दूषयति - **ब्रह्मस्वरूपस्यैवेति** ।

ननु ज्ञातृत्वस्य स्वाभाविकत्वाध्यस्तत्वपक्षौ पराकृतौ । ब्रह्मस्वरूपत्वपक्षः कुतो न निराकृत इति चेदुच्यते - ब्रह्मणो ज्ञातृत्वस्वरूपत्वे ज्ञातृस्वरूपत्वं प्रागुक्तं विहन्येत । धर्मधर्मिणोरेकरूपत्वाभावात् । न च ब्रह्मणो निर्धर्मकत्वात् ज्ञातृस्वरूपत्वं ज्ञातृत्वस्वरूपत्वमुभयमपीष्टमेवेति वाच्यम् । ब्रह्मणि सधर्मकत्वस्य स्थापितत्वात् । ज्ञातृत्वस्य ब्रह्मस्व-रूपत्वे तस्य नित्यत्वेन निधर्मकज्ञातृत्वरूपनिवर्तकज्ञानस्य सर्वदा सत्त्वेन बन्ध एव न स्यात् । कथञ्च तन्निवृत्तिः ?

**निवर्तकज्ञानस्वरूपं स्वस्य ज्ञाता च ब्रह्मव्यतिरिक्त-त्वेन स्वनिवर्त्यान्तर्गतमिति वचनम् , 'भूतल-व्यतिरिक्तं कृत्स्नं देवदत्तेन छिन्नम्' इत्यस्यामेव च्छेदनक्रियायामस्य च्छेत्तुः अस्याश्छेदनक्रियायाश्च छेद्यानु-प्रवेशवचनवदुपहास्यम् । अध्यस्तो ज्ञाता स्वनाशहेतुभूतनिवर्तकज्ञाने स्वयं कर्ता च न भवति; स्वनाशस्या-पुरुषार्थत्वात् । तन्नाशस्य ब्रह्मस्वरूपत्वाभ्युपगमे भेददर्शनतन्मूलाविद्यादीनां कल्पनमेव न स्यात् - इत्यल-मनेन दिष्टहतमुद्गराभिघातेन ।**

**तस्मादनादिकर्मप्रवाहरूपाज्ञानमूलत्वाद्बन्धस्य तन्निबर्हणमुक्तलक्षणज्ञानादेव । तदुत्पत्तिश्चाहरहरनु-ष्ठीयमानपरमपुरुषाराधनवेषात्मयाथात्म्यबुद्धिविशेषसंस्कृतवर्णाश्रमोचित कर्मलभ्या । तत्र केवलकर्मणाम-**

---

ननु निवर्तकज्ञानस्य मिथ्यारूपत्वेन निवर्तकान्तरान्वेषकथनं निवर्तकज्ञानस्य ज्ञातुरध्यासरूपत्वे तादृशज्ञानकर्तुः तादृशज्ञानकर्मत्वानुपपत्तिकथनं ज्ञातृत्वस्याध्यासरूपत्वपक्षे ज्ञातृत्वाध्यासतन्मूलाविद्यादे र्निवृत्त्यनुपपत्तिकथनञ्चा-नुपपन्नम् । निवर्तकज्ञानस्य ब्रह्मव्यतिरिक्तसर्वनिषेधविषयकत्वान्निवर्तकज्ञानतदाश्रयज्ञातृत्वाध्यासतन्मूलाविद्यादीनामपि ब्रह्मव्यतिरिक्तत्वेन क्रोडीकारसम्भवादिति शङ्कां परिहरति - **निवर्तकज्ञानस्वरूपमिति** । चः ज्ञातृत्वाध्यासादिसमुच्चायकः । उपहास्यत्वे दृष्टान्तमाह - **भूतलेति** । यथाऽत्र भूतलव्यतिरिक्तत्वेन देवदत्तस्य च्छेदनक्रियायाश्च क्रोडीकारेऽपि च्छेद्याननुप्रवेशः । तद्वदत्रापि ब्रह्मव्यतिरिक्तत्वेन सर्वक्रोडीकारेऽप्युक्तानामननुप्रवेश एव । तत्क्रियाकर्तुः तत्क्रियायाश्च तत्क्रियाकर्मत्वासम्भवादित्यर्थः ।

ननु ज्ञानस्य स्वयम्प्रकाशत्ववादिनां स्वस्यैव ज्ञानविषयत्वसम्भववन्निवर्तकज्ञानविषयत्वरूपं कर्मत्वं निवर्तक-ज्ञानस्यैव सम्भवतीति प्रदर्शितदृष्टान्तो विषम इति चेन्न । भवतां ज्ञानस्य स्वतस्सिद्धत्वेपि स्वविषयकत्वानङ्गीकारात् । अवेद्यत्वे सत्यपरोक्षव्यवहारहेतुत्वं हि स्वतः सिद्धत्वम् । तथैवाद्वैतसिद्धावुक्तत्वात् । अत एव हि सतोऽनुभूतिविषय-त्वेन विषयविषयिभावप्रयुक्तभेदशङ्कायामत एव सतोऽनुभूतिविषयभावोऽपि न प्रमाणपदवीमधिरोहतीति पूर्वं परिहृतम् । अपि च ब्रह्मव्यतिरिक्तं मिथ्येति निवर्तकज्ञानविषयत्वस्य स्वस्मिन् सत्त्वेपि कथं तन्निवृत्तिः । ज्ञानविषयत्वेपि स्वस्य निवर्तकस्य निवृत्तिकर्मत्वासम्भवात् । नहि निवर्तकज्ञानविषयत्वमेव निवृत्तिकर्मत्वम् । तथा सति निवर्तकज्ञानस्यैव निवृत्तिरूपत्वापत्तेः । निवर्तकज्ञानेन ज्ञातुस्स्वस्यापि नाश इत्यभ्युपगम्यमाने निवर्तकज्ञानसम्पादनाय प्रवृत्तिरेव न भवतीत्याह - **अध्यस्त इति** ।

ननु स्वनाशस्य ब्रह्मरूपत्वेन पुरुषार्थत्वात्प्रवृत्तिर्घटत एवेत्यत्राह - **तन्नाशस्येति** । **कल्पनमेव न स्यादिति** । ज्ञातृनाशरूपब्रह्मणः सर्वदा सत्त्वेन ज्ञात्रध्यास एव न स्यात् । स्वनाशे तिष्ठति स्वोत्पत्त्यसम्भवात् । अतो ज्ञात्रध्यासार्थं भेददर्शनतन्मूलाविद्यादिकल्पनमनुपपन्नमिति भावः । एवं निवृत्त्यनुपपत्तिमुपसंहरन् परिहसति - **इत्यलमिति** ।

एवमविद्यायां सप्तविधानुपपत्तिप्रदर्शनेन तस्या दूषितत्वात्प्रपञ्चस्य सत्यत्वेन मिथ्यात्वासिद्ध्या साधनचतुष्ट-यस्य पूर्ववृत्तत्वे वस्तुसामर्थ्यरूपहेत्वसिद्धे र्बन्धस्य सत्यत्वसिद्ध्या सत्यभूततन्निवृत्ते र्भक्तिरूपत्वापन्नोपासननिष्पाद्यत्वा-त्तादृशोपासनस्य च फलाभिसन्धिरहितवर्णाश्रमधर्मानुष्ठानसाध्यत्वेन यथावस्थितकर्मस्वरूपज्ञानभावे तदनुष्ठाना-सम्भवात्तत्स्वरूपनिर्णयाय कर्मविचारस्य कर्तव्यत्वेन ब्रह्मज्ञानाङ्गभूतकर्मविचारो ब्रह्मविचारपूर्वभावीति पूर्वभूतकर्म-विचारानन्तरं ब्रह्मविचारः कर्तव्य इत्युक्तमुपसंहरति - **तस्मादिति** । अज्ञानस्यानिवर्तनीयत्वव्यावृत्तये कर्मशब्दः । स्व-रूपानादित्वव्यावृत्तयेऽनादिशब्दः । उक्तलक्षणज्ञानमुपासनात्मकं ज्ञानम् । कर्मविचारस्य पूर्ववृत्तत्वे हेतुमाह - **तदुत्पत्तिश्चेति** ॥

**ल्पास्थिरफलत्वम्, अनभिसंहितफलपरमपुरुषाराधनवेषाणां कर्मणामुपासनात्मकज्ञानोत्पत्तिद्वारेण ब्रह्मयाथात्म्यानुभवरूपानन्तस्थिरफलत्वञ्च कर्मस्वरूपज्ञानादृते न ज्ञायते, केवलाकारपरित्यागपूर्वकयथोक्तस्वरूपकर्मोपादानञ्च न सम्भवतीति कर्मविचारानन्तरं तत एव हेतोर्ब्रह्मविचारः कर्तव्य इति 'अथात' इत्युक्तम् ॥**

एतद्वै गार्ग्यविदित्वा ... अन्तवदेवास्य तद्भवतीति भगवज्ज्ञानविधुरकर्मणोऽल्पास्थिरफलत्वञ्च बोधितम्। कर्मविचारादेव कर्माणामल्पास्थिरफलकत्वज्ञानं फलति। **अनभिसंहितफलेति**। 'यज्ञेन दानेन' इत्यादिना कर्मणां विद्याङ्गत्वमुक्तम्। अत उपासनद्वाराऽनन्तस्थिरफलसाधनत्वं कर्मणां फलति। न ह्यङ्गस्याल्पास्थिरफलकत्वं अङ्गिनश्चानन्तस्थिरफलकत्वमिति सम्भवति। अङ्गाङ्गित्वानुपपत्तेः। तथा च कर्मणामनन्तस्थिरफलत्वमङ्गत्वज्ञानमन्तरा न भवति। अङ्गत्वज्ञानञ्च यज्ञेन दानेनेति वाक्यार्थज्ञानेन। वाक्यार्थज्ञानस्य पदार्थज्ञानपूर्वकत्वेन पदार्थभूतकर्मस्वरूपज्ञानमपेक्षितम्। तच्च कर्मविचारसापेक्षम्। अत एवं परम्परया कर्मविचाराधीनकर्मज्ञानादनन्तस्थिरफलत्वनिश्चय इति भावः। **केवलाकारः** - आत्मयाथात्म्यबुध्दिसंस्कारशून्यः।

अयं भावः - कर्म हि फलद्वारा त्याज्यं स्वरूपेण चोपादेयम्। हानार्थमुपादानार्थञ्च कर्मज्ञानमावश्यकम्। तच्च कर्मविचाराभावे न भवतीति। एवं सूत्रघटकपदानामर्थोपवर्णनेन कर्मब्रह्मविचारयोः प्रौर्वापर्यमुक्तम्। एवमेव पराभिमततात्पर्ययोजनापि सूत्रघटकपदयोजनावन्निरस्तप्रायैव। परेण हि प्रपञ्चस्य सत्यत्वेन तन्निवृत्तये ज्ञानप्रधानको ब्रह्मविचारो नारम्भणीयः, मिथ्याभूतस्यैव ज्ञाननिर्वत्यत्वात्। सत्यस्य ज्ञाननिवर्त्यत्वाभावादिति पूर्वपक्षं कृत्वा प्रपञ्चस्य मिथ्यात्वेन ज्ञानबाध्यत्वसम्भवाज्ज्ञानप्रधानशास्त्रम् आरम्भणीयमिति प्रतिपादितम्। सिद्धान्ते च सत्यत्वस्योपपादितत्वात्तदुक्ततात्पर्ययोजनापि निरस्तैव।

ननु सत्यत्वे कथं ज्ञाननिवर्त्यत्वं, कथन्तराञ्च तत्प्रधानकशास्त्रस्यारम्भणीयत्वसिद्धिरिति चेत् क एवमाह - प्रपञ्चस्य ज्ञाननिवर्त्यत्वमिति ? भक्तिरूपोपासनेन हि भगवन्निग्रहमूलकबन्धस्यादृष्टद्वारा निवृत्तिमातिष्ठामहे। शास्त्रमप्युपासनरूपज्ञानप्रतिपादकमेव। अतस्सत्यत्वेपि भक्तिरूपापन्नोपासननिवर्त्यत्वसम्भवात्तत्प्रधानकशास्त्रारम्भो युक्त एवेति सामञ्जस्यम् ॥

अत्रायं क्रमः - लघुपूर्वपक्षः उपायोपदेशपरवाक्यपर्यालोचनया कृतः। तत्र हि ज्ञानस्यैव मोक्षसाधनत्वमभ्युपगम्य तद्बोधकश्रुतय उदाहृताः। तमेव क्रममनुसृत्य लघुसिद्धान्तश्च प्रवर्तितः। महापूर्वपक्षस्तु स्वरूपोपदेशपरवाक्यपर्यालोचनया। 'सदेव सोम्य', 'सत्यं ज्ञानं', 'प्रत्यस्तमितभेदं यत्' इत्यादि श्रुतिस्मृतय उदाहृताः। तथा च - १. निर्भेदसत्यत्वम्, २. निखिलमिथ्यात्वम् ३. तन्मूलाविद्या ४. तन्निवर्तकतत्त्वज्ञानम्, ५. शास्त्रस्य प्रबलत्वेन प्रत्यक्षविरुद्धार्थबोधकत्वम् ६. वस्तुतोऽविरोधः ७. प्रत्यक्षस्यापि निर्विशेषवस्तुबोधकत्वम् ८. सर्वप्रमाणस्यापि निर्विशेषवस्तुबोधकत्वे पर्यवासानम् इत्याद्यर्थाः प्रतिपादिताः। महासिद्धान्ते तु - एतत्प्रतीपतया - १. निर्विशेषस्य सर्वप्रमाणाविषयत्वम्, २. स्वानुभवसिद्धत्वखण्डनम्, ३. विशिष्य सर्वप्रमाणाविषयत्वोपपादनं ४. निर्विकल्पसविकल्पकयोः सविशेषविषयकत्वम्, ५. असत्यात्सत्योपत्त्यादिनापि शास्त्रस्य बोधकत्वासम्भवः, ६. उदाहृतश्रुतिस्मृत्यादिकं सर्वं सविशेषपरमिति प्रतिपादनम्, ७. सप्तविधानुपपत्तिप्रदर्शनम्, ८. अविद्यानिरासः, ९. तत्वमसीति वाक्यार्थः, १०. सगुणनिर्गुणश्रुतिसामरस्यम्, ११. स्वसिद्धान्तरहस्यकथनम्, १२. अधिकरणपूर्वपक्षसिद्धान्तादिक्रम आदृत इति विवेकः ॥

अक्षरयोजना वृत्ता। तात्पर्ययोजनाऽऽरभ्यते। ब्रह्मविचारः कर्मविचारानन्तरकालीनकर्तव्यतावान् कर्मणोऽल्पास्थिरफलत्वनिर्णयसहितब्रह्मानन्तस्थिरफलत्वप्रकारकापातप्रतीतिविषयत्वादित्यनुमानम्। यद्यप्यत्र प्राभाकरमते ब्रह्मविचाररूपपक्षस्यैवासिद्ध्याऽऽश्रयासिद्धिः, अत एतदुपमर्दनेन कर्तव्यत्वाभावसाधनं तेषां न युक्तं, ब्रह्मणस्तैरनङ्गीकारात्। न च निरतिशयोत्कर्षवत्त्वरूपब्रह्मत्वस्य तै र्जीवेऽङ्गीकारात् तादृशकर्मकर्तृजीवप्रशंसारूपतया वेदान्तानां स्वीकाराच्च न पक्षाप्रसिद्धिरिति वाच्यम्। 'बृहति बृंहयति तस्मादुच्यते परं ब्रह्म' इत्यथर्वशिरश्श्रुत्या बृहत्वबृंहणत्वविशिष्टवस्तुन एव ब्रह्मशब्दार्थत्वोक्तेः। तस्य जीवगत्वाभावेनाश्रयासिद्धे दुर्निवारत्वात्। बृहत्वं हि परममहत्परिमाणवत्त्वं, बृंहणत्वं चाचेतनगतस्थूलावस्थाहेतुत्वे सति चेतनगतज्ञानगतमहात्वापादकत्वम्। तज्जीवे न सम्भवति। न च तैरपि ब्रह्मपदार्थस्य कस्यचिदङ्गीकाराद्ब्रह्मपदार्थविषयकविचारत्वेन तस्य पक्षत्वमित्यदोष इति वाच्यम्। तथा सति कर्मकर्तृजीवस्यैव ब्रह्मपदार्थत्वमङ्गीकुर्वतां तादृशब्रह्मपदार्थस्य स्वर्गकामो यजेत इत्यादिकर्तव्यत्वान्वितत्वेन व्युत्पत्तिसम्भवात्तदनन्वितत्वरूपसिद्धत्वाभावेन सिद्धे व्युत्त्पत्यभावरूपहेतुपुरस्कारेणाकर्तव्यत्वसाधनपूर्वपक्षस्यासङ्गतत्वापत्तेः। तादृशब्रह्मपदार्थरूपजीवविचारस्य कर्मविचारान्तर्गतेन तत्कर्तव्यतायाः सिद्धत्वेनाकर्तव्यत्वसाधनपूर्वपक्षानुदयप्रसङ्गाच्च। तथापि कर्मविचारसमाप्त्यनन्तरकालीनकर्तव्यत्वाभावस्तैः साध्यते। तत्र च हेतुः कार्यान्वितार्थविषयकत्वम्। ब्रह्मपदार्थभूतजीवविचारस्य कार्यान्वितार्थविषयकत्वात्कर्मविचारकर्तव्यत्वमेव न तु तत्समाप्त्यनन्तरकालीनकर्तव्यत्वमिति पूर्वपक्षाशयः। न त्वत्र हेत्वसिद्धिः, ब्रह्मविचारः कार्यान्वितार्थविषयकः कार्यानन्वितार्थाविषयकत्वे सति सविषयकत्वादित्यनुमानेन तत्सिद्धेः। न चात्र कार्यानन्वितार्थविषयकत्वरूपहेत्वसिद्धिः, वाक्यार्थविचारत्वरूपहेतुना तस्यापि साधनात्।

एवं प्राभाकरमतनिरासायात्र सिद्धे व्युत्पत्तिसमर्थनं क्रियते। अनेन कार्यान्वितस्यैव वाक्यार्थत्वमिति नियमो भग्नः। एवञ्च सिद्धपरवाक्यार्थविचारे कार्यानन्वितार्थाविषयकत्वरूपसाध्याभावाद्वाक्यार्थविचाररूपहेतुसत्त्वेन तृतीयानुमानं व्यभिचरितम्। अनेन द्वितीयानुमाने हेत्वसिद्धिः। तेन च प्रथमानुमानेऽसिद्धिः। अतो ब्रह्मविचारः कर्मविचारानन्तरकालीनकर्तव्यतावान् कर्मविचार हेतुकत्वात् इति फलितम्। अयञ्च हेतुः कर्मविशेष्यकाल्पास्थिरफलकत्वनिर्णयसहितब्रह्मविशेष्यकानन्तस्थिरफलकत्वप्रकारकापातप्रतीतिविषयकत्वरूपः। ब्रह्मणि निरुक्तापातप्रतीत्यभावेऽल्पास्थिरफले एव तृप्तिमान् स्यात्, कर्मण्यल्पास्थिरत्वनिर्णयाभावेन निर्वेद एवास्य न सिद्ध्येत्। अतो विशिष्टो हेतुः। अत्राप्यापातप्रतीतौ प्रामाण्यसम्भावनाभावे पुरुषो न प्रवर्तेत। अतः सम्भावितप्रामाण्यकापातप्रतिति र्हेतुः। अत्र हेतौ प्रामाण्यसम्भावनाविशिष्टत्वस्य विशेषणेऽसिद्धिमाशङ्क्य परिह्रियते। सिद्धवस्तुनि शब्दस्य बोधकत्वनिश्चयाभावे आपातप्रतीतिरूपहेतुगतविशेषणस्यासिद्धिः। तेन सम्भावितप्रामाण्यकापातप्रतीतिरूपविशेष्यस्य कर्मविशेष्यकाल्पास्थिरफलकत्वप्रकारकनिर्णयविशिष्टपूर्वाकापातप्रतीतिरूपविशिष्टहेतोरसिद्ध्या हेत्वसिद्धिः। सिद्धे व्युत्पत्तिसमर्थनेन असिद्धिपरिहारः क्रियते। यद्यपीदं मतं प्राभाकरमतं तस्यैव, सिद्धे व्युत्पत्त्याभावसमर्थनरूपत्वात्; प्राभाकरोपि सूत्रकारपश्चाद्भावी; अथापि सर्वज्ञत्वात्सूत्रकारस्य पश्चाद्भाविमतखण्डनं युज्यते। सम्भाव्यमानप्रतिपक्षनिरासोपि सम्भवति। चोदनालक्षणोऽर्थो धर्म इति वदतो जैमिने र्मतनिरासोप्यत्र शक्यवचनः। क्रियायां प्रवर्तकवचनस्यैव चोदनारूपत्वेन व्युत्पत्त्यभावस्य तेन सिद्धत्वात्। अतस्सिद्धवस्तुनि शब्दस्य बोधकत्वं नास्तीति वेदान्तवाक्यानारम्भणीयत्वं पूर्वपक्षीकृत्य बोधकत्वसाधनार्थं प्रवृत्तमाद्यमधिकरणम्। 'विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरं, प्रयोजनेन सहितं प्राञ्चेऽधिकरणं विदुः।' वेदवाक्यार्थविचारस्यैवात्र क्रियमाणत्वाद्वेदवाक्यमेव विषयः। पूर्वमीमांसायाः कर्मकाण्डो विषयः। उत्तरमीमांसाया वेदान्तो विषयः, तत्र विचारे क्रियमाणे पक्षद्वयसम्भवात् संशयः। स्वपक्षसाधकयुक्तीः पूर्वपक्षी प्रदर्शयति। सिद्धान्ती तु स्वपक्षकसाधकयुक्तीः। स्वस्वपक्षसाधनात्फलमपि सिध्यति। द्विकद्वयात्मकेऽस्मिन्काण्डेऽध्यायचतुष्टयम्। एकैकस्मिन्नप्यध्याये पादचतुष्टयम्। एकैकोपि पादोऽनेकपेटिकावान्। अत्राधिकरणचतुष्टयमेकपेटिका, शास्त्रारम्भ-

**तत्र पूर्वपक्षवादी मन्यते - वृद्धव्यवहारादान्यत्र शब्दस्य बोधकत्वशक्त्यवधारणासम्भवात्, व्यवहारस्य**

समर्थनरूपा। 'ईक्षतेर्नाशब्दम्' इत्यादिशास्त्रारम्भणमधिकरणचतुष्टयेन क्रियते। शास्त्रारम्भार्थत्वश्च शास्त्रविषयक-प्रेक्षावत्प्रवृत्ति हेतुभूतज्ञानसम्पादकत्वम्॥

ननु 'ईक्षते'रित्यादि शास्त्रप्रवृत्तिहेतुभूतज्ञानस्य चतुस्सुत्र्या सिद्धिरिव चतुस्सूत्रीप्रवृत्तिहेतुभूतज्ञानस्य केन सिद्धिः? आप्तोपदेशबलादिति चेत्तेनैव शास्त्रप्रवृत्तिहेतुभूतज्ञानस्य सिद्धिः स्यादिति चतुस्सूत्र्या वैयर्थ्यमिति चेन्न। चतुस्सूत्रीप्रवृत्ति र्ह्यल्पायाससाध्या। न तु शास्त्रप्रवृत्तिरिव बह्वायाससाध्या। अत आप्तोपदेशबलेन तत्प्रवृत्तिः सम्भवति। न तथा शास्त्र-प्रवृत्तिरिति विवेकः। क्रमेण ब्रह्मणि जिज्ञास्यत्वं जगत्कारणत्वं शास्त्रप्रमाणकत्वं पुरुषार्थत्वश्च प्रतिपाद्यते। तत्र शब्द-सामान्यस्य सिद्धे व्युत्पत्त्यभावात् सिद्धार्थतात्पर्यकत्वासम्भव इत्यनारम्भणीयत्वशङ्कायां सिद्धे व्युत्पत्तिसमर्थनपूर्वकं तत्तात्पर्यकत्वं स्थाप्यते। जगत्कारणत्वरूपलक्षणासम्भवप्रयुक्ततया ब्रह्मस्वरूपस्यासिद्ध्या श्रुते र्ब्रह्मतात्पर्यकत्वासम्भव इति शङ्कायां लक्षणत्वस्थापनेन तत्साधनमुपपन्नमिति स्थाप्यते। प्रमाणान्तरवेद्यत्वेन ब्रह्मणि वेदान्तानां न तात्पर्यमिति शङ्कायामवेद्यतास्थापनेन तत्तात्पर्यकत्वं स्थाप्यते। श्रुतित्वावच्छिन्नस्य सफले एवार्थे तात्पर्याद्ब्रह्मणश्च फलत्वाभावात्तत्र तात्पर्यासम्भव इति शङ्कायां पुरुषार्थत्वस्थापनेन तत्तात्पर्यकत्वमिति स्थाप्यते। एवं प्रकारचतुष्टयेनानारम्भणीयत्वपूर्वपक्षे प्रवृत्ते, अधिकरणचतुष्टयेनानारम्भमूलनिराकरणम्। तथा चोक्तं — 'व्युत्पत्त्यभावः प्रतिपत्तिदौस्थ्यमन्येन लभ्यत्वम् अथाफलत्वम्। एतानि वै सूत्रचतुष्टयेनानारम्भमूलानि निराकृतानि' इति॥

अत्रायं प्राभाकराभिमतपूर्वपक्षप्रकारः — लिङ्लोट्तव्यप्रत्ययासमभिव्याहृतानां सिद्धबोधकवाक्यानां बोधजनक-त्वमेव नास्ति। प्रयोजकवृद्धेन 'गामानय', 'गां नय', 'गां बधान' इत्यादि वाचिकव्यवहारे कृते गवानयनादिकार्ये कायिक-व्यवहारे प्रयोज्यवृद्धेन च कृते पार्श्वस्थस्य बालस्य व्युत्पित्सो र्गवानयनरूपं कार्यं गवानयकार्यताबुद्धिप्रयोज्यं गामानयेति वाक्यश्रवणसमनन्तरभावित्वादिति निश्चिनोति। 'गामानयति' इति प्रयोगे कार्यस्य कस्यचिदप्यकरणात् बालस्य व्युत्पत्ति र्न दृश्यते। अतः कार्यमेव शब्दार्थः। ततश्च विधिप्रत्ययस्थले बोधाद्विधिप्रत्ययाभावस्थले बोधानुदयाच्चान्वयव्यतिरेकाभ्यां लिङ्गादीनां कार्यबोधकत्वावगम इत्यन्येषां साक्षात्परम्परया कार्यान्वितबोधकत्वम्। अतस्सर्वं कार्यरमेव।

ननु व्याकरणोपमानादीनामष्टानां शक्तिग्राहकप्रमाणत्वात्कायिकवाचिकरूपव्यवहारस्यैव शक्तिग्राहकत्वकथनम-नुपपन्नम्। 'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च। वाक्यस्य शेषाद्विवृते र्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धा' इति हि श्रूयत इति चेत् — सत्यम्। वृद्धव्यवहारभिन्नानामन्येषां प्राथमिकव्युत्पत्तिग्राहकत्वाभावात्। अव्युत्पन्नस्य व्युत्पित्सो र्बालस्य व्याकरणादिकं हि न हि प्रथमव्युत्पत्तिं जनयति। अतो ब्रह्मणः सिद्धत्वेनाकार्यत्वात्पूर्वं कार्यं सत् पश्चान्निष्पन्नमित्यपि वक्तुमशक्यत्वात्कार्यान्वितत्वस्यासम्भवाच्च वेदान्तवाक्यं न सिद्धब्रह्मबोधकम्। वस्तुतः कार्यस्थलेपि प्रयोज्यवृद्धेन गवानयनादिकार्यनिष्पत्त्यनन्तरं गां नयतीत्युक्तेपि प्राथमिकव्युत्पत्ति र्न दृश्यते। एवं स्थिते, सर्वात्मना कार्यत्वदशान्वयानर्हभूतब्रह्मणि कथं व्युत्पत्तिः? न च वेदान्तश्रवणाद्ब्रह्मविषयकापातप्रतीते र्जायमानत्वात्कथं तदपलाप इति वाच्यम्। तस्याः प्रतीतेः प्रामाण्यसम्भावनाया एवाभावात्। यदा शब्दानां कार्यबोधकत्वनिश्चयः तदा सिद्धमात्रविषय-कापातप्रतीतेरप्रामाण्यमेवेति कथं तथाऽर्थनिश्चय इति। इमामेव प्राभाकरशङ्कामनुवदति — **तत्र पूर्वपक्षवादीति**।

प्राभाकरप्रदर्शितमुदाहरणमनूद्य खण्डयति **न चेति**। 'चैत्र, पुत्रस्ते जात' इति मैत्रेणोक्ते चैत्रस्य मुखविकासो जायते। तेन विकासलिङ्गेन चैत्रः पुत्रोत्पत्तिरूपप्रियविषयकज्ञानवानिति पार्श्वस्थो बालोऽनुमिनोति। अत एतद्वाक्य-समनन्तरभाविचैत्रगतमुखविकासादि लिङ्गेन एतद्वाक्यं पुत्रोत्पत्तिबोधकमिति निश्चिनोति। एवञ्च सिद्धपरवाक्यस्यापि

**च कार्यबुद्धिपूर्वकत्वेन कार्यार्थ एव शब्दस्य प्रामाण्यमिति कार्यरूप एव वेदार्थः। अतो न वेदान्ताः परिनिष्पन्ने परे ब्रह्मणि प्रमाणभावमनुभवितुमर्हन्ति।**

**न च पुत्रजन्मादिसिद्धवस्तुविषयवाक्येषु, हर्षहेतूनां कालत्रयवर्तिनामर्थानामानन्त्यात्सुलग्नसुखप्रसवादिहर्षहेत्वर्थान्तरोपनिपातसम्भावनया च, प्रियार्थप्रतिपत्तिनिमित्तमुखविकासादिलिङ्गेनार्थविशेषबुद्धिहेतुत्वनिश्चयः। नापि व्युत्पन्नेतरपदविभक्त्यर्थस्य पदान्तरार्थनिश्चयेन प्रकृत्यर्थनिश्चयेन वा शब्दस्य सिद्धवस्तुन्यभिधानशक्तिनिश्चयः; ज्ञातकार्याभिधायिपदसमुदायस्य तदंशविशेषनिश्चयरूपत्वात्तस्य। न च सर्पाद्भीतस्य, 'नायं सर्पो रज्जुरेषा' इति शब्दश्रवणसमनन्तरं भयनिवृत्तिदर्शनेन सर्पाभावबुद्धिहेतुत्वनिश्चयः; अत्रापि निश्चेष्टं, निर्विषम्, अचेतनमिदं वस्त्वित्याद्यर्थबोधेषु बहुषु भयनिवृत्तिहेतुषु सत्सु विशेषनिश्चयायोगात्।**

**कार्यबुद्धिप्रवृत्तिव्याप्तिबलेन शब्दस्य प्रवर्तकार्थावबोधित्वमवगतमिति सर्वपदानां कार्यपरत्वेन सर्वैः**

---

बोधकत्वं सम्भवतीति भाट्टाशयः। एतत्खण्डनं हर्षहेतूनां कालत्रयवर्तिनामित्यादिना प्रदर्श्यते। पुत्रस्ते जात इतीदं वाक्यं प्रियार्थप्रतिपत्तिहेतुः स्वश्रवणानन्तरभाविमुखविकासजनकत्वादिति प्रथममनुमाय ततः प्रियार्थप्रतिपत्तिहेतुत्वे सत्येतदन्याहेतुत्वादिति हेतुना पुत्रजननरूपार्थहेतुत्वं साधनीयम्। एवं कन्या ते गर्भिणी जाता इत्यादावपि। अत्रैतद्वाक्यस्य हर्षहेतुभूतार्थविषयकबोधजनकत्वेपि विशिष्य पुत्रोत्पत्तिरूपार्थविषयकबोधकत्वनिश्चयो न भवति। हर्षहेतुभूतानां पुत्रोत्पत्तिभिन्नानामपि कालत्रयवर्तिनामनन्तानां सम्भवेनैतन्मात्रबोधकत्वानिश्चयात्। न च तत्काले हेत्वन्ताराभवनिश्चयवतः पुत्रोत्पत्तिरूपहर्षहेतुविशेषनिश्चयः सम्भवतीति शङ्क्यम्। सुलग्नसुखप्रसवपित्राद्यनिष्टाभावभाविसमृद्ध्यादीनां हर्षहेतूनां बहूनां तत्कालसम्भावितानां सत्त्वेन विशिष्य पुत्रोत्पत्तिनिश्चयस्य निर्धारणासम्भवात्।

तार्किकप्रदर्शितं सिद्धे व्युत्पत्तिप्रकारं दूषयति — **नापीति**। नैयायिकानामयमाशयः — 'कः कूजति' इति पृष्टे 'पिकः कूजति' इति उत्तरम्। अत्र प्रश्नघटकपदानां पूर्वमेव शक्तिं गृहीतवतः उत्तरघटकपिकपदमात्रशक्तिग्रहशून्यस्य कूजन्तं पक्षिविशेषं पश्यतः पुरोवृत्तिपक्षिविशेषे शक्तिग्रहो जायते। एवं काष्ठकरणकपाकं पश्यतः काष्ठपदशक्तिज्ञानशून्यस्य काष्ठैः पचतीति वाक्यात्पुरोवृत्तिपाककरणे पदार्थशक्तिग्रहाद्बोधो जायते। पयसा वृक्षं सिञ्चतीत्यत्र पयश्शब्दस्य जले व्युत्पत्तिः। व्युत्पन्नेतरपदार्थस्य पुरुषस्य पदान्तरार्थनिश्चयोदाहरणमाद्यम्। द्वितीयं तृतीयञ्च व्युत्पन्नविभक्त्यर्थस्य पुंसः प्रकृत्यर्थनिश्चयोदाहरणम्। अत्र सिद्धपदसान्निध्याच्छक्तिग्रहः पदसामान्यशक्तिज्ञानशून्यस्य न भवति। कतिपयपदशक्तिज्ञानवत एव तु भवति। न हि कूजतिपदार्थज्ञानशून्यस्य पिकशब्वदश्रवणेन पिकपदस्य कोकिलार्थे ग्रहस्सम्भवति। अतः पदान्तरशक्तिग्रहवत एवेति वाच्यम्। पदान्तरशक्तिग्रहश्च वृद्धव्यवहारेणैव। वृद्धव्यवहारश्च कार्यार्थ एवेत्यस्मन्मतमेवागतम्। तथा च कूजितं श्रुणु सेचनं कुरु इत्यादिवाक्यात्पूर्वं कार्यान्विततया व्युत्पत्तिः। तच्छेषतयैव कार्यान्वितं कोकिलजलादि बुध्यत इति तार्किकसरणिरपि न युक्ताः।

अत्र विषये अद्वैतमतमपि दूषयति — **न चेति**। नायं सर्पः, रज्जुरेषा इति श्रवणानन्तरं भयनिवृत्तिदर्शनेन सिद्धपरवाक्यस्यापि बोधकत्वनिश्चयः सम्भवतीत्यद्वैतिमतम्। इदमपि न सयक्। अत्र निष्कम्पगात्रत्वलिङ्गेन हि भयाभावानुमितिः। तथा च सर्पभेदादिविषयकबोधजनकत्वग्रहो वक्तव्यः। तत्र च वाक्ये भयनिवृत्तिहेतुभूतबह्वर्थसम्भावनया सर्पाभावरूपविशेषनिश्चयो न सम्भवति। निर्विषं मृतमचेतनं वस्तु इत्याद्यर्थबोधजनकत्वस्यापि तद्वाक्ये सम्भवात्॥

**कार्यबुद्धीत्यादिना** वाचस्पतिपक्षनिरासः। तेषामयमाशयः - पदानां कार्यार्थपरत्वं सकलानुगतमेकं न शक्यवचनम्। कार्यरूपार्थाभिधायित्वरूपं वा कार्यान्वितस्वार्थाभिधायित्वं वा कारकान्वितस्वार्थाभिधायित्वं वा कार्यार्थपरत्वम्?

**पदैः कार्यस्यैव विशिष्टस्य प्रतिपादनान्नान्यान्वितस्वार्थमात्रे पदशक्तिनिश्चयः। इष्टसाधनताबुद्धिस्तु कार्यबुद्धिद्वारेण प्रवृत्तिहेतुः; न स्वरूपेण; अतीतानागतवर्तमानेष्टोपायबुद्धिषु प्रवृत्त्यनुपलब्धेः। इष्टोपायो हि - 'मत्प्रयत्नादृते न सिद्ध्यति ; अतो मत्कृतिसाध्य' इति बुद्धिर्यावन्न जायते, तावन्न प्रवर्तते।**

**अतः कार्यबुद्धिरेव प्रवृत्तिहेतुरिति प्रवर्तकस्यैव शब्दवाच्यतया कार्यस्यैव वेदवेद्यत्वात्, परिनिष्पन्नरूपब्रह्मप्राप्तिलक्षणानन्तस्थिरफलाप्रतिपत्तेः, 'अक्षय्यं ह वै चातुर्मास्ययाजिनस्सुकृतं भवति'** (आप. श्रौ.२.१.१) **इत्यादिभिः कर्मणामेव स्थिरफलत्वप्रतिपादनाच्च कर्मफलाल्पास्थिरत्वब्रह्मज्ञानफलानन्तस्थिरत्वज्ञानहेतुको ब्रह्मविचारारम्भो न युक्त इति।**

---

नाद्यः। घटमानयेत्यादौ घटादिपदस्य कार्याभिधायित्वाभावात्। न द्वितीयः। लिङादौ व्यभिचारात्। तेषां कार्याभिधेयत्वमेव। न तु तदन्वितस्वर्थाभिधायित्वम्। कार्ये स्वस्मिन् स्वान्वितत्वायोगात्। न तृतीयः। कारकपदेषु व्यभिचारात्। अतोऽन्यान्वितस्वार्थाभिधायित्वमेव पदानामनुगतं वक्तव्यमिति। इदमपि न युक्तम्। प्राथमिकव्युत्पत्तिर्हि कार्यैकविषयिणीति निश्चितम्। अतस्तद्विरोधेन पदानामन्यान्विताभिधायित्वमात्रं न युक्तम्। अननुगमपरिहारस्तु सर्वेषां पदानां विशिष्टकार्यांशाभिधायित्वस्वीकारेण। लिङादे र्विशेष्यांशे वृत्तिः, इतरेषाञ्च विशेषणांशे वृत्तिः। इत्थञ्च विशिष्टकार्यांशाभिधायित्वं सर्वानुगतम्। यत्र यत्र प्रवृत्तिः तत्र तत्र पूर्वं कार्यबुद्धिरिति व्याप्ति र्गामानयेत्यादौ दृष्टा। अतः प्रवर्तनाकार्याभिधायित्वं शब्दस्योपगन्तव्यम्। तेन च सर्वपदानां कार्यपरत्वम्। अतो विशिष्टकार्यांशाभिधायित्वमित्यनुगमादन्यान्वितस्वार्थाभिधायित्वमात्रे न शब्दशक्तिग्रहः। अतोऽन्यान्वितत्वं सिद्धवस्तुनोपि स्यादिति कार्यरूपार्थ एव व्युत्पत्तिरिति निर्बन्धस्यान्यथाकरणं न सम्भवति। पदानां कार्यार्थपरत्वं नाम कार्यान्विततार्थाभिधायित्वं कारकघटितार्थभिधायित्वं वा इदं लिङादौ घठे कारके च वर्तत इति।

अथ मण्डनमिश्रमतं निरस्यति - **इष्टसाधनताबुद्धिस्त्विति**। अयमाशयः - कार्यबुद्धेरेव प्रवर्तकत्वं न सम्भवति इष्टसाधनताबुद्धेरेव प्रवर्तकत्वात्। इदं मदिष्टसाधनमिति बुद्ध्यनुदये न कस्यापि प्रवृत्ति र्दृश्यते। अतस्सर्वपदानां कार्यपरत्वं न सम्भवतीति। अत्रोत्तरम्। इष्टसाधनमिदमिति ज्ञानानन्तरमपि पुरुषः प्रवर्तत इति निर्बन्धो नास्ति। इदं कार्यमिति कार्यत्वज्ञानानन्तरमेव। अत इष्टसाधनताबुद्धिः न स्वरूपेण प्रवर्तिका। अतीतानगतवर्तमानादिषु इष्टसाधनत्वज्ञाने सत्यपि प्रवृत्त्यदर्शनात्। अतीतस्य प्रवृत्त्या साधयितुमशक्यत्वात्। कालान्तरभाविनोपि प्रवृत्त्यविषयत्वात्। वर्तमानस्य सिद्धत्वात्तत्र प्रवृत्ति र्निष्फला। अपि चेष्टसाधनताबुद्धि र्न प्रवृत्तिव्याप्या। स्वेष्टसाधनस्य परेण साध्यत्वदशायां स्वप्रवृत्त्यभावात्। अतो वर्तमानाया इष्टसाधनताबुद्धेरप्रवर्तकत्वमेव। तस्मात्कार्यबुद्धिरेव प्रवृत्तिव्याप्या। अपि च यागादिकं कार्यमिति बुद्धिविशेषसत्त्वेति नैतन्मात्रं प्रवर्तकं स्वाभीष्टोपायभूतयागो मत्कृतिसाध्य इति ज्ञानसत्त्व एव प्रवर्तते इष्टोपायाभिसन्धिमान्। दरिद्रस्य यागकर्तष्यताबुद्धिसत्त्वेपि प्रवृत्त्यदर्शनात्। अतो मयैवाद्य साधयितुं शक्यमिति विशिष्टबुद्धिरूपाकार्यबुद्धिः प्रवृत्तिव्याप्या। अतः कार्यबुद्धेरेव प्रवर्तकत्वम्। **इष्टोपाय** इति। पुरुष इत्यध्याहार्यम्। मत्कृतिसाध्य इत्यत्रोपायपदमध्याहार्यम्। इष्टोपाय इत्यस्य न प्रवर्तत इत्यन्वयः। यद्वा इष्टश्चासावुपायश्चेति विग्रहः मत्कृतिसाध्यः इत्यत्रान्वेति। न तावत्प्रवर्तत इत्यत्र पुरुष इत्यध्याहारः॥

**अक्षय्यं ह वै** इति। कर्तव्यत्वसाध्यकहेतौ सम्भावितप्रामाण्यकापातप्रतीतिविषयत्वरूपविशेष्यासिद्धिः पूर्वमुक्ता। अत्र कर्मणोऽल्पास्थिरफलकत्वनिर्णयरूपविशेषणासिद्धिरुच्यते। अनेन वाक्येन कर्मण्यक्षय्यफलत्वं ह्युक्तम्। नन्वनुग्राहकतर्कबलेनाक्षय्यफलकत्वप्रतीतेरप्रामाण्यसम्भवना स्यादिति चेद्ब्रह्मस्थिरफलत्वापातप्रतीतेरपि तर्कबलेन सम्भावित-

**अत्राभिधीयते - निखिललोकविदितशब्दार्थसम्बन्धावधारणप्रकारमपनुद्य, सर्वशब्दानामलौकिकैकार्थावबोधित्वावधारणं प्रामाणिका न बहुमन्वते। एवं किल बालाः शब्दार्थसम्बन्धमवधारयन्ति - मातापितृप्रभृतिभिः अम्बातातमातुलादीन् शशिपशुनरमृगपशिसर्पादींश्च, 'एनमवेहि, इमश्चावधारय' इत्यभिप्रायेण, अङ्गुल्या निर्दिश्य निर्दिश्य तैस्तैश्शब्दैस्तेषुतेष्वर्थेषु बहुशश्शिक्षितातश्शनैश्शनैस्तैस्तैरेव शब्दैस्तेषु तेष्वर्थेषु स्वात्मनां बुद्ध्युत्पत्तिं दृष्ट्वा शब्दार्थयोस्सम्बन्धान्तरादर्शनात्संकेतयितृपुरुषाज्ञानाच्च तेष्वर्थेषु तेषां शब्दानां प्रयोगो बोधकत्वनिबन्धन इति निश्चिन्वन्ति। पुनश्च व्युत्पन्नेतरशब्देषु, 'अस्य शब्दस्यायमर्थ' इति पूर्ववृद्धैः शिक्षितास्सर्वशब्दानामर्थमवगम्य परप्रत्यायनाय तत्तदर्थावबोधिवाक्यजातं प्रयुञ्जते।**

---

प्रामाण्यकत्वनिषेधापत्तेः। सिद्धे व्युत्पत्त्यभावस्यैतावता प्रतिपादितत्वादुपनिषदां कर्मविधिशेषत्वमेवेति अतिरिक्तब्रह्मासिद्ध्या हेतोरेवासिद्धेः। एतेन पदानां कार्यार्थपरतयैव बोधकत्वाभ्युपगमेपि न ब्रह्मासिद्धिः। मन्त्रार्थवादेषु उपासनविधिशेषभूतेष्वनन्तस्थिरफलप्रतीत्या ब्रह्मविचारारम्भसम्भवादिति परास्तम्। अक्षय्यमित्यादिप्रतिपन्नस्य कर्मणः स्थिरफलत्वप्रतीतेरिवास्या अपि प्रामाण्यसम्भावनाभावात्। अतो हेतौ विशेष्यस्य विशेषणस्य सर्वस्याप्यसिद्ध्या विचाररूपब्रह्मजिज्ञासा अनारम्भणीयैवेति पूर्वपक्षः।

**निखिललोकेति** - कार्यार्थ एव व्युत्पत्तिरिति निर्बन्धकरणं न युक्तम्। व्याकरणोपमानादीनामष्टानां शक्तिग्राहकत्वे प्रमाणसिद्धेपि वृद्धव्यवहारतः प्राथमिकव्युत्पत्तिरिति भवद्भिरिष्यते। तथाऽपि सिद्धपरेपि प्राथमिकव्युत्पत्ति र्बालानां दृश्यते। प्रयोज्यप्रयोजकवृद्धगतकायिकवाचिकव्यवहारात् यस्य व्युत्पित्सोः कार्यपरवाक्ये व्युत्पत्तिरित्युच्यते तस्यैव बल्यावस्थायां ततोऽपि पूर्वं व्युत्पत्ति र्न कार्यपरशब्दे। सिद्धे न व्युत्पत्ति र्भवतीति वदन् भवानपि बाल्ये मातापितृशिक्षितस्सन् सिद्धपरवाक्ये व्युत्पत्तिमान्। अत्र भवानेव निदर्शनम्। अम्बादिशब्दार्थव्युत्पत्तिर्भवतोपि पूर्वं जाता। अम्बादिशब्दः सप्रतियोगिकशब्दः। कार्ये तदन्विते वा व्युत्पत्तिरिति वदतां भवताम् अम्बादिशब्दा न कार्यवाचकाः। लिङ्लोट्तव्यप्रत्ययभिन्नत्वात्। तदन्वितशब्दा इत्यपि न भवन्ति। ससम्बन्धिक शब्दत्वेपि शब्दतोऽन्वयस्यानवबोधेपि तैः शाब्दबोधसम्भवात्। शशिपश्वादिपदेष्वन्वयप्रसक्तिरपि नास्ति। यत्र शब्दे प्रसक्तिस्तत्राप्यन्वयो न बुध्यते, बोधस्तु जायते। अतः कार्ये तदन्वित एव शकिग्रह इत्यनुपपन्नम्। न चास्य शब्दस्यायमर्थ इति बुध्यस्व इति कार्यपरत्वं सर्वत्रापि वक्तुं शक्यमिति वाच्यम्। कायिकवाचिकोभयव्यवहारादेव हि प्रथमव्युत्पत्ति र्व्युत्पित्सोरिति भवन्मतम्। यत्र प्रयोजकप्रयोज्यवृद्धौ तत्रैव तत्सम्भवति। बुध्यस्वेत्यध्याहारे न प्रयोज्यवृद्धगतः कश्चित्कायिकव्यापारो दृश्यते। येन तत्रापि व्यवहारतः शक्तिग्रहः सुवचः स्यात्। मातापित्रादिभिः शिक्षणस्थले तर्जन्या अङ्गुलिनिर्देशः शब्दोच्चरणश्रवणादि स्वमुखसमीपनयनपूर्वकं मातापित्राद्यर्थाभिमुखीकारेण ज्ञापनम्। एवं बोधकं शब्दम् इमं बोध्यमर्थश्चावेहि इति बहुशः शिक्षिता बाला अङ्गुलिनिर्देशशब्दप्रयोगयोः साहचर्यं नियमदर्शनेन सञ्जातवासनावन्तः स्वयमेव तच्छब्दान् प्रयोक्तुंसमर्था भवन्ति। अर्थमात्रदर्शनेन शब्दं स्मरन्ति। शब्दमात्रश्रवणेनार्थश्च स्मरन्ति। अतः शब्दार्थयो र्बोध्यबोधकभावसम्बन्धं ज्ञात्वा स्वयमपि प्रयुङ्क्ते बालः।

नन्वङ्गुलिनिर्देशपूर्वकं तातादिशब्दप्रयोगात्ततशब्दस्याङ्गुलिनिर्देशार्थकत्वमङ्गुलिनिर्देशविषयत्वविशिष्टतातार्थकत्वं वा कुतो न स्यादिति चेत् - संसारस्यानादित्वेनोद्बुद्धसंस्कारवशादङ्गुलिनिर्देशानां तत्तदर्थोपदेशाभिप्रायपूर्वकत्वमेवेति ज्ञानं बालानां सम्भवतीत्यदोषात्। क्वचिदङ्गुलिनिर्दिशमन्तरापि तातादिशब्दप्रयोगात् सहोपदेशजनितसंस्कारसामर्थ्यात् तातद्यर्थप्रतीते र्जायमानत्वाच्च। तातादिशब्दप्रयोगे खल्वस्माकमेतदर्थप्रतीति र्जायते। इयश्च शब्दार्थयोः किञ्चित्सम्बन्धनि

**प्रकारान्तरेणापि शब्दार्थसम्बन्धावधारणं सुशकम् - केनचित्पुरुषेण हस्तचेष्टादिना, 'पिता ते सुखमास्ते इति देवदत्ताय ज्ञापय' इति प्रेषितः कश्चित्तज्ज्ञापने प्रवृत्तः, 'पिता ते सुखमास्ते' इति शब्दं प्रयुक्ते। पार्श्वस्थोऽन्यो व्युत्पित्सुर्मूकवच्चेष्टाविशेषज्ञस्तज्ज्ञापने प्रवृत्तिमिमं ज्ञात्वाऽनुगतस्तज्ज्ञापनाय प्रयुक्तमिमं शब्दं श्रुत्वा, 'अयं शब्दस्तदर्थबुद्धिहेतुः' इति निश्चिनोति - इति, कार्यार्थ एव व्युत्पत्तिरिति निर्बन्धो निर्निबन्धनः।**

---

बन्धना। कार्यकारणभावसम्योगादिसम्बन्धान्तरञ्च न पश्यामः। सङ्केतहेतुभूतपुरुषमपि न द्रक्ष्याम इति बोध्यबोधकभावसम्बन्ध एवेति बाला निश्चिन्वन्ति। अतः शिशोः तातशब्दस्य तातार्थकत्वमेव, न तु निर्देशाद्यर्थकत्वमित्यैदमर्थ्यबोधः प्राकृतसंस्कारवशाज्जायते।। तदुक्तं सारावल्यां - 'संसारेऽनादिसिद्धे' इत्यादि। वस्तूनां पुनःपुनरनुभवात् संस्काराः सञ्चिता भवन्ति। स्मृतिजनकसंस्कारा अपि उद्बुद्धा भवन्ति। संस्कारसत्त्वेप्युद्बोधकाभावे स्मृत्यसम्भवात्। अस्मत्प्रयत्नाभावेपि 'सदृशादृष्टचिन्ताद्या' इत्युक्ता उद्बोधकाः स्वयमेव जायन्ते। तत्र कारणं पूर्वपूर्वकारणप्रवाहः। क्षीरदर्शने पूर्वानुभूतक्षीरसंस्कारोद्बोधात्तत्स्मरणं तद्गतेष्टसाधनताकारग्रहणञ्च। ततः पेयत्वग्रहणम्। प्रकृतजन्मानुभवाधीनस्मृतितो निर्वाहः क्वचित्। क्वचिच्च पूर्वजन्माधीनस्मरणात्। यथा स्तनन्धयस्य स्तन्यपानादिप्रवृत्तौ। एवमेव बालानां प्रथमव्युत्पत्तावपि। अङ्गुलिनिर्देशशब्दप्रयोगसाहचर्यनियमदर्शनस्य पूर्वजन्मसिद्धव्याप्तिस्मरणादनुमितिनिर्वाहकत्वम्। तथा अङ्गुलिनिर्देशरूपशिक्षकव्यापारस्यापि वस्तुप्रदर्शनार्थत्वमेव, न तु वस्तुवाचकत्वमित्यपि पूर्वजन्मानुभूतस्मृतिबलाद्भवति।

यथा शिशोः शिक्षकशिक्षाविशेषादाद्यव्युत्पत्तिस्तथैव गजादीनामपि गजपालकशिक्षावशात् व्युत्पत्तिः। ते हि गजादीन् शयनोत्थानवस्तुग्रहणादिसूचकशिक्षाविशेषैः शिक्षयन्ति। शिक्षायाः साफल्यमपि दृश्यते। अत्र गजपालकादिनोक्तस्याव्यक्तस्य शब्दस्य तदर्थरूपस्य च सम्बन्धो गजैः कथं ग्रहणम्। ज्ञानाभावे कथं शिक्षकाभिप्रायेण गजादीनामाचरणम्। जन्मान्तरवासनैव तत्र कार्यं करोतीति वक्तव्यम्। एवं शुकशुनकवानरादिष्वपि द्रष्टव्यम्। अतो जन्मान्तरवासनाबलादेव अङ्गुलिनिर्देशशब्दप्रयोगनियमदर्शनेन ताताद्यार्थबोधकत्वमेव तातमातुलादिशब्दानामिति निश्चयो जायते। अत्र कार्ये एव व्युत्पत्तिरिति न। तत्रापि शिशुशिक्षणप्रक्रियैव सर्वव्युत्पत्तौ प्रथमं मूलम्।

अतः शब्दार्थव्युत्पत्तिः कार्य इव सिद्धेपि। व्युत्पित्सुप्रयोज्यप्रयोजकवृद्धरूपपुरुषत्रयसमावेश इव क्वचित्पुरुषचतुष्टयसमावेशेनापि। क्वचित् व्युत्पाद्यव्युत्पादकपुरुषद्वयमात्रसमावेशेपि। अन्वितसमवाक्यार्थे व्युत्पत्तिरिव पदार्थमात्रेपि। ससम्बन्धिकस्थल इवाप्रतिसम्बन्धिकस्थलेपि। आधोरणादिशिक्षकैः शिक्षणस्थलेपि। मूकादिषु चेष्टास्थलेपि। एवं बहुमुखमाद्यां व्युत्पत्तिं सूत्रकारः अवयन् ब्रह्मणो जिज्ञास्यत्वं प्राह। उक्तञ्च "सिद्धे व्युत्पत्तिमाद्यां बहुमुखमवयन् ब्रह्म जिज्ञास्यमाह" इति सारावल्याम्।

शब्दनिरपेक्षं चेष्टादिनापि व्युत्पत्ति र्भवतीति दर्शयति - **प्रकारान्तरेणापीति**। अत्र व्युत्पित्सुव्यतिरेकेण पुरुषत्रयापेक्षा। श्रीभाष्यकारो मूकाय चेष्टादिना तत्त्वार्थमुपदिदेश इत्यैतिह्यम्। आधुनिकचित्रदर्शनेपि इदं ज्ञातुं शक्यम्। काचित्तरुणी चेष्टादिभिः अर्थं प्रदर्शयति। इङ्गितज्ञाश्च कोसला इति च प्रसिद्धम्।।

अपि च 'पुत्रस्ते जात' इत्यादौ याऽनुपपत्तिस्त्वयाऽऽविष्कृता सा 'गामानय' इत्यादावप्यस्तीति न वैषम्यम्। कालत्रयवर्तिहर्षहेतुबाहुल्यसम्भावनाया इव 'गामानये'त्यादावपि गवि समानीतायामपि 'गां सन्दर्शय' 'गां पुरतः स्थापय' 'गां देहि' इत्याद्यनेकार्थसम्भवाद्गवानयरूपार्थैकव्युत्पत्ते दुर्वचत्वात्। 'गामानये'ति वाक्यश्रवणानन्तरं समानयनात्पूर्वम् उत्थानोपरिवासाच्छादनदण्डग्रहणयादृच्छिकपुरुषान्तरसम्भाषणादिसत्त्वेनार्थनिश्चयासम्भवात्। उक्तार्थेष्वन्यतमार्थकत्वशङ्काया वारणायोगात्। पश्चाद्गवानयनस्य स्नेहकारितत्वमेवेति शङ्कायाऽवारणात्। अन्वयव्यतिरेकाभ्यामर्थविशेष-

**अतो वेदान्ताः परिनिष्पन्नं परं ब्रह्म, तदुपासनं चापरिमितफलं बोधयन्तीति तन्निर्णयफलो ब्रह्मविचारः कर्तव्यः ।**

**कार्यार्थत्वेऽपि वेदस्य ब्रह्मविचारः कर्तव्य एव । कथम् ?** (बृ.४.४.५.५.) **'आत्मा वा अरे द्रष्टव्यःश्रोतव्यो मन्तव्यो निदिध्यासितव्यः'**, (छा.८.७.१.) **'सोऽन्वेष्टव्यस्स विजिज्ञासितव्यः'**, (बृ.६,४.२१.) **विज्ञाय प्रज्ञां कुर्वीत'**, (छा.८.१.१.) **'दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्'**, (तै-नारा-१०.२३.) **'तत्रापि दहं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम्' इत्यादिभिः प्रतिपन्नोपासनविषयकार्याधिकृतफलत्वेन,** (तै-आन.१.१.) **'ब्रह्मविदाप्नोति परम्' इत्यादिभिर्ब्रह्मप्राप्तिश्श्रूयत इति ब्रह्मस्वरूपतद्विशेषणानाम्, दुःखासम्भिन्नदेशविशेषरूपस्वर्गादिवत्, रात्रिसत्रप्रतिष्ठावत्, अपगोरणशतयातनासाध्यसाधनभाववच्च, कार्योपयोगितयैव सिद्धेः ।**

---

निश्चयस्य पुत्रस्तेजात इत्यादावपि सम्भवेन सुखप्रसवसुलग्नप्रसवाद्यर्थान्तरवारणोपपत्तेः अतो लोकानुभवसिद्धव्युत्पत्तिमपलप्य कार्यरूपार्थे एव शब्दस्य वाचकत्वमिति निश्चयो निर्निबन्धनः ॥

**कार्यार्थत्वेऽपीति** । सिद्धे व्युत्पत्तिसमर्थनाद्वेदान्तवाक्यानां प्रामाण्यं सुस्थमिति ब्रह्मविचारस्यारम्भणीयत्वं सिद्धमेव । अथापि कर्मकाण्डोक्तकर्मकर्तृजीवस्वरूपबोधनार्थमेव वेदान्तवाक्यानां प्रामाण्याङ्गीकारेण तच्छेषत्वादुपनिषदो नातिरिक्तब्रह्मप्रतिपादकत्वमिति वदतां प्राभाकारणामाशयं खण्डयितुमयमारम्भः । कर्मकाण्डशेषत्वं विनैव पृथक् प्रामाण्यमुपनिषदाम् । यजेत इतवदत्रापि 'उपासीत' इति श्रवणेन त्वदुपपादितप्रक्रियैव कार्योपयोगितया स्वर्गादिवद्ब्रह्मप्राप्तेः सिद्धेः । अतो विलक्षणब्रह्मप्रतिपादकत्वम् । यजतिधात्वर्थयागावच्छिन्नकृतिसाध्यापूर्वं, तदधिकृतपुरुषस्य स्वर्गप्राप्तिश्च । तथैवात्राप्युपासनावच्छिन्नकृतिसाध्यमपूर्वं विध्यर्थभूतनियोगापरपर्यायं तदधिकृतपुरुषस्य प्राप्तिश्चेति समानम् । **दहरः** = अल्पः । आ - समन्तात्काशत इत्याकाशः परमात्मा । **अन्तः** यत्कल्याणगुणजातम् । **विशोकः** = परमात्मा । दहरं - गगनमिति तद्विशेषणम् । उपासनरूपविधेयार्थविशेषणतया ब्रह्मतद्गुणानां सिद्धिरुक्ता । असतोप्युपास्यमानत्वात् ब्रह्मतद्गुणानां वास्तवत्वं न स्यादिति शङ्कापरिहृत्यै **स्वर्गादिवत्** इत्युक्तम् । स्वर्गकामो यजेत इत्यत्र वाक्यशेषोक्तस्य 'यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतश्च तत्सुखं स्वःपदास्मद'मिति फलत्वेन प्रतिपन्नस्य स्वर्गस्य यथा सिद्धिः तथैव विजिज्ञासितव्य इति प्रतिपन्नोपासनविधिशेषभूताया 'ब्रह्मविदाप्नोति परम्' इत्युक्तब्रह्मप्राप्तेः सिद्धेः ।

दुःखासम्भिन्नत्वं = दुःखामिश्रत्वम् । मध्ये दुःखसम्भावनानर्हमिति यावत् । विधिवाक्ये स्वर्गस्य प्रतीतत्वेपि तत्स्वरूपं कीदृशमित्यर्थवादे बोध्यते । अतः स्वर्गविशेषभूतस्य दुःखासम्भिन्नत्वादे र्लाभः । **रात्रिसत्रेति** । अत्रार्थवादतः फलस्यैव लाभः । पूर्वत्र फलविशेषलाभः । 'विश्वजिता यजेत' इति विश्वजिद्यागो विहितः । फलन्तु न श्रुतम् । काम्यकर्मसु फलाश्रवणेपि 'सः स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वात्' इति स्वर्गस्य फलत्वं वक्तव्यम् । अतः स्वर्गकामपदमध्याहार्यम् । एवमेव 'तिस्रो रात्रीरुपयन्ती'ति विहिते रात्रिसत्रयागेपि स्वर्गस्य प्राप्तौ सत्यां 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' इत्यर्थवादे प्रतिष्ठाया उक्तत्वात्तस्या एव फलत्वमभ्युपगम्य स्वर्गकामपदाध्याहारो न कार्य इति रात्रिसत्राधिकरणे निर्णीतम् । 'प्रतिष्ठाकामस्तिस्रो रात्रीरुपेयात्' इति विधिः कल्प्यते । अतोऽर्थवादोक्तफले तात्पर्यं स्वीकुर्मः । एवमेवात्रापि । **अपगोरणेति** । विध्यर्थवादगतफलस्य स्वीकार इव निषेधार्थवादगतस्याप्यर्थस्याङ्गीकार इष्यत इत्युदाहरणान्तरम् । 'तस्मात् ब्राह्मणाय नाषगुरेत' इति निषेधवाक्यम् । अत्र ब्राह्मणहननसङ्कल्पो निषिध्यते । तत्रायमर्थवादः - 'यो ब्राह्मणमपगुरुते तं शतेन यातयेत्' इति ।

**'गामानय' इत्यदिष्वपि वाक्येषु न कार्यार्थे व्युत्पत्तिः ; भवदभिमतकार्यस्य दुर्निरूपत्वात्। कृतिभाव-भाविकृत्युद्देश्यं हि भवतः कार्यम्। कृत्युद्देश्यत्वञ्च कृतिकर्मत्वम्। कृतिकर्मत्वञ्च कृत्या प्राप्तुमिष्टतमत्वम्। इष्ट-तमञ्च सुखम्, वर्तमानदुःखस्य तन्निवृत्तिर्वा। तत्रेष्टसुखादिना पुरुषेण स्वप्रयत्नादृते यदि तदसिद्धिः प्रतीता, ततः प्रयत्नेच्छुः प्रवर्तते पुरुष इति न क्वचिदपीच्छाविषयस्य कृत्यधीनसिद्धित्वमन्तरेण कृत्युद्देश्यत्वं नाम किञ्चिदप्युपलक्ष्यते। इच्छाविषयस्य प्रेरकत्वं च प्रयत्नाधीनसिद्धित्वमेव; तत एव प्रवृत्तेः।**

**न च पुरुषानुकूलत्वं कृत्युद्देश्यत्वम्; यतः सुखमेव पुरुषानुकूलम्। न च दुःखनिवृत्तेः पुरुषानुकूलत्वम्; 'पुरुषानुकूलं सुखम्, तत्प्रतिकूलं दुःखम्' इति हि सुखदुःखयोस्स्वरूपविवेकः। दुःखस्य प्रतिकूलतया,**

---

अस्यायमर्थः - यातना नाम यमकर्तृकबाधा। ब्राह्मणहननसङ्कल्पकारिणं यमः शतं वात्सरान् बाधामनुभावयेदिति। विप्रताडनसङ्कल्पेन हस्तोत्क्षेपकारिणमिति वाऽर्थः। अत्रार्थवादोक्तार्थास्वीकारे निषेधान्न कोपि निवर्तेते। तस्मान्निषेध्य-स्यापगोरणस्य तत्फलस्य शतवत्सरबाधारूपस्य च कार्यकारणभावः स्वीकर्तव्यः। तेन यमलोकादिकञ्च फलं स्वीकृतं पूर्वत्र स्वर्गलोकसिद्धिः। अत्र यमलोकसिद्धिः। दार्ष्टान्तिके ब्रह्मलोकसिद्धिः। 'असन्नेव स भवति असद्ब्रह्मेति वेद चेत्' इति ब्रह्माज्ञानवतोऽसत्त्वमुक्तम्। एवं 'मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति' इत्यब्रह्मात्मकवस्तुदर्शिनो मृत्युलोक-प्राप्तिश्चोक्ता। अतस्तयोः कार्यकारणभावः सिद्धः। योऽपगोरणकारी स यमबाधाननुभवतीतिवत्, यो ब्रह्म न जानाति, यश्चाब्रह्मात्मकं जगत्पश्यति तावुभौ असत्त्वमृत्युलोकप्राप्तिगन्तारौ भवत इति निषेधसामर्थ्याद्ब्रह्मात्मकत्वज्ञानवतो मृत्युलोकविरोधिब्रह्मलोकप्राप्तिरित्युक्तं भवति। अतो मोक्षबोधकवाक्यानां तद्विरोधिबोधकानां फलपराणाञ्च वाक्यानामर्थ-वत्त्वम्। अत्र श्रीभाष्यदर्पणसूक्तिरप्यनुसन्धेया - अपगोरणोदाहरणेनेदमपि सूचितं - दर्शपूर्णमासप्रकरणगतेऽप्यस्मिन्वाक्ये क्रत्वर्थत्वत्यागेनार्थवादबलात्पुरुषार्थतया प्रकरणभङ्ग इष्यते यदि, कथमुपनिषद्रूपभिन्नप्रकरणगतार्थवादार्थं परित्यज्य कर्मविधिशेषत्वेन सर्वनयनं युज्यते? कर्मकाण्डान्ते ईशोपनिषदिव कर्मकाण्डमध्य एव यदि ब्रह्मप्राप्तितदुपायपरार्थवादाः स्युः तदाप्यपगोरणादिन्यायेन प्रकरणं भित्वा स्वातन्त्र्यं स्वीकार्यं, किमुतेदानीमिति॥

एवं सिद्धे व्युत्पत्तिस्समर्थिता। अथ कार्यवाक्यार्थवादिप्राभाकरमते तन्मतरीत्यापि कार्ये प्राथमिकव्युत्पत्तिर्न सम्भवतीत्याह - **गामानयेत्यादिवाक्येष्वपीति**। अयमाशयः - भवन्मतेऽपूर्वमेव कार्यम्। इत्थञ्चापूर्वकार्यान्विते पदानां व्युत्पत्तिरिति वक्तव्यम्। इदञ्चायुक्तम्। अपूर्वरूपकार्यवाचकपदाभावात्। न च स्वर्गसाधनत्वेनावगतस्य यागादेरा-शुतरविनाशित्वादव्यवहितपूर्ववृत्तित्वघटितस्वर्गसाधनत्वमनुपपन्नमिति अपूर्वस्याङ्गीकरणमिति वाच्यं तद्वाचकपदा-भावेन तदसिद्धेः। स्वर्गकामो यजेतेत्यादौ स्वर्गरूपेष्टसाधनत्वेन वा स्वर्गकामकृतिसाध्यत्वेन वा याग एव प्रतिपन्नः। न त्वपूर्वरूपकार्यम्। लौकिकवाक्ये चापूर्वस्य बोधो नैव भवद्भिरप्यभ्युपेयते। अतोऽपूर्वरूपकार्यान्विते न शक्तिग्रहस्सुवच इति। इत्यादीत्यत्रादिपदेन वैदिकवाक्यं गृह्यते। **कृतिभाविभावि**। कृतिः = आन्तरप्रयत्नः। तत्सद्भावानन्तरभावीत्यर्थः। वर्तमानदुःखस्येति बहुव्रीहिः। तन्निवृत्तिरित्यत्र तच्छब्दो दुःखमात्रपरामर्शी। इष्टसुखादिनेत्यत्रादिशब्दो दुःखनिवृत्तिपरः। कृत्युद्देश्यत्वस्य कृतिकर्मत्वरूपत्वात्कृतिकर्मत्वस्य चेष्टतमत्वरूपत्वेन तस्य च सुखतन्निवृत्तिरूपत्वमेवेति कृत्युद्देश्यत्वं नापूर्वरूपकार्यस्येति भावः। अत्र कृत्युद्देश्यत्वं कृति प्रधानत्वम्। तच्च किंरूपमिति विचार्यते। कृतिकर्मत्वं कृतिमत्पुरुषा-नुकूलत्वं कृतिशेषित्वं कृतिप्रयोजनत्वं वा कृत्पुद्देश्यत्वमिति विकल्प्य परिहारोऽत्रोच्यते॥

अत्रैवं प्राभाकरणामाशयः - स्वर्गकामो यजेतेत्यत्र नेष्टसाधनत्वं लिङर्थः। तथा सति स्वर्गकामपदोपस्थापित-स्वर्गस्येष्टांशेऽभेदेनान्वयं स्वीकृत्य स्वर्गसाधनभूतयागानुकूलकृतिमान्स्वर्गकाम इति बोधो वर्णनीयः। 'विश्वजिता यजेत'

**तन्निवृत्तिरिष्टा भवति; नानुकूलतया। अनुकूलप्रतिकूलान्वयविरहे स्वरूपेणावस्थितिर्हि दुःखनिवृत्तिः। अतस्सुखव्यतिरिक्तस्य क्रियादेरनुकूलत्वं न सम्भवति। न सुखार्थतया तस्याप्यनुकूलत्वम्; दुःखात्मकत्वात्तस्य। सुखार्थतयाऽपि तदुपादानेच्छामात्रमेव भवति।**

इत्यादौ स्वर्गकामपदाभावेपि तदध्याहारेण बोधः। अयश्चानुपपन्नः। आशुतरविनाशित्वेन यागस्य स्वर्गसाधनत्वाभावात्, तस्याव्यवहितपूर्ववृत्तित्वाभावात्। न च स्वजन्यापूर्ववत्तासम्बन्धेनाव्यवहितपूर्ववर्तित्वं सम्भवतीति न वाच्यम्। अपूर्वस्य पूर्वमुपस्थित्यभावात्। कृतिसाध्यत्वमपि न लिङादेरर्थः। तथा सति स्वर्गकामपदार्थस्य लिङर्थैकदेशे कृतावन्वयमभ्युपगम्य स्वर्गकामकृतिसाध्ययागानुकूलकृतिमान्स्वर्गकाम इति बोधः स्वीकार्यः। अयमप्यनुपपन्नः। यागस्य स्वर्गकामकृतिसाध्यत्वासम्भवात्। यागस्य स्वर्गसाधनत्वे सिद्धे हीदं सम्भवति। आशुनाशिनो यागस्य स्वर्गं प्रति साधनत्वासम्भवात्। वह्नेः सेचनप्रयोजकत्वसम्भवे हि वह्निना सिञ्चतीति शक्यवचनम्। अतः कृतिसाध्यत्वरूपकार्यत्वावच्छिन्ने लिङः शक्तिः तदेकदेशकृतौ यागस्य विषयतयाऽन्वेति। यागविषयिणी कृतिः यागविषयकं कार्यमिति कार्यत्वेनापूर्वावगाही प्राथमिकबोधः। अनन्तरं यागविषयकं कार्यं स्वर्गसाधनमिति पश्चाद्बोधः। प्राभाकारमते पदानुपस्थितस्याप्यध्याहारेण स्वर्गसाधनत्वबोध इष्यते। अनन्तरं स्वर्गसाधनं यागविषयकं कार्यं स्वर्गकामनियोज्यकमिति बोधः। तदनन्तरमेतादृशं कार्यं स्वर्गकामकृतिसाध्यमिति बोधः। अत्र च यागे कृतिसाध्यत्वं विनाऽपूर्वकृतिसाध्यत्वं न सम्भवतीत्यनुपपत्तिज्ञानसहकारेण 'स्वर्गसाधनं स्वर्गकामनियोज्यको यागः स्वर्गकामकृतिसाध्य' इतिः बोधः स्वीक्रियते। अयं यागविशेष्यको यागे प्रवर्तकः।

न च यागविषयककार्यत्वस्य यागविषयककृतिजन्यत्वरूपत्वादस्य यागस्वर्गोभयसाधारणत्वात्कार्यत्वेन रूपेणापूर्वस्यैव बोधनमपि न सम्भवति। यागविषयकं कार्यमिति प्राथमिकबोधे कार्यत्वेनापूर्वस्य भानाभावादिति वाच्यम्। कार्यत्वस्य कृतिसाध्यत्वे सति कृत्युद्देश्यत्वरूपत्वात्। न केवलं कृतिसाध्यत्वामात्रं तत्। स्वर्गे कृति साध्यत्वं नास्ति, यागे कृत्युद्देश्यत्वं नास्तीति वारणसम्भवात्। 'कृतिसाध्यं प्रधानं यत् तत्कार्यमभिधीयत' इति प्रकरणशालिकायामुक्तम्। प्रधानं = कृत्युद्देश्यमित्यर्थः। कृत्युदेश्यत्वञ्च कृत्या प्रामुमिष्टतमत्वरूपकृतिकर्मत्वम्। अपूर्वप्राप्तीच्छया यागानुष्ठानादुक्तयागकृतिकर्मत्वम् अपूर्वे। अथवा प्रेरकत्वं कृत्युद्देश्यत्वम्। तच्च कृतिजनकेच्छाजनकेच्छविषयत्वरूपम्। प्रथमं स्वर्गेच्छा। तथा तज्जनकापूर्वेच्छा, तथा च यागेच्छा, ततो यागकृतिः। अत एतादृशं प्रेरकत्वमपूर्वे उपपन्नम्। अथवाऽनुकूलत्वमेव कृत्युद्देश्यत्वम्। अनेकश्रमसाध्यक्रियारूपयागेऽनुकूलत्वासम्भवेऽप्यपूर्वे तत्सम्भवति। अतो निरूक्तकार्यत्वं स्वर्गयागव्यावृत्तमपूर्वमात्रास्साधारणमिति ॥

भाष्यकृतां त्वत्रैवमाशयः - कृत्या प्रामुमिष्टतमत्वरूपकृत्युद्देश्यत्वस्य 'कर्तुरीप्सिततमं कर्म' इत्यनुशासनबलात् सुखदुःखनिवृत्त्योरेव सत्त्वेनापूर्वेऽसम्भवात्। साक्षात्परम्परासाधारणकृतिसाध्यत्वरूपकृतिभाविभावित्वस्य स्वर्गेपि विद्यमानतया तद्व्यावृत्त्यसम्भवात्। मुख्यफलस्य स्वर्गादेरेव कृत्युद्देश्यत्वात्। अवान्तरफलस्यापि कृत्युद्देश्यत्वे यागजन्ये हविरग्नियोगेप्युद्देश्यत्वापत्त्याऽपूर्वस्यैव बोध इत्यसम्भवः। न च यत्प्राप्तीच्छया यागकृतिः तत्त्वमेव कृत्युद्देश्यत्वम्। न ह्यग्निसम्योगेच्छया यागकृतिः, अतो न दोष इति वाच्यम्। स्वर्गस्याप्येतेत्सम्भवेनावारणात्। किञ्च सुकृतस्य फलद्वयमस्ति - एकं महत्वपङ्क्तिपावनत्वादिरूपलेपः अन्यश्च स्वर्गादिः। त्वदुक्तकृत्युदेश्यत्वस्य लेपरूपफलेपि सत्त्वात्तद्व्यावृत्त्यसम्भवः। यत्प्राप्तिविषयकोत्कटेच्छया यागकृतिः तत्त्वमेव कृत्युद्देश्यत्वमिति चेत्तत्फलस्यैवास्ति। अतस्तेन रूपेण नापूर्वबोधः। कृतिजनकेच्छाजनकेच्छाविषयत्वं कृत्युद्देश्यत्वम्, अथवा पुरुषानुकूलत्वमित्यपि न युक्तम्। सुखादिफल एव तत्सम्भवात्। सुखस्यैव पुरुषानुकूलत्वात्सुखव्यतिरिक्तधात्वर्थस्यानुकूलत्वं न सम्भवति।

कथं सुखस्यैव पुरुषानुकूलत्वम्? सुखव्यतिरिकदुःखनिवृत्त्यादेरपि पुरुषनुकूलत्वादिति न वाच्यम्। पुरुषानुकूलं

**न च कृतिं प्रति शेषित्वं कृत्युदेश्यत्वम् ; भवत्पक्षे शेषित्वस्यानिरूपणात् । न च परोद्देशप्रवृत्तकृतिव्याप्त्यर्हत्वं शेषत्वमिति तत्प्रतिसम्बन्धी शेषीत्यवगम्यते; तथा सति कृतेरशेषत्वेन तां प्रति तत्साध्यस्य शेषित्वाभावात् । न च परोद्देशप्रवृत्यर्हतायाऽशेषत्वेन परश्शेषी; उद्देश्यत्वस्यैव निरूप्यमाणत्वात् ; प्रधानस्यापि भृत्योद्देशप्रवृत्यर्हत्वदर्शनाच्च । प्रधानस्तु भृत्यपोषणेऽपि स्वोद्देशेन प्रवर्तत इति चेन्न - भृत्योऽपि हि प्रधानपोषणे**

सुखं तत्प्रतिकूलं दुःखमिति स्वरूपविवेकात् । दुःखनिवृत्तेः सुखरूपत्वाभावान्न पुरुषानुकूलत्वम् । तर्हि दुःखनिवृत्तिः कथमपेक्ष्यते ? सापि हि इच्छाविषयो भवतीति चेत् दुःखस्य प्रतिकूलत्वेन तन्निवृत्तेरिष्टत्वात् । स्वत इष्टत्वरूपमनुकूलत्वं न तस्याम् । सुखकाले सुखीत्येव प्रयोगो, न तु दुःखरहित इति । दुःखरहित इति व्यवहारस्तु सुखदुःखोभयविरहदशायामेव । अतो दुःखनिवृत्तेरनुकूलरूपत्वम् । दुःखध्वंसस्य मोक्षरूपत्ववादिनां न हि पुरुषानुकूलत्वम् । एतेन एकाभावस्यापराभावरूपतया दुःखनिवृत्तेः कथं न सुखरूपत्वमिति शङ्का परास्ता । दुःखनिवृत्तेरेव सुखरूपत्वे दुःखनिवृत्तौ सुखनिवृत्ति र्न स्यात् । स्वापे दुःखनिवृत्त्या सुखान्वयप्रसङ्गः । अन्यतरनिवृत्तेरन्यतररूपत्वे स्वापे दुखनिवृत्त्या सुखवत्वस्य सुखनिवृत्त्या दुःखवत्वस्य च प्रसङ्गेनोभयान्वयः प्रसजेत् । अतः पुरुषानुकूलत्वं न कृत्युद्देश्यत्वम् । सुखव्यतिरिक्तत्वेनापूर्वस्य वा क्रियादेर्वा न पुरुषानुकूलत्वम् । न च सुखसाधनत्वात्पुरुषानुकूलत्वसम्भवः, दुःखात्मकत्वत्तयोः । सुखं हि भावि । गवानयनादि श्रमसाध्यत्वेन दुखरूपमेवेति ॥

अथ कृतिनिरूपितशेषित्वमेव कृत्युद्देश्यत्वमिति पक्षं खण्डयति - **न च कृतिं प्रतीति । परोद्देशेति** - यदुद्देशप्रवृत्तपुरुषकृतिसाध्यत्वं यस्य, तस्य तं प्रति शेषत्वं तत्प्रति सम्बन्धित्वं शेषित्वम् । यच्छब्देन फलं ग्रह्यते । तदुद्देशेनैव पुरुषस्य कृति र्जायते । तादृशकृतिसाध्यत्वं यागस्य । अतः स्वर्गप्रयाजादेः शेषत्वं स्वर्गस्य च यागनिरूपितशेषित्वम् । यागाङ्गभूतप्रयाजादावपि यागोदेशेन प्रवृत्तकृतिसाध्यत्वात्मकयागनिरूपितशेषत्वमिति समन्वय इति भावः । अस्य दूषणमाह - **तथा सतीति** । अयं भावः - स्वर्गं प्रति यागस्य यागं प्रति प्रयाजादे र्यथा शेषत्वं, तथा व्रीह्यादिद्रव्यस्य यागशेषत्वं वक्तव्यम् । एवम् आरुण्यगुणस्य क्रयशेषत्वञ्च । द्रव्यस्य गुणस्य च पुरुषकृतिसाध्यत्वाभावात्कथं निरुक्तशेषत्वसम्भवः ? 'व्रीहीनवहन्ति, प्रोक्षती'त्याद्युक्तावहननप्रोक्षणादिसंस्कारस्य शेषत्वसम्भवेपि द्रव्यगुणयोः कथमिति शङ्काया अपरिहारात् । न च निरुक्तकृतिविशिष्टत्वमेव शेषत्वं, वैशिष्ट्यञ्च साध्यत्वसाध्यतावच्छेदकत्वसाध्यतावच्छेदकतावच्छेदकत्वान्यतरसम्बन्धेन । यागे साध्यत्वसम्बन्धेन व्रीहिविशिष्ट्यागस्य कृति साध्यत्वेन व्रीह्यादौ साध्यतावच्छेदकत्वसम्बन्धेन, अरुणद्रव्यकरणकद्रव्यस्य कृतिसाध्यत्वेनारुण्यादौ साध्यतावच्छेदकतावच्छेदकत्वसम्बन्धेन च सत्त्वान्नानुपपत्तिरिति वाच्यम् । एवमपि पुरुषस्य कर्मशेषताया असिद्धेः । अभ्युपगतं तैः पुरुषश्च कर्मार्थत्वादित्यनेन । यदि च वैशिष्ट्यम् आश्रयतासम्बन्धेनापीत्युच्यते तथापि कृतिं प्रत्यपूर्वस्य शेषित्वानुपपत्तिः कृतिवैशिष्ट्यस्य कृतावसम्भवात् । यदि तादात्म्यसम्बन्धमप्यन्तर्भाव्य वैशिष्ट्यमुच्यते - तदापि न निर्वाहः, आत्माश्रयदोषापरिहारात् । कृत्युद्देयत्वनिर्वचनरूपशेषित्वशरीरे यदुद्दिश्येति उद्देश्यत्वस्य प्रवेशात् ।

अथ यद्विषयकेच्छाधीनप्रवृत्तिमत्पुरुषकृतिसाध्यत्वं यस्य तस्य तं प्रति शेषत्वं, तत्प्रतिसम्बन्धित्वं शेषित्वमिति स्वीकारे न कोपि दोष इति चेदेवमपि भृत्ये राजशेषत्वानुपपत्तिः. राज्ञः अभिमतं कार्यमिति तदर्थविषयकेच्छायास्तदधीनप्रवृत्तेश्च भृत्ये सम्भवेपि राजेच्छाधीनप्रवृत्तिमत्वासम्भवात् । यद्विषयकेच्छेत्यनेन राजविषयकेच्छैव ग्राह्या । तस्य राज्ञः पूर्वसिद्धत्वेन इच्छाविषयत्वासम्भवश्च । न च भृत्यस्य राजाभिमतकरणेच्छा राजेच्छाधाना हि । अतो राजेच्छाधीनप्रवृत्तिमत्त्वं भृत्यस्योपपन्नमिति वाच्यम् । तादृशभृत्यकृतिसाध्यत्वस्य भृत्येऽसम्भवाद्भृत्यस्य राजशेषत्वानुपपत्ति र्न परिहृता । तादात्म्यादिसम्बन्धोऽप्रयोजकः । राज्ञोऽपि भृत्यशेषत्वापत्तिः राज्ञोपि पोषणविशिष्टभृत्योद्देशप्रवृत्त्यर्हत्वात् । न च यद्विषय-

**स्वोद्देशेनैव प्रवर्तते। कार्यस्वरूपस्यैवानिरूपणात्, 'कार्यप्रतिसम्बन्धी शेषः, तत्प्रतिसम्बन्धी शेषी' इत्यप्यसङ्गतम्॥**

**नापि कृतिप्रयोजनत्वं कृत्युद्देश्यत्वम् ; पुरुषस्य कृत्यारम्भप्रयोजनमेव हि कृतिप्रयोजनम्। स चेच्छाविषयः। तस्मादिष्टत्वातिरेकिकृत्युद्देश्यत्वानिरूपणात्कृतिसाध्यताकृतिप्रधानत्व(स्व)रूपं कार्यं दुर्निरूपमेव॥**

**नियोगस्यापि साक्षादिषिविषयभूतसुखदुःखनिवृत्तिभ्यामन्यत्वात्तत्साधनतयैवेष्टत्वं कृतिसाध्यत्वञ्च। अत एव हि तस्य क्रियातिरिक्तता। अन्यथा क्रियैव कार्यं स्यात्। स्वर्गकामपदसमभिव्याहारानुगुण्येन लिङादिवाच्यं कार्यं स्वर्गसाधनमेवेति क्षणभङ्गिकर्मातिरेकिस्थिरं स्वर्गसाधनमपूर्वमेव कार्यमिति स्वर्गसाधनतोल्लेखेनैव ह्यपूर्वव्युत्पत्तिः। अतः, 'प्रथममनन्यार्थतया प्रतिपन्नस्य कार्यस्यानन्यार्थत्वनिर्वहणायापूर्वमेव पश्चात्स्वर्गसाधनं**

---

केच्छायामितरेच्छानधीनत्वं निवेश्यते। भृत्यविषयिणी या राजगतेच्छा सा स्वकार्यसिद्धेच्छाधीनत्वादितरेच्छाधीनेति न दोष इति वाच्यम्। राजविषयिण्या भृत्यगतेच्छाया अपि स्वकार्यसिद्ध्यर्थत्वादितरेच्छाधीनत्वमिति भृत्येपि लक्षणसमन्वयो न स्यात्। अपूर्वं प्रत्यपि यागकृतेः शेषत्वानापत्तेश्च। अपूर्वेच्छायाः स्वर्गेच्छाधीनत्वेनेतरेच्छानधीनत्वाभावात्॥

कार्यत्वं किंरूपमिति प्रश्नवेलायां कार्यस्वरूपमेव दुर्निरूपमासीत्। एवं 'कार्यप्रतिसम्बन्धी शेष' इत्यादिशेषत्त्वलक्षणं तत्र न सङ्गतमित्याह **कार्येति**। कार्यवाक्यार्थवादिनां, कार्यस्वरूपं किमिति प्रश्ने फलधात्वर्थविलक्षणाकारेण तन्निरूपणं कर्तव्यं प्रसक्तम्। तदर्थं कार्यत्वं कृत्युद्देश्यत्वमित्युक्तम्। कृत्युद्देश्यत्वं च किमिति प्रश्ने शेषित्वमित्युक्तं शेषित्वं च शेषप्रतिसम्बन्धित्वं शेषत्वं च कार्यप्रतिसंबन्धित्वं इत्युच्यमाने आत्माश्रय एव स्यात्। कार्यत्वनिरूपणोपयुक्तं शेषत्वनिरूपणं शेषत्वनिरूपणोपयुक्तं कार्यत्वनिरूपणमिति। कृति प्रयोजनत्वपक्षं द्यति - **नापीति**। अचेतनायाः कृते न किञ्चित्प्रयोजनमस्ति। अतः कृत्यारम्भस्य पुरुषस्य प्रयोजनमिति वक्तव्यम्। इदंचेष्टता पर्यवसितम्। पूर्वमेव खण्डितम्॥

गामानयेत्यादिलौकिकवाक्ये न कार्यत्वमर्थः वैदिकवाक्ये एव। परन्तु तत्र कार्यत्वारोपणमेव। अतो वेदे नियोगस्यापूर्वस्य कार्याख्यस्य बोधनं सम्भवतीति पक्षं व्युदस्यति - **नियोगस्यापीति**। इषिः = इच्छा। साक्षादिच्छाविषयत्वाकारः स्वतः इष्टत्वमित्युक्तं भवति। तेन फलान्तरसाधनत्वविरहः उक्तः। सुखं वा दुःखनिवृत्तिर्वा स्वत इष्टं भवति। न तु नियोगः। अस्य सुख दुःखनिवृत्यन्तरसाधनत्वेनैव इष्टत्वम्। अतः स्वतः इष्टत्वतत्प्रयुक्तवृत्तिसाध्यत्वे न नियोगस्य भवतः। परन्तु तत्साधनत्वेनैवेष्टत्वम्। यदि स्वत इष्टत्वं तत्प्रयुक्तकृतिसाध्यत्वं च तर्हि धात्वर्थ एव कार्यं स्यात्। दुःखस्य प्रतिकूलतया तन्निवृत्तेः इष्टत्वमभिप्रेत्य साक्षादिषिविषयत्वमुक्तम्।

**स्वर्गकामपदेति**। अपूर्वं स्वर्गं साधयतीति इममर्थं न वयं निषेधामः स्वत इष्टत्वाभावरूपत्वमस्येत्यपि न ब्रूमः। सुखदुःखनिवृत्त्योरन्यतराभावरूपत्वमपि इष्टत्वमभ्युपगच्छामः। यजेत इति लिङ्श्रवणबेलायाम् इष्टतमत्वकृतिसाध्यत्वोभयाकारेणैव तस्य प्रतीतिः। अतोऽनन्यार्थत्वेन (इष्टत्वेन) प्रतीतम्। पश्चात्स्वर्गकामपदसमभिव्याहारपदार्थपर्यालोचने तु अनन्यार्थमेवेदं स्वर्गमपि ददाति स्वसाधकस्य यजमानस्य। अतः अपूर्वं स्वमुद्दिश्यैव पुरुषं प्रयोजयति। स्वसाधकस्य पुंसस्स्वर्गमपि ददाति। यथा प्रभुः स्वानुगुणकार्यकर्तुर्भृत्यस्य फलमभिमतं ददाति। तस्मादपूर्वमेव साध्यं फलभूतम्। तस्य विवृद्धिः स्वर्गप्राप्तिः इति प्रभाकराशयं खण्डयति। प्रथमतः अनन्यर्थतया अपूर्वप्रतिपत्तिरित्येतदेव नोपपद्यते। अपूर्वं न दृष्टिविषयः। वेदे तद्वाचकशब्दाभावात्। शब्देन प्रतिपत्तिरपि न सम्भवति। आशुतरविनाशिनः यागस्य कथं कालान्तरभाविस्वर्गजनकतेति शङ्कायां स्वर्गसाधनत्वेनान्यार्थत्वेनैवापूर्वक्लृप्तिः इष्यते। अतः सिद्धिदशायामेवान्यार्थत्वेनैव

**भवती'त्युपहास्यम्। स्वर्गकामपदान्वितकार्याभिधायिपदेन प्रथममप्यनन्यार्थतानभिधानात्; सुखदुःखनिवृत्तितत्साधनेभ्योऽन्यस्यानन्यार्थस्य कृतिसाध्यताप्रतीत्यनुपपत्तेश्च।**

**अपि च - किमिदं नियोगस्य प्रयोजनत्वम्? सुखवन्नियोगस्याप्यनुकूलत्वमेवेति चेत् - किं नियोगः सुखम्? सुखमेव ह्यनुकूलम्। सुखविशेषवन्नियोगापरपर्यायं विलक्षणं सुखान्तरमिति चेत् - किं तत्र प्रमाणमिति वक्तव्यम्। स्वानुभवश्चेत्, न; विषयविशेषानुभवसुखवन्नियोगानुभवसुखमिदमिति भवताऽपि नानुभूयते। शास्त्रेण नियोगस्य पुरुषार्थतया प्रतिपादनात्पश्चान्भोक्ष्यत इति चेत् - किं तन्नियोगस्य पुरुषार्थत्ववाचिशास्त्रम्? न तावल्लौकिकं वाक्यम्; तस्य दुःखात्मकक्रियाविषयत्वात्, तेन सुखादिसाधनतयैव कृतिसाध्यतामात्रप्रतिपादनात्। नापि वैदिकम्; तेनापि स्वर्गादिसाधनतयैव कार्यस्य प्रतिपादनात्। नापि**

---

व्युत्पत्तिस्तस्मिन्। अतोऽनन्यर्थत्वेन सिद्धिरुपहास्यैव भवेत्।

इत्थश्च स्वर्गोपायत्वेन गृहीतस्य तस्यैवेष्टतमत्वं कृतिसाध्यत्वञ्च यदीष्यते तर्हि लोक इव वेदेपि धात्वर्थस्यैव इष्टतमत्वकृतिसाध्यत्वादि स्वीक्रियताम्। अतो ग्रहणकाले एतत्स्वर्गसाधनत्वैन गृहीतम्। अन्यसाधनत्वे सत्यपि यद्यनन्यर्थता, तर्ह्यनन्यार्थस्य सुखस्याप्यन्यसाधनत्वं स्वीक्रियताम्। अनन्यार्थकमेव यद्यपूर्वं पूर्वं प्रतिपन्नं तर्हि स्वरक्षणार्थं स्वर्गादिफलमपि स्वसाधयितुः न दद्यात्। स्वर्गदाने हि स्वनाशाय स्वयमेव कारणं स्यात्। दानानन्तरं स्वनाशस्याभ्युपगमात्। अन्यथा स्वर्गदानानन्तरमपि स्वस्य सत्वे सर्वदा यजमानस्य स्वर्गप्राप्तिरिति स्वर्गान्न च्यवनं भवेत्। भृत्यस्यानुग्रहकारी यजमनः स्वनाशाय कार्यं नैव कुर्यात्। अतः प्राभाकराशय उपहास्यः। **सुखेति**। सुखं दुःखनिवृत्तिश्च स्वत इष्टम्। तत्साधनयागादिक्रिया परम्परयेष्टा, अत एतदन्यस्य स्वत इष्टत्वेन परम्परयेष्टत्वेन वा कृतिसाध्यत्वेनैव सम्भवति। अन्विताभिधानवादिनां 'यजेत' इत्येतावन्मात्रेण कार्याभिधायित्वं लिङ्गमिति वक्तुं न शक्यते। स्वर्गकामपदान्वयपुरस्कारेणैवेति वाच्यम्। एवं चेत्स्वर्गसाधनत्ववेषेणैव लिडादेः अपूर्वरूपकार्यवाचकत्वं वक्तव्यं, तदाऽपूर्वमन्यार्थकमेव प्रतीतमिति कथमनन्यार्थकतया प्रतीतिः॥

कृतिप्रयोजनत्वरूपकृत्युद्देश्यत्वस्य निरासः कृतः। स्वतः इष्टत्वम् अपि नापूर्वस्येत्यत्युक्तम्। अथ सुखवत्तत्स्वरूपस्यैव स्वतः प्रयोजनत्वमिति गर्हितुमारभते - **अपि चेति**। सुखस्यैवानुकूलत्वं, न तु तदितरस्य। चन्दनादि जन्यसुखस्य यथाऽनुकूलत्वं न तथा नियोगस्य विलक्षणसुखरूपत्वं वक्तुं शक्यम्। इक्षुक्षीरगुडादीनां माधुर्यं विलक्षणं स्वानुभवसिद्धम्। न तथा नियोगसुखस्यानुभवः। स्वानुभवोपि नास्ति। शास्त्रादिप्रमाणमपि नास्ति। नियोगस्य पुरुषार्थत्वाववोधकशास्त्रमपि नैव पश्यामः। अपूर्वशब्देनादृष्टशब्देन चोच्यमानस्य सुखरूपत्वेन भवदभिमतस्य कथमनुभवविषयत्वम्? सुखं चेदनुभूयमानं स्यात्। चन्दनक्षीराद्यनुभवस्य वा तज्जन्यस्व वा सुखरूपत्वं मतभेदेन दृष्टम्। तद्वन्नियोगानुभवस्य वा तज्जन्यस्य सुखरूपत्वं वक्तव्यम्। नियोगानुभवसुखं तु भवतोपि नास्ति। स्वर्गसुखमपि नियोगजन्यमेव। न तु नियोगानुभवजन्यम्। स्वर्गस्य नियोगजन्यत्वेपि वा नियोगानुभवजन्यत्वेपि वा नियोगस्य स्वत इष्टत्वरूपप्रयोजनरूपत्वं सिषाधयिषितं न सेत्स्यति। लौकिकवाक्यं वा दुःखात्मकक्रियामेव बोधयति। तस्या एव सुखादिसाधनत्वेन कृतिसाध्यत्व बोधनात्। वैदिकवाक्ये तु स्वर्गादिसुखसाधनत्वेनैव कार्यं बोध्यते। न तु सुखरूपत्वेन।

काम्यविधिस्थले स्वर्गसाधनत्वान्वयानर्हत्त्वपर्यालोचनया धात्वर्थपरित्यागेनापूर्वस्य कल्पनात्तदनुसारेण नित्यनैमित्तिकस्थलेपि लिडादेरपूर्वे व्युत्पत्तिरादरणीया। अतः सुखसाधनकार्याभिधायित्वमेव। न त्वपूर्वरूपसुखवाचित्वम्। वृष्टिकामो यजेत, श्वेतमालभेत इत्यादि कर्मणमपि ऐहिकमप्रस्तुतप्रतिबन्धे इति सूत्रोक्तन्यायेन प्रतिबन्धकाभावे अत्रैव

**नित्यनैमित्तिकशास्त्रम् ; तस्यापि तदभिधायित्वं स्वर्गकामवाक्यस्थापूर्वव्युत्पत्तिपूर्वकमिति, उक्तरीत्या तेनापि सुखादिसाधनकार्याभिधानमवर्जनीयम् । नियतैहिकफलस्य कर्मणोऽनुष्ठितस्य फलत्वेन तदानीमनुभूयमानान्नाद्यरोगतादिव्यतिरेकेण नियोगरूपसुखानुभवानुपलब्धेश्च, नियोगस्सुखमित्यत्र न किञ्चन प्रमाणमुपलभामहे । अर्थवादादिष्वपि स्वर्गादिसुखप्रकारकीर्तनवन्नियोगरूपसुखप्रकारकीर्तनं भवतामपि न दृष्टचरम् ।**

**अतो विधिवाक्येष्वपि धात्वर्थस्य कर्तृव्यापारसाध्यतामात्रं शब्दानुशासनसिद्धमेव लिङादेर्वाच्यमित्यध्यवसीयते । धात्वर्थस्य च यागादेरग्न्यादिदेवतान्तर्यामिपरमपुरुषसमाराधनरूपता, समाराधितात्परमपुरुषात्फलसिद्धिश्चेति,** (शारी.३.२.३७.) **'फलमत उपपत्तेः' इत्यत्र प्रतिपादयिष्यते ।**

---

वृष्टिभूत्यादिफलजनकत्वात्तस्य चानुभूयमानत्वाच्च तदतिरेकेण नियोगानुभवो नास्ति । अपूर्वं च नियोगः फलोत्पत्त्या स्वयं नष्टः । जन्मान्तरे च तदनुभव इत्यपि न सुवचः । अत्र तु जन्मनि दृष्टफलानामेवानुभवः नियोगाननुभवश्च सर्वेषां स्पष्ट एव । यन्न दुःखेन संभिन्नमित्याद्यर्थवादः स्वर्गरूपसुखप्रकारकीर्तनपरो दृश्यते । एवं नियोगस्य सुखरूपत्वे तत्प्रकारप्रदर्शकोऽर्थवादोपि स्यात् । तादृशं चार्थवादं न पश्यामः । अतो नियोगस्य स्वत इष्टत्वरूपसुखरूपत्वं न सम्भवति । नियततैहिकानि कारीर्यभिचारादीनि । नियतामुष्मिकानि स्वर्गार्थानि कर्माणि । पशुपुत्रान्नाद्यर्थानि तु अत्रैव जन्मनि कर्मणः परिपाके ऐहिकानि, इतरथा आमुष्मिकाणि, अतो अनियतैहिकानि, एवं विभागः पूर्वतन्त्रे कृतः ॥

उपसंहरति - **अत इति** । लिङादिर्धात्वर्थस्य कर्तृव्यापरसाध्यत्वमात्रं बोधयति । अनुशासनमपि तथैव । अपूर्वार्थकत्वपक्षेऽनुशासनविरोधः । न च 'विधिनिमन्त्रणामन्त्रणसम्प्रश्नप्रार्थनेषु लिङ्' इत्यनेकार्थं बोधयत्यनुशासनमिति न मन्तव्यम् । अन्वययोग्यसर्वानुगतकृतिसाध्यत्वबोधनैकपरत्वेन सूत्रप्रवृत्तेः । इदञ्च कृतिसाध्यत्वं लोकवेदसाधारणम् । न च 'यजते', 'यजेत' इत्युभयत्रापि धात्वर्थयागे आख्यातार्थकृतिसाध्यत्वबोधनात् लट्लिङोः को विशेष इति वाच्यम् । लिङ्स्थले श्रोतृकृतिसाध्यत्वं कर्मसु प्रवृत्युत्पादानार्थं बोध्यते । न तथा लट्स्थले । आप्तेच्छामूलककृतिजन्यत्वं, कृतिजन्यत्वप्रकारकाप्तेच्छाविषयत्वं वा लिङर्थः ।

ननु धात्वर्थस्य क्रियारूपस्याऽऽशुतरविनाशित्वात्कथं कालान्तरभाविफलजनकत्वम् ? तत्राह - **धात्वर्थस्येति** । 'यज देवपूजायाम्' इत्यादि धात्वर्थानुशासनबलाद्देवताप्रीतिरेव फलं जनयति । लौकिकेष्वपि व्यापारेषु सार्वभौमप्रीत्यैव प्रजानां फलं सम्प्रतिपन्नम् । अस्य विस्तरः 'फलमत उपपत्तेः' इत्यत्र भविष्यति । उक्तं चाभियुक्तैः —

> क्रिया तच्छक्तिर्वा किमपि तदपूर्वं पितृसुरप्रसादो वा कर्तुः फलद इति रङ्गेश कुदृशः ।
> त्वदर्चेष्टापूर्ते फलमपि भवत्प्रीणनमिति त्रयीवृद्धा विधिरपि भवत्प्रेरणमिति ॥

उक्तञ्च दयाशतके - 'क्षणविलयितां शास्त्रार्थानां फलाय निवेशित' इत्यादिना । एतेन प्राभाकरमतरीत्या अपूर्वस्य लिङ्वाच्यत्वं मा भूत् आशुविनाशियागस्य फलसाधनत्वानुपपत्याऽपूर्वमिष्यते । तदेव फलजनकमिति वदतां भाट्टानामपि मतं निरस्तं भवति । यागस्य धात्वर्थस्य देवतासमाराधनरूपत्वादाराधितया देवतयैवफलसिद्धेरपूर्वकल्पनानावश्यकत्वात् । यजधातुर्हि देवताप्रीत्यवच्छिन्नव्यापारं बोधयति । तस्मिन्स्वर्गसाधनत्वं प्रतिपन्नं न बाधितम् । धनवान्सुखीत्युक्तौ धने सुखजनकत्वप्रतीतिवदुक्तव्यापारे स्वर्गसाधनत्वप्रतीतिः । अतो देवताप्रीतेरेव द्वारत्वलाभान्नापूर्वस्य द्वारत्वमावश्यकम् । अतो कृतिसाध्यत्वस्य इष्टसाधनत्वस्य वा लिङर्थत्वे नैव विरोधलेशः ।

अक्षयफलकत्वप्रतिपादनेन कर्मणोऽल्पास्थिरफलकत्वासिद्धेः हेतौ विशेषणासिद्धिरिति पूर्वोक्तामाशंकां परिहरति

**अतो वेदान्ताः परिनिष्पन्नं परं ब्रह्म बोधयन्तीति ब्रह्मोपासनफलानन्त्यं स्थिरत्वञ्च सिद्धम्। चातुर्मास्यादिकर्मस्वपि, केवलस्य कर्मणः क्षयिफलत्वोपदेशादक्षयफलश्रवणम्,** (बृ.४.३.३.) **'वायुश्चान्तरिक्षं चैतदमृतम्' इत्यादिवदापेक्षिकं मन्तव्यम्। अतः केवलानां कर्मणामल्पास्थिरफलत्वात्, ब्रह्मज्ञानस्य चानन्तस्थिरफलत्वात्तन्निर्णयफलो ब्रह्मविचारारम्भो युक्त इति स्थितम्॥** इति जिज्ञासाधिकरणम्॥

अथ जन्माद्यधिकरणम्॥ २॥

**'किं पुनस्तद्ब्रह्म, यज्जिज्ञास्यमुच्यत' इत्यत्राह -**

---

- **चातुर्मास्यादिकर्मस्वपीति**। कर्मणामावृत्तिविधानं क्षयिफलत्वे एकं कारणम्। चातुर्मास्ययाजिनः सुकृतस्यैवस्थिरफलत्वे आवृत्तिविधानं किमर्थम्। स च फलस्य स्थिरत्वेपि अल्पत्वात् अधिकस्थिरफलप्राप्त्यर्थं आवृत्ति विधानमिति वाच्यम्। यतोऽल्पत्वं तत एवास्थिरत्वमिति स्थिरत्वसाधनासम्भवात्। फलाल्पत्वमेवास्थिरत्वमपि सूचयति। अल्पत्वेनास्थिरत्वे कथं क्षयित्वोपदेश इति न शङ्क्यम्। वायोरन्तरिक्षस्य च प्रमाणबलेनानित्यत्वेनावगतत्वेनामृतत्ववचनस्यापेक्षिकत्ववदत्राप्युपपत्तेः। कर्मजन्यफलस्यानित्यत्वं च। तद्यथेह कर्मचितो लोकः क्षीयत इति प्रमाणवलात् अवगतम्। न चाक्षयित्वोपदेशबलादेतद्व्यतिरिक्तकर्मण एव क्षयिफलकत्वमिति वक्तुं शक्यते। कर्मसामान्येषु सर्वेषां क्षयिफलकत्वं कस्यचिदक्षयफलत्वमित्यंगीकारेपि प्रयोजनाभावात्। अक्षयफलककर्मणा अनुष्ठितेनाक्षयफलसिद्धिरित्यभ्युपगमेपि फलानुभवदेशस्य प्रलयकालपर्यन्तस्थायित्वेपि तदनन्तरं विनाशावश्यकत्वात्फलस्य क्षयित्वस्यैव सिद्धेः इत्याशयः॥

उपसंहरति - **अत** इति। **ब्रह्मविचारारम्भो युक्त** इति। तद्विज्ञानार्थं गुरुमेवभिगच्छेदिति गुरूपसदननियमविधिपरम्। रागतो मीमांसायां प्रवृत्तौ सत्यां कथं विधेयत्वमिति शङ्का त्वारम्भ एव परिहृता। अप्रवृत्तप्रवर्तकत्वरूपविधिः नात्र स्वीक्रियते। किन्त्वज्ञातज्ञानरूपो विधिः। रागतो ब्रह्मविचारे प्रवृत्तावपि सिद्धवस्तुनि व्युत्पत्त्यभावादारम्भणीयत्वं न स्यादिति मन्येत। तत्प्रति सिद्धेपि व्युत्पत्तिसमर्थनादारम्भणीयत्वमुच्यते। ब्रह्मविचारप्रवृत्तेः विघातः पूर्वपक्षिणा रचितः। तस्य परिहारः आरम्भणीयत्वसमर्थनेन क्रियते। ब्रह्मापातप्रतीतेः सम्भावितप्रामाण्यकत्वाभावबुद्ध्या, कर्मणां क्षयिफलकत्वाभावबुद्ध्या च कर्मविचारप्रवृत्तेः भङ्गे प्रसक्ते सम्भवितप्रामाण्यकत्वाक्षयिफलकत्वस्थापनेन विचारे प्रवृत्तिरुत्तभ्यते। अत एतादृशापातप्रतीतिमान्सन्पुरुषो रागतः प्रवर्तते। अतोऽज्ञातज्ञाप्यांशप्रतिपादनमत्र क्रियत इति शम्॥

## जन्माद्यधिकरणम्

एवं सम्भावितप्रामाण्यककर्मविशेष्यकाल्पास्थिरफलत्वप्रकारकनिश्चयोत्तरकालीनब्रह्मविशेष्यकानन्तस्थिरफलत्वप्रकारकापातप्रतीतिरूपहेतुबलेन ब्रह्मविचारस्य कर्मविचारानन्तरकालीनकर्तव्यतावत्वं 'अथातो ब्रह्मजिज्ञासा' इत्यनेनोक्तम्। अथ 'जन्माद्यस्य यतः' इति सूत्रमवतारयति - **किं पुनरिति**। किंशब्दः प्रश्नार्थकः। मत्समवेतजिज्ञासाविषयत्वं तदर्थः। जिज्ञास्यत्वप्रकारकब्रह्मविशेष्यकज्ञानविषयः तद्ब्रह्म मत्समवेतजिज्ञासाविषय इति विशिष्टार्थः। अनेनाधिकरणसङ्गति र्दर्शिता। शास्त्र-काण्ड-द्विका-ध्याय-पाद-पेटिकाऽधिकरणरूपसम्बन्धिभेदेन सङ्गतिः सप्तविधा। वेदार्थविचाररूपत्वाच्छास्त्रसङ्गतिः, वेदान्तार्थविचाररूपत्वात् काण्डसङ्गतिः। कारणवाक्यविचाररूपत्वादध्यायसङ्गतिः। यद्यपि 'सदेव' इत्यादिवाक्यमेव कारणवाक्यम्, अथापि ब्रह्मणः कारणत्वरूपलक्षणप्रतिपादकत्वादध्यायसङ्गतिः। अयोगव्यवच्छेदरूपत्वात्पादसङ्गतिः। शास्त्रारम्भार्थत्वात्पेटिकासङ्गतिः। एवमुक्तसङ्गतीनां स्पष्टत्वादधिकरणसङ्गतिः केवलमुक्ता। सङ्गतित्वमनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयत्वम्। जिज्ञास्यं = विचार्यमित्यर्थः। सकलेतरपुरुषार्थतत्साधनपरित्यागपूर्वकं प्राप्यत्वेन प्रापकत्वेन च यज्जिज्ञास्यमुक्तं तद्ब्रह्मेत्यर्थः। प्राप्यतया प्रापकतया चापातप्रतीतिसत्त्वात्तादृश-

## २. जन्माद्यस्य यतः ॥ २ । २ । २ ॥

**जन्मादीति सृष्टिस्थितिप्रलयम्। तद्गुणसंविज्ञानो बहुव्रीहिः। अस्य - अचिन्त्यविविधविचित्ररचनस्य** ब्रह्मणो जिज्ञास्यत्वोक्तेश्च तादृशं ब्रह्म किं मिति भावः। जिज्ञास्यमित्यनेनैव औपचारिकब्रह्मशब्दवाच्य-प्रणव-वेद-प्रधानादिव्यावृत्तिः। लक्षणतो ब्रह्मप्रतिपत्तौ हि लक्षणस्य व्यावर्तकत्वनियमेनेतरव्यावृत्तिः सिद्ध्यति। अत इतरविलक्षणं ब्रह्म ज्ञातव्यमिति किंलक्षणकं ब्रह्मेति प्रश्नार्थः॥

श्रुतिभिः इन्द्राग्निप्रभृतीनामपि समाभ्यधिकरहितत्वोक्तेः अर्थतत्त्वस्य दुरवग्राहत्वेन तापत्रयातुरजिज्ञास्यत्वेनोक्तं ब्रह्म किमित्यभिप्रायेण च जिज्ञास्यं किमित्युक्तम्। **सृष्टिरिति**। सूत्रस्य विशिष्टार्थं उत्तरत्र वर्ण्यते। प्रथमं प्रत्येकं समस्तस्या-समस्तस्य च पदस्यार्थमाह। सृष्टिश्च स्थितिश्च प्रलयश्चैतषामिति समाहाराश्रयणात् एकवद्भावः क्लीबत्वञ्च। उत्तरत्र सृष्टिस्थितिप्रलया इति इतरेतरयोगद्वन्द्वोपि वक्ष्यते। एकस्मिन्कार्ये परस्परसापेक्षतया तुल्यनिष्पादकत्वेनान्वय इतरेतरयोगः। दर्शपूर्णमासयोर्हि स्वर्गं प्रति अन्योन्यसापेक्षत्वेनैककार्यजनकत्वम्। इतरेतरयोगस्यैव समुदायत्वविवक्षायां समाहारः।

ननु जन्म आदि र्यस्येति विग्रहे सृष्टिस्थितिप्रलयजातनिरूपिताद्यघटकत्वाश्रयः जन्मेत्यर्थः पर्यवसितः। समासे तु जन्मनिष्ठाद्यघटकतानि रूपकजातमित्यर्थः। तथा च जन्मादिः जन्मघटितसमुदाय इति पर्यवसितम्। तत्र किं जन्मनोपि प्रवेश उत नास्तीत्यत्राह - **तद्गुणेति**। बहुव्रीहिः द्विविधः - तद्गुणसंविज्ञानः अतद्गुणसंविज्ञानश्चेति। सर्वादीनि इत्यत्र प्रथमः। द्वितीयश्चित्रगुरित्यादौ। स च गुणश्चानयोस्समाहारः तद्गुणम्। तच्छब्दार्थोऽन्यपदार्थः, गुणशब्दार्थश्च विशेषणम्। समित्येकीकारे। ततश्च विशेष्यविशेषयणयोः एककार्यन्वितत्वेन विज्ञानं यस्मिन् सः तद्गुणसंविज्ञान इत्यर्थः। विशेष्यनिष्ठ-विषयतानिरूपितविषयतावच्छेदकावच्छिन्नविषयतानिरूपितविशेषणनिष्ठविषयताप्रयोजकत्वं तत्त्वमिति यावत्॥ सर्वादीनीत्यत्र हि विश्वादिरूपविशेष्यस्य समुदायघटकसर्वस्य च सर्वनामसंज्ञासत्वेन सर्वनामसंज्ञात्वावच्छिन्न-विषयतायाः विश्वादिरूपविशेष्यनिष्ठविषयतानिरूपितत्वाद्विशेषणीभूतविषयतानिरूपितत्वाच्च विश्वादिनिष्ठ-विषयतानिरूपितविषयतावच्छेदकीभूतसर्वनामसञ्ज्ञात्वावच्छिन्नविषयतानिरूपितसर्वनिष्ठविषयताप्रयोजकत्वमिति समन्वयः। एवं प्रकृतेपि स्थित्यादाविव जन्मन्यपि ब्रह्मकार्यत्वान्वयेन तद्गुणसंविज्ञानत्वम्।

इदञ्च विवक्षाधीनम्। स च गुणश्च तद्गुणौ इति समासस्तु न सम्भवति। 'त्यदादीनि सर्वैर्नित्यम्' इत्येकशेषविधानेन तौ इति रूपपरिशेषात्। इतरेतरयोगद्वन्द्वेऽस्य प्रवृत्तावपि समाहारद्वन्द्वेऽप्रवृत्त्या पूर्वोक्तसमासे नानुपपत्तिः। तच्छब्देन विशेष्यं, गुणशब्देन विशेषणञ्च विवक्षितम्। समित्येकीकारे। 'विशेषणं विशेष्यञ्च एककार्यान्वितत्वेन सह ज्ञापयतीत्यर्थ' इति श्रुतप्रकाशिकापरामर्शे द्वन्द्वसमासएवात्राभिमत इति प्रतिभाति। अत इतरेतरयोगद्वन्द्वासम्भवात्समाहारद्वन्द्व एवा-श्रयणीयः। तस्य गुणः तद्गुणः। तद्गुणस्य धर्मिणा सह एककार्यान्वितत्वेन ज्ञापयतीत्यर्थमवलम्ब्य तत्पुरुषगर्भबहुव्रीहिरप्या-श्रीयते। परन्तु धर्मिणा इति पदमध्याहृत्यार्थो वर्णनीयः। श्रुतप्रकाशिकानभिमतश्च स पक्ष इति ज्ञायते। तद्गुणम् एककार्या-न्वितत्वेन विज्ञापयतीति बहुव्रीहिं विनापि समास इति केचित्। **अस्येति** व्याख्येयम्। तदर्थमाह - **अचिन्त्येति**। अचिन्त्यत्वमन्यकर्तृकतया चिन्तयितुमप्ययोग्यत्वम्। विविधत्वं समष्टिसृष्टिभेदेन। विचित्रत्वं व्यष्टिसृष्टिभेदेन। यद्वा विविधत्वमुभयविधसृष्टिभेदेन। विचित्रत्वं तु एकजातीय एव वैलक्षण्यदर्शनात्। रचना = संस्थानम्। नियतशब्दः देशे काले फलभोगे च सम्बध्यते। बहुव्रीहिः। ब्रह्मादयोपि हि नियतदेशकालफलभोगाः। ब्रह्मणोपि ह्यण्डान्तरप्रवेशः, वर्षशतादधिककालवृत्तित्वमण्डान्तराधिपत्यादिकम् अधिकफलश्च नास्तीति सुप्रसिद्धम्। स्तम्बशब्देन तृणविशेष उच्यते। कीटविशेष इत्यपि केचित्।

**नियतदेशकालफलभोगब्रह्मादिस्तम्बपर्यन्तक्षेत्रज्ञमिश्रस्य जगतः, यतः - यस्मात्सर्वेश्वरान्निखिलहेयप्रत्यनीकस्वरूपात्सत्यसङ्कल्पाज्ज्ञानानन्दाद्यनन्तकल्याणगुणात्सर्वज्ञात्सर्वशक्तेः परमकारुणिकात्परस्मात्पुंसः सृष्टिस्थितिप्रलयाः प्रवर्तन्ते, तद्ब्रह्मेति सूत्रार्थः ।**

विषयवाक्ये 'इमानि भूतानि' इति भूतशब्दस्याप्युपादानेन तदनुरोधात्सूत्रकारनिर्देशः कुतो नास्तीति शङ्काव्युदासाय जगत इति भाषितम् । एतेन विषयवाक्यस्य भूतशब्दो न देवादि चतुर्विधभूतमात्रपरः, किन्तु चिदचिदात्मककार्यवर्गपर इति ज्ञापितम् । विषयवाक्ये बहुवचननिर्देशेपि सूत्रे एकवचननिर्देशः सर्वस्यापि जगतो ब्रह्मनिष्ठैककारणतानिरूपितैककार्यत्वज्ञापनेन एककर्तृत्वसूचनार्थः । अस्य इत्यस्य जगत इत्येतावन्मात्रमनुक्त्वा एवं विस्तरकथनं ब्रह्मण एतादृशाकारविशिष्टकार्योत्पादनानुगुणज्ञानशक्त्यादि गुणोत्कर्षसूचनाय । अत एव विषयवाक्येपि इमानीति पदं प्रयुक्तम् । इदंशब्दो हि प्रत्यक्षविषयतावच्छेदकोपलक्षितधर्मावच्छिन्ने शक्तम् । प्रत्यक्षत एव जगतो विविधवैचित्र्यादिकं दृश्यते । अत एतादृशकार्यकर्तु र्गुणोत्कर्षो वाचामगोचरः । उदाहरणतया एकस्यां मनुष्यसृष्टौ पश्यामः । सर्वेषामपि मुखमस्ति । मुखे च नेत्रद्वयं, श्रोत्रद्वयं नासिकाभ्रूवौ, आननं, तत्र दन्ताः भट्टपालिका वर्तन्ते, अथापि नैकाकारं सर्वम् । एकमेव मुखं अन्यमुखविलक्षणं दरीदृश्यते सर्वावयवसाम्येपि । दाडिमफले निक्षिप्तानि रत्नसदृशानि क्रमतामपन्नानि विराजन्ते । नेदं सर्वं सामान्यतो जीवेन एवं रूपतया निबद्धमिति वक्तुं शक्यम् । एवं सर्वसृष्टावपि द्रष्टव्यम् । इमानीत्यस्याविवक्षितार्थकत्वं तु न सम्भवति । अविरोधात् । एतत्प्रापकवाक्ये जगद्वैचित्र्यस्य स्फुटत्वात् तदनुरोधेनानुवादवाक्यस्यार्थवर्णनावश्यकत्वात् ।

**यत** इति व्याख्येयपदोपादानम् । तस्मात् इत्यर्थकथनम् । अत्र पञ्चम्यन्ततया एकवचनान्ततया च विवृतत्वात् तसिलः सप्तम्यादि विभक्त्यन्तरत्वशंका, द्विवचनबहुवचनसाधारणत्वशंका च व्युदस्ता । तेन जन्माधिकारणत्वं ब्रह्मणो लक्षणम् इति शङ्का श्रुतौ सत्ब्रह्मशब्दादिश्रवणेन कारणानेकत्वशङ्का च परास्ता । यतो येन यत् इति प्रसिद्धवन्निर्देशेनानुवादरूपत्वादस्य एतत्पुरोवादवाक्ये कारणत्वजिज्ञास्यत्वोपयोगिगुणबोधनेन तादृशगुणविशिष्टं ब्रह्मैव श्रुतौ यच्छब्दार्थ इत्यभिप्रयन् सूत्रघटकयच्छब्दार्थं विवृणोति - **सर्वेश्वरादिति** । तमीश्वराणां परमं महेश्वरं स कारणं करणाधिपाधिपः इत्यादि श्रुतयो विवक्षिताः । एतेन प्रधानपुरुषयोः कारणत्वमिति मतं ब्रह्मणोंशित्वं जीवेशाचित्प्रभेदस्यांशत्वम् इति यादवप्रकाशमतं च व्युदस्तम् । निखिलहेयप्रत्यनीकस्वरूपादिति कारणवाक्यशेषभूतशोधकवाक्यसिद्धार्थकथनम् । निखिलहेयाः अचिद्गतषड्भावविकाराः चिद्गतक्लेशकर्मविपाकाशयाः, तत्प्रत्यनीकत्वं = कदाचिदपि तत्सम्बन्धानर्हत्वम् । यद्वा तत्प्रतिभटत्वम्, आश्रितेषु तन्निवर्तकत्वम् । स्वरूपशब्दोपादानम् उक्तहेयानामद्वारकत्वव्युदासार्थम् । सद्वारकत्वं तु न निषिध्यते । अन्यथा जगदुपादानत्वायोगात् । **सत्यसङ्कल्पादिति** । आश्रिततद्विरोधिषु स्वसङ्कल्पानुगुण्येन हेयसम्बन्धतद्वियोगोत्पादने अप्रतिहतसङ्कल्प इत्यर्थः । ज्ञानानन्देति भावप्रधाननिर्देशः । सत्यत्वादिः आदिशब्दविवक्षितोऽर्थः । इदं च कारणवाक्यशेषभूतशोधकवाक्यसिद्धार्थकथनम् ।

कल्याणत्वम् अनुभवितृणामप्यनुकूलत्वम् । ज्ञानत्वादयः कल्याणगुणा यस्येति बहुव्रीहिः । अत्र ज्ञानाश्रयस्यैव धर्मिज्ञानस्य ज्ञानत्वानन्दत्वसदैकरूपत्वादयः स्वरूपनिरूपकाः । प्रभाश्रयस्यैव दीपस्य चतुरङ्गुलत्वादिधर्मवत् । धर्मिणो धर्मस्य च ज्ञानरूपत्वमविरुद्धम् । व्यक्तिभेदात् । प्रभाया दीपस्य च तेजस्त्ववत् । न ह्येकस्यैव ज्ञानस्य धर्मित्वं धर्मत्वं च कल्प्यते । यथा एकस्याः तेजोव्यक्तेः प्रभारूपधर्मत्वं दीपरूपधर्मित्वं चाविरुद्धम् । अतो ज्ञानत्वमुभयसाधारणम् । धर्मिज्ञाने ज्ञानत्वव्याप्यप्रत्यक्षत्वादि धर्माः न सन्ति । ते तु धर्मभूतस्य सन्तीति विवेकः । **सर्वज्ञादिति** धर्मभूतज्ञानवत्तोक्ता । अनेन निमित्तकारणत्वप्रयोजकाकारो दर्शितः । **सर्वशक्ते**रित्यनेनोपादानत्वप्रयोजकाकारः । यद्वा सर्वशक्तेरित्यनेन उपादानत्वानुगुणपरिणामशक्तिः निमित्तत्वानुगुणसङ्कल्पशक्तिश्चोक्ता । एवमुपादानत्वोक्त्या चिदचिच्छरीरकत्वमप्यर्थ-

(तै.भृ.१.) **'भृगुर्वै वारुणिः वरुणं पितरमुपससार, अधीहि भगवो ब्रह्म' इत्यारभ्य, 'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व, तद्ब्रह्म' इति श्रूयते। तत्र संशयः - किमस्माद्वाक्याद्ब्रह्म लक्षणतः प्रतिपत्तुं शक्यते, न वा - इति। किं प्राप्तम्? न शक्यमिति**

---

सिद्धम्। यद्वा सर्वज्ञादित्यनेन उपासकगतप्रतिबन्धकनिरासोपयोगिज्ञानं चोक्तम्। निरसनोपयागि शक्तिः सर्वशक्तेरित्यनेन। प्रापकत्ववत् प्राप्यत्वमपि ब्रह्मण एवेति सूचनाय परस्मादित्युक्तम्। पुंस इत्यनेन देवताविशेषनिर्धारणम्। सामान्यविशेष-न्यायात् सद्ब्रह्मात्मशब्दानां पुरुषसूक्तप्रसिद्धनारायणपर्यवसायित्वस्य वक्तव्यत्वात्। पुरुषसूक्ते "त्रिपादस्यामृतं दिवि" इति श्रवणात् अत्र पुंस इति भाषितुः त्रिपाद्विभूतिमत्त्वमपि विवक्षितमिति ज्ञायते। सृष्टिः = उत्पत्तिः॥

ननु विषयवाक्यस्य यत इत्यस्य सूत्रे अनुकरणात् जनिकर्तुः प्रकृतिः इत्युपादानसंज्ञाविधानात् उपादानत्वस्यैव सिद्ध्या यतः सृष्टिः प्रवर्तते तद् ब्रह्म इत्येवार्थो वर्णनीयः। न च विषयवाक्येपि 'यतः' इति हेतुमात्रविवक्षेति नानुपपत्तिरिति वाच्यम्। जायन्त इत्यनेन यत इत्यस्यान्वयादुपादानत्वविवक्षाया आवश्यकत्वात्। अन्यथा येन यत् इत्यनयोर्वैयर्थ्यापत्तेरिति चेन्न। विषयवाक्ये यत इति उपादानत्वविवक्षणेऽपि सूत्रे हेतुपरत्वमेव। अन्यथा आदिशब्दप्रयोगानुपपत्तेः, यतो येन यत् इति निर्दिष्टस्यैव यत इति सार्वविभक्तिकतसिलन्तेन निर्देशात्। ततश्च यस्मात्सृष्टिः येन स्थितिः यस्मिंश्च लयः तद्ब्रह्मेति सृष्ट्युपादानत्वं स्थितिलयहेतुत्वं ब्रह्मण उक्तम्। सामान्यतः सृष्टिस्थितिलयहेतुत्वं तु पर्यवसितम्। एवं सामान्यतस्सिद्ध-मर्थमवलम्ब्यैव भाष्यकृता यस्मादिति सामान्यतो भाषितम्।

अपि च श्रुतावपि यत इति सामान्यतो हेतुत्वपरमेव। अस्यानुवादरूपत्वेन पुरोवादसापेक्षत्वात् पुरोवादिवाक्ये च निमितत्वोपादनत्वयोरुभयोः प्रतिपादनात्तदनुरोधिभूतानुवादवाक्यस्य यत इति निमित्तोपादनभूतो ब्रह्मणः परामर्शाव-श्यकत्वात्। न चात्रैव ब्रह्मण उपादानत्वनिमित्तात्वसिद्धौ प्रकृत्यधिकरणं व्यर्थमिति वाच्यम्। तत्राक्षेपपूर्वकं समर्थनेना-पौनरुक्त्यात्। अत्र ह्युभयविधकारणत्वस्य लक्षणत्वानुपपत्तिमात्रं परिह्रियते। ननूपादानत्वनिमित्तत्वयोः पुरोवादिवाक्य-सिद्धत्वेन किमत्र विधीयत इति चेत्? जन्मादिहेतुत्वविशिष्टस्योपादानस्य ब्रह्मत्वविधाने तात्पर्यात्। तद्विजिज्ञासस्व, तद्ब्रह्म इति ह्युपसंहारः। 'विजिज्ञासस्व' इति विधिप्रत्ययश्रवणेपि नोपासनस्यात्रविधेयत्वे तात्पर्यम्। 'ब्रह्मविदाप्नोति परम्' इत्यनेन प्राकरणिकवाक्येन प्राप्तत्वात्। 'अधीहि भगवो ब्रह्मेति ब्रह्मत्ववत्वज्ञानार्थप्रश्नेन समाधानस्य तदनुरोधित्वात्। 'विजिज्ञासस्व' इति विधिप्रत्ययस्तु उपदिश्यमानार्थेऽवधानसम्पादनार्थं, जिज्ञास्यं ब्रह्मैवास्माभिरुपदिश्यत इति संशयादि निवृत्त्यर्थश्च। अतः कारणत्वेन सिद्धस्य ब्रह्मत्वविधान एव तात्पर्यम्। कारणस्य ब्रह्मत्वविधाने ब्रह्मणः कारणत्वं लक्षणं भवतीति जगत्कारणत्वस्य ब्रह्मलक्षणत्वमुक्तं भवतीति। यथा या गन्धवती तां पृथिवीं विद्धि इत्युक्ते गन्धवत्वस्य पृथिवी-लक्षणत्वम्। एवमनेन लक्षणवचनेन ब्रह्मणः स्वेतरव्यावृत्तिः सिद्ध्यति। लक्षणस्य स्वेतरव्यावृत्तिजनकत्वनियमात्। व्यावृत्ति र्व्यवहारो वा लक्षणस्य प्रयोजनमिति हि वृद्धाः। अतः पूर्वभागेषु इन्द्राग्न्यादीनामपि सर्वोत्कृष्टत्वेन प्रतिपादनादत्र कारणवाक्येषु निरतिशयबृहत्वेन प्रतिपन्नं वस्तु किमिति संशये जगत्कारणत्वरूपलक्षणाक्रान्तमेव निरतिशयबृहत्ववद्व-स्त्विवतीतरपदार्थस्य ब्रह्मव्यावृत्तिः सिद्ध्यतीति।

उपक्रमवाक्यस्फोरणार्थं भृगुर्वै इत्युपादानम्। एतेन यतो वा इत्यादेः अन्यपरत्वशङ्का व्युदस्ता। यतः वै इमानीति पदच्छेदः। श्रुतिगतहेतुबलादेव संशय इति द्योतनाय संशयप्रदर्शनम्। तन्निवृत्यर्थं सूत्रप्रवृत्तिः। **लक्षणतः प्रतिपत्तुं** = व्यावर्तकाकारेणेतरव्यावृत्तं यथा भवति तथा ज्ञातुम्। सिद्धे व्युत्पत्तिः पूर्वमेव समर्थिता, अतोऽनेन वाक्येन ब्रह्मज्ञानं सम्भवत्येव। अथापीतरव्यावृत्ततया प्रतीतिः सम्भवति वा न वेति सूचनाय लक्षणतः इत्युपात्तम्। किं जन्मादीनां लक्षणत्वं विशेषणतया उतोपलक्षणतया। लक्षणं ह्युपलक्षणं विशेषणश्चेति द्विविधम्। अन्यस्य लक्षणत्वासम्भवात्।

**- न तावज्जन्मादयो विशेषणत्वेन ब्रह्म लक्षयन्ति, अनेकविशेषणव्यावृत्तत्वेन ब्रह्मणोऽनेकत्वप्रसक्तेः। विशेषणत्वं हि व्यावर्तकत्वम्।**

**ननु 'देवदत्तः श्यामो युवा लोहिताक्षः समपरिमाण' इत्यत्र विशेषणबहुत्वेऽप्येक एव देवदत्तः प्रतीयते। एवमत्राप्येकमेव ब्रह्म भवति। नैवम्। तत्र प्रमाणान्तरेणैक्यप्रतीतेरेकस्मिन्नेव विशेषणानामुपसंहारः। अन्यथा तत्रापि व्यावर्तकत्वेनानेकत्वमपरिहार्यम्। अत्र त्वनेनैव विशेषणेन लिलक्षयिषितत्वाद्ब्रह्मणः प्रमाणान्तरेणैक्यमनवगतमिति व्यावर्तकभेदेन ब्रह्मबहुत्वमवर्जनीयम्। ब्रह्मशब्दैक्यादत्राप्यैक्यं प्रतीयत इति चेन्न। अज्ञातगोव्यक्तेर्जिज्ञासोः पुरुषस्य, 'खण्डो मुण्डः पूर्णश्रृङ्गो गौः' इत्युक्ते गोपदैक्येऽपि खण्डत्वादिव्यावर्तकभेदेन गोव्यक्तिबहुत्वप्रतीतेः ब्रह्मव्यक्तयोऽपि बह्व्यः स्युः। अत एव लिलक्षयिषिते वस्तुन्येषां विशेषणानां सम्भूय लक्षणत्वमप्यनुपपन्नम्।**

---

अत्रोभयमपि न सम्भवतीति पूर्वपक्षिण आशयः। **अनेकेति**। जन्मस्थितिलया हि विशेषणम्। जन्मरूपविशेषणविशिष्टस्य ब्रह्मणः स्थितिरूपविशेषणविशिष्टस्य ब्रह्मणो लयरूपविशेषणविशिष्टस्य ब्रह्मणश्च परस्परं भेदप्रसक्त्या अनेकत्वापत्तेरिति भावः। अत्र वैशिष्ट्यं कारणतासम्बन्धेन।

ननु कथमेकविशेषणविशिष्टस्यापरविशेषणविशिष्टात् व्यावृत्तिरित्यत्र हेतुमाह - **विशेषणत्वमिति**। हिः प्रसिद्धौ। विशिष्यते अनेनेति निर्वचनाद्विशेषणत्वस्य भेदकतारूपत्वप्रसिद्धिरिति हिशब्देन सूच्यते। विशेषणं भेदकं, विशेष्यं भेद्यमिति प्रसिद्धिः। खण्डो मुण्डः पूर्ण श्रृङ्ग इत्यादौ विशेषणभेदेन विशेष्यभेदप्रतीतेरिति भावः। विशेषणबहुत्वं न विशेष्यभेदा-वहमिति सिद्धान्ती शङ्कते - **नन्विति**। प्रमाणान्तरेणैक्यावगमस्थले तादृशनियमाभावेपि ऐक्यानवगमस्थले तादृशनियमो युक्त एवेत्याशयेन पूर्वपक्षी परिहरति - **नैवमिति**। **उपसंहारः** = पर्यवसानम्। **अन्यथा** = ऐक्याप्रतीतौ। **तत्रापि** = देवदत्ते। नन्वत्रापि एकमेवाद्वितीयमित्यादिना ऐक्यमवगतमेवेति न विशेष्यभेदावहत्वमित्यत्राह - **अत्र त्विति**। एकमेवाद्वितीय-मित्यादावपि एकत्वादिविशेषणभेदेन विशेष्यबहुत्वप्रतीतेः। एको व्रीहिः इत्यादिवज्जात्येकत्वविवक्षयापि निर्वाहसम्भवाच्च न तेनाव्यैक्यावगति सम्भव इति हृदयम्।

ननु 'यतो वा' इत्यादौ न प्रतिपर्यायं ब्रह्मशब्दः प्रयुक्तः 'तद्ब्रह्म' इत्यन्ते एव। अत एकस्यैव ब्रह्मशब्दस्य प्रयुक्तत्वेन जन्माद्यनेकविशेषण विशिष्टमेकमेव ब्रह्मेति शङ्कते - **ब्रह्मशब्दैक्या**दिति। शब्दैक्यमप्रयोजकमिति समाधत्ते - **नेति**। **अज्ञातगोव्यक्तेः** = प्रत्यक्षेणेत्यादिः। जिज्ञासासम्भवसूचनाय व्यक्तिपदोपादानम्। गोसामान्यज्ञानस्य सत्वेन गोव्यक्ते-रेवादृष्टत्वाज्जिज्ञासासम्भव इति भावः। अत्र गौरित्येकवचनान्ततयोपादानं, न केवलं धर्मिवाचकपदैक्यमात्रस्याप्रयोज-कत्वं, किन्त्वेकवचनान्तधर्मिवाचकपदैक्यस्यापीति सूचनाय। एतेन 'तानि ब्रह्माणि' इति बहुवचनान्ततयाऽनिर्देशात् ब्रह्मैक्यप्रतीतिरिति पराहतम्। उक्तस्थले एकवचनान्तविशेष्यवाचकपदैक्यस्य विशेषणबहुत्वाधीनविशेष्यबहुत्वाबाधक-त्वदर्शनात्। अत एव हि 'यो यो धूमवान् सं स वह्निमान्' इति वा ते वह्निमन्त इति वा न व्यवह्रियते॥

नन्वेकवचनान्तविशेष्यवाचकपदैक्यस्यासति बाधके विशेष्यैक्यप्रतिपादकत्वं स्वभावः। खण्डादिषु प्रत्यक्ष-बाधान्नैक्याप्रतीतिरिति चेन्न। खण्डाद्यप्रत्यक्षेपि खण्डो मुण्ड इति वाक्येन बहुत्वप्रतीतेः तादृशनियमस्यासिद्धेः। एतद-भिप्रायेणैव अज्ञातगोव्यक्तेरित्युक्तम्। एवं विशेषणभेदाद्विशेष्यभेद उक्तः। अथैतेषां लक्षणत्वमेवानुपपन्नम्। तत्तद्विशेषण-विशिष्टब्रह्मणो भिन्नत्वेनैकस्मिन्ब्रह्मणि जन्मादित्रितयविशेषणवैशिष्ट्यस्यासंभवादित्याह - **अत एवेति**। लक्षणत्वमपी-त्यपिना प्रत्येकलक्षणत्वानुपपत्तिर्विवक्षिता। प्रत्येकलक्षणत्वेपि एकस्मिन् ब्रह्मण्यसम्भवादिति भावः।

**नाप्युपलक्षणत्वेन लक्षयन्ति, आकारान्तराप्रतिपत्तेः। उपलक्षणानामेकेनाऽऽकारेण प्रतिपन्नस्य केनचिदाकारान्तरेण प्रतिपत्तिहेतुत्वं हि दृष्टम्, 'यत्रायं सारसः, स देवदत्तकेदार' इत्यादिषु। ननु च,** (तै.आ.१.) **'सत्यं ज्ञानमनन्तं ब्रह्म' इति प्रतिपन्नाकारस्य जगज्जन्मादीन्युपलक्षणानि भवन्ति। न ; इतरेतरप्रतिपन्नाकारापेक्षत्वेन उभयोर्लक्षणवाक्ययोरन्योन्याश्रयणात्। अतो न लक्षणतो ब्रह्म प्रतिपत्तुं शक्यत इति ॥**

**एवं प्राप्तेऽभिधीयते - जगत्सृष्टिस्थितिप्रलयैरुपलक्षणभूतैर्ब्रह्म प्रतिपत्तुं शक्यते। न चोपलक्षणोपलक्ष्याकारव्यतिरिक्ताकारान्तराप्रतिपत्तेर्ब्रह्माप्रतिपत्तिः। उपलक्ष्यं ह्यनवधिकातिशयबृहत्, बृंहणश्च; बृहतेर्धातोस्तदर्थत्वात्। तदुपलक्षणभूताश्च जगज्जन्मस्थितिलयाः। 'यतो, येन, यत्' इति प्रसिद्धवन्निर्देशेन यथाप्रसिद्धि**

एवं विशेषणत्वपक्षो व्युदस्तः। अथोपलक्षणत्वपक्षं व्युदस्यति - **नापीति**। अस्त्वाकारान्तराप्रतिपत्तिस्तावतोपलक्षणत्वं कुतो न सम्भवतीत्यत्राह - **उपलक्षणानामिति**। **केनचित्** = विलक्षणेन। **आकारान्तरेण** = अन्येनाकारेण। अयं भावः - यत्रोपलक्षणेनोपलक्ष्यस्य प्रतिपत्तिः तत्रोपलक्षणाकारः। सम्बन्धित्वमुपलक्ष्याकारः पूर्वप्रतिपन्नाकारश्चेत्याकारत्रयं वक्तव्यम्। यत्रायं सारसः स देवदत्तकेदार इत्यादौ सारससंबन्धदेवदत्तकेदारत्वकेवलकेदारत्वरूपाकारत्रयदर्शनात्। एवं शाखाग्रे चन्द्र इत्यादावपि शाखाग्रमुपलक्षणं, देशविशेषकालविशेषसम्बन्ध उपलक्ष्याकारः, चन्द्रत्वं पूर्वप्रतिपन्नाकारः। अत आकारत्रयस्यावर्जनीयत्वादत्र च पूर्वप्रतिपन्नाकारस्याभावेन कथमुपलक्षणत्वमिति ॥

ननु सत्यं ज्ञानमनन्तं ब्रह्मेति लक्षणवाक्येन तृतीयाकारप्रतिपत्तिसम्भवान्नाकारान्तरप्रतिपत्तिदौर्लभ्यमिति शङ्कते - **ननु चेति**। अस्यापि लक्षणवाक्यत्वात्सत्यत्वादेर्विशेषणत्वमुतोपलक्षणत्वम्? आद्ये ब्रह्मणोऽनेकत्वापत्तिः। द्वितीये कथमाकारान्तरप्रतिपत्तिः। स्वेनैव चेत्तर्हि जन्मादीनामुपलक्षणत्वेपि स्वेनैवाकारन्तरप्रतिपत्तिसंभवेन तदर्थं सत्यमित्यादि वाक्यपर्यन्तानुधावनं व्यर्थम् आत्माश्रयश्च। यतो वा इत्यादिना आकारान्तरप्रतिपत्तिस्वीकारे चान्योन्याश्रय इति दूषणानि मनसि निधाय तत्राद्ययोः स्फुटत्वात् अन्तिमदूषणमुक्त्वा परिहरति - **नेत्यादिना**। **अत** इति - जन्मादेरुक्तयुक्त्या उपलक्षणत्वविशेषणत्वयोरसम्भवेनोभयधापि तेषां लक्षणत्वासम्भवाद्यतो वा इत्यादिवाक्यं ब्रह्म लक्षणतः प्रतिपादयितुं न शक्नोति। लक्षणदौर्घट्येन च ब्रह्मणि शास्त्रं न प्रमाणमिति तादृशब्रह्मविचारोऽनारम्भणीय एव इति पूर्वपक्षसारः ॥

एवं प्राप्त इति। पाश्चात्येन बुद्धिस्थत्वादुपलक्षणत्वपक्षं स्थापयति **जगदिति**। आकारान्तरशब्देन वक्ष्यमाण आकारविशेषः उपलक्षणोपलक्ष्याकारव्यतिरिक इति सूचनार्थं व्यतिरिक्तेत्यन्तम्। हीति श्रुतिपुराणप्रसिद्धिसूचनार्थः। बृहति बृंहयति तस्मादुच्यते परं ब्रह्म इति श्रुतिः। बृहत्वाद्बृंहणत्वाच्च तद्ब्रह्मेत्यभिधीयते इति वैष्णवपुराणश्च। अनेनोक्तबृहत्वबृंहणत्वरूपोपलक्ष्यकारो दर्शितः। उक्तश्रुतिपुराणबलात् बृहत्वप्रतीतावपि कथमनवधिकातिशयबृहत्वप्रतीतिः, कथं वा बृहणत्वस्यापि ब्रह्मशब्दार्थत्वेन श्रुतिपुराणाभ्यां प्रतिपादनम्? तत्राह - **बृहतेरिति**। 'बृह वृद्धौ इति बृहतिधातोः अनिन्प्रत्ययान्तस्य निरतिशयबृहत्वार्थकत्वात्स्वरूपत इव गुणतोपि बृहत्वस्य विवक्षितत्वेन बृंहणत्वरूपबृहत्वस्यापि धात्वर्थान्तर्गतत्वाच्च निरवधिकातिशयबृहत्वप्रतीतेः बृंहणत्वस्य ब्रह्मशब्दार्थत्वेन प्रतिपादनं नानुपपन्नमिति। अथोपलक्षणाकारमाह - तदिति।

ननु जन्मादीनां ब्रह्मोपलक्षणत्वे कथं ब्रह्मणा सम्बन्धः। न हि सारसस्य देवदत्तकेदारसम्बन्धाभावे तदुपलक्षणत्वं सम्भवतीत्यत्र प्रसिद्धवन्निर्देशेन कारणत्वमेव सम्बन्धः इत्यभिप्रयन्नाह - **यत इति**। **प्रसिद्धवन्निर्देशेनेति**। प्रसिद्धशब्दः भावार्थकक्तप्रत्ययान्तः प्रसिध्यर्थकः। ततो मतुप् प्रसिद्धिमतः = प्रसिद्धस्य निर्देश इत्यर्थः। यद्वा प्रसिद्धस्येव निर्देशः॥ कारणत्वमेवात्र सम्बन्ध इत्याह - **यथाप्रसिद्धिरिति**।

**जन्मादिकारणमनूद्यते। प्रसिद्धिश्च,** (छा.६.२.१.) **'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्। तदैक्षत बहु स्यां प्रजायेयेति, तत्तेजोऽसृजत' इत्येकस्यैव सच्छब्दवाच्यस्य निमित्तोपादानरूपकारणत्वेन। तदपि 'सदेवेद-मग्र एकमेवासीत्' इत्युपादानतां प्रतिपाद्य, 'अद्वितीयम्' इत्यधिष्ठात्रन्तरं प्रतिषिध्य, 'तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत' इत्येकस्यैव प्रतिपादनात्। तस्माद्यन्मूला जगज्जन्मस्थितिलयास्तद्ब्रह्मेति जन्म-स्थितिलयास्स्वनिमित्तोपादानभूतं वस्तु ब्रह्मेति लक्षयन्ति। जगन्निमित्तोपादानताऽऽक्षिप्तसर्वज्ञत्वसत्य-सङ्कल्पत्वविचित्रशक्तित्वाद्याकारबृहत्वेन प्रतिपन्नं ब्रह्मेति च जन्मादीनां तथाप्रतिपन्नस्य लक्षणत्वेन नाकारा-न्तराप्रतिपत्तिरूपानुपपत्तिः॥**

---

कारणत्वं निमितत्वोपादानत्वोभयरूपमित्याह - **निमित्तेति**। निमित्तोपादानशब्दौ भावप्रधाननिर्देशरूपौ। सदेवे-त्यादिवाक्येषु उभयविधकारणत्वमुक्तमित्युपपादयति - **तदपीति**। उभयविधकारणत्वमपीत्यर्थकम्। प्रतिपादनादित्य-नेनास्यान्वयः। एवं ब्रह्मगतकारणत्वरूपनिमित्तत्वरूपताया अपि समर्थनात्तदपेक्षितसत्यसङ्कल्पत्वादिरूपबृहत्वस्या-सिद्धिः परिहृता। एवमुपलक्षणोपलक्ष्ययोस्सम्बन्धप्रतिपादनमुखेन तृतीयाकारक्षेपककारणत्वमुक्तम्। अथ तदाक्षिप्तमु-पलक्षणत्वप्रयोजकाकारमाह - **जगदिति**। सर्वज्ञत्वमुपादानत्वाक्षिप्तम्। सत्यसङ्कल्पत्वं निमित्तत्वाक्षिप्तम्। विचित्रशक्ति-त्वमुभयाक्षिप्तम्। परिणामशक्तेस्सङ्कल्पशक्तेश्चोभयगतत्वात्। 'आकारबृहत्वेन' इत्यनेनोक्तगुणविशिष्टस्य ब्रह्मशब्दवाच्य-त्वार्हत्वं सूचितम्। अनेन केवलं बृहत्वं पूर्वप्रतिपन्नाकार इत्युक्तं भवति। यत्रायं सारस इत्यादौ यथा देवदत्तकेदारत्वमुपलक्ष्या-कारः केवलकेदारत्वं पूर्वप्रतिपन्नाकारः इत्युपलक्षणत्वपक्षो युज्यत इति। न च देवदत्तसम्बन्धित्वमेवोपलक्ष्याकारः। तस्य तद्वस्त्रादिष्वपि सत्वेनातिप्रसङ्गात्।

ननूपनीतं विशेषणतयैव भासत इति न्यायेनाक्षिप्तसर्वज्ञत्वसत्यसङ्कल्पत्वादीनां विशेषणत्वेन विशेष्यभेदेन विशेष्यभेदप्रसङ्गो दुर्वारः। उपलक्षणत्वे तु पूर्वप्रतिपन्नाकारस्य वक्तव्यतयाऽनवस्थेति चेन्न। विशेषणत्वाभ्युपगमे दोषा-भावात्। अत एव 'यस्सर्वज्ञ' इत्यद्यवगतसर्वज्ञत्वादीनां विशेषणत्वाङ्गीकारेण पूर्वप्रतिपन्नाकारसौलभ्यञ्च। ननु तर्हि सत्यं ज्ञानमित्याद्युक्तसत्यत्वादेर्विशेषणत्वे तेन पूर्वप्रतिपन्नाकारो वक्तुं शक्यत इति चेदिष्टमेव। परन्तु ब्रह्मणो जन्मादिहेतुत्वे सिद्धे हेत्वन्तरगतविविधावद्यवर्गप्रसंगपरिहाराय पश्चात्तस्य प्रवृत्तत्वेन तेन पूर्वप्रतिन्नाकारसमर्पणं न युक्तमिति द्रष्टव्यम्॥

ननु जन्माद्युपलक्षणत्वस्य विशेषणसमर्थानायत्तत्वेन कथं विशेषणपक्षः प्राङ्न गृहीत इति चेन्न, दत्तोत्तरत्वात्। वस्तुतः न विशेषणत्वसमर्थनायत्तमुपलक्षणत्वपक्षसमर्थनम्। कथं तर्ह्याक्षिप्तसर्वज्ञत्वसत्यसङ्कल्पत्वादिविशेषणबहुत्वा-धीनविशेष्यबहुत्वापादनवारणम्? उच्यते। 'तदैक्षत बहु स्यां प्रजायेय' इति यस्य ब्रह्मण उपादानत्वं तस्यैव 'तत्तेजोऽसृजत' इत्यनेन निमित्तत्वमुक्तम् इतीदं तु निर्विवादम्। ततश्च निमित्तत्वोपादानत्वाक्षिप्तसर्वज्ञत्वसत्यसङ्कल्पत्वादिकमपि एकब्रह्मनिष्ठमेव। न हि कस्यचिन्निमित्तत्वे उपादानत्वे च तद्बलादन्यस्य सत्यसङ्कल्पत्वादिकमाक्षिप्यते। अतः सत्य-सङ्कल्पत्वादि विशेषणभेदेपि निमित्तोपादानभूतस्य ब्रह्मण ऐक्यावगत्या देवदत्तो युवा श्याम इत्यादाविव न विशेष्य-बहुत्वापादनसम्भवः। एतत्सूचनायैव 'तदपी'त्यारभ्य 'प्रतिपादनात्' इति पर्यन्तम्, 'आक्षिप्तम्' इति च भाषितम्। अत एव 'यस्सर्वज्ञ' इत्याद्यवगतसर्वज्ञत्वादि चोक्तम्। अतः प्रागुपलक्षणत्वपक्षसमर्थनं न दोषाय। अत्र यत इति प्रसिद्धनिर्देशेन प्रसिद्धिसूचनाय सदेवत्याद्युपनिषदन्तरस्थवाक्यप्रदर्शनमयुक्तमिति न मन्तव्यम्। कुत्रचित्प्रसिद्धस्याप्यन्यत्रानुवाद-सम्भवात्। 'एको ह वै नारायण आसीत्' इत्यादि कारणवाक्यस्य हवै शब्दघटितत्वेन तस्यापि पुरोवादसापेक्षत्वात्तत्सजा-तीयं वाक्यं नोपात्तम्। षड्विधतात्पर्यीपेतत्वेन प्रबलत्वाच्चेदं वाक्यमुपात्तम्। निगमयति - **इति चेति**। अतश्चेत्यर्थः॥

**जगज्जन्मादीनां विशेषणतया लक्षणत्वेऽपि न कश्चिद्दोषः। लक्षणभूतान्यपि विशेषणानि स्वविरोधिव्यावृत्तं वस्तु लक्षयन्ति। अज्ञातस्वरूपे वस्तुन्येकस्मिन् लिलक्षयिषितेऽपि परस्पराविरोध्यनेकविशेषणलक्षणत्वं न भेदमापादयति। विशेषणानामेकाश्रयतया प्रतीतेरेकस्मिन्नेवोपसंहारात्। खण्डत्वादयस्तु विरोधादेव गोव्यक्तिभेदमापादयन्ति। अत्र तु कालभेदेन जन्मादीनां न विरोधः॥**

---

विशेषणत्वपक्षे प्रागुक्तदोषाणां परिहारप्रकारं प्रदर्शयति - **लक्षणेति**। **स्वविरोधिव्यावृत्तं** = नियतभिन्नाश्रयकविशेषणाश्रयाद् व्यावृत्तम्। 'देवदत्तः श्यामो युवा' इत्यादौ श्यामत्वादीनामेकस्यामेव देवदत्तव्यक्तौ समावेशसम्भवेन नियतभिन्नाश्रयकत्वाभावाद्देवदत्तभेदापादकत्वं नास्तीत्यभिप्रेत्याह - **अज्ञातस्वरूपेति**। भेदानापादकत्वे हेतुमाह - **विशेषणानामिति**। अविरुद्धविशेषणानां विशेष्यैक्यव्यवस्थापकत्वादिति भावः। खण्डत्वादीनां विशेषणानां नियतभिन्नाश्रयत्वरूपपरस्परविरुद्धत्वेन भेदापादकत्वं युक्तमित्यभिप्रेत्याह - **खण्डत्वादयस्त्विति**। अयमत्र भावः - एकवचनान्तधर्मिवाचकपदैक्यस्य विशेषणानां बहुत्वेपि विशेष्यैक्यव्यवस्थापकत्वं स्वभावः। खण्डो मुण्ड इत्यादौ तु प्रत्यक्षबाधात् तत्स्वभावपरित्यागः।

नन्वदृष्टगोव्यक्तेः खण्डो मुण्ड इत्याद्युक्तौ एकवचनान्तधर्मिवाचकपदैक्ये सत्यपि कथं गोव्यक्तिबहुत्वप्रतीतिः। तत्र प्रत्यक्षबाधासम्भवादिति चेत्तर्हि - भवद्भिरपि विशेषणबहुत्वाधीनविशेष्यभेदवादिभिः देवदत्तो युवा इत्यादौ विशेष्यभेदप्रतीतिः कथं परित्यक्ता। प्रत्यक्षबाधादिति चेन्न, तावताप्यदृश्यमानदेवदत्तव्यक्तेः पुंसः, देवदत्तो युवा श्याम इत्यादिवाक्यप्रयोगे विशेष्यभेदाप्रतीतेरनुपपादनात्। ननु मतद्वयेपि दोषसाम्यादेकवचनान्तधर्मिवाचकपदैक्याद्विशेष्याभेदप्रतीतिरित्यत्र किं नियामकमिति चेत्? सावधानं श्रुणु। अनियतभिन्नाश्रयदृष्टविशेषण बहुत्वं नैक्यविरोधि, नियतभिन्नाश्रयदृष्टविशेषणबहुत्वं नैक्यविरोधीति। अतो जन्मादीनामेकस्मिन् विशेष्य एव सम्भवेनानियतभिन्नाश्रयकत्वादैक्यविरोध्याकारस्योक्तविशेषणबहुत्वस्याभावेन स्वतः प्राप्तमेकवचनान्तधर्मिवाचकपदैक्यनिबन्धनं विशेष्यैक्यं युक्तमेवेति।

ननु जन्मादीनां विशेषणत्वमेवासंभवि, विरोधात्। नहि जन्मदशायां लयसंभवः। अत एकस्मिन् धर्मिणि ब्रह्मणि जन्मस्थित्यादीनामसंभवेन विरुद्धविशेषणत्वात् नैवं व्यवस्थापयितुं युक्तमित्यत्राह - **अत्र त्विति**। अयमाशयः - विशेषणभेदाद्विशेष्यभेदवादिनापि जन्मादियौगपद्यव्याधानात्कथं जन्मादिदशायां लयसम्भवः। अप्रामाणिकविशेष्यबहुत्वमात्रं त्वधिकम्। न हि ब्रह्मव्यक्तित्रितयाभ्युपगमेनैव विरोधः परिहर्तुं शक्यः। अतः कालभेदेनैव विरोधस्य भवद्भिरपि परिहर्तव्यत्वात् अस्माभिरपि तथैव परिह्रियत इत्यदोषात्। वस्तुतः विशेषणानां स्वाश्रयेतरव्यावर्तकत्वमप्यत्र न सम्भवति इति न विशेष्यभेदापादनसंभवः। जन्महेतुत्वाश्रये ब्रह्मणि जन्महेतुत्वाश्रयेतरदित्यनेन स्थितिहेतुत्वाश्रयब्रह्मोपादाय तद्भेदः जन्महेतुत्वरूपविशेषणेन साधनीयः। स च न सम्भवति तादृशेतरदित्यनेन स्थितिहेतुत्वाश्रयब्रह्मण उपादानासम्भवात्। भेदसिद्धौ हि स्वाश्रयेतरदित्यनेन ग्रहणसम्भवः। इतरत्वेन ग्रहणे एव भेदसाधनम् इत्यन्योन्याश्रयात्। घटपटादिभेदसाधनं त्विष्टमेव। तावता विशेष्यबहुत्वानापत्तेरिति॥

एवं पक्षद्वयमपि साधितम्। अत्रोपलक्षणत्वं - ज्ञाप्यबहिर्भूतत्वे सति ज्ञाप्यप्रतीत्युपायत्वं, विशेषणत्वं ज्ञाप्यान्तर्गतत्वे सति ज्ञाप्यप्रतीत्युपायत्वं बोध्यम्। न च ज्ञाप्यान्तर्गतस्य कथं ज्ञाप्यप्रतीत्युपायत्वं ज्ञाप्यप्रतीत्युपायस्य ज्ञाप्यत्वासम्भवादिति वाच्यम्। प्रत्यक्षविषयघटादेः ज्ञाप्यत्वेपि इन्द्रियसन्निकर्षप्रतिसम्बन्धित्वेन ज्ञाप्यप्रतीत्युपायत्वदर्शनात्। अत्रापि तथैव सम्भवात्। ननु कथं भाष्यकृता जन्मादीनामुपलक्षणत्वं विशेषणत्वञ्च स्वीकृतम्? विरोधात्। न ह्येकस्यैवोभयविधत्वं सम्भवति। ज्ञाप्यवहिर्भूतस्य ज्ञाप्यन्तर्गतत्वासम्भवादिति चेदुच्यते - 'नानाशब्दादिभेदादि'त्यनेन विद्यानां नानात्वस्थापनात् कस्याञ्चिद्विद्यायां जन्मादिहेतुत्वस्य विशेषणतयोपास्यत्वमन्यत्रोपलक्षणतयोपास्यत्वञ्च सम्भवतीत्याभिप्रायेणोभयपक्ष-

स्याप्यङ्गीकारात्। यत्र विशेषणत्वेनोपासनं तत्र जन्मादिहेतुत्वस्योपासनविषयत्वं, यत्र तूपलक्षणत्वेनोपासनं तत्रोपासना-ऽविषयत्वमित्यविरोधात्। उक्तश्च सारावल्यां - मोक्षार्थोपास्यभेदे ह्युभयमपि समन्वेति विद्याविकल्पादिति ॥

ननु 'कारणं तु ध्येय' इति कारणत्वस्य सर्वविद्याऽनुयायित्वात्कथं कस्मिंश्चिदुपासनेऽविषयत्वोपपादनं, कथं चोपलक्षणत्वम्? मैवम्। कारणत्वविशिष्टस्य कारणत्वोपलक्षितस्य वा ब्रह्मणो ध्येयत्व एव तात्पर्यमित्यदोषात्। यत् कारणं तद्ध्येयमित्येतावन्मात्रपरत्वात्तद्वाक्यस्य। यद्वा जगन्जन्मादिकारणत्वं विशिष्टब्रह्मणि विशेषणभूतं लक्षणम्। शुद्धब्रह्मणस्तूपलक्षणलक्षणमित्यङ्गीकारेपि न दोषः ॥

नन्वेतावता जन्महेतुत्वं स्थितिहेतुत्वं लयहेतुत्वमिति ब्रह्मणो लक्षणत्रयमुक्तं भवति। प्रत्येकलक्षणत्वस्यैवानति-प्रसक्तत्वेनेतरलक्षणद्वयं व्यर्थमेवेति चेन्न; लक्ष्याकारनिश्चयार्थमेवोक्तत्रयस्य लक्षणत्वोपपत्तेः। बृहत्वमेव हि लक्ष्याकारः। जन्महेतुत्वमात्रस्य लक्षणत्वे स्थित्यादिहेतुत्वस्यान्यनिष्ठत्वशङ्कापि स्यात्। ततश्च स्थित्यादिहेतुत्वोपयुक्तज्ञानशक्त्यादीनां ब्रह्मण्यसिध्या लक्ष्याकाररूपबृहत्वनिश्चयो न स्यात्। लक्ष्याकारविशेषनिर्णयार्थं हि लक्षणकथनम्। अत एकैकलक्षणेन तन्निर्णयो न सम्भवतीति त्रितयस्य लक्षणत्वमङ्गीकार्यम्। नन्वेतावतापि मोक्षहेतुत्वानुक्त्या तदनुगुणलक्ष्याकारासिद्धिरिति चेन्न। यत्प्रयन्तीत्यत्र प्रयन्तीत्यस्य शत्रन्तत्वं स्वीकृत्य प्रयन्ति = प्रियमाणानि सन्ति यत्र लीयन्त इत्यर्थस्वीकारात् प्राकृतलयस्येवात्यन्तिकलयस्यापि ग्रहणेन मोक्षकारणत्वोक्तेः तदनुगुणाकारसिद्धिरिति तादृशबृहत्वमपि सिध्यतीति न दोषः। यद्वा प्रयन्तीति न शत्रन्तं क्रियापदम्। तेन मोक्षः। अभिसंविशन्तीति प्रलयः। एकीकृतत्य प्रवेशः संवेशः, लयः। अत्र पक्षे यच्छब्दस्यावृत्तिः। वाक्यचतुष्टयम्। तदनुगुणगुणरूपबृहत्वसिध्या लक्ष्यसर्वाकारनिर्णयोपपत्तेः। वस्तुतः व्यवच्छेद्यासम्भवप्रयुक्तलक्षणवैयर्थ्यापादनं न युक्तम्। बुद्धिवैशद्यार्थं तथोक्तिसम्भवात्।

ननु लक्षणस्येतरभेदानुमितिजनकत्वेन ब्रह्मणि स्वेतरभेदे साधनीये लक्षणस्य हेतुत्वेन तत्र हेतुघटकदलानां वैयर्थ्यं दुर्वारमेव। व्यभिचारवारकतया सार्थक्याभावेन व्याप्यत्वासिद्धेरिति चेन्न जन्मस्थितिलयसमुदायहेतुत्वस्य लक्षणत्वेन तस्यैवेतरभेदानुमाने हेतुत्वेन च व्याप्यत्वासिद्ध्यसम्भवात्। स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तरघटितधर्मस्य हि व्याप्यतावच्छेदकत्वं न सम्भवति। अत्र च जगज्जन्मादिसमुदायनिरूपितकारणतात्वसामानाधिकरणत्वस्य जन्मनिरूपित-कारणतात्वे सत्वेपि तादृशजन्मनिरूपितकारणतात्वघटितत्वाभावेन समुदायनिरूपितकारणतात्वस्य व्याप्यतावच्छेद-कत्वं भवत्येव। जन्मादिनिरूपितकारणतात्वस्य समुदायनिरूपितकारणतात्वघटकत्वे हि अस्य तद्घटितत्वसम्भवः। घटकत्वमेव दुरुपपादम्। समुदायनिरूपितकारणतात्वघटकत्वं हि तादृशकारणतावत्वविषयिताव्यापकविषयितानिरूप-कत्वम्। जन्मादिनिरूपितकारणतात्वशरीरे जन्मादीनां निरूपितत्वसम्बन्धेन विशेषणत्वाज्जन्मादिनिष्ठसमुदायत्वाश्रय-निरूपितकारणतात्वशरीरे च जन्मादीनां समुदायत्वे आधेयतासम्बन्धेन विशेषणत्वाच्च। जन्मादिसमुदायनिरूपितकारणता-त्वमित्याकारकज्ञाने जन्मादिनिरूपितकारणतात्वविषयताविरहेण घटकत्वासम्भवात्। अतः समुदायनिरूपितकारणता-त्वस्य व्याप्यतावच्छेदकत्वसंभवान्नेतरभेदानुमाने व्याप्यत्वासिद्धिः। ब्रह्मनिष्ठकारणतानिरूपितकार्यतासमुदायनिष्ठैवेति सूचनायैव सूत्रकारेणापि जन्मादीत्येकवचनान्ततयोपादनं कृतम्। भाष्यकारेणापि सृष्टिस्थितिप्रलयमिति च विवृतम्।

अत्रेदमवधेयं - पर्वतो वह्निमान् प्रमेयादित्यादौ प्रमेयत्वावच्छिन्ने धूमे व्याप्तिसत्वात्तस्यापि सद्धेतुत्वापत्तिः। तद्वारणाय व्याप्यतायां हेतुतावच्छेदकावच्छिन्नत्वावगाहिज्ञानमेवानुमिति कारणमिति वक्तव्यम्। धूमो वह्निव्याप्य इति ज्ञाने व्याप्यतायां धूमत्वस्यैव धर्मिपारतन्त्र्येणावच्छिन्नत्वसंबन्धेन प्रकारतया भानाद्धूमस्यैव हेतुत्वं न तु प्रमेयत्वावच्छिन्न-धूमस्य। प्रमेयत्वस्यातिप्रसक्तत्वेन वह्निव्याप्यं प्रमेयमिति व्याप्त्यसंभवान्न तस्य व्याप्यतावच्छेदकत्वम्। एवं पर्वतो बह्निमान् नीलधूमादित्यादौ धूमत्वापेक्षया नीलधूमत्वस्य गुरुत्वात् व्याप्यतावच्छेदकत्वासंभवात्तत्रापि न सद्धेतुत्वम्

इति पूर्वपक्ष्याशयः । सिद्धान्तिनस्त्वेवमाशयः - गुरुधर्ममात्रस्य व्याप्यतावच्छेदकत्वानभ्युपगमे पर्वतो बह्निमान् धूमप्रागभावादित्यादेः सद्धेतुत्वं न स्यात् । धूमत्वापेक्षया धूमप्रागभावत्वस्य गुरुत्वेन व्याप्यतानवच्छेदकत्वात् । तस्य च सद्धेतुत्वस्य नैयायिकैरभ्युपगमेन इष्टापत्यसम्भवात् । अतः स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तराघटितस्यैव व्याप्यतावच्छेदकत्वमङ्गीकार्यम् । धूमत्वस्य धूमप्रागभावत्वसमानाधिकरणत्वविरहान्न दोषः । प्रकृतेपि जन्मनिरूपितकारणतात्वे समुदायनिरूपितकारणतान्वसामानाधिकरण्यसत्वेपि समुदायनिरूपितकारणतात्वस्य जन्मनिरूपितकारणत्वत्वघटितत्वाभावेन न व्याप्यतावच्छेदकत्वहानिः । नीलधूमत्वादेस्तु स्वसमानाधिकरणतादृशधूमत्वघटिततया न व्याप्यतावच्छेदकत्वम् । अपि च लघोर्व्याप्यतावच्छेदकत्वसम्भवे गुरोरवच्छेदकत्वं न सम्भवतीति नियमोऽप्यनुपपन्नः । तथा सति पृथित्ववान् घ्राणग्राह्यगुणात्, भूतपदवाच्यः वह्निरिन्द्रियग्राह्यविशेषगुणात् इत्यादावपि व्याप्यतावच्छेदकत्वाभावप्रसङ्गात् । गन्धत्वशब्दत्वयोः लघुभूतयोः स्वसमानाधिकरणयोरवच्छेदकत्व सम्भवात् ॥

अपि च व्यर्थविशेषणत्वे व्याप्यत्वं नास्तीति वक्तुमपि न शक्यते । आकाशादिकं निरवयवं नित्यत्वादित्यत्र यत् सावयवं तदनित्यं यथा घटादिकम् इति व्यतिरेक्युदाहरणं वाच्यम् । सावयवत्वं चावयवजन्यत्वम् । एतद्व्यपकत्वं प्रागभावप्रतियोगित्वरूपानित्यत्वम् । तथैव व्यतिरेकव्याप्तिराश्रीयते । अत्र जन्यत्वावच्छिन्नस्यैवानित्यत्वव्याप्यतया अवयवजन्यत्वावच्छिन्नस्य व्यर्थविशेषणघटिततया व्याप्यत्वासम्भवात् । निरवयवत्वरूपसाध्यतायां यत्सावयवं तदनित्यमित्येव व्यतिरेक्युदाहरणं, न तु यज्जन्यं तदनित्यमिति सर्वसम्मतम् । अन्यथा जन्यत्वाभाव एव साधयितुं शक्येत । न त्ववयवजन्यत्वरूपसावयवत्वाभावंरूपनिरवयत्वं सिषाधयिषितं न सिद्ध्येत् । अनित्यत्वनिवृत्तौ जन्यत्वाभावस्यैवनिवृत्तेः । तद्धर्मावच्छिन्नव्याप्यनिरूपितव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभाववत्ताज्ञानस्यैव तद्धर्मावच्छिन्नप्रतियोगिताकाभावानुमितिहेतुत्वात् । यज्जन्यं तदनित्यमिति व्याप्तिस्वीकारे जन्यत्वत्वावच्छिन्नव्याप्यतानिरूपितानित्यत्वनिष्ठा व्यापकता, तदवच्छेदकधर्मरूपानित्यत्वत्वावच्छिन्नप्रतियोगिताकाभाववत्ताज्ञानं नित्यत्वज्ञानम् । तच्च जन्यत्वावच्छिन्नप्रतियोगिताकानुमितिमेव जनयेत् । न तु सावयवत्वाभावरूपनिस्वयवत्वानुमितिम् । यदवयवजन्यं तदनित्यमित्युक्तौ तु अवयवजन्यत्वत्वस्यैव व्याप्यतावच्छेदकत्वात्तादृशव्याप्यतानिरूपितव्यापकतावच्छेदरूपानित्यत्वत्वावच्छिन्नप्रतियोगिताकाभाववत्ताज्ञानं सावयवत्वत्वावच्छिन्नप्रतियोगिताकाभावरूपनिरवयवत्वानुमितिं जनयेत् । एतेन स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तराघटितस्यैव व्याप्यतावच्छेदकत्वमिति सम्भवप्रसङ्गात् । अत उक्तरीत्या नीलधूमत्वस्यापि व्याप्यतावच्छेदकत्वमकामेनापि स्वीकार्यम् । तदिदं सर्वं न्यायसिद्धाञ्जने ईश्वरपरिच्छेदे तद्व्याख्याने च स्पष्टमिति ।

सकलेतरव्यावृत्तं स्वरूपमभिधीयत इत्यनेन सत्यत्वादेस्स्वरूपलक्षणत्वं जन्मादिहेतुत्वस्य विशिष्टलक्षणत्वञ्च सूचितम् । ब्रह्मस्वरूपस्य निर्विकारत्वेन स्वरूपपरिणामासम्भवाद्विशिष्टस्यैवोपादानत्वस्य वक्तव्यतया जगज्जन्मादिहेतुत्वस्य कालप्रकृतिचेतनविशिष्टब्रह्मलक्षणत्वावश्यकत्वाच्च । एतेन जगज्जन्मादिहेतुत्वलक्षणेनैवेतरविलक्षणतया स्वरूपावगतिसम्भवात्सत्यत्वादिलक्षणमनपेक्षितमिति शङ्का निर्व्यूढा । ब्रह्मणो जगत्कारणत्वोक्तौ कारणत्वेन लोकदृष्टस्य जडत्वाल्पज्ञत्वादिदर्शत्वेन तद्वद्ब्रह्मणोपि तथात्वशङ्काव्युदासाय स्वरूपलक्षणस्य प्रवृत्तत्वाच्च । अपि च जन्मादिहेतुत्वलक्षणेन सकलेतरव्यावृत्ततया स्वरूपावगतिरपि न सम्भवति । जगज्जन्मादिहेतुत्वं हि व्यक्त्यन्तरेष्वसम्भावितधर्मः । तद्योगाद्ब्रह्मणो व्यक्त्यन्तरान्यत्वसिद्धावपि व्यक्त्यान्तरसजातीयत्वशङ्काया अवारणात् । व्यक्यन्तरजातीयासाधारणधर्मानन्वयेनैव तच्छङ्काया वारणीयत्वात् । यथा घटादेर्घटत्वादिसंस्थानविशेषात्स्वेतरवैलक्षण्यसिद्धावपि पृथिवीजातीयासाधारणधर्मरूपगन्धवत्वसत्त्वेन पृथिवीजातीयत्वं, तादृशधर्माभावेन च जलादिषु पृथिवीजातीयत्वापगमः । तथैव चेतनादिजातीयासाधारणधर्मानन्वयरूपहेतुनैव तत्तजातीयत्वशङ्काया वारणमिति असाधारधर्मानन्वयप्रतिपादनाय सत्यमित्यादेः प्रवृत्तत्वमिति न वैयर्थ्यम् । तथा च व्यक्त्यन्तरान्यत्वं तद्विजातीयत्वमित्युभयविधव्यावृत्तिसिध्यै लक्षणद्वयमिति न विरोधः ॥

**'यतो वा इमानि भूतानि जायन्ते' इत्यादिकारणवाक्येन प्रतिपन्नस्य जगज्जन्मादिकारणस्य ब्रह्मणः सकलेतरव्यावृत्तं स्वरूपमभिधीयते - 'सत्यं ज्ञानमनन्तं ब्रह्म' इति। तत्र सत्यपदं निरूपाधिकसत्तायोगि ब्रह्माऽऽह। तेन विकारास्पदमचेतनम्, तत्संसृष्टश्चेतनश्च व्यावृत्तः; नामान्तरभजनार्हावस्थान्तरयोगेन तयोर्निरुपाधिकसत्तायोगरहितत्वात्। ज्ञानपदं नित्यासङ्कुचितज्ञानैकाकारमाह। तेन कदाचित्सङ्कुचितज्ञानत्वेन मुक्ता व्यावृत्ताः। अनन्तपदं देशकालवस्तुपरिच्छेदरहितं स्वरूपमाह।**

ननु सत्यानन्तपदाभ्यां विकारशून्यत्वपरिच्छेदरहितत्वबोधनाद्ब्रह्मणि अन्यजातीयासाधारणधर्मरूपविकारपरिच्छेदकत्वरूपान्यजातीयासाधारणधर्मानन्वयसिद्धावपि ज्ञानमित्यनेन कथं तादृशधर्मानन्वयलाभ इति चेत्? ज्ञानशब्दस्य नित्यासङ्कुचितज्ञानैकाकारार्थकत्वेन कदाचित्सङ्कुचितज्ञानैकाकारत्वरूपान्यजातीयासाधारणधर्मानन्वयस्य ब्रह्मणि प्रतिपादनेनानुपपत्त्यभावात् ॥

वस्तुतो ब्रह्मण्यवस्थाश्रयत्वरूपोपादानत्वस्य सङ्कल्पाश्रयत्वरूपनिमित्तत्वस्यचाभ्युपगमेन, अचेतनस्येव स्वरूपान्यथाभावोऽस्तु, बद्धस्य चेतनस्येव हेयविकारास्पदत्वमस्तु, मुक्तस्येव कादाचित्कविकासोऽस्तु नित्यस्येव परिच्छिन्नगुणकत्वमस्तु इति शङ्कायास्सम्भवेन अचेतन-बद्ध-मुक्त-नित्यजातीयत्वशंका तथैवावतिष्ठत इति तत्तज्जातीयत्वव्यञ्जकधर्मान्वयाधीनतत्तज्जातीयत्वशंकानिराकरणार्थं सत्यदिलक्षणस्यावश्यकता। अनेन च सत्यज्ञानादिवाक्येन तत्तज्जातीयताव्यावृत्तिस्स्वरसत एव सिद्ध्यतीति बोध्यम्। अयमेवार्थ उत्तरश्रीभाष्यसूक्त्या स्पष्टीकृतः।

**निरूपाधिकसत्तायोगित्वं** = कर्माप्रयोज्यकालिकसम्बन्धावच्छिन्नाधिकरणतानिरूपकत्वम्। चैत्रादिशरीरावच्छिन्नजीवनिरूपितकालिकसंबन्धावच्छिन्नाधिकरणताया आयुर्नामककर्मप्रयोज्यत्वात् घटत्वाद्यवस्थाविशिष्टद्रव्यनिरूपिताधिकरणतायाश्च फलभोक्तृजीवकर्मप्रयोज्यत्वाच्च तदप्रयोज्याधिकरणतानिरूपकत्वाभावाद् व्यावृत्तिः। यद्वा - निरुपाधिकसत्तायोगित्वं स्वभिन्नत्वस्वसामानाधिकरण्योभयसम्बन्धेन परिणामविशिष्टपरिणामाभाववत्वम्। अभावप्रतियोगितावच्छेदकसम्बन्धोऽपृथक्सिद्धिस्वाश्रयज्ञानापृथक्सिद्ध्यन्तरसम्बन्धः। यद्वाऽपृथक्सिद्धिस्वाश्रयज्ञानापृथक्सिद्ध्यन्यतरसम्बन्धावच्छिन्नकर्मप्रयोज्यविकाराभाववत्वं तत्। **नामान्तरेति**। कर्मप्रयुक्तेत्यादिः। अन्यथा ब्रह्मणोपि स्थूलचिदचिच्छरीकत्वाद्यावस्थासत्वेऽपि न क्षतिः। ज्ञानपदार्थमाह - **ज्ञानमिति**। नित्यासङ्कुचितं ज्ञानमेक आकारः - असाधारणधर्मो यस्य तदित्यर्थः। यद्यपि भाष्ये पूर्वं 'सत्यं ज्ञानमि'त्यादिकाश्च ज्ञानैकनिरूपणीयतया स्वयम्प्रकाशतया च ज्ञानस्वरूपतां प्रतिपादयन्ति इति ज्ञानपदस्य ज्ञानगुणकत्वज्ञानरूपत्वाभिप्रायकतयाऽर्थो वर्णितः, अथाप्यत्र ज्ञानगुणकत्वपरतयाऽभिधानं व्यावृत्तिबोधनप्रकरणत्वात्तदौपयिकार्थाभिधानाभिप्रायकमिति मन्तव्यम्। न हि स्वरूपस्य ज्ञानत्वोक्त्या मुक्तव्यावृत्तिसम्भवः। अचेतनव्यावृत्तिस्तु सत्यपदेनैव कृतेति नैतेन तद्वारणमपेक्षितम्। नित्यासङ्कुचितज्ञानैकाकारमित्यत्र ज्ञानशब्दस्य भावप्रधाननिर्देशमभ्युपगम्य तादृशज्ञानत्वमद्वारकं धर्मद्वारकं चाकारो यस्येति गतिकल्पनं तु क्लिष्टम्। तथा सति कदाचित्सङ्कुचितज्ञानत्वेन मुक्ता व्यावृत्ता इति भाष्यास्वारस्यमपि। वस्तुतो ज्ञानपदस्यान्तोदात्तत्वेन अर्शआद्यजन्तत्वमिति ज्ञानवत्वार्थकत्वमेव स्वरसश्च ॥

**अनन्तपदमिति**। देशपरिच्छेदरहितत्वम्। इदमिहास्ति अन्यत्र नेति परिच्छेत्तुमयोग्यत्वमत्यन्ताभावाप्रतियोगित्वम्। ब्रह्मणो व्यापित्वेनोक्तमत्यन्ताभावाप्रतियोगित्वमुपपन्नम्। कालपरिच्छेदरहितत्वम् इदमिदानीं नान्यदेति परिच्छेदायोग्यत्वं प्रागभावाप्रतियोगित्वरूपम्। ब्रह्मणो नित्यत्वादिदम्। वस्तुपरिच्छेदरहितत्वम् इदमिदं न भवतीति परिच्छेदानर्हत्वम्। सर्ववस्तुसामानाधिकरण्यार्हत्वम्। अत्र ब्रह्मगुणव्यतिरिक्तसर्ववस्तुसामानाधिकरण्यार्हत्वं तेन ब्रह्मणः स्वगुणान्प्रति शरीरित्वाभावेऽपि न क्षतिः। यद्वा वस्तुपरिच्छेदोऽपकर्षः, तदभावो वस्त्वपरिच्छेदः। निरतिशयप्रकर्ष-

**सगुणत्वात्स्वरूपस्य, स्वरूपेण गुणैश्चानन्त्यम् । तेन पूर्वपदद्वयव्यावृत्तकोटिद्वयविलक्षणास्सातिशय-स्वरूपस्वगुणा नित्या व्यावृत्ताः ; विशेषणानां व्यावर्तकत्वात् । ततः 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यनेन वाक्येन जगज्जन्मादिनाऽवगतस्वरूपं ब्रह्म(वस्तु)सकलेतरवस्तुविसजातीयमिति लक्ष्यत इति नान्योन्याश्रय-**

---

वत्वपर्यवसितम् । अत्र देशकालवस्तुपरिच्छिन्नाः घटपटादयः । देशवस्तुपरिच्छिन्नाः जीवादयः । वस्त्वपरिच्छन्नः काला-दिरिति विवेकः । उक्त श्च त्रिद्वयेकाभिस्तु सर्वं प्रमितमिह परिच्छित्तिभिर्ब्रह्मणोऽन्यदिति । उक्तमानन्त्यमुपपादयति - **सगुणत्वादिति** । अत्र स्वरूपस्यानन्त्यम् उक्तत्रिविधपरिच्छेदरहितत्वरूपं सम्भवति । गुणानां तु कालपरिच्छेदरहित-त्वमात्रम् । गुणानां ब्रह्मण्येव सत्वेन नान्यत्रेति परिच्छेत्तुं शक्यत्वात् । इदमिदं न भवतीति परिच्छेदार्हत्वाच्च । निरतिशय-प्रकर्षवत्वस्य वस्त्वपरिच्छेदरूपत्वे देशापरिच्छेदमात्रं न सम्भवतीति द्रष्टव्यम् ।

अत्रानन्तपदेनैवाचेतनादिसर्वव्यावृत्तिसम्भवादितरपदद्वयं व्यर्थमित्याशङ्कां नित्यमात्रव्यावर्तकविशेषणस्यैव लक्षणे निवेशेन परिहरन्नित्यव्यावृत्तिप्रकारमाह - **तेनेति** । तेन नित्यव्यावर्तकानन्त्यस्य लक्षणे प्रविष्टत्वेन । पूर्वेत्यादिना सत्यज्ञानपदाभ्यां नित्यव्यावृत्तिर्न भवतीत्युक्तम् । नित्यस्यापि निर्विकारत्वादसङ्कुचितज्ञानवत्वाच्च । **सातिशयेति** । स्वरूप-स्याणुत्वाद्गुणानां जगद्व्यापारानर्हत्वाद्भगवदिच्छाधीनत्वाच्च सातिशयत्वम् । स्वव्यधिकरणभगवन्नित्येच्छाधीनत्वाच्च तथात्वम् । अत्र नित्यव्यावर्तकमानन्त्यञ्च वस्त्वपरिच्छेदरूपम् । सच स्वव्यधिकरणावृत्तित्वस्वप्रयोज्यत्वोभयसम्बन्धेन सङ्कल्पविशिष्टहेयगुणाभावनिरूपितनिरवच्छिन्नाधिकरणत्वाभावः । नित्यवृत्तिहेयाभावीयनिरवच्छिन्नाधिकरणताया ईश्वर-सङ्कल्पप्रयोज्यत्वात्सङ्कल्पाधिकरणावृत्तित्वाच्चोभयसम्बन्धेन निरुक्ताधिकरणत्वाभावविरहादुक्ताधिकरणत्वाभावस्याचेन-बद्धमुक्तसाधारण्येन तद्व्यावृत्तये इतरविशेषणद्वयमिति । एवं व्यावृत्तिकथने हेतुमाह - **विशेषणानामिति** । अयं भावः - अद्वैतिमत इव सत्यादिपदानां नासत्यादिव्यावर्तकार्थकत्वम् । किन्तु सत्यपदस्य सत्तायोगिपरत्वम्, असङ्कोचान्निरूपाधि-कत्वं लब्धम् । ज्ञानपदस्यापि ज्ञानवत्परत्वम् । नित्यासङ्कुचितत्वं सङ्कोचप्रमाणाभावाल्लब्धम् । न विद्यते अन्तः = परिच्छेदो यस्येति व्युत्पत्त्या अनन्तपदस्य परिच्छेदराहित्यार्थपरत्वम् । एवञ्च विशेषणस्वाभाव्यादचेतनादिव्यावृत्तिः सिद्ध्यतीति ।

ननूभयविधवाक्यस्यापि लक्षणवाक्यत्वेन सत्यत्वज्ञानत्वादीनाम् असाधारणत्वेन च सत्यत्वादीनां लक्षणत्व-मनादृत्य जन्मादिकारणत्वमेव लक्षणमिति सूत्रकारः किमिति निर्दिदेशेति शङ्कामुपसंहारवाक्येन परिहरति - **तत इति** । **जगज्जन्मादिनाऽवगतस्वरूपमिति** । सत्यज्ञानादिवाक्यस्य कारणत्वाशङ्कितदोषपरिहारार्थं प्रवृत्तत्वेन प्रथमतः कारणत्व-प्रतिपत्तिरावश्यकी । अतश्शोधकवाक्यस्यास्य लक्षणवाक्यपूर्वकत्वेन प्रथमतो लक्षणवाक्यप्रवृत्त्या प्राधान्येन जगज्जन्मादि-कारणत्वं सूत्रितम् । एवं जिज्ञास्यब्रह्मप्रज्ञा । येन लक्षणेन जिज्ञास्यब्रह्मावगतिस्स्यात्तस्यैव लक्षणत्वं वक्तव्यम् । विशिष्ट-ब्रह्मण एवोपास्यत्वात्प्राप्यत्वाच्च जन्मादीनां विशिष्टलक्षणत्वाच्चानेन लक्षणवाक्येन जिज्ञास्यत्वविशिष्टब्रह्मावगतिर्युक्ता । सत्यत्वादेः स्वरूपलक्षणत्वेन तेन च जिज्ञास्यब्रह्मस्वरूपावगति र्न भवति । अन्यथा जिज्ञास्यब्रह्मप्रश्ने स्वरूपलक्षणे च कथ्यमाने स्वरूपस्यैव जिज्ञास्यत्वप्रसक्त्या विभूतेरुपास्यत्वाभावशङ्का स्यात् । विभूतिभूतजगज्जन्मादिहेतुत्वरूपे विशि-ष्टलक्षणे कथ्यमाने तु स्वरूपस्य तद्गुणादेर्वा नोपास्यानन्तर्भावशङ्का स्यात् । कारणत्वस्य निमित्तत्वोपादानत्वरूपतया तदपेक्षितत्वादेव गुणानां स्वतः प्राप्तेः । न च विभूतेरुपास्यत्वान्तर्भाव एव नास्तीति शक्यम् । उपासात्रैविध्यादित्यादिना तत्साधनात् । 'कारणं तु ध्येय' इति कारणत्वविशिष्टस्यैव ध्येयत्वोक्ते र्विशिष्टस्यैव कारणत्वेन विभूतेरुपास्यत्वावश्यकत्वात् । उक्तरीत्या मोक्षहेतुत्वस्यापि लक्षणे निविष्टत्वान्मोक्षस्य च देशविशेषावच्छिन्नानन्दरूपत्वात् त्रिपाद्विभूतेरपि उपास्य-त्वान्तर्भावो बोध्यः । एवमभिसन्धिमतैव सूत्राकृता 'जन्माद्यस्य यत' इति सूत्रितम् । निरवद्यत्वोक्तिश्शोधकवाक्याभि-प्रायेण । सर्वज्ञत्वाद्युक्तिः कारणत्वोपयोगितया ।

**णम्। अतस्सकलजगज्जन्मादिकारणं निरवद्यं सर्वज्ञं सत्यसङ्कल्पं सर्वशक्ति ब्रह्म लक्षणतः प्रतिपत्तुं शक्यत इति सिद्धम्॥**

**ये तु निर्विशेषवस्तु जिज्ञास्यमिति वदन्ति, तन्मते 'ब्रह्मजिज्ञासा जन्माद्यस्य यतः' इत्यसङ्गतं स्यात्; निरतिशयबृहत् बृंहणश्च ब्रह्मेति निर्वचनात्; तच्च जगज्जन्मादिकारणमिति वचनाच्च। एवमुत्तरेष्वपि सूत्रगणेषु सूत्रोदाहृतश्रुतिगणेषु चेक्षणाद्यन्वयदर्शनात्सूत्राणि सूत्रोदाहृतश्रुतयश्च न तत्र प्रमाणम्। तर्कश्च साध्यधर्माव्यभिचारिसाधनधर्मान्वितवस्तुविषयत्वान्न निर्विशेषवस्तुनि प्रमाणम्। जगज्जन्मादिभ्रमो(माः)यतः, तद्ब्रह्मेति स्वोत्प्रेक्षापक्षेऽपि न निर्विशेषवस्तुसिद्धिः; 'भ्रममूलमज्ञानम्, अज्ञानसाक्षि ब्रह्म' इत्यभ्युपगमात्। साक्षित्वं हि प्रकाशैकरसतयैवोच्यते। प्रकाशत्वं तु जडाद्व्यावर्तकं स्वस्य परस्य च व्यवहारयोग्यतापादनस्वभावेन भवति। तथा सति सविशेषत्वम्। तदभावे प्रकाशतैव न स्यात्। तुच्छतैव स्यात्॥**

इति जन्माद्यधिकरणम्॥ २॥

---

निर्विशेषवस्तुवादिमते उक्तसूत्रद्वयासाङ्गत्यमाह - **ये त्विति**। यच्छब्दः यथावस्थितज्ञानहेतुभूतभक्तिविशेषविरहाभिप्रायकः। तुशब्दस्तन्मतस्य मान्द्यत्वसूचनार्थः। **निरतिशयेति**। बृहतिधातुसहकृतोक्तश्रुतिविष्णुपुराणवचनाभ्यां सविशेषत्वबोधनान्निर्विशेषं ब्रह्मेति निर्वचनस्य तत्राकृतत्वाच्चेति भावः। अतो ब्रह्मजिज्ञासा इत्यत्र ब्रह्मशब्दः सविशेषपर एव। एवं सूत्रासाङ्गत्यकथनेन सूत्रोदाहृतश्रुतिगणासाङ्गत्यमपि फलितम्। किं बहुना ? तेषामपि सूत्राणां तदुदाहृतश्रुतीनां चासाङ्गत्यमेवेत्याह - **एवमिति**। ईक्षणादीत्यसाङ्गत्ये हेतुप्रदर्शनम्। अत्र मध्ये सूत्रद्वयं विहायोपरितनसूत्राणामसाङ्गत्यप्रदर्शनं 'शास्त्रयोनित्वात्, तत्तु समन्वयात्' इति सूत्रद्वयेपि 'जन्माद्यस्य यत' इति सूत्रोक्तार्थे एव शास्त्रप्रमाणकत्वस्य व्यवस्थापनात्तदसाङ्गत्यं स्पष्टमित्यभिप्रायेण। **ईक्षणाद्यन्वयदर्शनादिति**। ईक्षणादिचेतनैकान्तधर्मप्रतिपादनेन यथा प्रधानादि सदेवेति शास्त्रप्रतिपाद्यं न भवति तथैवेक्षणादिविशेषधर्मप्रतिपादनान्निर्विशेषं ब्रह्मापि शास्त्रप्रतिपाद्यं न भवतीति भावः। **तर्कश्चेति**। साध्यधर्मः - निर्विशेषत्वं साधनधर्मः - अनुभूतित्वादिः। यथा वह्न्यव्यभिचारिधूमान्वितस्य पर्वतादेः सविशेषत्वं तथा स्वसाध्याव्यभिचार्यनुभूतित्वान्वितस्य वस्तुनः हेतुसाध्याश्रयत्वेन न निर्विशेषत्वम्। अन्यथा तर्काभासप्रसङ्गादिति भावः॥

एवं सूत्रस्य पराभिमतयोजनायामपि निर्विशेषवस्त्वसिद्धिमाह - **जगदिति**। अत्र श्रुतिसूत्रस्मृतिषु क्वचिदपि विवर्तपरिणामानुगुणं न किंचिदपि पदमास्ति। केवलोत्प्रेक्षैव। सा च निष्फलेत्यभिप्रायेण - स्वोत्प्रेक्षापक्षेपीत्युक्तम्। एवमुत्प्रेक्षितार्थे जगज्जन्मादिभ्रमाधिष्ठानत्वस्य विशेषस्य ब्रह्मणि प्रसङ्गेन निर्विशेषत्वासिद्धिरूपदूषणस्य स्फुटत्वात् दूषणान्तरमाह - **भ्रममूलमिति**। यतः यस्मिन् ब्रह्मणि जगज्जन्मादिभ्रमोऽज्ञानेन भवति तद्ब्रह्मेति सूत्रार्थः। ततश्च तादृशभ्रमहेतुत्वमज्ञानस्य स्वीकृतम्। तादृशाज्ञानसाक्षित्वस्य ब्रह्मण्यस्वीकारे च भ्रमो न स्यात्, ब्रह्मस्वरूपस्यातिरोधानात्। ब्रह्मण अज्ञानसाक्षित्वे स एव विशेष इति निर्विशेषत्वं दूरोत्सारितमिति। प्रकाशकत्वस्य जडत्वनिवर्तकत्वोक्त्या विशेषणत्वमुक्तं भवति। **स्वरूपेति**। प्रकाशशब्दवाच्यत्वं चेत्यध्याहार्यम्। यद्वा प्रकाशत्वमित्यस्य वानुषङ्गः। प्रकाशशब्दवाच्यत्वं तदर्थः। अन्यथा साध्याविशेषप्रसङ्गात्। आपादनमेव स्वभावः। दीपादेः प्रकाशशब्दवाच्यत्वं हि स्वस्य घटादेरपि व्यवहारयोग्यतापादकत्वात्। एवं ब्रह्मणोपि तादृशस्वभावस्वीकारे सविशेषत्वमेवेत्याह - **तथा सतीति**। सविशेषत्वपरित्यागे प्रकाशत्वमेव न स्यादित्याह - **तदभाव इति**। तस्यापीष्टत्वे दूषणमाह - **तुच्छतैवेति**। निर्विशेषवस्तुनः प्रमाणान्तरावेद्यत्वात्प्रकाशत्वाभावेन स्वानुभवसिद्धत्वस्याप्यभावेन शशशृङ्गादिवत्तुच्छत्वमेवापद्येतेति भावः॥

अथ शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥

**जगज्जन्मादिकारणं ब्रह्म वेदान्तवेद्यमित्युक्तम्। तदयुक्तम्। तद्धि न वाक्यप्रतिपाद्यम्, अनुमानेन सिद्धेरित्याशङ्क्याह -**

**शास्त्रयोनित्वात् ॥ १ । १ । ३ ॥**

**शस्त्रं यस्य योनिः कारणं प्रमाणम्, तच्छास्त्रयोनि ; तस्य भावः शास्त्रयोनित्वम्। तस्माद्ब्रह्मज्ञान-कारणत्वाच्छास्त्रस्य, तद्योनित्वं ब्रह्मणः। अत्यन्तातीन्द्रियत्वेन प्रत्यक्षादिप्रमाणाविषयतया ब्रह्मणश्शास्त्रैक-प्रमाणकत्वादुक्तस्वरूपं ब्रह्म, 'यतो वा इमानि भूतानि' इत्यादिवाक्यं बोधयत्येवेत्यर्थः।**

**ननु - शास्त्रयोनित्वं ब्रह्मणो न सम्भवति, प्रमाणान्तरवेद्यत्वाद्ब्रह्मणः। अप्राप्ते तु शास्त्रमर्थवत्। किं तर्हि तत्र प्रमाणम्? न तावत्प्रत्यक्षम्।**

---

शास्त्रयोनित्वाधिकरणम्

उत्तरसूत्रमवतारयति - **जगदिति**। अत्र चाक्षेपसङ्गतिः। **तद्धीति**। हिः स्वमतप्रसिद्धिमवलम्ब्य। यद्वा हिः अवधारणे भिन्नक्रमः। नैव भवतीत्यर्थः। सामान्यतो वाक्यप्रतिपाद्यत्वस्यैवासम्भवेन वाक्यविशेषरूपवेदान्तप्रतिपाद्यत्वं सुतरां न सम्भवति। **शास्त्रमिति**। 'तस्य हवा एतस्य महतो भूतस्य निश्श्वसितमेतद्यदृग्वेदो यजुर्वेद' इत्यादिश्रुत्यर्थो-पजीवनेन षष्ठीतत्पुरुषभ्रमनिवृत्त्यै बहुव्रीहिः प्रदर्शितः। प्रकृतानुपयुक्तमिति तदुपेक्षितम्। 'योनिश्च हि गीयते' इत्यादौ योनिशब्दस्योपादानवाचित्वदर्शनेपि प्रकृते बाधात्कारणमात्रपरत्वमेवेत्याशयेन योनिशब्दार्थमाह - **योनिः कारणमिति**। तत्राप्युत्पत्तिकारणत्वं बाधितमिति प्रमाणमित्युक्तम्। योनिशब्दो ज्ञानकारणत्वपरः। उत्पादके ज्ञापके च हेतुशब्दप्रयोगात् योनिशब्दस्य हेतुत्वार्थकत्वाज्ज्ञानहेतुत्वार्थपरत्वं प्रामाणिकमेवेति भावः। ब्रह्मणः शास्त्रवेद्यत्वसाधनाय उक्तहेतोः साध्या-विशिष्टतां परिहरन् सूत्रतात्पर्यमाह - **अत्यन्तेति**। ब्रह्मस्वरूप-तल्लिङ्ग-तल्लिङ्गानाश्चेन्द्रियसम्बन्धाभावाभिप्रायेणातीन्द्रियेति भाषितम्। 'सामान्यतस्तु दृष्टात्' इत्युक्तश्लोकाभिप्रायेण वा। प्रत्यक्षादिप्रमाणं - प्रत्यक्षादिज्ञानम्। अब्भक्ष इतिवदवधारण-गर्भः शास्त्रयोनिशब्द इत्यभिप्रायेण एकशब्दः प्रयुक्तः। अनेन साध्याविशिष्टत्वशङ्का परिहृता। तथा च ब्रह्म यतो वा इत्यादिवाक्यप्रतिपाद्यं प्रमाणान्तरावेद्यत्वे सति वेद्यत्वादित्यनुमानं फलितम्। ब्रह्मणः शास्त्रप्रमाणकत्वमेव चतुस्सूत्र्यापि समर्थ्यते। सिद्धे व्युत्पत्त्यभावात् 'यतो वा' इत्यादिना लक्षणतः प्रतिपत्त्यसम्भवादनुमानवेद्यत्वेन शास्त्रस्य तत्राप्रामाण्या-द्ब्रह्मणोऽफलत्वेनाप्रमाण्याच्च पूर्वपक्षोत्थानात्। एवं शङ्कानिरासेन शास्त्रप्रमाणकत्वं प्रसाद्य शास्त्रस्यारम्भणीयत्वं समर्थ्यत इति शास्त्रारम्भसमर्थनरूपा चतुरस्सूत्रीति विवेकः ॥

एवं समासतः प्रतिपादितं ब्रह्मणः शास्त्रैकप्रमाणकत्वं विस्तरेणोपपादयितुं तदर्थमनुमानादेस्तत्राप्रामाण्यं प्रदर्शयितुं परोक्तमनुमानेन तत्सिद्धिप्रकारमनुवदति - **नन्विति**। **अप्राप्ते** = ब्रह्मणि प्रमाणान्तरेणाज्ञाते। **अर्थवत्** = अपूर्वार्थकत्वबोध-कत्वरूपार्थवत्। प्रत्यक्षव्यवच्छेदार्थं शास्त्रमित्युक्तम्। प्रत्यक्षं ह्यसत्यामपि बुभुत्सायामयत्नतः पदार्थग्राहि। ज्ञातार्थ-ज्ञापकत्वं न दूषणं निष्प्रयोजनार्थज्ञापकत्ववत्। शास्त्रन्तु न तथा। सत्यामेव बुभुत्सायां यत्नतोऽर्थज्ञापकत्वात्। अतः प्रमाणान्तराविषयार्थबोधकत्व एव शास्त्रस्य प्रामाण्यं स्यादित्याशयः। अत्र निरीश्वरमीमांसकः ईश्वरानभ्युपगमाच्छब्दस्येव प्रमाणान्तरस्यापि तत्राप्रामाण्यं मन्वानश्चोदयति - **किं तर्हीति**। किमिति क्षेपे। ईश्वरमभ्युपगम्य शब्दस्य तत्राप्रामाण्यं ब्रुवता प्रमाणान्तरं वक्तव्यम्। तच्च न घटते शास्त्रस्येवान्यस्यापि तत्राप्रमाणत्वादिति भावः। स्वयमेव तत्र प्रत्यक्षादेरप्रमाण-त्वमुपक्षिपति - **न तावदिति**। तावदित्यवधारणे। द्विविधस्यापि प्रत्यक्षस्य ब्रह्मण्यप्रवृत्त्या प्रत्यक्षसामान्यस्य तत्रासामर्थ्य-

**तद्धि द्विविधम्, इन्द्रियसम्भवं योगसम्भवञ्चेति । इन्द्रियसम्भवञ्च बाह्यसम्भवमान्तरसम्भवञ्चेति द्विधा । बाह्येन्द्रियाणि विद्यमानसन्निकर्षयोग्यस्वविषयबोधजननानीति न सर्वार्थसाक्षात्कारतन्निर्माणसमर्थपुरुष-विशेषविषयबोधजननानि । नाप्यान्तरम् ; आन्तरसुखदुःखादिव्यतिरिक्तबहिर्विषयेषु तस्य बाह्येन्द्रियानपेक्ष-प्रवृत्त्यनुपपत्तेः । नापि योगजन्यम् ; भावनाप्रकर्षपर्यन्तजन्मनस्तस्य विशदावभासत्वेऽपि पूर्वानुभूतविषय-स्मृतिमात्रत्वान्न प्रामाण्यमिति कुतः प्रत्यक्षता ? तदतिरिक्तविषयत्वे कारणाभावात् । तथा सति तस्य भ्रम-**

निश्चयादिति भावः । **तद्धीति** । हिशब्दः उक्तविभागातिरिक्तविभागस्यासत्त्वेनान्यप्रत्यक्षविभागस्य तत्र प्रामाण्यं ब्रूम इति शङ्कानिरासार्थः । सम्भवशब्दो जन्यपरः ।

इन्द्रियजन्यप्रत्यक्षमपि द्विविधमित्याह - **इन्द्रियेति** । बाह्यशब्दो बाह्येन्द्रियपरः । आन्तरशब्दो मनः परः । आन्तर-सुखदुःखाद्यात्मधर्मग्राहित्वेन तस्यान्तरत्वात् । **आन्तरसम्भवं** = मनोमात्रजन्यम् । अन्यथा इन्द्रियजन्यस्याप्यन्तरसम्भव-त्वापत्तेः । एवं पर्यवसितं बाह्यान्तरयोगजभेदेन प्रत्यक्षत्रैविध्यं मनसि निधाय बाह्येन्द्रियाणामीश्वरेऽप्रामाण्यं दर्शयति - **बाह्येन्द्रियाणीति** । असन्निकृष्टस्य प्रत्यक्षासम्भवमभिप्रेत्य विद्यमानसन्निकर्षेत्युक्तम् । अनेन देशकालसन्निकर्ष उक्तः । धर्माधर्मानुद्भूतरूपादिव्यवच्छित्त्यै योग्यशब्दः । विषयेन्द्रियनैयत्यमभिप्रेत्य - **स्वविषयेति** । **बोधः** = ज्ञानम् । सर्वार्थ-साक्षात्कारतन्निर्माणसमर्थत्वविशेषणमभिमतपुरुषविशेषस्य ऐन्द्रियकत्वासम्भवे हेतुप्रदर्शनायोक्तम् । अनभिमतपुरुष-विशेषस्य चक्षुरादिग्राह्यत्वसम्भवात् । त्वक्चक्षुषोः द्रव्यग्राहित्वेऽपि परमात्मग्राहित्वे सन्निकर्षाभावान्न ग्राहकत्वम् । घ्राणरसनश्रोत्राणां तु द्रव्यग्राहकत्वमेव नास्तीति नेश्वरग्राहकत्वमिति भावः । **नाप्यान्तरमिति** । सुखदुःखयोरान्तरत्वमात्म-वृत्तित्वात् । आदिशब्देनाऽऽत्मवृत्तीच्छाद्वेषयोस्स्वात्मनश्च ग्रहणम् ।

**प्रवृत्त्यनुपपत्तेरिति** । मनस आत्मवृत्तिसुखादिविषय एव बाह्येन्द्रियानपेक्षप्रवृत्त्या ब्रह्मणश्च बाह्यत्वेन तत्र मनः प्रवृत्तौ बाह्येन्द्रियापेक्षायाः आवश्यकत्वात् । बाह्येन्द्रियाणाञ्च ब्रह्मण्यप्रवृत्त्या न मनसोपि तत्र प्रवृत्तिरिति भावः । अत्रान्तर-सम्भवमिति इन्द्रियसम्भवस्य विभागकरणमन्वारोहेण । परमतानुवादरूपं वा तत् । मानसप्रत्यक्षमस्मदादीनां नास्तीति वृद्धसम्प्रदायात् । योगिनां तु योगजरूपं तत् । आत्मतद्धर्मभूतज्ञानस्य मानसप्रत्यक्षत्वमिति न शङ्क्यम् । तयोः स्वयम्प्रकाश-त्वात् । सुखदुःखेच्छाद्वेषप्रयत्नानाञ्च तद्धेतुभूतज्ञानविशेषरूपत्वात् । नित्यत्वाणुत्वादिविशिष्टात्मानुभवोपि शास्त्रसिद्ध इति न मानसत्वम् । संस्कारजन्यघटविषयकज्ञानमिव पूर्वानुभवविषयकज्ञानमपि स्मृतिरूपमेवेति न तस्यापि मानस-प्रत्यक्षत्वम् । आन्तरसुखदुःखादिव्यतिरिक्तेत्यादिकन्तु अन्वारोहेण परमतानुसारेण वा विकल्पितत्वात्तदुपपादकतयोक्त-मिति द्रष्टव्यम् । नैयायिकमते आत्मनो जडत्वाङ्गीकारान्मानसप्रत्यक्षस्यावश्यकता ।

**कुतः प्रत्यक्षतेति** । अयं भावः - योगजन्यज्ञानस्य न प्रत्यक्षत्वं पूर्वानुभूतपदार्थविषयकत्वात्स्मृतित्वमेव । प्रत्यक्ष-त्वव्यपदेशस्तु भावनाप्रकर्षपर्यन्तजन्मत्वात् । विशदावभासरूपत्वं वृक्षे वृक्षे च पश्यामीत्यादिवत्साक्षात्कारित्वव्यञ्जक-विषयतासदृशविषयतावत्वनिबन्धनम् । न हि योगजन्येज्ञाने पूर्वाननुभूतपदार्थोपि विषयीक्रियते, येन स्मृतित्वशङ्का उच्छिद्येतापि । अतस्तस्य प्रत्यक्षत्वस्यैवासंभवेन प्रमाणान्तरविभागत्वं सुतरां न युक्तम् । अतोऽनधिगताबाधितार्थग्राहि-त्वरूपप्रमाणत्वासम्भवान्नेश्वरे तत्प्रमाणं भवितुमर्हति । तद्धि द्विविधम् - इन्द्रियसम्भवं योगसम्भवञ्चेतीति मीमांसककृत-विभागः नैयायिकमतमनुसृत्य ॥

ननु योगजन्यज्ञानस्य पूर्वाननुभूतेश्वरादिविषयकत्वमपि स्वीक्रियत इति न स्मृतित्वं नाप्यप्रमाणत्वं तत्राह - **तदतिरिक्तेति** । नन्वस्तु कारणाभावेऽप्यतिरिक्तविषयकत्वं तत्राह - **तथा सतीति** । पूर्वाननुभूतार्थविषयकत्वे इन्द्रियसन्नि-

**रूपता । नाप्यनुमानं विशेषतो दृष्टं सामान्यतोदृष्टं वा । अतीन्द्रिये वस्तुनि सम्बन्धावधारणविरहान्न विशेषतो-दृष्टम् । समस्तवस्तुसाक्षात्कारतन्निर्माणसमर्थपुरुषविशेषनियतं सामान्यतोदृष्टमपि न लिङ्गमुपलभ्यते ।**

**ननु च - जगतः कार्यत्वं तदुपादानोपकरणसम्प्रदानप्रयोजनाभिज्ञकर्तृकत्वव्याप्तम् । अचेतनारब्धत्वं जगतश्चैकचेतनाधीनत्वेन व्याप्तम् । सर्वं हि घटादिकार्यं तदुपादानोपकरणसम्प्रदानप्रयोजनाभिज्ञकर्तृकं दृष्टम् । अचेतनारब्धमरोगं स्वशरीरमेकचेतनाधीनञ्च । सावयवत्वेन जगतः कार्यत्वम्(मिति) ॥**

---

कर्षादिकारणं वक्तव्यम् । इन्द्रियादिकं तु नेश्वरे प्रवर्तते । दोषवशात्तस्य स्वीकारे दोषमूलकत्वेन भ्रमत्वात्सर्वात्मनाऽप्रामाण्य-मेवेति भावः । अयमत्राभिसन्धिः - किं योगजन्यं ज्ञानमीश्वरान्यविषयकमीश्वरविषयकमपि वा । प्रथमे न तेनेश्वरसिद्धिः । द्वितीये तस्य पूर्वानुभूतपदार्थमात्रविषयकत्वे ईश्वरस्य पूर्वानुभवः कथम् ? शास्त्रेण पूर्वानुभवस्वीकारे तेनैव तत्सिद्ध्या योगजस्य तत्र प्रामाण्यकथनमनुपपन्नम् । शास्त्रेणेश्वरसिद्धिश्च भवतामप्यनिष्टा । स्वेनैव पूर्वानुभवश्चेदात्माश्रयः । योगज-स्याननुभूतपदार्थविषयकत्वस्याभ्युपगमे तत्र हेतुर्वाच्यः । कारणाभावेपि तत्स्वीकारे दोषमूलकत्वमेवायातमिति भ्रमत्वम् । अतो योगजन्यस्य नेश्वरे प्रामाण्यमिति । अनुमानस्यापि द्विविधस्येश्वरे न प्रवृत्तिरित्याह - **नापीति** । यत्र हेतुसाध्ययो र्व्याप्तिस्तत्र विशेषतोदृष्टम् । यत्र हेतुसाध्यसदृशयो र्व्याप्तिस्तत्र सामान्यतो दृष्टमिति भिदा । **सबन्धः** = व्याप्तिः । **नियतं** = व्याप्तम् ।

अयमाशयः - साध्यतावच्छेदकत्वाभिमतधर्मावच्छिन्ननिरूपितव्याप्तिकत्वेन ज्ञातं लिङ्गं = विशेषतो दृष्टं, यथा पर्वतो बह्निमान् धूमादिति वह्न्यनुमानम् । वह्नित्वं साध्यतावच्छेदकत्वेनाभिमतं तदेव धूमव्यापकतावच्छेदकञ्च । वह्नित्वपुरस्कारेणैव धूमे व्याप्तिग्रहात् । सामान्यतो दृष्टञ्च - साध्यतावच्छेदकत्वाभिमतधर्मव्यापकधर्मा-वच्छिन्ननिरूपितव्याप्तिकत्वेन ज्ञातं लिङ्गम् ॥ अनुष्णाशीतस्पर्शः द्रव्याश्रितः गुणत्वादित्यनुमानं सामान्यतोदृष्टम् । अत्र साध्यतावच्छेदकत्वेनाभिमतो धर्मः वायुत्वरूपः, तद्व्यापकधर्मो द्रव्यत्वरूपः, तदवच्छिन्ननिरूपितव्याप्तिः गुणत्वेहेतौ । द्रव्यत्वपुरस्कारेणैव गुणत्वे व्याप्तिः । यत्र यत्र गुणत्वं तत्र सर्वत्र द्रव्याश्रितत्वनियमात् । स्पर्शस्यापि गुणत्वेन द्रव्याश्रितत्वावश्यम्भावाद्द्रव्यान्तराणामसम्भवात् विलक्षणवायुसिद्धिरिति । अत्र च ईश्वरादेरतीन्द्रियत्वात्तन्नि-रूपितव्याप्तिः कुत्रापि हेतौ न सुग्रहा । क्षित्यङ्कुरादिकं सकर्तृकं कार्यत्वादिति सामान्यतो दृष्टानुमानस्यापि नात्र प्रवृत्तिः । किञ्चित्कर्तृकत्वसिद्धावपि सर्वेश्वररूपविशेषपर्यवसानं न सम्भवति । द्रव्यान्तरविलक्षणवायुसिद्धिवन्न जीव-विलक्षणेश्वरसिद्धिरित्यनुमानासम्भववादिन आशयः । एतत्सूचनायैव 'समस्तवस्तुसाक्षात्कारतन्निर्माण-समर्थपुरुषविशेषनियतम्' इत्यधिकमुक्तम् ।

एवं शास्त्रेणापीश्वरसिद्धिमनभ्युपगन्तारमनुमानादिप्रमाणस्याप्यप्रवृत्तिं ब्रुवन्तं मीमांसकं प्रति नैयायिकैकदेशी प्राह - **ननु चेति** । विवादाध्यासितं जगत् स्वोपादानोपकरणसम्प्रदानप्रयोजनाभिज्ञकर्तृकं कार्यत्वात् । 'विवादाध्यासितं जगत् एकचेतनाधीनम् अचेतनारब्धत्वात्' इत्यनुमानद्वयं विवक्षितम् । तत्र प्रथमानुमानेन सकर्तृकत्वसिद्धौ तस्य कर्तुरेकत्वसिध्यै द्वितीयानुमानप्रवृत्तिः । प्रथमानुमाने घटादिकार्यं दृष्टान्तः द्वितीयानुमाने अरोगस्वशरीरं दृष्टान्तः । पक्षैक-देशस्य घटादेः दृष्टान्तत्वं कथमित्यादि चोद्यानां परिहारोऽस्मदीये ब्रह्मसूत्रविमर्शग्रन्थे द्रष्टव्यः । अत्र हेत्वोरसिद्धिपरिहाराय प्रवृत्तं 'जगत् कार्यं सावयवत्वादि'त्यनुमानम् । **उपादानं** = परमाण्वादि । **उपकरणं** = धर्माधर्मादि । **सम्प्रदानं** = भोक्तृवर्गः । **सम्प्रयोजनं** = भोगस्य उपकारः । **तदभिज्ञः** = तत्साक्षात्कारी । पूर्वानुमानसिद्धकर्तुः एकत्वसिध्यै तावत्पर्यन्तस्य साध्य-त्वेनाभिमतत्वाच्च दृष्टान्तप्रदर्शनात्पूर्वमेव तत्साधकानुमानम् अचेतनेत्यादिनाऽभिहितम् । तत्र चकारः उक्तानुमानसमुच्चायकः । समुच्चितयोरनुमानयोः स्वाभिमतार्थसाधकत्वसूचको वा । हिदृष्टंशब्दाभ्यां सम्प्रतिपत्तिः सूचिता । अचेतनारब्धस्यापि रुग्णशरीरस्य परशरीरस्य च चेतनाधीनत्वाभावात्साध्यवैकल्यमिति अरोगस्वशरीरमित्युक्तम् । अत्र सर्वत्रापि, पक्षीकृत-

**उच्यते - किमिदमेकचेतनाधीनत्वम् ? न तावत्तदायत्तोत्पत्तिस्थितित्वम् ; दृष्टान्तो हि साध्यविकलस्स्यात् । न ह्यरोगं स्वशरीरमेकचेतनायत्तोत्पत्तिस्थिति ; तच्छरीरस्य भोक्तॄणां भार्यादिसर्वचेतनानामदृष्टजन्यत्वात्तदुत्पत्तिस्थित्योः । किञ्च शरीरावयविनः स्वावयवसमवेततारूपा स्थितिरवयवसंश्लेषविशेषव्यतिरेकेण न चेतनमपेक्षते । प्राणनलक्षणा तु स्थितिः पक्षत्वाभिमते क्षितिजलधिमहीधरादौ न सम्भवतीति पक्षसपक्षानुगतामेकरूपां स्थितिं नोपलभामहे । तदायत्तप्रवृत्तित्वं तदधीनत्वमिति चेत् - अनेकचेतनसाध्येषु गुरुतररथशिलामहीरुहादिषु व्यभिचारः । चेतनमात्राधीनत्वे सिद्धसाध्यता ।**

**किञ्चोभयवादिसिद्धानां जीवानामेव लाघवेन कर्तृत्वाभ्युपगमो युक्तः । न च जीवानामुपादानाद्यनभिज्ञ-**

---

जगति नित्यत्वेनाभ्युपगतानामाकाशात्मादीनां नान्तर्भावः, उक्तानुमानस्वीकर्तृमते तेषां निरवयवत्वादिति ध्येयम्। इतिः पूर्वपक्षसमाप्तिद्योतकः ।

**उच्यत** इति मीमांसकसमाधानम्। पाश्चात्येन बुद्धिस्थत्वात् द्वितीयानुमानं प्रथमं निरस्यते। अपि च किञ्चेत्यादिना वक्ष्यमाणस्य प्रथमानुमानदूषणस्य द्वितीयानुमानसाधारण्येनार्थसिद्धत्वात् द्वितीयानुमानासाधारणदूषणस्यादौ वक्व्यत्वमभिप्रेत्य प्रथमं द्वितीयानुमानं दूषयतीत्यपि बोध्यम्। पक्षदृष्टान्तसाधारणमेकचेतनाधीनत्वं दुर्वचमित्याह - **न तावदिति**। अत्रेमे विकल्पाः - किमेकचेतनाधीनत्वमेकचेतनायत्तोत्प्रत्तिमत्त्वं वा एकचेतनायत्तस्थितिमत्वं वा एकचेतानयत्तप्रवृत्तिमत्वं वा। आद्यद्वितीययोरपि एकचेतनायत्तत्वम् एकचेतनेच्छाधीनत्वम् एकचेतनादृष्टाधीनत्वम्। द्वितीये चेतनाधिष्ठिताचेतनोभयसाधारणावयवसमवायरूपा स्थितिः प्राणनरूपा वा विवक्षितेति । तत्रेच्छाधीनोत्पत्तिस्थितिमत्वरूपं तत् शरीरदृष्टान्ते नास्तीति साध्यवैकल्यरूपदूषणं स्पष्टमिति एकचेतनादृष्टाधीनोत्पत्तिस्थितिमत्वस्य साध्यवैकल्यरूपदूषणमाह - **दृष्टान्तो हीति**। **तच्छरीरस्येति**। प्रथमद्वितीयविकल्पसाधारणदूषणमुक्तम्। अथ प्रथमविकल्पे स्थितिशब्दार्थं विकल्पद्वारा दूषयति - **किञ्चेति**। अवयवसमवायरूपस्य तस्यावयवसन्निवेशमात्रापेक्षत्वेन चेतनापेक्षत्वाभावादेकचेतनायत्तस्थितिमत्वं न भवतीति । इदञ्च नैयायिकमतमनुसृत्य स्वमते समवायानानङ्गीकारात्। चेतनेन शरीरत्यागे शरीरावयवानां विशरणस्वीकाराच्चेतनानायत्तावयवसमवेततारूपस्थितिमत्वस्य स्वशरीरेऽभ्युपगमाच्च। वस्तुतोऽवयवसमवेततारूपायाः स्थितेरपि चेतनायत्तत्वं किंरूपम्? एकचेतनेच्छायत्तत्वं वा एकचेतनादृष्टायत्तत्वं वा। उभयमपि पूर्वोक्तरीत्यैव न भवति। इच्छायां सत्यामपि नाशात्, असत्यामपीच्छायां सत्वाच्च। अनेकादृष्टायत्तत्वाच्चेति बोध्यम्। अनेन साध्यवैकल्यं प्रदर्शितिम्। स्थितेः प्राणनरूपत्वेप्युक्तदोषस्य स्फुटत्वाद्बाधरूपदूषणमाह - **प्राणनेति**। **प्राणनलक्षणाः** = पञ्चवृत्तिप्राणसहितत्वरूपा। नोपलभामहे इति सर्वसंमतिः प्रदर्शिता। तृतीयविकल्पं दूषयति - **तदिति**। **साध्येषु** = प्रवर्त्येषु। अनेकचेतनसाध्येष्वित्यनेन व्यभिचारनिरूपकाधिकरणस्य साध्याभाववत्वमुक्तम्।

नन्वेकचेतनाधीनत्वभित्यत्र एकत्वमपि घटयित्वा न साध्यते। किन्तु सामान्यतश्चेतनाधीनत्वमतो न दोष इत्यत्राह - **चेतनेति**। **सिद्धसाद्ध्यतेति** - अनेकचेतनाधीनत्वस्यास्माभिरप्यभ्युपगमादिति भावः। इदमुपलक्षणम्। सकर्तृकत्वानुमानेन सिद्ध्यतः कर्तुरेकत्वसाधनाय हीदमनुमानम्। चेतनमात्राधीनत्वे साध्यतयाऽङ्गीक्रियमाणे ईश्वरानभ्युपगन्त्रस्मन्मतरीत्याऽनेकचेतनसाधनपर्यवसानेनार्थान्तरञ्चेति। प्रथमानुमानेन सिद्ध्यतः कर्तुरेकत्वे लाघवमिति लाघवज्ञानसहकृतपरामर्शादेककर्तृकत्वसिद्धिरिति द्वितीयानुमानस्य दुष्टत्वेपि न दोष इति मन्वानं प्रत्यस्मन्मत एव लाघवमिति प्रथमानुमान एव दूषणमाह - **किञ्चेति**। **युक्त** इति। ईश्वरस्य कर्तृत्वाभ्युपगमे हि कर्तृभूतानेकेश्वरकलपनाप्रयुक्तगौरवपरिहाराय लाघवसहकृतपरामर्शादेकेश्वरसिद्धिरिति वक्तुं शक्यम्। स एव न सम्भवति। 'क्लृप्तकल्प्ययो र्मध्ये युक्तः क्लृप्तपरिग्रह' इति न्यायेनोभय-

**तथा कर्तृत्वासम्भवः ; सर्वेषामेव चेतनानां पृथिव्याद्युपादनयागाद्युपकरणसाक्षात्कारसामर्थ्यात् ; यथेदानीं पृथिव्यादयो यागादयश्च प्रत्यक्षमीक्ष्यन्ते । उपकरणभूतयागादिशक्तिरूपापूर्वादिशब्दवाच्यादृष्टसाक्षात्कारा-भावेऽपि चेतनानां न कर्तृत्वानुपपत्तिः ; तत्साक्षात्कारानपेक्षणात्कार्यारम्भस्य । शक्तिमत्साक्षात्कार एव हि कायारम्भोपयोगी । शक्तेस्तु ज्ञानमात्रमेवोपयुज्यते ; न साक्षात्कारः । न हि कुलालादयः कार्योपकरण-भूतदण्डचक्रादिवत्तच्छक्तिमपि साक्षात्कृत्य घटमणिकादिकार्यमारभन्ते । इह तु चेतनानामागमावगत-यागादिशक्तिविशेषाणां कार्यारम्भो नानुपपन्नः ।**

**किञ्च यच्छक्यक्रियं शक्योपादानादिविज्ञानञ्च, तदेव तदभिज्ञकर्तृकं दृष्टम् । महीमहीधर महार्णवादि**

---

वादिसिद्धजीवानामेव विश्वामित्रादिनीत्या कर्तृत्वाभ्युपगमसम्भवात् । न च जीवेष्वेकस्य कर्तृत्वासम्भवाद्बहुजीवानां कर्तृत्व-मभ्युपगन्तव्यमिति कर्तुरनेकत्व-कल्पनं गौरवदोषमावहत्येवेति वाच्यम् । धर्मिकल्पनतो वरं धर्मकल्पनमिति न्यायेन धर्मिणः कर्तुर्जीवस्य सिद्धत्वेन तत्रानेकत्वरूपधर्मकल्पनस्यादोषत्वात् । वस्तुतः 'सति धर्मिणि धर्माश्चिन्त्यन्ते' इति न्यायेनेश्वररूपकर्तृसिद्धौ हि तस्यैकत्वानेकत्वविचारः, उक्तानुमानस्य जीवमादायार्थान्तरादीश्वररूपधर्मिण एवासिद्धेः' ॥

ननु जीवानां कर्तृत्वसंभवे हि लाघवैनेश्वरनिषेधेन कर्तृत्वाभ्युपगमो युक्तः । स एव न सम्भवति । तेषामुपादानाद्यन-भिज्ञानात् । न ह्यल्पज्ञानशक्तिमताम् उपदानाद्यभिज्ञत्वमपि शक्यशङ्कम् । न वोपादानाद्यनभिज्ञस्यापि कर्तृत्वं प्रामाणिकम् । मृदाद्युपादानानभिज्ञस्य घटादिकर्तृत्वादर्शनात् । अतो गत्यभावादुपादानाद्यभिज्ञस्य कस्यचित्कर्तुः सिद्धिर्दुर्वारैव । सम्भव-न्त्यां गतौ ह्यन्यस्य कल्पनमशक्यम् । न ह्यगतिस्थलेपि लाघवं शरणीकुर्वन्ति प्रामाणिका इत्याशङ्कायामाह - **न चेति** । **सर्वेषामेवेति** । अत्रावधारणमुपादानाद्यनभिज्ञत्वशङ्कामान्द्यद्योतनार्थम् । प्रत्यक्षत ईक्षणमिदानीमेव चेत् किमुत पूर्वकाल-वर्तिनामित्याश्येनाह - **यथेति** । 'जन्मसंस्कारविद्यादेश्शक्तेस्स्वाध्यायकर्मणोः । ह्रासदर्शनतो ह्रासस्सम्प्रदायस्य मीयताम्' इति ह्युदयनाचार्यः । उपादानादिसाक्षात्कारस्य सम्प्रत्येव सिद्धत्वे किमुत तदानींतनानामिति भावः । **पृथिव्यादय** इत्युपा-दाननिर्देशः । यागादय इत्युपकरणनिर्देशः । भोक्तृप्रयोजने तु प्रत्यक्षसिद्ध एवेति न प्रदर्शितम् ।

ननु जीवानां यागादिसाक्षात्कारसत्त्वेपि यागादिजन्यादृष्टशब्दवाच्यस्वात्मातिशयसाक्षात्काराभावेन न कर्तृत्वो-पपत्तिः । शक्तिरूपतत्साक्षात्कारस्यापि कार्योपयोगित्वादित्यत्राह - **उपकरणभूतेति** । यागादिशक्तीति यागादिजन्यशक्ती-त्यर्थकम् । **शक्तिमदिति** - अदृष्टरूपशक्तिजनकवस्तुसाक्षात्कार इत्यर्थः । अत्र मतुप् जनकत्वरूपसम्बन्धार्थकः । तर्ह्यसा-क्षात्कृतशक्तेः पुंसोपि कार्यकर्तृत्वं स्यादित्यत्राह - **शक्तेस्त्विति** । उक्तमर्थं दृष्टान्तेनोपपादयति - **न हीति** । दण्डादीनां साक्षात्कारः । तच्छक्तेस्तु ज्ञानमेव । न साक्षात्कारोऽप्यपोक्षितः तथाऽदर्शनादिति भावः ।

ननु शक्तेस्साक्षात्कारानपेक्षणेऽपि ज्ञानापेक्षाया आवश्यकत्वेन घटादिष्वन्वयव्यतिरेकबलात्तज्ज्ञानसम्भववत् यागादौ कथं तत्साक्षात्कार इत्यत्राह - **इह त्विति** । तुशब्दो दृष्टान्तदार्ष्टान्तिकयोः शक्यावगमहेतुवैलक्षण्यं व्यनक्ति । **आगमावगतेति** ज्योतिष्टेमेन स्वर्गकामो यजेतेत्यादौ ज्योतिष्टोमादियागस्य स्वर्गसाधनत्वबोधनेन तस्य स्वर्गजनकत्वरूप-शक्तिमत्वनिश्चयसम्भवो हि स्पष्टः । इदञ्च वेदस्यापौरुषेयत्वमभिप्रेत्य । अन्यथा पौरुषेयत्वे ईश्वरस्य चासिध्या ईश्वरान्य-कर्तृकत्वस्यैव वक्तव्यतया ईश्वरान्यजीवादेर्भ्रमप्रमादादिसम्भावनया तत्कृतवेदस्याप्रामाण्यबुध्या तेन यागादिगतशक्ति-विशेषनिश्चयासम्भवात् ।

एवं कार्यत्वहेतुकानुमाने सिद्धसाधनमुक्तम् । अथ कार्यत्वहेतोः सोपाधिकत्वं ब्रूते - **किञ्चेति** । शक्या क्रिया यस्येति तच्छक्यक्रियम् । शक्यमुपादानादिविज्ञानं यस्य तत् शक्योपादानादिविज्ञानम् । चकार उपाधित्वसूचकः । तदेव

**तु अशक्यक्रियमशक्योपादानादिविज्ञानश्चेति न चेतनकर्तृकम् । अतो घटमणिकादिसजातीयशक्यक्रिय-शक्योपादानादिविज्ञानवस्तुगतमेव कार्यत्वं बुद्धिमत्कर्तृपूर्वकत्वसाधने प्रभवति ।**

तदभिज्ञकर्तृकं दृष्टमित्यनेन उपाधेस्साध्यव्यापकत्वमुक्तम् । महीमहीधरेत्यादिना पक्षावृत्तित्वम् । साध्यव्यापकः पक्षावृत्ति र्ह्युपाधिः । उक्तयोश्चाभिज्ञकर्तृकत्वव्यापकत्वात् पक्षभूतमहीधरादिष्ववर्तमानत्वाच्चोपाधित्वम् । यथा धूमवान् वह्नेरित्यादौ ओर्द्रेन्धनसम्योगस्योपाधित्वेनोपाधिभूतार्द्रेन्धनसम्योगविशिष्टवह्नेरेव धूमव्याप्तत्वमिति साध्यव्यापकत्वं, न तु शुद्धवह्नेः । तद्वदत्राप्युपाधिभूतशक्यक्रियत्वादिविशिष्टवस्तुगतकार्यत्वस्यैव साध्यव्याप्तत्वात्साध्यव्यापकत्वं, न तु शुद्धकार्यत्वस्येति कार्यत्वहेतो र्व्याप्यत्वासिद्धिरिति हृदि निधाय प्राह - **अत** इति । यथा जपाकुसुमरूपोपधिगतलौहित्यं स्फटिके आरोप्य लोहितस्स्फटिक इत्युच्यते । तथोपाधिगतसाध्यव्याप्तिमारोप्य हेतौ हेतुस्साध्यव्याप्यत्वरूपव्याप्तिमान्साध्यव्याप्त इत्युच्यते ।

वस्तुतोऽविद्यमानमेव साध्यव्याव्यत्वं हेतौ आरोपितम् उपाधिगतम् । आद्रेन्धनरूपोपाधिगतं धूमव्याप्यत्वं वह्नौ आरोप्य वह्नेः हेतुत्वमुत्यते । वस्तुतो वह्नौ धूमव्याप्यत्वं नास्ति । धूमाभाववदयोगोलकवृत्तित्वात् वह्नेः । अत एव यथा जपाकुसुमस्योपाधित्वं तथा आन्र्द्रेन्धनसम्योगस्योपाधिशब्दवाच्यत्वम् । किञ्चिद्वस्तुगतधर्मस्यान्यत्रारोपणे तद्वस्तुन उपाधिशब्दवाच्यत्वं सर्वसम्प्रतिपन्नम् । अत एव प्राचीना उपाधेः साध्यव्याप्यत्वमपि स्वीकृत्य साध्यसमव्याप्तत्वमुशन्ति । यथा नवीनाः साध्यव्यापकत्वं साधनाव्यापकत्वं च स्वीकुर्वन्ति उपाधेः । हेतोः दुष्टत्वोपपादनाय साध्यव्यापकत्वमेव पर्याप्तम् । साध्यव्याप्यत्वांशो न दुष्टत्वोपपादनोपयुक्तः । परित्यजन्ति साध्यव्याप्यत्वाशं नवीना इति विवेकः । अत उपाधेरेव साध्यसमव्याप्तत्वादुपाधिगतं व्याप्तत्वं हेतुत्वेनाभिमते आरोपितमेवेति न साध्यसाधनहेतुरिति फलितम् । अदृष्टवज्जीवकर्तृकत्वव्यावृत्यै बुद्धिमत्कर्तृपूर्वकत्वमिति । जीवकर्तृकत्वसाधने तु न शक्यक्रियत्वादिकमुपाधिः । तस्य साध्यव्यापकत्वाभावादिति भावः । **प्रभवतीति** । अयमाशयः - शक्यक्रियत्वाद्युपाधेरभिज्ञकर्तकत्वरूपसाध्यव्यापकत्वात् पक्षेऽवर्तमानत्वाच्च, यो यद्व्यापकव्यभिचारी स तद्व्यभिचारीति न्यायेन अभिज्ञकर्तृकत्वव्यापकीभूतशक्यक्रियत्वा-द्युपाध्यभाववन्महीमहीधरवृत्तित्वात्कार्यत्वहेतोः प्रकृतसाध्यभूताभिज्ञकर्तृकत्वाभाववद्वृत्तित्वस्याप्यावश्यकत्वेन हेतो र्व्यभित्वरितत्वान्न व्याप्तिसिद्धिरिति ।

ननूक्तानुमाने शक्यक्रियत्वादीनामुपाधित्वेपि तादृशोपाधिविशिष्टकार्यत्वस्यैव हेतूकरणान्न तादृशानुमाने किंचिदपि दूषणमिति चेन्न । पक्षैकदेशे महीमहीधरादौ उक्तहेत्वसत्वेन भागासिध्दे दुर्वारत्वात् । पक्षावृत्तित्वस्यैवोपाधित्वमते प्रकृतसाध्यनियतस्यापि उपाधिविशिष्टहेतोः पक्षावृत्तित्वनियमावश्यम्भावात् । साधनाव्यापकत्वमुपाधिरिति वदद्भिः पक्षान्तर्भावेन तदुपपादनेपि उपाधिविशिष्टहेतोः पक्षावृत्तित्वमेव । यत्र पर्वतो धूमवान् वहेरित्यादौ व्यभिचारनिरूपका-धिकरणान्तभावेनार्द्रेन्धनसंयोगस्योपाधित्वमुद्भाव्यते तत्र स्थले उपाधिविशिष्टहेतो र्न स्वरूपासिद्धत्वमिति तेन हेतुना साध्यसाधनं युक्तम् ।

नन्वत्र शक्यक्रियत्वस्योपाधित्वे युक्तेऽपि शक्योपादनविज्ञानत्वस्योपाधित्वकथनं न युक्तंः, महीमहीधरादिषु उपा-दानविज्ञानस्य शक्यत्वेन पक्षावृत्तित्वाभावत्तस्य । अत एव हि जीवानामुपादानानभिज्ञत्वेन कर्तृत्वासम्भवमाशङ्क्य सर्वेषामेव चेतनानां पृथिव्यादयो यागादयश्च प्रत्यक्षभीक्ष्यन्ते' इति भाषितम् । अन्यथा जीवानामुपादानविज्ञानाभावेन कर्तृत्वासम्भवपरिहारासम्भवादिति चेदुच्यते - पूर्वत्र जीवानामुपादानाद्यभिज्ञताऽस्तीति तेषामेव कर्तृत्वस्वीकारेणानु-मानस्य सिद्धसाधनत्वमुक्तम् । अत्र तु जीवानां सूक्ष्मव्यवहिताद्यर्थदर्शनाशक्तिनिश्चयेन यद्युपादानाद्यभिज्ञता न स्वीक्रियते तर्हि महीमहीधरादिषु शक्योपादानविज्ञानत्वाभावेनोपाधित्वमित्यभिप्रायेण 'किञ्च' इति भाष्यग्रन्थावतारात्पूर्वपक्षिमते जीवानामुपादानाद्यनभिज्ञत्वस्वीकारात् । अत एवोत्तरत्र पूर्वपक्ष्येव 'तेषां' सूक्ष्मव्यवहितविप्रकृष्टदर्शनाशक्तिनिश्चयात्'

**किञ्च घटादिकार्यमनीश्वरेणाल्पज्ञानशक्तिना सशरीरेण परिग्रहवताऽनाप्तकामेन निर्मितं दृष्टमिति तथाविधमेव चेतनं कर्तारं साधयन्नयं कार्यत्वहेतुः सिषाधयिषितपुरुषसार्वज्ञ्यसर्वैश्वर्यादिविपरीतसाधनाद्विरुद्धस्स्यात्। न चैतावता सर्वानुमानोच्छेदप्रसङ्गः। लिङ्गिनि प्रमाणान्तरगोचरे लिङ्गबलोपस्थापिताः विपरीतविशेषाः तत्प्रमाणप्रतिहतगतयो निवर्तन्ते। इह तु सकलेतरप्रमाणाविषये लिङ्गिनि निखिलनिर्माणचतुरे, अन्वयव्यतिरेकावगताविनाभावनियमा धर्मास्सर्व एवाविशेषेण प्रसज्यन्ते ; निवर्तकप्रमाणाभावात्तथैवावतिष्ठन्ते। अत आगमादृते कथमीश्वरस्सेत्स्यति ?**

**अत्राहुः - सावयवत्वादेव जगतः कार्यत्वं न प्रत्याख्यातुं शक्यते। भवन्ति च प्रयोगः - विवादाध्यासितं**

इति ब्रवीति 'स्वाभाविकसर्वार्थसाक्षात्कारे'त्युत्तरत्र वक्ष्यमाणत्वाज्जीवानाञ्च सर्वार्थसाक्षात्कारस्यास्वाभाविकत्वेन कर्मानुगुणपरिमितताद्दशज्ञानशक्तिमत्वमेव स्यादित्युपादानोपकरणाद्यभिज्ञत्वासम्भवाच्चेति ॥

अथ कार्यत्वहेतुकानुमाने विपरीतार्थसाधनप्रयुक्तविरुद्धत्वशब्दवाच्यार्थान्तररूपदूषणमाह - **किञ्चेति**। **अनीश्वरेण** = कर्मवश्येन। **अल्पज्ञानशक्तिना** = अल्पज्ञानेनाल्पशक्तिना। **परिग्रहवता** = उपकरणवता। **अनाप्तकामेन** = प्रयोजनविशेषार्थं प्रवृत्तेन। **कर्तारं साधयन्निति**। अयं भावः - घटादिदृष्टान्तेन हि जगति कार्यत्वहेतुना सकर्तृकत्वं साध्यते। तत्र घटादिदृष्टान्ते कार्यत्वहेतोः कर्मवश्यत्वादिविशिष्टचेतनकर्तृकत्वव्याप्ति दर्शनाज्जगत्यपि पक्षे कार्यत्वहेतुरयं कर्मवश्यत्वादिविशिष्टचेतनकर्तृकत्वमेव साधयेदिति भवदभिमताकर्मवश्यत्वादिविशिष्टपुरुषविलक्षणचेतनसिद्ध्या विरोध एव ।

ननु स्वोपादानाद्यभिज्ञत्वविशिष्टपुरुषकर्तृकत्वस्यैव साध्यत्वेन नाल्पज्ञानादिपुरुषसिद्धिरिति चेन्न। घटकर्तुः कुलालस्य घटोपादानाद्यभिज्ञत्ववत् सिद्ध्यतः पुरुषस्य जगदुपादानाद्यभिज्ञत्वेपि कुलालवदेव तदितरानभिज्ञत्वप्रसङ्गेन सर्वज्ञपुरुषासिद्धेः। न च सर्वस्यापि जगतः पक्षत्वेन तदुपादानाद्यभिज्ञत्वे सर्वज्ञत्वं स्वत एव सिद्ध्यतीति नाल्पज्ञपुरुषसिद्धिरिति वाच्यम्। नित्यत्वेन भवदभिमतानामाकाशादीनां पक्षानन्तर्भावात्तज्ज्ञानासिध्या अनित्यवस्तुतदुपादानादिमात्राभिज्ञपुरुषसिद्धावपि सर्वज्ञपुरुषासिद्धेस्तावतापि दुर्वारत्वात्। कर्मवश्यत्वानाप्तकामत्वादीनां कथञ्चिदपि वारणासम्भवात्। न ह्यकर्मवश्यत्वावाप्तसमस्तकामत्वादिविशिष्टपुरुषकर्तृकत्वमेव साध्यमिति वक्तुं शक्यम्। दृष्टान्तस्य साध्यविकलत्वापत्तेः। न हि घटकर्तुः कुलालस्याप्यकर्मवश्यत्वम्। अतो विपरीतार्थसाधकत्वं कार्यत्वहेतो दुर्निवारम्।

नन्वेवं सत्यनुमानसामान्योच्छेदप्रसङ्गः। तत्र सर्वत्राप्युक्तरीत्या दृष्टान्तदृष्टसर्वधर्माणां पक्षेपि प्रसक्त्या बाधितत्वप्रसङ्गादिति शङ्कां परिहरति - **न चेति**। **लिङ्गिनि** = लिङ्गव्याप्ये साध्ये। प्रमाणान्तरगोचरे लिङ्गिनीत्यन्वयः। यद्यपि दृष्टान्तदृष्टधर्मविशेषयुक्तमेव साध्यं पक्षेपि हेतुस्साधयेत्तथापि साध्यस्य पश्चात्प्रमाणान्तरविषयत्वे हेतुबलोपस्थापितदृष्टान्तदृष्टधर्मविशेषाः प्रमाणविरुद्धत्वात्स्वयमेव निवर्तन्त इत्यनुमानोच्छेदापत्ति र्न भवति। तथैव प्रकृतेपि किं न स्यादित्यत्राह - **इह त्विति**। सकलेतरप्रमाणाविषय इत्यनेन प्राप्तधर्माणामनिवृत्तौ हेतुरुक्तः। अन्वयव्यतिरेकेत्यादिना ताद्दशधर्माणामविशेषेण प्राप्तौ हेतुरुक्तः। एवमनुमानस्याप्रामाण्यं ब्रुवतो मीमांसकस्य मतमुपसंहरति - **अत इति**। चेदित्यध्याहारः। सेत्स्यति चेदागमादृते कथमित्यन्वयः। यदीश्वरसिद्धिरावश्यकी तर्हि आगम एव शरणीकरणीयः। तच्च नास्माकं तव चाभिमतम्। अत ईश्वरसिद्धि र्नैव भवतीति ॥

एवमनुमानेनेश्वरसिद्धिप्रकारं युक्त्या निराकुर्वन्तमधिकरणपूर्वपक्षी प्रत्याह - **अत्राहुरिति**। **सावयवत्वादेवेति**। एवकारः कार्यत्वसाधकसावयवत्वं पूर्वप्रस्तुतं हेतुं निर्दुष्टमिति व्यञ्जयति। कार्यत्वसाधने हेत्वन्तरवत्सावयवत्वस्यापि हेतुत्वं समुच्चिनोतिः। **प्रयोगाः** = अनुमानरूपाः। यद्वा अवयवाः। भूधरादि कार्यमिति प्रतिज्ञा, सावयवत्वादिति हेतुः

**भूभूधरादि कार्यं, सावयवत्वात्, घटादिवत् ; तथा - विवादाध्यासितमवनिजलधिमहीधरादि, कार्यं, महत्वे सति क्रियावत्वात्, घटवत् ; तनुभुवनादि कार्यं, महत्वे सति मूर्तत्वात्, घटवत् - इति । सावयवेषु द्रव्येषु**

घटादिवदिति उदाहरणघटकदृष्टान्तप्रदर्शनम् । अनेन यत्सावयवं तत्कार्यं यथा घट इत्युदाहरणं दर्शितं भवति । उदाहरणान्तानीत्युक्तनयेनावयवत्रयप्रदर्शनमेव पर्याप्तमित्यभिप्रेत्येदम् । एवमुत्तरत्रापि । भूभूधरवत् आदिशब्दसङ्ग्राह्यमपि असम्प्रतिपन्नमेवेति सूचनाय विवादाध्यासितमिति । यद्वा सम्प्रतिपन्नभूभूधरांशव्यवच्छेदार्थम् । प्रलये जलधेरवस्थानात् तस्याकार्यत्वशङ्काव्यवच्छेदाय जलधिघटितपक्षनिर्देशः । तेन क्रियावत्वहेतोरसिद्धिपरिहारः फलितः । उत्पातादौ भूभूघर-कम्पदर्शनात् । परमाणुव्यावृत्तये हेतौ महत्वनिवेशः । गगनादिव्यावृत्तये क्रियावत्वम् । स्त्रष्टुरीश्वरस्य प्रलयेपि शरीरावस्थानात् अस्याकार्यत्वशङ्कानिवृत्यर्थं तनुघटितपक्षोपादानम् । गगनादिव्यावृत्तये हेतौ मूर्तत्वनिवेशः ।

ननु ईश्वरशरीरस्यापि पक्षान्तर्भावे आश्रयासिद्धिः ईश्वरस्यैवाप्रसिद्धत्वेन तच्छरीरस्य सुतरामप्रसिद्धेः । अस्मदादि शरीरस्य पक्षघटकत्वे सिद्धसाधनमिति चेन्न । तनोर्विशेषतः पक्षकरणाभावात् ईश्वरशरीरस्य स्वपक्षे कार्यत्वेन सम्प्रति-पन्नत्वात् । तज्ज्ञापनार्थमेव तस्य पक्षे निवेशात् । वस्तुतस्तु - अत्राहुरित्यादिना जगत्स्वोपादानाद्यभिज्ञकर्तृकं कार्यत्वा-दित्यत्र स्वरूपासिद्धिपरिहाराय सावयवत्वादिहेतुत्रयेण कार्यत्वं प्रसाध्यत इति न भ्रमितव्यम् । किन्तु कार्यत्वहेतुना स्वाभिमतेश्वरसिद्धिवत्सावयवत्वादि हेतुत्रयेणापि ईश्वरसिद्धिमभिप्रेत्यैव सावयवत्वादेवेत्यादि प्रवृत्तम् । न च कार्यत्व-साधने कथमीश्वरसिद्धिरिति वाच्यम् । कार्यत्वस्य कृतिसाध्यत्वरूपतया कृतेःसिद्धौ कृतेः निराश्रयत्वासंभवेन कृतिः किञ्चिदाश्रिता कृतित्वात् सम्प्रतिपन्नकृतिवत् इत्यनुमानेन कृत्याश्रयतयेश्वरसिद्धेः । अत्र साध्यतयाऽभिमतं कार्यत्वं कृतिसाध्यतारूपमेवेति - 'इदमेव कियते' इत्यनेन स्वयमेव विवृतम् । अन्यथा उत्पद्यते इति वक्तव्यं स्यात् । न चोक्तयुक्त्या कार्यत्वस्य कृतिसाध्यतारूपत्वे कार्यत्वहेतुना सकर्तृकत्वसाधने हेतोस्साध्याविशिष्टत्वप्रसङ्गः सकर्तृकत्वस्य कृति-साध्यतारूपत्वादिति वाच्यम् । सावयवत्वादिना कार्यत्वसाधकानुमाने कृतिसाध्यतारूपत्वाभ्युपगमेपि सकर्तृकत्वसाधक-कार्यत्वस्य कृतिसाध्यतारूपत्वाभ्युपगमनिर्बन्धाभावात् । तत्र कार्यत्वस्योत्पन्तिमत्वरूपत्वात् । वस्तुतस्तत्रापि कृति-साध्यतारूपत्वेपि न क्षतिः । उपादानाद्यभिज्ञकर्तृकत्वस्य साध्यत्वेन हेतोस्साध्यवैषम्यात् ।

एवं तनुभुवनादि कार्यं महत्वे सति मूर्तत्वादित्यनुमाने तनोः पक्षीकरणं नायुक्तम् । अस्मदादिशरीरस्यापि उत्पत्ति-मत्वनिश्चयेपि कृतिसाध्यत्वसन्देहात्पक्षत्वोपपत्तेः । अत्र सिषाधयितं कार्यत्वं कृतिसाध्यत्वरूपमेव । न तूत्पत्तिमत्त्व-रूपमिति चावश्यमभ्युपगमनीयम् । अन्यथा स्वरूपासिद्धिवारकतया प्रवृत्तत्वे कार्यत्वसाधनानन्तरं कार्यत्वस्य सिद्धत्वा-ज्जगत् उपादानाद्यभिज्ञकर्तृकं कार्यत्वादित्युनुमानेनेश्वरसिद्धिरित्यधिकरणपूर्वपक्षी उपसंहरेत् । न च तथाऽस्ति । 'अतस्तनु-भुवनादेः कार्यत्वे सर्वसाक्षात्कारतन्निर्माणादिनिपुणः कश्चित्पुरुषविशेषः सिद्ध्यत्येवेत्युपसंहारो दृश्यते' । अत्र कृति-साध्यत्वरूपकार्यत्वस्य सिद्धत्वात्तदाश्रयतया निरुक्तपुरुषविशेषः सिध्यतीत्यभिप्रायो हि स्वरसतः प्रतीयते । समर्थकर्तृ-पूर्वकत्वनियतकार्यत्वहेतुना सिद्ध्यन्निति ग्रन्थस्तु उत्पत्तिमत्वरूपकार्यत्वस्यापि सकर्तृकत्वसाधकतया तदभिमतत्वान्न विरुद्ध इति ।

उक्तकार्यत्वसाधकसावयवत्वादि हेतोः सोपाधिकत्वशंका नावतरतीत्याह - **सावयवेष्विति** । सावयवेषु द्रव्येषु केषाञ्चित्कार्यत्वं केषाञ्चिदकार्यत्वमभ्युपगम्य, येषां कार्यत्वं तद्गदकार्यत्वे सावयवत्वं नियामकमिति वक्तुं नायं ग्रन्थः प्रवृत्तः । तथा सति कार्यत्वाभाववति सावयवद्रव्यविशेषे सावयवत्वहेतोस्सत्वेन व्यभिचरितत्वापत्तेः । किन्तु सावयवेष्वपि द्रव्येषु क्वचिदेव कार्यत्वं क्वचिच्चाकार्यत्वम् इति वदता त्वयापि तद्गतकार्यत्वे सावयवत्वमेव नियामकमिति वक्तव्यम् । तादृशनियामकस्य सावयवत्वस्य सावयवद्रव्ये सर्वत्र सत्वेन सर्वस्यपि सावयवद्रव्यस्य कार्यत्वं स्वीकर्तव्यमेव । ततश्च

**'इदमेव क्रियते, नेतरत्' इति कार्यत्वस्य नियामकं सावयवत्वातिरेकि रूपान्तरं नोपलभामहे ॥**

**कार्यत्वप्रतिनियतं शक्यक्रियत्वं शक्योपादानादिविज्ञानत्वञ्चोपलभ्यत इति चेन्न ; कार्यत्वेनानुमतेऽपि**

कार्यत्वनियामकस्य सावयवद्रव्यविशेषमात्रसाधारणस्य कस्यचिदभावेन नात्रोपाध्युद्भावनसम्भवः। उपाधिर्हि प्रकृत-साध्यीभूतकार्यत्वनियामकः सावयवद्रव्यविशेषमात्रसाधारणः क्वचिद्वक्तव्यः। तथा सति हि इतरसावयवद्रव्ये तस्यासत्वेन पक्षावृत्तित्वोपपादनं सम्भवेत्। अतोऽन्यनियामकस्यादर्शनेन सावयवत्वस्यैव कार्यत्वनियामकतायाः अभ्युपगन्तव्यतया तत एव सर्वस्यापि सावयवद्रव्यस्य कार्यत्वमभ्युपेत्यमित्येतदर्थसूचनाय ग्रन्थः प्रवृत्तः। **कार्यत्वस्य नियामकमिति**। उपाधिर्हि प्रकृतसाध्यप्रयोजकत्वं स्वस्मिन्परिकल्प्य प्रकृतहेतोरप्रयोजकत्वं परिकल्पयतीति भावः। **सावयवत्वातिरेकी ति**। सावयवत्वं, महत्वे सति क्रियावत्वं, महत्वे सति मूर्तत्वमित्येतत्त्रितयव्यतिरिक्तमित्यर्थ।

ननु सावयवेष्वपि केषाञ्चिदेव कार्यत्वमित्यत्र नियामकस्य सत्त्वेन तस्य च सावयवद्रव्यविशेषेऽसत्वेन न सर्वेषामपि कार्यत्वसिद्धिः। ततश्च तादृशनियामकस्य कार्यत्वव्यापकत्वात्सावयवद्रव्यविशेषेऽसत्वेन पक्षावृत्तित्वाच्चोपाधित्वमिति सावयवत्वादिहेतुस्सोपाधिक एवेत्याशयेन शङ्कते - **कार्यत्वप्रतिनियतमिति**। महीमहीधरमहार्णवादिषु शक्यक्रियत्व-शक्योपादानविज्ञानत्वयोरभावेन पक्षावृत्तित्वादुपाधित्वमित्याशयः। महीमहीधरादिव्यतिरिक्तसावयवद्रव्यस्यापि कार्यत्वे किं नियामकम्? यदि शक्यक्रियत्वादिकं तर्हि घटादयः कार्यभूताः शक्यक्रियत्वादित्यनुमाने, पक्षे घटादौ शक्यक्रियत्वा-दीनामभावशंकायां कथं परिहारः? ततश्च स्वरूपासिद्धिः 'यदि प्रत्यक्षेण शक्यकियत्वसिद्धिरिति मन्यसे परोक्षे किं ब्रूयाः? न हि सर्वमपि घटपटमणिकरथगोपुरादि क्रियमाणदशायां प्रत्यक्षीकुर्वन्ति, येन शक्यक्रियत्वं प्रत्यक्षेणेति वक्तुं शक्यम्। अत एव कार्यत्वेनानुमतेऽपि विषये ज्ञानशक्ती कार्यानुमेये' इति, 'घटमणिकादिषु कृतेषु कार्यदर्शनानुमितकर्तृगततन्निर्माण-शक्तिज्ञानः पुरुष' इति च भाषितम्। तर्हि स्वरूपासिद्धिशङ्कायां कथं परिहारः। कार्यत्वेन तदनुमानमपि न सम्भवति। तत्रैव विप्रतिपत्तेः। यदि सावयवत्वेन कार्यत्वमनुमीयते तर्हि तत्रास्मभिरपि शक्यक्रियत्वाद्युद्भावने कथं हेतोस्सोपाधिक-त्वपरिहारः।

यदि शक्यक्रियत्वाद्युपाधेः साध्यव्यापकत्वसंपादनाय कार्यत्वेन तदनुमानं तद्वदस्माकमपि तथैव पक्षवृत्तित्वो-पपादनसम्भवान्नोपाधिशङ्कासम्भव इत्यभिप्रायेण समाधते - **नेति**। **कार्यत्वेनानुमतेपि** = सपक्षेपि। अत्र कार्यत्व-साधकसावयवत्वहेतोः शक्यक्रियत्वाद्युपाधिना सोपाधिकत्वशंकायां कार्यत्वहेतुनैव उपाधेरपि पक्षेऽनुमानेन पक्षवृत्ति-त्वान्नोपाधित्वमिति समाधानं नोपयुज्यते कार्यत्वस्यैवासिद्धेः। यावता कार्यत्वसाधकहेतोस्सोपाधिकत्वं न परिह्रियते तावता न कार्यत्वसिद्धिः। अतोऽसाधितेन कार्यत्वहेतुना पक्षे उपाधिसाधनासम्भवात्सोपाधिकत्वशङ्कापरिहारो न सम्भवति। उपाधिपरिहारे कार्यत्वसाधनसम्भवः, कार्यत्वस्य साधने उपाधिपरिहारः इत्यन्योन्याश्रयाच्च इति शङ्कापरिहाराय - कार्यत्वेनानुमतेपि विषये ज्ञानशक्ती कार्यानुमेये इति भाषितम्। एतद्विवरणेपि घटमणिकादिषु कृतेषु कार्यदर्शनानुमित-कर्तृगततन्निर्माणशक्तिज्ञानः पुरुष इति च।

अयं भावः - घटमणिकादिषु कार्येषु कथं शक्यक्रियत्वादिनिश्चयः, येन साध्यव्यापकत्वमुपाधेरुपपन्नं स्यात्। कार्यत्वेन तदनुमाने कार्यत्वमेव कथं सिद्धम्। अवयवसन्निवेशविशेषरूपसावयवत्वेन चेन्न। तस्य सोपाधिकत्वात्। यदि हेतोस्सोपाधिकत्वेपि असाधितमपि साध्यं हेतूकृत्याबाधितस्थले पक्षे उपाधिः साधयितुं शक्यते, अयोगलकं धूमवत् वह्नेरित्यादौ तूपाधिभूतार्देन्धनसम्योगस्य नासाधितेन धूमेन साधनसम्भवः तत्र पक्षे बाधात्। अत्र तु कर्तुः ज्ञानशक्त्यबाधेन घटमणिकादीनां शक्यक्रियत्वादिकं न बाधितमिति मन्यसे? तर्हि तथैवास्माकमपि सुवचं, कर्तुरीश्वरस्य ज्ञानशक्त्याद्यबाधात्। एतादृशरीत्यननुसरणे उपाधौ साध्यव्यापकत्वस्यैव भङ्गान्न सुतरामुपाधित्वं, साध्यव्यापकत्वोपपा-

**विषये ज्ञानशक्ती कार्यानुमेये इति, अन्यत्रापि सावयवत्वादिना कार्यत्वं ज्ञातमिति ते च प्रतिपन्ने एवेति न कश्चिद्विशेषः । तथा हि घटमणिकादिषु कृतेषु कार्यदर्शनानुमितकर्तृगततन्निर्माणशक्तिज्ञानः पुरुषोऽदृष्टपूर्वं विचित्रसन्निवेशं नरेन्द्रभवनमालोक्य अवयवसन्निवेशविशेषेण तस्य कार्यत्वं निश्चित्य, तदानीमेव कर्तुस्तज्ज्ञान-शक्तिवैचित्र्यमनुमिनोति । अतस्तनुभुवनादेः कार्यत्वे सिद्धे सर्वसाक्षात्कारतन्निर्माणादिनिपुणः कश्चित्पुरुष-विशेषः सिद्ध्यत्येव ॥**

**किञ्च सर्वचेतनानां धर्माधर्मनिमित्तेऽपि सुखदुःखोपभोगे चेतनानधिष्ठितयोस्तयोरचेतनयोः**

---

दनाय एतद्रीत्यनुसारेणे पक्षावृत्तित्वभङ्गः । सेयमुभयतस्स्पाशा रज्जुः । तथा च सर्वात्मना हेतोस्सोपाधिकत्वाभावान्नायं हेतुर्दुष्ट इति ॥

**अन्यत्रापि** = पक्षेपि । **ते** = ज्ञानशक्ती । **तत्** = घटमणिकादि । **वैचित्र्यमिति** । किं महीधरादीनां शक्यक्रियत्वेन पक्षा-वृत्तित्वादकर्तुः शक्यक्रियत्वमुपाधिः उत कर्तुः शक्यक्रियत्वम्? प्रथमे साध्यव्यापकत्वभङ्गः । द्वितीये पक्षावृत्तित्वभङ्गः । एव-मुपाधिपरिहारेण सकर्तृकत्वसाधककार्यत्वहेतोः शक्यक्रियत्वाद्युपाधिद्वयेन सोपाधिकत्वशङ्कापि परिहृता । महीमहीधरादिषु शक्यक्रियत्वाद्यभावेन पक्षवृत्तित्वात् ।

ननु विवादाध्यासितं जगत्सकर्तृकं कार्यत्वादित्यनुमाने शक्यक्रियत्वादीनामुपाधित्वशङ्कायां कार्यत्वहेतुनैव पक्षेपि शक्यक्रियत्वाद्यनुमानेनोपाधेः पक्षवृत्तित्वोपपादनं कथं घटते । अन्यथाऽऽर्द्रेन्धनसम्योगस्योपाधित्वशङ्कायां वह्निहेतुनैव व्यभिचारनिरूपकाधिकरणेप्युपाधिसाधनसम्भवात् । एवमुपाधेः कुत्रापि दूषणत्वमेव न स्यादिति चेन्न । अबाधितस्थले सोपाधिकत्वेन शङ्कितहेतुनैवोपाधिसाधनसम्भवेनादोषात् । अयोगोलके आर्द्रेन्धनसम्योगः प्रत्यक्षबाधितः । अत्र तु मह्यादौ न शक्यक्रियत्वादीनां बाधितत्वं प्रत्यक्षतः । अपि च कार्यत्वहेतुना घटादिषु शक्यक्रियत्वाद्यनुमानं भवतामपीष्टम् । न च कार्यत्वहेतुना घटपटादिषु शक्यक्रियत्वाद्यनुमानमेव न सम्भवति । महीमहीधरादिषु व्यभिचारादिति वाच्यम् । मह्यादिषु शक्यक्रियत्वादिसन्देहेन साध्याभावनिश्चयायोगात् । न च तथापि व्यभिचारसन्देह एवेति वाच्यम् । तथा सति घटादिषु शक्यक्रियत्वाद्यसिद्ध्या सकर्तृकत्वसाधककार्यत्वहेतोः सोपाधिकत्वशङ्काया एवानवतारात् । शक्यक्रियत्वाद्युपाधेः साध्य-व्यापकत्वाभावात् । अतः कार्यत्वहेतुना घटपटादिषु शक्यक्रियत्वाद्यनुमानस्य भवतामपीष्टत्वेन तेनैव हेतुना पक्षेपि शक्यक्रियत्वाद्यनुमानं न दोषावहम् ।

नन्वेवं रीत्यैवाऽऽर्द्रेन्धनसम्योगरूपोपाधेः साध्यव्यापकत्वोपपादनाय सोपाधिकत्वेन शङ्कितेन वह्निरूपहेतुनापि साधनमावश्यकमेवेति चेन्न । तत्रोपाधेः साध्यव्यापकत्वस्य प्रत्यक्षतो गृहीतत्वेन, अयोगोलके प्रत्यक्षबाधेन च साधना-नुपयोगात् । अत्र तु कार्यत्वेनैवानुमेयमिति भिदा । केचित्तु कृतिसाध्यत्वरूपकार्यत्वसाधकसावयवत्वहेतोः शक्यक्रियत्वा-दीनां सोपाधिकत्वशंकायां नासाधितकृतिसाध्यत्वरूपकार्यत्वेनैवोपाधेः पक्षवृत्तित्वोपपादनं, किन्तु उत्पत्तिमत्वरूप-कार्यत्वेन । एवं साध्यतयाभिमतकार्यत्वस्योत्पत्तिमत्वरूपत्वेन कृतिसाध्यत्वरूपकार्यत्वेन तदनुमानम्, अतो नान्योन्या-श्रयः । नाप्युपाधिसाधकहेतोः स्वरूपासिद्धता । एवं सकर्तृकत्वसाधकानुमानेपीति वर्णयन्ति । उक्तयुक्तिभिः कार्यत्वसिद्ध्या ईश्वरसिद्धि र्निष्प्रत्यूहैवेत्याह - **अत इति** ॥

धर्माधर्मौ साक्षात्कारिचेतनाधिष्ठितावेव कार्यकरौ अचेतनत्वाद्वास्यादिवदित्यनुमानान्तरेणापि ईश्वरसिद्धिम-भिप्रेत्याह - **किञ्चेति** । अन्वयव्याप्तिस्थिरीकरणाय चेतनानधिष्ठितयोरित्यादिव्यतिरेकोक्तिः । अचतनयोरित्यनेन धर्माधर्मा-

**फलहेतुत्वानुपपत्तेस्सर्वकर्मानुगुणसर्वफलप्रदानचतुरः कश्चिदास्थेयः ; वर्धकिनाऽनधिष्ठितस्य वास्यादेरचेतनस्य देशकालाद्यनेकपरिकरसन्निधानेऽपि यूपादिनिर्माणसाधनत्वादर्शनात् । बीजाङ्कुरादेः पक्षान्तर्भाविन तैर्व्यभिचारापादनं श्रोत्रियवेतालानामनभिज्ञताविजृम्भितम् । तत एव सुखादिभिर्व्यभिचारवचनमपि तथैव । न च लाघवेनोभयवादिसम्प्रतिपन्नक्षेत्रज्ञानामेव ईदृशाधिष्ठातृत्वकल्पनं युक्तम् ; तेषां सूक्ष्मव्यवहितविप्रकृष्टदर्शनाशक्तिनिश्चयात् । दर्शनानुगुणैव हि सर्वत्र कल्पना । न च क्षेत्रज्ञवदीश्वरस्याशक्तिनिश्चयोऽस्ति । अतः प्रमाणान्तरतो न तत्सिद्ध्यनुपपत्तिः । समर्थकर्तृपूर्वकत्वनियतकार्यत्वहेतुना सिद्ध्यन्स्वाभाविकसर्वार्थसाक्षात्कारतन्नियमनशक्तिसम्पन्न एव सिद्ध्यति ।। यत्त्वनैश्वर्याद्यापादनेन धर्मविशेषविपरीतसाधनत्वमुन्नीतम् ; तदनुमानवृत्तानभिज्ञत्वनिबन्धनम् ; सपक्षे सह दृष्टानां सर्वेषां कार्यस्याहेतुभूतानाञ्च धर्माणां लिङ्गिन्यप्राप्तेः ।**

**एतदुक्तं भवति - केनचित् किञ्चित् क्रियमाणं स्वोत्पत्तये कर्तुस्स्वनिर्माणसामर्थ्यं स्वोपादानोपकरणज्ञानञ्चापेक्षते ; न त्वन्यासामर्थ्यमन्याज्ञानञ्च, हेतुत्वाभावात् । स्वनिर्माणसामर्थ्यस्वोपादानोपकरणज्ञानाभ्यामेव स्वोत्पत्तावुपपन्नायां सम्बन्धितया दर्शनमात्रेणाकिञ्चित्करस्यार्थान्तराज्ञानादेर्हेतुत्वकल्पनायोगात्**

---

वादाय सिद्धसाधनपरिहार उक्तः । जीवानां धर्माधर्मसाक्षात्कारतदधिष्ठातृत्वयोरसम्भवेन न जीवमादाय साध्यपर्यवसानसम्भवः । दृष्टान्तमुपपादयति - **वर्धकिनेत्यादिना** । देशकालादिपरिकराभावे न यूपादिनिर्माणसामर्थ्यमित्यत्राह - **देशादिकालेति** । ननु साक्षात्कारिचेतनानधिष्ठिते बीजेऽचेतनेऽङ्कुरादिकार्योत्पत्तिदर्शनेन व्यभिचार इति शङ्कां द्यति बीजाङ्कुरादेः इति । अङ्कुरपदोपदानं बीजस्य कार्योत्पादकत्वोपपादकम् । पक्षान्तर्भाविणेति अनभिज्ञताविजृम्भितत्वे हेतुः । श्रोत्रियेत्युक्तिः अनभिज्ञत्वस्थिरीकरणाय । अनुमानवृत्तान्तानभिज्ञा हि श्रोत्रियाः ।

ननु चेतनाभिसन्ध्याभावेपि सुखादिभिः पुलकाद्युत्पत्तिदर्शनेन चेतनानधिष्ठिते सुखेऽचेतने व्यभिचार इति शङ्कामुक्तयुक्त्यैव पराकरोति - **तत एवेति** । आदिशब्देन दुःखादिकं सुखाद्युत्पादकं चेतनानधिष्ठितं मनश्च विवक्षितम् । एवमुक्तस्थलेषु व्यभिचारपरिहारात्कार्यत्वहेतोः स्वेच्छाभावेपि उत्पद्यमानेषु सुखादिषु व्यभिचारोपि परिहृतो वेदितव्यः । **तेषामिति**शक्तिसाक्षात्कारस्यानपेक्षितत्वेपि शक्तिमत्साक्षात्कारस्यापेक्षितत्वं ब्रुवतस्तव न जीवानां कर्तृत्वसम्भवः, शक्तिमतामेव परमाणूनां साक्षात्काराभावादिति भावः । अत्र लाघवस्याप्रयोजकत्वमाह - **दर्शनेति** । न हि प्रत्यक्षविरुद्धे लाघवं प्रयोजकम् । कल्पनीयत्वमपि प्रत्यक्षाद्यविरोधेनोपपन्नस्यैव । विरोधोपि लाघवस्यानुसारे, आत्मन इन्दियस्य सर्वस्याप्येकत्वमेव कल्पयितुं युक्तमिति । **न चेति** । क्षेत्रज्ञस्याशक्तिनिश्चयः प्रत्यक्षसिद्धः ईश्वरस्येतः परं साधनीयतया नाशक्तिनिश्चयसम्भव इति भावः । नैतावन्मात्रं, शक्तिनिश्चयोऽप्यस्ति शक्तिविशिष्टपुरुषस्यैव साध्यत्वादित्याशयेनाह - **समर्थेति** । कार्यत्वहेतुर्हि घटादिदृष्टान्ते तत्करणशक्त्यादिसंपन्नकर्तृपूर्वकत्वमेव साधयति । अतो जगत्यपि तत्करणशक्त्यादिसम्पन्नपुरुषविशेषपूर्वकत्वमेव साधयेदिति तादृशः पुरुषः सिद्ध्यतीति भावः । स्वाभाविकशब्दः साक्षात्कारादीनामौपाधिकत्वशङ्काव्युदासार्थः । अन्यथा कर्मानुगुणत्वेन परिमितत्वापत्तेः । मितंपचत्वव्यावृत्त्यै **सर्वार्थेति** । अन्यथा कार्यकर्तृत्वासम्भवात् ।

अथ कार्यत्वहेतौ मीमांसकोक्तं विरुद्धत्वमनूद्य दूषयति - **यत्त्विति** । **उन्नीतं** = केवलोहामात्रमेव । **वृत्तं** = व्यापारः । **सपक्षेति** सहदृष्टानां सर्वेषामित्यनेन न केवलं सहदर्शनं प्रयोजकम् अतिप्रसङ्गादिति सूचितम् । **कार्यस्याहेतुभूतानामिति** । अनेन हेतुत्वाभावः व्याप्त्यभावश्चोक्तः । ननु सहदृष्टत्वादेव कार्यं प्रति हेतुत्वमपि कल्प्यते - अतो हेतुत्वेन तेषां प्राप्तिरावश्यकीत्यत्राह - **एतदुक्तमिति** । कुलालस्य घटनिष्पत्तये घटनिर्माण सामर्थ्यघटोपादानोपकरणज्ञानापेक्षैव । अन्वयव्यतिरेकाभ्यां तथावगमात् । नतु घटान्यासामर्थ्याद्यपेक्षापि । अन्वयव्यतिरेकाभावात् । न हि सत्त्वमात्रं कारणताप्रयोजकम् ।

**- इति। किञ्च - क्रियमाणवस्तुव्यतिरिक्तार्थाज्ञानादिकं किं सर्वविषयं क्रियोपयोगि ? उत कतिपयविषयम् ? न तावत्सर्वविषयम् ; न हि कुलालादिः क्रियमाणव्यतिरिक्तं किमपि न जानाति। नापि कतिपयविषयम्, सर्वेषु कर्तृषु तत्तदज्ञानाशक्त्यनियमेन सर्वेषामज्ञानादीनां व्यभिचारात्। अतः कार्यत्वस्यासाधकानामनीश्वरत्वादीनां लिङ्गिन्यप्राप्तिरिति न विपरीतसाधनत्वम्॥**

**कुलालादीनां दण्डचक्राद्यधिष्ठानं शरीरद्वारेणैव दृष्टमिति जगदुपादानोपकरणाधिष्ठानमीश्वरस्याशरीरस्यानुपपन्नमिति चेन्न ; सङ्कल्पमात्रेणैव परशरीरगतभूतवेतालगरलाद्यपगमविनाशदर्शनात्। कथमशरीरस्य परप्रवर्तनरूपस्सङ्कल्प इति चेत् - न शरीरापेक्षस्सङ्कल्पः ; शरीरस्य सङ्कल्पहेतुत्वाभावात्। मन एव हि सङ्कल्पहेतुः। तदभ्युपगतमीश्वरेऽपि ; कार्यत्वेनैव ज्ञानशक्तिवन्मनसोऽपि प्राप्तत्वात्। मानसस्सङ्कल्पस्सशरीरस्यैव; सशरीरस्यैव समनस्कत्वादिति चेन्न; मनसो नित्यत्वेन देहापगमेऽपि मनसस्सद्भावेनानैकान्त्यात्।**

किन्तु असत्वे कार्यानुत्पत्तिसत्वे तस्यापि हेतुत्वं कल्पयितुं युक्तम्। न च तथास्ति। कुड्यादिनिर्माणानुगुणज्ञानशक्तिमतोपि घटनिष्पादकत्वदर्शनात्। अतोऽन्यासामर्थ्यादीनां हेतुत्वाभावेन न तेषां लिङ्गिनि प्राप्तिसम्भवः। एतदभिप्रायेणैव सम्बन्धिनि दर्शनमात्रेणाकिञ्चित्करस्येत्युक्तम्। न हि घटनिर्माणसामर्थ्यतदुपादानादिज्ञानानां प्रकृतकार्ये किञ्चित्कारजनकत्ववदन्याज्ञानादीनां किञ्चित्कारजनकत्वं, येन हेतुत्वं शङ्कितुमपि शक्यमिति भावः। **सर्वेषु कर्तृषु** = एककार्यकर्तृष्वित्यर्थः। कतिपयकुड्यानुगुणज्ञानवता घटनिष्पत्तिदर्शनात्। नापि द्वितीयः। कुड्याज्ञानसत्त्वेपि पटनिर्माणानुगुणज्ञानवता घटनिष्पत्तिदर्शनात्। अतस्तत्तदज्ञानाशक्तिनियमाभावेन व्यभिचारात्कतिपयविषयकाज्ञानादीनां न हेतुत्वं प्रामाणिकमिति भावः। **अप्राप्तिरिति**। प्राप्तौ सत्यां हि धर्मिग्राहकप्रमाणेन प्रतिहतानां निवृत्तिः, नान्येषामिति ब्रह्मणि प्रमाणान्तराविषयत्वेन निवर्तकाभावान्निवृत्तिर्न सम्भवतीति वक्तुं शक्यम्। प्राप्तिरेव नास्तीति न निवर्तकज्ञानापेक्षा, नातो विरुद्धत्वमिति भावः।

ननु कार्यहेतुभूतस्य प्राप्तिर्भवताऽप्यभ्युपगता 'अन्यथा कार्यनिर्माणानुगुणज्ञानशक्त्यादीनामपि कार्यकर्तर्यसिध्यापत्तेः। ततश्च शरीरस्यान्वयव्यतिरेकबलेन कार्यहेतुत्वस्य सिद्धत्वात्सपक्षे सहदृष्टस्य शरीरवत्वस्य लिङ्गिन्यपि प्राप्तिर्दुर्वारैवेति शङ्कते - **कुलालादीनामिति**। **दण्डचक्राद्यधिष्ठानं शरीरद्वारेणैव** इत्यन्वयव्यतिरेकौ दर्शितौ। अन्यथासिद्धत्वेन शरीरस्य कार्यहेतुत्वमेव नास्तीत्याशयेन परिहरति - **नेति**। अन्यथासिद्ध्युपपादनाय समीचीनं दृष्टान्तमाह - **परशरीरेति**। व्यापारेण व्यापारिणो नान्यथासिद्धिरित्याशयेन शंकते - **कथमिति**। अत्र व्यापार व्यापारिभाव एव नास्तीति दूषयति - **न शरीरापेक्ष इति**। शरीरस्य सङ्कल्पहेतुत्वाभावादित्यनेन शरीरस्य व्यापारित्वं दूषितम्। तर्हि कथं सङ्कल्पस्योत्पत्तिरित्यत्राह - **मन एवेति**। ननु शरीरस्य संकल्पहेतुत्वाभावेपि मनसस्तथात्वस्य स्वीकृतत्वात् ईश्वरे च मनसोऽभावेन कथं मनसः कार्यसङ्कल्पः कथञ्च कार्योत्पत्तिरित्यत्राह - **तदभ्युपगतमिति**। **तत्** = मनः। मनसोऽङ्गीकार्यत्वे हेतुमाह - **कार्यत्वेनैवेति**। जगतः कार्यत्वेन ज्ञानशक्तिसम्पन्नचेतनकर्तृकत्वस्थापनेन ईश्वरे ज्ञानशक्त्यङ्गीकारवन्मनोवच्चेतनकर्तृकत्वस्थापनादीश्वरे मनसोपि सिद्धेः। ज्ञानशक्त्योः कार्यहेतुत्वेन हि स्वीकारः। तथैव मनसोपि कार्यहेतुत्वेनैव स्वीकारावश्यम्भावात्। शरीरसम्बन्धस्य तु नैवमङ्गीकारसंभवः हेतुत्वाभावादिति भावः॥

ननु सङ्कल्पस्य मनोहेतुत्वेपि सशरीरस्यैव मानससङ्कल्पदर्शनेन ईश्वरस्य मानससङ्कल्पवत्वे शरीरसम्बन्धोऽप्यावश्यकः। अन्यथा तादृशसङ्कल्पस्यैवासम्भवात्। न ह्यशरीरस्य मानससंकल्पसम्भवः। तथा सत्यशरीरस्यापि समनस्कत्वापत्तेः। न च तद्दृश्यत इति शङ्कते - **मानसस्सङ्कल्प** इति। मनसो नित्यत्वाभ्युपगमाच्छरीरापगमेपि मनस्सम्बन्धस्याभ्युपगन्तव्यतया अशरीरस्यापि समनस्कत्वेन मानससङ्कल्पस्य सशरीरनिष्ठत्वनियमाभावादित्याशयेन समाधत्ते - **नेति। अनैकान्त्यादिति**। मानससङ्कल्पाश्रयः पुरुषस्सशरीरस्समनस्कत्वादित्यनुमानेन हि मानससङ्कल्पाश्रयस्य समनस्कस्य

**अतो विचित्रावयवसन्निवेशविशेषतनुभुवनादिकार्यनिर्माणे पुण्यपापपरवशः परिमितशक्तिज्ञानः क्षेत्रज्ञो न प्रभवतीति निखिलभुवननिर्माणचतुरोऽचिन्त्यापरिमितज्ञानशक्त्यैश्वर्योऽशरीरः सङ्कल्पमात्रसाधनपरिनिष्पन्नानन्तविस्तारविचित्ररचनप्रपञ्चः पुरुषविशेष ईश्वरोऽनुमानेनैव सिद्ध्यति । अतः प्रमाणान्तरावसेयत्वाद्ब्रह्मणो, नैतद्वाक्यं ब्रह्म प्रतिपादयति । किञ्च - अत्यन्तभिन्नयोरेव मृद्द्रव्यकुलालयोर्निमित्तोपादानत्वदर्शनेन, आकाशादेर्निरवयवद्रव्यस्य कार्यत्वानुपपत्त्या च नैकमेव ब्रह्म कृत्स्नस्य जगतो निमित्तमुपादानञ्च प्रतिपादयितुं शक्नोति - इति ॥**

**एवं प्राप्ते ब्रूमः - यथोक्तलक्षणं ब्रह्म जन्मादिवाक्यं बोधयत्येव । कुतः ? शास्त्रैकप्रमाणकत्वाद्ब्रह्मणः । यदुक्तम् - सावयवत्वादिना कार्यं सर्वं जगत् । कार्यञ्च तदुचितकर्तृविशेषपूर्वकं दृष्टमिति निखिलजगन्निर्माणतदुपादानोपकरणवेदनचतुरः कश्चिदनुमेय - इति । तदयुक्तम्, महीमहार्णवादीनां कार्यत्वेऽप्येकदैवैकेनैव निर्मिता इत्यत्र प्रमाणाभावत् । न चैकस्य घटस्येव सर्वेषामेकं कार्यत्वम्, येनैकदैवैकः कर्ता स्यात् । पृथग्भूतेषु**

---

शरीरसम्बन्ध आपाद्यते । तत्र च समनस्कत्वं मुक्तात्मनि व्यभिचरितम् । तस्य समनस्कत्वेपि शरीरभावादिति भावः ।

ननु मनसः किञ्चित्कार्यकरत्वं शरीरसम्बन्धसापेक्षमेव दृष्टम् । मुक्तात्मनः समनस्कत्वेपि शरीराभावेन कार्यकरत्वादर्शनात् । अत ईश्वरस्य समनस्कत्वेपि शरीराभावे कथं मनसः कार्यकरत्वमिति चेन्न । मनः शरीरसम्बन्धसापेक्षमेव कार्यकरं मनस्त्वादित्यनुमाने भोगसाधनमनस्कात्वस्योपाधित्वात् । अस्मदादिमनोऽन्तर्भावेण साध्यव्यापकत्वान्मुक्तात्मान्तर्भावेण साधनाव्यापकत्वाच्च । अतश्शरीरसम्बन्धाभावेपि कार्यकरत्वसम्भवादीश्वरस्य समनस्कत्वेपि न शरीरापेक्षा । विचित्रावयवसन्निवेशविशेषेत्यनेनोपाधिपरिहारोऽभिप्रेतः । पुण्यपापपरवशः परिमितशक्तिज्ञान इत्यनेन सिद्धसाधनपरिहरः । अचिन्त्येत्यादिना विरुद्धत्वपरिहाराः । एवं ब्रह्मणि वेदान्तानामनधिगतार्थबोधकत्वरूपप्रामाण्यं दूषितम् । अथाबाधितार्थबोधकत्वरूपप्रामाण्यमपि दूषयति - **किञ्चेति** । दर्शनेनेत्यनेन एकस्यैव निमित्तोपादनत्वे प्रत्यक्षविरोध उक्तः । **अनुपपत्त्या** इत्यनेन निरवयवद्रव्यस्य कार्यत्वे तर्कविरोधः । अयं भावः - ब्रह्मणः अनुमानविषयत्वमभ्युपेयम् । स्थापितत्वात् । तत्र निमित्तमात्रतयैव सिद्धिरिति निमित्तमात्रं ब्रह्मानूद्य शास्त्रेण निमित्तत्वोपादानत्वोभयविधाने धर्मिगाहकप्रमाणविरोधः । क्षित्यादिषु सावयवत्वस्यैव कार्यत्वप्रयोजकतया दर्शनान्निरवयवस्याकाशस्याकार्यत्वं पूर्वमेव प्रतिपन्नमिति शास्त्रेण कार्यत्वबोधने प्रमाणविरोधः ।

एवं मीमासकमतं दूषितवन्तं नैयायिकं प्रति सिद्धान्तं वक्तुमुपक्रमते - **एवं प्राप्ते ब्रूम** इति । कुत इति प्रश्नः । **शास्त्रेति** । शास्त्रेतरप्रमाणावेद्यत्वे सति वेद्यत्वादित्यर्थः । चः भिन्नक्रमः । सावयवत्वादिना कार्यं सर्वं जगत् । कार्यं तदुचितकर्तृविशेषपूर्वकं दृष्टंचेत्यन्वयः । प्रथमवाक्येन कार्यत्वे साधकसावयवत्वानुमानं, द्वितीयवाक्येनाभिज्ञकर्तृकत्वसाधकसावयवनुमानं चोक्तम् । तृतीयं धर्माधर्मपक्षकपुरुषविशेषाधिष्ठितत्वसाध्यकाचेतनत्वहेतुकानुमानमपि विवक्षितम् । **'महीति'** । अयं भावः - उक्तानुमानेन जीवविलक्षणेश्वरसिद्धिस्तदा स्यात्, यदि कार्यभूताः महीमहीधरार्णवाद्याः ऐकेनैव एकदैव निर्मिताः स्युः । तदेव तु नास्ति, प्रमाणाभावात् । 'अतः कर्तृकालैक्यनियमाभावेन तत्तत्काले तत्तत्कार्यकर्तृत्वं तत्तज्जीवानामेवेति कल्पनसम्भवेनेश्वरासिद्धिरिति । कुतः प्रमाणाभाव इत्यत्राह - **न चेति** । यथा एकस्य घटस्यैकसामग्रीपूर्वकत्वरूपमेकं कार्यत्वं न तथा तादृशकार्यत्वं महीमहीधरादीनाम् । घटगतकार्यत्वस्य परिमितावयविनिष्ठत्वदर्शनेन तद्गतकार्यत्वस्यैव एकदैव एककर्तृकत्वसम्भावनापादकत्वं, न मह्यादिगतकार्यत्वस्य । वस्तुत एकघटस्यापि नैककर्तृकत्वनियमः, अनेकैरप्येकघटनिष्पत्तिसंभवात् । दृश्यते ह्येकमेव कार्यं नैककर्तृकमिति भावः । **पृथगिति** । तत्तत्कार्येषु

**कार्येषु कालभेदकर्तृभेददर्शनेन कर्तृकालैक्यनियमादर्शनात् । न च क्षेत्रज्ञानां विचित्रजगन्निर्माणाशक्त्या, कार्यत्वबलेन तदतिरिक्तकल्पनायामनेककल्पनानुपपत्तेश्चैकः कर्ता भवितुमर्हतीति ; क्षेत्रज्ञानामेवोपचित-पुण्यविशेषाणां शक्तिवैचित्र्यदर्शनेन, तेषामेवातिशयितादृष्टसम्भावनया च तत्तद्विलक्षणकार्यहेतुत्वसम्भवा-त्तदतिरिक्तात्यन्तादृष्टपुरुषकल्पनानुपपत्तेः । न च युगपत्सर्वोत्पत्तिस्सर्वोच्छित्तिश्च प्रमाणपदवीमधिरोहतः ; अदर्शनात्, क्रमेणैवोत्पत्तिविनाशदर्शनाच्च । कार्यत्वेन सर्वोत्पत्तिविनाशयोः कल्प्यमानयोर्दर्शनानुगुण्येन कल्पनायां विरोधाभावाच्च ।**

**अतो बुद्धिमदेककर्तृकत्वे साध्ये कार्यत्वस्यानैकान्त्यम् ; पक्षस्याप्रसिद्धविशेषणत्वम्; साध्यविकलता च दृष्टान्तस्य ; सर्वनिर्माणचतुरस्यैकस्याप्रसिद्धेः । बुद्धिमत्कर्तृकत्वमात्रे साध्ये सिद्धसाधनता ।**

---

कालभेदस्य कर्तृभेदस्य च दर्शनेन महीमहीधरादि विपुलकार्यविषयेष्वपि एकेनैव कर्त्रा एकदैव निर्मितानीत्यत्र प्रमाणं न पश्याम इत्याशयः ।

ननु कार्यत्वहेतुरेव कर्तृकालैक्यमवगमयतीति चेन्न । कार्यतया सम्प्रतिपन्ने कर्तृभेदकालदर्शनेन व्यभिचारात् । विपुलकार्यत्वं तादृशमिति चेन्न । कालभेदेनानेककर्तृकेपि गोपुरादौ व्यभिचारात् । महीमहार्णवादि पक्षमात्रासाधरणं कार्यत्वं तादृशं भवतीति चेन्न, तस्य विपक्षव्यावृत्तत्वेनासाधारणानैकान्त्यात् । अतः कर्तृकालैक्यनियमाभावेन सम्प्रतिपन्न-कार्यद्रव्येष्विव जीवानामेव कालभेदेन तत्तात्कार्यकर्तृत्वसम्भव इति नातिरिक्तेश्वरसिद्धिः । ननु क्षेत्रज्ञानां जगन्निर्माणा-शक्तिनिश्चयात्तदतिरिक्तस्यावश्यकल्पनीयत्वे सिद्धे अनेककर्तृकल्पनं गौरवमिति सिद्ध्यतः पुंस एकत्वे लाघवमिति लाघवज्ञानसहकृतपरामर्शादेव एकेश्वरसिद्धिरिति शङ्कां व्युदस्यति - **न चेति** । भवितुमर्हतीत्यत्र शक्यमित्यध्याहारः । **क्षेत्रज्ञानामेवेति** । एवकारः क्षेत्रज्ञस्यैवोपचितपुण्यविशेषस्य विश्वामित्रादेः शक्तिवैचित्र्यप्रसिद्धिसूचनार्थः । सम्भावनयेति 'सर्वेभ्यः कामेभ्यो ज्योतिष्टोमः' इत्युक्तत्वेन मह्यादिस्रष्टृत्वानुगुणातिशयितादृष्टसम्भवनासम्भवात् । योगबलेन जीवानामेव सूक्ष्मव्यवहितवस्तुसाक्षात्कारस्य त्वयैवाभ्युपगतत्वाच्चेति भावः । **तदतिरिक्तेति** । जीवातिरिक्तस्यान्यस्य कल्पनीयत्वे हि लाघवन्यायावतारः । तेषामेवोक्तयुक्त्या शक्तिनिश्चयसंभवात् धर्मिकल्पनातो वरं धर्मकल्पनमिति न्यायेन शक्तिकल्पन-सम्भवात् । न चेदं प्रत्यक्षविरुद्धं, विश्वामित्रादौ दर्शनात् । एतेन धर्माधर्मपक्षीकारेणेश्वरसाधनमपि निरस्तम् । जीवानामेव तत्साक्षात्कारसम्भवेनान्यथासिद्धत्वात् । अचेतनस्यापीश्वरज्ञानप्रयत्नादेश्चेतनानधिष्ठितस्य कार्यकरत्वाभ्युपगमेन व्यभिचाराच्च ।

ननु जीवस्य कथं कर्तृत्वम्, अशरीरस्य तस्य कर्तृत्वासम्भवात्सर्गे च सर्वोपसंहारेण शरीराभावात्? अतः शरीरानपेक्षः कर्तृविशेषो न सिद्ध्यतीति शङ्कां परिहरति - न चेति । कुत इत्यत्राह **अदर्शनादिति** । प्रत्युतेदानीं क्रमेणैवोत्पत्तिविनाश-दर्शनमित्याह - **क्रमेणैवेति** । नन्विदानीं क्रमेणोत्पत्तिविनाशदर्शनेपि तदा सर्वेषामुत्पत्तिविनाशयौगपद्यं कलप्यत इत्यत्राह - **कार्यत्वेनेति** । **विरोधाभावात्** = व्याप्तिविरोधाभावात् । कार्यत्वबलेन युगपत्सर्वोत्पत्तिविनाशकल्पने सम्प्रतिपन्नकार्य-द्रव्याणां युगपत्सर्वोत्पत्तिविनाशादर्शनेन कल्पकं व्यभिचरितमिति सूचनार्थश्चकारः । एवं परोक्तानुमाने दूषणं वक्तुं तदुपयोग्यर्थ उक्तः । अथ फलितं दूषणं प्रदर्शयति - **अत इति** । किं सामान्यतो बुद्धिमदेककर्तृकत्वमात्रं साध्यते यद्वा सर्वज्ञसर्वशक्त्येककर्तृकत्वम् उत बुद्धिमत्कर्तृकत्वमात्रम् इति विकल्पमभिप्रेत्य प्रथमं दूषयति - **बुद्धिमदिति** । **अनैकान्त्य-मिति** । अनेककर्तृकरथगोपुरादिषु कार्यत्वस्य विद्यमानत्वादिति भावः । एतेन स्वोपादानाद्यभिज्ञैककर्तृकत्वं साध्यमिति पक्षोपि व्युदस्तः । द्वितीयपक्षं व्युदस्यति - **पक्षस्येति** । अग्निमत्वस्येव सर्वज्ञसर्वशक्त्येककर्तृकत्वस्य कुत्राप्यदर्शनेना-प्रसिद्धेश्चेति भावः । नहि काञ्चनमयवह्निमत्वं कुत्रचित्प्रसिद्धं, तद्वदिति भावः । अत एव दृष्टान्तस्यापि साध्यवैकल्यमि-त्याह - **साध्येति** । अप्रसिद्धविशेषणत्वं साध्यवैकल्यं चोपपादयति - **सर्वेति** । तृतीयपक्षं निरस्यति - **बुद्धिमदिति** । ननु

**सार्वज्ञ्यसर्वशक्तियुक्तस्य कस्यचिदेकस्य साधकमिदं कार्यत्वं किं युगपदुत्पद्यमानसर्ववस्तुगतम् ? उत क्रमेणोत्पद्यमानसर्ववस्तुगतम् ? युगपदुत्पद्यमानसर्ववस्तुगतत्वे कार्यत्वस्यासिद्धता । क्रमेणोत्पद्यमानसर्ववस्तुगतत्वेऽनेककर्तृकत्वसाधनाद्विरुद्धता । अत्राप्येककर्तृकत्वसाधने प्रत्यक्षानुमानविरोधः ; शास्त्रविरोधश्च, कुम्भकारो जायते, रथकारो जायत इत्यादिश्रवणात् ॥**

**अपि च सर्वेषां कार्याणां शरीरादीनाञ्च सत्त्वादिगुणकार्यरूपसुखाद्यन्वयदर्शनेन सत्त्वादिमूलत्वमवश्याश्रयणीयम् । कार्यवैचित्र्यहेतुभूताः कारणगता विशेषास्सत्त्वादयः ; तेषां कार्याणां तन्मूलत्वापादनं तद्युक्तपुरुषान्तःकरणविकारद्वारेण; पुरुषस्य च तद्योगः कर्ममूल इति कार्यविशेषारम्भायैव ज्ञानशक्तिवत्कर्तुः**

---

वेदान्तिभिः जीवानां कर्तृत्वानभ्युपगमात्कथं सिद्धसाधनम् ? तेषामपि द्वारकर्तृकत्वाभ्युपगमादित्यवेहि । ननु समष्टितत्वविषयद्वारकर्तृत्वमपि नास्तीति तस्यैव पक्षीकारान्न सिद्धसाधनसम्भव इति चेन्न, तादृशतत्वस्य लौकिकप्रमाणाविषयत्वेन पक्षीकरणासम्भवात् । न चागमसिद्धत्वेन तथात्वं युक्तम् । तथा सति तत्कर्तुरप्यागमसिद्धत्वेनानुमाने सिद्धसाधनादिति ॥

सर्वज्ञत्वसर्वशक्त्यादियुक्तैककर्तृकत्वसाधने दूषणान्तरमाह - **सार्वज्ञ्येति** । अयमाशयः - सामान्यतः सकर्तृकत्वव्याप्येन कार्यत्वहेतुना कर्तृविशेषसिद्धि र्न सम्भवति । जीवमादाय सिद्धसाधनात् । अतः कर्तृविशेषव्याप्येन कार्यत्वविशेषेणैव कर्तृविशेषस्साधनीयः । कुम्भादिकार्यविशेषेण कुलालादिकर्तृविशेषसिद्धिवत् । तथा च विशेषभूतमिदं कार्यत्वं किं युगपदुपत्यद्यमानं सर्ववस्तुगतं, किं क्रमेणोत्यद्यमानसर्ववस्तुगतम् । पक्षद्वयमपि न सम्भवति । अतो न कर्तृविशेषसिद्धिरिति । '**असिद्धतेति**' कृत्स्नस्यापि युगपत्प्रलयासिद्धेः महीमहीधरादीनां युगपदुत्पत्तौ प्रमाणाभावादिति । **विरुद्धतेति** । क्रमेणोत्पद्यमानसर्ववस्तूनां भिन्नकर्तृकत्वदर्शनात् क्रमेणोत्पद्यमानसर्ववस्तुगतकार्यत्वहेतुः भिन्नकर्तृकत्वमेव साधयेदिति भावः । यद्यप्येक एवानेकजन्मसु अनेककार्याणामपि कर्ता भवितुमर्हति । अथापि तस्य सर्वकार्यकर्तृत्वं न सम्भवति । तस्मिन्नेव जन्मनि अन्येनापि पटादिनिर्माणदर्शनेन तत्कार्यस्य तत्कर्तृकत्वासंभवात् । अन्यथा प्रत्यक्षादिविरोध इति दर्शयति - **अत्रापीति** । क्रमेणोत्पद्यमानसर्ववस्तुगतकार्यत्वव्यापकस्य घटपटादेः भिन्नकर्तृकत्वदर्शनात्प्रत्यक्षविरोधः । द्वीपान्तरवृत्तिघटादिः एतत्कुलालव्यतिरिक्तकुलालकर्तृकः एतद्व्यापारागोचरहेतुकत्वे सति घटत्वात्सम्प्रतिपन्नकुलालान्तरोत्पादितघटवदित्यनुमानविरोधश्च । द्वीपान्तरवृत्तिघटहेतुभूतदण्डादीनाम् एतद्व्यापारागोचरत्वमेतस्य तत्र गमनाभावेन निर्णीयत इति । शास्त्रविरोधं स्वयमाह - **कुम्भकार** इति । कुम्भकाररथकारयोः पृथगुत्पत्तिपृथगुक्तिभ्यां कुम्भरथयोरेककर्तृकत्वं न सम्भवतीति भावः । एतेनैकस्यैव पुंसः कुम्भरथनिर्माणसामर्थ्यतदुपादानादिज्ञानसत्वे कुम्भरथयोरेककर्तृकत्वसम्भव इति शङ्का निरस्ता । कुम्भकारस्य रथकरणासमर्थस्य रथकारस्य कुम्भकरणासमर्थस्य चैतद्वाक्ये बोधनात् । असामर्थ्यादेः प्रत्यक्षतो दृष्टत्वाच्च 'न हि सर्वोपि कुम्भकारः रथं करोति नापि रथकारः सर्वोपि कुम्भं करोति इति' ॥

कार्यत्वहेतोः कर्मवश्यत्वादिविशिष्टपुरुषसाधकत्वाद्विरुद्धत्वमित्याह - अपि चेति । शरीरादीनामिति स्पष्टप्रतीत्यै । आदिशब्देन दुःखमोहौ विवक्षितौ । अस्तु कार्यस्य सत्वादिमूलत्वं तावता कारणे किमायातम् । तत्राह - **कार्येति । कारणगताः** - निमित्तोपादानगताः । **तेषामिति** । पुरुषो हि सत्वादियुक्तस्वकीयान्तःकरण द्वारेण कार्याणां सत्त्वादिमूलत्वमापादयति । सात्त्विकःपुरुषः समीचीनं कार्यं करोतीत्यादिकं प्रसिद्धमेवेत्याशयः । अस्तु पुरुषस्य सत्वादियोगः तावता कथं कर्मवश्यत्वम् ? तत्राह - **पुरुषस्य चेति** । ननु सत्वादियोगस्य कर्ममूलत्वदर्शनेपि कल्प्यमानपुरुषे न कर्मसम्बन्धोऽङ्गीक्रियत इत्यत्राह - **ज्ञानशक्तिवदिति** । अयं भावः - कार्यारम्भहेतुतया लोकदृष्टस्य कथं कल्प्यमानपुरुषे परित्यागः । अन्यथा लोकदृष्टस्यापि कार्यारम्भहेतुभूतस्य ज्ञानशक्त्यादेरपि परित्यागस्स्यात् । तदभावेपि तस्य निष्पादकत्वसम्भवात् । ज्ञानशक्त्यादेः सामर्थ्यान्तर्गत्वान्न परित्यागसम्भव इति चेन्न, कर्मसम्बन्धस्यापि तथैव सामर्थ्यान्तर्गतत्वादिति । अन्यथापि

**कर्मसम्बन्धः कार्यहेतुत्वेनैवावश्याश्रयणीयः ; ज्ञानशक्तिवैचित्र्यस्य च कर्ममूलत्वात्। इच्छायाः कार्यारम्भहेतुत्वेऽपि विषयविशेषविशेषितायास्तस्यास्सत्त्वादिमूलकत्वेन कर्मसम्बन्धोऽवर्जनीयः। अतः क्षेत्रज्ञा एव कर्तारः ; न तद्विलक्षणः कश्चिदनुमानात्सिद्ध्यति ॥**

**भवन्ति च प्रयोगाः - तनुभुवनादि क्षेत्रज्ञकर्तृकम्, कार्यत्वात्, घटवत्। ईश्वरः कर्ता न भवति, प्रयोजनशून्यत्वात्, मुक्तात्मवत्। ईश्वरः कर्ता न भवति, अशरीरत्वात्, तद्वदेव। न च क्षेत्रज्ञानां स्वशरीराधिष्ठाने व्यभिचारः, तत्राप्यनादेस्सूक्ष्मशरीरस्य सद्भावात्। विमतिविषयः कालो न लोकशून्यः, कालत्वात् वर्तमानकालवत् इति।**

**अपि च - किमीश्वरस्सशरीरोऽशरीरो वा कार्यं करोति। न तावदशरीरः; अशरीरस्य कर्तृत्वानुपलब्धेः।**

---

कर्मसम्बन्धः एषितव्य इत्याह - **ज्ञानशक्तिवैचित्र्यस्येति** कर्मकृतत्वेनैव लोकदर्शनादिति भावः।

नन्विच्छामात्रमेव विचित्रसर्गे हेतुः, न तु ज्ञानशक्तिवैचित्यादिकमित्यत्राह - **इच्छाया इति**। हेतुभूतेच्छायाः सर्गस्थेमादिविषयत्वम् ; तत्र च विचित्रसर्गविषयत्वं कर्माधीनसत्त्वादिमूलकमेवेति भावः। **कर्मसम्बन्धोऽवर्जनीय इति**। सपक्षे सहदृष्टस्य कार्यहेतुभूतस्य लिङ्गिनि प्राप्तिर्भवताप्यभ्युपगता। कार्यगतवैचित्र्यस्य सत्वादिगुणमूलकत्वेन, कार्याणां सत्त्वादियुक्तपुरुषान्तःकरणविकारद्वारेण सत्त्वादि मूलत्वापादनेन च पुरुषस्यापि सत्त्वादियोगावश्यकतया तत एव कर्मसंबन्धस्याप्यावश्यकतेति कर्मणः कार्यहेतुत्वाद्भवदुक्तानुमानेन कर्मवश्यपुरुष एव सिध्येदिति भावः। असर्वज्ञत्वस्यापीदमुपलक्षणम्। जगत् स्वोपादानाभिज्ञकर्तृकं कार्यत्वादित्यनुमाने कार्यभूतवस्तूपादानाद्यभिज्ञपुरुषसिद्धावपि नित्यपदार्थविषयकज्ञानवत्ताया असिद्धेः। नित्यार्थविषयकज्ञानस्याहेतुत्वात्। न हि कुलालेन घटनिष्पत्तौ क्रियमाणायां तत्र पटाद्यज्ञानमिव पटादिज्ञानमपि हेतुः। सर्वविषयकत्वञ्च बाधितं कतिपयविषयकत्वं च व्यभिचरितम्। अतस्सर्वज्ञत्वादिविशिष्टेश्वरासिद्धिः न वारयितुं शक्येति। न च नित्यभूतानामपि जगदुपादानोपकरणान्यतररूपत्वेन स्वोपादानोपकरणाद्यभिज्ञत्वविशिष्टसकर्तृकत्वस्यैव साधनान्नाभिमतकर्तुः सर्वज्ञत्वासिद्धिरिति वाच्यम्। नित्यभूतानां जगदुपादानोपकरणान्यतररूपत्वाभावेन तद्विषयकज्ञानासिद्धेः। वस्तुतः विवादविषयभूतमहीमहार्णवादेः पक्षीकरणात्तत्र तदुपादानाद्यभिज्ञत्वविशिष्टपुरुष कर्तृत्वसाधनेपि जीवकर्तृकत्वेन सम्प्रतिपन्नानित्यघटाद्युपादानानभिज्ञत्वादिकमेव सर्वेश्वरस्य सिद्ध्यतीति न सर्वज्ञत्वविशिष्टेश्वरसिद्धिरित्यदि बोध्यम् ॥

प्रतिकूलतर्कोप्यस्तीत्याह - **भवन्तीति**। प्रथमेन कार्यत्वे क्षेत्रज्ञकर्तृकत्वमापादितम्। द्वितीयेनेश्वरस्य कर्तृत्वे प्रयोजनापेक्षत्वम्। तृतीयेन सशरीरित्वम्। तृतीयानुमाने व्यभिचारं शङ्कते - न चेति। न हि सशरीर एवान्यच्छरीरमधितिष्टतीति भावः। दूषयति - **तत्रापीति। अनादेरिति**। बीजाङ्कुरवदित्यदिः। अधिष्ठानं हि जीवस्य देहेनाद्यसम्बन्धः, सूक्ष्मशरीरो जीवः स्थूलशरीरमधितिष्ठति। बालशरीरः युवशरीरमिवेति नानुपपत्तिः। सूक्ष्मशरीरस्यानुपलब्धिस्तु पिशाचादिशरीरवत्। एवं युगपत्सर्वोच्छित्यभावे प्रतिकूलतर्कमाह - **विमतीति**। अत्र सूर्यपरिस्पन्दाद्यवच्छेदकभेदात्पूर्वत्वेन परत्वेन च कालरूपपक्षीकारः ॥

बुद्धिस्थत्वात् द्वितीयं शिरो दूषयति - **न तावदिति। अशरीरस्य कर्तृत्वानुपलब्धेरिति**। अयमाशयः - सकर्तृकत्वसाधककार्यत्वहेतोः शरीरजन्यत्वरूपोपाधिः दुष्परिहरः। घटादौ साध्यव्यापकत्वादङ्कुराद्यन्तर्भावेण पक्षावृत्तित्वाच्च। युष्मन्मते ईश्वरस्य शरीरानङ्गीकारादङ्कुरादीनां शरीरनिरूपितजन्यत्वाभावात्। अपि चाङ्कुरादिकं कर्तृजन्यत्वाभाववत् शरीराजन्यत्वात्

इत्यनुमानेन बलवता बाधश्च। न च यत्र यत्र जन्यत्वं तत्र कर्तृजन्यत्वाभाव इति व्याप्तेरेव निर्दुष्टत्वाज्जन्यतायां शरीरनिरूपितत्वविशेषणं व्यर्थमिति वाच्यम्। क्षित्यङ्कुरादेरजन्यत्वासम्भवेन प्रसक्ताया असिद्धेः जन्यत्वे शरीरनिरूपितत्वविशेषणेन वारणान्न वैयर्थ्यमिति। न च साध्यघटकपदानां सिद्धसाधनवारकतया सार्थक्यमिव हेतुघटकदलानां व्यभिचारवारकतया सार्थक्यमिति नियमादत्रासिद्धिवारकस्याप्युक्तविशेषणस्य न सार्थक्यसम्भव इति वाच्यम्। तथा नियमानङ्गीकारात्। न च पर्वतो वह्निमान् नीलधूमादित्यादौ नीलपदस्य व्यर्थविशेषणत्वेन दूषणोक्तिरनुपपन्ना स्यादिति वाच्यम्। यत्किञ्चिद्दोषपरिहारानुपयुक्तत्वस्यैव व्यर्थत्वसाधकत्वात्। अत्रासिद्धिपरिहारार्थं प्रयुक्तत्वान्न व्यर्थता। नीलधूमादित्यत्र यस्य कस्यापि वा दोषस्य परिहारार्थत्वाभावाद्वैयर्थ्यमिति।

न च धूमः श्वेत एवेति कस्यचिद्भ्रमे, सम्प्रति पक्षवृत्तेर्नीलस्याधूमत्वभ्रान्तिर्जायत इति तद्भ्रान्तिवारणाय नीलपदप्रयोगस्सम्भवतीति न व्यर्थविशेषणतेति वाच्यम्। धूमः श्वेत एवेति भ्रान्तिमन्तं प्रति नीलधूमादिति प्रयोगेण प्रकृतानुमाने किञ्चिदपि प्रयोजनस्याभावात्। भ्रान्तिवारणेन सार्थक्यान्न व्यर्थत्वमिति चेत्? धूमः श्वेत एवेति भ्रान्तिनिवृत्तावपि प्रकृतानुमानेऽनुपयोगेन प्रकृतानुपयुक्तवचनमर्थान्तरमिति अर्थान्तररूपनिग्रहस्थानानिवारणात्। हेत्वाभासरूपदूषणेनैव भाव्यमिति निर्बन्धाभावात्। अथ जन्यत्वाभावस्य हेतुत्वे स्वरूपासिद्धिरिति तत्परिहाराय शरीरनिरूपितत्वविशेषणे व्याप्यत्वासिद्धिर्दुवारा। व्याप्तिग्रहानुपयुक्तशरीरनिरूपितत्वरूपविशेषणवत्तया व्यर्थविशेषणत्वात्। अत एव हि नीलधूमवत्वादिति प्रयोगे नीलधूमत्वावच्छेदेन व्याप्तेरभावान्नीलधूमो व्याप्यत्वासिद्धः। अत्राप्यजन्यत्वावच्छेदेनैव व्याप्तेः शरीराजन्यत्वावच्छेदेन व्याप्तेरभावाच्छरीराजन्यत्वं व्याप्यत्वासिद्धमेव। शरीरजन्यत्वाभावत्वस्य जन्यत्वाभावत्वापेक्षया गुरुत्वेन लघोर्व्याप्यतावच्छेदकत्वे सम्भवति गुरोरवच्छेदकत्वासम्भावादिति चेदुच्यते। शरीराजन्यत्वावच्छेदेन व्याप्यभावसिद्धौ हि व्याप्यत्वासिद्धिः। तेनाप्याकारेण व्याप्तिसिद्धेरुक्तदूषणानवकाशात्। स्वसमानधिकरणव्याप्यतावच्छेदकधर्मान्तराघटितस्यैव व्याप्यतावच्छेदकत्वमिति सिद्धान्तात्। अत एव वह्निमान् धूमप्रगभावादिति सद्धेतुतयाऽभिमतस्य धूमप्रागभावत्वस्य व्याप्यतावच्छेदकत्वम्। धूमत्वस्य धूमप्रागभावत्वसमानाधिकरणत्वविरहादघटितत्वोपपत्त्या व्याप्यतावच्छेकत्वं नीलधूमत्वस्य स्वसमानाधिकरणतादृशधूमत्वघटितत्वमेवेति न व्याप्यतावच्छेदकत्वमिति भिदा। अतो न व्यर्थविशेषणता। नापि व्याप्यत्वासिद्धिरिति।

अपि च सकर्तृकं कार्यत्वादिति भवदीयानुमानेपि साध्ये व्यर्थविशेषणतैव। सकर्तृकत्वं हि कर्तृरूप हेतुमत्वं तच्च कर्तृनिष्ठकारणतानिरूपकत्वम्। अत्रकारणतयां कर्तृनिष्ठत्वविशेषणं व्यर्थं कारणतानिरूपकत्वकार्यत्वयोरेवव्याप्तेः। कर्तृनिष्ठत्वघटितस्य साध्यस्य कार्यत्वरूपहेतुव्यापकत्वाभावात्। न च सकर्तृकमित्यत्र कारणताबोधकपदाभावात्कर्तृनिष्ठकारणतानिरूपकत्वस्य न साध्यत्वं सहशब्दस्साहित्यमात्रवाची। अतः कर्तृप्रतियोगिकसम्बन्धस्यैव साध्यत्वप्रतीतिः तत्र सम्बन्धे कर्तृप्रतियोगिकत्वविशेषणं च न व्यर्थम्। एतदनिवेशे यत्र सम्बन्धाभावः तत्र कार्यत्वाभाव इति व्याप्तिग्रहस्य वाच्यतया सम्बन्धाभावाप्रसिद्धिस्स्यात्। तथा च व्याप्तिग्रह एव न सिध्येत्। अतः कर्तृप्रतियोगिकत्वविशेषणं व्याप्तिग्रहोपयुक्तमेवेति वाच्यं, यतो भवतां कर्तृसम्बन्धमात्रं न साध्यं सिद्धसाधनात्कार्येषु जीवरूपकर्तृप्रतियोगिकत्वस्य समानकालिकत्वादिसम्बन्धस्य सत्त्वात्। अतः कारणतानिरूपकत्वरूपसम्बन्धविशेष एव पर्यवसानं कार्यमिति व्यर्थविशेषणता नापह्नोतुं शक्या।

न च जन्यतासम्बन्धेन कर्तुरेव साध्यत्वमभ्युपगम्यते, अतो न कस्यचिदपि व्यर्थता इति वाच्यम्। कर्तृजन्यात्वाभाववत् अशरीरत्वादिति प्रयोगे अस्मदीयेपि जन्यतासम्बन्धावच्छिन्नशरीरत्वावच्छिन्नप्रतियोगिताकाभावपरत्वमेव अशरीरत्वशब्दस्येति न व्यर्थविशेषणत्वं नापि व्याप्त्यसिद्धिरिति समानयोगक्षेमात्। न च अशरीरत्वात् इति प्रयोगो न

**मानसान्यपि कार्याणि सशरीरस्यैव भवन्ति; मनसो नित्यत्वेऽप्यशरीरेषु मुक्तेषु तत्कार्यादर्शनात्। नापि सशरीरः; विकल्पासहत्वात्। तच्छरीरं किं नित्यम्, उतानित्यम्। न तावन्नित्यम्, सावयवस्य तस्य नित्यत्वे जगतोऽपि नित्यत्वाविरोधादीश्वरासिद्धेः। नाप्यनित्यम्, तद्व्यतिरिक्तस्य तच्छरीरहेतोस्तदानीमभावात्। स्वयमेव हेतुरिति चेन्न; अशरीरस्य तदयोगात्। अन्येन शरीरेण सशरीर इति चेन्न; अनवस्थानात्। स किं सव्यापारो निर्व्यापारो वा। अशरीरत्वादेव न सव्यापारः। नापि निर्व्यापारः कार्यं करोति मुक्तात्मवत्। कार्यं जगत् इच्छामात्रव्यापारकर्तृकमित्युच्यमाने पक्षस्याप्रसिद्धविशेषणत्वम्; दृष्टान्तस्य च साध्यहीनता।**

**अतो दर्शनानुगुण्येनेश्वरानुमानं दर्शनानुगुण्यपराहतमिति शास्त्रैकप्रमाणकः परब्रह्मभूतः सर्वेश्वरः**

---

विद्यते शरीरं यस्येति विग्रहे यज्जनकत्वाभाववत् शरीरमिति विग्रहवाक्यार्थः। समासे एतद्वैपरीत्ये शरीराजन्यत्वमिति फलति। अत्र शरीरपदं व्यर्थमेवेति वाच्यम्। सकर्तृकमित्यत्रापि एवं पर्यनुयोगसम्भवात्। 'स्वतन्त्रः कर्ता' इति हि पाणिनिसूत्रम्। अत्र हि स्वतन्त्रकारकस्य कर्तृसञ्ज्ञा। 'क्रियां कुर्वद्धि कारकम्' इति न्यायात्कारकत्वं क्रियाजनकत्वरूपमिति सकर्तृकमित्यत्र सम्बन्धो हेतुत्वरूप एव। स चकारणतानिरूपकत्वरूपः। तत्र कारणतायां कर्तृनिष्ठत्वविशेषणं व्यर्थमेवेत्यवेहि। एतद्विस्तरो न्यायसिद्धाञ्जने ईश्वरपरिच्छेदे सम्यक् द्रष्टव्यः।

अशरीरस्यापि सङ्कल्पमात्रेण कर्तृत्वमुक्तमित्यत्राह - **मानसान्यपीति**। नित्यत्वेपीत्यपिशब्देन स्वमतेऽनित्यत्वमुक्तम्। अतः सशरीरस्यैव समनस्कत्वं पूर्वोक्तं स्थापितम्। '**तत्कार्यादर्शनादिति**' भोगसाधनमनस्कत्वस्योपाधित्वं न सम्भवति। मनसो द्वैविध्याभावात् इति भावः। प्रथमं प्रतिवक्ति - **नापीति**। विकल्पासहत्वमेवोपपादयति - **तदिति**। प्रथमं दूषयति - **न तावदिति**। सावयवस्येति करचरणादिविशिष्ट-शरीरस्य निरवयवत्वादर्शनादिति भावः। **जगतः** = पक्षीकृतस्य। **नित्यत्वाविरोधादिति**।

ननु जगतो नित्यत्वं प्रत्यक्षविरुद्धं नाशदर्शनात्, ईश्वरशरीरस्य तु न तथा, अदृश्यत्वादिति चेन्न। घटपटादेर्नाशदर्शनेन नित्यत्वस्य प्रत्यक्षविरुद्धत्वेपि महीमहीधरादीनां नाशस्यास्मदादिभिरग्राह्यत्वेन तस्यैव पक्षीकरणाच्च प्रत्यक्षविरोधासम्भवादीश्वरासिद्धेः। क्वचित्सावयवस्यापि नित्यत्वेऽन्यस्यापि सावयवस्य तथात्वमेवोचितमिति भावः। अनेन ईश्वरशरीरे सावयवत्वहेतो व्यर्भिचोरोपि दर्शितः। द्वितीयं निरस्यति - **नापीति**। **तद्व्यतिरिक्तस्य** = ईश्वरव्यतिरिक्तस्य। स्वशरीरेपि ईश्वर एव हेतुरिति शङ्कते - **स्वयमिति**। स किं सशरीरस्सन् स्वशरीरं प्रति हेतुः उतान्यशरीर इति विकल्पं हृदि निधाय परिहरति **अन्येनेति**। **अनवस्थानादिति**। अन्यशरीरस्यापि नित्यत्वानित्यत्वविकल्पद्वाराऽनवस्थेति भावः। नन्वस्या अनवस्थाया न दोषावहत्वं, प्रामाणिकत्वादिति चेन्न। तावतापि शरीरित्वप्रयुक्तकर्मवश्यत्वस्यानिराकरणात्॥

प्रकारान्तरेण विकल्प्य दूषयति - **स किमिति**। प्रथमं दूषयति **अशरीरत्वादेवेति**। सशरीरत्वस्य बहुदोषदुष्टत्वेनाशरीरत्वस्यैवांगीकार्यत्वादिति। **नापीति**। अशरीरस्य मुक्तात्मनो निर्व्यापारस्य कार्यकरत्वाभावादस्यापि कार्यकरत्वं न सम्भवतीति भावः। अशरीरत्वेपीच्छामात्रमेव व्यापारीकृत्य कार्यकरणं युज्यत इति शङ्कामनूद्य परिहरति - **कार्यमिति**। **पक्षस्येति**। इच्छामात्रव्यापारकर्तृकत्वस्य कुत्राप्यदर्शनादित्याशयः। एवं घटादिदृष्टान्ते साध्यवैकल्यमपि। इच्छाव्यतिरिक्तस्यापि व्यापारस्यापेक्षणादित्यभिप्रयन्नाह - **दृष्टान्तस्य चेति**। **पराहतमिति**। एतद्भाष्यार्थः सारावल्यामनुगृहीतः - 'दृष्टन्यायेन विश्वप्रजनकचिदचित्तत्वभेदप्रक्लृप्तौ स्वेष्टप्रत्यर्थिधर्मोपनयननियतव्याप्तिवैयाकुली स्यात्' इति। लोकदृष्टप्रक्रियया ईश्वरस्यानुमाने लोकदृष्टप्रक्रिययैव न सिद्ध्येदित्यभिमतसर्वज्ञत्वादिविशिष्टपुरुषविशेषो न सिद्ध्येदेवेति॥

नन्वनुमानसिद्धकर्तृविशेषापादितदोषाणां शास्त्रसिद्धेपि तस्मिन्प्रवृत्या शास्त्रमपि न तत्र प्रमाणं भवितुमर्हतीत्यत्राह

**पुरुषोत्तमः। शास्त्रं तु सकलेतरप्रमाणपरिदृष्टसमस्तवस्तुविसजातीयं सार्वज्ञ्यसत्य सङ्कल्पत्वादिमिश्रानवधिकातिशयापरिमितोदारगुणसागरं निखिलहेयप्रत्यनीकस्वरूपं प्रतिपादयतीति न प्रमाणान्तरावसितवस्तुसाधर्म्यप्रयुक्तदोषगन्धप्रसङ्गः। यत्तु निमित्तोपादानयोरैक्यमाकाशादेर्निरवयवद्रव्यस्य कार्यत्वं चानुपलब्धम् अशक्यप्रतिपादनमित्युक्तम् - तदप्यविरुद्धमिति,** (शारी.१.४.२३.) **'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्',** (शारी.२.३.१.) **'न वियदश्रुतेः' इत्यत्र प्रतिपादयिष्यते। अतः प्रमाणान्तरागोचरत्वेन शास्त्रैकविषयत्वात् 'यतो वा इमानि भूतानि' इति वाक्यमुक्तलक्षणं ब्रह्म प्रतिपादयतीति सिद्धम्॥**

इति शास्त्रयोनित्वाधिकरणम्॥ ३॥

अथ समन्वयाधिकरणम्॥ ४॥

**यद्यपि प्रमाणान्तरागोचरं ब्रह्म, तथापि प्रवृत्तिनिवृत्तिपरत्वाभावेन सिद्धरूपं ब्रह्म न शास्त्रं**

---

- **शास्त्रं त्विति**। अत्यान्तादृष्टमर्थं भणितुमधिकृताच्छास्त्रतः। सर्वकर्तुः सिद्धौ बाधाद्यनर्हप्रमितिपरवतीसर्वधर्मोपपत्तिरिति चान्वग्राहि सारावल्याम्। एतेन सर्वविसजातीयत्वं सिद्धम्। विसजातीयत्वोपपादकमाह - **सार्वज्ञ्येति**। सार्वज्ञसत्यसङ्कल्पत्वमिश्रा अनवधिकातिशया अपरिमिता उदारा गुणाः, तेषां सागरम् = आश्रयम्। **वस्तु साधर्म्यप्रयुक्तेति**। 'आत्मनि चैवं विचित्राश्च हि' इति सूत्रोक्तन्योयेन तत्तद्भावानां स्वभाववैचित्र्यात् आगमबोधितेश्वरस्य जीवादिवत् अल्पज्ञत्वादि साधर्म्यशङ्काया नावकाश इति भावः॥

नन्वीश्वरानुमाननिरसनमयुक्तम्, ईश्वरस्यानुमानसिद्धत्वेपि वेदेन तदनुवादसम्भवात्। नचानुवादमात्रेणाप्रामाण्यम्। श्रुतिसिद्धार्थनुवादरूपत्वेपि स्मृतीनां वेदमूलकत्वेन प्रामाण्यवत् अनुमानमूलकत्वेन प्रामाण्याविघातात्। वस्तुतोऽनुमानेन निमित्तेश्वरसिद्धावपि तदसिद्धस्य निमित्तोपादानैक्यस्य गगनादिसर्वकर्तृकत्वस्य च शास्त्रेण बोधनसम्भवादिति शङ्कां, निमित्तोपादानैक्याकाशादिनिरवयवद्रव्यकार्यत्वानुपपत्या बाधितार्थबोधकत्वेन वेदस्य न प्रामाण्यमिति पूर्वपक्ष्युक्तशङ्कापरिहारव्याजेन परिहरति - **यत्त्विति**। **तदपि** = ऐक्यं कार्यत्वञ्च। अबाधितत्वस्य स्थाप्यमानतया अबाधितार्थबोधकत्वरूपप्रामाण्यं वेदस्य सम्भवतीति भावः। अयमाशयः - 'असन्निकृष्टवाचा हि द्वयमत्र जिहासितम्। ताद्रूप्येण परिच्छित्तिः तद्विपर्ययतोपि वा' इति नयेन शास्त्रस्य प्रमाणान्तरसिद्धनिमित्तेश्वररूपार्थबोधकत्वम् अनुमानादि बाधितनिमित्तोपादानैक्याकाशादिनिरवयवद्रव्यकार्यत्वरूपार्थबोधकत्वं च न सम्भवति। न चानुवादरूपत्वं युक्तम्। अनुमानेनामूर्तद्रव्येतरनिष्ठोपादानव्यतिरिक्तकर्तृकत्वस्यैव सिद्ध्या निमित्तोपादानैक्ये गगनादिसर्गे च शास्त्रानुमानयोर्विरोधादनुवादासम्भवात्। अनुवादत्वं हि स्वज्ञाप्यार्थज्ञापकमानान्तरा विरोध एव भवति। तस्मान्नात्रानुवादत्वसम्भवः। अप्रतिपन्नैक्यदिकमपि धर्मिग्राहकप्रमाणविरोधाच्छास्त्रं न बोधयेत्। अतोऽनुमाननिरास आवश्यक इति। अधिकरणार्थमुपसंहरति - **अत इति**॥

समन्वयाधिकरणम्

अनन्तराधिकरणसंगतिपूर्वकमुत्तर सूत्रमवतारयति - **यद्यपीति**। अयं भावः - प्रथमाधिकरणेन सिद्धे ब्रह्मणि वेदान्तवाक्यानां व्युत्पत्तिः स्थापिता। द्वितीयेन लक्षणतः प्रतिपत्तिः। एवमधिकरणद्वयेन ब्रह्मणि शब्दद्वारकमर्थद्वारकं च शक्तिमत्त्वं वेदान्तवाक्यानां स्थापितम्। अतोऽधिकरणद्वयस्यैकपेटिकान्तर्भावः। तृतीयेन ब्रह्मणः प्रमाणान्तरज्ञातत्वात् अज्ञातत्वप्रयुक्तबुभुत्साविरहः प्रत्युक्तः। चतुर्थेन ब्रह्मणोऽपुरुषार्थत्वात् पुरुषार्थत्वप्रयुक्तबुभुत्साविरहः परिह्रियत इति बुभुत्साहेतुनिरूपणपरत्वेन तृतीयचतुर्थयोरेकपेटिकान्तर्भाव इति विवेकः। **प्रवृत्तीति**। शास्त्रस्य सुखदुःखनिवृत्तिरूपप्रयोजनोपायबोधकत्वेन प्रयोजनपर्यवसानं वक्तव्यम्। सिद्धरूपस्य ब्रह्मणः प्रवृत्तिनिवृत्त्यन्तररूपत्वाभावेन तत्प्रतिपादक-

**प्रतिपादयतीत्याशङ्क्याह -**

**तत्तु समन्वयात् ॥ २ । १ । ४ ॥**

**प्रसक्ताशङ्कानिवृत्त्यर्थस्तुशब्दः । तत् - शास्त्रप्रमाणकत्वं ब्रह्मणस्सम्भवत्येव । कुतः ? समन्वयात् - परमपुरुषार्थतयाऽन्वयस्समन्वयः; परमपुरुषार्थभूतस्यैव ब्रह्मणोऽभिधेयतयाऽन्वयात् ।**

**एवमिव समन्वितो ह्यौपनिषदः पदसमुदायः -** (तै.भृ.) **'यतो वा इमानि भूतानि जायन्ते'**, (छा.६.२.१.) **'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत'**, (बृ.३.२.११.) **'ब्रह्म वा इदमेकमेवाग्र आसीत्'**, (ऐतरेय. १.१.१.) **'आत्मा वा इदमेक एवाग्र आसीत्'**, (तै.आनं) **'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः'**, (महोपनिषत्.१.१.) **'एको ह वै नारायण आसीत्'**, (तै.आनं) **'सत्यं ज्ञानमनन्तं ब्रह्म'**, (तै.भृ.) **'आनन्दो ब्रह्म' इत्येवमादिः ।**

---

शास्त्रस्य स्वार्थे प्रामाण्यं न सम्भवति । अपुरुषार्थे बुभुत्साभावेन बुभुत्साख्यपरिकराभावात्तद्विषये शास्त्रस्य प्रमितिजनकत्वाभावात् ।

ननु सामग्रीसत्त्वे कार्यावश्यम्भावनियमेन चक्षुरादिसामग्रीसत्वे निष्प्रयोजनलोष्ठादिदर्शनोत्पत्तिवच्छाब्दप्रयोजकसामग्रीसत्त्वे प्रयोजनाभावेपि ब्रह्मविषयकप्रमात्मकं ज्ञानं कुतो न जन्यते ? प्रयोजनस्य सामग्रीघटकत्वाभावादिति चेन्न । प्रयोजनस्य सामग्रीघटकत्वाभावेपि बुभुत्साया शाब्दसामग्रीघटकत्वेन प्रयोजनविरहस्थले बुभुत्साया अनुदयात् सामग्र्या एव तत्राभावात् । न च बुभुत्सायाः शाब्दसामग्रीघटकत्वमसिद्धम् । अन्यथा जनितान्वयबोधाद्वाक्यात्पुन र्बोधापत्तेः । न चाबुभित्सितस्वनिन्दापरवाक्याद्बोधस्यानुभवसिद्धत्वेन न तस्या हेतुत्वं युक्तमिति वाच्यम् । स्पष्टतरखण्डवाक्यार्थबोधस्य बुभुत्सां विनोदयेपि दुरूहयत्नसाध्यनानावाक्यघटितमहावाक्यार्थबोधेऽवधानोत्पादनद्वारा तस्या हेतुत्वावश्यकत्वात् । अतः प्रयोजनविरहस्थले बुभुत्सारव्यपरिकराभावेन शाब्दसामग्र्या प्रमित्यात्मकज्ञानासम्भव एवेति प्रकृते प्रयोजनाभावेन शास्त्रस्य ब्रह्मविषयकप्रमित्युत्पादकत्वं न सम्भवति । अतो वेदान्तवाक्यानां न ब्रह्मणि प्रामाण्यमिति पूर्वपक्ष्याशयः । इतिशब्दोऽध्याहर्तव्यः । इत्याशङ्क्य तत्तु समन्वयादित्याहेत्यन्वयः । **प्रसक्तेति** ।

यद्यपि सूत्रान्तरेष्वपि प्रसक्ताशङ्काः सन्त्येव, अथापि तत्प्रदर्शनार्थ एवात्र तुः । शास्त्रयोनित्वादिति प्रकृतं शास्त्रयोनित्वं तच्छब्दार्थः । परमपुरुषार्थतयेति समित्युपसर्गविवरणम् । कर्तृकरणाद्याकाङ्क्षानिवृत्त्यै समन्वयशब्दार्थं पूरयति - **परमेति** । शास्त्रेण ब्रह्मणः अन्वयः-अभिधेयत्वरूप इति सूचनायाह - **अभिधेयतयेति** । ब्रह्म शास्त्रप्रमाणकं परमपुरुषार्थत्वेनाभिधेयत्वात्, शास्त्रजन्यपुरुषार्थत्वप्रकारकबोधविषयत्वात्स्वर्गादिवदित्यनुमानम् । हेतोः पक्षनिष्ठत्वमपि प्रदर्शितम् । एवं समन्वयत्वरूपसमन्वितत्वस्य पक्षभूतब्रह्मनिष्ठत्वसम्पादनाय ब्रह्मणोऽभिधेयतया इति पूर्वं भाषितम् । अत्रौपनिषदपदसमुदायस्य ब्रह्मप्रतिपादकतया समन्वितत्वकथनं तात्पर्यार्थकथनम् । एवमेवोत्तरत्रापीति । अन्यथा - शास्त्रं सिद्धे ब्रह्मणि प्रमाणं परमपुरुषार्थबोधकत्वादित्यनुमानं बोध्यम् । अत्रौपनिषदपदसमुदाय इति वचनभङ्ग्या सर्वेषामप्युपनिषद्वाक्यानां वाक्यैकवाक्यतया ब्रह्मरूपैकार्थबोधकत्वं भवतीति सूचितम् । पदसमुदाय इत्यारभ्य इत्येवमादिरित्यनेनान्वयः । श्रुत्यर्थः स्फुटः ।

यद्यप्यानन्दो ब्रह्मेत्यादीनि ब्रह्मण आनन्दरूपत्वेन परमपुरुषार्थत्वबोधकवाक्यान्येवोपादेयानि अथापि आनन्दरूपत्वेन परमपुरुषार्थभूतब्रह्मण एव कारणत्वबोधनेन परमपुरुषार्थब्रह्मबोधकत्वं सर्ववाक्यानामप्यस्तीति सूचनायेतरवाक्योपादानम् । परमपुरुषार्थभूतब्रह्मण एव कारणत्वविशिष्टस्य ध्येयत्वेन प्राधान्यात्सत्यत्वादीनां स्वरूपनिरूपकत्वेन

**न च व्युत्पत्तिसिद्धपरिनिष्पन्नवस्तुप्रतिपादनसमर्थानां पदसमुदायानामखिलजगदुत्पत्तिस्थितिविनाश-हेतुभूताशेषदोषप्रत्यनीकापरिमितोदारगुणसागरानवधिकातिशयानन्दस्वरूपे ब्रह्मणि समन्वितानां प्रवृत्ति-निवृत्तिरूपप्रयोजनविरहादन्यपरत्वम्; स्वविषयावबोधपर्यवसायित्वात्सर्वप्रमाणानाम्। न च प्रयोजनानुगुणा प्रमाणप्रवृत्तिः। प्रयोजनं हि प्रमाणानुगुणम्। न च प्रवृत्तिनिवृत्त्यन्वयविरहिणः प्रयोजनशून्यत्वम्; पुरुषार्थान्व-**

---

यावदुपासनभावित्वेन प्राधान्याच्च। कारणवाक्यानामयोगान्ययोगव्यवच्छेदमुखेन ब्रह्मणि समन्वयप्रदर्शनादस्य प्रथमा-ध्यायस्य समन्वयाध्याय इति नामेत्ययमंशोपि शास्त्रारम्भसमर्थनपरचतुष्सूत्रीघटकेन चतुर्थसूत्रेण दर्शितः। सूत्रचतुष्टयस्य शास्त्रारम्भसमर्थनरूपत्वमिति सूचनायैवान्तिमसूत्र एव तुशब्दः प्रयुक्तः ॥

ननु ब्रह्मप्रतिपादकानामुपनिषत्पदसमुदायानामिष्टप्राप्त्यनिष्टनिवृत्तिरूपप्रयोजनोपायप्रवृत्तिनिवृत्त्यन्यतरबोधक-त्वाभावेन न प्रामाण्यमिति शङ्कायाः कः परिहार उक्तः। ब्रह्मण आनन्दरूपत्वेन पुरूषार्थत्वेपि तद्बोधकवाक्यस्य प्रयोजनभूत-तदुपायभूतप्रवृत्तिबोधकत्वाभावात्। अतो वेदान्तवाक्यादापाततः अर्थप्रतीतावपि न प्रतीयमानेऽर्थे तात्पर्यं वाच्यमिति शङ्कामुदाहृतश्रुत्यर्थविवरणमुखेन परिहरति - **न चेति**। पदसमुदायानामित्यन्तं जिज्ञासाधिकरणनिर्णीतार्थकथनम्। हेतुभूतेत्यन्तेन जन्माद्यधिकरणार्थ उक्तः। अर्थाच्छास्त्रयोनित्वाधिकरणार्थोऽपि। समन्वितानामित्यन्तेन निर्णेष्यमानार्था-नुवादः। उदाहृतवाक्येषु यत इत्यारभ्य नारायण आसीत् इत्यन्तार्थः अखिलेत्यादि हेतुभूतेत्यन्तेनोक्तः। ब्रह्मणि इत्यनेन 'सत्यं ज्ञानमनन्तं ब्रह्म' 'आनन्दो ब्रह्म' इति श्रुत्यर्थ उक्तः। प्रवृत्तिनिवृत्तिरूपप्रयोजनविरहात् इत्यनेनान्यपरत्वे पूर्वपक्ष्य-भिमतहेतूक्तिः। **अन्यपरत्वं** = तात्पर्याभावः। कुतो नान्यपरत्वमित्यत्राह - **स्वविषयेति**। अयमत्रभावः - प्रवृत्तिनिवृत्तिरूप-प्रयोजनविरहाद्ब्रह्मणि वेदान्तानां न प्रामाण्यमिति वदतः प्रवृत्तिनिवृत्त्यन्वयस्य प्रामाण्यव्यापकत्वमभिमतमिति प्रतीयते। येन व्यापकीभूतप्रवृत्तिनिवृत्त्यन्वयाभावेन तद्व्याप्यप्रामाण्याभाव आपाद्यते। तच्च न सम्भवति, प्रमाणानां स्वविषयावबोध एव पर्यवसायित्वमिति नियमात्। प्रमाणानि हि विषयावबोध एव पर्यवस्यन्ति 'नतु प्रवृत्तिनिवृत्त्योरपि'। अन्यपरत्वरूपा-प्रामाण्यशङ्का हि सिद्धे व्युत्पत्यभावनिबन्धना वा प्रमाणान्तरगोचरत्वप्रयुक्ता वा। उभयप्रकारेणापि शङ्कनमयुक्तमिति पूर्वमेव निरस्तम्। अतो वेदान्तवाक्यानां ब्रह्मणि प्रामाण्ये किमर्थः प्रद्वेषः।

ननु प्रवृत्तिनिवृत्त्यन्वयस्य प्रामाण्यव्यापकत्वाभावेपि प्रयोजनव्यापकत्वनियमात्प्रयोजनस्य च प्रामाण्यव्याप-कत्वात्प्रामाण्यव्यापकीभूतप्रयोजनव्यापकीभूतप्रवृत्तिनिवृत्त्यन्वयविरहेण तद्व्याप्यप्रयोजननिवृत्त्या तद्व्याप्य प्रामाण्य-स्यापि निवृत्तिरावश्यकीति शङ्कां व्युदस्यति - **न चेति**। अयं भावः - प्रवृत्तिनिवृत्त्यन्वयस्य प्रयोजनव्यापकत्वेपि प्रयोजनस्य प्रामाण्यव्यापकत्वाभावेन प्रवृत्तिनिवृत्त्यन्वयनिवृत्त्या तव्द्याप्यप्रयोजननिवृत्तावपि प्रामाण्यनिवृत्तेरयुक्तत्वादिति। **प्रयोजनं हीति**। हिः प्रसिद्धौ हेतौ वा। प्रयोजनस्य न प्रामाण्यव्यापकत्वं किन्तु प्रामाण्यस्यैव प्रयोजनव्यापकत्वम्। अन्यथा लोष्ठ दर्शनस्य निष्प्रयोजनस्य प्रामाण्यविघातप्रसङ्गात्। उक्तश्च तन्त्रटीकायां - 'न हि लोष्ठं पश्यतस्तद्दर्शनं निष्प्रयोजनमिति सुवर्णदर्शनता कल्प्येते'ति।

ननु प्रयोजनस्य प्रत्यक्षादिप्रामाण्यव्यापकत्वाभावेपि शास्त्रप्रामाण्यव्यापकत्वमङ्गीकर्तव्यं शास्त्रेण प्रमितौ जननीये वुभुत्सारव्यपरिकरस्यावश्यकत्वात्। अपुरूषार्थे च बुभुत्साया अनुदयात्। अपुरूषार्थत्वञ्च प्रवृत्तिनिवृत्त्यन्वयविरहात्। अतः सिद्धपरवाक्यस्य प्रवृत्तिनिवृत्त्यन्वयविरहेण तव्द्याप्यप्रयोजननिवृत्त्या प्रामाण्यनिवृत्तिरप्यस्त्येवेति शङ्कां परिहरति - **न चेति**। शास्त्रस्येत्यध्याहारः। प्रवृत्तिनिवृत्त्यन्वयस्य प्रयोजनव्यापकत्वमेव नास्ति, येन परम्परया शास्त्रस्य प्रामाण्य-विघातः शङ्क्येतेति भावः। कुत इत्यत्राह - **पुरुषार्थेति**। प्रवृत्तिनिवृत्त्यन्वयविरहेपि 'आनन्दो ब्रह्म' इति शास्त्रेणानन्दरूपस्य परमपुरूषार्थभूतस्य साक्षात्प्रयोजनस्य ब्रह्मणः बोधनान्न प्रवृत्तिनिवृत्त्यन्वयस्य प्रयोजनव्यापकत्वमङ्गीकर्तुं शक्यमिति

**यप्रतीतेः । तथा स्वरूपपरेष्वपि, 'पुत्रस्ते जातः, नायं सर्प' इत्यादिषु हर्षभयनिवृत्तिरूपप्रयोजनवत्वं दृष्टम् ॥**

**अत्राह - न वेदान्तवाक्यानि ब्रह्म प्रतिपादयन्ति; प्रवृत्तिनिवृत्त्यन्वयविरहिणश्शास्त्रस्यानर्थक्यात् । यद्यपि प्रत्यक्षादीनि वस्तुयाथात्म्यावबोधे पर्यवस्यन्ति; तथाऽपि शास्त्रं प्रयोजनपर्यवसाय्येव । न हि लोकवेदयोः प्रयोजनरहितस्य कस्यचिदपि वाक्यस्य प्रयोग उपलब्धचरः । न च किञ्चित्प्रयोजनमनुद्दिश्य वाक्यप्रयोगः,**

भावः । एवं लौकिकेपि सिद्धपरवाक्ये प्रवृत्तिनिवृत्त्यन्वयविरहेपि पुरुषार्थान्वयो दृष्ट इत्याह - **तथेति** । अयं भावः - वाक्यस्य प्रयोजनपर्यवसायित्वं सिद्धस्य साध्यस्य वा पुरुषार्थस्य बोधकत्वमेव । न तु प्रवृत्तिनिवृत्त्यन्यतरपरत्वम् । नापि सिद्धपरत्वम् । अतः प्रवृत्तिनिवृत्त्यन्यतरपरवाक्यस्येव सिद्धपरवाक्यस्यापि पुरुषार्थबोधकत्वे प्रयोजनपर्यवसायित्वं स्वीकर्तव्यमेवेति ॥

एवं सङ्ग्रहेण पूर्वपक्षसिद्धान्तौ वर्णितौ । अथ सूत्रतात्पर्ययोजनां वक्तुं विस्तरेण पूर्वपक्षमाह - **अत्राहेति** । इदञ्च समन्वयाधिकरणभाष्यं नाटकरूपमिति महतां प्रवादः । शास्त्रकादम्बरीति च । अत्र पूर्वपक्षिमुखेन जरन्मायावादिष्वन्यतरस्य निष्प्रपञ्चीकरणनियोगवादिनो मतस्य, शाङ्करभास्करमतं निराकृतवतो ध्याननियोगवादिनो मतस्य च निरासं विरचय्य सिद्धान्तं वक्ष्यति । अतः पूर्वपक्षिणः प्राभाकरस्य निष्प्रपञ्चीकरणनियोगवादिनः ध्याननियोगवादिनः, शाङ्करस्य भास्करस्य च पात्रस्य प्रवेशः पश्चात् सिद्धान्तिन इति विवेकः । तत्र ब्रह्मणः प्रवृत्तिनिवृत्तिरूपत्वाभावेनाफलत्वेन सिद्धरूपस्य तस्य शास्त्रेण बोधनं न सम्भवति । अतः शास्त्रप्रमाणकत्वाभावात्तद्विचारशास्त्रमनारम्भणीयमिति वदतो मीमांसकस्य पूर्वपक्षमाह - **अत्राहेति** । **प्रवृत्तिनिवृत्तयन्यतरविरहिणः** = प्रवृत्तिनिवृत्त्यन्यतराबोधकस्य । अन्यतरान्वयाभावे बोधनमेव न सम्भवति ।

यथाहुः - यावत्खलु प्रमातॄणां प्रवर्तननिवर्तने । शब्दा न कुर्वते तावन्न निराकाङ्क्षबोधनमिति । **शास्त्रस्यानर्थक्यादिति** । शास्त्रत्वस्यैवासम्भवादिति भावः । शासनाद्धि शास्त्रम् । शासनञ्च प्रवर्तननिवर्तनात्मकम् । उक्तञ्च 'प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा । पुंसां येनोपदिश्येत तच्छास्त्रं तूपपद्यत' इति । सदेवेत्यादिकं ब्रह्मस्वरूपोपदेशपरं वाक्यं स्वप्रतिपाद्यार्थप्रमाजनकत्वाभाववत्, प्रयोजनपर्यवसायित्वाभावात् । न च हेत्वसिद्धिः तादृशवाक्यं प्रयोजनापर्यवसायि प्रवृत्तिनिवृत्त्यन्यतरविषयाविषयकत्वात् । प्रवृत्तिनिवृत्त्यन्यतरविषयविषयकत्वस्य प्रयोजनव्यापकत्वेन तन्निवृत्तौ तद्व्याप्य प्रयोजनपर्यवसायित्वनिवृत्तेरित्ययमर्थः अनेन सूचितः । अत्र बुद्धिवैशद्यार्थं व्यत्ययेन पक्षसाध्यनिर्देशः कृतः । अन्यथा तु ब्रह्म 'यतो वा इत्यादि शास्त्राप्रमाणकं प्रयोजनभिन्नत्वात्, इत्यनुमानं बोध्यम् । स्वविषयावबोधपर्यवसायित्वात्सर्वप्रमाणानामिति सिद्धान्तिनोक्तमर्थमाशङ्क्य परिहरति - **यद्यपीति** । सर्वप्रमाणानामित्यत्र सर्वशब्दः सङ्कोचनीय इति भावः । लोकवेदयोः इत्यनेन य एव लौकिकाः शब्दाः त एव वैदिका इति नयाल्लौकिकशब्दानां प्रयोजनपर्यवसायित्वनियमे वैदिकानामपि तथात्वमावश्यकमिति सूचितम् । एवं शास्त्रस्य प्रयोजनपर्यवसायित्वाभावे प्रत्यक्षविरोध उक्तः ।

अथानुपपत्तिरपि इत्याह - **न चेति** । **किञ्चित्** = स्वसमवेतं परसमवेतं वा । यद्वा स्वल्पमधिकं वा । **श्रवणम्** = अर्थजिज्ञासया श्रावणं, न तु केवलं वाक्यविषयकश्रावणप्रत्यक्षम् । तस्यायत्नसाध्यत्वेन बुभुत्साया अभावेपि निष्पत्तेः । सम्भवतीति नेत्यनेनान्वयः । अयं भावः - वाक्यप्रयोगोऽर्थजिज्ञासया । तच्छ्रवणं च यत्नसाध्यम् । यत्नश्च प्रयोजनेन विनानुपपन्नः । अत एव हि पुनरुक्तेर्दूषणत्वं प्रयोजनाभावात् । ननु शास्त्रस्य न निष्प्रयोजनत्वमिति सत्यमेतत् । तावता किं नश्छिन्नम् । ब्रह्मणोऽप्यानन्दरूपत्वेन प्रयोजनत्वात्तत्प्रतिपादकशास्त्रस्य प्रयोजनपर्यवसायित्वसंभवात् इत्यत्र, इष्टप्राप्ति-अनिष्टनिवृत्त्योरेव प्रयोजनत्वात्तयोश्च प्रवृत्तिनिवृत्तिसाध्यत्वेन प्रवृत्तिनिवृत्त्यन्वयविरहिणः कथं प्रयोजनपर्यवसायित्व

**श्रवणं वा सम्भवति। तच्च प्रयोजनं प्रवृत्तिनिवृत्तिसाध्येष्टानिष्टप्राप्तिपरिहारात्मकमुपलब्धम्, 'अर्थार्थी राजकुलं गच्छेत्', 'मन्दाग्निर्नाम्बु पिबेत्', 'स्वर्गकामो यजेत' 'न कलञ्जं भक्षयेत्', इत्येवमादिषु।**

**यत्पुनः - सिद्धवस्तुपरेष्वपि, 'पुत्रस्ते जातः', 'नायं सर्पो रज्जुरेषा' इत्यादिषु हर्षभयनिवृत्तिरूपपुरुषार्थान्वयो दृष्ट इत्युक्तम्। तत्र किं पुत्रजन्माद्यर्थात्पुरुषार्थावाप्तिः, उत तज्ज्ञानादिति विवेचनीयम्। सतोऽप्यज्ञातस्यार्थस्यापुरुषार्थत्वेन तज्ज्ञानादिति चेत् - तर्ह्यसत्यप्यर्थे ज्ञानादेव पुरुषार्थस्सिद्ध्यतीत्यर्थपरत्वाभावेन प्रयोजनपर्यवसायिनोऽपि शास्त्रस्य नार्थसद्भावे प्रामाण्यम्। तस्मात्सर्वत्र प्रवृत्तिनिवृत्तिपरत्वेन ज्ञानपरत्वेन वा प्रयोजनपर्यवसानमिति कस्यापि वाक्यस्य परिनिष्पन्ने वस्तुनि तात्पर्यासम्भवान्न वेदान्ताः परिनिष्पन्नं ब्रह्म प्रतिपादयन्ति॥**

**अत्र कश्चिदाह - वेदान्तवाक्यान्यपि कार्यपरतयैव ब्रह्मणि प्रमाणभावमनुभवन्ति। कथम्? निष्प्रपञ्चम-**

---

मित्यभिप्रयन् समाधत्ते - **तच्चेति**। अर्थार्थी, मन्दाग्निः इत्युदाहरणाभ्यां लोकदृष्टान्तावुभयत्रोक्तौ। स्वर्गकामः न कलञ्जमित्याभ्यां वैदिकदृष्टान्तौ।

ननु प्रवृत्तिनिवृत्तिसाध्येष्टप्राप्त्यनिष्टनिवृत्त्योरेव प्रयोजनत्वमिति को निर्बन्धः, अन्यस्यापि प्रयोजनत्वसम्भवात्। अत एव सिद्धपरवाक्येषु प्रवृत्त्यसाध्यस्य हर्षरूपस्य निवृत्त्यसाध्यस्य भयनिवृत्तिरूपस्य च प्रयोजनत्वं दृश्यत इति पूर्वोक्तमर्थमनुवदति - **यत्पुनरित्यादिना**। दूषयितुं विकल्पयति - **तत्र किमिति**। पुरूषार्थावाप्तिं प्रति स्वरूपसतः पुत्रजन्माद्यर्थस्य न हेतुत्वं पुत्रजन्मसत्वेपि तज्ज्ञानाभावे हर्षानुदयात्। स्वरूपसतः सर्पाभावस्य सत्वेपि भयनिवृत्त्यदर्शनाच्च। अतस्तज्ज्ञानमेव हेतुरिति द्वितीयं शिरश्शङ्कते - **सतोपीति**। यदि ज्ञानमेव हेतुः तर्ह्यर्थस्याभावेपि सर्पादिप्रतीतिवज्ज्ञानसम्भवादर्थसत्यत्वे तद्वाक्यस्य प्रामाण्यं न सम्भवतीति दूषयति - **तर्हीति**। **अर्थपरत्वाभावेन** = अर्थे तात्पर्याभावेन। प्रयोजनपर्यवसायिनोपि शास्त्रस्येत्यभ्युपगम्यवादः। ननु न केवलमर्थसद्भाव एव हेतुः नापि तज्ज्ञानमात्रं, किन्तु यथावस्थितार्थज्ञानमेव। अतोऽर्थस्य सत्यत्वावश्यकतया नैष दोषः इति चेन्न। यथावस्थितार्थज्ञानस्य हेतुत्वे बालोपच्छन्दनवाक्येष्वर्थज्ञानात्पुरूषार्थानुत्पत्तिप्रसंगात्, तत्रार्थस्यासत्यत्वात्। एतदभिप्रायेणैव नार्थसद्भावे प्रामाण्यमिति भाषितम्॥

ननु पुत्रस्ते जात इत्यादिसिद्धपरवाक्यस्येव वेदान्तवाक्यस्याप्यर्थासत्यत्वेपि ज्ञानपरत्वेन प्रयोजनपर्यवसायित्वमस्त्येवेति शङ्कामुपसंहारव्याजेन परिहरति - **तस्मादिति**। अयं भावः यथा पुत्रजन्माद्यर्थाभावे पुत्रस्ते जात इति वाक्यस्य पुत्रजन्माद्यर्थविषयकप्रमाजनकत्वाभावः, तथा वेदान्तवाक्यस्यापि ब्रह्मविषयकप्रतीतिजनकत्वाभाव इति ब्रह्मणि न वेदान्तानां प्रामाण्यसंभव इति। ननु वेदान्तवाक्यं ब्रह्मविषयप्रमितिजनकत्वाभाववत् प्रयोजनशून्यत्वादित्यनुमानेन हि प्रामाण्याभावस्स्थापितः। तत्र ज्ञानपरत्वेन प्रयोजनवत्वस्योक्ततया कथं प्रयोजनशून्यत्वं, कथं वा स्वरूपासिद्धेन तेन तेन हेतुना वेदान्तवाक्यानामप्रामाण्यस्थापनम् इति चेन्न। यथावस्थितप्रयोजनशून्यत्वं हि हेतुरभिमतः। तत्र वेदान्तानां ज्ञानपरत्वेन स्वतः पुरूषार्थभूतब्रह्मपर्यवसयित्वेपि प्रयोजनभूतब्रह्मणः यथावस्थितत्वनियमाभावेन यथावस्थितप्रयोजनशून्यत्वहेतोस्तत्राक्षतत्वात्। अमुमभिप्रायं मनसि निधायैव 'वस्तुनि तात्पर्यासम्भवादित्युक्तम्'।

कार्यपरतयैव प्रयोजनपर्यवसायित्वं वदतां निष्प्रपञ्चीकरणनियोगवादिनां मतमुपक्षिपति - **अत्र कश्चिदिति**। शास्त्रस्य कार्यपरत्वं नाम प्रवृत्तिनिवृत्त्यन्यतरान्वितत्वम्। तथा च प्रवृत्तिनिवृत्त्यन्यतरसाध्येष्टप्राप्त्यनिष्टनिवृत्तिरूपयथावस्थितप्रयोजनपर्यवसायित्वं स्वत एव सिद्धमित्याशयः। 'निष्प्रपञ्चम्' इत्यस्य विवरणमद्वितीयमिति। 'कुर्यादिति'

**द्वितीयं ज्ञानैकरसं ब्रह्म अनाद्यविद्यया सप्रपञ्चतया प्रतीयमानं निष्प्रपञ्चं कुर्यादिति ब्रह्मणः प्रपञ्चविलयद्वारेण विधिविषयत्वम् - इति। कोऽसौ द्रष्टृदृष्यरूपप्रपञ्चप्रविलयद्वारेण साध्यज्ञानैकरसब्रह्मविषयो विधिः ?** (बृ.५.२.) **'न दृष्टेः द्रष्टारं पश्येर्न मतेर्मन्तारं मन्वीथा' इत्यादिः। द्रष्टृदृश्यरूपभेदशून्यं दृशिमात्रं ब्रह्म कुर्यादित्यर्थः। स्वतस्सिद्धस्यापि ब्रह्मणो निष्प्रपञ्चतारूपेण कार्यत्व(साध्यत्व)मविरुद्धम् - इति॥**

**तदयुक्तम् - नियोगवाक्यार्थवादिना हि नियोगः, नियोज्यविशेषणम्, विषयः, करणम्, इतिकर्तव्यता, प्रयोक्ता च वक्तव्याः। तत्र हि नियोज्यविशेषणमनुपादेयम्; तच्च निमित्तं फलमिति द्विधा। अत्र किं नियोज्यविशेषणम्, तच्च किं निमित्तं फलं वेति विवेचनीयम्। ब्रह्मस्वरूपयाथात्म्यानुभवश्चेन्नियोज्यविशेषणम्,**

इत्यत्रेतिशब्दः प्रकारवाची। कुर्यादित्युक्तविधे र्ब्रह्मणश्च सम्बन्धप्रदर्शनाय ब्रह्मणो विधिविषयत्वमित्युक्तम्। स्वतस्सिद्धस्य ब्रह्मणो विधिविषयत्वं न सम्भवतीति शङ्कापरिहाराय प्रपञ्चप्रलयद्वारेणेत्युक्तम्। अत्रेतिशब्दो हेतुपरः। कथं प्रमाणभावमनुभवन्तीति प्रश्नस्य विधिविषयत्वसम्भवादनुभवन्तीति समाधानमुक्तं भवति। **प्रपञ्चप्रविलयेति**। सर्वप्रपञ्चनाशनविधिरसम्भावित इति शङ्कितुरभिप्रायः। दृष्टिव्यतिरिक्तत्वाविशेषेण द्रष्टुरिव दृश्यस्यापि निषेध्यत्वं श्रुतिविवक्षितमिति सूचनाय श्रुत्यर्थमाह - **द्रष्टृरिति**। अत्र 'शून्यं मात्रम्' इति पदाभ्यामात्यन्तिकनिवृत्तिर्विवक्षिता। अनेन सर्वप्रपञ्चस्यापि अविद्यामूलत्वेन मिथ्यात्वात्तद्बुद्धिनिवृत्तिरूपविलयश्शक्य इत्युक्तं भवति। स्वतःसिद्धस्यापि ब्रह्मणो विधिविषयत्वमविरुद्धमिति सूचितं कण्ठरवेणोपपादयति - **स्वत इति**। सिद्धस्याप्याकारभेदेन कार्यत्वाविरोधो विवक्षितः।

अयमत्र निष्प्रपञ्चीकरणनियोगवादिनामाशयः - प्रवृत्तिनिवृत्त्यन्वयस्य प्रयोजनव्यापकत्वं प्रयोजनस्य शास्त्रप्रामाण्यव्यापकत्वमित्यङ्गीकारेपि न वेदान्तवाक्यानां ब्रह्मण्यप्रमाण्यप्रसङ्गः। अत्रापि प्रवृत्तिनिवृत्त्यन्वयप्रयोजनयोरुपपादनात्। यथा स्वर्गकामो यजेतेत्यादौ स्वर्गोद्देश्यकयागरूपकरणविषयककृतिसाध्यमपूर्वम् इति बोधः। तथाऽत्रापि 'न दृष्टे र्द्रष्टारं पश्येः' इत्यादौ दृष्टिरूपब्रह्मव्यतिरिक्तद्रष्टृदृश्यरूपप्रपञ्चाभावविशिष्टब्रह्मविषयकनिर्विशेषब्रह्मसाक्षात्कारोद्देश्यककृतिसाध्यमपूर्वमिति बोधः। लिङः कृतिसाध्यत्वरूपेणापूर्वार्थकत्वात्। कृतिसाध्यापूर्वस्यैव नियोगशब्दार्थत्वेन तद्धटककृतौ यागस्येव विशिष्टब्रह्मणः विषयतयाऽन्वयात्। नच वाच्यं स्वतस्सिद्धस्य ब्रह्मणः कथं कृतिविषयत्वमिति, आकारभेदेन विधिविषयत्वस्योपपादितत्वात्। करणरूपयागस्थानापन्नं निष्प्रपञ्चब्रह्म कृतिसाध्यम्। तेन चापूर्वम् अपूर्वेण च स्वर्गस्थानापन्नः निर्विशेषब्रह्मसाक्षात्कारः। ततोऽविद्या तत्कार्यात्मकप्रपञ्चनिवृत्तिः अतो वेदान्तवाक्यस्य प्रवृत्तिपरत्वेन प्रयोजनपर्यवसायित्वात्प्रामाण्यं युक्तमिति॥

एवमुक्तं निष्प्रपञ्चीकरणनियोगनादिमतमधिकरणपूर्वपक्षी मीमांसकः निराकरोति - **तदयुक्तमिति**। कृतिसाध्यस्यापूर्वस्य नियोगस्य वाक्यार्थत्ववादिनामावश्यकाकारप्रदर्शनं प्रथमतः प्रतिजानीते - **नियोगेति**। **नियोगः** = कृतिसाध्यापूर्वम्। **नियोज्यविशेषणं** = नियोज्यस्य पुरुषस्य विशेषणं निमित्तं फलं वा। **विषयः** = विशिंषन्निति विषयः यागादिः। कृतिसाध्यापूर्वप्रतिपत्तिवेलायां कृत्यवच्छेदकत्वेन तस्य विषयत्वम्। **करणं** = यागाद्येव। कार्यनिष्पत्तौ तस्यैव करणत्वात्। **इतिकर्तव्यता** = अङ्गम्। **प्रयोक्ता** = यजमानः। अत्रास्फुटं नियोज्यविशेषणं विवृणोति - **तत्रेति**। **अनुपादेयं** = विधेयव्यतिरिक्तं, सिद्धमिति यावत्। 'सिद्धमेव हि सर्वत्र नियोज्यस्य विशेषणम्' इत्युक्तेः। तन्मते नियोगस्याङ्गीकारेण नियोज्यविशेषणमेव दुर्वचमिति दूषयितुं तद्द्वैविध्यं प्रदर्शयति - **न चेति**। **निमित्तं** = यावज्जीवमग्निहोत्रं जुहोतीत्याद्युक्तं जीवनादिकम्। **फलं** = स्वर्गादि। **अत्र** = निष्प्रपञ्चीकरणनियोगवादे **विवेचनीयम्** = उभयरूपमपि दुर्वचमित्यर्थः। सुवचत्वं शङ्कते - **ब्रह्मेति**। **ब्रह्मस्वरूपयाथात्म्यानुभवः** = स्वप्रकाशात्मक ब्रह्मस्वरूपसाक्षात्कारः।

**तर्हि न तन्निमित्तम्, जीवनादिवत्तस्यासिद्धत्वात्। निमित्तत्वे च तस्य नित्यत्वेनापवर्गोत्तरकालमपि जीवन-निमित्ताग्निहोत्रादिवन्नित्यतद्विषयानुष्ठानप्रसङ्गः। नापि फलम्; नैयोगिकफलत्वेन स्वर्गादिवदनित्यत्व-प्रसङ्गात्। कश्चात्र नियोगविषयः। ब्रह्मैवेति चेन्न, तस्य नित्यत्वेनाभव्यरूपत्वात्, अभावार्थत्वाच्च। निष्प्रपञ्चं ब्रह्म साध्यमिति चेत् - साध्यत्वेऽपि फलत्वमेव; अभावार्थत्वान्न विधिविषयत्वम्।**

---

किं तत् निमित्तम् उत फलमिति विकल्पं हार्दं कृत्वा निमित्तत्वपक्षं दूषयति - **तर्हीति**। **जीवनादिवदिति**। सिद्धस्यैव निमित्तत्वेनास्य च निष्प्रपञ्चब्रह्मविषयककृतिसाध्यत्वेन न निमित्तत्वमिति।

ननु यदा पुत्रजन्मादि सिद्धं चेत्तदा तस्य निमित्तत्वं, तद्वदस्यापि सिध्यनन्तरं कुतो न स्यादित्यत्राह - **निमित्तत्वे चेति**। ब्रह्मस्वरूपसाक्षात्कारो हि नित्यः। स च निमित्तम्। निमित्तसत्त्वे नैमित्तिकानुष्ठानस्यापातान्निमित्तस्य नित्यत्वेन नैमित्तिकस्य निष्प्रपञ्चकरणस्य नित्यमनुष्ठानं स्यात्। न चेष्टापत्तिः, अपवर्गकालोत्तरमपि नैमित्तिकसत्वेन तदनुष्ठानप्रसङ्गात् इति भावः। ननु यावन्निमित्तं तावन्नैमित्तिकानुष्ठानमिति न नियमः। निमित्तमात्रसत्वेपि परिकराभावेऽनुष्ठानादर्शनात्। अतोऽपवर्गोत्तरकालं देहादिपरिकराभावेन निमित्तसत्वेपि नानुष्ठानप्रसंग इति कथमिदमापादनमिति चेन्मैवम्। ब्रह्मस्वरूप-साक्षात्कारस्यैव निमित्तत्वेन तस्य चापवर्गपूर्वकालीनसम्प्रपञ्चब्रह्मानुभवाद्विलक्षणत्वेनापवर्गानन्तरकालभावित्वावश्यक-त्वात्तदानीमेव निमित्तस्य सिद्ध्या तदा देहादिपरिकराभावेन विषयानुष्ठानस्यैवाशक्यत्वान्नैमित्तिकस्यास्य विधि-विषयत्वमेव न सम्भवतीति देहादिपरिकराभावेपि निमित्तसत्त्वे विषयानुष्ठानस्याङ्गीकर्तव्यतयाऽपवर्गोत्तरकालमपि नित्यमेवानुष्ठानं स्यादित्यत्र तात्पर्यात्। यद्वा उक्तयुक्त्या उक्तनिमित्तस्यापवर्गोत्तरकालभावित्वेनापवर्गसिद्धौ अनुष्ठानसिद्धिः अनुष्ठानसिद्धावपवर्गसिद्धिरित्यन्योन्याश्रयप्रदर्शने तात्पर्यमिति अदोषात्। अथ फलत्वपक्षं दूषयति - **नापीति**। **नैयोगिक-फलत्वेन** - नियोगजन्यफलत्वेन। **अनित्यफलत्वप्रसङ्गादिति**। ब्रह्मस्वरूपसाक्षात्कारोऽनित्यः नैयोगिकफलत्वात्स्वर्गादि-वदित्यनुमानादिति भावः।

ननु निर्विशेषसाक्षात्कारस्यैव नियोगजन्यत्वांगीकारेण ब्रह्मस्वरूपयाथात्म्यानुभवरूपस्यापवर्गोत्तरकालीनस्य तस्य नानित्यत्वप्रसक्तिरिति चेन्न। तथा सति निमित्तस्य फलस्य वा नियोज्यविशेषणस्याप्रसिध्या नियोगवाक्यार्थस्यैवानुपपत्तेः। न च निर्विशेषब्रह्मसाक्षात्कारस्यैव नियोगसाध्यस्यफलस्य नियोज्यविशेषणत्वसम्भवः। असिद्धत्वेन निमित्तत्वायोगात्। न च पुत्रजन्मादिवत्तत्सिध्यनन्तरं निमित्तत्वं तस्य सम्भवति। विषयानुष्ठानेन नियोगसिद्धौ निमित्तसिद्धिः निमित्तसिद्धौ नैमित्तिकविषयानुष्ठानसिद्धिरित्यन्योन्याश्रयणात्। अतो भवतां नियोज्यविशेषणं दुर्वचमेव। न च सप्रपञ्चब्रह्मानुभवस्य निमित्तत्वरूपनियोज्यविशेषणत्वाभ्युपगमे को दोषः, तस्य पूर्वमेव सिद्धत्वेन नियोज्यविशेषणत्व सम्भवादि चेन्न। अपसिद्धान्तात्।

अथ विषयस्य दुर्वचत्वं प्रतिजानीते - **कश्चेति**। नियोगविषयश्च दुर्वच इत्यर्थः। ब्रह्मण एव नियोगविषयत्वमिति शङ्कते - **ब्रह्मैवेति**। असाध्यत्वात्, क्रियारूपत्वाभावाच्च न विधिविषयत्वमिति दूषयति - **नेति**। नित्यत्वेनेति अभव्यरूपत्वे हेतुः। यद्वा उभयत्रापि। नित्यस्य भावार्थत्वासम्भवात्। भावार्थस्य क्रियारूपस्यानित्यत्वनियमात्। साध्यभूतस्य क्रियार्थस्यैव विधिविषयत्वसम्भवादिति भावः। साध्यभूतस्य स्वर्गादेः व्यावृत्त्यर्थं क्रियार्थस्येति। ननु ब्रह्मणो नित्यत्वेपि निष्प्रपञ्चत्वाकारेण साध्यत्वं युक्तमिति शङ्कते - **निष्प्रपञ्चमिति**। प्राप्ताप्राप्तविवेकेन प्रपञ्चनिवृत्तेरेव कृतिसाध्यत्वे पर्यव-सानात्तस्याश्च मोक्षरूपत्वेन कृत्युद्देश्यत्वात्कृतिसाध्यत्वं न सम्भवति। अन्यथा कृतिविषयत्वे, फलव्यतिरिक्तत्वनियमादि-त्याशयेन दूषयति - **साध्यत्वेपीति**। दूषणान्तरमाह - **अभावार्थत्वादिति**। दूषितमेव स्पष्टप्रतीत्यर्थं विकल्पमुखेन पुन

**साध्यत्वञ्च कस्य? किं ब्रह्मण उत प्रपञ्चनिवृत्तेः । न तावद्ब्रह्मणः, सिद्धत्वात्; अनित्यत्वप्रसक्तेश्च । अथ प्रपञ्चनिवृत्तेः - न तर्हि ब्रह्मणस्साध्यत्वम् । प्रपञ्चनिवृत्तिरेव विधिविषय इति चेन्न ; तस्याः फलत्वेन विधिविषयत्वायोगात् । प्रपञ्चनिवृत्तिरेव हि मोक्षः; स च फलम् । अस्य च नियोगविषयत्वे नियोगात्प्रपञ्चनिवृत्तिः, प्रपञ्चनिवृत्या नियोग इतीतरेतराश्रयत्वम् ।**

**अपि च - किं निवर्तनीयः प्रपञ्चो मिथ्यारूपः, सत्यो वा । मिथ्यारूपत्वे ज्ञाननिवर्त्यत्वादेव नियोगेन न किञ्चित्प्रयोजनम् । निचोगस्तु निवर्तकज्ञानमुत्पाद्य तद्द्वारेण प्रपञ्चस्य निवर्तक इति चेत् - तत्स्ववाक्यादेव**

---

दूषयति - **साध्यत्वञ्चेति** । निष्प्रपञ्चत्वाकारेण ब्रह्मणो विधिविषयत्वाभ्युपगमे विशिष्टस्य विधिविषयत्वमुक्तं भवति । तत्र किं विशेषणस्य उत विशेष्यस्य । विशिष्टस्य, विशेषणविशेष्योभयानतिरिक्तत्वात्, अन्यतरस्यानुपपन्नत्वे उभयस्याप्यनुपपन्नतैवेत्यर्थः । **अनित्यत्वप्रसक्तेश्चेति** । भावत्वे सति साध्यत्वस्यानित्यत्वनियमादिति भावः । **न तर्हीति** । ब्रह्मणो विधिविषयत्वं न स्यादिति भावः ॥

नन्विष्टमेवेदं प्रपञ्चनिवृत्तेरेव विधिविषयत्वाभ्युपगमादिति शङ्कते - **प्रपञ्चनिवृत्तिरेवेति** । अवधारणेन ब्रह्मणः विधिविषयत्वाभाव इष्टस्सूचितः । तस्यापि विधिविषयत्वं न सम्भवतीति दूषयति - **नेति** । फलत्वमेवोपपादयति - **प्रपञ्चनिवृत्तिरेव हि मोक्ष इति । स चेति** । मोक्षस्यैव फलत्वात्प्रपञ्चनिवृत्तेश्च मोक्षाभिन्नत्वात्फलत्वं दुर्वारमिति भावः । अन्यदपि दूषणमाह - **अस्येति** । प्रपञ्चनिवृत्तिरूपफलस्येत्यर्थः । यागादिवत्प्रपञ्चनिवृत्ते विधिविषयत्वेन करणत्वं मोक्षरूपत्वेन फलत्वञ्च । तथा च करणरूपप्रपञ्चनिवृत्यनुष्ठानेन नियोगसिद्धिः, नियोगसिद्धौ च प्रपञ्चनिवृत्तिरूपफलसिद्धिरिति स्वोत्पत्त्यधीनतदुत्पत्तिकत्वे सति तदुत्पत्यधीनस्वोत्पत्तिकत्वरूपः अन्योन्याश्रयः यथा फलभूतस्यैव स्वर्गस्य विधिविषयत्वाभ्युपगमे इत्याशयः ॥

अथ नियोगस्य दुर्वचत्वोपपादनाय प्रतिजानीते - **अपि चेति** । नियोगविषयदूषणेन प्रयोक्तृदूषणेन च नियोगस्य दूषितत्वं भवतीत्यभिप्रेत्य नियोगदूषणं कृतम् । नियोगविषयदूषणभूतान्योन्याश्रयणेन हि नियोगोपि दूषितः । प्रयोक्ता च नष्ट इत्याश्रयाभावादसिद्धिरिति प्रयोक्तृदूषणेनापि हि नियोगो दूषित इति तत्र प्रथमं नियोगस्य निष्प्रयोजनत्वरूपदूषणं वक्तुं निवर्तनीयं विकल्पयति - **किमिति । मिथ्यारूपत्वेपि** । मिथ्याभूतवस्तुनः ज्ञाननिवर्त्यत्वाभ्युपगमात् । न हि मिथ्याभूतसर्पनिवृत्तिः रज्जुज्ञानमन्तरेणेतरदपेक्षत इति भावः । प्रपञ्चस्य मिथ्यात्वेपि नियोगस्य सार्थक्यं शंकते - **नियोगस्त्विति । निवर्तकज्ञानं** = निर्विशेषसाक्षात्कारम् । **प्रपञ्चस्य निवर्तक** इति । मिथ्याभूतप्रपञ्चनिवर्तकज्ञानोत्पादकत्वेन तस्य सार्थक्यादिति भावः । **तदिति** । अयमाशयः - योगजन्यादृष्टस्य साक्षात्कारजनकत्वसम्भवेपि "न दृष्टे द्रॆष्टारं पश्येः" इति प्रपञ्चाभावविशिष्टब्रह्मविषयककृतिसाध्यादृष्टस्य नियोगरूपस्य साक्षात्कारजनकत्वं न प्रामाणिकम् । अत एव ध्याननियोगवादी नियोगस्य मनोनैर्मल्यहेतुत्वमभ्युपगम्य तादृशमनस एव साक्षात्कारहेतुत्वमभिमनुते । अतस्तेन निर्विशेषसाक्षात्कारानुपपत्त्या केवलवाक्यजन्यज्ञानमेव मिथ्याभूतप्रपञ्चनिवर्तकमित्यास्थेयम् । तथा च निवर्तकज्ञानस्य स्ववाक्यादेव प्रपञ्चमिथ्यात्वब्रह्मनिर्विशेषत्वपरादुत्पत्त्या नियोगस्य सार्थक्योपपादनं दुर्वचमेवेति ।

ननु न नियोगस्य निष्प्रयोजनत्वं मिथ्याभूतप्रपञ्चनिवर्तकज्ञानजनकवाक्यस्य सिद्धपरत्वेनाप्रामाण्यमिति प्रामाण्यसम्पादनाय तदावश्यकत्वादिति चेत् ? उच्यते - कल्पनं हि सति प्रयोजने युक्तम् । न हि नियोगेन किञ्चित्प्रयोजनसम्भवः । प्रयोजनाभावस्योक्तत्वात् । वेदान्तवाक्यानां स्वार्थे तात्पर्याभावेन न प्रामाण्यमिति ब्रह्मविचारशास्त्रमनारम्भणीयमिति ब्रुवन्तं पूर्वपक्षिणं प्रति प्रामाण्योपपादनायैव तत्कल्पनमिति समाधानं युक्तमिति । वस्तुतो नियोग एवासिद्ध इत्याह -

**जातमिति नियोगेन न प्रयोजनम् । वाक्यार्थज्ञानादेव ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य मिथ्याभूतस्य प्रपञ्चस्य बाधितत्वात्सपरिकरस्य नियोगस्यासिद्धिश्च । प्रपञ्चस्य निवर्त्यत्वे, प्रपञ्चनिवर्तको नियोगः किं ब्रह्मस्व-रूपमेव, उत तद्व्यतिरिक्तः । यदि ब्रह्मस्वरूपमेव; निवर्तकस्य नित्यतया निवर्त्यप्रपञ्चसद्भाव एव न सम्भवति । नित्यत्वेन नियोगस्य विषयानुष्ठानसाध्यत्वञ्च न घटते । अथ ब्रह्मस्वरूपव्यतिरिक्तः, तस्य कृत्स्नप्रपञ्चनिवृत्ति-रूपविषयानुष्ठानसाध्यत्वेन प्रयोक्ता च नष्ट इत्याश्रयाभावादसिद्धिः । प्रपञ्चनिवृत्तिरूपविषयानुष्ठानेनैव ब्रह्म-स्वरूपव्यतिरिक्तस्य कृत्स्नस्य निवृत्तत्वान्न नियोगनिष्पाद्यं मोक्षाख्यं फलम् ।**

**किञ्च प्रपञ्चनिवृत्तेर्नियोगकरणस्य इतिकर्तव्यताऽभावात्, अनुपकृतस्य च करणत्वायोगान्न करणत्वम् । कथमितिकर्तव्यताऽभाव इति चेत् - इत्थम् । अस्येतिकर्तव्यता भावरूपा, अभावरूपा वा ? भावरूपा च**

---

**वाक्यार्थज्ञानादेवेति** । उक्तयुक्त्या वाक्यार्थज्ञानस्यैव प्रपञ्चनिवर्तकत्वेन भवद्भिरभ्युपगन्तव्यतया निवर्तकज्ञानस्य ब्रह्मव्य-तिरिक्तकृत्स्नार्थविषयकत्वेन वाक्यार्थज्ञानदशायामेव सर्वस्यापि प्रपञ्चस्य बाधितत्वान्नियोगोपि बाधित इति कथं नियोगसिद्धिरिति भावः । अथ प्रपञ्चस्य सत्यत्वपक्षे दूषणमाह - **प्रपञ्चस्येति** । **निवर्त्यत्वे** = नियोगनिवर्त्यत्वे । मिथ्या-भूतस्यैव ज्ञाननिवर्त्यत्वेन प्रपञ्चस्य सत्यत्वान्न ज्ञानेन निवर्त्यत्वसंभवः । परन्तु नियोगेनैवेति । अनेन नियोगस्यास्मिन्पक्षे निष्प्रयोजनत्वासिद्धिशङ्का निराकृता । प्रपञ्चनिवर्तकत्वेन सफलत्वात् । नियोगानन्तरमेव कृत्स्नप्रपञ्चनिवृत्त्या पूर्वं नियोगा-सिद्धौ प्रमाणाभावादिति । किमित्यादिना विकल्पितं ब्रह्मस्वरूपत्वपक्षं व्युदस्यति **यदीति** । **न सम्भवतीति** - नियोगस्य ब्रह्मस्वरूपत्वेन निवर्तकत्वेनाभिमतस्य ब्रह्मस्वरूपाभिन्नस्य नियोगस्य सर्वदा सत्त्वेन निवर्तव्यत्वेनाभिमतस्य प्रपञ्चस्य सद्भाव एव नास्तीति कथं प्रपञ्चस्य सद्भावः । नहि निवर्तकसत्तायां निवर्त्यसद्भावः । अन्यथा निवर्त्यनिवर्तकभावस्यैव भङ्गप्रसङ्गादिति भावः । न केवलमुक्तदूषणमेव । अन्यदप्यस्तीति दर्शयति - **नित्यत्वेनेति** । नियोगस्य ब्रह्मस्वरूपत्वेन नित्यत्वात्स्वर्गादिहेतुभूतापूर्वादेरिव कृतिसाध्यत्वरूपविषयानुष्ठानसाध्यत्वं न सम्भवति । जन्यस्यैव साध्यत्वात्, अन्यथा ब्रह्मणोप्यनिन्यत्वापत्तेरिति । **तस्येति** । तदेत्यध्याहारः । अयं भावः - यागादिवत्कृत्स्नप्रपञ्चनिवृत्तिः कार्योत्पत्तौ करणम् । तदेव च नियोगविषयः । विषयभूतयागानुष्ठानेन स्वर्गजनकापूर्वस्येव कृत्स्नप्रपञ्चनिवृत्तिरूपविषयानुष्ठानेन मोक्षजनक नियोगस्योत्पत्तिश्च भवतामभिमता । ततश्च करणानुष्ठानदशायां प्रयोक्तुः ब्रह्मव्यतिरिक्तत्वेन कृत्स्नप्रपञ्चान्तर्गतत्वात्तस्यापि निवृत्त्या आश्रयस्यैवाभावेन न तदाश्रितस्य नियोगस्य सिद्धिः । ब्रह्मरूपत्वे तु आश्रयाभावेपि तस्य स्थितिसम्भवेनासिद्धिस्तु न भवतीति भावः । अत्र प्रयोक्तुर्दूषणमप्यर्थादुक्तं भवति । दूषणान्तरमाह - **प्रपञ्चेति** । अयं भावः - कृत्स्नप्रपञ्चनिवृत्तिः मोक्षः । तदेव हि फलम् । तच्च कृत्स्नप्रपञ्चनिवृत्तिरूपविषयानुष्ठानेनैव सिद्धमिति नियोगनिष्पाद्यत्वाभावान्नियोगो निष्प्रयोजन एवेति ।

एवं नियोगदूषणमर्थात्प्रयोक्तृदूषणं चोक्तम् । अथ करणेतिकर्तव्यतयोर्दुवचनत्वमुपपाद्यते । **करणत्वमिति** । **'न** चास्ति लोके वेदे वा करणं किञ्चिदीरितम् । इतिकर्तव्यतासाध्ये यस्य नानुग्रहेऽर्थिता' इत्युक्तेरिति भावः । **भावरूपा चेति** । अयं भावः - इतिकर्तव्यता द्विविधा भावरूपा अभावरूपा चेति । भावरूपापि द्विविधा - करणशरीरनिष्पादिका तज्जन्या-पूर्वरूपकार्योत्पादिका चेति । आद्यापि द्विविधा - दृष्टद्वारा करणोत्पादिका, अदृष्टद्वारावेति । तत्र - व्रीहीनवहन्तीति विहितावघातादिकं तण्डुलपुरोडाशादिरूपदृष्टद्वारा करणशरीरनिष्पादकम् । व्रीहीन्प्रोक्षतीति व्रीहिप्रोक्षणम् अदृष्टद्वारा यागरूपकरणनिष्पादकम् । दक्षिणादानाद्युत्तराङ्गं यागजन्यपरमापूर्वे स्वजन्यापूर्वद्वारा करणमिति तत्करणजन्यापूर्वरूप-कार्योत्पादकमिति तत्र तत्र बोध्यम् । कार्यभेदमादायैवं विभागः प्रदर्शितः ॥

**करणशरीरनिष्पत्ति-तदनुग्रह-कार्यभेदभिन्ना । उभयविधा च न सम्भवति । न हि मुद्गराभिघातादिवत्कृत्स्नस्य प्रपञ्चस्य निवर्तकः कोऽपि दृश्यत इति दृष्टार्था न सम्भवति । नापि निष्पन्नस्य करणस्य कार्योत्पत्तावनुग्रहस्सम्भवति; अनुग्राहकांशसद्भावेन कृत्स्नप्रपञ्चनिवृत्तिरूपकरणस्वरूपासिद्धेः । ब्रह्मणोऽद्वितीयत्वज्ञानं प्रपञ्चनिवृत्तिरूपकरणशरीरं निष्पादयतीति चेत् - तेनैव प्रपञ्चनिवृत्तिरूपो मोक्षस्सिद्ध इति न करणादिनिष्पाद्यमवशिष्यत इति पूर्वमेवोक्तम् । अभावरूपत्वे चाभावादेव न करणशरीरं निष्पादयति । नाप्यनुग्रहकः(कम्) । अतो निष्प्रपञ्चविषयो विधिर्न सम्भवति ॥**

**अन्योऽप्याह - यद्यपि वेदान्तवाक्यानां न परिनिष्पन्नब्रह्मस्वरूपपरतया प्रमाण्यम् - तथाऽपि ब्रह्मस्वरूपं सिध्यत्येव । कुतः ? ध्यानविधिसामर्थ्यात् । एवमेव हि समामनन्ति -** (बृ.४.४.५.) **'आत्मा वा अरे**

---

निष्पादक-अनुग्राहकभेदभिन्नाया उभयविधाया अपि भावरूपेतिकर्तव्यतायाः प्रकृतेऽसम्भवमाह - **उभयविधा चेति** । निष्पादकपक्षे दृष्टार्थत्वे दूषणमाह - **नहीति** । यथा घटादिनिवृत्तये मुद्गराभिघातादिकं तथा कृत्स्नप्रपञ्चनिवृत्तिरूपकरणनिष्पत्तये किञ्चिद्वक्तव्यम् । तच्चादर्शनात्पराहतमिति । एतेनादृष्टार्थनिष्पादकपक्षोपि निरस्तः, तस्याप्यप्रामाणिकत्वात् । प्रपञ्चनिवृत्तिरूपकरणस्यादृष्टविधया निष्पादकत्वे प्रपञ्चस्य ज्ञाननिवर्त्यत्वाभावेन सत्यत्वापत्तेश्च । अथानुग्राहकपक्षं दूषयति - **नापीति** । **अनुग्राहकांशेति** । अयं भावः - करणजन्यकार्योत्पादकेतिकर्तव्यताया अस्याः दक्षिणादानादेरिव करणस्वरूपनिष्पत्त्यनन्तरञ्चास्याः सद्भाव एव न सम्भवति । कृत्स्नप्रपञ्चान्तर्गतत्वेनास्या अपि निवृत्तेः । अतः करणानन्तरमनुग्राहकसद्भावे करणस्वरूपमेवासिद्धं स्यादिति भावः । एवमुभयविधाया इतिकर्तव्यताया असम्भव उक्तः । अथ करणशरीरनिष्पादकेतिकर्तव्यताया उपपत्तिं शङ्कते - **ब्रह्मण** इति । दूषयति - **तेनैवेति** । अद्वितीयं ब्रह्मेति ज्ञानेन प्रपञ्चनिवृत्तिरूपकरणशरीरनिष्पत्तौ तेनैव प्रपञ्चनिवृत्तिरूपमोक्षस्य सिद्ध्या करणनिष्पाद्यत्वेन नियोगस्य, नियोगनिष्पाद्यत्वेन मोक्षस्य चाभ्युपगमो वृथैव स्यात् । प्रपञ्चनिवृत्तेः करणत्वाभ्युपगमोप्यनुपपन्न एव स्यात् । करणकार्यस्य स्वेतिकर्तव्यताभूताद्वितीयत्वज्ञानेनैव निष्पन्नत्वेन स्वस्याकार्यकरत्वात् । अकार्यकरस्य करणत्वायोगात् । यद्यद्वितीयत्वज्ञानेन प्रपञ्चनिवृत्ति र्नाभ्युपगम्यते, तदा तस्य करणनिष्पादकत्वाभावेनेतिकर्तव्यतात्वमेव भग्नं स्यादिति भावः ।

ननु भावरूपेतिकर्तव्यतायाः प्रपञ्चनिवृत्त्युत्तरकालवृत्तित्वासम्भवेप्यभावरूपायास्तस्याः सम्भवात्तथारूपाया एवेतिकर्तव्यताया अत्र स्वीकाराच्च नानुपपत्तिरित्यत्र तामपि दूषयति - **अभावरूपत्वे चेति** । किमस्याः करणशरीरनिष्पादकत्वमुतानुग्राहकत्वमिति विकल्पमभिप्रेत्य प्रथमं दूषयति - **अभावादेवेति** । अभावरूपेतिकर्तव्यताया अदर्शनेनाप्रामाणिकत्वादेवेत्यर्थः । यद्वा **अभावात्** = अभावरूपेतिकर्तव्यतायाः कृत्स्नप्रपञ्चनिवृत्तिरूपकरणान्तर्गतत्वेन करणात् पृथगभावादित्यर्थः । तथा च करणेतिकर्तव्यतयो र्भेदासिद्धिः फलिता । केचित्तु 'अभावादेव' इत्यस्य अभावत्वादेवेत्यर्थमाहुः । **नापीति** । एतेनान्तरिन्द्रियबहिरिन्द्रियाप्रवृत्तिरूपशमादीनामभावरूपेतिकर्तव्यतात्वपक्षो निरस्तः । तेषामपि करणान्तर्गतत्वेनाविलक्षणत्वात् । नन्वेतेषां करणशरीरनिष्पादकत्वमेव स्वीक्रियत इति वाच्यम् । तेषां ज्ञाननिष्पादकत्वेपि करणनिष्पादकत्वायोगात् । अन्यथाऽपसिद्धान्तादित्याशयः । **विधिः** = नियोगः । एवं निष्प्रपञ्चीकरणनियोगवादि मतमनूद्य दूषितम् ॥

अथ ध्याननियोगवादिमतं खण्डयितुं तन्मतमुपन्यस्पति - **अन्योपीति** । सिद्धपराणां वेदान्तवाक्यानां स्वातन्त्र्येण परिनिष्पन्नब्रह्मणि प्रामाण्याभावमभ्युपगच्छन्ति - **यद्यपीति** । अप्रामाण्ये ब्रह्मस्वरूपस्यैवासिद्धिस्स्यादित्याह - **एवमेवेति** । **एवमेव** = यथा परिनिष्पन्ने ब्रह्मणि स्वरूपपरवाक्यानां ध्यानविधिशेषत्वेन प्रामाण्यं स्यात्तथैवेत्यर्थः । निदिध्यासितव्य

**द्रष्टव्यः ... निदिध्यासितव्यः'**, (छा.८.७.१.) **'य आत्मा अपहतपाप्मा ... सोऽन्वेष्टव्यः; स विजिज्ञासितव्यः'**, **'आत्मेत्येवोपासीत'** (बृ.३.४.७...१५.) **'आत्मानमेव लोकमुपासीत' इति। अत्र ध्यानविषयो हि नियोगः स्वविषयभूतं ध्यानं ध्येयैकनिरूपणीयमिति ध्येयमीक्षिपति। स च ध्येयः स्ववाक्यनिर्दिष्ट आत्मा। स किंरूप इत्यपेक्षायां तत्स्वरूपविशेषसमर्पणद्वारेण** (तै.आनं) **'सत्यं ज्ञानमनन्तं ब्रह्म'**, (छा.६.२.१.) **'सदेव सोम्येदमग्र आसीत्' इत्येवमादीनां वाक्यानां ध्यानविधिशेषतया प्रामाण्यमिति विधिविषयभूतध्यानशरीरानुप्रविष्टब्रह्मस्वरूपेऽपि तात्पर्यमस्त्येव। अतः, 'एकमेवाद्वितीयम्'**, (छा.६.८.) **'तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो'**, (कठ.४.११.) **'नेह नानाऽस्ति किञ्चन' इत्यादिभिः, ब्रह्मस्वरूपमेकमेव सत्यं तद्व्यतिरिक्तं सर्वं मिथ्येत्यवगम्यते। प्रत्यक्षादिभिर्भेदावलम्बिना च कर्मशास्त्रेण भेदः प्रतीयते। भेदाभेदयोः परस्परविरोधे सत्यनाद्यविद्यामूलत्वेनापि भेदप्रतीत्युपपत्तेरभेद एव परमार्थ इति निश्चीयते। तत्र ब्रह्मध्याननियोगेन तत्साक्षात्कारफलेन निरस्तसमस्ताविद्याकृतविविधभेदाद्वितीयज्ञानैकरसब्रह्मरूपमोक्षः प्राप्यते। न च वाक्याद्वाक्यार्थज्ञानमात्रेण ब्रह्मभावसिद्धिः; अनुपलब्धेः; विविधभेददर्शनानुवृत्तेश्च। तथा च सति श्रवणादिविधानमनर्थकं स्यात्॥**

**अथोच्येत - 'रज्जुरेषा न सर्पः' इत्युपदेशेन सर्पभयनिवृत्तिदर्शनात् रज्जुसर्पवद्बन्धस्यापि मिथ्यारूपत्वेन ज्ञानबाध्यतया तस्य वाक्यजन्यज्ञानेनैव निवृत्तिर्युक्ता; न नियोगेन। नियोगसाध्यत्वे मोक्षस्यानित्यत्वं स्यात्, स्वर्गादिवत्। मोक्षस्य नित्यत्वं हि सर्ववादिसम्प्रतिपन्नम्। किञ्च धर्माधर्मयोः फलहेतुत्वं स्वफलानुभवानुगुणशरीरोत्पादनद्वारेणेति ब्रह्मादिस्थावरान्तचतुर्विधशरीरसम्बन्धरूपसंसारफलत्वमवर्जनीयम्।**

---

इत्युपासनमुक्तम्। द्रष्टव्य इति फलमुक्तम्। एतन्मते ध्याननियोगस्य ब्रह्मापरोक्ष्यज्ञानफलत्वाभ्युपगमात्। ऐक्योपासनस्फोरणाय 'आत्मेत्येवोपासीत' इत्युपात्तम्। आत्मानमित्यादिना जगत्तादात्म्योपासनमुक्तम्। एवं ध्यानविधिरुक्तः। अथ तत्सामर्थ्यं दर्शयति - **अत्रेति**। ध्यानविषयः - ध्यानं विषयो यत्र सः। नियोगस्य कृतिसाध्यापूर्वार्थत्वात् तद्घटकवृत्तौ ध्यानस्य विषयतयाऽन्वयः। ततश्च साक्षात्कारोद्देश्यकध्यानविषयककृतिसाध्यमपूर्वमिति बोधः। ध्यानस्य स्मृतिसन्ततिरूपत्वेन कृतिसाध्यत्वञ्च युक्तम्। 'अर्थेनैव विशेषो हि निराकारतया धियामि'त्युक्तेः। **ध्येयैकनिरूपणीयमिति**। ध्यानस्य सविषयकत्वनियमादिति भावः। आक्षिप्तो ध्येयः परब्रह्मभूत आत्मैवेत्याह - **स चेति**। **स्ववाक्यनिर्दिष्ट** इति। ध्येयाकाङ्क्षायां सत्यां गामानयेत्यादाविव सन्निहितस्य योग्यस्य परित्यागासम्भवादिति भावः। नन्वस्तु विधिवाक्यानां प्रामाण्यं, तावता स्वरूपपरशोधकवाक्यानां कथं प्रामाण्यमित्यत्राह - **स किं रूप** इति। **ध्यानविधिशेषतयेति**। कर्मकाण्डेपि विधिशेषतया हि प्रामाण्यमर्थवादानां तद्वदत्रापीति। इतिर्हेतौ। **तात्पर्यमस्त्येवेति**। स्वर्गादिफलविषयकार्थवादस्य विधिशेषतया प्रामाण्यात्स्वर्गादौ तात्पर्यमिवात्रापि तात्पर्यमस्तीत्यर्थः। ननु ब्रह्मणो ध्यानशरीरानुप्रवेशेन ध्येयत्वेप्यद्वितीयत्वविशिष्टब्रह्मणः कथं ध्यानम्, अद्वितीयत्वादे र्भेदमिथ्यात्वरूपस्य ध्यानशरीराननुप्रवेशादित्यत्राह - **अत इति**।

एतावता ध्याननियोगवादिमतमुपन्यस्तम्। **अथोच्येत** इत्यादिना पदसमुदायेन **सिध्यतीत्यन्तेन** शाङ्करमतानुवादः प्राभाकरमत सिध्दनियोगमवलम्ब्य वेदान्त वाक्यानां प्रवृत्तिपरतयैव प्रामाण्यमिति ध्याननियोगवादिमतम्। नियोगात् साक्षात्कारः, ततो मुक्तिरिति च। शाङ्करमते साक्षात्कारस्य वाक्यजन्यत्वमेव, तेनैव मुक्तिः। न नियोगजन्यत्वम्। अतः ध्याननियोगवाद्येव शङ्करमतखण्डनायानुवदति। रज्जुसर्पदृष्टान्तरीत्यैव मिथ्याभूतप्रपञ्चस्य ज्ञानेनैव निवृत्तिर्वाच्या। न नियोगेन। नियोगजन्यत्वेऽनित्यत्वापत्तेश्च। **तथाचेति**। हवै इति प्रसिद्धिः। वावेत्यवधारणे। उदाहृतश्रुतिफलितार्थमाह -

**तस्मान्न धर्मसाध्यो मोक्षः । तता च श्रुतिः,** (छा.८.१२.१.) **'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशत' इति । अशरीरत्वरूपे मोक्षे धर्माधर्मसाध्यप्रियाप्रियविरहश्रवणात्, न धर्मसाध्यमशरीरत्वमिति विज्ञायते । न च नियोगविशेषसाध्यफलविशेषवत् ध्याननियोगसाध्यमशरीरत्वम्; अशरीरत्वस्य स्वरूपत्वेनासाध्यत्वात् । यथाऽऽहुः श्रुतयः** (कठ.२.२२.) **'अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् । महान्तं विभुमात्मानं मत्वा धीरो न शोचति',** (मुण्ड.२.१.२.) **'अप्राणो ह्यमनाश्शुभ्रः',** (बृ.६.३.५.) **'असङ्गो ह्ययं पुरुष' इत्याद्याः । अतोऽशरीरत्वरूपो मोक्षो नित्य इति न धर्मसाध्यः । तथा च श्रुतिः - 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद' इति ॥**

**अपि च - उत्पत्तिप्राप्तिविकृतिसंस्कृतिरूपेण चतुर्विधं हि साध्यत्वं मोक्षस्य न सम्भवति । न तावदुत्पाद्यः ; मोक्षस्य ब्रह्मस्वरूपत्वेन नित्यत्वात् । नापि प्राप्यः; आत्मस्वरूपत्वेन ब्रह्मणो नित्यप्राप्तत्वात् । नापि विकार्यः; दध्यादिवदनित्यत्वप्रसङ्गादेव । नापि संस्कार्यः; संस्कारो हि दोषापनयनेन गुणाधानेन वा साधयति । न तावद्दोषापनयनेन; नित्यशुद्धत्वाद्ब्रह्मणः । नाप्यतिशयाधानेन; अनाधेयातिशयस्वरूपत्वात् ।**

---

**अशरीरत्वरूप** इति । अशरीरत्वरूपमोक्षस्य धर्मसाध्यत्वाभावः फलित इति भावः ।

ननु प्रायश्चित्तविशेषेण पापनिवृत्तिरूपफलविशेषोत्पत्तिवद्ध्याननियोगेन बन्धनिवृत्तिरूपाशरीरत्वफलविशेषोत्पत्तिस्वीकारान्न मोक्षस्य शरीरसम्बन्धप्रसङ्ग इति शङ्कां परिहरति - **न चेति** । साध्यत्वे हि ध्याननियोगजन्यत्वं युक्तम् । तदेव न । स्वरूपत्वादिति भावः । स्वरूपत्वेश्रुतिं प्रमाणयति - **अनवस्थेष्विति** । अनवस्थेषु शरीरेषु अवस्थितं न शरीरमित्यन्वयः । प्राणनसम्बन्धाभावबोधनादप्यशरीरत्वं स्वरूपमित्यभिप्रेत्याह - **अप्राण** इति । **असङ्गः** = शरीरसम्बन्धाभाववान् । **अतः** = अशरीरत्वस्यात्मस्वरूपत्वात् । एवं धर्मसाध्यत्वाभावे श्रुत्यर्थापत्तिरुक्ता । अथ श्रुतिमप्याह - **तथा चेति** । **धर्मादन्यत्र** = धर्मेण विना । अनेन धर्मसम्बन्धाभाव उक्तः । स चात्र साध्यसाधनभावरूपः । **कृताकृतात्** = क्रियमाणात् । **भव्यात्** = भविष्यतः । अत्र धर्मसाध्यत्वं मोक्षस्य नास्तीत्युक्तम् ।अन्यत्र इति चतुर्वारं श्रूयते । एकमेव पर्याप्तं - वर्तमानाद्भूताद्भव्याच्च धर्मात् अधर्मात् अन्यत्रेत्युक्तावप्यर्थसिद्धिः । त्रैकालिकधर्मादन्यत्, त्रैकालिकाधर्मादन्यत् इत्येतावदेव वा पर्याप्तम् । अतः एवमर्थो वाच्यः - मोक्षः धर्मसाध्यसुखाद्विलक्षणः । अधर्मसाध्यदुःखाद्विलक्षणः । कृताकृतात् = कार्यकारणविलक्षणः । भूतभव्याद्विलक्षणः । केचन पदार्था भूतकालमात्रभाविनः, केचिच्च भविष्यत्कालमात्रवर्तिनः । अयञ्च मोक्षः न तथा सर्वदा वर्तमानः । नित्यप्राप्तत्वादिति । अतो न साध्यत्वम् ॥

अथ साध्यत्वमेव नास्तीत्युच्यते । तत्र प्रथमं साध्यत्वचातुर्विध्यं दर्शयति - **अपि चेति** । उत्पाद्यत्व-प्राप्यत्व-विकार्यत्व-संस्कार्यत्वभेदेन चतुर्विधं साध्यत्वमित्यर्थः । **न सम्भवतीति** । निवृत्ताविद्यास्वरूपस्यैव मोक्षत्वेनोक्तेष्वन्यतममपि न सम्भवतीत्यर्थः । तत्रोत्पाद्यत्वं निषेधति **न तावदिति** । स्वमते अविद्यानिवृत्ते र्निष्पाद्यत्वात्साध्यत्वं युक्तमिति भावः । प्राप्यत्वं निषेधति - **नापीति** । विकार्यत्वमपि नेत्याह - **नापीति** । एवकारो दत्तोत्तरत्वव्यञ्जकः । संस्कार्यत्वरूपसाध्यत्वं निराकरोति - **नापि संस्कार्य** इति । तृतीयार्थः अभेदः । **साधयति** = सिद्ध्यति । दोषापनयरूपः गुणाधानरूपो वा संस्कारः शास्त्रे प्रसिद्ध इत्यर्थः । तत्र दोषापनयनरूपसंस्कारविषयत्वं नास्तीत्याह - **न तावदिति** । **नित्यशुद्धत्वात्** = परमार्थदोषाभाववत्वात् । अपरमार्थदोषापनयने तु न किञ्चित्प्रयोजनम् । अपरमार्थस्यापनयनानावश्यकत्वात् । वस्तुत एवाभावादित्याशयः । गुणाधानरूपसंस्कारविषयत्वमपि न सम्भवतीत्याह - **नापीति** । गुणाधानेनेत्यत्र गुणशब्दार्थः अतिशयशब्देनोक्तः । ब्रह्मस्वरूपस्याधेयातिशयत्वाभावादित्यर्थः । क्रियाविषयत्वाभावादपि न संस्कार-

**नित्यनिर्विकारत्वेन स्वाश्रयायाः पराश्रयायाश्च क्रियाया अविषयतया न निर्घर्षणेनाऽऽदर्शादिवदपि संस्कार्यत्वम् । न च देहस्थया स्नानादिक्रियया आत्मा संस्क्रियते; किन्त्वविद्यागृहीतस्तत्सङ्गतोऽहङ्कर्ता । तत्फलानुभवोऽपि तस्यैव । न चाहङ्कर्तैवाऽऽत्मा; तत्साक्षित्वात् । तथा च मन्त्रवर्णः** - (श्वे.४.६.) **'तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति' इति ।** (कठ.३.४.) **'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः',** (श्वे.६.११.) **'एको देवस्सर्वभूतेषु गूढस्सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षस्सर्वभूताधिवासस्साक्षी चेता केवलो निर्गुणश्च',** (ई.८.) **'स पर्यगाच्छुक्रमकायमव्रणमस्था(स्ना)विरं शुद्धमपापविद्धम्' इति चाविद्यागृहीतादहङ्कर्तुरात्मस्वरूपमनाधेयातिशयं नित्यशुद्धं निर्विकारं निष्कृष्यते । तस्मादात्मस्वरूपत्वेन न साध्यो मोक्षः ॥**

---

विषयतेत्याह - **नित्यनिर्विकारत्वेनेति** । **स्वाश्रयाया** इति । संस्कार्यस्य दर्पणादे र्हस्ततले निधर्षणे दर्पणाश्रया क्रिया । **पराश्रयाया इति** । दर्पणे पाणेः निघर्षणे पाण्याश्रया क्रिया । उभयत्रापि दर्पणादिरेव संस्कार्यः । **क्रियाया अविषयतयेति** । क्रियाविषयस्य सविकारत्वनियमेन ब्रह्मणो निर्विकारत्वेन क्रियाविषयत्वासम्भवादिति भावः ॥

नन्वात्मनोपि क्रियाविषयत्वाभावेपि संस्कार्यत्वं दृष्टमिति शङ्कां परिहरति - **नचेति** । कस्तर्हि तत्र संस्कारविषयः कथं च नात्मेत्यत्राह - **किं त्विति** । **अविद्यागृहीतः** = अविद्याकल्पितः । अनेनाहङ्कर्तुः विकारित्वात् शुद्धिसापेक्षत्वाच्च संस्कार्यत्वं युक्तमित्युक्तं भवति । अर्थादात्मन एतद्विपरीतत्वान्न संस्कार्यत्वसम्भव इति सूचितम् । अन्यनिष्ठक्रियया अन्यस्य संस्कार्यत्वासंभवपरिहाराय "तत्सङ्गत" इत्युक्तम् । तच्छब्दो देहपरः । ननु कथमहङ्कर्तुः संस्कार्यत्वं फलभोक्तुरात्मन एव संस्कार्यत्वावश्यकत्वादित्यत्राह - **तत्फलेति** । **तत्फलं** = क्रियाजन्यफलम् । अहङ्कर्तुरिव फलभोक्तृत्वेन संस्कार्यत्वं युक्तमिति भावः । नन्वहङ्कर्ता अहमर्थः, स एव चात्मा । अतो आत्मन एव संस्कार्यत्वमभ्युपगतं भवतीत्यत्राह - **न चाहङ्कर्तैवात्मेति** । **अतः** = सिद्धपरवाक्यस्यापि विधिशेषत्वेन प्रामाण्यात्स्वार्थे तात्पर्यसद्भावादेकमेवाद्वितीयमित्यादिना ब्रह्मणोऽद्वितीयत्वबोधनात्तद्व्यतिरिक्तभेदप्रपञ्चस्य मिथ्यात्वावगमादद्वितीयत्वस्य परमार्थत्वेनाद्वितीयत्वविशिष्टब्रह्मणो ध्यानशरीरानुप्रवेशो युक्त एवेति ध्याननियोगवादिनोक्तं न समीचीनम् । यतो नियोगसाध्यत्वस्य वा साध्यत्वमात्रस्य वा नित्यप्राप्तशुद्धब्रह्मस्वरूपरूपमोक्षेऽसम्भव इति तात्पर्यम् । **तत्साक्षित्वात्** = अहमर्थाहंकार साक्षित्वात् । अहङ्कारस्य भोक्तृत्वे आत्मनस्साक्षित्वे च प्रमाणमाह - **तथा चेति** । **तयोः** = अहङ्कारात्मनोः । **अन्यः** = अन्यतरः अहङ्कर्ता । **पिप्पलमत्तीत्यनेन** तस्य भोक्तृत्वमुक्तम् । अनश्नन् इत्यनेनात्मनोऽभोक्तृत्वमुक्तम् । अभिचाकशीतीत्यनेन साक्षित्वं चोक्तम् । तथा चात्मनो भोक्तृत्वाभावाद्भोगक्रियाजन्यफलभोक्तृत्वमहङ्कारस्यैव । आत्मनस्तत्साक्षित्वमेव । अतो नोभयोरैक्यश्च । यो हि यत्साक्षी स न तद्भवतीति ।

एवमहङ्कर्तुर्भोक्तृत्वे प्रमाणान्तरमाह - कर्माध्यक्षत्वोक्त्या कर्मकतृत्वाभावः फलितः । अधिवास इत्यनेन भ्रमाधिष्ठानत्वमुक्तम् । **आत्मेति** । आत्मशब्दो देहपरः । संविदात्मपरो वा । तद्युक्तस्यैवात्र भोक्तृत्वश्रवणान्नात्मनो भोक्तृत्वसम्भव इति भावः । **साक्षी** = अहङ्कारे व्याप्रियमाणे अयं साक्षिमात्रतयाऽवतिष्ठत इत्यर्थः । **केवलः** = फलान्वयरहितः । **निर्गुणः** = अगुणवश्यः । **शुक्रम्** = अविद्यावासनारहितम् । **अकायं** = शरीररहितम् । अव्रणं = व्रणरहितं = दुःखरहितम् । **अस्नाविरम्** = अविगलितम् । अविनाशीति यावत् । परभासकत्वं स्वप्रकाशचैतन्यरूपत्वं सजातीयविजातीयभेदरहितत्वं ज्ञानादिस्वगतभेदरहितत्वमित्यादिकं वात्रप्रतिपाद्यम् । **शुद्धं**=कर्मफलरहितम् । **अपापविद्धं** = कर्मरहितम् । **पर्यगात्** = अमन्यत । उदाहृतश्रुतिप्रतिपन्नमात्मस्वरूपं दर्शयति - **अविद्येति** । निर्विकारमात्मस्वरूपं अहङ्कर्तुः निष्कृष्यत इत्यर्थः । आत्मनस्साध्यत्वं नास्तीत्युपसंहरति - **तस्मादिति** ॥

**यद्येवम्, किं वाक्यार्थज्ञानेन क्रियत इति चेत् - मोक्षप्रतिबन्धनिवृत्तिमात्रमिति ब्रूमः । तथा च श्रुतयः -** (प्रश्न ६.७.) **'त्वं हि नः पिता, योऽस्माकमविद्यायाः परं पारं तारयसीति', 'श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति । सोऽहं भगवश्शोचामि । तं मा भगवान् शोकस्य पारं तारयतु'** (छा.७.१.३;७.२६.२.) **'तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमार' इत्याद्याः । तस्मान्नित्यस्यैव मोक्षस्य प्रतिबन्धनिवृत्तिर्वाक्यार्थज्ञानेन क्रियते । निवृत्तिस्तु साध्याऽपि प्रध्वंसाभावरूपा न विनश्यति ।** (मुण्ड.३.२.९.) **'ब्रह्म वेद ब्रह्मैव भवति',** (श्वे.३.८.) **'तमेव विदित्वाऽति मृत्युमेति' इत्यादिवचनं मोक्षस्य वेदनानन्तरभावितां प्रतिपादयत् नियोगव्यवधानं प्रतिरुणद्धि । न च विदिक्रियाकर्मत्वेन वा ध्यानक्रियाकर्मत्वेन वा कार्यानुप्रवेशः', उभयविधकर्मत्वप्रतिषेधात् - अन्यदेव तद्विदितादथोऽविदितादपि(धि)** (बृ.४.४.१४.) **'येनेदं सर्वं विजानाति, तत्केन विजानीयात्' इति,** (केन.१.५.) **'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत' इति च ।।**

---

ननु मोक्षस्योक्तयुक्त्या साध्यत्वाभावेन तत्साधकत्वेन भवदभिमतवाक्यार्थज्ञानमपि निष्फलमेवेति शङ्कते - **यदीति** । परिहरति - **मोक्षेति** । मोक्षस्यासाध्यत्वेपि तत्प्रतिबन्धकाविद्यानिवृत्तेः साध्यत्वसम्भवात्तदर्थं वाक्यार्थज्ञानस्योपयोगान्न वैयर्थ्यमिति । प्रतिबन्धकनिवृत्तेस्साध्यत्वे श्रुतिमुदाहरति - **तथा चेति** । पिता हितकारी आत्महितस्योपदिष्टत्वादिति भावः । अत्र 'अविद्यायाः पारं तारयसि' इत्युक्त्या प्रतिबन्धकीभूताविद्यानिवृत्तेस्साध्यत्वं प्रतीयते । **तस्मादिति** । ननु यत् साध्यं तदनित्यमिति न्यायेन निवृत्तेस्साध्यत्वेपि स्यादेवानित्यत्वमिति शङ्कां द्यति - **निवृत्तिस्त्विति** । तु शब्देन साध्येतरवैलक्षण्यमुक्तम् । **प्रध्वंसाभावरूपेति** । भावसाध्यस्यैवानित्यत्वव्याप्यत्वम् । अन्यथा ध्वंसस्यापि विनाशे प्रतियोग्युन्मज्जनप्रसङ्गात् । न चाद्वैतहानिः । भावाद्वैतवादित्वात् । ध्वंसस्य ब्रह्मरूपत्वाभ्युपगमेनाद्वैतहानिपरिहारोऽनुपपन्नः । तस्य नित्यत्वेन पूर्वमविद्याया एवाभावप्रसङ्गात् । साध्यत्वानुपपत्तेः । भावसाध्यत्वेन विनाशप्रसंगाच्च । ननु नियोगवादिमतेपि प्रतिबन्धकनिवृत्तेस्साध्यत्वाभ्युपगमे को दोषः? ज्ञाननिवर्त्यत्वाभावेन सत्यत्वापत्तेरिति भावः । नियोगसाध्यत्वे श्रुतिस्वारस्यहानिरपीत्याह - **ब्रह्मेति** ।।

**नियोगव्यवधानं प्रतिरुणध्दीति** । अयं भावः - ध्याननियोगवादिनां प्रथमं वाक्यार्थज्ञानं, ततो ध्यानं, ततो नियोगः ततस्साक्षात्कारः, ततोऽविद्यानिवृत्त्या मोक्ष इति ज्ञानमोक्षयो र्नियोगव्यवधानं वक्तव्यम् । तच्चायुक्तं, विदित्वाऽतिमृत्युमेतीति मृत्युतरणस्य वेदनानन्तरभावित्वोक्तेः । "अस्मन्मते तु विदित्वेत्युक्तशाब्दापरोक्षज्ञानानन्तरमेवाविद्यानिवृत्तिस्वीकारेण व्यवधानं नास्ति । भवतां तु विदित्वेत्यस्य ध्यात्वेत्यर्थकत्वाद्ध्यानानन्तरं नियोगस्य च स्वीकारेण व्यवधानसहत्वात् इति" । ननु नियोगव्यवधानेन श्रुतिस्वारस्यहान्युपपादनं न युक्तम् । ध्यानविधिशेषतयैव ब्रह्मसिद्धे र्वक्तव्यत्वात्तादृशध्याननियोगस्य स्वारस्यभञ्जकत्वाभावात् । अन्यथा सर्वश्रुत्यस्वारस्यापत्तेः । वस्तुतो विदित्वेत्यत्र विदे र्ध्याननियोगजन्यब्रह्मसाक्षात्कारार्थकत्वे न व्यवधानमपीति शङ्कायामाह - **न चेति** ।

अयं भावः - नियोगकल्पनेपि ध्यानक्रियाकर्मत्वेन न ब्रह्मणो नियोगशेषत्वं सम्भवति । ध्यानविषयत्वरूपस्य ध्यानक्रियाकर्मत्वस्य ब्रह्मणि निषेधादिति । विदिक्रिया - वेदनम् । तच्च निष्प्रपञ्चीकरणज्ञानम् । तेन तत्पक्षेपि दूषणमुक्तं भवति । यद्वा - ननु ध्यानक्रियाकर्मत्वेन ब्रह्मणो नियोगरूपकार्यानुप्रवेशवद्भवतामपि विदित्वेत्युक्तवेदनक्रियाकर्मत्वेन नियोगरूपकार्यानुप्रवेशावश्यकतया नियोग-व्यवधानं तुल्यमेव । विदित्वेत्यस्य हि वेदनं कृत्वात्यर्थ इत्याशङ्कां परिहरति । कुत इत्यत्राह - **उभयेति** । **विदितात्** = ज्ञेयात् । **अविदितात्** = ज्ञातुः । अन्यत् = ज्ञेयज्ञातृविलक्षणम् । तं केन विजानीयादित्यनेनापि ज्ञेयत्वं निषिद्धम् । यदिदं नोपासते तदेव ब्रह्म त्वं विद्धीत्यन्वयः । अनेनोपासनकर्मत्वं निषिद्धम् ।

**न चैतावता शास्त्रस्य निर्विषयत्वम्; अविद्याकल्पितभेदनिवृत्तिपरत्वाच्छास्त्रस्य। न हीदन्तया ब्रह्म विषयीकरोति शास्त्रम्। अपि तु अविषयं प्रत्यगात्मस्वरूपं प्रतिपादयदविद्याकल्पितज्ञानज्ञातृज्ञेयविभागं निवर्तयति। तथा च शास्त्रम्** - (बृ.५.४.२.) **'न दृष्टेर्द्रष्टारं पश्येः' इत्येवमादि। न च ज्ञानादेव बन्धनिवृत्तिरिति श्रवणादिविध्यानर्थक्यम्; स्वभावप्रवृत्तसकलेतरविकल्पविमुखीकरणद्वारेण वाक्यार्थावगतिहेतुत्वात्तेषाम्। न च ज्ञानमात्राद्बन्धनिवृत्तिर्न दृष्टेति वाच्यम्; बन्धस्य मिथ्यारूपत्वेन ज्ञानोत्तरकालं स्थित्यनुपपत्तेः। अत एव न शरीरपातादूर्ध्वमेव बन्धनिवृत्तिरिति वक्तुं युक्तम्। न हि मिथ्यारूपसर्पभयनिवृत्ती रज्जुयाथात्म्यज्ञानातिरेकेण सर्पविनाशमपेक्षते। यदि शरीरसम्बन्धः पारमार्थिकः, तदा हि तद्विनाशापेक्षा। स तु ब्रह्मव्यतिरिक्ततया न पारमार्थिकः। यस्य तु बन्धो न निवृत्तः, तस्य ज्ञानमेव न जातमित्यवगम्यते; ज्ञानकार्यादर्शनात्। तस्मात्, शरीरस्थितिर्भवतु वा मा वा; वाक्यार्थज्ञानसमनन्तरं मुक्त एवासौ। अतो न ध्याननियोगसाध्यो मोक्ष इति न ध्यानविधिशेषतया ब्रह्मणस्सिद्धिः। अपि तु,** (तै.आनं.१.) **'सत्यं ज्ञानमनन्तं ब्रह्म',** (छा.६.७.) **'तत्त्वमसि'** (मा.१.२.) (बृ.४,५.१९.) **'अयमात्मा ब्रह्म' इति तत्परेणैव पदसमुदायेन सिध्यतीति।**

**तदयुक्तम्; वाक्यार्थज्ञानमात्राद्बन्धनिवृत्त्यनुपपत्तेः। यद्यपि मिथ्यारूपो बन्धो ज्ञानबाध्यः, तथाऽपि बन्धस्यापरोक्षत्वान्न परोक्षरूपेण वाक्यार्थज्ञानेन स बाध्यते, रज्ज्वादावपरोक्षसर्पप्रतितौ वर्तमानायाम्, 'नायं**

---

ननु ब्रह्मणो ज्ञेयत्वाभावे शास्त्रवेद्यत्वाभावेन शास्त्रस्यैव निर्विषयत्वं स्यादित्यत्राह - **न चेति। निवृत्तिपरत्वं** = निवृत्तितात्पर्यकत्वम्। तथा चाविद्याकल्पितभेदनिवृत्तिप्रतिपादनायैव शास्त्रप्रवृत्तिरिति न निर्विषयत्वं शास्त्रस्येति। ब्रह्मणः शास्त्राविषयत्वमेवोपपादयति - **न हीति। इदन्तया** = विषयतया। तर्हि ब्रह्मवेद ब्रह्मैव भवतीत्यादिशास्त्रं किं विषयीकरोतीत्यत्राह - **अपि त्विति।** अविषयमेव ब्रह्मस्वरूपं निर्विशेषतया प्रतिपादयदविद्याकल्पितभेदं निवर्तयतीत्यर्थः। ब्रह्मणो निर्विशेषतया प्रतिपादकं वाक्यमाह - **तथा चेति।** व्यतिरिक्तमित्याध्याहार्यम्। दृष्टिव्यतिरिक्तत्वाविशेषात् द्रष्टृशब्दो ज्ञेयज्ञात्रुभयपरः। द्रष्टृदृश्यव्यतिरिक्तं निर्विशेषं दृशिमात्रं ब्रह्म पश्येः इत्यर्थः। अनेन भेदनिवृत्तिरप्युक्ता भवति। ज्ञानस्यैव बन्धनिवर्तकत्वे पूर्वोक्तं शास्त्रानर्थक्यशास्त्रविरोधं परिहरति - **नचेति। स्वभावप्रवृत्तम्** = अनाद्यविद्यास्वभावप्रवृत्तिम्। अनादिप्रवृत्तमिति यावत्। तथा च श्रवणादीनां बन्धनिवर्तकवाक्यार्थज्ञानोपयागित्वान्नानर्थक्यमिति भावः। श्रवणमननयोरपि विधेयत्वं पूर्वपक्षिणोक्तमिति श्रवणादिविधीत्युक्तम्।

यद्वा श्रवणादिविध्यानर्थक्यं, श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति विधिवाक्यानर्थक्यम्। पूर्वोक्तं प्रत्यक्षविरोधं परिहरति - **न चेति।** कुत इत्यत्राह - **बन्धस्येति।** एवं ज्ञानोत्तरकालं मिथ्याभूतबन्धस्थित्यनुपपत्तिहेतुनैव बन्धनिवृत्तिरूपमोक्षस्य शरीरपातानपेक्षत्वमिति दर्शयति - **अत एवेति।** ज्ञानानन्तरं मिथ्यावस्तुनिवृत्तौ दृष्टान्तमुक्त्वोपपादयति - **न हीति। स त्विति।** विप्रतिपन्नमपारमार्थिकं ब्रह्मव्यतिरिक्तत्वादित्यनुमानमत्र विवक्षितम्। **ज्ञानकार्यादर्शनादिति।** कार्याभावे हि सामग्र्यभावः कल्प्यः। यदि बन्धस्यानुवृत्तिः तदा तन्निवर्तकतत्वज्ञानरूपसामग्री नास्तीत्येवाङ्गीकार्यम्। ज्ञानोत्पत्त्यनन्तरं बन्धनिवृत्तिः। निवृत्तिमेवोपसंहरति - **तस्मादिति। भवतु वा मा वेति।** दग्धपटे पटप्रतिभासवच्छरीरप्रतिभासस्यानुवृत्तौ निवृतौ वा। **मुक्त एवासाविति।** बन्धस्य च्छिन्नमूलत्वेन दग्धपटवदकार्यकरत्वदित्यर्थः। उक्तविरोधान्न ध्यानविधिशेषतया ब्रह्मणः सिद्धिरित्युपसंहरति - **अत इति। तत्परेणैव** = सिद्धपरवाक्येनैव।

एवमुपन्यस्तं साक्षान्मायावादिमतं ध्याननियोगवादी दूषयति - **तदयुक्तमिति।** अपरोक्षस्य परोक्षज्ञानानिवर्त्यत्वे दृष्टान्तमाह - **रज्ज्वादाविति।** अपरोक्षेति प्रतीतावन्वेति। परोक्षं - सर्पविपरीतज्ञानं रज्जुज्ञानम्। आप्तोपदेशानर्थक्यं

**सर्पो रज्जुरेषा' इत्याप्तोपदेशजनितपरोक्षसर्पविपरीतज्ञानमात्रेण भयानिवृत्तिदर्शनात् ; आप्तोपदेशस्य तु भयनिवृत्तिहेतुत्वं वस्तुयाथात्म्यापरोक्ष्य(क्ष)निमित्तप्रवृत्तिहेतुत्वेन । तथा हि - रज्जुसर्पदर्शनभयात्परावृत्तः पुरुषः, 'नायं सर्पो रज्जुरेषा' इत्याप्तोपदेशेन तद्वस्तुयाथात्म्यदर्शने प्रवृत्तस्तदेव प्रत्यक्षेण दृष्ट्वा भयान्निवर्तते ।**

**न च शब्द एव प्रत्यक्षज्ञानं जनयतीति वक्तुं युक्तम्; तस्यानिन्द्रियत्वात् । ज्ञानसामग्रीष्विन्द्रियाण्येव ह्यपरोक्षसाधनानि । न चास्यानभिसंहितफलकर्मानुष्ठानमृदितकषायस्य श्रवणमनननिदिध्यासनविमुखी-कृतबाह्यविषयस्य पुरुषस्य वाक्यमेवापरोक्षज्ञानं जनयतीति; निवृत्तप्रतिबन्धे तत्परेऽपि पुरुषे ज्ञानसामग्री-विशेषाणामिन्द्रियादीनां स्वविषयनियमातिक्रमादर्शनेन तदयोगात् । न च ध्यानस्य वाक्यार्थज्ञानोपायता; इतरेतराश्रयत्वाद्वाक्यार्थज्ञाने जाते तद्विषयध्यानम्, ध्याने निर्वृत्ते वाक्यार्थज्ञानमिति ।**

परिहरति - **आप्तेति** । नन्वभ्युपगतम् अपरोक्षस्यैवापरोक्षज्ञानमनिवर्तकत्वं, तावतापि न दोषः । बन्धनिवर्तकस्यापरोक्ष-ज्ञानस्यैव शब्देन जननादिति शङ्कां परिहरति - **न चेति** । **तस्य** = शब्दस्य । अस्त्वनिन्द्रियत्वं तावता शब्दस्य कुतो नापरोक्षज्ञानजनकत्वमित्यत्राह - **ज्ञानसामग्रीष्विति** । यत्रापरोक्षसाधनत्वं तत्रेन्द्रियत्वमिति व्याप्तेः । शब्दे व्यापक-निवृत्त्या व्याप्यनिवृत्तेरावश्यकत्वादिति भावः । न चानिन्द्रियस्यालोकादेरपरोक्षज्ञानजनकत्वेन व्यभिचारः । विरोधितमो-निरसनद्वारा उपकारकत्वमात्रसत्त्वेपि ज्ञानजनकत्वाभावात् । 'ज्ञानमुत्पादयत इन्द्रियस्ये'त्यादि जिज्ञासाधिकरणे भाषितम् । अत्रापि भाषितमिन्द्रियाण्येवेति । **ज्ञानसामग्रीषु** = सपरिकरेषु इन्द्रियशब्दलिङ्गादिषु ।

ननु कुड्यादिव्यवहितपदार्थग्रहणासमर्थस्यापीन्द्रियस्य प्रतिबन्धकनिवृत्तौ अपरोक्षज्ञानजनकत्ववच्छब्दस्यापि प्रतिबन्धकनिवृत्तौ तत्परे पुरूषविशेषेऽपरोक्षज्ञानजनकत्वं स्यादित्याशङ्काञ्च परिहरति - **न चेति** । मृदितकषायस्येत्यनेन प्रतिबन्धकनिवृत्तिरुक्ता । तत्र हेतुरनभिसंहितफलकर्मानुष्ठानम् । श्रवणेत्यादिना तत्परत्वमुपपादितम् । **स्वविषयः** = स्वसाध्यम् । ज्ञानसामग्रीविशेषेष्वेव चक्षुरिन्द्रियस्य स्वसाध्यज्ञानानतिक्रमो दृष्टः । न हि चक्षुरिन्द्रियं निवृत्तप्रतिबन्धस्य तत्परस्य पुरूषस्य स्वासाध्यशब्दादिज्ञानमुत्पादयति । अतश्शब्दसाध्यस्य ज्ञानस्य परोक्षरूपत्वात्स्वसाध्यपरोक्षज्ञाना-तिक्रमो न सम्भवति । पुरुषस्य प्रतिबन्धकनिवृत्तिः तत्परत्वञ्च ज्ञानसामग्रीविशेषेण स्वसाध्यज्ञानजनन एव सहकारिभूतम् । न हि परोक्षज्ञानजनकं लिङ्गज्ञानं कदाचिदपरोक्षज्ञानमुत्पादयति । न हि प्रत्यक्षकरणमिन्द्रियं शाब्दबोधं जनयेत् । न वा लिङ्गज्ञानं शाब्दबोधम् । न हि त्वचा रूपविषयकं ज्ञानं जायते । अतः परोक्षज्ञानजनकस्य शब्दस्यापि न कदाचिदपि अपरोक्षज्ञानजनकत्वमिति भावः । विशिष्टाद्वैतिमते "त्वक्चट्क् च निपिपासति" इति रीत्या विषयनैयत्यं नास्तीति चेन्मैवम् । तत्रोन्द्रियणां ग्राहकत्वाभावप्रतिपादनतात्पर्यात् ॥

ननु 'दशमस्त्वमसी'ति वाक्यात् 'दशमोऽहमि'त्यपरोक्षज्ञानोत्पत्तिदर्शनेन शब्दस्याप्यपरोक्षज्ञानजनकत्वमभ्युपे-त्यमिति चेन्न, तत्र हि 'दशमस्त्वमसी'त्युपदेशानन्तरं शीघ्रभाविन्या प्रत्यक्षसामग्र्या 'दशमोऽहमि'ति प्रत्यक्षमपि जायते । तत्र शब्दजन्यज्ञानस्य प्रत्यक्षज्ञानस्य च भेदाग्रहेण पूर्वज्ञानस्य शब्दजन्यस्यापरोक्षत्वारोप एव । न त्वपरोक्षज्ञानमेवो-त्पादयति । यथा हि - 'घटोय'मित्युक्ते घटं पश्यतो घटविषयकज्ञानमपरोक्षमिन्द्रियजन्यम् । तस्मात् 'दशमस्त्वमसी'ति वाक्यं 'दशमोऽहमि'ति बुद्धिनिमित्तमपेक्षणीयवस्तुप्रतिसन्धानमेव जनयति न त्वपरोक्षम् । प्रतिसन्धानानन्तरं तु प्रत्यक्ष-सामग्र्या 'दशमोऽहमि'ति प्रत्यक्षज्ञानमिति । विमतं प्रत्यक्षज्ञानन्न वाक्यजन्यं प्रत्यक्षज्ञानत्वात्, अनुपदिष्टवाक्यस्य 'दशमोऽहमि'ति प्रत्ययवत् । एवं विमतं वाक्यं नापरोक्षज्ञानजनकं वाक्यत्वात्सम्प्रतिपन्नवाक्यवदित्यादिभिः प्रत्यक्षज्ञाने वाक्यजन्यत्वाभावस्य, वाक्यस्य प्रत्यक्षज्ञानजनकत्वाभावस्य च सिद्धेः । एवं वाक्यस्यापरोक्षज्ञानजनकत्वं व्युदस्तम् । अथान्योन्याश्रयाद्ध्यानस्य वाक्यार्थज्ञानोपायत्वमपि न युक्तमित्याह - **न चेति** ।

**न च ध्यानवाक्यार्थज्ञानयोर्भिन्नविषयत्वम् । तथा सति ध्यानस्य वाक्यार्थज्ञानोपायता न स्यात् । न ह्यन्यध्यानमन्यौन्मुख्यमुत्पादयति । ज्ञातार्थस्मृतिसन्ततिरूपस्य ध्यानस्य वाक्यार्थज्ञानपूर्वकत्वमवर्जनीयम् ; ध्येयब्रह्मविषयज्ञानस्य हेत्वन्तरासम्भवात् । न च ध्यानमूलं ज्ञानं वाक्यान्तरजन्यम् ; निवर्तकज्ञानं तत्त्वमस्यादिवाक्यजन्यम् - इति युक्तम् । ध्यानमूलमिदं वाक्यान्तरजन्यं ज्ञानं तत्त्वमस्यादिवाक्यजन्यज्ञानेनैकविषयम्, भिन्नविषयं वा ? एकविषयत्वे, तदेवेतरेतराश्रयत्वम् । भिन्नविषयत्वे, ध्यानेन तदौन्मुख्यापादनासम्भवः । किञ्च ध्यानस्य ध्येयध्यात्राद्यनेकप्रपञ्चापेक्षत्वान्निष्प्रपञ्चब्रह्मात्मैकत्वविषयवाक्यार्थज्ञानोत्पत्तौ दृष्टद्वारेण नोपयोग इति वाक्यार्थज्ञानमात्रादविद्यानिवृत्तिं वदतः श्रवणमनननिदिध्यासनविधीनामानर्थक्यमेव । यतो वाक्यादापरोक्ष्यज्ञानासम्भवाद्वाक्यार्थज्ञानेनाविद्या न निवर्तते, तत एव जीवन्मुक्तिरपि दूरोत्सारिता ।**

ननु 'दशमस्त्वमसी'ति वाक्यात् 'दशमोऽहमि'त्यपरोक्षज्ञानोत्पत्तिदर्शनेन शब्दस्याप्यपरोक्षज्ञानजनकत्वमभ्युपेत्यमिति चेन्न, तत्र हि 'दशमस्त्वमसी'त्युपदेशानन्तरं शीघ्रभाविन्या प्रत्यक्षसामग्र्या 'दशमोऽहमि'ति प्रत्यक्षमपि जायते । तत्र शब्दजन्यज्ञानस्य प्रत्यक्षज्ञानस्य च भेदाग्रहेण पूर्वज्ञानस्य शब्दजन्यस्यापरोक्षत्वारोप एव । न त्वपरोक्षज्ञानमेवोत्पादयति । यथा हि - 'घटोय'मित्युक्ते घटं पश्यतो घटविषयकज्ञानमपरोक्षमिन्द्रियजन्यम् । तस्मात् 'दशमस्त्वमसी'ति वाक्यं 'दशमोऽहमि'ति बुद्धिनिमित्तमपेक्षणीयवस्तुप्रतिसन्धानमेव जनयति, न त्वपरोक्षम् । प्रतिसन्धानानन्तरं तु प्रत्यक्षसामग्र्या 'दशमोऽहमि'ति प्रत्यक्षज्ञानमिति । विमतं प्रत्यक्षज्ञानं न वाक्यजन्यं प्रत्यक्षज्ञानत्वात्, अनुपदिष्टवाक्यस्य 'दशमोऽहमि'ति प्रत्ययवत् । एवं विमतं वाक्यं नापरोक्षज्ञानजनकं वाक्यत्वात् सम्प्रतिपन्नवाक्यवदित्यादिभिः प्रत्यक्षज्ञाने वाक्यजन्यत्वाभावस्य, वाक्यस्य प्रत्यक्षज्ञानजनकत्वाभावस्य च सिद्धेः । एवं वाक्यस्यापरोक्षज्ञानजनकत्वं व्युदस्तम् । अथान्योन्याश्रयात् ध्यानस्य वाक्यार्थज्ञानोपायत्वमपि न युक्तमित्याह - **न चेति** ।

ननु कथमन्योन्याश्रयः ? पूर्वं परोक्षात्मकं वाक्यार्थज्ञानं, पश्चाद्ध्यानं, ततस्तु साक्षात्कारात्मकं वाक्यार्थज्ञानमिति ध्यानपूर्वपश्चाद्भाविनोर्भेदादिति चेन्न । ध्यानपश्चाद्भाविनो वाक्यजन्यज्ञानस्य साक्षात्कारत्वनिषेधात् । अस्तु वा साक्षात्कारत्वम्, अथापि वाक्यजन्यत्वाविशेषेण वाक्यजन्यज्ञानाद्ध्यानं, ततो वाक्यजन्यज्ञानमित्यन्योन्याश्रयो दुर्निवार एवेति । ननु पूर्वपश्चाद्भाविनोर्वाक्यार्थज्ञानयोः ध्यानस्य भिन्नविषयत्वस्वीकारान्नान्योन्याश्रय इति शङ्कां परिहरति - **न चेति** । वाक्यार्थज्ञानञ्च वाक्यार्थज्ञानञ्च - वाक्यार्थज्ञाने, ध्यानञ्च वाक्यार्थज्ञाने च तयोः । कुत इत्यत्राह - **तथेति** । वाक्यार्थज्ञानोपायता । वाक्यार्थज्ञाननिरूपितोपायता, वाक्यार्थज्ञानोपायकता च । वाक्यार्थज्ञानोपायत्वं ध्यानस्य, ध्यानोपायत्वं वाक्यार्थज्ञानस्य च न स्यादित्यर्थः । तत्र प्रथममुपपादयति - **नहीति** । द्वितीयमुपपादयति - **ज्ञातेति** । ननु ध्यानहेतुभूतं ज्ञानं हेत्वन्तरजन्यं, न तु ध्यानपश्चाद्भाविज्ञानहेतुजन्यम् । अतो द्वयोर्वाक्यार्थज्ञानयोर्भिन्नसामग्रीजन्यत्वेन नान्योन्याश्रय इति शङ्कां परिहरति - **न चेति** । दूषणं वक्तुं विकल्पयति - **ध्यानमूलमिति** । **तदेवेतरेतराश्रयत्वमिति** । हेत्वन्तरजन्यस्यापि वाक्यार्थज्ञानस्य निवर्तकज्ञानतुल्यविषयत्वात्, अस्य ध्यानापेक्षाया ध्यानस्य वाक्यार्थज्ञानापेक्षायाश्च सत्त्वादिति भावः ॥

भिन्नविषयत्वे दूषणमाह - **भिन्नेति** । प्रत्युत ध्यानस्य वाक्यार्थज्ञानविरोधित्वेन वाक्यार्थज्ञानेऽनुपयोगाद्ध्यानानर्थक्यमेवेत्याह - **किञ्चेति** । वाक्यार्थज्ञानन्तु निष्प्रपञ्चब्रह्मात्मविषयं, ध्यानन्तु ध्येयध्यातृशमाद्यनेकप्रपञ्चापेक्षमिति अनयोः परस्परं विरोधान्न ध्यानेन वाक्यार्थज्ञानस्योपयोग इति भावः । **दृष्टद्वारेणेति** । अदृष्टद्वारेणोपयोगस्तु भवद्भिर्नाङ्गीकृतः । अन्यथा ध्याननियोगवादिमतप्रवेशादिति भावः । एवं वाक्यस्यापरोक्षज्ञानजनकत्वव्युदसनेन वाक्यार्थज्ञानेनाविद्यानिवृत्तेर्निराकृतत्वाद्भवदभिमता जीवन्मुक्तिरपि न सेत्स्यतीत्याह - **यत इति** । **दूरोत्सारितेति** । वाक्यजन्यज्ञानस्या-

**का चेयं जीवन्मुक्तिः? सशरीरस्यैव मोक्ष इति चेत् - 'माता मे वन्ध्या' इतिवदसङ्गतार्थं वचः; यतस्सशरीरत्वं बन्धः, अशरीरत्वमेव मोक्ष इति त्वयैव श्रुतिभिरुपपादितम्। अथ सशरीरत्वप्रतिभासे वर्तमाने यस्यायं प्रतिभासो मिथ्येति प्रत्ययः, तस्य सशरीरत्वनिवृत्तिरिति। न। मिथ्येति प्रत्ययेन सशरीरत्वं निवृत्तं चेत्, कथं सशरीरस्य मुक्तिः?। अजीवतोऽपि मुक्तिः सशरीरत्वमिथ्याप्रतिभासनिवृत्तिरेवेति कोऽयं जीवन्मुक्तिरिति विशेषः। अथ सशरीरत्वप्रतिभासो बाधितोऽपि यस्य द्विचन्द्रज्ञानवदनुवर्तते, स जीवन्मुक्त इति चेन्न; ब्रह्मव्यतिरिक्तसकलवस्तुविषयत्वाद्बाधकज्ञानस्य। कारणभूताविद्याकर्मादिदोषस्सशरीरत्वप्रतिभासेन सह तेनैव बाधित इति, बाधितानुवृत्तिर्न शक्यते वक्तुम्। द्विचन्द्रज्ञानादौ तु तत्प्रतिभासहेतुभूतदोषस्य बाधकज्ञानभूतचन्द्रैकत्वज्ञानाविषयत्वेना बाधितत्वात् द्विचन्द्रप्रतिभासानुवृत्तिर्युक्ता। किञ्च,** (छा.६.१४.२.) **'तस्य तावदेव चिरम्, यावन्न विमोक्ष्ये, अथ सम्पत्स्ये' इति सद्विद्यानिष्ठस्य शरीरपातमात्रमपेक्षते मोक्ष इति**

---

विद्यानिवर्तकत्वे हि शरीरपाताभावेपि वाक्यजन्यज्ञाने सति बन्धनिवृत्तिरूपमोक्षः युक्त इति वक्तुं शक्यम्। तस्याविद्यानिवर्तकत्वन्तु व्युदस्तमपरोक्षज्ञानस्य परोक्षज्ञानेन निवृत्त्यसम्भवाद्वाक्यस्यापरोक्षज्ञानजनकत्वनिराकरणाच्चेति भावः।

जीवन्मुक्तिरपि दुर्निरूपेत्याह - **का चेयमिति**। ननु जीवतस्सशरीरस्य मोक्ष एव सेति सुनिरूपैवेति शङ्कते - **सशरीरस्यैवेति**। अवधारणेनाशरीरस्य मोक्षत्वन्न जीवन्मुक्तित्वमिति सूचितम्। प्रसिद्ध्यर्थकं वाऽवधारणम्। विरोधेन परिहरति - **मातेति**। विरोधमेवोपपादयति - **यत** इति। **श्रुतिभिरुपपादितमिति**। मोक्षस्य धर्मसाध्यत्वे शरीरसम्बन्धरूपसंसारफलत्वमवर्जनीयं, ततश्च मोक्षस्याशरीरत्वबोधकानां 'अशरीरं वा व सन्तम्' इत्यादिकानां विरोध इति दूषणमनुपदमेवोक्तं किमिति विस्मृतमिति भावः। ननु सशरीरस्य मोक्ष एव जीवन्मुक्तिरिति नास्माकमभिप्रेतं, किन्तु मिथ्याभूतसशरीरत्वप्रतिभासदशायां, 'अयं प्रतिभासो मिथ्ये'ति ज्ञानेन या सशरीरत्वप्रतिभासनिवृत्तिस्सैव जीवन्मुक्तिः। इयञ्च जीवतोपि सम्भवति तस्य सशरीरत्वप्रतिभासो मिथ्येति ज्ञानसम्भवेन तेन तत्प्रतिभासनिवृत्तेस्सम्भवादिति स्वमतं शङ्कते - **अथेति**। सशरीरत्वनिवृत्तिः- सशरीरत्वप्रतिभासनिवृत्तिः। परिहरति - **नेति**। सशरीरत्वं - शरीरत्वप्रतिभासः। **कथं सशरीरस्य मुक्तिरिति**। जीवतः सशरीरस्य मुक्तिः कथमुक्ता भवतीत्यर्थः। कुतः इत्यत्राह - **अजीवतोपीति**। अजीवतो जीवतश्च सशरीरत्वप्रतिभासनिवृत्तिरेव मुक्तिरिति साधारणत्वेन विशेषाभावान्न सशरीरस्य मुक्तिरुक्ता भवतीत्यर्थः।

ननु सशरीरत्वप्रतिभासो मिथ्येति ज्ञानेन बाधितस्यापि सशरीरत्वप्रतिभासस्य याऽनुवृत्तिस्सैवजीवन्मुक्तिः। अजीवतस्तु न बाधितसशरीरत्वप्रतिभासानुवृत्तिरिति वैषम्यमित्याशयेन शङ्कते - **अथेति**। परिहरति नेति। कुत इत्यत्राह - **ब्रह्मेति**। अस्तु बाधकज्ञानस्य ब्रह्मव्यतिरिक्तकृत्स्नविषयकत्वं, किं तावतेत्यत्राह - **कारणेति**। आदिशब्देन वासना गृह्यते। कार्येण सह कारणस्यापि बाधितत्वेन कारणाभावात्तत्कार्यानुवृत्तिर्न सम्भवतीति भावः। उक्तद्विचन्द्रज्ञानदृष्टान्ते तु कारणस्य बाधकज्ञानाविषयत्वेनाबाधितत्वात् कारणसत्त्वेन तदनुवृत्तिर्युक्तेत्याह - **द्विचन्द्रज्ञानादाविति**। तुशब्दो वैषम्यद्योतकः। तच्छब्दः द्विचन्द्रपरः। पूर्वं बाधितानुवृत्तिः परोक्तद्विचन्द्रज्ञानदृष्टान्ते निराकरणप्रकरणे दोषस्य पारमार्थिकत्वेन ज्ञानाबाध्यत्वादनुवृत्तिर्युक्तेत्युक्तम्। अत्र तु बाधकज्ञानाविषयत्वेन रज्जुयाथात्म्य ज्ञानेन शुक्तौ रजतभ्रमानिवृत्तिवत् कारणानिवृत्त्या तत्कार्यद्विचन्द्रप्रतिभासानुवृत्तिरुक्तेति ध्येयम्। श्रुत्यैव जीवन्मुक्तिरपि निषिद्धेति दर्शयति - **किञ्चेति**। **तस्य** = सद्विद्यानिष्ठस्य। **तावदेव चिरं** तावानेव विलम्बः। **विमोक्ष्यते** सम्पत्स्यत इति विपरिणामः कार्यः। यावच्छरीरान्न विमुक्तो भवति तावच्चिरमित्यर्थः। **अथ** - पश्चात्। **सम्पत्स्यते** - मुक्तो भवति इत्यर्थः।

**वदन्तीयं श्रुतिः जीवन्मुक्तिं वारयति । सैषा जीवन्मुक्तिरापस्तम्बेनापि निरस्ता -** (आप.ध.२.२१.१३-१७.) **'...वेदान् इमं लोकममुञ्च परित्यज्यात्मानमन्विच्छेत्', 'बुद्धे क्षेमप्रापणं, तच्छास्त्रैर्विप्रतिषिद्धम्', 'बुद्धे चेत्क्षेमप्रापणम्, इहैव न दुःखमुपलभेत', 'एतेन परं व्याख्यातम्' इति । अनेन ज्ञानमात्रान्मोक्षश्च निरस्तः । अतस्सकलभेदनिवृत्तिरूपा मुक्तिर्जीवतो न सम्भवति । तस्माद्ध्याननियोगेन ब्रह्मापरोक्षज्ञानफलेनैव बन्धनिवृत्तिः । न च नियोगसाध्यत्वे मोक्षस्यानित्यत्वप्रसक्तिः ; प्रतिबन्धनिवृत्तिमात्रस्यैव साध्यत्वात् ।**

**किञ्च, न नियोगेन साक्षाद्बन्धनिवृत्तिः क्रियते; किन्तु निष्प्रपञ्चज्ञानैकरसब्रह्मापरोक्ष्यज्ञानेन । नियोगस्तु तदापरोक्ष्यज्ञानं जनयति । कथं नियोगस्य ज्ञानोत्पत्तिहेतुत्वमिति चेत् - कथं वा भवतोऽनभिसंहितफलानां कर्मणां वेदनोत्पत्तिहेतुत्वम् ? मनोनैर्मल्यद्वारेणेति चेत् - ममापि तथैव । मम तु निर्मले मनसि शास्त्रेण ज्ञानमुत्पाद्यते । तव तु नियोगेन मनसि निर्मले ज्ञानसामग्री वक्तव्येति चेत् - ध्याननियोगनिर्मलं**

---

यद्वा - उपासकानुसन्धानमिदम् । **तस्य** सद्विद्यानिष्ठस्य मम । अत एवोत्तमपुरुषोपि सुसङ्गतः । **वारयतीति** । अनया शरीरपातादूर्ध्वमेवाविद्यानिवृत्तिरूपमोक्षोक्त्या ततः पूर्वं मुक्तिकल्पनं श्रुतिविरुद्धमिति भावः ।

अथ स्मृतिविरोधमाह - **सैषेति** । **वेदान्** = त्रिवर्गसाधनकर्माणि । **इमं लोकममुञ्च** = तत्फलभूतमैहिकमामुष्मिकञ्च। **अन्विच्छेत्** = उपासीत । **बुद्धेः** = वाक्यार्थज्ञाने जाते सति । **क्षेमप्रापणं** = मोक्षः । भवतीति यदित्यध्याहार्यम् । **शास्त्रैः** बहुभिः शास्त्रैः । **विप्रतिषिद्धं** = विशेषेण प्रतिषिद्धं बाधितमित्यर्थः । न तु सत्प्रतिपक्षविधया समबलत्वेन । बाधविधयाधिकबलत्वेनेति सूचनायैव **वी**त्युपसर्गः । ततश्चोपासनविधिपरैरुपासनस्य यावदायुषमनुवृत्तिपरैः नाडीविशेषनिष्क्रमणार्चिरादिमार्गपूर्वकदेशविशेषप्राप्तिपरैः भूयोभिः प्रबलैर्विरोध इत्यर्थः । 'भूयसां बलीयस्त्वमि'ति न्यायोऽत्राभिप्रेतः । अथ तयैवस्मृत्या प्रत्यक्षविरोध उक्त इति दर्शयितुं तामेव स्मृतिमुदाहरति **बुद्धे चे**दिति । परं व्याख्यातमिति । यथा दुःखोपलब्धिः तथा प्रेत्यापीत्यर्थः । यद्वा यथा दुःखनिवृत्तिर्नोपलभ्यते तथा सुखनिवृत्तिरपि नेत्यर्थः । यद्वा एवं शास्त्रप्रत्यक्षविरोधस्योक्तत्वेन औडुलोमिमतमपि सर्वमपास्तमित्यर्थः । **इहैवे**त्यादिना जीवन्मुक्तिरत्र निरस्ता । अत्रार्थाज्ज्ञानमात्रस्य मोक्षजनकत्वमपि व्युदस्तमित्याह - **अनेनेति** । निगमयति - **अत** इति । एवं साक्षान्मायावाद्यभिमतार्थनिरासः कृतः । अतस्तन्मतस्यानुपपन्नत्वात्स्वमतमेव युक्तमिति दर्शयति - **तस्मा**दिति ।

अथ साक्षान्मायावादिनोक्तं नियोगसाध्यत्वेन मोक्षस्यानित्यत्वाशङ्कनं परिहरति - **न चेति** । कुतो नानित्यत्वप्रसक्तिरित्यत्राह - **प्रतिबन्धेति** । त्वं हि नः पितेत्यादित्वुदुदाहृतश्रुतिभ्य एवेति भावः । ननु बन्धस्य नियोगनिवर्त्यत्वे ज्ञाननिवर्त्यत्वाभावेन सत्यत्वप्रसङ्ग इति शङ्कां परिहरति - **किञ्चेति** । तर्हि केन क्रियत इत्यत्राह - **किन्त्विति** । ततश्च ज्ञाननिवर्त्यत्वेन न सत्यत्वमिति भावः ।

तर्हि नियोगो निष्फल इत्यत्राह - **नियोगस्त्विति** । किञ्चित्कारजिज्ञासया पृच्छति - **कथमिति** । नियोगेन ज्ञाने किञ्चित्कारादर्शनादिति भावः । भवतामप्यनभिसंहितफलकर्मानुष्ठानेन वेदनोत्पत्तिं स्वीकुर्वतां तेन वेदने कः किञ्चित्कार इष्ट इति प्रतिबन्द्या समाधत्ते - **कथं वेति** । **वेदनोत्पत्तिहेतुत्वमिति** । इच्छाद्वारेति शेषः । अनभिसंहितफलकर्मानुष्ठानेन मनसोनैर्मल्यं तत इच्छाद्वारा वेदनोत्पत्तिरिति परिहराम इति शङ्कते - **मनोनैर्मल्येति** । ममापि नियोगेन मनोनैर्मल्यं ततो ज्ञानमिति तुल्य एव परिहार इत्याह - **ममापीति** । ननु मनोनैर्मल्ये जातेऽपि मनसस्साधारणकारणत्वेन तदपेक्षितशास्त्ररूपासाधारण कारणेन ज्ञानोत्पत्तिर्युक्ताऽस्माकं, भवतां तु कथं साधारणकारणस्य मनसस्सत्त्वेप्यसाधारणकारणाभावादित्याशयेन शङ्कते - **मम त्विति** । परिहरति - **ध्यानेति** ।

**मन एव साधनमिति ब्रूमः । केनावगम्यत इति चेत् - भवतो वा, 'कर्मभिर्मनो निर्मलं भवति; निर्मले मनसि श्रवणमनननिदिध्यासनैस्सकलेतरविषयविमुखस्यैव शास्त्रं निवर्तकज्ञानमुत्पादयती'ति केनावगम्यते ?** (बृ.६.४.२२.) **'विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन'**, (बृ.६.५.६.) **'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'**, (मुण्ड.३.२.९.) **'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिभिश्शास्त्रैरिति चेत् - ममापि, 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'**, (तै.आनं.) **'ब्रह्मविदाप्नोति परम्'**, (मुण्ड.३.१.८.) **'न चक्षुषा गृह्यते नापि वाचा'**, (...?) **'मनसा तु विशुद्धेन'**, (कठ.६.९.) **'हृदा मनीषा मनसाऽभिक्लृप्तः' इत्यादिभिश्शास्त्रैर्ध्याननियोगेन मनो निर्मलं भवति; निर्मलं च मनो ब्रह्मापरोक्षज्ञानं जनयतीत्यवगम्यते - इति निरवद्यम् ॥**

**'नेदं यदिदमुपासते' इत्युपास्यत्वं प्रतिषिद्धमिति चेत् - नैवम् । नात्र ब्रह्मण उपास्यत्वं प्रतिषिध्यते ; अपि तु ब्रह्मणो जगद्वैरूप्यं प्रतिपाद्यते । यदिदं जगदुपासते प्राणिनः, नेदं ब्रह्म, तदेव ब्रह्म त्वं विद्धि, 'यद्वाचाऽनभ्युदितम्, येन वागभ्युद्यते' इति वाक्यार्थः । अन्यथा, 'तदेव ब्रह्म त्वं विद्धि' इति विरुध्यते । ध्यानविधिवैयर्थ्यं च स्यात् । अतो ब्रह्मसाक्षात्कारफलेन ध्याननियोगेनैवापरमार्थभूतस्य कृत्स्नस्य द्रष्टृदृश्यादिप्रपञ्चरूपबन्धस्य निवृत्तिः ॥**

---

**साधनं** = असाधारणकारणमित्यर्थः । मनसस्साधारणकारणत्वेपि नैयायिकाद्यभिमतमानसप्रत्यक्षे, प्रकृष्टादृष्टसहकृतमनोमात्रकारणके योगिप्रत्यक्षे चासाधारणसाधनत्वस्य स्वीकारादत्रापि तत्सम्भवान्न दोष इति भावः । एवमभ्युपगमे प्रमाणं शङ्कते - **केनेति** । प्रतिबन्द्या परिहरति - **भवतो वेति** । श्रुतिवाक्यान्येव प्रमाणमिति शङ्कते - **विविदिषन्तीति** । अत्र प्रथमश्रुत्या कर्मणां मनोनैर्मल्यहेतुत्वमुक्तम् । मनोनैर्मल्याभावे वेदनेच्छाया एवानुत्पत्तेः । द्वितीयया निर्मलमनस्कस्य श्रवणादिभिरितरविषयविमुखीकारः । तृतीयया निवर्तकज्ञानम् । **वेदेति** वाक्यार्थज्ञानस्योक्तत्वात् । स्वस्यापि प्रमाणमस्तीत्याह - **ममापीति** । निदिध्यासितव्य इत्यनेन ध्याननियोग उक्तः । 'ब्रह्मविदि'त्यनेन तज्जन्यसाक्षात्कार उक्तः । तत्र नियोगस्य साक्षात्कारहेतुत्वं निर्मलमनोद्वारेति सूचनाय - **न चक्षुषेत्यादिकम्** । विशुद्धेन मनसा इति ह्युक्तम् । एवमुक्तिप्रत्युक्तिविधया स्वमतोपपादनेन स्वमते स्वारस्यं परमतेऽस्वारस्यं चोक्तं भवति । तथा हि - **मनसा तु विशुद्धेनेति** मनसस्साधनत्वं कण्ठोक्तमिति श्रुतिस्वारस्यं, न तथा भवतां वाक्यार्थज्ञानस्य साधनत्वे स्वारस्यं, 'ब्रह्मवेदे'त्यत्र वेदनशब्दस्य वाक्यार्थज्ञानपरत्वे स्वारस्याभावात्, अन्यत्रापि वाक्यार्थज्ञानस्योपायत्वकण्ठोक्त्यभावेन श्रुत्यन्तरैकार्थ्यस्यापि दुर्निरूपत्वात् । अतो बन्धमिथ्यात्वप्रयुक्तचोद्यपरिहारयोस्समत्वेऽपि परोक्षज्ञानस्यापरोक्षभ्रमनिवर्तकत्वस्य, वाक्यस्यापरोक्षज्ञानजनकत्वस्य, शास्त्रप्रत्यक्षविरोधस्य, श्रुतिस्वारस्यहानेश्च भवतामङ्गीकर्तव्यतयाऽधिकं दूषणमिति ॥

'तदेव ब्रह्मे'त्यादिना ब्रह्मण उपास्यत्वनिषेधात्कथं ध्याननियोगवाद इति शङ्कते **नेदमिति** । परिहरति **नैवमिति** । भवदुक्तनिर्वाहः न युक्त इत्यर्थः । प्रथममुपास्यत्वनिषेधो नास्तीति प्रतिजानीते - **नात्रेति** । किं तर्हि प्रतिपाद्यते इत्यत्राह - **अपि त्विति** । तदेवोपपादयति - **यदिदमिति** । 'मनो ब्रह्मेत्युपासीते'ति विहितप्रतीकोपासनोपास्यानां परिच्छिन्नत्वात्तद्ब्रह्म न भवति । अपरिच्छिन्नमेव ब्रह्म त्वं विद्धीत्यर्थः । अतः **नेदमिति** निषेधस्य **यदितमुपासत** इत्यत्रैव तात्पर्यम् । अपरिच्छिन्नत्वमेवोपपादयति - **यद्वाचानभ्युदितमिति** । अपरिच्छिन्नत्वाद्वक्तुमशक्यमित्यर्थः । एवमनङ्गीकारे स्ववाक्यविरोधमाह - **अन्यथेति** । ध्यानविधिवैयर्थ्यमपीत्याह - **ध्यानेति** । एतेन 'अन्यदेव तद्विदितादि'ति श्रुतिरपि जगद्वैरूप्यपरेत्युक्तं भवति । स्वमतमुपसंहरति **अत** इति । अत उक्तदूषणैः परमतस्य दुष्टत्वात्स्वमतदोषपरिहारेण स्वमतस्यादुष्टत्वाच्च ।

**यदपि कैश्चिदुक्तम्, भेदाभेदयोर्विरोधो न विद्यत इति - तदयुक्तम्। न हि शीतोष्णतमःप्रकाशादिवत् भेदाभेदावेकस्मिन् वस्तुनि सङ्गच्छेते ॥**

**अथोच्येत - सर्वं हि वस्तुजातं प्रतीतिव्यवस्थाप्यम्। सर्वञ्च भिन्नाभिन्नं प्रतीयते। कारणात्मना जात्यात्मना चाभिन्नम्, कार्यात्मना व्यक्त्यात्मना च भिन्नम्। छायातपादिषु विरोधः सहानवस्थानलक्षणः, भिन्नाधारत्वरूपश्च। कार्यकारणयोर्जातिव्यक्त्योश्च तदुभयमपि नोपलभ्यते। प्रत्युत एकमेव वस्तु द्विरूपं प्रतीयते, यथा 'मृदयं घटः', 'खण्डो गौः', 'मुण्डो गौः' इति। न चैकरूपं किञ्चिदपि वस्तु लोके दृष्टचरम्। न च तृणादेर्ज्वलनादिवदभेदो भेदोपमर्दी दृश्यत इति न वस्तुविरोधः; मृत्सुवर्णगवाश्वाद्यात्मनाऽवस्थितस्यैव घटमकुटखण्डवडबाद्यत्मना चावस्थानात्। न चाभिन्नस्य भिन्नस्य च वस्तुनोऽभेदो भेदश्च एक एवाकार इतीश्वराज्ञा। प्रतीतत्वादैकरूप्यं चेत् - प्रतीतत्वादेव भिन्नाभिन्नत्वमिति द्वैरूप्यमप्यभ्युपगम्यताम्। न हि विष्फारिताक्षः पुरुषो घटशरावखण्डमुण्डादिषु वस्तुषूपलभ्यमानेषु 'इयं मृत्, अयञ्च(अयं)घटः', 'इदं**

---

अथ भास्करमतसिद्धभेदाभेदाविरोधं दूषयितुं ध्याननियोगवाद्येवानुवदति - **यदपीति**। दूषयति - **तदयुक्तमिति**। अयुक्तत्वमेवोपपादयति - **न हीति**। आदिशब्देन तृणदहनादेः परिग्रहः। नियमेन भिन्नाधारत्वरूपस्य सहानवस्थानरूपस्य नाश्यनाशकभावरूपस्य च विरोधस्य भेदाभेदयोरपि सत्त्वेन कथमविरोध इति भावः। विस्तरेण तन्मतमुपपादयति - **अथेति**। भेदाभेदयोरविरोधोपपादनाय प्रतीतिं प्रमाणयितुं प्रतीतेरर्थव्यवस्थापकत्वं सर्वसम्प्रतिपन्नमिति प्रथमं प्रदर्शयति - **सर्वमिति**। हिः प्रसिद्धौ। किं तत इत्यत्राह - **सर्वं चेति**। अस्तु प्रतीतिः कथं भिन्नाभिन्नत्वमित्यत्राह - **कारणेति**। तथा च भिन्नाभिन्नत्वयोः प्रतीतेरुपपन्नत्वाच्च न विरोधः छायातपादिषु तु विरोधस्यैव प्रतीतिसिद्धत्वेन दृष्टान्तवैषम्यमिति भावः। वैषम्यमेव दर्शयति - **छायेति**। सहानवस्थानलक्षण एकाधिकरणवृत्तित्वाभावरूपः। भिन्नाधारत्वरूपः =अनधिकरणवृत्तित्वरूपः। दार्ष्टान्तिकेऽविरोधमुपपादयति - **कार्येति**। न केवलमविरोधमात्रं अपि तु वैरूप्येणापि प्रतीतिरस्तीत्याह - **प्रत्युतेति**। अभिनयेन प्रतीतिप्रकारं दर्शयति - **यथेति**। अत्र प्रतीतौ एकस्यैव धर्मिणो मृत्त्वघटत्वोभयवैशिष्ट्यानवगाहनात् द्विरूपत्वमभ्युपेत्यं, ततश्च कारणात्मनाऽभेदः कार्यात्मना भेदश्च सिद्धः इति भावः। 'खण्डो गौरि'त्यादिकं जातिव्यक्त्योर्निदर्शनम्। एवं वस्तुनः द्विरूपत्वेन प्रतीतिरुक्ता, अथैकरूपत्वेन प्रतीतिरेव नास्ति येनैकरूप्यमपि प्रामाणिकं भवेदित्याशयेनाह - **न चैकरूपमिति**।

ननूक्तोभयविधविरोधपरिहारेपि नाश्यनाशक(भाव)विरोधस्य का गतिरित्यत्र सोपि नास्तीत्याह - **न चेति**। ज्वलनस्य तृणोपमर्दित्ववदभेदस्य भेदोपमर्दित्वादर्शनादिति भावः। **वस्तुविरोधः** नाश्यनाशकविरोधः। वस्तुविरोधाभावमेवोपपादयति - **मृदिति**। मृदात्मनाऽवस्थितस्यैव घटात्मनाऽवस्थानदर्शनाद्भेदाभेदयोर्नैकस्मिन्वस्तुनि विरोध इति भावः। नन्वेवं सति कारणजातिगतोऽभेदः कार्यव्यक्तिगतो भेद इति नैकस्य द्विरूपत्वमिति शङ्कां परिहरति - **न चेति**। **अभिन्नस्य** = कारणस्य जातेश्च। **भिन्नस्य** = कार्यस्य व्यक्तेश्च। 'एक एवाकारः' इति कारणजात्योरभेद एवाकारः, कार्यव्यक्त्योर्भेद एवाकारः। **ईश्वराज्ञेति**। कारणकार्ययोः जातिव्यक्त्योरपि प्रतीतिबलेन भिन्नाभिन्नत्वादेक एवाकार इति नाभ्युपगन्तुं शक्यम्। अन्यथा प्रमाणानादरेण हटादेवाङ्गीकार्य इति भावः॥

ऐकरूप्ये प्रतीतिरस्तीति शङ्कते - **प्रतीतत्वादिति**। भिन्नाभिन्नत्वेपि प्रतीतिसत्त्वेन वैरूप्यमप्यभ्युपगन्तव्यमिति परिहरति - **प्रतीतत्वादेवेति**। वस्तुत ऐकरूप्ये प्रतीतिरपि नास्तीति दर्शयति - **न हीति**। अयं भावः - 'इदं कारणं', 'इदं कार्यं', 'इयं जातिः', 'इयं व्यक्ति'रिति विविक्तदर्शने हि 'अत्राभेदः','अत्र भेदः' इति निर्णेतुं शक्यम्। न च तथा

**गोत्वम्, इयं व्यक्तिः' इति विवेक्तुं शक्नोति । अपि तु, 'मृदयं घटः', 'खण्डो गौः' इत्येव प्रत्येति ॥ अनुवृत्तिबुद्धिबोध्यं कारणमाकृतिश्च, व्यावृत्तिबुद्धिबोध्यं कार्यं व्यक्तिश्चेति विविनक्तीति चेत् - नैवम्, विविक्ताकारानुपलब्धेः । न हि सुसूक्ष्ममपि निरीक्षमाणैः 'इदमनुवर्तमानम्, इदञ्च व्यावर्तमानम्' इति पुरोऽवस्थिते वस्तुन्याकारभेद उपलभ्यते । यथा सम्प्रतिपन्नैक्ये कार्ये विशेषे चैकत्वबुद्धिरुपजायते, तथैव सकारणे ससामान्ये चैकत्वबुद्धिरविशिष्टोपजायते; एवमेव देशतः कालतश्च आकारतश्चात्यन्तविलक्षणेष्वपि वस्तुषु तदेवेदमिति प्रत्यभिज्ञा जायते । अतो द्व्यात्मकमेव वस्तु प्रतीयत इति कार्यकारणयोर्जातिव्यक्त्योश्चात्यन्तभेदोपपादनं प्रतीतिपराहतम् ।**

**अथोच्येत -'मृदयं घटः' 'खण्डो गौः' इतिवत् 'देवोऽहं मनुष्योऽहम्' इति सामानाधिकरण्येनैक्यप्रतीतेरात्मशरीरयोरपि भिन्नाभिन्नत्वं स्यात्; अत इदं भेदाभेदोपपादनं निजसदननिहितहुतवहज्वालायत इति - तदिदमना कलितभेदाभेदसाधनसामानाधिकरण्यतदर्थयाथात्म्यावबोधविलसितम् । तथा हि -**

---

दर्शनमस्तीति । अनेनाभेदसाधकं प्रथमपिण्डग्रहणेऽभेदेनदर्शनमुक्तम् । स्वमते प्रतीतिं दर्शयन् भेदाभेदसाधकमत्वर्थप्रत्ययनिरपेक्षसामानाधिकरण्यप्रत्ययमाह - **अपि त्विति** ।

ननु कारणजात्योरनुवृत्तिबुद्धिबोध्यत्वेनानुवृत्त्या कार्यव्यक्त्योः व्यावृत्तिबुद्धिबोध्यत्वेन व्यावृत्त्या च विवेकोऽस्तीति शङ्कते - **अनुवृत्ती**ति । परिहरति - **नैवमि**ति । न विविनक्तीत्यर्थः । कुत इत्यत्राह - **विविक्ते**ति । विविक्ताकारानुपलम्भमेव निवृणोति - **न हीति** । **अनुवर्तमानं** = अनुवृत्तिबुद्धिबोध्यम् । **व्यावर्तमानं** = व्यावृत्तिबुद्धिबोध्यम् । **आकारभेदः** = अंशभेदः । **उपलभ्यत** इति । अनुवृत्तिबुद्धिबोध्यत्वविशिष्टस्य व्यावृत्तिबुद्धिबोध्यत्वविशिष्टस्य चाकारभेदस्य विविच्यानुपलम्भनेनास्मिन्नंशेऽनुवृत्तिबुद्धिबोध्यत्वम् अस्मिन्नंशे व्यावृत्तिबुद्धिबोध्यत्वमिति न ज्ञातुं शक्यमिति भावः । स्वमते उपलम्भप्रकारमाह - **यथे**ति । **विशेषे** = व्यक्तौ । यथा कार्यैक्यस्य व्यक्त्यैक्यस्य च सम्प्रतिपन्नस्थले 'एकं कार्यं',' एका व्यक्तिरि'त्येकत्वबुद्धिः,एवमेव 'एकः मृदयं घटः' इति सकारणे, 'एकः खण्डो गौः' इति ससामान्येप्येविशेषेणैकत्वबुद्धिर्जायत इत्येकस्यैव वस्तुनो द्विरूपत्वं प्रतीयत इति भावः । अत्रैकत्वबुद्धिरित्यनेन एकशब्दानुविद्धप्रत्ययः उक्तः । एवं कारणकार्ययोः जातिव्यक्त्योश्च परस्परं भेदाभेदः उक्तः ।

अथ कार्याणां पिण्डानाञ्चान्योन्यभेदाभेद उच्यते - **एवमेवे**ति । आकारवैलक्षण्यं नीलत्वखण्डत्वादि । कारणकार्ययोः 'मृदयं घटः' इति प्रत्ययवत्, जातिव्यक्त्योः 'खण्डो गौः' इति प्रत्ययवच्च कार्येषु पिण्डेषु च 'तदेवेदमि'ति प्रत्यभिज्ञायास्सत्त्वेन भेदाभेदः अङ्गीकर्तव्य इति भावः । एवं द्व्यात्मकत्वेन वस्तुप्रतीत्याऽत्यन्तभेदोपपादनं विरुद्धमित्युपसंहरति - **अतः** इति । **अत्यन्तभेदोपपादनम्** = अभेदासहभेदोपपादनम् ।

ननु 'मृदयं घटः' इति सामानाधिकरण्यबलेनाभेदाभ्युपगमवद् 'देवोहमि'ति सामानाधिकरण्यसत्त्वेनात्मशरीरयोरप्यैक्यं स्यात् । न च सद्रूव्यात्मना तयोरप्यैक्यं त्विष्टमेवेति वाच्यम्, देहरूपेणात्मरूपेणाप्यैक्यस्यापत्तेः । ततश्च तयोरपि भिन्नाभिन्नत्वं प्रसज्यत इत्याशयेन परोक्तं चोद्यमाशङ्कते - **अथोच्येते**ति । **निजसदने**त्यनेन स्वस्यानिष्टत्वं सूचितम् । परिहरति - **तदिदमि**ति । भेदाभेदसाधनसामानाधिकरण्यतदर्थयाथात्म्योरवबोध आनाकलितोऽप्राप्तः येन, तद्विलसितमिदमित्यर्थः । **तच्छब्दः** भेदाभेदपरः । तथा चाबाधितसामानाधिकरण्यस्यैव भेदाभेदसाधकत्वं अबाधितस्यैव भेदाभेदस्य तत्त्वरूपत्वं चाजानतैव शङ्कितमित्यर्थः । तदेव विवृणोति - **तथा हीति** । अबाधितप्रत्यय-

**अबाधित एव प्रत्ययः सर्वत्रार्थं व्यवस्थापयति। देवाद्यात्माभिमानस्तु आत्मयाथात्म्यगोचरैः सर्वैः प्रमाणै र्वाध्यमानो रज्जुसर्पादिबुद्धिवन्नात्मशरीरयोरभेदं साधयति। 'खण्डो गौः', 'मुण्डो गौः' इति सामानाधिकरण्यस्य न केनचित्कचिद्वाधो दृश्यते। तस्मान्नातिपसङ्गः।**

**अत एव जीवोऽपि ब्रह्मणो नात्यन्तभिन्नः ; अपि तु ब्रह्मांशत्वेन भिन्नाभिन्नः। तत्राभेद एव स्वाभाविकः। भेदस्त्वौपाधिकः। कथमवगम्यत इति चेत् -** (छा.६.८.७.) **'तत्त्वमसि'** (बृ.५.७.२३.) **'नान्योऽतोऽस्ति द्रष्टा'**, (बृ.४.५.१९.) **'अयमात्मा ब्रह्म' इत्यादिभिः श्रुतिभिः, 'ब्रह्मेमे द्यावापृथिवी' इति प्रकृत्य, 'ब्रह्म दाशा ब्रह्म दासा ब्रह्मेमे कितवा उत। स्त्रीपुंसौ ब्रह्मणो जातौ स्त्रियो ब्रह्मोत वा पुमान्' इति आथर्वणिकानां संहितोपनिषदि ब्रह्मसूक्ते अभेदश्रवणाच्च,** (श्वे.६ १३) **'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्',** (श्वे.१.६.) **'ज्ञाज्ञौ द्वावजावीशनीशौ',** (श्वे.५.१२.) **'क्रियागुणैरात्मगुणैश्च तेषां सम्योगहेतुरपरोऽपि दृष्टः',** (श्वे.६.१६.) **'प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतु',** (श्वे.६.९.) **'स कारणं करणाधिपाधिपः', 'तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति', 'य आत्मनि तिष्ठन्', 'प्राज्ञेनाऽऽत्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद', 'प्राज्ञेनाऽत्मनाऽन्वारूढः उत्सर्जन् याति', 'तमेव विदित्वाऽति मृत्युमेति' इत्यादिभिर्भेदश्रवणाच्च जीवपरयोर्भेदाभेदाववश्याश्रयणीयौ। तत्र, 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिभिर्मोक्षदशायां जीवस्य ब्रह्मस्वरूपापत्तिव्यपदेशात्, 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इति तदानीं भेदेनेश्वरदर्शननिषेधाच्चाभेदस्स्वाभाविक इत्यवगम्यते॥**

स्यैवार्थव्यवस्थापकत्वं,न तु सर्वस्यापि प्रत्यक्षस्येति प्रथमं प्रतिजानीते - **अबाधित एवेति**। अस्तु तादृशस्यैवार्थव्यवस्थापकत्वं, तावता प्रकृते किमायातमित्यत्राह - **देवादीति**। रज्जौ, 'अयं सर्प 'इति सामानाधिकरण्यप्रत्ययस्य बाधकप्रमाणवशान्नाभेदसाधकत्वं यथा, तथैव 'देवोहमि'ति प्रत्ययस्यापीति भावः। अस्मदुक्तस्थले तु बाधकाभावान्न तथात्वमित्याह - **खण्डो गौरिति**। अतिप्रसङ्गाभावमुपपादयति - **तस्मादिति**॥ एवं लौकिकार्थेषु भेदाभेदस्याविरोधेन उपपत्तिः। अथ वैदिकेष्वप्यर्थेषु जीवब्रह्मणोः भेदाभेद अविरुद्ध इत्याह - **अत एवेति**। भेदाभेदस्याविरुद्धत्वादेवेत्यर्थः। **नात्यन्तभिन्नः** = अभेदासहभेदवान्न भवतीत्यर्थः। **ब्रह्मांशत्वेनेत्य**नेन सूत्रकारसम्मतिः प्रदर्शिता। 'अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके'इति हि सूत्रम्। यादवमतव्यावृत्त्यर्थं अभेदस्य स्वाभाविकत्वं भेदस्यौपधिकत्वं प्रतिजानीते - **तत्रेति**। यादवमते ह्यचिद्ब्रह्मणोश्चिद्ब्रह्मणोश्च भेदाभेदौ स्वाभाविकौ। भास्करमते तु अचिद्ब्रह्मणोरेव भेदाभेदौ स्वाभाविकौ चिद्ब्रह्मणोस्त्वभेद एव स्वाभाविकः, भेदस्त्वौपाधिक इति विशेषः॥

ननु जीवब्रह्मणोर्भेदाभेदः कथं, तत्राभेद एव स्वाभाविक इति च कथमिति प्रमाणं पृच्छति - **कथमिदमिति**। प्रमाणं प्रदर्शयति - **तत्त्वमसीति**। अभेदश्रवणाच्च भेदश्रवणाच्च भेदाभेदाववश्याश्रयणीयावित्यर्थः। भेदाभेदयोः प्रमाणमनेन दर्शितम्। **ब्रह्म दाशाः** इत्यादिना 'दाशकितवादित्व' मिति सूत्रखण्डः स्मारितः। **'ब्रह्मेमे द्यावा पृथिवी'** इत्यचिद्ब्रह्मणोरप्यभेदश्रवणादभेदस्य स्वाभाविकत्वं तदिष्टम्। **अभेदश्रवणाच्चे**त्यत्र चकारो **ब्रह्मसूक्ते** इत्यनन्तरं योज्यः। **नित्योनित्यानामि**त्यनेन 'नानाव्यपदेशादि'ति सूत्रखण्डस्स्मारितः। **क्रियागुणैः** संसारहेतुगुणैः। **आत्मगुणैः** = मोक्षहेतुगुणैः। अभेदस्य स्वाभाविकत्वे प्रमाणमाह - **तत्रेति**। स्वरूपापत्तिव्यपदेशभेददर्शननिषेधाभ्यामभेदस्य स्वाभाविकत्वमिति भावः। मुक्तौ भेदनिषेधेनैव भेदस्यौपाधिकत्वं स्वीकर्तव्यम्। एवं रीत्याऽचितस्स्वरूपापत्तिव्यपदेशाभावात्, 'ब्रह्मे मे द्यावापृथिवी' इत्यभेदश्रवणात् 'यः पृथिव्यां तिष्ठन्' इति भेदश्रवाणाच्चाचिद्ब्रह्मणोर्भेदाभेदयोस्स्वाभाविकत्वमेवेत्याशयः।

**ननु च 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता' इति सहश्रुत्या तदानीमपि भेदः प्रतीयते। वक्ष्यति च, 'जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च', 'भोगमात्रसाम्यलिङ्गाच्च' इति ॥ नैतदेवम्; 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुतिशतैरात्मभेदप्रतिषेधात्। 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता' इति सर्वैः कामैस्सह ब्रह्माश्नुते - सर्वगुणान्वितं ब्रह्माश्नुत इत्युक्तं भवति। अन्यथा ब्रह्मणा सहेत्यप्राधान्यं ब्रह्मणः प्रसज्येत। 'जगद्व्यापारवर्जम्' इत्यत्र, मुक्तस्य भेदेनावस्थाने सति ऐश्वर्यस्य न्यूनताप्रसङ्गो वक्ष्यते। अन्यथा, 'सम्पद्याविर्भावस्स्वेन शब्दात्' इत्यादिभिर्विरोधात्।**

**तस्मादभेद एव स्वाभाविकः। भेदस्तु जीवानां परस्माद्ब्रह्मणः, परस्परश्च बुद्धीन्द्रियदेहोपाधिकृतः। यद्यपि ब्रह्म निरवयवं सर्वगतञ्च; तथाऽपि आकाश इव घटादिना, बुद्ध्याद्युपाधिना ब्रह्मण्यपि भेदस्सम्भवत्येव।**

---

ननु जीवब्रह्मणोरभेदो न स्वाभाविकः श्रुत्यैव मुक्तावपि भेदबोधनेन तद्विरोधात्सूत्रकारविरोधाच्चेति शङ्कते - **ननु चेति**। **सहश्रुत्येति** 'ब्रह्मणा सह कामानश्नुते' इति भोक्तृसाहित्यप्रतीत्या तयोर्भेदावश्यम्भावादित्यर्थः। 'जगद्व्यापार-वर्जमि'ति, मुक्तस्य जगव्द्यापाराभावबोधनेन तद्वतो ब्रह्मणो भेदेसिद्धेरिति भावः। **भोगमात्रेति**। इदञ्च 'सोश्नुते' इत्युपबृंहणम्। परिहरति - **नैतदिति**। भूयसां बलीयस्त्वमिति न्यायेन 'सोश्नुते' इत्यस्यानेकश्रुत्यविरोधेनैवार्थो वर्णनीयः इत्यभिप्रेत्य प्रथममनेकश्रुतिप्रतिपन्नमर्थं दर्शयन्, 'सोऽश्नुते' इत्यस्यार्थमाह - **नान्य** इति। अत्मभेदप्रतिषेधात्, 'सोऽश्नुत' इति श्रुत्या 'ब्रह्माश्नुते' इतीदमुक्तं भवतीत्यन्वयः। अतो नैतदेवमित्यर्थः। श्रुत्यर्थं प्रदर्शयति - **सर्वैरिति**। तमेव विवृणोति - **सर्वगुणान्वितमिति**। अयं भावः - 'ब्रह्मणा सह गुणानश्नुत' इत्यस्य ब्रह्मगुणांश्चानुभवतीत्यर्थः। ततश्च सर्वगुणविशिष्टंब्रह्मानुभवतीति पर्यवसितम्। तत्रानुभविता जीवः ब्रह्मपृथग्भूत एवानुभवतीत्येतन्नात्रावगम्यते। अतो नात्रभेदप्रतीतिः। न च पृथग्भूत एवानुभवतीत्येतदपि नात्रावगन्तुं शक्यते? सत्यम्। तस्य वाक्यान्तरेण सिद्धेः। मुक्तौ भेदनिषेधकानि ब्रह्मस्वरूपापत्तिपराणि हि वाक्यानि अपृथग्भूत एवानुभवतीत्यमुमर्थमवगमयन्ति। यदि तु मुक्तौ भेदपराणि वाक्यानि स्युः, तदा पृथग्भूत एवानुभवतीत्यर्थो वर्णयितुं शक्य इति।

ननु भोग्यसाहित्यविवक्षणे हि भवदभिमतार्थसिद्धिरित्यत्र भोक्तृसाहित्यं विवक्षितुमशक्यमिति दर्शयति - **अन्यथेति**। भोग्यभूतस्वगुणापेक्षयाऽप्राधान्यं त्विष्टमिति भावः। सूत्रविरोधं सूत्रस्यान्यथार्थवर्णनञ्च परिहरति - **जगदिति**। न्यूनताप्रसङ्गो वक्ष्यत इति। ब्रह्मणो मुक्तस्य च भेदे सति जगद्व्यापारवर्जत्वप्रसङ्गस्स्यात्, अतो न भेद इत्यर्थ इति भावः। एवमनङ्गीकारे उपक्रमसूत्रविरोधमाह - **अन्यथेति**। एवमुपपादनेनैव 'भोगमात्रसाम्यलिङ्गाच्चे'त्येत-दप्युपपादितं भवतीति तत्परित्यक्तम्। अभेदस्य स्वाभाविकत्वमुपपादयति - **तस्मादिति**। भेदस्यौपाधिकत्वमुपाधि-निर्देशेन व्यनक्ति - **भेदस्त्विति**। ननु ब्रह्मणः निरवयवत्वात् विभुत्वाच्च जीवगतोपाधिः ब्रह्मण्येवाङ्गीकर्तव्यः, ततश्च जीवेश्वरभेद एव नास्तीति शङ्कां परिहरति - **यद्यपीति**। निरवयवस्य विभोराकाशस्य घटाद्युपाधिना भेदवद्त्राप्युपाधिना भेदः उपपन्न इति भावः ॥

नन्वेतावता घटाद्यवच्छिन्नाकाशस्य महाकाशस्य घटाद्युपाधिना भेदवदपाध्युपहितब्रह्मणो जीवरूपस्य ब्रह्मणश्चोपधिवशाद्भेद इत्युक्तं भवति। इदञ्चायुक्तम्। घटादेस्तत्सम्योगस्य चाकाशे सत्त्वेन तत्र भेदस्योपपन्नत्वेऽपि उपाधितत्सम्योगाभावेन तेन भेदोपपादनासम्भवात्। उपाधिसम्योगसत्त्वे एव हि भेदोपपादनं युक्तम्। न चादौ ईश्वरांश एवोपाधिसंयोगः, तस्य कर्मकृतत्वेनेश्वरांशे कर्माभावात्। यद्येतद्दोषपरिहाराय भिन्ने एव ब्रह्मण्युपाधिसम्योग इतीष्यते, तर्हि भेदप्रयोजकोपाधिसम्योगस्य भेदमूलकत्वापातेनान्योन्याश्रयः, दृष्टान्ते तु जीवकृतकर्मणा आकाशे

**न च भिन्ने ब्रह्मणि बुद्ध्याद्युपाधिसम्योगः, बुद्ध्याद्युपाधिसम्योगाद्ब्रह्मणि भेद इतीतरेतराश्रयत्वम्; उपाधेस्तत्सम्योगस्य च कर्मकृतत्वात्; तत्प्रवाहस्य चानादित्वात्। एतदुक्तं भवति - पूर्वकर्मसम्बद्धाज्जीवात्स्वसम्बद्ध एवोपाधिरुत्पद्यते; तद्युक्तात्कर्म। एवं वीजाङ्कुरन्यायेन कर्मोपाधिसम्बन्धस्यानादित्वान्न दोष इति। अतो जीवानां परस्परं ब्रह्मणा चाभेद एव स्वाभाविकः। भेदस्त्वौपाधिकः। उपाधीनां पुनः परस्परं ब्रह्मणा चाभेदवद्भेदोऽपि स्वाभाविकः, उपाधीनामुपाध्यन्तराभावात्, तदभ्युपगमेऽनवस्थानाच्च। अतो जीवकर्मानुरूपं ब्रह्मणो भिन्नाभिन्नस्वभावा एवोपाधय उत्पद्यन्त इति -**

**अत्रोच्यते - अद्वितीयसच्चिदानन्दब्रह्मध्यानविषयविधिपरं वेदान्तवाक्यजातमिति वेदान्तवाक्यैरभेदः प्रतीयते; भेदावलम्बिभिः कर्मशास्त्रैः प्रत्यक्षादिभिश्च भेदः प्रतीयते। भेदाभेदयोः परस्परविरोधादनाद्यविद्यामूलतयाऽपि भेदप्रतीत्युपपत्तेरभेद एव परमार्थ इत्युक्तम्। तत्र यदुक्तम् - भेदाभेदयोरुभयोरपि प्रतीतिसिद्धत्वान्न विरोध इति। तदयुक्तम्। कस्माच्चित्कस्यचिद्विलक्षणत्वं हि तस्मात्तस्य भेदः। तद्विपरीतत्वञ्चाभेदः। तयोस्तथाभावातथाभावरूपयोरेकत्र सम्भवमनुन्मत्तः को ब्रवीति॥**

---

उपाधिसम्योगेन नान्यान्योऽश्रय इति शङ्कामनूद्य परिहरति - **न** चेति। उपाधितत्सम्योगकर्मणां प्रवाहानादित्वं, तेन परस्पराश्रयपरिहारप्रकारश्च विवृणोति - **एतदुक्त**मिति। **स्वसम्बन्धः** जीवसम्बन्धः, कर्मसम्बन्धेन जीवे उपाधिसम्बन्धः, उपाधिसम्बन्धात्कर्मसम्बन्ध इत्येवं परम्परयाऽनादित्वमिति भावः।

स्वमतमुपसंहरति - **अत** इति। उपाधिभूतानामचितां त्वभेदवद्भेदोऽपि स्वाभाविक इत्याह - उपाधीनां **पुन**रिति। कुत इत्यत्राह - **उपाधीना**मिति। उपाध्यन्तरं कुतो नाभ्युपगम्यत इत्यत्राह - **तदभ्युपगम** इति। यदि ब्रह्मण उपाधीनाञ्च भेद औपाधिकः, तर्हि भेदप्रयोजकोपाधेर्ब्रह्मणश्च भेद औपाधिकस्स्वीकर्तव्यः, ततस्तयो र्भेदस्येत्यनवस्थाप्रसङ्ग इति भावः। नन्वादावेवोपाधिपरिकल्पनं विहाय ब्रह्मणो जीवस्य चाभेदवद्भेदस्यापि स्वाभाविकत्वं किमिति न स्वीक्रियत इति चेन्न, तथा सति भेदप्रयुक्तजीवगतदोषाणां ब्रह्मण्यापातात्। बुद्धीन्द्रियदेहाद्युपाधिदर्शनेनाकल्पनाच्च। उपाधिब्रह्मणोः स्वाभाविकभिन्नाभिन्नत्वं प्रदर्शयन्नुपसंहरति - **अत** इति।

एवमनूदितं भास्कराभिमतं भेदाभेदविरोधपक्षं ध्याननियोगवादी दूषयति - **अत्रोच्यत** इति। प्रथमं स्वोक्तमर्थं प्रतिजानीते - **अद्वितीये**ति। अथ भास्करोक्तमर्थमाह - **तत्र यदुक्त**मिति। अनेन भास्करमतोत्थितेस्सङ्गतिः प्रदर्शिता भवति। अयं भावः - भेदाभेदयोर्विरोधे हि कस्यचिदविद्यादिदोषमूलत्वेनापरमार्थत्वं कस्यचित्परमार्थत्वञ्च वक्तव्यम्। विरोध एव नास्तीति। तदिदं दूषयति - **तदयुक्त**मिति। अयुक्तत्वमुपपादयितुं भेदाभेदस्वरूपमाह - **कस्माच्चि**दिति। **विलक्षणत्वम्** = अन्यत्वम्। तथा च 'इदमिदं न भवती'ति प्रतीतिविषयत्वं भेदः। 'इदमिदं भवती'ति प्रतीतिविषयत्वमभेद इति पर्यवसितमिति भावः। **तद्विपरीतत्व**मिति। यदि त्वेकाधिकरणवृत्तित्वयोग्यौ तौ पारिभाषिकौ, तर्हि न नो विद्वेष इति भावः। **तयोः** = भेदाभेदयोः। **तथाभावातथाभावरूपयोः** = विलक्षणत्वाविलक्षणत्वरूपयोः। **को ब्रवीतीति**। अयं भावः - लोकप्रतीत्यानुगुण्येनैव भेदाभेदशब्दार्थस्वरूपस्य स्वीकर्तव्यत्वात्तयोरुक्तरीत्या विरोधस्यावर्जनीयत्वेनैकत्र सम्भवो दुरुपपाद एव। न च भावाभावरूपयोस्तयोरपि न विरोधः इति वाच्यम्। तथा सति,' भिन्नाभिन्नत्वं भवति','न भवती'त्यनयोरपि वाक्ययोरविरोधापत्तेः,ततश्च तन्मतदूषणाय भवतां प्रवृत्तिरेवानुपपन्नेति।

ननु कार्यद्वये पिण्डद्वये चोच्यमानौ भेदाभदौ भावाभावरूपाविति तयोर्विरोधेनैकत्र स्वरूपत असम्भवेपि

**कारणात्मना जात्यात्मना चाभेदः, कार्यात्मना व्यक्त्यात्मना च भेद इत्याकारभेदादविरोध इति चेन्न ; विकल्पासहत्वात् । आकारभेदादविरोधं वदतः किमेकस्मिन् आकारे भेदः, आकारान्तरे चाभेद इत्यभिप्रायः?; उताऽऽकारद्वययोगिवस्तुगतावुभावपीति? । पूर्वस्मिन् कल्पे - व्यक्तिगतो भेदः, जातिगतश्चाभेद इति नैकस्य द्व्यात्मकता । जातिर्व्यक्तिरिति चैकमेव वस्त्विति चेत्, तर्ह्याकारभेदादविरोधः परित्यक्तस्स्यात् । एकस्मिंश्च विलक्षणत्वतद्विपर्ययौ विरुद्धावित्युक्तम् ।**

**द्वितीये तु कल्पे - अन्योन्यविलक्षणमाकारद्वयम्, अप्रतिपन्नश्च तदाश्रयभूतं वस्त्विति तृतीयाभ्युपगमेऽपि त्रयाणामन्योन्यवैलक्षण्यमेवोपपादितं स्यात्; न पुनरभेदः । आकारद्वयनिरुह्यमाणाविरोधं तदाश्रय-**

---

आकारभेदेनाविरोधस्सम्भवतीति शङ्कते - **कारणात्मनेति** । विकल्पासहत्वेन दूषयति - **नेति** । विकल्पासहत्वोपपादनायैव विकल्पयति - **आकारभेदादिति** । प्रथमकल्पे विकल्पत्रयमभिप्रेत्य दूषणत्रयमाह - **पूर्वस्मिन् कल्प** इति । अयं भावः - व्यक्तिजातिरूपाकारभेदात्पिण्डद्वये भेदाभेदयोरविरोधं वदत एकस्मिन्नाकारे भेदोऽपरस्मिन्नाकारे भेदश्चाभिमतः । तत्र जातिव्यक्तिरूपाकारद्वयस्यान्योन्यं भेदोऽभिमतः उताभेदः आहोस्वित् भिन्नाभिन्नत्वम् । न प्रथमः कल्पः युक्तः, आकारद्वयस्य परस्परं भेदाभ्युपगमाज्जातावभेदो व्यक्तौ भेद इत्यभ्युपगतं स्यात् । ततश्च नैकस्य द्व्यात्मकत्वमुपपादितं भवेत् । नन्वेतद्दोषपरिहाराय द्वितीयकल्पः परिगृह्यते । ततश्च जातिव्यक्तिरूपाकारद्वयस्याभेदादेकस्मिन्नाकारे भेदस्यापरस्मिन्नाकारेऽभेदस्य च सत्त्वे एकस्य द्व्यात्मकत्वमुपपादितं भवति इति चेन्न मूले कुठारात् । पिण्डद्वयगतभेदाभेदाविरोधोपपादकाकारद्वयरूपजातिव्यक्त्योरभेदेनाकारभेदाभावेनाकारभेदादविरोध इत्यस्य परित्यागप्रसङ्गात् ।

नन्वस्त्वेतत्परित्यागः, अथाप्यस्मदभिमतः भेदाभेदपक्षस्सिद्ध इति चेन्न, जातिव्यक्त्योरभेदेपि तत्रैव भेदाभेदयोः वक्तव्यतया भावाभावरूपयोस्तयोः कथमेकत्र समावेश इति प्रश्नस्य तावताप्यपरिहारात् । नन्वस्त्वाकारद्वयरूपजातिव्यक्त्योर्भिन्नाभिन्नत्वं ततश्चोक्तकल्पद्वयदूषणस्यापि नावकाश इति चेन्न । पिण्डद्वय इव जातिव्यक्त्योरपि भावाभावरूपयोर्भिन्नाभिन्नत्वयोः परस्परविरुद्धयोः दुर्वचत्वादिति । तत्र **व्यक्तिगतो भेद** इत्यादिना प्रथमकल्पे आदिमपक्षोः दूषितः । **जातिरि**त्यादिना प्रथमकल्पे एव आशङ्कापूर्वं द्वितीयः पक्षो दूषितः । **एकस्मिंश्चे**त्यादिना तत्रैव तृतीयः पक्षो दूषित इति विवेकः । अथ **आकारद्वययोगिवस्तुगतावुभावि**ति विकल्पितं द्वितीयकल्पं दूषयति - **द्वितीये तु कल्प** इति । अयं भावः - व्यक्तिद्वयस्य भेदाभेदनिर्वाहार्थं व्यक्त्यतिरिक्तस्य द्वितीयस्य जातिरूपस्य वस्तुनोऽनुधावनं कृतम् । तत्र च जातिव्यतिरिक्तस्य तृतीयस्य वस्तुनस्सिद्धावेव भेदाभेदयोस्तद्गतत्वेन व्यक्तिद्वये भेदाभेदावुपपादितौ भवेताम् । तच्च तृतीयं वस्त्वप्रतिपन्नम् । अप्रतिपन्नत्वेप्यभ्युपगमेऽपि जातिव्यक्तिरूपाकारद्वयस्य अत्यन्तविलक्षणस्य तदाश्रयस्य तृतीयस्य वस्तुनश्चाङ्गीकारेण परस्परविलक्षणवस्तुत्रयसिध्या परस्परभेदसिद्धेरभेदस्यैवासम्भवादिति ॥

ननु पिण्डद्वये भेदाभेदनिर्वाहाय जातिव्यक्तिरूपाकारद्वयं परिगृहीतं, तत्र चाकारद्वयस्य तदाश्रयभूतवस्तुनश्च तृतीयस्य परस्परवैलक्षण्येनाभेदस्यैवासिध्या भेदाभेदावसम्भवत इत्युक्तम् । इदञ्च न युक्तं, पिण्डद्वयस्य तृतीयवस्तुनश्च भेदाभेदाङ्गीकारात् । न चैकत्र विरुद्धयोर्भावभावरूपयोस्तयोः कथं समवाश इति वाच्यम् । जातिव्यक्तिरूपाकारद्वयेनैव तत्परिहारात् । इत्थञ्च पिण्डद्वयस्य तृतीयवस्तुनः भेदाभेदौ, जातिव्यक्त्योश्च भेदाभेदौ, जातिव्यक्तिरूपाकारद्वयस्य तदाश्रयतृतीयवस्तुनश्च भेदाभेदाविति कथं विलक्षणवस्तुत्रितयसिद्धिरित्याशयेन शङ्कते - **आकारद्वयेति** । न पिण्डद्वयस्याविरोधनिर्वाहकाकारद्वयवत् तृतीयवस्तुनश्च भेदाभेदौ स्यातां यावताऽविरोधनिर्वाहकाऽऽकारद्वयस्य तदाश्रयतृतीयवस्तुनश्च भेदाभेदौ न सिध्येताम् तावता तदुपपादनमयुक्तं तत्राकारद्वयस्य तदाश्रयवस्तुनश्च भेदो न सम्भवति,

**भूते वस्तुनि भिन्नाभिन्नत्वमिति चेत् - स्वस्माद्विलक्षणं स्वाश्रयमाकारद्वयं स्वस्मिन् विरुद्धधर्मद्वयसमावेश-निर्वाहकं कथं भवेत्। अविलक्षणं तु कथंतराम् ? आकारद्वयतद्वतोश्च द्व्यात्मकत्वाभ्युपगमे निर्वाहकान्तरा-पेक्षयाऽनवस्था स्यात्। न च सम्प्रतिपन्नैक्यव्यक्तिप्रतीतिवत्ससामान्येऽपि वस्तुनि एकरूपा प्रतीतिरुपजायते, यतः, 'इदमित्थम्' इति सर्वत्र प्रकारप्रकारितयैव सर्वा प्रतीतिः। तत्र प्रकारांशो जातिः, प्रकार्यंशो व्यक्तिरिति नैकाकारा प्रतीतिः।**

अभेदोपि न सम्भवति, भिन्नाभिन्नत्वमपि न सम्भवतीत्याशयेन प्रथमस्यासम्भवे हेतुमाह - **स्वस्मादिति**। अत्र **स्व**-शब्दत्रितयमपि तृतीयवस्तुपरम्। तृतीयवस्तुगताकारद्वयस्य तृतीयवस्तुनि भिन्नाभिन्नत्वरूपविरुद्धधर्मद्वयसमावेश-निर्वाहकत्वं न सम्भवतीत्यर्थः। न ह्यग्निगतस्याकारद्वयस्य पैङ्गल्यौज्वल्यरूपस्याग्नावेव शीतोष्णत्वरूपविरुद्धधर्मद्वय-समावेशनिर्वाहकत्वं युक्तमिति भावः। द्वितीयस्यासम्भवमाह - **अविलक्षणं त्विति**। आश्रयवस्तुन आकारद्वयस्य चाभिन्नत्वे आश्रयवत्तस्यापि विरुद्धधर्मद्वयसमावेशनिर्वाहकत्वन्न सम्भवति, आश्रयविलक्षणत्वेनान्यस्याकारद्वयस्या-सम्भवात्। अथ तदभिमतस्य तृतीयस्यासम्भवमाह - **आकारद्वयेति। अनवस्था स्यादिति**। अयं भावः - आकारद्वयस्य तदाश्रयस्य च भिन्नाभिन्नत्वे तदविरोधनिर्वाहार्थमाकारद्वयान्तरं स्वीकर्तव्यं, तस्याप्याकारद्वयस्य तदाश्रयेण भिन्नत्वम-भिन्नत्वं वा न सम्भवति, तथाविधस्य विरुद्धधर्मद्वयसमावेशनिर्वाकत्वासम्भवात्। अतो भिन्नाभिन्नत्वमेवाभ्युपेत्यं, ततश्च तदविरोधनिर्वाहायाकारद्वयान्तरं, तस्य तदाश्रयेण भिन्नाभिन्नत्वमित्यनवस्थेति।

अयमत्र प्रघट्टार्थः - भेदाभेदाविरोधवादिना भास्करेण कस्याश्चिव्द्यक्तेर्व्यक्त्यन्तरेण सहभिन्नाभिन्नत्वमभ्युपेतम्। तत्र भावाभावरूपयोस्तयोः कथमेकत्र समावेश इत्याशङ्कायां व्यक्त्यात्मना भेदेपि जात्यात्मनाऽभेदसत्त्वादाकार-भेदेनाविरोध इत्युक्तम्। एवञ्च जातावभेदः व्यक्तौ भेद इति सिद्धमिति कथमेकस्य भिन्नाभिन्नत्वरूपोभयात्मकत्वम्? तत्र जातिव्यक्त्योरपि भेदाभेदाङ्गीकारेण जातेर्व्यक्त्यभिन्नत्वाज्जातावभेदसत्त्वे व्यक्तावप्यभेदसत्त्वेनैकस्या एव व्यक्तेः भिन्नाभिन्नत्वं युक्तमिति परिहारो न सम्भवति, एकस्याः व्यक्तेः व्यक्त्यन्तरेण भिन्नाभिन्नत्ववत् जातेरपि व्यक्त्यपेक्षया विरोधेन भिन्नाभिन्नत्वस्यासम्भवात्। जातिव्यक्त्येतदुभयाश्रयतृतीयवस्तुगतभिन्नाभिन्नत्वमादाय व्यक्तेर्भिन्नाभिन्नत्वो-पपादनमप्ययुक्तं जातिव्यक्तिव्यतिरिक्तस्य तृतीयस्य वस्तुन एवाप्रतिपन्नत्वात्, प्रतिपन्नत्वेपि जातेः व्यक्तेस्तदाश्रय-वस्तुनश्चाभ्युपगमेन तेषां च परस्परं विलक्षणत्वेनाभेदस्यैव दुर्निरूपत्वात्। न च जातेः व्यक्तेः तदाश्रयस्य च परस्परं भेदाभेदाङ्गीकारेण सर्वोपपत्तिरित्यपि युक्तम्। जातिव्यक्त्योस्तदाश्रयस्य च भिन्नाभिन्नत्वे तदविरोधनिर्वाहायाकारान्तर-स्याभ्युपगेन तस्य तदाश्रयस्य च भिन्नाभिन्नत्वेनाकारान्तरस्येत्यनवस्थापत्तेरिति।

अथ पराभिमतां भेदाभेदसाधकप्रतीतिं दूषयति - **न चेति**। तर्हि कथं प्रतीतिरित्यत्राह - **यत** इति। प्रतीतिविषय-प्रकारप्रकारिणौ विविच्य दर्शयति - **तत्रेति। नैकाकाराः प्रतीतिरिति**। अयं भावः - सर्वं हि वस्तु प्रतीतिव्यवस्थाप्य-मिति त्वयैवोक्तम्। अतो भवदभिमतार्थसाधिकायाः एकस्या अप्यभावेन न त्वदिष्टसिद्धिः। प्रत्युत जातिव्यक्त्योः प्रकारप्रकारित्वावगाहिन्या एव प्रतीतेः सत्त्वेन भेदस्यैव सिध्या न तद्विरुद्धाभेदः कल्पयितुं शक्य इति। इदमत्र ग्रन्थ-तात्पर्यम्। प्रथमपिण्डग्रहणेऽभेदेन ग्रहणं ह्यभेदसाधकं भवतां, तच्च नास्ति प्रथमपिण्डग्रहणेपि इदमित्थमिति प्रकार-प्रकारिभावेन भेदेनैव ग्रहणात्। अस्य च निर्विकल्पके विशिष्टविषयकत्वकथनावसरे स्थापितत्वात्। 'अत्र जातिरत्र व्यक्तिरि'ति प्रदेशभेदेनाग्रहणं कुत इति चेत्, जातेर्व्यक्तौ व्याप्यवृत्तित्वादित्यवेहि। एवमेकशब्दानुविद्धप्रत्ययोऽपि नैक्यसाधकः। 'एकः दण्डी पुरुषः'इत्यादेरिव 'एको घट' इत्यस्यपि विशिष्टैक्यविषयकत्वात्। न हि 'एको दण्डी' इत्यत्र विशेषणविशेष्ययोरैक्यं कश्चित्प्रत्येति। मत्वर्थप्रत्ययनिरपेक्षसामानाधिकरण्यमपि न भवदभिमतार्थसाधकम्।

**अत एव जीवस्यापि ब्रह्मणो भिन्नाभिन्नत्वं न सम्भवति। तस्मादभेदस्यानन्यथासिद्धशास्त्रमूलत्वाद-नाद्यविद्यामूल एव भेदप्रत्ययः। नन्वेवं ब्रह्मण एवाज्ञत्वं तन्मूलाश्च जन्मजरामरणादयो दोषाः प्रादुःष्युः। ततश्च 'यस्सर्वज्ञस्सर्ववित्', 'एष आत्माऽपहतपाप्मा' इत्यादीनि शास्त्राणि बाध्येरन्॥ नैवम्; अज्ञानादि-दोषाणामपरमार्थत्वात्। भवतस्तूपाधिब्रह्मव्यतिरिक्तं वस्त्वन्तरमनभ्युपगच्छतो ब्रह्मण्येवोपाधिसंसर्गः, तत्कृताश्च जीवत्वाज्ञत्वादयो दोषाः परमार्थत एव भवेयुः। न हि ब्रह्मणि निरवयवेऽच्छेद्ये सम्बद्ध्यमाना उपाधयस्तच्छित्वा भित्त्वा वा सम्बध्यन्ते; अपि तु ब्रह्मस्वरूपे सम्युज्य तस्मिन्नेव स्वकार्याणि कुर्वन्ति॥**

**यदि मन्वीत - उपाध्युपहितं ब्रह्म जीवः। स चाणुपरिमाणः। अणुत्वश्चावच्छेदकस्य मनसोऽणुत्वात्। स चावच्छेदोऽनादिः। एवमुपाध्युपहितेऽंशे सम्बध्यमाना दोषा अनुपहिते परे ब्रह्मणि न सम्बध्यन्ते - इति। अयं प्रष्टव्यः - किमुपाधिना छिन्नो ब्रह्मखण्डोऽणुरूपो जीवः? उताच्छिन्न एवाणुरूपोपाधिसम्युक्तो ब्रह्म-प्रदेशविशेषः? उतोपाधिसम्युक्तं ब्रह्मस्वरूपम्? अथोपाधिसम्युक्तं चेतनान्तरम्? अथोपाधिरेव? इति।**

---

तस्यापृथक्सिद्धविशेषणत्वप्रयुक्तत्वात्। अपृथक्सिद्धिस्तु प्रकारप्रकारिणोस्सम्बन्धनियमप्रयुक्ता। अत एव च सहोपलम्भ-नियमोपि। अपि च सहोपलम्भनियमः भेदसाधक एव। साहित्यरूपसहत्वस्य प्रतियोग्यनुयोगिसापेक्षत्वेन प्रतियोग्यनु-योगिनोश्च भेदात्। वस्तुतस्तस्य सम्प्रतिपन्ने भिन्नेऽभिन्नेचादर्शनादुभयव्यावृत्तत्वेनासाधारणानैकान्त्यमिति नोभय-साधकत्वमपि। किञ्च वस्तुनोस्सहोपलम्भनियमो हि सहत्वनियममन्तरा न सम्भवति। सहत्वनियमश्च भेदस्यैव साधक इति सहोपलम्भनियमोपि भेदसाधक एव। भ्रमस्थले व्यक्तिमात्रग्रहणात् सहोपलम्भनियमोपि नास्ति। अतो भवदभिमतहेतुचतुष्टयेनापि न त्वदिष्टार्थ सिद्धिरिति।

एवमेकस्मिन् भिन्नाभिन्नत्वव्युदसनेन जीवस्यापि ब्रह्मणोभिन्नाभिन्नत्वं न युक्तमित्याह - **अत एवेति**। एवं भेदाभेदविशेषनिरसनेन परस्परविरोधे भेदस्याविद्यमूलत्वमेवाभ्युपेत्यमित्याह - **तस्मादिति**। ननु भेदप्रत्ययस्याविद्या-रूपदोषमूलत्वे तादृशदोषस्य ब्रह्मण्यङ्गीकारेणाज्ञत्वादिप्रसङ्ग इति शङ्कते - **नन्वेवमिति**। इष्टापत्तिं परिहरति - **ततश्चेति**। समाधत्ते - **नैवमिति**। दोषस्यापरमर्थत्वेन तत्सम्बन्ध इष्टः। त्वदुक्तदोषस्तवैवेति दूषणमाह - **भवत** इति। अविद्या-दिदोषाणामपरमार्थत्वेन तत्प्रयुक्तदोषाणामप्यपरमार्थत्वमिति परिहारो युक्तः। भवतां ब्रह्मण इवोपाधेरपि परमार्थत्वा-त्तत्प्रयुक्तदोषाणामपि परमार्थत्वमेवेति ब्रह्मण अज्ञानादिदोषवारणमेवाशक्य मिति भावः। तदेतदुपपादयति - **न हीति**। अच्छेद्यत्वे निरवयवत्वं हेतुः। तर्हि कथमुपाधिसम्योग इत्यत्राह - **अपि त्विति**। **स्वकार्याणि कुर्वन्तीति**। ब्रह्मस्वरूप एवोपाधिसंसर्गात्तत्प्रयुक्तदोषाणां स्वरूपे एवाङ्गीकर्तव्यतया ब्रह्मण एवाज्ञत्वादिदोषापत्तिरिति भावः।

शङ्कते - **यदीति**। नास्माभिर्ब्रह्मण एव जीवत्वं स्वीक्रियते किन्तूपाध्युपहितस्यैवेत्याह - **उपाध्युपहितमिति**। तथा सति जीवस्य विभुत्वं न स्यादित्यत्रेष्टापत्त्या आह - **स चेति**। **अणुत्वश्चेति**। ननु ब्रह्मणि कथमुपाधिसम्योगः, जीवे हि स वक्तव्यः। ततश्चान्योन्याश्रयः - उपाधिसम्बन्धाज्जीवभावः, जीवभावादुपाधिसम्बन्ध इति। तत्राह - **स चावच्छेदोऽनादिरिति**। नन्वस्तूपाध्युपहितब्रह्मण एव जीवभावः, अथापि ब्रह्मस्वरूपस्याज्ञत्वादिदोषाः कथं परिहृता इत्यत्र परिहारप्रकारमाह - **एवमिति**। आकाशस्येव ब्रह्मणोप्युपहितानुपहितांशसत्त्वेनोपहितब्रह्मण एव जीवत्वात् तद्गतदोषाणामनुपहितांशे ब्रह्मण्यसम्बन्धान्नाज्ञत्वादिप्रसङ्ग इति भावः॥

पञ्चधा विकल्प्य दूषयति - **अयं प्रष्टव्य** इति। अत्राणुरूपो जीव इत्येतत्सर्वेषु कल्पेषु सम्बध्यते। **उतोपाधिसम्युक्तं**

**अच्छेद्यत्वाद्ब्रह्मणः प्रथमः कल्पो न कल्पते। आदिमत्त्वश्च जीवस्य स्यात्। एकस्य सतो द्वैधीकरणं हि च्छेदनम्। द्वितीये तु कल्पे ब्रह्मण एव प्रदेशविशेषे उपाधिसम्बन्धादौपाधिकास्सर्वे दोषास्तस्यैव स्युः। उपाधौ गच्छति, उपाधिना स्वसम्युक्तब्रह्मप्रदेशाकर्षणायोगादनुक्षणमुपाधिसम्युक्तब्रह्मप्रदेशभेदात्क्षणेक्षणे बन्धमोक्षौ च स्याताम्। आकर्षणे चाच्छिन्नत्वात्कृत्स्नस्य ब्रह्मण आकर्षणं स्यात्। निरंशस्य व्यापिन आकर्षणं न सम्भवतीति चेत् - तर्हि उपाधिरेव गच्छतीति पूर्वोक्त एव दोषस्स्यात्। अच्छिन्नब्रह्मप्रदेशेषु सर्वोपाधिसंसर्गे सर्वेषां च जीवानां ब्रह्मण एव प्रदेशत्वेन, एकत्वेन प्रतिसन्धानं स्यात्। प्रदेशभेदादप्रतिसन्धाने चैकस्यापि स्वोपाधौ गच्छति सति प्रतिसन्धानं न स्यात्। तृतीये तु कल्पे ब्रह्मस्वरूपस्यैवोपाधिसम्बन्धेन जीवत्वापातात्, तदतिरिक्तानुपहितब्रह्मासिद्धिः स्यात्। सर्वेषु च देहेष्वेक एव जीवः स्यात्।**

---

**ब्रह्मस्वरूपमिति**। परैस्स्वीकृतं जीवस्याणुत्वं सूक्ष्मत्वरूपमपि भवतीत्यभिप्रेत्योपाधिसंयुक्तजीवस्वरूपस्यैवाणुरूप-जीवत्वं विकल्पितम्। चतुर्थपञ्चम कल्पौ न पराभिमतौ। परन्तु आभ्यां विना गतिर्नास्तीति सूचनाय तथा विकल्पः कृतः। यद्यपि ब्रह्मण एवोपाधिसम्योगस्तैस्स्वीकृतः। अथापि जीवेप्युपचारवृत्त्या ब्रह्मशब्दप्रयोगात्तस्यैव किमुपाधि-सम्योगस्स्वीकृत इत्यभिप्रायेण तथाविकल्पः। **उपाधिरेवेति**। उपाधेर्ब्रह्मस्वरूपस्य च भिन्नाभिन्नत्वाङ्गीकारेण ब्रह्मस्वरूपस्य जीवत्वे उपाधेरेव जीवत्वमङ्गीकृतमित्याशयेन **उपाधिरेवे**त्युक्तम्। अत्र विकल्पितेषु प्रथमकल्पं दूषयति - **अच्छेद्यत्वादि**ति। **आदिमत्वमि**ति दूषणान्तरम्। तदुपपादक**मेकस्ये**त्यादि। एकस्यैव सतो ब्रह्मण उपाधिना द्वैधी-भावे कश्चित्खण्डो ब्रह्मरूपः, अपरस्तु जीवरूपः। जीवखण्डस्य पूर्वमभावेन द्वैधीकरणानन्तरमेवोत्पन्नत्वेन आदिमत्वं प्रसज्यत इति भावः।

द्वितीयकल्पे दूषणमाह - **द्वितीये त्विति**। ब्रह्मणः प्रदेशविशेषस्यैवोपाधिवशाज्जीवत्वाभ्युपगमादुपाधिप्रयुक्त-दोषाणां ब्रह्मण एव प्रदेशविशेषान्तर्भावेणाङ्गीकर्तव्यत्वादिति भावः। दूषणान्तरमाह - **उपाधाविति**। विभुनो ब्रह्मणो प्रदेश-विशेषे उपाधिसम्बन्धे बन्धः, तत्परित्यागे मोक्ष इति व्यवस्थितत्वादुपाधिगमनदशायां ब्रह्मप्रदेशाकर्षणासम्भवेन स्वसम्बद्ध-प्रदेशपरित्यागेन प्रदेशान्तरसम्बन्धस्यैव स्वीकर्तव्यतया तदा तदा मोक्षबन्धौ स्यातामिति भावः। अन्यथा तु कृत्स्नब्रह्मण एवाकर्षणं स्यादित्याह - **आकर्षणे चेति**। निरंशस्य विभुनः कथमाकर्षणमिति शङ्कते - **निरंशस्येति**। आकर्षणाभावे उपाधेरेव गमनमिति तदा बन्धमोक्षरूपदूषणं तदवस्थमेवेति समाधत्ते - **तर्हीति**। दूषणान्तरमाह - **अच्छिन्नेति**। च्छिन्नब्रह्मखण्डस्य जीवत्वे नायं दोष इति - **अच्छिन्ने**त्युक्तम्। परिहारं स्वयमेवाशङ्क्य समाधत्ते - **प्रदेशभेदादिति**।

अयं भावः - तत्तदुपाधिसम्युक्ता ब्रह्मप्रदेशविशेषा एव हि जीवाः, ततश्च सर्वेषामपि जीवानां ब्रह्मप्रदेशत्वेनैक्या-देकत्वप्रतिसम्बन्धानमेव स्यात्। यदि तु तत्तब्रह्मप्रदेशे तत्तदुपाधिसम्बन्धेन तत्तज्जीवभावान्नायं दोषः। यद्येको ब्रह्म-प्रदेशास्सर्वोपाधिसम्बन्धेन जीवभावमश्नुयात्तदाह्यस्य दोषस्यावकाशः। अत्र प्रदेशभेदेनोपाधिसम्बन्धाज्जीवभेदसिद्धौ नैकत्वेनप्रतिसन्धानं युक्तमिति मन्यते, तदा तत्तदुपाधिसम्युक्तानां प्रदेशविशेषाणां भिन्नत्वादेकस्मिन्नुपाधावन्यत्र गच्छति सति, तत्रैकत्वानुसन्धानं न स्यात्तत्प्रदेशस्यान्यजीवत्वादिति। सर्वेषामपि जीवानां स्वस्वोपाधेरन्यत्रगमनदशायां सर्वब्रह्मप्रदेशसम्बन्धेन तत्तत्प्रदेशस्यैव तत्तज्जीवत्वमिति व्यवस्थापकाभावश्च। न च यदा यदा यत्प्रदेशे स्वस्वोपाधि-सम्बन्धः तदा तदा तत्तत्प्रदेशस्य तत्तज्जीवत्वमिति व्यवस्था सम्भवतीति वाच्यम्। तथा सति सर्वस्यापि ब्रह्मप्रदेशस्य तत्तुपाधिगमनदशायां तत्तज्जीवत्वापत्त्या सर्वेषामपि सर्वानुभूतासुखदुःखाद्युपलब्धिप्रसङ्गादिति। तृतीयकल्पं निरस्यति - **तृतीये त्विति**। **ब्रह्मासिद्धिरिति**। उपाधिसम्बन्धेन ब्रह्मण एव जीवत्वे उपाध्युपहितत्वेनानुपहितब्रह्मणः कथं सिद्धिः। ततश्च निर्दोषकल्याणगुणाकरत्वबोधकश्रुतीनामनुपहितब्रह्मविषयकतयोपपादनमपि भवतां न सम्भवति।

**तुरीये तु कल्पे ब्रह्मणोऽन्य एव जीव इति जीवभेदस्यौपाधिकत्वं परित्यक्तं स्यात्। चरमे चार्वाकपक्ष एव परिगृहीतः स्यात्। तस्मादभेदशास्त्रबलेन कृत्स्नस्य भेदस्याविद्यामूलत्वमेवाभ्युपगन्तव्यम्। अतः प्रवृत्ति-निवृत्तिप्रयोजनपरतयैव शास्त्रस्य प्रामाण्येऽपि ध्यानविधिशेषतया वेदान्तवाक्यानां ब्रह्मस्वरूपे प्रामाण्य-मुपपन्नम् - इति - तदप्ययुक्तम्। ध्यानविधिशेषत्वेऽपि वेदान्तवाक्यानामर्थसत्यत्वे(?) प्रामाण्यायोगात्।**

**एतदुक्तं भवति - ब्रह्मस्वरूपगोचराणि वाक्यानि किं ध्यानविधिनैकवाक्यतामापन्नानि ब्रह्मस्वरूपे प्रामाण्यं प्रतिपद्यन्ते; उत स्वतन्त्राण्येव। एकवाक्यत्वे ध्यानविधिपरत्वेन ब्रह्मस्वरूपे तात्पर्यं न सम्भवति। भिन्नवाक्यत्वे प्रवृत्तिनिवृत्तिप्रयोजनविरहादनवबोधकत्वमेव। न च वाच्यं - ध्यानं नाम स्मृतिसन्ततिरूपम्। तच्च स्मर्तव्यैकनिरूपणीयमिति ध्यानविधेस्स्मर्तव्यविशेषाकाङ्क्षायाम्** (बृ.४.४.६७.) **'इदं सर्वं यदयमात्मा',** (बृ.४.५.१९) **'अयमात्मा ब्रह्म सर्वानुभूः', 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादीनि स्वरूपतद्विशेषादीनि समर्पयन्ति। तेनैकवाक्यतामापन्नान्यर्थसद्भावे प्रमाणमिति; ध्यानविधेः स्मर्तव्यविशेषापेक्षत्वेऽपि 'नाम ब्रह्म' इत्यादि-दृष्टिविधिवदसत्येनाप्यर्थविशेषेण ध्याननिर्वृत्त्युपपत्तेः ध्येयसत्यत्वानपेक्षणात्। अतो वेदान्तवाक्यानां प्रवृत्ति-निवृत्तिप्रयोजनविधुरत्वात्, ध्यानविधिशेषत्वेऽपि ध्येयविशेषस्वरूपसमर्पणमात्रपर्यवसानात्, स्वातन्त्र्येऽपि बालातुराद्युपच्छन्दनवाक्यवज्ज्ञानमात्रेणैव पुरुषार्थपर्यन्ततासिद्धेश्च परिनिष्पन्नवस्तुसत्यतागोचरत्वाभावा-द्ब्रह्मणश्शास्त्रप्रमाणकत्वं न सम्भवतीति प्राप्तम्॥**

---

एवं जीवेश्वरविभागाभावः जीवानां परस्परभेदाभावश्चेति भावः। चतुर्थकल्पं व्युदस्यति - **तुरीये त्विति**। **परित्यक्तं स्यादिति**। उपाधिसम्युक्तस्य ब्रह्मान्यचेतनस्य जीवत्वाद्ब्रह्मान्यत्वं स्वतःसिद्धमेवेति कथं जीवस्य ब्रह्मभेदो औपाधिकस्स्यादिति भावः। चरमकल्पं निराकरोति - **चरम** इति। चार्वकेणाऽचिद्द्रव्यस्यैव जीवत्वाङ्गीकाराद्भवता मनसोऽचितो जीवत्वाभ्युपगमादिति भावः। ततश्चाचेतनस्यैव जीवत्वाच्चेतनब्रह्मतादात्म्यमप्यनुपपन्नञ्च। स्वमतमुप-संहरति - **तस्मादिति**। ध्यानविधिशेषतया वेदान्तवाक्यानां ब्रह्मणि प्रामाण्यमिति प्रागुपपादितमुपसंहरति - **अत** इति॥

एवं शाङ्करादिमतं दूषितवतो ध्याननियोगवादिनः पक्षमधिकरणपूर्वपक्षी दूषयति - **तदपीति**। निष्प्रपञ्चीकरण-नियोगवादिमतमिवेदमपि नियोगवादिमतमयुक्तमित्यर्थः। **प्रामाण्यायोगात्** = तात्पर्यायोगात्। अर्थसत्यत्वे तात्पर्या-योगमेव विवृणोति - **एतदुक्तमिति**। दूषणं वक्तुं विकल्पयति - **ब्रह्मेति**। **एकवाक्यतां** = महावाक्यैकत्वम्। प्रथमं दूषयति - **एकेति**। द्वितीयं व्युदस्यति - **भिन्नेति**। **अनवबोधकत्वमेति**। अत्र **इति**शब्दोऽध्याहर्तव्यः। पूर्वाक्तध्यान-नियोगवाद्यभिमतमर्थंमाशङ्क्य निराकुरुते - **न चेति**। **दृष्टिविधिवदिति**। ननु दृष्टिविधावपि विशेष्यस्य सत्यत्वमिष्टमेवेति चेन्न, विशेषणस्यासत्यत्वेन विशिष्टस्याप्यसत्यत्वात्।

ननु 'नाम ब्रह्मेत्युपासीते'त्यत्रेतिशब्दनिर्देशाद्दृष्टिविधित्वं युक्तम्, अत्र तु कथं? ब्रह्मध्यानप्रकरणे **इति**शब्दा-निर्देशात्। अतो दृष्टिविधित्वस्थले एव विषयासत्यत्वनियमेनात्र दृष्टिविधित्वशङ्काया एवाभावेन विषयासत्यत्वशङ्कैव न युक्ता इति चेन्न,'आत्मेत्येवोपासीते'त्यत्रापीतिशब्दनिर्देशसत्वेन दृष्टिविधित्वशङ्कायास्तत्प्रयुक्तविषयासत्यत्वापदन-स्योपपन्नत्वात्। उपसंहरति - **अत** इति। **प्रवृत्तिनिवृत्तिप्रयोजनविधुरत्वादि**त्यनेन स्वातन्त्र्येण प्रामाण्यं नास्तीत्युक्तम्। **ध्याने**त्यादिना ध्यानविधिशेषत्वेऽप्यप्रामाण्यम्। ननु सिद्धपरस्य 'पुत्रस्तेजात' इत्यादिवाक्यस्य हर्षादिप्रयोजनपर्यव-सयित्वं दृष्टमित्यत्राह - **स्वातन्त्र्येपीति**। **बालेति**। 'पयः पिब, शिखा ते वार्धिष्यत' इत्यादिवाक्यवदित्यर्थः। अत्र हि अर्थसत्यत्वं न दृष्टं, ज्ञानमात्रेण तु कार्यसिद्धिः। एवमेव ब्रह्मस्वरूपपरवाक्यानामिति भावः।

**तत्र प्रतिपद्यते - तत्तु समन्वयात् - इति । समन्वयः सम्यगन्वयः - पुरुषार्थतयाऽन्वय इत्यर्थः । परमपुरुषार्थभूतस्यानवधिकातिशयानन्दरूपस्य ब्रह्मणोऽभिधेयतयाऽन्वयात्, तत् - शास्त्रप्रमाणकत्वं सिध्यत्येवेत्यर्थः । निरस्तनिखिलदोषनिरतिशयानन्दस्वरूपतया परमप्राप्यं ब्रह्म बोधयन् वेदान्तवाक्यगणः प्रवृत्तिनिवृत्तिपरताविरहान्न प्रयोजनपर्यवसायीति ब्रुवाणो राजकुलवासिनःपुरुषस्य कौलेयककुलाननुप्रवेशेन प्रयोजनशून्यतां ब्रूते ।**

**एतदुक्तं भवति - अनादिकर्मरूपाविद्यावेष्टनतिरोहितपरावरतत्वयाथात्म्यस्वस्वरूपावबोधानां देवासुरगन्धर्वसिद्धविद्याधरकिन्नरकिम्पुरुषयक्षराक्षसपिशाचमनुजपशुशकुनिसरीसृपवृक्षगुल्मलतादूर्वादीनां स्त्रीपु-**

---

सिद्धान्तमाह - **तत्रेति** । एतादृशपूर्वपक्षमभिप्रेत्यैव तन्निराकरणपरं सूत्रं सूत्रकृता कृतमिति भावः । **समन्वयः** इति व्याख्येयं पदम् । तदर्थमाह - **सम्यगन्वय** इति । अन्वये सम्यक्त्वमुपपादयति - **परमपुरुषार्थतयेति** । पुरुषेणार्थ्यत्वं हि पुरुषार्थत्वं, ब्रह्मणश्चानन्दरूपतया पुरुषार्थत्वं युक्तं न केवलं पुरुषार्थत्वमात्रं, किन्त्वनवधिकातिशयानन्दरूपतया परमपुरुषार्थत्वमिति भावः । पुरुषार्थस्य पारम्योपपादनायैवानन्देऽनवधिकातिशयत्वविशेषणम् । **आनन्दस्वरूपस्येति** । यागादिषु स्वयमननुकूलस्य सुखसाधनत्वम्, अत्र स्वयमनुकूलस्यैवेत्यर्थः । अनेन साक्षात्पुरुषार्थान्वयो ब्रह्मण एवेति सूचितम् । शास्त्रप्रमाणकत्वं तच्छब्दार्थः । **सिध्यत्येवेति** तु शब्दसिद्धार्थकथनम् ।

अथ प्रवृत्तिनिवृत्त्यन्वयस्य प्रयोजनव्यापकत्वं प्रयोजनस्य च प्रामाण्यव्यापकत्वं मन्यमानेन पूर्वपक्षिणा वेदान्त वाक्यगणस्य प्रवृत्तिनिवृत्त्यन्वयविरहेण प्रयोजनपर्यवसायित्वाभावान्न प्रामाण्यमित्युक्तां शङ्कां परिहरति - **निरस्तेति** । ब्रह्मणस्स्वत एव सर्वेषां सर्वप्रकारभोग्यत्वेन पुरुषार्थत्वाधिक्यं, प्रवृत्तिनिवृत्त्योस्तु दुःखात्मकत्वेन पुरुषार्थत्ववैकल्यमेवेति वेदान्तवाक्यानामेव प्रयोजनपर्यवसायित्वमङ्गीकर्तव्यमिति सूचनाय **निरस्त ... आनन्दस्वरूपतया परमप्राप्यं ब्रह्मेत्युक्तम्** । **बोधयन्निति** ।

ननु प्रवृत्तिनिवृत्त्यन्वयविरहेण प्रामाण्याभावाद्वेदान्तवाक्यानां ब्रह्मणि बोधकत्वमेव नास्तीति वक्तारं पूर्वपक्षिणं प्रति पुरुषार्थभूतब्रह्मबोधकत्वेन प्रामाण्यमिति कथं समाधानं युक्तम् । प्रामाण्ये सति हि बोधकत्वं, बोधकत्वे सति प्रामाण्यमित्यन्योन्याश्रयादिति चेन्न । प्रवृत्तिनिवृत्त्यन्वयविरहेऽपि सिद्धपरवाक्यानां प्रामाण्यस्य स्थाप्यमानत्वाद्बोधकत्वसम्भवेन प्रयोजनपर्यवसायित्वसम्भवात् । बोधनसमये एवानवधिकातिशयानन्दरूपब्रह्मण एव बोधनेन प्रयोजनपर्यवसायित्वेन प्रामण्यसम्भवाच्च । **कैलेयककुलं** = श्वकुलम् । श्वोपजीवि म्लेच्छकुलं वा । एवं पुरुषार्थपरवाक्यस्य प्रयोजनशून्यत्वकथनमनुपपन्नमित्युक्तम् ।

अथान्वयमुखेन पुरुषार्थपर्यवसायित्वं दर्शयन्, प्रवृत्तिनिवृत्त्योः पुरुषार्थत्ववैकल्येन तत्परवाक्यस्य प्रयोजनपर्यवसायित्वाभावश्चोपपादयन् सिद्धपरवाक्यस्य प्रयोजनपर्यवसायित्वे च दृष्टान्तद्वयं प्रदर्शयन्नुक्तार्थं विवृणोति - **एतदुक्तमिति** । परतत्त्वयाथात्म्यस्वरूपावबोधोऽवरतत्त्वयाथात्म्यस्वरूपावबोधश्च कर्मणा तिरोहित इत्यर्थः । **स्वस्वरूपेति** पाठे तु - परावरतत्त्वयाथात्म्यावबोधः स्वस्वरूपावबोधश्च तिरोहित इत्यर्थः । ब्रह्मैव परतत्त्वं ब्रह्मादयोऽवरतत्त्वम् । जीवात्मस्वरूपमेतादृशमिति ज्ञानं तिरोहितमिति यावत् । अनेन क्षेत्रज्ञानां ब्रह्मणः पुरुषार्थत्वज्ञानाभावः कर्मकृतानुभवप्रतिबन्धादेव, न तु ब्रह्मण अनुकूलत्वाभावादिति सूचितम् । व्यवस्थितधारकपोषकभोग्यविशेषत्वं सर्वेषामविशिष्टमिति ज्ञापनाय **देवासुरेत्युक्तम्** ।

**न्नपुंसकभेदभिन्नानां क्षेत्रज्ञानां व्यवस्थितधारकपोषकभोग्यविशेषाणाम्, मुक्तानां स्वस्य चाविशेषेणानुभवसम्भवे स्वरूपगुणविभवचोष्टितैरनवधिकातिशयानन्दजननं परं ब्रह्मास्तीति बोधयदेव वाक्यं प्रयोजनपर्यवसायि। प्रवृत्तिनिवृत्तिनिष्ठं तु यावत्पुरुषार्थन्वयबोधं न प्रयोजनपर्यवसायि। एवम्भूतं परं ब्रह्म कथं प्राप्यत इत्यपेक्षायाम्, 'ब्रह्मविदाप्नोति परम्', 'आत्मानमेव लोकमुपासीत' इति वेदनादिशब्दैरुपासनं ब्रह्मप्राप्त्युपायतया विधीयते। यथा, 'स्ववेश्मनि निधिरस्ति' इति वाक्येन निधिसद्भावं ज्ञात्वा तृप्तस्सन् पश्चात्तदुपादाने च प्रयतते; यथा च - कश्चिद्राजकुमारो बालक्रीडासक्तो नरेन्द्रभवनान्निष्क्रान्तो मार्गाद्भ्रष्टो नष्ट इति राज्ञा विज्ञातः, स्वयञ्चाज्ञातपितृकः केनचिद् द्विजवर्येण वर्धितोऽधिगतवेदशास्त्रः षोडशवर्षः सर्वकल्याणगुणाकरस्तिष्ठन्, 'पिता ते सर्वलोकाधिपतिः गाम्भीर्यौदार्यवात्सल्यसौशील्यशौर्यवीर्यपराक्रमादिगुणसम्पन्नस्त्वामेव नष्टं पुत्रं दिदृक्षुः पुरवरे तिष्ठति' इति केनचिदभियुक्ततमेन प्रयुक्तं वाक्यं श्रृणोति चेत्**

---

स्वशब्दः क्षेत्रज्ञानां परामर्शी। **मुक्तानां स्वस्य चाविशेषेणानुभवसम्भवे क्षेत्रज्ञानामनवधिकातिशयानन्दजननमित्यन्वयः**। ननु कथं क्षेत्रज्ञानां मुक्तानाञ्चाविशेषेणानान्दः योग्यानुपलब्धेरिति शङ्कापरिहाराय - **अनुभवसम्भव** इत्युक्तम्। **स्वरूपे**त्यादिना सर्व प्रकारेणापि भोग्यत्वं दर्शितम्। **प्रयोजनपर्यवसायी**ति। वाक्यजन्यब्रह्मज्ञानस्यैवानुकूलत्वादिति भावः। अनेन ब्रह्मणोप्यनुकूलत्वमुक्तं भवति। विषयस्याननुकूलत्वे तज्ज्ञानस्यानुकूलत्वायोगात्। **प्रवृत्ती**ति। एतद्वाक्यार्थो दीपे विवृतः।

**एवम्भूत**मिति - अनेन ध्यानविध्यानर्थक्यं परिहृतम्। अयं भावः - स्वरूपपरवाक्यानि, अत्यन्तानुकूलपरोक्षज्ञानजनकत्वात्, प्रयोजनपर्यवसायीनि। तदापरोक्ष्याकाङ्क्षाणां तत्साधनज्ञापकत्वाद्ध्यानविधिवाक्यान्यपि प्रयोजनपर्यवसायीनीति। **तदुपादाने च प्रवृत्ति**रिति। 'निधिरस्ती'ति वाक्यजन्यनिधिसद्भावज्ञानस्यानुकूलत्वेन तदुपादानप्रवृत्तिवत्स्वरूपपरवाक्यजन्यानवधिकातिशयानन्दरूपब्रह्मज्ञानस्यानुकूलत्वेन तादृशब्रह्मप्राप्त्युपाये प्रवृत्तिसम्भवात्तादृशोपायबोधकवाक्यस्य प्रयोजनपर्यवसायित्वं युक्तमिति भावः। अत्र निधिदृष्टान्तकथनं, यथा हिरण्यनिधिमिति भगवतो निधित्वेन रूपितत्वमभिसन्धाय। **यथा चे**ति। 'अविज्ञाताः कुमारकाः','भगवतोऽहं पुत्रः', 'माता पिता भ्राता भूतानां योऽव्ययः पिता। राजाधिराजस्सर्वेषाम्' इत्यादिश्रुतिस्मृत्यनुसारेण राजकुमारनिदर्शनम्। अचेतनस्य चेतनस्य चोभयस्य निदर्शनं चिदचिद्विभागमभिप्रेत्येत्यपि वदन्ति। अत्र राजकुमारनिदर्शनेन जीववृत्तान्तः प्रदर्शितः। **बालक्रीडासक्त** इत्यनेन जीवानां बाह्यविषयासक्तिस्सूचिता। **नरेन्द्रभवनान्निष्क्रान्त** इत्यनेन भगवत्सकाशान्निष्क्रान्तिः परमपदरूपभवनालाभश्च सूचितः। **मार्गाद्भ्रष्ट** इत्यनेन कर्मयोगाद्युपायालाभः। **द्विजवर्येण वर्धित** इत्यनेनाचार्यसंबन्धः। **अधिगतवेदशास्त्र** इत्यनेन भगवज्ज्ञानोत्पत्तियोग्यतासिद्धिभूताचार्यसम्बन्धाधीनाध्ययनमुक्तम्। **सर्वकल्याणगुणाकर** इत्यनेन भगवज्ज्ञानरूपो हेतुविशेषो उक्तः। 'पिता ते 'इत्यादि भगवतो गुणा उक्ताः। **गाम्भीर्यं** = प्रतिगृहीतुः लाघवं दीयमानवस्तुगौरवञ्चानपेक्ष्य वर्तमानत्वम्।

**त्वा**मित्यनेनानतिलङ्घनीयसम्बन्धस्सूचितः। **पुत्र**मित्यनेन शेषिणः मुख्यं प्रयोजनमिति सूचितम्। **दिदृक्षु**रित्यनेन 'स महात्मा सुदुर्लभ' इत्युक्तप्रकारेण भगवतः स्थितिस्सूचिता। **पुरवरे** इत्यनेन ब्रह्मपुराख्यशरीरान्तस्थितिरभिप्रेता। **केनचिदभियुक्ततमेन** इत्यनेन भगवज्ज्ञानप्रदः प्रशस्तो गुरुर्विवक्षितः। **केनचित् द्विजवर्येण**त्यनेनोक्त एवाभियुक्ततमेनेत्यनेनोक्तः। असम्भवे तदन्यः। **श्रृणोति चे**दित्यनेन भगवज्ज्ञानस्य सुदुर्लभत्वं द्योतितम्। **हर्षसमन्वित** इत्यनेन पुरुषार्थपरत्वमुक्तम्।

**- तदानीमेव, 'अहं तावज्जीवतः पुत्रः, मत्पिता च सर्वसम्पत्समृद्धः' इति निरतिशयहर्षसमन्वितो भवति। राजा च स्वपूत्रं जीवन्तमरोगमतिमनोहरदर्शनं विदितसकलवेद्यं श्रुत्वाऽवाप्तसमस्तपुरुषार्थो भवति। पश्चात्त-दुपादाने च प्रयतते। पश्चात्तावुभौ सङ्गच्छेते च - इति।**

**यत्पुनः - परिनिष्पन्नवस्तुगोचरस्य वाक्यस्य तज्ज्ञानमात्रेणापि पुरुषार्थपर्यवसानात् बालातुराद्यु-पच्छन्दनवाक्यवन्नार्थसद्भावे प्रामाण्यमिति - तदसत्। अर्थसद्भावाभावे निश्चिते, ज्ञातोऽप्यर्थः पुरुषार्थाय न भवति। बालातुरादीनामप्यर्थसद्भावभ्रान्त्या हर्षाद्युत्पत्तिः। तेषामेव तस्मिन्नेव(त्रपि)ज्ञाने विद्यमाने यद्यर्थाभावनिश्चयो जायेत, ततस्तदानीमेव हर्षादयो निवर्तेरन्। औपनिषदेष्वपि वाक्येषु ब्रह्मास्तित्वतात्पर्या-भावनिश्चये ब्रह्मज्ञाने सत्यपि पुरुषार्थपर्यवसानं न स्यात्। अतः, 'यतो वा इमानि भूतानि जायन्ते' इत्यादिवाक्यं निखिलजगदेककारणं निरस्तनिखिलदोषगन्धं सार्वज्ञ्यसत्यसङ्कल्पत्वाद्यनन्तकल्याणगुणा-करमनवधिकातिशयानन्दं ब्रह्मास्तीति बोधयतीति सिद्धम्॥ ४॥**

॥ इति समन्वयाधिकरणम् ॥ ४ ॥

---

सिद्धपरवाक्येषु अर्थसद्भावाभावेपि ज्ञानमात्रेणापि पुरुषार्थपर्यवसानान्नार्थसत्यत्वे तात्पर्यमिति पूर्वपक्षिणोक्तं दूषयितुमनुवदति - **यत्पुनरिति**। दूषयति - **तदसदिति**। पुरुषार्थो न दृष्ट इति भावः। तर्हि कथं बालादीनां हर्षादि-पुरुषार्थोत्पत्तिरित्यत्राह - **बालेति**। उक्तमेव व्यतिरेकबलादुपपादयति - **तेषामेवेति**। एवमेवौपनिषदेष्वपि गतिरित्याह - **औपनिषदेष्वपीति**। नन्वत्रापि अर्थसद्भावभ्रान्त्यैव पुरुषार्थपर्यवसानं किं न स्यादिति चेन्न, प्रत्यक्षतः शास्त्रतो वा बाधाभावात्, उक्तञ्च 'न च विहतिरिहाध्यक्षतश्शास्त्रतो वा' इति। अन्यथा 'पयः पिब, शिखा ते वर्धिष्यत' इत्यादि-प्रवृत्तिनिवृत्तिपरवाक्यानामेवार्थासत्यत्वेपि भ्रान्त्या पुरुषार्थपर्यवसानदर्शनेन, तद्वत् 'स्वर्गकामो यजेत' इत्यादिप्रवृत्ति-निवृत्तिपरवाक्यानामर्थासद्भावेपि भ्रान्त्या पुरुषार्थपर्यवसानं स्यात्।

ननु वेदवाक्यस्यापौरुषेयत्वेन भ्रमप्रमादिदोषामूलकत्वात् भ्रान्त्या पुरुषार्थपर्यवसानं न युक्तमिति चेत्, तुल्यमिदं वेदान्तेपि। भ्रान्त्यापुरुषार्थपर्यवसाने आचार्यस्य स्वपुत्रशिष्याणामध्यापने प्रवृत्तिर्न स्यादिति दूषणमपि प्रतिबन्द्या परा-हतम्। ननु कर्मविधीनां देहातिरिक्तात्मज्ञानसापेक्षत्वेन वेदान्तवाक्यानां तच्छेषत्वेनैवाध्यापनादिप्रवृत्तिरिति चेन्न। देहा-त्मभेदासद्भावेपि वेदान्तवाक्यानां तत्सद्भावभ्रमहेतुत्वसन्देहेन प्ररोचनानुपपत्त्या तच्छेषतयाप्यध्यापनानुपपत्तेः। ननु वेदान्तवाक्यसिद्धदेहात्मभेदस्तात्त्विक एव तर्कानुगृहीतनिर्दोषश्रुतिसिद्धत्वादिति चेन्न, तत्प्रतिपादितपरमपुरुषस्यापि तर्का-नुगृहीतनिर्दोषश्रुतिसिद्धत्वेन तात्त्विकत्वावश्यंभावात्। ननु वेदान्तवाक्यानां देहात्मभेदभ्रमहेतुत्वनिश्चयो न सम्भवति। देहात्मभेदसाधकहेत्वन्तरसंवादादिति चेन्न। तथा स तेनैव देहात्मभेदसिध्या तज्ज्ञापनाय वेदान्तवाक्यान्यनपेक्षितानीति कर्मविधिशेषतयापि तदध्ययनमनुपपन्नमेव भवेत्। अतः स्वतःप्रामाण्यवदिनामस्माकं वेदान्तबोधितानवधिकातिशया-नन्दब्रह्मरूपपुरुषार्थे यावन्न बाधनिश्चयः, तावत्प्रामाण्यं प्रसज्यते। अतः प्रत्याक्षादिना शास्त्रेणैव वोत्तरत्र विहत्यभावे नार्थसद्भावनिश्चयेनैव पुरुषार्थोत्पत्तिरिति नार्थसत्यत्वे तात्पर्यायोग इति। अधिकरणार्थं निगमयति - **अत** इति।

इदमत्रानुसन्धेयम् - वेदे सर्वत्र विधेः श्रवणात्फलश्रवणबलेन क्वचित्कल्पनाच्च तच्छेषतयाऽर्थवादवाक्यानां प्रामाण्यं सर्वसम्प्रतिपन्नं, तत्र प्राभाकरास्तु अर्थवादवाक्यानां विधिवाक्येन सह पदैकवाक्यतां स्वीकुर्वन्ति। सिद्धान्त-विदस्तु वाक्यैकवाक्यताम्। प्रत्येकमुपस्थितिजनकानां पदानां पदार्थसंसर्गावगाह्येकमुख्यविशेष्यबोधजनकत्वं पदैक-

वाक्यत्वम्। प्रत्येकं पदार्थसंसर्गावगाहिबोधजनकानामेव वाक्यानां वाक्यार्थसंसर्गावगाह्येकमुख्यविशेष्यबोधजनकत्वं वाक्यैकवाक्यत्वम्। तत्रार्थवादवाक्यानां स्वार्थाबोधकानामेव विध्यपेक्षितप्राशस्त्ये लक्षणाभ्युपगमादेकस्मिन्पदे लक्षणायां पदान्तरवैयर्थ्यप्रसङ्गेनार्थवादपरसमुदायस्य पदस्थानीयत्वमभ्युपगम्य विध्यपेक्षितप्राशस्त्यादिरूपपदार्थप्रत्यायकत्वं स्वीकृत्यार्थवादवाक्यानां पदैकवाक्यतामुपपादयन्ति प्राभाकराः।

सिद्धान्तविदस्तु - 'सदेवे'त्याद्यर्थवादवाक्यानां स्वार्थबोधनसमर्थानामेवोपासनविधिना वाक्यैकवाक्यत्वमुपपादयन्ति। तत्रापि स्वयंपुरुषार्थविरहिणामेव सिद्धपरवाक्यानां विधिशेषतयैकवाक्यत्वमभ्युपगम्य प्रामाण्यम्। स्वयं पुरुषार्थपर्यवसायिनां तु न विधिशेषतयैकवाक्यत्वं, परन्तु स्वतः एव प्रामाण्यम्। सूत्रकारेण 'आम्नायस्य क्रियार्थत्वात्' इति सिद्धपरवाक्यानां विधिशेषत्वेन प्रामाण्योपपादनं सामान्यत एव। उत्सर्गतः सिद्धपरवाक्यानां विधिशेषत्वेभिहितेऽपि स्वयंपुरुषार्थपर्यवसायिनः वाक्यविशेषस्य स्वतःप्रामाण्यसम्भवात्। उक्तञ्च 'क्वचिदपवदनं ख्याप्यमौत्सर्गिकस्ये'ति। अत एव सर्वज्ञत्वादिगुणानामविद्याकल्पितत्वं वदतामद्वैतिनां मते, 'यस्सर्वज्ञस्सर्ववि'दि'त्यादिषूपासनविधिरहितेषु वाक्येषु स्वरूपस्येव गुणानामपि प्रतिपन्नत्वान्निरूपाधिकत्वमेवेत्यस्मदुच्यमानं दूषणमपि सङ्गटते। अन्यथोपासनविधिरहितत्वेपि तेषां वाक्यानां विधिशेषत्वेनैकवाक्यत्वाद्गुणानामुपासनार्थत्वेनाविद्याकल्पितत्व वारणासम्भवात्। कार्यार्थत्वेपि वेदस्य ब्रह्मविचारः कर्तव्य एवेत्यादि जिज्ञासाधिकरणश्रीभाष्यमपि न वेदान्तवाक्यानामुपासनाविध्येकवाक्यत्वेन प्रामाण्योपपादनाय प्रवृत्तम्। परन्तु स्वर्गादिवत्फलतयापि ब्रह्मणः सिद्धिमभिप्रेत्य। अत एव प्रतिपन्नोपासनाविषयकार्याधिकृतफलत्वेनेति तत्रैवभाषितम्। उक्तञ्च 'सिद्धे व्युत्पत्त्यभावे स्वरिव फलतया' इति। अन्यथोपासनविधिशेषतया प्रामाण्यसमर्थने ध्याननियोगवादिमते उक्त दूषणस्यास्मन्मतेऽप्यापातात्। अतस्तत्र फलतयैव सिद्धिरभिप्रेता। फलतया सिद्ध्यतोपि पारमार्थ्याभावे स्वर्गादेरिव विषयासत्यत्वप्रसङ्गात्तत्पारमार्थ्यसाधनाय समन्वयाधिकरणं प्रवृत्तम्।

न च फलतयैव ब्रह्मणस्सिद्धिसम्भवे किमिति सिद्धेव्युत्पत्तिसमर्थनप्रयासस्सूत्रकृतामिति वाच्यम्। सिद्धे व्युत्पत्तिर्नास्तीति सिद्धब्रह्मणि वेदान्तवाक्यानामप्रामाण्यमिति वदतः प्राभाकरस्य मते लोकानुभवबलेन सिद्धे व्युत्पत्तिसमर्थनमार्गस्य ऋजुत्वात्, सिद्धेव्युत्पत्त्यभावेपि फलतया ब्राह्मणस्सिद्धिरिति समाधेरन्वारोहेण भष्यकृतोपन्यस्तत्वात्। तत्प्रकारमसहमानस्सूत्रकारस्सिद्धे व्युत्पत्तिसमर्थनमकरोत्। एवमेवाधिकरणत्रयेपि मतान्तरप्रवेशेन लक्षणभङ्गेऽपि अन्योक्त्या ब्रह्मणो लभ्यत्वम्, अनुमानप्रमितत्वेप्यंशतश्शास्त्रवेद्यत्वं विध्यर्थत्वेपि बाधाभाव इति वेदान्तवाक्यानां ब्रह्मणि प्रामाण्योपपादनसम्भवेप्यार्जवमवलम्ब्य लक्षणसमर्थनं शास्त्रैकवेद्यत्वं स्वतःप्रामाण्यञ्च समर्थितवान्। यथाहुः - 'अन्वारुह्योक्तिदैन्यं न हि सहत ऋजुस्सूत्रकृद्वावदूक' इति। अतस्सिद्धपरवाक्यानामपि केषाञ्चिद्विधिशेषत्वेन प्रामाण्यं, केषाञ्चित्स्वत एवार्थबोधकत्वेन प्रामाण्यमिति।

ननु वेदान्ते यादृशार्थवादानां ध्यानविध्येकवाक्यतया प्रामाण्यं तादृशार्थवादबोधितार्थानां सत्यत्वे प्रामाण्यं न स्यादिति चेन्न विधिशेषत्वेनार्थवादवाक्यानां प्रामाण्यानङ्गीकारात्। कर्मब्रह्मशास्त्रयोरैकशास्त्र्येण पूर्वकाण्डगतार्थवादवाक्यानामेव विध्येकवाक्यत्वेन विधिशेषत्वमयुपगम्य प्रामाण्यम्, उत्तरकाण्डे तु सर्वेषामर्थवादवाक्यानां स्वयंपुरुषार्थपर्यवसायित्वात्स्वत एव प्रामाण्यमिति हि वेदान्त सिद्धान्तः। अतो वेदान्ते क्वचिदपि सिद्धपरवाक्यानां ध्यानविधिशेषत्वेन प्रामाण्यानभ्युपगमान्नार्थासत्यत्वनिबन्धनाप्रामाण्यगन्धप्रसक्तिः। यच्चोक्तं 'नाम ब्रह्मेत्युपासीत' इत्यादिव'दात्मेत्येवोपासीत' इति इतिशब्दनिर्देशाद्ब्रह्मोपासनस्य दृष्टिविधित्वमिति, तन्न। तत्र हि जीवब्रह्मणोस्सामानाधिकरण्येनोपासनं हि विहितम्। तच्च सामानाधिकरण्यं शरीरशरीरिभावनिबन्धनम्। तादृशस्य चाप्रामाणिकत्वानुपपन्नत्वयोरभावादुत्तरत्र मोक्षफलश्रवणाच्च दृष्टिविधित्वशङ्काया एवाभावादिति। ॥ समन्वयाधिकरणं समाप्तम् ॥

ईक्षत्यधिकरणम् ॥ ५ ॥

## ईक्षतेर्नाशब्दम् १ । १ । ५ ॥

(तै.भृ.१-१) **'यतो वा इमानि' इत्यादिजगत्कारणवादिवाक्यप्रतिपाद्यं सर्वज्ञं सर्वशक्ति समस्तहेयप्रत्यनीककल्याणगुणैकतानं ब्रह्म जिज्ञास्यमित्युक्तम् । इदानीं जगत्कारणवादिवाक्यानामानुमानिकप्रधानादिप्रतिपादनानर्हतोच्यते, 'ईक्षतेर्नाशब्दम्' इत्यादिना ।**

---

एवं शास्त्रारम्भसमर्थनं व्यरचि । अथ 'ईक्षतेर्नाशब्दमि'त्यादिना शास्त्रारम्भः क्रियते । ननु चतुस्सूत्र्याश्शास्त्रप्रवृत्तिहेतुभूतज्ञानजननद्वारा हि शास्त्रारम्भसमर्थनरूपत्वम् । चतुस्सूत्रीप्रवृत्तिहेतुभूतज्ञानस्य हेत्वन्तराभावेन चतुस्सूत्र्यामेव प्रवृत्त्यभावेनऽनया शास्त्रप्रवृत्तिहेतुभूतज्ञानासम्भवाच्छास्त्र एवाप्रवृत्तिरिति कथं तस्याश्शास्त्रारम्भसमर्थनत्वम् । यद्याप्तोपदेशजन्यज्ञानेन चतुस्सूत्र्यां प्रवृत्तिरित्युच्यते तर्हि शास्त्रप्रवृत्तिहेतुभूतज्ञानस्याप्याप्तोपदेशेन सम्भवाच्चतुस्सूत्र्याः वैयर्थ्यमेवेति चेन्न । चतुस्सूत्रीप्रवृत्तेरल्पायाससाध्यत्वेन तद्धेतुभूतेष्टसाधनताज्ञानस्याप्तोपदेशेन सम्भवेपि शास्त्रप्रवृत्तेर्बह्वायाससाध्यत्वात्तद्धेतुभूतेष्टसाधनताज्ञानस्याप्तोपदेशमात्रेणासम्भवात्तत्सम्पादकत्वेन चतुस्सूत्र्या आवश्यकत्वात् । वस्तुतश्चतुस्सूत्र्याश्शास्त्रप्रवृत्तिहेतुभूतेष्टसाधनताज्ञानस्याप्तोपदेशमात्रेणासम्भवात्तत्सम्पादकत्वेन चतुस्सूत्र्याश्शास्त्रप्रवृत्तिहेतुभूतेष्टसाधनताज्ञानप्रतिबन्धकनिरसनद्वारा शास्त्रारम्भसमर्थनत्वम् ।

तथा हि - कर्मब्रह्ममीमांसयोरैकशास्त्र्यस्य सिद्धान्तसिद्धत्वेन कर्मफलाल्पास्थिरत्वनिश्चयसहितानन्तस्थिरफलब्रह्मज्ञानापातप्रतीतिमत एव ब्रह्मविचारेऽधिकारात् 'स्वाध्यायोऽध्येतव्य' इति विहितस्वाङ्गस्वशाखाऽध्ययनमनुतिष्ठत आपतप्रतीत्या कर्मविचारे प्रवृत्तेः तत्र च कर्मणामल्पास्थिरफलत्वनिश्चये च ब्रह्म ज्ञानविशेष्यकानन्तास्थिरफलापतप्रतीत्या स्वयमेव रागतो ब्रह्मविचारे प्रवृत्त्या तत्र च सम्भावित प्रामाण्यकापातप्रतीतेरेव प्रवृत्तिहेतुत्वात् सिद्धेव्युत्पत्त्यभावादिनिबन्धनाप्रामाण्यशङ्कया शास्त्रप्रवृत्तिहेतुभूतशास्त्रलक्षणनिरतिशयबृहत्वविशिष्टब्रह्मरूपसिद्धार्थविषयकनिर्णयात्मकशाब्दबोधे इष्टसाधनत्वज्ञानविघटनाच्छास्त्रप्रवृत्त्यसम्भवेन, तादृशप्रतिबन्धकनिरासकतया चतुस्सूत्र्याः शास्त्रारम्भसमर्थनरूपत्वम् । अत एव हि अधीतवेदः पुरुषस्स्वयमेव प्रवर्तते । तत्र कर्मविधिस्वरूपे निरूपिते कर्मणामल्पास्थिरफलत्वमध्ययनगृहीतस्वाध्ययैकदेशोपनिषद्वाक्येषु चामृतत्वरूपानन्तस्थिरफलापातप्रतीतेस्तन्निर्णयफलवेदान्तवाक्यविचाररूपशारीरकमीमांसामधिकरोतीति भाषितम् । अतश्शारीरकमीमांसायां रागतस्स्वयमेव प्रवृत्त्या तादृशप्रवृत्तिहेतुभूतेष्टसाधनताज्ञानप्रतिबन्धकीभूतसिद्धार्थविषयकव्युत्पत्त्यभावनिबन्धनाप्रामाण्यज्ञानविघटकतयैव चतुस्सूत्र्यास्सप्रयोजनत्वम् । अत एवास्याः शास्त्रान्तर्गतत्व मपि । अत एव शास्त्रारम्भप्रयोजिका चतुस्सूत्र्याः प्रथमपादस्थत्वशास्त्रारम्भादिमत्वशास्त्रोपोद्घातरूपत्वादि इति ध्येयम् ।

अथ सङ्गतिप्रदर्शनार्थं पूर्वाधिकरणसिद्धार्थमनुवदति - **यत** इति । 'सदेवे'त्याद्युक्तं जगत्कारणत्वमनूद्य 'यतो वा' इत्यादिना लक्षणत्वविधानादस्यापि कारणवादिवाक्यत्वेन व्यवहारः । अनेनोद्दिष्टब्रह्मणः लक्षणमुक्तम् । अथ लक्षितस्य ब्रह्मणश्चिदचिद्वैलक्षण्यनिर्णयार्थं कारणत्वप्रापकानि 'सदेवे'त्यादिवाक्यानि विचार्यन्ते इति सूचितम् । **आनुमानिकप्रधानादी**ति । अनेनाऽऽक्षेपरूपपूर्वाधिकरणसङ्गतिरुक्ता भवति । पुरुषार्थभूतब्रह्मण एव हि शास्त्रवेद्यत्वं प्रतिपाद्यत्वमुक्तम् । तदयुक्तं, अनुमानगम्यस्यापुरुषार्थभूतस्य प्रधानस्यैव शास्त्रेण प्रतिपाद्यत्वादिति । न चानुमानगम्यस्य कथं शास्त्रवेद्यत्वम्, अप्राप्त एव शास्त्रस्यार्थवत्वादिति शङ्क्यम् । अबाधितार्थबोधकत्वस्यैव प्रामात्वरूपत्वेनेतरप्रमाणगम्यस्याबाधितस्यान्येन बोधनेऽपि तत्र तस्य प्रमाणत्वसम्भवात् ।

**इदमाम्नायते छान्दोग्ये,** (छा.६.२.१) **'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्। तदैक्षत बहु स्यां प्रजायेयेति; तत्तेजोऽसृजत' इत्यादि। तत्र सन्देहः - किं सच्छब्दवाच्यं जगत्कारणं परोक्तमानुमानिकं प्रधानम्, उतोक्तलक्षणं ब्रह्मेति ॥**

**किं प्राप्तम्? प्रधानमिति। कुतः? 'सदेव सोम्येदमग्र आसीदेकमेव' इतीदंशब्दवाच्यस्य चेतनभोग्यभूतस्य सत्त्वरजस्तमोमयस्य वियदादिनानारूपविकारावस्थस्य वस्तुनः कारणावस्थां वदति। कारणभूतद्रव्यस्यावस्थान्तरापत्तिरेव हि कार्यता। अतो यद्द्रव्यं यत्स्वभावञ्च कार्यावस्थं, तत्स्वभावं तदेव द्रव्यं कारणावस्थम्।**

'ईक्षतेर्नप्रधानमि'त्यनुक्त्वा 'ईक्षतेर्नाशब्दमि'ति अशब्दपदघटितसूत्रं प्रयुञ्जानेन सूत्रकृता निरुक्तशास्त्रयोनित्वरूपशास्त्रैकप्रमाणकत्वं जगत्कारणस्य यदुक्तं, तन्न युक्तं, प्रधानस्यैव जगत्कारणत्वेन तस्य चानुमानेनापि सिद्धे इति पूर्वपक्षोत्थितिरपि सूचिता इति ज्ञापयितुं **'नाशब्दमित्यादिना'** इति भाषितम्। **आदिशब्देन** क्षेत्रज्ञसामान्यस्य चिदचिद्विशेषस्य च ग्रहणम्। ततश्च लक्ष्यवस्तुनश्चिदचिद्वैलक्षण्यप्रदर्शनाय कारणत्वप्रापकवाक्यविचाररूपा प्रमेयविशेषपरीक्षा क्रियते इति भावः। अधिकरणलक्षणसम्पत्तये प्रथमं विषयमुदाहरति - **इदमिति**। अत्र कारणवाक्यानां बहूनां सत्त्वेपि 'सदेवे'त्यादेरेव साक्षाद्विषयवाक्यत्वम्, इतरेषामेतद्द्वारैवेति सूत्रकाराभिप्रायं 'प्रतिज्ञाविरोधात्','स्वाप्ययात्' इति सूत्राभ्यां (पर्यालोच्य) ज्ञात्वा, इतरकारणवाक्यस्यानुवादरूपत्वेन पुरोवादसापेक्षत्वात् 'सदेवे'त्यादेश्च पुरोवादरूपत्वात् षड्विधतात्पर्यलिङ्गोपेतत्वाच्च तस्य वाक्यस्यैव साक्षाद्विषयत्वञ्च युक्तमित्यभिसन्धाय च 'सदेवे'त्याद्युदाहृतम्। अथ संशयं प्रदर्शयति - **तत्रेति**। **सच्छब्दवाच्यमित्यनेन** सच्छब्दस्य ब्रह्मणि प्रधाने च प्रयोगात्साधारणत्वेन संशयसहत्वमुक्तम्। **जगत्कारणमित्यनेन** कार्यसालक्षण्यस्य कारणेऽऽवश्यकतया तत्सलक्षणं कारणं प्रधानमेवेति पूर्वपक्षहेतुरुक्तः। **परोक्तं, उक्तलक्षणमित्याभ्यां** संशयहेतुः विप्रतिपत्तिस्सूचिता। **आनुमानिकमित्यनेन** सूत्रोक्ताशब्दपदं स्मारितम्। पूर्वपक्षमवतारयति - **किमिति। प्राप्तं** - प्राप्तिमत् - युक्तिमदित्यर्थः।

पूर्वपक्षमाह - **प्रधानमिति**। उक्तकोटिद्वये प्रधानस्यैव सच्छब्दवाच्यत्वे का युक्तिरिति पृच्छति - **कुत** इति। युक्तिं प्रदर्शयति - **सदेवेति। इति**। इतिवाक्यमित्यर्थः। **इदंशब्दवाच्यस्येत्यादिनोक्तानि** वस्तुविशेषणानि कारणस्य प्रधानत्वसिध्यौपयिकानि परमपुरुषत्वविरोधीनि च। **इदंशब्दवाच्यस्येति**। इदमः प्रत्यक्षगतमित्युक्तप्रकारेणाचेतनवस्तुन एव तच्छब्दवाच्यत्वं युक्तं, न तु चेतनस्यापि। अन्यथा शब्दास्वारस्यमिति भावः। **चेतनभोग्यभूतस्येति**। अनेन चेतनस्य जगदन्तर्गतत्वेऽपि कार्यत्वायोगान्न कार्यवर्गान्तिर्भावो युक्तः। किन्तु तद्भोग्यभूतस्याचेतनस्यैव, तस्य कार्यत्वसम्भवादिति सूचितम्। **सत्त्वरजस्तमोमयस्येति**। अनेन कार्यवर्गस्य भोग्यत्वं प्रधानस्यकारणत्वञ्च युक्तमित्युक्तं भवति।

ननु कथं कार्यवर्गस्य सत्त्वरजस्तमोमयत्वम्? तत्कार्यसुखदुःखमोहान्वयदर्शनेन कारणानुमानात्। अनेन कार्यस्य सत्त्वरजस्तमोमयत्वेन तादृशेनैव कारणेन भवितव्यमिति गुणत्रयविरहिणो ब्रह्मणो न कारणत्वं युक्तमिति सूचितम्। **वियदादिनानारूपविकारावस्थस्येत्यनेन** कार्यकारणयोरभेदेऽप्यवस्थाभेदेन कार्यत्वकारणत्वयोर्भेदः, एकत्वावस्थस्य कारणत्वाद्बहुत्वावस्थस्य कार्यत्वादिति दर्शितम्। सदैकरूपस्य ब्रह्मणः नानारूपकार्यभावस्यानुपपन्नत्वाच्च न कारणत्वं युक्तमिति च सूचितम्। ननु कार्यकारणयोर्न सालक्षण्यनियमः हेत्वभावात् द्रव्यान्तरं प्रति विलक्षणद्रव्यस्यापि हेतुत्वसम्भवात्। अत इदंशब्दवाच्यमचेतनं प्रति चेतनस्य ब्रह्मणोपि हेतुत्वसम्भवात्, न प्रधानस्य सच्छब्दवाच्यत्वनिर्णयसम्भव इत्यत्राह - **कारणभूतेति**। भाव्यवस्थावतः प्रागवस्थायोगित्वस्यैवोपादानत्वाद्विलक्षणद्रव्यस्य चैतदसम्भवादेकद्रव्यत्वमभ्युपेत्यमिति भावः। अस्त्ववस्थान्तरापत्तेः कार्यत्वं तावता किमित्यत्र सालक्षण्यनियमं प्रदर्शयति - **अत** इति। कार्यावस्थं वस्तु यद्द्रव्यं यत्स्वभावञ्च, **तत्स्वभावं तदेवद्रव्यं** कारणावस्थं भवतीत्यर्थः। एवं कारणस्य

**सत्त्वादिमयश्च कार्यमिति गुणसाम्यावस्थं प्रधानमेव हि कारणम्। तदेवोपसंहृतसकलविशेषं सन्मात्रमिति, 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इत्यभिधीयते। तत एव च कार्यकारणयोरनन्यत्वम्। तथा सत्येव एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिः। अन्यथा, 'यथा सोम्यैकेन मृत्पिण्डेन' इत्यादिमृत्पिण्डतत्कार्यदृष्टान्त-दार्ष्टान्तिकयोर्वैरूप्यं चेति - जगत्कारणवादिवाक्येन महर्षिणा कपिलेनोक्तं प्रधानमेव प्रतिपाद्यते। प्रतिज्ञादृष्टान्त-रूपेणानुमानवेषमेव चेदं वाक्यमिति सच्छब्दवाच्यमानुमानिकमेव।**

---

कार्यसालक्षण्यमावश्यकमित्युक्तम्। अथ प्रधानस्यैव कार्यभूतजगत्सालक्षण्यमस्तीति तस्यैव कारणत्वमिति दर्शयति - **सत्त्वादिमयश्चेति**। **गुणसाम्यावस्थमिति**। प्रधानस्य कथं कारणत्वं गुणवैषम्यावस्थस्यैव कारणत्वौचित्यादिति चेन्न। विषमावस्थस्य सर्वस्यापि कार्यत्वदर्शनेन कारणीभूतस्य प्रधानस्यापि तथात्वे कारणान्तरापेक्षयाऽनवस्थाप्रसङ्ग इति गुणसाम्यावस्थस्यैव कारणत्वौचित्यात्। सत्त्वादिगुणमयत्वेन कार्यसालक्षण्यस्यापरित्यागाच्च ॥

ननु भवन्मते प्रधानस्य सत्त्वरजस्तमोमयत्वेनानेकत्वात् 'एकमेवाद्वितीयमि'ति एकत्वावधारणं कथं सङ्गच्छत इत्यत्राह - **तदेवेति**। **उपसंहृतसकलविशेषमिति**। विशेषः महदादिः। अनेन नामरूपविभागाभावमादायैव भवतामिवैक-त्वावधारणमिति सूचितम्। **सन्मात्रमिति**। अनेन श्रुतिघटक 'सदेवे'त्यनेन कादाचित्कासत्त्वव्युदासः कृत इति व्यञ्जितम्। **पूर्वं गुणसाम्यावस्थमि**त्यनेनाद्वितीयपदार्थो वर्णितः। एवं प्रधानकारणत्वे एव सालक्षण्यसिद्ध्या कार्यकारण-योरनन्यत्वसिद्धिरित्याह - **तत** इति। अन्यथोपादानत्वमेव भज्येतेति भावः। एवं 'इदमग्रे सदेवासीदि'ति सामानाधिक-रण्यबलेन 'तद्धैक आहु' इत्यादिना सत्कार्यवादप्रतिक्षेपबलेन च कार्यकारणयोरनन्यत्वस्यसिध्या कार्यानन्यस्य प्रधानस्यैव जगत्कारणत्वं युक्तमिति दर्शितम्। अथ हेत्वन्तरेणापि प्रधानकारणत्वसिद्धिरित्याशयेनाह - **तथा सती**ति। प्रधान-कारणत्वे सत्येवेत्यर्थः। एकेन मृत्पिण्डेनेति दृष्टान्तसिद्धमर्थमुपजीव्योक्तं **एकविविज्ञानेने**ति। 'एकमेवाद्वितीयमि'ति श्रुतिमुपजीव्य वा। गुणानां बहुत्वेपि तत्समुदायस्यैकत्वान्न विरोध इति भावः। **सर्वविज्ञानप्रतिज्ञोपपतिरि**ति।

अयं भावः - आदौ 'येनाश्रुतमि'त्यादिना कारणविज्ञानेन कार्यविज्ञानं तावत्प्रतिज्ञातम्। इदञ्च ब्रह्मणः कारणत्वे नोपपद्यते। चेतनस्य ब्रह्मणः ज्ञानेनाचेतनस्य कार्यवर्गस्य ज्ञातत्वासम्भवात्। प्रधानकारणत्वे तु प्रधानस्याचेतनत्वा-त्तज्ज्ञानेनाचेतनकार्यवर्गस्य ज्ञातत्वमुपपद्यत इति। एवं चेतनस्य कारणत्वेऽचेतनमृत्पिण्डलोहमण्यादिदृष्टान्तास्वारस्य-मपीत्याह - **अन्यथेति**। यद्वा ब्रह्मणः कारणत्वे बाधकमाह - **अन्यथेति**। **वैरुप्यमिति**। अयं भावः - दृष्टान्ते कारण-भूतमृत्पिण्डस्य तत्कार्यघटादेश्च यादृशं सारुप्यं, न तादृशं सारुप्यं दार्ष्टान्तिके ब्रह्मणस्तत्कार्याचेतनस्य च। प्रधानस्य कारणत्वे न सारुप्यहानिः। अतो दृष्टान्तदार्ष्टान्तिकयोर्वैरुप्यमेव भवतामिति। **महर्षिणेति**। 'ऋषिं प्रसूतं कपिलं महा-न्तमि'ति श्रुतिप्रसिद्धिस्सूचिता। **कपिलेनेति**। अनेन श्रुतेरुपबृंहणसापेक्षत्वात् पूर्वोक्तन्यायानुगृहीतकपिलस्मृतिरेव श्रुत्यर्थनिर्णये प्रमाणामिति द्योतितम्। **उक्तमिति**। सर्वसाक्षात्कारवता कपिलेन जगत्कारणवादिवाक्यतत्त्वार्थमपि साक्षात्कृत्योक्तत्वादिति भावः। उक्तश्रुतौ प्रतिज्ञादृष्टान्तयोस्सत्त्वात्तयोर्हेत्वाक्षेपकत्वाच्चोक्तप्रतिज्ञावाक्यस्यानुमान-वेषत्वावगमादानुमानिकस्यैव प्रधानस्य सच्छब्दवाच्यत्वं युक्तमिति हेत्वन्तरं प्रदर्शयति - **प्रतिज्ञेति**। **सच्छब्दवाच्यमा-नुमानिकमेवेति**।

ननु प्रतिज्ञाया एकविज्ञानेन सर्वविज्ञानविषयकत्वेन कारणविषयकत्वाभावात्कथं कारणविषयकानुमानवेषत्वं, कथंतराञ्च तेन प्रधानकारणत्वनिश्चयः। कथन्तमाञ्चानुमानिकस्य सच्छब्दवाच्यत्वनिश्चय इति चेत् - शृणु, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा हि एकस्य सर्वस्य चानन्यत्वेनैव निर्वाह्या। अनन्यत्वञ्च कार्यकारणभावनिबन्धनम्। अतः प्रतिज्ञाया

**इत्येवं प्राप्तेऽभिधीयते - ईक्षतेर्नाशब्दम् - इति । यस्मिन् शब्द एव प्रमाणं न भवति, तदशब्दम्, आनुमानिकम्; प्रधानमित्यर्थः । न तज्जगत्कारणवादिवाक्यप्रतिपाद्यम् ;**

एव कारणविषयकत्वनिश्चयात्कारणविषयत्वरूपनुमानात्वं युक्तमिति । इतिशब्दो हेतुपरः । **उक्तहेतोः प्रधानमिति प्राप्तमित्यन्वयः** ॥

एवं पूर्वपक्षे प्राप्ते सिध्दान्तस्सूत्रकारेण सूचित इत्याह - **एवं प्राप्त** इति । पूर्वमधिकरणसङ्गतिप्रदर्शनाय सूत्रमुपात्तं, सिद्धान्तप्रदर्शनाय पुनरुपादानम् । अशब्दमित्यस्यार्थमाह - **यस्मिन्निति । अनुमानगम्येति** । ननु प्रधाने शब्दस्य प्रमाणत्वनिषेधोऽनुपपन्नः सच्छब्दवेद्यत्वेनाभिमतत्वादित्यत्राह - **शब्द एवेति** । 'अब्भक्षो','वायुभक्ष' इत्यादिरिव ावधारणगर्भोऽयं शब्द इति भावः । सिद्धेऽर्थे शब्दस्याप्रमाणत्वेन प्रधानस्यानुमानगम्यत्वात्तत्र शब्दस्य प्रमाणत्वमेव न सम्भवतीति सूचनाय शास्त्रैकप्रमाणकस्यैव जगत्कारणत्वोक्त्या भवदभिमतस्य प्रधानस्य शास्त्रैकसमधिगम्यत्वाभावेन जगत्कारणत्वन्न युक्तमिति सूचनाय च सूत्रकृताऽशब्दमिति प्रयुक्तमित्यर्थस्फुटीकरणाय **तदशब्दमानुमानिकमिति** भाषितम् । इन्द्रियादीनामप्यनुमानगम्यत्वेनाशब्दत्वेऽपि न क्षतिरिति ।

नन्विन्द्रियाणां ज्ञानकारणत्वेप्यर्थकारणत्वाभावात्प्रकृतानुपयुक्तत्वेऽपि परमाणूनामर्थकारणत्वेन नैयायिकाद्यभिमतत्वात्तेषाञ्चानुमानगम्यत्वेनाशब्दत्वादेतदधिकरणसर्वसूत्राणामपि तद्व्यवच्छेदपरतयैवार्थस्य वर्णयितुं शक्यत्वात् प्रधानस्येव परमाणोरपि सच्छब्दवाच्यत्वव्युदासः सूत्रकृता विवक्षित एव स्यात् । न चाशब्दमित्येकवचनान्तप्रयोगबलेन प्रधानस्यैव विवक्षितत्वं गम्यते । तस्यैकत्वात्परमाणूनाञ्चानेकेषामेव कार्यं प्रति कारणत्वेन तत्रैकवचनान्ताशब्दशब्दस्वारस्याभावेनाविवक्षितत्वावगमादिति वाच्यम् । तन्मते सत्त्वरजस्तमोमयस्यैव प्रधानत्वेनानेकत्वादेकवचनान्तशब्दास्वारस्यस्य तदानीमप्यवर्जनीयत्वात् । न च समुदायैकत्वविवक्षया तदुपपत्तिः, तस्याः प्रकृतेऽपि सम्भवात् । न च 'महद्दीर्घवद्वा ह्रस्वरिमण्डलाभ्यामि'त्याद्युपरितनसूत्रैस्स्फुटतया परमाणुकारणवादप्रतिक्षेपात्, अत्रापि तत्प्रतिक्षेपे पुनरुक्तता स्यादिति प्रधानस्य कारणत्वव्युदास एवात्र विवक्षित इति वाच्यम् । 'रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च' इत्याद्युपरितनसूत्रैः प्रधानकारणवादस्यापि प्रतिक्षेपेण तावतापि पुनरुक्ततायाः अवारणात् । प्रधानकारणवादप्रतिक्षेपेपि अत्र सृष्टिवाक्यानां प्रधानप्रतिपादनानर्हत्वमात्रप्रतिपादनेन पौनरुक्त्यपरिहारस्योभयत्र तुल्यत्वादिति चेत्, सत्यम् । सत्त्वादिसमुदायस्येव परमाणुसमुदायस्यापि सच्छब्दवाच्यत्वप्रतिक्षेपः सूत्रकृद्विवक्षित एव । भाष्यग्रन्थस्तूपलक्षणपर इति न विरोधः । अत एव भाष्यकृतैव निर्विशेषब्रह्मप्रतिक्षेपः क्रियते । उदाहरणान्तरेष्वुपजीव्यत्वाय हि तत्र तत्प्रतिक्षेपः ॥

ततश्चाशब्दमित्यस्य पर्यवसितोऽयमर्थः - शब्दपदं वेदपरम् । प्रमाणं न भवति = परमतात्पर्याभाववत् । तथा च वेदीयपरमतात्पर्यविषयत्वाभाववदित्यर्थः । वेदस्य परमतात्पर्यमवान्तरतात्पर्यञ्चेति तात्पर्यं द्विविधं, सर्वस्यापि वेदस्य ब्रह्मणि परमतात्पर्यम्, अन्यत्र त्ववान्तरतात्पर्यमिति सिद्धान्तत्वात् सिद्धप्रधानस्य वेदीयपरमतात्पर्यविषयत्वाभाववत्वं युक्तम् । वेदस्य तात्पर्यं नाम तदितरप्रतीतीच्छयाऽनुच्चरितत्वे इति तद्विषयकबोधजनकतावच्छेदकधर्मवत्वम् । अतोऽपौरूषेयस्य वेदस्य न तात्पर्यानुपपत्तिः । इत्थञ्चोक्तवेदीयपरमतात्पर्यविषयत्वाभाववत्वं प्रधानत्वावच्छिन्नानुयोगितासम्बन्धेन ग्राह्यमिति सूचनाय**ानुमानिकं प्रधानमि**त्युक्तमिति । **अशब्दमि**ति पदं योगरूढं, वेदीयपरमतात्पर्यविषयत्वाभाववत्वं योगार्थतावच्छेदकं, प्रधानत्वं तु रूढ्यर्थतावच्छेदकम् । उक्तश्रीभाष्यमपि योगरूढ्यर्थप्रतिपादकमिति केचित् । अत्र तु सृष्टिवाक्यानां प्रधान प्रतिपादनानर्हत्वप्रतिपादनमेव सूत्रकृद्विवक्षितमिति भाष्यग्रन्थस्योपलक्षणपरत्वमप्यनपेक्षितमिति ध्येयम् । अथ वाक्यार्थमाह - **न तदिति** ।

**कुतः? ईक्षतेः। सच्छब्दवाच्यसम्बन्धिव्यापारविशेषाभिधायिन ईक्षतेर्धातोश्श्रवणात्, 'तदैक्षत बहु स्यां प्रजायेय' इति। ईक्षणक्रियायोगश्चाचेतने प्रधाने न सम्भवति। अत ईदृशेक्षणक्षमश्चेतनविशेषस्सर्वज्ञस्सर्वशक्तिः पुरुषोत्तमस्सच्छब्दाभिधेयः। तथा च सर्वेष्वेव सृष्टिप्रकरणेषु ईक्षापूर्विकैव सृष्टिः प्रतीयते,** (ऐ. १-१) **'स ईक्षत लोकान्नु सृजा इति ; स इमाँल्लोकानसृजत',** (प्र. ६-३, ३) **'स ईक्षाञ्चक्रे ... स प्राणमसृजत' इत्यादिषु। ननु च कार्यानुगुणेनैव कारणेन भवितव्यम्।**

---

ननु 'नाशब्दमि'ति सूत्रबलेन प्रधानस्वरूपस्यैव निषेध्यत्वलाभात्कथं प्रधानस्य जगत्कारणवादिवाक्यप्रतिपाद्यत्वनिषेधः क्रियते इत्याशङ्कां प्रधानस्य जगत्कारणवादिवाक्यप्रतिपाद्यत्वाभावे हेतुविवरणमुखेन परिहर्तुं हेत्वाकाङ्क्षां दर्शयति - **कुत** इति। हेतुमाह - **ईक्षतेरि**ति। 'तदैक्षत बहुस्यां प्रजायेये'ति **व्यापारविशेषाभिधायिन ईक्षतेर्धातोः श्रवणा**दित्यन्वयः। अत्रेक्षतेरिति हेतुत्वेन धातुस्वरूपोपादानाद्धातुवाच्येक्षणव्यापरविशेषस्यैव हेतुत्वसिध्या तस्य च प्रधानस्वरूपनिषेधे हेतुत्वासम्भवेन जगत्कारणवादिवाक्यप्रतिपाद्यत्वाभावे एव हेतुत्वं युक्तमिति भावः। **सच्छब्दवाच्ये**ति। 'तदैक्षत बहुस्यामि'त्यत्र **तच्छब्देन** प्रकृतसच्छब्दवाच्यस्यैव परामर्शादिति भावः। **सम्बन्धी**त्यनेन सच्छब्दवाच्ये तच्छब्देन परामृष्टे ईक्षणस्याऽऽवश्यकत्वं सूचितम्।

**व्यापारविशेषे**त्यनेन चेतनाचेतनसाधारणस्य ईक्षतिधात्वभिधेयत्वं व्युदस्तम्। चेतनासाधारणव्यापारविशेषस्यैव तदभिधेयत्वात्। मुख्ये सम्भवत्युपचारकल्पनाया असम्भवादिति भावः। **अभिधायिन** इत्यनेन धातुप्रतिपाद्यतावेषेण प्रधानस्य निषेध्यत्वं सूचितम्। ईक्षितेरित्यनुक्त्वा ईक्षतेरिति शत्रन्ततया निर्देशात् 'इक्स्तिपौ धातुनिर्देशे' इति न्यायेन धातुपरत्वं युक्तमित्याशयेनाह - **ईक्षतेर्धातोरि**ति। अनेन धात्वर्थस्वारस्यमपरित्याज्यमिति सूचितम्। **श्रवणा**दिति। श्रूयमाणादीक्षतेरिति हेतुनिर्देशः सूत्रकाराभिप्रेत इति भावः। वेदान्तदीपेऽर्थस्वारस्यमुपजीव्य ईक्षतिशब्देनेक्षणं लक्षितमित्युक्तम्। अत्र तु शब्दस्वारस्यमुपजीव्यैवं भाषितम्। एवं पक्षसाध्यहेतुनिर्देशः कृतः। अथ हेतोः पक्षवृत्तित्वोपपादनायाह - **ईक्षणे**ति। अचेतनस्य केवलक्रियासम्भवेपि ईक्षणक्रियायोगो न भवतीत्यर्थः। ततश्च प्रधानं न जगत्कारणवादिवाक्यप्रतिपाद्यं 'तदैक्षत' इति सच्छब्दवाच्य व्यापारविशेषाभिधायीक्षतिधातुप्रतिपाद्येक्षणाभाववत्वादिति फलितम्।

एवं प्रधानस्य सच्छब्दवाच्यत्वानुपपत्त्या उक्तलक्षणब्रह्मण एव तथात्वमित्याह - **अत** इति। ईदृशेक्षणक्षम 'बहुस्यां प्रजायेय' इत्युक्तबहुभवनानुगुणसङ्कल्परूपेक्षणक्षमः। अनेनेक्षणयोगिचेतनादपि व्यावृत्तिरुक्ता। अत एव **चेतनविशेष** इति भाषितम्। **ईदृशत्वविशेषणेन** चेतनव्यावृत्तिमभिसन्धायैव 'बहु स्यां प्रजायेये'ति पूर्वमधिकमुपात्तम्। चेतनेप्यसम्भवतो धर्मस्य कथमचेतने सम्भव इति भावः। **सर्वज्ञ** इति। 'तदैक्षत' इति फलितार्थकथनम्। **सर्वशक्तिरि**ति 'बहु स्यामि'ति फलितार्थकथनम्। **पुरुषोत्तम** इति सच्छब्दपर्यवसानस्थानसूचनम्। **सच्छब्दवाच्य** इति। छागपशुन्यायेन सामान्यवाचकस्यापि सच्छब्दस्य पुरुषोत्तमे चेतनविशेषे पर्यवसानं युक्तमिति भावः। एवं सर्वत्रापि सृष्टिप्रकरणे ईक्षणपूर्वकसृष्टेः श्रवणाच्चेतनस्यैव सृष्टिकर्तृत्वमावश्यकमिति अत्रस्थसच्छब्दवाच्योपि चेतनविशेष एवेति श्रुत्यन्तरैकार्थ्येनापि साधयति - **तथा चे**ति। **सर्वेष्वेवे**ति। ईक्षणस्य गौणत्वकल्पने अनेकश्रुतिस्वारस्यविरोध इति भावः॥

पूर्वपक्ष्युक्तं चोद्यं परिहर्तुं पूर्वपक्षमुत्थापपति - **ननु चे**ति। **कारणेन भवितव्यमि**ति। कार्यकारणयोस्सालक्षण्यस्य पूर्वोक्तयुक्तिभिरवश्याङ्गीकर्तव्यत्वात्कार्यस्य त्रिगुणात्मकत्वदर्शनेन तत्कारणस्य ब्रह्मणोपि त्रिगुणात्मकत्वं वक्तव्यम्। तदेव चास्मदभिमतं प्रधानं, यदि तु सालक्षण्यसम्पादनाय कार्यस्यैव त्रिगुणात्मकत्वं नेष्यते, तर्हि सुखदुःखमोहान्वया-

**सत्यम् ; सर्वकार्यानुगुण एव सर्वज्ञस्सर्वशक्तिस्सत्यसङ्कल्पः पुरुषोत्तमस्सूक्ष्मचिदचिद्वस्तुशरीरकः । यथाऽऽह -** (श्वे. ६-८) **'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च',** (मु. १-१-६) **'यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तपः',** (सु.७) **'यस्याव्यक्तं शरीरं...यस्याक्षरं शरीरं...यस्य मृत्युश्शरीरम्...एष सर्वभूतान्तरात्मा' इति । तदेतत्,** (शारी. २-१-४) **'न विलक्षणत्वात्' इत्यादिषु प्रतिपादयिष्यते । अत्र सृष्टिवाक्यानि न प्रधानप्रतिपादनयोग्यानीत्युच्यते । वस्तुविरोधस्तु तत्रैव परिहरिष्यते ।**

**यत्तूक्तम् - प्रतिज्ञादृष्टान्तयोगादनुमानरूपमेवेदं वाक्यम् - इति - तदसत् ; हेत्वनुपादानात् ।** (छा.६-१-३) **'येनाश्रुतं श्रुतम्' इत्येकविज्ञानेन सर्वविज्ञाने प्रतिपिपादयिषिते सर्वात्मा तदसम्भवं मन्वानस्य तत्सम्भवमात्रप्रदर्शनाय हि दृष्टान्तोपादानम् । ईक्षत्यादिश्रवणादेव ह्यनुमानगन्धाभावोऽवगतः ॥ ५ ॥**

---

ह्युपलम्भविरोध इति भावः । कार्यकारणयोस्सालक्षण्यमात्रमभ्युपगम्य परिहरति - **सत्यमिति** । भवदभिमतस्य प्रधानस्य सर्वकार्यानुगुणत्वं नास्ति कार्यवर्गान्तर्गतचेतनसालक्षण्याभावदिति सूचनाय **सर्वकार्यानुगुणेत्युक्तम्** । निमित्तापादानत्वसिध्यर्थं **सर्वज्ञस्सर्वशक्तिरित्युक्तम्** । सर्वज्ञत्वसर्वशक्तित्वफलितं सत्य सङ्कल्पत्वम् । **पुरुषोत्तम** इति पुरुषसूक्तप्रत्यभिज्ञापनाय ।

ननु प्रधानस्य कारणत्वे चेतनस्यापि कार्यवर्गान्तर्गतत्वेन तत्सालक्षण्याभाववद्ब्रह्मणः कारणत्वेऽप्यचेतनस्यापि कार्यवर्गान्तर्गतत्वेन तत्सालक्षण्यं नास्ति, चेतनसालक्षण्यमपि श्रमेणोपपाद्यमित्यत्राह - **सूक्ष्मेति** । सूक्ष्मचिदचिच्छरीरकस्यैव कारणत्वात्स्थूलचिदचिच्छरीरकस्यैव च कार्यत्वान्न सालक्षण्यनियमभङ्ग इति भावः । अनेन विकाराणां सद्वारकत्वान्न निर्विकारत्वश्रुतिविरोध इत्यपि दर्शितम् । उक्तकारणत्वोपयुक्तसर्वज्ञत्वादिगुणानां श्रुत्यैव सिद्धत्वं प्रदर्शयति - **यथाऽऽहेति** । ब्रह्मणः कारणत्वमुत्तरत्रोपपादयिष्यते इत्याह - **तदेतदिति** । कार्यकारणयोस्सालक्षण्यमावश्यकमित्याशङ्कापरिहारपूर्वकं ब्रह्मणः कारणत्वमित्यर्थः । तर्हि पौनरुक्त्यं स्यादित्यत्राह - **अत्रेति** । **वस्तुविरोधः** - अर्थसामर्थ्यविरोधः । **परिहरिष्यत** इति । विलक्षणयोरपि कार्यकारणभावदर्शनेन जगद्विलक्षणस्यापि ब्रह्मणः कारणत्वसम्भवात् । सालक्षण्यनियमेऽपि वा चिदचिच्छरीरकब्रह्मण एव कारणत्वात्सालक्षण्यसम्भवाच्चेति भावः । चिदचितोर्ब्रह्मशरीरत्वं शरीरिणो ब्रह्मणः कर्मवश्यत्वादिदोषाभावश्च तत्रैव निपुणतरमुपपादयिष्यते ॥

अथ परोक्तमनुमानवेषत्वमनूद्य परिहरति - **यत्तूक्तमित्यादिना । हेत्वनुपादानादिति** । हेतोः प्रधानावयवत्वेनावश्योपादेयत्वादत्र च तदभावेनानुमानविवक्षाया एवासम्भवादनुमानवेषत्वशङ्कैव न भवति । पञ्चावयवेष्वपि प्रतिज्ञादित्रिकस्योदाहरणादिकस्य वावश्यकत्वेनात्र कस्याप्यभावादनुमानवेषत्वानुमानमपि न सम्भवति इति भावः । ननु प्रतिज्ञादृष्टान्ताभ्यां हेतुराक्षिप्यते इत्यत्राह - **येनेति** । तत्सम्भवमात्रप्रदर्शनायेति । दृष्टान्तोपन्यासस्य व्याप्तिप्रदर्शनार्थत्ववदसम्भवव्यावृत्तिप्रदर्शनपरत्वस्यापि सम्भवेनान्यथासिद्धत्वादिति भावः । प्रतिज्ञायाः प्रधानविषयत्ववदुक्तयुक्त्या सूक्ष्मचिदचिच्छरीरकब्रह्मविषयत्वस्यापि सम्भवात्साप्यन्यथासिद्धा । **तदसम्भवं मन्वानस्येति** । एकविज्ञानेन सर्वविज्ञानं हि धर्म्यैक्यादेकाकारान्वयाद्वस्त्वन्तरव्यतिरेकाद्वोपपादनीयम् । अस्य च धटपटादिषु कथञ्चिदप्युपपादनं न सम्भवतीति भावः ॥

एवं प्रतिज्ञादृष्टान्तयोरन्यथासिद्धत्वेन हेत्वाक्षेपकत्वं दूषितम् । अथ हेत्वाक्षेपेऽपि विरोधादनुमानप्रसक्तिरेव नास्तीत्याह - **ईक्षत्यादीति । आदिशब्देन** वक्ष्यमाणहेतूनां ग्रहणम् । आक्षिप्तेन केनचिद्धेतुना प्रधानस्य सच्छब्दवाच्यत्वमभ्युपगम्य जगत्कारणत्वं वक्तव्यम् । तच्च न युक्तम् । सच्छब्दवाच्यसम्बन्धितया ईक्षणादिधर्माणां श्रूयमाणत्वेन श्रुतानां तेषामनन्वयप्रसङ्गेन विरोधादिति भावः । एतेन 'जगत् स्वानन्योपादानकं कार्यत्वात्', 'जगत् स्वकारणैकज्ञानेन

**अथ स्यात् - न चेतनगतं मुख्यमीक्षणमिहोच्यते, अपि तु प्रधानगतं गौणमीक्षणम्; 'तत्तेज ऐक्षत, ता आप ऐक्षन्त' इति गौणेक्षणसाहचर्यात्। भवति चाचेतनेष्वपि चेतनधर्मोपचारः, यथा, 'वृष्टिप्रतीक्षाः शालयः',** (रा.सु.२६-६) **'वर्षेण बीजं प्रतिसञ्जहर्ष' इति। अतो गौणमीक्षणमिति। इमामाशङ्कामनुभाष्य परिहरति -**

**गौणश्चेन्नात्मशब्दात् १ । १ । ६ ॥**

**यदुक्तम् - गौणेक्षणसाहचर्यात्सतोऽपीक्षणव्यपदेशः सर्गनियतपूर्वावस्थाभिप्रायो गौण इति; तन्न - 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा' इति सच्छब्दप्रतिपादितस्य आत्मशब्देन व्यपदेशात्। एतदुक्तं**

---

ज्ञातं भवितुमर्हति कार्यत्वादि'ति परोक्तानुमाने अप्यर्थान्तरत्वादिना सिद्धसाधनत्वेन वा दूषिते वेदितव्ये। वस्तुतो जगतः सुखदुःखमोहादिरूपत्वन्नास्ति। तज्जनकत्वरूपधर्मवत्त्वमेव। भवताञ्च प्रधानं सुखादिजनकसत्त्वरजस्तमोमय-रूपम्। न तु तद्गुणकम्। अतोऽपि जगत्सालक्षण्यं नास्ति इत्यपि ध्येयम्॥

अथोत्तरसूत्रमवतारयति - **अथ स्यादिति**। **चेतनगतं** = चेतनत्वानुगुणं चेतनत्वसाधकमिति यावत्। **इहोच्यत** इति। प्रकरणपर्यालोचनेनैवार्थस्य निर्णेयत्वादिति भावः। तर्हि कीदृशमीक्षणमुच्यत इत्यत्राह - **अपि त्विति**। **प्रधान-गतं** = प्रधानत्वानुगुणमचेतनत्वसाधकमित्यर्थः। तेजःप्रभृतीनां कार्यवर्गान्तर्गतत्वान्न प्रथमेक्षणस्य तद्गतत्वसम्भवः, किन्तु तत्कारणप्रधानगतत्वमेवेति सूचनाय **प्रधानगतमि**त्युक्तम्। **गौणं** = सृष्ट्युन्मुखत्वरूपम्। नन्वत्रोच्यमानस्येक्षणस्य गौणत्वे को हेतुः। यावता नः मुख्यार्थबाधः तावता तत्परित्यागानैचित्यात्। न हि प्रधानस्य सच्छब्दवाच्यत्वनिर्वाहायैव ईक्षणस्य गौणत्वं कल्पयितुं शक्यम्। अन्यथाऽन्योन्याश्रयादित्यत्र इहेति शब्दसूचितं हेतुं प्रदर्शयति - **तत्तेज** इति। गौणेक्षणसाहचर्यादिति। तेज आदौ श्रूयमाणमीक्षणं गौणमित्यविवादम्। तस्याचेतनत्वात्। एवं 'सेयं देवतैक्षत' इत्यत्र देवतागतत्वेन श्रूयमाणमपि तद्गौणमेव। 'तिस्रो देवता' इत्यचेतनस्य देवतात्वेन व्यवहारात्। अतः प्रकरणे सर्वत्र गौणेक्षणस्यैव श्रूयमाणत्वात्तत्सहचरितप्रथमेक्षणमपि गौणमेव। न तूपक्रमन्यायोऽत्र प्रवर्तते, बाधितत्वात्। उपक्रमस्य सन्दिग्धत्वाच्च उपक्रमे मुख्यमीक्षणमुत्तरत्र गौणमीक्षणमिति तु विषममिति भावः।

एवं लोकेऽपि चेतनधर्मोपचारो दृश्यत इत्याह - **भवतीति**। **प्रतिसञ्जहर्षे**ति ईक्षणतुल्यहर्षादिधर्ममभिप्रेत्य ईक्षणोपचार इत्यनुक्त्वा चेतनधर्मोपचार इत्युक्तम्। एवं लोकवेदयोर्दृष्टान्तद्वयं प्रदर्शितम्। अथ शङ्कामुपसंहरति - **अत** इति। उक्त शङ्कायाः **गौणश्चेदि**ति सूत्रखण्डेन दर्शितत्वात् **अनुभाष्ये**ति भाषितम्।

अथ सूत्राभिप्रायं वर्णयितुं पूर्वपक्षमनुवदति - **यदुक्तमि**ति। **सतः** = सच्छब्दसम्बन्धिनः। सूत्रे 'ईक्षतेर्ना शब्दमि'ति ईक्षतिधातुनिर्देशमवलम्ब्य गौण इति पुल्लिङ्गतया निर्दिष्टमिति सूचनाय ईक्षणव्यपदेश इति भाषितम्। **सर्गनियते**त्यादिना गौणत्वमुपपादितम्। **अत्र चेदि**ति सूत्रखण्डपर्यालोचनया यत्तच्छब्दाभ्यां वाक्यार्थो वर्णितः। दूषयति - **तन्ने**ति। ईक्षतिर्गौण इति चेत्तन्नेत्यर्थः। तथा चेक्षतेर्गौणत्वं न सम्भवतीत्यर्थः। **आत्मशब्दादि**ति सौत्रपदं व्याचष्टे **ऐतदात्म्यमि**ति। उभयत्रात्मशब्दश्रवणाद्वाक्यद्वयोपादानम्। **एतच्छ**ब्दस्य सच्छब्दस्य च प्रकृतपरामर्शित्वम-भिप्रेत्याह - **सच्छब्दप्रतिपादितस्ये**ति।

ननु 'मृदात्मको घटः', 'घटस्य मृदात्मे'त्यादाविवात्रापि आत्मशब्दस्य स्वरूपपरत्वं किन्नस्यादित्यत्राह - **एतदुक्तमि**ति। 'इदं सर्वमि'ति सङ्कोचकप्रमाणरहितसर्वशब्दं, 'सन्मूलास्साम्येमाः सर्वाः प्रजा' इति पूर्ववाक्ये सर्वशब्द-

**भवति - 'ऐतदात्म्यमिदं सर्वम्। स आत्मा' इति चेतनाचेतनप्रपञ्चोद्देशेन सत आत्मत्वोपदेशोऽयं नाचेतने प्रधाने सङ्गच्छत इति। अतस्तेजोबन्नानामपि परमात्मैवाऽऽत्मेति तेजःप्रभृतयोऽपि शब्दाः परमात्मन एव वाचकाः। तथा हि, 'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति परमात्मानुप्रवेशादेव तेजःप्रभृतीनां वस्तुत्वं तत्तन्नामभाक्त्वञ्चेति, 'तत्तेज ऐक्षत', 'ता आप ऐक्षन्त' इत्यपि मुख्य एवेक्षणव्यपदेशः। अतस्साहचर्यादपि, 'तदैक्षत' इत्यत्र गौणत्वाशङ्का दूरोत्सारितेति सूत्राभिप्रायः ॥ ६ ॥**

**इतश्च न प्रधानं सच्छब्दप्रतिपाद्यम् -**

---

विशेषितप्रजाशब्दं, 'इदं सर्वमसृजत','सच्च त्यच्चाभवत्', 'विज्ञानं चाविज्ञानञ्चे'ति श्रुत्यन्तरञ्चाभिप्रेत्योक्तं चेतनाचेतन-प्रपञ्चोद्देशेनेति। **नाचेतने प्रधाने सङ्गच्छत** इति। अचेतनस्य चेतनं प्रति कथञ्चिदप्यात्मत्वासम्भवादिति भावः। ननु 'आप्नोतीत्यात्मा' इति व्युत्पत्त्या व्यापित्वस्यात्मत्वस्य कथञ्चित्प्रधाने उपपत्तिस्सम्भवत्येवेति चेन्न, 'अन्तःप्रविष्टः शास्ता जानानां सर्वात्मा' इति श्रुतिबलादन्तःप्रविश्य नियमनकर्तृत्वरूपस्यैवात्मत्वात्तस्यचाचेतने बाधात्।

ननु 'मृदात्मको घटः', ' घटस्य मृदात्मा' इत्यादाविवात्रापि स्वरूपपरत्वमात्मशब्दस्य किन्न स्यादिति चेन्न, चेतनस्याचेतनस्वरूपैक्यासम्भवेन तस्यापि प्रकृते बाधात्। अतः प्रधानस्य सच्छब्दवाच्यत्वे अन्तःप्रविश्यनियमन-कर्तृत्वरूपात्मत्वबाधेन जगत्कारणं ब्रह्मैव सच्छब्दवाच्य मित्यभ्युपगन्तव्यमिति। अथ ब्रह्मणश्चेतनाचेतनसामान्यं प्रत्यात्मत्वाद्गौणेक्षणसाहचर्यमेवासिद्धमिति दर्शयति - **अत** इति। अत्र यद्यपि 'तत्तेज ऐक्षत', 'ता आप ऐक्षन्त' इत्युभयत्रेक्षणश्रवणात्तेजश्शब्दस्य अप्शब्दस्य च परमात्मपरत्ववर्णनमेवालम्। न त्वन्नशब्दस्यापि तथात्ववर्णनं, तत्रेक्षणाद्यश्रवणात्। अथाप्यब्रह्मात्मकस्य स्वतन्त्रस्यैवान्नस्य तदुपरि निर्दिष्टकार्यहेतुत्वशङ्का कस्यचिन्मन्दधियस्स्या-दिति तन्निराकरणाय **तेजोऽबन्नानामि**त्यविशेषेण भाषितम्। ननूक्तस्थलयोश्चेतनासाधारणेक्षणादिलिङ्गदर्शनेन परमात्म-परत्वस्य युक्तत्वेऽपि अन्नस्य परमात्मपरत्वाभ्युपगमः कुत इति चेन्न। 'सदेवेदमि'ति ब्रह्मतत्कार्ययोस्सामानाधिकरण्य-निर्देशाद्ब्रह्मविज्ञानेन सर्वकार्यवर्गविज्ञाननिर्देशाच्च तस्यापि तत्परत्वाभ्युपगमावश्यकत्वात्। पूर्वोऽपिः कार्त्स्न्येन ब्रह्मात्म-कत्वप्रदर्शनार्थः। उत्तरस्तु सच्चब्दसमुच्चायकः। **परमात्मन एव वाचकाः** = तत्तच्छरीरपरमात्मवाचका इत्यर्थः। एवं सतः सर्वं प्रत्यात्मत्वोपदेशेन सर्वत्रानुप्रवेशसिद्धिरिति तेज आदिशब्दानां परमात्मपर्यन्तत्वमुक्तम्।

अथ तस्यामेवोपनिषदि कण्ठरवेणानुप्रेवशस्य परमात्मनस्तत्तच्छब्दवाच्यत्वस्य चोक्तत्वादपि तदभ्युपेत्यमि-त्याह - **तथेति**। **हि**शब्दः श्रुतिप्रसिध्यर्थकः। वस्तुत्वं = तत्तद्रूपत्वम्। तेजसो वस्तुत्वं = तेजस्त्वं, तत्तदवस्थाभाक्त्व-मिति यावत्। एवमेवापां वस्तुत्वम्। नामभाक्त्वं = नामवाच्यत्वम्। ईक्षणव्यपदेशस्य मुख्यत्वमुपसंहरति - **इतीति**। अत इत्यर्थः। एवमीक्षणस्य मुख्यत्वोपपादनाद्गौणत्वशङ्कैवानुपपन्नेति निगमयति - **अत** इति। अपिशब्दो हेतुसमुच्चयपरः। 'सदेवेदम्' इतीदंशब्दनिर्देशेन तद्वाच्यजगत्कारणत्वादिनिबन्धनगौणत्वशङ्कापि निरस्तेत्यर्थः। 'ऐतदात्म्यमिदं सर्वमि'ति सर्वं प्रत्यात्मत्वोपदेशाद्गौणेक्षणसाहचार्यासिद्धेश्च दूरोत्सारिता इत्यर्थः। **सूत्रकाराभिप्राय** इति। 'आत्मशब्दादि'ति हि सूत्रितम्। आत्मत्वोपदेशस्य परमात्मनस्तत्प्रयुक्ततत्तच्छब्दवाच्यत्वसिध्या गौणेक्षणसाहचर्याभावस्य च ग्रहण-सम्भवादिति भावः ॥

उत्तरसूत्रमवतारयति - **इतश्चेति**। वक्ष्यमाणहेतोश्चेत्यर्थः। उत्तरसूत्रस्य गौणत्वशङ्कानिराकरणार्थत्वशङ्काव्यु-दासायाह - **न प्रधानं सच्छब्दप्रतिपाद्यमिति**।

## तन्निष्ठस्य मोक्षोपदेशात् १ । २ । ७ ॥

**मुमुक्षोः श्वेतकेतोः, 'तत्त्वमसि' इति सदात्मकत्वानुसन्धानमुपदिश्य, तन्निष्ठस्य, 'तस्य तावदेव चिरम्, यावन्न विमोक्ष्ये। अथ सम्पत्स्ये' इति शरीरपातमात्रान्तरायो ब्रह्मसंपत्तिलक्षणो मोक्ष इत्युपदिशति। यदि च प्रधानमचेतनं कारणमुपदिश्येत, तदा तदात्मकत्वानुसन्धानस्य मोक्षसाधनत्वोपदेशो नोपपद्यते(द्येत)।** (छां. ३-१४-१) **'यथाक्रतुरस्मिँल्लोके पुरुषो भवति, तथेतः प्रेत्य भवति' इति तन्निष्ठस्याचेतनसम्पत्तिरेव स्यात्। न च मातापितृसहस्रेभ्योऽपि वत्सलतरं शास्त्रमेवंविधतापत्रयाभिहतिहेतुभूतामचित्सम्पत्तिमुपदिशति।**

---

सूत्रतात्पर्यमाह - **मुमुक्षोरिति** । अत्र **मुमुक्षोरि**त्यादिना **तन्निष्ठस्ये**त्यन्तेन 'तस्य तावदेवे'त्यत्र **तस्येति** पदस्य **तन्निष्ठस्येति** सूत्रखण्डेन व्याख्यानं कृतमिति दर्शितम् । **सदात्मकत्वमि**त्यनेन 'तत्त्वमसी'त्यत्र तच्छब्दार्थो विवृतः । अनुसन्धानशब्देन सूत्रस्थ**निष्ठा**शब्दोव्याख्यातः । 'श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति श्रुत्यन्तरैकार्थ्यापन्ने 'येनाश्रुतमि'त्यादौ ध्यानार्थकविज्ञातशब्दप्रयोगादुपसंहारे विजज्ञावित्यावर्त्तितस्य पदस्य श्रवणात् । 'आचार्यवान् पुरुषो वेद' इत्याचार्योपदिष्टार्थस्यानुसन्धेयत्वलिङ्गस्याचार्यवत्ताफलत्वेन प्रतिपादितार्थविशेषवेदनवचनस्य श्रवणाच्च 'तत्त्वमसी'त्युपदेशस्यानुसन्धानरूपत्वं सिद्धमित्यभिप्रेत्योक्तं - **अनुसन्धानमुपदिश्येति** । अत्र सदात्मकत्वानुसन्धानस्य दृष्टिविधित्वशङ्कानिराकरणायोक्तं - **शरीरपातमात्रान्तरायो ब्रह्मसम्पत्तिलक्षणो मोक्ष** इति । दृष्टिविधेरर्वाचीनफलकत्वेन प्रकृष्टमोक्षफलत्वं न भवति । 'स आत्मा तत्वमसी'ति वाक्यपर्यालोचनया चेतनेऽचेतनात्मकत्वानुसन्धानस्यैव वक्तव्यत्वेनापकृष्टे उत्कृष्टविधिसम्भवेपि, उत्कृष्टेऽपकृष्टविध्यसम्भवाद्दृष्टिविधित्वमपि न सम्भवतीति भावः ।

मोक्षस्यावध्यपेक्षत्वात्, 'अथ यदास्य वाङ्मनसि', 'अस्माच्छरीरात्समुत्थाय', 'धूत्वा शरीरमि'त्यादि श्रुत्यन्तरैकार्थ्याच्च विमोक्ष्ये इत्यस्य शरीराद्विमोक्ष इत्यर्थो युक्त इत्यभिसन्धायोक्तं - **शरीरपातेति** । 'तदा सोम्य सता संपन्नो भवती'ति श्रुतिमुपजीव्य सम्पत्स्ये इत्यर्थमाह - **ब्रह्मसम्पत्तीति** । अस्तु सदात्मकत्वानुसन्धाननिष्टस्य तीर्थयात्रादिवत् मोक्षोपयोगित्वसम्भवेन कथं तदुपदेशस्यानुपपन्नत्वमित्यत्राह - **यथा क्रतुरिति** । क्रतुशब्द उपासनपरः, 'सक्रतुं कुर्वीते'ति श्रवणात् । यथा क्रतुर्यस्य स इत्यर्थः । इह यादृशोपासनवान्, यादृशगुणविशिष्ट ब्रह्मोपासकः पुरुषः, तादृशोपासनानुरूपफलभाक् भवतीत्यर्थः । तथा च हेयभूतप्रधानोपासने हेयप्राप्तिस्स्यादिति भावः ।

ननु हेयोपासनेऽप्याकारान्तरवर्जननिषेधस्य सिद्धान्तसिद्धत्वेनोपासनाविषयसमीचीनार्थप्राप्तिः कुतो न भवति । न च 'ते यथा यथोपासने तथैव भवती'ति परमात्मोपासने एवाकारान्तरवर्जननिषेधः नान्यत्रेति शङ्क्यम् । तथा सति यथाक्रतुन्यायमादाय हेयोपासनानुरूपहेयप्राप्तिरूपदूषणकथनानुपपत्ते इति चेन्न । प्राप्तावुपासनस्याबहिष्कारनियमेन तदविरुद्धानामपेक्षितानामेव च प्राप्तिसम्भवेनात्र च हेयोपासनाद्धेयप्राप्तेर्दुस्त्यजत्वात्तस्याश्च संसारित्वरूपत्वात् तद्विरुद्धमोक्षादिलाभाप्रसक्तेः । इदमभिसन्धायैवाचेतन सम्पत्तिरेव स्यादित्यवधारणं निर्दिष्टम् । अचेतनसम्पत्तिः = अचित्प्राप्तिः, संसारित्वमिति यावत् । न च तदिष्टम् । अन्यथा शास्त्रस्य प्रयोजनपर्यवसायित्वाभावेनोपेदशस्यैव वैयर्थ्यं स्यादिति भावः । न केवलं वैयर्थ्यं, उपदेशोप्यनुपपन्न इत्याह - **न चेति** । **मातापितृसहस्रेभ्य** इति शास्त्रस्य वत्सलतरत्वेऽसंभावितोदाहरणम् । कस्यचिदेकस्मिन् जन्मनि मातापितृसहस्रसत्वे तस्य विषये तेषां यादृशं वात्सल्यं स्यात्तदपेक्षयापि शास्त्रं वत्सलतरमित्यर्थः ।

यद्वा, मातापित्रोरेकस्मिन्जन्मनि ऐहिकमात्रपोषणपरत्वमेव शास्त्रस्यत्वनेकजन्मसु ऐहिकामुष्मिकसर्वविधफल प्रदत्वमित्यभिप्रेत्यैवमुक्तम्। **तापत्रयहेतुभूतामि**त्यनेन शास्त्रस्य प्रयोजनपर्यवसायित्वाभाव उक्तः। एवं न्यायविरोधात्

**प्रधानकारणवादिनोऽपि हि प्रधाननिष्ठस्य मोक्षं नाभ्युपगच्छन्ति ॥ ७ ॥**

**इतश्च न प्रधानम् -**

**हेयत्वावचनाच्च १। १। ८॥**

**यदि प्रधानमेव कारणं सच्छब्दाभिहितं भवेत्, तदा मुमुक्षोश्श्वेतकेतोस्तदात्मकत्वं मोक्षविरोधित्वात् हेयत्वेनैवोपदेश्यं स्यात्। न च तत्क्रियते। प्रत्युतोपादेयत्वेनैव, 'तत्त्वमसि', 'तस्य तावदेव चिरम्' इत्युपदिश्यते ॥८॥**

**इतश्च न प्रधानम् -**

**प्रतिज्ञाविरोधात् ।१।१।९॥**

**प्रधानकारणत्वे प्रतिज्ञाविरोधश्च भवति। वाक्योपक्रमे ह्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातम्। तच्च कार्यकारणयोरनन्यत्वेन कारणभूतसद्विज्ञानात्तत्कार्यभूतचेतनाचेतनप्रपञ्चस्य ज्ञाततयैवोपपादनीयम्। तत्तु प्रधानकारणत्वे चेतनवर्गस्य प्रधानकार्यत्वाभावात्प्रधानविज्ञानेन चेतनवर्गविज्ञानासिद्धेर्विरुद्ध्यते ॥ ९॥**

**इतश्च न प्रधानम् -**

---

शास्त्रप्रयोजनपर्यवसानाभावाच्च तीर्थयात्रादेरपि मोक्षोपयोगित्वं निषिद्धम्। अथ व्यक्ताव्यक्तज्ञविज्ञानादित्यनेन व्याधेरिव प्रधानस्य परिज्ञानमेव विवक्षितं,न तूपासनमिति सांख्येनापि प्रतिपादनात्प्रधानोपासनस्य मोक्षजनकत्वाभावोऽभ्युपगत इति, अत्रोपास्यत्वेनोक्तं न प्रधानं भवतुमर्हति। परन्तु ब्रह्मैवेत्यवश्यमङ्गीकार्यमित्याशयेनाह - **प्रधानकारणवादिनोपीति**। अनेन 'कारणं तु ध्येय' इति कारणास्योपास्यत्वमुक्तं, भवतां तु प्रधानस्य कारणत्वेपि ध्येयत्वं नाभ्युपगतमित्युपहास्यमेव भवन्मतमिति सूचितम्। एवं कारणत्वौपयिकेक्षणधर्मनिरूपणेन कारणवस्त्वसाधारणमोक्षप्रादत्वधर्मेण च परमात्मनः सच्छब्दवाच्यत्वं स्थापितम् ॥

उत्तरत्र सूत्रमवतारयति - **इतश्चेति**। सच्छब्दप्रतिपाद्यमित्यर्थसिद्धमित्यत्रानुक्तम्। तात्पर्यार्थमाह - **यदीति**। हेयत्वेनैवोपदेश्यं स्यादिति। अनेन 'तत्त्वमसी'ति सदात्मकत्वोपदेशः नानुसन्धानार्थः। किन्तु 'स्थूलोऽहमि'ति देहात्मभ्रमानुवादरूपः स इति हानार्थं तज्ज्ञानमपेक्षितमिति 'तत्त्वमसी'ति सदात्मकत्वोपदेशः कृत इति शङ्का निरस्ता। हानार्थतयोपदेशो हेयत्वोपदेशोऽऽवश्यकः, यथा "जहात्येनां भुक्तभोगामजोऽन्याः" इत्यादि प्रधानप्रस्तावे हेयत्वेनोपदेशः क्रियते। तद्वदत्रोपदेशाभावेन सदात्मकत्वोपदेशस्य हानार्थत्वकल्पनमयुक्तम्। नन्वत्र हेयत्वेनोपदेशाभावेऽपि अन्यत्र प्रधानप्रस्तावे तथोपदेशेनात्राप्यर्थतः सिद्धिरिति न दोष इत्यत्र प्रातिकूल्यं प्रदर्शयति - **प्रत्युतेति**। तथा चोपदेशस्य हानार्थत्वे उपादेयत्वेनोपदेशोऽनुपपन्नस्स्यादिति भावः। अत्र 'तन्निष्टस्य मोक्षोपदेश'रूपहेतोरन्यथासिद्धिशङ्कायां तत्परिहाररूपतया हेयत्वावचनरूपहेतुः प्रवृत्त इत्यनयोरन्वयव्यतिरेकमुखेनैकहेतुत्वबोधनाय सूत्रे चशब्दः प्रयुक्तः। न चान्तिमसूत्रे इव प्रतिज्ञाविरोधादित्यादिषु चशब्दप्रयोगो दृश्यते। अत एव प्रत्युतोपादेयत्वेनैव 'तत्त्वमसि', 'तस्य तावदेव चिरमि'त्युपदिश्यते इति पूर्वसूत्रतात्पर्यनिगमनं कृतम् ॥

एवं कार्यकारणभावनिबन्धनेन एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानेन प्रधानस्य सच्छब्दवाच्यत्वं निरस्तम्। अथ तन्निबन्धनेनैव सुषुप्तौ जीवलयरूपहेतुना प्रधानस्य सच्छब्दवाच्यत्वं 'स्वाप्ययादि'ति सूत्रेण व्युदस्यत इत्यभिप्रायेणानन्तरसूत्रमवतारयति - **इतश्चेति**। 'सता सोम्य तदा सम्पन्नो भवति', 'स्वमपीतो भवति' इत्यत्र स्वशब्दस्य

## स्वाप्ययात् १।१।१० ॥

**तदेव सच्छब्दवाच्यं प्रकृत्याह,** (छां० ६-९-१) **'स्वप्नान्तं मे सोम्य विजानीहीति । यत्रैतत्पुरुषः स्वपिति नाम, सता सोम्य तदा सम्पन्नो भवति । स्वमपीतो भवति । तस्मादेनं स्वपितीत्याचक्षते । स्वं ह्यपीतो भवति' इति । सुषुप्तं जीवं सता सम्पन्नम्, स्वमपीतः स्वस्मिन्प्रलीन इति व्यपदिशति । प्रलयश्च - स्वकारणे लयः । न चाचेतनं प्रधानं चेतनस्य जीवस्य कारणं भवितुमर्हति । (स्वमपीतो भवति - आत्मानमेव जीवोऽपीतो भवतीत्यर्थः) । चिद्वस्तुशरीरकं तदात्मभूतं ब्रह्मैव जीवशबोदेनाभिधीयत इति नामरूपव्याकरणश्रुत्योक्तम् ।**

---

जीवपरत्वप्रतीत्या सच्छब्दस्यापि तत्समानविषयत्वशङ्कया अन्यपरत्वं स्यादिति शङ्कानिराकरणायोक्तं **तदेव सच्छब्दवाच्यं प्रकृत्याह** इति । **स्वप्नान्तं** = सुषुप्तिम् । 'यदा सुप्तस्स्वप्नं न कञ्चन पश्यती'ति श्रुतेः । **यत्र** = यदा, **एतत्पुरुषः** एषः पुरुषः । **नामे**ति प्रसिद्धौ । **सता सम्पन्नो भवति** - प्रकृतसदनुयोगिकलयप्रतियोगी भवति । **स्वमपीतः** स्वानुयोगिक-लयप्रयोजकधर्मवान्, **अपीतेः** - लयप्रयोजकादृष्टादिरूपधर्मार्थकत्वात् । **तस्मात्** = स्वानुयोगिकलयप्रयोजकधर्मप्रयुक्त-प्रकृतसदनुयोगिकलयप्रतियोगित्वात् ।

न चात्रकार्यकारणयोरैक्यं शङ्क्यम्, आचक्षत इति व्यवहारस्य साध्यत्वात् । अत्र सत्सम्पत्तिस्वाप्ययौ न प्रकृतिसंसर्गस्वस्वरूपावस्थानरूपाविति सूचनाय - **स्वस्मिन्प्रलीन इती**त्युक्तम् । **सते**ति तृतीयान्तस्य **स्वमि**ति द्वितीयान्तस्य च श्रवणेपि 'सति सम्पद्य' इति श्रुत्यन्तरमालोच्य फलतः 'स्वस्मिन्' इति सप्तम्यन्ततया निर्दिष्टम् । **सता स्वमि**ति निर्देशस्तु धातुस्वभावभेदमादाय । प्रज्ञेनात्मना सम्परिष्वक्त इतिवदत्रापि 'सता सम्पन्न' इत्युक्तम् । **सम्पन्न** इति कर्मणि निष्ठा । सतः कर्तृत्वविक्षया तृतीयानिर्देशः । ब्रह्मैव सन् ब्रह्माप्येति, इतिवत् । **स्वमपीत** इति द्वितीया । धात्वर्थतावच्छेदकलयस्य फलाश्रयत्वेन कर्मत्वसम्भवात् । **प्रलीन** इत्यनेन सम्पत्त्यप्ययशब्दयोरेकार्थाकत्वमुक्तं भवति । **स्वस्मिन्नि**त्यनेन स्वसच्छब्दयोरैकार्थ्यं चोक्तम् । अयं भावः - सम्पत्त्यप्ययशब्दौ स्वारस्यात्प्रलयपराविति-विवादम् । 'अथैतदपियन्त्यन्ततः ब्रह्मात्येति' इत्यादिश्रुतिभिर्ब्रह्मणो लयस्थानत्वञ्चोक्तम्, अत अत्र सम्पत्तिस्थानत्वेना-प्ययस्थानत्वेन चोक्तः सच्छब्दवाच्यः स्वंशब्दवाच्यश्च परमात्मैवेति ॥

नन्वस्तु स्वसच्छब्दयोरैकार्थ्यं, सम्पत्त्यप्ययशब्दयोरप्यैकार्थ्यम्, अथापि स्वसच्छब्दयोः प्रधानपरत्वं किं न स्यात् । न च स्वशब्देन कथं प्रधानपरामर्शः इति वाच्यं, तस्य स्वीयपरत्वेन तत्परामर्शसम्भवादित्यत्राह - **प्रलयश्चे**ति । **स्वकारणे लयः** = कार्यत्वरूपविसदृशावस्थाप्रहाणेन कारणान्तर्भावस्यैव लयत्वादिति भावः । ननु लयस्यैवंरूपत्वेपि प्रधान एव चेतनस्य लयः कुतो न सम्भवतीत्यत्राह - **न चे**ति । **अचेतनमि**ति हेतुगर्भविशेषणम् । ननु **स्वमपीत** इत्यत्र स्वशब्देन कथं परमात्मनो बोधनम् । 'चैत्रः स्वपुत्रं पश्यती'त्यादौ स्वपदस्य स्वसमभिव्याहृतक्रियाकर्तरि शक्तत्वदर्शनेन प्रकृते स्वापकर्तुः पुरुषस्यैव ग्रहणसम्भवात् । अतः स्वसच्छब्दयो रेकविषयत्वन्न सम्भवति । एवं जीवस्य नित्यत्वेन परमात्मनस्तद्विलक्षणत्वेन तत्कारणत्वायोगेन च कारणे लय प्रतिपादनमप्यनुपपन्नमित्यत्राह - **स्वमपीतो भवती**ति । **आत्मानमेव** परमात्मानमेवेत्यर्थः । ननु कथं जीववाचकत्व शब्दस्य परमात्मपरत्वमित्यत्राह - **चिदि**ति ॥

अयमभिप्रायः - **स्वमपीत** इत्यत्र **स्व**शब्दस्य जीवमात्रपरत्वं न युक्तम् । **ब्रह्माप्येति** इति ब्रह्मणोऽन्यत्राप्ययस्थान-त्वोक्तेः । नापि ब्रह्ममात्रपरत्वं कार्यस्योपदाने एव लयस्य वक्तव्यतया निष्कृष्टब्रह्मणश्च निर्विकारत्वेनोपादानत्वासम्भवेन लयस्थानत्वानुपपत्तेः । अतो नामरूपव्याकरणश्रुत्या जीववाचिनोपि स्वशब्दस्य जीवशरीरकपरमात्मपरत्वमेव वक्तव्यम् । तत्र च सर्वदा जीवविशिष्टस्य परमात्मन एवावस्थाविशेषरूपकार्यकारणाभावभ्युपगमात्तस्मिन् जीवस्य लयोप्युपपन्नः ।

**तत् जीवशब्दाभिधेयं ब्रह्म सुषुप्तिकालेऽपि प्रलयकाल इव नामरूपपरिष्वङ्गाभावात्केवलसच्छब्दाभिधेयमिति, 'सता सोम्य तदा संपन्नो भवति; स्वमपीतो भवति' इत्युच्यते। तथा समानप्रकरणे नामरूपपरिष्वङ्गाभावेन प्राज्ञेव परिष्वङ्गात्,** (बृ० ६--३-२१) **'प्राज्ञेनाऽऽत्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्' इत्युच्यते। आमोक्षाज्जीवस्य नामरूपपरिष्वङ्गादेव हि स्वव्यतिरिक्तविषयज्ञानोदयः।**

---

लयो नामरूपाद्यौपाधिकाकाराभिमानविरहितजीववैशिष्ट्यमेव। तादृशाभिमानवज्जीवविशिष्टता तु कार्यावस्था। उक्त-कार्यावस्थाप्रहाण एव सुषुप्तौ ब्रह्मणि जीवस्य लयः। अतस्स्वशब्दस्य विशिष्टब्रह्मपरत्वं, जीवस्य तस्मिल्लँयादि चोपपन्नम्।.

एवं लयोपपादनमन्येषां न सम्भवति। अद्वैतिभिर्हि शुक्तौ रजतस्येव ब्रह्मणि लयो वक्तव्यः। तथा सति रजतस्येव जीवस्यपि सुषुप्तावेव स्वरूपनिवृत्तिस्स्यात्। एवं महाकाशे घटाद्युपाधिनाशेन घटाकाशस्येव लयोप्यनुपपन्नः। देहाद्युपाधेस्सत्वेन तदसम्भवात्। नापि क्षितितले घटत्वप्रहाणेन घटस्येव लयः, तथा सति जीवत्वप्रहाणप्रसङ्गात्। न चेष्टापत्तिः, जीवनित्यत्वश्रुतिविरोधात्। उपाधेस्सत्त्वेन जीवत्वप्रहाणासम्भवाच्च तवाभिमतस्याऽऽमोक्षस्थायित्वस्या-प्यनुपपत्तेः। एवं स्वापमात्रेण जीवत्वनिवृत्तौ मोक्षोपायविध्यादिवैयर्थ्यश्च। अकृताभ्यागमादिप्रसङ्गश्च। तदिदमभिप्रेत्यैव 'स एव तु कर्मानुस्मृतिशब्दविधिभ्य' इति सूत्रकारो वक्ष्यति। अतः 'प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमि'ति स्वापे युगपदज्ञत्वसर्वज्ञत्वाभ्यां भेदेनोपदेशाज्जीवत्वे स्थिते एव ब्रह्मणि जीवस्य लयो वक्तव्यः। स च चिदचिदच्छरीकब्रह्मण एव कार्यत्वकारणत्वाभ्युपगन्तृणामेव युक्त उपपादयितुमिति॥

ननु 'सता सोम्ये'त्यत्र कथं सच्छब्देन ब्रह्मपरामर्शसम्भवः। 'सदेवे'त्यादावविभक्तनामरूपब्रह्मणः केवलसच्छब्द-वाच्यत्वेपि सृष्ट्यन्तरम् चेतनाचेतनयोः नामरूपपरिष्वङ्गेन विभक्तनामरूपस्य ब्रह्मणः सुषुप्तिदशायां लयस्थानत्वेनोक्तस्य केवलसच्छब्दवाच्यत्वासम्भवादित्यत्राह - **तदिति**। **नामरूपपरिष्वङ्गाभावादि**ति। जीवस्येत्यादिः। जीवस्य नामरूप-परिष्वङ्गाभावो नाम देवमनुष्यादिनामरूपरागद्वेषलोभमोहाद्यौपयिकबाह्यान्तराभिमानकालुष्याभावः। अयञ्च प्रलये, सुषुप्तौ च समानः। जागरितावस्थायां तु नैतादृशाभिमानाभाव इति भावः।

नन्वेवं सति स्वापदेशायां देहस्य जीवं प्रत्यपृथक्सिद्धिः, ज्ञानेन तदा धारणाभावेन चैतन्यप्रयुक्तधारणवत्त्वरूप-देहलक्षणञ्च कथमुपपद्यते इति चेन्न। सुषुप्तिदशायामपि प्रलयकाले इव जीवेन देहापरित्यागादपृथक्सिध्युपपत्तेः। तदानीमपि सङ्कल्पेन धारणयोग्यात्वा त्ल्लक्षणोपपत्तेश्च। प्रलये तु न सङ्कल्पप्रयुक्तधारणाश्रयत्वं सुषुप्तौ तु धारणस्वरूप-योग्यत्वमस्तीति विशेषः। धारणस्वरूपयोग्यत्वञ्च चैतन्यप्रयुक्तव्यापारजनकतावच्छेदकधर्मवत्वम्। जनकतावच्छेदक-धर्मश्च प्राणनवत्वरूपः इति ध्येयम्॥ सुषुप्तौ जीवस्य न नामरूपपरिष्वङ्गः किन्तु प्राज्ञपरिष्वङ्ग एवेत्यत्र श्रुत्यन्तरमुदाहरति - **तथेति**।

ननूक्तश्रुत्या जीवस्य स्वापे प्राज्ञपरिष्वङ्गलाभेपि नामरूपपरिष्वङ्गाभावः कथमुच्यत इत्यत्र 'न बाह्यं किञ्चन वेद नान्तरं' इत्यनेन सत्सिद्धिरित्यभिप्रेत्याह - **आमोक्षादिति**। नामरूपपरिष्वङ्गाभावेपि स्वव्यतिरिक्तविषयकज्ञानस्यापि सत्वेन तद्व्यावृत्यर्थम् - **आमोक्षादित्युक्तम्**।

ननु जीवस्य नामरूपपरिष्वङ्गो ह्यवस्थान्तरप्राप्तिः, स च मोक्षेप्यस्ति। तत्रेशितव्यत्वाद्यवस्थासत्वात्। अतः **कथं मोक्षे नामरूपपरिष्वङ्गाभावः? मैवम्, आगन्तुकापृथक्सिद्धधर्मस्यैवावस्थारूपत्वेनेशितव्यत्वादीनां जीवगतानां नित्यत्वेनावस्थात्वाभावात्। एवं स्वापे जीवस्य नामरूपपरिष्ङ्गाभावे श्रुत्यर्थापत्तिः दर्शिता। अथ तत्र साक्षात्श्रुतिरेवा-**

**सुषुप्तिकाले हि नामरूपे विहाय सता सम्परिष्वक्तः पुनरपि जागरदशायां नामरूपे परिष्वज्य तत्तन्नामरूपो भवतीति श्रुत्यन्तरे स्पष्टमभिधीयते,** (कौ.३-३०) **'...सुप्तः स्वप्नं न कथञ्चन पश्यति, अथास्मिन् प्राण एवैकधा भवति...' 'एतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते', तथा** (छा.६-९) **'त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा...दंशो वा मशको वा यद्यद्भवन्ति तत् आभवन्ति' - इति च ।**

**तथा सुषुप्तं जीवम्,** (बृ.६-३-२१) **'प्राज्ञेनात्मना सम्परिष्वक्तः' इति च वदति । तस्मात्सच्छब्दवाच्यः परं ब्रह्म सर्वज्ञः परमेश्वरः पुरुषोत्तम एव । तदाह वृत्तिकारः,** '(छा.६-८-१) **सता सोम्य तदा सम्पन्नो भवति इति, सम्पत्यसम्पत्तिभ्यामेतदध्यवसीयते । प्राज्ञेनात्मना सम्परिष्वक्त इति चाह' इति ॥ १० ॥**

**इतश्च न प्रधानम् -**

**गतिसामान्यात् १।१।११॥**

(ऐत. १-१) **'आत्मा वा इदमेक एवाग्र आसीत् ; नान्यत् किञ्चन मिषत् । स ईक्षत लोकान्नु सृजा इति । स इमाँल्लोकानसृजत',** (तै.आनं.) **'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी',** (बृ.४-४-१०) **'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः' इत्यादिसृष्टिवाक्यानां या गतिः प्रवृत्तिः ; तत्सामान्यात्तत्समानार्थत्वादस्य । तेषु च सर्वेषु सर्वेश्वरः कारण-मवगम्यते; तस्मादत्रापि सर्वेश्वर एव कारणमिति निश्चीयते ॥ ११ ॥**

---

स्तीत्यभिप्रेत्याह - **सुषुप्तिकाले हीति** । **प्राणे** - परमात्मनि । उक्तसद्विद्यायामेव सदृशश्रुतिरस्तीत्याह - **तथेति** ॥

ननु 'सता सोम्य तदा संपन्नो भवती'त्यत्र स्थूलावस्थस्य स्वस्य स्वकारणे सूक्ष्मावस्थे स्वस्मिन्नेव लयो बोध्यते इति न सच्छब्दस्य परमात्मपरत्वं युक्तमित्यत्राह - **तथा सुषुप्तमिति** । 'प्राज्ञेने'ति श्रुत्यन्तरे स्वापदशायां जीवात्मनः प्राज्ञे लयोक्त्या तदैकार्थ्यायात्रापि ब्रह्मण्येव लयोऽभ्युपेत्य इति लयस्थानत्वेनोक्तः परमात्मैव सच्छब्दवाच्य इति भावः । इदमुपलक्षणं - लयस्तावत्कारणे वक्तव्यः । कारणञ्च न सूक्ष्मावस्थो जीवः, कारणस्य 'तदैक्षत' इत्याद्यु-क्तेक्षणाद्यवश्यकत्वेन देहेन्द्रियाद्यनपेक्षेक्षणस्य तस्मिन्नसम्भवात् । देहेन्द्रियाणामितः परमेव सृज्यत्वादिति । उपसंहरति - **तस्मादिति** । **परं ब्रह्मे**त्यनेन प्रधानव्यावृत्तिः । **सर्वज्ञ** इत्यनेन जीवव्यावृत्तिः । **परमेश्वर** इत्यनेन ईश्वरोत्तीर्णतत्त्व-व्युदासः । **पुरुषोत्तम**शब्देन देवताविशेषनिर्णयः । अर्थादनेन सुषुप्तपुरुषवैलक्षण्यं दर्शितम् । अथ साम्प्रदायिकत्वसिध्यै आह - **तदाहेति** । **इतीति** श्रुतिप्रतीकधारणम् । **सम्पत्यसम्पात्तिभ्यामिति** । 'सति सम्पद्य न विदुः सति सम्पद्यामह इति, सत आगम्य न विदुस्सत आगच्छामह इति' इति सम्पत्तिनिर्गमयोरुक्तत्वादिति भावः । यद्वा - सम्पत्तिः = परमात्मनि सम्पत्तिः, असम्पत्तिरन्यत्र, आभ्यामित्यर्थः । 'स्वाप्ययादि'ति सूत्रकर्तुरसम्पत्तिरपि विवक्षितेत्याशयः । **एतत्** = परब्रह्मकारणकत्वम् । वाक्यकारोक्तं श्रुत्यन्तरमाह - **प्राज्ञेनेति** । इति च श्रुतिराहेत्यर्थः । **इति तदाह वृत्तिकार** इत्यन्वयः ॥

केषां गतिः तत्सामान्यञ्च किमित्यत्र तात्पर्यं पूरयन्नर्थमाह - **आत्मेति** । गतिशब्दस्यार्थमाह - **प्रवृत्तिरिति** । प्रवृत्तिः = बोधनम् । **सामान्यं** = समानत्वम् । तच्चार्थद्वारकमित्यभिप्रेत्याह - **तत्समानार्थत्वादिति** । एवं सूत्रार्थो वर्णितः । अथ तात्पर्यमाह - **तेषु चेति** । प्रकृतमुपसंहरति - **तस्मादिति** । अयं भावः - उपनिषदन्तरकारणवाक्येषु सर्वेश्वरस्यैव कारणत्वबोधेन 'सदेवे'त्यादिरपि कारणवाक्यत्वाविशेषादुपनिषदन्तरोक्तब्रह्मकारणत्वमेव बोधयेत् । अन्यथा

**इतश्च न प्रधानम् -**

**श्रुतत्वाच्च १।१।१२॥**

**श्रुतमेव ह्यस्यामुपनिषदि अस्य सच्छब्दवाच्यस्य आत्मत्वेन नामरूपयोर्व्याकर्तृत्वं सर्वज्ञत्वं सर्वशक्तित्वं सर्वाधारत्वमपहतपाप्मत्वादिकं सत्यकामत्वं सत्यसङ्कल्पत्वञ्च - 'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि', 'सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्यप्रतिष्ठाः', 'ऐतदात्म्यमिदं सर्वम्। तत्सत्यम्। स आत्मा',** (छा. ८-१, २-५) **'यच्चास्येहास्ति यच्च नास्ति, सर्वं तदास्मिन्समाहितम् । ... अस्मिन् कामाः समाहिताः; एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः' इति। तथा च श्रुत्यन्तराणि -** (श्वे. ५-६) **' न तस्य कश्चित्पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम्। स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः',** (पु. सू.) **'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते',** (तै. आर. ३-११-२१) **'अन्तः प्रविष्टः शास्ता जनानाँ सर्वात्मा',** (तै.ना.) **'विश्वस्याऽऽत्मेश्वरम्...यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः**

---

कारणवाक्यानां वैरूप्यापत्तेः । न हि कारणद्वितयं भवदभिमतमिति । नन्वितरकारणवाक्यानां हवैशब्दघटितत्वेनानुवादरूपत्वात्सद्विद्यायाश्च तत्पुरोवादरूपत्वात्तदनुरोधेनैवेतरकारणवाक्यानामर्थवर्णनमेव युक्तमिति चेन्न कारणत्वानुवादकवाक्यानां कारणत्वांशे कारणत्वविधायकवाक्यानुरोधित्वांवश्यकत्वेपि कारणगतचेतनवाचित्वादिधर्मांशे तदनुरोधित्वस्यानवश्यकत्वेनान्यांशे एतदनुरोधित्वेप्यदोषात् ॥

एवमुपनिषदन्तरसाम्यादस्या उपनिषदः प्रधानकारणप्रतिपादकत्वाभाव उक्तः। अथास्यामेवोपनिषदि सर्वेश्वरकारणत्वस्य स्पष्टं प्रतीत्या प्रधानकारणत्वाभावो निश्चीयत इत्यभिप्रायेणोत्तरसूत्रप्रवृत्तिरित्याशयेनावतारयति - **इतश्चेति**। आत्मत्वेन नामरूपव्याकर्तृत्वं, 'अनेन जीवेने'त्यनेन दर्शितम्। सर्वज्ञत्वं सर्वशक्तित्वञ्च 'सन्मूला' इत्यनेन सूचितम्। कारणत्वेन तदाक्षेपात्। **सदायतना** इत्यनेन सर्वाधारत्वम्। **सत्प्रतिष्ठा** इत्यनेन धारकत्वञ्चात्मत्वे सूचनाय **ऐतदात्म्यमि**त्याद्युपात्तम्। **यच्चे**त्यादिनापि सर्वाधारत्वं स्फुटम्। अस्योपासकस्य इह लोके यद्भोग्यजातं, यच्च नास्ति = मनोरथमात्रविषयः तत्सर्वं समाहितमित्यर्थः। अनेन सत्यकामत्वं वा स्फुटम्। **अपिपास** इत्यन्तेनापहतपाप्मत्वादिकमुक्तम्। अत एवादिशब्दोपा-दानम्। कल्याणगुणवत्वस्फुटीकरणाय **सत्यकामत्वं सत्यसङ्कल्पत्वञ्च** पृथगुपात्तम्।

एवं सूत्रार्थस्समापितः। अथाधिकरणोपसंहारव्याजेन श्रुत्यन्तरेषु कारणगतत्वेनोक्तानां धर्माणां प्रधानेऽसम्भवात् तदाश्रययोग्यः परमपुरुष एव जगत्कारणं भवितुमर्हतीति प्रदर्शयति - **तथा** चेति। **श्रुतमेव ह्यस्यामेवोपनिषदि** इति पूर्वं भाषितत्वात्। **न तस्ये**त्यादिकं नैतत्सूत्रविषयवाक्यत्वेन निर्दिष्टम्। ननु तर्हि गतिसामान्यादिति पूर्वसूत्रविषयवाक्यत्वसम्भवात्तत्रैव किमिति नैतान्युपदर्शितानि इति चेन्न। तत्र सूत्रे सृष्टिवाक्यानामेवोपनिषदन्तर्गतानां विषयवाक्यत्वेन न तस्येत्यादेः सृष्टिवाक्यत्वाभावात्तत्राप्रदर्शनोपपत्तेः।

अत एव **सृष्टिवाक्यानां या गतिरि**ति भाषितम्। अत इदमधिकरणोपसंहारे स्वविवक्षितार्थकथनम्। एतदुपनिषत्सिद्धर्माणामसम्भवात्प्रधानस्य सच्छब्दप्रतिपाद्यत्वं न सम्भवतीत्युक्ते उपनिषदन्तरोक्तधर्माणामप्यसम्भवात् प्रधानस्य न जगत्करणत्वादिवाक्यप्रतिपाद्यत्वसम्भव इत्यस्य प्रसक्तत्वेनाऽविशेषेण श्रुतत्वाच्चेति सूत्रकर्तुः विवक्षितत्वसम्भवेनात्रोदाहृतम्। **लिङ्गं** = शरीरम्। **विचित्य** = कृत्वा। एवमेतदुपनिषदि उपनिषदन्तरेचोक्तानां धर्माणामसम्भवात्, न केवलं प्रधानस्य सच्छब्दमात्रप्रतिपाद्यत्वाभावः किन्तु जगत्कारणवादिवाक्यसामान्यप्रतिपाद्यत्वाभावः युक्त इत्युप-

**स्थितः',** (सुबा.७) **'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण' इत्यादीनि।**

**तस्माज्जगत्कारणवादिवाक्यं न प्रधानादिप्रतिपादनयोग्यम्। अतस्सर्वज्ञस्सर्वशक्तिस्सर्वेश्वरेश्वरो निरस्तनिखिलदोषगन्धोऽनवधिकातिशयाङ्क्ष्येयकल्याणगुणगणौघमहार्णवः पुरुषोत्तमो नारायण एव निखिलजगदेककारणं जिज्ञास्यं ब्रह्मेति स्थितम्। अत एव निर्विशेषचिन्मात्रब्रह्मवादोऽपि सूत्रकारेण आभिः श्रुतिभिर्निरस्तो वेदितव्यः; पारमार्थिकमुख्येक्षणादिगुणयोगि जिज्ञास्यं ब्रह्मेति स्थापनात्। निर्विशेषवादे हि साक्षित्वमप्यपारमार्थिकम्। वेदान्तवेद्यं ब्रह्म जिज्ञास्यतया प्रतिज्ञातम्। तच्च चेतनमिति, 'ईक्षतेर्नाशब्दम्' इत्यादिभिः सूत्रैः प्रतिपाद्यते। चेतनत्वं नाम चैतन्यगुणयोगः। अत ईक्षणगुणविरहिणः प्रधानतुल्यत्वमेव। किञ्च - निर्विशेषप्रकाशमात्रब्रह्मवादे तस्य प्रकाशत्वमपि दुरुपपादम्। प्रकाशो हि नाम स्वस्य परस्य च व्यवहारयोग्यतामापादयन्वस्तुविशेषः। निर्विशेषस्य वस्तुनस्तदुभयरूपत्वाभावाद्धटादिवदचित्वमेव।**

---

संहरति - **तस्मादिति**। आदिपदेन निर्विशेषब्रह्मणोग्रहणम्। एवं प्रधानस्य कारणत्वाभावेन कारणभूतब्रह्मणो जिज्ञास्यत्वं युक्तमिति निगमयति - **अत** इति। ओघशब्दः प्रवाहपरः॥

प्रसङ्गाद्ब्रह्माज्ञानवादिनामुक्तसूत्राननुगुणत्वं जन्माद्यधिकरणप्रस्तावे प्रदर्शितमपि सम्प्रति विस्तरेण कथयितुं प्रतिजानीते - **अत एवेति**। **सूत्रकारेण आभिः श्रुतिभिरि**त्यनेन श्रुत्यनुगृहीतार्थविचाररूपमेव न्यायनिबन्धनात्मकं सूत्रं सूत्रकारः प्रणिनायेति सूत्रविरोधे श्रुतिविरोधोपि भवतीति सूचितम्। निरासे हेतुमाह - **पारमार्थिके**ति। ननु 'गौणश्चोन्नात्मशब्दादि'ति ईक्षणस्य मुख्यत्वस्थापनेपि पारमार्थिकत्वं कुत्र स्थापितमिति चेन्न, प्रधाननिरासकहेतुभूतैस्सर्वैस्सूत्रैरपि पारमार्थिकत्वस्यापि सूत्रकृदभिमतत्वप्रतीतेः। शुक्तित्वस्यापरमार्थत्वे तदनाश्रयरजतपारमार्थिकत्ववत् ईक्षणस्यापरमार्थत्वे तदनाश्रयप्रधानस्य कारणत्वसम्भवेन तदभिमतप्रधानसिध्देः तन्निरसनासम्भवात्। **गुणयोगी**त्यनेन सच्छब्दस्य संशयसहत्वेऽपि नानुपपत्तिरिति दर्शितम्॥

ननु 'तदैक्षत' इत्याद्युक्तमीक्षितृत्वं साक्षित्वरूपमेव नत्वीक्षणगुणयोगित्वम्। **ईक्षते**रिति सूत्रप्रतिपादितमपि तदेव। अत एव सूत्रकारेण 'ईक्षितेरि'त्यादि पदविन्यासं विना 'ईक्षतेरि'ति सूत्रितम्। अतश्च साक्षित्वरूपेण तेनापि प्रधानव्यावृत्तिस्सिध्यतीति न श्रुतिसूत्राननुगुणत्वमस्माकमित्यत्राह - **निर्विशेषवादे** हीति। **अपारमार्थिकमिति**। सच्छब्दार्थातिरेकेणान्यस्यापारमार्थिकत्वाद्भवतामिति भावः। अस्तु 'तदैक्षत' इत्याद्युक्तं साक्षित्वरूपम्। अथापि किं तत्परमार्थ उत न, आद्येऽपसिद्धान्तः। द्वितीये सांख्याभिमतनिरासः न सेत्स्यतीत्याशयः। **अपि**शब्देन ज्ञातृत्वाभावे साक्षित्वमपि दुरुपपादमिति प्रागुक्तं द्योतितम्। दूषणान्तरमाह - **वेदान्ते**ति। **वेदान्तवेद्य**मित्यनेनारोपिताकारवतस्तत्त्वावेदकप्रमाणविषयत्वं न सम्भवतीति सूचितम्। **जिज्ञास्यतया प्रतिज्ञातमि**त्यनेन तापत्रयातुराणामर्वाचीनब्रह्मणः जिज्ञास्यतया प्रतिज्ञानमनुपपन्नमिति द्योतितम्। **ईक्षणगुणविरहिणः** = चैतन्याभाववतः। **प्रधानतुल्यत्वमेवे**ति। अयं भावः - जिज्ञास्यब्रह्मण **ईक्षते**रित्यादिना चेतनत्वस्थापनाच्चैतन्यस्य च चिद्रूपमात्रत्वासम्भवेन गुणरूपत्वावश्यकत्वात् भवदभिमतब्रह्मणः निर्विशेषत्वेन चैतन्यगुणाश्रयत्वासम्भवात्प्रधानस्येव जिज्ञास्यत्वन्न सम्भवतीति।

ननु चैतन्यादिधर्माणां ब्रह्मस्वरूपत्वेन पारमार्थिकत्वान्न क्वचिदप्यस्वारस्यमिति चेन्न, स्वरूपातिरिक्तस्य प्रथममेव प्रतिपन्नत्वेन प्रतिपाद्यर्थाधिक्याभावेन 'ईक्षतेरि'त्यादिसूत्राणां वैयर्थ्यापत्तेः। ननु न प्रधानतुल्यत्वसम्भवः स्वरूपस्य भवदभिमतात्मधर्मभूतज्ञानस्येव प्रकाशत्वाभ्युपगमादित्यत्राह - **किञ्चे**ति। कुतो दुरुपपादमित्यत्राह - **प्रकाश** इति। **घटादिवदचित्त्वमेवे**ति। घटादेः स्वव्यवहारहेतुत्वपरव्यवहारहेतुत्वाभावादेव ह्यचित्त्वम्, एवं भवदभिमतवस्तुनोपि तथात्वा-

**तदुभयरूपत्वाभावेऽपि तत्क्षमत्वमस्तीति चेत् - तन्न । तत्क्षमत्वं हि तत्सामर्थ्यमेव । सामर्थ्यगुणयोगे हि निर्विशेषवादः परित्यक्तस्स्यात् ।**

**अथ श्रुतिप्रामाण्यादयमेको विशेषोऽभ्युपगम्यत इति चेत् - हन्त तर्हि तत एव सर्वज्ञता सर्वशक्तित्वं सर्वेश्वरेश्वरत्वं सर्वकल्याणगुणाकरत्वं सकलहेयप्रत्यनीकतेत्यादयस्सर्वेऽभ्युपगन्तव्याः । शक्तिमत्त्वञ्च कार्य-विशेषानुगुणत्वम्; तच्च कार्यविशेषैकनिरूपणीयम्; कार्यविशेषस्य निष्प्रमाणकत्वे तदेकनिरूपणीयं शक्तिम-त्वमपि निष्प्रमाणकं स्यात् । किञ्च निर्विशेषवस्तुवादिनो वस्तुत्वमपि निष्प्रमाणम् । प्रत्यक्षानुमानागमस्वा-नुभवाः सविशेषगोचरा इति पूर्वमेवोक्तम् । तस्मात् 'विचित्रचेतनात्मकजगद्रूपेण बहु स्याम्' इतीक्षणक्षमः पुरुषोत्तम एव जिज्ञास्य इति सिद्धम् ।। १२ ।।**

।। इति ईक्षत्यधिकरणम् ।। ५ ।।

अथ आनन्दमयाधिकरणम् ।। ६ ।।

**एवं जिज्ञासितस्य ब्रह्मणः चेतनभोग्यभूतजडरूपसत्त्वरजस्तमोमयप्रधानाद्व्यावृत्तिरुक्ता । इदानीं कर्मवश्यात् त्रिगुणात्मकप्रकृतिसंसर्गनिमित्तनानाविधानन्तदुः खसागरनिमज्जनेनाशुद्धात्, शुद्धाच्च प्रत्यगात्मनोऽन्यन्निखिलहेयप्रत्यनीकनिरतिशयानन्दं ब्रह्मेति प्रतिपाद्यते -**

---

दचित्त्वमेव, तथात्वाभ्युपगमे तु निर्विशेषवादपरित्याग एव फलेदिति भावः । शङ्कते - **तदिति** । दूषयितुं तत्क्षमत्वं शिक्षयति - **तत्क्षमत्वमिति** । अगतिकस्वीकारोऽयमिति शङ्कते - **अथेति** । उपालम्भमुखेन दूषयति - **हन्तेति** । अस्तु वा श्रुतिप्रामाण्याविशेषे सत्यपि सर्वज्ञत्वादीनामनुभ्युपगमः, अथाप्यभ्युपगतं शक्तिमत्वं निष्प्रमाणकमेवेति दर्शयितुं शक्तिमत्वं शिक्षयति - **शक्तिमत्त्वमिति** । **कार्येति** । कार्योपयोगिकारणगतापृथक्सिद्धधर्मश्शक्तिरिति हि शास्त्रज्ञा इति भावः । **निष्प्रमाणकं स्यादिति** । निरूपकाभावेन निरूप्याभावादिति भावः । अथ भवदभिमतस्य वस्तुत्वमेव न सम्भवतीत्याह - **किञ्चेति** । तुच्छव्यावृत्तत्वन्न सम्भवतीति भावः । अत्र स्वानुभवग्रहणं परमताभ्युपगमात् । स्वमते तस्य प्रत्यक्षान्तर्भावात् । **पूर्वमेवोक्तमिति** । **निर्विशेषवस्तुवादिभिर्निर्विशेषे वस्तुनि 'इदं प्रमाणमि'ति न शक्यते वक्तुं, सविशेषवस्तुविषयत्वात्सर्वप्रमाणानामित्यत्रोक्तमिति** भावः । स्वमतमुपसंहरति - **तस्मादिति** । **जगद्रूपेण** इत्यन्तं **बहु** इत्यस्य विवरणम् ।।

ईक्षत्यधिकरणं समाप्तम् ।।

अथोत्तराधिकरणसङ्गतिमाह - **एवमिति** । 'अनीशये'तिश्रुतिमभिप्रेत्योक्तं **चेतनभोग्यभूतेति** । साङ्ख्यमते प्रधानस्य गुणत्रयरूपत्वेन तदभिप्रायेणोक्तं - **सत्त्वरजस्तमोमयेति** । स्वमतमभिसन्धाय **त्रिगुणात्मकेत्युक्तम्** । दुःखस्य नानाविधत्वं **विजातीयत्वम्** । **अनन्तत्वम्** एकजातीयस्यैवापरिमितत्वम् । अशुद्धव्यावृत्तिमभिप्रेत्योक्तं **निखिलहेयप्रत्य-नीकेति** । शुद्धव्यावृत्तिमभिप्रेत्य **निरतिशयानन्देति** । अयमभिप्रायः - जिज्ञास्यस्य प्रमेयवस्तुनः चेतनाचेतनवैलक्षण्यं हि वक्तव्यम् । तत्राचेतनस्य प्रत्यक्षादिसिद्धत्वेन पामराणामपि प्रसिद्ध्यतिशयात्परमात्मत्वशङ्कायामचेतनासम्भवे-क्षणादिगुणयोगेन तन्निवृत्तौ जातायां परमात्मापेक्षया प्रसिद्धतरस्य चेतनस्यैव जीवस्येक्षणादिगुणसम्भवेन परात्मत्व-शङ्कावतारात्तन्निराकरणमस्मिन्नधिकरणे क्रियत इति ।।

'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' इत्यादिकारणवाक्यान्युत्तरत्रोदाहरिष्यन्ते । तत्र प्रथमं संशयस्थल

## आनन्दमयोऽभ्यासात् १। १। १३ ॥

**तैत्तिरीया अधीयते** - (तै.१) **'स वा एष पुरुषोऽन्नरसमय' इति प्रकृत्य, 'तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्माऽऽनन्दमय' इति । तत्र सन्देहः - किमयमानन्दमयो बन्धमोक्षभागिनः प्रत्यगात्मनो जीवशब्दाभिलपनीयादन्यः परमात्मा, उत स एव - इति । किं युक्तम्? प्रत्यगात्मेति । कुतः? 'तस्यैष एव शारीर आत्मा' इत्यानन्दमयस्य शारीरत्वश्रवणात्; शारीरो हि शरीरसम्बन्धी जीवात्मा ॥**

**ननु च जगत्कारणतया प्रतिपादितस्य ब्रह्मणः सुखप्रतिपत्त्यर्थमन्नमयादीन्ननुक्रम्य तदेव जगत्कारणम्, आनन्दमय इत्युपदिशति ; जगत्कारणश्च,** (छा.६-२-३) **'तदैक्षत' इतीक्षणश्रवणात्सर्वज्ञस्सर्वेश्वर इत्युक्तम् । सत्यमुक्तम्; स तु जीवान्नातिरिच्यते ;** (छा. ६-३-२) **'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य',** (छा.६-८-७) **'तत्त्वमसि**

प्रदर्शनार्थं 'स वा' इत्याद्युपात्तम् । संशयं प्रदर्शयति - **तत्रेति** । शारीरत्वानन्दप्राचुर्याभ्यामत्र संशयोत्थितिः । 'अनेन जीवेनात्मनानुप्रविश्ये'ति कारणवस्तुनः जीवसामानाधिकरण्यनिर्देशात्, पूर्वपक्षोत्थितिरिति सूचनाय **जीवशब्दाभिलपनीयादिति** भाषितम् । **शारीरत्वश्रवणादिति** । नन्वानन्दमयविषये 'तस्यैष एव शारीर आत्मा' इति शारीरत्वश्रवणवत्प्राणमयमनोमयविज्ञानमयेष्वपि 'तस्यैष एव शारीर आत्मे'ति शारीरत्वश्रवणेन शारीरत्वहेतोः व्यभिचारित्वमिति आनन्दमयपदवाच्यस्य जीवत्वसाधनं न सम्भवतीति चेन्न, शरीरसम्बन्धित्वप्रयुक्तसुखदुःखभागित्वस्य हेतूकरणेन तस्यचाव्यभिचरितत्वेन जीवत्वसाधनसम्भवात् । एतदभिप्रायेण हि **बन्धमोक्षभागिन** इति भाषितम् ।

अथ पूर्वाधिकरणनिर्णीतार्थबलेनैवैतदधिकरणानुत्थितिमाशङ्कते - **ननु चेति** । **सुखप्रतिपत्त्यर्थमि**त्यादिना जगत्कारणप्रकरणाविच्छेदः सूचितः । अत्र जगत्कारणत्वं निरतिशयानन्दस्याश्रयत्वोपपादकम् । अयं भावः - 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्युक्तस्य ब्रह्मणः 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूत' इत्यादिना जगत्कारणत्वं प्रतिपाद्यात्मत्वेन निर्दिष्टस्य तस्य स्थूणारुन्धतीन्यायेन स्वरूपं सुखेन दर्शयितुं 'स वा एष पुरुषो ऽन्नरसमयः', 'तस्माद्वा एतस्मादन्नरसमयात् । अन्योऽन्तर आत्मा प्राणमयः, तस्माद्वा एतस्मात्प्राणमयादन्योऽन्तर आत्मा मनोमयः तस्माद्वा एतस्मान्मनोमयादन्योऽन्तर आत्मा विज्ञानमय' इत्यन्नरसमयप्राणमयमनोमयविज्ञानमयान् बुद्ध्यवतरणक्रमेण निर्दिश्य 'तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मा आनन्दमय' इति जगत्कारणमात्मभूतं वस्तु आनन्दमय इति समापितम् । अत आनन्दमयपदवाच्यमेव जगत्कारणं वस्त्वित्वत्यभ्युपेत्यमिति ।

नन्वस्तु जगत्कारणत्वमानन्दमयपदवाच्यस्य, तावता जीवत्वपूर्वपक्षस्य काऽनुपपत्तिरित्यत्राह - **जगत्कारणश्चेति** । **इत्युक्तमिति** । 'ईक्षतेर्नाशब्दमि'त्यादिना निर्णीतत्वादिति भावः । ननु पूर्वाधिकरणे ईक्षत्यादिश्रवणेन प्रधानस्य जगत्कारणत्वाभोवो निर्णीतः, तावता जीवस्य जगत्कारणत्वशङ्कायाः कथं निरास इति चेन्न, तत्र प्रधानस्य जगत्कारणत्वनिरासेपि 'गतिसामान्यात्', 'श्रुतत्वाच्च' इत्यादिभिः प्रधानस्य तथात्वनिरासपूर्वकं सृष्ट्युपयुक्तज्ञानशक्त्यादिगुणकस्य जीवातिरिक्त सर्वेश्वरस्य तथात्वस्थापनादत्र कारणस्य जीवत्वशङ्काया असम्भवात् ॥

अर्धाङ्गीकारेण परिहरति - **सत्यमुक्तमिति** । चेतनासाधारणधर्मश्रवणेन जगत्कारणस्याचेतनत्वासम्भवेन चेतनत्वावश्यकत्वेपि तस्य जीवाद्यतिरेके प्रमाणाभावं इत्याशयेनाह - **स त्विति** । **सः** = सर्वज्ञत्वसर्वेश्वरत्वविशिष्टः । अत्र जगत्कारणतया निर्दिष्टस्यानन्दमयपदवाच्यस्य शारीरत्वश्रवणलिङ्गेन जीवत्वनिर्णयवत्सद्विद्यायामेव जगत्कारणवस्तुनः सच्छब्दवाच्यस्य जीवसामानाधिकरण्यनिर्देशेन जीवत्वावश्यकत्वादपि जीव एव जगत्कारणमित्यभ्युपेत्यमित्याशयेनाह - **अनेन जीवेनेति** । त्वंशब्दार्थो जीव एवेति व्यञ्जनाय **श्वेतकेतो** इत्युपात्तम् । किं तत इत्यत्राह -

**श्वेतकेतो' इति कारणतया निर्दिष्टस्य जीवसामानाधिकरण्यनिर्देशात् । सामानाधिकरण्यं ह्येकत्व-प्रतिपादनपरम्; यथा 'सोऽयं देवदत्त' इत्यादौ । ईक्षापूर्विका च सृष्टिश्चेतनस्य जीवस्योपपद्यत एव ।**

**अतः** (तै.आनं-१) **'ब्रह्मविदाप्नोति परम्' इति जीवस्याचित्संसर्गवियुक्तं स्वरूपं प्राप्यतयोपदिश्यते । अचिद्वियुक्तस्वरूपस्य लक्षणमिदमुच्यते, 'सत्यं ज्ञानमनन्तं ब्रह्म' इति । तद्रूपप्राप्तिरेव हि मोक्षः ।** (छा.८-१२-१) **'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत' इति । अतो जीवस्य अविद्यावियुक्तं स्वरूपं प्राप्यतया प्रक्रान्तम्, आनन्दमय इत्युपदिश्यते । तथा हि शाखा-चन्द्रन्यायेनाऽऽत्मस्वरूपं दर्शयितुम्, 'अन्नमयः पुरुष' इति शरीरं प्रथमं निर्दिश्य, तदन्तरभूतं तस्य धारकं पञ्चवृत्तिप्राणम्, तस्याप्यन्तरभूतं मनः, तदन्तरभूताञ्च बुद्धिम्, 'प्राणमयः', 'मनोमयः', 'विज्ञानमयः' इति तत्र तत्र बुद्ध्यवतरणक्रमेण निर्दिश्य सर्वान्तरभूतं जीवात्मानम्, 'अन्योऽन्तर आत्माऽऽनन्दमयः' इत्युपदिश्यान्तरात्मपरम्परां समापयति । अतो जीवात्मस्वरूपमेव, 'ब्रह्मविदाप्नोति' इति प्रक्रान्तं ब्रह्म; तदेवाऽऽनन्दमय इत्युपदिष्टमिति निश्चीयते ॥**

---

**सामानाधिकरण्यमिति** । ईक्षणश्रवणस्यान्यथासिद्धिमाह - **ईक्षापूर्विकेति** ।

ननु 'ब्रह्मविदाप्नोति परमि'ति परमित्यनेन प्राप्यतया किञ्चिन्निर्दिष्टं, स च न जीवः । तस्य नित्यप्राप्यत्वेन प्राप्य-त्वानुपपत्तेः कर्मकर्तृविरोधाच्च । एवं प्राप्यवस्तुनः 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति तत्रैव लक्षणमुच्यते, जीवस्य ज्ञातत्वेन लक्षणकथनं चानुपपन्नं जीवे सत्यत्वानन्तत्वासम्भवश्च । अतो जीवविलक्षणमन्यदेव तत्र प्रतिपातव्यं स एवानन्दमय इति शङ्कां परिहरति - **अत** इति । अतः शारीरत्वश्रवणेन सामानाधिकरण्यनिर्देशबलसिद्धैक्यप्रतिपत्त्या च जीवविलक्षण-स्यान्यस्यासिद्धेः । अचित्संसर्गवियुक्तस्वरूपस्य पूर्वं प्राप्तत्वाभावान्न प्राप्यत्वमनुपपन्नम् । अवस्थाविशेषेण एकस्यैव कर्मकर्तृत्वदर्शनाच्च न कर्मकर्तृविरोधः । अचिद्वियुक्तस्वरूपस्याज्ञातत्वात्तत्र तत्सम्भवाच्च न लक्षणकथनं चानुपपन्नमि-त्याशयः ॥ तद्रूपप्राप्तिः = अचिद्वियुक्तस्वरूपप्राप्तिः, औपाधिकाकारनिवृत्तिमात्रस्य मोक्षत्वादिति भावः । तत्र श्रुतिं प्रमाणयति - **न हेति** । श्रुत्या तद्रूप्राप्तेरेव मोक्षत्वादित्यर्थः । एवं प्राप्यमचिद्वियुक्तस्वरूपं जगत्कारणञ्चानन्दमयमेवेत्यु-पसंहृतमित्युपसंहरति - **अत** इति ।

ननु नात्राचिद्वियुक्तस्वरूपस्योपदेशः, 'स वा एष पुरुषोऽन्नरसमय' इति शरीरसम्बन्धवत आत्मत्व श्रवणादि-त्यत्राह - **तथा हीति** । **अन्नमय** इत्यर्थानुकरणम् । **शरीरं प्रथमं निर्दिश्येति** । आत्मस्वरूपप्रतिपत्त्यर्थं बुद्ध्यवतरणक्रमेण शाखाचन्द्रन्यायेन तथा प्रदर्शितं, न तु शरीरसम्बन्धवत एवाचिद्वियुक्तस्वरूपत्वमिति भावः । नन्वानन्दमयविषये एव 'अस्यैष एव शारीर आत्मा' इति शरीरसम्बन्धश्रवणेन 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति प्रक्रान्तस्याचिद्वियुक्तस्वरूपस्य कथमानन्दमयशब्देन निर्देशः । कथं शरीरसम्बन्धवत अपरिच्छिन्नानन्दवत्त्वमिति चेन्न, **शारीर** इत्यनेनोपलक्षणीभूत-शरीरसम्बन्धस्यैव बोधनेनानुपपत्त्यभावात् । **तदन्तरभूताञ्च बुद्धिमिति** । 'प्राणमयः मनोमय' इत्युभयत्रापि मयट्प्रत्ययस्य स्वार्थिकत्वाभ्युपगमेन 'विज्ञानमय' इत्यत्रापि मयटः स्वार्थिकत्वमेवाभ्युपेत्यम् । अत एव 'विज्ञानं यज्ञं तनुते' इति विज्ञानमयविषयश्लोके मयडन्तत्वं विना प्रयोगः । विज्ञानशब्दश्चान्तःकरणरूपबुद्धिपरः। 'विज्ञानसारथिर्यस्तु', 'बुद्धिन्तु सारथिं विद्धि'त्यादिभिरेकार्थत्वावगमात् । 'विज्ञायतेऽनेने'ति व्युत्पत्तेश्चेति भावः । उपसंहरति - **अत** इति ।

नन्वानन्दमयादप्यन्यस्य 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति प्रक्रान्तस्योपसंहारे निर्देशादानन्दमयस्यैव न ब्रह्मत्वसम्भवः ।

**ननु च - 'ब्रह्म पुच्छं प्रतिष्ठा' इत्यानन्दमयादन्यद्ब्रह्मेति प्रतीयते। नैवम्। ब्रह्मैव स्वस्वभावविशेषेण पुरुषविधत्वरूपितं शिरःपक्षपुच्छरूपेण व्यपदिश्यते। यथाऽन्नमयो देहोऽवयवी स्वस्मादनतिरिक्तैस्स्वावयवैरेव, 'तस्येदमेव शिरः' इत्यादिना शिरः पक्षपुच्छवत्तया निदर्शितः - तथा आनन्दमयं ब्रह्मापि स्वस्मादनतिरिक्तैः प्रियादिभिर्निदर्शितम्। तत्रावयवत्वेन रूपितानां प्रियमोदप्रमोदानन्दानामाश्रयतया अखण्डरूपमानन्दमयम्, 'ब्रह्मपुच्छं प्रतिष्ठा' इत्युच्यते। यदि चानन्दमयादन्यद् ब्रह्माभविष्यत्, 'तस्माद्वा एतस्मादानन्दमयादन्योऽन्तर आत्मा ब्रह्म' इत्यपि निरदेक्ष्यत। न चैवं निर्दिश्यते। एतदुक्तं भवति - 'ब्रह्मविदाप्नोति परम्' इति प्रक्रान्तं ब्रह्म, 'सत्यं ज्ञानमनन्तं ब्रह्म' इति लक्षणतः सकलेतरव्यावृत्ताकारं प्रतिपाद्य, तदेव, 'तस्माद्वा एतस्मादा-**

तथा हि - 'अन्योऽन्तर आत्मा आनन्दमय' इत्युक्त्वा, 'तस्य प्रियमेव शिरः। मोदो दक्षिणः पक्षः। प्रमोद उत्तरः पक्षः। आनन्द आत्मा। ब्रह्मपुच्छं प्रतिष्ठा' इति निर्दिष्टम्। तस्य = आनन्दमयस्येत्यर्थः। **तस्ये**त्यस्य सर्वत्रान्वयात् 'तस्य पुच्छं प्रतिष्ठे'ति लब्धम्। ततश्च षष्ट्या सम्बन्धप्रतीतेः सम्बन्धस्य प्रतिष्ठातद्भावरूपस्य प्रतिष्ठेत्यनेन विवृतस्य द्विनिष्ठत्वेन व्यतिरेकावगमादन्यत्वसिद्धिः। अत उपक्रान्तस्यानन्दमयापेक्षयाऽन्यस्यैव ब्रह्मत्वं तदेव च जगत्कारणमिति मृषावादिपक्षस्थः कश्चित्पूर्वपक्षिणं प्रतिशङ्कते - **ननु चे**ति। **प्रतिष्ठा पुच्छं** = धारकावयवविशेषः। परिहरति - **नैवमि**ति। **ब्रह्मैव**- आनन्दमयपदवाच्यजीवानतिरिक्तं ब्रह्मैव। **स्वस्मादनतिरिक्तैः प्रियादिभिर्निदर्शितमि**ति। अयं त्विह भावः - यथा 'स वा एष पुरुषोन्नरसमय' इति प्रस्तुतः देहः, 'तस्येदमेव शिरः, अयं दक्षिणः पक्षः, अयमुत्तरः पक्षः, अयमात्मा (इदं पुच्छं प्रतिष्ठा) इति निर्दिष्टानां स्वानतिरिक्तस्वावयवभूतानामेव शिरःपक्षादीनाम् 'इदं पुच्छं प्रतिष्ठा' इत्याश्रयतया निदर्शितः। तद्वत्, 'अन्योऽन्तर आत्मा आनन्दमय' इति प्रस्तुत एवानन्दमयः,' स वा एष' पुरुषविध एव, तस्य पुरुषाविधतामन्वयं पुरुषविध इति पुरुषविधत्वरूपणात्, तस्य तदानुगण्येन 'प्रियमेव शिरः, मोदो दक्षिणः पक्षः, प्रमोद उत्तरः पक्षः, आनन्द आत्मा' इति निर्दिष्टानां स्वानतिरिक्तप्रियादीनां 'ब्रह्म पुच्छं प्रतिष्ठा' इत्याश्रयतया निदर्शितः। अतः प्रकरणे षष्ठीनिर्देशस्य समुदायतदेकदेशनिबन्धनत्वादत्रापि षष्ठीनिर्देशस्य तथात्वमावश्यकमिति न व्यतिरेकप्रतीतिरिति। **अवयवत्वेन रूपितानामि**ति।

ननु 'आनन्द आत्मे'त्यानन्दस्यावयवित्वेन रूपितत्वादवयवत्वेन रूपितत्वभाषणं कथमुपपन्नम्? इत्थम् - आत्मशब्दस्यात्र शरीरमध्यभागवाचित्वेनानन्दस्यावयवत्वेन रूपितत्वोपपत्तेः॥ एवं प्रकरणपर्यालोचनया षष्ठीनिर्देशस्य समुदायतदेकदेशनिबन्धनत्वमभ्युपगम्य 'ब्रह्म पुच्छं प्रतिष्ठा' इत्यत्रावयवत्वेन रूपितस्वाननिरिक्तप्रियमोदाद्याश्रय आनन्दमयपदवाच्यः जीव एवोक्त इति प्रतिपादितम्। अथ 'अन्योऽन्तर आत्मा प्राणमयः, अन्योऽन्तरः आत्मा मनोमयः, अन्योन्तर आत्मा विज्ञानमयः, अन्योऽन्तर आत्मा आनन्दमय' इति निर्देशवत् 'अन्योऽन्तर आत्मा ब्रह्मे'ति निर्देशाभावादानन्दमये एवात्मपरम्परायास्समापितत्वान्नानन्दमयान्यस्य कस्यचित् प्रतीतिसम्भव इत्यतोऽपि 'ब्रह्म पुच्छं प्रतिष्ठे'त्यत्र नानन्दमयान्यस्य ब्रह्मणो ग्रहणमित्याह - **यदि चे**ति।

ननु 'तस्माद्वा एतस्मादानन्दमयादन्योऽन्तर आत्मा ब्रह्मे'ति भेदकाकारनिर्देशाभावमात्रेण न ब्रह्मण आनन्दमयान्यत्वसिद्धिः। अन्यथापि भेदकाकारनिर्देशबलेनान्यत्वसिद्धिसम्भवात्। अत एव हि 'पतिं विश्वस्यात्मेश्वरमि'त्यादिनिर्देशबलेन विश्वतत्पत्योः भेदसिद्धिः। अत्रापि **तस्ये**ति षष्ठीनिर्देशाद्भेदसिद्धिरित्यत्र, षष्ठीनिर्दशस्यान्यथासिद्धत्वात्। प्रकरणे यादृशरीत्या भेदनिर्देशः तादृशरीत्यैवात्रपि भेदनिर्देशावश्यकत्वेन तदभावाच्च नानन्दमयान्यब्रह्मसिद्धिरित्यभिप्रयन्नुपक्रमवाक्यमारभ्यान्तरात्मपरम्परासमापनपर्यन्तस्य तात्पर्यं विवृणोति - **एतदुक्तमि**ति। अत्र प्रक्रान्तब्रह्मण एव 'तस्माद्वा एतस्मादात्मन' इति आत्मशब्देन निर्देशादात्मन एव च 'अन्योऽन्तर आत्मा आनन्दमय' इत्युपसंहाराच्चात्मब्रह्मशब्द-

**त्मन' इत्यात्मशब्देन निर्दिश्य, तस्य सर्वान्तरत्वेनाऽऽत्मत्वं व्यञ्जयद्वाक्यम्, अन्नमयादिषु तत्तदन्तरतया आत्मत्वेन निर्दिष्टान्प्राणमयादीनतिक्रम्य, 'अन्योऽन्तर आत्माऽऽनन्दमयः' इत्यात्मशब्देन निर्देशमानन्दमये समापयति। अत आत्मशब्देन प्रक्रान्तं ब्रह्माऽऽनन्दमय इति निश्चीयत - इति ॥**

**ननु च - 'ब्रह्म पुच्छं प्रतिष्ठा' इत्युक्त्वा, 'असन्नेव स भवति, असद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद, सन्तमेनं ततो विदुः' इति ब्रह्मज्ञानाज्ञानाभ्यामात्मनस्सद्भावासद्भावौ दर्शयति ; नानन्दमयज्ञानाज्ञानाभ्याम्। न चानन्दमयस्य प्रियमोदादिरूपेण सर्वलोकविदितस्य सद्भावसद्भावज्ञानाऽऽशङ्का युक्ता। अतो नानन्दमयमधिकृत्यायं श्लोक उदाहृतः। तस्मादानन्दमयादन्यद्ब्रह्म। नैवम्। 'इदं पुच्छं प्रतिष्ठा', 'पृथिवी पुच्छं प्रतिष्ठा', 'अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा', 'महः पुच्छं प्रतिष्ठा' इत्युक्त्वा तत्र तत्रोदाहृताः, 'अन्नाद्वै प्रजाः प्रजायन्ते' इत्यादिश्लोकाः यथा न पुच्छमात्रप्रतिपादनपराः ; अपि त्वन्नमयादिपुरुषप्रतिपादनपराः - एवमत्राप्यानन्दमयस्यायम् 'असन्नेव' इति श्लोकः ; नानन्दमयव्यतिरिक्तसस्य पुच्छस्य। आनन्दमयस्यैव ब्रह्मत्वेऽपि प्रियमोदादिरूपेण रूपित(स्यात)स्यापरिच्छिन्नानन्दस्य सद्भावासद्भावज्ञानाऽऽशङ्का युक्तैव। पुच्छब्रह्मणोऽप्यपरिच्छिन्नानन्दतयैव ह्यप्रसिद्धता ॥**

---

योरैकार्थ्यमभ्युपेत्यमिति दर्शनाय तात्पर्यवर्णनम्। **वाक्यमिति** कर्तृनिर्देशमिति कर्म ॥

नन्वानन्दमये एवान्तरात्मपरम्परायास्समाप्तिर्यदि, तर्ह्युत्तरत्रात्मशब्देन वाऽऽनन्दमयशब्देन वा निर्देशस्यावश्यकत्वेन तथानिर्देशाभावाद्ब्रह्मशब्देन निर्देशाच्च 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति प्रक्रान्तस्य ब्रह्मण अत्रैवोपसंहार इत्यानन्दमयान्यस्य ब्रह्मणः सिद्धिर्निष्प्रत्यूहैवेति पुनः शङ्कते - **ननु चेति**। अयं भावः - 'ब्रह्म पुच्छं प्रतिष्ठा' इत्येतदानन्दमयविषयकमिति भवत्प्रक्रिया। इदञ्च न भवति। 'ब्रह्म पुच्छं प्रतिष्ठा' इत्युक्त्वा तत्प्रतिपादितब्रह्मविषयकतया 'असन्नेव स भवती'त्यादिश्लोकस्य प्रवृत्तेः तस्य चानन्दमयविषयकत्वासम्भवात्। अतः 'ब्रह्मपुच्छं प्रतिष्टे' त्यत्रानन्दमयान्यस्य ब्रह्मणः प्रतीतिरावश्यक्येवेति। **ब्रह्मज्ञानाज्ञानाभ्यामित्यनेन** 'ब्रह्म वेदे'ति यत्तदसच्चेदिति श्रुत्यन्वयो दर्शितः ॥

नन्वयमपिश्लोक आनन्दमयविषयक एव किं न स्यादित्यत्राह - **न चेति**। सद्भावासद्भावज्ञानाशङ्केत्यनेन श्रुतेर्यथाश्रुतान्वयोपीष्ट इति सूचितम्। सर्वलोकविदितस्यापह्नवासम्भवेन असद्भावे इव सद्भावेप्याशङ्काकरणमयुक्तमिति भावः। आनन्दमयविषयकत्वाभावमुपसंहरति **अत** इति। पूर्वपक्षमुपसंहरति - **तस्मादिति**। प्रकरणे 'सवा एष पुरुषोऽन्नरसमय' इत्यादिषु 'इदं पुच्छं प्रतिष्ठा' इत्याद्युक्ततत्तद्विषयकतया 'अन्नाद्वैप्रजाः प्रजायन्ते' इत्युदाहृतश्लोकानां यथाऽन्नमयादिपुरुषप्रतिपादनपरत्वमेव, न तु तदन्यपुच्छप्रतिपादनपरत्वमेवमत्रापि 'असन्नेवे'ति श्लोकस्यानन्दमयप्रतिपादनपरत्वमेव न तु तदन्यपुच्छब्रह्मप्रतिपादनपरत्वमित्यभिप्रायेण परिहरति - **नैवमिति**। आशयमेवाविष्करोति - **इदमिति**।

ननु सर्वलोकविदितत्वेनानन्दय सद्भावासद्भावज्ञानाशङ्काया पूर्वमेवायुक्तत्वमुपपादितमित्यत्राह - **आनन्दमयस्यैवेति**। प्रियमोदादिरूपेण प्रसिद्धत्वेपि अपरिच्छिन्नानन्दत्वस्याविदितत्वेन तादृशाशङ्कायाः युक्तत्वादिति भावः। पुच्छब्रह्मवादिनोपि, 'विज्ञानमानन्दं ब्रह्म', 'आनन्दो ब्रह्मे'त्यादिभिः ब्रह्मण आनन्दत्वस्योक्तत्वेन प्रसिद्धत्वात्तद्विषयेऽपि सद्भावासद्भावाशङ्काया अयुक्तत्वमेवेति चोद्येऽपरिच्छिन्नानन्दत्वस्याविदितत्वेन तादृशशङ्का युक्तेति परिहारस्समान इत्याह - **पुच्छब्रह्मणोपीति**। (एवञ्चासन्नेवेत्यादेरप्यानन्दमय विषयकत्वमेवेति, अत्र प्रकरणे ब्रह्मात्मानन्दमयशब्दानामैकार्थ्यं सिद्धमिति नानन्दमयादन्यस्य प्रतीतिरिति)।

**शिरःप्रभृत्यवयवि(व)त्वाभावाद्ब्रह्मणः, नानन्दमयो ब्रह्मेति चेत् - ब्रह्मणः पुच्छत्वप्रतिष्ठात्वाभावात् पुच्छमपि ब्रह्म न भवेत् । अथाविद्यापरिकल्पितस्य वस्तुनस्तस्य(स्याश्र) आश्रयभूतत्वाद्ब्रह्मणः, पुच्छं प्रतिष्ठेति रूपणमात्रमित्युच्येत, हन्त तर्हि त(अ)स्यासुखाद्व्यावृत्तस्यानन्दमयस्य ब्रह्मणः प्रियशिरस्त्वादि-रूपणं भविष्यति । एवञ्च, 'सत्यं ज्ञानमनन्तं ब्रह्म' इति विकारास्पद-जड-परिच्छिन्नवस्त्वन्तरव्यावृत्त-स्यासुखाद् व्यावृत्तिः, 'आनन्दमय' इत्युपदिश्यते । ततश्चाखण्डैकरसानन्दरूपे ब्रह्मणि आनन्दमय इति मयट् प्राणमय इव स्वार्थिको द्रष्टव्यः । तस्मादविद्यापरिकल्पितविविधविचित्रदेवादिभेदभिन्नस्य जीवात्मनः स्वाभाविकं रूपमखण्डैकरसं सुखैकतानमानन्दमय इत्युच्यत इत्यानन्दमयः प्रत्यगात्मा ॥**

---

ननु न ब्रह्मानन्दमयशब्दयोरैकार्थ्यं तथा सति 'ब्रह्मपुच्छं प्रतिष्ठा' इत्युक्तब्रह्मण आनन्दमयत्वेनानन्दमय-विषयतयोक्तशिरःप्रभृत्यवयववत्वस्य ब्रह्मण्यापातात् । न चेष्टापत्तिः । ब्रह्मण अवयवित्वानुपपत्तेः । अतो नानन्दमयो ब्रह्मेति चोदयति - **शिरःप्रभृतीति** । शिरःप्रभृतिनिरूपितावयवित्वाभावादित्यर्थः । प्रतिबन्द्या परिहरति - **ब्रह्मण** इति । अयं भावः - 'आनन्द आत्मा' इत्यन्तमानन्दमयविषयकं, 'ब्रह्म पुच्छं प्रतिष्ठा' इति तु प्रकरणान्तरं पुच्छब्रह्मविषयकमिति हि भवन्मतम् । तत्रानन्दमयाद्विलक्षणत्वेपि ब्रह्मणः पुच्छत्वप्रतिष्ठात्वरूपावयवत्वं कथमुपपद्यते ब्रह्मण अवयवित्व-स्येवावयवत्वस्याप्यनुपपन्नत्वात् । न हि ब्रह्म कस्यचिदवयवः भवति । अतः भवद्भिरप्यवत्वोपपादनवदवयवित्वोपपा-दनमपि युक्तमेवेति । अवयवत्वस्य रूपणमात्रत्वं शङ्कते - **अथेति** । तस्य वस्तुन इत्वन्वयः पुच्छत्वादेरित्यर्थः । निरूपितत्वं षष्ठ्यर्थः । तुल्योऽयं समाधिरिति परिहरति - **हन्तेति** । 'तस्य प्रियमेव शिर' इत्यादिना शिरःप्रभृतित्वेन रूपिता असुखव्यावृत्तिविशेषा इति सूचनाय - **असुखाद्व्यावृत्तस्येत्**युक्तम् ।

ननु 'सत्यं ज्ञानमानन्तं ब्रह्मे'त्यनेन सकलेतरव्यावृत्तिस्सिध्दा तत्किमिति आनन्दमय इत्यनेनोच्यते इत्यत्राह - **एवञ्चेति** । ननु 'सत्यं ज्ञान मनन्तं ब्रह्मे'ति निर्दिष्टस्य ब्रह्मण आनन्दमयशब्दवाच्यत्वं न सम्भवति । ब्रह्मणः कस्यचि-द्विकारत्वाभावेन विकारार्थमयडन्तशब्दवाच्यत्वाभावात् । अतः 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति निर्दिष्टस्य ब्रह्मणः 'ब्रह्म पुच्छं प्रतिष्ठा' इति पुच्छब्रह्मण्यपुसंहारादानन्दमयादन्यद्ब्रह्मैव जगत्कारणमित्याशङ्कायामाह - **ततश्चेति** । प्रकरणे प्राणमय-मनोमयविज्ञानमयेषु मयटःस्वर्थिकत्वदर्शनेन आनन्दमय इत्यत्रापि तस्य स्वार्थिकत्वावश्यम्भावादिति भावः । **ततश्चेत्यनेन**, मृषावाद्युक्तचोद्यानां परिहृतत्वात्स्वमते उपपत्तेः प्रदर्शितित्वाच्च मयटः स्वार्थित्वाभ्युपगमो न दोषावह इति सूचितम् ।

ननु शारीरत्वश्रवणाज्जीवसामानाधिकरण्यनिर्देशाच्च प्रत्यगात्मन एव जगत्कारणत्वमभ्युपगम्य तस्यैव ब्रह्मात्म-शब्दवाच्यस्यानन्दमयशब्दवाच्यत्वाभ्युपगमेऽपरिच्छिन्नानन्दरूपत्वमुक्तं भवति । तच्च न युक्तं, तथा सति जीवानां दुःखित्वसुखित्वतारतम्यस्योपलब्धस्यानुपपत्तिः इति शङ्कां परिहरन् पूर्वपक्षं निगमयति - **तस्मादिति** । **अविद्येत्यादिना** तारतम्योपलब्धेरुपपत्तिस्सूचिता । **स्वाभाविकमित्यादिना**ऽऽनन्दमयशब्दवाच्यत्वं युक्तमिति दर्शितम् **सुखैकतानमान-न्दमय** इति ।' अन्योऽन्तर आत्मा आनन्दमय' इत्यनन्तरं 'ब्रह्मपुच्छं प्रतिष्ठा' इति निर्दिष्टम् । तदनन्तरं च 'सोऽकामयत बहुस्यां प्रजायेयेति' इति जगत्कारणं वस्तु पुलिंगतच्छब्देन निर्दिष्टम् । अतस्तच्छब्दस्यानन्दमयपरामर्शित्वात्तस्यैव ब्रह्मत्वं युक्तम् ।

न च 'तस्माद्वा एतस्मादात्मन' इत्यात्मशब्दनिर्दिष्टवस्त्वभिप्रायकः पुल्लिङ्गतच्छब्द इति वाच्यम्, तस्या-तीव व्यवहितत्वात् । न च 'ब्रह्म पुच्छं प्रतिष्ठा' इत्यनन्तरं 'तस्यैष एव शारीर आत्मा' इत्यात्मशब्दनिर्देशेनानन्दमय-शब्दनिर्देशापेक्षयाप्यस्याव्यवहितत्वादेतदभिप्रायक एव तच्छब्दनिर्देश इति वाच्यम् । सर्वनामशब्दस्य

**एवं प्राप्ते प्रचक्ष्महे - आनन्दमयोऽभ्यासात् - आनन्दमयः परमात्मा। कुतः? अभ्यासात्। 'सैषाऽऽनन्दस्य मीमांसा भवति' इत्यारभ्य, 'यतो वाचो निवर्तन्ते' इत्येवमन्तेन वाक्येन शतगुणितोत्तरक्रमेण**

---

प्रधानपरामर्शित्व-स्वारस्यात् 'तस्यैष एव शारीर आत्मे'ति निर्देशस्य सर्वपर्यायेऽपि श्रुतत्वादेतद्वाक्यस्थस्यात्मनः सर्वपर्यायसाधारणत्वेनैतत्पर्याय प्रधानप्रतिपाद्यत्वाभावेनाप्रधानत्वात्तच्छब्देन तत्परामर्शित्वासम्भवात्। एवं 'अन्नं ब्रह्मेति व्यजानात्, प्राणो ब्रह्मेति व्यजानात्, मनो ब्रह्मेति व्यजनात्, विज्ञानं ब्रह्मेति व्यजानात्' इति निर्देशानान्तरम् 'एतमन्नमयमात्मानमुपसङ्क्रम्य, एतं प्राणमयमात्मानमुपसङ्क्रम्य, एतं मनोमयमात्मानमुपसङ्क्रम्य, एतं विज्ञानमयमात्मानमुपसङ्क्रम्येति निर्देशश्रवणात्स्थानप्रामाण्यात्प्राणप्रणमयादिशब्दानामेकार्थत्वावगमवत् 'आनन्दो ब्रह्मेति व्यजनात्' इति निर्देशानन्तरं एतमानन्दमयमात्मानमुपसङ्क्रम्येति श्रवणेनात्रापि स्थानप्रामाण्यादानन्द-ानन्दमयशब्दयोरेकार्थत्वमभ्युपेयम्। आनन्दशब्दश्च 'आनन्दो ब्रह्मे'ति श्रुत्या ब्रह्मणि प्रसिद्धः। अत आनन्दमयशब्दस्यापि ब्रह्मपरत्वं युक्तमिति नानन्दमयशब्दस्य पुच्छब्रह्मणः प्रतीतिर्युक्ता। न च 'अन्नं ब्रह्मेति व्यजानात्' इत्यनन्तरम् 'अन्नमयमात्मानमुपसङ्क्रम्ये'ति निर्देशेपि, अन्नान्नमयशब्दयोरे-कार्थत्वाभाववदत्रापि किं न स्यादिति वाच्यम्। प्रथमपर्याये मयटः विकार्थत्वेनैकार्थ्यासम्भवेपि द्वितीयादिपर्यायेषु सर्वैरपि मयटस्स्वार्थिकत्वाभ्युपगमेन मध्येऽनैकार्थ्यभङ्गदृष्ट्या उत्तरत्रापि तद्भङ्गावश्यकत्वात्। अन्नशब्दस्यैवान्नमयार्थकत्वेन विरोधाभावाच्च।

नन्वस्त्वैकार्थ्यम्, अथाप्यानन्दमयशब्दवदानन्दशब्दस्यापि बाह्यकोशपरत्वं किन्न स्यादिति चेन्न, 'आनन्दो ब्रह्मेति व्यजानादि'ति निर्देशानन्तरं पूर्वपर्यायेषु 'पुनरेव वरुणं पितरमुपसासार' इति भृगोर्वरुणोपसत्ति निर्देशवत्, अत्र निर्देशाभावेन 'आनन्दो ब्रह्मे'ति विज्ञानेन ब्रह्मज्ञाननिष्पत्तेरवगमादानन्दपदस्य ब्रह्मपरत्वावश्यकत्वात्। न चानन्दो ब्रह्मेति व्यजानादित्यत्रानन्दोपलक्षितब्रह्मवेदनस्योक्तत्वेनोपलक्षणभूतेन तेन ब्रह्मणः प्रतिपन्नत्वात् पुनर्वरुणोपसत्त्य-सम्भवेन तदुपसम्पत्त्यनिर्देशो न बाधकावह इति वाच्यम्। तथा सति 'अन्नं ब्रह्मेति व्यजानादि' त्यत्रैवान्नोपलक्षितब्रह्म-वेदनस्योक्तत्वात्तेनैवोपलक्षणभूतेन ब्रह्मणः प्रतिपन्नत्वात्पुनर्वरुणोपसत्तेरनुपपत्तेः। न हि 'अन्नं ब्रह्मेति व्यजनादि'त्यादिषु सर्वत्रान्नमयादौ ब्रह्मबुध्यवतरणमात्रं, 'आनन्दो ब्रह्मेतिव्यजनादि'त्यत्रानन्दोपलक्षित ब्रह्मवेदन मुक्तमिति वक्तुं शक्यं, वैरूप्यापत्तेः। अत एव हि भवद्भिरपि 'आनन्दो ब्रह्मेति व्यजानादि'त्यत्रानन्द शब्दस्य ब्रह्मपरतया व्याख्यातम्। न चान्नं ब्रह्मेति व्यजानादित्यत्रान्नशब्दस्यान्नमयरूपान्नविकारार्थकत्वे, 'अन्नाद्ध्येव खल्विमानि भूतानि जायन्त' इत्याद्युत्तर-वाक्यासङ्गतिरिति वाच्यम्। तत्रत्यान्नशब्दस्य केवलान्नपरत्वात्। यथा, 'स वा एष पुरुषोऽन्नरसमय' इति निर्देशेपि 'अन्नाद्वै प्रजाः प्रजायन्ते' इति निर्देशः॥

नन्वानन्दमयस्यैव ब्रह्मत्वे 'अन्नमय प्राणमयमनोमयविज्ञानमयानन्दमयाः मे शुध्यन्तामि'ति श्रूयमाणं शोध्यत्व-मानन्दमयस्य कथमुपपद्यते? ब्रह्मणः शोध्यत्वासम्भवादिति चेन्न। आनन्दमयस्य ब्रह्मत्वेपि तस्य प्रत्यगात्मानतिरिक्त-त्वेन संसारनिर्हरणेन शोध्यत्वसम्भवात्। अतोऽत्रप्रकारणे ब्रह्मानन्दमयात्मशब्दानामैकार्थ्याज्जगत्कारणत्वेन श्रुतस्य शरीरत्वजीवसामानाधिकरण्यनिर्देशाज्जीव एव जगत्कारणम्। स एवानन्दमयपदवाच्य इति साङ्ख्यानां पूर्वपक्ष इति॥

अथ सिद्धान्तसूत्रमवतारयति - **एवमिति**। इतिशब्दोऽध्याहर्तव्यः। एवं पूर्वपक्षे प्राप्ते 'आनन्दमयोऽभ्यासादि'ति सूत्रकाराभिमतं सिद्धान्तं प्रचक्ष्महे इत्यर्थः। 'ईक्षतेर्नाशब्दमि'ति सूत्रस्थयोः नाशब्दमिति पदयोरनुषङ्गबललब्धमर्थं सङ्कल्प्य, आनन्दमय इति निर्दिष्टां प्रतिज्ञां प्रदर्शयति - **आनन्दमय** इति। जीवस्यापि स्वयंप्रकाशप्रत्यक्षानुमानादि सिद्धत्वेन प्रधानस्येवाशब्दत्वसम्भवः। यद्वा - 'भेदव्यपदेशाच्चान्यः' इत्युत्तराधिकरणस्थ सूत्रघटकान्यपदाकर्षणलब्धा-र्थकथनं परमात्मेति। अथवा एतदधिकरणे एव 'नेतरोऽनुपपत्तेः' इत्यत्र 'नेतरः' इति साध्यांशस्योक्तत्वात्तदनुरोधेन परमात्मेत्युक्तम्। 'अभ्यासादि'त्युक्तं हेतुं विवृणोति - **सैषेति**। **शतगुणितोत्तरक्रमेणेति**। अनेन 'त ये शतमि'ति

**निरतिशयदशाशिरस्को अभ्यस्यमान आनन्दोऽनन्तदुःखमिश्रपरिमितसुखलवभागिनि जीवात्मन्यसम्भवान्निखिलहेयप्रत्यनीकं कल्याणैकतानं सकलेतरविलक्षणं परमात्मानमेव स्वाश्रयमावेदयति। यथाऽऽह 'तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमय' इति ॥**

---

श्रुतिस्स्मारिता। **गुणनम्** = आवृत्तिः। **निरतिशयदशाशिरस्क** इति। अनेन 'यतो वाचो निवर्तन्ते' इति श्रुत्यर्थो विवृतः। **अभ्यस्यमान** इति। सूत्रस्थाभ्यासपदं कर्मणि घञन्तमिति सूचितम्। अथवा, भावार्थत्वेपि कस्याभ्यास इति शङ्कायां, आनन्दस्याभ्यस्तत्वं श्रुतिप्रसिद्धमित्यभ्यस्यमानत्वं फलितमिति भावः। **आनन्द** इति। अनेनाभ्यस्यमानत्वस्य पक्ष-निष्ठत्वाभावेन हेत्वसिद्धिशङ्का परिहृता, अभ्यस्यमानानन्दस्यैव हेतुत्वात्।

ननु 'ते ये शतं प्रजापतेरानन्दा' इति प्रजापत्यानन्दस्यैव शतगुणितत्वप्रदर्शनान्न ब्रह्मानन्दस्येति चेन्न 'ते ये शतं प्रजापतेरानन्दा' इत्युक्त्वा 'स एको ब्रह्मण आनन्द' इत्युक्तत्वाद्ब्रह्मानन्दस्य शतगुणितत्वसम्भवात्। 'स एको ब्रह्मण आनन्द' इत्यनेन ब्रह्मानन्दैकदेशस्य शतगुणितत्वात्तदानन्दसादृश्यं हि प्रतिपाद्यते। एवं मुहुर्मुहुरुक्तिरूपाभ्यासोप्येवमेव, न हि ब्रह्मानन्द एव मुहुमुहुरुच्यते। 'स एको मानुष आनन्दः, स एको मनुष्यगन्धर्वानामानन्दः' इत्यादिषु तत्तदानन्दस्यैवोक्तत्वात्। निरुक्ताभ्यस्यमानानन्दवत्वं जीवेऽसम्भवीति दर्शयति - **अनन्तेति**। **अनन्तदुःखमिश्रे**त्यनेनानन्दविरोध उक्तः। **परिमितसुखे**त्यनेन निरतिशयानन्दाभाव उक्तः। परिशुद्धमुक्तस्वरूपस्यापि न निरुक्तानन्दाश्रयत्वमित्याशयेनाह - **निखिलहेयप्रत्यनीक**मिति। **प्रत्यनीकं** = निवर्तकम्। मुक्तस्यापि हि भगवत्प्रसादादेव हेयनिवृत्तिपूर्वकापरिच्छिन्नानन्दप्राप्तिः, अतः निरतिशयानन्दवत्वं न मुक्तस्येति भावः।

ननु निरतिशयानन्दत्वमेव तत्रोक्तमिति कथमवगम्यते, इत्थम् - आनन्दस्य हेत्वश्रवणेन तत्प्रतीतेः, 'यतो वाचो निवर्तन्त' इति निरतिशयत्वश्रवणाच्च। एतादृशनिरतिशयानन्दवत्वं न मुक्तस्य सम्भवति। 'एष ह्येवानन्दयाति, रसं ह्येवायं लब्ध्वाऽनन्दी भवती'त्यादिश्रुतिभिः तदानन्दस्य भगवदधीनत्वबोधनात्। भगवदानन्दस्य तु न कुत्राप्यन्याधीनत्वमुक्तम्। एतेन 'श्रोत्रियस्यचाकामहतस्य' इति प्रतिपर्यायं निर्देशेन मुक्तेप्यभ्यस्यमानानन्दवत्वसत्वेन हेतोर्व्यभिचरितत्व शङ्का निरस्ता। निरुपाधिकत्वरूपनिरतिशयत्वविशिष्टानन्दस्यतस्मिन्नसभवात्। **श्रोत्रियः** श्रुतवेदान्तः। **अकामहतः** = उपासनप्रीतभगवत्सङ्कल्पाधीनसमस्तक्लेशाभाववान्। न च निरुपाधिकानन्दस्यैव हेतुत्वसम्भवेऽऽनन्देऽभ्यस्यमानत्व विशेषणं व्यर्थमिति वाच्यम्। इष्टापत्तेः। आनन्दे निरतिशयत्वविवक्षणसूचनायैव 'अभ्यासादि'ति सूत्रितम्। जीवः नानन्दमयपदवाच्यः, निरुपाधिकानन्दाभाववत्वात् परमात्मा आनन्दमयपदवाच्यः निरुपाधिकानन्दवत्वादिति फलितम् ॥

ननु 'अन्योऽन्तर आत्मा आनन्दमयः' इति अन्यत्वेन व्यपदेशादानन्दमयपदवाच्यस्य जीवभेदे सिद्धेः तस्य च निरपेक्षहेतुत्वात्स्ववाक्यस्थत्वाच्च सूत्रकारेण तदनुक्तिः कथं सङ्गच्छते। न चैतदभिप्रायेणैव 'भेदव्यपदेशाच्चान्यः' इति सूत्रितमिति न तदनुक्तिदूषणमिति वाच्यम्। अथापि तस्य निरपेक्षहेतुत्वात्स्ववाक्यस्थत्वाच्च प्रथमत अनुक्तौ बीजाभावात्। हेतुभूतानन्दाभ्यासस्तु वाक्यान्तरस्थः, अनुग्राहकयुक्त्यन्तरसापेक्षश्च। अभ्यस्यमाननिरतिशयानन्दस्य जीवात्मन्यसम्भवरूपतर्कबलेन ह्यानन्दमयशब्दस्य परमात्मविषयत्वमित्याशङ्कायां जीवभदव्यपदेशस्य विज्ञानमयशब्दस्य जीववृत्तित्वनिर्णयसापेक्षत्वात्स्ववाक्यस्थभेदव्यपदेशादपि स्वपदैकदेशभूतानन्दमय पदघटकमयडर्थप्राचुर्यस्यानुग्राहकतर्कसापेक्षस्याप्यासन्नतरत्वाच्च तस्यैव प्रथमं हेतूकरणं युक्तमिति परिहारमभिप्रेत्य हेतूकृतप्रचुरानन्दे प्रमाणस्य पूर्वं वाक्यान्तरेण प्रदर्शितत्वेपि स्वपदैकदेशं प्रमाणयति - **यथाऽऽहेति**।

**विज्ञानमयो हि जीवः, न बुद्धिमात्रम्, मयट्प्रत्ययेन व्यतिरेकप्रतीतेः । प्राणमये त्वगत्या स्वार्थिकताऽऽश्रीयते । इह तु तद्वतो जीवस्य सम्भवान्नानर्थक्यं न्याय्यम् । बद्धो मुक्तश्च प्रत्यगात्मा ज्ञातैवेत्यभ्यधिष्महि । प्राणमयादौ च मयडर्थसम्भवोऽनन्तरमेव वक्ष्यते । कथं तर्हि विज्ञानमयविषये श्लोके, 'विज्ञानं यज्ञं तनुते' इति केवलविज्ञानशब्दोपादानमुपपद्यते । ज्ञातुरेवाऽऽत्मनः स्वरूपमपि स्वप्रकाशतया विज्ञानमित्युच्यत इति न दोषः । ज्ञानैकनिरूपणीयत्वाच्च ज्ञातुस्स्वरूपस्य । स्वरूपनिरूपणधर्मशब्दा हि धर्ममुखेन धर्मिस्वरूपमपि प्रतिपादयन्ति, गवादिशब्दवत् ।** (अष्टा. ३-३ ११३) **'कृत्यल्युटो बहुलम्' इति वा कर्तरि**

---

ननु 'अन्योऽन्तर आत्मा विज्ञानमयः' इत्यत्र विज्ञानशब्देन बुद्धेरुक्तत्वात्तदनन्तरं निर्दिष्ट आनन्दमयो जीव एवेति पूर्वोक्तां शङ्कां परिहरति - **विज्ञानमयो हीति** । **हि**शब्दः 'योऽयं विज्ञानमय प्राणेषु' इति श्रुतिप्रसिध्यर्थकः । **न बुद्धिमात्रपरमिति** । 'अहं विजानामी'त्यादौ विज्ञानशब्दस्य ज्ञप्तिवाचकत्वदर्शनाज्ज्ञप्तिवाचिनस्तच्छब्दस्य 'विज्ञायतेऽनेने'ति व्युत्पत्त्या अन्तःकरणपरत्वमस्वरसमिति भावः । अन्यथा मयट्प्रत्ययवैयर्थ्यायादित्याशयेन मात्रचाऽभिप्रेतं विवृणोति - **मयट्प्रत्ययेनेति** । ननु प्रकरणे स्वार्थिकत्वस्वीकारादत्रापि तत्स्वीकर्तव्यमित्यत्राह - **प्राणमये त्विति** । विकारर्थान्तराभावादिति भावः । इह तु नागतिरित्याह - **इह त्विति** । **नानर्थक्यं न्याय्यमिति** । सम्भवति सार्थकत्वे निरर्थकत्वकल्पनस्यान्यत्यत्वादत्रापि प्राचुर्यार्थकत्वसम्भवादिति भावः । ननु स्वार्थेपि मयटोविधानात्स्वार्थिकत्वेपि नानर्थक्यमिति चेन्न, स्वार्थिकत्वस्य निरर्थकत्वापरपर्यायत्वात् । ननु मयडर्थसम्भवे हि निरर्थकत्वकल्पनमनुपपन्नम् । जीवस्य केवलज्ञप्तिरूपत्वेन ज्ञातृत्वस्य काल्पनिकत्वात् मुक्तावस्थायां च तस्याप्यभावात्प्रकृते मयडर्थासम्भव एवेत्यत्राह - **बद्ध** इति ।

एवं प्राणमयादौ स्वार्थकत्वेपि विज्ञानमय इत्यादौ न तथात्वमिति परिहारः उक्तः । अथ प्राणमयादौ शङ्कते - **कथं तर्हीति** । **केवलविज्ञानशब्दोपादानमिति** । विज्ञानमयशब्दस्य 'विज्ञानं यज्ञं तनुते' इति तद्विषयश्लोकस्थविज्ञानशब्दसमानार्थकत्वं वक्तव्यम् । तच्च विज्ञानमयशब्दस्य जीववाचकत्वे न सम्भवति । अतः मयट्प्रत्ययस्य स्वार्थकत्वमेवाभ्युपेत्यमिति भावः । परिहरति - **ज्ञातुरेवेति** । ज्ञानस्यैव ज्ञानाश्रयत्वमविरुद्धमित्यवधारणेन व्यनक्ति । **अपि**शब्दः स्वरूपधर्मयोः साधारणं प्रकाशत्वं प्रवृत्तिनिमित्तमिति सूचयति । जीवस्यैव ज्ञानरूपत्वेन विज्ञानशब्देन जीववाचित्वसम्भवान्न विरोध इति भावः । परिहारान्तरमाह - **ज्ञानैकेति** । विज्ञानशब्द एव विज्ञानाश्रयपर इति भावः ।

नन्वस्तु ज्ञातृस्वरूपस्य ज्ञानैकनिरूपणीयत्वं, किं तत इत्यत्राह - **स्वरूपेति** । स्वरूपनिरूपणधर्मशब्दा अपृथक्सिद्धधर्मवाचिशब्दाः, न तु स्वरूपनिरूपकधर्मवाचिशब्दाः । निरूपितस्वरूपविशेषणवाचिशब्दानामपि केषाञ्चिद्धर्मिमुखेन धर्मिप्रतिपादनपरत्वेऽविवादात् । **स्वरूपनिरूपणधर्म शब्दाः सति धर्मिवाचकपदे** इति भाषाणं तु नियमेन स्वरूपनिरूपकधर्मवाचिशब्दानां धर्मिस्वरूपप्रतिपादनपरत्वमभिप्रेत्य । निरूपितस्वरूपविशेषणवाचिनां नीलादिशब्दानां तथात्वेपि तेषामेव दण्डादीनां न धर्मिप्रतिपादनपरत्वं, दण्डिशब्द एव हि धर्मिस्वरूपप्रतिपादनपरः । अतो न नियमः । यद्वा, ज्ञानस्य स्वरूपनिरूपकधर्मत्वमभिप्रत्योक्तम् । आकृत्यधिकरणन्यायमुपजीव्य **गवादिशब्दवदिति** दृष्टान्तोक्तिः । गोशब्दवाच्यस्य गोत्वस्य गोस्वरूपनिरूपकधर्मत्वेन तद्वाचिशब्दस्य धर्मिस्वरूपप्रतिपादकत्ववत् ज्ञानवाचिशब्देन ज्ञानाश्रयधर्मिप्रतिपादनं युक्तमिति भावः । एवं 'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवदि'ति सूत्रोक्तप्रकारमवलम्ब्य परिहारः कृतः । अथ शब्दस्वारस्यपर्यालोचनया परिहारद्वयमाह - **कृत्यल्युट** इति । ततश्च विज्ञानपदस्य विज्ञानकर्ता, विज्ञानाश्रय इत्यर्थः ।

**ल्युडाश्रीयते । नन्यादित्वं वाऽऽश्रित्य** (अष्टा.३-१-१३४) **'नन्दिग्रहि' इत्यादिना कर्तरि ल्युः । अत एव (च), 'विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च' इति यज्ञादिकर्तृत्वं विज्ञानस्य श्रूयते । बुद्धिमात्रस्य हि न कर्तृत्वं सम्भवति । अचेतनेषु हि चेतनोपकरणभूतेषु विज्ञानमयात्प्राचीनेष्वन्नमयादिषु न चेतनधर्मभूतं कर्तृत्वं श्रूयते । अत एव चेतनमचेतनञ्च स्वासाधारणैर्निलयनत्वानिलयनत्वादिभिर्धर्मविशेषैर्विभज्य निर्दिशद्वाक्यम्, 'विज्ञानञ्चाविज्ञानञ्चेति विज्ञानशब्देन तद्गुणं चेतनं वदति । तथाऽन्तर्यामिब्राह्मणे 'यो विज्ञाने तिष्ठन्' इत्यस्य काण्वपाठगतस्य पर्यायस्य स्थाने, 'य आत्मनि तिष्ठन्' इति पर्यायमधीयाना माध्यन्दिनाः काण्व-**

---

ननु विज्ञानशब्दानुरोधेनैव विज्ञानमयशब्दस्यार्थः किमिति न वर्ण्यते, इति चेन्न, प्रथमश्रुतत्वाच्छ्रुत्यन्तरप्रत्यभिज्ञानात्प्रकृतिस्वारस्यात्प्रत्ययनैरर्थक्यानुपपत्तेश्च विज्ञानमयशब्दानुरोधेनैव विज्ञानशब्दार्थवर्णनस्य युक्तत्वात् । अस्तु वा विज्ञानशब्दानुरोधेन तदर्थवर्णनम् । अथापि न विज्ञानमयशब्दो जीवपरः । विज्ञानशब्दस्यैव जीवपरत्वावश्यकत्वादित्यभिप्रयन्नाह - **अत एवेति** । विज्ञानशब्दस्य जीवपरत्वोदेवेत्यर्थः । प्रत्यक्षश्रुतिसूत्रादिसिद्धत्वेन बोद्धुरेव कर्तृत्वसम्भवादिति भावः । **न कर्तृत्वं सम्भवति** । यज्ञादिकर्तृत्वं न सम्भवतीत्यर्थः । अचेतनस्य स्वव्यापारकर्तृत्वसम्भवेपि 'यज्ञं तनुते' इत्युक्त चेतनैकान्तप्रयत्नाधारत्वरूपकर्तृत्वस्यासम्भवादित्यर्थः ॥

ननु प्रकरणे 'अन्नाद्भूतानि जायन्ते, जातान्यन्नेन वर्धन्ते' इत्यनन्तरं 'अद्यते अत्ति च भूतानि तस्मादन्नं तदुच्यते' इत्यन्नमये औपचारिककर्तृत्वस्योक्तत्वादौपाचारिककतृत्वमेव प्रकरणसिद्धं 'विज्ञानं यज्ञं तनुते' इत्यनेनोच्यत इति शङ्कां परिहरति - **अचेतनेष्विति** । **अन्नमयादिष्विति** अतद्गुणसंविज्ञानोबहुव्रीहिः । **कर्तृत्वं** = औपचारिककर्तृत्वमपि । अयं भावः - असति बाधके औपचारिककर्तृत्वकल्पनमप्ययुक्तम् । प्रकरणसिद्धत्वमेव बाधकं चेत्, तत्कथञ्चित्सोढव्यं स्यात् । प्रकरणानुवृत्तिश्च नास्ति, प्राणमयमनोभययोरभावादिति । एवं विज्ञानशब्दस्य श्रुत्यन्तरबलादपि चेतनपरत्वमावश्यकमित्याह - **अत एवेति** । **चेतनमचेतनञ्चे**त्यनेन अन्तःकरणानन्तःकरणविभागो नास्तीति सूचितम् । निलयनत्वस्य 'जीवभूतां महाबाहो ययेदं धार्यते जगत्' इति चेतनधार्यत्वोक्तेः तदाश्रयत्वं चेतनस्यैवेत्युक्तं नाचिद्विकारस्यान्तःकरणस्येति न निलयनशब्दवाच्यत्वमन्तःकरणस्येति सूचनाय - **निलयनत्वादीत्युक्तम्** ।

नन्वस्तु निलयनानिलयनशब्दयो चेतनाचेतनपरत्वं, तावता विज्ञानशब्दस्य चेतनपरत्वे किमायातमित्यत्राह - **विज्ञानञ्चाविज्ञानञ्चेतीति** । **निलयनञ्चानिलयनञ्चे**ति चेतनाचेतनयोरेव निलयनत्वादिधर्मेण विभागकरणवत् 'विज्ञानञ्चाविज्ञानञ्चे'त्यनेन तयोरेव विज्ञानत्वादिधर्मेण विभागकरणादिति भावः । ननु विज्ञानशब्दस्य सम्वित्परत्वं किं न स्यात् ? मैवम् । पराभिमतसंविद्रूपात्मन आत्मान्तरव्याप्यत्वानभ्युपगमात्तदनुप्रविश्येत्युक्तानुप्रवेशासङ्गत्यापत्तेः । विज्ञानशब्दस्यात्मपरत्वे प्रयोगान्तरं प्रदर्शयति - **तथेति** । अयं भावः - आत्मशब्दस्तावन्नान्तःकरणपरः, शब्दास्वारस्यात् 'विज्ञायतेऽनेनेति' व्युत्पत्त्या विज्ञानशब्दस्य ज्ञानातिरिक्तार्थपरत्ववदात्मशब्दस्य चेतनव्यतिरिक्तार्थपरत्वं न स्वरसम् । अत आत्मशब्दस्य जीवात्मपरत्वात्तत्स्थाने श्रुतो विज्ञानशब्दो जीवात्मपर एव । अन्तःकरणपरत्वे तु शब्दद्वयास्वारस्यम् । न चात्मशब्दस्य परमात्मत्वेनाभिमतसंविदूपत्वमस्त्विति वाच्यम् । 'य आत्मनि तिष्ठन्नि'ति श्रवणात् । न हि परमात्मनोप्यात्मान्तरव्याप्यत्वं युक्तम् । अन्यथा परमात्मत्वासिद्धेः । अत आत्मशब्दो जीवात्मपर इति स्थानैक्याद्विज्ञानशब्दोपि जीवात्मपर एवेति । 'आत्मेती'त्येतावति पर्याप्ते '**जीवात्मेती**'ति भाषणं श्रुतावात्मशब्दस्यान्तःकरणादिपरत्वव्युदासज्ञापनाय ॥

ननु विज्ञानशब्दस्य जीववाचित्वे कथं क्लीबता? न च जीववाचिनोऽपि चेतनादिशब्दस्य क्लीबत्वदर्शनान्न

**पाठगत(तं) विज्ञानशब्दनिर्दिष्टं जीवात्मेति स्फुटीकुर्वन्ति। विज्ञानमिति च नपुंसकलिङ्गं वस्तुत्वाभिप्रायम्। तदेवं विज्ञानमयाज्जीवादन्यस्तदन्तरः परमात्मा आनन्दमयः।**

**यद्यपि, 'विज्ञानं यज्ञं तनुते' इति श्लोके ज्ञानमात्रमेवोपादीयते; न ज्ञाता - तथाऽपि 'अन्योन्तर आत्मा विज्ञानमय' इति तद्वान् ज्ञातैवोपदिश्यते; यथा, 'अन्नाद्वै प्रजाः प्रजायन्ते' इत्यत्र श्लोके केवलान्नोपादानेऽपि 'स वा एष पुरुषोऽन्नरसमयः' इत्यत्र नान्नमात्रं निर्दिष्टम्; अपि तु तन्मयस्तद्विकारः। एतत्सर्वं हृदि निधाय सूत्रकारः स्वयमेव, 'भेदव्यपदेशात्' इति अनन्तरमेव वदति॥**

**यदुक्तम् - जगत्कारणतया निर्दिष्टस्य,** (छां. ६-३-२) **'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य',** (छा. ६-८-७) **'तत्त्वमसि' इति च जीवसामानीधिकरण्यनिर्देशाज्जगत्कारणमपि जीवस्वरूपान्नातिरिच्यत इति कृत्वा, जीवस्यैव स्वरूपम्, 'ब्रह्मविदाप्नोति परम्' इति प्रक्रान्तमसुखाद्व्यावृत्तत्वेन आनन्दमय इत्युपदिश्यत इति - तदयुक्तम्; जीवस्य चेतनत्वे सत्यपि, 'तदैक्षत बहु स्यां प्रजायेयेति। तत्तेजोऽसृजत' इति स्वसङ्कल्पपूर्वकानन्तविचित्रसृष्टियोगानुपपत्तेः। शुद्धावस्थस्यापि (हि) तस्य सर्गादिजगद्व्यापारासम्भवः** (शारी.४-४-१७, २१.)

---

दोष इति वाच्यम्। विज्ञानशब्दस्य ल्युड्प्रत्ययान्तत्वेन जीव वाचित्वस्य वक्तव्यतया प्रत्ययान्तस्य तस्य विशेष्यानुगुणलिङ्गत्वावश्यकत्वेन विज्ञानमयस्यात्र विशेष्यत्वेन पुल्लिङ्गत्वावश्यम्भावादत्यत्राह - **विज्ञानमिति**। एवमत्र विज्ञानमयशब्देनैव जीवस्य बोधनादानन्दमयशब्देन तदन्यपरमात्मैव वाच्य इत्युपसंहरति - **तदेवमिति**। एवं विज्ञानविज्ञानमयशब्दयोरैकर्थ्यसम्पादनाद्विज्ञानशब्दस्य ज्ञातृपरत्वमभ्युपगतम्। अथ तस्य ज्ञानपरत्वाभ्युपगमेपि विज्ञानमयशब्दस्य तदाश्रयजीवपरत्वं न विरुद्धमिति दर्शयति - **यद्यपीति**। **न ज्ञातेति**। मयट्रहितत्वादिति भावः। **ज्ञातैवोपदिश्यत इति**। मयट्सत्त्वादिति भावः॥

ननु तर्हि ब्राह्मण श्लोकयोरैकार्थ्यं न स्यादित्यत्राह - **यथेति**। पूर्वोक्तार्थैकदेशविषयत्वादैकर्थ्यम्। अन्नमयविषयश्लोके दर्शनादिति भावः। **तन्मय** इत्यस्य विवरणं तद्विकार इति। एवमुक्तं विज्ञानमयशब्दस्य जीववाचित्वं सूत्रकारसम्मतमिति दर्शयति - **एतत्सर्वमिति**। अयं भावः - 'तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मानन्दमय' इति आनन्दमये जीवभेदव्यपदेशादानन्दमयः परमात्मेति वदतस्सूत्रकारस्य विज्ञानमयशब्दस्य जीववाचकत्वं सम्मतमिति प्रतीयते, अन्यथा विज्ञानमयाद्भेदव्यदेशमादायानन्दमयशब्दवाच्यस्य परमात्मत्वसाधनासम्भवात्। तत्र सूत्रकारसम्मतं विज्ञानमयशब्दस्य जीववाचकत्वं मयटः स्वार्थकत्वे न सम्भवति। अतः प्राचुर्यार्थकत्वमपि तदिष्टमिति प्रतीयते। एवं विज्ञानमयविषयश्लोके 'विज्ञानं यज्ञं तनुत' इत्यत्र विज्ञानशब्दस्यापि विज्ञानमयशब्दसमानार्थकत्वावश्यकत्वे विज्ञानाश्रायजीववाचकत्वमपि तदिष्टमेव ,तच्चोक्तोपपत्तिबलादेव स्थाप्यमिति उपपत्तिप्रकारोपि सूत्रकारसम्मत एवेति। अत एवोक्तं **एतत्सर्वं हृदि निधायेति**। अतः सिद्धं निरतिशयानन्दयोगी परमात्मैव आनन्दमयपदवाच्य इति॥

जगत्कारणस्यात्मनो जीवसामानाधिकरण्यनिर्देशेन जीव एव जगत्कारणं, स एवानन्दमयपदवाच्य इति पूर्वपक्षिणोक्तामाशङ्कां परिहर्तुमनुवदति - **यदुक्तमिति**। परिहरति - **तदयुक्तमिति**। **स्वसङ्कल्पपूर्वकेति**। प्रलयदशायामुपसंहृतकरणकलेवरस्य कर्मवश्यस्य सृज्यदेहेन्द्रियानपेक्षसङ्कल्पानुपपत्त्या सङ्कल्पेन विचित्रसृष्टिरनुपपन्नेत्यर्थः। सृष्ट्यनुगुणसङ्कल्पो हि जीवस्य देहेन्द्रियानेपक्षो न भवति। प्रलयदशायाश्च करणकलेबरोपसंहारात् सङ्कल्पोऽनुपपन्नः। ततश्च देहेन्द्रियादिसर्गानन्तरं सङ्कल्पः, सङ्कल्पे च देहेन्द्रियादिसर्ग इत्यन्योन्याश्रय एव स्यादिति भावः। ननु परिशुद्धमुक्तात्मस्वरूपस्य देहेन्द्रियानपक्षसङ्कल्पः त्वदभिमतब्रह्मण इवोपपद्यत इति तस्यैव जगत्कारणत्वमस्त्विति शङ्कां परिहरति - **शुद्धेति**।

**'जगद्व्यापारवर्जम्', 'भोगमात्रसाम्यलिङ्गाच्च' इत्यत्रोपपादयिष्यते ॥**

**कारणभूतस्य ब्रह्मणो जीवस्वरूपत्वानभ्युपगमे, 'अनेन जीवेनाऽऽत्मना', 'तत्त्वमसि' इति सामानाधिकरण्यनिर्देशः कथमुपपद्यत इति चेत् - कथं वा निरस्तनिखिलदोषगन्धस्य सत्यसङ्कल्पस्य सर्वज्ञस्य सर्वशक्तेरनवधिकातिशयासङ्ख्येयकल्याणगुणगणस्य सकलकारणभूतस्य ब्रह्मणो नानाविधानन्तदुःखाकरकर्माधीनचिन्तितनिमिषितादिसकलप्रवृत्तिजीवस्वरूपत्वम् ? अन्यतरस्य मिथ्यात्वेनोपपद्यत इति चेत् - कस्य भोः ? किं हेयसम्बन्धस्य? किं वा हेयप्रत्यनीककल्याणैकतानस्वभावस्य? ॥**

**हेयप्रत्यनीककल्याणैकतान(स्वभाव)स्य ब्रह्मणोऽनाद्यविद्याश्रयत्वेन हेयसम्बन्धमिथ्याप्रतिभासो मिथ्यारूप इति चेत् - विप्रतिषिद्धमभिधीयते - ब्रह्मणो हेयप्रत्यनीककल्याणैकतानत्वम्, अनाद्यविद्याश्रयत्वेनानन्तदुःखविषयमिथ्याप्रतिभासाश्रयत्वञ्चेति । अविद्याश्रयत्वं तत्कार्यदुःखप्रतिभासाश्रयत्वं चैव हि हेयसम्बन्धः । तत्सम्बन्धित्वं तत्प्रत्यनीकत्वञ्च विरुद्धमेव । तथाऽपि तस्य मिथ्यात्वान्न विरोध इति मा वोचः ।**

तथा च शुद्धावस्थस्यापि जगत्कारणत्वासम्भवाज्जगत्कारणस्यैवानन्दमयपदवाच्यत्वेन न प्रत्यगात्मा आनन्दमय इत्यर्थः । अयं भावः - जीवस्वरूपस्य जगत्करणत्वमयुक्तम् । किमुपादानत्वमुत निमित्तत्वं? नाद्यः, प्रधानस्यैवोपादानत्वाभ्युपगमेनापसिद्धान्तात् । नापि निमित्तत्वम्, उपादानकारणत्वेनाभिमतस्य सच्छब्दवाच्यस्यैव विचित्रचेतनाचेतनात्मकजगद्रूपेण 'बहु स्यामि'त्यनन्यसाधारणसङ्कल्पाश्रयत्वरूपनिमित्तत्वबोधनात् । न च चेतनाधिष्ठितप्रधानस्योपादानत्वंउक्तसङ्कल्पश्च विशेषणपर्यवसायीति वाच्यम् । प्रलयदशायां देहेन्द्रियाभावेन तदपेक्षसङ्कल्पानुपपत्त्या निमित्तत्वासम्भवात् । शुद्धस्य तथा सम्भवेपि सूत्रकारेणैव जगत्कारणत्वनिराकरणेन न कारणत्वसम्भव इति ॥

तर्हि सामानाधिकरण्यनिर्देशस्य का गतिरिति शङ्कते - **कारणेति** । प्राकरणिकवाक्येन जीवपरयोर्विरुद्धधर्माध्यासप्रतीत्या भेदस्य स्फुटत्वान्न सामानाधिकरण्यं पराभिमतैक्यबोधकं, किन्तु शरीरशरीरिभावनिबन्धनमेव तदिति स्वेन बहुशः प्रतिपादितत्वात्, अत्र प्रतिबन्द्या परिहरति - **कथं वेति** । यथासङ्कल्पं सृष्टिश्रवणात्सत्यसङ्कल्पादिगुणात्तिरोधानावगमेन तिरोधायकहेयासम्बन्धोऽर्थसिद्ध इत्याशयेनाह - **निरस्तनिखिलदोषगन्धस्येति** । जगत्कारणत्वौपयिकगुणानामन्यत्रोक्तानामपि सर्वशाखाप्रत्ययन्यायेन सद्विद्यायामप्यर्थतस्सिद्धिरित्यभिप्रेत्य - **अनवधिकातिशयेत्याद्युक्तम्** । प्रत्यक्षश्रुत्यादिसिद्धमर्थमुपजीव्य **नानाविधेत्याद्युक्तम्** । **जीवत्वमित्युक्ते** शरीरवाचकशब्दानां शरीरिपर्यन्तत्वनियमेन जीवशरीरकत्वप्रतीतिः स्यादिति तद्व्यवच्छेदाय **जीवस्वरूपत्वमित्युक्तम्** । जीवपरयोः सामानाधिकरण्यबलेन स्वरूपैक्ये क्रियमाणे 'तत्त्वमि'त्यत्र प्रातिपदिकद्वयावगतविशेषणानां मिथोविरुद्धत्वेन तदन्वयः कथमेकस्मिन्धर्मिणि स्यादिति सारः । दूषयतुं विकल्पयति - **कस्येति** । ननु हेयसम्बन्धस्य हेयप्रत्यनीककल्याणैकतानत्वस्य चोभयस्य स्वाभाविकत्वे सत्यत्वे वा विरोधः । तत्र हेयसम्बन्ध औपाधिकोऽसत्यो वा । यथा शुद्धपटस्यौपाधिकं मालिन्यम् । यथा च निर्मलस्यापि स्फटिकस्याध्यासाधीनारुणिमा अपरमार्थः । अतो न विरोध इति ।

प्रथमविकल्पं शङ्कते - **हेयेति** । मिथ्यारूपत्वे हेतुः - **अनाद्यविद्याश्रयत्वेनेति** । **हेयसम्बन्धः** दुःखसम्बन्धः । मिथ्याप्रतिभासः भ्रान्तिज्ञानम् । परिहरति - **विप्रतिषिद्धमिति** । विरुद्धत्वाद्बाधितमित्यर्थः । दुःखसम्बन्धमात्रं न हेयसम्बन्धः । दुःखहेतुभूताविद्यासम्बन्धः दुःखप्रतिभाससम्बन्धश्चेति भावः । तच्छब्द अविद्यातत्कार्यदुःखतत्प्रतिभासपरः । ननु दुःखसम्बन्धस्येवाविद्यासम्बन्धस्य दुःखप्रतिभाससम्बन्धस्य च मिथ्यात्वान्न विरोध इति शङ्कां परिहरति - **तथापीति** । **तथापि** = तेषां हेयत्वेऽपि । अविद्यासम्बन्धादीनां मिथ्यात्वं ब्रुवतां भवतां मिथ्यात्वं किमभिप्रेतम् ?

**मिथ्याभूतमप्यपुरुषार्थ एव; यन्निरसनाय सर्वे वेदान्ता आरभ्यन्त इति ब्रूषे। निरसनीयापुरुषार्थयोगश्च हेय-प्रत्यनीककल्याणैकतानतया विरुध्यते।**

**किं कुर्मः?** (छा.६.१.३) **'येनाश्रुतं श्रुतं भवति' इत्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय,** (छा.६.२.१) **'सदेव सोम्येदमग्र आसीत्' इत्यादिना निखिलजगदेककारणताम्,** (छा.६.२.३) **'तदैक्षत बहु स्याम्' इति सत्य-सङ्कल्पताञ्च ब्रह्मणः प्रतिपाद्य, तस्यैव ब्रह्मणः** (छा.६.८.७) **'तत्त्वमसि' इति सामानाधिकरण्येनानन्तदुःखाश्रय-जीवैक्यं प्रतिपादितम्। तदन्यथानुपपत्या ब्रह्मण एवविद्याश्रयत्वादि परिकल्पनीयमिति चेत् - श्रुतोपपत्तयेऽप्यनुपपन्नं विरुद्धञ्च न कल्पनीयम्॥**

**अथ हेयसम्बन्ध एव पारमार्थिकः, कल्याणैकस्वभावता तु मिथ्याभूता - हन्तैवं तापत्रयाभिहत-चेतनोज्जिजीवयिषया प्रवृत्तं शास्त्रम्, 'तापत्रयाभिहतिरेव तस्य पारमार्थिकी; कल्याणैकस्वभावस्तु भ्रान्ति-परिकल्पित' इति बोधयत्सम्यगुज्जीवयति॥**

**अथैतद्दोषपरिजिहीर्षया ब्रह्मणो निर्विशेषचिन्मात्रस्वरूपातिरिक्त(क्तं?)जीवत्वदुःखित्वादिकं सत्य-सङ्कल्पत्वकल्याणगुणाकरत्वजगत्कारणत्वाद्यपि मिथ्याभूतमिति कल्पनीयमिति चेत् - अहो भवतां वाक्यार्थ-पर्यालोजनकुशलता। एकविज्ञानेन सर्वविज्ञाप्रतिज्ञानं सर्वस्य मिथ्यात्वे सर्वस्य ज्ञातव्यस्याभावान्न सेत्स्यति (सम्पत्स्यते)। यथैकविज्ञानं परमार्थविषयम्, तथैव सर्वविज्ञानमपि यदि परमार्थविषयं**

---

यद्यत्यन्ताभावरूपं, तदा निरसनीयवस्तुन एवाभावात्तन्निरसनार्थशास्त्रारम्भानुपपत्तिः। यदि ज्ञानबाध्यत्वं, तदापि ज्ञानबाध्यस्यापि तस्यापुरुषार्थत्वमुत न। अपुरुषार्थत्वाभावे निरसनीयत्वन्न स्यात्, शास्त्रारम्भवैयर्थ्यञ्च। अपुरुषार्थत्वे अपुरूषार्थमिथ्याभूतवस्तुसंबन्धः हेयप्रत्यनीकत्वञ्च विरुद्धमित्याशयेनाह - **मिथ्यामूतमपीति**॥

ननु हेयसम्बन्धो हेयप्रत्यनीकत्वञ्च मिथो विरुद्धमेव। अथापि किमत्रास्माभिः कार्यम्। यदि श्रुतिरेव विरुद्धमपि हेयसम्बन्धं ब्रूयात्। अतः श्रुतिबलाद्ब्रह्मण उभयसम्बन्धो ह्यङ्गीकार्य इति शङ्कते - **किं कुर्म** इति। **सत्यसङ्कल्पताञ्च प्रतिपाद्य** इत्यन्तेन हेयप्रत्यनीककल्याणैकतानत्वमुक्तम्। परिहरति - **श्रुतोपपत्तय** इति। अनुपपन्नं, तर्कपराहतम्। **विरुद्धं** - प्रमाणविरुद्धम्। उभयोरेकत्र विरोधात्सामानाधिकरण्यन्न सम्भवतीति तर्कविरोधः। 'अपहतपात्मा' इत्यादि-श्रुतिविरोधः। अयं भावः - ब्रह्मणि हेयसम्बन्धः श्रुत्यैव बोधितः, श्रुत्यर्थापत्त्या कल्पनीयो वा। नाद्यः, तादृशश्रुत्यभावात्। 'अनृतेन हि प्रत्यूढाः' इत्यत्रानृतशब्दस्य कर्मपरत्वस्थापनाच्च। न द्वितीयः, कल्प्यमानस्याविरुद्धत्वोपपन्नत्वनियमादिति। अथ 'हेयसंबन्धस्य पारमार्थिकत्वं, कल्याणैकस्वभावस्य मिथ्याभूतत्वमि'ति द्वितीयं विकल्पं शङ्कते - **अथेति**। स्थितस्य हेयसम्बन्धस्यैव पारमार्थिकत्वं ब्रुवतः शास्त्रस्य प्रयोजनपर्यवसायित्वाभावेन प्रामाण्यमेव न स्यादित्याशयेन परिहरति - **हन्तैवमिति**। **तापत्रयाभिहतचेतनोज्जिजीवयिषया प्रवृत्तं शास्त्रमिति**। मातापितृसहस्रेभ्योऽपि वत्सलतरं हि शास्त्रमिति भावः।

एवं 'हेयसम्बन्धस्य मिथ्यात्वं किं वा कल्याणैकस्वभावस्ये'ति सम्भावितं विकल्पद्वयं दूषितम्। अथ निर्विशेष-ब्रह्मवादिनामभिमतमुभयमिथ्यात्वमाशङ्क्य निराकरोति - **अथैतदि**त्यादिना। **वाक्यार्थपर्यालोचनकुशलतेति**। पद-वाक्य-तत्तप्रकरण-प्रकरणान्तर-उपनिषदन्तर-प्रमाणान्तर-तर्कसामानाधिकरण्यनिरुपणरूपपर्यालोचनमेव नास्तीत्यर्थः। **यदि परमार्थ-विषयमिति**। यद्येकविज्ञानं परमार्थविषयं, सर्वविज्ञानं त्वपरमार्थविषयकं, तदा परमार्थविज्ञानेन कथमपरमार्थविज्ञानं

**तदन्तर्गतश्च - तदा तज्ज्ञानेन सर्वविज्ञानमिति शक्यते वक्तुम्। न हि परमार्थशुक्तिकाज्ञानेन तदाश्रयम-परामर्थरजतं ज्ञातं भवति॥**

**अथोच्येत - एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया अयमर्थः - निर्विशेषवस्तुमात्रमेव सत्यम्, अन्यद-सत्यम् इति - न तर्हि,** (छा.६-१-३) **'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' इति श्रूयेत - येन श्रुते-नाश्रुतमपि श्रुतं भवतीति ह्यस्य वाक्यस्यार्थः। कारणतयोपलक्षितनिर्विशेषवस्तुमात्रस्यैव सद्भावश्चेत्प्रतिज्ञातः** - (छां.६-१-४) **'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातम्' इति दृष्टान्तोऽपि न घटते। मृत्पिण्डविज्ञानेन हि तद्विकारस्य ज्ञातता निदर्शिता।**

**तत्रापि विकारस्यासत्यताऽभिप्रेतेति चेत् - मृद्विकारस्य रज्जुसर्पादिवदसत्यत्वं शुश्रूषोरसिद्धमिति प्रतिज्ञातार्थसम्भावनाप्रदर्शनाय 'यथा सोम्य' इति प्रसिद्धवदुपन्यासो न युज्यते। न च तत्त्वमस्यादिवाक्यजन्य-ज्ञानोत्पत्तेः प्राक् विकारजातस्यासत्यतामापादयत्तर्कानुगृगीतम्, अननुगृहीतं वा प्रमाणमुपलभामह इति।**

स्यात्, वैरूप्यात्। परमार्थशुक्तिज्ञानेन तत्कल्पितरजतज्ञानादर्शनादिति भावः। **तदन्तर्गतं** = एकज्ञानविषयविषयकम्।

यद्वा सर्वमिति शेषः। 'एकज्ञानेन सर्वज्ञानं' हि सर्वस्यैकज्ञानविषयत्वे एव भवति। न हि शुक्तिज्ञानेन तदवि-षयरजतस्य ज्ञातत्वं सम्भवति, यथा च परिषज्ज्ञानेन तदन्तर्गतपुरुषज्ञानम्। न तु बहिष्टपुरुषज्ञानं तद्वदिति भावः। एवमुक्तं ज्ञानस्य परमार्थविषयकत्वं, विषयस्य तदन्तर्गत्वञ्च व्यतिरेकेणोपपादयति - **न हीति**। अयं भावः - एकत्वं सर्वत्वञ्चावस्था, धर्मी त्वेकः। अतो धर्मिणो ज्ञातत्वात् 'एकविज्ञानेन सर्वविज्ञान'मुपपन्नं, यथा चावस्थाविशेष-विशिष्टदेवदत्तस्याज्ञातत्वेऽपि धर्मिमात्रज्ञातत्वमादाय प्रागेव 'अयं ज्ञात' इति व्यपदिश्यते, सिद्धान्ते च सूक्ष्म-चिदचिद्विशिष्टब्रह्मण एव कारणत्वेन, तज्ज्ञानेन स्थूलचिदचिद्विशिष्टब्रह्मणो ज्ञातत्वमप्युक्तरीत्यैवेति ध्येयम्॥

अथोक्तप्रतिज्ञायाः पराभिमतमर्थं निराकर्तुमनुवदति - **अथोच्यतेति**। **अन्यदसत्यमिति**। ब्रह्मण एकस्यैव सत्यत्वेन, तज्ज्ञाने सत्यन्यस्य मिथ्यात्वेन न ज्ञातत्वसम्भवादिति भावः। श्रूयमाणप्रतिज्ञावाक्यास्वारस्येन दूषयति - **न तर्हीति**। मिथ्यात्वेन ज्ञातं भवतीति श्रूयेत इत्यर्थः। परमतविरुद्धत्वस्फोरणाय श्रूयमाणस्य वाक्यस्यार्थमाह - **येनेति**। अयं भावः -' मिथ्यात्वेने'ति पदं भवद्भिरध्याहर्तव्यम्। परमार्थैकविज्ञानेन मिथ्यात्वेनान्यस्य ज्ञातत्वोपपादनात् सर्वविज्ञानस्य धर्म्यन्तरविषयकत्वमिति ज्ञानशब्दयोः वैरूप्यम्। 'ज्ञातं भवती'त्यत्र ज्ञातृ-ज्ञेय-तदवच्छिन्नज्ञानानामपि मिथ्यात्वेनाभावान्निवृत्तौ लक्षणा चावश्यकीति। एवं प्रतिज्ञावाक्यास्वारस्यं प्रदर्शितम्।

ननु कार्यतया ज्ञातत्ववादिनां मतेपि कार्यतयेत्याध्याहारः आवश्यक एवेत्यत्र दृष्टान्तस्वारस्येन तदध्याहारस्य नानुपपपन्नत्वमित्यभिप्रेत्य परमते दृष्टान्ताननुगुणत्वमपि प्रदर्शयति - **कारणतयेति**। **तद्विकारस्य ज्ञातता दर्शितेति**। कार्यतयैव ज्ञातत्वं तेन तत्रोपपादितं न मिथ्यात्वेन। 'मृण्मयं विज्ञातं भवती'त्युक्तेरिति भावः। दृष्टान्तेपि विकारस्या-सत्यतया ज्ञातत्वमेवाभिप्रेतमिति शङ्कते - **तत्रापीति**। 'एकविज्ञानेन सर्वविज्ञान'प्रतिज्ञां श्रोतुः तदसम्भवं मन्वानस्य तत्सम्भवप्रदर्शनाय 'यथा सोम्ये'ति प्रसिद्धवदुपन्यासः, असत्यतया ज्ञातत्वस्याभिप्रेतत्वेऽनुपपन्न इति परिहरति - **मृद्विकारस्येति**। **असिद्धमिति**। सिद्धस्यैव हि दृष्टान्तीकरणं युक्तम्। अतः रज्जुज्ञानेन सर्पस्य मिथ्यात्वेन ज्ञातत्वस्य सर्पनिवृत्तेर्वा दृष्टोन्तीकरणं युक्तं, न तु मृद्विकारज्ञातत्वस्येतिभावः। ननु 'तत्त्वमसी'ति वाक्यजन्यज्ञानवतः मृद्विकार-स्यासत्यत्वमनुमातुं शक्यमित्यत्राह - **न चेति**। **अननुगृहीतम्** = आपतप्रतीतिमात्रजनकम्। अयमर्थः 'यथा सोम्ये'ति

**अयमर्थः**, (शारी.२-१-१५) **'तदनन्यत्वमारम्भणशब्दादिभ्य' इत्यत्र वक्ष्यते ।**

**तथा 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । तदैक्षत बहु स्यां प्रजायेयेति । तत्तेजोऽसृजत ... हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽत्मनाऽऽनुप्रविश्य नामरूपे व्याकरवाणि'** (छा.६-८-३) **'सन्मूलाः सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः । ऐतदात्म्यमिदं सर्वम्' इत्यादिना अस्य जगतस्सदात्मकता, सृष्टेः पूवकाले नामरूपविभागप्रहाणम्, जगदुत्पत्तौ सच्छब्दवाच्यस्य ब्रह्मणः स्वव्यतिरिक्तनिमित्तान्तरानपेक्षत्वम्, 'सृष्टिकालेऽहमेवानन्तस्थिरत्रसरूपेण बहु स्याम्' इत्यनन्यसाधारणसङ्कल्पविशेषः, यथासङ्कल्पमनन्तविचित्रतत्त्वानां विलक्षणक्रमविशेषविशिष्टा सृष्टिः, समस्तेष्वचेतनेषु वस्तुषु स्वात्मकजीवानुप्रवेशेनैवानन्तनामरूपव्याकरणं, स्वव्यतिरिक्तस्य समस्तस्य स्वमूलत्वं, स्वायतनत्वं, स्वप्रवर्त्यत्वं, स्वेनैव जीवनम्, स्वप्रतिष्ठत्वमित्याद्यनन्तविशेषाः शास्त्रैकसमधिगम्याः प्रतिपादिताः । तत्सम्बन्धितया प्रकरणान्तरेष्वप्यपहतपाप्मत्वादिनिरस्तनिखिलदोषता-सर्वज्ञता-सर्वेश्वरत्व-सत्यकामत्व-सत्यसङ्कल्पत्व-सर्वानन्दकरण-निरतिशयानन्दयोगादयस्सकलेतरप्रमाणाविषयाः सहस्रशः प्रतिपादिताः । एवमनन्यगोचरानन्तविशेषविशिष्टप्रकृतब्रह्मपरामर्शितच्छब्दस्य निर्विशेषवस्तुमात्रोपदेशपरत्वमसङ्गतत्वेनोन्मत्तप्रलपितायते ।**

**त्वंपदं च संसारित्वविशिष्टजीववाचि । तस्यापि निर्विशेषस्वरूपोपस्थापनपरत्वे स्वार्थः परित्यक्तस्स्यात् । निर्विशेषप्रकाशस्वरूपस्य च वस्तुनो ह्यविद्यया तिरोधानं स्वरूपनाशप्रसङ्गादिभिर्न सम्भवतीति पूर्वमेवोक्तम् ।**

---

श्रुत्यर्थः । एवं प्रतिज्ञादृष्टान्तार्थास्वारस्यं प्रदर्शितम् ।

अथ तदुपरिवाक्यास्वरस्यं प्रदर्शयति - **तथेति** । **अस्य जगतस्सदात्मकतेति** । 'अनेन जीवेनात्मना', 'तत्त्वमसी'ति सच्छब्दवाच्यस्य ब्रह्मणः जीवसामानाधिकरण्यं, तथाशब्दनिर्दिष्टस्य चेतनाचेतनप्रपञ्चस्य सच्छब्दार्थसामानाधिकरण्यं श्रुतम् । तत्राचेतनस्य ब्रह्मसामानाधिकरण्येपि यथा न स्वरूपैक्यं तथैव जीवस्य तत्सामानाधिकरण्येपि न स्वरूपैक्यं युक्तमिति भावः । त्रसरूपेणेत्येतत् 'बहु' इत्यस्य विवरणम् । स्वप्रवर्त्यत्वं स्वेनैव जीवनमिति **स्वायतनत्वमित्यस्य** फलतो विवरणम् । 'एतस्य वाऽक्षरस्य प्राशासने गार्गि ! द्यावापृथिव्यौ विधृतौ तिष्ठतः' इति धारणस्य प्रशासनाधीनत्वबोधनाज्जीवनस्य धारणाधीनत्वाच्च, **शास्त्रैकसमधिगम्या** इत्यनेन निषेधार्थमनुवादा इति पक्षो निरस्तः । प्रकरणान्तरास्वारस्यं प्रदर्शयति - **तत्सम्बन्धितयेति** । **तत्पदं** = सच्छब्दार्थपरम् । **अपहतपाप्मत्वादिरूपा निरस्तनिखिलदोषतेत्यर्थः** । **सर्वानन्दकरणं** = सर्वेषामानन्दकरणम् । सर्वेषामानन्दानां करणं वा । **सकलेतरप्रमाणाविषया** इति निषेधार्थकानुवादनिरासः । यद्वा, षड्विधतात्पर्यलिङ्गेषु अपूर्वत्वरूपतात्पर्यलिङ्गमनेन सूचितम् । 'तत्त्वमि'ति पदद्वयास्वारस्यं प्रदर्शयति - **एवमिति** । **अनन्यगोचरानन्तविशेषेत्यनेन** प्राकरणिकवाक्यविरोध उक्तः । **प्रकृतब्रह्मपरामर्शीत्येनेन** स्वरूपपरत्वे तच्छब्दव्युत्पत्तिविरोधो उक्तः । तच्छब्दस्य प्रकृतसर्वाकारविशिष्टवस्तुपरामर्शित्वनियमात् ।। **उपदेशपरत्वं** = उपदेशपरत्वकथनम् ।

अयं भावः - शब्दस्याभिमुखचेतनपरत्वादभिमुखत्वस्य स्ववाक्यबोध्यत्वस्याज्ञे संसारिण्येव सम्भव इत्यभिप्रेत्य, त्वंपदञ्च संसारित्वविशिष्टजीववाचीत्युक्तम् । **स्वार्थः परित्यक्तस्स्यादिति** । बोधनार्हत्वोपयोग्याकारविशिष्टस्य त्वमर्थस्य परित्यागादिति भावः । प्रमाणतर्कास्वारस्यमाह - **निर्विशेषेति** । चकारेण तत्त्वंपदयोः प्रवृत्तिनिमित्तपरित्यागेन निर्विशेषस्वरूपमात्रबोधनानुपपत्तिरूपतर्कास्वारस्यं समुच्चितम् । **पूर्वमेवोक्तमिति** । तिरोधानानुपपत्तिनिरूपणावसर इत्यर्थः ।

**एवञ्च सति समानाधिकरणवृत्तयोस्तत्त्वमिति द्वयोरपि पदयोर्मुख्यार्थपरित्यागेन लक्षणा च समाश्रयणीया ॥**

**अथोच्येत - समानाधिकरणवृत्तानामेकार्थप्रतिपादनपरतया विशेषणांशे तात्पर्यासम्भवादेव विशेषण-निवृत्तेर्वस्तुमात्रैकत्वप्रतिपादनान्न लक्षणाप्रसङ्गः; यथा 'नीलमुत्पलम्' इति पदद्वयस्य विशेष्यैकत्वप्रतिपादन-परत्वेन नीलत्वोत्पलत्वरूपविशेषणद्वयं न विवक्ष्यते । तद्विवक्षायां हि नीलत्वविशिष्टाकारेणोत्पलत्वविशिष्टा-कारस्यैकत्वप्रतिपादनं प्रसज्येत । तत्तु न सम्भवति । न हि नैल्यविशिष्टाकारेण तद्वस्तु उत्पलपदेन विशेष्यते ; जातिगुणयोरन्योन्यसमवायप्रसङ्गात् । अतो नीलत्वोत्पलत्वोपलक्षितवस्त्वेकत्वमात्रं सामानाधिकरण्येन प्रतिपाद्यते । तथा 'सोऽयं देवदत्त' इति, अतीतकालविप्रकृष्टदेशविशिष्टस्य तेनैव रूपेण सन्निहितदेशवर्त-मानकालविशिष्टतया प्रतिपादनानुपपत्तेरुभयदेशकालोपलक्षितस्वरूपमात्रैक्यं सामानाधिकरण्येन प्रतिपाद्यते । यद्यपि नीलमित्याद्येकपदश्रवणे प्रतीयमानं विशेषणं सामानाधिकरण्यवेलायां विरोधान्न प्रतिपाद्यते - तथाऽपि वाच्येऽर्थे प्रधानांशस्य प्रतिपादनान्न लक्षणा । अपि तु विशेषणांशस्याविवक्षामात्रम् ।**

---

सामानाधिकरण्यस्यैक्ये तात्पर्यात्तत्त्वंपदयोस्स्वरूपमात्रोपस्थापकत्वमित्युक्तं इति शङ्कां परिहरति - **एवञ्चेति** । **एवञ्च सति** = एवमनुपपत्ति सहस्रे विद्यमानेपि निर्विशेषवस्तुपरत्वाभ्युपगमे । **वृत्तं** = बोधकपदम् । **द्वयोरपि पदयोरिति** । 'गौर्वाहीकः' इत्यादाविवैकपदलक्षणाऽभ्युपगमो न तावद्बाधकः । पदद्वयलक्षणाङ्गीकरणन्तु न कुत्रापि दृष्टमिति भावः ॥

ननु सामानाधिकरण्यस्यैक्ये तात्पर्यात्समानाधिकरणपदानां विशिष्टवाचकत्वे विशेषणविशेष्यरूपार्थद्वयबोधनेनै-कार्थत्वासिद्धेः विशेषणांशतात्पर्यासम्भवावगमेन स्वरूपोपस्थापकत्वमेवाभ्युपेत्यम् । न चैवं सति, लक्षणा प्रसङ्गः । वाच्यैकदेशपरित्यागेऽपि प्रधानांशप्रतिपादनात् तद्बहिर्भूतार्थाप्रतिपादनाच्चेति शङ्कते - **अथोच्येतेति** । 'नीलमुत्पलमि'ति सिद्धवत्कारेण दृष्टान्तोक्तिः । विशेषणद्वयविवक्षणेऽनिष्टमाह - **तद्विवक्षायामिति** । **अन्योन्यसमवायप्रसङ्गादिति** । अयं भावः - 'नीलमुत्पलमि'त्यादौ नीलत्वविशिष्टस्योत्पलत्वविशिष्टस्य च युगपदभिधानं, किं वा क्रमेण । नाद्यः, उद्देश्योपादेयविभागाभावप्रसङ्गात् । युगपत्पदद्वयोपस्थापितनीलत्वघटत्वविशिष्टवस्तुनः समानविभक्त्या ऐक्यप्रतिपादने नीलत्वघटत्वयोरप्यैक्यप्रसङ्गाच्च । द्वितीये, किं समानविभक्त्या एकविशेषणविशिष्टे अपरविशेषणविशिष्टैक्यं प्रतिपाद्यते, उत विशेषणान्तरान्वयमात्रम् । न प्रथमः, विशेषणभूतजातिगुणयोरप्यैक्यप्रसङ्गात् । न द्वितीयः, एकविशेषणविशिष्टे विशेषणस्यान्वये विशिष्टान्वयिनो विशेषणान्वयित्वनियमेन 'नीलमुत्पलमि'त्यादौ जातिगुणयोरन्योन्यसमवायप्रसङ्गादिति ।

ननु विशेषणांशे तात्पर्याभावे नैव तस्योपयोग इत्यत्राह - **अत** इति । एवमुक्तार्थे स्पष्टमुदाहरणान्तरमाह - **तथेति** । **तेनैव रूपेण** = अतीतदेशकालविप्रकष्टदेशविशिष्टत्वेन रूपेण । अयमाशयः - अतीतकालविशिष्टस्य देव-दत्तस्यातीतकालविशिष्टत्वेनैव वर्तमानकालविशिष्टत्वं हि बाधितम् । एवं विप्रकृष्टदेशविशिष्टस्य तादृशदेशविशिष्टत्वेन सन्निहितदेशविशिष्टत्वञ्च बाधितम् । न ह्यतीतकालवृत्तित्वदशायामेव वर्तमानकालवृत्तित्वसम्भवः, न वा विप्रकृष्ट-देशवृत्तित्वदशायां सन्निहितदेशवृत्तित्वसम्भव इति । अथ विशिष्टवाचिपदस्योक्तविरोधाद्विशिष्टपरित्यागेन तदेकदेश-भूतविशेष्यबोधकत्वे लक्षणा स्यादित्याशङ्क्य परिहरति - **यद्यपीत्यादिना** । **न लक्षणेति** । विशेष्यांशस्य तात्पर्यविषयत्वा-द्धर्मितया प्रधानत्वाच्छक्तिविषयविशिष्टबहिर्भूतत्वाभावाच्च न तत्र लाक्षणिकत्वं, यथा च करचरणादिविशिष्टवाचिनः पुरुषशब्दस्य करादिविशेषविहीने विशेषणत्यागेऽपि न लाक्षणिकत्वमिम्यर्थः ।

ननु विशिष्टवाचिशब्दस्य विशेष्यांशस्येव विशेषणांशस्यापि मुख्यार्थत्वात्कथं तत्प्ररित्याग इत्यत्राह - **अपि त्विति** । **अविवक्षामात्रमिति** । सामानाधिकरण्यस्थले ऐक्ये तात्पर्याद्विशिष्टवाचकत्वे चैकार्थत्वासिद्धेः **विशेषणे तात्पर्या-**

**सर्वत्र सामानाधिकरण्यस्यैष एव स्वभाव इति न कश्चिद्दोष इति ।**

**तदिदमसारम् - सर्वेष्वेव वाक्येषु पदानां व्युत्पत्तिसिद्धार्थसंसर्गविशेषमात्रं प्रत्याय्यम् । तत्र समानाधिकरणवृत्तानामपि नीलादिपदानां नैल्यादिनिशिष्ट एवार्थो व्युत्पसिद्धः पदान्तरार्थसंसृष्टोऽभिधीयते ; यथा - 'नीलमुत्पलमानय' इत्युक्ते नीलिमादिविशिष्टमेवाऽऽनीयते, यथा च - 'विन्ध्याटव्यां मदमुदितो मातङ्गगणस्तिष्ठति' इति पदद्वयावगतविशेषणविशिष्ट एवार्थः प्रतीयते । एवं वेदान्तवाक्येष्वपि समानाधिकरणनिर्देशेषु तत्तद्विशेषणविशिष्टमेव ब्रह्म प्रतिपत्तव्यम् ।**

**न च विशेषणविवक्षायामितरविशिष्टाकारं वस्तु अन्येन विशेष्टव्यम् ; अपि तु सर्वैर्विशेषणैः स्वरूपमेव विशेष्यम् । तथा हि, (कैयटे बृद्ध्याह्निके) 'भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिस्सामानाधि-**

---

भावस्यावश्यकत्वाद्विशेष्यांशस्येव विशेषणांशस्य न मुख्यार्थत्वमिति भावः । तर्हि विशेषणांशाविवक्षायां शब्दास्वारस्यमेवेत्यत्राह - **सर्वत्रेति** । सामानाधिकरण्यास्वारस्यापेक्षया शब्दास्वारस्यं न दोष इति भावः । **अत्रैकपदश्रवणे प्रतीयमानम्** इत्यनेन 'भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिस्सामानाधिकरण्यमिति तल्लक्षणञ्चोपपादितम् । **भिन्नप्रवृत्तिनिमित्तानामि**त्यस्य वस्तुतो 'भिन्नप्रवृत्तिनिमित्तकानामि'त्यर्थकत्वाद्व्युत्पत्तिदशायां शब्दानां निमित्तभेदाश्रयणात् ।

उक्तामाशङ्कां निराकरोति - **तदिदमि**त्यादिना । तत्र स्वपक्षे परोक्तदूषणान्युन्तरत्र परिहरिष्यन् आदौ स्वसिद्धान्तमाह - **सर्वेष्वेवेति** । व्यधिकरणेषु समानाधिकरणेषु चेत्यर्थः । अयं भावः - वाक्यं समानाधिकरणं वा व्यधिकरणं वा भवतु, सर्वत्र तद्घटकपदानां व्युत्पत्तिकाले योऽर्थः प्रत्यायते, तत्संसर्गविशेष एव प्रयोगकाले प्रत्याय्यः । अन्यथा प्रतिवाक्यमर्थभेदव्युत्पत्तिभेदकल्पनापत्तेः । क्लृप्तकल्पविरोधे तु 'युक्तः क्लृप्तपरिग्रहः' इति न्यायेन क्लृप्तव्युत्पत्त्यैव सर्वत्र निर्वाहसम्भवे व्युत्पत्त्यन्तरकल्पनस्यानुपपन्नत्वात् । वाक्यानां व्युत्पत्तिसिद्धार्थसंसर्गविशेषमात्र वोधकत्वाच्च । न हि वाक्यमेव पदानामर्थान्तरेव्युत्पत्तिमुत्पादयितुं क्षमम् । व्युत्पत्तिदशायाञ्च विशिष्ट एवार्थो उपस्थाप्यत इति भवद्भिरप्यङ्गीकृतश्च । अतः व्यधिकरणवाक्यानामिव समानाधिकरणवाक्यानामपि व्युत्पत्तिसिद्धार्थ संसर्गबोधकत्वमेवेति । न च विरोधात्समानाधिकरणस्थले पदानां व्युत्पत्त्यन्तरपरिग्रहसम्भवः अविरोधस्योपपादयिष्यमाणत्वादिति । **व्युत्पत्तिः** - शक्तिज्ञानम् । सामानाधिकरण्यस्थले विविष्टैकार्थप्रतीतिमुदाहरणेन प्रदर्शयति - **यथेति** । अत्र 'नीयते', 'आनीयते' इत्युक्त्या प्रत्यक्षविषयमिदमुदाहरणम् । 'प्रतीयते' इत्युक्त्या परोक्षविषयं तत् इति द्रष्टव्यम् । **नीलिमादिविशिष्टमेवानीयत** इति । 'नीलमुत्पलमि'ति पदसमुदायस्योत्पलस्वरूपमात्रपरत्वादनीलोत्पलादिकमप्यानीयेत । एवमुत्पलपदस्यापि उत्पलत्वविशिष्टार्थकत्वाभावेन वस्तुस्वरूपमात्रपरत्वात् घटादिकमप्यानीयत इति भावः । प्रत्यक्षस्थल इव परोक्षस्थलेपि समानाधिकरणपदानामनेकविशेषणविशिष्टैकार्थबोधकत्वस्थापनाय **विन्ध्याटव्यामि**त्युदाहरणं प्रदर्शितम् । अथ परोक्षस्थले वैदिकशब्देपि 'य एव लौकिकास्त एव वैदिका' इति न्यायेन वैदिकशब्दानामपि लौकिकशब्दसजातीयत्वात् समानाधिकरणपदानामियमेव रीतिरित्याह - **एवमिति** ।

ननु विशिष्टोपस्थापकत्वेऽन्योन्यसमवायप्रसङ्गदोष उक्त इत्यत्राह - **न चेति** । समानाधिकरणपदानां युगपदभिधायकत्वाभ्युपगमात्सर्वविशेषणैस्स्वरूपस्यैव विशेष्यत्वाच्च नानुपत्तिरिति भावः । उद्देश्योपादेयविभागप्रहाण परिहारस्तु उन्तरत्र वक्ष्यते । एवमभ्युपगमादेव सामानाधिकरण्यलक्षणं सङ्गतं भवतीत्याह - **तथा हीति** । एवं हि सामानाधिकरण्यलक्षणमुक्तमित्यर्थः । एकविशेषणविशिष्टे विशेषणान्तरान्वयः सामानाधिकरण्यमित्यनुक्तत्वात् 'एकस्मिन् वृत्ति-

**करण्यम्' इति। अन्वयेन निवृत्त्या वा पदान्तरप्रतिपाद्यादाकारादाकारान्तरयुक्ततया तस्यैव वस्तुनः पदान्तर-प्रतिपाद्यत्वं सामानाधिकरण्यकार्यम्। यथा 'देवदत्तः श्यामो युवा लोहिताक्षोऽदीनोऽकृपणोऽनवद्य' इति। यत्र त्वेकस्मिन्वस्तुनि समन्वयायोग्यं विशेषणद्वयं समानाधिकरणपदनिर्दिष्टं, तत्राप्यन्यतरत्पदममुख्यवृत्तमा-श्रीयते ; न द्वयम्। यथा 'गौर्वाहीक' इति। नीलोत्पलादिषु तु विशेषणद्वयान्वयाविरोधादेकमेवोभयविशिष्टं प्रतिपाद्यते॥**

---

रि'त्युक्तत्वात्सर्वविशेषणैस्स्वरूपस्यैवविशेष्यत्वं युक्तमिति भावः। उक्तलक्षणग्रन्थस्य तात्पर्यतः अर्थं विवृणोति - **अन्वयेनेति**। **अन्वयेन** = अन्वयमुखेन। **निवृत्त्या** = व्यतिरेकमुखेन। अन्वयमुखेन व्यावृत्तिमुखेन वा यथाव्युत्पत्ति वस्तुनः पदान्तरप्रतिपाद्याकारादाकारान्तरयुक्ततया प्रतिपादनमेव समानाधिकरणपदसमुदायकार्यमित्यर्थः। 'श्यामः' इत्यादिकमन्वयमुखेनाकारान्वयोदाहरणम्। **अदीन** इत्यादिकं व्यतिरेकमुखेन।

एवं सर्वत्र व्युत्पत्तिसिद्धार्थ एव स्वीकार्य इत्युक्त्या सति बाधके कुत्रचित् व्युत्पत्त्यन्तरकल्पनं युक्तमित्यपवाद-माह - **यत्र त्विति**। **विशेषणद्वयमिति** वक्ष्यमाणोदाहरणमनुरुन्ध्य। **न द्वयमिति**। प्रमाणाविरोधेन हि सर्वत्रार्थो वर्ण-नीयः। गोत्वं वाहीकत्वञ्च नैकत्र समन्वेतुं योग्यम्। अतस्तत्र गोसदृशार्थत्वं वृत्त्यन्तराभ्युपगमेनेष्यते। न ह्येतावता पदद्वयस्याप्यमुख्यवृत्तत्वाभ्युपगमः शक्यः, प्रयोजनाभावात्। एकस्मिन्पदे अमुख्यवृत्तत्वाश्रयणेनैव विरोधस्य शमित-त्वात्। अन्यथा सर्वपदलाक्षणिकत्वेन तात्पर्यनिश्चयासम्भवात्। 'विषं भुङ्क्ष्व' इत्यत्रापि न सर्वपदलक्षणाऽभ्युप-गम्यते। तत्र विषपदस्यैव निषेधार्थकत्वेनान्यस्य मुख्यत्वात्। अत एतादृशस्थले वृत्त्यन्तरकल्पनं नायुक्तमिति भावः। नीलोत्पलादिवाक्ये तु नैवं विरोधोऽस्ति, येन वृत्त्यन्तरकल्पनाशङ्का स्यादित्याह - **नीलेति**। **उभयविशिष्टं प्रतिपाद्यत** इति। अनेन सामानाधिकरण्यलक्षणे 'भिन्नप्रवृत्तिनिमित्तानामि'त्यस्य वस्तुतो व्युत्पत्तिदशायां भिन्नप्रवृत्ति-निमित्तानामित्यर्थकरणमपास्तम्। सामानाधिकरण्योपादनसमयेऽपि निमित्तभेदाश्रयणेऽप्यनेकविशेषविशिष्टैकार्थबोधन-सम्भवेनाविरोधात्, यथाश्रुतार्थपरित्यागे बीजाभावात्, व्युत्पत्तिसिद्धार्थस्य शाब्दबोधे परित्यागासम्भवाच्चेति।

अयं भावः - सामानाधिकरण्यस्थले पदानां व्युत्पत्तिसिद्धविशेषाणार्थपरित्यागे किं निबन्धनम्। न च वाच्यं - समानविभक्त्या ऐक्यस्यावगतत्वेन विशेषणवाचकत्वे एकार्थत्वासिद्धेः विशेषणपरित्याग इति। समानविभक्त्या ऐक्यावगमवत्प्रातिपदिकबलाद्विशेषणानामप्यवगतत्वात्तदन्वयविरोधेनैक्यस्यैव प्रतिपादनासम्भवात्। न हि समान-विभक्तिरैक्यबोधिका प्रातिपदिकापेक्षया प्रबला, प्रत्युत प्रातिपादिकस्यैव बलवत्त्वात्। अत एव हि 'अदितिः पाशान् गृहं संमार्ष्टी'त्यादौ प्रातिपदिकार्थस्स्वीकृतः विभक्त्यर्थश्च परित्यक्तः। प्रयोगस्तूभयत्र तुल्यः। ननु शाब्दप्रतीते वस्तुमात्रविषयत्वाद्विशेषणान्वयस्य प्रत्यक्षैकसमधिगम्यत्वाद्ब्रह्मणश्च प्रत्यक्षागोचरत्वेन न विशेषणान्वयसम्भव इति चेन्न, नियामकाभावात्। शाब्दप्रतीतेः विशेषणान्वयविषयकत्वस्य प्रत्यक्षस्य चैक्य विषयकत्वस्य सम्भवात्। 'देवदत्तः श्यामः' इत्यादिवाक्यप्रयोगे ऐक्यबुद्धिदर्शनात् ऐक्यस्य शाब्दप्रतीतिविषयत्वं युक्तमिति चेन्न, तत्रैव विशेषणान्वयस्यापि प्रतीतेः विशेषणान्वयस्य शाब्दत्वसम्भवात्। अत अविरोधे व्युत्पत्तिसिद्धार्थपरित्यागो निर्निबन्धन इति।

ननु समानाधिकरणपदानां विशिष्टोपस्थापकत्वे विशेषणान्तरान्वयस्यान्यविशेषणान्वयस्य च भेदेन विशेष्य-भेदापत्तिः, यथा घटत्वविशेषणस्य पटत्वविशेषणस्य च भेदाद्घटत्ववैशिष्ट्यपटत्ववैशिष्ट्ययोर्भेदेन घटपटयोर्विशेष्ययो र्भेदः। अतस्समानविभक्तिनिर्देशेपि विशेषणभेदाधीनविशेष्यभेदस्यावर्जनीयत्वान्न सामानाधिकरण्यस्य विशिष्टैक्यप्रति-पादनक्षमत्वम्। तस्मात्समानाधिकरणपदानां विशेषणांशे तात्पर्याभावाद्विशेष्यमात्रोपस्थापकत्वमेव। न च विशेषाणांशे

**अथ मनुषे - एकविशेषणप्रतिसम्बन्धित्वेन निरूप्यमाणं विशेषणान्तरप्रतिसम्बन्धित्वात्(नो) विलक्षणम् इति घटपटयोरिवैकविभक्तिनिर्देशेऽप्यैक्यप्रतिपादनासम्भवात्समानाधिकरणशब्दस्य न विशिष्टप्रतिपादनपरत्वम्; अपि तु विशेषणमुखेन स्वरूपमुपस्थाप्य तदैक्यप्रतिपादनपरत्वमेव - इति -**

**स्यादेतदेवम्, यदि विशेषणद्वयप्रतिसम्बन्धित्वमात्रमेवैक्यं निरुन्ध्यात्। न चैतदस्ति ; एकस्मिन् धर्मिण्युसंहर्तुमयोग्यधर्मद्वयविशिष्टत्वमेव ह्येकत्वं निरुणद्धि। अयोग्यता च प्रमाणान्तरसिद्धा घटत्वपटत्वयोः। 'नीलमुत्पलम्' इत्यादिषु तु दण्डित्वकुण्डलित्ववत् रूपवत्वरसवत्वगन्धवत्वादिवच्च विरोधो नोपलभ्यते।**

**न केवलमविरोध एव; प्रवृत्तिनिमित्तभेदेनैकार्थनिष्ठत्वरूपं सामानाधिकरण्यमुपपादयत्येव धर्मद्वयविशिष्टता(ताम्)। अन्यथा स्वरूपमात्रैक्येऽनेकपदप्रवृत्तौ निमित्ताभावात्सामानाधिकरण्यमेव न स्यात्। विशेषणानां स्वसम्बन्धानादरेण वस्तुस्वरूपोपलक्षणपरत्वे (रूपत्वे) सत्येकेनैव वस्तु उपलक्षितमित्युपलक्षणान्तरमनर्थकमेव। उपलक्षणान्तरोपलक्ष्याकारभेदाभ्युपगमे तेनाकारेण सविशेषत्वप्रसङ्गः॥**

---

तात्पर्याभावेन विशेषणपरित्यागे विशेषणप्रतिसंबन्धि विशेष्यमेवोपस्थाप्यते नान्यदित्यत्र किं नियामकमिति वाच्यम्। तात्पर्याविषयत्वेऽपि विशेषणांशस्य परामर्शदशायां प्रतीयमानत्वेन तदुपलक्षितविशेष्यप्रतीतिसिद्धेरित्याशयेन शङ्कते - **अथेति**। प्रतिसम्बन्धित्वं विशिष्टत्वम्। एकविशेषणविशिष्टत्वेन निरूप्यमाणस्य वस्तुनोऽपरविशेषणविशिष्टत्वाभ्युपगमे विशेषणानां व्यावर्तकत्वनियमेन तद्विशेषणविशिष्टविशेष्यस्यान्यविशेषणविशिष्टविशेष्यवस्तुनो भेदः स्यादित्यर्थः। यदि विशेषणवैशिष्ट्यमात्रमेव विशेष्यभेदावहं तदा सामानाधिकरण्यस्थले विशेष्यमात्रोपस्थापकत्वं युज्येत, तदेवनास्ति, 'देवदत्तः श्यामो युवे'त्याद्यनेकविशेषणविशिष्टैकदेवदत्तस्य प्रतीयमानत्वात्। अतः एकधर्मिण्युपसंहारायोग्यधर्मद्वयवैशिष्ट्यस्य विशेषणभेदावहत्वाभावेन नैकार्थत्वासिद्धिरित्याशयेन दूषयति - **स्यादेतदेवमिति**।

नन्वयोग्यत्वे विशेषणत्वं प्रयोजकं नीलत्वादीनामपि विशेषणत्वादयोग्यत्वमिति विशेष्यभेदो दुर्वार एवेत्यत्राह - **अयोग्यता चेति**। प्रमाणान्तरप्रयुक्तत्वमेवायोग्यत्वं, न तु विशेषणत्वप्रयुक्तमित्यर्थः। नन्वयोग्यत्वरूपो विरोधो भिन्नाधिकरणत्वरूपः। स च घटत्वपटत्वयो र्दृष्टः। एवं नीलत्वोपलत्वयोरपि भिन्नाधिकरणत्वरूपो विरोधस्तुल्य एव, षट्पदे नीलत्वस्य, कुमुदे उत्पलत्वस्य च पृथग्दर्शनादित्यत्राह - **नीलमुत्पलमिति**। दण्डादिकं युतसिद्धविशेषणम्। रूपादिकं त्वयुतसिद्धविशेषणम्। अयं भावः - भिन्नाधिकरणवृत्तित्वमात्रं न विरोधः। किन्तु तन्नियम एव। स एव ह्येकस्मिन् धर्मिण्युपसंहर्तुमयोग्यत्वरूपः। दण्डकुण्डलयोः परस्परपरिहारेण वर्तमानयोरपि क्वचित्सहोपलम्भो दृश्यते। एवं रसापरिहारेण वर्तमानस्य रूपस्य रूपापरिहारेण वर्तमानस्य रसस्य क्वचित्सहोपलम्भः। अतो 'नीलोत्पलमि'त्यादावपि नीलत्वोपलत्वयोः सहोपलम्भान्न विरोध इति। एवमविरोधमुपपाद्य विशेषणविवक्षाया आवश्यकतामुपपादयति - **न केवलमिति**। प्रवृत्तिनिमित्तभेदे सति सामानाधिकरण्यलक्षणसम्भव इति भावः। अविवक्षायां बाधकश्च दर्शयति - **अन्यथेति**।

ननु नीलत्वादीनां विशेषणतापरित्यागेप्युपलक्षणतया प्रवृत्तिनिमित्तत्वस्वीकारान्न सामानाधिकरण्यलक्षणानुपपत्तिरित्यत्राह - **विशेषणानामिति**। **अनादरस्तात्पर्याभावः**। यथा वोपलक्षणभूतशाखायां न तात्पर्यं तद्वदित्यर्थः। **अनर्थकमेवेति**। उपलक्षणत्वं हि ज्ञाप्यप्रतीत्युपायत्वे सति ज्ञाप्यबहिर्भूतत्वम्। तथा चैकेनोपलक्षणेन ज्ञाप्यस्य वस्तुस्वरूपस्य प्रतीतेरुपलक्षणान्तरं व्यर्थमेव। वस्तुस्वरूपप्रतीतिर्ह्युपलक्षणकृत्यं, तच्चैकेन निष्पन्नम्। न ह्युपलक्षणान्तरेण कर्तव्यं किञ्चिदस्तीति भावः। ननु जन्मादीनामुपलक्षणत्वपक्षस्य भवत्सिद्धान्तसिद्धत्वेन तत्राप्युक्तेनैव नयेनोपलक्षणान्तरवैयर्थ्यं दुर्निवारमित्यत्राह - **उपलक्षणान्तरेति**।

**'सोऽयं देवदत्त' इत्यत्रापि लक्षणागन्धो न विद्यते; विरोधाभावात्। देशान्तरसम्बन्धितयाऽतीतस्य सन्निहितदेशसम्बन्धितया वर्तमानत्वाविरोधात्। अत एव हि 'सोऽयम्' इति प्रत्यभिज्ञया कालद्वयसम्बन्धिनो वस्तुन ऐक्यमुपपाद्यते वस्तुनःस्थिरत्ववादिभिः। अन्यथा प्रतीतिविरोधे सति सर्वेषां क्षणिकत्वमेव स्यात्। देशद्वयसम्बन्धविरोधस्तु कालभेदेन परिह्रियते ॥**

**यतः समानाधिकरणपदानामनेकविशेषणविशिष्टैकार्थवाचित्वम्; अत एव** (यजु.६-१-६) **'अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति' इति आरुण्यादिविशिष्टैकहायन्या क्रयः साध्यतया विधीयते। तदुक्तम्** (पूर्वमी. ३-१-१२-(२)) **'अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमस्स्यात्' इति ॥**

---

अयं भावः - तेन तेनोपलक्षणेन तत्तदनुगुणोपलक्ष्यज्ञानशक्त्याद्याकाराभ्युपगमान्न वैयर्थ्यमस्माकम्। निर्विशेषत्ववादिनां भवतां न तथा सार्थक्यम्, अपसिद्धान्तात्। अन्यथा विशेषणत्वपक्षपरित्यागे बीजाभावादिति ॥

एवमुभयवादिसम्प्रतिपन्नत्वेन परोक्तं दृष्टान्तान्तरमप्यन्यथयति - **सोऽयमिति**। **विरोधाभावात्** = पदद्वयबोधितविशेषणसम्बन्धे विरोधाभावादित्यर्थः। किमत्र कालद्वयविरोध उत देशद्वयविरोध इति विकल्पं हृदि निधाय प्रथमं परिहरति - **देशान्तरसम्बन्धितयेति**। अयं भावः - अतीतकालसम्बन्धिनो देवदत्तस्य एतत्कालसम्बन्धित्वमनया प्रत्यभिज्ञया बोध्यते, तत्रैकस्मिन्कालद्वयसम्बन्धो न विरुद्धः।

नन्वेकस्य कालद्वयसम्बन्धः कथमतीतत्ववर्तमानत्वयो र्मिथो विरोधादिति चेन्न, न हि प्रध्वस्तस्य वर्तमानत्वमुच्यते, येन विरोधस्स्यात्। देवदत्तस्य प्रध्वसानभ्युपगमात्। नन्वतीतत्वमतीतोपाधिमत्कालसम्बन्धः, तत्सम्बन्धिनो वर्तमानत्वं विरुद्धमिति चेन्न, किमत्र स्वापेक्षयाऽतीतोपाधिमत्कालसम्बन्धित्वम्, उतान्यापेक्षया ? न प्रथमः, अनभ्युपगमात्, न हि घटादेस्स्वापेक्षयाऽतीतोपाधिमत्कालसम्बन्धित्वम्। नान्त्यः, एकक्षणसम्बन्धस्यापि विरोधात्। तत्तद्वस्तुगतैककक्षणस्यापि स्वपाश्चात्ययत्किञ्चिदुपाध्यपेक्षयाऽतीतत्वेनान्यापेक्षयाऽतीतोपाधिमत्कालसम्बन्धित्वसत्त्वात्। अतो नान्यापेक्षयाऽतीतोपाधिमत्कालसम्बन्धिवर्तमानत्वं विरुद्धमिति।

एवं कालद्वयसम्बन्धाविरोधमभ्युपगम्य कालद्वयसम्बन्धविशिष्टवस्त्वैक्यस्य प्रत्यभिज्ञाविषयत्वोपपादने एव सौगतान्प्रति वस्तुस्थिरत्वोपपादनं शास्त्रकृतां सङ्गच्छत इत्याह - **अत एवेति**। कालद्वयसम्बन्धविरोधे तु स्थिरत्वसाधकप्रतीतेर्बाधितत्वात्पराभिमतं क्षणिकत्वं सिध्येदित्याह - **अन्यथेति**। क्षणिकत्वमेव स्यादिति। आत्मनोपि स्थिरत्वाभावेन तन्नित्यत्वोपदेशः देशान्तरकालान्तरसाध्यफलसाधनत्वेन यागाद्युपदेशस्सर्वोपि बाध्येत इति भावः। अथ द्वितीयविकल्पं व्युदस्यति - **देशेति**। परिच्छिन्नवस्तुनो युगपद्देशद्वयसम्बन्धस्तु विरुद्धः, न तु कालभेदेन देशद्वयसम्बन्धोऽपीति भावः ॥

एवं सामानाधिकरण्यस्यानेकविशेषणविशिष्टैकार्थपर्यवसायित्वाभ्युपगमादेव 'अरुणयैकहायन्या' इत्यत्रारुण्यादिगुणविशिष्टैकहायनीद्रव्यसाध्यक्रयविधानमुपपद्यते इत्याह - **यत** इति। अनेन वैदिकप्रयोगेणापि समानाधिकरणपदानां विशिष्टैकार्थबोधकत्वं सिद्धमिति सूचितम्। नन्वरुणयैकहायन्येत्यत्र सामानाधिकरण्यमेव नाभ्युपेतम्। अतः कथं तेन विशिष्टैकार्थपर्यवसायित्वनिश्चय इत्यत्र तत्र सामानाधिकरण्याभ्युपगमे सूत्रकारसम्मति दर्शयति - **तदुक्तमिति**। सूत्रार्थः उत्तरत्र स्वयमेव विव्रियते।

अरुणाधिकरणे परैरन्यथा पूर्वपक्षसिद्धान्तयोः **वर्णितत्वात्,** तस्य चानुपपन्नत्वात्स्वाभिमतपूर्वपक्षसिद्धान्त-

**तत्रैवं पूर्वपक्षी मन्यते - यद्यप्यरुणयेति पदमाकृतेरिव गुणस्यापि द्रव्यप्रकारतैकस्वभावत्वाद्द्रव्यपर्यन्तमेवारुणिमानमभिदधाति, तथाऽप्येकहायन्यन्वयनियमोऽरुणिम्नो न सम्भवति; एकहायन्या क्रीणाति, तच्चारुणयेत्यर्थद्वयविधानासम्भवात् ।**

---

प्रदर्शनार्थं प्रथमं पूर्वपक्षमाह - **तत्रैवमिति** । प्रतिपत्तिसौकर्याय तदुक्तप्रकारः प्रदर्श्यते - अरुणापदस्योपात्तद्रव्यकवाक्यस्थगुणशब्दत्वादन्वयव्यतिरेकाभ्यां गुणमात्रे व्युत्पत्तेश्च केवलगुणमात्राभिधायित्वं सिद्धवत्कृत्य तस्य च गुणस्य तृतीयाश्रुत्या क्रयसाधनत्वप्रतीतावप्यमूर्तत्वेन तत्साधनत्वासम्भवात्तृतीयाश्रुतेर्विनियोजकत्वाभावात्प्रकरणस्य विनियोजकत्वं स्वीकृत्य तद्बलात्प्राकरणिकेषु ग्रहचमसाद्यखिलद्रव्येषु आरूण्यगुणसम्बन्धो बोधनीय इति पूर्वपक्षः कृतः । तत्र च 'अरूणये'ति पृथग्वाक्यम् । ज्योतिष्टोमे साधनद्रव्याणि यानि, तान्यरुणानि कर्तव्यानीति वाक्यार्थः । राद्धान्तस्तु, गुणस्यामूर्तत्वेपि हायनवदक्षिवच्च गोद्रव्यावच्छेदकत्वसम्भवेन तद्द्वारा क्रयेणान्वयो नानुपपन्नः । अत एव न वाक्यभेदः । न च वाक्यभेदाभावेऽपि क्रयान्वयोपपादनार्थमरूणापदस्य गुणविशिष्टद्रव्यपरत्वाश्यकतया गुणवाचकपदस्य गुणिवाचकत्वे लक्षणा स्यादिति वाच्यं, तस्य गुणिवाचकत्वानभ्युपगमात् । कथं तर्हि क्रयान्वय इति चेत्, गुणस्य द्रव्यद्वारमन्तरेण साधनत्वासम्भवादर्थापत्त्याक्षिप्तद्रव्यविशेषणत्वसम्भवात् ।

ननु प्रकरणबलात्, प्राकरणिकग्रहचमसादिसर्वद्रव्यविशेषणत्वं स्यात् । मैवम् । ग्रहचमसादीनां क्रयसाधनत्वाभावेन तद्द्वाराऽऽरुण्यगुणस्य श्रूयमाणक्रयसाधनत्वसिद्धेः । न च 'वाससा क्रीणाति', 'अजया क्रीणाति', इति वस्त्रादीनां क्रयसाधनत्वश्रवणेन तद्विशेषणत्वं युक्तमिति शक्यम्, तेषां क्रयान्तरसाधनत्वात् । अपि च स्वसन्निहितं स्ववाक्यगतमेकहायनीद्रव्यमुपेक्ष्य कथं सर्वद्रव्यविशेषणत्वं शक्यशङ्कम् । तस्मात्क्रयेण साक्षादन्वितयोः द्रव्यगुणयोः पश्चादर्थापत्त्या मिथोऽवच्छेदकावच्छेद्यभावस्सिध्यति । ततश्चारुण्यविशिष्टैकहायन्या क्रीणातीत्यर्थ इति । इदञ्चानुपपन्नम्, अरुणाशब्दस्य गुणवाचकत्वे सिद्धे हि पूर्वपक्षसिद्धान्तयोः प्रसक्तिः । लोके वेदे वा द्रव्यवाचकपदसमानाधिकरणगुणपदस्य केवलगुणवाचकत्वादर्शनादन्वयव्यतिरेकाभ्यां गुणिनि व्युत्पत्तेश्च । 'गुणे शुक्लादय' इति गुणवाचकत्वे पुल्लिङ्गत्वापत्तेः, 'अरुणये'ति निर्देशस्य निर्बीजत्वापातात् । भिन्नवाक्यत्ववादिनो मते 'अरुणये'ति पदस्योपात्त द्रव्यकवाक्यस्थत्वासम्भवाच्च । एकवाक्यतुल्यतयोपात्तद्रव्यवाक्यस्थत्वमस्तीति चेन्न, तथा सति तत्प्रयुक्तैकहायनीद्रव्यवाचकत्वसिध्या गुणमात्रपरत्वाभावेन पूर्वपक्षानुदयात् । अपि च गुणवाचकत्वे सिद्धे भिन्नवाक्यत्वपरिकल्पनम् । भिन्नवाक्यत्वे सति गुणवाचकत्वमित्यन्योन्याश्रय इति । अत अरुणापदस्य गुणविशिष्टद्रव्यवाचकत्वमभ्युपगम्यारुणयेति पदं समानाधिकरणमुत व्यधिकरणमिति सन्दिह्य व्यधिकरणमिति पूर्वपक्षः, समानाधिकरणमिति सिद्धान्तः कर्तव्यः । नन्वेतादृशसन्देहः पिङ्गाक्षीशब्देपि स्यात् इति चेदिष्टापत्तेः । परन्तु तत्रार्थद्वयविधानमात्रं, न त्वरुणाशब्दवत्प्राकरणिकसर्वद्रव्यपर्यन्ताभिधायी स शब्दः असम्भवादिति ।

ननु अरुणाशब्दस्य गुणिपर्यन्तत्वे सिद्धान्तेपि पूर्वपक्षोत्थानं न स्यात् । गुणमात्रपरत्वे हि कारकतया निर्दिष्टस्य गुणस्य द्रव्यस्य क्रयान्वयित्वनियमेन तस्य चैकवाक्येन बोधयितुमशक्याद्वाक्यभेदावलम्बने गौरवात्प्रकरणवशेन सर्वप्राकरणिकद्रव्यान्वयीति पूर्वपक्षोत्थितिसम्भवः । द्रव्यपर्यन्तत्वे तु एकहायनीपदसामानाधिकरण्यसत्त्वेन विशिष्टसाधनैकत्वात्तस्य च वाक्येन क्रयान्वयबोधसम्भवेन वाक्यभेदस्यैवाप्रसक्तिरिति शङ्कां परिहरन्पूर्वपक्षमाह - **यद्यपीति** । **आकृतेरिवे**त्यनेन विशिष्टवाचकत्वे उपपत्तिः प्रदर्शिता । **तथापीति** । एकहायनीत्वाश्रय द्रव्यविशेषपर्यन्तत्वसिद्धिर्न स्यादित्यर्थः । कुतो न सम्भवतीत्यत्राह - **एकहायन्येति** । अयं भावः - आरुण्यस्य एकहायनीद्रव्यविशेषपर्यन्तत्वसिद्धिर्हि 'एकहायन्या क्रीणाति', तच्चारुणयेप्यर्थद्वयविधाने एव सम्भवति । तथा हि, 'एकहायन्या क्रीणाती'त्यनेन वाक्येन

**ततश्च अरुणयेति, वाक्यं भित्त्वा प्रकरणविहितसर्वद्रव्यपर्यन्तमेवारुणिमानमविशेषेणाभिदधाति। अरुणयेति स्त्रीलिङ्गनिर्देशः प्रकरणविहितसर्वलिङ्गकद्रव्याणां प्रदर्शनार्थः। तस्मादेकहायन्यन्वयनियमोऽरुणिम्नो न स्यात् - इति ॥**

**अत्राभिधीयते, अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमस्स्यात्। 'अरुणयैकहायन्या' इत्यारुण्यविशिष्टद्रव्यैकहायनीद्रव्यवाचिपदयोस्सामानाधिकरण्येनार्थैकत्वे सिद्धे सति एकहायनीद्रव्यारुण्यगुणयोररुणयेति पदेनैव विशेषणविशेष्यभावेन सम्बन्धितयाऽभिहितयोः क्रयाख्यैककर्मान्वयाविरोधादरुणिम्नः क्रयसाधनभूतैकहायन्यन्वयनियमः स्यात्।**

---

एकहायनीसाध्यत्वविशिष्टक्रयणं प्रतिपन्नं, तच्च तत्रैकहायनीद्रव्यस्य तत्साध्यक्रयस्य च पूर्ववाक्यप्रतिपन्नत्वेन क्रयसाधनैकहायनीद्रव्यमनूद्य तस्यारुणिमसम्बन्ध एव बिधेयः। ततश्चैकहायन्या क्रयस्साध्यः, तया चारुणया भवितव्यमिति पर्यवसितम्। एवञ्च सत्यारुण्यस्यैकहायनीत्वाश्रयद्रव्यविशेषपर्यन्तत्वसिद्धिरिति। तथा च द्रव्यविशेषपर्यन्तत्वसिध्यै एकहायन्याः क्रयसम्बन्धः गुणसम्बन्धश्चेत्यर्थद्वयस्यैकवाक्येन बोधनं न सम्भवतीति वाक्यभेद एवाश्रयणीय इति ॥

ननु 'अरुणये'तिपदस्य 'क्रीणाती'त्यनेनान्वयेऽऽरुण्यगुणविशिष्टं द्रव्यं किमिति विशेषाकाङ्क्षायां स्ववाक्यस्थैकहायनीपदोपस्थापितद्रव्यमेव विशेष औचित्याद्भवितुमर्हतीति नार्थद्वयविधान प्रयुक्तवाक्यभेदप्रसक्तिरिति चेन्न। 'एकहायन्या क्रीणाती'ति क्रयस्यैकहायन्यवरुद्धतयाऽरुणापदबोधितार्थान्वये आकाङ्क्षाभावादाकाङ्क्षोत्थापकचशब्दाद्यभावाच्च। ततश्चात्र सामानाधिकरण्येऽभ्युपगम्यमाने विशेषणभेदप्रयुक्त विशेष्यभेदस्य विशेषणानामन्योन्यसमवायादेश्च पूर्वोक्तरीत्या परिहृतत्वेपि, कारकविभक्तेः क्रियान्वयबोधोपक्षीणत्वेन विशेष्यैक्यरूपपरस्परान्वयबोधजनकत्वाभावात्सामानाधिकरण्यानुपपत्तिरिति 'अरुणयायेकहायन्या' इति पदद्वयस्य पृथक्करणवाचित्वमभ्युपगन्तव्यम्, अतोऽर्थद्वयविधानप्रयुक्तवाक्यभेदः दुर्निवारः। नन्वर्थद्वयविधानप्रयुक्तवाक्यभेदे किं कर्तव्यमित्यत्राह - **ततश्चे**ति। **भित्वा** = क्रीणातीत्यतो भित्वेत्यर्थः। क्रीणातीति पदस्य स्ववाक्यस्थत्वाभावादवान्तरप्रकरणेन महाप्रकरणेन वा। नन्वविशेषात्प्राकरणिकसर्वद्रव्यमेवारुण्यगुणविशिष्टमभिदधातीति स्वीकर्तव्यमिति प्राकरणिकसर्वद्रव्यपर्यन्तत्वे कथं स्त्रीलिङ्गनिर्देश इत्यत्राह - **अरुणये**ति। पूर्वपक्षं निगमयति - **तस्मा**दिति ॥

एवं पूर्वपक्षनिरासार्थतया जैमिनिसूत्रं प्रवृत्तमित्याशयेन तदवतारयति - **अत्राभिधीयते** इति। अत्र पदयोः वैयधिकरण्याभ्युपगमादर्थभेदस्य पूर्वपक्षे प्राप्तत्वात् सिद्धान्तेऽर्थैकत्वे इत्युक्तम्। अरुणयेतिपदाभिहितारुण्यविशिष्ट द्रव्यस्य क्रयाख्यकर्मानन्वयस्य प्राप्तत्वादेककर्म्यादित्युक्तम्। एकहायन्यन्वयानियमस्य प्राप्तत्वान्नियम इत्युक्तम्।

सूत्रार्थमाह - **अरुणये**ति। अर्थैकत्व इत्युक्ते कयोः पदयोरित्याकाक्षायां सन्निहितविषयवाक्यस्थयोरेवारुण्यविशिष्ट-द्रव्यैकहायनीद्रव्यवाचिपदयोरित्यर्थात्सिद्धिरित्यभिप्रेत्याह - **आरुण्यविशिष्टे**ति। **द्रव्यगुणयो**रित्यस्यार्थमाह - **एकहायनीद्रव्यारुण्यगुणयो**रिति। यदि क्रयसम्बन्धवदेकहायन्या गुणसम्बन्धोऽपि वाक्येनैवावसेयः स्यात्, तदा अर्थद्वयविधानप्रयुक्तवाक्यभेदः प्रसज्येत, न चैवमस्ति, अरुणापदेनैव विशेषणविशेष्यभावेनैकहायनीद्रव्यविशेषारुण्यगुणयोः बोधनाद्गुणसम्बन्धस्य प्रातिपदिकेनैव सिद्धत्वादित्यभिप्रायेण - **अरुणयेति पदेनैव विशेषणविशेष्यभावेन सम्बन्धितयाऽभिहितयो**रित्युक्तम्। **क्रयसाधनभूतैकहायन्यन्वयनियम** इति। एकहायनीपदसमभिव्याहारादरुणयेति पदेनारुण्यविशिष्टैकहायनीरूपस्यैव बोधनात्सर्वद्रव्यसाधारणप्रकरणानपेक्षत्वात्स्ववाक्यस्थपदबोधितैकहायन्यैवान्वय इति भावः ॥

**यद्येकहायन्याः क्रयसम्बन्धवदरुणिमसम्बन्धोऽपि वाक्यावसेयस्स्यात्, तदा वाक्यस्यार्थद्वयविधानं स्यात्; न चैतदस्ति। अरुणयेति पदेनैवारुणिमविशिष्टद्रव्यमभिहितम्; एकहायनीपदसामानाधिकरण्येन तस्यैकहायनीत्वमात्रमवगम्यते; न गुणसम्बन्धः। विशिष्टद्रव्यैक्यमेव हि सामानाधिकरण्यस्यार्थः। 'भिन्न-प्रवृतिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्' इति हि सामानीधिकरण्यलक्षणम्। अत एव हि 'रक्तः पटो भवति' इत्यादिष्वैकार्थ्यादिकवाक्यत्वम्। पटस्य भवनक्रियासम्बन्धे हि वाक्यव्यापारः; रागसम्बन्धस्तु रक्तपदेनैवाभिहितः; रागसम्बन्धिद्रव्यं पट इत्येतावन्मात्रं सामानाधिकरण्यावसेयम्।**

**एवमेकेन गुणेन द्वाभ्यां बहुभिर्वा, तेन तेन पदेन समस्तेन व्यस्तेन वा विशिष्टमुपस्थाप्य सामानाधि-करण्येन सर्वविशेषणविशिष्टोऽर्थ एक इति ज्ञापयित्वा तस्य क्रियासम्बन्धाभिधानमविरुद्धम् - देवदत्तः श्यामो युवा लोहिताक्षो दण्डी कुण्डली तिष्ठति, शुक्लेन वाससा यवनिकां सम्पादयेत्, नीलमुत्पलमानय, नीलोत्पलमानय, गामानय शुक्लां शोभनाक्षीम्,** (यजु. २-२) **'अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत्'-**

---

अथार्थद्वयविधानप्रयुक्तवाक्यभेदं कण्ठतः परिहरति - **यदीति**। यदि प्रातिपदिकेनैवारुणिमसम्बन्धो बोध्यते, तर्हि सामानाधिकरण्यस्य किं कृत्यमित्यत्राह - **एकहायनीपदेति**। एकहायनीत्वमात्रम् - आरुण्यविशिष्टद्रव्यस्यैकहाय नीत्वाश्रयत्वमात्रम्। गुणसंबन्धस्य सामानाधिकरण्यावसेयत्वाभावे हेतुमाह - **विशिष्टेति**। अयं भावः - द्रव्यगुणयोः विशेषणविशेष्यभावः प्रातिपदिकावसेयः। विशेष्यैक्यन्तु सामानाधिकरण्यावसेयं, क्रयान्वयश्च वाक्यावसेयः। अतो न काचिदनुपपत्तिः। एतदवलम्ब्य ह्याकृत्यधिकरणारुणाधिकरणयोर्भेदः। आकृत्यधिकरणे प्रातिपदिकेन धर्मिपर्यन्तत्व प्रतीतिः। अरुणाधिकरणेऽनेकप्रातिपदिकस्थसमानविभक्त्या विशेष्यैक्यप्रतीतिरिति। उक्तार्थे सामानाधिकरण्यलक्षणग्रन्थं प्रमाणयति - **भिन्नेति**। अत्र विशेषणविशेष्यवाचिपदयोः विशेषणविशेष्यभावसंबन्धः वृत्तिः सामानाधिकरण्यमित्य-नुक्तत्वादिति भावः। एवं सामानाधिकरण्यस्थले उक्तप्रकरेण कृत्यत्रयवर्णनस्य परैरभ्युपेतत्वं दर्शयति - **अत एवेति**। **पटस्येति** वाक्येन वाक्यकृत्यमुक्तम्। **रागसम्बन्धस्त्वित्यादिना** प्रतिपादिककृत्यं प्रदर्शितम्। **रागसम्बन्धीत्यादिना** सामानाधिकरण्यकृत्यमुक्तम्। एतेन क्रयस्यैकहायन्वन्वयावरुद्धतया अरुणापदान्वये साकाङ्क्षत्वाभावादाकाङ्क्षोत्थापकाद्य-भावाच्च वाक्यवैयधिकरण्याश्रयणमिति पूर्वोक्तं निरस्तम्। 'रक्तः पटोभवती'त्यत्र 'पटो भवती'त्येतावतैव वाक्यस्य निराकाङ्क्षत्वेपि 'कीदृश पटः?' इत्याकाङ्क्षां प्रकल्प्योत्थापिताकाङ्क्षस्य रक्त इति पदस्यान्वय इति हि सामानाधिकरण्य-मुपपाद्यते। एवमत्रापि 'कीदृश्या एकहायन्ये'ति आकाङ्क्षाकल्पनेनान्वयसम्भवान्न सामानाधिकरण्यविरोधः। एवमेवार्थ-वादाधिकरणेऽर्थवादनैरपेक्ष्येण विधेरेव प्रवर्तकत्वादर्थवादस्य विध्येकवाक्यत्वं न स्यादिति शङ्कां कृत्वा श्रूयमाणार्थ-वादस्य वैयर्थ्यकल्पनपरिहारार्थं विध्याकाङ्क्षां परिकल्प्योत्थापिताकाङ्क्षस्यार्थवादस्यान्वय इत्युक्तम्। तत्र च 'रक्तः पटोभवती'त्युदाहृतम्। अतोऽत्रापि तद्वदभ्युपगमे न विरोधः।

ननु व्यासस्थले विशेषणस्यैकत्वे चोक्त रीत्या एकवाक्यत्वोपादनं युक्तं न तु समस्तस्थले विशेषणबहुत्वे च। एवं प्रथमाविभक्त्यन्तत्वे एकवाक्यत्वं न तु कारकविभक्त्यन्तत्वेपि इत्यत्राह - **एवमिति**। अत्र प्रथमान्तचेतनवाचिदेव-दत्त इत्युदाहरणं 'रक्तः पटः', 'देवदत्तः श्यामः' इत्यविशेषेण सामानाधिकरण्येन प्रयोगसत्त्वाच्चेतनत्वाचेतनत्ववैषम्यस्या-प्रयोजकत्ववत् व्यस्तत्वसमस्तत्वप्रथमान्तत्वकारकविभक्त्यन्तत्व वैषम्यस्याप्यप्रयोजकत्वमिति सूचनाय। श्यामत्वादि-कमन्तरङ्गं दण्डित्वादिकं बहिरङ्गमिति विभागः। **शुक्लेनेति** - तृतीयाकारकविभक्त्यन्तेकपदान्वयोदाहरम्। **नीलमिति** कर्मकारकोदाहरणम्। **गामिति** तत्रैवानेकपदान्वयोदाहरणम्। **अग्नय** इति सम्प्रदानकारकविषयं कर्मकारकविषयश्च

**इति । एवम् 'अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति' इति ।**

**एतदुक्तं भवति - यथा काष्ठैः स्थाल्यामोदनं पचेत् (पचति) इत्यनेककारकविशिष्टा एका क्रिया युगपत्प्रतीयते, तथा समानाधिकरणपदसङ्घाताभिहितमेकैकं कारकं तत्तत्कारकप्रतिपत्तिवेलायामेवानेक-विशेषणविशिष्टं युगपत्प्रतिपन्नं क्रियायामन्वेतीति न कश्चिद्विरोधः - 'खादिरैश्शुष्कैः काष्ठैस्समपरिमाणे भाण्डे पायसं शाल्योदनं समर्थः पाचकः पचेत्' इत्यादिषु - इति ॥**

---

वैदिकोदाहरणमिति विवेकः । उक्तरीतिररुणयेत्यत्रापि तुल्येत्याह - **एवमिति** ।

ननु कारकविभक्तेः क्रियान्वयबोधोपक्षीणत्वात्परस्परान्वयबोधकत्वं नास्तीति सामानाधिकरण्यमेवात्रा सिद्धमिति कथमेकहायन्यन्वयनियम इति चेन्न । कारकविभक्तेः क्रियान्वयबोधकत्ववत्तत्परस्परान्वयबोधकत्वस्याभ्युपगमात् । अन्यथा क्रियान्वयबोधोपक्षीणायाः कारकविभक्तेः सङ्ख्यान्वयबोधकत्वस्याप्यपलापप्रसङ्गात् । न चैकवचनत्वाद्याकारेण सङ्ख्यान्वयबोधकत्वं कारकविभक्तित्वाकारेण क्रियान्वयबोधकत्वमित्याकारभेदाभ्युपगमान्नायं दोष इति वाच्यम् । समानविभक्तित्वाकारेण परस्परान्वयबोधकत्वं, कारकविभक्तित्वाकारेण क्रियान्वयबोधकत्वमित्याकरभेदस्यात्राप्यन-पनोद्यत्वेनानुपपत्तिपरिहारात् ।

यत्तु एकपदस्थाया एव कारकविभक्तेः युगपत्सङ्ख्याक्रियान्वयबोधकत्वाभ्युपगमेन तुल्यबलत्वान्नान्योन्य-प्रतिबन्धकत्वम् ; न चैवं रीत्या परस्पररन्वयबोधोपपादन सम्भवः । तस्य पदान्तरपरामर्श सापेक्षत्वेन विलम्बितत्वात् क्रियान्वयबोधस्य च तथात्वेनाविलम्बितत्वाच्च तुल्यबलत्वाभावादिति, तदसारम् । विलम्बाविलम्बयोः प्राबल्यदौर्बल्य-हेतुत्वाभावात् । अन्यथा प्रत्यक्षस्यैकस्य प्रामाण्यमन्येषामप्रामाण्यञ्च स्यात्, तेषां प्रत्यक्षसापेक्षत्वेन विलम्बितत्वात् । एवं श्रुतिलिङ्गादिषु श्रुतेरेव प्रामाण्यं, न तु विलम्बितलिङ्गादीनामपि । एवं 'देवदत्तश्श्यामोयुवा' इत्यदिप्रथमानिभक्त्यन्त-बहुपदप्रयोगे एकपदस्यैकवचनादिनैव पूर्वं सङ्ख्यान्वयप्रतीत्या पदान्तरस्थसमानविभक्तिपरामर्शसापेक्षसामानाधिकर-ण्यञ्च न स्यात् । सामानाधिकरण्यं हि पदान्तरस्थसमानविभक्ति परामर्शसापेक्षम् । एकवचनप्रतीतिस्तु न तथा । अतोऽविलम्बितैकवचनप्रतीत्या सापेक्षसामानाधिकरण्यञ्चानुपपन्नम् ।

एवं विलम्बाविलम्बयोरेव प्राबल्यदौर्बल्यहेतुत्वे त्वदभिमतो द्रव्यगुणयोरार्थिकः परस्परान्वयः कथं सिध्येत् । क्रियान्वयस्य शब्दतः प्रथमावगतत्वेनार्थस्य परस्परान्वयस्य चरमभावित्वे विलम्बितत्वात् । अतो विरोधाभावेन विलम्बाविलम्बयोः प्राबल्यदौर्बल्यहेतुत्वं नास्तीत्येव वक्तव्यम् । ततश्च क्रियान्वयबोधवत्सङ्ख्यान्वयबोधवच्च परस्परा-न्वयबोधोपि कारकविभक्त्या युक्त इति । एवं सर्वत्र प्रयोगस्य नियामकत्वात्, कारकविभक्त्यन्तपदानां सङ्ख्यान्वयेन सह क्रियान्वयबोधकत्वे प्रयोगस्येव परस्परान्वयबोधनेपि प्रयोगसत्त्वेन परस्परान्वयबोधकत्वमप्यनिवार्यम् । एतदभि-प्रायेणैव कारकविभक्त्यन्तबहूदाहरणं भाषितम् । अतः कारकविभक्तेरपि परस्परान्वयबोधजनकत्वसम्भवेन 'अरुणया एकहायन्या' इति सामानाधिकरण्यमुपपन्नमिति ।

एवं कारकविभक्तित्वनिबन्धनानुपपत्तिः परिहृता । अथ सामानाधिकरण्यस्थले विशेषणत्वविवक्षायां विशेषण भेदप्रयुक्तविशेष्यभेदस्य जन्माद्यधिकरणे परिहृतत्वाद्विशेषणैक्यान्योन्यसमवायप्रसङ्गरूपदूषणस्य पूर्वं परिहृतत्वेप्युक्त-चोद्यस्य व्यधिकरणवाक्येष्वपि सम्भवेन तत्र वक्ष्यमाणपरिहारस्यात्रापि तुल्यत्वान्न विशेषणैक्यान्योन्यसमवायरूप-चोद्यस्यावकाश इत्यभिप्रेत्याह - **एतदुक्तं भवतीति** । इदमत्राकूतम् - किं व्यधिकरणवाक्येषु तत्तत्पदैः क्रमेणार्थाभिधानम्, उत युगपत् । नाद्यः, व्यधिकरणपदानां क्रमेण तत्तत्कारकविशिष्टक्रियाप्रतिपादेन कारकान्तरान्वितक्रियायां, कारकान्तरा-

**यत्तु - (यत्तूक्तं)- उपात्तद्रव्यकवाक्यस्थगुणशब्दः केवलगुणाभिधायीति, अरुणयेति पदेन केवलगुणस्यैवाभिधानमिति - तन्नोपपद्यते ; लोकवेदयोर्द्रव्यवाचिपदसमानाधिकरणस्य गुणवाचिनः क्वचिदपि केवलगुणाभिधानादर्शनात् । उपात्तद्रव्यकवाक्यस्थं गुणपदं केवलगुणाभिधायीत्यप्यसङ्गतम् ; 'पटः शुक्लः' इत्यदिषूपात्तद्रव्यकेऽपि गुणविशिष्टस्यैवाभिधानात् । 'पटस्य शुक्लः' इत्यत्र शौक्ल्यविशिष्टपटाप्रतिपत्तिः**

---

न्वयापत्त्या कारकाणामन्योन्यसमवायप्रसङ्गेन स्थालीं प्रति काष्ठस्य, काष्ठं प्रति वा स्थाल्या अधिकरणत्वापत्तेः । नान्त्यः, उद्देश्योपादेयविभागाभावप्रसङ्गात् । अनेककारकविशिष्टक्रियाया एकत्वे विशेष्यक्रियैक्यवद्विशेषणभूतकारकैक्यापत्तेः । यदि मन्वीत, विशेष्यभूतक्रियाया एवैक्यं वाक्येन प्रतिपाद्यते, न तु विशिष्टक्रियाया ऐक्यम् । अतः 'पदजातं श्रुतं सर्वं स्मारितानन्वितार्थक म् । न्यायसम्पादितव्यक्ति पश्चाद्वाक्यार्थबोधकम्' इति न्यायेन प्रथमं तत्तत्पदैः पृथक् तत्तदर्थस्मरणं, ततः न्यायपरामर्शः, पश्चाद्युगपत्सर्वपदैः तत्तत्पदप्रतिपन्नकारकविशिष्टैकक्रियाबोधनमित्यङ्गीकारान्न विशेषणभूतकारकाणामन्योन्यसमवायप्रसङ्ग इति । तर्हि सामानाधिकरण्यस्थलेऽपि विशेष्यांशमात्रैक्यपरत्वात्तत्तत्पदैः प्रथमं तत्तदर्थस्मरणे परामर्शानन्तरम् युगपत् समानाधिकरणपदैः तत्तत्पदप्रवृत्तिनिमित्तविशिष्टैकविशेष्यप्रतिपदनेन नान्योऽन्यसभवायप्रसङ्गः, नापि विशेषणैक्यमिति । अपि च घट इति प्रयोगे तद्घटकविभक्तिः विशेष्यमात्रैक्यमेव बोधयति । न तु प्रातिपदिकावगत विशेषणविशेष्यतत्संबन्धानामप्यैक्यम् । व्युत्पत्तिबलात् , तथाऽत्रापि व्युत्पत्तिबलात् सामानाधिकरण्यं विशेष्यैक्यमात्रं बोधयतीति ।

अथ द्रव्यवाचिपदसमानाधिकरणस्य गुणवाचिपदस्य केवलगुणाभिधायकत्वनियमेन 'अरुणये'तिपदस्य तथात्वेन केवलगुणाभिधायित्वमेव न तु गुणविशिष्टद्रव्यपर्यन्ताभिधायित्वमिति नात्र सामानाधिकरण्यमिति परमतमनूद्य व्युदस्यति - **यत्त्वित्यादिना** । अयं भावः - 'कृष्णो गच्छति', 'श्वेतमालभेत' इत्यादौ गुणवाचिपदानां गुणिपर्यन्ताभिधानं दृष्टम् । 'पटस्य शुक्ल' इत्यादौ तु न तथा । तत्र शुक्लशब्दस्योपात्तद्रव्यकवाक्यस्थत्वात् । 'पटः शुक्ल' इत्यत्र गुणिपर्यन्तभिधायित्वन्तु तदपवादकसामानाधिकरण्यबलात् । अत उपात्तद्रव्यकवाक्यस्थगुणशब्दः केवलगुणाभिधायक एवेति । एतावता उपान्तद्रव्यकवाक्यस्थगुणवाचकपदस्य केवलगुणाभिधायकत्वमुत्सर्गसिद्धं तत्र च सामानाधिकरण्येन प्रयोगे गुणवाचकशब्दस्य गुणिपर्यन्तत्वमपवाद इत्युक्तं भवति, ततश्चारु णयेति पदस्य द्रव्यवाचकपदसमानाधिकरणत्वेन गुणवाचकत्वकथनमयुक्तमिति परिहरति - **तन्नोपपद्यत** इत्यादिना । एवं सामान्यत उपात्तद्रव्यकवाक्यस्थगुणवाचकपदस्य गुणवाचकत्वकथनमपि व्यभिचारान्निरस्तमित्याह - **उपात्तद्रव्यके**ति ।

ननु 'पटस्य शुक्ल' इत्यादौ उपात्तद्रव्यकवाक्यस्थगुणशब्दस्य गुणवाचकत्वं दृष्टमित्यत्राह - **पटस्य शुक्ल** इति । असमानायाः विभक्तेः निर्दश एव प्रयोजक इत्यर्थः । समानविभक्तिनिर्देशाभावोऽप्रयोजक इति नास्य ग्रन्थस्यार्थः । 'श्वेतो गच्छती'त्यादौ समानविभक्तिनिर्देशाभावेन गुणमात्रपरत्वप्रसङ्गात् । 'अरूणये'ति पदस्य किं उपात्तद्रव्यकवाक्यस्थत्वमुत न, आद्ये 'एकहान्ये'ति सामानाधिकरण्यनिर्देशेनापवादकसत्वात् कथं केवलगुणाभिधायित्वम् । द्वितीये उपात्त द्रव्यकवाक्यस्थत्वाभावेन केवलगुणाभिधयित्वकथनमनुपपन्नमिति । अयं भावः - अव्यभिचरितं हि प्रयोजकत्वेन कल्प्यम् । भवदुक्तमुपात्तद्रव्यकवाक्ये गुणवाचित्वं तु 'पटः शुक्लः' इत्यादौ व्यभिचरितम् । तदर्थमपवादाश्रयणे मूलच्छेदः , कल्पनागौरवमपि । 'श्वेतमालभेते'त्यादौ गुणवाचकपदस्य प्रथमं गुणिपर्यन्तत्वकल्पनम् । 'पटस्य शुक्लः' इत्यादौ उपात्तद्रव्यकवाक्यस्थत्वस्यापवादकताऽभ्युपेया 'पटःशुक्ल' इत्यादौ तस्यापि सामानाधिकरण्यमपवादकमिति । अस्मन्मतेऽपृथसिद्धधर्मवाचकपदं गुणिपर्यन्तबोधकं , तदपवादकोऽसमानविभक्तिनिर्देशः । यथा 'श्वेतमालभेत', 'पटस्य शुक्लः' इति । अतः प्रयोजकद्वयकल्पनमात्रमिति ।

**असमानविभक्तिनिर्देशकृता; न पुनरुपात्तद्रव्यकत्वकृता। तत्रैव 'पटस्य शुक्लो भागः' इत्यादिषु समान-विभक्तिनिर्देशे शौक्ल्यविशिष्टद्रव्यं प्रतीयते ॥**

**यत्पुनः - क्रयस्यैकहायन्यवरुद्धतयाऽरुणिम्नः क्रयान्वयो न सम्भवतीति - तदपि विरोधिगुणरहित-द्रव्यवाचिपदसमानाधिकरणगुणपदस्य तदाश्रयगुणाभिधानेन क्रियापदान्वयाविरोधादसङ्गतम्। राद्धान्ते चोक्त(क्तेन)न्यायेनारुणिम्नश्शाब्दे द्रव्यान्वये सिद्धे, 'द्रव्यगुणयोः क्रयसाधनत्वानुपपत्त्या अर्थात्परस्परान्वयः सिद्ध्यती'त्यप्यसङ्गतम्। अतो यथोक्त एवार्थः ॥**

**तस्मात्तत्वमस्यादिसामानाधिकरण्ये पदद्वयाभिहितविशेषणापरित्यागेनैवैक्यप्रतिपादनं वर्णनीयम्। तत्तु अनाद्यविद्योपहितानवधिकदुःखभागिनः शुद्ध्यशुद्ध्युभयावस्थाचेतनादर्थान्तरभूतमशेषहेयप्रत्यनीका-**

---

ननु 'पटस्य शुक्लो भागः' इत्यत्रासमानविभक्तिनिर्देशेपि कथं गुणिपर्यन्तत्वमित्यत्राह - **तत्रैवेति**। शुक्लशब्दस्य विशेष्यवाचिभागशब्देनासमानविभक्तिनिर्देशाभावेन नानुपपत्तिः। अत एव हि भवतामपि गुणमात्रपरत्वस्यापवादकत्वे नाभ्युपगतभागशब्दसामानाधिकरण्यसत्त्वेन गुणिपर्यन्तत्वमिति भावः। क्रयस्यैकहायन्या निराकाङ्क्षत्वात्साकाङ्क्षत्वे सत्येव एकवाक्यत्वसम्भवादत्र तद्भावेनारुण्यस्य क्रयान्वयः न सम्भवतीति पूर्वपक्षस्य स्वसिद्धान्तेन परिहृतत्वबोधनाय पूर्वपक्षमनुवदति - **यत्पुनरिति**। गुणवाचकस्यारुणाशब्दस्य गुणिपर्यन्तार्थकत्वाद्गुणविशिष्टस्यैकस्य क्रयं प्रति कारणात्, द्रव्यद्वारा आरुण्यस्य क्रयान्वयेन तदसम्भवकथनमनुपपन्नमित्याशयेन परिहरति - **तदपीति**। नैल्यशौक्ल्ययोर्विरोधात् नीलशब्दसहितद्रव्यवाचिपद समानाधिकरणशुक्लपदस्य तदाश्रयकगुणाभिधायित्वाभावेन विरोधिगुणरहितद्रव्येत्युक्तम्। एवं तदभिमतपूर्वपक्षनिरासः कृतः। तदुक्तं - सम्भवति एकवाक्यत्वे वाक्यभेदाश्रयणमनुपपन्नमिति न्यायेन कथञ्चिदत्र एकवाक्यत्वसम्भवात्, 'गुणे द्रव्यव्यपेक्षे च द्रव्यश्च गुणकाङ्क्षिणि' इति न्यायेन द्रव्यगुणयोः परस्परापेक्षत्वेन नष्टाश्व-दग्धरथन्यायेन परस्परान्वयादारुण्यविशिष्टैकहायनीद्रव्यस्य क्रयसाधनत्वं युक्तमिति। न प्राकरणिकसर्वद्रव्येष्वारुण्यान्वय इति राध्दान्तं दूषयति - **राध्दान्ते चेति**। उक्त न्यायेन **अरुणिम्नः शाब्दे द्रव्यान्वये सिद्धे** इत्यनेन निरासप्रकार उक्तः। अरुणापदस्य गुणवाचकत्वे हि अमूर्तस्य गुणस्य क्रयसाधनत्वाभावेनार्थात्परस्परान्वयः वक्तव्यः, तदेव नास्ति तस्यैव गुणिवाचकत्वेन साक्षाच्छब्दान्वयसिद्धेरिति। एवं पराभिमतपूर्वपक्षसिद्धान्तयोदुर्ष्टत्वात्स्वोक्तार्थ एव साधीयानित्याह - **अत** इति।

एवं सामानाधिकरण्यस्यानेकविशेषणविशिष्टैकार्थ परत्वस्य लोकवेदासिद्धत्वसमर्थनात्तत्त्वमसीत्यत्र सामाना-धिकरण्यं तत्तत्पदबोधितविशेषणाद्यपरित्यागेनैवोपपादनीयमित्याह - **तस्मादिति**। एवमुपपादनं निर्विशेषवस्तुवादिनां पदद्वयावगतगुणदोषपरित्यागान्न सम्भवतीत्याह - **तत्त्विति**। अनाद्यविद्येत्यादिक म शेषहेयेत्यादिकं चासम्भवोपपादकं तत्त्वं पदप्रवृत्तिनिमित्तविवरणं। अविद्याशब्दः कर्मपरः। प्रथमविशेषणेन जीवस्य कर्मवश्यत्वप्रयुक्तनिग्राह्यत्वमुक्तम्। अशेषेत्यादिना भगवतो निग्राहकत्वं दर्शितं। ततश्च निग्राह्यनिग्राहकयोर्नाभेदो युक्त इति भावः। मुक्तिदशायामैक्यशङ्का-परिहाराय शुध्यशुध्युभयावस्थादित्युक्तम्। शुद्धस्य दुःखभागित्वं दुःखसम्बन्धित्वार्हत्वम्। तथा च निग्रहदशायामनुग्रह-दशायां वा निग्राह्यस्यानुग्राह्यस्य च निग्राहकेणानुग्राहकेणच भेदो न युक्त इत्युक्तं भवति। अत्र विशिष्ये निर्विशेष-वादिनामित्यनुक्त्वा कल्याणैकतानं परमात्मानमनभ्युपगच्छतामित्युक्तत्वाच्छाङ्करयादनभास्करमतेषु त्रिष्वप्यविशेषेणायं दोष इति ज्ञापितम्।

ननु पदद्वयप्रतिपन्नार्थस्य विशेषेणपरित्यागासम्भवात्त्वंपदप्रतिपन्नाकारविशिष्टजीवस्वरूपैक्यस्य ब्रह्मणि बोधनात्

**नवधिककल्या(णगु)णैकतानं परमात्मानमनभ्युपगच्छतो न सम्भवति । अभ्युपगच्छतोऽपि समानाधिकरण-पदानां यथावस्थितविशेषणविशिष्टैक्यप्रतिपादनपरत्वाश्रयणे त्वम्पदप्रतिपन्नसकलदोषभागित्वं परस्य प्रसज्येतेति चेत् - नैतदेवम्; त्वम्पदेनापि जीवान्तर्यामिणः परस्यैवाभिधानात् ।**

**एतदुक्तं भवति - सच्छब्दाभिहितं निरस्तनिखिलदोषगन्धं सत्यसङ्कल्पमिश्रानवधिकातिशयासङ्ख्येय-कल्याणगुणगणं समस्तकारणभूतं परं ब्रह्म** (छा. ६-२-२) **'बहु स्याम्' इति सङ्कल्प्य तेजोबन्नप्रमुखं कृत्स्नं जगत् सृष्ट्वा, तस्मिन् देवादिविचित्रसंस्थिते जगति चेतनं जीववर्गं स्वकर्मानुगुणेषु शरीरेष्वात्मतया प्रवेश्य, स्वयं च स्वेच्छयैव जीवान्तरात्मतयाऽनुप्रविश्य, एवम्भूतेषु स्वपर्यन्तेषु देवाद्याकारेषु सङ्घातेषु नामरूपे व्याकरोत् - एवंरूपसङ्घातस्यैव वस्तुत्वं शब्दवाच्यत्वं चाकरोदित्यर्थः । अनेन जीवेनात्मना - जीवेन मयेति निर्देशो जीवस्य ब्रह्मात्मकत्वं दर्शयति । ब्रह्मात्मकत्वं च जीवस्य जीवान्तरात्मतया ब्रह्मणोऽनुप्रवेशादित्यवगम्यते,** (तै.आन.६.२) **'इदं सर्वमसृजत, यदिदं किञ्च । तत्सृष्ट्वा, तदेवानुप्राविशत् । तदनुप्रविश्य, सच्च त्यच्चाभवत्' इति ; अत्र, इदं सर्वमिति निर्दिष्टं चेतनाचेतनवस्तु(र्ग)द्वयं सत्त्यच्छब्दाभ्यां विज्ञानाविज्ञानशब्दाभ्याञ्च विभज्य**

परस्य दोषभागित्वमेव स्यादतिरिक्तनिखिलगुणविशिष्टपरमात्मन अभ्युपगमेऽपीति शङ्कते - **अभ्युपगच्छतोऽपीति** । परिहरति - **नैतदिति** । कुत इत्यत्राह - **त्वंपदेनापीति** । अपिः तच्छब्दसमुच्छये । **तत्पदप्रतिपन्नस्यैवे**त्यवधारणाभिप्रायः । नन्वभिमुखवाचि त्वंपदस्य परमात्माभिधायित्वे लाक्षणिकत्वमेव स्यादित्यत्राह - **एतदुक्तमिति** । सर्वशब्दानां परमात्म-पर्यन्तत्वस्य वेदव्युत्पत्तिसिद्धत्वेन न त्वंपदस्य लाक्षणिकत्वमित्याशयः । **तेजोबन्नप्रमुखं कृत्स्नंजगदि**त्यनेन तत्त्व-सृष्टिर्विवक्षिता । **देवादी**त्येतच्चेतनाचेतनविभागसूचनाय जगदाकारकथनमात्रम् । **अनुप्रविश्य नामरूपे व्याकरोदि**-त्यनेनानुप्रवेशानन्तरमेव नामरूपव्याकरणादनुप्रवेशात्पूर्वं देवादिविचित्रावस्थाया अभावात् । **एवं रूपे**त्युपरितनभाष्य स्वारस्याच्च । जीवस्यापि चेतनत्वप्रयुक्तशरिरित्वबोधनाय **चेतनमि**त्युक्तम् । 'नित्यो नित्यानामि'ति श्रुत्यर्थमभिप्रेत्योक्तं **जीववर्गमिति** । अनेन, 'अनेन जीवेने'त्येकवचनस्य जात्येकवचनत्वाभिप्रायकत्वमुक्तम् । **स्व**शब्दो जीवपरः । **स्वकर्मानुगुणेष्वि**त्यादीना 'अनेन जीवेने'त्यत्रेदंशब्दार्थः । तत्र हि 'अनेन जीवेनानुप्रविश्ये'त्युक्तत्वात् तेजोबन्नेष्वपि जीवानामनुप्रवेशहेतुभूतकर्मसद्भावः 'अनेने'त्यनेन सूचितः । शरीरेषु = शरीरत्वावस्थापत्तियोग्येषु । जीवानुप्रेवशवत् स्वानुप्रवेशस्यान्यकर्तृकत्व-कर्ममूलत्वशङ्काव्युदासाय **स्वेच्छयैवे**त्युक्तम् । जीवस्य परतन्त्रत्वात् तदनुप्रवेशस्यान्य-सापेक्षत्वम् । ईश्वरस्य तु स्वतन्त्रत्वेन न तदनुप्रवेशस्यान्यसापेक्षत्वमिति भावः ।

एवम्भूतेषु = द्वारद्वारिभावेन व्यवस्थितेषु चेतनाचेतनात्मकेषु । **रूपं** = तत्तदवस्थाः । **नाम** = तद्वाचिशब्दाः । देवाद्याकारेषु सङ्घातेषु 'नामरूपे व्याकरोदि'त्येतावता परमात्मपर्यन्तस्य नामरूपव्याकरणमस्फुटमिति तत्स्फुटयति - **एवंरूपसङ्घातस्येवेति** । चिदचिदीश्वरात्मकसङ्घातस्येत्यर्थः । उक्तोऽर्थः 'अनेन जीवेने'ति श्रुतिसिद्ध इति दर्शयति । आत्मशब्दार्थस्फोरणाय **मयेत्युक्तम्** । नन्वात्मशब्दस्यानेकार्थसाधारणत्वादुक्तं जीवस्य ब्रह्मात्मकत्वं ब्रह्मस्वरूपैक्यमेव किं न स्यादित्यात्राह - **ब्रह्मात्मकत्वञ्चेति** । ननु 'तत्सृष्ट्वा तदेवानुप्राविशदि'त्यनेनानुप्रवेशस्य सृष्ट्यन्तरभावित्वं प्रतीयते, 'अनुप्रविश्य नामरूपे व्याकरवाणी'त्यनेनानुप्रवेशानन्तरकालिकत्वं प्रतीयते, जगत्सृष्टिरेव हि नामरूपव्याकरणं अतो विरोध इति चेत् ? न, तत्र पौर्वापर्यस्याविवक्षितत्वात् । तस्य 'त्वष्टा विदधत्रूपमि'ति सृष्टिप्रवेशयोः समान-कालीनत्वबोधनात् । यद्वा, 'तदेवानुप्राविशदि'ति सृष्टावनुप्रवेशकथनं स्थित्यर्थानुप्रवेशाभिप्रायकम् । ननु 'तदेवानुप्रा-विशदि'त्यत्र केवलाचेतनानुप्रवेश एवोच्यत इति किन्न स्यादित्यत्रोदाहृतश्रुतेरर्थं विवृणोति - **अत्रेति** । एवं परमात्म-

**निर्दिश्य चिद्वस्तुन्यपि ब्रह्मणोऽनुप्रवेशाभिधानात्। अत एवं नामरूपव्याकरणात्सर्वे वाचकाश्शब्दा अचिज्जीवविशिष्टपरमात्मवाचिन इत्यवगतम् - इति।**

**किञ्च** (छा-८-७) **'ऐतदात्म्यमिदं सर्वम्' इति, चेतनमिश्रं प्रपञ्चम् 'इदं सर्व'मिति निर्दिश्य तस्यैष आत्मेति प्रतिपादितम्। एवञ्च सर्वं चेतनाचेतनं प्रति ब्रह्मण आत्मत्वेन सर्वं सचेतनं जगत् तस्य शरीरं भवति। तथा च श्रुत्यन्तराणि,** (यजु.आर. ३-१-१) **'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा',** (बृ.५-७-३) **'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरम्, यः पृथिवीमन्तरो यमयति, स त आत्माऽन्तर्याम्यमृतः' इति प्रारभ्य, 'य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरम्, य आत्मानमन्तरो यमयति, स त आत्माऽन्तर्याम्यमृतः' (इत्यदि),** (सुबा.७) **'यः पृथिवीमन्तरे सञ्चरन् यस्य पृथिवी शरीरम्। योऽपोऽन्तरे सञ्चरन् यस्याऽऽपः शरीरम्' इत्यारभ्य, 'योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरम्, यमक्षरं न वेद...एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' इत्यादीनि सचेतनं जगत् तस्य शरीरत्वेन निर्दिश्य तस्यात्मत्वेन परमात्मानमुपदिशन्ति। अतश्चेतनवाचिनोऽपि शब्दाश्चेतनस्याप्यात्मभूतं चेतनशरीरकं परमात्मानमेवाभिदधति, यथा अचेतनदेवादिसंस्थानपिण्डवाचिनः शब्दाः तत्तच्छरीरकजीवात्मन एव वाचकाः,** (ताण्ड्यमहाब्राह्मण. २३-६) **'चत्वारः पञ्चदशरात्राः।.....देवत्वं गच्छन्ति' इत्यादिषु। देवा भवन्तीत्यर्थः।**

**शरीरस्य शरीरिणं प्रति प्रकारत्वात्प्रकारवाचिनां च शब्दानां प्रकारिण्येव पर्यवसानात् शरीरवाचिनां**

---

पर्यन्तनामरूपव्याकरणाप्रतिपादनेन सर्वशब्दानां परमात्मपर्यन्तत्वं युक्तमित्याह - **अत** इति।

एवं नामरूपव्याकरणबलात् त्वंपदस्य चेतनशरीरकपरमात्मपर्यन्तत्वं सिद्धमिति सामानाधिकरण्यबलेन पदद्वयावगतविशेषणस्वीकारः सामानाधिकरण्यस्य मुख्यत्वं भगवतः श्रुतिसिद्धनिर्दोषत्वं कल्याणगुणास्पदत्वञ्चोक्तम्। अथ देहवाचिशब्दानामाकृत्यधिकरणन्यायेनापि विशिष्टार्थकत्वोपपादनाय चेतनाचेतनयोश्शरीरत्वं प्रथमं दर्शयति - **किञ्चेत्यादिना**। सर्वशब्दपर्यालोचनेन चेतनमिश्रं प्रपञ्चमित्युक्तम्। नन्वस्त्वात्मतया प्रतिपादनं तावता प्रपञ्चस्य शरीरत्वे किमायातमित्यत्राह - **एवञ्चेति**। आत्मत्वेन निर्देशबलाच्छरीरत्वं ज्ञाप्यमित्युक्तम्। अथ तत्कण्ठोक्तं चेत्याह - **तथेति**। **प्रथमम्** इत्यादीत्यत्र इत्यादीनीति पाठः। यद्वा - **इत्यादि** - 'यः पृथिवीमन्तरे सञ्चरन्' इत्यारभ्य **इत्यादीनी**त्येतत्पर्यन्तमेकं समस्तं पदम्। अत एव चकारोऽनुक्तः।

ननु प्रपञ्चेश्वरयोश्शरीरशरीरिभावे भेदस्य स्पष्टत्वात्कथं सामानाधिकरण्योपपत्तिरित्यत्राह - **अत** इति। उक्तार्थे सम्प्रतिपन्नं दृष्टान्तमाह - **यथेति**। एवं शरीरवाचकशब्दस्य शरीरिपर्यन्तत्वस्य वेदसिद्धत्वं प्रदर्शयति - **चत्वार** इति। 'देवत्वं गच्छन्ती'त्यस्यार्थमाह - देवा भवन्तीत्यर्थ इति। अयं भावः - यदि देवशब्दः शरीरमात्रवाचकः, तर्हि 'शरीरत्वं प्राप्नुवन्ती'त्यर्थ उक्तस्स्यात्। तथा च चेतनस्याचेतनता प्राप्तिरेव स्यात्। तस्मात् **देवत्वमित्यस्य** 'देवशरीरित्वमि'त्यर्थस्यावश्याभ्युपगन्तव्यत्वाच्छरीरवाचकशब्दः शीररिपर्यन्त इति निर्णीयत इति। नन्वस्तु लक्षणयैव बोधनमित्यत्राह - **शरीरस्येति**। **प्रकारवाचिनां शब्दानां प्रकारिण्येव पर्यवसानादि**त्यनेनाकृत्यधिकरणन्यायस्सूचितः। तथा च प्रकारभूतजातिगुणवाचकशब्दानां प्रकारिपर्यन्तत्ववदत्रापि तत्सम्भवेन न लक्षणाया अवकाश इति भावः।

**शब्दानां शरीरिपर्यवसानं न्याय्यम् । प्रकारो हि नाम इदमित्थमिति प्रतीयमाने वस्तुनीत्थमिति प्रतीयमानोंशः । तस्य तद्वस्त्वपेक्षत्वेन तत्प्रतीतेस्तदपेक्षत्वात्तस्मिन्नेव पर्यवसानं युक्तमिति तस्य प्रतिपादकोऽपि शब्दस्तस्मिन्नेव पर्यवस्यति । अत एव, गौः, अश्वः, मनुष्यः इत्यादिप्रकारभूताकृतिवाचिनः शब्दाः प्रकारिणि पिण्डेऽपर्यवस्यन्तः पिण्डस्यापि चेतनशरीरत्वेन तत्प्रकारत्वात् पिण्डशरीरकचेतनस्यापि परमात्मप्रकारत्वाच्च परमात्मन्येव पर्यवस्यन्तीति सर्वशब्दानां परमात्मैव वाच्य इति परमात्मवाचिशब्देन सामानाधिकरण्यं मुख्यमेव ।।**

**ननु - 'खण्डो गौः, खण्डः शुक्लः' इति जातिगुणवाचिनामेव पदानां द्रव्यवाचिपदैस्सह सामानाधि-**

---

ननु जातिगुणयोः प्रकारत्वं युक्तं, द्रव्यस्य शरीरस्य कथं प्रकारत्वमित्यत्र प्रकारस्वरूपं दर्शयति - **प्रकार** इति । नन्वस्तु प्रकारत्वं तावता तद्वाचकशब्दस्य प्रकारिणि पर्यवसानं कुत इत्यत्राह - **तस्येति** । **तस्य** = प्रकारस्य । **तद्वस्त्वपेक्षत्वेन** = प्रकारिसापेक्षस्वरूपास्थितिकत्वेन । पूर्वः तच्छब्दः प्रकारपरः, उत्तरस्तु प्रकारिपरः ।।

यत्तु प्रकारवाचकशब्दानां विशेषणमात्रविषयिणी शब्दशक्तिः विशेषणविशिष्टविशेष्यबोधनन्तु अर्थ सामर्थ्यादेव न तदर्थं शब्दशक्तेः विशेष्यविषयकत्वमपि कल्प्यम् । ननु तर्हि विशिष्टबोधस्यामुख्यत्वमिति चेन्न, संस्कारसचिवेन्द्रियजन्यस्य प्रत्यभिज्ञानस्य प्रत्यक्षत्वमेव, न तु स्मृतित्वं, तद्वदर्थसामर्थ्यसचिवशब्दशक्त्यधीनविशिष्टबोधस्य मुख्यत्वमिति । तन्न मनोज्ञं, अर्थसामर्थ्यात् विशेष्यबोधाभ्युपगमे निष्कर्षकशब्देप्यर्थसामर्थ्यसत्त्वेन विशेष्यपर्यन्तबोधप्रसङ्गः । अस्माकन्तु निष्कर्षकशब्देषु विशेष्यपर्यन्तशब्दशक्त्यनभ्युपगमान्नातिप्रसङ्गः । रूपग्रहणे एव नयनस्य शक्तिः, रूपिग्रहणं त्वर्थसामर्थ्यादित्यप्यापत्तेः । न चेष्टापत्तिः । घ्राणादिजन्यगन्धादिग्रहणेऽर्थसामर्थ्यात् पृथिव्यादिप्रतिपत्त्यापत्तेः । अतश्शब्दशक्तेर्विशेष्यपर्यन्तविषयकत्वे एव निष्कर्षकानिष्कर्षकादिशब्दविभागोपपत्तेः प्रकारिविषयकत्वमभ्युपेयम् । अत एव 'वचसां वाच्यमुत्तम्', 'नतास्स्म सर्ववचसां प्रतिष्ठा', 'यत्र शाश्वती' इति शब्दशक्तेरव प्रकारिपर्यन्तविषयकत्वमुक्तमिति । एवं प्रकारवाचकशब्दस्य प्रकारिपर्यवसायित्वस्य शब्दशक्त्यधीनत्वमुपपाद्य प्रकृते सामानाधिकरण्यस्य मुख्य- वृत्तत्वमुपपादयति - **अत एवेति** । **पिण्डे अपर्यवस्यन्त** इति च्छेदः । शब्दव्यापारोपरमरूपपर्यवसानस्य परमात्मन्येव सम्भवात् । अन्यथा तु व्यापारोपरमस्य विवक्षा । **पर्यवस्यन्तः** पर्यवस्थातुं प्रवृत्ता इत्यर्थः ।।

ननु विशेषणवाचकशब्दस्य विशेष्यपर्यन्तत्वसम्भवेन जीववाचकशब्दस्य परमात्मपर्यन्तत्वं युक्तम् । न तु गवादिशब्दानामपि परमात्मपर्यन्तत्वम् । गवादिशब्दा हि गोत्वादिविशेषवाचकाः स्वविशेष्यजीवपर्यन्तमेवाभिदध्युः, न तु चरमविशेष्यमपीति चेन्न । विशेषणवाचकशब्दस्य परमविशेष्यपर्यन्तत्वस्य दर्शनात् । अत एव हि नैल्यगुणगतावान्तरजातिगोत्वादिजातिवाचिनो नीलगवादिशब्दा उत्पलखण्डादिशब्दसमानाधिकरणाः गुणपिण्डादिद्वारा विशिष्टे पर्यवस्यन्ति । अतो नानुपपत्तिः ।

ननु जातिगुणवाचकशब्दानामेव मत्वर्थप्रत्ययनिरपेक्षद्रव्यवाचिपदसामानाधिकरण्यदर्शनात् द्रव्यवाचकपदस्य द्रव्यवाचिपदसामानाधिकरण्ये मत्वर्थप्रत्ययसापेक्षत्वदर्शनाच्च शरीरस्य द्रव्यत्वात्तद्वाचकशब्दस्य कथं द्रव्यवाचकशब्देन मत्वर्थप्रत्ययनिरपेक्षसामानाधिकरण्यमिति शङ्कते - **नन्विति** । सर्वत्र प्रयोगबलेनैवार्थस्य व्यवस्थाप्यत्वात् द्रव्यवाचकशब्दस्यापि मत्वर्थप्रत्ययनिरपेक्षद्रव्यवाचिपदसामानाधिकरण्येन 'देवोऽहमि'त्यादि प्रयोगदर्शनादत्रापि तादृशं सामानाधिकरण्यमभ्युपेयम् । अत एव हि गुणवाचिशब्दस्यैव तादृशं सामानाधिकरण्यं, न तु जातिवाचकशब्दस्य, जातिवाचकशब्दस्यैव तादृशं सामानाधिकरण्यं न तु गुणवाचिशब्दस्येति भवद्भिरपि नाभ्युपेतम् । अन्यथा नियमस्याव्याप्तत्वात् । अतो व्यापकमनतिप्रसक्तमेव प्रयोजकं वक्तव्यम् ।

**करण्यं दृष्टम्। द्रव्याणां तु द्रव्यान्तरप्रकारत्वे मत्वर्थीयप्रत्ययो दृष्टः, यथा 'दण्डी कुण्डली' इति। नैवम्। जातिर्वा गुणो वा द्रव्यं वा नैतेष्वेकमेव सामानाधिकरण्ये प्रयोजकम्; अन्योन्यस्मिन् व्यभिचारात्। यस्य पदार्थस्य, कस्यचित्प्रकारतयैव सद्भावः, तस्य तदपृथक्सिद्धिस्थितिप्रतीतिभिः तद्भाविनां शब्दानां स्वाभिधेयविशिष्टद्रव्यवाचित्वाद्धर्मान्तरविशिष्टतद्द्रव्यवाचिना शब्देन सामानाधिकरण्यं युक्तमेव। यत्र पुनः पृथक्सिद्धस्य स्वनिष्ठस्यैव द्रव्यस्य कदाचित्कचिद्द्रव्यान्तरप्रकारत्वमिष्यते, तत्र मत्वर्थीयप्रत्यय इति निरवद्यम्॥**

**तदेवं परमात्मनश्शरीरतया तत्प्रकारत्वादचिद्विशिष्टजीवस्यापि, (जीवस्य), जीवनिर्देशविशेषरूपाः अहंत्वमित्यादिशब्दाः परमात्मानमेवाऽऽचक्षत इति,** (छा. ६-८-७) **'तत्त्वमसि' इति सामानाधिकरण्येनोपसंहृतम्। एवञ्च सति परमात्मानं प्रति जीवस्य शरीरतयाऽन्वयाज्जीवगता धर्माः परमात्मानं न स्पृशन्ति; यथा स्वशरीरगता बालत्वयुवत्वस्थविरत्वादयो धर्मा जीवं न स्पृशन्ति। अतः 'तत्त्वमसि' इति सामानाधिकरण्ये तत्पदं जगत्कारणभूतं सत्यसङ्कल्पं सर्व(सकल)कल्याणगुणाकरं निरस्तसमस्तहेयगन्धं परमात्मानमाचष्टे; त्वमिति च तमेव सशरीरजीवशरीरकमाचष्ट इति सामानाधिकरण्यं मुख्यवृत्तम्; प्रकरणाविरोधः, सर्वश्रुत्यविरोधः, ब्रह्मणि निरवद्ये कल्याणैकताने अविद्यादिदोषगन्धाभावश्च। अतो जीवसामानाधिकरण्यमपि विशेषणभूताज्जीवादन्यत्वमेवापादयतीति विज्ञानमयाज्जीवादन्य एवानन्दमयः परमात्मा॥**

**यदुक्तम् - तस्यैष एव शारीर आत्मा' इत्यानन्दमयस्य शारीरत्वश्रवणाज्जीवादन्यत्वं न सम्भवतीति - तदयुक्तम्; अस्मिन्प्रकरणे सर्वत्र 'तस्यैष एव शारीर आत्मा। यः पूर्वस्य' इति परमात्मन एव शारीरात्मत्वा-**

---

त्वदुक्तं न तथेत्याशयेन दूषयति - **नैवमित्यादिना**। प्रयोजकाकारं स्वयमाह - **यस्येति**। **अपृथक्सिद्धिः** अपृथक्सत्ता। सत्ता च प्रमाणसम्बन्धयोग्यत्वरूपा स्थितिरनुवृत्तिः। निष्कर्षकशब्दान्यत्वे सति प्रकारतैकस्वभाववस्तुवाचिशब्दत्वं मत्वर्थप्रत्यपनिरपेक्षसामानाधिकरण्ये प्रयोजकमित्युक्तं भवति। 'दण्डी'त्यादौ तु उक्तप्रयोजकाकारस्याभावेन न मत्र्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यमित्याह - **यत्र त्विति**। सहोपलम्भनियमादेः प्रयोजकत्वं पूर्वमेवनिरस्तमिति ध्येयम्॥

**तदेवमिति परमात्मन** इति निरूपितत्वमर्थः। अचिद्विशिष्टजीवस्यापि परमात्मनिरूपितशरीरत्वेन परमात्मप्रकारत्वादित्यर्थः। यथाऽचेतनस्य जीवशरीरत्वेन जीवस्याचिद्विशिष्टत्वं तत एव तद्वाचिशब्दो जीवात्मवाचकः तथेत्यभिप्रायसूचनायाचिद्विशिष्टजीवस्यापीत्युक्तम्। ऐतदात्म्यमिदं सर्वमिति वैयधिकरण्येन सर्वात्मकत्वं पूर्वमुक्तम्। तत्त्वमसीति सामानाधिकरण्येनोपसंहारः जीवविशेषे। **जीवगता धर्मा** इत्यादि। त्वंपदप्रतिपन्नदोषभाक्त्वप्रसङ्गः परमात्मनि परिहृतः। जीवपरयोः शरीरशरीरिभावाभ्युपगमेपि जीवशरीरगतधर्मा यथा जीवं न स्पृशन्ति, तथा जीवधर्मा अपि परमात्मानं न स्पृशन्तीत्यर्थः। अभेदसाधकतया प्रदर्शितमेव तत्त्वमस्यादिवाक्यं भेदसाधकमेवाभूदित्याह - **अतो जीवसामानाधिकरण्यमपि** इत्यादि। यतः सामानाधिकरण्यं भेदावहं तत एव जीवादन्यत्वमानन्दमस्य सुप्रतिष्ठितम्।

एवं सामानाधिकरण्येनाभेदश्रुते निर्वाहं चकार। विज्ञानमयादन्य इत्यस्य जीवनिषेधपरत्वं स्वाभिमतम्। शारीरआत्मा इति शरीरप्रतिसम्बन्धित्वश्रवणाज्जीवपरत्वमेवेति शङ्कां निषेधति - **यदुक्तमित्यादिना**। अयमत्रोपनिषदर्थसङ्ग्रहः - 'ब्रह्मविदाप्नोति परम्' इति ब्रह्म तद्वेदनं प्राप्तिः प्राप्यं चेति चतुष्टयमुक्तम्। 'सत्यं ज्ञानमनन्तं ब्रह्म' इति ब्रह्मस्वरूपं,

**भिधानात्। कथम्? 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' इत्याकाशादिसृज्यवर्गस्य परमकारणत्वेन प्रज्ञातजीवव्यतिरेकस्य परस्य ब्रह्मण आत्मत्वेन व्यपदेशात्तद्व्यतिरिक्ताकाशादीनामन्नमयपर्यन्तानां तच्छरीरत्वमवगम्यते।** (सुबाल.७) **'यस्य पृथिवी शरीरं...यस्यापश्शरीरं...यस्य तेजः शरीरं...यस्य वायुः शरीरं...यस्याकाशः शरीरं...यस्याक्षरं शरीरं...यस्य मृत्युः शरीरम्, एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' इति सुबालश्रुत्या सर्वतत्वानां परमात्मशरीरत्वं स्पष्टमभिधीयते। अतः** (तै.आन.1) **'तस्माद्वा एतस्मादात्मनः' इत्यत्रैवान्नमयस्य परमात्मैव शारीर आत्मेत्यवगतः। प्राणमयं प्रकृत्याह, 'तस्यैष एव शारीर आत्मा, यः पूर्वस्य' इति। पूर्वस्यान्नमयस्य यः शारीर आत्मा श्रुत्यन्तरसिद्धः परमकारणभूतः परमात्मा, स एष(व)तस्य प्राणमयस्यापि शारीर आत्मेत्यर्थः। एवं मनोमयविज्ञानमययोर्द्रष्टव्यम्। आनन्दमये तु 'एष एव' इति निर्देशः तस्यानन्यात्मत्वं दर्शयितुम्। तत्कथम्? विज्ञानमयस्यापि पूर्वोक्तया नीत्या परमात्मैव शारीर आत्मेत्यवगतः। एवं सति विज्ञानमयस्य यः शारीर आत्मा, स एवानन्दमयस्यापि शारीर आत्मेत्युक्ते आनन्दमयस्य अभ्यासावगतपरमात्मभावस्य परमात्मनः स्वयमेवात्मेत्यवगम्यते। एवं च स्वव्यतिरिक्तं चेतनाचेतनवस्तुजातं स्वशरीरमिति स एव निरुपाधिकः(क)शारीर आत्मा। अत एवेदं परं ब्रह्माधिकृत्य प्रवृत्तं शास्त्रं शारीरकमित्यभियुक्तैरभिधीयते। अतो विज्ञानमयाज्जीवादन्य एव परमात्मा आनन्दमयः॥ १३॥**

---

'यो वेद निहितं गुहायाम्' इति तद्वेदनं 'सोऽश्नुते' इत्यादिना ब्रह्मप्राप्तिः 'परमे व्योमन्' इति प्राप्यं चोक्तम्। ब्रह्मविदाप्नोति तदिति वा, ब्रह्मविदाप्नोति ब्रह्मेति वा नोक्तम्। परमिति शब्दप्रयोगः कृतः। 'देवान् देवयजो यान्ति' इति रीत्या तत्क्रतुन्यायेन तदुपासकानामत्युत्कृष्टं प्राप्यमिदमेवेति सूचितम्। अनेन परमव्योमनिलयः परवासुदेवः प्राप्य इत्युक्तं भवति। एतदभिप्रायेण परमे व्योमन्निति निर्देशः कृतः। उपरि 'तस्माद्वा एतस्मात्' इति मन्त्रब्राह्मणोक्तात् 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्युक्ताद्ब्रह्मरूपात्मन आकाशादेरुत्पत्तिरुच्यते।

यद्यपि महत्सम्भूतमिति महत्सृष्टिः प्रथमं वक्तुं शक्या, तथापि सद्विद्यायां तत्तजोऽसृत इति तेजः प्राथम्यसृष्टिरेव उक्ता, तथाऽत्रापि प्रथमतः आकाशसृष्टिः। तत्रापि किं गमकमिति चेच्छृणु। तत्र पूर्वमनेकवस्तुसृष्टेः स्थितत्वेपि तेजोजलपृथिवीरूपतत्त्वत्रयेषु कश्चनोपयोगविशेषोऽस्तीति सूचनाय तेजस्सृष्टेरादावुक्तिः। सद्विद्यायां त्रिवृत्करणप्रदर्शनमग्न्यादौ क्रियते। अतः प्रत्यक्षाणां रूपवतां तेजआदीनां प्रथमतो ग्रहणम्। एवमत्रापि शारीर आत्मा इति शारीरात्मत्वस्योपरिवक्ष्यमाणतया शरीरस्य पञ्चभूतात्मकत्वात्तद्धेभूतपञ्चभूतोपक्रमः कर्तव्य इत्याशयेन पञ्चभूतप्राथमिक आकाशोत्पत्तिः प्रथमत उक्ता।

यद्यपि शरीरं चतुर्विंशतितत्त्वमयमथापि आकाशादिपंचभूतानामेव प्रत्यक्षविषयत्वात्तदादाय तन्निरूपणम्। अत्राकाशादिशब्दास्तत्तच्छरीरकपरमात्मपराः। तत्तच्छरीरकपरमात्मनस्तस्य तस्योत्पत्तिरभिप्रेता। 'पुरुष इति शरीरमुच्यते। 'स वा' इत्यादिना शरीरस्य जाठराग्निपच्यमानान्नरसांशनिर्वर्त्यमांसमयत्वादन्नरसमयत्वम्। अन्नमशितं त्रेधा विधीयते। तस्य यस्स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मांसमिति श्रुतेः। तस्येदमित्यादिना अन्नरसमयस्य शरीररूपस्य पुरुषस्य पुरुषविधत्वं रूपितम्। उपरि अन्ने ब्रह्मदृष्टिम्, उभयोस्साम्यम्, एवं कुर्वाणस्य फलञ्च प्रतिपाद्यते। अन्नमय-प्राणमय-मनोमय-विज्ञानमय-आनन्दमयरूपपञ्चकोशाः प्रतिपाद्यन्ते। आकाशमारभ्य अन्नमयशब्दितस्थूलशरीरपर्यन्तस्य ब्रह्मैव कारणमुपादानञ्चेति प्रतिपादितत्वात्कारणभूतः स आत्मा क इत्यपेक्षायाम् आनन्दमय एव स आत्मा इत्युपरि प्रदर्श्यते।

पूर्वं स्थूलारुन्धतीन्यायमनुसृत्य प्रथमं प्राणमये आत्मत्वबुद्धिं ततः क्रमेण मनोमयादिषु आत्मत्वबुद्धिश्चावतार्य अन्तत आनन्दमये आत्मत्वबुद्धिं दृढयति। विवाहकाले अरुन्धतीप्रादर्शनमिति किञ्चिदस्ति। सूक्ष्मायास्तस्याः प्रथमं प्रदर्शनासंभवात्तत्समीवर्ति स्थूलतारकां प्रदर्श्य इयमेवारुन्धती इति प्रदर्शनं क्रियते। तस्यां स्थूलतारकायाम् अरुन्धतीत्वबुद्धिः श्रोतुः दृढा भवति। पश्चात्तत्समीपवर्तितारकाप्रदर्शनं क्रियते। तदनन्तरं वस्तुतोऽरुन्धतीं सूक्ष्माम् इयमेवारुन्धतीति प्रदर्शनं क्रियते। अयमेव स्थूलारुन्धतीन्यायः।

एवमेवात्रापि अन्तरात्मनः प्रदर्शनं मनोमयादिषु। एतेषु प्रथमं आत्मत्वबुद्धिः पश्चादानन्दमये वस्तुत आत्मनि आत्मत्वबुद्धिः समाप्यते। अत्रैकैकस्यापि पुरुषविधत्वरूपणं क्रियते। आनन्दमयातिरिक्तेषु ब्रह्मदृष्टिः तत्फलञ्चोक्तम्। तत्र तत्र फलोक्त्यनन्तरं - तस्यैष एव शारीर आत्मा यः पूर्वस्य इति वाक्यं प्राणमये मनोमये विज्ञानमये आनन्दमये च दृश्यते। अन्नरसमये तु नास्ति। ततः पूर्वं कस्यचिदभावात्। यः पूर्वस्य इत्यसंगतत्वापत्तेः। मनोमयविषयश्लोके 'यतो वाचो ... आनन्दं ब्रह्मणो ... कदाचन' इत्यादिना ब्रह्मानन्दस्य फलत्वकीर्तनं ब्रह्मानन्दस्य शुद्धमनोगोचरत्वप्रतिपदकत्वाभिप्रायकमिति विशेषः।

प्राणमये तस्यैष एव इत्यादेरयमर्थः - पूर्वस्य = अन्नमयस्य यः आत्मा एष एव तस्य प्राणमयस्याप्यात्मा इति। अनेनान्नमयप्राणमययोरेकात्मकत्वं प्रदर्शितम्। मनोमये - पूर्वस्य = प्राणमयस्य य आत्मा स एव मनोमयस्याप्यात्मा इति। अनेन अन्नमयप्राणमयमनोममयानामेकात्मकत्वं प्रादर्शि। विज्ञानमये - पूर्वस्य = मनोमयस्य य आत्मा स एव विज्ञानमयस्याप्यात्मा इति।

एतेन अन्नमयप्राणमयमनोमयविज्ञानमयानामेकात्मकत्वम् उक्तं भवति। आनन्दमये तु - पूर्वस्य = विज्ञानमयान्तपदार्थस्य य आत्मा = आनन्दमयः एष एव (स एव) तस्य = आनन्दमयस्यात्मा इत्यर्थः। अनेन आनन्दमयस्य आत्मान्तरं नास्ति, तस्य स एवात्मा इत्यनन्यात्मत्वं प्रदर्शितं भवति। पूर्वपर्यायेषु एतादृशरीत्या अनन्यात्मकत्वं कुतो न प्रदर्शितमिति चेदुपर्युपरि तस्माद्वा एतस्मादाऽन्योऽन्तर इति निर्देशसत्वादनन्यात्मकत्वं बाधितं भवतीत्यभिप्रायात्। एतदुपरि 'तस्माद्वा एतस्मादन्योऽन्तर आत्मा' इति निर्देशाभावाच्च।

अत्र प्रकरणे अन्नमयनिरूपितात्मत्वं प्राणमयस्य, प्राणमयनिरूपितात्मत्वं मनोमयस्य, मनोमयनिरूपितात्मत्वं विज्ञानमयस्येति प्रतिपादनमिति मन्तव्यम्। यस्यान्नमयनिरूपितात्मत्वं तस्य प्राणमयनिरूपितात्मत्वं, प्राणमयनिरूपितात्मत्वं यस्य तस्य मनोमयनिरूपितात्मत्वं मनोमयनिरूपितात्मत्वं, यस्य तस्य विज्ञानमयनिरूपितात्मत्वं, विज्ञानमयनिरूपितात्मत्वं यस्य, तस्यैवानन्दमयत्वं न तु आनन्दमयनिरूपितत्वम्। अतो विज्ञानमयस्य च आत्मा आनन्दमयः, स एवानन्दमयस्याप्यात्मेत्युक्तं भवति।

आनन्दमयस्यापि आत्मा = स्वरूपमिति वा पर्यवसितम्। 'पतिं विश्वस्यात्मेश्वरं', 'स्वे महिम्नि प्रतिष्ठितः' 'न तस्येशे कश्चन' 'नान्योतोऽस्ति द्रष्टा' इत्यादि निर्देशवत्तस्यैष एव शारीर आत्मा इति निर्देशः। शंकरभाष्ये त्वस्यान्यथाऽर्थो वर्णितः पूर्वस्य तस्येति समानाधिकरणं पदम्। तथा च पूर्वस्य तस्य विज्ञानमयस्य यः शारीरः आत्मा आनन्दमयः एष एवानन्दमयवाक्यप्रतिपन्न आत्मा इत्यर्थो वर्णितः। अत्र आनन्दमयनिरूपितात्मान्तर-प्रस्ताव एव नास्ति। अस्यैवानन्दमयस्य परमात्मनः शारीरत्वमपि न विरुद्धम्। सर्वशरीरत्वात्तस्य। 'यस्य पृथिवी शरीरमि'त्यादिश्रुतिभ्यः स्पष्टतरं परमात्मानं प्रति एतेषां शरीरत्वबोधनात्॥

**आह - नायमानन्दमयो जीवादन्यः; विकारशब्दस्य मयट्प्रत्ययस्य श्रवणात् ।** (अष्टा.4-3-143) **'मयड्वैतयोः' इति प्रकृत्य,** (अष्टा ४-३-१४४) **'नित्यं वृद्धशरादिभ्यः' इति विकारार्थे मयट् स्मर्यते । वृद्धश्चायमानन्दशब्दः । ननु - प्राचुर्येऽपि मयडस्ति,** (अष्टा.५-४-२१) **'तत्प्रकृतवचने मयट्' इति स्मृतेः; यथा 'अन्नमयो यज्ञः' इति । स एवायं भविष्यति । नैवम् - अन्नमय इत्युपक्रमे विकारार्थत्वं दृष्टम् । अत औचित्यादस्यापि विकारार्थत्वमेव युक्तम् । किञ्च - प्राचुर्यार्थत्वेऽपि जीवादन्यत्वं न सिध्यति । तथा हि - आनन्दप्रचुर इत्युक्ते दुःखमिश्रत्वमवर्जनीयम् । आनन्दस्य हि प्राचुर्यं दुःखस्याल्पत्वमवगमयति । दुःखमिश्रत्वमेव हि जीवत्वम् । अत औचित्यप्राप्तविकारार्थत्वमेव युक्तम् । किञ्च - लोके मृण्मयं हिरण्मयं दारुमयमित्यादिषु, वेदे च** (यजु.३-५-७) **'पर्णमयी जुहूः'** (यजु.३-८, २) **'शमीमय्यस्स्रुवः',** (यजु.३-८, २) **'दर्भमयी रशना' इत्यादिषु मयटो विकारार्थे प्रयोगबाहुल्यात् स एव प्रथमतरं धियमधिरोहति । जीवस्य चानन्दविकारत्वमस्त्येव । तस्य स्वत आनन्दरूपस्य सतस्संसारित्वावस्था तद्विकार एवेति । अतो विकारवाचिनो मयट्प्रत्ययस्य श्रवणादानन्दमयो जीवादनतिरिक्त इति । तदेतदनुभाष्य परिहरति -**

---

उत्तरसूत्रमवतारयति - **आहेति** । आनन्दमय इत्यत्र मयटः स्वार्थिकत्वे वैयर्थ्यम् । अतो विकारप्राचुर्याद्यन्यतमार्थकत्वं स्वीकार्यम् । विकारार्थत्वे बहवो हेतवः सन्ति । वृद्धिरादैच् इति सूत्रेण आकारस्य वृद्धिसञ्ज्ञत्वमुक्तम् । आनन्दमयशब्दश्च वृद्धिभूताक्षरघटितः । अतो वृद्धः । 'वृद्धिर्यस्याचामादिः तद्वृद्धमि'ति सूत्रात् । 'नित्यं वृद्धशरादिभ्यः' इति सूत्रेण विकारार्थे वृद्धशब्दश्च विधीयते । अतोऽत्रत्य मयटो विकारार्थत्वमेव स्वीकार्यं । ननु 'मयड्वैतयोः भाषायामभक्ष्याच्छादनयोः' इति सूत्रे भाषायामिति श्रवणाद्भाषायामेव विकारार्थेऽवयवार्थे च विकल्पेन मयड्विधानात्तदपवादत्वेन प्रवृत्ते 'नित्यं वृद्धशारादिभ्यः' इति सूत्रे नित्यत्वे मयड्विधानमपि भाषायामेवेति सिद्धत्वाद्वेदे आनन्दमय इत्यत्र कथं विकारार्थे अनेन सूत्रेण मयड्विधानसंभव इति चेत्सत्यम् । 'मयड्वैतयोः' इत्यस्य विकारावयवयोरित्यर्थः । 'प्राग्दीव्यतोऽण्' 'तस्य विकारः', 'अवयवे च', 'प्राण्योषधिवृक्षेभ्यः' इति प्रकृतत्वात् । 'प्राग्दीव्यतोऽण्' इत्यधिकारसूत्रेण अस्मिन्नर्थद्वयेपि वृद्धसंज्ञानां शरादिगणान्तर्गतानां अणप्रत्यये प्राप्ते ''नित्यं वृद्धशरादिभ्यः' इत्यपवादसूत्रं प्रवृत्तम् ।

अनेन विकारार्थेऽवयवार्थे च वृद्धसञ्ज्ञानां शरादिगणान्तर्गतानां च मयडेव भवति नाणप्रत्यय इति फलितम् । वृद्धशरादिभ्यः इत्यपवादसूत्रारंभादेव मयडः नित्यत्वसिद्धौ नित्यमिति पदं सूत्रे व्यर्थम् । अतोऽन्यत्रापि मयडनित्यतया भवतीति ज्ञापितम् । अतो भाषाव्यतिरिक्तवेदस्थलेपि विकारार्थे मयटः प्रसक्तिरस्तीति विकारार्थत्वं वक्तुं शक्यम् । प्राचुर्यार्थेपि मयटः विधानसत्त्वेपि अन्नमय इत्युपक्रमे विकारार्थत्वदर्शनात् प्रायःपाठमनुसृत्य विकारार्थत्वमेव स्वीकार्यम् । प्रायः पाठस्योपक्षानर्हत्वात् । उपेक्षां कृत्वापि प्राचुर्यार्थत्वस्वीकरणमपि बाधितम् । ब्राह्मणप्रचुरो ग्राम इत्यक्ते ग्रामे अब्राह्मणानामप्यल्पानां यथा सत्त्वं प्रतीयते तथा आनन्दप्रचुरं ब्रह्म इत्युक्ते ब्रह्मणि अल्पदुःखसद्भावप्रतीतिस्सिध्येत् । तच्च ब्रह्मणि विरुद्धम् । लोके वेदे च मयट्प्रत्ययश्रवणकाले विकारार्थस्य प्रथममुपस्थितेश्च । अतो विकारार्थत्वमेव । नित्यस्य जीवस्य कथमानन्दविकारत्वमिति न शङ्क्यम् । आनन्दरूपस्य सतः संसारित्वावस्थाया विकाररूपत्वसंभवात् । स्वतः आनन्दरूपत्वेपि दुःखित्वाद्यवस्थायोगरूपजीवत्वसम्भवाद्विकारार्थकमयट्प्रत्ययोपपत्तेः । आनन्दात्मकस्वरूपे नित्यत्व-वादः, आनन्दविकारावस्थामादाय जीवत्ववाद इति ॥

अत्रायं पूर्वपक्षसारः - 'ब्रह्मविदाप्नोति' इति ब्रह्म प्रक्रान्तं, 'सत्यं ज्ञानम्' इति लक्षणमुक्तम् । 'तस्माद्वा एतस्मादात्मन' इति ब्रह्मात्मनोरैक्यप्रदर्शनपूर्वकमाकाशाद्युत्पत्तिरभिहिता । स्थूलारुन्धतीन्यायेन प्रक्रान्तब्रह्मात्मप्रदर्शनार्थं पञ्चकोशाः

## विकारशब्दान्नेति चेन्न प्राचुर्यात् १ । १ । १४ ॥

**नैतद्युक्तम् । कुतः ? प्राचुर्यात् - परस्मिन् ब्रह्मण्यानन्दप्राचुर्यात् । प्राचुर्यार्थे च मयटस्सम्भवात् । एतदुक्तं भवति - शतगुणितोत्तरक्रमेणाभ्यस्यमानस्यानन्दस्य जीवाश्रयत्वासम्भवाद्ब्रह्माश्रयोऽयमानन्द इति निश्चिते सति, तस्मिन्ब्रह्मणि विकारासम्भवात्प्राचुर्येऽपि मयड्विधिसम्भवाच्चानन्दमयः परं ब्रह्म - इति ।**

**औदित्यात्प्रयोगप्रौढ्या च मयटो विकारार्थत्वमर्थविरोधान्न सम्भवति । किञ्चौदित्यं प्राणमय एव परित्यक्तम् ; तत्र विकारार्थत्वासम्भवात् । अतस्तत्र पञ्चवृत्तेर्वायोः प्राणवृत्तिमत्तामात्रेण प्राणमयत्वम् ; प्राणापानादिषु पञ्चसु वृत्तिषु प्राणवृत्तेः प्राचुर्याद्वा । न च प्राचुर्ये मयट्प्रत्ययस्य प्रौढिर्नास्ति; 'अन्नमयो यज्ञः', 'शकटमयी यात्रा' इत्यादिषु दर्शनात् ॥**

**यदुक्तम् - आनन्दप्राचुर्यमल्पदुःखसद्भावमवगमयतीति - तदसत् । तत्प्रचुरत्वं हि तत्प्रभूतत्वम् ।**

---

प्रदर्शिताः । पञ्चमस्यानन्दमयस्य प्रतिष्ठात्वेन (ब्रह्म पुच्छं प्रतिष्ठा) पुच्छब्रह्म प्रतिपादितम् । 'असन्नेव स भवति' इति ब्रह्मविषयकतया श्लोकः पठितः । अत्राद्वैती आनन्दमयातिरिक्तं पुच्छब्रह्मैव तैतिरीयप्रतिपाद्यं, ब्रह्मविदाप्नोति इति प्रकान्तस्य 'ब्रह्म पुच्छं प्रतिष्ठा' इत्युक्तत्वात् असन्नेवेति ब्रह्मविषयकश्लोकपठनाच्च । अत आनन्दमयातिरिक्तं ब्रह्म इत्यभिप्रैति । साङ्ख्यस्तु - ब्रह्मविदाप्नोति इति प्रकान्तस्य ब्रह्मणः 'आत्मनः आकाशः' इत्यात्मत्वोक्ते 'अन्योऽन्तर आत्मानन्दमयः' इत्युपसंहारादत्रैव ब्रह्मात्मनोरैक्यमित्यानन्दमय एवात्मा । अतो ब्रह्म-आत्म-आनन्दमयशब्दा एक विषयकाः । अन्नमयादिषु अवयविविषय एव श्लोकदर्शनात् 'असन्नेव' इत्ययं श्लोकोपि आनन्दमयावयविविषयक एव वाच्यः । न त्ववयवरूपपुच्छब्रह्मविषयकः । एवमानन्दमयस्य जगत्कारणत्वादेव 'सोऽकामयत' इति 'रसो वै सः' इति च वक्ष्यामणं वाक्यमुपपन्नं भवति इत्यभिप्रैति । परन्तु ब्रह्म-आत्म-आनन्दमयपदवाच्यो जीव इति चैतन्मतम् । अस्माकन्तु एकविषयत्वेपि परमात्मैव वाच्य इति । साङ्ख्यमते जीववाचकत्वकथनार्थं मयटो विकारार्थत्वस्वीकारः । अतो विकारार्थकत्वं शारीरत्वं, प्रश्नान्तरे आनन्दमयस्य शोध्यत्वोपसंक्रान्तिकर्मत्वोक्तिश्च जीवत्वसाधकहेतवः । अत्त्रधिकरण-पूर्वपक्षी जीवजगत्कारणत्ववादी । जीवाज्ञानवाद्यद्वैतिमताभिप्रायेण साख्यमताभिप्रायेणादृष्टोत्पादककर्मानुष्ठानमुखेन सर्वकारणत्वं जीवेष्वेति तार्किकमतेन सर्वश्रुतिस्वारस्यमवलम्ब्य विलक्षणजगत्कारणत्ववादिमतेन वा पूर्वपक्षी प्रवर्तते ॥

समाधत्ते - **नैतद्युक्तमिति** । अत्र मयटो विकारार्थत्वं न सम्भवति । अभ्यस्यमानपूर्वोक्तानन्दवत्वस्य जीवेऽसम्भवात् । प्राचुर्यार्थकत्वे च मयटः सम्भवाच्च । प्रायः पाठोपि नास्ति । प्राणमये विकारार्थत्वादर्शनात् । न हि प्राणविकारत्वं सम्भवति । प्राणप्रचुरत्वं चास्ति । प्राणशब्दोऽननरूपवृत्तिमात्रपरः । मयट्प्रत्ययः प्राचुर्येण तत्सम्बन्धं वदति । प्राणनवृत्तिमानित्यर्थः । विकारार्थत्वस्वीकारे कृत्स्नमुख्यार्थत्यागः स्यात् । अस्मिन्पक्षे प्राचुर्यसम्बन्धार्थत्वम् । प्राणनवृत्तिमत्वे एकदेशार्थस्वीकारः । अतो विकारार्थपक्षापेक्षयाऽयं पक्षो वरः । त्वत्पक्षे विकारार्थत्वासम्भवादानर्थक्यमेषितव्यम् । तदपेक्षया अमुख्यार्थत्वस्वीकार उचितः । किञ्च प्राणापानादिषु पञ्चसु प्राणवृत्तेः सत्त्वेन प्राणमयत्वस्य मुख्यत्वञ्च सम्भवति । वस्तुतस्सर्वत्र मयटः प्राचुर्यार्थकत्वमेव । अन्नमय इत्यनुक्त्वा अन्नरसमय इत्युक्तत्वात् । अन्नरसः अन्नविकारः शोणितादि-मांसपर्यन्तः । तन्मयत्वञ्च तत्प्रचुरत्वम् । पुरुषशब्दितशरीरस्य अन्ननिर्वर्त्यमांसादिप्रचुरत्वमस्त्येव । प्राणमय इत्यत्रापि प्राचुर्यार्थत्वम् । मनोमय इत्यत्रापि प्राचुर्यार्थे मयट् । पञ्चवृत्तिप्राणस्य प्राणनप्रचुरत्वाद्यथा प्राणमयत्वम्, एवमेव मनोबुद्ध्यहङ्कारचित्ताख्यान्तःकरणवृत्तिषु मनोवृत्तेः प्रचुरत्वान्मनोमयत्वम् । जीवस्य विज्ञानप्रचुरत्वाद्विज्ञानमयत्वम् । परब्रह्मण आनन्दप्रचुरत्वादानन्दमयत्वम् । तस्मादत्र सर्वत्र प्राचुर्यार्थकत्वमेवेति न विकारार्थत्वरूपप्रायः पाठो वा अग्र्यप्रायः पाठो

**तच्चेतरस्य सत्तां नावगमयति; अपि तु तस्याल्पत्वं निवर्तयति। इतरसद्भावासद्भावौ तु प्रमाणान्तरावसेयौ। इह च प्रमाणान्तरेण तदभावोऽवगम्यते,** (छा.८-२-५) **'अपहतपाप्मा' इत्यादिना। तत्रैतावदेव वक्तव्यम्, ब्रह्मानन्दस्य प्रभूतत्वमन्यानन्दस्याल्पत्वमपेक्षत इति। उच्यते च तत्,** (तै.आन.८) **'स एको मानुष आनन्द' इत्यादिना, जीवानन्दापेक्षया ब्रह्मानन्दो निरतिशयदशापन्नः प्रभूत इति॥**

**यच्चोक्तम् - जीवस्यानन्दविकारत्वं सम्भवतीति - तदपि नोपपद्यते; जीवस्य ज्ञानानन्द(न्दैक)स्वरूपस्य केनचिदाकारेण, मृद इव घटाद्याकारेण, परिणामस्सकलश्रुतिस्मृतिन्यायविरुद्धः। संसारदशायां तु कर्मणा ज्ञानानन्दौ सङ्कुचितावित्युपपादयिष्यते। अतश्चानन्दमयो जीवादन्यः परं ब्रह्म॥ १४॥**

---

वाऽस्ति। प्राचुर्यरूप मयडर्थप्रतिपादनम् अन्नरस्थवाक्यबृन्दे समानमिति विकारार्थस्य नैव प्रसक्तिः। असम्भवि चात्र विकारार्थत्वं शासनाभावात्। 'मयड्वैतयो र्भाषायाम्' इति पूर्वसूत्रात् 'नित्यं वृद्धशरादिभ्यः' इत्यत्र भाषायामित्यस्यानुवृत्तेः विकारावयवयो र्मयड्प्रत्ययस्य भाषाविषयत्वमेवेति छन्दसि विकारार्थे मयडोऽसम्भवात्।

न च 'यस्य पर्णमयी जुहूः' इत्यत्र कथं छन्दसि मयट्सम्भव इति वाच्यम्। 'द्व्यचश्छन्दसी'ति विधानबलात् मयड्प्रवृत्तेः। आनन्दशब्दस्य द्व्यच्त्वाभावात्, अनेन न मयट्प्रत्ययसम्भवः विकारार्थे। 'तत्प्रकृत वचने मयड्' इति सूत्रेणैव प्राचुर्यार्थे एव मयड्प्रत्ययः। अन्नरसमय इत्यत्रापि द्व्यच्त्वाभावान्न विकारार्थे मयट्सम्भव इति तत्रापि प्राचुर्यार्थकत्वमेव स्वीकार्यम्। अन्नरसमय इत्यत्रैवं निर्वाहे अन्नमय इति कथं निर्देश इति चेत्तत्राप्यन्नशब्दः अन्नरसमय इति श्रुत्यनुसारेण अन्नरसलाक्षणिकम्। तस्मादानन्दस्य प्राचुर्य मयट् बोधयति। अस्य प्रकृत्यर्थेऽन्वयात्प्रचुरानन्दः आनन्दमयशब्दार्थः। आनन्दप्रचुरत्वोक्तौ दुःखाल्पत्वप्रतीत्या दुःखलेशशून्ये परमात्मनि लेशतो दुःखस्यापि सत्वप्रसंग इति शङ्कनमपि न सम्भवति। प्रचुरप्रकाशस्सविता इत्युक्तौ सवितुः प्रकाशप्राचुर्यप्रतीतेः तद्विरोधितमोल्पत्वस्याप्रतीतेः। न हि सूर्ये तमोल्पत्वस्य सम्भवोऽस्ति। एकस्य गुणस्य प्राचुर्यं स्वाश्रये तद्विरोधिगुणाल्पत्वं नापेक्षते 'स्वाश्रयभिन्ने स्व-सजातीयगुणाल्पसापेक्षं सत् स्वाश्रये तत्सत्त्वं ज्ञापयति'। अत्र च स्वाश्रये परमात्मभिन्ने जीवे आनन्दस्याल्पत्वं तु विद्यत एव। 'एको मानुष आनुन्दः' इत्यादिना परमात्मेतरवृत्त्यानन्दस्यालपत्वबोधनात्॥

ननु ब्राह्मणप्रचुरो ग्राम इत्यत्रेवात्राप्यानन्दप्रचुरः परमात्मा इत्युक्तौ अल्पदुःखवत्वबोधनमपि परमात्मनि संगतमेव, व्यसनेषु मनुष्याणां भृशं भवति दुःखित इत्युक्तत्वादिति चेन्नैवम्। अपहतपात्मनः परपापनिवर्तकस्य हेयप्रत्यनीकस्य सर्वशासितु र्दुःखासम्भवात्। तत्राभिनयमात्रत्वात्। तदुक्तं 'परदुरितभिदः शासितुस्तद्विरोधात्' इत्यधिकरणसारावल्याम्। विकारार्थ इव प्राचुर्यार्थेपि मयटः प्रसिद्धिरस्ति, 'अन्नमयो यज्ञः शकटमयी यात्रा' इत्यादौ। अपि च विकारार्थकत्वमभ्युपगम्य जीववाचकत्वकथनमप्यनुपपन्नं स्वतो नित्यस्य निर्विकारस्य जीवस्यानन्दविकारत्वासम्भवात्। पर्णमयी जुहूः इत्यादि वेदे वा मृण्मयं हिरण्मयं इत्यादि लोके वा स्वरूपान्यथाभावलक्षणविकारार्थत्वस्यैव मयटो व्युत्पत्तिसिद्धत्वात्। अत्र च तदभावात्। तदीय ज्ञानानन्दयोरेव संसारदशायां कर्मणा संकोचविकासवत्वं, न तु तत्स्वरूपस्य। विकारार्थत्वे आनन्द-विकार इत्यर्थः स्यात्, आनन्दवैचित्र्ये सुखदुःखादिबाहुल्ये सत्यपि स्वरूपस्य विकारवत्वं नास्ति। आत्मनः स्वरूपतोः सविकारत्वं न केनापि मतस्थेन स्वीक्रियते। अतो विकारार्थत्व इष्यमाणेपि बाधात्स्वरसप्राप्तप्राचुर्यार्थकत्वमेव ततो वरं स्वीकार्यम्। अतः शारीरत्वस्यन्यनिष्ठात्मतानिरूपकत्वं च जीवात्मत्वे हेतुतयोक्तं परास्तम्। तस्यैष एव शारीर आत्मा इत्युक्तिमवलम्ब्य अन्यस्यात्मनो ग्रहणे तत्रापि शारीर इति श्रवणात्तस्यापि परमात्मत्वं न सिध्येत्।

**इतश्च जीवादन्य आनन्दमयः परं ब्रह्म -**

**तद्धेतुव्यपदेशाच्च । १ । १ । १५ ।**

(तै.आन.7) **'को ह्येवान्यात्कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात्। एष ह्येवानन्दयाति' इति एष एव जीवानानन्दयतीति जीवानामानन्दहेतुरयं व्यपदिश्यते। अतश्चानन्दयितव्याज्जीवादानन्दयिताऽयमन्य आनन्दमयः परमात्मेति विज्ञायते। आनन्दमय एवात्रानन्दशब्देनोच्यत इति चानन्तरमेव वक्ष्यते ॥ १५ ॥**

**इतश्च जीवादन्य आनन्दमयः -**

**मान्त्रवर्णिकमेव च गीयते । १ । १ । १६ ॥**

**'सत्यं ज्ञानमनन्तं ब्रह्म' इति मन्त्रवर्णोदितं ब्रह्मैवानन्दमय इति गीयते। तत्तु जीवस्वरूपादन्यत्परं ब्रह्म। तथा हि - 'ब्रह्मविदाप्नोति परम्' इति जीवस्य प्राप्यतया ब्रह्म निर्दिष्टम्। 'तदेषाऽभ्युक्ता' इति तद्ब्रह्माभि-**

---

शोध्यत्वमपि न हेतुः शोधनस्य बहुविधत्वात्सर्वत्र शोधनं नैकरूपम्। हस्तस्य घृतस्य शोधनप्रकारोऽन्यः तत्रस्थ-गुडस्य त्वन्यथा। पात्राणामपि परस्परं विलक्षणः शोधनप्रकारः। देहस्य चित्तस्य आत्मनश्च विविधः प्रकारः। तथैव परमात्मनः शोधनप्रकारो विलक्षणः। तच्च प्रसाद्यत्वरूपम्। भक्त्या वा प्रपत्त्या वा अस्मदनुष्ठितपापजन्यनिग्रहस्य तेन निवर्तनात्। 'प्रसक्त्यै तस्याक्ते' इति न्यायेन प्रसादनवैशिष्ट्यमेव तत्। अतो निवर्त्यपापत्वं शोध्यत्वमिति मनसि कृत्वा परस्य पापाभावेन कथमिदमुपपद्यतामिति न शङ्क्यम्। उपसंक्रान्तिकर्मत्वमपि न विरुद्धम्। उपसंक्रान्तिः अप्राप्तस्य = पूर्वमसम्युक्तस्य प्राप्तिः = क्रियासाध्यः सम्योगः इत्यर्थविवक्षां निधाय कथमपरिच्छिन्ने ब्रह्मणि उपपत्तिरिति शङ्कनं न युक्तम्। जीवस्यापि स्वेन प्राप्यत्वं कथमिति प्रश्नसम्भवात्। अतः प्राप्तिः = अनुभवः। अनुभाव्यतयोक्तेऽस्मिन्परमात्मन्यु-पासकस्य तदनुभवप्राप्तिरेवोपसंक्रान्तिः। एतमानन्दमयमात्मानमुपसंक्रामति। इत्यनेनेयमेवोपसंक्रान्तिः कथिता इति। तदुक्तं — 'शोध्यत्वं तत्तदर्थानुगुणमिति ... उत्क्रान्तिरानन्दसिन्धौ' इत्यादिना।

**को ह्येवान्यात् इति** - अत्र सामान्यसुखानुभवः। प्राण्यात् इति मोक्षसुखानुभवः। तद्धेतुव्यपदेशः जीवानामानन्द-हेतुत्वेनाऽऽनन्दमयस्य व्यपदेशः। यद्वा जीवगतानन्दहेतुत्वविशिष्टस्य परस्य व्यपदेश इत्यर्थः। आकाशः = अपरिच्छिन्नः। आनन्दः = आनन्दमयः परमात्मा। अनेनान्दमयब्रह्मणोऽपरिच्छिन्नत्वमुक्तम्। यद्वा आनन्दस्य तदीयस्यापरिच्छिन्नत्वा-र्थकमाकाशपदम्। 'आनन्दयाति' - छान्दसप्रयोगः। आनन्दयतीत्यर्थः-। अन्नाद इत्यत्र नैवं छान्दसप्रयोगः। अन्नमासमन्तात् ददातीत्यर्थस्यापि सम्भवात्। आनन्दक्रियाकर्मण आनन्दकर्तुश्च कथमैक्यमिति भावः। आनन्दशब्दवाच्यस्यैवानन्दयि-तृत्वोक्तेः कथमानन्दमयस्य तथात्वोक्तिरित्यत्राह - **आनन्दमय एवेति**। आनन्दमयस्य जीवत्वाभावे आनन्दाभ्यासो हेतुः प्रथमसूत्रोक्तः। अग्रप्रायःशंकापरिहारेण मयटः प्राचुर्यार्थत्वं द्वितीये हेतुरुक्तः। अत्रानन्दयितृत्वव्यपदेशः। अत्र हेतुत्वमात्रम्। अस्मिन्नस्य चेत्यादि सूत्रं मुक्तान्प्रत्यानन्दमयस्य प्राप्यत्वपरम्।

**सत्यं ज्ञानमिति**। ब्रह्मविदाप्नोति परमित्यत्र तत्त्वहितपुरुषार्थाः प्रदर्शिताः। तत्र तत्त्वं सत्यत्वज्ञानत्वानन्तत्व-विशिष्टं ब्रह्मेत्युक्तम्। तदेवाकाशादिकारणत्वेन प्रतिपादितम्। 'आत्मा आनन्दमयः' इत्युपसंहृतश्च। एवं ब्रह्मात्मा-नन्दमयशब्दा एकविषकाः। जीवे च सत्यत्वादिकं विरुद्धम्। अत आनन्दमयशब्दो न जीववाचीति सूत्रार्थः। यद्वा 'ब्रह्मविदाप्नोति' इत्यत्र ब्रह्मविद उपासकस्य प्राप्यन्वेन ब्रह्म निर्दिष्टम्। अत उपासकत्वोपास्यत्वसिध्या उभयोः कथमैक्यम्।

**मुखीकृत्य प्रतिपाद्यतया परिगृह्य, ऋगेषा अध्येतृभिरुक्ता। ब्राह्मणोक्तस्यार्थस्य वैशद्यमनेन मन्त्रेण क्रियत इत्यर्थः। जीवस्योपासकस्य प्राप्यं ब्रह्म तस्माद्विलक्षणमेव। अनन्तरञ्च, 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूत' इत्यारभ्योत्तरोत्तरैर्ब्राह्मणैर्मन्त्रैश्च तदेव विशदीक्रियते। अतो जीवादन्य आनन्दमयः॥ १६॥**

**अत्राह - यद्यप्युपासकात्प्राप्यस्य भेदेन भवितव्यम्, तथापि न वस्त्वन्तरं जीवात् मान्त्रवर्णिकं ब्रह्म; किन्तु तस्यैवोपासकस्य निरस्तसमस्ताविद्यागन्धनिर्विशेषचिन्मात्रैकरसंशुद्धं स्वरूपम्। तदेव 'सत्यं ज्ञानमनन्तं ब्रह्म' इति मन्त्रेण विशोध्यते। तदेव च 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति वाङ्मनसागोचरतया निर्विशेषमिति गम्यते। अतस्तदेव मान्त्रवर्णिकमिति तस्मादनतिरिक्त आनन्दमय इति। अत उत्तरं पठति -**

## नेतरोऽनुपपत्तेः ॥१।१।१७॥

**परमात्मन इतरो जीवशब्दाभिलप्यो मुक्तावस्थोऽपि न भवति मान्त्रवर्णिकः। कुतः। अनुपपत्तेः। तथाविधस्यात्मनो निरुपाधिकं विपश्चित्त्वं नोपपद्यते। इदमेव हि निरुपधिकं विपश्चित्त्वम्, 'सोऽकामयत**

---

उपास्यमेव ब्रह्म आनन्दमयशब्देनोच्यते। अतः कथं जीवः आनन्दमयो भवितुमर्हतीति। विकारशब्दान्नेति चेदिति सूत्रं आनन्दमयोऽभ्यासादिति सूत्रशेषभूतम्। अतो नात्र चशब्दप्रयोगः। तद्धेतुव्यपदेशाच्च, मान्त्रवर्णिकमेव च गीयते इति सूत्रद्वयोक्तहेतुः स्वतन्त्रः। अतश्चशब्दोपादानम्। 'सह ब्रह्मणा विपश्चिता' इत्यत्र भोक्तृसाहित्यविवक्षायां साहित्यस्य भेदगर्भत्वेन जीवब्रह्मणोः भेदस्सम्यगेव सिध्येत्। तथापि भोग्यसाहित्यविवक्षायां तत्सिद्धिरिति न तच्छ्रुत्युपादानम्।

**अत्राहेति** - उपास्योपासकयो र्भेदोऽस्त्येव। अथाप्यवस्थाभेदेन सः। वस्तुतस्त्वभेद एव। अतो मान्त्रवर्णिकं ब्रह्मैव शुद्धस्वरूपं सत्यं ज्ञानमित्यनेनोक्तम्। तदेवानन्दमयः। निर्विशेषचित्मात्रैकरसमित्याशयः पूर्वपक्षिणः। **समस्ताविद्येति**। कारणाविद्या = आच्छादिकाविद्या, कार्याविद्या = विक्षेपिकाविद्या च विवक्षिता। उक्ताविद्यागन्धस्य निरस्तत्वोक्त्या अपुनस्सम्बन्धः फलितः। यद्वा गन्धशब्दोऽविद्याया अपरमार्थत्वं ब्रुवन् निश्शेषनिवृत्तिं द्योतयति। परमार्थत्वे वस्तुनाशेपि गन्धः ईषच्छिष्टः कदाचित्स्यात्। अवशेषं विना सर्वनाशोऽनेन द्योतितः।

मुक्तावस्थस्यापि जीवस्य ब्रह्मशब्दवाच्यत्वं न भवतीत्याह - **परमात्मन इतर** इत्यादिना। भवदभिमतं मुक्तस्वरूपं ब्रह्म स्वयं प्रकाशशुद्धब्रह्ममात्रस्वरूपम्। कथं तस्मिन् विपश्चित्वम्? 'विपश्चिता' इत्यनेनोक्तस्यैव विपश्चित्त्वस्य 'सोऽकामयत' इत्यादिनोपरि विवरणम्। सत्यं ज्ञानमनन्तं ब्रह्म इत्युक्तमेव हि ब्रह्म सह ब्रह्मणा विपश्चिता इत्यनेनोक्तम्। विपश्चित्त्वविशिष्टत्वं सत्यं ज्ञानमित्युक्तस्य ब्रह्मणो वक्तव्यम्। भवदभिमतं च निर्विशेषं ब्रह्म न तथाभूतम्। अनेन सत्यं ज्ञानमित्यादेरनृतजडपरिच्छन्नव्यावृत्त्यर्थकत्वमित्यपि निरस्तम्। विपश्चित्त्वस्य प्रकृष्टगुणस्य तस्मिन् बोधनेन व्यावृत्तिपरताया अनुपपन्नत्वात्। एतेन ज्ञानमिति पदमपि ज्ञानगुणकमिति यथावदर्थबोधने विरुद्धश्च। ज्ञानपदस्यान्तोदात्तत्वेन अर्शआद्यजन्तत्वेन च ज्ञानगुणकत्वार्थकत्वे स्वरसश्च। प्रज्ञानघन एवानन्दमय इति श्रुत्यन्तरेण ब्रह्मणो ज्ञानस्वरूपत्वसिद्धिः। न च विपश्चिता इत्यस्यापि अविपश्चिद्व्यावृत्तिपरत्वमेवेतिति वाच्यं, तथा सति 'सोऽकामयत बहुस्यां प्रजायेय' इत्यादि विरोधापातात्। अत उपरि सर्वस्रष्टृत्वादिसङ्कल्पाश्रयत्वप्रतिपादनात्तद्विरोधेन सत्यादिपदानामितरव्यावृत्तिपरताऽनुपपन्ना। त्वन्मतरीत्यापि ब्रह्मणि मुक्ते विपश्चित्वमनुपपन्नम्। अस्मदभिमते मुक्ते पश्यत्वमात्रस्य वा पश्यच्चित्वमात्रस्य वाऽसम्भवात्। अस्मदभितमुक्ते सर्वस्त्रष्टत्वादिसंकल्पाश्रयत्वादिरूपविपश्चित्वं नास्ति। विपश्चिच्छब्दार्थमाह -

**बहु स्यां प्रजायेय' इति सत्यसङ्कल्पत्वप्रदर्शनेन विवरिष्यते। विविधं पश्यच्चित्त्वं हि विपश्चित्त्वम्। पृषोदरादित्वात् पश्यच्छब्दावयवस्य यच्छब्दस्य लोपं कृत्वा व्युत्पादितो विपश्चिच्छब्दः। यद्यपि मुक्तस्य विपश्चित्त्वं सम्भवति, तथापि तस्यैवात्मनः संसारदशायामविपश्चित्त्वमप्यस्तीति निरुपाधिकं विपश्चित्वं नोपपद्यते। निर्विशेष-चिन्मात्रतापन्नस्य मुक्तस्य विविधदर्शनाभावात्सुतरां विपश्चित्त्वं न सम्भवतीति न केनापि प्रमाणेन निर्विशेषं वस्तु प्रतिपाद्यत इति च पूर्वमेवोक्तम्।**

**'यतो वाचो निवर्तन्ते' इति च वाक्यं यदि वाङ्मनसयोर्ब्रह्मणो निवृत्तिमभिदधीत, न ततो निर्विशेषतां वस्तुनोऽवगमयितुं शक्नुयात्; अपि तु वाङ्मनसयोस्तत्राप्रमाणतां वदेत्। तथा च सति तस्य तुच्छत्वमेवापद्यते।** (तै.आन.१) **'ब्रह्मविदाप्नोति' इत्यारभ्य ब्रह्मणो विपश्चित्त्वं जगत्कारणत्वं ज्ञानानन्दैकतानताम्, इतरान्प्रति आनन्दयितृत्वम्, कामादेव चिदचिदात्मकस्य कृत्स्नस्य स्रष्टृत्वं सृज्यवर्गानुप्रवेशकृततदात्मकत्वं भयाभयहेतुत्वं वाय्वादित्यादीनां प्रशासितृत्वं शतगुणितोत्तरक्रमेण निरतिशयानन्दत्वम्, अन्यच्चानेकं प्रतिपाद्य, वाङ्मनसयो र्ब्रह्मणि प्रवृत्त्यभावेन निष्प्रमाणकं ब्रह्मेत्युच्यत इति भ्रान्तिजल्पितम्। 'यतो वाचो निवर्तन्ते' इति यच्छब्द-निर्दिष्टमर्थम्, 'आनन्दं ब्रह्मणो विद्वान्' इत्यानन्दशब्देन प्रतिनिर्दिश्य, तस्य ब्रह्मसम्बन्धित्वं 'ब्रह्मण' इति व्यतिरेकनिर्देशेन प्रतिपाद्य, तदेव वाङ्मनसागोचरं 'विद्वान्' इति तद्वेदनमभिदधद्वाक्यं जरद्गवादिवाक्यवद-नर्थकं वाच्यनन्तर्गतं च स्यात्। अतश्शतगुणितोत्तरक्रमेण ब्रह्मानन्दस्यातिशयेयत्तां वक्तुमुद्यम्य तस्येत्ताया अभावादेव वाङ्मनसयोस्ततो निवृत्तिः, 'यतो वाचो निवर्तन्ते' इत्युच्यते। एवमियत्तारहितं ब्रह्मण आनन्दं विद्वान् कुतश्चन न बिभेतीत्युच्यते।**

**किञ्चास्य मान्त्रवर्णिकस्य विपश्चितः 'सोऽकामयत' इत्यारभ्य वक्ष्यमाणस्वसङ्कल्पावक्लृप्तजग-ज्जन्मस्थितिजगदन्तरात्मत्वादेर्मुक्तात्मस्वरूपादन्यत्वं सुस्पष्टमेव॥ १७॥**

**इतश्चोभयावस्थात्प्रत्यगात्मनोऽन्य आनन्दमयः -**

---

**विविधम्** इति। 'पृषोदरादीनि यथोपदिष्टम्' इति पाणिनिसूत्रबलात्पृषच्छब्दावयवगततकारलोपवदत्र यच्छब्दलोपः।

पूर्वसूत्रोपरि शंकापरिहारार्थमिदं सूत्रम्। अतश्चशब्दाप्रयोगः। सूत्रेऽनुपपत्तेः इत्येतावन्मात्रमुक्तम्। कस्यानुपपत्ति -रित्यत्र भाष्ये विशेषितं विपश्चित्त्वस्यानुपपत्तिरिति। यद्यपि 'नेतरोऽविपश्चित्त्वात्' इति स्वरसतयैव सूत्रयितुं शक्यं, अथापि विपश्चित्त्वस्यान्यथाऽर्थवर्णनमनुपपन्नमिति सूचनार्थमेवं सूत्रितम्। विपश्चित्वस्येव परब्रह्ममात्रगतानां बहूनाम-त्रोक्तेः तेषामप्यन्यथानयानासम्भवात्तेषामप्यनुपपत्तिः त्वन्मते इति सूचनाय च। तदेवोपरि विवृणोति - **यतो वाचो निवर्तन्त** इत्यादिना। अत्र प्रागुक्तानामत्र वक्ष्यमाणानाञ्च धर्माणामुक्तिः पूर्वमेवास्य पूर्वपक्षस्य निरस्तप्रात्वद्योतनार्था। **जरद्गवादियाक्यवत्** इति - 'जरद्गवः कम्बलपादुकाभ्यां द्वारि स्थितो गायति भद्रकाणि। तं ब्राह्मणी पृच्छति पुत्रकामा राजन् रुमायां लशुनस्य कोऽर्घः' इति। अनन्वितार्थोदाहरणमिदम्। अतस्सर्वमपि वेदवाक्यं भवन्मते अर्थरहितमेव। प्रत्यक्षरं प्रतिवाक्यञ्च श्रुतिपीडनमेव भवत्प्रतिपादनम्।

उत्तरसूत्रमवतारयति — **इतश्चेति**। **उभयावस्थात्** = बद्धावस्थान्मुक्तावस्थाच्चेत्यर्थः। 'विज्ञानं यज्ञं तनुत' इति बद्धावस्थ उक्तः। 'विज्ञानं ब्रह्म चेद्वेद' इति मुक्तावस्थ उक्तः। तस्माद्विज्ञानमयादन्योऽन्तर इत्यत्र विज्ञानमयपदं उभया-

## भेदव्यपदेशाच्च १ । १ । १८ ॥

**'तस्माद्वा एतस्मादात्मन आकाशः' इत्यारभ्य मान्त्रवर्णिकं ब्रह्म व्यञ्जयद्वाक्यमन्नप्राणमनोभ्य इव जीवादपि तस्य भेदं व्यपदिशति, 'तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमयः' इति । अतो जीवाद्भेदस्य व्यपदेशाच्चायं मान्त्रवर्णिक आनन्दमयोऽन्य एवेति ज्ञायते (विज्ञायते) ॥ १८ ॥**

**इतश्च जीवादन्यः-**

## कामाच्च नानुमानापेक्षा १ । १ । १९ ॥

**जीवस्याविद्यापरवशस्य जगत्कारणत्वे ह्यवर्जनीया आनुमानिकप्रधानादिशब्दाभिधेयाचिद्वस्तुसंसर्गापेक्षा । तथैव हि चतुर्मुखादीनां कारणत्वम् । इह च 'सोऽकामयत बहु स्यां प्रजायेय'- इत्यचित्संसर्गरहितस्य स्वकामादेव विचित्रचिदचिद्वस्तुनस्सृष्टिः, 'इदं सर्वमसृजत, यदिदं किञ्च' इत्याम्नायते । अतोऽस्यानन्दमयस्य जगत्सृजतो नानुमानिकाचिद्वस्तुसंसर्गापेक्षा प्रतीयते । ततश्च जीवादन्य आनन्दमयः ॥ १९ ॥**

**इतश्च -**

## अस्मिन्नस्य च तद्योगं शास्ति १।१।२०॥

**अस्मिन् - आनन्दमये, अस्य - जीवस्य, तद्योगम् - आनन्दयोगम्, शास्ति शास्त्रम्, 'रसो वै सः ।**

---

वस्थापरमिति भावः । विज्ञानमयशब्दो न बुद्धिपरः, परन्तु ज्ञानवज्जीवपर इति पूर्वमेव प्रभाषितम् । आनन्दमयशब्दस्य परमात्मपरत्वं 'तस्माद्वा अन्योऽन्तर आत्माऽऽनन्दमय' इति वाक्यस्थानन्दमयशब्दैकदेशमयडर्थपर्यालोचनया पूर्वमुक्तम् । अत्र 'अन्य' इति पदपर्यालोचनया । अतः पौर्वापर्यक्रम आदृतः ।

जीवस्याविद्यापरवशस्येत्यनेन मुक्तव्यावृत्तिः । अयमाशयः - 'सोऽकामयत' इति संकल्पमात्रेण स्रष्टृत्वमुक्तम् । एतेन संकल्पातिरिक्तोपकरणनिरपेक्षत्वं फलितम् । जीवानां देहेन्द्रियादिरूपेण परिणतानुमानिकप्रधानाद्युपकरणपुरस्सरमेव कारणत्वम् । यथा कुलालादे र्घटादिसृष्टिकारणत्वं देहेन्द्रियादिरूपप्रधानोपकरणपुरस्कारेणैव । चतुर्मुखस्याप्येवम् । ब्रह्मणस्तु न तथा । न च स्वरूपपरिणामप्रसंगपरिहाराय चेतनाचेतनवैशिष्ट्यस्यापेक्षितत्वात्तस्य च तच्छरीरत्वात्परस्यापि न काममात्रेण स्रष्टृत्वमिति वाच्यम् । चेतनाचेतनयोः परमात्मस्रष्टृशरीरत्वेपि कुलालचतुर्मुखादे र्यथा देहेन्द्रियापेक्षा न तथा परस्येत्यदोषात् । पञ्चभूताद्यारब्धदेहरूपत्वं ज्ञानकर्मेन्द्रियादिसम्पन्नत्वं हि चतुर्मुखादिशरीरस्य, न तथा परस्य ब्रह्मणः शरीरस्य । किञ्च चेतनाचेतनवैशिष्ट्यं हि स्वरूपविकारपरिहारार्थमेवाङ्गीक्रियते । तच्चोपादानत्वाक्षेपकं, न तु सङ्कल्पमात्रेण स्रष्टृत्वरूपनिमित्तात्वाक्षेपकम् । अतस्तद्वैशिष्ट्यापेक्षायाः सङ्कल्पपूर्वकसृष्टेरनावश्यकत्वान्न दोषः । अनेन सङ्कल्पार्थमपि न तदपेक्षा । विश्वामित्रादीनां तु देहनिरपेक्षसंकल्पपूर्वकसृष्टिरपि नास्ति । ''सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ति'' इति मुक्तानामपि संकल्पमात्रेण सष्टृत्वमस्तीति कथमयं हेतुरिति न मन्तव्यम् । स्वव्यधिकरणसंकल्पाप्रयोज्यदेहाद्यनपेक्षसङ्कल्पस्यैव हेतुत्वेन मुक्तादिसङ्कल्पस्य परप्रयोज्यत्वान्न दोषः । दूर्वासा हि स्वशरीरैकदेशभूतरोमादिकमादाय भूतमसृजत् । मन्त्रवादी बहिर्भूतसिकतादिकमादाय पदार्थान्तरं सृजति । इदं वस्तुद्वयमपि पूर्वमाभ्यां न सृष्टम् । अतोऽन्यसृष्टवस्तुसापेक्षमेव स्रष्टृत्वं दृष्टम् । मुक्तस्यापि परमात्मसृष्टवस्तुसापेक्षतयैव सङ्कल्पमात्रेण सृष्टिः । न तु स्वातन्त्र्येण । अत इतरसृष्टवस्तुनिरपेक्षसंकल्पमात्रस्रष्टृत्वं न तेषामिति वा परिहार्यम् ॥

अस्मिन्नित्यस्यार्थविवरणमानन्दमय इति । अनेनानन्दवाचकरसशब्दार्थो विवृतः । अत एव रसशब्दाभिधेया-

**रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति' इति। रसशब्दाभिधेयानन्दमयलाभादयं जीवशब्दाभिलपनीय आनन्दी भवतीत्युच्यमाने, यल्लाभाद्य आनन्दी भवति, स स एवेत्यनुन्मत्तः को ब्रवीतीत्यर्थः (ब्रवीति) ॥**

**एवमानन्दमयः परं ब्रह्मेति निश्चिते सति, 'यदेष आकाश आनन्दः'** (बृ. ५-९-२८) **'विज्ञानमानन्दं ब्रह्म' इत्यादिष्वानन्दशब्देनानन्दमय एव परामृश्यते, यथा 'विज्ञानशब्देन विज्ञानमयः। अत एव 'आनन्दं ब्रह्मणो विद्वान्' इति व्यतिरेकनिर्देशः। अत एव च** (तै.आन.८-५) **'आनन्दमयमात्मानमुपसंक्रामति' इति फलनिर्देशश्च।** (तै.भृ.३) **'प्राणो ब्रह्मेति व्यजानात्',** (तै.भृ.४अनु.) **'मनो ब्रह्मेति व्यजानात्',** (तै.भृ.५-१) **'विज्ञानं ब्रह्मेति व्यजानात्' इति प्रतिपादनात्** (तै.भृ.६-१) **'आनन्दो ब्रह्म' इत्यपि आनन्दमयस्यैव प्रतिपादनमिति विज्ञायते; तत एव च तत्रापि, 'आनन्दमयमात्मानमुपसङ्क्रम्य' इत्युपसंहृतम्।**

**अतः प्रधानशब्दाभिलप्यादर्थान्तरभूतस्य परस्य ब्रह्मणो जीवशब्दाभिलपनीयादपि वस्तुनोऽर्थान्तरत्वं सिद्धम् ॥ २० ॥** ॥ इत्यानन्दमयाधिकरणम् ॥६॥

---

नन्दमयलाभादिति विवृतम्। **यल्लाभादिति**। न हि स्वस्यानन्दप्राप्तौ स्वलाभ एव प्रयोजकः। पूर्वमेव तस्य सत्त्वेन सर्वदा आनन्दवत्वप्रसंगात्। लाभानन्तरकालिकत्वकथनानौचित्यात्। एतेन निर्विशेषपरतया व्याख्यानमपि न युक्तिमदिति सूचितम्। आनन्दवत्वस्य प्रदर्शनात्। आनन्दमय इत्यत्र मयट् न स्वार्थे, परन्तु प्राचुयार्थ एवेत्यप्यनेन संगृहीतम्। न हि निर्विशेषं वस्तु अन्यस्यानन्दजनकं भवितुमर्हति। 'तद्धेतुव्यपदेशाच्चे'ति सूत्रम् उपायत्वपरम् 'आनन्दयाती'त्युक्तेः। इदञ्चोपेयत्वपरं 'रसो वै सः' इति प्रतिपादनात्। यद्वाऽत्रैव 'लब्ध्वा' इत्युक्तेः उपायोपेयोभयपरमिदम्। पूर्वं तु सांसारिकफलप्रदत्वबोधकम्। इदं मोक्षफलप्रदत्वबोधकमिति विभागः। ऐकार्थ्यात् 'यदेष... आनन्दः', 'विज्ञानमानन्दः' इत्यत्रानन्दशब्द आनन्दमयपर इत्याहः - **एवमिति**। तत्र दृष्टान्तं प्राह - **यथेति**। उत्तरानुवाकेप्यानन्दो ब्रह्म इत्यत्र आनन्दमयप्रतिपादनमेवेत्यत्र सदृष्टान्तं प्राह - **अन्नं ब्रह्मेति** इत्यादिना। उपसंहरति - **अतः प्रधानेति**।

अत्राधिकरणे ब्रह्म-आत्म-आनन्दमयानामैक्यं स्थापितं सूत्रस्वारस्यसिद्धं प्राचीनवृत्तिकाराभिमतञ्च। शाङ्करभाष्येऽपीयमेव रीतिरनुसृता। परन्तु ब्रह्मानन्दमययो र्भेद एवेति स्वाशयः प्रकटीकृतः। आनन्दमयस्य ब्रह्मत्वे ब्रह्मणो निर्देहत्वात् निरवयवत्वाच्चान्नमये तस्येदमेवशिर इत्यादिना शिरपक्षादिवत्वस्वीकार इव 'तस्य प्रियमेव शिरः' इत्यादिना शिरःपक्षादिभेदकथनं कथं घटताम्। आनन्दमयस्य जीवत्वे तस्य शिरः प्रभृतिसम्भवात्तदुपपादनसम्भवः। एवं 'ब्रह्म पुच्छं प्रतिष्ठा' इत्यानन्दमयस्य ब्रह्मणश्चाऽऽधाराधेयभावसम्बन्धोपि प्रतिपादितः। उभयोरैक्ये कथमयं सम्बन्ध उपपद्यताम्। अतो भेद एवेति पुच्छब्रह्मवादिमतरीत्या उपपादनं कृतम्। अत्र परिहारः सारावल्यां प्रतिपादितः - 'निर्देहेऽस्मिन् निरंशे न हि भवति शिरःपक्षपुच्छादि किञ्चित्। तस्मात्पुच्छं प्रतिष्ठेत्युदितमिह परब्रह्म भातीति चेन्न। सोढा पुच्छत्वक्लृप्ति र्यदि कथमितरन्नानुमन्येत कल्प्यं ब्रह्मण्यात्मप्रतिष्ठावचनमनितराधारताख्यापनाय' इति ॥

अयं भावो भवद्भिरङ्गीकृतं परं ब्रह्म देशकालादिपरिच्छेदरहितमिति तु निर्विवादम्। सच्चिदानन्दस्य तस्य कथं पुच्छत्वसम्भवः। नात्र पुच्छत्वमुच्यते पुच्छत्वकल्पनमेव। श्रुतिस्वारस्यादिदं सोढव्यमिति चेत् शिरः पक्षादिकमपि कल्प्यमेव न वास्तवम्। इदं कल्पनमपि सोढव्यमेव। अन्नमयं विहाय प्राणमयादिषु सर्वत्र शिरः पक्षादि कल्पनवदत्रापि तत्कल्पनमित्यदोषात् 'अन्वयं पुरुषविधः' इति हि श्रूयते। अस्तु कल्पनम्, अथापि उभयोरेकत्वे कथमाधाराधेयभावसंबन्ध इति चेत्? स भगवान् कस्मिन्प्रतिष्ठित इति पृष्ठ्वा स्वे महिम्नि प्रतिष्ठित इति समाहितम्। अनया स्वेतराधारकत्वाभावः प्रतिपादितः। एवमेव स्वप्रतिष्ठात्वकथनमपि। आनन्दमयपर्याये यथाऽनन्यात्मकत्वं प्रतिपादितम्। 'प्रियशिरस्त्वाद्य-

अथ अन्तरधिकरणम् ।। ७ ।।

**यद्यपि मन्दपुण्यानां जीवानां कामाज्जगत्सृष्टिः, अतिशयितानन्दयोगो भयाभयहेतुत्वमित्यादि न**

प्राप्ति'रित्यादिना सूत्रकारोपि वक्ष्यति । **अन्नमयं** = शरीरम् अवयवि, तद्गतैकदेशभूतावयवस्य 'इदं पुच्छं प्रतिष्ठा' इति प्रतिष्ठात्वम् । कथम् एकदेशस्यावयविनं प्रति प्रतिष्ठात्वम् ? शिरःपक्षादिरूपांशान्तरं प्रत्येकदेशस्य प्रतिष्ठात्वमिति चेदत्रापि समानम् । आनन्दमय इत्यनेन आनन्दतद्वतोः प्रकृतिप्रत्ययाभ्यां प्रतीतत्वात् । भोदानन्दादिगुणानां बहुत्वात् । गुणानां गुणिनं प्रति शिरःपुच्छत्वादिकल्पनं योयुज्यते । एकदेशस्य तदितरावयावन्प्रति प्रतिष्ठात्वमप्युपपन्नम् । न च मध्यकायत्वेन रूपितस्यानन्दस्य ब्रह्मणश्च भेदाभावेन तस्यैकात्मत्वेन पुच्छत्वेन च रूपणं कथमिति वाच्यम् । एकस्यैव ब्रह्मणो बृहत्ववेषेण आत्मशब्दितमध्यकायत्वमित्यदोषात् । आनन्दस्वरूपस्य ब्रह्मणः कथमानन्दप्राचुरत्वरूपानन्दमयत्वमिति न शङ्क्यम् । मयटा व्यतिरेकप्रतीतेः । धर्मभूतज्ञानावस्थापन्नानन्दानां बहुत्वात् । तेषां प्रियमोदप्रमोदशब्दवाच्यत्वसम्भवात् । शिरः पक्षत्वारोपण संभवाच्च तादृशा धर्मभूत ज्ञानभूत आनन्दमयत्वोपपत्तेः । इत्यानन्दमयाधिकरणम् ।।

अन्तरधिकरणम्

**यद्यपीति** । आनन्दमयविद्याया जीवतिरिक्तपरमात्मविषयकत्वं स्थापितम् । तदुपर्याक्षेपः । अन्तरादित्यविद्यायां जगत्कारणत्वेन जीवविशेषस्यैव प्रतिपादनात्तदनुरोधेनानन्दमयविद्यायामपि जीवस्यैव जगत्कारणत्वावश्यकतया न ब्रह्मसिद्धिरिति । कारणवाक्यानां परमात्मपरत्वनिर्णयः खलु क्रियते । क्वचिज्जीवविशेषस्य कारणत्वे निश्चिते तदनुसारेण सर्वकारणवाक्यानामपि तस्यैव कारणत्वं दुर्निवारम् । पूर्वत्र श्रुतस्य शारीरत्वस्य परमात्मनि संभवोपपादनाय आधेयत्वविधेयत्वादिविशेषानख्याय शरीरत्वं परिकल्प्य आनन्दमयस्य परमात्मत्वं स्थापितम् । अन्तरादित्यविद्यायां श्मश्रुकेशनखपादादिविशिष्टपाञ्चभौतिकविशेषरूपशरीरस्यास्मदादिसाधारणस्यैवोक्तत्वाज्जीवस्यैव एतद्वाक्यप्रतिपाद्यत्वावश्यकतयाऽस्यैव जगत्कारणत्वादानन्दमयविद्यायां प्रतिपन्नशारीरत्वमप्येतद्रूपमेवेति ब्रह्मण एवासिद्धिः ।।

नन्वन्तरादित्यविद्याप्रतिपादकवाक्यस्य जगत्कारणवादिवाक्यत्वाभावात् कथमियमाशङ्केति चेत् आनन्दमयाधिकरणशेषत्वात् । एतद्वाक्यप्रतिपन्नस्य जीवत्वे तत्रापि जीवस्यैव प्रतिपत्तेः । उपनिषद्भेदस्त्वप्रयोजकः । 'स यश्चायं पुरुषे यश्चासावादित्ये' इत्यानन्दमयस्यैवादित्यमण्डलान्तर्वृत्तित्वोक्तेः । स यश्चायमित्यादिना विद्याद्वयप्रतिपन्नयोरेकत्वे निश्चिते 'आत्मन आकाशस्संभूतः', 'सोऽकामयत' इत्यादिना तस्य कारणत्वोक्तेः कारणत्वमस्यापि स्वत एव सिध्यतीति इदमपि कारणवाक्यं भवितुमर्हति । अपि चादित्यमण्डलान्तर्वर्ती हिरण्मयपुरुषो गायत्रीप्रतिपाद्यः 'तत्सवितुर्वरेण्यं भर्गो देवस्य' इत्युक्तेः । 'यो देवस्सविताऽस्माकं धियो धर्मादिगोचराः । प्रेरयत्तस्य यद्भर्गः' इत्युक्तध्यानश्लोके सवितृमण्डलमध्यवर्तिभर्गप्रतिपादनाच्च । भर्गशब्दो हि तेजःपरः । सर्वपाप्मदाहकत्वपरः । अत्रापि 'उदेति ह वै सर्वेभ्यः पाप्मभ्यो यं एवं वेद' इत्युच्यते । 'सविता' इत्यस्य जगदुत्पादयितेत्यर्थः । अतो जगत्कारणत्वमत्राप्युक्तमिति अभिनवदेशिकविरचितटिप्पण्याम् । न चोक्तरीत्या जीवत्वनिश्चये कथं तस्य सर्वसृष्ट्यादिकर्तृत्वसत्यसङ्कल्पत्वपरानन्दयितृत्वादीनां सम्भव इति वाच्यम् । जीवसामान्येऽसम्भवेपि जीवविशेषे तत्संभवात् । उपचितपुण्यविशेषस्य जीवस्यैतादृशमहिमसम्भवात् । अत एव 'सर्वेभ्यः पाप्मभ्य उदित' इति सर्वपापविनिर्मोक उक्त, न तु पुण्यविनिर्मोकः । पापनिर्मुक्तः उपचितपुण्यवान् जगत्कारणं भवत्वित्याक्षेपः । न च जीवस्यैवेश्वरत्वे तत्कर्मपरिपाकस्य विलक्षणत्वात्तस्य नाशे तदीयैश्वर्यस्यापि नाशावश्यकतया जगतो निरीश्वरत्वं स्यादिति वाच्यम् । एकस्य नाशेप्यन्यस्य तत्सम्भवात् । उपचितपुण्यविशेषबहुव्यक्तिष्वन्यतमस्यैव जगत्कारणत्वं वदतामेकस्य ऐश्वर्यस्य नाशेपि तादृशैश्वर्यवतोऽन्यस्य सद्भावेन जगतो निरीश्वरत्वासम्भवात् ।

**सम्भवति - अथापि विलक्षणपुण्यानामादित्येन्द्रप्रजापतिप्रभृतीनां सम्भवत्येवेतीमामाशङ्कां निराकरोति -**

**अन्तस्तद्धर्मोपदेशात् १।१।२१॥**

**इदमाम्नायते छान्दोग्ये, 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः। तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी। तस्योदिति नाम, स एष सर्वेभ्यः**

---

मन्वन्तरभेदेन इन्द्रभेदस्य प्रामाणिकत्ववज्जगत्कारणभेदस्यापि स्वीकर्तुं शक्यत्वात्। इन्द्रप्रवाह इष्टः, वेदव्यासप्रवाहश्चेष्टः। एवमेवेश्वरप्रवाहोपि भवितुमर्हति। अत एकस्या व्यक्तेरवसाने तत्स्थानेऽन्यस्या व्यक्तेःपश्चात्प्रादुर्भाव इति जगत्कारण-वाक्यानां सामञ्जस्यमिति पूर्वपक्ष्यभिप्रायः॥

एतदाशयेनैव **इन्द्रप्रजापतिप्रभृतीनामिति** भाषितम्। सद्विद्यायाम् 'उत तमादेशमप्राक्ष्य' इति आदेष्टारं प्रस्तुत्य सर्वकारणत्वात्सर्वादिष्टत्वमिति उपरि कारणत्वं निरूपितम्। आनन्दवल्ल्यामपि 'आत्मन आकाश' इति कारणत्वमुक्त्वा 'भीषाऽस्मा'दित्यादिना सर्वं कारणवस्तुशासनाधीनमित्युक्तम्। अतः शासितृत्वकारणत्वयोः समनियतत्वात् अत्रापि 'तेषां चेष्टे' अधोलोकादि सर्वेशानवाक्यतः ईशनस्योक्तत्वाच्च कारणत्वमप्युक्तमिति अस्य कारणवाक्यत्वसंभवः। करचरणादिविलक्षणशरीरसंबन्धश्रवणाच्च जीव एव। एतेन 'कामाच्च नानुमानापेक्षा' इति सूत्रमपि गतम्। विलक्षणै-तादृशशरीरवतः कुलालादिवदानुमानिकशरीरापेक्षाया आवश्यकत्वात् आनुमानिकशरीरापेक्षया कर्तृत्वे जीवत्वमेव तस्येति दर्पणे पूर्वपक्षोत्थितिरुक्ता॥

'य एष' इति विषयवाक्यमनुवादरूपमिति न शङ्क्यम्। प्रमाणान्तराप्राप्तार्थबोधकत्वात्। 'यदाग्नेयोऽष्टाकपाल' इतिवन्निर्देशः। '**आदित्ये अन्तः**' - आदित्यमण्डले मध्ये इत्यर्थः। 'तस्मिन् यदन्त' इतिवदत्रापि सप्तमी। आदित्यशब्दो ण्यप्रत्ययान्तो मण्डलवाची। आदित्यस्येदं मण्डलम् आदित्यम्। अन्तरादित्य इत्येकमेव पदं वा। ''य एष एतस्मिन्मण्डले पुरुषः यश्चायं दक्षिणेऽक्षन्' इति बृहदारण्यके, 'य एष एतस्मिन् मण्डलेऽर्चिषि पुरुष' इति तैत्तरीयके च पुरुषस्य मण्डल-वृत्तित्वश्रवणात्। अत्रापि मण्डल इत्यर्थो वर्णनीयः। हिरण्मयपदेनोज्ज्वलत्वमुक्तम्। आदित्यमण्डलस्यान्तः हिरण्मयः = रमणीयः यो योगिभि र्दृश्यत इत्यर्थः। यद्वा हिरण्मयत्वं सुवर्णवर्णत्वं 'कश्चिचन्न तत् हेमसमानवर्णं तस्याननम्' इति रामायणे, 'यदा पश्यः पश्यते रुक्मवर्णम्' इति वेदे चोक्तत्वात्। स एष 'अन्तर्हृदय आकाशः ... अमृतो हिरण्मय' इति हार्दमूर्तेरपि हिरण्यवर्णत्वं युक्तम्। **दृश्यते** = योगिभिरिति शेषः। 'दृश्यते त्वग्र्या बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' इति श्रुत्यैकार्थ्यात्। 'हिरण्यश्मश्रुः हिरण्यकेश' इत्यादिनातिरमणीयत्वमुक्तम्। एतादृशरूपविशिष्टः पुरुषः आदित्यमण्डलान्त र्विद्यत इत्यर्थः। इदञ्च रूपमारोपितमिति न भ्रमितव्यम्। 'य एवं वेद' इत्युत्तरत्रोपासनविधानात्॥

इदञ्च रूपमुपासनार्थमारोपितमिति न मन्तव्यम्। 'न संदृशे तिष्ठति रूपमस्य' इत्युक्त्वा 'हृदा मनीषा मनसाऽभि-क्लप्तो य एनं विदुरमृतास्ते भवन्ति', इति 'यदा पश्यः पश्यते रुक्मवर्णम्' इति प्रकरणे 'मनुसा तु विशुद्धेन' इति च विशुद्धमनोग्राह्यत्वोक्तेः। **आप्रणखात्** = नखाग्रात्। कप्यासशब्दस्यार्थत्रयमुक्तम् - कं पिबातीति कपिः = सूर्यः। कपिना = सूर्येण आस्यत (विकस्यते) इति कप्यासम्। यद्वा कं पिबति इति कपिः = नालं, तत्राऽस्ते इति कप्सासम्। के = जले अप्यास्ते वर्तत इति कप्यासम्। 'वष्टिबागुरिरल्लोपम्' इति अकारलोपः। सलिलस्थमित्यर्थः। इदं पुण्डरीकविशेषणम्। **पुण्डरीकं** = रक्ताम्भोजम्। यद्यपि ''पुण्डरीकं सिताम्भोजम्' इत्यमरः, तथापि शबरस्वामिना नवमाध्याये 'दर्भैस्तृणीत-हरितैः' इति मन्त्रस्य दर्भपदस्थाने पुण्डरीकपदं, हरितपदस्थाने रक्तपदमूहितव्यमित्युक्तत्वात् रक्ताम्भोजमेव पुण्डरीकमिति द्रष्टव्यमिति भावप्रकाशिका।

**पाप्मभ्य उदितः ; उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद । तस्यर्क् च साम च गेष्णौ इत्यधिदैवतम्', 'अथाध्यात्मम् - अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते, सैवर्क्, तत्साम, तदुक्थम्, तद्यजुः, तद्ब्रह्म । तस्यैतस्य तदेव रूपं यदमुष्य रूपम्; यावमुष्य गेष्णौ तौ गेष्णौ; यन्नाम तन्नाम' इति ।।**

**तत्र संदिह्यते - किमयमक्ष्यादित्यमण्डलान्तर्वर्ती पुरुषः पुण्योपचयनिमित्तैश्वर्यः आदित्यादिशब्दाभिलप्यो जीव एव, आहोस्वित्तदतिरिक्तः परमात्मा - इति । किं युक्तम्?**

**उपचितपुण्यो जीव एवेति । कुतः? सशरीरत्वश्रवणात् । शरीरसम्बन्धो हि जीवानामेव सम्भवति । कर्मानुगुणप्रियाप्रिययोगाय हि शरीरसम्बन्धः । अत एव हि कर्मसम्बन्धरहितस्य मोक्षस्य प्राप्यत्वमशरीरत्वेनोच्यते,** (छा.८-१२-१) **'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः' इति । सम्भवति च पुण्यातिशयाज्ज्ञानाधिक्यम्, शक्त्याधिक्यञ्च । अत एव लोककामेशत्वादि तस्यैवोपपद्यते । तत एव चोपास्यत्वम्; फलदायित्वञ्च; पापक्षपणकरत्वेन मोक्षोपयोगित्वञ्च । मनुष्येष्वप्युपचितपुण्याः केचिज्ज्ञानशक्त्यादिभिरधिकतरा दृश्यन्ते; ततश्च सिद्धगन्धर्वादयः ; ततश्च देवाः ; ततश्चेन्द्रादयः । अतो ब्रह्मादिष्वन्यतम एवैकैकस्मिन्कल्पे पुण्यविशेषेण एवम्भूतमैश्वर्यं प्राप्तो जगत्सृष्ट्याद्यपि करोतीति जगत्कारणत्वजगदन्तरात्मत्वादिवाक्यमस्मिन्नेवोपचितपुण्यविशेषे सर्वज्ञे सर्वशक्तौ वर्तते । अतो न जीवाद्-**

---

एवमर्थत्रयं मनसि निधाय भाष्यकारः वेदार्थसङ्ग्रहे - 'गम्भीराम्भस्समुद्भूतसुमृष्टनालरविकरविकसितपुण्डरीकदलामलायतेक्षण' इति प्रोवाच । सोमपाशब्दवत् **कपा**शब्दः । जलपायी इत्यर्थः । नालमिति यावत् । कपीति सप्तम्यन्तम् 'विश्वपि' इतिवत् । तत्र आसं वर्तमानमिति नयमयूखमालिका । एवमर्थत्रयं स्वीकृतम् । त्यक्तंचार्थत्रयम् । कपिः = आदित्यः । तस्य आसं = मण्डलम् । पुण्डरीकं = हृदयपुण्डरीकम् । यथा सूर्यमण्डलं हृदयपुण्डरीकञ्च परस्योपासनस्थानमेवम् अक्षिणी अप्युपासनास्थानमित्येकोऽर्थः । अत्र कप्यासं पुण्डरीकमिति सामानाधिकरण्यदर्शनेनार्थैक्यवर्णन एव स्वरसत्वाच्चकाराद्यश्रवणाच्च । पुण्डरीकपदस्य हृदयपुण्डरीकार्थकत्वे प्रमाणाभावाच्च । कपिः मर्कटः । तस्य आसं = जघनप्रदेशः मर्कटपृष्ठसाम्यमुक्तम् । इदमपि जघन्यत्वादुपेक्ष्यम् । यथा मर्कटपृष्ठं तथा अक्षिणीत्यन्वये उपमानद्वयमुक्तं स्यात् । स्वतः प्राप्तसामानाधिकरण्यस्य परित्यागश्च स्यात् । हीनोपमाश्रयणस्यायोगाच्च । एकमक्षि मर्कटपृष्ठसदृशम्, अन्यच्च पुण्डरीकसदृशमित्यर्थवर्णने वैरुप्याच्च । श्लाघनीयेऽर्थे संभवति जघन्यार्थवर्णने वर्णयितुः जघन्यत्वप्रसङ्गाच्च । एकोपमात्वसिध्यर्थं मर्कटपृष्ठसदृशपुण्डरीकसादृश्यमक्षिणोरिति वर्णनमपि न शब्दस्वरससिद्धम् । कप्यासम् = ईषद्विकसितमित्यर्थ इत्यपि न मनोज्ञम् । अर्थानौचित्याभावेऽपि शब्दस्य ईषद्विकसितबोधकत्वे न स्वारस्यमिति । **गेष्णौ** = गानविशेषौ ।।

इदमन्तरादित्यवाक्यम् उद्गीथविद्याप्रकरणगतम् । उद्गीथे हिरण्मयपुरुषदृष्टिविधिपरम् । अन्यथात्वाधिकरणे 'न वा प्रकरणभेदात् परोवरीयस्त्वादिवत्' इति सूत्रभाष्ये अयमर्थः स्पष्टमुक्तः 'उद्गीथावयवभूते प्रणवे परमात्मदृष्टिविधानसाम्येपि हिरण्मयपुरुषदृष्टिविधानात्' इत्यादिना । **अधिदैवतं** = देवतायामुपासनम् । अध्यान्मम् = आत्मन्युपासनम् । अत्रात्मशब्दो देहपरः । 'आदित्ये, अक्षिणि धर्मोपदेशात्' इति सूत्राभावात् अन्तःपदसत्त्वेन अन्तरादित्ये अन्तरक्षिणि इत्युभयत्र अन्तश्शब्दस्य श्रुतत्वादुभयवाक्यमपि संग्रहीतम् । य एषोऽक्षिणि पुरुषो दृश्यत इत्यत्रापि अक्ष्याधारकत्वेन पुरुषस्य श्रुतत्वं यद्यपि वर्तते तथापि 'अन्तः' इति पदाश्रवणान्न तदत्र संगृहीतम् । अन्तराधिकरणे पृथक् तद्वाक्यं विचार्यत इत्यवधेयम् । लोककामेशत्वादि ... उपास्यत्वं फलदायित्वं मोक्षोपयोगित्वञ्च इति श्रीसूक्त्यापि अस्या विद्यायाः कारणवाक्यत्वसम्भवेनात्र विचारणार्हत्वं सूचितम् । **जगत्कारणत्वेति** कारणवाक्यं सर्वमपि जीवविशेषपरमेव । नातिरिक्त-

**तिरिक्तः परमात्मा नाम कश्चिदस्ति। एवञ्च सति -** (बृ.५-८-८) **'अस्थूलमनण्वह्रस्वम्' इत्यादयो जीवात्मनः स्वरूपाभिप्रायाः भवन्ति; मोक्षशास्त्राण्यपि तत्स्वरूपतत्प्राप्त्युपायोपदेशपराणि - इति ॥**

**एवं प्राप्तेऽभिधीयते - अन्तस्तद्धर्मोपदेशात्। अन्तरादित्येऽन्तरक्षिणि च यः पुरुषः प्रतीयते, स जीवादन्यः परमात्मैव; कुतः? तद्धर्मोपदेशात्। जीवेष्वसम्भवन् तदतिरिक्तस्यैव परमात्मनो धर्मोऽयमपहतपाप्मत्वादिः,** (छा.१-६-७) **'स एष सर्वेभ्यः पाप्मभ्य उदितः' इत्यादिनोपदिश्यते। अपहतपाप्मत्वं हि अपहतकर्मत्वम्; कर्मवश्यतागन्धरहितत्वमित्यर्थः। कर्माधीनसुखदुःखभागित्वेन कर्मवश्या हि जीवाः। अतोऽपहतपाप्मत्वं जीवादन्यस्य परमात्मन एव धर्मः। तत्पूर्वकं स्वरूपोपाधिकं लोककामेशत्वम्, सत्यसङ्कल्पत्वादिकम्, सर्वभूतान्तरात्मत्वञ्च तस्यैव धर्मः। यथाह,** (छा.८-१-५) **'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः' इति, तथा** (सुबाल.७) **'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' इति।**

(तै.आन.६) **'सोऽकामयत। बहु स्यां प्रजोयेयेति' इत्यादिसत्यसङ्कल्पत्वपूर्वकसमस्तचिदचिद्वस्तुसृष्टियोगो निरुपाधिकभयाभयहेतुत्वम्, वाङ्मनसपरिमितिकृतपरिच्छेदरहितानवधिकातिशयानन्दयोग इत्यादयोऽकर्मसम्पाद्यास्स्वाभाविका धर्मा जीवस्य न सम्भवन्ति ॥**

**यत्तु शरीरसम्बन्धान्न जीवातिरिक्त इत्युक्तम् - तदसत्। न हि सशरीरत्वं कर्मवश्यतां साधयति,**

---

परमात्मपरमिति भावः। अपहतपाप्मा इत्यादयोपि जीव एव पर्यवस्यन्ति। नाकर्मवश्यत्वम् अपहतपाप्मत्वम्। किन्तु केवलपापराहित्यमेव केवलपुण्यहेतुकशरीरवतोपीदं सम्भवतीत्याशयः। अत उपेयपराणि उपायपराणि च वाक्यनि जीवविषयिण्येव। विलक्षणदेहश्रवणात्पापमात्रपरित्यागोक्तिमूलकं पुण्यमूलकशरीरसद्भावावगमाज्जीवत्वमेवात्र प्रतिपाद्यस्येति पूर्वपक्ष्याशयः।

**जीवादन्यः परमात्मेति**। 'भेदव्यपदेशाच्चान्य' इति द्वितीयसूत्रस्थान्यपदमुपजीव्य 'अन्य' इत्युक्तम्। **जीवेष्वसम्भवन्निति**। तद्धर्मोपदेशादित्यत्र तस्य = परमात्मनो धर्मः। तेषामुपदेशादित्यर्थोऽनुपपन्नः। तच्छब्देन परमात्मन एव ग्राह्यत्वात् तस्य चासिद्धेः। अतस्तस्यैव धर्म इति समासं स्वीकृत्य तदितरावृत्तिधर्मवत्वं विवक्षित्वा तत्र तत् इत्यस्याविवक्षां कृत्वा इतरपदेन जीवं च संगृह्य जीवासम्भावित धर्मवत्वादित्यर्थो वर्णनीय इति भावः। **स्वरूपोपाधिकं** = स्वाभाविकम्। सत्यसङ्कल्पत्वादिकं सर्वभूतान्तरात्मत्वञ्चात्र विद्यायां नोक्तम्। अथाप्यादित्यमण्डलान्तर्वर्तिन अपहतपात्मत्वगुणयोगात्परमात्मत्वस्थापनादानन्दवल्लीदहरविद्यासुबालोपनिषत्प्रतिपाद्यत्यस्याप्यपहतपाप्मत्वगुणयोगेन प्रत्यभिज्ञानात्तत्र तत्रोक्ता गुणा अत्रापि सम्भवन्तीत्याशयः। वाक्यान्तरेषु अपहतपाप्मत्वाश्रवणेपि सर्वशाखान्यायेन तत्र तत्रोक्तानामपि गुणानाम् अपहतपाप्मत्वपूर्वकत्वं सिद्धमित्याशयेनाह - **सोऽकामयत** इति। कारणत्वान्यथाऽनुपपत्त्या सत्यसङ्कल्पत्वसिद्धिः। सत्यसङ्कल्पत्वान्यथानुपपत्त्या अपहतपाप्मत्वसिद्धिः। अपहतपाप्मा यः स नारायण एव, 'अपहतपाप्मा दिव्यो देव एको नारायण' इत्युक्तेः।

**न हीति**। सशरीरत्वे कर्मवश्यत्वनियमो नास्ति, मुक्तादिषु व्यभिंचारात्। शरीरस्य प्राकृतत्वगुणत्रयमयत्वसप्तधातुमयत्वत्रिमलत्वादिनिर्बन्धो नास्ति। स्वेच्छागृहीताप्रकृतशरीरे तदसम्भवात्। गीतायां स्पष्टमिदम्। आदित्यवर्णं तमसः परस्तादिति परस्य विग्रहविशेषो विधीयते। अतो विग्रहसामान्यनिषेधो विहिताप्राकृतविग्रहव्यतिरिक्तविषयकः। यथा

**सत्यसङ्कल्पस्येच्छयाऽपि शरीरसम्बन्धसम्भवात्। अथोच्यते - शरीरं नाम त्रिगुणात्मकप्रकृतिपरिणामरूपभूतसङ्घातः; तत्सम्बन्धश्चापहतपाप्मनः सत्यसङ्कल्पस्य पुरुषस्येच्छया न सम्भवति, अपुरुषार्थत्वात्। कर्मवश्यस्य तु स्वस्वरूपानभिज्ञस्य कर्मानुगुणफलोपभोगायानिच्छतोऽपि तत्सम्बन्धोऽवर्जनीय - इति। स्यादेतदेवम्, यदि गुणत्रयमयः प्राकृतोऽस्य देहस्स्यात्; स तु स्वाभिमतः स्वानुरूपोऽप्राकृत एवेति सर्वमुपपन्नम्॥**

**एतदुक्तं भवति - परस्यैव ब्रह्मणो निखिलहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपतया सकलेतरविलक्षणस्य स्वाभाविकानवधिकतिशयासङ्ख्येयकल्याणगुणगणाश्च सन्ति। तद्वदेव स्वाभिमतानुरूपैकरूपाचिन्त्यदिव्याद्भुतनित्यनिरवद्यनिरतिशयौज्ज्वल्यसौन्दर्यसौगन्ध्यसौकुमार्यलावण्ययौवनाद्यनन्तगुणगणनिधिदिव्यरूपमपि**

---

हिंसानिषेधो विहितहिंसाव्यतिरिक्तविषयकः, यथा च गुणनिषेधः विहितव्यतिरिक्तहेयविषयकः। एवं 'न तस्य प्राकृता मूर्तिः' इति विशेषनिषेधदर्शनाद्देहसामान्यनिषेधो विशेषे पर्यवस्यति। विधिर्वा निषेधो वा भवतु वैयर्थ्यप्रसक्तौ विशेषपर्यवासनं न्याय्यम्। विधौ पशुशब्दस्य विशेषपर्यवसानं क्रियते। निषेधे निर्गुणशब्दस्य विशेषपर्यवसानं क्रियते। अतो विग्रहविशेषबोधकप्रमाणसत्त्वात्प्राकृतविग्रहनिषेधपरं विग्रहसामान्यनिषेधपरवाक्यम्। अत्र 'प्रख्यातं शुद्धसत्त्वम्' इति सारावलिश्लोकोऽनुसन्धेयः। 'रजसःपराके', 'तमसःपरस्ता'दिति श्रुतेः स्वसत्ताभासकं सत्त्वं गुणसत्त्वाद्विलक्षणम्। 'ज्ञानानन्दमया लोका' इत्यादिस्मृतिभ्यश्चाप्राकृतलोकसिद्धिः। एवं 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि', 'वैकुण्ठे तु परे लोके', 'तमसः परमो धाता' इत्यादिकमपि प्रमाणम्।

इदञ्च प्रकृतितो विलक्षणम्। परमपदं प्रकृत्येकदेश इति यादवप्रकाशानां पक्षः। 'तद्विश्वरूपवैरुप्यं रूपमन्यद्धरेर्महत्' इति तद्रूपस्य विलक्षणत्वोक्तेः। 'विप्रतिपन्नं रूपं प्राकृतं, रूपत्वात्', 'तत् अनित्यं सावयवत्वा'दित्यादितर्काः श्रुतिस्मृत्यादिबाधितत्वेनाभासाः। 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः', 'जागृवांसः समिन्धते, यत्र पूर्वे साध्यास्सन्ति देवा' इति सदा पश्यतां सूरीणां तत्र सद्भाववचनेन ईश्वररूपस्य नित्यसूरिरूपस्य च सिद्धिस्तत्र। स एव व्यूहरूपं रामकृष्णादिविभवरूपञ्च धत्ते। सृष्ट्यादिमुखेन साधुपरित्राणार्थमवतरति। तदत्रैकंरूपमादित्यमण्डले। हिरण्मय इत्यस्य हितरमणीय इत्यर्थः। अत्र मयट्प्रयोगः हिरण्यभूतपरवासुदेवरूपविकारार्थकः। मयटो विकारार्थकत्वमत्र नेति वदतां हिरण्याख्यलोहविकारत्वनिषेधे तात्पर्यं पररूपानित्यत्ववारणार्थं च। इति सारावलीटीकायाम् अभिनवदेशिककृतायां व्यक्तम्।

ननु तर्हि ईश्वरस्य सशरीरत्वे सप्तधातुमयत्वादिप्रसङ्ग इति चेन्नः। धर्मिप्रमाणेन बाधात्। तदुक्तं सारावल्यां- 'देहत्वात्सप्तधातु' इत्यादि। ईश्वरशरीरं सप्तधातु = त्वक्चर्ममांसरक्तमेदोऽस्थिमज्जारूपधातुसप्तकवत्। एवं त्रिमलं = गुदोपस्थरूपभागव्यतिरिक्तभागत्रयमूलकमलवत्। एवं कर्माधीनं दुःखजनकं नाशप्रतियोगि, देहत्वात् अस्मद्देहवत् इत्येकमनुमानम्। अन्यच्च ईश्वरशरीरं सप्तधातु सांशत्वात् दृश्यत्वात् मध्यमपरिमाणत्वादिति। परवासुदेवशरीरमपि नित्यमुक्तैः वैदिकपुत्रैश्च दृष्टमिति दृश्यम्। अत्र सांशत्वहेतुः त्रिमलत्वसप्तधातुत्वसाधकं न भवति, देहातिरिक्तेऽपि सावयवत्वदर्शनात्। एवमनुमानेनाऽनित्यत्वादिसाधनं न भवति, धर्मिग्राहकप्रमाणबाधात्। पक्षस्य भगवद्रूपस्य असिद्धौ आश्रयासिद्धिः। सिद्धौ साधकप्रमाणं वक्तव्यम्। श्रुतिव्यतिरिक्तं तु नात्र प्रमाणमिति श्रुतिरेव वाच्या। श्रुतिश्च सप्तधातुत्रिमलत्वादिराहित्येनैव शरीरमीश्वरस्य बोधयति। तदनन्तरप्रवृत्तमनुमानं कथं सप्तधातुत्वादि ईश्वरशरीरस्य साधयेत्। यद्वस्तु येन प्रमाणेन यादृशगुणविशिष्टतया सिध्यति तद्वस्तुनि तद्विपरीतधर्मस्थापनं तेन वा प्रमाणान्तरेण वा साधयितुं

**स्वाभाविकमस्ति। तदेवोपासकानुग्रहेण तत्तत्प्रतिपत्त्यनुरूपसंस्थानं करोति अपारकारुण्यसौशील्यवात्सल्यौदार्यजलनिधिः निरस्तनिखिलहेयगन्धोऽपहतपाप्मा परमात्मा परं ब्रह्म पुरुषोत्तमो नारायण इति ॥**

(तै.भृ.१) **'यतो वा इमानि भूतानि जायन्ते'**, (छा.६-२-१) **'सदेव सोम्येदमग्र आसीत्'**, (ऐ.१-१-१) **'आत्मा वा इदमेक एवाग्र आसीत्'**, (महो.१अ.१) **'एको ह वै नारायण आसीत्, न ब्रह्मा नेशानः'**, **इत्यादिषु निखिलजगदेककारणतयाऽवगतस्य परस्य ब्रह्मणः**, (तै.आन १) **'सत्यं ज्ञानमनन्तं ब्रह्म'**, (बृ.५-६-२८) **'विज्ञानमानन्दं ब्रह्म' इत्यादिष्वेवम्भूतं स्वरूपमित्यवगम्यते ।** (मन्त्रि) **'निर्गुणम्'**, (श्वे.६-१६) **'निरञ्जनम्'**, (छा.८-१) **'अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः'**, (श्वे.६-८) **'न तस्य कार्यं करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी**

---

न शक्यते। शब्दः क्वचिदाश्रितः गुणत्वादित्यनुमानेन आकाशं साधयन्ति। शब्दश्च सर्वदेशे सर्वकालेऽप्यनुभूयते। अतः शदाश्रयतया आकाशानुमाने सर्वदेशे सर्वकाले च शब्दोत्पत्त्यनुरोधेन विभुत्वनित्यत्वविशिष्टतयैव आकाशः साध्यति। सिध्यत आकाशस्य विशेषगुणाश्रयत्वादिना परिच्छिन्नत्वानित्यत्वादिसाधनं नैव सम्भवति। तथेहापि। अवतारकाले भगवतो दुःखाभिनयमात्रमेव, न तु दुःखवत्वम्। 'स यश्चायं पुरुष' इत्यादेरयमर्थः - य़ोऽयं = एतल्लोकस्थः पुरुषे = शरीरे, शारीरः आनन्दमय इहोक्तः सः, यश्चासौ द्युस्थः आदित्यमण्डले, स च एकः = अभिन्नः ऐकाधिकरण्यमित्यादाविव एकशब्दः समानशब्दपर्यायः अभिन्नार्थकः। अत्र यश्चायमिति न जीवग्रहणम्। किन्तु हार्दमूर्तेः। 'स य एषोऽन्तर्हृदय आकाशः अमृतो हिरण्मय' इति श्रुतेः॥

अन्तरादित्यविद्यायाः परमात्मपरत्वे जीवननाडीभूतम् **अपहतपाप्मत्वं** किंरूपमिति विवृणुमः। पापस्पर्शगन्धराहित्यरूपत्वे पुण्यस्याभ्युपगतत्वादुपचितपुण्यशालिनो जगत्कारणत्वं भवत्वित्याक्षेपः। अत्र किञ्चिद्विमृशामः। पापाभावमात्रबोधनेन पुण्यस्याभ्युपगम इत्येतन्नोपपद्यते। पुण्यपापयोः समनियतत्वात्पुण्यसत्वे पापसत्वं पापसत्वे पुण्यसत्त्वमिति नियमात्। अनेन व्यतिरेकोपि। पुण्याभावे पापाभावः पापाभावे पुण्याभावश्च पुण्यपापयोः सन्नियोगशिष्टत्वात्। अन्यथा पापशून्यमुक्तस्यापि पुण्यवत्वप्रसङ्गेन मुक्तत्वानुपपत्तेः। एवं पुण्यविनिर्मुक्तस्य पापवत्वप्रसङ्गश्च। अतस्त्वन्मते मुक्तस्मैव दुरुपपादत्वम्। पुण्यं सुखहेतुः पापं दुःखहेतुः इत्येतावन्मात्रमेव। पापासंश्लिष्टपुण्यमात्रसंश्लिष्टो वा, पुण्यासंश्लिष्टपापमात्रसंश्लिष्टो वा पुमान् नैव भवति। 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' इति प्रतिशरीरं सुखदुःखरूपद्वन्द्वस्य समावेश एव श्रुतः। पुण्यफलानुभवितृणां स्वर्गिणामपि पापसम्बन्धवत्वमस्त्येव। नरकानुभवितृणां पापिनामपि पुण्यसम्बन्धोऽस्त्येव। अन्यथाऽनयोः स्वर्गाच्च्यवनस्य नरकाद्बहिर्गमनस्य चानुपपत्तिः स्यात्। यावदात्मभावि नरकानुभवस्वर्गानुभवावेव स्याताम्। न कोपि तीर्थकार एवमभ्युपगच्छति। सर्वपापमात्रविनिर्मुक्तो वा सर्वपुण्यमात्रविनिर्मुक्तो वा पुमान् नैव प्रसिध्यति॥

किञ्चेश्वरप्रवाहमभ्युपगतस्य तव मते पापमात्रविर्निर्मुक्तो विलक्षणपुण्यवान् स्वैश्वर्यं प्राप्तः जगदीश्वर = कारणमस्तु। पश्चात्तस्य च्यवने सः किंरूपो भवति। च्यवनमेव नास्तीत्यभ्युपगन्तुमपि न त्वं समर्थः। इन्द्रवेदव्यासादिवत् ईश्वरप्रवाहस्याभ्युपगतत्वात्। स बद्धो वा मुक्तो वा। बद्धश्चेत्पूर्नजन्मानुगुणपापादिमत्वं स्वीकार्यम्। सर्वपापविनिर्मुक्तस्यास्य पापानधिकरणत्वात्पापस्यैव नैव प्रसक्तिरिति बद्धत्वमस्य कथम्। मुक्तश्चेन्मोक्षशास्त्रवैयर्थ्यप्रसङ्गादिः। ईश्वरप्रवाहे अभ्युपगम्यमाने पूर्वमीशितुः पश्चात् च्युतस्यानन्तरागतेश्वरनियाम्यत्वमस्ति वा न वा ? न चेत्तस्य सर्वेश्वरत्वभङ्गः। अस्ति चेदस्मदादिवद्बद्धत्वमेवेति पापपुण्यसम्बन्धोऽवर्जनीयः। पापस्पर्शगन्धशून्यस्य भ्रंशकारणपापासम्भवाद्भ्रंश

**ज्ञानबलक्रिया च'**, (श्वे.६-७) **'तमीश्वराणां परमं महेश्वरं तं देवतानां परमञ्च दैवतम्**, (श्वे.६-९) **'स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता त चाधिपः'**, (यजु.आ.३-१२पुरुषसू) **'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते', 'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्'**, (तै.नारा.१.अनु.८) **'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि' इत्यादिषु परस्य ब्रह्मणः प्राकृतहेयगुणान् प्राकृतहेयदेहसम्बन्धं तन्मूलकर्मवश्यतासम्बन्धं च प्रतिषिध्य कल्याणगुणान् कल्याणरूपञ्च वदन्ति । तदिदं स्वाभाविकमेव रूपमुपासकानुग्रहेण तत्प्रतिपत्त्यनुगुणाकारं देवमनुष्यादिसंस्थानं करोति स्वेच्छयैव परमकारुणिको भगवान् ।**

---

एव न भवतीति ईश्वरप्रवाहाभ्युपगमोपि व्यर्थ एव । उपचितपुण्यविशेषवतः कारणत्वं वदतां मते सर्वैश्वर्यसम्पादानार्थं तैन पुण्यविशेषोऽनुष्ठेयः । किं तत् पुण्यमेवास्य फलं ददाति उतापूर्वम् ? अन्यद्वा किञ्चित् ? आशुतरविनाशिनः पुण्यस्य फलप्रदत्वं न भवति । अपूर्वं तु प्राभाकारेणैवाभ्युपगतम् । तत्तु पूर्वमेव निषिद्धम् । अन्यत्किमिति विमर्शे 'यज देवपूजायाम्' इत्यनुशासनबलेन देवताप्रीतिरेव वाच्या । सा देवता उपचितपुण्यविशेषेण पूर्वं प्राप्तैश्वर्यवतीति वक्तव्यम् । सा किं देवता स्वैश्वर्यविघातकपुरुषस्य प्रीता सती फलं दद्याद्वा । नहि महेन्द्र एव स्वैश्वर्यच्यवनमपेक्षपमाणः अन्यस्मै स्वैश्वर्यं दातुमीष्टे । अतो भवत्पक्षः अविचाररमणीय एव । बुद्धिमतां पुरतो न स्थातुं प्रभवति । अतोऽतिशयितपुण्यवान् पापगन्धरहितो न भवितुमर्हति । स्वादुहेतुभूतमपि मधु दुःखसम्पृक्तं त्यजत्येव, एवमेव सुखहेतुभूतमपि पुण्यं दुःखमिश्रं त्यजेदेव । अतः पापविनिर्सुक्त उपचितपुण्यविशेषो नास्तीति तस्य कारणत्वशङ्कनं दूरोत्सारितम् ।

किञ्च 'सर्वेभ्यः पाप्मभ्य' इत्यत्र पापशब्दः पुण्यस्यापि सङ्ग्राहकः । पापलक्षणस्य तत्रापि सत्त्वात् । अतः पुण्यमपि पापशब्दवाच्यमेव वेदैकगम्यानिष्टसाधनत्वस्यैव पापत्वरूपत्वात् । मुमुक्षं प्रति स्वर्गादिकस्यानिष्टत्वात्तत्साधनपुण्यस्याप्यनिष्टत्वेन पापरूपत्वात् । अत एव श्रुतौ 'न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्त' इति दुष्कृतस्येव सुकृतस्यापि पापशब्दवाच्यत्वमुक्तम् ।

किञ्च 'उदेति हवै सर्वेभ्यः पाप्मभ्य' इति एतद्विद्यावेद्यवेदितुः सर्वपापोदितत्वरूपं फलमुक्तम् । अत्र हवैघटितत्वेनानुवादरूपत्वात्पुरोवादिवाक्यमपेक्षते । पुरोवादिवाक्यं 'तत्सुकृतदुष्कृते धूनुते', 'पुण्यपापे विधूय' इत्यादिकम् । अत्र पुण्यपापविनिर्मोकोक्त्या पापविनिर्मोकोपि । ननु यदि परमात्माऽत्र बुबोधयिषितस्तर्हि उदित इत्येतत्कथं सङ्गच्छताम् । पूर्वं पापस्य वर्तमानत्वे हि तस्मादुदित इति वक्तुं शक्यम् । पापविनिर्मोकोक्तिः पूर्वं पापस्य सत्तामापादयतीति चेत् श्रुणुः । 'निरस्तनिखिलदोष' इत्यत्र कथं निर्वाहः क्रियते; तथाऽत्रापीति विभावय । तत्रापि कथमिति शंक्यते इति चेत् उत्पत्तिमारभ्य दरिद्रं प्रति निर्धन इति कथं लोकव्यवहारः । आभरणमेवाज्ञतवन्तं प्रति निराभरण इति व्यवहारश्च कथम् । सर्वदा धनादिशून्येपि व्यवहारवत्पापपुण्यरूपकर्मगन्धशून्येपि एतादृशप्रयोगो नासाधुः । अत्रोक्तमेवार्थं मनसि निधाय 'अपहतपाप्मा विजरो विमृत्यु'रित्युक्तम् । तत्रापि गतपाप्मा इति वा हतपाप्मा इति वा अनुक्त्वा अपहतपाप्मा इति स्पष्टमुक्तम् । एतेन कर्मसम्बन्धशून्यत्वं स्वरसतः प्रतीतम् । युद्धे सेनापतिः स्वसैन्यं दूरतो निक्षिप्य स्वयमेकाकी वर्तते चेत्तम् अपहतचमूः इति व्यपदिश्यते । तेन चमूदूरस्थत्वं तस्य प्रतीयते । एवमेवास्यापि कर्मदूरस्थत्वप्रतीतिरिति न दोषः ॥

ननु प्रजापतिवाक्ये जीवस्यापि 'अपहतपाप्मा विजर' इत्यादिनाऽपहतपाप्मत्वं श्रूयते । अतो नैतत्परमात्मत्वसाधकम् । न चात्र 'उदेति हवै' इत्युक्तम् अपहतपाप्मत्वं कर्मस्पर्शगन्धरहितत्वरूपमतो जीवव्यावृत्तिरिति वाच्यम् । तथा सति प्रजापतिवाक्योक्तापहतपाप्मात्वस्यैतद्रूपत्वे जीवेऽसम्भवः । अन्यथा निर्वचने वैषम्यप्रसंग इति चेदुच्यते -

**तदिदमाह श्रुतिः,** (उ.ना) **'अजायमानो बहुधा विजायते' इति । स्मृतिश्च,** (गी.४-६) **'अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् । प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया । परित्राणाय साधूनां विनाशाय च दुष्कृताम्' इति । साधवो ह्युपासकाः; तत्परित्राणमेवोद्देश्यम्; आनुषङ्गिकस्तु दुष्कृतां विनाशः, सङ्कल्पमात्रेणापि तदुपपत्तेः । 'प्रकृतिं स्वाम्' इति प्रकृतिः - स्वभावः । स्वमेव स्वभावमास्थाय ; न**

---

स्वव्यधिकरणसङ्कल्पाप्रयोज्यापहतपाप्मत्वस्यैवात्र हेतुत्वाज्जीवगतापहतपाप्मत्वस्य परमात्मसङ्कल्पाधीनत्वेन व्यधिकरणसङ्कल्पप्रयोज्यत्वमिति एतद्धेतोः सद्धेतुत्वात् ।

ननु किमिदमपहतपाप्मत्वं किं जीवपरोभयसाधारणमुत परमात्ममात्रासाधरणम् ? प्रथमे हेतोर्व्यभिचरितत्वम् । द्वितीये शब्दस्यासामञ्जस्यम् । प्रजापतिवाक्यं जीवस्वरूपप्रतिपादकतया प्रवृत्तम् । तत्र जीवस्य स्वाभाविकं स्वरूपमेव प्रतिपिपादयिषितम् । ततश्च तत्रोक्तमप्यपहतपाप्मत्वादिकं जीवस्वरूपस्य स्वाभाविकमित्यागतम् । एवञ्च स्वाभाविकापहतपाप्मत्वस्योभयसाधारण्यात्परस्योच्यमानमपहतपाप्मत्वादिकम् उभयसाधरणमेवेति परब्रह्मासाधारणापहपाप्मत्वस्यान्यस्याभावात् पूर्वोक्तदोषस्तदवस्थः । विजरत्वापिपासत्वादीनामपि स्वरूपगतत्वमेव । तदपि स्वाभाविकम् । बन्धदशायां जीवस्याजरत्वापिपासत्वादीनामसम्भव एव । तदा बद्धस्य पिपासाशनादिमत्त्वात् । अतः शरीरसम्बन्धरूपोपाधिप्रयुक्तानां तेषां दोषाणां सत्त्वान्नायमपहतपाप्मा न विजरः न विमृत्युः... । अतस्स्वरूपस्वभावविवक्षायामेव स्वरूपप्रतिपादनार्थप्रवृत्तवाक्यादपहतपाप्मत्वादिकं स्वाभाविकमिति विज्ञायत इति चेदत्रायं विवेकः - अपहतशब्दस्य प्रध्वंसार्थकत्वे परे पाप्मनां प्रागविद्यमानत्वयप्रसक्त्या मुक्तवैलक्षण्यं न स्यात् । असंस्पृष्टत्वविवक्षायां तदर्थे शब्दस्यासाधुत्वम् । कृतकर्मणोऽसंस्पर्शः अकृतकर्मणो वेति विकल्पे प्रथमे कृतकर्मणः असंस्पर्शो न भवति । द्वितीये अस्मदाद्यवैलक्षण्यम् । अकृतकर्मणोऽसंपर्शस्य सर्वेषां सम्मतत्वात् । अतः 'सर्वेभ्य पाप्मभ्य उदित' इति पाप्मभ्य उदयः, 'अपहतपाप्मे'ति पाप्मनामपहतिश्चः श्रूयते । 'नैतं सेतुमहोरात्रे तरतः, न जरा न मृत्युः न शोकः न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्त' इति प्राप्तिवाचकतरितिश्रवणात् निवृत्तिश्रवणाच्च अप्राप्तेः निवृत्तेश्च श्रूयमाणत्वात् कर्मणां उदयः हानिः अप्राप्तिः निवृत्तिश्च वाच्यानि । परस्य विभुत्वात् पापान्वितदेशात् उर्ध्वगमनरूपोदयो न सम्भवति । अतः कर्मासंश्लेष एव वाच्यः । अकृतकर्माश्लेषस्य सर्वसाधारणत्वात् कृतकर्मणामेवाश्लेष इति वाच्यम् । आशुतरनष्टकर्मणामसंलेषोक्तिरपि व्यर्थेति कृतकर्मणां फलाश्लेष इति वाच्यम् । कर्मकरणेपि फलासम्बन्धस्य हेतुश्च नोक्तः । स्वरूपस्याविर्भावितिरोधानयोरप्यनुक्त्याऽसंश्लेषस्य स्वाभाविकत्वमेषितव्यम् । हिंसार्थहानिधातुरपि न मुख्यार्थबोधनसमर्थः, अचेतनकर्मणां हिंसाया आभावात् । अतो विनाशपर्यायो हन्तिधातुः ।

कर्मस्वरूपस्याशुनाशित्वस्वभावत्वात्स्वरूपनाशप्रतिपादनमप्रयोजकम् । अतः कृतानां कर्मणां फलजननशक्तिहानिं प्रतिपादयतीति वाच्यं, 'सर्वमेकपदे नष्टं दानमाश्रोत्रिये यथा' इत्यत्र नाशः दानस्य फलजननशक्तिहानिरूपः । अत ईश्वरविरचितपुण्यपापसजातीयकर्माणि न शुभाशुभफलजननसमर्थानि । 'स न साधुना कर्मणा भूयान्नो एवासाधुना कनीया'निति श्रुतिश्चामुमर्थं विस्पष्टं बोधयति । अत्र साध्वसाधुरूपोभयकर्मफलासंस्पर्शबोधनादसाधुकर्मणां प्रायश्चित्तविनाश्यत्वमिति पक्षोपि निरस्तः । 'स न साधुना कर्मणा' इति साधुकर्मफलासंस्पर्शस्याप्युक्तत्वात् । तथा चापहतपाप्मत्वम् अस्मदीयकर्मसजातीयकर्मानुष्ठाने लीलया कृतेपि फलजननशक्तिप्रतिभटत्वम् ईश्वरस्य यत्तदेव । तद्गतमिदं स्वाभाविकं नित्याविर्भूतञ्च । नच परमात्मनि कर्मणां फलजननासामर्थ्यात्तं प्रति तेषां पाप्मत्वमेव नास्तीति शङ्क्यम् । विषस्य हरविषये फलजननसामर्थ्याभावेपि विषशब्दवाच्यत्वमिवात्रापि संभवात् । 'जरयामास तद्विषम्' इति प्रयोगात् । तिरोधानानर्हस्वाभाविकैतद्दशप्रतिभटत्वं परमात्मासाधारणम् । तिरोधानार्हसोपाधिकशक्तिप्रतिभटत्वं जीवमात्रवृत्ति ।

**संसारिणां स्वभावमित्यर्थः। आत्ममाययेति, स्वसङ्कल्परूपेण ज्ञानेनेत्यर्थः।** (वेदनिख, धर्मवर्गे. २२.श्लो.) **'माया वयुनं ज्ञानम्' इति ज्ञानपर्यायमपि मायाशब्दं नैघण्टुका अधीयते। आह च भगवान् पराशरः,** (वि.पु.६.७.७०) **'समस्ताश्शक्तयश्चैता नृप यत्र प्रतिष्ठिताः। तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत्॥ समस्तशक्तिरूपाणि तत्करोति जनेश्वर। देवतिर्यङ्मनुष्याख्याचेष्टावन्ति स्वलीलया। जगतामुपकाराय; न सा कर्मनिमित्तजा' इति। महाभारते चावताररूपस्याप्यप्राकृतत्वमुच्यते, (उद्योग) 'न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः'**

---

ननु कर्मणां फलजननशक्तिः अस्तीति सर्वसम्मतं, परमात्मनस्तु, 'स न साधुना कर्मणा भूया'नित्यादिप्रमाणतः 'नैनमहोरात्रे तरतः न सुकृतम्' इत्यादि प्रमाणतश्च शक्तिप्रतिभटत्वं स्वीक्रियते। किमर्थं जीवस्येदं स्वीकार्यम्। बद्धदशायां कृतकर्मणां फलजनकत्वस्यावश्यकत्वात्। मुक्तदशायश्च शास्त्रोक्तसुकृतदुष्कृतकर्मणामकरणात्। अन्यथा कथं तस्य मुक्तत्वं, मोक्षदशायां विदितपरमपुरुषाभिप्रायस्सान् सर्वं करोति। अतस्सुकृतदुष्कृतयो नैवः प्रसक्तिः। कर्मसम्भाव्यमान-शक्तेः प्रतिभटत्वस्यास्मिन् स्वीकारे बाधकञ्च। यदि शक्तिप्रतिभटत्वमस्य स्वरूपं तर्हि कृतेपि कर्मणि तज्जन्यफलासंश्लेषात् अस्य संसारित्वप्रसंगस्यौवानुपपत्तिः। मणे र्वह्निगतदाहकत्वशक्तिप्रतिभटत्वे मणिसमवधानदशायां कथं बह्ने र्दाहकत्व-सम्भवः ? अविद्याप्रतिभटे ब्रह्मण्यविद्याश्रयत्वं न हि सम्भवति। न च ब्रह्मणः स्वाधीनचेतनाचेतनस्वरूपस्थितिप्रवृत्तिक-त्वात्तन्नित्येच्छाधीनसिद्धत्वं केषाञ्चित्, अनित्येच्छयोत्पन्नत्वं केषाञ्चिति स्वीकाराज्जीवगतशक्तिप्रतिभटत्वस्य नित्ये-च्छाधीनत्वाद्भगवदधीनताप्रयुक्तमेव जीवस्य शक्तिप्रतिभटत्वम्। इदमेव प्रजापतिवाक्योक्तमपीति वाच्यम्। तावतापि शङ्काया अवारणात्प्रतिभटत्वं कदाचित्कदाचिच्च नेत्युक्तौ कथं चित्समाधानस्य शक्यत्वेपि प्रतिभटस्वरूपे स्थिते कथं कर्मणा फलजननमिति पूर्वपक्षस्यापरिहारात्॥

न च जीवे परतन्त्रचेतनत्वरूपस्वरूपयोग्यत्वस्य सापराधत्वरूपसहकारियोग्यत्वस्य च सत्वाद्बद्धे उभयोः, मुक्ते नित्ये च स्वरूपयोग्यत्वरूपपरतन्त्रचेतनत्वस्य च सत्वात्परमात्मन्युभयोरभावाच्च परतन्त्रचेतनत्वविशिष्टापहतपाप्म-त्वस्यैव जीवे स्वीकारेण न दोष इति वाच्यम्। उक्तयुक्त्या हेतो र्व्यभिचारवारणसम्भवेपि शक्तिप्रतिभटे कथं कृतानां कर्मणां फलजननं कथञ्च बद्धदशा इति शङ्काया अवारणात्। न च 'न कर्माविभागादि चेन्नानादित्वा'दिति सूत्रेण जीवस्य तत्कर्मणश्चानादित्वाभ्युपगमात्संसारित्वं मोक्षदशायामपहतपाप्मत्वञ्चेति न विरोध इति वाच्यम्। तथा सत्यनादिकर्म-वशात्संसरतोऽस्य बन्धदशायां शक्तिप्रतिभटत्वं नास्ति मोक्षदशायामेवास्तीत्यस्यास्वाभाविकत्वं स्यात्। नित्ये नित्येछाधीनमित्यस्यापि दत्तजलांजलित्वं स्यात्। मोक्षानन्तरमेतदभ्युपगमस्य प्रयोजनाभावाच्च। पश्चात्सुकृतष्कृतयोर-करणात्तच्छक्तिप्रतिभटत्वस्यानावश्यकत्वाच्च। परस्य त्वेतदङ्गीकारे प्रयोजनवत्त्वम्। अस्मत्कृतकर्मसजातीयकर्मणां लीलया कृतानामश्लेषावश्यकत्वादिति चेत् सत्यम्, उभयोरप्यपहतपाप्मत्वादिगुणाष्टकं श्रुतिषु प्रतिपन्नम्। परस्य तु स्वाभाविकं जीवस्य तत्त्वौपाधिकमिति विशेषः। गुणाष्टकमध्यपतितजरापिपासादिरहितत्वमपि किंरूपमिति विचारे जीवस्वरूपे वा परस्वरूपे वा पिपासाक्षुत्प्रभृतिः नास्ति। न हि जीवस्वरूपस्य मरणं शोको वा। शरीरसम्बन्धे सत्येव एतत्सर्वम्। परमात्मनोप्यवतारदशायां बाल्ययौवनमरणपिपासाश्रमादिकं वर्तते। जीवस्यापि।

कर्मसम्बन्धवतो जीवस्य नेदमभिनयरूपम्। परन्तु वास्तवम्। पिपासितः, क्षुधा पीडितः, उत्पन्नः, मृत इति वास्तवव्यवहारात्। परस्याप्यप्राकृतशरीरवति एतत्सर्वस्य दर्शनेप्यभिनयरूपत्वमेति स्वीकार्यम्। परस्य स्वरूपतो वाऽवतारदशायां वा वस्तुतः पिपासामरणाद्यसम्भवात्सर्वेषामेतेषां मुख्यत्वम्। कार्त्स्न्येनाभिव्यक्तस्वरूपत्वादिति सूत्रादि-परामर्शेपि बद्धदशायां वर्तमानं सर्वमनभिव्यक्तमकार्यकरमिति प्रतीयते। 'देहयोगाद्वा सोपी'ति सूत्रपरामर्शे चानादिपापवतां पापजन्यशरीरादिसम्बन्धात्तिरोभाव इति ज्ञायते। स्वाभाविकमपि शक्तिप्रतिभटत्वमनादिकर्मसहकृतश्चेत्तिरोहितं भवति।

**इति। अतः परस्यैव ब्रह्मण एवंरूपरूपवत्त्वादयमपि तस्यैव धर्मः। अत आदित्यमण्डलाक्ष्यधिकरणः आदित्यादिजीवव्यतिरिक्तः परमात्मैव॥ २१॥**

## भेदव्यपदेशाच्चान्यः १ । १ । २२ ॥

**आदित्यादिजीवेभ्यो भेदो व्यपदिश्यतेऽस्य परमात्मनः,** (बृ.५-७-९) **'य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयति',** (बृ.५-७-२२) **'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति' इति।** (सुबा.७.ख) **'योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं यमक्षरं न वेद, यो मृत्युमन्तरे सञ्चरन् यस्य मृत्युः शरीरं यं मृत्युर्न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' इति चास्यापहतपाप्मनः परमात्मनस्सर्वान् जीवान् शरीरत्वेन व्यपदिश्य**

---

तदा कर्मणां फलजननशक्तिः पापेनोत्तभ्यते। सा च कार्यकरी। मणिमूलं दाहकत्वशक्तेः स्वाभाविक्यास्तिरोभावेपि उपर्युत्तेजकसत्वे यथा शक्त्याविर्भावस्तथैवानादिकर्मरूपोत्तेजकबलात् शक्तिप्रतिभटत्वस्य तिरोभावः, शक्तेः प्रादुर्भावश्चेति न किञ्चिदिहानुपपन्नम्। शरीरविशिष्टस्य जीवस्य मरणच्छेदनादियोग्यत्वात् दग्धः, मृतः, च्छिन्न इति व्यवहारेपि जीवस्वरूपे न तद्व्यवहारस्तथैव पापसम्बन्धदाहमरणक्षुत्पिपासादेः संसारदशायां सत्त्वेपि मुक्तदशायां स्वाभाविकस्य स्वरूपस्याविर्भावः। यथा 'अच्छेद्योऽयमदाह्योऽय'मित्यादिस्वरूपपरं तथैवापहतपाप्मत्वादिकम्। मणिगतमलप्राक्षालने ज्योत्स्नायाः स्थितताया आविर्भाव इव जीवस्यापि स्वाभाविक एवाविर्भवति। न त्वपहतपाप्मत्वादि कल्प्यते। कल्पनायामेव किमर्थं स्वीकार्यमित्यादि विचारः॥

ननु वह्न्यादिस्थले शक्तिप्रतिबन्धकमणिसमवधानमुत्तेजकसमवधानञ्च युज्यते। तथाऽत्रोपपादनं न युक्तम्। कर्मसम्भाव्यमानफलजननशक्तिः तत्प्रतिभटे जीवस्वरूपे स्थिते एव निरुद्धा कर्मणैवोत्तभ्यत इति कथं वक्तुं शक्यम्। मणिसमवधानदशायां वह्निगतदाहकत्वशक्तिः रुद्धापि वह्निनैवोत्तभ्यत इति न कोपि ब्रूयात्। अतो वैषम्यमिति चेत् ब्रूमः - जीवेन स्वेन क्रियमाणस्य कर्मणः फलोत्पादकत्वशक्तिः स्वेनैव प्रतिरुध्यत इति वा कथं भवद्भिरुपपाद्यते? न हि वह्निगतफलशक्तिः वह्निना प्रतिरुध्यते। स्वकृतकर्मणा जायमानां फलशक्तिं स्वयमेव निवारयतीति चेत् - स्वकृतयागादिगतस्वर्गोत्पादकशक्तिमपि स्वयं निरुन्ध्यात्। तदा सर्वशास्त्रोपप्लवप्रसङ्गः अकृताभ्यागमकृतविप्रणाशप्रसङ्ग एवेति कर्मणोऽनादित्वं सर्वमतसम्प्रतिपन्नमपगच्छेत्। कथमिदं भगवतीति चेत्, सर्वसमर्थस्य भगवत इदं नानुपपन्नम्। मनुष्यकृतकर्मसजातीयानि कर्माणि स्वेच्छया लोकोपकाराय भगवता क्रियन्ते। अतस्सर्वशक्तस्य सर्वमिदमुपपन्नं भवति। तर्हि प्रकृते निर्वाहः कथमिति चेत्स्वकृतकर्मणः फलजनकत्वशक्तिप्रतिरोधं यथा स्वयं प्रतिभटस्सन् करोति, तथैवानादिकर्म वा भगदविच्छैव वा उत्तेजकीभूत्वा शक्तिप्रतिभटजीवशक्तिं रुध्वा कर्मफलशक्तिं चोत्तम्भयतीति न दोषः॥

एतेनैतादृशशक्तिप्रतिभटत्वरूपस्यापहतपापमत्वस्य जीवेऽभ्युपगमो व्यर्थः संसारदशायां वा मुक्तदशायां वोपयोगाभावात्। पूर्वत्र तिरोधानेन न कार्यकरत्वमुत्तरत्र पापादीनामेवाप्रसक्त्याऽनुपयोगः। न हि तत्र शक्तिप्रतिभाटत्वस्य प्रदर्शनमावश्यकम्। कर्मण एवाभावात्सम्भाव्यमानशंक्तेश्च सुतरामसत्वात्। नहि वह्नेरेवासत्त्वे तद्गतदहनशक्तिविघटनाय मन्त्रौषधादिकं निक्षिप्यते। अत इदमपहतपाप्मत्वम् अजागलस्तनायितमिति शङ्कनमपि निरस्तम्॥

**आदित्यादीति**। सूत्रस्थचशब्दः पूर्वापरसूत्रेषु योजनीयः। आदिशब्देनान्तर्यामिब्राह्मणमुपात्तम्। सर्वेभ्योपि भेदोपपादनं ग्राह्यम्। मुक्तावस्थायामपि भेदज्ञापनाय, 'य आत्मनि' इति पर्यायस्योक्तिः। ननु आदित्यमण्डलान्तर्वर्तिन

**तेषामन्तरात्मत्वेनैनं व्यपदिशति। अतस्सर्वेभ्यो हिरण्यगर्भादिजीवेभ्योऽन्य एव परमात्मेति सिद्धम् ॥२२॥**

इति अन्तरधिकरणम् ॥ ७ ॥

आकाशाधिकरणम् ॥ ८ ॥ (छा.१-९-१)

(तै.भृ.१) **'यतो वा इमानि भूतानि जायन्ते' इति जगत्कारणं ब्रह्मेत्यवगम्यते। किं तज्जगत्कारणमित्यपेक्षायम्,** (छा.६.२.१) **'सदेव सोम्येदमग्र आसीत्',** (छा.६-२-३) **'तत्तेजोऽसृजत',** (ऐ.१.१.१) **'आत्मा वा इदमेक एवाग्र आसीत्',** (ऐ.१-१-२) **'स इमाँल्लोकानसृजत',** (तै.आन.१) **'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' इति साधारणैश्शब्दैर्जगत्कारणे निर्दिष्टे ईक्षणविशेषानन्दविशेषरूपविशेषार्थस्वभावात्प्रधानक्षेत्रज्ञादिव्यतिरिक्तं ब्रह्मेत्युक्तम्। इदानीमाकाशादिविशेषशब्दैर्निर्दिश्य जगत्कारणत्वजगदैश्वर्यादिवादेऽपि आकाशादिशब्दाभिधेयतया प्रसिद्धचिदचिद्वस्तुनोऽर्थान्तरमुक्तलक्षणमेव ब्रह्मेति प्रतिपाद्यते 'आकाशस्तल्लिङ्गादि'त्यादिना पादशेषेण।**

---

जीवत्वशङ्कायाम् आदित्यस्य परस्य च भेदसाधकान्तर्यामिब्राह्मणोपादानेन किं फलितम्। तत्प्रमाणेनादित्यस्य परस्य च भेदोऽस्तु तत्र। एतद्विद्याप्रतिपाद्यो जीवो भवतु। अन्तर्यामिब्राह्मणे परमात्मनः सिद्धिरस्तु। तेनात्र विद्यायां किं फलितमिति चेत्सर्वशाखाप्रत्ययन्यायेनान्तर्यामिविद्यायामादित्यभिन्नस्य कारणत्वान्तर्यामित्वोक्तेः अस्यां विद्यायामन्यस्य कारणत्वोक्तिः विरुद्धा इत्याशयात्। एतेनादित्यस्य परस्य च भेदसिद्धावप्यन्तरादित्यविद्याप्रतिपन्नादित्यजीवस्यान्तर्यामी पर इति 'य आदित्ये तिष्ठन्' इत्यादिकं वदति। अतो नात्र परब्रह्मविषयकत्वमिति शङ्कापि निरस्ता। अत्र द्वादशादित्यो विष्णुः न मण्डलपुरुषः तस्य सर्वदा तत्राभावादिति सारावलीटीका॥ इति अन्तरधिकरणम्॥

आकाशाधिकरणम्

पूर्वं चतुस्सूत्र्या शास्त्रारम्भसमर्थनं व्यरचि। तदनन्तरमधिकरणत्रयेणाचेतनस्य चेतनसामान्यस्योपचितपुण्यविशेषरूपजीवस्य वा जगत्कारणत्वनिरासेन वेदान्तानां ब्राह्मणि तात्पर्यं प्रत्ययादि। इतः परं पादशेषेणाचेतनविशेषस्याऽऽकाशस्य प्राणस्य ज्योतिषो जीवविशेषस्य च जगत्कारणत्वनिरासेन ब्रह्मैव कारणतया वेदान्तप्रतिपाद्यमिति निर्णीयते। यद्यप्यन्तरादित्यविद्यामामेव 'तस्य यथा कप्यास'मित्यादिश्रुतिबलेन पुण्डरीकाक्षस्य नारायणस्य जगत्कारणत्वोक्तेर्देवताविशेषनिर्णय आसीत् चेतनाचेतनवैलक्षण्यसिद्धिश्च फलिता, अथाप्युपरि बहूनामुमासनानां वक्ष्यमाणत्वात् तदुपयुक्तानेकविद्या भागार्थविचारणस्यावश्यकत्वात्तन्न्यायेन भगवतोऽनेककल्याणगुणाकरत्वं स्थाप्यत इत्युपरिविचारारम्भः। उक्ते सिद्ध एवार्थे प्रकारान्तरेण चलनसम्भावनया तन्निरासार्थं स्थाप्यते। स्थापनानन्तरमपि तत्तद्घट्टपर्यालोचनया पूर्वपक्षहेतुभूतश्रुतिलिङ्गादिभेदमवलम्ब्य पूर्वाधिकरणसिद्धार्थे आक्षेपसम्भवनया उपर्यधिकरणानां प्रवृत्तिः। एवं तत्तद्विद्यानां ब्रह्मपरत्वं निषिध्य तमेव निषेधमुपजीव्येतरविद्यास्वपि ब्रह्मनिषेध इति शङ्कायां तत्परिहारायाधिकरणान्तराणामरम्भ इति। ईक्षत्यधिकरणम् आनन्दमयाधिकरणम् अन्तरधिकरणम् - एतत्त्रितयमेकपेटिका। इतउपरि अधिकरणचतुष्टयमेकपेटिकेति विज्ञेयम्।

जगत्कारणवाचिसद्ब्रह्मात्मादिसामान्यशब्देषु संशय्य सङ्कल्पानन्दाभ्यासशुद्धसत्त्वमयरूपैरसाधारणैरभिमतपरमात्मपर्यवसानं कृतम्। पूर्वत्र विद्यात्रये विशेषनामधेयाभावात्तथा निर्णयः कृतः। वक्ष्यमाणाधिकरणादिषु आकाशादिवस्त्वन्तर एव व्युत्पन्नैरसाधारणवचिभिः शब्दैर्जगत्कारणस्य निर्दिष्टत्वादन्यथयितुमशक्यत्वाच्च विशेषनाम-

## आकाशस्तल्लिङ्गात् १।१।२३॥

**इदमाम्नायते छान्दोग्ये,** (छा.१-९-१) **'अस्य लोकस्य का गतिरिति। आकाश इति होवाच, सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते ; आकाशं प्रत्यस्तं यन्ति। आकाशो ह्येवैभ्यो ज्यायान् आकाशः परायणम्' इति। तत्र संदेहः - किं प्रसिद्धाकाश एवात्राकाशशब्देनाभिधीयते, उतोक्तलक्षणमेव ब्रह्म इति।**

**किं प्राप्तम्? प्रसिद्धाकाश इति। कुतः? शब्दैकसमधिगम्ये वस्तुनि य एवार्थो व्युत्पत्तिसिद्धश्शब्देन प्रतीयते, स एव ग्रहीतव्यः। अतः प्रसिद्धाकाश एव चराचरभूतजातस्य कृत्स्नस्य कारणम्। अतस्तस्मादन-**

---

धेयवाचिशब्दपुरस्कारेण पूर्वपक्षे प्रवृत्ते तेषामपि शब्दानां स्वाभिमतविशेषपर्यवामानमत्र क्रियते। पूर्वं संशयव्युदासः। अत्र विपर्ययव्युदासः। श्रुतिलिङ्गयोर्मध्ये श्रुतेर्बलीयस्त्वात्प्रसिद्धाकाशवाचकश्रुतिबलादाकाशस्यैव कारणत्वमिति सङ्कल्पादिलिङ्गानां दुबर्लत्वमिति पूर्वपक्षः। रुढेर्बलीयस्त्वादपि प्रसिद्धाकाशः प्राणयोः रुढस्याकाशप्राणशब्दस्यावयव-व्यवस्थापकत्वरूपयोगबलेनार्थवर्णनमप्यनुपपन्नमिति च शङ्कावसरः। आद्याधिकरणद्वये योगरूपवृत्त्या समाधानम्, अनन्तराधिकरणद्वये अपर्यवसानवृत्तिरूपरूढ्या समाधानमिति च द्रष्टव्यम्। अत्रापि प्रथमे शब्दविशेषमवलब्म्य पूर्वपक्षः, अर्थविरोधोद्घाटनेन परिहारः। द्वितीये अर्थाविरोधमादाय पूर्वपक्षः। विरोधोद्घाटनमुखेन परिहारः। तृतीयेऽल्पानुकूल-लिङ्गसद्भावः विरोधिलिङ्गाभावश्च पूर्वपक्षहेतु। चतुर्थे विरोधिलिङ्गाभावेप्युपक्रमवाक्यस्थविरोधिलिङ्गप्रदर्शनं हेतुः॥

आकाशवायुतेजःक्रममादायाधिकरणप्रवृत्तिः। प्रथममाकाशपदघटितवाक्यविचारः, आदित्यपुरुषप्रतिपादक-खण्डसमनन्तरखण्डप्रतियाद्यत्वादाकाशस्य। पूर्वं हिरण्मयपुरुषदृष्टिविधानमुद्गीथे। अत्र परोवरीयस्त्वादिविशिष्टाकाश-दृष्टिविधानम्। उभयत्र परमात्मदृष्टिविधानमेवोद्गीथे। 'आकाश आनन्दो न स्यात्' इत्याकाशस्योपस्थितत्वाच्च आकाशपद-घटितवाक्यविचारः। अत्राकाशशब्दस्य परमात्मपरत्वनिश्चये 'आकाश आनन्द' इत्यात्राप्याकाशपदस्यार्थनिश्चयः। आकाशप्राणौ अचेतनौ। उपरि चेतनविषये पूर्वपक्षः। साक्षात्कारणत्वबोधकवाक्यविचार आद्यधिकरणद्वये। कारणत्वा-क्षेपधर्मवद्वाक्यविचारः उत्तराधिकरणद्वये। पूर्वत्र रूढिभङ्गः। उत्तरत्र रूढ्यर्थापरित्यागः।

**इदमिति**। शिलकः दाल्भ्यः जैबिलि इत्येते उद्गीथे कुशलाः समवेताः कथां चक्रुः। जैबिलिः क्षत्रियः, इतरौ ब्राह्मणौ। जैबिलिप्रार्थनया तौ वादं चक्रतुः राज्ञोऽस्य समीपे। शिलकेन पृष्टो दाल्भ्यः, साम्नः गतिः स्वरः, स्वरस्य प्राणः, प्राणस्य अन्नम्, अन्नस्य आपः, तासां द्युलोक इति उत्तरोत्तरगतिप्रश्ने समाधिमुवाच। एतदुपरि शिलकः दोषमुक्त्वा द्युलोकस्यपि पृथिवीगतिः इत्युक्त्वा विरराम। एतदपि निराकृत्य राजा प्रवाहणः आकाशएव सर्वस्यापि गतिरित्युवाच। अत्र विचारः - **गतिः** = उपजीव्यमित्यर्थः। अत्राकाशस्य ज्यायस्त्वपरायणत्वपरोवरीयस्त्वादिगुणाः प्रतिपाद्यन्ते। एतादृशगुण-विशिष्टाकाशरूपपरमात्मदृष्टिरुद्गीथे विधीयत इति सन्दर्भः। **उतोक्तलक्षणं ब्रह्मेति** = स्वमतसिद्धार्थानुवादः। **प्रसिद्धा-काश** इति। यद्यपि 'आत्मन आकाशः सम्भूतः आकाशाद्वायुः' इत्यादावेवाऽऽकाशशब्द आकाशरीरकपरमात्मपर इत्यर्थो निश्चितः, शरीरवाचिशब्दः शरीरिपर्यन्तं पर्यवस्यतीत्यपि निर्णीतम्। अथापि लौकिकप्रसिद्धिर्नास्तीति सूचनार्थमाकाशे प्रसिद्धत्वविशेषषंम्। शरीरत्वावगमेपि तावत्पर्यन्तं शब्दस्य रूढिरित्यपि न ज्ञातम्। 'चराचरव्यपाश्रयस्तु' इत्यादावेवास्या-र्थस्य प्रतिपादनात्। विशेषव्यवस्थापकशब्दश्रवणात्सामान्यशब्दानां तदनुसारेणैव नेयत्वम्। अचेतनासम्भवितगुण-श्रवणेपि तेषां गौणत्वमेवास्थेयम्। लिङ्गापेक्षया श्रुतेर्बलीयस्त्वादिति सारम्। आत्मशब्दोपि न चेतनैकान्तः। आप्नोतीति अत्र व्युत्पत्तौ व्याप्तिमात्रमेवोक्तं, न तु नियमनपूर्वकव्याप्तिः। अतो भगवत्येव जीववैलक्षण्येन पर्यवसानं वाच्यमिति न निर्बन्धः। गुणानां गौणत्वकल्पनेऽन्यदपि कारणम्। धर्मिवाचकपदेन प्रथमोपस्थितिर्यस्य स एव ग्राह्यः गुणवाचकपदाना-

**तिरिक्तं ब्रह्म। नन्वीक्षापूर्वकसृष्ट्यादिभिरचेतनाज्जीवाच्च व्यतिरिक्तं ब्रह्मेत्युक्तम्। सत्यमुक्तम्; अयुक्तं तु तत्। तथा हि - 'यतो वा इमानि भूतानि जायन्ते ... तद्ब्रह्म' इत्युक्ते, कुत इमानि भूतानि जायन्त इत्यादिविशेषापेक्षायाम्, 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' इत्यादिना विशेषप्रतीतेः जगज्ज-**

---

मप्रधानत्वात् तत्प्रतिपाद्यगुणानामेवामुख्यत्वम्। धर्मिवाचकपदानामाकाशवाचकानां बहुत्वाच्च न सर्वेषाममुख्यत्वकल्पनं न्याय्यमिति च।

'आत्मन आकाशस्सम्भूत' इति श्रुतिं पुर्वपक्षप्रदर्शनमुखेनान्यथयति **नन्विति। सूक्ष्मावस्थेति**। नन्वाकाशस्य सूक्ष्मावस्था आकाशतन्मात्रावस्था ततोपि सूक्ष्मावस्था महत्त्वावस्था ततः पूर्वमपि प्रकृतिः। एवञ्च सर्वावस्थासाधारण्यं प्रकृतेरेवेतीदं वाक्यं प्रकृतिकारणत्व एव पर्यवस्यति। यद्यपि 'इमानि भूतानी'त्युक्त्या वाय्वादिभूतानामेव परामर्शात्तेषां प्रति कारणत्वमत्रोच्यत इति वक्तुं शक्यं, तथापि वाय्वादिनिरूपितकारणत्वस्याकाशे प्रतिपादने आकाशवायुसर्ववस्तु-निरूपितकारणत्वाश्रयकारणान्तरव्यावृत्तेरसम्भव इति चेदत्रायं भावः - अत्र भूतपदं प्राण्यर्थकं जीवन्तीति पदश्रवणात्। सर्वनिरूपितकारणत्वमेवात्र बोध्यते। रूढ्या च सर्वं प्रति कारणमाकाश एवेति चातोवगम्यते। अतो यथा ईक्षणादिकं गौणं, तथा प्रकृतिमहदहंकारादिबोधकश्रुत्यादिकमपि गौणम्।अतो न दोषः। यद्वा सूक्ष्मावस्था अत्रिवृत्कृतावस्था॥

अयमत्र पूर्वपक्ष्याशयः - कारणवाक्यवेद्यमचेतनभिन्नम् ईक्षणादि श्रवणात् इति न वक्तुं शक्यते 'आकाशादेव' इत्यादिना अचेतनस्यैव कारणत्वबोधनात्। अत्र हि पञ्चम्यर्थकारणोद्देशेन कारणत्वं विधीयते। अतस्तद्विरोधादुक्तानुमानं बाधितम्। देवतोद्देशेन द्रव्यत्यागात्मकयागादिघटितहोमे द्रव्यसामान्यप्रतीतावपि 'दध्ना जुहाती'ति यथा दधिरूप-विशेषद्रव्यपर्यवसानं, यथा 'पशुना यजेत' इत्यत्र 'छागो वा मन्त्रवर्णात्' इति छागरूपपशौ पर्यवसानं, तथा सदेवेति सामान्यतः कारणत्वेनावगतेः सच्छब्दवाच्यः आकाश इति विशेषपर्यवसनम्। अतोऽचेतनमाकाश एव कारणम्। न च 'अस्य लोकस्य का गतिः' इत्येतत्प्राप्यत्वपरं न तु कारणत्वपरम् इति वाच्यम्। 'साम्नो गतिः स्वर' इति होवाच इत्यादिभिः कारणत्वस्यैवाभिधानेन कारणत्वपरत्वादस्य वाक्यस्य। साम हि स्वरज्ञानजन्यम्, अतो ज्ञायमानः स्वरः तस्य कारणं, स्वरस्य प्राणः कारणं, शब्दात्मकस्वरस्य 'अभेदव्यापिनो वायोः' इत्यादिप्रमाणात्। प्राणे चान्नस्य कारणत्वमन्नस्य वृष्टिकार्यत्वात्। मेघाद्यश्रयोर्ध्व लोकस्य तं प्रति यज्ञादिद्वारा एतल्लोकस्य कारणत्वात्। अतः कारणप्रश्न एवायमिति न प्राप्यत्वपरम्। न च सदादिपदबोध्ये आकाशे ईक्षणाद्यन्वयो न सम्भवतीति वाच्यम्। ईक्षणस्य गौणत्वाङ्गीकारात्। चेतनकारणत्वस्य प्रमाणान्तरसिद्धत्वे आकाशशब्दस्य क्लिष्टतयाऽर्थवर्णनं न्याय्यम्। 'आदित्यो यूप' इत्यत्र प्रत्यक्षप्रमाण-विरोधेन यूपादित्योरैक्यं परित्यक्तम्। अत्र कारणवस्तुनोऽचेतनस्य प्रतिपन्नत्वादर्थान्तरकल्पनं त्वन्याय्यमेव। अत आकाश-शब्दस्य योगार्थस्वीकारापेक्षया ईक्षत्यादीनां लक्षणाकल्पनमुचितम्।

न च ईक्षण-आनन्दाभ्यासादिसर्वस्य लक्षणाकल्पनापेक्षया एकस्याकाशपदस्य लक्षणा युक्तेति वाच्यम्। धर्मि-वाचकपदलक्षणाया अनुचितत्वात्। 'आकाशादेव', 'आकाश इति होवाच, आकाशं प्रत्यस्तं यन्तीति, आकाशो...ज्यायान् परायणम्' इत्यादिषु बहूनामाकाशपदानां योगकल्पनस्य सिद्धान्तेपि सत्त्वात्। अतो रूढ्यर्थपरित्यागस्यानुचित्वाद्रूढि र्योगमपहरतीति न्यायाच्चाऽऽकाश एव जगत्कारणम्। अपि च श्रुति लिङ्गयोर्विरोधे श्रुतेर्बलीयस्त्वमपि पूर्वतन्त्रसिद्धम्। अत आकाशश्रुतिर्बलीयसी। एवञ्च सदेवेत्यादिश्रुतौ सत्पदार्थस्य सामान्यस्य विशेषाकाङ्क्षायामीक्षणादिलिङ्गं श्रुति-कल्पनाद्वारा चेतनं जगत्कारणमित्यर्थबोधने प्रमाणं भवेत्। आकाशश्रुतिस्तु विशेषाकाङ्क्षां साक्षादेव शमयति। अतोऽ-विलम्बितप्रतीत्याऽर्थबोधनमिति श्रुतिरेव प्रमाणम्। अतस्सत्पदस्याकाशश्रुत्या विशेषपरत्वे निश्चिते ईक्षणादीनां लक्षणा-कल्पनं फलमुखत्वान्न दोषः।

**न्मादिकारणमाकाश एवेति निश्चिते सति,** (छा.६-२-१) **'सदेव सोम्येदमग्र आसीत्' इत्यादिष्वपि सदादिशब्दास्साधारणाकारास्तमेव विशेषमाकाशमभिदधति ।** (ऐ.१-१-१) **'आत्मा वा इदमेक एवाग्र आसीत्' इत्यादिष्वात्मशब्दोऽपि तत्रैव वर्तते ।**

**एवं प्राप्ते ब्रूमः - आकाशस्तल्लिङ्गात् । आकाशशब्दाभिधेयः प्रसिद्धाकाशादचेतनादर्थान्तरभूतो यथोक्तलक्षणः परमात्मैव । कुतः ? तल्लिङ्गात् । निखिलजगदेककारणत्वम्, सर्वस्माज्ज्यायस्त्वम्, परायणत्वमित्यादीनि परमात्मलिङ्गान्युपलभ्यन्ते । निखिलकारणत्वं ह्यचिद्वस्तुनः प्रसिद्धाकाशशब्दाभिधेयस्य**

---

न च 'आत्मा इदमेक एवाग्र आसीत्' इति चेतनरूपविशेषबोधनादीक्षणादीनामपि गौणत्वं विना निर्वहसम्भवाच्च चैतनस्यैव कारणत्वसिद्धिरिति वाच्यम् । आत्मशब्दस्य चेतनाचेतनोभयसाधारणत्वेनाप्रयोजकत्वात्तेन विशेषपर्यवसानायोगात् । शब्दद्वयस्य रूढत्वसामान्येप्याकाशशब्दस्य व्यवस्थितरूढिशक्तिकत्वादात्मशब्दस्य नानार्थसाधारणशक्तित्वाच्चाऽऽकाशशब्दे रूढिभङ्गस्वीकारानौचित्यात् । आत्मशब्दस्य नियन्तृवाचित्ववत् स्ववाचित्वस्यापि सत्त्वात् 'आत्मन आकाशः सम्भूत' इत्यत्रात्मशब्दस्य सूक्ष्मावस्थस्ववाचित्वोपपत्तेः । तस्मात्स्थूलावस्थस्योत्पत्तौ बाधकाभावात् । उपादानोपादेययोरभेदस्य सिद्धत्वादिदं नानारूपमग्रे एवं स्वमासीदित्यर्थोपपत्तेश्च । आत्मन इत्येतत्सूक्ष्मावस्थस्वात्मकाकाशपरम् । आकाशः सम्भूत इत्यत्र भूताकाशपरत्वम् । आकाशादेवेत्यत्र तन्मात्ररूपसूक्ष्माकाशपरत्वमिति न दोषः । निरतिशयानन्दवत्वरूपानन्दमयत्वस्यापि दुःखाभाववत्वरूपगौणार्थे तात्पर्यकल्पनासम्भवाच्च । अत ईक्षणश्रुतेरानन्दश्रुतेश्च गौणत्वम् ।

यद्यपि 'आकाशः सम्भूत' इति कार्यत्वलिङ्गमादाय कथमाकाशस्य कारणत्वमिति शङ्कायामीक्षणादिलिङ्गबाधवत्कार्यत्वलिङ्गस्यापि बाध एवेति समाधानं वक्तुं शक्यम्, अथापि तदैक्षत इत्याद्युक्तेक्षणादेर्गौणत्वकल्पनमिव अत्रत्यसम्भूतशब्दस्य गौणत्वकल्पनमनुचितम् । यत 'आकाशाद्वायु'रित्यादावपि सम्भूतशब्दस्यानुवृत्तेस्तत्रान्यथार्थकल्पने वैरूप्यं स्यात् । अनुषक्तस्य सम्भूतशब्दस्यानेकार्थत्वकल्पेने गौरवञ्च । अतोऽवस्थाद्वयमादाय भाष्ये निर्वाहः कृतः । यद्यपि आत्मशब्दः शरीरप्रतिसम्बन्धिरूपार्थमेव बोधयेत् । यत्रानुपपत्तिप्रतिसन्धानं तत्रैवान्यथानिर्वाहः । तथाप्यत्र प्रकरणे 'अयमात्मा', 'आकाश आत्मा' 'आदेश आत्मा' 'योग आत्मा' इति शरीरिभिन्नस्यैवात्मपदेन बोधनादत्रापि तथैवाचेननार्थबोधकत्वे औचित्यात् । 'आनन्दो ब्रह्मे'त्यानन्दशब्दोपि विशेषनिर्णायको न भवति । 'यदेष आकाश आनन्दो न स्यात्' इत्याकाशशब्दसामानाधिकरण्यादाकाशानन्दशब्दयोः विशेषणविशेष्यभावे विनिगमकाभावाच्चार्थविशेषनिर्णायकत्वाभावात् । 'आकाशादेव' इति विशेष्यमात्रनिर्देशेनार्थनिश्चायकत्वाच्च । आनन्दमीमांसायामचेतनवस्तुन्यप्यानन्दशब्दप्रयोगाच्चेतनविशेषनिर्धारणासम्भवात् । अनुकूल इत्यप्यर्थवर्णनसम्भवाच्च । अतो योगाद्रूढिर्बलीयसीति न्यायं वा श्रुति र्लिङ्गाद्बलीयसीति शास्त्रमुपजीव्य वा पर्यालोचने लिङ्गयोगयोर्विलम्बितधीहेतुत्वमेव । शीघ्रधीहेतुभूतरूढिश्रुतिमूलं प्रसिद्धाकाशस्यैव कारणत्वं युक्तम् । न च 'एको ह वै नारायण आसीत्' इत्यत्र नारायणशब्दस्य रूढिः परित्याज्या स्यादि वाच्यम्, इष्टापत्तेः । अनेकाकाशशब्दरूढित्यागापेक्षया एकत्ररूढिपरित्यागस्यादोषत्वात् । नूतनधर्मिकल्पनापेक्षया क्लृप्तेनैवाकाशेन निर्वाहकरणस्य युक्तत्वाच्च ॥

**निखिलजगदेककारणमिति** । 'सर्वाणि हवा इमानि' इति सर्वशब्दश्रवणात्सर्वजगत्कारणत्वमेवात्र विवक्षितम् । वाय्वादिनिरूपितकरणत्वमात्रपरतया निर्वाहे सर्वशब्दः सङ्कोचनीयः । अत आकाशशब्दो नान्तरिक्षवाची । न च पूर्वं सामगतित्वेन द्युलोकभूलोकयोः प्रस्तुतत्वात्तन्मध्यगतान्तरिक्षग्रहणे औचित्यमस्तीति वाच्यम् । पूर्वोक्तस्य सर्वस्यापि

**नोपपद्यते; चेतनवस्तुनस्तत्कार्यत्वासम्भवात्। परायणत्वञ्च चेतनानां परमप्राप्यत्वम्। तच्चाचेतनस्य हेयस्य सकलपुरुषार्थविरोधिनो न सम्भवति। सर्वस्माज्ज्यायस्त्वं च निरुपाधिकं सर्वैः कल्याणगुणैः सर्वेभ्यो निरतिशयोत्कर्षः। तदप्यचितो नोपपद्यते॥**

**यदुक्तं - जगत्कारणविशेषाकाङ्क्षायामाकाशशब्देन विशेषसमर्पणादन्यत्सर्वं तदनुरूपमेव वर्णनीयमिति - तदयुक्तम्; 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' इति प्रसिद्धवन्निर्देशात्। प्रसिद्धवन्निर्देशो हि प्रमाणान्तरप्राप्तिमपेक्षते। प्रमाणान्तराणि च,** (छा.६-२-१) **'सदेव सोम्येदमग्र आसीत्' इत्येवमादीन्येव वाक्यानि। तानि च यथोदितप्रकारेणैव ब्रह्म प्रतिपादयन्तीति तत्प्रतिपदितं ब्रह्म आकाशशब्देन प्रसिद्धव-न्निर्दिश्यते। सम्भवति च परस्य ब्रह्मणः प्रकाशकत्वादाकाशशब्दाभिधेयत्वम् - आकाशते, आकाशयति**

---

सान्तत्वेन गतित्वं न भवति। अनन्तस्यैव गतित्वमिति मन्यमानेन प्रवाहणेनास्य वाक्यस्योक्तत्वात् सान्तान्तरिक्षग्रहणे अनौचित्यात्। भूतशब्दस्यास्य पर्यालोचनेपि नाचेतनस्य कारणत्वसम्भवः। भूतशब्दो ह्यचित्संसृष्टचेतनवाची, 'यतो ... इमानि भूतानि जीवन्ति..अभिप्रयन्ति' 'न हिंस्यात्सर्वा भूतानि', 'भूतानां प्राणिनः श्रेष्ठा' इत्यादि प्रयोगात्। उक्तस्थलेषु अचेतनमात्रवाचित्वं हि न शक्यवचनं 'जीवन्ति' 'हिंस्यात्' इत्यादिबाधकसद्भावात्। अतश्चिदचिदात्मकसर्वप्रपञ्चकारण-त्वमुच्यमानं न भूताकाशस्य। अत्र निमित्तकारणस्य पृथगनुक्तत्वादस्यैवाकाशशब्दवाच्यस्य निमित्तत्वं वक्तव्यम्। भूताकाशस्य तु सङ्कल्पानाश्रयत्वेन न निमित्तत्वमपि। प्राप्यत्वं तु न सुतराम्। 'का गतिः' इति प्राप्यवस्तुप्रश्नादस्य प्राप्यत्वोक्तेरावश्यकत्वात्।

न च 'गतिः ... कारण'मिति विवक्षणे प्राप्यत्वस्य प्रसक्तिरेव नास्तीति वाच्यम्। 'आकाशः परायणम्' इत्युत्तरवाक्य-बलात्प्राप्यत्वार्थकत्वस्योचितत्वात्। अतः 'समुत्पद्यन्ते', 'परायणम्' इति वचनस्वारस्यादुभयं विवक्षितमिति ज्ञायते। **हेयस्येति**। मोक्षस्यैव साक्षात्पुरुषार्थत्वाद्बन्धहेतुभूतस्याचेतनस्य मोक्षविरोधित्वेन हेयत्वमेव। एवम्भूतहेयस्य शब्दादि-निषिद्धप्रावण्यजनकत्वमेवेति धर्मादिसकलपुरुषार्थविरोधी। अचेतनस्यास्य कारणावस्थायामत्यन्तज्ञानसङ्कोचहेतुत्वमेवेति पुरुषार्थचतुष्टयविरोधी च। यथाक्रतुन्यायेनैतस्य ध्यानेऽचेतनप्राप्तिरेवेति पुरुषार्थविरोधी। तथा च ध्येयस्यैव प्राप्यत्वात् कारणस्यैव च ध्येयत्वात्कारणं किमित्यपेक्षायां यतो वा इति सामान्येन वा तस्य ब्रह्मत्वानन्दरूपत्वादिसिद्धावपि तस्या-परिच्छिन्नत्वप्रकाशमानत्वयोः सिध्यर्थम् 'अस्य लोकस्य का गतिः' इति प्रश्नारम्भः। उपक्रमानुसाराद्गतिशब्दस्य कारणत्वपरत्वेपि प्राप्यपरत्वं च स्वीकार्यम्। उत्तरवाक्यानुसारात्। प्रकाशमानत्वानन्तत्वोभयविधानपूर्वकम् 'आकाशा-देवे'त्यादिवाक्यं प्राप्यत्वोपपादनपरम्। सर्वस्मात् ज्यायस्त्वमपि सर्वात्मना न सम्भवतीत्याह - **सर्वस्मादिति**। 'ज्यायान् पृथिव्या ज्यायानन्तरिक्षात्' इत्यादिना परस्यैव सर्वोत्कृष्टत्वबोधनादिति भावः। अनेनानन्तत्वमुक्तम्। आकाशशब्देन प्रकाशमानत्वम्। अनेन वस्त्वपरिच्छिन्नत्वकालापरिच्छिन्नत्वरूपानन्तत्वं चोक्तं भवति। ईदृशं प्रकाशमानत्वम् अनन्तत्वं च न भूताकाशस्य। पृथीवीलोकमप्यन्तवत्वेन दूषयित्वा किंतदनन्तमिति प्रश्ने 'आकाश' इत्युत्तरमवदत्। कथमिदं प्रसिद्धाकाशे उपपद्यते।

पूर्वाधिकरणे 'तद्धर्मोपदेशात्' इति सूत्रितम्। अत्र 'तल्लिङ्गा'दित्युच्यते परायणत्वसर्वस्माज्ज्यायस्त्वादिधर्माणां परमात्मन्यनुपपत्तिरेव हेतुः। अतः 'तद्धर्मात्' इति अत्रापि वक्तुंशक्यम्। अथापि लिङ्गादित्युक्तिः कस्यचिद्विशेषार्थस्या-भिव्यक्त्यै। **लिङ्गं** = ज्ञापकम्। पूर्वज्ञातस्यैव लिङ्गत्वात्परायणत्वनिखिलजगदेककारणत्वसर्वस्माज्ज्यायस्त्वादिलिंगानां चेतनैकान्तत्वेनोपनिषत्सु ज्ञातत्वेनेदं लिङ्गं परमात्मैकसाधकं, न त्वन्यसाधकम्। ज्ञातो हि लिङ्गरूपो धूमो वह्निमेव

**च - इति। किञ्च अनेनाकाशशब्देन विशेषसमर्पणक्षमेणापि चेतनांशं प्रत्यसम्भावितकारणभावमचेतन-विशेषमभिदधानेन,** (छा.६-२-३) **'तदैक्षत बहु स्यां प्रजायेय',** (तै.आन.६) **'सोऽकामयत। बहु स्यां प्रजायेय' इत्यादिवाक्य(वि)शेषावधारितसार्वज्ञ्यसत्यसङ्कल्पत्वादिविशिष्टापूर्वार्थप्रतिपादनसमर्थवाक्यार्थान्यथाकरणं न प्रमाणपदवीमधिरोहति। एवमपूर्वानन्तविशेषणविशिष्टापूर्वार्थप्रतिपादनसमर्थानेकवाक्यगतिसामान्यं चैकेनानुवादसरूपेणान्यथाकर्तुं न शक्यते।**

**यत्तु - आत्मशब्दश्चेतनैकान्तो न भवति, 'मृदात्मको घटः' इत्यादिदर्शनादित्युक्तम् - तत्रोच्यते - यद्यपि चेतनादन्यत्रापि क्वचिदात्मशब्दः प्रयुज्यते, तथापि शरीरप्रतिसम्बन्धिन्यात्मशब्दस्य प्रयोगप्राचुर्यात्,** (ऐ.१-१) **'आत्मा वा इदमेक एवाग्र आसीत्',** (तै.आन.) **'आत्मन आकाशः सम्भूतः' इत्यादिषु शरीर-प्रतिसम्बन्धिचेतन एव प्रतीयते। यथा गोशब्दस्यानेकार्थवाचित्वेऽपि प्रयोगप्राचुर्यात्सास्नादिमानेव स्वतः प्रतीयते; अर्थान्तरप्रतीतिस्तु तत्तदसाधारणनिर्देशापेक्षा ; तथा स्वतः प्राप्तं शरीरप्रतिसम्बन्धिचेतना-भिधानमेव,** (ऐ.१-१-१) **'स ईक्षत लोकान्नु सृजा इति',** (तै.आन.१-२) **'सोऽकामयत। बहु स्यां प्रजायेय' इत्यादितत्तद्वाक्यविशेषा एव स्थिरीकुर्वन्ति। एवं वाक्य(वि)शेषावधारितानन्यसाधारणानेकापूर्वार्थविशिष्टं**

साधयेत् वह्निव्याप्यत्वेन तस्य ज्ञातत्वात्। एवमेवात्रोक्तानामचेतनासम्भावितानां परमात्मव्याप्यत्वेन ज्ञातानां नाचेतना-काशसाधकत्वम्। अपि च लिङ्गमित्युक्तावेवान्यथासिद्ध्यनर्हत्वं द्योतितं भवति। धर्मस्तु अन्यथासिध्यर्होपि भवेत्। श्रुत्यवलम्बनपूर्वपक्षस्य धर्ममात्रेण समाधानं न भवति। अतोऽनन्यथासिद्धत्वरूपप्राबल्यविशिष्टलिङ्गेन पूर्वपक्षनिरासो युक्त इत्यभिप्रायः। श्रुतिलिङ्गयोर्मध्येः श्रुतेरेव प्रावल्यमिति जानतापि लिङ्गेन समाधानमुच्यते। अत्र श्रुते दौर्बल्यञ्च वदतः सूत्रकारस्य, उपात्तश्रुते र्हवैशब्दघटितत्वेनानुवादरूपतैव, अतो न प्रामाण्यमित्याशयात्। अनुवादरूपत्वात्पुरोवाद-श्रुत्यपेक्षासत्वात्तत्र च परमात्मैकान्तलिङ्गानां सत्त्वेन परमात्मपरत्वनिर्णयादिदमपि परमात्मैकपरमेवेति निश्चयसम्भवात्। तत्रापि 'तल्लिङ्गात्' इत्युक्तिः चेतनत्वग्राहकश्रुतिबोधनाय॥

स्वीकारस्तु न शब्दस्वरससिद्धः। आकाशशरीरकपरमात्मपरतया, निर्वाहोप्यभिमत इति श्रुतप्रकाशिकावाक्यमपि। सोपि कश्चनमार्ग इति वक्तुमेव प्रवृत्तः। परन्त्वेतदधिकरणेपि तथार्थस्वीकारार्थमित्यवधेयम्। अत एव तत्रैव वैश्वानराधि-करणे वैश्वानरशब्दस्योभयथापि परमात्मपरत्वस्य वक्ष्यमाणत्वात्, आकाशादिशब्दानां तत्तच्छरीरकपरमात्मवाचित्वस्य-ऽनन्तरपादेऽनुवदिष्यमाणत्वाच्चेत्युक्तम्॥

किञ्चेति भाष्यं - 'यदाग्नेयोऽष्टाकपालः', 'उपरि हि देवेभ्यो धारयति' इत्यादेरनुवादकत्वेपि विधायकत्वं स्वीक्रियते, तथाऽत्रापि स्यादिति शङ्कावारकम्। अयोग्यत्वे सति प्रसिद्धवन्निर्देशः अनुवादकत्वसाधक एव। योग्यत्वं त्वत्र नास्ति, चेतनं प्रत्यसम्भावितकरणत्वादित्याह - **चेतनाशं प्रतीति**। श्रुतिः अयोग्यार्थबोधिका। लिङ्गं तु योग्यार्थश्रुतिमूलम्। अतः श्रुत्यपेक्षया प्रबलम्। ब्रह्मणः कारणत्वपक्षे श्रुतिबाहुल्यं वाक्यानामनन्यपरत्वं योग्यार्थत्वमपूर्वत्वञ्च, आकाशस्य कारणत्वे तु सर्वविपर्ययः। आत्मशब्दश्शरीरप्रतिसम्बन्धिनि प्रसिद्धः। विरोधेऽन्यार्थकत्वम्। अत्र च नैव विरोधः। आनुकूल्यमप्यस्ति शरीरप्रतिसम्बन्ध्यर्थबोधने ईक्षणादिश्रवणात्। **आत्मा वा इदमित्यादि**। ईक्षणादिलिङ्गान्यथाकरण-मेवेति न धर्मिवाचकपदेऽप्यन्यथाकरणमित्यभिप्रायः। 'आत्मन आकाशस्सम्भूत' इत्यत्रात्मशब्दस्य स्वपरत्वकथनमपि न युक्तम्। पूर्वं 'ब्रह्मणा विपश्चिता' इति सर्वज्ञब्रह्मण एव प्रकृतत्वात्तत्परित्यागानौचित्यात्। **सास्नादिमानेवेति**। जन्तुरिति शेषः।

**निखिलजगदेककारणं 'सदेव सोम्य' इत्यादिवाक्यसिद्धं ब्रह्मैवाकाशशब्देन प्रसिद्धवत् 'सर्वाणि ह वा इमानि भूतानि' इत्यादिवाक्येन निर्दिश्यत इति सिद्धम् ॥ २३ ॥** ॥ इत्याकाशाधिकरणम् ॥ ८ ॥

अथ प्राणाधिकरणम् ॥ ९ ॥ (छा.१-१०;११)

## अत एव प्राणः १।१।२४॥

**इदमाम्नायते छान्दोग्ये,** (छा.१०-९) **'प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता' इति प्रस्तुत्य,** (छा.1-11-4,5) **'कतमा सा देवतेति। प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति; प्राणमभ्युज्जिहते। सैषा देवता प्रस्तावमन्वायत्ता। तां चेदविद्वान् प्रास्तोष्यः, मूर्धा ते व्यपतिष्यत्' इति। अत्र प्राणशब्दोऽप्याकाशशब्दवत्प्रसिद्धप्राणव्यतिरिक्ते परस्मिन्नेव ब्रह्मणि वर्तते, तदसाधारणनिखिलजगत्प्रवेशनिष्क्रमणादिलिङ्गात्प्रसिद्धवन्निर्दिष्टात्।**

**अधिकाशङ्का तु - कृत्स्नस्य भूतजातस्य प्राणाधीनस्थितिप्रवृत्त्यादिदर्शनात्प्रसिद्ध एव प्राणो जगत्का-**

---

अयमत्र सिद्धान्त्याशयः - निखिलजगदेककारणत्वसर्वज्यायस्त्वपरायणत्वादयो न भूताकाशे सम्भावनार्हाः। अचेतनवर्गं प्रति कारणत्वासम्भावाच्चेतनांशं प्रत्यपि कारणत्वासम्भवाच्च सर्वोत्कृष्टत्वलक्षणज्यायस्त्वस्याप्यसम्भावात्। मोक्षविरोधित्वेन हेयत्वात्। अस्यैव कारणत्वेऽस्यैव ध्येयत्वमित्यचेतनस्यांस्यैव प्राप्यत्वापत्तेः। शब्दादिनिषिद्धविषयप्रावण्यजनकत्वेनास्य परायणत्वासम्भवाच्च। 'स एषोऽनन्त' इति पृथिवीलोकस्यान्तवत्वोक्तिदूषणपूर्वकमस्यानन्तत्वोक्तेः। एवं बहुलिङ्गविरोधे नाकाशशब्दाभ्यासस्याकार्यकरत्वाच्च। हवैशब्दघटित्वेनानुवादरूपस्यार्थसाधकत्वाभावाच्च। योग्यार्थबोधकानामननुवादरूपाणां बहूनां वाक्यानां पुरतः अनुवादरूपमेकं वाक्यं न स्वार्थबोधनक्षमञ्च। किञ्च 'ब्रह्म वा इदम्' 'आत्मा वा इदम्', 'एको ह वै नारायणः', 'नारायणोऽकामयत प्रजास्सृजेयेति'। 'सोध्वनः पारं', 'तद्विष्णो, परमं पदं', 'स उत्तमः पुरुषः' 'सेयं देवतैक्षत', 'अपहतपाप्मा दिव्यो देव एको नारायणः', 'स कारणं करणाधिपाधिपः' 'नित्यो नित्यानाम्' इत्यादिश्रुतीनां कारणस्यैव चेतनताबोधकानां, 'यावान् वा अयमाकाशस्तावानेष अन्तर्हृदय आकाशः', 'आकाशशरीरं ब्रह्म', 'य आकाशे तिष्ठन्' इत्यादिश्रुतीनामाकाशभेदबोधकानां, 'यस्सर्वज्ञः सर्ववित्' इति ईक्षणबोधकानां श्रुतीनां च सत्त्वादेतासां श्रुतीनां बाधमुक्त्वा अनुवादरूपैकश्रुत्या पूर्वपक्षोत्थापनमेव न युक्तम्। अत्राकाशशब्दव्युत्पत्तिप्रदर्शनमधिकरणकृत्यम्। अर्थविरोधे रूढिपरित्याग इत्यपि ॥ इत्याकाशाधिकरणम् ॥ ८ ॥

### प्राणाधिकरणम्

**अधिकाशङ्का त्विति।** आकाशवाक्ये हवैशब्दघटितत्वादनुवादकत्वमिवास्यापि हवैशब्दघटितत्वेनानुवादस्वरूपत्वमेव निश्चेयमिति अनुवादस्य पुरोवादिसापेक्षत्वात्तत्र परमात्मैव कारणमिति निश्चितत्वात् अधिकाशङ्काया एवानुत्थानम्, अतः पूर्वपक्षस्य कथं प्रसक्तिः। न च प्राणशब्दस्य परमात्मपरत्वस्थापनार्थमधिकरणमिति वाच्यम्, आकाशशब्दवत्प्राणशब्दस्यापि अवयवार्थव्युत्पत्तेः स्वत एवावगमसम्भवात्। न च भूतजातस्य प्राणाधीनस्थितिप्रवृत्त्यादिदर्शनेन शक्योत्थानमिति वाच्यं, हवैशब्दघटितत्वेन पूरोवादसापेक्षत्वावगमात् पुरोवादवाक्ये च परमात्मनोऽचेतनविलक्षणस्य सिद्धत्वेन तस्यैव सर्वं प्रति कारणत्वस्यावगमात्प्राणं प्रत्यपि कारणत्वप्रतीतेः सर्वभूतजातगतस्थितिप्रवृत्तिकारणस्य प्राणस्यापि परमात्माधीनस्थितिप्रवृत्तिकत्वलाभेन श्रुत्यर्थोपपत्तेः परमात्मपरत्वनिश्चयसम्भवादिति चेत्सत्यम्। हवैशब्दघटितत्वेपि 'यदाग्नेयः', 'उपरि हि देवोभ्यो धारयति' इत्यादिवत्पुरोवादिवाक्यत्वमस्तु अपूर्वार्थ-

**रणतया निर्देशमर्हतीति। परिहारस्तु - शिलाकाष्ठादिषु चेतनस्वरूपे च तदभावात्, 'सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते' इति नोपपद्यत इति। अतः प्राणयति सर्वाणि भूतानीति कृत्वा परं ब्रह्मैव प्राणशब्देनाभिधीयते। अतः प्रसिद्धाकाशप्राणादेरन्यदेव निखिलजगदेककारणमपहतपाप्मत्व-**

विधायकत्वञ्चास्तु इत्याशयेन पूर्वपक्षावतारात्। अयोग्यत्वे निश्चिते सति ह्यनुवादकत्वं प्रसिद्धवन्निर्देशस्य। अत्र चायोग्यत्वं नास्ति। रूढ्या श्रुत्या च यथा प्रतीते प्राणशब्दार्थे उक्तश्रुत्यर्थस्याबाधात्। 'प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते' इति प्रतिपन्नस्य सर्वभूतगतप्राणाधीनस्थितिकत्वस्यार्थस्यायोग्यत्वाभावात्। अतः पूर्वपक्षोदय इत्यभिप्रायं प्रकाशयन्नाह - कृत्स्नस्येति।

आदिशब्दः प्रवृत्तिहेतुभूतज्ञानचिर्कीषापरः निवृत्तिपरश्च **। परिहार** इत्यादिना अयोग्यत्वमुपपादयति। 'अनेन जीवेनात्मना' इति प्रमाणबलात् शिलाकाष्ठादीनामप्यचेतनविशिष्टचेतनरूपत्वात्तेषु प्राणाधीनस्थितिप्रवृत्याभावाद्धयष्टौ सर्वत्र चेतनवैशिष्ट्यसत्त्वात्, शुद्धचेतनस्वरूपस्य च तदभावात्। न च भूतानीत्युक्त्या अचिद्विशिष्ट एव प्राणाधीन-स्थितिकत्वं वक्तव्यं न चेतनस्वरूप इति वाच्यम्। अस्य कारणवाक्यत्वात् कृत्स्नं चेतनाचेतनांशं प्रति कारणत्वावश्य-कतया चेतनविषये तदभावेन तत्स्वरूपस्थित्यादिप्रयोजकत्वाभावात् प्राणस्य। भगवन्नित्येच्छासिद्धे जीवस्वरूपे उत्पत्त्य-भावेपि तत्स्वरूपस्थित्योः परमात्माधीनत्वयोगात्। 'को ह्येवान्यात् कः प्राण्यात्' इति श्रुतेः। अत्र प्राणत्वं स्वाधीन-त्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिकत्वम्। इदं भगवव्द्यतिरिक्ते सर्वत्र विद्यते। 'यदेष आकाश आनन्दो न स्यात्' इत्याकाशविषय इव 'प्रज्ञामात्राः प्राणेऽर्पिता' इत्यादौ प्राणविषयेपि श्रुतेः सत्वात्। अत्रः प्राणः परमात्मा हि। आकाशपद इव प्राणपदेपि योगव्युत्पत्तिः सम्भाव्यते। प्राणस्य प्राणः यः प्राणेन प्राणिति इत्यदौ प्राणशब्दः परमात्मवाची। 'प्राणस्य प्राण' इत्यत्र षष्ठीश्रवणात् प्राणशब्दस्य परमात्मवाचकत्वं योगव्युत्पत्यैव स्वीकार्यम्।

यद्यपि 'यदा वै पुरुषः स्वपिति, प्राणं तर्हि वागप्येति, प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मनः, यदा प्रबुध्यते प्राणादेवाधिपुन र्जायन्त' इति प्रसिद्धवन्निर्देशरहितवाक्ये प्राणस्याप्ययोद्गमहेतुत्वं श्रुतम्। तथापि तद्वाक्यं प्राकृतप्रलयानन्तरभाविसृष्टि-विषयकं न भवति। 'इदमेक एवाग्र' इति वा 'सर्वाणि भूतानि आकाशादेव समुत्पद्यन्त' इति वा न निर्देशः कृतः। संसरतः पुरुषस्य स्वापप्रबोधकालिकव्यापारमात्रपरत्वान्न कारणवाक्यता। न चात्र 'आकाशादेव समुत्पद्यन्ते' इतिवत् उत्पत्यवचनात्कथमत्र कारणत्वाशङ्का इति वाच्यम्। अभिसंविशन्तीति लयोक्त्या लयाधाररूपकारणपरत्वात् 'अभ्पुज्जिहते' (प्रादुर्भवन्तीत्यर्थ) इत्युक्तेः। न च लयोत्पत्तिश्रवणेपि स्थितिर्नोक्ता इति वाच्यम्। उत्पत्तिलययोरुक्त्या स्थितेरर्थलाभात्। वस्तुतः मुख्यप्राणपरत्वनिषेधे गमकमपि स्थित्यवचनम्। प्राणस्य मुख्यभूतो व्यापारः प्राणनं हि। अतो मुख्यप्राण-परत्वविवक्षायां तत्कार्यभूतप्राणनकर्तृत्वस्यानुक्तिः कथम्? तदसाधारणधर्मपुरस्कारेण तस्य वचनं हि आवश्यकम्। तदनुक्तिः उत्पत्तिप्रलययोरुक्तिश्च प्राणपदस्य परमात्मपरत्वे साधकं भवति।

इदं त्विहानुसन्धेयम् - प्रसिद्धा दशोपनिषदः। तत्र द्वितीया केनोपनिषन्नवमा। छान्दोग्यापेनिषच्च सामवेदीया। चतुर्णामपि वेदानां सामवेदस्यैव शाखाः बह्व्यः। 'सहस्रं सामशाखाः' इति प्रसिद्धिः। एकैकस्या अपि शाखाया अन्ते उपनिषद्वर्तते। केनोपनिषत्तलवकारब्राह्मणसम्बन्धिनी। छान्दोग्योपनिषत्ताण्डिशाखाया अन्तिमभागरूपा। सूत्रकृद्वेद-व्यासोपि छान्दोग्योपनिषद्येव दत्तदृष्टिः तत्र तत्रानन्तान् विचारान् चक्रे। अस्मदीय ब्रह्मसूत्रविमर्शेऽयमंशो बहुधा उपपादितः। भगवत्प्राप्त्यर्थतया बहवो मार्गाः प्रदर्शिताः। भक्तिरूपोपासनामार्गेऽनेकप्रकारोपदेशार्थं प्रवृत्तापि प्रथमं सामवेदशाखान्तर्गतत्वात्सामगाने कंचिदंशभूतमुद्गीथं प्रस्तुत्य वर्णयति। तत्रोपनिषदन्तरमिवेयमपि प्रणवमेव प्रधान-तयाऽऽद्रियते स्म। सामान्तर्गतत्वानुगुण्येनोद्गीथान्तर्गतप्रणवमादाय तत्र बहुप्रकारेणोपासनं विधत्ते स्म। तत्रोद्गीथपदं

**सार्वज्ञ्यसत्यसङ्कल्पत्वाद्यनन्तकल्याणगुणगणं परं ब्रह्मैवाकाशप्राणादिशब्दाभिधेयमिति सिद्धम् ॥ २४ ॥ ॥९॥** इति प्राणाधिकरणम् ॥

अथ ज्योतिरधिकरणम् ॥ १० ॥ (छा.३-१, ३-७)

**अतः परं जगत्कारणत्वव्याप्तेन येनकेनापि निरतिशयोत्कृष्टगुणेन जुष्टं ज्योतिरिन्द्रादिशब्दैरर्थान्तर-प्रसिद्धैरप्यभिधीयमानं परं ब्रह्मैवेत्यभिधीयते 'ज्योतिश्चरणाभिधानात्' इत्यादिना -**

---

सामपदमन्यच्च तदंशभूतं तत्प्रकाराश्चोपादाय तत्र तत्रोपासनाप्रकारान्सम्भाव्यमानान्नुपादिशत् ऐहिकामुष्मिकफलसाधन-भूतोपासनाप्रकारान्सुविशदं प्रतिपाद्य मोक्षार्थभक्तिरूपोपासनानान्यनन्तरं व्यक्तं प्रतिपादयति । प्रथमद्वितीयप्रपाठकेषु सामविषयकानेकदृष्ट्युपासनाः प्रदर्शिताः । दृष्टिस्तावदतस्मिंस्तद्दर्शनम् । आत्मानं गरुडत्वेन दर्शनमिव । भृत्ये राजदृष्टिरि-त्यादिकं लोकप्रसिद्धम् । नीचे उत्कृष्टदृष्टिरभ्युदयाय भवति । फलार्थं कञ्चन पुरुषं त्वमिन्द्रः कुबेरः कर्ण इत्यादिदृष्ट्या स्तुतिकरणे फलमनुभवसिद्धम् । उत्कृष्टे नीचदृष्टिस्तु न फलाय । एवं फलसिद्धिप्रकारमनुरुध्योपनिषत्स्वपि दृष्टिविधि र्विहिता । इयञ्च छान्दोग्योपनिषत्सामवेदीयत्वात्सामगानविषयतयाऽनेका दृष्टीः प्रोच्य तत्फलमपि निर्दिदेश ।

साम इत्येतत् किञ्चिद्वेदगानम् । ऋचि क्रियमाणमिदमेकैकस्यामपि ऋचि गानकाले तदेव गानं पञ्चधा विभक्तं भवति । हिंकारः प्रस्तावः मुख्यभूतोद्गीथः प्रतिहारः निधनमिति । क्वचित्सप्तविधमपि - हिंकार-प्रस्ताव-आदि-उद्गीथ-परिहार-उपद्रव-निधनभेदात् । एतेषु कञ्चन प्रकारम् (भागम्) आदाय अर्वाचीनफलार्थमुत्कृष्टवस्तुत्वेन मत्वा ध्यान-करणमेव दृष्टिविधिरित्युच्यते । इदं शास्त्रोक्तप्रकारेणैव कार्यम् । स्वेच्छया न कार्यम् । विहितश्चेत्कर्तुं शक्यम् । अन्यथा स्वेष्टं कञ्चन पदार्थमन्यपदार्थं मत्वा उपासने फलवैपरीत्यमेव जायेत ।

(१-१०-११) उषस्तिवृत्तान्त उच्यते । अयं कस्यचित् राज्ञोः यागशालायां गत्वा तत्रोपविष्टानां प्रस्तोतृ-उद्गातृ-प्रतिहर्तॄणामृत्विजां समीपे उपविष्टस्तान्पप्रच्छः - प्रस्ताव-उद्गीथ-प्रतिहार-रूपासामांशार्थं प्रक्लृप्तदेवताः काः वदध्वम् । देवताः अज्ञात्वा सामगाने मूर्ध्नः पतनमेव स्यादिति भर्त्सयामास । ते च स्वाज्ञानमूचुः । राजाप्यस्मिन् तुष्टः यागकरणार्थं वव्रे । ततोऽयमपि पूर्वक्लृप्तऋत्विकूमूलमेव तत्तसामांशोपयुक्तदेवतास्वरूपं प्रतिबोध्य यागं कारयामास । प्रस्तावरूप-सामगाने सर्वभूतोत्पत्तिप्रलयहेतुभूतः प्राणः देवता, उद्गीथे ऊर्ध्वस्थितः सर्वश्लाघ्य आदित्यो देवता, प्रतिहारेऽन्नं देवता । अतः प्रस्तावे सामगाने प्राणमध्यस्य, उद्गीथसामगाने आदित्यमध्यस्य, प्रतिहारेऽन्नञ्चाध्यस्योपासनं कार्यमिति, एवमत्र दृष्टिविधित्रयमुक्तम् । त्रीनप्युपसन्नान् ऋत्विजः प्रति तिस्रो दृष्टयश्चोपदिष्टाः । कार्यवीर्यवत्तरत्वं फलम् । अत्र प्राणाधिकरणे प्राणविषयकवाक्यविचारः । आदित्यान्नविषये तु न । तत्रोत्पत्तिस्थितिविनाशानुक्तेः । अत्र प्राणशब्दवाच्यः परमात्मा । तथा च प्राणशरीरकपरमात्मदृष्टिः प्रस्तावभक्तौ कार्येति फलितम् । पूर्वं परोवरीयस्त्वादिगुणविशिष्टप्रकाशकत्वाश्रयाकाश-शब्दवाच्यपरमात्मदृष्टिरुक्ता । ततः पूर्वमन्तरादित्यविद्यायां हिरण्यमयत्वादिगुणविशिष्टपरमात्मदृष्टिरित्युपनिषत्क्रमम-नुरुन्ध्यात्र दृष्टिक्रमनिरूपणमिति विवेकः । इति प्राणाधिकरणम् ॥

ज्योतिरधिकरणम्

**येन केनापीति** । पूर्वाधिकरणद्वयमेकपेटिका, अनन्तराधिकरणद्वयमन्या पेटिका । आकाशप्राणश्रुतेः प्रसिद्धकाश-प्राणपरत्वे सर्वभूतोत्पत्तिप्रलयहेतुत्वं बाधकम् । अन्यदीयलिङ्गं बाधकं परमात्मपरत्वे । अतस्तत्रान्यथाकरणं युक्तम् । अत्राधिकरणद्वये तु न तथा । अतः प्रसिद्धज्योतिषः प्रसिद्धेन्द्रस्यैव च कारणत्वं वक्तव्यम् । अग्निप्राणेन्द्रानुकूललिङ्गस्यापि

## ज्योतिश्चरणाभिधानात् १।२।२५॥

**इदमाम्नायते छान्दोग्ये,** (छा.३-१, ३-७) **'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु, इदं वाव तत्, यदिदमस्मिन्नन्तः पुरुषे ज्योतिः' इति । तत्र संशयः - किमयं**

सत्त्वात् । कौक्षेयज्योतिषा ऐक्यबोधनं, प्राणे जीवसहवाससर्वेन्द्रियनिर्वाहकत्वादि च, इन्द्रे त्वाष्ट्रवधादिलिङ्गं ह्येतेषामेव साधकम् । ज्योतिः पदानां परमात्मनि मुख्यत्वाभावाच्चेत्याक्षेपेण सङ्गतिः । आकाशस्य, वायुरेव कश्चन विशेषमापन्नः प्राण इत्युच्यत इति प्रतिपादितस्य वायुरूपप्राणस्याग्निविशेषस्य च जगत्कारणत्वखण्डनं क्रमेण क्रियते । ज्योतिरिन्द्रादीति प्रसिद्धमादित्यादिज्योतिरेवेति च भाष्यस्वारस्यादन्तरादित्यविद्यायां विलक्षणपुण्यानाम् आदित्येन्द्रप्रजापति प्रभृतीनामित्युक्तस्यार्थस्य पुनरपि स्थापनमुखेन पूर्वपक्षप्रवृत्तिरिति ज्ञापितम् ।

**अथ यदत** इति । अत्र गायत्रीब्रह्मविद्या विषयः । गायत्रीसादृश्यं ब्रह्मणि प्रतिपाद्यते । 'इन्द्रः शचीपतिः वलेन पीडितः, दुश्च्यवनो वृषा, समित्सु सासहिः' इति गायत्र्याश्चतुष्पादत्वम्, एवमेकैकस्य पादस्य षडक्षरात्मकत्वेन क्षडक्षरपादवत्वेन षड्विधत्वञ्च । एवमेव ब्रह्मणः पादततुष्टयवत्वञ्च षड्विधत्वञ्चेति गायत्रीसादृश्यं ब्रह्मणः । भूतं पृथिवी शरीरं हृदयमिति चत्वारः पादाः । प्रथमपादे वाक्कर्तृकगानकर्मत्वं, वाक्कर्तृकत्राणकर्मत्वमिति प्रकारद्वयं पृथिवीभूतद्वितीयपादस्य भूतप्रतिष्ठात्वं तदनिवर्त्यत्वमिति प्रकरद्वयं, शरीरहृदयरूपपादत्रये प्राणप्रतिष्ठात्वं तदनिवर्त्यत्वमिति प्रकारद्वयम् । अतो ब्रह्मणश्चतुष्पदत्वं षड्विधत्वञ्चेति प्रतिपादितम् । पुरुषसूक्तोक्तप्रकारेण पूर्वोक्तस्य गायत्र्याख्यब्रह्मणो महिमाप्युक्तः । पूर्वोक्तं सर्वमप्यस्य नियाभ्यम् । नियामकोऽयं परमात्मा ज्यायानिति । ततः कार्यजगदन्तर्गताचित्संसृष्टचेतनानामेकपादत्वमप्राकृतस्थानगतानां त्रिपादत्वमिति च प्रत्यपादि । तत्र भोग्यभोगस्थानभोगोपरकणवस्तुनस्त्रिपात्त्वम् ।

यद्वा 'भूषणास्त्रस्वरूपस्थ'मिति विष्णुपुराणोक्तरीत्या जगदन्तर्गतवस्त्वभिमानिनो नित्याः केचित्, तदनभिमानिनो भगवदनुभवमात्रपरा नित्या अन्ये तथा मुक्ता अन्ये इति त्रिपात्वम् । एवं सर्वव्याप्तं ब्रह्म पूर्वोक्तरीत्या चतुष्पदत्वषड्विधत्वयुक्तमुपास्यम् । अस्य मोक्षः फलम् । चतुष्पदत्वषड्विधत्वाद्युपाधिभिः परिच्छिन्नत्वेप्याकाशस्येव स्वाभाविकपरिच्छन्नत्वमेवेत्यनन्तत्वमेवेत्युपपादितम् । एतद्ब्रह्मोपासनादन्यदप्युपासनमुक्तम् । अस्मद्धृदये पार्श्वचतुष्टये उपरि च पञ्च रन्ध्राणि सन्तिः । तत्र प्राणसञ्चारार्थं तेषु पञ्चद्वारपालकाः - आदित्य-चन्द्र-अग्नि-पर्जन्य-आकाशरूपा देवताः सन्ति । ते ब्रह्मसम्बन्धिपुरुषा भगवल्लोकस्य द्वारपालका आतिवाहिका वा । एतेषां वेदने विद्यावीर्यसम्पन्नपुत्रोत्पत्तिः अर्वाचीनं फलं जायत इत्युक्त्वा एतैरनिवारित उपासकः ब्रह्मलोकं प्रतिपद्यत इत्युक्तम् । अनन्तरं गायत्रीविद्याप्रकृतस्य द्युसम्बन्धिनः परस्य ब्रह्मणः कौक्षेयज्योतिषैक्योपासनमभिरूपत्वकीर्तिमत्वरूपफलविशेषार्थं विहितम् 'अथ यदतः परो दिवो ज्योतिः' इत्यादिना । अत्र द्युसम्बन्धिज्योतिषः 'अस्मिन्नन्तःपुरुषे ज्योतिः' इति वैश्वानराग्निना एक्यश्च प्रतिपादितम् । शरीरे औष्ण्योपलम्भादुपलभ्यमानोष्णस्पर्शस्य जाठराग्निसम्बन्धित्वात्तत्स्पर्शसाक्षात्कारस्तत्साक्षात्कार इति 'तस्यैषा दृष्टिः' इत्यनेनोक्तम् ।

एवं कर्णयोः पिधाने रथघोषस्येव पचनशब्दस्य श्रूयमाणत्वात्तदीयशब्दश्रवणमेव तच्छ्रवणम् । एवमुपासितुरभिरूपत्वकीर्तिमत्वादिफलश्चोक्तम् । अतः कौक्षेयज्योतिषा प्रकृतद्युसम्बन्धिज्योतिष ऐक्यं सिद्धम् । एवं जाठराग्न्यभिन्नं प्रतीतं द्युलोकस्थितं ज्योतिः परमात्मा उत प्रसिद्धज्योतिरिति विचारः । अस्य वाक्यस्य सिद्धान्तरीत्या अयमर्थः - दिवः परः = द्युलोकोपरिस्थितत्वेन यज्ज्योतिः । विश्वतःपृष्ठेषु = जगदन्तर्वर्तिव्यष्टिपदार्थजातबहिर्भूतेषु सर्वत्र । पृष्ठेषु = समष्टिबहिर्भूतेषु । अनुत्तमेषु = स्वावधिकोत्तररहितेषु ।उत्तमेषु = उत्तमस्थानविशेषेषु सर्वभासकतया दीप्यमानं यद्वस्तु स परमात्मेत्यर्थः । सिद्धान्ते द्युशब्दो नित्यविभूतिपरः । पूर्वपक्षे प्राकृतलोकपरः । विश्वसर्वशब्दः भूम्यन्तरिक्षपर इति विशेषः ॥

**ज्योतिश्शब्देन निर्दिष्टो निरतिशयदीप्तियुक्तोऽर्थः प्रसिद्धमादित्यादिज्योतिरेव कारणभूतं ब्रह्म, उत समस्त-चिदचिद्वस्तुजातविसजातीयः परमकारणभूतोऽमितभास्सर्वज्ञस्सत्यसङ्कल्पः पुरुषोत्तम इति । किं युक्तम् ? प्रसिद्धमेव ज्योतिरिति । कुतः? प्रसिद्धवन्निर्देशेऽप्याकाशप्राणादिवत्स्ववाक्योपात्तपरमात्मव्याप्तलिङ्गविशेषा-दर्शनात्परमपुरुषप्रत्यभिज्ञानसम्भवात् । कौक्षेयज्योतिषैक्योपदेशाच्च प्रसिद्धमेव ज्योतिः कारणत्वव्याप्तनिरति-शयदीप्तियोगाज्जगत्कारणं ब्रह्मेति ।**

**एवं प्राप्ते प्रचक्ष्महे - ज्योतिश्चरणाभिधानात् । द्युसम्बन्धितया निर्दिष्टं निरतिशयदीप्तियुक्तं ज्योतिः परमपुरुष एव । कुतः?** (छा.३-१२-६) **'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' इति अस्यैव द्युसम्बन्धिन-श्चरणत्वेन सर्वभूताभिधानात् ।**

---

**कारणभूतं ब्रह्मेति** । 'ब्रह्म वा इदमग्र आसी'दिति ब्रह्मणः कारणत्वमुक्तं, तत् प्रसिद्धज्योतिरेवेत्यर्थः । अत्र ब्रह्म-शब्दो न स्वविवक्षितपरब्रह्मपरः ब्रह्मणः कारणत्वमिष्टम् । दीप्तिविशेषश्रवणेन कारणत्वमनुमितम् । प्रसिद्ध ज्योतिषि चैतस्य सत्त्वादिदमेव कारणं भवत्विति पूर्वपक्ष्याशयः । **अदर्शनादिति** । आकाशप्राणाधिकरणे तद्व्यावर्तकम्, अचेतन-विशिष्टसर्वचेतनोत्पत्तिलयहेतुत्वरूपं लिङ्गमस्ति । अत्र तु नास्ति । एवमन्तरादित्यविद्यायामिवापहतपाप्मत्वाप्राकृत-शरीरवत्वाद्यपि न श्रुतं, अतः परब्रह्मसाधनं न शक्यम् । यद्यपि दीप्तिविशेषश्रवणात् व्याप्यसत्त्वे व्यापकध्रौव्यात्कारणत्व-माक्षिप्तं, तेन परमात्मत्वञ्च साधयितुं शक्यं, तथापि चेतनत्वे सति दीप्तिविशेषवत्त्वं नोक्तम् । यदि चेतनत्वविशिष्टस्यैव कारणत्वममंस्यत, तदा, चेतनत्वविशिष्टदीप्तिविशिष्टमकथयिष्यत् । अतः केवलकारणत्वानुमानेन सर्वज्ञत्वादिविशिष्ट-परमात्मनः कारणस्य सिद्धिः । अचेतनेपि दीप्तिविशेषस्य सद्भावेन तस्यैव कारणत्वौचित्यात् । तस्मात्सर्वज्ञत्वादि-प्रतिपादकवाक्यानां गौणत्वमेव । नीरूपस्य परस्य भास्वररूपत्वासम्भवात् । ज्योतिषः प्रसिद्धस्य सम्भवाच्च । न च ज्योतिश्शब्दस्स्वयंप्रकाशवचनः, 'अत्रायं पुरुषः स्वयं ज्योतिः' इत्यादौ तथादर्शनादितिवाच्यम् । तथा सति दिवः परो दीप्यत इत्यस्य का गतिः । देशविशेषमात्रे स्वयंप्रकाशत्वाभावात्त्वदभिमतब्रह्मण इति भावः ।

ननु स्वयं प्रकाशस्य परमात्मनो 'हिरण्यश्मश्रुः' इत्यादिनाऽप्राकृतदिव्यमङ्गलसद्भावात्स्वरूपस्य शुद्धसत्त्वविग्रहस्य च स्वयं प्रकाशत्वमस्ति । विग्रहद्वारा निरतिशयदीप्तेर्न बाधोऽपि । 'दिवः पर' इत्यप्युपपन्नमित्यत्र प्रसिद्धजाठराग्निना ऐक्योपदेशः बाधक इत्याह - **कौक्षेयेति** । **प्रसिद्धमिति** । यद्दीप्यत इति प्रत्यक्षप्रसिद्धिस्सूचिता । इदं च प्रत्यक्षाग्नेरेव, न तु परमपदस्यस्येति भावः । ननु निरतिशयदीप्तिरस्तु कारणत्वं मास्तु इत्यत्राह - **कारणत्वव्याप्तेति** । निरतिशयदीप्तिमत्वं हि निरतिशयोत्कर्षरूपबृहत्वम् । तद्यत्र तत्र कारणत्वमिति व्याप्तिः । अन्यथा ब्रह्मणोपि भवदभिमतस्य कारणत्वं न स्यात् । 'न तत्र सूर्यो भाति...सर्वमिदं विभाति', इति प्रकरणे 'तथाक्षरात् सम्भवतीह विश्वम्' इति निरतिशयदीप्तियुक्तस्य हि कारणत्वं श्राव्यते । न चात्राऽऽदित्यादिप्रसिद्धज्योतिर्विवक्षणे द्युलोकेष्वपि तस्य कथं दीप्यमानत्वमिति वाच्यम् । रश्मिद्वारा तत्रापि तस्य दीप्यमानत्वसम्भवात् । कौक्षेयज्योतिषो भौतिकत्वात्तदैक्यस्य परमात्मन्यसम्भवाच्च प्रसिद्धमादि-त्यादिज्योतिरेवेति पूर्व पक्षः ॥

**पादोऽस्येति** । सर्वभूतानामप्यभिधीयमानं चरणत्वं जीवत्वव्यावर्तकम् । अचेतनस्य वा जीवस्य वेदं न सम्भवति 'पादोस्य' इत्यस्य पुरुषसूक्तेऽत्र च विद्यमानत्वात्तत्र देवताविशेषनिश्चयादत्रापि देवताविशेषरूपपरमात्मैवेति निश्चीयते । पुरुषसूक्तं तु असन्दिग्धार्थमिति । तस्यैव द्युसम्बन्धिन इहापि द्युसम्बन्धित्वेन प्रत्यभिज्ञानात् । तच्छब्दस्य सर्वनामत्वेन पूर्वोक्तपरामर्शित्वाच्च प्रकृतत्रिपाद्ब्रह्मण एव परामर्शो युक्तः । अतो गायत्रीसदृशं ब्रह्मैवात्रोच्यते । नच प्रकरणं द्युसम्बन्धित्व-

**एतदुक्तं भवति - यद्यपि, 'अथ यदतः परो दिवो ज्योतिः' इत्यस्मिन् वाक्ये परमपुरुषासाधारणलिङ्गं नोपलभ्यते, तथापि पूर्ववाक्ये द्युसम्बन्धितया परमपुरुषस्य निर्देशादिदमपि द्युसम्बन्धिज्योतिस्स एवेति प्रत्यभिज्ञायत इति । कौक्षेयज्योतिषैक्योपदेशश्च फलाय तदात्मकत्वानुसन्धानविधिरिति न कश्चिद्दोषः । कौक्षेय-ज्योतिषश्च तदात्मकत्वं भगवता स्वयमेवोक्तम्,** (गी.१५) **'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रित' इति ॥ २५ ॥**

## छन्दोभिधानान्नेति चेन्न; तथाचेतोर्पणनिगमात्तथा हि दर्शनम् १।१।२६॥

**पूर्वस्मिन् वाक्ये,** (छा.३-१२-१) **'गायत्री वा इदं सर्वम्' इति गायत्र्याख्यं छन्दोऽभिधाय, 'तदेतदृचाऽ-भ्यनूक्तम्' इत्युदाहृतायाः 'तावानस्य महिमा' इत्यस्या ऋचोऽपि छन्दोविषयत्वान्नात्र परमपुरुषाभिधान-मिति चेत् - तन्न ; तथा चेतोर्पणनिगमात् । न गायत्रीशब्देन छन्दोमात्रमिहाभिधीयते; छन्दोमात्रस्य सर्वात्मकत्वानुपपत्तेः; अपि तु ब्रह्मण्ये(ण ए)व गायत्रीचेतोर्पणमिह निगम्यते - ब्रह्मणि गायत्रीसादृश्यानु-सन्धानं फलायोपदिश्यत इत्यर्थः । सम्भवति च, 'पादोऽस्य सर्वाभूतानि त्रिपादस्यामृतं दिवि' इति चतुष्पदो ब्रह्मणश्चतुष्पदया गायत्र्या च सादृश्यम् । चतुष्पदा च गायत्री क्वचित् दृश्यते । तद्यथा, 'इन्द्रश्शचीपतिः । वलेन पीडितः । दुश्च्यवनो वृषा । समित्सु सासहिः' इति । तथा ह्यन्यत्रापि सादृश्यात् छन्दोभिधायी**

लिङ्गश्च ज्योतिश्शब्दश्रुत्यपेक्षया दुर्बलमिति कथं परमात्मपरत्वमिति वाच्यम् । यदित्यनुवादरूपताप्रतीतेर्ज्योतिश्शब्दश्रुतेः पुरोवादसापेक्षत्वेनामुख्यत्वात् । यच्छब्दस्य प्रथमश्रुतत्वेन तत्सहकृतद्युसम्बन्धिलिङ्गस्य ततोपि प्रबलत्वात् । 'नारायणपरो ज्योतिः' इति नारायणस्यैव ज्योतिष्ट्वोक्तेश्च । **फलाय तदात्मकत्वेति** 'अन्नादो वसुदानः', 'चतुर्विधा भजन्ते मां', 'सकलफल-प्रदो हि विष्णुः' इति तस्य सर्वफलप्रदत्वात् कीर्तिमत्वादिफलकीर्तनस्याप्युपपत्तेः । 'अहं वैश्वनरो भूत्वा' इति भगवद्गीता-वचनबलात्परमात्मनोपि कौक्षेयज्योतिशरीरकत्वात्तदनुसन्धानं फलार्थमित्यदोषाच्च । रूपवत्वस्य दीप्तिमत्वस्य द्युमर्याद-त्वादीनां विग्रहविशिष्टे सम्भवेनानुपपत्यभावाच्च । अतश्चतुष्पादत्वेन षड्विधत्वेन तस्यैव पुरुषस्य 'यदत' इति परामर्शा-त्तस्य चास्य द्युसम्बन्धित्वेनैक्यप्रतीतेर्न प्रसिद्धज्योतिः । पर इति पुल्लिङ्गनिर्देशापि पुरुषसूक्तप्रत्यभिज्ञां सूचयति ।

अत्र गायत्रीब्रह्मणः पुरुषसूक्तप्रतिपाद्यस्य, 'यदत' इत्युक्तज्योतिषः कौक्षेयन्योतिषश्चैक्यं प्रतिपादितम् । भौतिक-ज्योतिषो गीतावचनरीत्या परमात्मशरीरत्वात्तच्छरीरक ब्रह्मण ऐक्यमेवेति न कोपि दोषः । वेदाहमेतं पुरुषं महान्तमित्यादिना वर्णवत्वश्रवणात्रूपवत्वस्यापि न बाधः । अतो ज्योतिः पदमिह शक्त्यैव रूढ्यर्थतेजोऽपरित्यागेन विशिष्टपरम् । 'ज्योति-श्शब्दस्तु रूढ्या प्रथयति पुरुषं दिव्यतेजोविशिष्टम्' इति सारावलिः । एवं दिव्यमङ्गलविग्रहविवक्षणार्थमेव श्रुतौ पाद-शब्दश्रवणेपि सूत्रे चरणशब्दप्रयोगः कृतः । पादशब्दवच्चरणशब्दस्यान्थार्थवर्णनासम्भवात् । चरणशब्देन सर्वभूतानां पादत्वोक्तिवत् दिव्यमङ्गलविग्रहोप्युपलक्ष्यते । तेन ज्योतिश्शब्दार्थविवरणमपि भवति ॥

'गायत्री वा इदं सर्व'मित्यादेः प्रसिद्धगायत्रीपरत्वनिषेधार्थं 'छन्दोऽभिधानान्नेति चेन्न' इत्यादिसूत्रम् । गायत्रीपदस्य छन्दोमात्रपरत्वे 'तावनस्य' इत्यत्रेदंपदस्यापि गायत्रीपरत्वं वाच्यम् । 'पादोऽस्य' इत्यत्रापि गायत्रीरूपछन्दस एव विवक्षणं कार्यम् । तथा सति कथं तस्य छन्दसो भूतादिपादत्वम् । गायत्रीसदृशतया (तथा = तत्प्रकारेण) चेतोर्पणस्य पूर्वं प्रक्रान्तस्य निगमनादिति सूत्रखण्डार्थः । **'गायत्र्या च'** इति । अत्र चकारः 'मनो ब्रह्म', 'आकाशो ब्रह्म' इत्यादौ चतुष्पात्त्वेन ब्रह्मसादृश्यस्मारणेन तत्रेवात्रापि पुरुषसूक्तोदितचतुष्पात्त्वं शीघ्रं बुध्यारूढमिति ज्ञापनायेति दर्पणम् । सूत्रे ध्याननिगमादि-त्येव सुवचं चेतोर्पणस्यैव ध्यानत्वात् । तथापि यथावदुक्तस्याप्यसकृन्मनने ध्यानरूपता भवति । अत्र नैवं प्रकारः ।

**शब्दोऽर्थान्तरे प्रयुज्यमानो दृश्यते, यथा संवर्गविद्यायाम्,** (छा.४-३-८) **'ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तः' इत्यारभ्य, 'सैषा विराडन्नादी(त्)' इत्युच्यते ॥ २६ ॥ इतश्च गायत्रीशब्देन ब्रह्मैवाभिधीयते -**

**भूतादिपादव्यपदेशोपपत्तेश्चैवम् १ ।१ । २७ ॥**

**भूतपृथिवीशरीरहृदयानि निर्दिश्य,** (छा.३-१२-५) **'सैषा चतुष्पदा' इति व्यपदेशो ब्रह्मण्येव गायत्रीशब्दाभिधेये उपपद्यते ॥ २७ ॥**

**पूर्ववाक्ये, उपदेशभेदान्नेति चेन्न - उभयस्मिन्नप्यविरोधात् ॥** (१-१-२८) **'त्रिपादस्यामृतं दिवि' इति दिवोऽधिकरणत्वेन निर्देशात्, इह च, 'दिवः पर' इत्यवधित्वेन निर्देशादुपदेशस्य भिन्नरूपत्वेन पूर्ववाक्योक्तं**

---

चतुष्पदाया गायत्र्याश्चतुष्पदस्य ब्रह्मणश्च सादृश्यं ह्यत्रोपदिश्यते। अतो ध्यातव्य इत्यादिवन्नात्र ध्यानरूपता। सादृश्यप्रकारं मनसि चार्पयित्वा निगमनं क्रियत इति विशेषव्यक्त्यै 'तथा चेतोर्पण'मित्युक्तम्।

**सैषा विराडिति।** अग्निसूर्यजलचन्द्रवायवः पञ्च। अन्ये वाक्चक्षुश्श्रोत्रमनःप्राणाः पञ्च। आहत्य दश। अत्र दशसु दशत्वसङ्ख्यासत्त्वात्पूर्वोक्तेषु दशसु दशाक्षरच्छन्दोवाचि विराट्शब्दः प्रयुज्यते। तथा च 'पादोऽस्य' इति ब्रह्मणश्चतुष्पादत्वमभिहितम्। गायत्र्या अपि 'इन्द्रः शचीपतिः' इत्यादिना चतुष्पदत्वमुक्तम्। अत उभयोस्सादृश्यसद्भावाद्ब्रह्मणि गायत्री सादृश्यानुसन्धानं फलायोपदिश्यते। तत्रोदाहरणं 'सौषा विराड्' इति। अत्र दशत्वसङ्ख्यासाम्यमादाय विराट् छन्दोरूपत्वमुक्तम्। इदञ्च वाक्यं संवर्गविद्यायां वर्तते। संवर्गविद्यास्तुतये तत्सम्बन्धिपदार्थान् कृतायत्वेन विराट्त्वेनान्नत्वेनान्नादित्वेन च स्तुतिः क्रियते। अयशब्दो द्यूतवाचीः तस्मिंश्च वैविध्यं वर्तते। कृतनामको द्यूतविशेषः कृतायमित्युच्यते। इदं दशत्वसङ्ख्यावत्। अस्मिन्कृतसंज्ञे अये चतुरङ्क-अय, त्र्यङ्क-अय, द्व्यङ्क-अय एकाङ्क-अयानामनुप्रविष्टत्वादस्य दशाङ्कत्वम्। एकस्य द्वयोस्त्रयाणां चतुर्णां च समावेशः, अतो दशत्वसङ्ख्या। अतोऽस्य कृतायस्य दशकृतायमिति नाम। एवमेव दशसंख्याश्रयत्वात् 'दशाक्षरा विराड्' इति विराट्शब्दः प्रयुज्यते। तथैवात्रापीति भाव्यम्। अन्नादी = पूर्वमन्त्रे अन्नादित्वेनोक्तः परमात्मेत्यर्थः। अन्नञ्च तत् अत्ति च इत्यन्नात्। भूतादीत्युत्तरसूत्रम्।

**उपपद्यत** इति। गायत्रीपदं ब्रह्मपरमेव। मन्त्राक्तसर्वात्मकत्वस्य गायत्री छन्दस्यनुपपत्तेरिति पूर्वमुक्तम्। अत्र भूतादिपदान्वयानुपपत्तिरुच्यते। भूतपृथिवीशरीरहृदयरूपपादचतुष्टयं 'सैषा चतुष्पदा' इत्यनेन प्रतिपादितं कथं छन्दोरूपायां गायत्र्यां सम्भवति ? अतो गायत्रीशब्दितं त्रिपाद्ब्रह्मैव। ज्योतिर्वाक्येऽपि यच्छब्दश्रुत्या प्रतिपिपादयिषितम्। पूर्वप्रत्यभिज्ञापकद्युसम्बन्धित्वलिङ्गमप्यत्रोपलभ्यते। भूतम् = आत्मवर्गः। पृथिवी = अयं लोकः कर्मार्जनभोगस्थानम्। तदुपकरणं शरीरम्। हृदयम् = आत्मनःस्थित्यनुगुणप्रदेशविशेषः। एतेषां पादत्वेन निर्देशः। अस्मिन्सूत्रे 'पादव्यपदेशोपपत्तेः' इत्यलम्। अथापि 'पादोऽस्य सर्वाणि' इति श्रुत्युपादानं मास्त्विति भूतादीत्युक्तम्। 'भूतादिव्यपदेशोपपत्तेः' इत्यनुक्त्वा पादशब्दोपादानं पूर्ववच्चरणशब्दानुपादानश्चान्यस्य कस्यचिदर्थस्य व्यपदेशवारणार्थम्। भूतपृथिव्यादीनां पादत्वोक्तिः परस्वरूपविषया। न तु दिव्यमङ्गलविषयेति सूचनार्थञ्च। 'पादोऽस्य सर्वाभूतानी'त्यादिकं हि दिव्यमङ्गलविग्रहविषयकम्। अत एवाद्यसूत्रे चरणशब्दोपादानम्। व्यपदेशस्यान्यथोपपत्त्यसम्भवज्ञापनार्थम् 'उपपत्तेः' 'इत्यधिकं प्रयुक्तम्।

**उपदेशभेदादिति।** ननु किमर्थमिदं सूत्रम्? दिवि 'दिवः पर' इत्यनयोः प्रदर्शितदृष्टान्तरीत्या एकार्थत्वबोधनार्थमिति चेत् व्युत्पन्नस्य पुरुषस्य एवमर्थशिक्षणानुपयोगात्। शास्त्राव्युत्पन्नो हि पुरुषोऽनयोर्निर्देशयोरर्थवैचित्र्यं नैव जानीयात्। अत एव स्पाष्ट्यार्थमित्यपि नेति चेत् पुरुषसूक्ते 'एतावान्' इत्यस्ति। अत्र 'तावत्' इति। एवं 'अत' इति तत्र। 'तत'

**ब्रह्म परस्मिन्न प्रत्यभिज्ञायत इति चेत् - तन्न, उभयस्मिन्नप्युपदेशेऽर्थस्वभावैक्येन प्रत्यभिज्ञाया अविरोधात्; यथा 'वृक्षाग्रे श्येनः', 'वृक्षाग्रात्परतश्श्येनः' इति। तस्मात्परमपुरुष एव निरतिशयतेजस्कः, 'दिवः परो ज्योतिर्दीप्यत' इति प्रतिपाद्यते।** (२.यजु.आ.३,१२.पुरु.) **'एतावानस्य महिमा अतो ज्यायांश्च पुरुषः। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' इति प्रतिपादितस्य चतुष्पदः परमपुरुषस्य, 'वेदाहमेतं पुरुषं महान्तम्। आदित्यवर्णं तमसस्तु पारे' इत्यभिहिताप्राकृतरूपस्य तेजोऽप्यप्राकृतमिति तद्वत्तया स एव ज्योतिश्शब्दाभिधेय इति निरवद्यम्॥ २८॥** इति ज्योतिरधिकरणम्॥ १०॥

इन्द्रप्राणाधिकरणम्॥ ११॥ (कौषी.३)

**निरतिशयदीप्तियुक्तं ज्योतिश्शब्दाभिधेयं प्रसिद्धवन्निर्दिष्टं परमपुरुष एवेत्युक्तम्। इदानीं कारणत्वव्याप्तामृतत्वप्राप्त्युपायतयोपास्यत्वेन श्रुतः इन्द्रप्राणादिशब्दाभिधेयोऽपि परमपुरुष एवेत्याह -**

## प्राणस्तथाऽनुगमात् १।१।२९॥

इति अत्र। अत उभयविधनिर्देशस्य परस्परं भिन्नत्वात्पुरुषसूक्तप्रत्यभिज्ञापनं वक्तुं न शक्यमित्याशङ्काया वारणार्थमिदं सूत्रमित्यभिप्रयन्नाह - **एतावनस्येति**॥

दिवि इति प्रतिपादितस्य चतुष्पदः परमपुरुषस्य निर्देशप्रकारे वैलक्षण्यसत्त्वेप्यर्थविरोधो नास्तीति भावः। **तेजोऽप्यप्राकृतमिति**। उभयत्र भेदनिर्देशः न वस्त्वन्यत्वसाधकः। उभयत्राप्राकृतदिव्यतेजोविशिष्टवस्तुन एवाभिधानात्। 'एतावान्' 'तावान्' 'अतः' 'तत' इत्येतदर्थभेदसाधकं न भवति। मुख्यार्थप्रत्यभिज्ञापकतया द्युलोकवर्तित्वपादचनुष्टयवत्वादीनां प्रदर्शनादिति सूत्रतात्पर्यम्। अत्र सारावलयां - 'रुन्धेऽथाधिक्रियाभ्यां तदुचितचिदचिद्वर्गवैशिष्ट्ययुक्त्या' इति समाहितम्। तथा च ज्योतिः पदं दिव्यमङ्गलविग्रहविशिष्टपरम्। प्राण-इन्द्रादिपदं तत्तद्विशिष्टपरम्। अत एतादृशं वैशिष्ट्यं प्रदर्श्य पूर्वपक्षिणौ वारणीयावित्यर्थः। यद्वा ज्योतिरधिकरणे 'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' इति चेतनाचेतनवैशिष्ट्यस्य, इन्द्रप्राणाधिकरणे 'अध्यात्मसंबन्धभूमा' इत्युक्तचेतनाचेतनवैशिष्ट्यस्योक्तत्वादेतादृशवैशिष्ट्ययोगः परमान्यन्येव नान्यत्रेत्युक्त्वा वारणीयाविति॥

इन्द्रप्राणाधिकरणम्

**ज्योतिश्शब्ददाभिधेयमिति**। अनन्तराधिकरणे हिरण्यश्मश्रुरित्यादिना दिव्यमङ्गलविग्रहविशिष्टत्वमुक्तम्। करचरणादिसङ्घातरूपदेहवाचकशब्दो देहिपर्यन्तं भवतीत्येतल्लोकसिद्धम्। ज्योतिःपदमपि दिव्यमङ्गलविग्रहविशिष्टं बोधयेदित्यत्र न संशयः। परन्तु कौक्षेयज्योतिषा ऐक्यवचनफलश्रवणादिपर्यालोचनया ज्योतिःपदं न परमात्परमिति पूर्वपक्षिणोऽभिप्रायात्तन्निराकरणाय ज्योतिरधिकरणं प्रवृत्तम्। आकाशवायुतेजसां क्रममनुरुंध्याधिकरणत्रयं प्रवृत्तम्। अधिकरणद्वये हवैशब्दघष्टितवाक्यमादाय। अतोऽनुवादरूपता। ज्योतिरधिकरणे यच्छब्दघटितवाक्यमादाय। अतस्तस्याप्यनुवादरूपता। अत्राधिकरणे मामिति शब्दनिर्दिष्टस्येन्द्रस्यैवोपास्यत्वोक्त्या ध्येयस्यैव कारणत्वादिन्द्र एव जगत्कारणं भवतु। वाहवैशब्दस्य वाऽश्रवणान्नानुवादरूपत्वं शब्दस्य। त्वाष्ट्रवधादिजीवलिङ्गश्रवणं चानुकूलम्। यं त्वमपि परमात्मानन्वयि। 'यन्मां विजानीयात्' इत्युपास्यत्वस्य इन्द्रोपासनस्य हिततमत्वस्य च श्रवणमत्यन्तानुकूलम्। हिततममिति तमप उक्तत्वात्। अन्येषां हिततरत्वमेव। इन्द्रोपासनन्तु हिततमं मोक्षकारणश्चेति सङ्गतिः। अतो ज्योतिश्शब्दादिवाच्यस्य परमपुरुषत्वस्थापनमयुक्तमिति पूर्वपक्षः।

**कौषीतकिब्राह्मणे प्रतर्दनविद्यायाम्,** (३-१) **'प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च' इत्यारभ्य, वरं वृणीष्वेति वक्तारमिन्द्रं प्रति, 'त्वमेव मे वरं वृणीष्व, यं त्वं मनुष्याय हिततमं मन्यसे' इति प्रतर्दनेनोक्ते,**(३-१४) **'स होवाच, प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व' इति श्रूयते। तत्र संशयः - किमयं हिततमोपासनकर्मतयेन्द्रप्राणशब्दनिर्दिष्टो जीव एव, उत तदतिरिक्तः परमात्मेति। किं युक्तम् ? जीव एवेति। कुतः? इन्द्रशब्दस्य जीवविशेष एव प्रसिद्धेः तत्समानाधिकरणस्य प्राणशब्दस्यापि तत्रैव वृत्तेः। अयमिन्द्राभिधानो जीवः प्रतर्दनेन, 'त्वमेव मे वरं वृणीष्व, यं त्वं मनुष्याय हिततमं मन्यसे'**

---

**प्रनर्दनविद्या** - दिवोदासस्य पुत्रः प्रतर्दनः, अतिपराक्रमवान्, इन्द्रस्यासुरेण युद्धसमये सहायं चकार। प्रीत इन्द्रः स्वधाम आगतममुं वरं वरयेत्युवाच। सोपि मनुष्यस्य यत् हितं तमेव वरं ददस्व इत्युवाच, । पुनरिन्द्र : त्वमेव त्वदिष्टं वरमालोच्य प्रार्थयस्वेत्याह। प्रतर्दनोपि मत्प्रार्थनानुगुणं त्वयाऽदाने वरदायित्वं तव न स्यात्। मनुष्याणां यद्धितमिति तवाभिप्रायः स एव ममापि वर इत्युवाच। सत्यादविरत इन्द्रः तस्मा उपदेशं चकार - मामेव भजस्व, अस्मदुपासनमेव मनुष्याणां हितमिति मन्ये। त्वष्टुः पुत्रं विश्वरूपमहं हतवान्। वेदाध्ययनमकुर्वाणान् यतीन् सालावृकेभ्यः प्रायच्छम्। बह्वीः प्रतिज्ञाः अतिक्रम्य दिवि प्रह्लादपुत्रान् अन्तरिक्षे पौलोमान् कालखञ्जांश्चाहनम्। तस्य मम लोमनाशोपि नास्ति। मदुपासकस्य मातृहतिपितृहति चैर्यगर्भहतिप्रभृति पापकर्म न फलं दद्यात्। पापकरणेन मुखेपि न वैवर्ण्यं जायेत। अहं प्राणः प्रज्ञात्मा। तादृशं मामायुरमृतमित्युपास्स्व। प्राण एव आयुः। प्राण एवामृतम्। कुतः? अस्मिन् शरीरे प्राणसत्ताकाल-मायुर्वतते। प्राणेनैवामुष्मिन्नपि लोकेऽमृतत्वं प्राप्नोति। 'प्रज्ञात्मा' इत्युपासनेन सत्यसङ्कल्पतां प्राप्नोति। आयुरमृतमि-त्युपासनेनात्र पूर्णायुषं प्राप्य पश्चात्स्वर्गेपि नाशमप्राप्य प्रकाशते।

एकस्मिन्नेव काले तत्तदिन्द्रियाणां तत्तत्कार्यकरणसामर्थ्यं नास्तीत्येतत्पश्यामः। सर्वेन्द्रियेभ्यः प्राणस्य माहात्म्यम-धिकम्। श्रोत्रप्रभृतीन्द्रियापगमेपि बधिरो जीवति, अन्धो, मूको, हस्तहीनश्च। प्राणवाय्वपगमे नु न जीवामः। अतः प्राण एवोत्कृष्टः। स एवेन्द्रियेषु व्यापृत्य सर्वं करोति। अतो जीवस्य प्राधान्यम्। प्राण एव प्रज्ञात्मा, स एव प्राणश्च। उभौ सहितावेव वसतः। सहितावेव गच्छतश्च। स्वान्तकालेपि सर्वस्याभावेपि श्वासमात्रमनुवर्तते। मूर्च्छायामपि सूक्ष्मतया-ऽनुवर्तते। प्रज्ञास्वरूपस्य जीवस्याभावे नैकमपीन्द्रियं कार्यकरणशक्तम्। अतो विषयापेक्षया तद्ग्राहकेन्द्रियापेक्षया प्राणापेक्षया यो भिन्नो ज्ञाता कर्ता च स जीव इत्याद्युक्त्वा 'तद्यथा रथस्यारेषु नेमिरर्पिता ... प्राणे अर्पिताः स एष प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमृतो न साधुना कर्मणा एष ह्येवनसाधु...इत्याद्युक्तम्। त्रिशीर्षत्वाष्ट्रादिहननेपि इन्द्रस्या-पापत्वमुपास्यत्वं प्राणप्रज्ञात्मशब्दवाच्यत्वं, प्राणेन सह प्रज्ञात्मशब्दवाच्यस्यात्मनः शरीरे वासः प्राणस्य प्रज्ञारूपात्मनः सर्वेन्द्रियवशित्वञ्चोक्तम्। अनन्तरमचिदधिष्ठितचिदधिष्ठानत्वमानन्दत्वाजरत्वादि प्राणत्वं प्रज्ञात्मत्वं साध्वसाधुकर्म-लेपानर्हत्वसाध्वसाधुकर्मप्रवर्तकत्वलोकपालत्वादि च सुष्ठु।

**इन्द्रप्राणशब्देति**। उपक्रमगतेन्द्रादिशब्दस्य नात्र ग्रहणम्। बहुकृत्वः प्रयुक्तस्य इन्द्रशब्दस्य प्रसिद्धेन्द्रपरत्वात्। परन्तु मामुपास्स्वेत्यात्रास्मच्छब्द इन्द्रवाची। तं मनसि निधाय 'इन्द्रेत्युक्तम्'। मोक्षहेतुभूतमुपासनं हिततमम्। कारणमेव च ध्येयम्। प्रकरणोक्तोपासनकर्मत्वे कारणत्वमप्यर्थसिद्धम्। इदन्तु निर्विवादम्। अत्रोपास्यत्वन्त्विन्द्रस्यैवोक्तम्। बहु-कृत्वः इन्द्रशब्दोऽत्र प्रकरणे पठितः। स च शब्दः शचीपतिपर इत्यत्र न विवदः। अतस्तत्प्रयुक्तास्मच्छब्दोपि शचीपति-मेवाभिदध्यात्। अतः स एव कारणम्। न चास्मच्छब्दस्यान्यथानयनासम्भवेपि प्राणशब्दस्य परमात्मपरत्वं प्राणाधिकरण-नीत्या सम्भवतीति वाच्यम्। प्राणासाधारणलिङ्गस्य आयुस्सर्वेन्द्रियनिर्वाहकत्वादेरुक्तत्वात्। न चेन्द्रलिङ्गस्य त्वाष्ट्र-वधादेरपि श्रूयमाणत्वात्प्राणः इन्द्रश्च कारणमिति कारणत्वनियमः कथमिति वाच्यम्। प्राणोऽस्मि प्रज्ञात्मेतीन्द्रेणोक्तत्वात्

**इत्युक्तः, 'मामुपास्व' इति स्वात्मोपासनं हिततममुपदिदेश। हिततमश्चामृतत्वप्राप्त्युपाय एव। जगत्कारणोपासनस्यैवामृतत्वप्राप्तिहेतुता,** (छा.६-१४-२) **'तस्य तावदेव चिरं यावन्न विमोक्ष्ये, अथ सम्पत्स्ये' इत्यवगता। अतः प्रसिद्धजीवभाव इन्द्र एव कारणं ब्रह्म - इत्याशङ्कायामभिधीयते - 'प्राणस्तथानुगमादि'ति। अयमिन्द्रप्राणशब्दनिर्दिष्टो न जीवमात्रम्; अपि तु जीवादर्थान्तरभूतं परं ब्रह्म;** (३-६२) **'स एष प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमृतः' इतीन्द्रप्राणशब्दाभ्यां प्रस्तुतस्यानन्दाजरामृतशब्दसामानाधिकरण्येनानुगमो हि तथा सत्येवोपपद्यते॥ २९॥**

---

इन्द्र एव प्राणशब्दपर्यवसानात्। प्राणविशिष्टत्वं तु जीवस्य सम्भवतीति इन्द्रे पर्यवसानं न्याय्यम्। अप्राणस्य परमात्मनः प्राणविशिष्टत्वाभावाच्च। अतः प्राणविशिष्टतया प्रतिपाद्यः इन्द्र एवात्र प्रधानप्रतिपाद्यः। स एव कारणञ्च।

न च प्राणशब्दस्यावयवव्युत्पत्त्या परमात्मपरत्वम्, इन्द्रशब्दस्यापि ज्योतिरधिकरणरीत्या विशिष्टपरत्वम्, आकाशशब्दस्योभयप्रकारेण परमात्मपरत्वञ्चेत्यङ्गीकारादत्रेन्द्रशरीरकपरमात्मपरत्वनिश्चयसम्भवेन पदद्वयमपि परमात्मपरं भवितुमर्हतीति कथं शङ्काया अवसर इति वाच्यम्। उपक्रमोक्तजीवलिङ्गानां त्वाष्ट्रवधादीनां बहूनां परमात्मन्यनन्वयात्। अतः 'प्राणो ह पिता प्राणो ह माता' इत्यादिषु जीवेपि प्राणशब्दप्रयोगात्प्राणशब्दवाच्यत्वम् इन्द्रस्यैव भवति। प्राणवैशिष्ट्यविवक्षणेपि तदुपपद्यते। तस्मात्पूर्वाधिकरणेषु प्रसिद्धाकाशवायुज्योतिषां त्यागेन तत्तत्पदानां परमात्मपरत्ववर्णनमिव नात्र सम्भवति। इन्द्रस्य वा प्राणस्य वा परित्यागो नैव शक्यः, तत्तल्लिङ्गानामुपक्रम एव बहूनां सद्भावात्तेषामन्यथावर्णनस्याप्यसम्भवात्। अत्र प्राणशब्दास्मच्छब्दयोरेकार्थत्वमस्तीति सूचनायैव सूत्रे प्राण इति पदं प्रयुक्तम्। 'प्रतर्दनो ह दैवोदासिः इन्द्रस्य प्रियं धाम' इत्याख्यायिका उपक्रमगता न कथञ्चिदपि परमात्मनि समन्वेतुं शक्या। न च यमपर्जन्यादीनामिवेन्द्रस्याप्युत्पत्तिबोधकश्रुतेः 'देवत्राक्षतमिन्द्रो यमः पर्जन्य' इत्यादेः कथं निर्वाह इति वाच्यम्। विष्णुरामकृष्णादिप्रादुर्भावबोधकवाक्यस्येवास्या अपि निर्वाहादिति पूर्व पक्षिणोऽभिप्रायः।

**तथा सत्येवोपपद्यत** इति। यथा आकाशशब्दोऽवयवव्युत्पत्त्या वाऽन्यथा वाऽऽकाशनियन्तृपरमात्मपरः, आकाशशरीरकपरमात्मपरः तथा प्राणशब्दोप्युभयप्रकारेण परमात्मपरः। अथवा यथाऽऽकाशादिशब्दाः परमात्मपराः, तथा प्राणशब्दोपि प्राणविशिष्टेन्द्रशरीरकपरमात्मपरः। **अनुगमात्** इति हेतुः। यद्वा **तथा**शब्दः साध्यवाचकः। तथा परमात्मपर एवेति। यद्वा **तथाऽनुगमा**दिति हेतुः। परमात्मवाचकत्वेनैवोत्तरवाक्यानामनुगमः। पूर्ववाक्येषु सिद्धान्तिहेतुः नाभिव्यक्तः। उत्तरवाक्येष्वेवाभिव्यक्तः। आकाशाधिकरणादिषु तु स्वपूर्ववाक्येष्वेवाभिव्यक्तः। उत्तरवाक्योक्तानां हेतूनामभिव्यक्तानां तथा सत्येवोपपत्तिरित्यर्थः। उपरितनसूत्राण्यप्येतद्विवरणभूतानि। उपक्रमे इन्द्रशब्दः प्रयुक्तः, विद्यामध्ये तु न। मां इत्यत्र प्राणोऽस्मि इत्यादौ च तच्छरीरकपरमात्मपर्यन्तत्वमेवैषितव्यम्। यदि स्वमात्रविवक्षा तर्हि 'स एष प्राण एव प्रज्ञात्मा' इति परोक्षतया निर्देशः कथं स्यात्? 'अहं प्राण एव प्रज्ञात्मा' इत्युक्तिः स्यात्। उपरि च 'आनन्दोऽजर' इत्यादावप्यस्मच्छब्दनिर्देशं विनोपदेशात्। सर्वत्रास्मच्छब्दोऽन्तर्यामिपर एव। अतश्चेतनाचेतनरूपविशेषविशिष्टतत्तदन्तर्यामिपरः।

न च पूर्वाधिकरणे 'गायत्री वा' इत्युपक्रमोपक्रमस्य 'एतावानस्य महिमा' इत्युपक्रमस्य चानुरोधेन परमात्मपरत्वनिर्णयवदत्रापि 'उपाख्यानस्योपक्रमोपक्रमस्य' 'मामायुः' इत्युपक्रमस्य चानुरोधेनेन्द्रपरत्वमेव वाच्यमिति शङ्क्यम्। उपक्रमाधिकरणन्यायापवादभूतन्यायेन अर्थनिश्चयाकत्वात्। उपक्रमः उपक्रमोपक्रमो वा महावाक्यानुरोधेनान्यथयितव्यत्वात्। एककण्ठं बहूनि वाक्यानि परमात्मानमेव वदन्ति। अजरत्वामृतत्वलोकपालत्वसाध्वसाधुप्रवर्तकलोकस्वामित्वादीनि न प्रसिद्धेन्द्रपरत्वे सङ्गतानि। एष एव साधुकर्म कारयति इति परोक्षनिर्देशोपि इन्द्रत्वबाधकः। 'अहमेव साधु

## न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् १ । १ । ३० ॥

**यदुक्तम् - इन्द्रप्राणशब्दनिर्दिष्टस्य, 'आनन्दोऽजरोऽमृतः' इत्यनेनैकार्थ्यादयं परं ब्रह्मेति - तन्नोपपद्यते, 'मामेव विजानीहि', 'प्राणोऽस्मि' इत्येवमादिना त्वाष्ट्रवधादिभिः प्रज्ञातजीवभावस्य स्वात्मन एवोपास्यतां प्रतर्दनायोपदिशति । अत उपक्रमे जीवविशेष इत्यवगते सति 'आनन्दोऽजरोऽमृतः' इत्यादिभिरुपसंहारस्तदनुगुण एव वर्णनीय इति चेत् -**

**परिहरति - अध्यात्मसम्बन्धभूमा ह्यस्मिन् - आत्मनि यः सम्बन्धः सोऽध्यात्मसम्बन्धः । तस्य भूमा - भूयस्त्वम्, बहुत्वमित्यर्थः । आत्मन्याधेयतया सम्बध्यमानानां बहुत्वेन सम्बन्धबहुत्वम् । तच्चास्मिन् वक्तरि परमात्मन्येव हि सम्भवति । 'तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिताः, एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणे अर्पिताः । स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः' इति भूत-**

---

कर्म कारयामी'ति हि वक्तव्यम् । उपरि 'स मे आत्मेति विद्यात्' इति वैयधिकरण्यनिर्देशोपि इन्द्रत्वनिषेधे प्रबलम् । अतो महावाक्यपरिशीलने नेन्द्रस्यात्र कारणत्वसिद्धिर्ज्ञायेत । एतत्सर्वम् 'अनुगमात्' इत्यनेन विवक्षितम् । प्राणेन्द्रप्रकमोपि प्रबलतरमहावाक्यवैघट्यभग्न इति एतत्सर्वमधिकरणसारावल्यामुक्तम् ॥

**तन्नोपपद्यत** इति । **इत्यारभ्य इति चेत्** इत्यन्तं पूर्वपक्षखण्डः । उपरि सिद्धान्तखण्डः । पूर्वपक्षखण्डे प्रथमं न इत्युक्तत्वात्तदनुसारेण निषेध्यमध्याह्नय व्याख्या कृता । न इत्यस्य इति चेत् ? न इत्यन्वयो न स्वरसः तथान्वयं स्वीकृत्यार्थवर्णने बाधकाभावेपि न वाक्यशैली स्वरसा । वाक्यन्वयाधिकरणेपि अमृतत्वप्राप्त्युपायोपसनाऽभिहिता, वाक्यानामनुगमो दृश्यत इत्यनुगमोपि प्रदर्शितः । तथापि विद्याभेदमनुसृत्योभयत्र पूर्वपक्षसिद्धान्तौ प्रवृताविति ज्ञेयम् ।

पूर्वं नञः प्रयुञ्जानस्योत्तरत्र 'इति चेन्न' इति नञ् अप्रयोगे इदं कारणम् । क्वचित् 'सत्यम्', इति प्रयोगः । क्वचित् 'इति चेन्न' इति प्रयोगः । क्वचित्तदप्रयोगः । अर्धाङ्गीकारे सत्यमिति प्रयोगः । पूर्वपक्षोक्तस्यार्थस्य सर्वथाऽनङ्गीकारे 'न' इति प्रयोगः । पूर्णस्याभ्युपगमे (अन्यथावर्णनेन) तदप्रयोग इति । अत्र 'वक्तुरात्मोपदेशात्' इत्युक्तस्य सर्वस्याप्यङ्गीकारः । पूर्वपक्षे वक्ता इन्द्रः । आत्मशब्दोपि स्वपरस्सन् इन्द्र वाचकः । सिद्धान्ते वक्ता परमात्मा । आत्मशब्दः परमात्मपरः । इदं मनसि निधाय 'न' इति नोक्तम् । स्वोपदेशादित्यनुक्त्वा वक्तुरात्मोपदेशादिति कथनम् आख्यायिकोपक्रमगतेन्द्रादिशब्दः शचीपतिपर एव, परन्तु 'मामेव विजानीहि प्राणोऽस्मि' इत्यादिवक्ता तु परमात्मैवेति सूचनाय । वधादिभिरित्यत्रादिशब्देन प्रकरणोक्तानां सालावृकयतिप्रदानादीनां सर्वेषां परिग्रहः ।

उपक्रमानुगुण्येनोपसंहारनयनं कार्यमिति पूर्वपक्षी । उपक्रमादपि बलीयसा महाप्रकरणवाक्योक्तधर्मभूयस्त्वेनार्थनिश्चयः कार्यः इति सिद्धान्ती । अनेनाशयेनाह - **परिहरतीति** । आत्मनीति अध्यात्मम् । अध्यात्मं सम्बन्धः अध्यात्मसम्बन्धः । तस्य भूमा । भूयस्त्वमिति व्याख्यातं, बहुत्वमिति विवरणं क्रियते । सम्बन्धभूयस्त्वमित्यस्य गाढसम्बन्ध इत्यर्थभ्रमव्युदासाय बहुत्वमिति विवृतम् । वक्ष्यामणपदार्थसम्बधस्य भगवत्येकस्य सत्त्वेन कथं सम्बन्धबहुत्वमिति शङ्कापरिहाराय - सम्बध्यमानानां बहुत्वेनेत्युक्तम् । एतदुपपादकतया 'अचेतनवस्तुजातं चेतनवर्गश्च' इत्युपर्यभिहितम् । प्राणशब्दवाच्यवस्तुनि बहूनामचेतनानां बहूनां चेतनानाश्चाधारत्वरूपसम्बन्धस्य प्रतीतेस्सम्बन्ध्यमानबहुत्वं स्पष्टम् । तेन तत्प्रयुक्तैकवस्तुनिरूपिताधारत्वादिबहुत्वमपि सिद्धम् । सूत्रे **अस्मिन्** इति पदव्याख्यानं वक्तरि परमात्मन्येवेति । विषयवाक्ये 'प्राणे' इति वर्तते । अत्र परमात्मन एव प्राणशब्दवाच्यत्ववक्तृत्वादिसम्भव एव उक्तसम्बन्धबहुत्वं निराबाध-

**मात्राशब्देनाचेतनवस्तुजातमभिधाय प्रज्ञामात्राशब्देन तदाधारतया चेतनवर्गं चाभिधाय तस्याप्याधारतया प्रकृतमिन्द्रप्राणशब्दाभिधेयं निर्दिश्य तमेव, 'आनन्दोऽजरोऽमृतः' इत्युपदिशति। तदेतच्चेतनाचेतनात्मककृत्स्नवस्त्वाधारत्वं जीवादर्थान्तरभूतेऽस्मिन् परमात्मन्येवोपपद्यत इत्यर्थः ॥**

**अथ वा - अध्यात्मसम्बन्धभूमा ह्यमिन् - परमात्मासाधारणधर्मसम्बन्धोऽध्यात्मसम्बन्धः। तस्य भूमा बहुत्वं ह्यस्मिन् प्रकरणे विद्यते। तथा हि - प्रथमम्, 'त्वमेव मे वरं वृणीष्व, यं त्वं मनुष्याय हिततमं मन्यसे' इति, 'मामुपास्व' इति च परमात्मासाधारणमोक्षसाधनोपासनकर्मत्वं प्राणशब्दनिर्दिष्टस्येन्द्रस्य प्रतीयते। तथा, 'एष एव साधु कर्म कारयति तम्, यमेभ्यो लोकेभ्य उन्निनीषति। एष एवासाधु कर्म कारयति तम्, यमधो निनीषति' इति सर्वस्य कर्मणः कारयितृत्वं च परमात्मधर्मः। तथा, 'तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिताः, एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः, प्रज्ञामात्राः प्राणेऽर्पिता' इति सर्वाधारत्वं च तस्यैव धर्मः। 'एष लोकाधिपतिरेष सर्वेशः' इति च परमात्मन्येव सम्भवति। तदेवमध्यात्मसम्बन्धभूम्नोऽत्र विद्यमानत्वात्परमात्मैवात्रेन्द्रप्राणशब्दनिर्दिष्टः ॥ ३० ॥**

---

मुपपादयितुं शक्यम्। नान्यथेति भावः। यदि प्राणशब्द इन्द्रपरस्तदा इन्द्राधारकत्वादिसम्बन्धबहुत्वं वाच्यम्। न हि चेतनाचेतनवर्गाधारत्वमिन्द्रस्य। तत्सम्बन्धिभूतेन्द्रियादिरूपवस्त्वाधारत्वं स्यान्नाम। स्वातिरिक्तचेतनाधारत्वं तु न सुतरामिति भावः।

यद्यप्यचेतनानामाधारत्वं चेतन एवोक्तमथाप्यचेतनाधारत्वं चेतनद्वारेति भाव्यम्। यद्वाऽऽधाराधेयभावस्य शरीरात्मभावरूपत्वात्परमात्मानं प्रति सर्वेषां शरीरत्वात्भगवत एव सर्वाधारत्वमप्युपपद्यते। न च 'प्राणे अर्पिता' इत्युक्तत्वात्प्राणस्येन्द्रियादिस्थितिप्रवृत्तिप्रयोजकत्वात्तद्विषयमेवेदं वाक्यमिति शक्यवचनम्, इन्द्ररूपचेतनस्य तदधीनत्वाभावात्। 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा' इति जीवाधीनप्रवृत्तिनिवृत्तिकत्वस्यैव प्राणेऽवगमात्। यद्यपि इन्द्रस्य प्राणवैशिष्ट्यमस्ति, तथापि प्राणाधीनस्थितिकत्वादि नास्ति। अपि चैकैकस्मिन्नपि शरीरे विशेषमापन्नस्य प्राणस्य सत्त्वमभ्युपगम्यते अथापि कस्य वा प्राणस्य निखिलेन्द्रियभूतादिवस्त्वाधारत्वम्। चेतनविषये सुतरामसम्भवश्च तदेदाह - **तदेतच्चेतनाचेतनेति**। अतोऽत्रोपक्रमन्यायो न प्रावर्तते महावाक्यार्थविरोधात्। अवान्तरवाक्यार्थोपि न प्रबलः।

**अथ वेति**। पूर्वोक्तार्थे अध्यात्म इत्यत्रात्मशब्दोऽस्मिन्निति शब्दश्चैकार्थवाची। अस्मिन्सम्बन्धबहुत्वादित्येवालम्। अध्यात्मेति व्यर्थं स्यात्। अतो 'अस्मिन्' इत्यस्य प्रकरणपरत्वस्वीकारेणार्थन्तरवर्णनं कृतम्। पूर्वं नाभिस्थाने परमात्मानम् अरस्थाने जीववर्गं नेमिस्थाने भूतवर्गश्च निक्षिप्य सर्वचेतनाचेतनाधारत्वं प्रतीयमानं प्राणशब्दस्य परमात्मपरत्व एवोपपन्नं स्यादित्युक्तम्। अद्य प्रकरणश्रुतानां सर्वेषामेव धर्माणां प्राणेन्द्रेद्याधारकत्वं नोपपद्यते। परमात्माधारकत्व एवेत्यभिप्रायेणार्थन्तरवर्णनम्। अनेन भूयसां न्यायः प्रतिपादितः। अधिगत आत्मा यैस्ते अध्यात्मानः तेषां सम्बन्ध इति विग्रहः कार्यः। पूर्वयोजनायामपि अधिगतः आत्मसम्बन्धः यैस्ते इति अध्यात्मसम्बन्धः तेषां भूयस्त्वमित्यपि सम्भवति। परन्तु अध्यात्मेति पदश्रवणवेलायामेव अधिशब्दात्मशब्दयोरेव परस्परविग्रहकरणं प्रतीयते। अधिशब्दस्य सम्बन्धशब्देन समासस्फूर्तिः नैव जायेतेत्येव विशेषो बोध्यः। तथा च मोक्षोपासनकर्मत्वं साध्वसाधुकर्मकारयितृत्वं सर्वाधारत्वम् आनन्दत्वाजरत्वादिलोकाधिपतित्वं सर्वेशत्वमित्यादयो नेन्द्रधर्मा इति भावः।

'मामुपास्व' इत्येतदन्यथयति **प्रज्ञातेति**। प्राणशब्दोऽस्मच्छब्दश्च परमात्मपर इति निर्विवादम्। प्रसिद्धभूतप्राणाद्यर्थकत्वेन रूढानामप्याकाशादिशब्दानां रूढिपरित्यागेन योगेन वा लक्षणया वा परमात्मपरत्वमुक्तं, ज्योतिरादिवाक्ये स्वा-

**कथं तर्हि प्रज्ञातजीवभावस्येन्द्रस्य स्वात्मन उपास्यत्वोपदेशः सङ्गच्छते ? तत्राह -**

**शास्त्रदृष्ट्या तूपदेशो वामदेववत् १ । १ । ३१ ॥**

**प्रज्ञातजीवभावेनेन्द्रेण, 'मामेव विजानीहि', 'मामुपास्स्व' इत्युपास्यस्य ब्रह्मणः स्वात्मत्वेनोपदेशोऽयं न प्रमाणान्तरप्राप्तस्वात्मावलोकनकृतः, अपि तु शास्त्रेण स्वात्मदृष्टिकृतः । एतदुक्तं भवति -** (छा.६-३-२) **'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि',** (छा.६-८-७) **'ऐतदात्म्यमिदं सर्वम्',** (यजु.आ.३-११-२१) **'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा',** (बृ.५.मां.६-७) **'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरं य आत्मानमन्तरो यमयति',**(सुबा.७) **'एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः' इत्येवमादिना शास्त्रेण जीवात्मशरीरकं परमात्मानमवगम्य, जीवात्मवाचिनामहंत्वमादि-शब्दानामपि(चिनामपि शब्दानां) परमात्मन्येव पर्यवसानं ज्ञात्वा, 'मामेव विजानीहि', 'मामुपास्स्व' इति स्वात्मशरीरकं परमात्मानमेवोपास्यत्वेनोपदिदेश - इति ।**

**वामदेववत् - यथा वामदेवः परस्य ब्रह्मणः सर्वान्तरात्मत्वं सर्वस्य च तच्छरीरत्वं शरीरवाचिनां च शब्दानां शरीरिणि पर्यवसानं पश्यन्, 'अहम्' इति स्वात्मशरीरकं परं ब्रह्म निर्दिश्य तत्सामानाधिकरण्येन मनुसूर्यादीन् व्यपदिशतिः** (बृ.३-४-१०) **'तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे',** (ऋक्सं.मं.४.२६-१) **'अहं मनुरभवं सूर्यश्च अहं कक्षीवानृषिरस्मि विप्र' इत्यादिना । यथा च प्रह्लादः,** (वि.पु.१-१९-८५) **'सर्वगत्वादनन्तस्य स**

---

र्थापरित्यागेन विशिष्टदेहिपरत्वञ्चोक्तम् । अत्र तु देहवाचकशब्दाभावात् मामिति सर्वनामशब्दत्वाच्च देहिपर्यन्तानुधावनं कथमिति शङ्कां विशदयन्ननन्तरसूत्रमवतारयति - **कथं तर्हीति** । मामितिशब्दप्रयोक्ता हीन्द्रः । स स्वात्मनमिन्द्रमेव मनुते न परमात्मानम् । अतोऽस्मच्छब्दः इन्द्रस्यैव वाचक इति पूर्वपक्ष्याशयं निराकरोति न **प्रमाणान्तरेति** । उपरि सकलवेदान्त-रहस्यार्थोपदेष्टा स्वमात्मानं शास्त्रेणैव परमात्मशरीरं मनुते स्म, प्रत्यक्षादिप्रमाणैः स्वस्वरूपाज्ञानेपि परमात्मशरीरत्वस्या-ज्ञानेपि वा न दोषः । वेदान्तशास्त्रज्ञाननिपुणः स्वस्य परस्य च शरीरात्मभावसम्बन्धं जानात्येव । अतः शास्त्रसम्प्रतिपन्नस्य चेतनाचेतनगतपरमात्मनिरूपितदेहत्वस्य स्वेन ज्ञातत्वात्सर्वनामशब्दरूपास्मच्छब्दः प्राणशब्दश्च परमात्मपर इति निश्चितवान् । 'ज्योतिःशब्दवाच्याप्राकृतशरीरस्य परमात्मदेहत्ववत्प्राकृतस्यापि परमात्मदेहत्वसिद्धे र्मामिति निर्देशो नानुपपन्नः । प्राणशब्दो भवन्मते विशिष्टपर एव वाच्यः । प्राणोऽस्मि प्रज्ञात्मा इत्यनन्वयात्तथैवास्मच्छब्दोपि अस्मत्इन्द्रविशिष्टपरमात्मपरः । प्राणवैशिष्ट्यं परस्य कथमिति चेदिन्द्रद्वारा । नियामकत्वाद्वा । योगवृत्तिः पूर्वमुपपादिता च ।

अहंत्वमादिशब्दानामिति साभिप्रायम् । एतदनुसारेणैवोत्तरत्र 'अहं मनुरभवमि'त्यादिप्रदर्शनम् । मनुसूर्यादीन् व्यपदिशतीति वाक्यसमाप्तिः । 'तद्धैतत्' इत्यादि 'प्रतिपेदे' इत्यन्तं बृहदारण्यकवाक्यम् । अहं मनुरभवमित्यादि वामदेव-वाक्यम् । वामदेवस्य शरीरात्मभावज्ञानं सञ्जातमित्यत्र बृहदारण्यकवाक्यं प्रमाणत्वेनोदाहृतम् । तत् = ब्रह्म, एतत् = सर्वात्मकं, पश्यन् = अवेक्षमाणः उपासकः । **अहं मनुरभवम्** । मदन्तरात्मा भगवान्, मनुरभवम् = मनुरूपेणोत्पन्नजीवस्या-प्यन्तरात्मा । पूर्वजन्मनि अहं मनुरभवमित्यर्थविवक्षाऽत्र नास्ति । **कक्षीवान् ऋषिरस्मि** । **अस्मी**ति वर्तमान निर्देशः । एतेन कक्षीवतो ऋषेर्वामदेवस्य समानकालिकत्वं बोधितम् । अतो जन्मान्तरे कक्षीवान् इति नार्थस्योपपत्तिः । एवमेव अहं मनुरभवमित्यस्यापि । 'अहं कुत्समार्जुनेयं न्युञ्जे अहं कविः उशना पश्यता मा' इति पूर्णमन्त्रः । सर्वान्तर्यामी ममान्तर्यामी चैक इति फलितोऽर्थः । सूत्रे शास्त्रपदविवक्षितां स्मृतिमपि दर्शयति - **सर्वगत्वादिति** । अत्र हेतुप्रदर्शनमधिकम् । यद्यपि

**एवाहमवस्थितः। मत्तः सर्वमहं सर्वम्, मयि सर्वे सनातने' इत्यदि वदति ॥ ३१ ॥**

**अस्मिन् प्रकरणे जीववाचिभिः शब्दैरचिद्विशेषाभिधायिभिश्चोपास्यभूतस्य परस्य ब्रह्मणोऽभिधाने कारणं चोद्यपूर्वकमाह -**

**जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् १।१।३२॥**

**'न वाचं विजिज्ञासीत; वक्तारं विद्यात्', 'त्रिशीर्षाणं त्वाष्ट्रमहनम्; अरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छम्' इत्यादिजीवलिङ्गात्, 'यावद्ध्यस्मिन् शरीरे प्राणो वसति, तावदायुः', 'अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति' इति मुख्यप्राणलिङ्गाच्च नाध्यात्मसम्बन्धभूमेति चेन्न, उपासात्रैविध्यात् हेतोः। उपासनात्रैविध्यमुपदेष्टुं तत्तच्छब्देनाभिधानम्। निखिलकारणभूतस्य ब्रह्मणस्स्वरूपेणा(स्वरूपा?) नुसन्धानम्, भोक्तृवर्गशरीरकत्वानुसन्धानम्, भोग्यभोगोपकरणशरीरकत्वानुसन्धानं चेति त्रिविधमनुसन्धानमुपदेष्टुमित्यर्थः। तदिदं त्रिविधं ब्रह्मानुसन्धानं प्रकरणान्तरेष्वप्याश्रितम् -** (तै.आन.) **'सत्यं ज्ञानमनन्तं ब्रह्म,'** (तै.भृ.६) **'आनन्दो ब्रह्म' इत्यादिषु स्वरूपा(पेणा?)नुसन्धानम्;** (तै.आन.६) **'तत्सृष्ट्वा तदेवानुप्राविशत्। तदनुप्रविश्य सच्च त्यच्चाभवत्, निरुक्तञ्चानिरुक्तञ्च, निलयनञ्चानिलयनञ्च, विज्ञानञ्चाविज्ञानञ्च, सत्यञ्चानृतञ्च सत्यमभवत्' इत्यादिषु भोक्तृशरीरतया, भोग्यभोगोपकरणशरीरतया चानुसन्धानम्। इहापि प्रकरणे तत् त्रिविधमनुसन्धानं युज्यत एवेत्यर्थः।**

'चराचरव्यपाश्रयस्तु' इति सूत्रसिद्ध एवायमर्थः, एकोनसहस्राधिकरणन्यायस्य नात्राप्रसरणम्, अथापि चेतनाचेतनवाचिशब्दस्य परमात्मनि पर्यवसानेपि यत्र चेतनद्वयमचेतनद्वयं वा निर्दिष्टं तत्राप्युभयं परमात्मवाचकं सत्परस्परान्वयेनान्तर्यामिण ऐक्यं बोधयतीति प्रदानार्थं सूत्रारम्भः। स्वानुभवप्रत्यक्षेण आत्मावलोकने स्वांशमात्रप्रकाश एव स्यात्। शास्त्रेण तन्मूलयोगेन वाऽऽत्मावलोकने परमात्मपर्यन्तप्रकाशः स्यात्। वामदेवादीनां शास्त्रजन्यज्ञानस्य तन्मूलयोगस्य च सत्त्वेन स्वात्मानं परात्मानं ते पश्यन्तीति परमत्मपर्यन्तज्ञानोदयः। इन्द्रस्याप्येवंरूपत्वात्तथोपदेशः फलितः ॥

कारणं = प्रयोजनरूपम्। सूत्रे 'इति चेन्न' इति निषेधवाचकनञ उक्तिः इदं लिङ्गं भवतो न साधकं भवतीति सूचनाय। जीवलिङ्गस्य मुख्यप्राणलिङ्गस्य सद्भावो न जीवत्वगमक इत्यभिप्रायः। प्राणशब्देन इन्द्रियव्यावृत्यै मुख्यशब्दः। परमात्मव्यावृत्यै वा। अरुन्मुखान् = शब्दरहितमुखान् = अवेदमुखान्। अविदुष इति यावत्। सूत्रे आश्रितत्वादित्यस्य प्रतीतत्वादित्यर्थः। न वाचमिति मद्वचनज्ञानमात्रे न तृप्तो भव। **वक्तारं मां च जानीहि**। अनेन इन्द्रोपासने तात्पर्यम्। **शरीरे प्राणो वसति** इति मुख्यप्राणलिङ्गम्। प्राण एव प्रज्ञात्मा इतीदमपि परम्परया। सामानाधिकरण्यनिर्देशः प्राणविशिष्टेन्द्रस्य द्योतनमुखेन प्राणस्य प्राधान्यसूचनाय। **इहापीति**। आनन्दोऽजर इति स्वेन रूपेणानुसन्धानम्।

ननु चिदचिद्विशिष्टानुसन्धानस्यैव सामान्यतो विहितत्वाच्चिद्विशेषविशिष्टस्याचिद्विशेषविशिष्टस्यचानुसन्धाने किं नियामकमिति चेत्सत्यम्। यत्र सामान्यतो विशिष्टोपासनविधानं तत्र तथैव स्वीकियते। यत्र विशेषमुखेन विशिष्टानुसन्धानं तत्रापि तेनैव रूपेणानुसन्धानविधानावैयर्थ्यात्। अतोऽयं न्यायः सर्वत्र। 'स ब्रह्मा स शिवः सेन्द्र' इति सामानाधिकरण्यनिर्देशः नारायणानुवाके नारायणस्यैव सर्वविद्योपास्यत्वेन निर्णीतत्वात्। 'स इन्द्र' इति सामानाधिकरण्यश्रवणेन इन्द्रपदस्य तदन्तर्यामिपरत्वावश्यम्भावात्प्रतर्दनविद्यायामपि 'माम्' इत्यस्य मदन्तर्यामीत्यर्थोऽवश्यमङ्गीकार्य इति।

**एतदुक्तं भवति - यत्र हिरण्यगर्भादिजीवविशेषाणां प्रकृत्याद्यचेतनविशेषाणाञ्च परमात्मासाधारण-**

---

परमात्मन एवोपास्यत्वात्तदाकाराणामेव वक्तव्यता। मुमुक्षुभिश्चेतनं वाऽचेतनं वा नोपास्यम्। अतश्चेतनाचेतन-वैशिष्ट्यकथनं व्यर्थमिति न मन्तव्यम्। चेतनाचेतनयोरपि तदाकारत्वात्। न च सर्वमपि भगवदाकार एवेति सर्वस्या-प्युपास्यत्वप्रसङ्ग इति वाच्यम्। सर्वेषां भगवदाकारत्वेपि यस्य चेतनस्याचेतनस्य वा विशेषणत्वेन यस्यां विद्यायामुक्तिः तस्य तस्य तस्यां विद्यायामुपास्यत्वमिति न विरोधः। अत एव सर्वेषामपि ब्रह्मगुणानां सर्वविद्योपास्यत्वं नेष्यते। विहितानामेव। अत्र 'तं मामायुरमृतमित्युपास्व' इत्युक्तत्वात् इन्द्रान्तर्यामित्वप्राणान्तर्यामित्वामृतस्वरूपत्वादीनि उपास्यानि। प्राणवैशिष्ट्यस्येन्द्रेऽवगमेपि परम्परया परमात्मनोपि सम्भवति। योगवृत्त्या साक्षात्परमात्मवाचकः। यथाकथञ्चित् चितोऽचितश्चोपासने प्रवेशोऽस्तीति। न चात्र 'इत्युपास्व इती'तिशब्दश्रवणाद्दृष्टिविधित्वशङ्का। उत्तरत्र मोक्षरूपफलश्रवणात्प्राक् हिततमोपासनोपदेशप्रकारणाच्च।

ननु सर्वमपि परमात्मोपासनमेव स्यात्। यत्र यत्र चेतनाचेतनोपासनं विहितं तत्सर्वस्याप्यन्तर्यामिपरतयैव निर्वाह्यत्वादिति चेन्न। यत्र परमात्मासाधरणधर्मयोगो न श्रुतः तत्र तावन्मात्रमेवोपासनमन्यत्र परमात्मोपासनमिति विभागेनादोषात्। तथा च - आयुरिन्द्रियनिर्वाहकत्वविशिष्टप्राणवाय्वन्तर्यामित्वेन, त्वाष्ट्रवधसालामृगयतिप्रदानादिकर्तृ-भूतेन्द्रान्तर्यामित्वेन, श्रीविशिष्टाप्राकृतदिव्यमङ्गलविशिष्टसत्यज्ञानानन्तामलानन्दस्वरूपेण चात्र त्रेधा उपास्यम्। श्री-सत्यत्वादीनां स्वरूपनिरूपकधर्मत्वात् सर्वेषूपासनेषु नियतत्वम् 'आनन्दादयः प्रधानस्य' इति सूत्रसिद्धम्। तत्र तत्र विद्यायां ये ये गुणाः प्रोक्तास्तेऽप्यनुसन्धेयाः। अत्र प्राणलिङ्गानां जीवलिङ्गनाञ्चोक्तत्वात्तत्तल्लिङ्गविशिष्टाचेतनचेतन-शरीरकत्वादिगुणानामप्यनुसन्धेयता। नन्वहङ्ग्रहोपासनस्य सर्वत्राविशिष्टत्वादुपासकप्रतर्दनेन स्वशरीरकत्वमप्युक्त-चेतनाचेतनशरीरकत्वमिवोपास्यं स्यादिति चेदिष्टापत्तिः। न हीन्द्रमात्रशरीरत्वमत्रानुसंहितं येन विरोध आपद्यते।

ननु प्रतर्दनविद्यायामधिकर्तुरिन्द्रस्य स्वेनोपासनकरणे स्वस्य द्विवारमनुसन्धानमावश्यकमिति द्विः इन्द्रस्यो-पास्यत्वापत्तिः। विद्यावक्तृइन्द्रशरीरकत्वं गुणभूतम्। सर्वं विद्यासाधरणस्वोपास्यत्वस्यावश्यकत्वेन स्वशरीरकत्वमपरो गुण इति इति चेत्स्वशरीरकमात्रभानमेकत्र। अन्यत्र त्वाष्ट्रवधादिकर्तृत्वविशिष्टवेषेण भानमिति द्विरूपभानसत्त्वेपि दोषाभावात्। यदा इन्द्र ऐवोपासकः तदा स्वात्मनोप्युपास्यत्वावश्यकत्वेन स्वस्मिन् त्वाष्ट्रवधादिकर्तृत्वानुसन्धानैन गतार्थत्वमित्येकवारोपासनेपि क्षत्यभावः॥

ननु त्वाष्ट्रवधादिकर्तृत्वविशिष्टदेहेन्द्रियादिविशिष्टेन्द्रशरीरकपरमात्मोपासने तत्क्रतुन्यायान्मोक्षेपि तत्प्राप्तिः स्यात्। न चेष्टापत्तिः। 'व्यतिरेकस्तद्भावभावभावित्वा'दित्यधिकरणविरोधापत्तेः। तत्र हि कर्तृत्वभोक्तृत्वविशिष्टतयेहामुत्रसञ्चरण-सत्त्वेन च स्वात्मन उपास्यत्वे तत्क्रतुन्यायेन तस्यापि प्राप्तिस्स्यादिति दूषणमुक्तम्। अतो मोक्षभाविगुणविशिष्टतयोपा-स्यत्वमुक्तम्। अत्रेन्द्रशरीरकपरमात्मन उपास्यत्वे तस्यापि प्राप्त्यावश्यकतया संसारित्वमेव स्यात्। अतो बालाकिविद्याया-मिव श्रुतानामपि जीवधर्माणामन्यार्थत्वं कल्पयित्वा स्वरूपमात्रोपासनमेवाभ्युपेत्यम्। न चाचेतनशरीरकपरमात्मोपा-सनेपि तत्क्रतुन्यायादचेतनप्राप्तिरपि स्यादिति तस्याप्युपास्यकोटौ न निक्षेपः स्यादिति वाच्यम्। तत्राप्येवं शङ्काप्रादुर्भावे तत्परित्यागोपि कार्य एवेत्याक्षेपात्।

ननु स्वरूपमात्रोपासनमेकमेव स्यादिति चेत् - किं कुर्मः। न च यथाकथञ्चिदुपासनेपि यथाक्रतुन्यायस्य आकारा-न्तरवर्जनाभावादुभयविभूतिविशिष्टब्रह्मानुभवस्य वक्तव्यत्वाद्धेयाचेतनानुभव एव मोक्ष इति प्रसज्येत इति वाच्यम्। 'सर्वं हि पश्यः पश्यती'ति 'न रोगं नोत दुःखताम्' इति श्रुतिस्वारस्येनाचेतनानुभवेप्युपासकस्य मुक्तस्य हेयानुभवो नास्ति,

**धर्मयोगः, तदभिधायिनां शब्दानां परमात्मवाचिशब्दैस्सामानाधिकरण्यं वा दृश्यते - तत्र परमात्मनस्तत्तच्चिदचिद्विशेषान्तरात्मत्वानुसन्धानं प्रतिपिपादयिषितम् - इति । अतोऽत्रेन्द्रप्राणशब्दनिर्दिष्टो जीवादर्थान्तरभूतः परमात्मैवेति सिद्धम् ॥ ३२ ॥**

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये प्रथमस्याध्यायस्य प्रथमः पादः ॥ १ ॥

---

पूर्वं स्थितहेयवस्तुदर्शनेपि तस्य तेषु हेयत्वादर्शनात् । सर्वपापविनिर्मुक्तस्य पापकार्यहेयत्वबुद्धेस्सुदूरपराहतत्वात् । अतोऽचेतनप्राप्तेः सत्त्वेपि न मुक्तिविरोधः । हेयेन्द्रशरीरकत्वानुभवे तु हेयेन्द्रप्राप्तेर्विरोध इति चेदुच्यते । उपासकस्य तत्क्रतुन्यायेन सर्वफलप्राप्तिरविशिष्टा । तत्र त्वाष्ट्रवधादिकर्तृभूतेन्द्रशरीरकत्वस्योपासनात्तथाविधपरब्रह्मानुभव एव मोक्षदशायां भवति । इन्द्रशरीरकत्वं परमात्मगतं, न स्वगतम्, अत इन्द्रप्राप्तिर्न भवति । आत्मत्वोपासने कर्तृत्वभोक्तृत्वादीनां स्वगतत्वेनोपासनान्मोक्षदशायां तेषामपि प्राप्तौ मोक्षविराध इति वैषम्यात् । नच मधुविधायामपि वस्वादिशरीरकपरामात्मोपासनात्स्वरूपे वस्वादित्वप्राप्तिर्न स्यादिति वाच्यम् । मोक्ष एवमनुभवपरिहारार्थमेव वस्वादिप्राप्तेरत्र स्वीकारात् । अत एव 'वसूनामेवैको भूत्वा' इति फलमत्रैव दर्शितम् । न च प्रतर्दनविद्यायामपि इन्द्रलोकानुभवपूर्वकं मोक्षप्राप्तिः स्यादिति वाच्यम्, इष्टापत्तेः । इन्द्रव्यतिरिक्तोपासकानां किञ्चित्कालमिन्द्रलोकप्राप्त्या तदनन्तरं मोक्षसम्भवः । इन्द्रस्यैतदुपासनेपि स्वार्थनियमितकालापेक्षया किञ्चित्कालमत्र सुखमनुभूय मोक्षप्राप्तिरित्यदोषात् । उपसंहरति - **अतोऽत्रेति** ॥

अयं त्विह भावः - आकाशशब्दे प्राणशब्दे च रूढि परित्यागः । ज्योतिश्शब्दे रूढ्यर्थापरित्यागेन दिव्यतेजोविशिष्टपरमात्मपरत्वम् । पूर्वपक्षविवक्षितवाच्यार्थास्वीकारेण भगवद्विग्रहरूपवाच्यार्थान्तरस्वीकारेण विशिष्टपरत्वमिति यावत् । इन्द्रप्राणाधिकरणे पूर्वपक्षाभिमतरूढ्यर्थविशिष्टपरमात्मपरत्वमिति विवेकः । आद्याधिकरणद्वयेऽगत्या रूढेर्हानिः । यथा 'कदाचनस्तरोमसिनेन्द्र,' इत्यादौ इन्द्रपदे रूढिं परित्यज्य अग्निरूपोऽर्थः स्वीकृतः । गौण्या वाऽवयवशक्त्या वाऽन्यथा वा यथायथमर्थस्वीकारः । तथेहापि । आकाशप्राणशब्दयो रूढ्यर्थमपरित्यज्यापर्यवसानवृत्त्या तत्तच्छरीरक परमात्मपरत्वं वर्णयितुं शक्यम् । अथापि वाय्वाद्युत्पत्तिविषये विशिष्टस्य कारणत्वोपपादनसम्भवेपि महदहङ्काराद्युत्पत्तिविषये तस्य कारणत्वासम्भवात् रूढिपरित्यागः । न च तत्राप्याकाशस्योपलक्षणतया भानस्वीकारेऽनुपपत्तिर्नास्तीति वाच्यम्, असम्भवस्थले उपलक्षणत्वमभ्युपेत्य कारणत्वोपपादनेपि योगार्थमादाय पौष्कल्येन कारणत्वोपपादनसम्भवस्थले तथा निर्वाहस्यानुचिनत्वात् । 'मत्तः सर्वमहं सर्वं मयि सर्वं सनातन' इत्यादि प्रह्लादवाक्ये त्वहमर्थस्योपलक्षणत्वमेवाभ्युपेत्यम् । अनन्यथासिद्धलिङ्गसत्त्वे विशिष्टपरत्वम् । अत एव प्रतर्दनविद्यायां त्वाष्ट्रवधादिलिङ्गसद्भावात् लिङ्गविशिष्टेन्द्रशरीरकपरमात्मपरता । 'क्वचिल्लिङ्गानुक्तावपि विशिष्टपरतेष्यते । यथा स ब्रह्मा स शिवः सेन्द्र' इत्यादौ । अहं ब्रह्मास्मि इत्यत्राहंशब्दः स्वात्मविशिष्टपरमात्मवाचकः । तत्त्वमसीत्यत्र त्वंशब्दोऽभिमुखचेतनविशिष्टपरमात्मवाचकः । अत्र पदान्तरोपात्तानन्यथासिद्धलिङ्गाभावेपि स्वपदोक्तलिङ्गसद्भावाद्विशिष्टपरत्वम् । सम्बोध्यत्वतच्छब्दप्रयोक्तृत्वबुद्धिविशेषविषयत्वादिरूपधर्माणां सत्त्वादित्यादिकमिहानुसन्धेयम् । अत्राधिकरणसारवल्यामुक्तोऽर्थोऽनुसन्धेयः -

'कार्ये यत्कर्मवश्यं यदपि दृढमितं तन्निरूढैस्तु शब्दैः निर्दिष्टे ब्रह्मणि स्यात्क्वचिदगतिहता रूढिरैन्द्रीनयेन ।
तल्लिङ्गानन्यथासिद्ध्यधिगमनबलात्तद्विशिष्टे विवक्षा स्यादीशे ज्योतिरिन्द्राद्यभिलपनपदेऽहंत्वमादीरिते च ॥' इति ॥

वालाकिविद्यायां जीवधर्माणामन्यार्थत्वकल्पनया जीवप्राणोपासनं न स्वीक्रियत इत्ययमर्थः सयुक्तिकं जगद्वाचित्वाधिकरणे सूत्रकारेणैव प्रदर्शयिष्यते ।

इन्द्रप्राणाधिकरणं समाप्तम् ।

इति प्रथमः पादः ।

श्रीमते रामानुजाय नमः ।

॥ प्रथमाध्याये द्वितीयः पादः ॥

**प्रथमे पादेऽधीतवेदः पुरुषः कर्ममीमांसाश्रवणाधिगतकर्मयाथात्म्यविज्ञानः केवलकर्मणामल्पास्थिरफलत्वमवगम्य, वेदान्तवाक्येषु चाऽऽपातप्रतीतानन्तस्थिरफलब्रह्मस्वरूपतदुपासनसमुपजातपरमपुरुषार्थलक्षणमोक्षापेक्षोऽवधारितपरिनिष्पन्नवस्तुबोधनशब्दशक्तिः वेदान्तवाक्यानां परस्मिन् ब्रह्मणि निश्चितप्रमाणभावः तदितिकर्तव्यतारूपशारीरकमीमांसाश्रवणमारभेतेत्युक्तं शास्त्रारम्भसिद्धये । १ । अनन्तविचित्रस्थिरत्रसरूपभोक्तृभोग्यभोगोपकरणभोगस्थानलक्षणनिखिलजगदुदयविभवलयमहानन्दैककारणं**

एवं प्रथमपादो निरूपितः । अथ त्रिपादी निरूप्यते । तत्र वृत्तवर्तिष्यमाणयोस्सङ्गतिप्रदर्शनाय वृत्तं प्रथमपादोक्तं क्रमेणानुकीर्तयति । **प्रथमेपाद** इत्यादिना । अनेन सूत्रकाराभिमतपादभेदकल्पनायामर्थभेदो नियामक इति दर्शितम् । प्रथमपादे हि चिदचिद्वैलक्षण्यं ब्रह्मणः प्रतिपादितं, त्रिपाद्यान्तु तस्य चिदचिद्विलक्षणस्य गुणविशेषसम्बन्धः प्रतिपाद्यते । तत्तद्वाक्योदितकल्याणगुणाकरत्वं ब्रह्मणः प्रतिपाद्यत इति ह्यनुपदनेव भाषिष्यते । एवं प्रथमपादोक्तप्रत्यधिकरणसिद्धार्थानुकीर्तनेन त्रिपाद्या अनारभमणीयत्वशङ्कापि निरस्ता भवति । तथा हि - ब्रह्मणः कारणत्वं कारणस्य च चेतनाचेतनवैलक्षण्यमिव च वैदान्तवाक्यानां परमात्मपरत्वमपि प्रथमपादेनैव सिद्धमिति त्रिपाद्या किं प्रयोजनमिति कस्यचिन्मन्दधियः शङ्का जायते । तत्परिहारस्तु, यथा प्रथमपाद एव ईक्षत्यधिकरणानन्दमयाधिकरणाभ्यामेव कारणे चेतनाचेतनवैलक्षण्यस्य सिद्धत्वेनेतराधिकरणानां वैयर्थ्यमेवेत्याशङ्कायां तदधिकरणन्यायाविषयश्रुतिवाक्यार्थविशेषनिर्णयस्येतराधिकरणैरसुलभत्वात्तन्निर्णयार्थस्य तस्य न वैयर्थ्यमिति परिहारः क्रियते, तथैव प्रथमपादेन वेदान्तवाक्यानां परमात्मपरत्वनिश्चयस्य कारणस्य चेतनाचेतनवैलक्षण्यनिश्चयस्य च सम्भवेपि प्रथमपादशिक्षितन्यायाविषयवेदान्तवाक्यार्थविशेषनिश्चयाय त्रिपाद्या अपेक्षितत्वमिति ॥

**अधीतवेद** इति साङ्गसशिरस्कवेदाध्ययनं विवक्षितम् । क्रमेण साङ्गसशिरस्कवेदाध्ययनस्यानेन कृतत्वात्, उभयत्रापातप्रतीतेस्सत्त्वात्तत्क्रमतोऽनादिवासनावशात्कर्मणि सुकरत्वज्ञानसद्भावाच्च तद्विचार एव प्रथमतः प्रवृत्तिरित्याशयनाह - **कर्मेति** । भगवदाराधनत्ववेषास्कन्दितानां कर्मणां व्यवच्छित्यै **केवलकर्मणामिति** । अथ कर्मणि विचारिते तत्रापरितुष्ट आप्रातप्रतीतिबलाद्वेदान्तवाक्यविचारे प्रवर्तत इत्याशयेनाह - **वेदान्तेति** । उक्तापातप्रतीतेः प्रामाण्यसम्भावनाविशिष्टाया एव प्रवृत्तिं प्रति हेतुत्वेन, सिद्धे च ब्रह्मणि व्युत्पत्त्यभावेन वेदान्तवाक्यानां तत्राप्रामाण्याद्वेदान्तविचारारम्भ एव न युक्त इति शङ्का सिद्धे व्युत्पत्तिसमर्दनेन परिहृतेत्याशयेनाह - **अवधारितेति** । 'धर्मे प्रमीयमाने तु वेदेन करणात्मना । इतिकर्तव्यताभागं मीमांसा पूरयिष्यति' इति अभिप्रेत्याह - **तदितिकर्तव्यतारूपेति** । **शास्त्रारम्भसिद्धय** इत्येतत्, **निरुह्यते, इत्यब्रूम**, इत्येतत्पर्यन्तमन्वेति । एतेन चतुस्सूत्र्या एव शास्त्रारम्भार्थकत्वेन वृत्तप्रथमाधिकरणानुकीर्तनस्थलमात्रे **शास्त्रारम्भसिद्धय** इति भाषणं कथमिति शङ्काया नावकाशः । यद्वा शास्त्रारम्भसमर्थिकाया अपि त्रिपाद्याः शास्त्रान्तर्गतत्वेन तदारम्भस्यापि प्रथमाधिकरणाधीनत्वाद्वृत्तप्रथमाधिकरणानुकीर्तनस्थले **शास्त्रारम्भसिद्धय** इत्युक्तम् । एतेन शास्त्रारम्भसमर्थनस्यापि शास्त्रान्तर्गतत्वमस्तीत्यधिकं प्रयोजनं सूचितम् । केचित्तु प्रथमधिकरणानुकीर्तनस्थले **शास्त्रारम्भसिद्धय** इत्युक्तत्वात् 'प्रथमाधिकरणस्य शास्त्रारम्भसमर्थकत्वम्, अन्यस्य सर्वस्यापि शास्त्रत्वमेवे'त्याहुः । अनूदितं चैतन्मतं - 'शास्त्रारम्भार्थमेकं त्रितयमिह परं शास्त्रमित्याहुरेके' इति । 'यत्प्रयन्त्यभिसंविशन्ती'त्यस्यावृत्त्या मोक्षकारणत्वमपि बोधितमित्यभिप्रेत्योक्तं - **महानन्दैककारणमिति** ॥

**परं ब्रह्म, 'यतो वा इमानि' इत्यादिवाक्यं बोधयतीति च प्रत्यपादि। २। जगदेककारणं परं ब्रह्म सकलेतरप्रमाणाविषयतया शास्त्रैकप्रमाणकमित्यभ्यधाम। ३। शास्त्रप्रमाणकत्वञ्च ब्रह्मणः प्रवृत्तिनिवृत्त्यन्वयविरहेऽपि स्वरूपेणैव परमपुरुषार्थभूते परस्मिन् ब्रह्मणि वेदान्तवाक्यानां समन्वयान्निरुह्यत इत्यब्रूम। ४। निखिलजगदेककारणतया वेदान्तवेद्यं ब्रह्म च ईक्षणाद्यन्वयादानुमानिकप्रधानादर्थान्तरभूतश्चेतनविशेष एवेत्युपापीपदाम। ५। स च स्वाभाविकानवधिकातिशयानन्दविपश्चित्त्वनिखिलचेतनभयाभयहेतुत्वसत्यसङ्कल्पत्वसमस्तचेतनाचेतनान्तरात्मत्वादिभिर्बद्धमुक्तोभयावस्थाज्जीवशब्दाभिलपनीयाच्चार्थान्तरभूत इति च समार्तथामहि। ६। स चाप्राकृताकर्मनिमित्तस्वासाधारणदिव्यरूप इत्युदैरिराम। ७। आकाशप्राणाद्यचेतनविशेषाभिधायिभिर्जगत्कारणतया प्रसिद्धवन्निर्दिश्यमानस्सकलेतरचेतनाचेतनविलक्षणस्स एवेति समगरिष्महि। ८-९। परतत्त्वासाधारणनिरतिशयदीप्तियुक्तज्योतिश्शब्दाभिधेयो द्युसम्बन्धितया प्रत्यभिज्ञानात् स एवेत्यातिष्ठामहि। १०। परमकारणासाधारणामृतत्वप्राप्तिहेतुभूतः परमपुरुष एव शास्त्रदृष्ट्येन्द्रादिशब्दैरभिधीयत इत्यब्रूमहि। ११।**

**तदेवमतिपतितसकलेतरप्रमाणसम्भावनाभूमिः सार्वज्ञ्यसत्यसङ्कल्पत्वाद्यपरिमितोदारगुणसागरतया स्वेतरसमस्तवस्तुविलक्षणः परं ब्रह्म पुरुषोत्तमो नारायण एव वेदान्तवेद्य इत्युक्तम्। अतः परं द्वितीयतृतीयचतुर्थेषु पादेषु 'यद्यपि वेदान्तवेद्यं ब्रह्मैव, तथापि कानिचिद्वेदान्तवाक्यानि प्रधानक्षेत्रज्ञान्तर्भूतवस्तुविशेष-**

---

एवं चतुस्सूत्र्या सिद्धे, लक्षणतः प्रतिपत्तुं शक्ये, प्रमाणान्तराविषये, स्वयम्पुरुषार्थभूते ब्रह्मणि वेदान्तवाक्यानां प्रमाण्यस्थापनात् वेदान्तवेद्यं ब्रह्मेत्युक्तम्। **चेतनविशेष एवे**त्यनेनाचेतनविशेषस्यैव व्यवच्छेद्यत्वम्। न तु जीवानामपि। अन्यथोत्तराधिकरणारम्भानुपपत्तेः। **स्वाभाविकत्वमनवधिकातिशयत्वञ्च** सर्वविशेषणान्वयि। न्यायसाम्यमभिप्रेत्याकाशाधिकरणप्राणाधिकरणयोस्तन्त्रेण कीर्तनम्। परतत्त्वासाधारणा निरतिशयदीप्तिः, तद्युक्त इत्यर्थः। परमकारणासाधारणं यत् प्रदेयतया अमृतत्वं, तत्प्राप्तिहेतुभूत इत्यर्थः। यद्वा - परमकारणस्य परमपुरुषस्यासाधारणधर्मभूतोऽमृतत्वरूपोऽनवधिकातिशयानन्दः, तत्प्राप्तिहेतुभूत इत्यर्थः। परमसाम्यप्रापक इति यावत्। एवं क्रमेण प्रथमपादस्थाधिकरणार्थानुकीर्तनं कृतम्। **हेतुभूत** इत्यत्र भावे क्तः। परमकारणासाधारणो हेतुभावो यस्येति बहुव्रीहिरिति दर्पणे। अथ पिण्डितं प्रथमपादसिद्धमर्थमाह - **तदेवमिति। भूमिः** विषयत्वम्। चिदचिद्विलक्षणस्य कारणस्य ब्रह्मवस्तुनो वेदान्तवेद्यत्वं प्रथमपादानुगतार्थ इति भावः। जगत्कारणस्यैव वस्तुनः प्राधान्येन वेदान्तवेद्यत्वन्न तु तदन्यस्य, कारणस्यैव ध्येयत्वात्। जगत्कारणञ्च वस्तु किं ब्रह्म, उत तदन्यद्वा यद्वा ब्रह्म, अन्यदपीति संशये, 'चोदनालक्षणार्थो धर्म' इत्यत्र चेदनाप्रमाणमेव, चोदनैव प्रमाणमित्यवधारणद्वयप्रयुक्तार्थद्वयाभ्युपगमदत्रापि 'जन्माद्यस्य यत' इत्यत्र ब्रह्म जगत्कारणमेव, ब्रह्मैव जगत्कारणमित्यर्थद्वयाभ्युपगमात्प्रथमवाक्येन ब्रह्मणो जगत्कारणत्वस्थापनेन प्रथमसंशयस्य, द्वितीयेन तदन्यस्य जगत्कारणत्वनिराकारणेन द्वितीयसंशयस्य निवृत्तिः॥

अयोगव्यवच्छेदः प्रथमेन, द्वितीयेनान्ययोगव्यवच्छेदः क्रियत इति पर्यवसितम्। तथा च प्राथमिकार्थेन ब्रह्मणो जगत्कारणत्वस्थापनात्कारणस्यैव च वेद्यत्वाद्ब्रह्मैव वेदान्तवेद्यं भवतीत्याशयेन **परं ब्रह्म पुरुषोत्तमो नारायण एव वेदान्तवेद्य इत्युक्त**मिति भाषितम्। ततश्च प्रथमपादोऽयोगव्यवच्छेदप्रधान इति भावः। अथान्ययोगव्यवच्छेदप्रधानत्रिपाद्यामनुगतमर्थमाह - **अतः पर**मिति। अयं भावः - ब्रह्मणो जगत्कारणत्वेन वेदान्तवेद्यत्वेपि कुत्रचित्तदन्यस्यापि तत्प्रतिपादनेन तत्प्रयुक्तवेदान्तवेद्यत्वं स्यादिति। **द्वितीयतृतीयचतुर्थे**त्यनेन पादत्रयस्यापि प्रथमपादेन साङ्गत्यमस्तीति दर्शितम्। अयं

**स्वरूपप्रतिपादनपराण्येव' इत्याशङ्क्य तन्निरसनमुखेन तत्तद्वाक्योदितकल्याणगुणाकरत्वं ब्रह्मणः प्रतिपाद्यते। तत्रास्पष्टजीवादिलिङ्गकानि वाक्यानि द्वितीयपादे विचार्यन्ते; स्पष्टलिङ्गकानि तृतीये; तत्तत्प्रतिपादनच्छायानुसारीणि चतुर्थे ॥**

सर्वत्रप्रसिद्ध्यधिकरणम् ॥ १ ॥ (छा.३-१४)

## सर्वत्र प्रसिद्धोपदेशात् १।२।१॥

**इदमाम्नायते छान्दोग्ये,** (छा.3-24) **'अथ खलु क्रतुमयः पुरुषः। यथाक्रतुरस्मिँल्लोके पुरुषो भवति, तथेतः प्रेत्य भवति। स क्रतुं कुर्वीत - मनोमयः प्राणशरीरो भारूप' इत्यादि।**

त्विह भावः - ब्रह्मणो जगत्कारणत्वं लक्षणमुक्तं, लक्षणस्याव्याप्त्यतिव्याप्त्यसम्भवरूपदोषा परिहर्तव्याः। तत्र ब्रह्मव्यक्तेरेकत्वान्नाव्याप्तिशङ्कासम्भवः। अतोऽसम्भवातिव्याप्ती परिहर्तव्ये। तत्र प्रथमेनासम्भवशङ्कापरिहारः। त्रिपाद्याऽतिव्याप्तिशङ्कापरिहारः। अत्रासम्भवशङ्का परिहारः न लक्ष्ये लक्षणासत्त्वप्रयुक्तासम्भवशङ्कापरिहारः, किन्तु लक्ष्यासम्भवप्रयुक्तलक्षणासम्भवशङ्कायाः परिहारः। चिदचिद्विलक्षणस्य लक्ष्यस्यैव प्रथमपादेन सद्भावस्थापनादिति बोध्यम्।

ननु त्रिपाद्या ब्रह्मान्यस्य जगत्कारणत्वादिप्रतिपादनपरत्वशङ्कानिराकरणे कथं तस्या ब्रह्मविचारत्वमित्यत्राह - **तन्निरसनमुखेने**ति। अथ त्रिपाद्यामप्यर्थभेदनिबन्धनपादवैषम्यमस्तीति दर्शयति - **तत्रे**ति। अयमत्र विवेकः - अयोगव्यवच्छेदप्रधानः प्रथमपादः। त्रिपादी त्वन्ययोगव्यवच्छेदप्रधाना। यद्वा कृत्स्नवेदान्ताक्षेपपरिहापर आद्यपादः। त्रिपादी त्वेकदेशवाक्याक्षेपपूर्वकनिखिलवेदान्ताक्षेपपरिहारपरेति विभागः। अस्पष्टतरजीवादिलिङ्गबोधकवाक्यविचारार्थः प्रथमपादः। अस्पष्टजीवादिलिङ्गबोधकवाक्यविचारार्थो द्वितीयपादः। स्पष्टजीवादिलिङ्गबोधकवाक्यविचारार्थस्तृतीयपादः। चतुर्थस्तु स्पष्टतरजीवादिलिङ्गबोधकवाक्यविचारार्थ इति भेदः। अत्र वाक्यस्यास्पष्टतरजीवादिलिङ्गबोधकत्वं श्रुतिलिङ्गादितारतम्याधीनम्। एवं केवलं वादिपरिकल्पितै र्हेतुभिः पूर्वपक्षोत्थानं प्रथमपादे। व्यभिचारिभिरेव केवलकुसृष्ट्या परिहृतव्यभिचारैर्हेतुवद्भासमानैः पूर्वपक्षोत्थानं द्वितीये। स्वपक्षसाधकहेतुभिरेव पूर्वपक्षोत्थानं तृतीये। परसिद्धान्तानुवादप्रायैर्हेतुभिः प्रत्यवस्थापनं चतुर्थ इति च विभागः। एवं सर्वस्यापि भगवच्छरीरत्वप्रतिपादनपरो द्वितीयपादः। तदुपापदकविश्वाधारत्वप्रतिपादनपरस्तृतीयः। तद्विरोधिसाङ्ख्यादिसिद्धान्तप्रक्रियानिरसनपरश्चतुर्थ इति द्वितीयतृतीयचतुर्थपादानां परस्परं भेदोऽपि ज्ञेयः ॥

एवं पादसङ्गतिः प्रदर्शिता। अथाधिकरणारम्भप्रदर्शनाय विषयवाक्यमुपादत्ते - **इदमाम्नायते** इति। अधिकरणसङ्गतिस्तु - इन्द्रप्राणाधिकरणे 'प्राणोऽस्मि प्रज्ञात्मा, तं मामायुरमृतमित्युपास्व' इति हिततमोपास्तिकर्मतया प्रसक्तः प्राणो जीव एव, शाण्डिल्यविद्यायां प्राणशरीरकस्य जीवासाधारणमनोमयत्वसमर्पकेण मनोमयशब्देन जीवत्वप्रतिपादनात्। अतो जगत्कारणं जीव एवेति पूर्वाधिकरणाक्षेपसङ्गतिः। यद्वा - पूर्वाधिकरणे परमात्मानुगुणमहावाक्यबलेन त्वाष्ट्रहननादिजीवविशेषलिङ्गयुक्तं वाक्यमुपक्रमभूतमप्यन्यथाकृतमुपक्रमोपसंहारयोरुपक्रमप्राबल्येप्युपक्रममहावाक्यविरोधे महावाक्येनोपक्रमोपरोधस्यैव न्याय्यत्वात्। तद्वदत्रापि 'सर्वं खल्विदमि'ति, उपक्रमभूतपरमात्मानुगुणवाक्यमपि 'मनोमय' इत्यादिजीवानुगुणमहावाक्यबलेनान्यथाकरणीयमिति सङ्गतिः।

अत्र योजनाद्वयं प्रदर्श्यते - प्रथमयोजनायां, 'सर्वं खल्वि'त्यादिकमनपेक्षितमिति न तदुपात्तं, 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इति विहितोपासनाधिकृतस्यैव 'स क्रतुं कुर्वीत' इत्युपासनान्तरविधानन्न सम्भवति,

एकस्य जीवस्य उपासनद्वयविधानासम्भवादिति शङ्कापरिहाराय 'अथ खलु क्रतुमयः पुरुष' इत्युक्तम्। जीवस्यानेकोपासन-प्रचुरत्वान्नानेकोपासनविधानमनुपपन्नमिति भावः। 'स कतुं कुर्वीत' इत्यत्र फलावगमेन फलवत्सन्निधावफलं तदङ्गमिति, 'स क्रतुं कुर्वीत' इति विहितोपासनस्य 'शान्त उपासीत' इति विहित सफलोपासनाङ्गत्वशङ्का स्यादिति तद्व्यवच्छेदाय फलविशिषद्योतनार्थं 'यथा क्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवती'त्यधिकमुपात्तम्। 'तं यथा यथोपासते तथैव भवती'ति श्रुत्यन्तरैकार्थ्यात् इह लोके यद्गुणविशिष्टं परमात्मानमुपासक उपास्ते तद्गुणविशिष्टमेव, परमात्मानं इतः प्रेत्य स्वयमपि तद्भोगसाम्येन भुङ्क्त इति श्रुत्यर्थः। तत्र प्रथमयोजनायां सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत इति पृथग्वाक्यं ब्रह्मप्राप्त्युपायभूतोपासनोपकरणशान्तिनिष्पत्त्युपायभूतब्रह्मात्मकत्वोपासनपरं, स क्रतुं कुर्वीत इत्यादिकन्तु ब्रह्मप्रतीत्युपायभूतोपासनप्रतिपादनपरमिति। तत्र प्रथमवाक्यस्य ब्रह्मोपासनपरत्वं स्पष्टमिति न तत्र संशयः। द्वितीयवाक्ये तु संशायकलिङ्गाज्जीवपरत्वमाशंक्य ब्रह्मपरत्वं स्थाप्यते। व्याख्यानान्तरेष्वपि तथैव व्याख्यातम्। द्वितीययोजनायान्तु सर्वं खल्वित्यत्रैव मोक्षोपायभूतमुपासनं विधीयते। स क्रतुं कुर्वीत इति तु 'अग्निहोत्रं जुहोति' इति विहितहोमस्य 'दध्ना जुहोती'ति दध्नो होमसाधनत्वविधानायानुवादवन्मनोमय इत्यादिवाक्येन गुणविधानार्थमनुवादः। गुणविशिष्टे कस्मिंश्चित्प्रतिपन्ने तत्र गुणान्वयजिज्ञासाया अनुदयेनाङ्काक्षाविरहात्।

ननूत्पत्तिशिष्टगुणावरुद्धे गुणान्तरविधानासम्भवेन 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इत्युपासन-विधायकवाक्ये सर्वात्मकत्वस्य गुणस्य विहितत्वेनोत्पत्तिशिष्टगुणावरुद्धत्वात् 'स क्रतुं कुर्वीत' इति पूर्वविहितमुपासनमनूद्य 'मनोमय' इत्यादिना गुणान्तरविधानं न सम्भवति, अत एव हि 'तप्ते पयसि दध्यानयति' 'सा वैश्वदेव्यामिक्षा' 'वाजिभ्यो वाजिनमि'त्यत्र आमिक्षारूपोत्पत्तिशिष्टगुणावरुद्धे यागे वाजिनरूपगुणान्तरस्य विधानं न सम्भवतीति 'वाजिभ्यो वाजिनमि'-त्यनेन वाजिनविशिष्टयागान्तरमेव विधीयत इति गुणाधिकारणे सिद्धान्तितम्। अतः प्रकृतेपि मनोमयत्वादि-विशिष्टोपासनान्तरमेव 'स क्रतुं कुर्वीत' इत्यनेन विधीयत इत्यभ्युपेत्यमिति चेन्न। सर्वात्मकत्वगुणस्योत्पत्तिशिष्टत्वा-भावात्। न हि 'शान्त उपासीत' इति उपासनविधिवाक्ये कश्चिद्गुण उपदिष्टः। तज्जलानिति हेतोः सर्वं ब्रह्म खलु इति एकवाक्यतयान्वयस्यास्वरसत्वाच्च। अतस्सर्वात्मकत्वस्योत्पत्तिशिष्टत्वाभावेन न मनोभयत्वादिगुणविधानासम्भवः।

ननु 'शान्त उपासीत' इत्यस्य भिन्नवाक्यत्वाभ्युपगमेन सर्वात्मकत्वस्योपासनोत्पत्तिवाक्योपदिष्टत्वं नास्तीत्यभ्युपगमे 'शान्त उपासीत' इत्यत्र कर्माकाङ्क्षायाः कथं निवृत्तिः। न च 'सर्वं खल्विदं ब्रह्मे'ति पूर्वप्रस्तुतब्रह्मणोऽत्र सम्बन्धादाकाङ्क्षा-शान्तिरिति वाच्यम्। तथा सति सर्वात्मकत्वविशिष्टब्रह्मण एव प्रस्तुतत्वाद्विशिष्टब्रह्मण एवात्रसम्बन्धसम्भवेन पुनरुक्तदोषापत्तेः। न हि स्वरूपमात्रस्यैवात्र सम्बन्ध इति वक्तुं शक्यं, विशिष्टस्य प्रस्तुतत्वात्। बाधकसत्त्व एव स्वरूपमात्रस्यैव सम्बन्धसम्भवात्। न च मनोमयत्वादिगुणविधानान्यथानुपपत्त्या स्वरूपमात्रस्यैवोपासनकर्मत्वमिति वक्तुं युज्यते। अन्योन्याश्रयापातात्। सर्वात्मकत्वविशिष्टब्रह्मण उपास्यत्वाभावे सिद्धे विहितस्वरूपमात्रोपासनानुवादेन मनोमयत्वादिगुणविधानोपपत्तिः। मनोमयत्वादिगुणविधानसिद्धौ विशिष्टब्रह्मण उपास्यत्वाभावसिद्धिरिति। न च 'शान्त उपासीत' इति भिन्नवाक्ये - पूर्वप्रस्तुतसर्वात्मकत्वविशिष्टब्रह्मणः परामर्शेपि सर्वात्मकत्वगुणस्यात्र शिष्टत्वाभावेन नोत्पत्तिशिष्टगुणावरोधन्यायस्यात्र प्रवृत्तिरिति वाच्यम्। उत्पत्तिशिष्टगुणावरुद्धे गुणान्तरविधानं न सम्भवतीति न्यायः उपास्यभूत ब्रह्मणो गुणाकाङ्क्षायाः पूर्वमेव शान्तत्वेन पुरननूद्य निराकाङ्क्षगुणविधानमयुक्तमित्येत्यदर्थं ह्यभ्युषेयते। ततश्च सर्वात्मकत्वविशिष्टब्रह्मण उपास्यत्वश्चात्रैवेष्यते। एवञ्च गुणाकाङ्क्षाया अत्रैव शान्तत्वेन पुनरनुवादेन मनोमयत्वादिगुण-विधानमयुक्तमेवेति। न च 'शान्त उपासीत' इत्यत्र मनोमय इत्याद्युत्तरवाक्यप्रतिपाद्यमेव कर्मतया सम्बध्यत इति वाच्यम्। स्वसन्निहितवाक्यप्रतिपादितसर्वात्मकत्वविशिष्टब्रह्मासम्बन्धेनातिव्यवहितवाक्यप्रतिपाद्यब्रह्मणः सम्बन्धे नियामकाभावात्। 'उपासीत' इति विहितमुपासनं 'स क्रतुं कुर्वीत' इत्यनूद्य मनोमय इत्यादिना गुणविधानमित्यभ्युपगतस्य

**अत्र, स क्रतुं कुर्वीत इति प्रतिपादितस्योपासनस्योपास्यः 'मनोमयः प्राणशरीर' इति निर्दिश्यत इति प्रतीयते। तत्र संशयः - किं मनोमयत्वादिगुणकः क्षेत्रज्ञः, उत परमात्मेति। किं युक्तम्? क्षेत्रज्ञ इति। कुतः?**

त्यक्तत्वापातदिति चेदुच्यते - यद्यपि सर्वात्मकत्वविशिष्टब्रह्मण एवोक्तत्र सम्बन्ध आवश्यकः, अथापि वस्तुपरिच्छेद-रहितत्वरूपसर्वात्मकत्वस्यानन्तत्वघटकत्वेनानन्तत्वस्य च सर्व विद्यानुयायित्वेन स्वतः प्राप्तेः, सर्वात्मकत्वस्यापि स्वतः प्राप्त्या विधानासम्भवेन केवलब्रह्मण एव उपास्यत्वमिति न तन्न्यायप्रवृत्तिः। स्थापयिष्यते च तृतीयलक्षणतृतीयपादेऽ-नन्तत्वस्य स्वतप्राप्तत्वं सर्वोपासनेषु।

नन्वेवं सति 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीते'त्यस्यैकवाक्यत्वेपि न कश्चित्क्लेश इति भिन्न-वाक्यत्वादरः त्यर्थ एवेति चेन्न। खलुशब्दघटितवचनव्यक्तेरेकावाक्यत्वासम्भवेन भिन्नवाक्यत्वात्। नन्वेवमपि 'प्राप्ते कर्मणि नानेको विधातुं शक्यते गुण' इत्युक्तेः प्राप्तोपासनानुवादेन मनोमयत्वाद्यनन्तगुणविधानं कथं सङ्गच्छते ? अन्यथा विधेयगुणभेदेन वाक्यभेदापत्तेः। न च कर्मणि तथानियमेपि नोपासने तथा नियम इति वाच्यं, विशेषाभावात्। 'प्रकाशश्च कर्मण्यभ्यासादि'ति संराधनात्मकस्योपासनस्यापि कर्मत्वेन सूत्रकारेण परिगणितत्वाच्च। 'स क्रतुं कुर्वीत' इत्यनेनोपासना-न्तरविधाने तु 'अप्राप्ते तु विधीयन्ते बहवोऽप्येक यत्नत' इति न्यायेनाप्राप्तत्वादनेकगुणविशिष्टोपासनविधनं युक्तमिति वक्तुं शक्यमिति चेन्न। प्राप्ते कर्मणि विरुद्धानेकगुणविधानासम्भवेप्यविरुद्धानेकगुणविधाने दोषाभावात्। न चैवमपि वाक्यभेदपरिहारः कथमिति वाच्यम्। एतादृशस्थले वाक्यभेदस्येष्टत्वात्। वस्तुतः 'स क्रतुं कुर्वीत' इत्यत्र क्रतुशब्दार्थो-पासनेऽन्वयार्थं 'मनोमय' इत्यादेः षष्ठ्यन्ततया विपरिणामावाश्यकत्वेन षष्ठ्यन्ततादृशशब्देन मनोमयत्वादिप्रकारक-बोधस्यैव जायमानत्वाद्ब्रह्मविशेष्यकत्वविशिष्टोपासने मनोमयत्वादिप्रकारकत्वमेव विधेयम्। तत्र मनोमयत्वादिप्रकार-कत्वञ्च मनोमयत्वादिनिष्ठप्रकारतानिरूपकत्वं, ततश्चोपासनगतं निरूपकत्वमेकमेवेति न वाक्यभेदप्रसङ्ग इति। एवं द्विविधोपासनपरत्वमेकोपासनपरत्वञ्चेति योजनाद्वयं विवक्षितम्। तत्र प्रथमयोजनायामुपासनद्वयविधानेन वाक्यभेद-सम्भवः द्वितीययोजनायां तु न। प्रथमयोजनाया व्याख्यात्रन्तराभिमतत्वेन तस्य जघन्यत्वप्रदर्शनायात्रोपादानम्॥

प्रायशो हि कस्यांश्चिदुपनिषदि बह्माभ्युपगमेप्युपनिषदन्तरे ब्रह्मानभ्युपगम्य पूर्वपक्षः प्रवर्तते। अत्र त्वेकत्रैवोप-निषदि उपक्रमे ब्रह्माभ्युपगम्योत्तरत्र तदनभ्युपगमेन पूर्वः पक्षः प्रवर्तितः परैरिति। अतो द्वितीययोजनैव स्वाभिमता। अपि च प्रथमयोजनायां सूत्रे प्रतिज्ञावाक्यमेवाध्याहर्तव्यम्, उपक्रमोपसंहारगतब्रह्मशब्दस्यैकविषयत्वपरित्यागः श्रवण-मनननिष्पाद्यस्य शमस्योपासननिष्पादकत्वाभ्युपगमः 'शान्त उपासीत' इत्यत्र शान्तपदस्य शान्तिकामपरत्वास्वारस्यं वृत्तिग्रन्थाननुरूपत्वञ्चेत्यादि दोषास्सम्भवन्ति। वस्तुतः शास्त्रजन्येन भगवदात्मकत्वज्ञानेनैव रागद्वेषाद्यभावरूपशमादि-निष्पत्तिः, तादृशशमादिना उक्तोपासननिष्पत्तिरिति नोपासननिष्पाद्यत्वं शमादेः। तदुक्तं — 'सर्वभूतात्मके तात जगन्नाथे जगन्मये। परमात्मनि गोविन्दे मित्रामित्रकथा कुत' इति। 'तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुस्समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येदि'ति च। अतश्शमादेरुपासननिष्पाद्यत्वाभावात् शान्तस्सन्नुपासीतेत्यधिकारिविशेषणत्वं शमादेः स्वीकर्तव्यमिति न प्रथमयोजना पराभिमता स्वरसा च॥

अथ प्रथमयोजनायामधिकरणलक्षणं सङ्गमयति — **अत्रेति। प्रतिपादितस्योपासनस्येति**। क्रतुशब्दस्य यथाक्रतु-रित्यादावुपासनपरत्वदर्शनादिति भावः। **मनोमयः प्राणशरीर इति निर्दिश्यत इति प्रतीयत** इति। अयं भावः - 'स क्रतुं कुर्वीत' इति विहितक्रतोः 'शान्त उपासीत' इति पूर्वविहितोपासनाङ्गत्वन्तु न सम्भवति मनोमयादिपदानां पूर्वप्रस्तुत-ब्रह्मविषयत्वे प्रमाणाभावेन ब्रह्मपरत्वनिश्चयासम्भवात्। 'शान्त उपासीत' इत्यस्य ब्रह्मपरत्वनिश्चयात्। 'स क्रतुं कुर्वीत' इत्युपासनकर्तृविशेषणपरत्वमपि मनोमयादिपदानां सम्भवति। उपासनकर्तुरनाविर्भूतगुणाष्टकत्वेन सत्यसङ्कल्पत्वादि

**मनःप्राणयोः क्षेत्रज्ञोपकरणत्वात्; परमात्मनस्तु** (मुं 2-1) **'अप्राणो ह्यमनाः' इति तत्प्रतिषेधाच्च। न च, सर्वं खल्विदं ब्रह्म इति पूर्वनिर्दिष्टं ब्रह्मात्रोपास्यतया सम्बद्धुं शक्यते; 'शान्त उपासीत' इत्युपासनोपकरणशान्तिनिर्वृत्त्युपायभूतब्रह्मात्मकत्वोपदेशायोपात्तत्वात्। न च, 'स क्रतुं कुर्वीत' इत्युपासनस्योपास्यसाकाङ्क्षत्वाद्वाक्यान्तरस्थमपि ब्रह्म सम्बध्यत इति युक्तं वक्तुम्; स्ववाक्योपात्तेन मनोमयत्वादिगुणकेन निराकाङ्क्षत्वात्; 'मनोमयः प्राणशरीर' इत्यानन्यार्थतया निर्दिष्टस्य विभक्तिविपरिणाममात्रेणोभयाकाङ्क्षानिवृत्तिसिद्धेः। एवं निश्चिते जीवत्वे 'एतद्ब्रह्म' इत्युपसंहारस्थब्रह्मपदमपि जीव एव पूजार्थं प्रयुक्तमित्यध्यवसीयत इति।**

**एवं प्राप्ते ब्रूमः - सर्वत्र प्रसिद्धोपदेशात् - मनोमयत्वादिगुणकः परमात्मा। कुतः?**

---

गुणानां तस्मिन् घटनासम्भवात्। अतः किंविषयकोपासनं कर्तव्यमित्यपेक्षायां तादृशाकाङ्क्षानिवर्तकतयैव 'मनोमय' इत्यादिपदान्युपात्तानीत्युपास्यविशेषसमर्पकत्वमेव तद्वाक्यस्याङ्गीकर्तव्यमिति। **क्षेत्रज्ञोपकरणत्वादिति**। 'मनोमय' इत्यादिना मनआदिसम्बन्धस्य स्पष्टत्वेपि जीवलिङ्गभूतस्योपकरणोपकरणित्वरूपसम्बन्धस्यास्पष्टत्वादस्य वाक्यस्यास्पष्टजीवलिङ्गबोधकत्वमिति भावः। ननु 'स क्रतुं कुर्वीत' इति विहितोपासनस्योपास्याकाङ्क्षायां 'सर्वं खल्विदं ब्रह्मे'ति पूर्वनिर्दिष्टं ब्रह्मैवोपास्यसमर्पकत्वेनान्वेति। तदेव मनोमयत्वादिगुणानां विशेष्यं भवतीति न जीवपरत्वशङ्केतीमामाशङ्कां परिहरति — **न चेति**। **शान्तिनिर्वृत्तीति**। शान्तशब्दः शान्तिकामनावत्परः। 'आशंसायां भूतवच्चे'ति क्त इति भावः। **उपात्तत्वादिति**। 'सर्वं खल्विदं ब्रह्मे'ति निर्दिष्टस्य ब्रह्मणो विध्याकाङ्क्षत्वेन सन्निहितेन 'शान्त उपासीत' इति विहितोपासनेनान्वयेन निराकाङ्क्षत्वात् 'स क्रतुं कुर्वीत' इत्यनेनान्वयदौर्घट्यादिति भावः।

ननु वाक्यान्तरस्थत्वेऽपि ब्रह्म अनिराकाङ्क्षमपि 'स क्रतुं कुर्वीत' इति विहितोपासनस्य साकाङ्क्षत्वेनोत्थापिताकाङ्क्षं सत् उत्तरत्रान्वेतीति किं न स्यात्? अपि च 'मनोमय' इत्याद्युक्तमनोमयत्वादीगुणानां विशेष्याकाङ्क्षासत्त्वेन विशेष्यसमर्पकत्वेन ब्रह्मपदस्यैवान्वयश्च वक्तव्य इति शङ्कां परिहरति - **न चेति**। 'स क्रतुं कुर्वीत' 'मनोमय' इति विना वाक्यच्छेदमेकवाक्यतया पाठात् अनेनैवोपास्यविशेषसमर्पणेनाकाङ्क्षायाः शान्तत्वेन न वाक्यान्तरस्थब्रह्मपदस्य सम्बद्धत्वसम्भव इति भावः। एष आत्मेति स्ववाक्यस्थानन्यार्थसमानलिङ्गात्मशब्देन विशेष्यसमर्पणाच्च न विशेष्यसमर्पकतयापि ब्रह्मपदसम्बन्धसम्भव इति चाशयः। ननु कथं मनोमयादिपदानां प्रथमान्तानां कर्मविशेषाकाङ्क्षानिवर्तकत्वमित्यत्राह - **मनोमय इति**। ब्रह्मपदस्य द्वितीयान्तत्वाभ्युपगमेपि 'ब्रह्म क्रतुं कुर्वीत' इत्यन्वयासम्भवेन ब्रह्मण इति षष्ठ्यन्ततया विपरिणामावश्यकत्वेन सन्निहितमनोमयादिपदानामेव तथाविपरिणामस्य सुलभत्वान्नान्वयदौर्घट्यमित्याशयः।

ननु 'एष म आत्मा अन्तर्हृदय एतत् ब्रह्मे'त्युपसंहारस्थ ब्रह्म शब्दस्य का गतिरित्यत्राह - **एवं निश्चित** इति। उपक्रमवाक्यानुगुण्येनोपसंहारस्थब्रह्मपदस्य नेतव्यत्वादिति भावः। अत एव 'एष म आत्मा' इति व्यतिरेकनिर्देशोप्यन्यथा नेयः। प्रथमं हि मनोमयत्वमुपात्तम्। तच्च जीवासाधारणम्। अतो बद्धावस्थस्योपासकत्वं शुद्धावस्थस्योपास्यत्वमिति व्यतिरेकनिर्देश उपपन्नः। एवं ज्यायस्त्वश्रवणात्पूर्वमेवाणीयस्त्वश्रवणात्तदप्यन्यथा नेयमेवेति पूर्वपक्षिणोऽभिमानः। **मनोमयत्वादिगुणकः** परमात्मेत्यनेन प्रतिज्ञावाक्याध्याहारः कृतः। 'सर्वत्र प्रसिद्धोपदेशात्' इति सर्वस्यापि सूत्रांशस्य हेतुपरत्वं व्यञ्जयन् हेत्वाकाङ्क्षां दर्शयति - **कुत** इति। उत्तरत्रात्मशब्दश्रवणादात्मशब्दस्य च 'अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मे'ति श्रुतिप्रसिद्ध्याऽन्तः प्रविश्य शासितृत्वार्थकत्वेन मनोमयत्वादिविशिष्टः परमात्मैव भवितुमर्हतीत्य-

**सर्वत्र वेदान्तेषु परस्मिन्नेव ब्रह्मणि प्रसिद्धस्य मनोमयत्वादेरुपदेशात् । प्रसिद्धं हि मनोमयत्वादि ब्रह्मणः - यथा,** (मु.२-२-८) **'मनोमयः प्राणशरीरनेता',** (तै.शी.6) **'स य एषोऽन्तर्हृदय आकाशः । तस्मिन्नयं पुरुषो मनोमयः । अमृतो हिरण्मयः',** (तै.ना.11) **'हृदा मनीषा मनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति'** (मु.3-1-8) **'न चक्षुषा गृह्यते नापि वाचा',**(?) **'मनसा तु विशुद्धेन' - तथा** (के.1-2) **'प्राणस्य प्राणः',** (कौषी.3-26) **'अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति',** (छा.1-11.5) **'सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते' इत्यादिषु । मनोमयत्वं - विशुद्धेन मनसा ग्राह्यत्वम् । प्राणशरीरत्वं - प्राणस्याप्याधारत्वं नियन्तृत्वञ्च । एवञ्च सति, 'एष म आत्माऽन्तर्हृदये एतद्ब्रह्म' इति ब्रह्मशब्दोऽपि मुख्य एव भवति । 'अप्राणो ह्यमनाः' इति मनआयत्तं ज्ञानं प्राणायत्तां स्थितिञ्च ब्रह्मणो निषेधति ।**

**अथ वा** (छा.3-1 4-1) **'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इत्यत्रैवोपासनं विधीयते - सर्वात्मकं ब्रह्म शान्तस्सन्नुपासीतेति । 'स क्रतुं कुर्वीत' इति तस्यैव गुणोपादानार्थोऽनुवादः । उपादेयाश्च गुणा मनोमयत्वादयः ; अतः सर्वात्मकं ब्रह्म मनोमयत्वादिगुणकमुपासीतेति वाक्यार्थः । तत्र संदेहः - किमिह ब्रह्मशब्देन प्रत्यगात्मा निर्दिश्यते, उत परमात्मा - इति । किं युक्तम् ? प्रत्यगात्मेति । कुतः? तस्यैव सर्वपदसामानाधिकरण्यनिर्देशोपपत्तेः । सर्वशब्दनिर्दिष्टं हि ब्रह्मादिस्तम्बपर्यन्तं कृत्स्नं जगत् । ब्रह्मादिभावश्च प्रत्यगात्मनोऽनाद्यविद्यामूलकर्मविशेषोपाधिको विद्यत एव ।**

---

भिप्रायेण **परमात्मा** इत्यध्याहृतम् । **वेदान्तेष्विति सर्वत्रेति** सूत्रखण्डव्याख्यानम् । सर्वत्रशब्दस्य सर्वनामत्वेन बुद्धिस्थवाचकत्वाद्वेदान्तसूत्रघटकत्वेन सूत्रकारस्य वेदान्तार्थतात्पर्यकत्वसम्भवाच्च वेदान्तेष्विति व्याख्यातम् । **मनोमयत्वादेरुपदेशादिति** ।

ननु परमात्मासाधारणब्रह्मशब्दश्रवणादित्येव कुतो नोक्तमिति चेन्न । उपक्रमस्य ब्रह्मशब्दस्योत्तरत्रानन्वयात् उपसंहारस्थब्रह्मपदस्य दुर्बलत्वाच्च तथा नोक्तम् । एवं मनोमयत्वादीनां ब्रह्मणि प्रसिद्धिकथनेनोपक्रमविरोधोपि नास्तीति च सूचितम् । प्रसिद्धिं सूचयति - **यथेति** । मनोमयशब्दस्य परमात्मपरत्वदृढीकरणाय 'अमृतो हिरण्मय' इत्यधिकमुपात्तम् । 'स त आत्माऽन्तर्याम्यमृत' इत्यादिश्रुतिः । **हृदा** = भक्त्या । **मनीषा** = धृत्या । **अभिक्लृप्तः** = ग्राह्यः । अत्र मनसाऽभिक्लृप्त इत्युक्त्या मनोमयशब्दार्थो विवृतः । प्राणाधिकरणे प्राणशब्दस्य 'प्राणयति सर्वाणि भूतानी'ति व्युत्पत्त्या प्राणपरत्वमुपावर्णि । अत्र प्राणशरीरित्वार्थकत्वमपि युक्तमिति सूचयितुं तद्वाक्योपादानम् । **ग्राह्यत्वमिति** । ग्राह्यग्राहकरूपसम्बन्धाभिप्रायो मयडिति भावः । अथोपक्रमविरोधाभावेनोपसंहारस्थवाक्यमपि नान्यथा नेयमित्याह — **एवञ्चेति** । अथ 'अप्राणो ह्यमना' इत्यनेन वस्तुतः प्राणमनसोः परमात्मनि निषेधेपि न मनोमयादिशब्दानां परमात्मपरत्वविरोधः । अथापि यथावस्थितं तच्छ्रुत्यर्थमाह — **अप्राण** इति । ब्रह्मणः प्राणमनसोस्सत्त्वेऽप्युपकरणोपकरणित्वलक्षणसम्बन्धो नास्ति । ग्राह्यग्राहकत्वसम्बन्धः नियन्तृनियाम्यत्वसम्बन्धश्च न विरुद्ध इति भावः ॥

अथ स्वाभिमतं वर्णकान्तरमाह - **अथ वेति** । शान्तस्सन्नुपासीत इत्यत्राशंसायां नात्र क्तप्रत्यय इति सूचितम् । एवमेकविषयत्वमभ्युपगम्य प्रत्यागात्मेति पूर्वपक्षिते हेतुं पृच्छति - **कुत इति** । हेतुत्वेनोक्तं सर्वपदसामानाधिकरण्यमुपपादयति - **सर्वशब्देति** । ब्रह्मादिभावः चतुर्मुखादिभावः । **अनाद्यविद्येति** । कर्मणा अविद्या, अविद्ययाऽहितकर्मोत्पा-

**परस्य तु ब्रह्मणस्सर्वज्ञस्य सर्वशक्तेरपहतपाप्मनो निरस्तसमस्ताविद्यादिदोषगन्धस्य समस्तहेयाकर-सर्वभावो नोपपद्यते। प्रत्यगात्मन्यपि क्वचित्क्वचिद्ब्रह्मशब्दः प्रयुज्यते। अत एव परमात्मा परं ब्रह्मेति परमेश्वरस्य क्वचित्सविशेषणो निर्देशः। प्रत्यगात्मनश्च निर्मुक्तोपाधेर्बृहत्वञ्च विद्यते;** (श्वे.५-९) **'स चानन्त्याय कल्पते' इति श्रुतेः। अविदुषस्तस्यैव कर्मनिमित्तत्वाज्जगज्जन्मस्थितिलयानां तज्जलानिति हेतुनिर्देशोऽप्युपपद्यते। तदयमर्थः - अयं जीवात्मा स्वतोऽपरिच्छिन्नस्वरूपत्वेन ब्रह्मभूतस्सन् अनाद्यविद्यया देवतिर्यङ्मनुष्य-स्थावरात्मनाऽवतिष्ठत इति।**

---

दनमिति बीजाङ्कुरवदनादित्वम्। परब्रह्मणस्तु न सर्वभाव उपपन्न इत्याह - **परस्येति**। सर्वज्ञस्येत्यनेन स्वस्वसर्वात्मत्वे स्वगतहेयज्ञानमावश्यकम्। अन्यथा सर्वज्ञत्वभङ्गादिति सूचितम्। अस्तु तज्ज्ञानं, किं तत इत्यत्राह - **सर्वशक्तेरिति**। स्वस्य सर्वशक्तत्वेन स्वगतहेयनिवारणक्षमत्वाज्ज्ञातं स्वगतं हेयं कुतो न निवारयति, अन्यथा शक्त्यपगमप्रसङ्गात्।

न च ज्ञानशक्त्यसङ्कोच इष्टः। पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति श्रुतिविरोधात्। अतो न परब्रह्मणः सर्वभाव युक्त इति सर्वशब्दसमानाधिकरणब्रह्मपदं जीवपरमेवेति भावः। अपहतपात्मनो निरस्तसमस्ता-विद्यादिदोषगन्धस्येत्याभ्यां परब्रह्मणो ज्ञानशक्तिसङ्कोचककर्माविद्यारूपदोषनिषेधः कृतः।

ननु कथं जीवात्मनि ब्रह्मशब्दप्रयोग इत्यत्राह — **प्रत्यगात्मन्यपीति।** परब्रह्मशब्दप्रयोगाभावेपि ब्रह्मशब्दप्रयोग इष्ट इति भावः। अथात्मशब्ददृष्टान्तप्रदर्शनपूर्वकं जीवे ब्रह्मशब्दप्रयोगमुपपादयति - **अत एवेति**। परमात्मेत्यनेन दृष्टान्तप्रदर्शनम्। यथा आत्मशब्दो जीवपरब्रह्मसाधारणः परमात्मशब्दस्तु परब्रह्मासाधारणः, तद्वद्ब्रह्मशब्दो जीवपर-साधारणः परब्रह्मशब्दस्तु परमात्माऽसाधारणः। अन्यथा परत्वविशेषणस्य वैयर्थ्यापत्तेरित्याशयः।

नन्वात्मशब्दस्य आप्नोतीति व्युत्पत्त्या जगद्व्याप्तिमादाय ब्रह्मपरत्वं देहव्याप्तिमादाय जीवपरत्वञ्चेत्यात्मशब्दः साधारणः, तद्वद्ब्रह्मशब्दस्य किं निमित्तमादाय साधारण्यमित्यत्राह - **प्रत्यगत्मनश्चेति**। बृहत्वरूपनिमित्तमादायोभय-साधारण्यमिति भावः। उक्तार्थे श्रुतिं प्रमाणयति - **स चेति**। 'वलाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवस्स विज्ञेयः स चानन्त्याय कल्पत' इति श्रुतिर्हि अणुरूपस्यापि जीवात्मन उपाधिभूतकर्माविद्याद्यपगमदशायां ज्ञानद्वारक-बृहत्वमुपपादयन्ती बृहत्वं साधारणमिति ब्रवीतीति भावः॥

ननु 'सर्वं खल्विदं ब्रह्म तज्जलानित्यत्र ब्रह्मशब्दस्य जीवपरत्वे कथं तस्य तज्जलानित्युक्तजन्मस्थितिलयहेतुत्व-मित्यत्राह - **अविदुष** इति। अयं भावः - जगज्जन्मस्थितिलयहेतुत्वं हि न जीवस्य सङ्कल्पाधीनं किन्तु अदृष्टशब्द-वाच्यतत्कर्माधीनम्। बद्धो हि जीवोऽज्ञानात्कर्म करोति, कर्मणा संसरति च। अस्य चानादित्वान्नान्योन्याश्रयादिदोषः। तस्माज्जगज्जन्मस्थितिलयानां जीवगतादृष्टाधीनत्वसम्भवात्तत्कर्मणा जीवस्य चतुर्मुखादिसर्वभावसम्भवेन सर्वपद-सामानाधिकरण्योपपत्तेश्च, अस्यामुपनिषदि जीव एवोपास्यतया प्रतिपाद्यत इति। न चैकस्य जीवस्य कथं चतुर्मुखादि-सर्वभाव उपपद्यत इति वाच्यम्। जीवत्वेन जीववर्गान्तर्गान्तर्गतस्य तस्य तस्य ततत्सामानाधिकरण्यसम्भवेन जीवजाती-यस्य सर्वभावसम्भवात्। ननु बद्धस्य जन्मादिजगत्कारणत्वं, ब्रह्मत्वं तु शुद्धस्य, ततश्च कथं 'सर्वं खल्विदं ब्रह्मे'ति ब्रह्म शब्दवाच्यमुक्तस्य सर्वशब्दसामानाधिकरण्यमित्यत्राह - **तदयमर्थ** इति। स्वरूपशब्दः स्वभावपरः। ब्रह्मभूतस्यैव जीवात्मनोऽनाद्यविद्यया देवाद्यत्मना जायमनत्वान्न सामानाधिकरण्यानुपपत्तिरिति भावः।

एवं क्वचित्परब्रह्माभ्युपगम्यैवात्रोपनिषदः कृतां जीवपरत्वशङ्कां सूत्रकारो निरस्यतीत्याशयेन सूत्रमवतारयति -

**अत्र प्रतिविधीयते - सर्वत्र प्रसिद्धोपदेशात् - सर्वत्र - 'सर्वं खल्विदम्' इति निर्दिष्टे सर्वस्मिन् जगति ब्रह्मशब्देन तदात्मतया अभिधीयमानं परं ब्रह्मैव ; न प्रत्यगात्मा। कुतः ? प्रसिद्धोपदेशात्। 'तज्जलानिति' इति हेतुतः 'सर्वं खल्विदं ब्रह्मे'ति प्रसिद्धवदुपदेशात्। ब्रह्मणो जातत्वात् ब्रह्मणि लीनत्वात् ब्रह्माधीनजीवनत्वाच्च हेतोर्ब्रह्मात्मकं सर्वं खल्विदं जगदित्युक्ते, यस्माज्जगज्जन्मस्थितिलया वेदान्तेषु प्रसिद्धाः, तदेवात्र ब्रह्मेति प्रतीयते। तच्च परमेव ब्रह्म; तथा हि,** (तै.भृ.१) **यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति,**

---

**अत्रेति**। पूर्वयोजनावदत्र न प्रतिज्ञावाक्याध्याहारः सूत्रघटकेन सर्वत्रेत्यनेन प्रतिज्ञाया उपात्तत्वादित्यभिप्रेत्य सर्वत्रेत्यस्य प्रतिज्ञापरतयाऽर्थमाह - **सर्वत्रेति**। यथाऽन्तस्तद्धर्मोपदेशादिन्यत्रान्तःपदं प्रतिज्ञापरं तद्वदत्र सर्वत्रेति पदमित्याशयः। पूर्वत्र सर्वत्रेतिपदं वाचकवेदान्तपरम्। अत्र तु वाच्यजगत्परमित्याशयेनाह - **सर्वस्मिन् जगतीति**। तदात्मतया विधीयमानं = सर्वं ब्रह्म खलिवति ब्रह्मात्मकत्वविधानविशेषणभूतम्। 'ईक्षतेर्नाशब्दं',' नेतरोऽनुपपत्तेः' 'भेदव्यपदेशाच्चान्य' इति पूर्वपादोक्तं नाशब्दमिति, नेतर इति अन्य इति वाभिप्रेत्योक्तं - **परं ब्रह्मैवेति**। 'अनुपपत्तेस्तु न शारीर' इति अत्रैव वक्ष्यमाणमभिप्रेत्य न प्रत्यगात्मेति भाषितम्। **प्रसिद्धवदुपदेशात्**। प्रसिद्धस्य = जगज्जन्मादेस्तत्कृततादात्म्यस्य चोपदेशादित्यर्थः। तज्जलानिति हेतुपरेतिकरणेन जन्मादीनां प्रसिद्धिः। खलुशब्देन तत्कृततादात्म्यस्य प्रसिद्धिः। अथ श्रुत्यर्थप्रदर्शनपूर्वकमुक्तमर्थं विवृणोति - **ब्रह्मण इति**। जायत इति जं, लीयत इति लम्। जलशब्दौ डप्रत्ययान्तौ। अनिति = जीवतीत्यन्। अन्शब्दः क्विबन्तः। जं च लं च, अन् च जलानिति समाहारद्वन्द्वः।

न च पदार्थभेद एव हि द्वन्द्वसमासः। अत्रचोत्पत्त्याद्याश्रयाणां जलादिपदार्थानां भेदाभावेन कथं द्वन्द्वसमास इति वाच्यम्। पदार्थताव-च्छेदेकभेदेन समासोपपत्तेः। एवमेव हि 'प्रमाणप्रमेयसंशये'त्यादि सूत्रे द्वन्द्वसमास उपपादितो न्यायविद्भिः। 'तस्य' इति सम्बन्धसामान्ये जलानिति षष्ठीतत्पुरुषः। द्वन्द्वादौश्रूययाणतच्छब्दार्थस्य प्रत्येकं सम्बन्धः। इतिशब्दः ज्ञानज्ञाप्यत्वरूपहेतुत्वपरः। तदेकदेशज्ञाने तज्जलानित्युक्तस्य तज्जत्वतल्लत्वतदनत्वावच्छिन्नस्य प्रकारतासम्बन्धेनान्वयः। खलुशब्दः प्रमाणप्रसिद्धपरः सत्तादात्म्ये जन्मस्थित्यादौ वाऽस्यान्वयः। ततश्च प्रमाणप्रसिद्धतज्जत्वाद्यवच्छिन्नप्रकारकज्ञानज्ञाप्यत्वविशिष्टप्रमाणप्रसिद्धब्रह्मतादात्म्यवदिदं सर्वमिति बोधः। सर्वशब्दः सर्वशरीरकब्रह्मपरः। तदेकदेशे इदंपदार्थ-प्रत्यक्षविषयत्वस्यान्वयः।

अत्र तज्जत्वं तदभिन्नत्वे सति तदव्यवहितोत्तरक्षणोत्पत्तिकत्वरूपं तदुपादेयत्वं सूक्ष्मावस्थाविशिष्टब्रह्मनिरूपितकार्यत्वस्य स्थूलावस्थाविशिष्टब्रह्मणि स्वीकारादुक्ततज्जत्वमुपपन्नमेव। तल्लत्वं तदात्मकनाशप्रतियोगित्वम्। कपालत्वाद्यवस्थाविशिष्टमृद एव घटनाशरूपत्वेन दर्शनादुपादानस्यैव कार्यनाशरूपत्वात्स्थूलचिदचिद्विशिष्टब्रह्मनाशरूपत्वं सूक्ष्मचिदचिद्विशिष्टब्रह्मण उपपन्नमिति स्वात्मकनाशप्रतियोगित्वं स्थूलचिदचिद्विशिष्टब्रह्मणो युक्तम्। न च ब्रह्मणः कथं नाशप्रतियोगित्वमिति वाच्यम्। विशिष्टे उत्पत्तिमत्वस्येव नाशप्रतियोगिताया अप्यङ्गीकारात्। 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति तु शुद्धस्वरूपविषयकमिति। तदनत्वश्च ब्रह्माधीनस्थितिमत्वरूपजीवनवत्वम्। न च ब्रह्मसङ्कल्पप्रयुक्तस्थितिमत्वरूपतदनत्वस्य ब्रह्मतादात्म्यभिन्ने घटादावपि सत्त्वेन न निरुक्ततदनत्वहेतुना तादात्म्यसाधनसम्भव इति वाच्यम्। स्वसामानाधिकरण्यस्वप्रयोज्यत्वोभयसम्बन्धेन ब्रह्मसङ्कल्पविशिष्टस्थितिमत्वस्य तदनत्वरूपत्वेनास्य च घटादावसत्त्वेन विशिष्टब्रह्मणि च सत्त्वेनानुपपत्त्यभावादिति। ननु वेदान्तेषु जन्मादिहेतुत्वं ब्रह्मणः प्रसिद्धमस्तु। तद्धेतुभूतं ब्रह्म जीव एव किं न स्यादित्यत्राह - **तच्चेति**। 'तद्विजिज्ञासस्व तद्ब्रह्मे'त्यादेरपि जीवविषयकत्वशङ्कानिरासाय 'आनन्दो ब्रह्म' इत्याद्युपात्तम्। आनन्दशब्दस्यानन्दमयशब्दवाच्यार्थवाचकत्वस्फुटीकरणायानवधिकातिशयानन्दयोगिन इत्युक्तम्। पूर्वानुवाकप्रतिपादितेत्यनेन तत्र हेतुर्विवृतः। श्रुत्यन्तरप्रसिद्धिमभिप्रेत्याह - **तथेति**।

**यत्प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व ; तद्ब्रह्म' इत्युपक्रम्य, 'आनन्दो ब्रह्मेति व्यजानात्। आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' इत्यादिना पूर्वानुवाकप्रतिपादितानवधिकातिशयानन्दयोगिनो विपश्चितः परस्माद्ब्रह्मण एव जगदुत्पत्तिस्थितिलया निर्दिश्यन्ते। तथा,** (श्वे. ६-९) **'स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' इति करणाधिपस्य जीवस्याधिपः परं ब्रह्मैव कारणं व्यपदिश्यते। एवं सर्वत्र परस्यैव ब्रह्मणः कारणत्वं प्रसिद्धम्। अतः परब्रह्मणो जातत्वात्तस्मिन् प्रलीनत्वात्तेन प्राणनात्तदात्मकतया तादात्म्यमुपपन्नम्। अतस्सर्वप्रकारं सर्वशरीरं सर्वात्मभूतं परं ब्रह्म शान्तो भूत्वोपासीतेति श्रुतिरेव परस्य ब्रह्मणस्सर्वात्मकत्वमुपपाद्य तस्यैवोपासनमुपदिशति। परं ब्रह्म हि कारणावस्थं कार्यावस्थं सूक्ष्मस्थूलचिदचिद्वस्तुशरीरतया सर्वदा सर्वात्मभूतम्। एवम्भूततादात्म्यस्य प्रतिपादने परस्य ब्रह्मणस्सकलहेयप्रत्यनीककल्याणगुणाकरत्वं न विरुध्यते; प्रकारभूतशरीरगतानां दोषाणां प्रकारिण्यात्मन्यप्रसङ्गात्। प्रत्युत निरतिशयैश्वर्यापादनेन गुणायैव भवतीति पूर्वमेवोक्तम्।**

**यदुक्तं जीवस्य सर्वतादात्म्यमुपपद्यत इति - तदसत् ; जीवानां प्रतिशरीरं भिन्नानामन्योन्यतादात्म्यासम्भवात्। मुक्तस्या(प्य)नवच्छिन्नस्वरूपस्यापि जगत्तादात्म्यं जगज्जन्मस्थितिप्रलयकारणत्वनिमित्तं न सम्भवतीति** (शारी.४-४-६) **'जगद्व्यापारवर्जम्' इत्यत्र वक्ष्यते। 'जीवकर्मनिमित्तत्वाज्जगज्जन्मस्थितिलयानां स एव कारणम्' इत्यपि न साधीयः ; तत्कर्मनिमित्तत्वेऽपीश्वरस्यैव जगत्कारणत्वात्। अतः परमात्मैवाऽत्र**

---

एवं ब्रह्मकारणत्वप्रसिद्धिरुक्ता। अथ तत्प्रयुक्ततादात्म्यस्योपपत्तिमाह - **अत** इति। परब्रह्मणः एवं जन्मादिहेतुत्वस्य तत्प्रयुक्तत्वतादात्म्यस्य चोपपन्नत्वात्तथा प्रसिद्धमर्थं वदन्ती "सर्वं खल्विदं ब्रह्म तज्जलानिति" श्रुतिरेव ब्रह्मपरत्वं गमयतीत्याह - **अत इति** सर्वशरीरं सर्वात्मभूतमित्यनेन चिदचिद्विलक्षणस्यापि ब्रह्मणोऽन्तर्यामित्वप्रयुक्ततादात्म्यमुपपन्नमिति सूचितम्। ननु प्रलयावस्थायां कथं शरीरात्मभावः - एकमेवाद्वितीयमिति सर्वभेदनिषेधादित्यत्राह - **परं ब्रह्म हीति**। सूक्ष्मस्थूलपदाभ्यां कार्यकारणावस्थयोर्भेदो दर्शितः। परब्रह्मण एव चतुर्मुखादिसर्वात्मकत्वे उभयलिङ्गत्वविरोध इति पूर्वपक्षिणोक्तं निरस्यति - **एवं भूतेति**। कुत इत्यत्राह - **प्रकारभूतेति**। ब्रह्मणस्सर्वात्मकत्वोपपादने सर्वान्तर्यामित्वरूपैश्वर्यान्तरमपि प्रदर्शितं भवतीति पूर्वमेवोक्तमिति स्मारयति - **प्रत्युतेति**॥

पूर्वपक्षिणोक्तं जीवस्य सर्वतादादम्यं निरसितुमनुवदति - **यदुक्तमिति**। **प्रतिशरीरं भिन्नानामित्यनेन** तादात्म्यासम्भवे हेतुरुक्तः। जीवात्मनो देवतिर्यङ्मनुष्यस्थावरात्मना हि सर्वतादात्म्यमुपपादनीयम्। तच्च न सम्भवति, जीवानामनन्तत्वाद्देवशरीरकस्य मनुष्यशरीरकस्य च भिन्नत्वादिति भावः। ननु मुक्तस्य सर्वतादात्म्यं सम्भवतीत्यत्राह - **मुक्तस्यापीति**। प्रथमः अपि बद्धसमुच्चायकः। द्वितीयोऽनवच्छिनस्वरूपत्वस्याप्रायोजकत्वसूचकः। मुक्तस्य स्वरूपतो जगत्तादात्म्यं परमात्मन इवासम्भवि, जगज्जन्मादिकारणत्वप्रयुक्तं तादात्म्यं तु परमात्मनः। न तु तादृशमपि तत् जीवस्येत्याशयेनोक्तं **जगज्जन्मस्थितिलयकारणत्वनिमित्तमिति**। जीवगतादृष्टाधीनत्वमादाय जीवकारणत्वमिति पूर्वोक्तमनूद्य दूषयति - **जीवेति**। कर्मणामुपादानत्वं निमित्तत्वञ्चोभयमपि न सम्भवति, यथा घटाद्युपादनस्य भोक्तृकर्मनिमित्तत्वेपि तादृशकर्मणो नोपादनत्वं निमित्तत्वं च। परन्तु तथात्वं कुलालमृदोरिव परब्रह्मण एव। कर्म तु वैषम्यमात्रे प्रयोजकं, यथा चाभरणभोक्तुरिच्छा कुण्डलादिविशेषे हेतुः। अत्र च तज्जलानित्यनेनोपादानत्वं कर्तृत्वं चोक्तम्। इदञ्च कर्तृत्वादिजीवकर्मण्यसम्भवि, परमात्मनस्तु श्रुत्यन्तरप्रसिद्धम्। अतो जगज्जन्मस्थिलयकारणत्वं न कर्मद्वारापि जीवात्मनि सम्भवतीति भावः। उपसंहरति - **अत इति**।

**ब्रह्मशब्दाभिधेयः । इममेव सूत्रार्थमभियुक्ता बहुमन्वते । यथाह वृत्तिकारः - 'सर्वं खल्विति सर्वात्मा ब्रह्मेशः' इति ॥ १ ॥**

## विवक्षितगुणोपपत्तेश्च १ । २ । २ ॥

**वक्ष्यमाणाश्च गुणाः परमात्मन्येवोपपद्यन्ते, 'मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामस्सर्वगन्धस्सर्वरसस्सर्वमिदमभ्यात्तोऽवाक्यनादरः' इति । मनोमयः - परिशुद्धेन मनसैकेन ग्राह्यः । विवेकविमोकादिसाधनसप्तकानुगृहीतपरमात्मोपासननिर्मलीकृतेन हि मनसा गृह्यते । अनेन हेय-प्रत्यनीककल्याणैकतानतया सकलेतरविलक्षणस्वरूपतोच्यते ; मलिनमनोभिर्मलिनानामेव ग्राह्यत्वात् । प्राणशरीरः - जगति सर्वेषां प्राणानां धारकः ; प्राणो यस्य शरीरम् - आधेयं विधेयं शेषभूतश्च स प्राण-शरीरः । आधेयत्वविधेयत्वशेषत्वानि शरीरशब्दप्रवृत्तिनिमित्तानी(त्तमि)त्युपपादयिष्यते । भारूपः - भास्व-रूपः ; अप्राकृतस्वासाधारणनिरतिशयकल्याणदिव्यरूपत्वेन निरतिशयदीप्तियुक्त इत्यर्थः । सत्यसङ्कल्पः - अप्रतिहतसङ्कल्पः । आकाशात्मा - आकाशवत्सूक्ष्मस्वच्छस्वरूपः ; सकलेतरकारणभूतस्याऽऽकाशस्या(प्या)त्मभूत इति वा आकाशात्मा ; स्वयञ्च प्रकाशते, अन्यानपि प्रकाशयतीति वा आकाशात्मा । सर्व-**

---

अथ द्वितीययोजनाया बोधायनोपज्ञत्वमाह - **इदमेवेति** । वृत्तौ 'सर्वं खल्वि'ति श्रुतिमुपादाय तद्ब्रह्मपदस्य सर्वात्मभूतपरात्मपरत्वकथनाद्ब्रह्मपद एव संशय इति द्वितीययोजनैवाभिमतेति प्रतीयत इति ॥

अथोतरसूत्रार्थमाह - **वक्ष्यमाणाश्चेति** । वेदस्यापौरुषेयत्वेन तत्प्रतिपाद्यगुणानां पुरुषेच्छापूर्वकत्वाभावेन विवक्षितत्वं न सम्भवतीति विवक्षितशब्दस्य लक्षणया वक्षयमाणा इत्यर्थः कृतः । 'सर्वं खल्विदं ब्रह्मे'त्यादिवाक्यानन्तरं मनोमय इति वाक्यस्य सत्त्वेन मनोमयत्वादीनां वक्ष्यमाणत्वमुपपन्नम् । पूर्वं मनोमयशब्दार्थस्य विवृतत्वेपि सामान्यस्य मनोमयशब्दस्य विशेषवाक्यानुगुणतया नेतव्यत्वसूचनाय पुनस्तद्विवृणोति - **मनोमय** इति । अब्भक्षशब्दवदयम-वधारणगर्भ इति सूचनाय - **एकेनेत्युक्तम्** । परिशुद्धमनोग्राह्यत्वमुपपादयति - **विवेकेति** । **उच्यत** इति । फलत इति शेषः । तदेव व्यतिरेकमुखेनोपपादयति - **मलिनेति** । मलिनमनसः परिशुद्धार्थग्राहकत्वाभावेन परिशुद्धमनसो मलिनार्थग्राहकत्वा-भावेन च परिशुद्धमनोग्राह्यत्वमपरिशुद्धसकलचेतनाचेतनविलक्षणपरिशुद्धब्रह्मण एवेति ब्रह्मणः चेतनाचेतनविलक्षण-स्वरूपत्वलाभ इति भावः । यद्वा मलिनमनोग्राह्यत्वस्य हेयार्हत्वव्यापकत्वाद्ब्रह्मणि च व्यापकीभूतमलिनमनोग्राह्यत्वा-भावोक्त्या हेयार्हत्वनिवृत्तिरुक्ता भवति । मुक्तस्यापि भगवत्पारतन्त्र्येणैव परिशुद्धमनोग्राह्यत्वम् । स्वातन्त्र्येण मुक्तग्राहक-मनसस्त्वपरिशुद्धत्वमेवेति ध्येयम् । प्राणशरीरशब्देन प्राणधारकत्वलाभमुपपादयति - **प्राणो यस्य शरीरमिति** ।

ननु शरीरशब्दस्य कथमाधेयत्वादिवाचकत्वमित्यत्राह - **आधेयत्वेति** । अत्र निमित्तानीति बहुवचनस्वारस्यात् प्रत्येकं प्रवृत्तिनिमित्तमिति गम्यते । भास्वररूप इति भास्वरपदस्य ज्ञानरूपार्थकत्वन्तु क्लिष्टमित्यभिप्रेत्यैवमुक्तिः । भाः = दीप्तिः रूपं धर्मः यस्य । दीप्तिधर्मकत्वं भास्वररूपत्वमिति यावदित्यभिप्रेत्याह - **अप्राकृतेति** । अप्रतिहतपदेन सत्यशब्दो विवृतः । आत्मशब्दः स्वरूपपरः । आकाशस्येव स्वरूपं यस्येत्याकाशात्मेत्यभिप्रेत्याह - **आकाशवदिति** । सूक्ष्मत्वं = प्रतिघातानर्हत्वं, व्याप्त्यर्हत्वं वा । स्वच्छत्वं = निर्मलत्वम् । अर्थान्तरमाह - **सकलेति** । अत्राकाशशब्दः प्रकृतिवाची । आकाशे एवं तदोतश्च प्रोतश्चेति श्रुतिरत्र विवक्षिता । सर्वाणि ह वा इमानि भूतान्याकाशादेवेति श्रुतिघटकाकाशशब्दम-भिप्रेत्यार्थान्तरमाह - **स्वयमिति** ।

**कर्मा - क्रियत इति कर्म ; सर्वं जगद्यस्य कर्म असौ सर्वकर्मा ; सर्वा वा क्रिया यस्यासौ सर्वकर्मा । सर्वकामः - काम्यन्त इति कामाः - भोग्यभोगोपकरणादयः ; ते परिशुद्धास्सर्वविधास्तस्य सन्तीत्यर्थः । सर्वगन्धस्सर्वरसः -** (कठ. १-३-१५) **'अशब्दमस्पर्शम्' इत्यादिना प्राकृतगन्धरसादिनिषेधादप्राकृताः स्वासाधारणाः निरवद्या निरतिशयाः कल्याणास्स्वभोग्यभूतास्सर्वविधा गन्धरसास्तस्य सन्तीत्यर्थः । सर्वमिदमभ्यात्तः - उक्तं रसपर्यन्तं सर्वमिदं कल्याणगुणजातं स्वीकृतवान् । अभ्यात्त इति, 'भुक्ता ब्राह्मणाः' इतिवत्कर्तरि क्तः प्रतिपत्तव्यः । अवाकी - वाकः उक्तिः ; सोऽस्य नास्तीत्यवाकी । कुत इत्यत्राह - अनादर इति । अवाप्तसमस्तकामत्वेनादर्तव्याभावादादररहितः । अत एव अवाकी - अजल्पाकः, परिपूर्णैश्वर्यत्वाद्ब्रह्मादिस्तम्बपर्यन्तं निखिलं जगत्तृणीकृत्य जोषमासीन इत्यर्थः । त एते विवक्षिता गुणाः परमात्मन्येवोपपद्यन्ते ॥ २ ॥**

## अनुपपत्तेस्तु न शारीरः । १ । २ । ३ ॥

**तमिमं गुणसागरं पर्यालोचयतां खद्योतकल्पस्य शरीरसम्बन्धनिबन्धनापरिमितदुःखसम्बन्धयोग्यस्य बद्धमुक्तावस्थस्य जीवस्य प्रस्तुतगुणलेशसम्बन्धगन्धोऽपि नोपपद्यत इति नास्मिन् प्रकरणे शारीरपरिग्रहशङ्का जायत इत्यर्थः ॥ ३ ॥**

---

प्रथमे सर्वकर्मत्वं = सर्वजगत्कारणत्वं, द्वितीये, सद्वारकतया सर्वलौकिकवैदिकक्रियाकर्तृत्वं, सर्ववैदिककर्माराध्यत्वम् । कामपदस्येच्छापरत्वव्युदासायाह - **काम्यन्त** इति । परिशुद्धाः = अप्राकृताः । **प्राकृतगन्धरसादिनिषेधादिति** । अयं भावः - अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवच्च यत् इति गन्धादिनिषेधः भगवत्युक्तः । सर्वगन्ध इत्यादिना गन्धवत्त्वं चानुज्ञातम् । अतउभयोर्विरोधात्प्राकृतगन्धविषयको निषेधः, अप्राकृतगन्धविषयको विधिरिति । गन्धादीनामन्वयव्यवधानेन भगवत्यसम्भवात्सद्वारकत्वावश्यकत्वात्प्राकृतगन्धादीनां हेयत्वेन भगवत्यसम्भवाद्द्वाररूप इति निरतिशयदीमियुक्ताप्रकृतदिव्यरूपवत्वबोधनेनाप्राकृतदेहद्वारकगन्धरसादिमत्वं सर्वगन्ध इत्यादिना बोध्यत इति भावः । स्वीकृतवानिति अभ्यात्त इति पदव्याख्यानम् ।

नन्वभ्यात्त इत्यत्र कर्मण्यर्थे क्तप्रत्ययस्मरणात्कथं स्वीकृतवानित्यर्थकरणम् । न च स्वीकृतमित्यर्थाङ्गीकरणमेव युक्तम् । सर्वमिदमिति द्वितीयान्तपदान्वयात्, तस्य प्रथमान्तत्वे, सर्वगन्धः सर्वरस इत्यनन्वयात् । यो मनोमयत्वादिविशिष्टः सर्वमिदं स्वीकृतवान् तस्य क्रतुं कुर्वीत इत्यन्वयस्यैव स्वरसत्वाच्च । अतोऽभ्यात्त इति कथं कर्तरिक्त प्रत्ययः इत्यत्राह - **अभ्यात्त** इति । प्रयोगानुसारेणानुशासनस्य कार्यत्वात् 'भुक्ता ब्रह्मणा' इत्यत्र यथा कर्तरि क्तप्रत्ययप्रतिपत्तिस्तथाऽत्रापि कर्तर्यर्थे क्तप्रत्ययप्रतिपत्तिरावश्यकीति भावः । सोऽस्य नास्तीत्यवाकीति लब्धार्थकथनम् । न वाकः अवाकः । सोऽस्यास्तीत्यवाकी । अथवा, वाकः अस्यास्तीति वाकी । न वाकी अवाकी । **इत्याह** = इत्यत्राहेत्यर्थः । उत्तरत्रानादरपदश्रवणादवाकित्वं न वाक्सामर्थ्याभावरूपं किं तु जिष्प्रयोजनबहुप्रलापाभाववत्वमिति सूचयन्ननादरशब्दार्थमाह - **अवाप्तेति** । पदद्वयप्रतिपाद्यमर्थमेकीकृत्याह - **परिपूर्णेति** । निगमयति - **त एत** इति ।

एवमुक्तगुणानामन्वयमुखेन परमात्मपरत्वं स्थापितम् । अथ व्यतिरेकमुखेनापि परमात्मपरत्वं युक्तमिति सूचनाय प्रवृत्तमुत्तरसूत्रं विवृणोति - **तमिममिति** । मुक्तावस्थस्येति भाषिव्यमाणमभिसन्धाय दुःखसम्बन्धयोग्यस्येति भाषितम् । 'नेतरोऽनुपपत्तेः' इतिवदत्रापि 'अनुपपत्तेस्तु नेतर' इति सूत्रणावश्यकत्वेपि शारीर इति सूत्रणम् अनुपपत्तिप्रयोजकसूचनार्थम् । बद्धसङ्घटनं दृष्टान्तार्थम् । निग्राह्ययो बद्धो न निग्राहकेन भगवतैकीभूतः । एवमेवानुग्राह्यो मुक्तोऽनुग्राहकेण

## कर्मकर्तृव्यपदेशाच्च १ । २ । ४ ॥

**'एतमितः प्रेत्याभिसम्भवितास्मि' इति प्राप्यतया परं ब्रह्म व्यपदिश्यते, प्राप्तृतया च जीवः । अतः प्राप्ता जीव उपासकः, प्राप्यं परं ब्रह्मोपास्यमिति प्राप्तुरन्यदेवेदमिति विज्ञायते ॥ ४ ॥**

## शब्दविशेषात् १ । २ । ५ ॥

**'एष म आत्माऽन्तर्हृदये' इति शारीरषष्ठ्या निर्दिष्टः ; उपास्यस्तु प्रथमया । एवं समानप्रकरणे वाजिनां च श्रुतौ शब्दविशेषः श्रूयते जीवपरयोः,** (अग्निरहस्य.) **'यथा व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वा, एवमयमन्तरात्मन् पुरुषो हिरण्मयः ; यथा ज्योतिरधूमम्' इति । अत्र 'अन्तरात्मन्' इति सप्तम्यन्तेन शारीरो निर्दिश्यते; 'पुरुषो हिरण्मयः' इति प्रथमयोपास्यः । अतः पर एवोपास्यः ॥ ५ ॥**

**इतश्च शारीरादन्यः -**

## स्मृतेश्च १ । १ । ६ ॥

(गी. १४-१५) **'सर्वस्य चाहं हृदि सन्निविष्टो मत्तस्स्मृतिर्ज्ञानमपोहनञ्च',** (गी.१४-१९) **'यो मामेवमसम्मूढो जानाति पुरुषोत्तमम्',** (गी. १८-६१) **'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि**

---

ब्रह्मणा नैकीभूत इति । गुणलेशेत्यनेनैकैकस्यापि गुणस्यानुपपत्तिस्सूचिता ॥

अभिसम्भवितृशब्दः प्राप्तृपरः । परं ब्रह्मेति फलितार्थकथनम् । अयं भावः - प्राप्ता तूपासकः, स च जीव एवेति निर्विवादम् । तत्र प्राप्यतया 'एत'मिति शब्दनिर्दिष्टं पूर्वप्रक्रान्तं मनोमयत्वादिगुणविशिष्टम् उपास्यं ब्रह्म जीवो वेत्यत्रैव संशयः । तत्रोपासकस्य जीवस्य प्राप्तृत्वेन प्राप्तुः प्राप्यत्वासम्भवेन प्राप्यप्राप्तृभेदस्य स्वतः सिद्धत्वात्प्राप्यतया निर्दिष्टं ब्रह्म परमेवेति । एतदेवोपपादयति - **अत** इति । ननूपासकस्वरूपस्यैव प्राप्यत्वं किं न स्यादिति चेन्न, श्रुतेरस्वारस्यप्रसङ्गात् ।

ननु मामहं जानामीत्यादौ एकस्यैवात्मनः अवस्थाभेदेन कर्मत्वकर्तृत्ववत्प्राप्यत्वप्राप्तृत्वे अपि सम्भवत इति शङ्कापरिहारार्थतयोत्तरसूत्रप्रवृत्तिरिति मत्वा तदर्थमाह - **एष** इति । षष्ठ्या = षष्ठ्यन्तेन 'मे' इति पदेन । **प्रथमया** = प्रथमान्तपदेन । एवमन्यत्रापि शाण्डिल्यविद्यायामुक्तं 'शब्दविशेषा'दिति सूत्रमसङ्कोचादुपपादयति - **एवमिति** । जीवपरयोरिति लब्धार्थकथनम् । उपासकोपास्ययोरित्यर्थः । हिरण्मय इत्यनेन दिव्यमङ्गलविग्रहवत्वं स्फुटम् । अस्फुटत्वात् शब्दविशेषमुपपादयति **अत्रेति** । अन्तरात्मनिति शब्दो लुप्तसप्तमीविभक्तिकः, परमे व्यामन्नित्यत्र व्योमन्शब्दवत्, सम्बुध्यन्तत्वं त्वनन्वयभग्नमिति भावः । ततश्च सूत्रकारेण षष्ठीप्रथमात्मकः सप्तमीप्रथमात्मकश्च शब्दविशेषो विवक्षित इति भावः । उपसंहरति - **अत** इति । अयं भावः - अवस्थाभेदेन प्राप्यत्वप्राप्तृत्वोपपादनं न युक्तम् । एकस्यामेवावस्थायां शब्दविशेषेण भेदव्यपदेशात् । अत्र हि मे अन्तहृदये एषः आत्मेत्युक्त्या उपासकस्य तद्धृदयवर्तिनः अन्यस्योपास्यस्य च प्रतीतिः । अत एकस्यैव न प्राप्यत्वप्राप्तृत्वोपपत्तिरिति ॥

एवं हृदयान्तर्वर्तिनः परब्रह्मत्वं स्मृत्याद्युपब्रह्मणसिद्धमित्यतोऽपि हृदयान्तर्वर्तित्वेनोपास्यत्वेनोक्तस्य सर्वात्मकस्य परब्रह्मत्वं सिद्धमित्याशयेनोत्तरसूत्रमवतारयति - **इतश्चेति** । सर्वस्य चेत्यादिना हृदयान्तर्वर्तित्वं प्रत्यभिज्ञापितम् । यो मामित्यादिनोपास्यत्वम् । सर्वस्य चाहमित्यनेन स्वस्य हृदयान्तर्वर्तित्वमुक्तम् । 'ईश्वरस्सर्वभूताना'मिति ईश्वरस्य हृदयान्तर्वर्न्तित्वोक्त्या पूर्वोक्ताहमर्थो विवृतः । अत्र सर्वशब्दः सर्वभूतशब्दश्च जीवपरः । 'यन्त्रारूढानि' = देहाख्य-

**मायया। तमेव शरणं गच्छ' इति शारीरमुपासकम्, परमात्मानञ्चोपास्यं स्मृतिर्दर्शयति ॥ ६ ॥**

**अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च १ । २ । ७ ॥**

**अल्पायतनत्वमर्भकौकस्त्वम्; तद्व्यपदेशः - अल्पत्वव्यपदेशः । 'एष म आत्माऽन्तर्हृदये' इति अणीयसि हृदयायतने स्थितत्वात्, 'अणीयान् व्रीहेर्वा यवाद्वा' इत्यादिनाऽणीयस्त्वस्य स्वरूपेण व्यपदेशाच्च नायं परमात्मा; अपि तु जीव एव;** (मु. १-१-६) **'सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोतिं परिपश्यन्ति धीराः' इत्यादिभिः परमात्मनोऽपरिच्छिन्नत्वागमात्, जीवस्य च आराग्रमात्रत्वव्यपदेशादिति चेत् -**

**नैतदेवम्; परमात्मैव ह्यणीयानित्येवं निचाय्यत्वेन व्यपदिश्यते। एवं निचाय्यत्वेन - एवं द्रष्टव्यत्वेन, एवमुपास्यत्वेनेति यावत् । न पुनरणीयस्त्वमेवास्य स्वरूपमिति । व्योमवच्चायं व्यपदिश्यते - स्वाभाविकं महत्वं चात्रैव व्यपदिश्यते, 'ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः' इति। अत उपासनार्थमेवाल्पत्वव्यपदेशः ।**

**तथा हि - 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इति सर्वोत्पत्तिप्रलयकारणत्वेन सर्वस्याऽऽत्मतयाऽनुप्रवेशकृतजीवयितृत्वेन च सर्वात्मकं ब्रह्मोपासीतेत्युपासनं विधाय, 'अथ खलु क्रतुमयः पुरुषः ।**

---

यन्त्रारूढानि। 'तमेव शरणं गच्छे'ति हृदयवर्तिनो भजनीयत्वमुक्तम्। **शारीरमित्यादि**। उपासकस्य जीवत्वं तद्धृदयवर्तिन उपास्यस्य परब्रह्मत्वञ्च कण्ठोक्तमिति अत्रापि तथाविधं परमेव ब्रह्मेत्याशयः ॥

अर्भकशब्दोऽल्पपरः । ओकश्शब्दश्च स्थानपर इत्यभिप्रायेणार्भकौकस्त्वपदं व्याचष्टे - **अल्पेति** । सूत्रघटकतच्छब्दोऽल्पत्वविशिष्टवाच्यार्भकशब्दार्थैकदेशाल्पत्ववाचक इत्याशयेनाल्पत्वव्यपदेश इत्युक्तम्। उभयमनुक्रमेणोपपादयति - **एष म इति** । **अल्पायतनत्वव्यपदेशः** = अल्पत्वाक्षेपकः । अणीयानित्यत्र तु स्वरूपत एवाल्पत्वव्यपदेशः, अत एव स्वरूपेण व्यपदेशाच्चेत्युक्तम्। परमात्मन उक्तधर्मानुपपत्तिमाह - **सर्वगतमिति** । जीवेऽस्योपपत्तिमाह - **जीवस्य चेति** । 'आराग्रमात्रो ह्यवरो हि दृष्ट' इति श्रुतेरिति भावः । आरा = चर्मप्रभेदिनी ।

परिहरति - **नैतदिति** । चायृ दर्शने इति धातुमभिप्रेत्य द्रष्टव्यत्वेनेत्युक्तम् । दर्शनसमानाकारध्यानव्यावृत्तये उपास्यत्वेनेत्युक्तम्। उपासनार्थमेवाणीयस्त्वव्यपदेश इति भावः । स्वरूपस्यैवाणीयस्त्वव्यपदेशं निषेधति - **न पुनरिति** । व्योमवच्चेति सूत्रखण्डं व्याचष्टे - **व्योमवच्चायं व्यपदिश्यत** इति । व्योमवच्चायं निचाय्यः द्रष्टव्य इत्युक्ते हेत्वाकाङ्क्षा अस्ति। व्यपदिश्यत इत्यध्याहृत्य श्रुतिव्यपदेशस्य हेतूकरणे, लाघवाद्द्रष्टव्य इत्यसम्योज्यैव व्यपदिश्यत इत्यध्याहारेणार्थकल्पनं युक्तमित्यभिप्रेत्यैवं भाषितम् । फलितार्थमाह - **स्वाभाविकमिति** । ज्यय् वृद्धस्य चेति सूत्रेण वृद्धशब्दस्य ज्यादेशे ज्यायशब्दनिष्पत्तिः । वृद्धत्वञ्च परिमाणाधिक्यम् । न तु कालाधिक्यरूपम् । अणीयानिति ज्यायस्त्वप्रतिसम्बन्ध्यणीयस्त्वश्रवणात् ।

अयं भावः - अणीयस्त्वं ज्यायस्त्वमुभयमपि श्रुतम्। तत्र महद्वस्तुन उपाधिप्रयुक्ततयाऽणीयस्त्वोपपादनं सुघटम्। अणीयसस्त्वौपाधिकतयापि महत्वोपपादनं दुर्घटम् । अत उक्तोपपत्तयेऽविरोधेनार्थस्य कल्पनीयत्वे उपासनार्थतया महत्तरस्य वस्तुनोऽल्पत्वादिव्यपदेश इत्येवोपपादनीयम्: । वस्तुतः 'अणीयान् व्रीहेर्वा अन्तर्हृदये' इत्यणीयस्त्वस्योपाधिनिर्देशाकरणादप्यणीयस्त्वमौपाधिकमेव। न हि ज्यायानित्यनेन ज्यायस्त्वेनोक्तस्य वस्तुन उपाध्युक्तिपूर्वक मुक्तमणीयस्त्वं

**यथाक्रतुरस्मिँल्लोके पुरुषो भवति, तथेतः प्रेत्य भवति' इति यथोपासनं प्राप्यसिद्धिमभिधाय, 'स क्रतुं कुर्वीत' इति गुणविधानार्थमुपासनमनूद्य, 'मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः' इति जगदैश्वर्यविशिष्टस्य स्वरूपगुणांश्चोपादेयान् प्रतिपाद्य, 'एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा' इति उपासकस्य हृदयेऽणीयस्त्वेन तदात्मतयोपास्यस्य परमपुरुषस्योपासनार्थमवस्थानमुक्त्वा, 'एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षात् ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः सर्वकर्मा सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः' इति अन्तर्हृदयेऽवस्थितस्योपास्यमानस्य प्राप्याकारं निर्दिश्य, 'एष म अत्माऽन्तर्हृदये एतद्ब्रह्म' इति एवम्भूतं परं ब्रह्म परमकारुण्येनास्मदुज्जिजीवयिषयाऽस्मद्धृदये सन्निहितमितीदमनुसन्धानं विधाय, 'एतमितः प्रेत्याभिसम्भवितास्मि' इति यथोपासनं प्राप्तिनिश्चयानुसन्धानञ्च विधाय, 'इति यस्य स्यादद्धा न विचिकित्साऽस्ति' इति एवंविधप्राप्यप्राप्तिनिश्चयोपेतस्योपासकस्य प्राप्तौ न संशयोऽस्तीत्युपसंहृतम् । अत उपासनार्थमर्भकौकस्त्वमणीयस्त्वञ्च ॥ ७ ॥**

## सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् १ । २ । ८ ॥

**जीवस्येव परस्यापि ब्रह्मणश्शरीरान्तर्वर्तित्वमभ्युपगतश्चेत्, तद्वदेव शरीरसम्बन्धप्रयुक्तसुखदुःखोपभोगप्राप्तिरिति चेत् - तन्न, हेतुवैशेष्यात् । न हि शरीरान्तर्वर्तित्वमेव सुखदुःखोपभोगहेतुः ; अपि तु पुण्यपापरूपकर्मपरवशत्वम् । तत्तु अपहतपाप्मनः परमात्मनो न सम्भवति । तथा च श्रुतिः,** (मुं. ३-१) **'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति' इति ॥ ८ ॥** इति सर्वत्रप्रसिद्ध्यधिकरणम् ॥ १ ॥

---

स्वाभाविकं भवितु मर्हति । न च पृथिव्या इत्यादि ज्यायस्त्वोपाधिश्रवणाज्ज्यायस्त्वमेवोपाधिकं किं न स्यादिति वाच्यम् । पृथिव्या ज्यायानित्युक्त्या पृथिव्यपेक्षयाप्यधिकपरिमाणप्रतीतेः पृथिव्यौपाधिकत्वकल्पनासम्भवात् । उपाध्यपेक्षवस्तुनः तदुपाधिकत्वं तु युक्तम् ।

अधिकपरिमाणस्य तदुपाधिकत्वं नासम्भवीति । अथोक्तार्थोपपादनाय शाण्डिल्यविद्यां शिष्य-जनानुजृघृक्षया संगृह्णाति - **तथा हीति** । सर्वोत्पत्तीत्यादिना स्वत एव जीवविलक्षणत्वसिद्धिरिति सूचितम् । 'यथोपासनं प्राप्यसिद्धिमि'त्यनेन प्रामुरूपासकस्य प्राप्यत्वं निषिध्दम् । उपासनमनूद्येत्यादिना एकवाक्यत्वं सूचितम् । जगदैश्वर्य-विशिष्टस्येति तज्जलानित्यर्थानुवादः । स्वरूपगुणानित्यनेन प्रकृतिपुरुषद्वारकगुणत्वमुक्तम् । उपासकस्यहृदयमित्यनेनो-पासनस्थानमुक्तम् । हृदयेऽवस्थितस्योपास्यमानस्येत्येनेन सौलभ्यमुक्तम् । प्रत्याकारमित्यनेन मनोमयत्वादीनां प्राप्यत्व-मुक्तम् । पूर्वत्रोपादेयानित्यनेनोपास्यत्वं । सूत्रार्थमुपसंहरति - **अत इति** ।

शरीरान्तर्वर्तित्वं = हृदयवर्तित्वम् । सुखदुःखोपभोगेत्यनेन सम्भोगशब्दो विवृतः । अत्र सुखग्रहणं सांसरिकसुखस्य दुःखोदर्कत्वदुःखमिश्रत्वादिनाऽपुरुषार्थत्वमुपजीव्य । विशेष एव वैशेष्यम् । हेतुविशेषमुपपादयति - **न हीति** । अपहत-पाप्मन इति हेतुगर्भम् । अथ भगवतः कर्मजन्यफलाननुभवे जीवस्य तदनुभवे च प्रमाणमाह - **तथेति** । 'द्वा सुपणा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति' इति श्रुतिः । पर्णशब्देन ज्ञानकर्मणी उच्येते । युक्तशब्दः कल्याणगुणपरः । वृक्षशब्दः शरीरपरः । पिप्पलं = कर्मजन्यं फलम् । जीवपरयोश्शरीरान्तर्वर्तित्वे विशिष्टेऽपि जीवस्यैव फलसम्बन्धः, न तु ब्रह्मण इति भावः । इति सर्वत्र प्रसिध्यधिकरणम् ॥

१३. अत्त्रधिकरणम् ॥ २ ॥ (कठ.१-२-२५)

**यदि परमात्मा न भोक्ता, एवं तर्हि सर्वत्र भोक्तृतया प्रतीयमानो जीव एव स्यादित्यशङ्क्याऽऽह -**

**अत्ता चराचरग्रहणात् । १ । २ । ९ ॥**

**कठवल्लीष्वाम्नायते, 'यस्य ब्रह्म च क्षत्रञ्च उभे भवत ओदनः । मृत्युर्यस्योपसेचनम्, क इत्था वेद यत्र स' इति । अत्रौदनोपसेचनसूचितोऽत्ता किं जीव एव, उत परमात्मेति सन्दिह्यते । किं युक्तम् ? जीव इति । कुतः ? भोक्तृत्वस्य कर्मनिमित्तत्वात्, जीवस्यैव तत्सम्भवात् ॥**

**अत्रोच्यते - अत्ता चराचरग्रहणात् । अत्ता परमात्मैव । कुतः? चराचरग्रहणात् । चराचरस्य कृत्स्नस्यात्तृत्वं हि तस्यैव सम्भवति । न चेदं कर्मनिमित्तं भोक्तृत्वम् ; अपि तु जगज्जन्मस्थितिलयहेतुभूतस्य परस्य ब्रह्मणो विष्णोस्संहर्तृत्वम्;** (कठ.१-३-९) **'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इति अत्रैव**

अथाधिकरणसंगतिमाह - **यदीति** । 'सम्भोगप्राप्तिरिति चेन्ने'ति सूत्रे सर्वान्तर्यामित्वेनावस्थितस्यापि भगवतो भोक्तृत्वं नास्तीत्युक्तं, तथा सति 'यस्य ब्रह्म चे'त्यत्र भोक्तृतया प्रतिपन्नः परमपुरुषो न स्यादिति पूर्वपक्षोत्थोनेन सङ्गतिरिति भावः । पूर्वं हृदयरूपाल्पस्थानवृत्तित्वेन परमपुरुषस्य चिन्त्यत्वमुक्तम् । अत्र तु 'गुहां प्रविष्टा'विति हृदयगुहान्तर्वृत्तित्वेन परमपुरुषस्य चिन्त्यत्वमुच्यते इति सङ्गतिरपि बोध्या । भोक्तृत्वस्य श्रुतौ कण्ठोक्तत्वाभावाद्भोक्तृतया प्रतीयमान इत्युक्तम् । ओदनोपसेचनसूचितोऽत्ता इति हि भाषिष्यते । श्रुतौ यस्येति षष्ठ्यर्थस्सम्बन्धः । स चौदनोपसेचनसामर्थ्याददनीयात्तृभावरूपविशेषे पर्यवस्यति । पूर्वपक्षे चरमात्रबोधकत्वम् । पूवमीमांसकैरित्थं वाक्यलक्षणाया अभ्युपगतत्वात् ब्रह्म च क्षत्रं च उभे इति वाक्यस्य लक्षणया कृत्स्नजगद्बोधकत्वं सिद्धान्ते । यत्र सः = यस्मिन्प्रकारे स्थितः । यादृशप्रकारविशिष्टः । क इत्था वेद = तं प्रकारं को वेदेत्यर्थः ।

श्रुतावत्तृत्वलाभप्रकारमाह - **अत्रेति** । **भोक्तृत्वस्येति** भोक्तृत्वं हि सुखदुःखानुभवः स चकर्माधीनः । अतो 'अपहतपाप्मा', 'न कर्मणा वर्धते नो कनीयान्' 'अनश्नन्नन्य' इति ब्रह्मणः कर्मफलभोक्तृत्वनिषेधात् जीवस्य च तादृशभोक्तृत्वसम्भवात्, ओदनोपसेचनशब्दसामर्थ्यावगतभोक्तृत्वाश्रयो यच्छब्दार्थो जीव एवेति भावः । ननु ब्रह्मक्षत्रशब्दवाच्यदेहिनां कथं जीवभोक्तृत्वम्? उच्यते । स्त्रीपुंरूपाणां तेषां परस्परानुभवितृत्वसम्भवेन भोक्तृभोग्यभावसम्भवात् । अत एव मृत्योरुपसेचनत्ववादोपि । जीवानां नित्यत्वेन मृत्युवश्यत्वाभावाज्जीवस्याबाधकः । मृत्युर्विधेय इत्यभिप्रायेण कथञ्चित्सङ्गमनीय इति । स्त्रीपुरुषेण चेतनानां भोग्यत्वसम्भवेपि सर्वाचेतनानां भोग्यत्वासम्भवात्केनाप्यभोग्यस्याचेतनस्य सम्भवाच्च पूर्वपक्षे चरमात्रग्रहणम् । अत एव 'चराचरग्रहणात्' इति सिद्धान्तहेतुरुक्तः । अन्यथा पूर्वपक्षसाधारण्यापातेनान्यस्यासाधारणस्य हेतोरेव वक्तव्यत्वापातादिति बोध्यम् ॥

सिद्धान्तमाह - **अत्रोच्यत** इति । पूर्वपक्षे यस्येतिवाक्ये चरमात्रग्रहणं सिद्धान्ते तु कृत्स्नस्य चराचरस्य ग्रहणमिति द्योतनाय चराचर ग्रहणादिति सूत्रं कृतमिति सूचयन्नर्थमाह - **चरेति** । नन्वस्तु कतिपयविषयकत्वं सर्वविषयकत्वं वा । तावता कथं परमात्मत्वसिद्धिः । कर्मनिमित्तभोक्तृत्वस्य तस्मिन्नसम्भवादित्यत्राह - **न चेति** । अत्तृत्वस्वरूपं शिक्षयति - **अपि त्विति** । नन्वत्रोक्तस्यात्तृत्वस्य विष्णुकर्तृकत्वस्य संहर्तृत्वरूपत्वस्य च कथमवगम इत्यत्राह - **सोऽध्वन इति** । प्रकरणे 'विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदमि'ति परमात्मवाचिविष्णुपदश्रवणादुपासकस्य विष्णुपदप्राप्तिबोधनाद्यथाक्रतुन्यायेनोपास्यतयोक्तः अत्ता विष्णुरेवेति, अतृत्त्वस्य विष्णुनिष्ठत्वं

**दर्शनात्। तथा च, 'मृत्युर्यस्योपसेचनम्' इति वचनात्, 'ब्रह्म च क्षत्रञ्च' इति कृत्स्नं चराचरं जगदिहादनीयौदनत्वेन गृह्यते। उपसेचनं हि नाम स्वयमद्यमानं सत् अन्यस्याप्यदनहेतुः। अत उपसेचनत्वेन मृत्योरप्यद्यमानत्वात्तदुपसिच्यमानस्य कृत्स्नस्य ब्रह्मक्षत्रपूर्वकस्य जगतश्चराचरस्यादनमत्र विवक्षितमिति गम्यते। ईदृशं चादनमुपसंहार एव। तस्मादीदृशं जगदुपसंहारित्वरूपं भोक्तृत्वं परमात्मन एव ॥ ९ ॥**

## प्रकरणाच्च १ । २ । १० ॥

**प्रकरणश्चेदं परस्यैव ब्रह्मणः -** (कठ.१-२-२२) **'महान्तं विभुमात्मानं मत्वा धीरो न शोचति',** (कठ.१-२-२३) **'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते, तेन लभ्यः ; तस्यैष आत्मा**

---

स्वीकर्तव्यं ततश्चात्तृत्त्वस्य विष्णुकर्तृत्वे निश्चिते भोक्तृत्वस्य तस्य ब्रह्मणि बाधान्मृत्युर्यस्योपसेचनमिति स्वयमद्यमानस्य मृत्योरुपसेचनत्वश्रवणाच्च संहर्तृत्वरूपमेव तदिति निश्चीयत इति भावः। **तथा** चेत्यत्र चकारः **वचनादि**त्यत्र सम्बध्यते। दर्शनात् वचनाच्च संहर्तृत्वमित्यन्वयः। ननु उक्तरीत्या अत्तृत्त्वस्य संहर्तृत्वरूपत्वे तस्य ब्रह्मनिष्ठत्वे च ब्रह्म च क्षत्रं चेति कतिपयपदार्थमात्रप्रदर्शनं कथं घटते ब्रह्मणः सर्वसंहर्तृत्वात् इत्यात्राह **ब्रह्म च क्षत्रं चेति**। गृह्यत इति। अत्तृत्वस्य ब्रह्मनिष्ठत्वावगमात् 'मृत्युर्यस्योपसेचनमि'त्युक्ते चेति भावः। मृत्योरुक्तमुपसेचनत्वं मृत्युवश्यत्वाभावरूपमिति वर्णनं क्लिष्टमिति सूचनाय उपसेचनशब्दार्थमाह — **उपसेचनं हीति**।

ननु भगवत्कर्तृककृत्स्नजगत्संहारे मृत्योरपेक्षाभावेन मृत्योरुपसेचनत्ववादः कथमित्यत्र तदुपपादयन् कृत्स्न चराचरादनमेवात्र विवक्षितमिति निगमयति **अत** इति। मृत्योरप्यद्यमानत्वादित्यनेन कृत्स्न चराचरविवक्षायां हेतुरुक्तः। ब्रह्मक्षत्रपूर्वकस्य जगत इत्यनेन व्यष्टिसंहारस्य मृत्युद्वारकत्वात्तदुपसेचनत्ववादो योयुज्यत इति सूचतिम्। नन्वस्तु कृत्स्नचराचरस्यादनमथापि तस्य कथं संहाररूपत्वमित्यत्राह — **ईदृशमिति**। **ईदृशं** = विष्णुकर्तृकं कृत्स्नचराचरकर्मकम्। सूत्रार्थमुपसंहरति — **तस्मादिति**। 'तद्विष्णोः परमं पद'मित्युपासकस्य विष्णुपदप्राप्तिबोधनेन तत्क्रतुन्यायेनोपास्यभूतविष्णोः प्रकृतत्वेनात्तृत्वस्य विष्णुनिष्ठत्वप्रतीतेः कर्मकृतभोक्तृत्वरूपस्य ब्रह्मणि बाधेन 'मृत्युर्यस्योपसेचनमि'ति श्रवणेन चात्तृत्वस्य संहर्तृत्वरूपत्वावगागात्तत एव 'ब्रह्म च क्षत्रं चे'त्यनेन कृत्स्नचराचरप्रतीतेः कृत्स्नचराचरात्तृत्त्वस्य जीवे बाधाच्च निखिलसंहर्ता अत्तैवात्रप्रतिपाद्यत इति भावः।

ननु 'मृत्युर्यस्योपसेचनमि'ति निर्देशस्य मृत्युवश्यत्वाभावपरत्वे इवात्तार्थेपि गौणत्वमेव स्वीकर्तव्यम्। उपसेचनशब्दस्य व्यक्तिविशेष एव प्रसिद्ध्या तत्सदृशार्थकत्वावश्यकत्वादिति चेदुच्यते। यद्यपि पक्षद्वयेप्ययं निर्देश औपचारिक एव, अथाप्यसाधारणाकारेणौपचारिकनिर्देशो युक्तः। साधारणाकारेण तथा निर्देशस्त्वयुक्तः। न ह्यग्निर्माणवक इत्यादौ येन केनापि द्रव्यत्वद्यकारेणारोपो दृश्यते। प्रकृते च मृत्युवश्यत्वाभावाभिप्रायकत्वे मृत्योरबाधकत्वमात्रलाभेन तस्य च लोष्टादिसाधारणत्वेन निर्देशासाङ्गत्यं दुर्वारम्। अस्माकं तु व्यक्तिविशेषगताद्यमानत्वादनहेतुत्वयोः मृत्य्वसाधारणत्वेन नासाङ्गत्यमिति। जगदुपसंहारित्वरूपं = कृत्स्नजगत्प्रतियोगिकध्वंसानुकूलकृतिमत्वरूपमित्यर्थः।

उत्तरसूत्रार्थमाह — **प्रकरणश्चेति**। अत्र महत्वविभुत्वादीनां जीवेऽसम्भवेन तस्य परमात्मपरत्वावश्यकत्वेन तत्प्रकरणोक्तः अत्तापि परमात्मैवेति भावः। ब्रह्मपरत्वदार्ढ्याय - **नायमात्मे**त्याद्युपात्तम्। प्रीतिरूपापन्नध्यानलभ्यत्वं हि परमात्मन एव, श्रुत्यन्तरसंवादादुपबृंहणस्वारस्याच्च। अतोऽत्रत्यात्मशब्दः परमात्मपरएवेति भावः। नन्वस्तु उक्तश्रुतेः परमात्मपरत्वम्, अथापि 'यस्य ब्रह्म चे'त्यादेः जीवपरत्वं किं न स्यादित्यत्र एकप्रकरणस्थत्वज्ञापनाय पूर्वप्रस्तुतार्थप्रत्यभि-

**विवृणुते तनूं स्वाम्' इति हि प्रकृतम्। 'क इत्था वेद यत्र सः' इत्यपि हि तत्प्रसादादृते तस्य दुरवबोधत्वमेव पूर्वप्रस्तुतं प्रत्यभिज्ञायते ॥ १० ॥**

**अथ स्यात् - नायं ब्रह्मक्षत्रौदनसूचितः पुरुषोऽपहतपाप्मा परमात्मा ; अनन्तरम्,** (कठ.१-३-१) **'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये। छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः' इति कर्मफलभोक्तुरेव सद्वितीयस्याभिधानात्। द्वितीयश्च प्राणः, बुद्धिर्वा स्यात्। ऋतपानं हि कर्मफलभोग एव। स च परमात्मनो न सम्भवति ; बुद्धिप्राणयोस्तु भोक्तुर्जीवस्योपकरणभूतयोर्यथाकथञ्चित्पानेऽन्वयः सम्भवतीति तयोरन्यतरेण सद्वितीयो जीव एव प्रतिपाद्यते। तदेकप्रकरणत्वात्पूर्वप्रस्तुतोऽत्ताऽपि स एव भवितुमर्हतीति ॥**

---

ज्ञापनेन परमात्मपरत्वज्ञापनाय चाह — **क इत्थेति**। विवृणुते तनूं स्वाम्। 'नाविरतो दुश्चरितान्नाशान्तो नासमाहितः। नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्'। 'यस्य ब्रह्म च क्षत्रमि'ति हि श्रुत्यानुपूर्वी। अत एक प्रकरणस्थत्वं सुव्यक्तम्। 'एवं यमेवैष' इत्युक्तस्य भगवत्प्रसादविरहप्रयुक्तभगवद्दुरवबोधत्वस्य 'क इत्था वेद यत्र स' इत्यनेन प्रत्यभिज्ञानादपि 'नायमात्मे'त्यस्येवास्यापि परमपुरुषपरत्वं निश्चेतुं शक्यमिति भावः। नन्वोदनोपसेचनसूचितात्तृत्वरूपलिङ्गेनोत्थितस्य पूर्वपक्षस्य कथं दुर्बलेन प्रकरणेन समाधानं युक्तम्? मैवं, पूर्वसूत्रोक्तहेतुसहकृतस्य प्रकरणस्य प्रबलत्वात्। अत एव सूत्रे चकारोपादनम्। यद्वाऽयमभ्युच्चायहेतुः। प्रधानहेतुस्तु पूर्वोक्तः। वस्तुतो लिङ्गप्रकरणयोर्विरोधे हि प्रकरणस्य दुर्बलत्वम्। अत्र तु विरोध एव नास्ति। विष्णुकर्तृकस्य कृत्स्नचराचरकर्मकस्यात्तृत्वस्य संहर्तृत्वरूपत्वेन प्रकरणसिद्धपरमात्मन्यन्वयात्।

उत्तरसूत्रमवतारयति — **अथेति**। **सूचितः** = अत्तृत्वेन सूचितः। वक्ष्यमाणकर्मफलभोक्तृत्वाभावदृढीकरणाय 'अपहतपाप्मे'त्युक्तम्। कुत इत्यत्र प्रकरणविच्छेदमाह — **अनन्तरमिति**। अयं भावः - 'यस्य ब्रह्म चे'त्यादिवाक्यापेक्षया 'महान्तं विभु'मित्यादेर्व्यवहितत्वात्प्रकरणविच्छेदः। 'ऋतं पिबन्ता'वित्यस्याव्यवहितत्वान्न प्रकरणविच्छदः। ततश्च ऋतपानस्य परामात्मन्यसम्भवात्तस्य वाक्यस्य जीवपरत्वमेवेति तत्प्रकरणबोधितस्यात्तृत्वेन सूचितस्यापि जीव-परत्वमेवेति। अनन्तरम् 'अभिधानादि'त्यनेन 'प्रकरणाच्चे'ति सिद्धान्त्यभिमतप्रकरणस्यासिद्धिस्सूचिता। छायातपशब्दौ ज्ञाज्ञपरौ। सद्वितीयस्येत्यनेन द्वयोस्समप्राधान्यं नास्तीति सूचितम्। अप्रधानं द्वितीयपदार्थं व्यनक्ति - **द्वितीयश्चेति**। ननु परमात्मैव द्वितीयपदार्थः किं न स्यादित्यत्राह - **ऋतपानं हीति**।

ननु कर्मफलभोगः परमात्मन इव बुद्धिप्राणयोरपि न सम्भवत्येव तयोरचेतनत्वादित्यत्राह - **बुद्धिप्राणयोस्त्विति**। उपकरणभूतयोरिति हेतुगर्भम्। **यथाकथञ्चित्** = उपकरणत्वेन। अयं त्विह भावः - द्वा सुपर्णा इति श्रुतिव्याख्यानभूतायां पैङ्गिश्रुतौ **तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वम् अनश्नन्नन्योऽभिचाकशीतीति** ज्ञ इत्युक्तम्। तत्र सत्त्वशब्दो 'द्रव्यासु-व्यवसायेषु सत्त्व'मिति कोशोद्बुद्धिप्राणान्यतरपरः। 'तयोरन्यः पिप्पलं स्वाद्वत्ती'त्यनेनोपकरणभूतबुद्धिप्राणान्यतरस्य कर्मफलभोक्तृत्वमुक्तम्। एवं पूर्ववाक्यस्य बुद्धिप्राणान्यतरपरत्वेन, 'अनश्नन्नन्य' इति वाक्यस्य 'सः' इति विभजनानुसारेण च जीवपरत्वमभ्युपेत्यम्। ततश्च 'द्वा सुपर्णा' इति वाक्ये जीवस्य बुद्धि प्राणान्यतरस्य चैकशरीरवृत्तित्वबोधनादत्रापि 'गुहां प्रविष्टा'विति हृदयगुहावर्तित्वेनोक्तो जीवः बुद्धिप्राणान्यतरश्चेति निश्चेतव्यम्। बुद्धिप्राणयोः कर्मफलभोक्तृत्वकथनमपि 'तयोरन्यःपिप्फलं स्वाद्वत्ती'ति श्रुतिप्रसिद्ध्योपकरणत्वाभिप्रायेणेत्यपि सुवचमिति।

एवं ऋतं पिबन्ताविति निर्देशस्वारस्येन कर्मफलभोक्तुर्जीवस्य प्रतिपत्तिस्सम्प्रतिपन्ना। द्वितीयः क इत्यत्रैव

**तत्रोच्यते -**

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् १। २ । ११ ।

**न प्राणजीवौ बुद्धिजीवौ वा गुहां प्रविष्टौ ऋतं पिबन्तावित्युच्येते ; अपि तु जीवपरमात्मानौ हि तथा व्यपदिश्येते। कुतः? तद्दर्शनात्। अस्मिन् प्रकरणे जीवपरयोरेव गुहाप्रवेशव्यपदेशो दृश्यते। परमात्मनस्तावत्,** (कठ. १-२-१२), **'तं दुर्दर्शं गुढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति' इति। जीवस्यापि,** (कठ. ४-७) **'या प्राणेन सम्भवत्यदितिर्देवतामयी। गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत' इति। कर्मफलानि अत्तीत्यदितिर्जीव उच्यते। प्राणेन सम्भवति - प्राणेन सह वर्तते। देवतामयी इन्द्रियाधीनभोगा। गुहां प्रविश्य तिष्ठन्ती - हृदयपुण्डरीकोदरवर्तिनी। भूतेभिर्व्यजायत**

---

विप्रतिपत्तिः। सर्वगतस्य परस्य ब्रह्मणो गुहावच्छिन्नत्वं सुकृतसाध्यलोकवर्तित्वञ्च स्वरसत एव न सम्भवति। अप्रकाश-प्रकाशवाचकछायातपशब्दपर्यालोचने चेतनाचेतनस्यैव स्वरसतो ग्रहणं प्रतीयते। अत एतच्छ्रुतिपर्यालोचनेपि परमात्म-परत्वे सुकृतस्य लोके इयाद्यस्वारस्यादचेतनबुद्धि-अन्तःकरणान्यतरपरत्वे 'छायातपा'विति शब्दस्वारस्याच्च तदन्यतर एवात्र प्रतिपाद्यत इत्यङ्गीकर्तव्यम्। एवं परमात्मपरत्वे जीवापेक्षया तस्य प्रधानत्वात्प्रथमतोऽनेकपदैस्स्वरसतः प्रतिपन्न-जीवप्राधान्यं भज्येत। अतोपि यथा स्वमतः प्रतिपन्नं जीवप्राधान्यं न व्याहतं भवति तथैव द्वितीयस्य वक्तव्यत्वाद्बुद्धि-प्राणान्यतर एव द्वितीय इति निश्चीयत इति। एतेन परस्य ऋतपानप्रयोजकत्वविवक्षया 'ऋतं पिबन्ता'विति निर्देश इत्यपि निरस्तम्। पक्षद्वयेपि गौणत्वस्य तुल्यत्वे बुद्धिप्राणान्यतरपरत्वेऽधिकयुक्तेरुक्तत्वात्॥

सिद्धान्तसूत्रार्थमाह - **न प्राणजीवाविति**। 'ऋतं बिबन्ता'विति सूत्रे निर्देशावश्यकत्वेपि 'गुहां प्रविष्टा'विति निर्देशः किमर्थ इति शङ्कां परिहरन् सूत्रोक्तं 'तद्दर्शना'दिति हेत्वंशमुपपादयति - **अस्मिन् प्रकरण** इति। अयं भावः - 'आत्मा गुहायां निहितः', 'यो वेद निहितं गुहायां', 'गुहाहितं गह्वरेष्ठं विद्यूय' 'कविरेतदनुतिष्ठेत् गुहाशयं' 'पूः प्राणिनः सर्व एव गुहाशयस्य' इति परमात्मनो गुहानुप्रवेशव्यपदेशप्रसिद्धिप्राचुर्यात्। 'तं दुर्दर्शम्' इत्युक्तगुहानुप्रवेशस्य परमात्मन्येव सम्भवः। न तु बुद्धिप्राणयोः। अतो 'गुहां प्रविष्टा'वित्युक्तगुहानुप्रवेशस्य परमात्मन्येव सम्भव इति 'ऋतं पिबन्ता'वित्यत्रोक्तौ जीवरमात्मानावेव। न च परस्य सुकृतसाध्यलोकवर्तित्वासम्भवः। सर्वव्याप्तस्य सुकृतसाध्यजीवलोके वर्तमानत्व-सम्भवात्। 'छायातपा'विति निर्देशोपि 'ज्ञाज्ञा'विति जीवपरात्मनिर्देशवज्जीवस्यासत्त्वविवक्षया परमात्मनः सत्त्वविवक्षया चोपपन्नः। अतो गुहाप्रवेशश्रुतिप्रसिद्धिस्वारस्याद्बुद्धिप्राणयोस्तथाप्रसिद्ध्यभावाच्च न तदन्यतरस्यात्र प्रतीतिर्युक्तेति सूचनायैव 'गुहां प्रविष्टा'विति सूत्रितम्। **दुर्दर्शं** = द्रष्टुमशक्यम्। तिरोधायककर्मणा तिरोहितत्वाद्गूढम्। **गुहाहितं** = ह्रदयवर्तिनम्। **गह्वेष्टम्** = आत्मान्तर्यामिणम्। परमव्योमनिलयमिति वार्थः। **अध्यात्मयोगः** = परमात्मोपासना-ङ्गभूतजीवात्मोपासनम्।

ननु बुद्धिप्राणयोरिव जीवस्यापि गुहाप्रवेशप्रसिद्ध्यभावेन 'ऋतं पिबन्ता'वित्यत्र जीवस्यापि प्रतीतिर्न स्यादित्यत्र तस्य गुहाप्रवेशप्रसिद्धिमाह - **जीवस्यापीति**। उदाहृतश्रुतौ जीववाचकशब्द एव न श्रूयते, तत्कथं जीवस्य गुहाप्रवेशोऽनया श्रुत्या बोध्य इत्यत्राह - **कर्मफलानीति**। यद्यपि **अदिति**शब्दो देवमातरि भूमौच रूढः, अथापि रूढ्यर्थस्य प्रकृतेऽसम्भवात् योगार्थः स्वीकृतः। सम्भवतीत्यत्र समित्युपसर्गः सहार्थक इत्यभिप्रायेण सहेत्युक्तम्। 'भू सत्ताया'मिति धात्वर्थमुपजीव्य वर्त इति व्याख्यातम्। देवताशब्द इन्द्रियपरः। इन्द्रियस्य जीवस्य च मयडर्थसम्बन्धः तदधीनभोगवत्वरूप इत्यभिप्रेत्य-

**- पृथिव्यादिभिर्भूतैस्सहिता देवादिरूपेण विविधा जायते । एवञ्च सति, 'ऋतं पिबन्तौ' इति व्यपदेशः 'छत्रिणो गच्छन्ति' इतिवत्प्रतिपत्तव्यः । यद्वा प्रयोज्यप्रयोजकरूपेण पाने कर्तृत्वं जीवपरयोरुपपद्यते ॥ ११ ॥**

## विशेषणाच्च १ । २ । १२ ।

**अस्मिन् प्रकरणे जीवपरमात्मानावेव उपास्यत्वोपासकत्वप्राप्यत्वप्राप्तृत्वविशिष्टौ सर्वत्र प्रतिपाद्येते । तथा हि -** (कठ. १-१-१८) **'ब्रह्मजज्ञं देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेति' इति । ब्रह्मजज्ञो जीवः ; ब्रह्मणो जातत्वात्, ज्ञत्वाच्च । तं देवमीड्यं विदित्वा - जीवात्मानमुपासकं ब्रह्मात्मकत्वेनावगम्येत्यर्थः । तथा,** (कठ.१-३-२) **'यस्सेतुरीजानानामक्षरं ब्रह्म यत्परम् । अभयं तितीर्षतां पारं नाचिकेतं शकेमहि(सि)' इत्युपास्यः परमात्मोच्यते । नाचिकेतम् - नाचिकेतस्य कर्मणः प्राप्यमित्यर्थः ।** (कठ.१-२-२)

---

इन्द्रियाधीनभोगेत्युक्तम् । 'भूतेभि'रिति छान्दसः प्रयोगः । 'सहार्थे तृतीये'त्याशयेन **सहितेति** भाषितम् । **देवादिरूपेणेति** वैविध्योपपादकम् । ननु ऋतं पिबन्ताविति प्रथमश्रुतऋतपानं कथं परमात्मनि समन्वेति । अतः प्रथमश्रुतऋतपानं कर्तृत्वान्वयाय प्राणजीवयोर्बुद्धिजीवयोरेव वा प्रतिपत्यवश्यम्भावेन चरमश्रुतगुहानुप्रवेशादीनामन्यथानयनमेव युक्तमित्यत्राह - **एवञ्च सतीति** । लाक्षणिकत्वदोषपरिहाराय मुख्यं निर्वाहप्रकारमाह - **यद्वेति** । अयं भावः - भवतामपि ऋतपानकर्तृत्वं कथञ्चिदेव बुद्धिप्राणयोरुपपादनीयम् । तत्र प्रकरणबलप्राप्तपरमात्मनः प्रयोजककर्तृत्वविवक्षयापि उपपादनपरित्यागे किं मानम् । सुकृतसाध्यलोकवृत्तित्वादिकं त्वन्यथासिद्धमित्युपपादितम् । जीवप्राधान्यभङ्गोपि न सम्भवति, जीवस्यैव स्वतन्त्रकर्तृत्वात् । अतः कथञ्चिदुपपादनस्येष्टत्वे यथोपपादने स्वारस्यं तथैवोपपादनीयम् । तत्र प्रयोजककर्तृत्वेन परमात्मनि ऋतपानकतृत्वोक्तौ 'ऋतं पिवन्ता'वित्यत्रोक्तं कर्तृत्वं न परित्यक्तम् । भवतान्तु बुद्धिप्राणयोरुपकरणत्वात् अन्यतरस्मिन् ऋतपानकर्तृत्वार्थस्य स्वरसतः प्राप्तस्य परित्याग एव । न च 'द्वा सुपर्णा' इति श्रुतिव्याख्यानभूतपैङ्गिश्रुत्यनुसारेण 'ऋतं पिबन्ता'वित्युक्तयोः प्राणजीवपरत्वं बुद्धिजीवपरत्वं वा युक्तमिति शङ्क्यम् । 'द्वा सुपर्णा' इति श्रुतेरेव तत्परत्वाभावात् । तद्व्यारव्यानभूतपैङ्गिश्रुतिघटकसत्त्वशब्दो हि 'सत्त्वमस्त्रीतु जन्तुषु' इति कोशानुसारेण जन्तुवाचक इति जीवपर एव । अन्यथा, 'अनश्नन्नि'त्यस्य जीवपरत्वावश्यकत्वेन 'ऋतं पिबन्ता'विति कर्मफलभोक्तुर्जीवस्यानदनकथनानुपपत्तेः । अतः 'सत्त्वशब्दस्य जीवपरत्वेन' इत्युक्तस्य परमात्मपरत्वमिति 'द्वा सुपर्णा' इति श्रुतेर्जीवपरमात्मपरत्वमेवेति तदनुसारेणात्रापि जीवपरमात्मानाववोच्येते ।

उत्तरसूत्रार्थमाह - **अस्मिन्प्रकरण** इति । अत्र 'विशेषणाच्चे'ति सामान्यतो निर्दिष्टास्यार्थम् उपास्यत्वोपासकत्वप्राप्यत्वप्राप्तृत्वरूपविशेषणे पर्यवसानेन कथनम् इतरविशेषणानामप्येतदर्भावनिबन्धनम् । प्रतिपादनमुपपादयति - **तथा हीति** । श्रुतिघटकब्रह्मजज्ञशब्दार्थमाह - **ब्रह्मजज्ञो जीव** इति । जीववाचकत्वमुपपादयति - **ब्रह्मण** इति । **तमिति** ब्रह्मजज्ञमिति द्वितीयान्तमदमनुसृत्य । ननु जीवस्योपास्यदेवाभिन्नत्वं कथमित्यत्राह - **देवमीड्यं विदित्वेति** । 'उपासक'मित्यनेन 'विशेषणाच्चे'ति सूत्रोक्तोपासकत्वरूपविशेषणं दर्शितम् । 'ईड्य'मित्यनेनोपास्यत्वं, 'निचाय्य' इत्यनेन दर्शनसमानाकारोपासनमुक्तम् । अथ प्राप्यत्वप्रापकत्वबोधिकां श्रुतिमुदाहरति - **तथेति** । **ईजानानां** = याजमानानाम् । **सेतुः** = धारकत्वेन कूलान्तरप्रापकः । **अक्षरं** = निर्विकारम् । **तितीर्षतां** = संसाराब्धिं तरितुमिच्छताम् । **अभयं पारं** = भयरहितं कूलम् । **शकेमहि** । उपासितुं प्राप्तुं वेति शेषः । अत्र नाचिकेतस्य प्राप्यस्य ब्रह्मण उपासनबोधनात्परमात्मन उपास्यत्वमर्थसिद्धमित्यभिप्रेत्य **इत्युपास्यः परमात्मोच्यत** इति भाषितम् । अस्फुटं नाचिकेतशब्दं व्याचष्टे - **नाचिकेतमिति** । नाचिकेतशब्दो नाचिकेतस्सम्बन्धिकर्मपरोपि प्रकृते तज्जन्यफलभूतप्राप्यपर इति भावः । अत्र नाचिकेतमित्यनेन ब्रह्मणः

**'आत्मानं रथिनं विद्धि शरीरं रथमेव च' इत्यादिनोपासको जीव उच्यते । तथा,** (कठ.१-३-९) **विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इति प्राप्यप्राप्तारावभिधीयेते जीवपरमात्मानौ । इहापि,** (कठ.१-३-१) **'छायातपौ' इत्यज्ञत्वसर्वज्ञत्वाभ्यां तावेव विशिष्य व्यपदिश्येते ॥**

**अथ स्यात् -** (कठ.१-१-२०) **। 'येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके' इति जीवस्वरूपयाथात्म्यप्रश्नोपक्रमत्वात्सर्वमिदं प्रकरणं जीवपरमिति प्रतीयत इति । नैतदेवम् । न हि जीवस्य देहातिरिक्तस्यास्तित्वनास्तित्वशङ्कयाऽयं प्रश्नः ; तथा सति पूर्ववरद्वयवरणानुपपत्तेः । तथा हि पितुस्सर्ववेदसदक्षिणक्रतुसमाप्तिवेलायां दीयमानदक्षिणावैगुण्येन क्रतुवैगुण्यं मन्यमानेन कुमारेण नचिकेतसा आस्तिकाग्रेसरेण स्वात्मदानेनापि पितुः क्रतुसाद्गुण्यमिच्छता,** (कठ.१-२-४) **'कस्मै मां दास्यसि' इत्यसकृत् पितरं पृष्टवता, स्वनिर्बन्धरुष्टपितृवचनान्मृत्युसदनं प्रविष्टेन, स्वसदनात्प्रोषुषि यमे तददर्शनात्तत्र तिस्रो रात्रीरुपोषुषा, स्वोपवासभीततत्प्रतिविधानप्रवृत्तमृत्युप्रदत्ते वरत्रये आस्तिक्यातिरेकात्प्रथमेन वरेण स्वात्मानं प्रति पितुः प्रसादो वृतः । एतच्च सर्वं देहातिरिक्तमात्मानमजानतो नोपपद्यते । द्वितीयेन च वरेणोत्तीर्णदेहात्मानुभाव्यफलसाधनभूताऽग्निविद्या वृता । तदपि देहातिरिक्तात्मानभिज्ञस्य न सम्भवति ।**

---

प्राप्यत्वं तीतीर्षतामित्यनेन जीवस्य प्राप्तृत्वञ्चोक्तम् । एवञ्चैकत्रासम्भावितानां प्राप्यत्वादिविशेषणानामत्र कण्ठोक्त्या प्राप्यत्वोपास्यत्वयोर्ब्रह्मणि प्राप्तृत्वोपासकत्वयो र्जीवे चान्यत्र प्रसिद्धेः अस्मिन्प्रकरणे जीवपरमात्मानावेवोच्येते । न तु बुद्धिजीवौ प्राणजीवौ वा । उपासकजीवबोधकं वाक्यान्तरमाह - **आत्मानमिति** । अथ साक्षात्प्रात्यत्वप्राप्तृत्वबोधकं श्रुतिवाक्यमाह - **तथेति** । 'विशेषणाच्चे'ति सूत्रस्य स्ववाक्योपात्तविशेषणपरतयापि व्याख्यनं युक्तमित्याशयवानाह - **इहापीति** । अज्ञत्वसर्वज्ञत्वाभ्यामित्यनेन 'ज्ञाज्ञा'विति श्रुत्यैकार्थ्याच्छायातपशब्दस्य जीवपरात्मवाचकत्वमुपेत्यमिति सूचितम् । **विशिष्य व्यपदिश्येते** इति । विशिंष्यतेऽनेनेति हि विशेषणमिति भावः ॥

अथ सर्वस्यापि प्रकरणस्य प्रश्नवाक्यपर्यालोचनया जीवस्वरूपयाथात्म्योपदेशपरत्वमिति 'यस्य ब्रह्म चे'त्यादिवाक्यमपि जीवस्वरूपोपदेशपरमेवेति शङ्कते - **अथ स्यादिति** । **विचिकित्सा** - संशयः, उपरि संशयप्रकारप्रदर्शनात् । अयमाशयः - प्रत्यक्षदृष्टदेहविनाशेनाऽऽत्माऽस्तीति केचित्, नास्तीति केचिद्वदन्ति । तत्र किं तत्त्वमिति प्रश्नकरणात् देहातिरिक्तात्माऽस्ति वा न वेत्येव संशय इति प्रतीयते । अतश्च प्रश्नस्य जीवस्वरूपयाथात्म्यविषयकत्वात्तदनुरोधेनैव समाधानस्यावश्यकत्वात् 'यस्य ब्रह्म चे'त्यादिवाक्यमपि जीवपरमेवेति । परिहरति - **नैतदिति** । उपेयस्वरूपोपायस्वरूपोपेतृस्वरूपाणां त्रयाणामप्यत्र प्रश्नः क्रियत इति 'त्रयाणामेव चोपन्यासः प्रश्नश्चे'त्यत्र वक्ष्यमाणत्वेऽपि अस्य प्रश्नस्य देहातिरिक्तात्मास्तित्वनास्तित्वविषयकत्वस्यानुपपन्नत्वान्मोक्षविषयकत्वमभ्युपगम्य परिहर्तुं निषेध्यांशं निषेधति - **न हीति** । कुत इत्यत्राह - **तथा सतीति** । किं तद्वरद्वयं कथञ्च तस्यानुपपत्तिरित्यत्र विस्तरेणोपपादयति - **तथा हीति** । **देहातिरिक्तेति । प्रथमेन वरेणात्मनः पुरुषार्थयोग्यतापादिनीमात्मनि पितुस्सुमनस्कतां प्रतिलभ्य** इति ह्यानुमानिकाधिकरणे भाषिष्यते । अतो देहातिरिक्तात्मज्ञानाभावे प्रथमवरणमनुपपन्नम् । अत्र क्रतुवैगुण्यदर्शनादिबोधनेनापि देहातिरिक्तात्मज्ञानमस्तीति सूच्यते । अत इदमप्यनुपपन्नं भवतीति सूचनाय **एतच्च सर्वमित्युक्तम्** । उत्तीर्णदेहात्मानुभाव्येत्यनेन द्वितीयवरणस्यापि देहातिरिक्तात्मज्ञानसद्भावबोधकत्वं सूचितम् । पितृप्रसादवरणस्य, अग्निविद्यावरणस्य च परस्परसापेक्षत्वाभावसूचनाय **तदपीति** पृथगुक्तम् ।

**अतस्तृतीयेन वरेण यदिदं व्रियते,** (कठ. १-१-२०) **'येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके। एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः' इति - अत्र परमपुरुषार्थरूपब्रह्मप्राप्तिलक्षणमोक्ष-याथात्म्यविज्ञानाय तदुपायभूतपरमात्मोपासनपरावरात्मतत्त्वजिज्ञासयाऽयं प्रश्नः क्रियते। एवञ्च 'येयं प्रेते' इति न शरीरवियोगमात्राभिप्रायम्; अपि तु सर्वबन्धविनिर्मोक्षाभिप्रायम्। यथा,** (बृ. ४-४-१२) **'न प्रेत्य सञ्ज्ञाऽस्ति' इति। अयमर्थः - मोक्षाधिकृते मनुष्ये प्रेते सर्वबन्धविनिर्मुक्ते तत्स्वरूपविषया वादि-विप्रतिपत्तिनिमित्ताऽस्तिनास्त्यात्मिका येयं विचिकित्सा, तदपनोदनाय तत्स्वरूपयाथात्म्यं त्वयाऽनुशिष्टोऽहं विद्यां - जानीयाम् इति।**

**तथा हि बहुधा विप्रतिपद्यन्ते - केचित् वित्तिमात्रस्याऽऽत्मनस्स्वरूपोच्छित्तिलक्षणं मोक्षमाचक्षते। अन्ये वित्तिमात्रस्यैव सतोऽवद्यास्तमयम्। परे पाषाणकल्पस्याऽऽत्मनो ज्ञानाद्यशेषवैशेषिकगुणोच्छेदलक्षणं कैवल्यरूपम्। अपरे तु अपहतपाप्मानं परमात्मानमभ्युपगच्छन्तः, तस्यैवोपाधिसंसर्गनिमित्तजीवभावस्य उपाध्यपगमेन तद्भावलक्षणं मोक्षमातिष्ठन्ते। त्रय्यन्तनिष्णातास्तु - निखिलजगदेककारणस्याशेषहेयप्रत्य-**

---

एवं देहातिरिक्तात्मसद्भावनिश्चयात् 'येय'मित्यादितृतीयवरस्य देहातिरिक्तात्मस्वरूपयाथात्म्यविषयकत्वाभावा-वश्यकत्वेनान्यविषयकत्वमेवेत्याह - **अत** इति। **यदिदं क्रियते** = यद्वरणं क्रियत इत्यर्थः। **परमपुरुषार्थेति**। अयं भावः - नचिकेतसो मोक्षज्ञानमपेक्षितम्। अतस्तदर्थं मोक्षानुबन्धिजिज्ञासया प्रश्नः क्रियते। 'येयं प्रेत' इत्यादिना मोक्षप्रश्नः कण्ठत एवोक्तः, उपासनादिस्वरूपस्यापि प्रतिवचनात्तत्स्वरूपप्रश्नोप्यर्थसिद्धः। ततश्चास्मिनप्रश्ने प्राप्यप्रापकप्राप्तृप्रश्नः अन्तर्गतः। एतदभिप्रायेणैव 'त्रयाणामेव चैवमुपन्यासः प्रश्नश्चे'ति सूत्रकारो वक्ष्यति। अथ पूर्वपक्ष्यभिमतार्थविषयकत्वा-भावं प्रश्नवाक्यस्य निगमयन् स्वाभिप्रायमाह - **एवञ्चेति**। प्रेतशब्दस्य सर्वबन्धविनिर्मोक्षार्थकत्वे श्रुत्यन्तरसंवादं दर्शयति - **यथेति**। सर्वबन्धविनिर्मोक्षं प्राप्य वर्तमानस्य देवादिसञ्ज्ञा नास्ति। देवादिशरीरेणैकीकृत्य देवोऽहमित्यादिज्ञानं नास्तीत्यर्थः।

अथ प्रश्नपरश्रुतिवाक्यस्य विशिष्टार्थमाह - **अयमर्थ** इति। 'मोक्षाधिकृत' इत्यनेन श्रुतिघटकस्य मनुष्ये इति पदस्य विशेषे पर्यवसानं कृतं, मनुष्यमात्रस्य सर्वबन्धविनिर्मोक्षाभावात्। सर्वबन्धविनिर्मुक्त इति प्रेते इति पदविवरणम्। उभयत्र तच्छब्दो विनिर्मुक्तपुरुषविषयकः, न तु मोक्षविषयकः, 'नाय'मिति श्रुतिस्वारस्यात्। 'अस्तिनास्त्यात्मिका' = अस्तिनास्तीत्येवंरूपा। **विद्यामिति** व्याख्येयं पदम्। 'जानीया'मिति अर्थकथनम्। एतेन विद्यामिति पदस्य सुबन्तत्व-शङ्काऽपास्ता। अथ संशयप्रयोजकविप्रतिपत्तिं प्रदर्शयति - **तथा हीति**। बौद्धाभिमतः प्रथमः पक्षः। निर्विशेषब्रह्मवादिपक्षः द्वितीयः। **अविद्यास्तमयं** = अविद्याया विनाशम्। नैयायिकाभिमतस्तृतीयः। **ज्ञानादीति** = एकविंशतिदुःखध्वंसो मोक्ष इति तैरभ्युपगमात्। भास्कराभिमतश्चतुर्थः।

अथ स्वाभिमतं त्रयन्तसिद्धान्तसिद्धं मोक्षस्वरूपमाह - **त्रैयन्तेति**। अत्र निष्णाता इत्यनेन पूर्वोक्तपक्षाभ्युपगन्तॄणां सकलवेदान्तपरिशीलनं नास्तीति सूचितम्। निखिलजगदेककारणस्येत्यनेन कारणवाक्यापरित्याग उक्तः। कार्यत्वा-वच्छिन्नकार्यतानिरूपितकारणताश्रयस्येत्यर्थः। **एककारणत्वं** = मुख्यकारणत्वम्। कारणस्य मुख्यत्वञ्च कारणसत्ताकालीन-कारणान्तराभावप्रयुक्ताभावप्रतियोगिकार्यकभिन्नत्वम्। कालिकसम्बन्धेन कार्यसामान्यं प्रति तत्तत्कार्यविषयकस्वीय-सङ्कल्पसम्बन्धेनेश्वरस्य कारणत्वात् सङ्कल्पसम्बन्धेनेश्वरस्य कारणत्वसत्ताकाले कारणान्तरविरहप्रयुक्तकार्याभावाभावेन मुख्यत्वमुपपद्यते। अत्र च स्वसत्ता च स्वनिरूपितकारणतावच्छेदकसम्बन्धावच्छिन्नाधिकरणतारूपा। **अशेषहेयेति**।

**नीकानन्तज्ञानानन्दैकस्वरूपस्य स्वाभाविकानवधिकातिशयासङ्ख्येयकल्याणगुणाकरस्य सकलेतरविलक्षणस्य सर्वात्मभूतस्य परस्य ब्रह्मणश्शरीरतया प्रकारभूतस्य, अनुकूलापरिच्छिन्नज्ञानस्वरूपस्य परमात्मानुभवैकरसस्य जीवस्यानादिकर्मरूपाविद्यातिरोहितस्वरूपस्य अविद्योच्छेदपूर्वकस्वाभाविकपरमात्मानुभवमेव मोक्षमाचक्षते ।**

**तत्र मोक्षस्वरूपं तत्साधनञ्च त्वत्प्रसादाद्विद्यामिति नचिकेतसा पृष्टो मृत्युः, तस्यार्थस्य दुरवबोधत्वप्रदर्शनेन विविधभोगवितरणप्रलोभनेन चैनं परीक्ष्य योग्यतामभिज्ञाय परावरात्मतत्त्वविज्ञानम्, परमात्मोपासनम्, तत्पदप्राप्तिलक्षणं मोक्षञ्च, 'तं दुर्दर्शं गूढमनुप्रविष्टम्' इत्यारभ्य, 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इत्यन्तेनोपदिश्य तदपेक्षितांश्च विशेषान् उपदिदेशेति सर्वं समञ्जसम् । अतः परमात्मैवात्तेति सिद्धम् ।। १२ ।।** इति अत्त्रधिकरणम् ।। २ ।।

१४. अन्तराधिकरणम् ।। ३ ।। (छा. ४-२५)

## अन्तर उपपत्तेः १ । २ । १३ ।।

**इदमामनन्ति च्छन्दोगाः** (४.१५) **'य एषोऽक्षिणि पुरुषो दृश्यते, एष आत्मेति होवाच, एतदमृतमभयम् ; एतद्ब्रह्म' इति । तत्र सन्देहः - किमयमक्ष्याधारतया निर्दिश्यमानः पुरुषः प्रतिबिम्बात्मा, उत्त चक्षुरिन्द्रियाधिष्ठाता देवताविशेषः, उत जीवात्मा, अथ परमात्मा इति । किं युक्तम् ? प्रतिबिम्बात्मेति । कुतः ?**

---

स्वरूपशब्दो धर्मिपरः, ज्ञानानन्दाद्याश्रयत्वस्य तु कल्याणगुणाकरस्येत्यनेन लाभः । हेयगुणत्वावच्छिन्नप्रतियोगिताकाभाववतोऽनन्तज्ञानानन्दस्वरूपाभिन्नस्येत्यर्थः । हेयप्रत्यनीकत्वं हि निर्विकारत्वम् । 'सत्यं ज्ञानमनन्तं ब्रह्म', 'आनन्दो ब्रह्मे'ति श्रुत्यर्थः सङ्गृहीतः । इच्छाविषयीभूताभावप्रतियोगित्वं हेयत्वम् । स्वाभाविकत्वं = स्वाश्रयाधिकरणकालत्वव्यापकस्वनिरूपिताधिकरणताकत्वम् । ध्वंसप्रागभावाप्रतियोगित्वमिति यावत् । अनवधिकातिशयत्वं स्वाप्रयोज्यस्वासाधारणकार्यप्रयोजकस्वभिन्नगुणकं यत्स्वं तदन्यत्वम् । गुणस्य कल्याणत्वं पुरुषार्थप्रयोजकत्वम् । आकरम् अपृथक्सिद्धिसम्बन्धेनाधारभूतम् । एवं शोधकवाक्यगुणबोधकवाक्यद्वयपरित्यागश्चोक्तः । **सकलेति** । **सर्वात्मभूतस्येति** अन्तर्यामित्वमुक्तम् । अनादित्वं प्रागभावाप्रतियोगित्वम् । यद्वा स्वसामानाधिकरण्यस्वसमानकालीनत्वोभयसम्बन्धेन कर्मात्यन्ताभावविशिष्टप्रागभावाप्रतियोगित्वरूपम् । इदमेव च कर्मगतं प्रवाहतोऽनादित्वम् । पराभिमताविद्याव्यावृत्त्यै कर्मरूपत्वोक्तिः । स्वरूपतिरोधानं नामपरमात्मसाक्षात्कारानुत्पादः । अविद्योच्छेदः कर्मण उत्कृष्टो ध्वंसः । **परावरात्मतत्त्वविज्ञानं** = ज्ञातव्यपरावरात्मतत्वम् । उपसंहरति - **अत** इति ।। इति अत्त्रधिकरणम् ।।

अथोत्तराधिकरणमाह - **इदमामनन्तीति** । परमात्मनो भोक्तृत्वाभावे भोक्तृतया प्रतीयमानस्य न परमात्मत्वं, किंतु जीवत्वमेवेति पूर्वाधिकरणसङ्गतिवदत्रापि 'तं दुर्दर्श'मिति परमात्मनो दुर्दर्शत्वोक्त्या सुदर्शतया प्रसिद्धो जीव एव स्यादिति शङ्कयाऽस्याधिकरणस्यात्थितिरिति । विषयवाक्ये 'दृश्यते' इति हि श्रूयते । एवविधसङ्गतेः स्पष्टत्वान्न सङ्गति र्भाषिता । पूर्वाधिकरणे उपासकस्य हृदयगुहावर्ती परमपुरुषो निरूपितः । अस्मिन्नधिकरणे चक्षुर्वर्ती परमपुरुषो निरूप्यते इति वा सङ्गतिः । **प्रतिबिम्बात्मा** = प्रतिकृतिपुरुषः । नन्वचेतनत्वेन फलप्रदानासमर्थस्य प्रतिबिम्बात्मनः कथं पूर्वपक्षे निवेशः ? उच्यते । आदर्शालोकनादेरिव तस्य फलप्रदत्वाभावेपि फलसाधनत्वौचित्येन वेद्यत्वसम्भवात् । नियोगपर्यनु-

**प्रसिद्धवन्निर्देशात् ; 'दृश्यते' इत्यपरोक्षाभिधानाच्च । जीवात्मा वा । तस्यापि हि चक्षुषि विशेषेण सन्निधानात् प्रसिद्धिरुपपद्यते । उन्मीलितं हि चक्षुरुद्वीक्ष्य जीवात्मनश्शरीरे स्थितिगती निश्चिन्वन्ति ।** (बृ.७-५-१) **'रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः' इति श्रुतिप्रसिद्ध्या चक्षुःप्रतिष्ठो देवताविशेषो वा । एष्वेव प्रसिद्धवन्निर्देशोपपत्तेरेषामन्यतमः - इति प्राप्ते प्रचक्ष्महे - अन्तर उपपत्तेः । अक्ष्यन्तरः परमात्मा । कुतः? 'एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति । एतं सम्यद्वाम इत्याचक्षते । एतं हि सर्वाणि वामान्यभिसम्यन्ति । एष उ एव वामनिः । एष हि सर्वाणि वामानि नयति । एष उ एव भामनिः । एष हि सर्वेषु लोकेषु भाति' इत्येषां गुणानां परमात्मन्येवोपपत्तेः ॥ १३ ॥**

---

योगानर्हत्वेन स्वतन्त्रायां श्रुतावेवंविधप्रश्नानुपपत्तेश्चेति । प्रतिबिम्बात्मत्वे हेतुमाह - **प्रसिद्धवन्निर्देशादिति** । अत्र 'य एष' इति प्रसिद्धवन्निर्देशः । जीवात्मत्वेपि प्रसिद्धवन्निर्देश उपपद्यत इत्याह - **तस्यापीति** । जीवात्मनश्चक्षुषि विशेषसान्निध्यावगमात्प्रसिद्धिरित्यर्थः ।

ननु कथं जीवात्मनश्चक्षुषि विशेषेण सान्निध्यनिश्चय इत्यत्राह - **उन्मीलितमिति** । अयं भावः - देहे जीवस्य स्थितिनिश्चयः उन्मीलितचक्षुर्दर्शनाधीन इति निर्विवादम् । निमीलितचक्षुर्दर्शने मृत इति निश्चयात् । अतो देहे जीवावस्थानस्य चक्षुरधीनत्वनिश्चयात्सर्वेन्द्रियकन्दभूते हृदये वर्तमानस्यापि जीवात्मनश्चक्षषि विशेषसान्निध्यमस्तीति निश्चेयम् । ततश्च प्रसिद्ध्युपपत्तिः । चक्षुषो निमीलने शरीराज्जीवस्य गतिरिति व्यतिरेकोक्तिर्दृढीकरणाय । चक्षुरिन्द्रियाधिष्ठातृदेवताविशेषस्य प्रसिद्धिमाह - **रश्मिभिरिति** । प्रथमेऽपरोक्षप्रसिद्धिः । द्वितीये औत्पत्तिकप्रसिद्धिः । तृतीये श्रुतिप्रसिद्धिः । ननु श्रुतिप्रसिद्धेः परमपुरुषेपि विद्यमानत्वात्कथमेवंविधशङ्कोपपत्तिरिति चेन्न । तस्मिन् 'दृश्यत' इत्यनन्वयात् । दृश्यत्वसमानाधिकरणप्रसिद्धेस्तत्रासम्भवात् । अत्र च दृश्यत्वसमानाधिकरणोक्तप्रसिद्धिविशेषस्य हेतुत्वात् नान्योन्यव्यभिचारप्रसक्तिरिति ध्येयम् । यद्वा प्रसिद्धित्वेन प्रसिद्धिमनुगमय्य दृश्यत्वसमानाधिकरणप्रसिद्धे हेतुत्वेपि अन्यतमस्य साध्यत्वे न व्यभिचार इत्याशयेनाक्तेः । पूर्वपक्षं निगमयति - **एष्वेवेति** ॥

सिद्धान्तमाह - **इति प्राप्त** इति । सूत्रे सामान्यतः 'अन्तर' इति निर्दिष्टम् अक्ष्यन्तरपरतया व्याचष्टे - **अक्ष्यन्तर** इति । नन्वन्तर इति निर्दिष्टं सूत्रे । विषयवाक्ये उदाहृते चक्षुषीति श्रूयते न त्वन्तरपदम् । ततश्च 'अन्तर उपपत्तेः' इति सूत्रयितुः 'य एषोऽक्षिणि पुरुषो दृश्यत' इति वाक्यमेवाभिप्रेतमिति कथमवगम्यते । प्रायशस्सर्वत्राभिप्रेतविषयवाक्यघटकपदैरेव सूत्रप्रणयनादत्र चाभावात् । यथा - 'अन्तस्तद्धर्मोपदेशात्' इत्यत्र 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते', 'अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यत' इति वाक्यस्य विषयत्वम् । अत एव ह्यत्रोभयत्रान्तःशब्दघटितत्वं पर्यालोच्योभयमपि वाक्यं विषयवाक्यत्वेन सूत्रकृदभिप्रेतमित्युपात्तं भाष्य इति चेत् - सत्यम् । सूत्रे 'अन्तर' इति निर्देशात् कस्मिन्नन्तर इत्याकाङ्क्षा जायते, 'अक्षिणि पुरुषो दृश्यत' इत्यस्य स्वरसतः अक्ष्यन्तरः अक्षिणि वर्तमानः पुरुष इत्यर्थः प्रतीयते । अन्यत्र च 'य एषोऽन्तरक्षिणि पुरुष' इत्यक्ष्यन्तरत्वं पुरुषस्योपात्तम् । अतो विषयवाक्यपर्यालोचनवत्तदर्थपर्यालोचनयापि सूत्रप्रणयनसम्भवात्, अस्य वाक्यस्य सूत्रकाराभिमतत्वं सम्भवत्येव ॥

ननु 'अन्तस्तद्धर्मोपदेशा'दित्यत्र, 'य एषोऽन्तरिक्षणि पुरुषो दृश्यत' इत्यक्ष्यन्तर्वर्तिनः परमात्मत्वनिश्चयात्तेनैव 'य एषोऽक्षिणि पुरुषो दृश्यत' इत्यक्ष्यन्तरस्य परमात्मत्वनिर्णयसम्भवात्पुनः परमात्मत्वस्थापनमनुपयुक्तमेवेति चेन्न । 'तं दुर्दर्श'मिति दुर्दर्शत्वेनोक्तस्य परमात्मनो 'दृश्यत' इत्युक्तसुदर्शत्वासम्भवेनाक्ष्यन्तरस्य परमात्मत्वनिश्चयासम्भवात् ।

## स्थानादिव्यपदेशाच्च १ । २ । १४ ॥

**चक्षुषि स्थितिनियमनादयः परमात्मन एव,** (बृ.५-७-२२) **'यश्चक्षुषि तिष्ठन्' इत्येवमादौ व्यपदिश्यन्ते । अतश्च, 'य एषोऽक्षिणि पुरुष' इति स एव प्रतीयते । अतः प्रसिद्धवन्निर्देशश्च परमात्मन्युपपद्यते । तत एव 'दृश्यते' इति साक्षात्कारव्यपदेशोऽपि योगिभिर्दृश्यमानत्वादुपपद्यते ॥ १४ ॥**

---

ननु तर्हि 'य एषोऽन्तरक्षिणि पुरुषो दृश्यत' इति विषयवाक्येषु 'दृश्यत' इति सुदर्शत्वोक्तेः कथमक्ष्यन्तवर्तिनः परमात्मत्व-निश्चय इति पूर्वपक्षोत्थित्या तत्परिहरपरतया 'अन्तर उपपत्तेः' इति सूत्रप्रणयनं किं न स्यात् । 'उपपत्ते'रित्यस्य योगिभिर्दृश्यमानत्वेन 'दृश्यत' इत्यस्योपपत्तेरित्यप्यर्थवर्णनसम्भवादिति चेत्सत्यम् । 'य एषोऽक्षिणि पुरुषो दृश्यत' इत्यत्र 'दृश्यत' इत्यस्यान्यथासिद्ध्या परमात्मत्वपरत्वनिर्णये 'य एषोऽन्तरक्षिणि पुरुषो दृश्यत' इत्यत्रापि परमात्मत्वनिर्णय-स्यार्थसिद्धत्वाच्छिष्यबुद्ध्युत्पत्त्याशयेनोदाहरणान्तरप्रदर्शनसम्भवात् । यद्यपि 'अन्तर उपपत्तेः' इत्येव सूत्रयितुमुचितम्, अथापि समाधानसौकर्याय 'अन्तर' इत्युक्तं 'यश्चक्षुषः अन्तरो यमयती'ति हि श्रुतिः । 'सुखविशिष्टाभिधानादेव च', 'श्रुतोपनिषत्कगत्यभिधानाच्चे'युत्तरसूत्रस्य 'य एषोऽन्तरक्षिणि पुरुषो दृश्यते' इति विषयवाक्याभिप्रायकत्वासम्भावाच्च 'य एषोऽक्षिणि' इति वाक्यस्यैव एतदधिकरणविषयत्वे सूत्रकाराभिप्राय इत्यवगमात् । अतोऽस्य वाक्यस्यैतदधिकरण-विषयत्वभाषणं नानुपपन्नमिति । 'अनवस्थितेरसम्भवाच्च नेतर' इत्यत्र 'नेतर' इति पदपर्यालोचनया 'परमात्मा' इति भाषितम् । श्रुतौ 'एतं हि' इत्यादिकम् उक्तसम्यद्वामत्वविवरणम् । 'एष ही'त्यादिकं वामनित्वविवरणम् । एवं भामनित्वो-पपादकं तदुतरवाक्यम् । 'एषां गुणाना'मिति बहुवचनोक्तिः उपक्रमस्थस्यैकस्य लिङ्गस्य दुर्बलत्वमभिव्यनक्ति । निरुपाधि-कामृतत्वादिगुणानामुक्तानां जीवासम्भवाभिप्रायेण 'परमात्मन्येवे'ति भाषितम् ।

न चात्रामृतत्वादिगुणकीर्तनं स्तुतिपरं, प्रमाणाभावात् । न चोपक्रमस्थलिङ्गानुसारेणोपसंहारगतानां गुणानां स्तुतिपरत्वनिर्णयो युक्तः, उक्तानेकगुणोपक्षया लिङ्गदौर्बल्यस्योक्तत्वात् । वस्तुतो विरोध एव हि प्राबल्यदौर्बल्यावकाशः स्तुतिपरत्वञ्च । अत्र परमात्मनि प्रसिद्धे दृश्यमानत्वस्य चोपपत्तेः विरोध एव नास्तीति । **अमृतत्वं** = निरतिशयभोग्यत्वम् । **अभयत्वं** = दुःखासम्भिन्नत्वम् । **ब्रह्मत्वं** - निरतिशयबृहत्वम् । एतत्सर्वं परब्रह्मासाधारणभूतम् । **सम्यद्वामत्वं** - सम्यन्ति = सङ्गतानि वामानि = वननीयनि यस्मिन् स इति सर्वकल्याणगुणाश्रत्वम् । **वामनीत्वं** = स्वश्रितेषु शोभवनधीप्रापकत्वम् । **भामनीत्वम्** = सर्वलोकव्याप्तदीप्तिमद्विग्रहयुक्तत्वम् । एतत्त्रितमपि उपासकस्य तत्क्रतुन्यायात्सम्भवति ।

उत्तरसूत्रार्थमाह - **चक्षुषीति** । 'व्यतिरेके अनवस्थिति'रित्युक्त्यात्र स्थानशब्दोऽवस्थितिपरः इत्यभिप्रायेण परमा-त्मनश्चक्षुषि स्थितिबोधकश्रुतिसद्भावेनच स्थानशब्दः स्थितिपरतया व्याख्यातः । नियमनादीत्यादिशब्दविवरणम् । अत्रत्यादिशब्देन धारकत्वग्रहणम् । नन्वस्तु परमात्मनश्चक्षुष्यवस्थानं, ततः किं पूर्वपक्ष्यभिप्रेतहेतोरित्यत्रान्यथासिद्धिमभि-प्रयन्नाह - **अतश्चेति** । अन्यथासिद्धिमेव दर्शयति - **अतः प्रसिद्धवन्निर्देशश्चेति** । ननु दृश्यत्वसमानाधिकरणप्रसिद्धिर्हि हेतुः स कथमन्यथासिद्धः ? परमात्मनो दुर्दर्शत्वेन दृश्यत्वासम्भवादिति पूर्वपक्ष्यभिप्रेतं व्युदस्यति - **तत एवेति** । **तत एव** = श्रुतिप्रसिद्धेरेव । अयं भावः - शास्त्रप्रसिद्धमेव हि वस्तु योगिभिरुपास्यं दृश्यञ्च भवति । दुर्दर्शस्यैव हि वस्तुनो दृश्यत्वमपि शास्त्रेणैव बोध्यते - यथा 'यत्तदद्रेश्यमग्राह्य'मित्युक्तस्यैव 'यद्भतयोनिं परिपश्यन्ति धीरा' इति ? 'गूढोत्मा न प्रकाशते दृश्यते त्वग्र्चया बुद्ध्या सूक्ष्मया सूक्ष्मदार्शिभिः' इति च । तस्मात्परमात्मनोऽक्ष्यन्तर्वर्तित्वेन योगिदृश्यत्वेन च श्रुतिप्रसिद्धेस्तस्मिन्नेवोक्तगुणानां सम्भवेन च परमात्मैवैतद्वाक्यावसेय इति भावः । अत्र चकारोपादानं सूत्रद्वयमेकीकृत्य प्रकृतार्थसाधकमिति सूचनाय । अत एवोत्तरसूत्रे हेतोर्निरपेक्षत्वसूचनायैव चेत्युक्तम् ॥

## सुखविशिष्टाभिधानादेव च १। २ । १५ ॥

**इतश्चाक्ष्याधारः पुरुषोत्तमः ;** (४-१०-५) **'कं ब्रह्म खं ब्रह्म' इति प्रकृतस्य सुखविशिष्टस्य ब्रह्मण उपासनस्थानविधानार्थं सम्यद्वामत्वादिगुणविधानार्थश्च, 'य एषोऽक्षिणि पुरुष' इत्यभिधानात्। एवकारो नैरपेक्ष्यं हेतोर्द्योतयति।**

**नन्वग्निविद्याव्यवधानात्, 'कं ब्रह्म' इति प्रकृतं ब्रह्म नेह सन्निधत्ते। तथा हि - अग्नयः, 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इति ब्रह्मविद्यामुपदिश्य, 'अथ हैनं गार्हपत्योऽनुशशास' इत्यारभ्याग्नीनामुपासनमुपदिदिशुः। न चाग्निविद्या ब्रह्मविद्याङ्गमिति शक्यं वक्तुम् ; ब्रह्मविद्याफलानन्तर्गततद्विरोधिसर्वायुःप्राप्तिसन्तत्यविच्छेदादिफलश्रवणात्।**

**उच्यते - 'प्राणो ब्रह्म', 'एतदमृतमभयमेतद्ब्रह्म' इत्युभयत्र ब्रह्मसंशब्दनात्, 'आचार्यस्तु ते गतिं वक्ता' इत्यग्निवचनाच्च गत्युपदेशात्पूर्वं ब्रह्मविद्याया असमाप्तेः तन्मध्यगताऽग्निविद्या ब्रह्मविद्याङ्गमिति**

---

सूत्रस्थचकारमभिप्रेत्याह - **इतश्चेति**। प्रकृतस्येत्यनेन व्यवहतिराहित्यं सूचितम्। **सुखविशिष्टस्य** = सुखत्वविशिष्टस्य। यद्वा सुखत्वावस्थापन्नधर्मभूतज्ञानविशिष्टस्य। ननु 'कं ब्रह्मे'ति प्रस्तुत ब्रह्मणः पुनरुपादानं किमर्थमित्यत्राह - **उपासनेति**। प्रथमवाक्येन स्थानविधानम् उत्तर वाक्येन च गुणविधानम्। अनेकगुणविधानासम्भवपरिहारस्तु पूर्ववद्बोध्यः। **इत्यभिधानादिति**। 'कंब्रह्मे'त्युक्तस्यैव ब्रह्मणो 'य एष' इति प्रसिद्धवनिर्देशपूर्वकं 'एतत् ब्रह्मे'ति प्रत्यभिज्ञायनादित्यर्थः। 'अन्तर उपपत्ते'रिति सूत्रोक्तगुणोपपत्तिरुपहेतोः प्रसिद्धवन्निर्देशरूपपूर्वपक्ष्यभिमतहेतुनिराकरणपरस्थानादिव्यपदेशाच्चेति सूत्रोक्तहेतुसापक्षत्वम्, अस्य च न तथात्वमित्यभिप्रायेण सूत्रे एवकारोपादानमित्याह - **एवकार** इति। नन्वस्यापि हेतोः पूर्वपक्ष्यभिमतहेतुनिराकरणसापेक्षत्वमस्त्येवेतिचेत्सत्यम्। अथापि पूर्वप्रस्तुत ब्रह्मण एवोत्तरत्रापि प्रत्यभिज्ञानेन अक्ष्यन्तर्वर्तिनः परमपुरुषत्वस्य पूर्वपक्षिणाप्यङ्गीकर्तव्यतया तदभिमतहेत्वन्याथासिद्धेस्तेना प्यङ्गीकरणीयत्वेन फलितत्वात्। गुणानां स्तुतिपरत्वेन गुणोपपत्तिरूपहेतोरेवान्यथासिद्धेः पूर्वपक्ष्यभिप्रेतत्वमिति वैषम्याच्च। यद्वा - 'उपपत्तेः' 'स्थानादिव्यपदेशाच्चे'त्यनयोः 'व्यतिरेकानवस्थितेरसम्भवाच्चे नेतर' इति सूत्रकारेणैव वक्ष्यमाणत्वात् व्यतिरेकोक्तिसापेक्षत्वं तस्य च न तथात्वमित्यभिप्रायेण सूत्रकृतैव 'एवे'त्यभिहितमिति भावः॥

ननु पूर्वप्रस्तुतब्रह्मणो नात्र प्रत्यभिज्ञानम्, अग्निविद्याव्यवधानेन प्रकरणविच्छेदादिति शङ्कते - **नन्विति**। अग्निविद्याव्यवधानमेवोपपादयति - **तथा हीति**। ननु न स्वाङ्गं स्वव्यवधायकमितिन्यायेनाग्निविद्याया ब्रह्मविद्याङ्गत्वेन न व्यवधायकत्वसम्भव इति शङ्कां परिहरति - **न चेति**। अङ्गत्वे सिद्धे हि व्यवधायकत्वनिषेधसम्भवः। अत्र त्वङ्गत्वमेवासिद्धमिति भावः। कुत इत्यत्राह - **ब्रह्मविद्येति**। अनन्तर्गतेत्यनेनाग्निविद्याफलस्य ब्रह्मविद्यानपेक्षितत्वमुक्तम्। तद्विरोधीत्यनेन प्रतिकूलत्वमुक्तम्। 'फलश्रवणा'दित्यनेनाङ्गत्वं निषिद्धम्।

अयं भावः - फलवत्सन्निधावफलं तदङ्गमिति न्यायेनाफलस्यैवाङ्गत्वसम्भवादत्र च फलकीर्तनेनाफलत्वासम्भवादङ्गत्वं न युक्तम्। अङ्गिनिष्पत्यपेक्षितस्याङ्गिफलाविरुद्धस्य वा फलस्य श्रवणे अङ्गत्वसम्भवेऽप्यनपेक्षितस्य विरुद्धस्य च फलस्य श्रवणान्नाङ्गत्वमिति। परिहरति - **उच्यत** इति। अग्निविद्यायामुक्तस्य फलस्य ब्रह्मविद्याविरोधित्वाभावात्तदपेक्षितत्वाच्च नाङ्गत्वनिषेधसम्भव इति परिहारमुत्तरत्र विवक्षुः अङ्गत्वनिषेधे परिहारान्तरमाह - **प्राण** इति। उपक्रमे उपसंहारे च ब्रह्मसंशब्दनं मध्यगताग्निविद्याया अङ्गत्वज्ञापकम्। एवं ब्रह्मविद्याया अग्निविद्यातः प्राक् असमाप्तिरपि तथा।

**निश्चीयते ; 'अथ हैनं गार्हपत्योऽनुशशास' इति ब्रह्मविद्याधिकृतस्यैवाग्निविद्योपदेशाच्च । किञ्च 'व्याधिभिः प्रतिपूर्णोऽस्मि' इति ब्रह्मप्राप्तिव्यतिरिक्तनानाविधकामोपहतिपूर्वकगर्भजन्मजरामरणादिभवभयोपतप्ताय उपकोसलाय, 'एषा सोम्य ! ते अस्मद्विद्या चाऽऽत्मविद्या च' इति समुच्चित्योपदेशान्मोक्षैकफलात्मविद्याङ्गत्वमग्निविद्यायाः प्रतीयते ।**

**एवञ्चाङ्गत्वेऽवगते सति फलानुकीर्तनमर्थवाद इति गम्यते । न चात्र मोक्षविरोधिफलं किञ्चिच्छ्रूयते, 'अपहते पापकृत्याम्, लोकी भवति, सर्वमायुरेति, ज्योग्जीवति; नास्यावरपुरुषाः क्षीयन्ते; उप वयं तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च' इत्यमीषां फलानां मीक्षाधिकृतस्यानुगुणत्वात् । अपहते पापकृत्याम् - ब्रह्मप्राप्तिविरोधि पापं कर्मापहन्ति । लोकी भवति - तद्विरोधिनि पापे निरस्ते ब्रह्मलोकं प्राप्नोति । सर्वमायुरेति - ब्रह्मोपासनसमाप्तेर्यावदायुरपेक्षितम्, तत् सर्वमेति । ज्योग्जीवति - व्याध्यादिभिरनुपहतो यावद्ब्रह्मप्राप्ति जीवति । नास्यावरपुरुषाः क्षीयन्ते - अस्य शिष्यप्रशिष्यादयः पुत्रपौत्रादयोऽपि ब्रह्मविद एव भवन्ति ।** (मु. ३-१-९) **'नास्याब्रह्मवित्कुले भवति' इति च श्रुत्यन्तरे ब्रह्मविद्याफलत्वेन श्रूयते । उप वयं तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च - वयम् - अग्नयः तम् - एनमुपभुञ्जामः - यावद्ब्रह्मप्राप्ति विघ्नेभ्यः परिपालयाम इति । अतोऽग्निविद्याया ब्रह्मविद्याङ्गत्वेन तत्सन्निधानाविरोधात्सुखविशिष्टं प्रकृतमेव ब्रह्म, इहोपासनस्थानविधानार्थं गुणविधानार्थञ्चोच्यते ॥**

---

तत्रासमाप्तौ हेतुः - 'आचार्यस्तु ते गतिं वक्ता' इति गत्युपदेशः, एनमित्याद्युपादेशेन ब्रह्मविद्याधिकृतस्याग्निविद्योपदेशावगमात्सोपि तत्र हेतुरित्याह - **अथ हैनमिति** । एवं तापत्रयातुरस्य तदपनोदनार्थं विद्याद्वयस्य समुचित्यापदेशोपि हेतुरित्याह - **किञ्चेति** । आत्मविद्या चेत्यत्र चकार उपदेष्टव्यविद्यासमुच्चय-परः । यद्वाऽङ्गाङ्गिभावरूपसम्बन्धपरः । एवमङ्गत्वं स्थापितम् ।

अथ विरोधिफलानुकीर्तनमन्यथयति - **एवञ्चेति** । **अनाश्वासं** = अभुक्तवन्तम् । 'उपेदिवान् अनश्वान्' इति सूत्रम् । **अर्थवाद इति गम्यत** इति । द्रव्यगुणसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादस्स्यादिति कर्ममीमांसायामभ्युपगतत्वादिति भावः । अथोक्तफलस्य विरोधित्वाद्यभावादप्यङ्गत्वनिश्चय इति न प्रकरणविच्छेद इत्याशयेनाह - **न चात्रेति** । इदमपेक्षितत्वबोधनेत्युपलक्षणम् । कृत्याशब्दोऽविशेषण कर्मपरः । प्रतिबन्धकपापकर्मणो निरासस्य पूर्वमुक्तत्वात् लोकशब्दः ब्रह्मलोकपर इति व्याचष्टे - **ब्रह्मलोकमिति** । ब्रह्मैव लोक इति वार्थः । इनिन्प्रत्यस्य भवति इत्यस्य च विशिष्टार्थकथनं - **प्राप्नोतीति** । ज्योक्शब्दः उज्ज्वलपरः । औज्ज्वल्यञ्च व्याध्याद्यनुपहितत्व एवेत्याशयेनोक्तं **व्याध्यादिभिरनुपहत** इति । विद्यया जन्मना चावरपुरुषा विवक्षिता इत्याशयेनोक्तं - **शिष्यप्रशिष्यादयः पुत्रपौत्रादयोपीति** । एवं शिष्यप्रशिष्यपुत्रपौत्रादीनां ब्रह्मवित्त्वं ब्रह्मविद्याफलमित्यत्र श्रुत्यन्तरसंवादं दर्शयति - **नास्येति** । उपेत्युपसर्गविवरणं **परीति** । पालयाम इत्यनेन भुञ्जाम इत्येतद्विवृत्तम् । 'भुजोऽनवने' इत्यात्मनेपदस्य भुजिधोतोः पालनार्थत्वाभावेपि परस्मैपरस्यास्य 'भुज पालनाभ्यवहारयोरि'ति पालनार्थत्वं सम्भवतीति भावः । अनेन ब्रह्मविद्याविघ्ननिवारणमग्निविद्यया क्रियत इत्युक्तं भवति । उपसंहरति - **अत इति** ।

'नन्वाचार्यस्तु ते गतिं वक्ता' इति गतेरेवाचार्येण वक्ष्यमाणत्वकथनात्स्थानगुणर्योवक्ष्यमाणत्वाकथनाच्च स्थानगुणयोर्विधेयत्वासम्भवात्तदर्थं ब्रह्मणःपुनर्वक्तव्यत्वानुपपत्तेः 'य एषोऽक्षिणी'ति स्थानादिपरवाक्यस्य न ब्रह्मपरत्वम्,

**ननु, 'आचार्यस्तु ते गतिं वक्ता' इति गतिमात्रपरिशेषणादाचार्येण गतिरेवोपदेश्येति गम्यते ; तत् कथं स्थानगुणविध्यर्थतोच्यते ? तदभिधीयते - 'आचार्यस्तु ते गतिं वक्ता' इत्यस्यायमभिप्रायः - ब्रह्मविद्यामनुपदिश्य प्रोषुषि गुरौ तदलाभादनाश्वासमुपकोसलमुज्जीवयितुं स्वपरिचरणप्रीता गार्हपत्यादयो गुरोरग्नयस्तस्मै ब्रह्मस्वरूपमात्रं तदङ्गभूताश्चाग्निविद्यामुपदिश्य,** (छा.४-९-३) **'आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्' इति श्रुत्यर्थमालोच्य, 'साधुतमत्वप्राप्त्यर्थमाचार्य एवास्य सम्यद्वामत्वादिगुणकं ब्रह्म, तदुपासनस्थानमर्चिरादिकाश्च गतिमुपदिशतु' इति मत्वा, 'आचार्यस्तु ते गतिं वक्ता' इत्यवोचन्। गतिग्रहणमुपदेश्यविद्याशेषप्रदर्शनार्थम्। अत एवाचार्योऽपि,**(४-१४-३) **'अहं तु ते तद्वक्ष्यामि - यथा पुष्करपलाश आपो न श्लिष्यन्ते, एवमेवंविदि पापं कर्म न श्लिष्यते' इत्युपक्रम्य सम्यद्वामत्वादिकल्याणगुणविशिष्टं ब्रह्म अक्षिस्थानोपास्यमर्चिरादिकाश्च गतिमुपदिदेश। अतः 'कं ब्रह्म खं ब्रह्म' इति सुखविशिष्टस्य प्रकृतस्यैव ब्रह्मणोऽत्राभिधानादयमक्ष्याधारः परमात्मा ॥ १५ ॥**

**ननु च 'कं ब्रह्म खं ब्रह्म' इति परं ब्रह्माभिहितमिति कथमवगम्यते, यस्येहाक्ष्याधारतयाऽभिधानं ब्रूषे; यावता 'कं ब्रह्म खं ब्रह्म' इति प्रसिद्धाकाशलौकिकसुखयोरेव ब्रह्मदृष्टिर्विधीयत इति प्रतिभाति ;** (छा.७-१-५; ७-३-२) **'नाम ब्रह्म' 'मनो ब्रह्म' इत्यादिवचनसारूप्यात्। तत्राह -**

---

अपि त्वान्यपर्यमेवेत्याशयेन शङ्कते - **नन्विति**। समाधत्ते **तदिति**। साधिष्ठमिति भावप्रधाननिर्देशः। अत एव साधुतमत्वमिति भाषितम्। ब्रह्मविद्याऽभावप्रयुक्तया चिन्तया भोजनमकुर्वते उपकोसलाय स्वपरिचरणप्रीतिविशेषादग्निभिर्ब्रह्मस्वरूपतङ्गस्वविद्यामात्रोपदेशात्साधुतमत्वसिद्ध्यै गुणाद्यनुपदेशाच्च विकलोपदेश एवायमिति भावः। एवं पूर्वापरपर्यालोचनायामेकदेशोपदेशेन शेषोपदेशोपलक्षणमेव गतिग्रहणमित्यस्थेयमित्याह - **गतीति**। उपदेश्यविद्याशेषमाचार्यस्ते वक्तेत्यर्थ इति भावः। विद्योशेषप्रदर्शनार्थत्वमेवाचार्यवाक्येनोपपादयति - **अत एवेति**। अत्र देशान्तरादागतेनाचार्यणोपकोसलमवेक्ष्य ब्रह्मविन्मुखमिव लक्ष्यत इत्युक्तत्वात् 'अहं तु ते तद्वक्ष्यामी'त्युपक्रमाच्च गतिंग्रहणस्य प्रदर्शनार्थत्वं युक्तमिति स्थानगुणयोर्विधानार्थं ब्रह्मणः पुनर्वक्तव्यत्वमिति भावः।

उत्तरसूत्रमवतारयति - **ननु चेति**। **कथमवगम्यत** इति प्रमाणाभाव उक्तः। यावता इत्यादिना दृष्टिविधित्वे प्रमाणमुक्तम्। अयं भावः - 'कं ब्रह्म खं ब्रह्म' इत्यादे र्ब्रह्मविद्यात्वे ह्युपक्रमोपसंहारयो र्ब्रह्मसंशब्दनादिहेतुबलादग्निविद्यया ब्रह्मविद्याव्यवच्छेदो नास्तीति वक्तुं शक्यम्। पूर्वत्र ब्रह्मविद्यात्वमेवासम्भवि, प्रमाणाभावात् ब्रह्मशब्दश्रवणन्तु कशब्दवाच्ये वैषयिकसुखे खशब्दवाच्ये प्रसिद्धभूताकाशे च ब्रह्मदृष्टिविधानार्थम्। ननु दृष्टिविधौ 'मनो ब्रह्मेत्युपासीत', 'नाम ब्रह्मेत्युपासीत' इतीतिकरणनिर्देशावश्यकत्वेनात्र च तदभावात्कथं दृष्टिविधित्वशङ्केति चेत् - सत्यम्। अथापि 'मनो ब्रह्म' 'नाम ब्रह्मे'त्यादाविवात्रापि विशेष्यस्य प्रथमोपादानाद्दृष्टिविशेषणतापन्नब्रह्मणः पश्चादुपादानाच्च तावन्मात्रसारूप्यावलम्बनेन दृष्टिविधित्वशङ्कायाः सम्भवात्।अत एव **प्रतिभातीति** भाषितम्। अत्रोक्तसारूप्यमात्रमादायैव शङ्कोत्थितिरिति सूचनायैव 'इत्युपासीत' इति न निर्दिष्टम्। **यावतेति** प्रत्युतेत्यर्थकम्। एवमुतरत्र ब्रह्मशब्देनोपसंहारं विना 'प्राणश्च हास्मै तदाकाशश्चोचुरिति' प्राणाकाशशब्दाभ्यामुपसंहारोऽपि दृष्टिविधित्वशङ्काहेतुतयाऽभिप्रेतः। अत एव सिद्धान्ते - **अतः प्राणशरीरतया प्राणविशिष्टं यद्ब्रह्म तदेवापरिच्छिन्नसुखरूपं** चेति निगमितम्। 'प्राणश्च हास्मै तदाकाशश्चोचु'रिति परिहारः कृतः॥

## अत एव च स ब्रह्म । १ ।२ । १६॥

**यतस्तत्र, 'यदेव कं तदेव खम्' इति सुखविशिष्टस्याऽऽकाशस्याभिधानम्, अत एव खशब्दाभिधेयः सः आकाशः परं ब्रह्म । एतदुक्तं भवति - अग्निभिः 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इत्युक्ते उपकोसल उवाच, 'विजानाम्यहं यत्प्राणो ब्रह्म ; कञ्च तु खञ्च न विजानामि' इति ।**

**अस्यायमभिप्रायः - न तावत्प्राणादिप्रतीकोपासनमग्निभिरभिहितम् ; जन्मजरामरणादिभवभय-भीतस्य मुमुक्षोर्ब्रह्मोपदेशाय प्रवृत्तत्वात् । अतो ब्रह्मैवोपास्यमुपदिष्टम् । तत्र प्रसिद्धैः प्राणादिभिस्समाना-धिकरणं ब्रह्म निर्दिष्टम् । तेषु च प्राणविशिष्टत्वं जगद्विधरणयोगेन वा प्राणशरीरतया प्राणस्य नियन्तृत्वेन वा ब्रह्मण उपपद्यत इति, 'विजानाम्यहं यत्प्राणो ब्रह्म' इत्युक्तवान् ।**

---

सूत्रार्थमाह - **यत** इति । यद्वा वेति पाठः साधुः । तथैव श्रुतिदर्शनात् । अन्यथा त्वर्थानुवाद इति मन्तव्यम् । सुखविशिष्टस्याकाशस्याभिधानमित्यनेन सूत्रस्थातश्शब्दार्थो विवृतः । अतश्शब्दो हि सुखविशिष्टाभिधानादेव चेति प्रकृतसुखविशिष्टाभिधानवाची । पूर्वत्र सुखविशिष्टब्रह्मणः स्थानादिगुणविध्यर्थं 'य एषोऽक्षिणी'त्यादिनाऽभिधानं हेतूकृतम् । अत्र "यद्वाव कं तदेव खमि'त्यादिना सुखविशिष्टार्थाभिधानं हेतूकृतम् । अभिधायकश्रुतिव्यक्तिस्तु भिन्ना । यथा - 'ज्ञोऽत एवे'त्यत्रातः शब्देन 'नात्माश्रुते'रिति प्रकृतश्रुतिपरामर्शिनाऽर्थसामर्थ्यात् श्रुतिव्यक्तिविशेषबोधनम् । पूर्वसूत्रे 'यद्वाव कं तदेव ख'मिति सुखविशिष्टतयोक्तस्य ब्रह्मत्वं सिद्धवत्कृत्याक्षिपुरुषस्य परमात्मत्वं स्थापितम् । अत्र सुखविशिष्टतयोक्तिं तथोक्तस्यैव ब्रह्मत्वञ्च स्थाप्यते । सूत्रे 'स' इति पुल्लिङ्गतया निर्देशः 'तदाकाशं चोचु'रिति पुल्लिङ्गाकाशशब्दाभिप्रायक इत्यशयेन तच्छब्दार्थं विवृणोति - **स आकाश** इति । अयं भावः - 'कं ब्रह्म खं ब्रह्मे'त्यादौ वैषयिकसुखे प्रसिद्धाकाशे च ब्रह्मदृष्टिर्न सम्भवति । 'यद्वाव कं तदेव खं यदेव खं तदेव कमि'ति परस्परं विशेष्यमाणत्वेन ब्रह्मणो विशेष्यत्वस्य कंखंशब्दवाच्ययोर्विशेषणत्वस्य च प्रतीतेः । अतश्च ब्रह्मदृष्टिरूपत्वं नाम ब्रह्मेत्यादाविव ब्रह्मणो विशेषणत्वावश्यम्भावेन सारूप्यादत्र च तदभावान्न दृष्टिविधित्वशङ्कासम्भव इति ।

ननु 'यद्वाव कं तदेव खं यदेव खं तदेव कमि'त्यत्रापि वैषयिकसुखे भूताकाशदृष्टिः भूताकाशे च वैषयिकदृष्टिश्च किं न स्यात् ? अन्यथा खशब्दाभिधेयस्याकाशस्य परब्रह्मत्वासम्भवेन वाक्यार्थनुपपत्तेः । अतः प्रकरणमिदं सर्वमपि ब्रह्मदृष्टिविधिपरमेवेत्याशङ्कायामाह - **एतदुक्तं भवतीति** । अयं त्विह भावः । यदीदं प्रकरणं दृष्टिविधिपरं तदा 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इत्यग्निवचनानन्तरं 'प्राणो ब्रह्म' इत्यस्य 'विजानाम्यहं यत्प्राणो ब्रह्मे'ति ज्ञातत्वं, 'कं ब्रह्मे'त्यंशस्य 'कञ्च तु खञ्च न विजानामी'त्यज्ञातत्वञ्चोक्तं नोपपद्यते, सर्वस्यापि दृष्टिविधित्वाविशेषादिति ।

ननु दृष्टिविधित्वाभावेपि कस्यचिदंशस्य ज्ञातत्वम् अन्यांशस्य चाज्ञातत्वं कथमित्यत्र विजानाम्यहमित्याद्यु-पकोसलवाक्यस्याभिप्रायमाह - **अस्येति** । अर्थात् प्रथमवाक्येन दृष्टिविधित्वशङ्का निराकृता । प्रतीकोपासनस्य मुमुक्षुभिर-कर्तव्यत्वज्ञानं कथमुपकोसलस्य जातमिति चेत्? ब्रह्मणो मुमुक्षूपादेयत्वज्ञानेन तदतिरिक्तप्रतीकस्य मूमुक्षूपास्यत्वाभाव-ज्ञानसद्भावनिश्चयात् । ब्रह्मण एव मुमुक्षूपास्यत्वज्ञानञ्च 'व्याधिभिः प्रतिपूर्णोऽस्मि' इति ब्रह्मप्राप्तिव्यतिरिक्तजन्मजरा-मरणादिभवभयतप्तस्योपकोसलस्य ब्रह्मविद्यालाभार्थमाचार्योपसत्तिबलादवगतम् । जगद्विधरणयोगेनेति प्राणशब्द-व्युत्पत्तिलब्धार्थोक्तिः । शरीरवाचिशब्दस्य शरीरिपर्यन्ताभिधायित्वस्य देवोऽहमित्यादौ उपकोसलेन ज्ञातत्वान्निर्वाहान्तरं 'प्राणशरीरतये'त्युक्तम् । शरीरस्य नियाम्यत्वं लोकसिद्धमिति 'नियन्तृत्वेने'त्युक्तम् ।

एवं 'कं ब्रह्म खं ब्रह्मे'त्यादावपि सामानाधिकरण्यनिर्देशः किं शरीरशरीरिभावनिबन्धन उतान्यपर इति संशयाद-

**तथा सुखाकाशयोरपि ब्रह्मणश्शरीरतया तन्नियाम्यत्वेन विशेषणत्वम्, उतान्योन्यव्यवच्छेदकतया निरतिशयानन्दरूपब्रह्मस्वरूपसमर्पणपरत्वेन वा ; तत्र पृथग्भूतयोश्शरीरतया विशेषणत्वे वैषयिकसुखभूताकाशयोर्नियामकत्वं ब्रह्मणस्स्यादिति स्वरूपावगतिर्न स्यात् । अन्योन्यव्यवच्छेदकत्वेऽपरिच्छिन्नानन्दैकस्वरूपत्वं ब्रह्मणस्स्यादित्यन्यतरप्रकारनिर्दिधारयिषया, 'कञ्च तु खञ्च न विजानामि' इत्युक्तवान् ।**

**उपकोसलस्येममाशयं जानन्तोऽग्नयः, 'यद्वा व कं तदेव खम्, यदेव खं तदेव कम्' इत्यूचिरे । ब्रह्मणः सुखरूपत्वमेवापरिच्छिन्नमित्यर्थः । अतः प्राणशरीरतया प्राणविशिष्टं यद्ब्रह्म, तदेवापरिच्छिन्नसुखरूपं चेति निगमितम्, 'प्राणश्च हास्मै तदाकाशश्चोचुः' इति । अतः, 'कं ब्रह्म खं ब्रह्म' इत्यत्रापरिच्छिन्नसुखं ब्रह्म प्रतिपादितमिति परं ब्रह्मैव तत्र प्रकृतम् ; तदेव चात्राक्ष्याधारतयाऽभिधीयत इत्यक्ष्याधारः परमात्मा ।१६।**

## श्रुतोपनिषत्कगत्यभिधानाच्च । १ । २ । १७ ॥

**श्रुतोपनिषत्कस्य - अधिगतपरमपुरुषयाथात्म्यस्यानुसन्धेयतया श्रुत्यन्तरप्रतिपाद्यमाना अर्चिरादिका**

---

ज्ञातत्वमुपपादयति - **तथेति** । **अन्योन्यव्यवच्छेदकतयेति** । खशब्दो हि विपुलवाची । कशब्दश्च सुखवाची । ततश्च परस्परं विशेषणविशेष्यभावे निरतिशयानन्दरूपं ब्रह्मेति पर्यवसितम् । शरीरिपर्यन्तत्वाभिधाने प्राणो ब्रह्मेत्यादिवद्ब्रह्मणस्तन्नियामकत्वमेव स्यात् । एतदपेक्षितं ब्रह्मस्वरूपज्ञानं न सिद्ध्येत् । द्वितीयपक्षे तु ब्रह्मणोऽपरिच्छिन्नज्ञानरूपत्वसिद्ध्या स्वरूपावगतिसिद्धिः इत्याह - **तत्रेति** । 'यदेष आकाश आनन्द' इत्यादौ ब्रह्मशब्दाभावेपि आकाशशब्दस्यानन्दशब्दसमानाधिकरणस्य वैपुल्यवाचिनो दर्शनेनात्रापि खशब्दो विपुलवाचीति निरतिशयानन्दरूपब्रह्मस्वरूपसमर्पणपरमिदं वाक्यं स्यादित्याशयः ।

**यद्वा व कमिति** । अत्रान्योन्यदृष्टिविधित्वशङ्का न युक्ता । दृष्टिविधित्वेनोक्तस्य 'कं ब्रह्म खं ब्रह्म' इत्यस्याज्ञानेन 'कञ्च तु खञ्च' विजानामीत्युपकोसलेनोक्ते 'यद्वाव तदेव खमि'त्यादिदृष्टिविध्यन्तरस्योत्तरत्वकथनासम्भवात् । न ह्यर्थान्तरदृष्टिविध्यज्ञानं प्रति दृष्टिविध्यन्तरम् उत्तरं भवितुमर्हति । ततायमत्र निर्गलितार्थः । न विजानामीत्यज्ञानवचनात् मुमुक्षुं प्रत्युपदिष्टत्वाद्दृष्टिविध्यन्तरस्योत्तरत्वानुपपत्तेः अस्मद्विद्यामविद्याश्चेति पूर्वप्रस्तुतविद्यादिभिन्नया आत्मविद्यात्वावगमाच्च 'यद्वा व क'मित्यक्ते र्न दृष्टिविधिपरत्वमिति विशेषणतयाऽन्योन्यव्यवच्छेदपरत्वमेवेति । 'यद्वा कमि'त्यादेरर्थमाह - **ब्रह्मण** इति । एवमुक्तयुक्तिभिर्दृष्टिविधित्वासम्भवात् उपक्रमानुगुण्यस्य वक्तव्यत्वाच्च प्राणं चेत्युपसंहारवाक्यस्याविरोधेनार्थमाह - **अत** इति । 'प्राणश्चे'त्येतत् 'प्राणो ब्रह्मे'त्युक्तार्थनिगमनम् । तच्छब्दस्सुखपरः तदाकाशमित्येतत् 'कं ब्रह्म खं ब्रह्मे'त्यस्य निगमनम् ।

ननु 'यद्वाव कं तदेव खं यदेव खं तदेव ख'मित्युक्त्या कखयोरन्योन्यविशेषणविशेष्यभावप्रसङ्ग इति चेदिष्टापत्तेः । नीलत्वोत्पलत्वयोस्त्वन्योन्यविशेषणविशेष्यभावस्त्वनिष्टः, अप्रमाणिकत्वात् । अत्र तु प्रमाणिकत्वान्न तथात्वमिति । सूत्रार्थमुपसंहरति - **अत इति** । कं ब्रह्मं खं ब्रह्मत्यादौ सुखविशिष्ट ब्रह्मभिधानस्य सिध्दत्वेन एषोऽक्षिणि पुरुषो दृश्यत इत्यादावपि प्रकृतस्यैव ब्रह्मणः अभिधानमिति सुखविशिष्टाभिधानादेवचेति सूत्र प्रवृत्तिरित्याशयेनाधिकरणार्थे एतत्सूत्र सांगत्यं दर्शयति - **तदेवेति** । **तदेव** = प्रकृतं ब्रह्मैव । अनेन स्वमते वाक्यभेदाभाव उक्तः ॥

उत्तरसूत्रार्थमाह - **श्रुतोपनिषत्कस्येति** । अर्थकथनार्थं व्यासेन निर्देशः । अर्थं विना केवलोपनिषच्छ्रवणस्य प्रकृतानुपयुक्तवम् अर्चिरादिगतिरहितप्रतीकोपासनादिव्यावृत्तिश्चाभिव्यञ्जयितुम् - **अधिगतपरमपुरुषयाथात्म्यस्येति**

**गतिर्या, तामपुनरावृत्तिलक्षणपरमपुरुषप्राप्तिकरीमुपकोसलाय अक्षिपुरुषं श्रुतवते 'तेऽर्चिषमेवाभिसम्भवन्ति, अर्चिषोऽहः, अह्न आपूर्यमाणपक्षम्' इत्यारभ्य 'चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति। एष देवपथो ब्रह्मपथः। एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' इत्यन्तेनोपदिशति। अतोऽप्ययमक्षिपुरुषः परमात्मा॥ १७॥**

## अनवस्थितेरसम्भवाच्च नेतरः १ । २ । १८॥

**प्रतिबिम्बादीनामक्षिणि नियमेनानवस्थानात्, अमृतत्वादीनाञ्च निरुपाधिकानां तेष्वसम्भवान्न परमात्मन इतरश्छायादिः अक्षिपुरुषो भवितुमर्हति। प्रतिबिम्बस्य तावत्पुरुषान्तरसन्निधानायत्तत्वान्न नियमेनावस्थानसम्भवः। जीवस्यापि सर्वेन्द्रियव्यापारानुगुणत्वाय सर्वेन्द्रियकन्दभूते स्थानविशेषे वृत्तिरिति, चक्षुषि नावस्थानम्। देवतायाश्च, 'रश्मिभिरेषोऽस्मिन् प्रतिष्ठित' इति रश्मिद्वारेणावस्थानवचनाद्देशान्तराव-**

---

भाषितम्। उपनिषच्छब्द उपनिषत्प्रतिपाद्यब्रह्मपरः। ब्रह्मणस्तत्प्रतिपाद्यत्वञ्च 'तं त्वौपनिषदं विद्धी'त्यादौ प्रसिद्धम्। तच्छ्रवणञ्च तद्याथात्म्याधिगम एवेति भावः। उपासनफलभूताया अर्चिरादिगतेः फलतयाऽनुसन्धेयायास्तथाविधत्वं श्रवणाधीनमित्यभिप्रेत्य तस्या उपनिषदन्तरे प्रतिपाद्यमानताञ्चाभिप्रेत्य 'अधिगतब्रह्मण' इति निर्देशं विना **श्रुतोपनिषत्के**ति गुरुतया निर्देशः कृतः। एतत्सूचनायैव - **अनुसन्धेयतया श्रुत्यन्तरप्रतिपाद्यमाने**ति भाषितम्। 'इत्थं विदुर्ये चामी अरण्ये श्रद्धां सत्यमित्युपासते तेऽर्चिषमेवाभिसम्भवन्ति य एवमेतद्विदुः ये चामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिषमभिसम्भवन्ति, सोऽग्निलोकं गच्छति', इत्यादिश्रुतिर्विविक्षिता। 'नावर्तन्त' इत्यंशपर्यालोचनयाऽपुनरावृत्तिलक्षणेत्युक्तम्। 'अक्षिपुरुषं श्रुतवत' इत्यनेनात्रोपदिश्यमानार्चिरादिगतिः अक्षिपुरुषोपासकस्यानुसन्धेयतया फलतया चोक्तेति सूचितम्। अयं भावः - अर्चिरादिगतिः परमपुरुषप्राप्तिकरी तदुपासनफलभूता। तदुपासकानुसन्धेया च तथा श्रुत्यन्तरप्रसिद्धेः। तादृशी च गतिरत्राप्युपदिष्टा। यद्यक्षिपुरुषो न परमात्मा तदा गत्युपदेशो विरुध्येत। अक्षिपुरुषरूपजीवोपासकस्यापि अर्चिरादिगत्या परमपुरुषप्राप्तौ तत्क्रतुन्यायविरोधश्च। अतः परमपुरुषत्वसाधकासाधारणगतिरूपलिङ्गोपदेशादप्यक्षिपुरुषस्य परमात्मत्वं निश्चेयमिति भावः। अत्रार्चिरादिशब्दास्तदधिमातृदेवतापराः। देवैरातिवाहिकैरूह्यमानत्वाद्देवपथः। ब्रह्मप्रापकत्वात् ब्रह्मपथः।

'अन्तर उपपत्तेः' 'स्थानादिव्यपदेशाच्चे'ति पूर्वमन्वयहेतुर्निर्दिष्टः। अथ व्यतिरेकपरस्य, 'अनवस्थितेरसम्भवाच्च नेतर' इति सूत्रस्यार्थमाह - **प्रतिबिम्बादीनामि**ति। कोटित्रयेऽप्यनवस्थितिमुपपादयति - **प्रतिबिम्बस्येति**। तावच्छब्दः पुरुषान्तरसन्निधानायत्तत्वप्रसिद्धिव्यञ्जकः। यद्वा नियमेनावस्थानासम्भवप्रसिद्धिसूचकः। अनेन 'य एव' इति प्रसिद्धवन्निर्देशः प्रतिबिम्बनात्मनि दुर्धर इति सूचितम्। **स्थानविशेषे** = हृदि। 'हृद्ययमात्मा' इत्यात्मनो हृदयस्थत्वेन श्रुतिप्रसिद्धेः। 'नेत्रस्थं जाग्रतं विद्यात् कण्ठे स्वप्नं विनिर्दिशेत्। सुषुप्तं हृदयस्थं तु तुरीयं मूर्धनि स्थितम्' इत्यत्र जाग्रदवस्थापन्नस्य जीवस्य नेत्रस्थत्वकथनं सर्वेन्द्रियस्थत्वप्रदर्शनपरम्। अन्यथा जागरदशायामणुपरिमाणस्य जीवस्य नेत्रमात्रवृत्तित्वे शब्दादिज्ञानानुपपत्त्या पश्यतः पुरुषस्य गमनाद्युचितपादाद्यधिष्ठानानुपपत्तिः। एतदभिप्रेत्यैव 'सर्वेन्द्रियकन्दभूत' इत्युक्तम्।

अत्र कण्ठे स्वप्नं विनिर्दिशेदित्यत्र कण्ठ शब्दः कण्ठसमीपवर्तिनाडीविशेषपरः। अन्यथा 'आसु तदा जाडीषु सुप्तो भवती'ति नाडीनां स्वप्नस्थानत्वबोधकश्रुतिविरोधात्। 'आसु तदा नाडी'ष्विति श्रुतेः स्वप्नविषयत्वमेव नास्तीति

**स्थितस्यापीन्द्रियाधिष्ठानोपपत्तेर्न चक्षुष्यवस्थानम्। सर्वेषामेवैषां निरुपाधिकामृतत्वादयो न सम्भवन्त्येव। तस्मादक्षिपुरुषः परमात्मा ॥** इति अन्तराधिकरणम् ॥

१५. अन्तर्याम्यधिकरणम् ॥ ४ ॥ (बृ.का.५-७, मा.६-७)

(शारी.१-२-१४) **'स्थानादिव्यपदेशाच्च' इत्यत्र,** (बृ.५-७-१८) **'यश्चक्षुषि तिष्ठन्' इत्यादिना प्रतिपाद्यमानं चक्षुषि स्थितिनियमनादिकं परमात्मन एवेति सिद्धं कृत्वा अक्षिपुरुषस्य परमात्मत्वं साधितम्। इदानीं तदेव समर्थ्यते -**

**अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात्। १। २। १९॥**

**काण्वाः माध्यन्दिनाश्च वाजसनेयिनस्समामनन्ति,** (बृ.५-७-६) **'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति, एष त आत्माऽन्तर्याम्यमृतः' इति। एवमम्व्वग्न्यन्तरिक्षवाय्वादित्यदिक्चन्द्रतारकाकाशतमस्तेजस्सु दैवेषु च सर्वेषु भूतेषु, प्राणवाक्चक्षुश्श्रोत्रमनस्त्वग्विज्ञानरेतस्सु आत्मात्मीयेषु च तिष्ठन्तं तत्तदन्तरभूतं तत्तदवेद्यं तत्तच्छरीरकं तत्तद्यमयन्तं कञ्चिन्निर्दिश्य, 'एष त आत्माऽन्तर्याम्यमृत' इत्युपदिश्यते। माध्यन्दिनपाठे तु - 'यस्सर्वेषु लोकेषु तिष्ठन्' 'यस्सर्वेषु वेदेषु, 'यस्सर्वेषु यज्ञेषु' इति च पर्यायाः। 'यो विज्ञाने तिष्ठन्' इत्यस्य पर्यायस्य स्थाने, 'य आत्मनि तिष्ठन्' इति पर्यायः, 'स त आत्माऽन्तर्याम्यमृत' इति च विशेषः। तत्र संशय्यते - किमयमन्तर्यामी**

---

नाशङ्कनीयम्। यदा सुप्तस्स्वप्नं न कथञ्चन पश्यतीत्यनन्तरवाक्यस्य सुषुप्तिस्थानबोधकत्वेन स्वप्नं न कथञ्च पश्यतीति वचनेनच तत्पूर्ववाक्यस्यास्य स्वप्नविषयत्वनिश्चयात्। अतस्स्वप्नविषयश्रुत्यन्तरैकार्थ्यायैतच्छ्रुत्युक्तार्थापरित्योगेन चार्थो वर्णनीयः। हृदयस्थमित्यत्र हृदयशब्देन हृदयगतपरमात्मोच्यते। परमात्मन एव 'सता तोम्य तदा संपन्नो भवती'ति सुषुप्तिस्थानत्वबोधनात्। **तुरीयम्** = उत्क्रान्त्यवस्थजीवम्। जीवस्योत्कान्त्यवस्थायामेव 'तासां मूर्धानमभिनिस्सृतैका तयोर्ध्वमायन्' इति मूर्धसम्बन्धबोधनादिति ध्येयम्। **न चक्षुष्यवस्थानमिति**। देवताविशेषस्य रश्मिद्वारेण चक्षुष्यवस्थानं हि चक्षुस्सम्बन्धित्वं चक्षुर्वशीकरणरूपतन्नियमनमेव वा स्यात्। तावता स्वरूपतोऽवस्थितिर्न सम्भवतीति भावः। अथासम्भवमुपपादयति - **सर्वेषामिति**। निरुपाधिकशब्देन मुक्तजीवव्यावृत्तिः। अधिकरणार्थमुपसंहरति **तस्मादिति**। इत्यन्तराधिकरणम् ॥

अथानन्तराधिकरणसङ्गतिमाह - **स्थानादीति**। **सिद्धं कृत्वेति**। अनेन पूर्वमीमांसाशिक्षितैकोनसहस्राधिकरणन्यायस्सूचितः। स हि एकस्मिन्नधिकरणे विचार्यमाणे तदितराधिकरणसिद्धार्थसद्भावरूपः। अतोऽन्तर्याम्यधिकरणसिद्धं चक्षुषि स्थितिनियमनादेर्भगवन्निष्ठत्वमुपजीव्यैव पूर्वाधिकरणे 'स्थानादिव्यपदेशाच्च' इत्यनेन 'य एषोऽक्षिणि पुरुषो दृश्यत' इत्यत्र प्रतिपाद्यमानश्चक्षुःपुरुषः परमात्मेत्युक्तम्। अत्र तु चक्षुषि स्थितिनियमनादिकर्तुः परमात्मत्वं स्थाप्यत इति भावः। विषयवाक्यं प्रदर्शयति - **काण्वा** इति। **वाजसनेयिनः** शुक्लयजुश्शाखाध्यायिनः। अत्र विषयवाक्यस्य भूयस्त्वादेकं समग्रमुपात्तम्। अन्यान्यप्येतत्सजातीयान्येवेति तदर्थानुवादेनोपयुक्तमन्तिमं वाक्यमाह - **एवमिति**। इत्यधिदैवतमिति पर्यालोचनया दैवेष्वित्युक्तम्। 'तिष्ठन्त'मित्यादिना 'विदन् अन्तरः न वेद शरीरम् अन्तरो यमयती'ति वाक्यानामर्थो विवृतः। माध्यन्दिनपाठे विशेषमाह - **माध्यन्दिनेति**।

**प्रत्यगात्मा, उत परमात्मा - इति । किं युक्तम् ? प्रत्यगात्मेति । कुतः ? वाक्यशेषे, 'द्रष्टा श्रोता' इति करणायत्तज्ञानताश्रुतेः ; एवं द्रष्टुरेवान्तर्यामित्वोपदेशात्, 'नान्योऽतोऽस्ति द्रष्टा' इति द्रष्ट्रन्तरनिषेधाच्चेति ॥**

**एवं प्राप्तेऽभिधीयते - अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात् । अधिदैवाधिलोकादिपदचिह्नि-**

---

ते अन्तर्यामीति प्रत्यागात्मनोपि अन्तर्यामित्वेन श्रुतस्य कथं प्रत्यगात्मत्वमिति शङ्कया पृच्छति - **कुत** इति । परिहरति - **वाक्यशेष** इति । अयं भावः - यथा अक्ताः शर्करा उपदधातीत्युक्ते अञ्जनसाधनं द्रव्यं किमित्याकाङ्क्षायां 'तेजो वै घृत'मिति वाक्यशेषबलात् घृतस्याञ्जनसाधनत्वप्रतीतिः तद्वदत्रापि अन्तर्यामित्वेन निर्दिष्टःक इत्याकाङ्क्षायां 'द्रष्टा श्रोता' इत्यादिवाक्यशेषबलाज्जीव इति निर्णेतव्यम् । द्रष्टृत्वं हि चक्षुरिन्द्रियजन्यसाक्षात्कारवत्त्वम् । श्रोतृत्वञ्च श्रवणेन्द्रिय-जन्यसाक्षात्कारवत्त्वम् । इदञ्च परस्य ब्रह्मणो न सम्भवपि । तस्य करणायत्तज्ञानवत्त्वाभावात् । परः पुमान् हि सर्वज्ञः सत्यसङ्कल्पः करणनिरपेक्षं पश्यति । अत इन्द्रियजन्यज्ञानवत्त्वरूपकरणाधीनसाक्षात्काराादिबोधकद्रष्टृत्वादिपदघटित-वाक्यशेषबलाज्जीव एवान्तर्यामी । अत एव 'ते अन्तर्यामी'ति तच्छब्दनिर्देष्टप्रत्यगात्मनोप्यन्तर्यामीति बोधनं शिला-पुत्रकस्य शरीरं राहोश्शिर इत्यादाविवामुख्यमेवेति ।

नन्वस्तु द्रष्टृत्वादिकं जीवस्य, तावताऽन्तर्यामिणः परमात्मत्वे का क्षतिरित्यत्राह - **एवमिति** । द्रष्टुरिति श्रोतुरप्युप-लक्षणम् । 'अन्तर्याम्यमृतोऽदृष्टो द्रष्टाऽश्रुतः श्रोता' इत्यन्तयार्मिणो द्रष्टुश्चैक्यप्रतीत्या द्रष्टृत्वस्य च जीवगतत्वेन तत्समानाधिकरणान्तर्यामित्वमपि जीवस्यैव स्यादिति भावः । **द्रष्ट्रन्तरनिषेधादिति** । अयमाशयः - नान्योऽतोस्ति द्रष्टेति सामान्यतो द्रष्ट्रन्तरं निषिद्धम् । तच्च किं जीव उत परमात्मेति संशये परमात्मनः करणघटितद्रष्टृत्वस्यासम्भवेन जीवरूपाद्द्रष्टुरन्यस्य परस्यैव द्रष्टृत्वं निषिध्यत इति वक्तव्यम् । न च द्रष्टृत्वं न करणघटितम् । किन्तु विषयघटितमुच्यते । तच्च रूपविषयकसाक्षात्कारवत्त्वम् । एवं श्रोतृत्वादिकमपि शब्दादिविषयधटितमेव । इदञ्च स्वाभाविकसाक्षात्कारवति परमात्मन्यपि सम्भवति । ततश्च 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिनिषेधोपि जीवविषयक एव किं न स्यादिति वाच्यम् । यतो विषयधटितसाक्षात्कारस्य जीवसाधारणत्वेन तस्यापि द्रष्टृत्वात् 'नान्योऽतोस्ति द्रष्टे'ति द्रष्ट्रन्तरनिषेधो न सङ्गच्छते । करणधटितज्ञानस्य तु जीवमात्रवृत्तित्वेन 'नान्य' इति द्रष्टन्तरनिषेधश्च युक्तः । अतो जीव एवान्तर्यामी ।

ननु जीवस्यान्तर्यामित्वे जीवानां बहुत्वेनान्तर्यामिवहुत्वापत्तिः? इष्टत्वात् । अत एव हि प्रतिपर्यायं यच्छब्दावृत्तिः । 'य इमञ्च लोकं परलोकमि'त्यत्रोपक्रमे यच्छब्दप्रयोगस्तु जात्यभिप्रायकः । ननु जीवस्यैवान्तर्यामित्वे, 'आत्मनि तिष्ठ'न्निति निर्देशः कथं सङ्गच्छते ? 'स्वे महिम्नि प्रतिष्ठित इतिवत्गृहाण । 'आत्मनोऽन्तर' इति तु व्यापकवस्त्वन्तराभावाभिप्रायकम् । 'यमयती'त्येतदपि नियन्त्रन्तराभावाभिप्रायकम् । आत्मेश्वरमितिवत् । 'यमात्मा न वेद' इत्यत्र संसृष्टजीवस्य निष्कृष्टजीव-स्वरूपाज्ञानमुच्यते । एवमादित्यचन्द्रादिजीवविशेषान्प्रति अन्तर्यामित्वादिकथनं तत्तद्गणाध्यक्षाणां जीवानां नियन्तृत्वाभिप्रायकम् । वस्तुत आदित्यचन्द्रशब्दौ मण्डलपरौ । एवं देवादिशब्दाः शरीरपराः । अतो जीवविशेषान्प्रति नान्तर्यामित्वमत्रोक्तम् । ननु 'स ते आत्मान्तर्यामी'ति तच्छब्देन सर्वान्तिर्यामिण एकत्वमेवोच्यत इति चेन्न । तच्छब्दस्य तज्जातीयवाचकत्वात् । तथा च 'यः पृथिव्याः अर्न्यामी, तज्जातीयस्त्वं', 'य आपामन्तर्यामी तज्जातीयस्त्व'मित्येवं वाक्यार्थः । नन्वस्तु अन्तर्यामिबहुत्वं 'यः पृथिव्या'मित्यादिषु कस्यचिदणोर्जीवस्य कथमन्तर्यामित्वम् । अन्तर्बहिर्व्याप्य-सम्भवादिति चेन्न, धर्मभूतज्ञानद्वारा तदुपपत्तेरिति ॥

समाधत्ते - **एवमिति** । 'अधिदैवाधिलोकादि'ष्विति सप्तम्यन्तस्यान्वयदौघर्ट्यादर्थमाह - **अधिदैवेति** । एतेन सर्वत्रापि सूत्रे तत्तत्त्वचिह्नितवाक्यप्रतिपाद्यत्वमेव विवक्षितमिति सूचितम् । 'अन्तर्याम्यमृत' इति वाक्यघटकममृतपदम-

**तेषु वाक्येषु श्रूयमाणोऽन्तर्यामी अपहतपाप्मा परमात्मा नारायणः। काण्वपाठसिद्धेभ्योऽधिदैवादिमद्भ्यो वाक्येभ्योऽधिकानि अधिलोकादिमन्ति वाक्यानि माध्यन्दिनपाठे सन्तीति ज्ञापनार्थमधिदैवाधिलोकादिष्वित्युभयोरुपादानम्। तदेवमुभयेष्वपि वाक्येष्वन्तर्यामी परमात्मेत्यर्थः। कुतः ? तद्धर्मव्यपदेशात्। परमात्मधर्मो ह्ययम्, यदेक एव सन् सर्वलोकसर्वभूतसर्वदेवादीन्नियमयतीति। तथा ह्युद्दालकप्रश्नः - 'य इमञ्च लोकं परञ्च लोकं सर्वाणि च भूतानि योऽन्तरो यमयति' इत्युपक्रम्य, 'तमन्तर्यामिणं ब्रूहि' इति। तस्य चोत्तरम्, 'यः पृथिव्यां तिष्ठन्' इत्यारभ्योक्तम्। तदेतत्सर्वान् लोकान् सर्वाणि च भूतानि सर्वान् देवान् सर्वान् वेदान् सर्वांश्च यज्ञान् अन्तः प्रविश्य सर्वप्रकारनियमनं, सर्वशरीरतया सर्वस्यात्मत्वञ्च सर्वज्ञात् सत्यसङ्कल्पात्पुरुषोत्तमादन्यस्य न सम्भवति।**

**तथा हि** (तै. आर. ११-२०) **'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा'**, (तै.आन.६), **'तत्सृष्ट्वा तदेवानुप्राविशत्। तदनुप्रविश्य सच्च त्यच्चाभवत्' इत्यादीन्यौपनिषदानि वाक्यानि परमात्मन एव सर्वस्य प्रशासितृत्वं सर्वस्याऽऽत्मत्वमित्यादीनि वदन्ति। तथा सुबालोपनिषदि,** (७) **'नैवेह किञ्चनाग्र आसीदमूलमनाधारमिमाः प्रजाः प्रजायन्ते। दिव्यो देव एको नारायणः। चक्षुश्च द्रष्टव्यञ्च नारायणः। श्रोत्रञ्च श्रोतव्यञ्च नारायणः'**

---

भिसन्धाय - **अपहतपाप्मेत्युक्तम्**। अनेनापहतपाप्मत्वस्य परमात्मेतरस्मिन्नसम्भवादन्तर्यामिणः परमात्मत्वमेवेति दर्शितम्। सर्वभूतान्तरात्मेति श्रुतिप्रत्यभिज्ञापनाय **नारायण** इत्युक्तम्। अधिदैवादिषु इत्येतावति अधिलोकादिष्वित्येतावति वा सूत्रे पर्याप्ते सत्यधिकोपादानं किमर्थमिति शङ्कां परिहरति - **काण्वेति**। माध्यन्दिनपाठेऽधिकाधिलोकादिपर्यायः श्रुतः। काण्वपाठे तदभावेनोभयोः पाठयोर्विषयभेदशङ्का स्यात्। अतस्तयोरेकविषयत्वप्रदर्शनार्थमुभयसाधरणबहुपर्यायसूचकमधिदैवपदम्। अनुक्तमन्यतो ग्राह्यमिति न्यायेन माध्यन्दिनपाठश्रुतपर्यायस्य काण्वपाठेऽनुक्तस्यापि ग्रहणं विवक्षितमत्रेति ज्ञापकमधिलोकपदोपादानमिति भावः। हेत्वर्थं विवृणोति - **परमात्मेति**। नन्वेकस्यैवेदं नियमनमिति कथमवगम्यत इत्यत्राह - **तथेति**। 'तमन्तर्यामिणं बूहि' इत्येवं हि उद्दालकप्रश्न इत्यर्थः। अत्र 'इमं परं सर्वाणि य' इत्युक्त्या सर्वलोकसर्वभूतादिनियमनकर्तृत्वमेकस्यैवेति प्रतीयते। स च क इत्येवोद्दालकप्रश्न इति भावः।

नन्वस्तु उद्दालकवाक्ये अन्तर्यामिण एकत्वप्रतीतिः, अथापि यः पृथिव्यामित्यादिवाक्ये अन्तर्यामिबहुत्वप्रतीतिरस्तु इत्यत्राह - **तस्य चोत्तरमिति**। प्रश्नोत्तरयोरैककण्ठ्यादुभयत्राप्येकस्यैव नियमनादिकं प्रतीयत इत्यभ्युपेयमिति भावः। नन्वस्तु प्रश्नोत्तरयोरैकरूप्यम्, अथाप्येकस्य जीवस्यैवान्तर्यामित्वं किं न स्यादित्यत्राह - **तदेतदिति**। अत्र वेदयज्ञशब्दः तदभिमानिदेवतापरः। गुणक्रिययोरद्रव्यत्वेन शरीरत्वाभावात्। वक्ष्यते च य द्रव्यमित्यदिना भावे द्रव्यत्वघटितमेव शरीरलक्षणम्। 'यस्सर्वेषु वेदेषु' 'यस्सर्वेषु यज्ञेषु' इति श्रुतेश्चान्यथासिद्ध्यर्हत्वेन गुणक्रिययोः शरीरत्वावगमकत्वं नेति बोध्यम्। सर्वज्ञात्सत्यसङ्कल्पादिति हतुगर्भं। नियाम्य सर्ववस्तुपरिज्ञानवतः अमोघसङ्कल्पस्यैव हि सर्वनियमनसम्भवः। न हि जीवः सर्वज्ञः सत्यसङ्कल्पो वा। नियामकस्यान्तर्यामिणो ब्रह्मत्वे तु कथञ्चिज्जीवमादायोपपत्तिश्शक्यकरणा। अत्र च नियन्ताऽन्तर्यामी एक एवेति कथं जीवस्य तत्सम्भव इति भावः।

एवमत्रोक्तं सर्वात्मत्वादिकं परमात्मन एव धर्म इत्यत्र श्रुत्यन्तरसंवादं दर्शयति - **तथा हीति**। परमात्मनस्सर्वनियन्तृत्वे तदितरस्य सर्वस्यापि नियाम्यत्वसिद्धे र्नियन्तृत्वं तदितरस्यैव सम्भवतीत्याशयेन परमात्मन एवेत्यवधारणनिर्देशः। उदाहृतश्रुत्यैकार्थ्याय 'सर्वभूतान्तर्यामी नारायण एवे'ति साक्षाद्बोधकं श्रुत्यन्तरं प्रदर्शयति - **तथेति। इतीत्यस्य** इति वाक्येनेत्यर्थः। **तथा च** इत्यादि। 'यस्य मृत्यु...नारायण' इति वाक्येन...नियन्तृत्वं च प्रतिपाद्यत इत्यन्वयः।

**इत्यारभ्य, 'अन्तश्शरीरे निहितो गुहायामज एको नित्यः । यस्य पृथिवी शरीरं यः पृथिवीमन्तरे सञ्चरन् यं पृथिवी न वेद, यस्यापश्शरीरम्' इत्यादि । 'यस्य मृत्युश्शरीरं यो मृत्युमन्तरे सञ्चरन् यं मृत्युर्न वेद, एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' इति परस्यैव ब्रह्मणस्सर्वात्मत्वं सर्वशरीरत्वं सर्वस्य नियन्तृत्वञ्च प्रतिपाद्यते । स्वभाविकं चामृतत्वं परमात्मन एव धर्मः ।**

---

अन्तयार्मिपदसमभिव्याहृतामृतपदोक्तोऽमृतत्वधर्म एव जीवव्यावर्तक इत्याह - **स्वाभाविकमिति** । कालविशेषनिर्देशं विना 'अमृत' इत्युक्त्या स्वाभाविकत्वलाभ इति भावः ।

अथ वाक्यशेषानुगुण्यसम्पादनाय तत्रोक्तं द्रष्टृत्वादिकं परिष्कर्तुमादौ प्रमेयं शोधयति - **न चेति** । तर्हि कीदृशं द्रष्टृत्वमित्यमाह - **अपि त्विति** । स्वाभाविकसार्वकज्ञवत्वात्स्वाभाविकसत्यसङ्कल्पवत्वाच्च स्वत एव दृष्टृत्वमित्यर्थः । स्वरूपप्रयुक्तसार्वज्ञयादिमत्त्वात् इन्द्रियकरणानपेक्षं दृष्टृत्वादिकमिति यावत् । अयं भावः - ईश्वरज्ञानसामान्यस्य हेत्वन्तरानपेक्षत्वाद्द्रष्टृत्वादिरूपसाक्षात्कारविशेषोपि हेत्वन्तरनिरपेक्ष इति । सर्वस्य ब्रह्मात्मकत्वात् त्वमपि ब्रह्मात्मक इतिवदत्र सामान्यधर्मयोगस्य हेतुतयोपन्यासः । यद्वा स्वभावशब्दो धर्मभूतज्ञानपरः । एवकारोऽदृष्टकरणनैरपेक्ष्यद्योतकः । स्वभावत एव द्रष्टृत्वादिकमित्यन्वयः । तत्र हेतुः स्वतस्सर्वज्ञत्वम् । स्वरूपप्रयुक्तसार्वज्ञयत्वात् इतरानेपेक्षधर्मभूतज्ञानेन द्रष्टृत्वमित्यर्थः । यद्वा स्वभावत इत्यस्य हेतुनिर्देशपूर्वकं विवरणं सर्वज्ञत्वात्सत्यसङ्कल्पत्वाच्च स्वत एवेत्यनेन क्रियते । यद्यपि सर्वज्ञंस्य सत्यसङ्कल्पस्य मुक्तस्यापि करणानपेक्षद्रष्टृत्वादिकमस्ति । अत एव 'त्वक् च दृक्च निपिपासति जिह्वा' इति विनेन्द्रियव्यवस्थां मुक्तावनुभव आचार्यैः प्रादर्शि, अथापि मुक्तस्येतरसङ्कल्पानधीनेन्द्रियाद्यनपेक्षसाक्षात्काराभावात् व्यावृत्तिः । एतदभिज्ञापेणैव वा स्वत एव स्वभावत एवेत्युक्तम् । ततश्च सर्वज्ञत्वात्सत्यसङ्कल्पत्वाच्च इतरसङ्कल्पानधीनेन्द्रियाद्यनपेक्षं द्रष्टृत्वादिकं परमात्मन एवेत्यर्थः ।

ननूक्तसाध्याभाववति मुक्ते हेतुसत्त्वेनोक्तहेतोर्व्यभिचारः । मैवम् । स्वाभाविकसर्वज्ञत्वादेर्हतूकरणात् । वस्तुतस्सर्वज्ञत्वमात्रं हेतुः, न तु स्वाभाविकत्वघटितम् । साध्यं तु इन्द्रियाद्यनपेक्षज्ञानवत्त्वमेव । इदञ्च मुक्तादिसाधारणमिति न व्यभिचारः । नन्वेवं सति वाक्यशेषोक्तं द्रष्टृत्वं मुक्तसाधारणमिति जीवस्यान्तर्यामित्वशङ्कानिराकरणं न स्यादिति चेन्न । 'तद्धर्मव्यपदेशा'दिति प्रतिपादितधर्माणां तस्मिन्नसम्भवादेव तद्व्यावृत्तेः । करणानपेक्षज्ञानविरहिणः परमात्मनो वाक्यशेषोक्तद्रष्टृत्वस्योपपादनीयत्वाच्च । वस्तुतो वाक्यशेषे द्रष्टा इत्यनेन करणानपेक्षरूपादिसाक्षात्कारबोधनेपि उपाधिनिर्देशाभावेन तस्येतरसङ्कल्पानधीनत्वस्य स्वाभाविकत्वावगमात्तादृशद्रष्टृत्वस्य मुक्तेऽप्यसम्भवो बोध्य इत्यलम् । कर्मेन्द्रियनैरपेक्ष्यबोधनाय सत्यसङ्कल्पत्वादित्युक्तम् । उक्तार्थे प्रमाणमाह - **तथा चेति** । अचक्षुस्सन्नपि पश्यतीत्युक्त्या इन्द्रियानपेक्षज्ञानवत्त्वं सिद्धमिति भावः । श्रुतौ 'जवनो गृहीते'ति न क्रमनिर्देशः । बुद्धिस्थात्वात् 'जवन' इति प्रथमं निर्दिष्टम् । 'स्वाभाविकी ज्ञानबलक्रिया चे'त्यत्रेतरसङ्कल्पानधीनत्वमुक्तम् । अत्र करणानपेक्षत्वमुक्तमित्युभयत्र प्रमाणद्योतनाय समुच्चायार्थश्चकारः । यद्वा तत्रैव स्वाभाविकत्वं सामान्यत इतरानपेक्षत्वरूपमिति तादृशश्रुतिसमुचायकश्चकारः ।

ननु 'अदृष्टो द्रष्टा अश्रुतः श्रोता' इत्यादौ श्रवणमनननिदिध्यासनानि हि प्रत्यभिज्ञायन्ते । अतः श्रवणादिकर्तुरेवान्तर्यामित्वम् इति चेन्न । उक्तधर्मान्यथानुपपत्त्या परमात्मनोऽन्तर्यामित्वावश्यकत्वेन तस्य च 'न दृष्टे र्द्रष्टारं पश्येः न श्रुतेः श्रोतारं शृणुयाः' इत्यादिना श्रवणादिकर्तृत्वनिषेधात् प्रत्युत द्रष्टव्यः श्रोतव्य इत्यादिना तत्कर्मत्वबोधवाच्च, पश्यत्यचक्षुरित्यादि श्रुतिप्रसिद्धं रूपादिसाक्षात्कर्तृत्वमेवात्र बोध्यते इत्यङ्गीकरणीयमिति नानुपपत्तिः । नन्वचक्षुष्कस्य कथं पश्यतीत्युक्तं द्रष्टृत्वम् । द्रष्टृत्वं हि करणायत्तज्ञानत्वम् । तच्च परस्मिन् बाधितम् । अतो द्रष्टा श्रोता इत्याद्युक्तं दृष्टृत्वमप्य-

**न च परस्यात्मनः करणायत्तं द्रष्टृत्वादिकम्; अपि तु स्वभावत एव सर्वज्ञत्वात्सत्यसङ्कल्पत्वाच्च स्वत एव। तथा च श्रुतिः,** (श्वे. ३-१९) **'पश्यत्यचक्षुस्स शृणोत्यकर्णः। अपाणिपादो जवनो ग्रहीता' इति। न च दर्शनश्रवणादिशब्दाः चक्षुरादिकरणजन्मनो ज्ञानस्य वाचकाः; अपि तु रूपादिसाक्षात्कारस्य। स च रूपादिसाक्षात्कारः कर्मतिरोहितस्वाभाविकज्ञानस्य जीवस्य चक्षुरादिकरणजन्मा; परस्य तु स्वत एव। 'नान्योऽतोऽस्ति द्रष्टा' इत्येतदपि, पूर्ववाक्योदितान्नियन्तुर्द्रष्टुरन्यो द्रष्टा नास्तीति वदति। 'यं पृथिवी न वेद,' 'यमात्मा न वेद' इत्येवमादिभिर्वाक्यैः पृथिव्यात्मादिनियाम्यैरनुपलभ्यमान एव नियमयतीति यत् पूर्वमुक्तम्, तदेव 'अदृष्टो द्रष्टा, अश्रुतः श्रोता' इति निगमय्य, 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिना तस्य नियन्तुर्नियन्त्रन्तरं निषिध्यते॥**

**'एष त आत्मा' 'स त आत्मा' इति च 'ते' इति व्यतिरेकविभक्तिनिर्दिष्टस्य जीवस्यात्मतयोपदिश्यमानोऽन्तर्यामी न प्रत्यगात्मा भवितुमर्हति ॥१९॥**

---

सम्भवीति जीव एव वाक्यशेषानुगुण्यमित्यत्र द्रष्टृत्वस्य प्रवृत्तिनिमित्तं सर्वप्रयोगसाधरणं वक्तुं परोक्तं प्रवृत्तिनिमित्तं दूषयति - **न चेति**। द्रष्टृत्वं विषयघटितमेव सर्वप्रयोगसाधारणं, न तु करणधटितम्। अन्यथा करणानपेक्षज्ञाने ब्रह्मणि द्रष्टृत्वादिव्यवहारानुपपत्तेः। अतो वाक्यशेषे विषयधटितद्रष्टृत्वादीनामपि ग्रहणसम्भवेन परमात्मनि तेषां सम्भवेन न कश्चिद्दोषः। यदि तु करणघटितमेव द्रष्टृत्वं शाब्दं स्यात्तदा युज्येतापि जीवत्वाशङ्का। न च तदस्ति।

ननु विषयघटितमेव द्रष्टृत्वमत्र ग्राह्यमित्यत्र किं नियामकमिति चेन्न तस्यैव सर्वप्रयोगसाधारणत्वेन प्रवृत्तिनिमित्तत्वात्प्रथमत एव धीस्थत्वात्। अनन्यथासिद्धोक्तगुणानामन्यथानुपपत्त्याऽन्तर्यामिणः परमात्मत्वनिश्चयेऽन्यथासिद्ध्यर्द्धवाक्यशेषगतद्रष्टृत्वादीनां विषयघटितानामेव ग्राह्यत्वौचित्याच्चेति। **द्रष्टा** = रूपसाक्षात्कर्ता। **श्रोता** = शब्दसाक्षात्कर्ता। **मन्ता** = मानसमननाख्यविचारविषया ये तेषां साक्षात्कर्ता। **विज्ञाता** = बुध्याऽध्यवसेया ये तेषां साक्षात्कर्ता। पाकं पचतीतिवत् पौनरुक्त्यपरिहारः। घटद्रष्टेत्यादौ घटविषयकसाक्षात्कारवानिवार्थः। अथोक्तस्य प्रवृत्तिनिमित्तस्योभयसाधारणतां प्रदर्शयन् तत्र जीवपरयोः करणानपेक्षत्वतदपेक्षत्वाभ्यां वैषम्यं दर्शयति - **स चेति**। स्वाभाविकज्ञानस्येत्यनेन जीवस्यापि मुक्तिदशायामिन्द्रियानपेक्षज्ञानवत्त्वमस्तीति सूचितम्। परन्तु कर्मतिरोहितत्वात्सम्प्रति करणापेक्षम्। अतो दर्शनश्रवणादीनां करणसापेक्षत्वे कर्मवश्यत्वमुपाधिरिति भावः। कर्मतिरोहितेत्यादिना उपाधेः साध्यव्यापकत्वं दर्शितम्। 'परस्य तु' इत्यनेन पक्षावृत्तित्वं दर्शितम्। तुशब्दो ह्यकर्मवश्यत्वरूपवैलक्षण्यं द्योतयति॥

ननु वाक्यशेषोक्तद्रष्टृत्वादीनामुभयसाधारणत्वेन 'नातोऽतोस्ति द्रष्टे'ति द्रष्ट्रन्तरनिषेधः कथं सङ्गच्छते? उक्तद्रष्टृत्वाश्रयस्य तद्विलक्षणस्य जीवस्य सत्त्वात्। अतो निषेधानुगुण्येनोक्तं द्रष्टृत्वं करणधटितमेव निर्वाच्यमित्याशङ्कां परिहरति - **नान्योऽत** इत्यादिना। पूर्ववाक्योदितनियन्तुरित्यनेन अतश्शब्दार्थो विवृतः। अयं भावः - निषेधो हि प्रकृतेतरविषयकः। पूर्वन्तु नियन्तृत्वद्रष्टृत्वाश्रयः प्रकृतः तत्र नियन्तृत्वं कण्ठोक्तं द्रष्टृत्वं त्वार्थम्। अत्र तु द्रष्टृत्वं कण्ठोक्तं नियन्तृत्वमार्थम्। अतश्चातश्शब्दस्वारस्याद्द्रष्टृत्वनियन्तृत्वविशिष्टपरमात्मापेक्षयाऽन्यः परमात्मनाऽवेद्यस्तन्नियामकः कश्चिन्नास्तीति श्रुत्यर्थः। एवञ्च जीवस्य द्रष्टृत्वेपि परमात्मावेद्यत्वतन्नियामकत्वाभावेन न निषेधोऽनुपपन्न इति। इदमेव विवृणोति - 'यं पृथिवी'त्यादिना। सर्वत्र प्रसिद्ध्यधिकरणे 'शब्दविशेषादि'त्यनेन व्यतिरेकनिर्देशस्य हेतूकृतत्वात् तस्यात्रापि सम्भवेन सूत्रकृदभिमतत्वमनुसन्धायाह - **एष त** इति। **व्यतिरेकविभक्तिनिर्दिष्टस्येति**। अत्र सर्वपर्यायेपि एष इत्यन्तर्यामिणः प्रथमान्ततया 'ते' इति जीवस्य षष्ट्यन्ततया च निर्देशाद्भेदसिद्धिः। न च व्यतिरकनिर्देशोऽन्यथा नेयः,

## न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च ॥ १-२-२० ॥

**स्मार्तं - प्रधानम्। शारीरो जीवः। स्मार्तश्च शारीरश्च नान्तर्यामी ; अतद्धर्माभिलापात् - तयोरसम्भावितधर्माभिलापात्। स्वभावत एव सर्वस्य द्रष्टृत्वम्, सर्वस्य नियन्तृत्वम्, सर्वस्याऽऽत्मत्वम्, स्वत एवामृतत्वञ्च तयोर्न सम्भावनागन्धमर्हति। एतदुक्तं भवति - यथा स्मार्तमचेतनं सर्वज्ञत्वनियन्तृत्वसर्वात्मत्वादिकं नार्हति, तथा जीवोऽपि, अतद्धर्मत्वादिति। अमीषां गुणानां परमात्मन्यन्वयः, प्रत्यगात्मनि व्यतिरेकश्च सूत्रद्वयेन दर्शितः ॥ २० ॥**

**निरपेक्षश्च हेत्वन्तरमाह -**

## उभयेऽपि हि भेदेनैनमधीयते १।२।२१॥

**उभये - माध्यन्दिनाः काण्वाश्च, अन्तर्यामिणो नियाम्यत्वेन वागादिभिरचेतनैस्समम् एनं शारीरमपि विभज्याधीयते - 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरं य आत्मानमन्तरो**

---

प्रमाणाभावात्। अपवादकाभावात्। प्रत्युत सर्वज्ञत्वादिगुणानां जीवेऽसम्भवेन व्यतिरेकनिर्देशस्यान्यथाकरणे बाधकसत्त्वाच्च। पृथिव्यादिनियमनकर्तुस्तत्तज्जीवस्य विलक्षणत्वेन 'एष त अन्तर्यामी'ति याज्ञवल्क्येनोद्दालकस्य सर्वान्तर्यामित्वकथनमनुपपन्नम्। तज्जातीयत्वार्थकल्पनन्तु क्लिष्टम्। प्रश्नवाक्ये एकस्य सतः सर्वान्तर्यामिणः पृष्टत्वात् एकस्यैवान्तर्यामित्वावश्यकत्वात्। यच्छब्दावृत्तिस्त्वेकत्वेपि घटते। परन्तु तदावृत्तिः एकैकस्मिन्नपि वस्तुनि परिपूर्णत्वेन नियन्तृतया स्थितिज्ञापनार्था। एवं देवादिशब्दानां शरीरमात्रपरत्वकल्पनं भवतामस्वरसम्। 'आत्मनि तिष्ठन्नि'त्यादौ गतिसम्भवे 'स्वे महिम्नि प्रतिष्ठितं' इत्यादाविवार्थकल्पनमप्यस्वरसमेव। तदा ह्यात्मशब्दस्य स्ववाचित्वं वक्तव्यम्। तच्च न युक्तम्। 'यो विज्ञाने तिष्ठन्नि'ति काण्वपाठैकार्थ्येनार्थस्य वर्णनीयत्वात्। विज्ञानशब्दस्य स्ववाचित्वाभावात्। अतो नान्तर्यामिबहुत्वप्रतीतिः। नापि जीवानां तथात्वमिति दिक्।

ननु सूत्रघटकपदार्थं उत्तरसूत्रार्थं वक्तुमाह - **प्रधानमिति**। 'अतद्धर्माभिलापादि'त्यत्र तच्छब्दस्य तद्धर्मव्यपदेशादित्यत्रेव ब्रह्मपरत्वेऽसङ्गतिः। प्रधानपुरुषपरत्वेपि तद्वृत्तिधर्माभिलापाभावदित्यर्थकत्वे 'द्रष्टा श्रोते'त्यनेन तद्धर्मस्योक्तत्वात् हेत्वसङ्गतिरित्यभिप्रेत्यार्थमाह **तयोरिति**। सूत्रे 'स्मार्तं' 'शारीर' इत्युक्तत्वेन प्रकृतत्वात्तयोरेव तच्छब्दवाच्यत्वम्। न तद्धर्मः अतद्धर्मः, तदभिलापादिति व्युत्पत्त्याऽसम्भावितधर्माभिलापादित्यर्थसिद्धिश्चेति भावः। असम्भावितत्वमेवोपपादयति - **स्वभावत** इति। ननु स्मार्तस्य कथं निषेध्यत्वम्, अप्रसक्तत्वादित्यत्राशयमाह - **एतदुक्तमिति**। दृष्टान्तार्थमुक्तमिति भावः। अन्यथा सूत्राकारः 'अतद्धर्माभिलापात् न स्मार्तं शारीरश्चे'ति निर्दिशेत्। अत एवं निर्देशं विना, अन्यथानिर्देशात्, 'न च स्मार्तं' - न हि प्रधानमन्तर्यामीति भवन्तोपि प्रतिवदन्ति। तत्र कुत इति हेतुप्रश्ने अतद्धर्माभिलाप एव हेतुरिति वदन्ति। तर्हि तद्वदेवातद्धर्माभिलापान्न जीवोपि इति वयं ब्रूम इति सूत्रतात्पर्यमिति भावः। ननु प्रथमसूत्रे परमात्मासाधारणधर्मा हेतुतया उक्ताः, अत्र च प्रकृतिपुरुषासम्भावितधर्मा हेतूकृताः ते च परमात्मासाधरणधर्मा एवेति सूत्रयोः पौनरुक्त्यमित्यत्राह - **अमीषामिति**। गुणान्वयस्य हेतुत्वं पूर्वत्र। अत्र गुणाव्यतिरेकस्येति भिदा इति भावः।

उत्तरसूत्रमवतारयति - **निरपेक्षमिति**। व्यतिरेकनिर्देशनिरपेक्षमित्यर्थः। **उभये** इति व्याख्येयम्। सूत्रार्थमाह- **अन्तर्यामिण** इति। **नियाम्यत्वेनेति** भेदकधर्माकारो निर्दिष्टः। **वागादिभिरचेतनैस्सममिति**। अनेन जीवान्तर्यामिणो र्भेदकधर्मपुरस्कारेण निर्देशेप्यैक्याभ्युपगमे वागाद्यचेतनैक्यमप्यापद्येतान्तर्यामिण इति प्रतिब्रान्दी दर्शिता भवति। **शारीरं**

**यमयति, स त आत्माऽन्तर्याम्यमृत' इति माध्यन्दिनाः, 'यो विज्ञाने तिष्ठन्' इत्यादि च काण्वाः परमात्म-नियाम्यतया तस्माद्विलक्षणत्वेनैनमधीयत इत्यर्थः । अतोऽन्तर्यामी प्रत्यगात्मनो विलक्षणोऽपहतपाप्मा परमात्मा नारायण इति सिद्धम् ॥ २१ ॥** इति अन्तर्याम्यधिकरणम् ॥ ४ ॥

१६. अदृश्यत्वादिगुणकाधिकरणम् ॥ ५ ॥ (मुण्डक.)

**आथर्वणिका अधीयते -** (मु.१-१-५,६) **'अथ परा, यया तदक्षरमधिगम्यते । यत्तदद्रेश्यमग्राह्यमगोत्रम-वर्णमचक्षुश्श्रोत्रं तदपाणिपादम् । नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीरा' इति ; तथोत्तरत्र,** (मु.२-१-२) **'अक्षरात्परतः परः' इति । तत्र सन्दिह्यते - किमिहादृश्यत्वादिगुणकमक्षरम्, अक्षरा-**

= जीवम् । ननु भेदेनाध्ययनं कथं भेदवाचकशब्दाश्रवणादित्यत्राह - **परमात्मेति** । 'य आत्मानमन्तरो यमयती'त्युक्त्या जीवात्मनोऽन्तर्यामिनियाम्यत्वरूपभेदकधर्मश्रवणात्तस्य चापवादकाभावात्तयोर्भेदरूपवैलक्षण्यं सिद्धमिति भावः । एवमात्मनि तिष्ठन् इति व्यतिरेकनिर्देशात्तदस्वारस्येऽपवादकसत्वाच्च भेदसिद्धिरिति चाभिप्रायः । एवं सूत्रार्थमुक्त्वा अधिकरणार्थमुपसंहरति - **अत** इति । 'अपहतपाप्मे'त्यादिना सुबालोपनिषत् स्मारिता । 'सर्वत्रास्ते सर्वशरीरी न नच सर्वः सर्वं वेत्त्येवेह न यं वेत्ति हि सर्वः । सर्वत्रान्तर्यामितयेत्थं यमयन् यः तं संसारध्वान्तविनाशं हरिमीडे' इति शङ्कर-भगवत्पादानां श्लोकोऽत्रानुसन्धेयः ॥ इत्यन्तर्याम्यधिकरणम् ॥

अदृश्यत्वादिगुणकाधिकरणम् ।

देवानां प्रथमजः जगत उत्पादकः रक्षकश्च ब्रह्मा सर्वविद्याधारभूतां ब्रह्मविद्यां स्वज्येष्ठपुत्रायाथर्वाय उपदिदेश । सा अङ्गिर-भरद्वाज-सत्यवाहमूलम् अङ्गिरस्निकटे समागता । शौनको महान् विधिपूर्वमङ्गिरसं प्रणम्य पप्रच्छ । कस्य विज्ञाने सर्वं विदितं स्यादिति । तस्मै उपदिष्टेयं मुण्डकोपनिषत् । सान्तमस्या उपनिषद उपदेष्टा अङ्गिरसाः । अस्य प्राचार्यः अङ्गिरनामकोऽथर्वशिष्यः । अङ्गिर इत्यस्यैव अङ्गिरसा इत्यपि नाम । अथर्वशिखानामकोपनिषदारम्भे पिप्पलादपुत्रः अङ्गिरसाः अथर्वशिष्य इति ज्ञायते । अथर्वोपदेशः अथर्वशिखा । अथर्वशिष्यस्य पिप्पलादस्य उपदेशः प्रश्नोपनिषत् । अथर्वशिष्यः(अङ्गिरनामकः)अङ्गिरसप्रशिष्यभूताङ्गिरसोपदेशभूता इयं मुण्डकोपनिषत् । एवमस्य वेदान्तस्योपदेशपरम्परा ।

परविद्या, अपरविद्या इति विद्या द्विविधा । वेदतदङ्गोपाङ्गाः अपरविद्या । एतत्पठनेन सञ्जातविशदब्रह्मज्ञानमपर-विद्या । अक्षरब्रह्मसाक्षात्कारः परविद्या । तत्राक्षरब्रह्मविचारः अत्तृधिकरणे क्रियते । **तदक्षरमिति** । **अद्रेश्यं** = इन्द्रियादृश्यम् । **अग्राह्यम्** = अनुमानाद्यवेद्यम् । चक्षुरिन्द्रियावेद्यम् । इन्द्रियान्तरावेद्यमिति वार्थः । ज्ञानेन्द्रियाविषयः कर्मेन्द्रियभूतपाण्यादि-कार्यहानोपादानाद्यविषय इति वार्थः । **अवर्णं** = ब्राह्मणत्वादिवर्णरहितम् । रूपादिरहितं वा । **अचक्षुश्श्रोत्रं** = ज्ञानेन्द्रिय-कर्मेन्द्रियशून्यम् । व्यापि सूक्ष्मं नाशरहितं सर्वकारणं तत् । एतस्य साक्षात्कारः ज्ञानिनामेव । एतदपेक्षया नोत्कृष्टं वस्त्वन्तरमस्ति । इदमुपरि स्थिरं सत् अधश्च व्याप्तम् । यथा ऊर्णनाभिः स्वशरीरात् सूत्राण्युत्सृज्य तत्र प्रविश्य उषित्वा पुनः सूत्रं ग्रसते । तथैवेदमप्यक्षरं जगत्सृजति, अन्तः प्रविशति, ग्रसते च । सृष्टिस्थितिलयकारणभूतमिदं वस्तुसर्वज्ञत्व-सर्वशक्तित्वादिविशिष्टमत्युपपादितम् ।

अत्र 'तदक्षरम्' इत्यत्राक्षरशब्दार्थे 'अक्षरात्परतः पर' इति द्वितीयपरशब्दार्थे च विचारः । अन्तर्याम्यधिकरणे 'न च स्मार्तमि'ति सूत्रे 'अदृष्टो द्रष्टा' इति श्रुतिमुपजीव्य द्रष्टृत्वरूपचेतनधर्मोपदेशात्परमात्मपरत्वं स्थापितम् । अस्मिन्वाक्ये चेतनधर्माणामश्रूयमाणत्वात् अक्षरं प्रधानमेव भवितुमर्हति तस्मिन्नदृश्यत्वादिनिषेधबलादपि । एतेनादृश्यत्वादेः

**त्परतः परश्च प्रकृतिपुरुषौ, अथोभयत्र परमात्मैवेति । किं तावत्प्राप्तम् ? प्रकृतिपुरुषाविति । कुतः ? अस्याक्षरस्य** (बृ.५-७-२३) **'अदृष्टो द्रष्टा' इत्यादाविव न द्रष्टृत्वादिश्चेतनधर्मविशेष इह श्रूयते ; 'अक्षरात्परतः परः' इति च सर्वस्माद्विकारात्परभूतादक्षरादस्मात्परः क्षेत्रज्ञसमष्टिपुरुषः प्रतिपाद्यते ।**

**एतदुक्तं भवति - रूपादिमत्स्थूलरूपाचेतनपृथिव्यादिभूताश्रयं दृश्यत्वादिकं प्रतिषिध्यमानं पृथिव्यादि-सजातीयसूक्ष्मरूपाचेतनमेवोपस्थापयति । तच्च प्रधानमेव । तस्मात्परत्वश्च समष्टिपुरुषस्यैव प्रसिद्धम् । तदधिष्ठितश्च प्रधानं महदादिविशेषपर्यन्तं विकारजातं प्रसूत इति तत्र दृष्टान्ता उपन्यस्यन्ते,** (मु.१-१-७), **'यथोर्णनाभिस्सृजते गृह्णते च यथा पृथिव्यामोषधयस्सम्भवन्ति । यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात् सम्भवतीह विश्वम्' इति । अतोऽस्मिन् प्रकरणे प्रधानपुरुषावेव प्रतिपाद्येते - इति ।।**

**एवं प्राप्ते ब्रूमः - अदृश्यत्वादिगुणको धर्मोक्तेः - अदृश्यत्वादिगुणकः अक्षरात्परतः परश्च परमपुरुष**

---

साधारणधर्मत्वाच्चेतनधर्मविशेषाश्रवणं केवलं कथं प्रधानसाधकमित्यपि निरस्तम् । अदृश्यत्वादेः प्रधान एव सम्भवात् । अदृष्टत्वं यथा प्रधानस्य तथाऽदृश्यत्वमपि । अदृष्टमित्यस्य सार्वकालिकदर्शनाविषयत्वमर्थः । अर्हार्थीय तृजन्तपदम । अद्रेश्यमित्यपि कृत्प्रत्ययान्तत्वादर्हार्थम् । अतोऽदृष्टत्वमदृश्यत्वमुभयमेकार्थम् । द्रष्टृत्वादिचेतनासाधारणपदं नात्र श्रुतम् । अतोऽचेतनव्यावृत्तिः कृता । अत्र तदभावादचेतनव्यावृत्तिर्न सुवचा । दृश्यत्वनिषेधो हि दृश्यत्वाश्रयवस्तुसजीय-वस्तुन्येवोपपाद्यम् । न दृश्यम् अदृश्यमिति हि व्युत्पत्तिः । न ब्राह्मणोऽब्राह्मण इत्युक्तौ ब्राह्मणादिसजातीयक्षत्रियाणामेव प्रत्यासन्नानां बोधो जायते न तु श्वपचपश्वादीनाम् । अबालः अकृश इत्युक्तेऽवस्थान्तराश्रये तस्मिन्नेव धर्मिणि बोधं जनयेयुः न त्वन्यधर्मिणि । अतोऽदृश्यमित्युक्ते दृश्यत्वाद्यवस्थावत्वेन यद्दृष्टं तस्मिन्नेवावस्थान्तरापन्ने प्रतीतिं जनयेत् । दृश्यत्वं यत्र गृहीतं तस्मिन्नेन प्रत्यासत्त्या तदभावो शीघ्रगृहीतो भवति । तदक्षरं विहायान्यस्य जीवस्य वा परस्य वा असन्निकृष्टस्य ग्रहणं न युक्तम् । अतो दृश्यत्वाभावस्य धर्मिविशेषापेक्षायां सूक्ष्मावस्थं प्रधानमेव गृहीतं भवति । निषिध्य-मानदृश्यत्वस्याचिति दर्शनेनाचेतनवस्त्वेव तदभावाधिकरणं भवेत् । अदृश्यत्वं सूक्ष्मावस्थायामुपपन्नम् ।

अदृश्यत्वाधिकरणत्वेन विजातीयधर्मिकल्पनमपि गौरवपराहतम् । न च यत्र यत्राचेतनत्वं तत्र तत्र दृश्यत्वमिति नियमादचेतनत्वव्यापक दृश्यत्वाभावेऽचेतनत्वमप्यपसरेदिति वाच्यम्, अचेतनत्वदृश्यत्वयो र्व्याप्त्यभावात् । अचेतने मनसि दृश्यत्वाभावेन व्याप्तिभङ्गात् । एवञ्च प्रथमम् अक्षरपदं प्रधान परम् । ततः पश्चात् 'अक्षरात्' इत्यत्र तदपि प्रधान-परम् । न च 'परतः पर' इत्यत्र कथमर्थवर्णनम्, अक्षरात् परभूतो जीवः, तस्मात्पर इत्येवार्थस्य वक्तव्यत्वात्परतो जीवस्य परस्य ब्रह्मणः सिद्धिरनिवार्या इति वाच्यम्, 'अक्षरात् परत' इति सामानाधिकरण्यसम्भवे तद्विहाय वैयधिकरण्येनार्थ-वर्णनस्यायुक्तत्वात् । सामानाधिकरण्ये तु दृश्यस्थूलप्रपञ्चापेक्षया परं भूतं यत् अव्यक्तमक्षरं, तस्मात्परभूतो जीव इत्युक्तं भवति । अनेनादृश्यमित्यस्य विवरणश्च कृतं भवति । न दृश्यम् अदृश्यमिति हि व्युत्पत्तिः । स्थूलभूतप्रपञ्चो दृश्यः प्रधानस्यादृश्यत्वात्तस्मात्परभूत इत्युक्तं भवति । वैयधिकरण्ये च 'परत' इत्यस्य विशेष्यञ्च नास्ति इत्याशयवान् शङ्कते — **अस्याक्षरस्येति** । पर इति जीवस्य समष्टिपुरुषस्योक्तत्वात्तदधिष्ठितप्रधानं जगत्कारणम् । प्रधानकारणवादिकपिल-मतानुसारिणीयमुपनिषत् । 'यद्भूतयोनिं परिपश्यन्ति धीरा' इति उपनिषदियमेव साङ्ख्यमतमनुसृत्य वदतीव । ऊर्णनाभि-दृष्टान्तोपि प्रधानजीवरूपोभयमूलं जगत्प्रवर्तत इत्यत्र सामञ्जस्यं लभते ।।

सिद्धान्तमाह - **ब्रूम इति** । विषयवाक्ये **अक्षरमिति** । क्लीबनिर्देशेपि सूत्रे पुलिङ्गनिर्देशः कृतः । **पर** इति पुलिङ्ग-**निर्देशमनुसृत्य** । एतेनादृश्यत्वादिगुणकत्वं परशब्दवाच्यत्वञ्चैकस्यैवेति व्यक्तं भवतिः । परत्वस्य सर्वावधिकपरत्वस्य

**एव ; कुतः ? तद्धर्मोक्तेः । 'यस्सर्वज्ञस्सर्ववित्' इत्यादिना सर्वज्ञत्वादिकास्तस्यैव धर्मा उच्यन्ते । तथा हि - 'यया तदक्षरमधिगम्यते, इत्यादिना अदृश्यत्वादिगुणकमक्षरमभिधाय, 'अक्षरात्सम्भवतीह विश्वम्' इति तस्माद्विश्वसम्भवञ्चाभिधाय, 'यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नामरूपमन्नञ्च जायते' इति भूतयोनेरक्षरस्य सर्वज्ञत्वादिः प्रतिपाद्यते । पश्चात्, 'अक्षरात्परतः परः' इति च प्रकृतमदृश्यत्वादिगुणकं भूतयोन्यक्षरं सर्वज्ञमेव परत्वेन व्यपदिश्यते । अतः, 'अक्षरात्परतः परः' इत्यक्षरशब्दः पञ्चम्यन्तः प्रकृतमदृश्य-**

---

ब्रह्मण्येव सत्त्वात्परशब्दवाच्यः स एव । यथा दृश्यत्वादिकं परस्मिन् तथैव परत्वमपि तस्मिन्नेव । सूत्रस्थापिशब्देन परत्वस्यापि ग्रहणम् । पर इति प्रतिपन्ने वस्तुनि वक्ष्यमाणसर्वसत्त्वादि गुणानां वक्तव्यत्वेन सः परमपुरुष एवेति निर्णेयम् । तस्यैव निमित्तोपादानत्वरूपकारणत्वाश्रयत्वात् ।अक्षरवाक्ये प्रतिपन्नभूतयोनित्वादिकमपि तत्रैवेति निश्चेयम् । अतोऽक्षर-शब्दपरशब्दनिर्दिष्ट एक एव, स एव परमात्मेति । **सर्वज्ञात्वादिः प्रतिपाद्यत** इति । 'यः सर्वज्ञ' इत्यत्र यच्छब्दः पूर्वोक्ताक्षरानुवादरूपं तमक्षरमनूद्य सर्वज्ञत्वादि विधीयते । 'यस्य ज्ञानमयं तप' इत्युपरितनवाक्यं सङ्कल्पोपकरणकपरमात्म-सृष्टिबोधकं स्पष्टम् । अतो जीवस्य सर्वज्ञत्वादिसत्त्वेपि सङ्कल्पमात्रेण सृष्टिकर्तृत्वानुपपत्तेः न तद्विषयकं भवति । 'कामाच्च नानुमानापेक्षा' इति पूर्वमेव निरस्तम् । 'स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामि'त्युपक्रम एवास्या ब्रह्मविद्यात्वप्रतिपादनात् । नात्र ब्रह्मशब्दः प्रकृतिवाची 'तस्मादेतद्ब्रह्म' इत्युपरितनवाक्य इवेति शङ्क्यम् । प्रकृतिविद्यायाः सर्वविद्याप्रतिष्ठात्वाभावात् ।

नन्वक्षरशब्दस्य सर्वज्ञपरमात्मपरत्वे 'परतः पर' इति कथं सङ्गच्छेत । तत्र ह्यक्षरावधिकपरत्वाश्रयः किञ्चिद्वस्तु तदवधिकपरत्वाश्रयोऽन्यद्वस्त्विति हि बोध्यते । परमात्मापेक्षया उत्कृष्टोऽन्यस्ततोप्युत्कृष्टोऽन्य इत्यर्थे औचित्यञ्च नास्ति इत्यत्राह **पश्चादिति** । अत्राक्षरशब्दः प्रधानपरः तस्मात्परो जीवः । ततोपि परः परमात्मेत्यर्थः । वैयधिकरण्यं सह्यम् । अक्षरशब्दार्थे वैषम्यमपि सह्यमेव । 'येनाक्षरं पुरुषं वेद सत्य'मिति परस्मिन्नप्यक्षरशब्दप्रयोगो दृष्टः । न चात्र दृष्टान्ता-स्वारस्यम् । परस्योपादनत्वेपि दृष्टान्तोपपत्तेः । न चात्रोक्तं दृष्टान्तादि अचेतनोपादनत्व एव समञ्जसमिति वाच्यम् । चेतनोपादनत्व एव सामन्जस्यमिति प्रकृत्यधिकरणे बक्ष्यमाणत्वात् । अतोऽत्र परमात्मधर्माणां सर्वज्ञत्वसत्यसङ्कल्पत्व-नित्यत्वविभुत्वसर्वगतत्वभूतयोवित्वादीनां श्रवणात् परं ब्रह्मैवाभिधीयते । सूत्रे अदृश्यत्वपदनिवेशसामर्थ्याद्दृश्यत्वतद-भावोपस्थितेः प्रधानस्याक्षरशब्दवाच्यत्वं गौणमेव, परस्मिन्नेव मुख्यत्वं स्वरूपस्वभावोभयविधविकारशून्ये इति ज्ञापितम् ॥

'यस्सर्वज्ञ' इत्यादिना परमात्मासाधारणधर्माः श्रुताः, एते च धर्मिसापेक्षाः । अत्र क इति प्रश्ने पूर्वप्रक्रान्तमक्षरशब्द-वाच्मेवेति निश्चेतव्यं, भूतयोनिमिति 'तस्मादेतद्ब्रह्म' इति कारणत्वोक्तेश्च सर्वज्ञत्वादिविशिष्टं कारणम् अक्षरशब्दवाच्यं परं ब्रह्मैवेति निश्चीयते । न च 'अक्षरात्परत पर' इति पञ्चम्यन्ताक्षरपदं प्रधानवाची, अतः पूर्वोक्तक्षरमपि प्रधानमेव । अतस्तदनुवादेन सर्वज्ञत्वविधानमनुपपन्नम् । अतोऽक्षरस्य प्रधानस्योपादानत्वबोधकम् । 'सर्वज्ञ' इत्यादि तु जीवस्या-धिष्ठातुः निमित्तत्वबोधकमित्येवाङ्गीकार्यमिति वाच्यम् । 'येनाक्षरं पुरुषं वेद सत्यमि'त्यक्षरस्य परमात्मत्वबोधनेनाक्षर-धर्मत्वेनैव सर्वज्ञत्वादीनां वक्तव्यत्वात् । 'तस्मादेतन्नामरूपमन्नञ्च' इति पञ्चम्यन्तश्रवणात्कारणत्वावगमात्सर्वज्ञे भूतयोनित्वप्रत्यभिज्ञा । 'अक्षरं पुरुषम्' इति पुरुषे अक्षरप्रत्यभिज्ञा । अतो यया तदक्षरमित्यपि परमपुरुषस्थापकमेव । अतः 'अक्षरात्सम्भवतीह विश्वमि'ति उपादानत्वं, 'यस्सर्वज्ञ' इत्यादिना निमित्तत्वञ्चै कस्यैव प्रतिपाद्यते । **अक्षरशब्दः पञ्चम्यन्त** इति । अयमक्षरशब्दो न पूर्वोक्ताक्षरशब्दप्रतिपन्नपरमपुरूषवाची भवति । 'परतः पर' इत्युक्तप्रथमान्तशब्द-वाच्यपरस्योपरिवाक्येन परब्रह्मत्वनिश्चयात् । तदानुगुण्येनैवाक्षरशब्दस्य व्याख्येयत्वात् । 'दिव्यो ह्यमूर्तः पुरुष' इति प्रथमान्तपरशब्दवाच्ये दिव्यत्वामूतत्वपुरुषत्वादिकं प्रतिपन्नम् । अमूर्तत्वं नामापाणिपादत्वं, ब्राह्माभ्यन्तर इति सर्वगतत्वम् । इदञ्च सर्वं प्रथमश्रुताक्षरवाच्ये प्रतिपन्नम् । अतोऽक्षरशब्दवाच्यः परशब्दवाच्यश्चैक इत्येषितव्यम् । तस्मात्तदनुरोधेन

**त्वादिगुणकमक्षरं नाभिधत्ते ; तस्य सर्वज्ञस्य विश्वयोनेस्सर्वस्मात्परत्वेन तस्मादन्यस्य परत्वासम्भवात् । अतोऽत्राक्षरशब्दो भूतसूक्ष्ममचेतनं ब्रूते ॥ २२ ॥ इतश्च न प्रधानपुरुषौ -**

**विशेषणभेदव्यपदेशाभ्याञ्च नेतरौ १। २ । २३ ॥**

**विशिनष्टि हि प्रकरणम्, प्रधानाच्च पुरुषाच्च भूतयोन्यक्षरमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनादिभिः व्यावर्तयतीत्यर्थः । तथा ताभ्यामक्षरस्य भेदश्च व्यपदिश्यते, 'अक्षरात्परतः पर' इत्यादिना ॥**

**तथा हि - 'स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह' इति सर्वविद्याप्रतिष्ठाभूता ब्रह्मविद्या प्रक्रान्ता । परविद्यैव च सर्वविद्याप्रतिष्ठा । तामिमां सर्वविद्याप्रतिष्ठां विद्यां चतुर्मुखाथर्वादिगुरुपरम्परयाऽङ्गिरसा प्राप्तां जिज्ञासुः शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ, 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' इति । ब्रह्मविद्यायास्सर्वविद्याश्रयत्वाद्ब्रह्मविज्ञानेन सर्वं विज्ञातं भवतीति कृत्वा ब्रह्म-**

---

द्वितीयाक्षरशब्दार्थस्य व्याख्येयत्वात्प्रधानमेवाभिधत्त इत्यङ्गीकार्यम् ।

नन्वेकस्मिन्नेव प्रकरणेऽक्षरशब्दयोर्भिन्नार्थकत्वस्वीकारो दोष इति चेन्मैवम् । अस्मिन्नेव प्रकरणे 'तपसा चीयते ब्रह्म इति ह स्म यद्ब्रह्मविदो वदन्ति' इत्यत्र ब्रह्मशब्दस्य 'तस्मादेतद्ब्रह्म' इत्यत्र ब्रह्मशब्दस्य च विभिन्नार्थकत्वस्वीकारवदत्राप्यदोषात् । 'अक्षरात् परत' इत्यत्र श्रुतस्य सामानाधिकरण्यस्य का गतिरिति चेत् । नात्र सामानाधिकरण्यं श्रुतम् । तथा सति 'परत' इत्यस्य कस्मात्परत इति प्रश्नसापेक्षत्वादवधिसमर्पकं पदमन्वेषणीयम् । **अक्षरात्** = प्रकृतेः परत इत्युक्तौ अवधिश्च श्रुतो भवति । अपि च वाक्यस्वारस्यमपि वैयधिकरण्य एव । 'परतोऽक्षरात्पर' इति न वाक्यविन्यासः । यथाश्रुतार्थे एव वाक्यस्वारस्यञ्च ।

**विशिनष्टि हि प्रकरणम्** इत्यादि । 'न च स्मार्तमतद्धर्माभिलापाच्छरीरश्च' इति सूत्रेण प्रधानपुरुषव्यतिरिक्तत्वं अन्तर्यामिणः स्थापितम् । तदुपर्यस्याधिकरणस्य प्रवृत्तत्वेनात्रापि प्रधानपुरुषव्यतिरिक्तत्वं 'नेतरौ' इत्यनेन स्थाप्यते । प्रथमश्रुतोऽक्षरशब्दः प्रधानवाचि, 'परतः पर' इत्युक्तो जीववाची, इति पूर्वपक्षिमतम् । तदत्र खण्ड्यते । विशिनष्टि इति विशेषणमिति प्रकरणार्थकत्वं स्वीकृत्य प्रकरणबलादक्षरशब्दो न प्रधानवाची, परब्रह्मवाची इत्युक्तम् । 'तथा भेदव्यपदेशात्' इत्यनेन परात्पर इत्यत्र परशब्दो न जीववाची किन्तु परब्रह्मवाच्येवेत्युक्तम् । एकैकस्यार्थस्यैकैको हेतुरिति पर्यवसितम् । वस्तुतो हेतुद्वयमप्युभयसाधकमित्यपि वक्तुं शक्यम् । प्रथममक्षरपदं परमात्मवाचकमित्यत्र प्रकरणं भाष्यकृतैव दर्शितम् । 'परात्पर' इति परत्वेन परमात्मनो भेदव्यपदेशस्य सत्त्वात्परशब्दनिर्दिष्टस्यास्यैवाक्षरशब्दवाच्यत्वं वक्तव्यमिति भेदनिर्देशो भेदसाधकः । एवमेव परशब्दो भेदव्यपदेशात्परमात्मवाचकः, तथा प्रकरणादपि । 'दिव्यो ह्यमूर्तः पुरुष' इत्यमूर्तत्वाद्युक्तेस्तेषां जीवेऽसम्भवादिति । अतो हेतुद्वयमेकैकव्यावर्तकं तथा एकैकोपि हेतुः वस्तुद्वयव्यावर्तकश्च ॥

ननु सर्वज्ञत्वाद्यसाधारणधर्मवत्वोक्त्याऽक्षरशब्दस्य परमात्मपरत्वं स्थापितम् । एतदुपरि, एवं स्थापनेऽक्षरात्परतः परः इत्यस्य कथं निर्वाहः ? अतोऽक्षरशब्दः प्रधानवाच्येव स्यादिति शङ्कायामक्षरशब्दस्य परमात्मपरत्वं निश्चित्य सर्वस्मात्परत्वेनोक्तः परमात्मैव । तस्मादन्यस्य परत्वासम्भवादिति परिहारः क्रियते । अक्षरशब्दस्य परमात्मपरत्वेनिश्चिते सति 'परतः पर' इत्यत्रार्थनिश्चयः एतस्यार्थनिर्णय एवाक्षरशब्दस्य परमात्मपरत्वनिश्चय इत्यन्योऽन्याश्रय इति शङ्कापरिहारार्थं द्वितीयसूत्रं प्रवृत्तम् । अत्र प्रकरणादक्षरशब्दस्य परमात्मपरता निश्चीयते । सति चैवं निश्चये भेदव्यपदेशोपि

**स्वरूपमनेन पृष्टम्। तस्मै स होवाच, 'द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति, परा चैवापरा च' इति। ब्रह्मप्रेप्सुना द्वे विद्ये वेदितव्ये - ब्रह्मविषये परोक्षापरोक्षरूपे द्वे विज्ञाने उपादेये इत्यर्थः। तत्र परोक्षं शास्त्रजन्यं ज्ञानम्; अपरोक्षं योगजन्यम्। तयोर्ब्रह्मप्राप्त्युपायभूतमपरोक्षज्ञानम्। तच्च भक्तिरूपापन्नम्;** (मु.३-२-३) **'यमेवैष वृणुते तेन लभ्यः' इति अत्रैव विशेष्यमाणत्वात्। तदुपायश्च आगमजन्यं विवेकादिसाधन-सप्तकानुगृहीतं ज्ञानम्,** (बृ.६-४-२२) **'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाश-केन' इति श्रुतेः। आह च भगवान् पराशरः, 'तत्प्राप्तिहेतुर्ज्ञानञ्च कर्म चोक्तं महामुने ! आगमोत्थं विवेकाच्च द्विधा ज्ञानं तथोच्यते' इति।**

(मु.१-१-५) **'तत्रापरा ऋग्वेदो यजुर्वेदः' इत्यादिना, 'धर्मशास्त्राणि' इत्यन्तेन आगमोत्थं ब्रह्मसाक्षा-त्कारहेतुभूतं परोक्षज्ञानमुक्तम्; साङ्गस्य सेतिहासपुराणस्य सधर्मशास्त्रस्य समीमांसस्य वेदस्य ब्रह्मज्ञानो-त्पत्तिहेतुत्वात्। 'अथ परा यया तदक्षरमधिगम्यते' इत्युपासनाख्यं ब्रह्मसाक्षात्कारलक्षणं भक्तिरूपापन्नं ज्ञानम्। 'यत्तदद्रेश्यमग्राह्यम्' इत्यादिना परोक्षापरोक्षरूपज्ञानद्वयविषयस्य परस्य ब्रह्मणस्स्वरूपमुच्यते। 'यथोर्णनाभिस्सृजते गृह्णते च' इत्यादिना यथोक्तस्वरूपात्परस्माद्ब्रह्मणोऽक्षरात्कृत्स्नस्य चेतनाचेतनात्मक-प्रपञ्चस्योत्पत्तिरुक्ता; विश्वमिति वचनात्; नाचेतनमात्रस्य। 'तपसा चीयते ब्रह्म ततोऽन्नमभिजायते। अन्नात्प्राणो मनस्सत्यं लोकाः कर्मसु चामृतम्' इति ब्रह्मणो विश्वोत्पत्तिप्रकार उच्यते। तपसा - ज्ञानेन;** (मु.१-१-९) **'यस्य ज्ञानमयं तपः' इति वक्ष्यमाणत्वात्। चीयते उपचीयते। 'बहु स्याम्' इति सङ्कल्परूपेण ज्ञानेन ब्रह्म सृष्ट्युन्मुखं भवतीत्यर्थः। ततोऽन्नमभिजायते - अद्यत इत्यन्नम्। विश्वस्य भोक्तृवर्गस्य भोग्यभूतं**

---

परतः परस्य परमात्मत्वसाधके गमकम्। 'परात्परं पुरिशयं पुरुषमीक्षत' इति परस्य ब्रह्मणः परात्परत्वं व्यपदिश्यते। अन्यत्किञ्चित् 'मत्तः परतरं नास्ति', 'अहमेव पर' इति गीतावचनेनाप्यस्य परात्परत्वं सिद्ध्यति॥

अतः परात्परः परमात्मैवेति। सूत्रे 'तल्लिङ्गात्' 'तद्धर्मोपदेशात्' 'धर्मोक्तेः' इति सूत्रे विभिन्नशैली तद्विषयवाक्यगत-सूक्ष्मार्थावलम्बनेन प्रवृत्तेति विज्ञेयम्। अत्रापि विशेषणपदस्य व्यावर्तकत्वार्थकत्वमवलम्ब्य विशेषणव्यपदेशात् 'भेदव्यपदेशाच्च नेतरौ' इति वक्तुं शक्यम्। अथापि विशेषणव्यपदेशः तद्धर्मोक्तेः इत्युक्तेनैवोक्तप्राय इति विशेषणपदस्य प्रकरणपरत्वमङ्गीकृतम्।

'ब्रह्मविद्या' इतीदमेव पदं परब्रह्मविद्यापरम्। 'सर्वविद्याप्रतिष्ठाम्' इत्युक्त्याप्यस्या विद्यायाः परमात्मपरत्वं सुतरां व्यक्तम्। एतेन एकविज्ञानप्रतिज्ञाप्यर्थादुपपादिता भवति। ब्रह्मणि ज्ञाते कृत्स्नज्ञातव्यस्यान्तर्भावाद्ब्रह्मविद्याया ज्ञानेन सर्वविद्याया अपि ज्ञानं सम्भवतीति सूच्यते। अतो ब्रह्मविद्यायां सर्वाण्यन्तर्भूतानि। परविद्याया अपरविद्यायाश्च ब्रह्मण एव विषयत्वम्। एका परोक्षरूपाऽन्याऽपरोक्षरूपा। **विवेकादीति**। विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्ष-सहकृतमित्यर्थः। विवेकाच्च जन्यमित्यर्थः।

'यथोर्णनिभि'रित्यादिना दृष्टान्तत्रयमुक्तम्। यथा ऊर्णनाभिः स्वशरीरात्तन्तुं सृजति तथा परमात्मापि स्वशरीरात् प्रजाः सृजति। एतेन प्रपञ्चे दृश्यमानावस्थाश्रयत्वं चेतनाचेतनप्रपञ्च एवेति ज्ञापितम्। द्वितीयदृष्टान्ते साक्षादेव सूक्ष्मत्व-स्थूलत्वविशिष्टावस्था इति ज्ञापितम्। 'सतः पुरुषात्केशलोमानि' इत्यनेन स्वरूपसत्त्यैव कारणत्वमिति ज्ञापितम्। दृष्टान्तत्रयस्वारस्यमस्मदीये मुम्मतसारे द्रष्टव्यम्॥

भूतसूक्ष्ममव्याकृतं परस्माद्ब्रह्मणो जायत इत्यर्थः। प्राणमनःप्रभृति च स्वर्गापवर्गरूपफलसाधनभूतकर्मपर्यन्तं सर्वं विकारजातं तस्मादेव जायते। 'यस्सर्वज्ञस्सर्ववित्' इत्यादिना सृष्ट्युपकरणभूतं सार्वज्ञ्यसत्यसङ्कल्पत्वादिकमुक्तम्। सर्वज्ञात्सत्यसङ्कल्पात्परस्माद्ब्रह्मणोऽक्षरादेतत्कार्याकारं ब्रह्म नामरूपविभक्तं भोक्तृभोग्यरूपञ्च जायते।

(मु.१-२-१) 'तदेतत्सत्यम्' इति परस्य ब्रह्मणो निरुपाधिकसत्यत्वमुच्यते। 'मन्त्रेषु कर्माणि कवयो यान्यपश्यन् तानि त्रेतायां बहुधा सन्ततानि। तान्याचरत(थ) नियतं सत्यकामाः' इति - सार्वज्ञ्यसत्यसङ्कल्पत्वादिकल्याणगुणाकरमक्षरं पुरुषं स्वतस्सत्यं नित्यं कामयमानास्तत्प्राप्तये फलान्तरेभ्यो विरक्ताः ऋग्यजुस्सामाथर्वसु कविभिर्दृष्टानि वर्णाश्रमोचितानि त्रेताग्निषु बहुधा सन्ततानि कर्माण्याचरतेति - (मु.१-२-१) 'एष वः पन्थाः' इत्यारभ्य (मु.१-२-५) 'एष वः पुण्यस्सुकृतो ब्रह्मलोक' इत्यन्तेन कर्मानुष्ठानप्रकारं, श्रुतिस्मृतिचोदितेषु कर्मस्वेकतरकर्मवैधुर्येऽपीतरेषामनुष्ठितानामपि निष्फलत्वम्, अयथानुष्ठितस्य चाननुष्ठितसमत्वमभिधाय, (मु.१-२-७) 'प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म। एतच्छ्रेयो येऽभिनन्दन्ति मूढाः जरामृत्यू ते पुनरेवापियन्ति' इत्यादिना फलाभिसन्धिपूर्वकत्वेन ज्ञानविधुरतया चावरं कर्माचरतां पुनरावृत्तिमुक्त्वा, 'तपःश्रद्धे ये ह्युपवसन्ति' इत्यादिना पुनरपि फलाभिसन्धिरहितं ज्ञानिनाऽनुष्ठितं कर्म ब्रह्मप्राप्तये भवतीति प्रशस्य, 'परीक्ष्य लोकान्' इत्यादिना केवलकर्मफलेषु विरक्तस्य यथोदितकर्मानुगृहीतं ब्रह्मप्राप्त्युपायभूतं ज्ञानं जिज्ञासमानस्य च आचार्योपसदनं विधाय, - (मु.२-१-१) 'तदेतत्सत्यम्; यथा सुदीप्तात्' इत्यादिना, 'सोऽविद्याग्रन्थिं विकिरतीह सोम्य' इत्यन्तेन पूर्वोक्तस्याक्षरस्य भूतयोनेः परस्य ब्रह्मणः परमपुरुषस्यानुक्तैस्स्वरूपगुणैस्सह सर्वभूतान्तरात्मतया विश्वशरीरत्वेन विश्वरूपत्वं तस्माद्विश्वसृष्टिं च विस्पष्टमभिधाय, 'आविस्सन्निहितम्' इत्यादिना तस्यैवाक्षरस्याव्याकृतात्परतोऽपि पुरुषात्परभूतस्य परस्य ब्रह्मणः परमव्योम्नि प्रतिष्ठितस्यानवधिकातिशयानन्दस्वरूपस्य हृदयगुहायामुपासनप्रकारम् उपासनस्य च परभक्तिरूपत्वम्, उपासीनस्याविद्याविमोकपूर्वकं ब्रह्मसमं ब्रह्मानुभवफलं चोपदिश्योपसंहृतम्।

अत एवं विशेषणाद्भेदव्यपदेशाच्च नास्मिन्प्रकरणे प्रधानपुरुषौ प्रतिपाद्येते। भेदव्यपदेशोऽपि हि ताभ्यां परस्य ब्रह्मणोऽत्र विद्यते, (मु.२-२-१) 'दिव्यो ह्यमूर्तः पुरुषस्स बाह्याभ्यन्तरो ह्यजः। अप्राणो ह्यमनाश्शुभ्रो ह्यक्षरात्परतः परः' इत्यादिभिः। अक्षरादव्याकृतात्परो यः समष्टिपुरुषः, तस्मादपि परभूतोऽदृश्यत्वादि-

---

'तदेतत्सत्य'मित्यादिना द्वितीयखण्डार्थविवरणम्। त्रेतायाम् - अग्नित्रये - सत्यभूतब्रह्मलोकाभिलाषपूर्वकं कर्मकर्तुः ब्रह्मप्राप्तिः नित्यकर्मानुष्ठानस्यावश्यकता, चतुर्मुखलोकपर्यन्तफलप्राप्तिः कर्मजन्या, नश्वरा च तत्साधनयज्ञाश्चादृढाः अदृढप्लववत्। तत्त्वज्ञानशून्यानां पुनर्मर्त्यलोकप्राप्तिः जन्मजरामरणप्राप्तिः नरकप्राप्तिश्च, ब्रह्मज्ञानपूर्वकमनुतिष्ठतां सूर्यमण्डलद्वारा भगवत्प्राप्तिः। तस्मात्काम्यत्वबुद्धिं परित्यज्य नित्यकर्मानुष्ठानपूर्वकं भगवत्ज्ञानसम्पादनाय ज्ञानवद्गुरुसमाश्रयः कार्यः गुरुरपि सच्छिष्याय ब्रह्म उपदिशेत्। इत्याद्यर्था द्वितीयखण्डे उपदिष्टाः।

'तदेतत्सत्यमि'त्यादिना तृतीयखण्डार्थः - सर्वविलक्षणात् ऊर्ध्वलोकस्थितात्परमपुरुषात्, अग्नेर्विस्फुलिङ्गा इव जीवा अणुभूता जायन्ते। अस्मादेव प्राणमनप्रभृत्युपकारणानि पञ्चभूतानि समस्तलोका अन्यानि जायन्ते। एतत्सर्वम-

**गुणकोऽक्षरशब्दाभिहितः परमात्मेत्यर्थः । अश्नुत इति वा, न क्षरतीति वा अक्षरम् । तदव्याकृतेऽपि स्वविकारव्याप्त्या वा महदादिवन्नामान्तराभिलापयोग्यक्षरणाभावाद्वा अक्षरत्वं कथञ्चिदुपपद्यते ॥ २३ ॥**

**रूपोपन्यासाच्च १ । २ । २४ ॥**

(मु.२-१-४) **'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य**

प्यस्य रूपम् । अतोऽयं विश्वरूपः । अतस्सर्वान्तर्यामीत्यादिकं प्रतिपाद्यते । परस्य परमव्योम्नि स्थितिः तत्रस्थस्य हृदयगुहायामुपासनाप्रकारः परभक्तिरूपं तदुपासनम् उपासकस्याविद्याविमोकपूर्वकं ब्रह्मसमं ब्रह्मानुभवफलञ्चोपदिष्टम् । अतोऽत्र जीवस्य प्रधानस्य च प्रसक्तिरेव नास्ति । परमात्मनि अक्षरशब्दप्रवृत्तिमुपपादयति - **अश्नुत इति वेति** । 'अक्षरं न क्षरं विद्यात् अश्नोतेर्वा सरोऽक्षरम्' इति द्विविधव्युत्पत्तिर्महाभाष्ये वर्णग्रहणार्थं दर्शितेति दर्पणे । एवं द्विविधव्युत्पत्तिमवलम्ब्य हि प्रधानेऽक्षरशब्दप्रवृत्तिरुच्यते । महदादिषु स्वकार्येषु प्रधानस्य व्याप्तिरेका । महत् नष्टम् अहङ्कारो नष्ट इतिवत् प्रकृतिर्नष्टेति न व्यवहारः, प्रलयदशायां प्रकृतेः समविपरिणामस्यैव सत्त्वात् । समपरिणामे नामभेदस्यासत्त्वात् । सृष्टिदशायां विषमपरिणामः । अतो नामान्तरभजनं नामान्तराभिलापयोग्यत्वञ्चेत्येकम् । एवं प्रकृतौ अक्षरशब्दप्रयोगोपपत्तिः । एतदपेक्षया कदाचिदपि परिणामशून्येऽक्षरत्वं सुप्रतिष्ठितम् । अनन्तत्वाद्ब्रह्मणः सर्वव्याप्तत्वञ्च ऊर्ध्वपरिच्छिन्नाया नानन्तत्वम् । अतो मुख्यतया ब्रह्मणि निर्वाहः ॥

**अग्निर्मूर्धेति** । **अग्निः** = द्युलोकः । **पद्भ्यां** = पादावित्यर्थः । ननु नीरूपस्य भगवतः कथं रूपोपदेशः ? न च शुक्लत्वादिरूपाभावेप्याकारोपदेशः सङ्गच्छत इति वाच्यम् । निरवयवस्याकारादीनामप्यभावात् । साकारे उपदेश इवात्राप्यसम्भवात् । वस्तुतो निराकारास्य जीवस्य मनुष्यत्वादिशरीरसम्बन्धे इदं शिरः, इदं नेत्रं, इमौ करौ इत्याद्यवयवसङ्ख्यानं क्रियते, न तथा भगवतः शरीरमस्ति । रामकृष्णादिशरीरे वा नित्यपरवासुदेवे वा इदमुपपादनं न सम्भवति । मुर्धादीनां परिमितत्वात् - इति शंका परिहारानुगुण्येन विषयवाक्यं दर्शयति - **अग्निर्मूर्धा** इत्यादि । भगवतोऽप्राकृतदिव्यमङ्गलरूपशरीरमादाय शिरोनेत्रादिप्रदर्शनमिति न मन्तव्यम् । तं प्रति जगतः शरीरत्वात्तस्मिन्शरीरे एतत्प्रदर्शनम् । न चाधेयत्वविधेयत्वादिना शरीरभूते जगति अस्मच्छरीर इव मूर्धादिकं नास्तीति वाच्यं, रूपणमात्रत्वात् । अस्माकं यथा शिरोनेत्रादिकं तथा भगवतोपीति प्रदर्शनाय द्युलोकस्य मूर्धात्वं चक्षुषो चन्द्रसूर्यत्वमित्यादीत्यारोप्य कथनात् ।

ननु उपासितुः अपरिच्छन्नपरमात्मस्वरूपाभिव्यक्तिर्न सम्भवतीति द्युलोकादिप्रदेशपरिच्छन्नत्वं कथ्यताम् । तेषां प्रदेशानां मूर्धत्वादिकल्पना निष्फला । अन्यथाऽस्य दृष्टिविधित्वमेव स्यात् । दृष्टेश्च तत्त्वज्ञानत्वाभावान्मोक्षसाधनत्वमनिष्टम् । अत एव नामादिदृष्टिविधौ मोक्षसाधनत्वाभावं मनसि निधाय नारदेन पुनः पुनः प्रश्ने सनत्कुमारः सत्येनातिवदतीति ब्रह्मोपासनं तात्त्विकमुपदिदेश । स्वरूपेणोपासनमेव उत्कृष्टतत्त्वविषयक ज्ञानरूपम् । तदेव मोक्षसाधनममन्यत । भृगुरपि 'अन्नं ब्रह्मेति व्यजानात्' इत्यदिना अन्नादौ ब्रह्मदृष्टिः न तत्त्वज्ञानरूपेति मत्वा अन्तत 'आनन्दो ब्रह्मे'ति वास्तवब्रह्मविषयकमुपासनं जगाद । अतोऽन्यस्मिन्नन्यदृष्टित्वेन क्रियमाणा न निःश्रेयसाय भवति । किमत्र ब्रह्मणि अन्यदृष्टिः, यद्वाऽन्यत्र ब्रह्मदृष्टिः ? नाद्यः । सर्वोत्कृष्टब्रह्मणि अन्यदृष्टिः राज्ञि भृत्यदृष्टिरिव भवेदिति न फलाय । द्वितीयेऽन्यस्यैव विशेष्यत्वाद्ब्रह्मोपासनरूपता न भवेत् । अत इदमुपासनं मोक्षरूपफलाय न भवतीति रूपोपान्यासहेतुर्न परमात्मपरत्वसाधक इति चेन्मैवम् । अत्र ब्रह्मण एव तद्रूपत्वेनैवोपास्यत्वान्न दृष्टिरूपता । द्युलोक एव हि मूर्धत्वादिदृष्टिः, चन्द्रसूर्यादिष्वेव नेत्रत्वादिदृष्टिः न तु ब्रह्मण्यन्यदृष्टिर्वाऽन्यत्र ब्रह्म दृष्टिर्वा । स्वमूर्धत्वादिदृष्टिविषयद्युलोकाद्यवयवसमुदायपरिच्छिन्नं ब्रह्मोपास्यते । विध्यन्तर्गततत्वमेव न तु स्वरूपोपासनस्य दृष्टिविधित्वम् । दृष्टिविधेरन्यत्फलं विशिष्टोपासनस्य तु मोक्षः

**पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा' इतीदृशं रूपं सर्वभूतान्तरात्मनः परमात्मन एव सम्भवति; अतश्च परमात्मा ॥ २४ ॥** इति अदृश्यत्वादिगुणकाधिकरणम् ॥

१७. वैश्वानराधिकरणम् ॥ ६ ॥ (छा.५.११; अग्नि १०-५-६.)

## वैश्वानरस्साधारणशब्दविशेषात् १ । २ । २५ ॥

**इदमामनन्ति च्छन्दोगाः,** (छा.५-११-६) **'आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि; तमेव नो ब्रूहि' इति प्रक्रम्य,** (छा.५-१८-१) **'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' इति । तत्र संदेहः - किमयं वैश्वानर आत्मा परमात्मेति शक्यनिर्णयः, उत नेति । किं प्राप्तम् ? अशक्यनिर्णय इति । कुतः ?**

---

फलम् इति तु विवेकः । अनन्तराधिकरणे इदं व्यक्तीभविष्यति ।

प्रायशः सूत्रकारः पक्षनिर्देशं हेतुनिर्देशञ्च करोति । मुख्यभूतं साध्यं न निर्दिशति 'आकाशस्तल्लिङ्गात्' 'अन्तस्तद्धर्मोपदेशात्', 'ज्योतिश्चरणाभिधानात्' 'अन्तर्याम्यधिदैवाधिलोकादिषु' इत्येवम् । अवश्यनिर्देष्टव्यस्य साध्यस्य किमर्थं न निर्देशः क्रियते? पर्वतो धूमात् इत्युक्तौ वह्नितद्भावनिर्देशं विनोक्तौ कथं साध्यसाधनम् । यद्यपि धूमरूपहेतुनिर्देशबलात् साध्यविशेषसिद्धिवदत्रापि साध्यमूहितुं शक्यं हेतुस्वारस्यात्, तथापि तत्साधकधूमरूपहेतुनिर्देश इव नात्र हेतुनिर्देशः । लिङ्गात् धर्मात् इति हेतुर्हि साधारणः, न तु परमात्मासाधारणसर्वज्ञत्वदिवत्साधको भवितु मर्हति । सत्यं, 'भेदव्यपदेशाभ्यां नेतरौ' इति इतरयोः प्रधानपुरुषयोर्निषेधबलात्परमात्मरूपसाध्यसिद्धिः स्वयमेवाप्रतिरोधं फलतीत्याशयात् । अत्रापि इतरौ इति सामान्यनिर्देश एव । अथापि पूर्वाधिकरणे 'न च स्मार्तमतद्धर्माभिलापाच्छरीरश्च' इति सूत्रे प्रकृतिपुरुषयोः प्रतिषेधः स्पष्टः । अत एवात्र 'नेतर' इति सूत्रयामास । किञ्च 'ईक्षतिकर्मव्यपदेशात्स' इति स्वबुद्धिस्थपुरुषविशेषं मनसि निधाय सर्वनामपुल्लिङ्गशब्दं प्रयुञ्जानस्य साध्यविशेषसमर्पणं स्वत एव भवतीत्यभिप्रायात् ॥

वैश्वानराधिकरणम्

पूर्वाधिकरणे 'द्यौर्मूर्धा' इत्यादि द्युमूर्धत्वादिपरिक्लृप्त्या त्रैलोक्यशरीरकत्वं ब्रह्मणः स्थापितम् । तत्प्रसङ्गात् वैश्वानरविद्या विचार्यते । न च तत्र विश्वरूपत्वमुक्त्वा तत्प्रतिपादनाय द्युमूर्धत्वादिकं परिकल्प्य सर्वशरीरकः परमात्मेति स्थापनादत्रापि द्युमूर्धत्वकण्ठोक्त्यभावेपि तत्पर्यवसानस्यावश्यम्भावात् त्रैलोक्यशरीरकः परमात्मेति निश्चयसम्भवेन तद्विचारः किमर्थ इति वाच्यम् । सर्वान्तरात्मत्वं भगवत एवोभयत्र न संशयः । तदुपपादनाय द्युप्रभृतौ मूर्धत्वादिकं कल्पितम् । वस्तुतस्तत्र द्युप्रभृतौ अस्मदादिशरीरावयवेष्विव मूर्धात्वाद्यभावेन कल्पनामात्रपरतयाऽन्यत्प्रत्यप्येवं कल्पनासम्भवेनास्य परमात्मत्वसाधकत्वाभावात् । यतो विश्वरूपत्वलाभः तेन कारणत्वमपि सिद्धम् । 'तेद्यथेषीकतूलमग्नौ...सर्वे पाप्मानः प्रदूयन्त' इति सर्वपापविनिर्मोकफलश्रवणेन कारणोपासनस्यैवैतादृशफलजनकत्वादत्रोपास्यमानः जगत्कारणमिति कारणवाक्यविचाररूपता ।

वैश्वानरविद्याप्रतीकोपनिषद्भागो भाष्ये एव विवृतः । **सम्प्रति** = ऋजु । सम्यक् इति यावत् । **अध्येषि** = स्मरसिः । **उपास्से** = अवगच्छसि । सर्वेष्वधिकरणेष्विवात्रापि शक्यनिर्णयत्वाशक्यनिर्णयत्वरूपकोटिद्वयमादाय संशयः । अन्यत्र जीवो वा परो वेति कोटिद्वयमूलकः सन्देहः । अत्रान्यथाकोटिद्वयमूलक इति विशेषः । न चान्यत्र पूर्वपक्षे जीव एवेति एककोटिनिर्णयेन पूर्वपक्ष प्रवर्तनवदत्राप्यशक्यकोटित्वनिर्णयेन पूर्वपक्षप्रवर्तनमावश्यकं ; तथा सत्यशक्यानिर्णयत्वलाभेन

**वैश्वानरशब्दस्य चतुर्ष्वर्थेषु प्रयोगदर्शनात् - जाठराग्नौ तावत्,** (बृ.७-९-१) **अयमग्निर्वैश्वानरः, येनेदमन्नं पच्यते, यदिदमद्यते । तस्यैष घोषो भवति, यावदेतत्कर्णावपिधाय श्रृणोति । स यदोत्क्रमिष्यन्भवति, नैनं घोषं श्रृणोति' इति । महाभूततृतीये च** (ऋ.सं.१०-८८-१२) **'विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन्' इति । देवतायाश्च,** (यजु. का.१-५-११; ऋ.सं.१-९८-९) **'वैश्वानरस्य सुमतौ स्याम राजा हिकं भुवनानामभिश्रीः'**

---

वैश्वानरार्थे सन्देहस्यैव सम्भवात् सन्देहपूर्वपक्षयोर्भेद एव नास्तीति वाच्यम् । इष्टापत्तेः । नचाशक्यनिर्णयत्वे वैश्वानरशब्दार्थेऽयं वाऽन्यो वेति संशयसम्भवात्कस्योपासनमिति निश्चयाभावात्किंविषयोपासनानुष्ठानसिद्धिरिति वाच्यम् । यथारुचि तैस्तैरनुष्ठानसम्भवात् । न चैकस्यैवार्थस्य प्रामाणिकत्वादन्यथाऽनुष्ठानं निष्फलमेव स्यादिति वाच्यम् । मतभेदे-नैकादश्यादिव्रतेष्विवानुष्ठानस्य साफल्यसम्भवात् । न च तत्रापीयं शङ्का स्यादिति वाच्यम् । यावता वाक्यान्तरेणान्यथा वाऽर्थनिश्चयो न भवति तावत्, अनुष्ठाने तत्फले वा संशय एव । प्रकृते एतद्विद्यावेद्यस्य कस्यचिदुपासनं सत्यमेव, परन्तु वेद्यः पुरुषः क इत्यत्र प्रमाणान्तरमेवानुसर्तव्यम् । इतरप्रमाणनिरपेक्षमर्थनिश्चयो न भवतीति तात्पर्येण पूर्वपक्षप्रवृत्तिरिति ध्येयम् ।

ननु सर्वत्राधिकरणेष्विवात्रापि वैश्वानरशब्दवाच्यः जाठराग्निर्वा महाभूततृतीयं वा देवता वा परमात्मा वेति कुतः संशयोः न कृत इति चेत्सूत्रे साधारणशब्दप्रयोगात्तन्निबन्धनतयैव संशयस्य वक्तव्यत्वमिति शक्यनिर्णयत्वाशक्य-निर्णयत्वरूपे संदेहशिरसीकृते । सूत्रेपि किमर्थमेवं कृतमितिचेत् शब्दस्य चतुर्षु प्रयोगसाधारण्यात् । न चाक्षरशब्दस्यापि प्रकृतिपुरुषेश्वरसाधारण्यात् 'अक्षरमम्बरान्तधृतेः' इत्यादावपि शक्यनिर्णयत्वाशक्यनिर्णयत्वरूपकोटिद्वयविषयकसंशयः कुतो न कृत इति वाच्यम् । वैषम्यात् । अत्र प्रयोगसाधारण्यस्यैव प्रधानपूर्वपक्षहेतुत्वं, तत्र तदतिरिक्तस्य पूर्वपक्षहेतुत्वमिति भिदा । न चैवं सति संशयलक्षिताप्रायाण्यमेव वेदवाक्यस्य स्यादिति वाच्यम् । अन्यतमनिर्धारणाभावेपि कस्मिंश्चिदर्थे इदं प्रमाणमित्यस्यावारणात् । कथमर्थनिश्चय इतिचेत् वाक्यान्तरेणैव निश्चेतव्यमित्यत्र तात्पर्यात् । अत्र जीवविषयकसन्देहो नोपात्तः । 'किं न आत्मा' इति अस्मन्निरूपितात्मत्वबोधनेन तस्य जीवेऽसम्भवात् । 'वैश्वानरमात्मानम्' इति आत्म-विशेषणतया वैश्वानरस्योक्तत्वाद्वैश्वानरशब्दस्य जीवे प्रयोगाभावाच्च । यद्यपि उपक्रमे 'को न आत्मा किं ब्रह्म' इत्युपक्रान्त-त्वादुपरि स्थितस्य वैश्वानरशब्दस्य परमात्मपरत्वं निश्चेतु शक्यं ब्रह्मत्वान्तर्यामित्वाश्रयस्यैव वैश्वानरत्वात् । तस्मिंश्च परात्मत्वस्यान्तर्याम्यधिकरणे पूर्वमेव साधितत्वात् । तथापि एतेषामृषीणां पूर्वमेव वैश्वानरविद्यायां किञ्चित् किञ्चित् ज्ञातमिति हेतोस्तस्यैव ब्रह्मत्वम् आत्मत्वम् इति निर्णयवारणायोपर्यारम्भात् । 'उद्दालको ह वै...आत्मानं वैश्वानरम्' इत्येतैरेव वक्ष्यमाणत्वात् । आत्मभूतं ब्रह्म वैश्वानर एवेति निश्चयोऽस्ति । परन्तु कृत्स्नवेदित्वमस्माकं नास्तीति उद्दालक-समीपमगच्छन् । तन्निर्धरिणार्थमेवोपरि उपनिषत्प्रवृत्तिः अधिकरणप्रवृत्तिश्चेत्यवसेयम् ।

'यद्यपि सर्वेष्वात्मस्वन्नमत्ति' इत्युपरि प्रयोगादात्मशब्दः साधारण इव भायादथापि 'न आत्मा' इति प्रक्रान्तत्वेनाय-मात्मा न जीवो भवितुमर्हति । अस्मदन्तर्यामी अस्मदुपास्य इत्यर्थद्वयविवक्षायामपि स्वभिन्नत्वस्यात्मनि प्रतीतेः । 'सर्वेषु आत्मसु' इति सर्वशब्दबहुवचनबलात्तत्रान्यथार्थस्वीकार उचितः । अत्र तदभावेन परमात्मैकनिश्चयात् । **अयमग्निरिति** । पच्यते अद्यते घोष इत्यादि श्रवणाज्जाठराग्निविषयकमेवेदम् । **विश्वस्मा** इति । भुवनाय इत्यत्रान्वयः । **अह्नां केतुं** = सूर्यम् । भुवनोपकाराय देवा वैश्वानरमग्निं सूर्यत्वेनाकल्पयन्नित्यर्थः । इदं तेजोरूपतृतीयभूतविषयकमित्यत्र च न विवादः । अस्यैव भुवनोपकारत्वात् । **वैश्वानरस्येति** । **हिः** = प्रसिद्धिः । **भुवनानामभिश्रीः** 'श्रियमिच्छेद्धुताशनात्' इति प्रमाणबलेन अग्निरूपदेवतामूलकमेवास्माकं संपत्तिसिध्या तत्साधकश्रेष्ठभूतवैश्वानरस्य शोभनमति विषयत्वाश्रया वयं भवेम इत्यर्थः । देवताविषयकमिति सिद्धम् । तदात्मन्येवेति हृदयस्थात्मरूपवैश्वानरप्रतीतेर्विश्वरूपवैश्वानरप्रतीतेश्चेदं

**इति । परमात्मनि च,** (यजु.अष्ट.३ प्रश्न-११ अनु ८) **'तदात्मन्येव हृदय्येऽग्नौ वैश्वानरे प्रास्यत्' इति,** (प्रश्न.१-७) **'स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते' इति च । वाक्योपक्रमादिषूपलभ्यमानान्यपि लिङ्गानि सर्वानुगुणतया नेतुं शक्यानीति ॥**

**एवं प्राप्तेऽभिधीयते - वैश्वानरस्साधारणशब्दविशेषात् । वैश्वानरः पर एवात्मा । कुतः ? साधारणशब्दविशेषात् । विशेष्यत इति विशेषः - साधारणस्य वैश्वानरशब्दस्य परमात्मासाधारणैर्धर्मैर्विशेष्यमाणत्वादित्यर्थः । तथा हि - औपमन्यवादयः पञ्चेमे महर्षयः समेत्य, 'को न आत्मा; किं ब्रह्म' इति विचार्य, 'उद्दालको ह वै भगवन्तोऽयमारुणिः सम्प्रतीममात्मानं वैश्वानरमध्येति, तं हन्ताभ्यागच्छाम' इत्युद्दालकस्य वैश्वानरात्मविज्ञानमवगम्य तमभ्याजग्मुः । स चोद्दालकः, एतान्वैश्वानरात्मजिज्ञासूनभिलक्ष्य, आत्मनश्च तत्राकृत्स्नवेदित्वं मत्वा, तान् होवाच, 'अश्वपतिर्वै भगवन्तोऽयं केकयस्सम्प्रतीममात्मानं वैश्वानरमध्येति, तं हन्ताभ्यागच्छाम' इति । ते चोद्दालकषष्ठाः तमश्वपतिमभ्याजग्मुः । स च तान् महर्षीन् यथार्हं पृथगभ्यर्च्य, 'न मे स्तेनः' इत्यादिना, 'यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि' इत्यन्तेन आत्मनो व्रतस्थतया प्रतिग्रहयोग्यतां ज्ञापयन्नेव ब्रह्मविद्भिरपि प्रतिषिद्धपरिहरणीयतां विहितकर्मकर्तव्यताञ्च प्रज्ञाप्य, 'यावदेकैकस्मा ऋत्विजे धनं दास्यामि, तावद्भगवद्भ्यो दास्यामि वसन्तु भगवन्तः' इत्यवोचत् । ते च मुमुक्षवो वैश्वानरमात्मानं जिज्ञासमानास्तमेवाऽऽत्मानमस्माकं ब्रूहीत्यवोचन् ।**

---

वाक्यद्वयं परमात्मविषयकम् । **लिङ्गानीति** - 'को न आत्मा किं ब्रह्म' इत्युपक्रमे, मध्ये 'आदित्यादे मूर्धत्वादिकल्पनम्, अन्ते सर्वपापदहनादिः नेतुं शक्यानि । सर्वपापदहनफलं त्वेकमेवासाधारणलिङ्गत्वेन प्रतीयते । तदपि नोपासनफलम् । क्रियमाणप्राणाग्निहोत्र फलम् । अतःसर्वमपि सर्वानुगुणं भवितुमर्हतीति पूर्वपक्षः ॥

विशेष्यत इति विशेषः । कर्मणि घञ्, विशेष्यमाणः इत्यर्थः । वैश्वानरशब्दो नानार्थेषु प्रयुज्यमानः साधारणशब्द एव । असाधारणधर्मैर्विशेष्यमाणत्वाद्विशेषशब्दः । साधारणशब्द एव विशेषशब्द आसीत् । तर्हि साधारणशब्द एव विशेषश्चेद्विशेषत्वं विशेषणं स्यात् । तदा विशेषसाधारणशब्द इति पूर्वनिपातेन भवितव्यमिति शङ्का विशेष्यमाणत्वादित्यनेन परिहृता । मनुष्यविशेषः ब्राह्मणविशेषःवृक्षविशेष इत्यादौ कैश्चिल्लिङ्गै र्मनुष्यादयो विशेष्यमाणा दृश्यन्ते । तथापि विशेषणभूतविशेषशब्दस्य न पूर्वनिपातः । तथेहापि भाव्यम् । अत्र दर्पणं - यद्वा विशेष्यमाणत्वादिति भाष्यानुसारेण विशेष्यत इति विशेष इति भावे व्युत्पादनस्वीकाराद्विशेषणक्रिया = विशेषः । वैश्वानरशब्दार्थः परमात्मा । तदन्वयार्हधर्मवत्तयोच्यमानत्वादिति विशिष्टार्थ इति । धर्मवत्तामेवोपपादयति - **तथा हीति** । प्रकरणपठितब्रह्मत्वसाधकगुणानन्त्यं वक्तुमुपाख्यानमारभते - **महर्षय** इति । महर्षीणां मुमुक्षुत्वमेतेषां ज्ञानातिशयः, आत्मत्वं ब्रह्मत्वं ब्रह्मशब्दस्थाने वैश्वानरशब्दप्रयोगः, राज्ञः विद्याङ्गकर्मानुष्ठानं पृच्छतां धनवैराग्यं विद्यार्थमेव स्वागमननिवेदनम्, उपरि सर्वपापदहनरूपफलकीर्तनं सर्वं ब्रह्मविद्यात्वसाधकम् । ब्रह्मविद्यामनुतिष्ठतः ग्रामे 'यत्राष्टाक्षरसंसिद्धो महाभागो महीयते । न तत्र सञ्चरिष्यन्ति व्याधिदुर्भिक्षतस्कारा' इति सर्वसौभाग्यम् अनिष्टानचरणप्रभृति सर्वं सम्पत्स्यत इत्युक्तत्वादप्यस्या ब्रह्माविद्यात्वं स्थापितं भवति । सर्वेष्वात्मस्वन्नं सर्वात्मान्तर्यामित्वरूपंब्रह्माख्यं फलमत्तीत्यर्थः । सर्वे पाप्मानः प्रदूयन्त इत्युक्तत्वादन्यत्र सर्वपापविनिर्मोकस्य ब्रह्मविद्याफलत्वाददिदमपि न प्राणाग्निहोत्रफलम् । 'य एवं विद्वान्' इति स्तुतिकरणं 'य इदमविद्वान्' इति निन्दनञ्च विद्यायाः फलबोधने एव तत्परमिति विज्ञायते ।

**तदेवं 'को न आत्मा, किं ब्रह्म' इति जीवात्मनामात्मभूतं ब्रह्म जिज्ञासमानैः तज्ज्ञमन्विच्छद्भिर्वैश्वानरात्मज्ञसकाशमागम्य पृच्छयमानो वैश्वानरात्मा परमात्मेति विज्ञायते । आत्मब्रह्मशब्दाभ्यामुपक्रम्य पश्चात्सर्वत्रात्मवैश्वानरशब्दाभ्यां व्यवहाराच्च ब्रह्मशब्दस्थाने निर्दिश्यमानो वैश्वानरशब्दो ब्रह्मैवाभिधत्त इति विज्ञायते । किञ्च 'स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति', 'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेत, एवं हास्य सर्वे पाप्मानः प्रदूयन्ते' इति च वक्ष्यमाणं वैश्वानरात्मविज्ञानफलं वैश्वानरात्मानं परं ब्रह्मेति ज्ञापयति ॥ २५ ॥**

**इतश्च वैश्वानरः परमात्मा -**

**स्मर्यमाणमनुमानं स्यादिति ।१।२।२६॥**

**द्युप्रभृतिपृथिव्यन्तमवयवविभागेन वैश्वानरस्य रूपमिहोपदिश्यते । तच्च श्रुतिस्मृतिषु परमपुरुषरूपतया प्रसिद्धम् । तदिह तदेवेदमिति स्मर्यमाणं प्रत्यभिज्ञायमानं वैश्वानरस्य परमपुरुषत्वे अनुमानं - लिङ्गमित्यर्थः । इतिशब्दः प्रकारवचनः । इत्थंभूतं रूपं प्रत्यभिज्ञायमानं वैश्वानरस्य परमात्मत्वेऽनुमानं स्यात् । श्रुतिस्मृतिषु हि परमपुरुषस्येत्थं रूपं प्रसिद्धम् ।**

**यथा आथर्वणे,** (मु.२-१-४) **'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा' इति । अग्निरिह द्युलोकः,** (बृ.८-२-९) **'असौ वै लोकोऽग्निः' इति श्रुतेः । स्मरन्ति च मुनयः** (?) **'द्यां मूर्धानं यस्य विप्रा वदन्ति खं वै नाभिं चन्द्रसूर्यौ च नेत्रे । दिशः श्रोत्रे विद्धि पादौ क्षितिश्च सोऽचिन्त्यात्मा सर्वभूतप्रणेता' इति । यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः । सूर्यश्चक्षुर्दिशः श्रोत्रं तस्मै लोकात्मने नमः' इति च ।**

---

उत्तरसूत्रेऽनुमानशब्दो लिङ्गपरः । स्मर्यमाणमित्यस्य प्रत्यभिज्ञायमानमर्थः । इतिशब्दः प्रकारवचनः । इति हेतोरित्यर्थः । 'अग्निर्मूधा चक्षुषी' इति द्युमूर्धत्वादिकल्पनापूर्वकं परमात्मनः सर्वशारीरत्वोक्त्या, तदत्र प्रत्यभिज्ञायमानं सत् वैश्वानरशब्दस्य परमात्मत्वं साधयतीति हेतोरत्र वैश्वानरः परमात्मेति सूत्रार्थः । **तदेवेदमिति** ।

**स्मर्यमाणमिति** । 'अग्निर्मूर्धा ... सर्वभूतान्तरात्मा' इति मुण्डकोपनिषदि द्युलोकादिसर्वमुपादाय एकेनैव वाक्येन सर्वान्तरात्मत्वमुक्तम् । अत्र न तथा । तत्रोक्तस्य सर्वस्याकथनात्तत्रोक्तप्रकरेणास्यामुपतिषदि न श्रवणम् । परन्तु तां श्रुतिमत्रस्थां श्रुतिश्च पश्यतां तदुक्तार्थः स्मर्यते । अतः स्मर्यमाणमिदं लिङ्गं भवतीत्याशयः । अपि च यद्यपि मूर्धत्वादिजगच्छरीरस्य परस्य कल्पनमेव । न हि मनुष्यादिशरीरवतां जीवानां मूर्धादिसम्भववदुपपद्यते । तथाप्येवं कल्पनमन्यं प्रति वक्तुं न शक्यते । अन्यस्य सर्वशरीरत्वाभावात् । अत एव 'सर्वभूतान्तरात्मा' इत्युक्तम् । यद्वा **लिङ्गं** = सामर्थ्यम् । श्रुतिलिङ्गवाक्यादिसिद्धम् ।

सामर्थ्यञ्च द्विविधम् - अर्थगतं शब्दगतञ्चेति । इदञ्च लिङ्गमङ्गत्वश्रुत्यनुमापकम् । कैकेयेन पृष्टैः औपमन्यवप्रभृत्तिभिः उक्तमर्थं मनसि विभाव्य 'द्यौ मूर्धा, आदित्यश्चक्षुः' इत्येवमुपदेशात् 'द्यौ मूर्धा' इत्यादिश्रुतिः प्रत्यभिज्ञायते । तत्र यथा द्युमूर्धत्वादिविशिष्टसर्वशरीरकब्रह्मोपासनं विहितमेवमेवात्रापि 'परमात्मानमुपासीत' इति श्रुतिं कल्पयति स्मर्यमाणं लिङ्गमिति । **अग्निरिह द्युलोक** इति । अनेन श्रुत्योरैकार्थ्यं प्रतिपादितम् ।

**इह च द्युप्रभृतयो वैश्वानरस्य मूर्धाद्यवयवत्वेनोच्यन्ते। तथा हि - तैः औपमन्यवप्रभृतिभिर्महर्षिभिः, 'आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि, तमेव नो ब्रूहि' इति पृष्टः केकयः तेभ्यो वैश्वानरात्मानमुपदिदिक्षुः, विशेषप्रश्नान्यथानुपपत्त्या वैश्वानरात्मनि एतैः किञ्चिज्ज्ञातं किञ्चिदज्ञातमिति विज्ञाय ज्ञाताज्ञातांश-बुभुत्सया तान् एकैकं पप्रच्छ। तत्र 'औपमन्यव ! कं त्वमात्मानमुपास्से' इति पृष्टे, 'दिवमेव भगवो राजन्' इति तेन, चोक्ते, दिवि तस्य पूर्णवैश्वानरात्मबुद्धिं निवर्तयन् वैश्वानरस्य द्यौर्मूर्धेति चोपदिशन् तस्या वैश्वानरांशभूताया दिवः सुतेजा इति गुणनामधेयं प्राचिख्यपत्। एवं सत्ययज्ञादिभिरादित्यवाय्वा-काशाप्पृथिवीनामेकैकेनैकैकमुपास्यमानतया कथितानां विश्वरूपः, पृथग्वर्त्मा, बहुलः, रयिः, प्रतिष्ठा इत्येकैकगुणनामधेयानि, वैश्वानरात्मनश्चक्षुःप्राणसन्देहवस्तिपादावयवत्वं चोपदिष्टम्। सन्देहो मध्यकाय उच्यते। अत एवम्भूतद्युमूर्धत्वादिविशिष्टं परमपुरुषस्यैव रूपमिति वैश्वानरः परमपुरुष एव॥ २६॥**

---

**गुणनामधेयानीति**। द्युलोकस्य 'सुतेजा' इति नाम, आदित्यस्य 'विश्वरूप' इति, वायोः 'पृथग्वर्त्मा' इति। आकाशस्य 'बहुल' इति अपां 'रयिः' इति पृथिव्याः 'प्रतिष्ठे'ति एवं नामधेयानि। अत्र परमात्ममूर्धभूतायाः दिवः, नक्षत्रादितेजःप्रकाशक-त्वात् 'सुतेजाः' इति नाम। परमात्मचक्षुर्भूतस्यादित्यस्य, सर्वविश्वप्रकाशकत्वात् 'विश्वरूप' इति नाम। परमात्म-प्राणभूतस्य वायो र्नानाप्रकारेण गमनशीलत्वात् 'पृथग्वर्त्मा' इति नाम। परमात्मसन्देहभूतस्य (मध्यकायस्य) आकाशस्ये-तरेभ्यो भूतेभ्यो महत्त्वात् 'बहुल' इति नाम। परमात्मवस्तिभूतस्य(मूत्रस्थानस्य = तत्स्थमूत्रस्य)जलस्य रयात्मक-वेगवत्वात् 'रयिः' इति नाम। परमात्मपादभूतायाः पृथिव्याः प्राण्याधारत्वेन 'प्रतिष्ठा' इति नाम। एतानि गुणनाम-धेयानि। अतस्तत्तद्गुणविशिष्टद्युप्रभृतीनामुपास्यत्वमनेनोक्तं भवति। रयिः = धनम्। तद्धेतुत्वात् रयिरिति वा। मूत्र-स्थानवाची वस्तिशब्दः तत्स्थमूत्रवाची। मध्यकायस्य सन्दिह्यमानत्वात् सन्देह इति। मध्यं तनुत्वादविभाव्यमानम् इत्याद्युक्तेः। "सकलमपि वपुर्विभूष्य तन्व्याः सपदि सखी विपुलेक्षणाम्बुजापि। चिरतरमनवेक्ष्य मध्यदेशं करधृतकाञ्चन काञ्चिरेव तस्थौ॥" इति भारतचम्पू। वाजसनेयके इह सुतेजस्त्वानिष्ठात्वविश्वरूपत्वादिषु वैपरीत्यं यद्यपि श्रुतं, तन्नातीव विरुद्धं, सूक्ष्मपर्यालोचने एकार्थत्वप्रतिपादनसम्भवात्।

सूत्रद्वयेन वैश्वानरस्य परमात्मत्वं साधितं, परमात्मासाधारणधर्मैः स्मर्यमाणलिङ्गाच्च। अत्र जाठराग्निपरत्वं निरस्यते, उत्तरसूत्रेण भूततृतीयदेवतापरत्वमिति विवेकः। जाठराग्निपरत्वे कांश्चिद्धेतून्प्रदर्श्य निरस्यति। वाजसनेयके 'अग्निर्वैश्वानर' इत्यग्निशब्दसामानाधिकरण्यस्य दर्शनाद्वैश्वानरो जाठराग्निरेवेत्येको हेतुः। अन्यच्चात्रैव प्रकरणेऽग्नित्रयपरिकल्पनं श्रूयते। अपरच्च प्राणाहुत्याधारत्वम्। इदञ्च लिङ्गद्वयं परमात्मपरत्वे बाधकं जाठराग्निविषयत्वे साधकञ्च। 'पुरुषेऽन्तः प्रतिष्ठितं वेद' इति अन्तःप्रतिष्ठानमपि जाठराग्निसाधकम्। न च परस्यापि ब्रह्मणोऽन्तः प्रतिष्ठानं सम्भवतीति वाच्यम्। अग्निं वैश्वानरं अन्तःप्रतिष्ठितम् इत्यग्निशब्दसामानाधिकरण्येनान्तः प्रतिष्ठानस्य परमात्मन्यसम्भवात्। उक्तैर्हेतुभिर्जाठराग्निशङ्का।

अत्र देवतामहाभूततृतीयशङ्का न कृता। अन्तःप्रतिष्ठानस्य तयोरसम्भवात्। हेत्वन्तराणां कथञ्चित्सम्भवेप्यन्तः प्रतिष्ठानसहचरितहेत्वन्तराणां नैव सम्भवः। 'अग्निर्वाग्भूत्वा' इत्यादिकमभिमानिदेवतापरम्। 'पुरुषेऽन्तःप्रतिष्ठानं वाजसनेयिनः समामनन्ति(अग्नि) 'स यो हैतमेतमेताग्निं वैश्वानरं पुरुषविधमिति। सिद्धान्ते पुरुषान्तःप्रतिष्ठितत्वं न स्वरसम्। 'सोग्रभुक् विभजन् तिष्ठन्' इत्यस्य स्वरसम्। अस्य वाक्यस्य अग्निशरीरकपरत्मोपासनविधौ तात्पर्यात् 'नाग्नौ योग्निपरता तिष्ठन्' इति श्रुतिबलादग्नेः परशरीरत्वं स्फुठम्। अतोऽग्निशब्दो विशिष्टपरः। त्रैलोक्यशरीरतया प्रतिपन्नत्वेन जाठराग्नेस्तदसम्भवान्न जाठरमात्रविषयः। 'अहं वैश्वानरो भूत्वा' इति वचनादपि वैश्वानराग्निभूतजाठरशरीरकत्वं

**पुनरप्यनिर्णयमेवाशङ्क्य परिहरति -**

**शब्दादिभ्योऽन्तः प्रतिष्ठानाच्च नेति चेन्न तथादृष्ट्युपदेशादसम्भवात् पुरुषमपि चैनमधीयते १ । २ । २७ ॥**

**यदुक्तं वैश्वानरः परमात्मेति निश्चीयत इति - तन्न, शब्दादिभ्योऽन्तः प्रतिष्ठानाच्च जाठरस्याप्यग्नेरिह प्रतीयमानत्वात् । शब्दस्तावद्वाजिनां वैश्वानरविद्याप्रकरणे,** (अग्निरहस्य १०-५-६. ११) **'स एषोऽग्निर्वैश्वानरः' इति वैश्वानरसमानाधिकरणतयाऽग्निरिति श्रूयते । अस्मिन् प्रकरणे च,** (छा५-१८-२) **'हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः' इति वैश्वानरस्य हृदयादिस्थस्याग्नित्रयकल्पनं क्रियते ।** (छा.५-१९-१) **'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयम् । स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहा' इत्यादिना प्राणाहुत्याधारत्वश्च वैश्वानरस्यावगम्यते । तथा वैश्वानरस्यास्मिन्पुरुषेऽन्तःप्रतिष्ठानं वाजसनेयिनस्समामनन्ति - 'स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेद' इति । अतोऽग्निशब्दसामानाधिकरण्यात्, अग्नित्रेतापरिकल्पनात्, प्राणाहुत्याधारभावात्, अन्तःप्रतिष्ठानाच्च वैश्वानरस्य जाठरत्वमपि प्रतीयत इति नैकान्ततः परमात्मत्वमिति चेत् -**

**तन्न, तथादृष्ट्युपदेशात् - पूर्वोक्तस्य त्रैलोक्यशरीरस्य परस्य ब्रह्मणो वैश्वानरस्य जाठराग्निशरीरतया तद्विशिष्टस्योपासनोपदेशात् । अग्निशब्दादिभिर्हि न केवलो जाठरः प्रतिपाद्यते ; अपि तु जाठराग्निविशिष्टः परमात्मा । कथमिदमवगम्यत इति चेत् - असम्भवात् - जाठस्य केवलस्य त्रैलोक्यशरीरत्वासम्भवात् । त्रैलोक्यशरीरतया प्रतिपन्नवैश्वानरसमानाधिकरणो जाठरविषयतया प्रतीयमानोऽग्निशब्दो जाठरशारीरतया**

स्पष्टमवगम्यते । वैश्वानरो यत्पुरुष इति पुरुषशब्दसामानाधिकण्यं जाठराग्नौ बाधकम् । परस्यैव पुरुषशब्दवाच्यत्वात् । 'द्वाविमौ पुरुषौ' इति जीवस्य पुरुषशब्दवाच्यत्वेपि जाठरस्य तन्नैव सम्भवति । तत्रापि 'क्षरश्चाक्षर एव च' इति पदपर्यालोचनया जीवस्य वाच्यत्वम् । निरुपाधिकं वाच्यत्वं परस्मिन्नेव ।

'यत्पुरुष' इति यच्छब्दनिर्देशात्पुरोवादवाक्यापेक्षाया विद्यमानत्वात् 'सहस्रशीर्षा पुरुषः' इत्यस्यैव पुरोवादित्वात् परमात्मन एवात्र पुरुषशब्दवाच्यत्वबोधनान्नान्यस्य पुरुषशब्दवाच्यत्वम् । 'भगवानिति शब्दोऽयं तथा पुरुष इत्यपि । निरुपाधी च वर्तेते वासुदेवे सनातने' इति प्रमाणाच्च पुरुषार्थप्रसूतिहेतुत्वरूपपुरुषत्वस्यास्मिन्नेव सम्भवाच्च । सूत्रे दृष्टिशब्द उपासनपरः 'आत्मा वा अरे द्रष्टव्यः', 'तस्मिन् दृष्टे' इति श्रौतप्रयोगात् । वैश्वानरमुपास्ते इत्युपासनस्योक्तेश्च । नात्र दृष्टिविधित्वशङ्का सुवचा । त्रैलोक्यशरीरक ब्रह्मोपासनस्य विधानेनोपास्यजाठराग्निशरीरकत्वस्य सम्भवात्, अतस्मिन् तथात्वानुसन्धानरूपत्वाभावात् ।

ननु परमात्मन्यग्निदृष्टिविधिरस्तु ? मैवम् । उत्कृष्टे अपकृष्टदृष्ट्यसम्भवात् । तर्हि अग्नौ परमात्मदृष्टिविधिपरत्वमस्तु इतिचेत्तत्प्रकरणविरुद्धम् । अतोऽत्र परमात्मलिङ्गानां जाठराग्निलिङ्गानाञ्च दर्शनेन प्रतर्दनविद्यान्यायेनाग्निशब्दः स्वासाधारणलिङ्गविशिष्टाग्निशरीरकपरमात्मपर इति न कश्चिद्दोषः । अग्न्यसम्भावितलिङ्गानां पुनरनन्यथासिद्धत्वम् अग्निलिङ्गानामन्यथासिद्धत्वञ्चेति विवेकः । 'पुरुषमपि चैनमधीयत' इति खण्डेनाग्निरहस्यगतवैश्वानरशब्दस्यापि परमात्मपरत्वं स्थापितम् । तत्रापि 'यः पुरुष' इति पुरुषशब्दश्रवणात् । एतेनाग्निरहस्ये आत्मब्रह्मशब्दोपक्रमस्य इहेवाभावात् 'वैश्वानरं ह भगवान् सम्प्रति वेद तं ब्रूहि' इत्येव दर्शनात्तत्राग्निशब्दसामानाधिकरण्याच्च स शब्दो जाठराग्निपर इति पक्षोपि परास्तः ।

**तद्विशिष्टं परमात्मानमेवाभिदधातीत्यर्थः । यथोक्तं भगवता,** (गी.१५-१४) **'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः । प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्' इति ; जाठरानलशरीरो भूत्वेत्यर्थः । अतस्तद्विशिष्ट-स्योपासनमत्रोपदिश्यते । किञ्च पुरुषमपि चैनमधीयते वाजसनेयिनः, 'स एषोऽग्निर्वैश्वानरो यत्पुरुषः' इति । न हि जाठरस्य केवलस्य पुरुषत्वम् । परमात्मन एव हि निरुपाधिकं पुरुषत्वम् ; यथा** (पुरुषसू.) **'सहस्र-शीर्षा पुरुषः...पुरुष एवेदं सर्वम्' इत्यादौ ॥ २८ ॥**

## अत एव न देवता भूतश्च । १ । २ । २८

**उक्तेभ्य एव हेतुभ्यो देवतायाश्च, तृतीयस्य महाभूतस्यापि न वैश्वानरत्वप्रसङ्गः ॥ २८ ॥**

## साक्षादप्यविरोधं जैमिनिः । १ । २ । २९ ॥

**वैश्वानरसमानाधिकरणस्याग्निशब्दस्य जाठराग्निशरीरतया तद्विशिष्टस्य परमात्मनो वाचकत्वम्, तथैव परमात्मन उपास्यत्वञ्चोक्तम् । जैमिनिस्त्वाचार्यः, वैश्वानरशब्दवदग्निशब्दस्यापि परमात्मन एव साक्षात् = अव्यवधानेन वाचकत्वे न कश्चिद्विरोध इति मन्यते ॥**

**एतदुक्तं भवति - यथा वैश्वानरशब्दः साधारणोऽपि परमात्मासाधारणधर्मविशेषितो विश्वेषां नराणां नेतृत्वादिना गुणेन परमात्मानमेवाभिदधातीति निश्चीयते - एवमग्निशब्दोऽप्यग्रनयनादिना येनैव गुणेन**

---

जाठराग्नेः परिच्छिन्नत्वात् त्रैलोक्यशरीरकत्वं न वक्तुं शक्यम् । देवताया अधिष्ठातृत्वमुखेन कथञ्चित्तत्सम्भवः त्रिवृत्कृतमहाभूततृतीयस्य त्रैलोक्यरूपेण परिणतत्वमादाय कथञ्चित्सम्भव इत्यधिकशङ्कया पूर्वपक्षे प्राप्ते तन्निरासार्थमिदं सूत्रम् । इन्द्रप्राणाधिकरणे जीवमुख्यप्राणलिङ्गानामन्यथासिद्ध्यनर्हाणां सद्भावेन रूढ्यर्थस्य परित्यागाभावाद्विशिष्टपरता आश्रिता । अत्रापि प्राणाहुत्याधारत्वान्तःप्रतिष्ठितत्वानां लिङ्गानां सत्त्वात्तदन्वयानुरोधेन विशिष्टपरत्वमेवेत्येतावत्सूत्र-पर्यन्तेन निर्धारितम् ॥

अथ जैमिनिपक्षम् अन्यथानिर्वाहरूपं प्रतिवदति सूत्रकार एव । सूत्रमात्रपरामर्शे अग्निशब्दो योगव्युत्पत्त्या परमात्मपरः, न तु विशिष्टपर इति प्रतीयते । सूत्रेऽग्निशब्दो वा वैश्वानरशब्दो वा न पठितः । अतो भाष्यकारः 'शब्दद्वयेपि योगव्युत्पत्तिः सूत्रकाराभिमतेति प्रतीयते वैश्वनरशब्दवत्' इत्याह । अत्र यद्यपि यथा वैश्वानरशब्दः परमात्मपरः, तथा अग्निशब्दोपि परमात्मपर इत्यंशमात्रे दृष्टान्तत्वप्रदर्शनं, न तु विशिष्टपरत्वयोगार्थस्वीकारांशेपीति सुवचम्, अथाप्युपरि 'एतदुक्तं भवती'त्यादिना विवरणं पदद्वयस्यापि योगार्थत्वाभिसन्धिसूचकम् । अतो वैश्वानरशब्दस्यापि योगार्थत्वमा-विष्कृतं भवति ।

तर्हि पूर्वोक्तविशिष्टपरत्वाभ्युपगमविरोधः स्यादिति चेदत्रायं भावः - वैश्वानरशब्दस्य प्रयोगसाधारण्याद-शक्यनिर्णयत्वे सति अग्निशब्दसामानाधिकरण्यादग्निरूपविशेषवाचक इति पूर्वपक्षे, वैश्वानरशब्दस्याप्यग्निपरत्वे पौन-रुक्त्यं स्यादिति शङ्कायाम् 'अग्रं नयती'ति व्युत्पत्त्यङ्गीकारे ण पुनरुक्ततेति पूर्वपक्षिणा वक्तव्यं, तथा सत्यग्रनयनस्य योगार्थस्य पुष्कलस्य परमात्मन्येव सम्भव इति परमात्मपरत्वं सिद्धम् । एतेन वैश्वनराग्निः न जाठराग्निरिति सिद्ध्यतीति जैमिनेराशयः । अमुमाशयं वक्तुं वैश्वानरशब्दवदित्युक्तम् । वस्तुतोऽपिशब्दस्वारस्याज्जैमिनेरप्यग्निशब्दस्योभयार्थकत्वमपि स्वीकृतमिति ज्ञायते । एवं सति वैश्वानरशब्दोप्युभयार्थकः अग्नि शब्दवत् । यदा वैश्वानरशब्दस्य योगार्थत्वं तदा

योगाज्ज्वलने वर्तते, तस्यैव गुणस्य निरुपाधिकस्य काष्ठागतस्य परमात्मनि सम्भवादस्मिन् प्रकरणे परमात्मासाधारणधर्मविशेषितः परमात्मानमेवाभिधत्त इति ॥ २९ ॥

'यस्त्वेतमेवं प्रादेशमात्रमभिविमानम्' इति अपरिग्निछन्नस्य परस्य ब्रह्मणो द्युप्रभृतिपृथिव्यन्तप्रदेश-सम्बन्धिन्या मात्रया परिच्छिन्नत्वं कथमुपपद्यते ? तत्राह -

**अभिव्यक्तेरित्याश्मरथ्यः । १ । २ । ३० ॥**

उपासकाभिव्याक्त्यर्थं प्रादेशमात्रत्वं परमात्मन इत्याश्मरथ्य आचार्यो मन्यते। द्यौर्मूर्धा, आदित्यश्चक्षुः, वायुः प्राणः, आकाशो मध्यकायः, आपो वस्तिः, पृथिवी पादौ इति द्युप्रभृतिप्रदेशसम्बन्धिन्या मात्रया परिच्छिन्नत्वं कृत्स्नमभिव्याप्तवतो विगतमानस्य ह्यभिव्यक्तेरेव हेतोर्भवति ॥ ३० ॥

मूर्धप्रभृत्यवयवविशेषैः पुरुषविधत्वं परस्य ब्रह्मणः किमर्थमिति चेत् - तत्राह -

**अनुस्मृतेर्बादरिः ।१ । २ । ३१ ॥**

तथोपासनार्थमिति बादरिराचार्यो मन्यते। 'यस्त्वेतमेवमभिविमानमात्मानं वैश्वानरमुपास्ते, स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति' इति ब्रह्मप्राप्तये ह्युपासनमुपदिश्यते। एतमेवमिति - उक्तप्रकारेण पुरुषाकारमित्यर्थः। सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु वर्तमानं यदन्नं - भोग्यं तदत्ति - सर्वत्र वर्तमानं स्वत एवानवधिकातिशयानन्दं ब्रह्मानुभवति। यत्तु सर्वैः कर्मवश्यैरात्मभिः प्रत्येकमनन्यसाधारणमन्नं भुज्यते, तन्मुमुक्षुभिस्त्याज्यत्वादिह न गृह्यते। ३१ ॥

यदि परमात्मा वैश्वानरः, कथं तर्हि उरःप्रभृतीनां वेद्यादित्वोपदेशः, यावता जाठराग्निपरिग्रह एवैतदुपपद्यत इत्यत्राह -

---

अग्निशब्दस्य विशिष्टपरत्वं, यदा योगव्युत्पत्तिस्तदा वैश्वानरशब्दरुढिरिति न पौनरुक्त्यावकाश इतीति। एतत्सूचनाय वैश्वानरशब्दवदित्युक्तम्। अत्र शब्दद्वयस्यापि योगव्युत्पत्तिः श्रुतप्रकाशिकायां सम्यक् प्रतिपादिता।

ननु जाठराग्नेर्देवताया महाभूततृतीयस्य च परिच्छिन्नत्वाद्वैश्वानरशब्दवाच्यत्वं न सम्भवतीत्युक्तम्। अनन्तत्वेना-परिच्छिन्नस्य ब्रह्मणो वा कथं द्युप्रभृतिप्रदेशसम्बन्धित्वेन परिच्छिन्नत्वम्। नात्र 'ज्यायान्पृथिव्याः ज्यायानन्तरिक्षादि'ति सर्वव्याप्तत्वमुच्यते। अप्राकृतविग्रहस्य मूर्धादिमत्वं स्यान्नाम। स्वरूपस्य कथमिदमिति शङ्कायामुत्तरसूत्रम्। धारणा-सौकयार्थं परिच्छेदकथनम्।

पूर्वं बुद्धिसौकयार्थं परिच्छेदकथनमित्युक्तम्। अत्र एवमुपासनस्य फलं दर्शयति। **यस्त्वेतमेवम्** इत्यादिना। एवमुपासनस्य फलं च दर्शितम्। आनन्दमयविद्यायां पुरुषविधत्वरूपणमिवात्रोपसानार्थं तज्जन्यफलार्थश्च पुरुषाकारत्व-मेवोच्यते। विषयवाक्यगतान्नशब्दो ब्रह्मपरः, न तु प्रसिद्धान्नपर इत्याह - **यत्तु** इत्यादिना। 'य एतदेवं विद्वान्' इत्यादिना अग्निहोत्रमुक्तं 'सर्वपाप्मान' इति सर्वपापविनिर्मोकश्चोक्तः। सर्वपापविनिर्मोको ब्रह्मोपासनफलम्। अतोऽग्निहोत्राङ्गक-परोपासनफलमिदमित्यवगम्यते। 'एवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यत' इति श्रवणात्। तथा चात्राग्निहोत्रं किमिति चेत्प्राणाहुतिरेवाग्निहोत्रम्। इदश्चोपासकैरहरहः क्रियमाणश्च। प्राणाहुतेरग्निहात्रत्वं वक्तव्यं चेद्वेदिप्रभृति अग्न्यन्त-

## सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति । १ । २ । ३२ ॥

**अस्य परमात्मन एव वैश्वानरस्य द्युप्रभृतिपृथिव्यन्तशरीरस्य समाराधनभूताया उपासकैरहरहः क्रियमाणायाः प्राणाहुतेरग्निहोत्रत्वसम्पादनाय अयमुरःप्रभृतीनां वेदित्वाद्युपदेश इति जैमिनिराचार्यो मन्यते । तथा हि परमात्मोपासनोचितमेव फलम्, प्राणाहुत्या अग्निहोत्रसम्पत्तिश्च दर्शयतीयं श्रुतिः,** (छा.५-२४) **'स य इदमविद्वानग्निहोत्रं जुहोति, यथा अङ्गारानपोह्य भस्मनि जुहुयात्, तादृक् तत्स्यात् । अथ य एतदेवं विद्वानग्निहोत्रं जुहोति, तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति । तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेत, एवं हास्य सर्वे पाप्मानः प्रदूयन्ते' इति ॥ ३२ ॥**

## आमनन्ति चैनमस्मिन् । १ । २ । ३३ ॥

**एनं परमपुरुषं द्युमूर्धत्वादिविशिष्टं वैश्वानरमस्मिन् उपासकशरीरे प्राणाहुत्याधारत्वाय आमनन्ति च, 'तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजा' इत्यादिना । अयमर्थः - यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' इति त्रैलोक्यशरीरस्य परमात्मनो वैश्वानरस्योपासनं विधाय, 'सर्वेषु लोकेषु' इत्यादिना ब्रह्मप्राप्तिश्च फलमुपदिश्य,अस्यैवोपासनस्याङ्गभूतं प्राणाग्निहोत्रम्, 'तस्य ह वा एतस्य' इत्यादिनोपदिशति ; यः पूर्वमुपास्यतयोपदिष्टो वैश्वानरः, तस्यावयवभूतान् अग्न्यादित्यादीन् सुतेजोविश्वरूपादिनामधेयान् उपासकशरीरे मूर्धादिपादान्तेषु सम्पादयति ।**

**मूर्धैव सुतेजाः - उपासकस्य मूर्धैव सुतेजाः परमात्ममूर्धभूता द्यौरित्यर्थः । चक्षुर्विश्वरूपः - आदित्य इत्यर्थः । प्राणः पृथग्वर्त्मा - वायुरित्यर्थः । सन्देहो बहुलः - उपासकस्य मध्यकाय एव परमात्ममध्यकायभूत आकाश इत्यर्थः । वस्तिरेव रयिः - अस्य वस्तिरेव तदवयवभूता आप इत्यर्थः । पृथिव्येव पादौ - अस्य पादावेव तत्पादभूता पृथिवीत्यर्थः ।**

**एवमुपासकस्स्वशरीरे परमात्मानं त्रैलोक्यशरीरं वैश्वानरं सन्निहितमनुसन्धाय स्वकौ यानि उरोलोम-**

---

मावश्यकम् । अत उरः प्रभृतीनां वेदित्वाद्युपदेशः । अतस्मिंस्तत्सम्पादनम् । न चैतावता दृष्टिविधित्वम् । एवं परिकल्पिताग्निहोत्राङ्क परोपासनस्य दृष्टित्वाभावात् । **इदमविद्वान्** = उरःप्रभृतीनामग्निहोत्रोपकरणतामजानन् । **अग्निहोत्रं जुहोति** = अनुतिष्ठतीत्यर्थः । एवमनुष्ठाने सर्वात्मकभगवदाराधनं कृतं भवति । एतेन सर्वमाराधितमिति होमप्रशंसा । इदमत्रोच्यते - 'सर्वेष्वात्मसु हुतं भवती'ति ।

जाठराग्नौ क्रियमाणो होमो भगवदाराधनरूपः । यत उपासको द्युप्रभृत्यवयवकपरमात्मानं स्वशरीरे सन्निहितं भावयति । आत्मनो वैश्वानरस्य मूर्धा सुतेजोनामकम् = उपासकस्यापि मूर्धा । कुत एवमनुसन्धेयमिति चेत् प्राणाहुतिरूपाग्निहोत्रसम्पादनस्य कार्यत्वात् द्युमूर्धत्वादिविशिष्टपरमात्मोपासनस्याङ्गत्वाच्च स्वशरीर एव परमात्मसन्निधानं सम्पाद्यम् । अतोऽयं होमः परमात्माराधानरूपो भवति । इममर्थं प्रदर्शयति **एवमुपासक** इति ।

प्राचीनशालः, सत्ययज्ञः, इन्द्रद्युम्नः, जनः, बुडिलः, उद्दालक इत्येते षट् ब्राह्मणः केकयदेशभूपतिम् अश्वपतिं 'को न आत्मा किं ब्रह्म' इति आत्मजिज्ञासाया जग्मुः । स चैतान् यथाविध्यभ्यर्च्य विशेषतो ऐश्वर्यं दातुमुत्सुक आसीत् ।

**हृदयमनआस्यानि प्राणाहुत्याधारस्य परमात्मनो वैश्वानरस्य वेदिबर्हिर्गार्हपत्यान्वाहार्यपचनाहवनीयान् अग्निहोत्रोपकरणभूतान् परिकल्प्य, प्राणाहुतेश्चाग्निहोत्रत्वं परिकल्प्य, एवंविधेन प्राणाग्निहोत्रेण परमात्मानं वैश्वानरमाराधयेदिति, 'उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्य' इत्यादिनोपदिश्यते । अतः परमात्मा पुरुषोत्तम एव वैश्वानर इति सिद्धम् ॥ ३३ ॥** इति वैश्वानराधिकरणम् ॥ ६ ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये प्रथमस्याध्यायस्य द्वितीयः पादः ॥

---

मदीये देशे चोरः कृपणः सुरापायी अनाहिताग्निः स्वैरी स्वैरिणी एवंविधा पापाचारो न कोप्यस्ति । अतो देशः परिशुद्धः । तस्मादस्मदीय दानस्य परिग्रहे दोषसम्भावनैव नास्तीत्याह । तच्छ्रुत्वा एते चास्मदिष्टधनमेवापेक्षितम् । न लौकिकधनादि अस्माकमीप्सितम् । हिरण्यनिधिरूपात्मब्रह्माख्यधनमेवोपदेश्यमित्यूचुः । राजा च - एतेषां विप्रत्वाच्छुश्रूषां विनैवोपदेष्टव्यमिति मत्वा एतद्विद्यायां लेशतोऽभिज्ञत्वमेतेषां स्यादिति निश्चित्य ज्ञातांशबुभुत्सया पप्रच्छ ।

प्राचीनशालो 'द्युलोकमेव वैश्वानरात्मानमहमुपास्से' इत्याह । एवमेव सत्ययज्ञ आदित्यम्, इन्द्रद्युम्नो वायुम्, जन आकाशं, बुडिलो जलम्, उद्दालकः पृथिवीमित्याहुः । श्रुत्वा च राजा एतत्सर्वं परमात्मनो मूर्धचक्षुःप्राणसन्देहवस्तिपादरूपावयवभूतं वैश्वानरात्मांशरूपत्वादेवमुपासकानामैहिकफलं सम्भावितम् । परन्तु बहुकालमेवमुपासकानां क्रमेण मूर्धप्रभृत्यङ्गवैकल्यं स्यादित्युक्त्वा, एतत्सर्वाङ्गविशिष्टपरमात्मोपसनमेव विश्वरूपवैश्वानरोपासनमित्युपदिदेश । मोक्षरूपफलश्चोक्तवान् । एतस्याङ्गतयाऽग्निहोत्रश्चोपदिष्टः । अग्निहोत्रोपकरणभूता वेदि-बर्हि-गार्हपत्य-अन्वाहार्यपचन-आहवनीया उपासकशरीर एव वर्तन्ते । उपसकस्य उरो-लोम-हृदय-मन-आस्यानि तानीति रूपणमुखेनोक्त्वोदरस्य जाठराग्निरेव होमाधारभूतोऽग्निरिति चोच्यते । एतस्मिन्नग्नौ प्रणाग्निहोत्रकरणमेवाग्निहोत्रहोमः । जाठग्निशरीरपरमात्मैव वैश्वानरो होमाधारभूतः । अतो वैश्वानराग्निरूपरमात्मनो मूर्धाद्यवयवा उपासकमूर्धाद्यवयवाः । अतोऽन्नमादाय पञ्चप्रणाहुतयः पञ्चप्रणानुद्दिश्य कार्याः । एतेनेन्द्रियतृप्तिः इन्द्रियनियन्तृदेवतातृप्तिः । एवं प्राणाहुतिरूपाग्निहोत्रमेवाहरहरस्माभिः क्रियमाण सुधापीड्तिपुत्रो मातरमिव लोक आद्रियत इत्युपदिष्टवान् अश्वपतिः इत्युपनिषद्रहस्यम् ॥

इति श्रीसारज्ञशिरोमणिचक्रवर्त्याचार्यविरचितायां श्रीभाष्यभावचन्द्रिकायां प्रथमस्याध्यायस्य द्वितीयः पादः॥

